### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तत्र क्रियास्वेवंतदनुभवस्य हेतुस्तर्हि कथं प्रथमत एव स न स्यात् ? उच्यते अस्त्यत्र नानापराधमयी संसारवासना प्रतिबन्धिनी सा च तदा दूरमेवापगच्छतीत्याहुः—शृण्वन्निति । श्रवणादीनां विकल्पो ज्ञेयः मङ्गलानि सर्वदुःखनिवर्त्तकत्वात् परमसुखात्मकत्वाच्चेति भावः । अतः स्वतः पुरुषार्थतोक्ता अत एव क्रियासु निजाशेषकर्मसु वर्त्तमानो यः सोऽपि त्वच्चरणारविन्दयोराविष्टचित्तो भूत्वा । यद्वा य इत्यस्य पूर्वेणान्वयः । यः शृण्वन् भवतीत्यर्थः तच्चरणारविन्दयोः क्रियासु श्रवणादिकर्मसु आविष्टचित्तः यद्वा क्रियासु तत्तल्लीलासु युष्मदिति पाठश्च क्वचित् ततश्च समञ्जसमेव अतो भवाय संसाराय न कल्पते तत्कारणे विद्यमानेऽपि तद्योग्यो न स्यात्तद्वासनारहितो भवतीत्यर्थः ॥ ३७ ॥

दिष्ट्या एतद्भद्रं जातम् अस्मादृशानां भाग्येनेत्यर्थः । अस्याः भारार्त्तायाः त्वदवतारेण परमधन्यत्वं प्राप्ताया या पद इति पद्भ्यां भूमेरुत्पत्त्या कार्यकारणयोरभेदाभिप्रायेण "पद्भ्यां भूमिः" इति श्रुतेः अत एवाग्रेऽक्रूरस्तुतौ "अग्निर्मुखं तेऽवनिरङ्घ्रिः" इति जन्मना श्रीदेवक्यामवतारमात्रेण भारः कंसादिहेतुकः अपनीतः दूरीकृतः इदं ताद्विज्ञापनचातुर्यम् एवं भारहरणाद्धरे इति सम्बोधनं निजपदाब्जव्यपदेशसौभाग्यभाजनपृथिवीभारापनयनेन भक्तानामस्मादृशां भुवोऽपि हितं कृतमेवेति प्रयोजनमेकं सिद्धम् किन्तु अस्माकं तस्याश्च परमहितकारिविचित्रक्रीडया सर्वलोककृतार्थीकरणमेव मुख्यप्रयोजनं कार्यमित्याशयेनाहुः-दिष्ट्याङ्कितामिति । अल्पार्थे कप्रत्ययः द्वापरान्तोचितनराकृतित्वेन महाशरीरिणां तेषां देवानां तादृश दृष्ट्या किं वा दयार्थे सुकोमलत्वस्फुरणात् अङ्किताम् अलङ्कृतामित्यर्थः । त्वामनुकम्पितामिति दैत्यवधादिना तत्रत्यानां हिताचरणात् । यद्वा विशेषणद्वयमिदं द्वयोरेव ज्ञेयम् ततश्च अङ्कितत्वेनैव भक्तिविस्तारणादिना वाऽनुकम्पितां गां द्यामङ्किताम् इति कदाचित् पारिजातहरणार्थं तत्र गतस्य पारिजातपरागादिषु पदानामुदयात् ॥ ३८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रादिनामरूपेभ्यः स्वाऽसाधारणनामरूपाणां ध्येयत्वादिकमाहुः- शृण्वन्निति ॥ ३७ ॥

अपनीतः अपनीतप्रायः गां भूमिम् ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इन्द्रादिनामरूपेभ्यः स्वासाधारणनामरूपाणां ध्येयत्वादिकं वदन्तः स्तुवन्ति-शृण्वन्निति । यः पुमांस्ते तव मङ्गलावहानि नामानि रूपाणि च शृण्वन् वक्तृसन्निधौ सति गृणन् श्रोतृसन्निधौ तदुभयासन्निधौ नामानि स्मरन् रूपाणि चिन्तयंश्च संस्मरयन्निति शिष्यैस्तद्विषयचित्तः क्रियासु वैदिकक्रियासु आसनाटनभोजनादिक्रियास्वपि त्वच्चरणारविन्दयोरासक्तं चित्तं मतिर्यस्य तथाभूतः स पुमान् भवाय श्रेयःसमृद्ध्यै कल्पते नेति पाठे भवाय संसृतये न कल्पते किन्तु मुक्तय इत्यर्थः ॥ ३७ ॥

आत्मनां प्रकृतावतारप्रयुक्तमानन्दमाविष्कुर्वन्तः स्तुवन्ति—दिष्ट्येति । दिष्ट्येत्यानन्दद्योतकमव्ययं हे हरे आश्रितार्तिहारिन् ! तव ईश्वरस्य जन्मना भवतस्तव पदा पादविन्यासेन च पद इति पाठे पदरूपाया अस्या भुवो भारोऽपनीतोऽपनीतप्रायः । इदं दिष्ट्या अस्माकमानन्द इत्यर्थः । एवमुत्तरत्रापि सुशोभनैर्ध्वजवज्राङ्कुशादिचिह्नैश्चारुभिः पदकैः पादविन्यासैरलङ्कृतां तव स्वपा अनुकम्पिताञ्च गां भूमिं द्याञ्च स्वर्गं द्रक्ष्यामः नित्यविभूतिमिव द्रक्ष्याम इत्यर्थः । एतद्दिष्ट्या सङ्कल्पमात्रनिर्वर्त्यजगद्रक्षणक्षमस्य तवावतारप्रयोजनं भक्तजनानुग्रह एवेत्युक्तम् ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्मान्नामादयः सन्ति तस्मात्क्रियमाणासु क्रियासु प्रेरकत्वेन नामानि शृण्वन्, गृणन् रूपाणि चिन्तयन्नास्ते स त्वच्चरणारविन्दयोः आविष्टचित्तः पुरुषः भवाय संसाराय न कल्पत इत्यन्वयः चशब्देन "सर्वक्रियासु कर्तृत्वपूज्यत्वेन जनार्दनम् । यो वेत्ति नैति संसारं तत्प्रसादान्न संशयः" इति स्मृतेर्न श्रवणादिना पूर्यते किन्तु तज्ज्ञानं चावश्यमपेक्षितं भवति ॥ ३७ ॥

इदानीमवतारप्रयोजनं विज्ञापयति—दिष्ट्येति । तव जन्मना भवतः पदः भवच्चरणस्थानीयाया अस्याः भुवः असुरकृतभारोऽपनीत इति यत्तद्दिष्ट्या सर्वस्य सुखमभूत् सुष्ठु वा "सुष्ठु दिष्ट्योपलोपम्" इति यादवः तवानुकम्पिताम् अनुकम्पाविषयां द्यां च द्रक्ष्यामः दिष्ट्येत्यभ्यास आदरार्थे "पदाद्याश्रयणाद्विष्णोः पृथिव्यादिपदादिकम्" इत्यादिस्मृतिसिद्धं भूमेर्विष्णुपदत्वम् ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शृण्वन्निति । क्रियासु व्यवहारिकीष्वपि वर्त्तमानः योऽशेन मत्स्यादिनाऽस्माकं भवाय स साक्षात् स्वयमेवेति कुक्षिं गत इति पूर्वं मनस्तो दधारेत्यप्युक्तं तत एकवाक्यतानुरोधेनायमर्थः यद्यपि तदीयप्राचीनतात्प्रेमव्याप्त्यायत्ततया कुक्षिं प्रविष्ट एव तथापि कुक्ष्यादिद्रव्यं भगवतोऽवरोधकं न स्यात् किन्तु प्रेमैवेति तस्य च प्रेम्णः आश्रयः कुक्षिर्न भवति किन्तु मन एवेति तदात्मतया मन एव तद्धारणे साधनं ततः कुक्षिङ्गतः मनसैव दधारेति ॥ ३७—४२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वाण्येव रूपाणि नामान्यानन्दमयानीति तानि सर्वपुरुषार्थसाधकानि निरूपितानि तैः फलमाह—शृण्वन् गृणन्निति साङ्गानि कर्माणि वैदिकानि अवश्यं फलदानि—

> "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
> न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्" ॥

इति स्मृतेः सम्पूर्णाञ्जातं फलं जनयेदेव तत्र फलं मोक्ष एवेति स्वर्गपदविचारे निबन्धे निरूपितं तदेवात्राप्याह—ये नामानि शृण्वन् परैरुच्चारितानि रूपाणि च कीर्त्यमानानि ये

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

शृण्वन्ति तदनु गृणन्ति उभयविधान्यपि श्रोतरि सति अन्यदा स्मरन्ति तदपि स्मरणं ध्यानरूपमिति संस्मरणमुक्तं चकारात् स्मारयन् उपदेशादिदानेन भावयत्यादयन्नपि चिन्तयन् योगाङ्गध्यानत्वेन तथैव चित्तनिरोधेन नामावृत्तिर्नाम ध्यानम् अप्रयत्नश्चित्तव्यापारः स्मरणं सप्रयत्नश्चित्तव्यापारश्चिन्तनमिति विशेषः तदेव रूपपरिकल्पने ध्यानमित्युच्यते चकाराद्भगवत्सम्बन्धिनामध्वन्येषां श्रवणादिकं फलसाधकमित्युक्तं मङ्गलानीति तत्र प्रतिबन्धाभावो निरूपितः अन्यथा तस्याप्यसिद्धाविच्छायामपि सत्यां कार्यं न स्यात् तदर्थमन्यच्च कर्तव्यमापद्येत त इति मङ्गलरूपस्य तव उत्तरत्र वा सम्बन्धः क्रियासु यज्ञादिषु भगवत्सेवारूपासु वा लौकिकक्रियासु यस्त्वच्चरणारविन्दयोराविष्टचित्तः स सर्वथा भवाय संसाराय न कल्पते न समर्थो भवति "स्मरणेन क्रियाः पूर्णाश्चित्तावेशश्च तत्र हि। ज्ञानक्रिये यदा विष्णुस्तदा मोक्षो न संशयः" स दोष एव संसारे कल्पते एवं कृते सर्वदोषनिवृत्तौ संसारासामर्थ्यं युक्तमेव ॥ ३७ ॥

एवं वैदिकप्रकारेण चतुष्टयमुक्त्वा स्वसिद्धान्तानुसारेण चतुष्टयमाह—दिष्ट्येति चतुर्भिः। भगवच्छास्त्रे भगवानेव प्रमाणादिचतुष्टयं भगवत्साक्षात्कारः साक्षात्कृतो वा भगवान् प्रमाणं भूमिप्रसङ्गात् वयं कृतार्था जाता इति वदन्तः सर्वमेव जगत् भगवता कृतार्थमासीदित्याहुः, हरे! ते पदो भुवः पादरूपाया भूमेस्ते जन्मना भारोऽपनीतः मदनक्लेशस्तु परमानन्दप्राकट्यं नैव गच्छतीति भारहानौ जन्मन एव करणत्वं न तु किञ्चित्तव कर्तव्यमस्ति तत्र हेतुः ईशितुरिति ईशप्राकट्यमेव सर्वानर्थनिवर्तकं भूमिभारनिराकरणम् च नवावश्यकं अस्माकम् च हितकारि यतस्तव चरणरूपा भूः सर्वोपि स्वचरणभारं दूरीकरोति उपास्ये च दोषाभावः सर्वेषां हितकारी एतत्करणं चावश्यकं यतो हरिस्त्वं भगवज्जन्मनो ऽलौकिकत्वात् फलपतसाधनाभावात् सर्वात्मकत्वाच्च भगवतो ऽसम्भावितमिति दिष्ट्येत्युक्तं केचित्तु इदमुदरे समागमनं भूमेर्भारहरणमेव न तु तव जन्मेत्याहुः अतो भूमावानन्द एव केवलं प्रकट इति अन्यदपि जातमित्याह—दिष्ट्याङ्कितामिति। देवा अपि भुवं न स्पृशन्ति किं पुनर्भगवान् स्पृक्ष्यति अतोऽसंभावितमपि यद्भविष्यति तद्दिष्ट्येति सर्वरूपत्वाद्भगवतो मनुष्यादिरूपेण भुवं स्पृशत्येव किमाश्चर्यमित्याशङ्क्याह—अङ्कितैरिति । ध्वजवज्राङ्कुशादिचिह्नैरङ्कितैः अङ्कितामिति पाठे शङ्कापरिहारार्थं सुशोभनैः सर्वलक्षणसम्पन्नैः पदैः अङ्कितां चिह्नितां गां द्रक्ष्याम इति महद्भाग्यमस्माकं भूमिः पदं गृह्णातीत्यपि भाग्यं पदं छायामपि जनयतीत्यपि पुरुषपदमुद्रिता च भूः प्रमाणोद्बुद्धितेति सानुरागाया भगवति दर्शनं दिष्ट्या अत्र तामित्यनुक्त्वा गामिति यदुक्तवांस्तेन पदाऽङ्किता सती सर्वेषां सकलकामदोग्ध्री भविष्यतीति सूच्यते अपरं च पूर्वमियमेव या गोरूपाश्रुमुखीत्यादिषुक्ता दृष्टा सा परमानन्दरूपपदाङ्किता द्रक्ष्यत इत्यपि महद्भाग्यं न इत्यपि गोपदेन ज्ञाप्यते किञ्च पदैरेवानुकम्पितां त्वया द्यां चाश्च द्रक्ष्यामः देवानां सर्वोपकारकरणात् अदित्याः कुण्डलदानादिना च धौरनुकम्पिता अतोऽस्माकमेव भाग्यं यदुभयं द्रक्ष्यामः ॥ ३८ ॥



### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्च नामरूपयोः श्रवणादिभिरभ्यास एवानुभवे कारणमित्याहुः—शृण्वन्निति। क्रियासु स्वैहिकव्यापारेषु वर्त्तमानोऽपि न भवाय कल्पते किन्तु भगवदनुभवाय कल्पते ॥ ३७ ॥

भारावतरणमवश्यकर्तव्यमिति भङ्ग्या विज्ञापयन्ति, दिष्ट्येति। पदः पदजन्यायाः "पद्भ्यां भूमिः" इति श्रुतेः। भारोऽपनीतः अधुनैव कंसजरासन्धादीन् हतान् जानीम इति भावः। पदकैः सुकुमारैः पदैः सुशोभनैर्ध्वजवज्रादिमङ्गलचिह्नवद्भिः गां पृथ्वीं द्यां स्वर्गं च ॥ ३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्माद्भवदाराधनं मुक्तिसाधनमित्याहुः—शृण्वन्निति "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्" इति स्मृत्या क्रियान्यूनतापूर्त्यर्थकानि

"यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः"

इतिपूर्वोक्त्या सद्यः कल्मषहराणि—

"अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्।
तेपुस्तपस्ते जुहुवुस्सस्नुरार्या ब्रह्मानूचुर्नाम गृह्णन्ति ये ते" ॥

इति पूर्वश्रोक्त्या सर्वशोधकानि सर्वसाधनफलप्रदानि—

"स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः।
स्त्रीराजमित्रगोहन्ता ये च पातकिनोऽपरे ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम्।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः" ॥

इतिमहापातकप्रायश्चित्ततयोक्तानि—

"सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति"। इति।

स्मृत्या मोक्षप्रदानि नामानि प्रतिदिनं क्रियासु त्वद्भक्तैरुच्चारितानि रूपाणि च निरूपितानि शृण्वन् श्रोतरि सति गृणन् अन्यदा संस्मरयन् चकाराद्भक्तान् संस्मारयन् चिन्तयन् मननं कुर्वन् त्वच्चरणारविन्दयोः आविष्टचित्तः भवाय संसाराय न कल्पते ॥ ३७ ॥

भूभारहरणप्रसङ्गेन सलोकाः वयं तीर्थीकृता इत्याहुः—दिष्ट्येति। दिष्ट्येत्यव्ययं मङ्गल हे हरे! स्वभक्तक्लेशहारिन्! दिष्ट्या भद्रं भवतः पदो भुवः पादरूपायाः क्षितेः तव जन्मनैव भार एको भारः अनाश्रितया सात्मप्रजाधारणरूपोऽपनीतः यथा काचित्पतिवियुक्ता सात्मप्रजाभारेण सीदमाना दुष्टैः क्लिश्यमाना च प्रत्यागमनमात्रेण गतैकभारा भवति। तथैवमित्यर्थः। किञ्च त्वत्पदकैः अनिमृदुपदकमलैः सुशोभनैः स्वासाधारणलक्षणसंपन्नैः तवानुकम्पितां गां भूमिं द्यां देवलोकं च अङ्कितां ध्वजवज्रादिचरणचिह्नैः चिह्नितां दिष्ट्या द्रक्ष्यामः सलोकाः वयं कृतार्था इति भावः ॥ ३८ ॥

---

### भाषा टीका।

आप के परम मङ्गलश्रीनाम और श्री मूर्त्ति को लौकिक

न ते भवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥ ३९ ॥
मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम ! वन्दनं ते ॥ ४० ॥

भाषा टीका ।

वैदिक क्रियान के समय जो जन सुनें कहैं स्मरणकरैं और चिंतमन करैं हैं वे जन आप के श्रीचरणारविन्दों में चित लग वे सों फिर संसार में नहीं परैं हैं किंतु आप के नित्यधाम के अधिकारी होजाय हैं ॥ ३७ ॥

हे हरे ! प्रभो ! हम सवन कों अब ये बड़ो आनंद भयो कि, या पृथ्वी कों आप के जन्म लैवे सों आप के श्रीचरण के संचार सों सब भार दूर भयो, अर्थात् भयो सोई है । और ये हू आनंद भयो, कि- सर्वदुःखन की निवृत्तिपूर्वक याहि पृथिवी कों, आप के ध्वज अंकुश कलशादि चारु चिन्हन वारे परमशोभायुत श्रीचरणन सों चिन्हित हम सब देखेंगे, और स्वर्ग कों भी आप की कृपा युक्त देखेंगे ॥ ३८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तव जन्मना भारोऽपनीत इत्युक्तया ममापि किं जीववत् संसार उक्तो न हि न हीत्याहुः—नेति । यत हे ईश ! संसारिणस्ते जन्मनः कारणं क्रीडां विना न तर्कयामः । किञ्च हे अभयाश्रय ! न भयमाश्रयत इति तथा तत्संबोधनं हे नित्यमुक्त ! इत्यर्थः । तव जन्मकारणं नास्तीति किं वक्तव्यं यतो जीवात्मन्यपि भवादयस्त्वयि विषये या अविद्यतया कृता न परमार्थतः सन्तीति ॥ ३९ ॥

प्रस्तुतं प्रार्थयन्ते—मत्स्याश्वेति । नोऽस्मांस्त्रिभुवनं चान्यदा यथा पासि तथाऽधुनापि पाहीति वन्दनं ते इति च वदन्तः सर्वे शिरोभिः प्रणमन्ति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न भवः संसारो भक्तानां जगतामपि वा यस्मात्तस्य बत हर्षे अव्ययैः । यद्वा विनोदमात्रार्थत्वे हेतुः हे अभय ! यतः सर्वाश्रयात्मनि त्वय्याश्रित्य वर्त्तमाना या अविद्याविद्याख्यावाञ्छितकेरितरा माया तयैव नित्यं भवादयः कृता वर्त्तन्ते ततस्तदन्तःपातिपालनमात्रार्थं नायं स्वस्वरूपेण प्रयत्नविशेषो युक्त इति विनोदं विना कारणान्तरं न तर्कयामह इत्यर्थः । दुष्टवधार्थप्रयत्नश्च सभयस्यैव सम्भवतीति तदंशं विनोदस्य स्वरूपाऽनुबन्धत्वेन दुष्टवधादिलीलाऽंशो महान् विशेषो दर्शितः अत एव नागपत्नीभिरुक्तम् । अव्याकृतविहारायेति, अत एव "अजितरुचिरलीलाकृष्टसारम्" इत्यादिकानि श्रीशुकादीनामपि विशेषणानीति ॥ ३९ ॥

हे ईश ! इति तत्र सामर्थ्यं दर्शयन्ति हे यदूत्तम ! इति अधुना श्रीकृष्णरूपत्वेन साक्षाद्भगवत्त्वात् पूर्वतोऽपि विशेषेण पालनं कर्त्तव्यमिति भावः । अत एव भारं हरेति यद्यपि "मया हतांस्त्वं जहि मा व्यथिष्ठाः" इति रीत्या तव जन्मना भारोऽपनीत इत्युक्त्यैव तत्प्रार्थना विशेषतो लब्धा तथापि पुनर्बहिस्तल्लीलादर्शनार्थमस्फुटकण्ठयैवेदमुक्तमिति ज्ञेयम् । अन्यत्तैः यद्वा यथा पासि तथाऽधुनापि पासि पास्यसि काका ततो अधिकमेव पास्यसीत्यर्थः । तदेवाभिव्यञ्जयन्ति भुवो भारं हरेति श्रीनृसिंहाद्यवतारे त्वया हतानामपि हिरण्यकशिपुकालनेमिप्रभृतीनां पुनरत्र जन्मना भुवो भारं भवस्येव अधुना तथा विधेहि यथा तेषां पुनरावृत्तिर्न स्यात् येन भक्तानामस्माकं तादृशदुष्टादर्शनेन च परमहितं स्यादिति भावः । नन्वेवं दुष्टानां मुक्तिदानमयोग्यमित्याशङ्क्य तदर्थं सकाकु प्रणमन्ति यदूत्तमेति अन्यत्समानम् ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभवस्य ते भवस्य जन्म न कारणमित्यन्वयः । अविद्यया संसारिणां ज्ञानाविरोधिन्या प्रकृत्या उत्पत्त्यादयो विकाराः प्रकृतिगता न स्वरूपगता इत्यर्थः ॥ ३९ ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथावतारनिमित्तमाविष्कुर्वन्तः स्तुवन्ति—नेति । हे ईश ! अभवस्य कर्माधीनोत्पत्तिरहितस्य तव भवस्य जन्मनः कारणं निमित्तं विना विनोदं लीलार्थं सङ्कल्पं विना अन्यन्न तर्कयामहे यतस्त्वमनितरसाधारणत्वाद्विस्मयः यथा सृष्ट्यादि जगद्व्यापारो विनोदमात्रानुकूलसङ्कल्पमूलकस्तद्वज्जन्मादीत्यभिप्रायेणाऽऽहुः—भव इति । हे अभय ! यतो विनोदादेव निमित्तादविद्यया संसारिज्ञानविरोधिन्या प्रकृत्या जगत उत्पत्त्यादयो विकारास्तस्याधारभूतेऽन्तरात्मनि च त्वयि कृताः तमेव विनोदमभवस्य ते भवकारणं मन्यामह इत्यर्थः । आश्रयात्मनि कृता इत्यनेन उत्पत्त्यादयो विकाराः प्रकृतिगताः न स्वरूपगता इति सूचितम् ॥ ३९ ॥

यथा मत्स्याद्यवतारपरिग्रहेणास्मान् रक्षितवानेवमधुना भारापहारद्वाराऽस्मान् पाहीत्याहुः—मत्स्येति । मत्स्यादिषु परिगृहीतो ऽवतारो येन तथाभूतस्त्वमस्मान् त्रिलोकीञ्च यथा पासि रक्षितवांस्तथाऽधुनाऽपि भुवो भारं हराऽपनय हे यदूत्तम ते तुभ्यं वन्दनं नम इत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

लोकानुग्रहमन्तरेणान्यदवतारप्रयोजनं नास्तीति विज्ञापयतीत्याह-नेति। न विद्येत भवः शुक्रशोणितसम्पर्कलक्षणं जन्म यस्य तथा तस्य भवस्य भद्रस्य जन्मादिदोषरहितस्येत्यर्थः "भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु" इति यादवः। ननु, कर्दमे लीयत इव हरेर्जन्मादिमत्त्वं सत्यमित्यायातं तथा च तस्य कर्माधीनप्रवृत्तत्वेनेश्वरत्वहानेर्न मोक्षार्थं तदुपासनं विधेयमिति तत्राह–भव इति। त्वयीति षष्ठ्यर्थे सप्तमी अभवाश्रयश्चायमात्मा चेत्यभवाश्रयात्मा मोक्षाश्रयः स्वामी तस्य मुक्ताश्रयस्य स्वरूपस्य वा तव कृता अङ्गीकृताः भवादयोऽविद्यया त्वत्स्वरूपाज्ञानेन सत्या इति नरा मन्यन्ते इति यत इति शेषः। अस्य स्वस्य विद्यया इच्छया कृताः सत्या मन्यन्ते इति यतस्तस्मात्सरूपानादित्वेन ईश्वरत्वहान्यभावेन त्वदुपासनमेव विधेयमिति भावः—

"अज्ञानादेव मन्यन्ते विष्णोर्जन्मसृती नराः।
स्थितिरूपस्य चान्यस्मात् स्थितिं मोक्षाश्रयस्य हि" इति॥

वचनाच्चेन्द्रजालमिति मन्तव्यमिति ॥ ३९ ॥

भक्तसङ्कटपरिहारमन्तरेणान्यदवतारप्रयोजनं न तवास्तीति यत इतो निकृष्टोत्कृष्टजातिग्रहणेन त्रिभुवनमपादित्युपसंहरतीत्याह–मत्स्येति। अश्वो हयग्रीवः कच्छपः कूर्मः विप्रो जामदग्न्यः त्रिभुवनं पास्यथा इति लकारव्यत्ययः तथा सति कार्ये कृतेऽप्यस्माभिरेतावदेवानुष्ठीयते कृतप्रतिनिध्यभावादित्याह–यदूत्तम इति। अस्त्विति शेषः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दर्शनं प्रमाणमाविर्भावः प्रमेयमिति आविर्भावं संमर्थयति न ते भवस्येति। ते अभवस्य जन्मरहितस्य जन्मनः कारणं विनोदं विना न तर्कयामहे विनोदो लीला वेः कालस्य वा नोदः प्रेरणं कालो हि स्थिरः सर्वानेव मर्यादया यथासुखं करोति स जन्मना नोद्यते अन्यथा क्रियते विना वि संसारनौकायां वा अन्यथा संसारनौः पारं न गच्छेत् अस्मिन्नर्थे न ते नन्ते शरणागते पुरुषे भवनिवारकस्य यो भवो जन्म तस्य कारणं विना विनोदं तर्कयामह इति सम्बन्धो ज्ञेयः यद्वा नतो य इभो गजेन्द्रस्तस्य यमसृतं मोक्षो यस्मात्तादृशस्येत्यग्रे पूर्ववत् तथा च पशुजातीयस्यापि नतिमात्रेण भवनिवारकस्य भवो सम्भावित इति तस्य हेतुं तं तर्कयामह इति भावः नौकारहिता वा संसृतिस्तस्यां सत्यां सर्वप्रेरणं तव भवस्य कारणं यद्यप्यत्र प्रमाणं नास्ति यथार्थद्रष्टुराप्तस्याभावात् अद्यापि त्वयाप्यनुक्तत्वात् अतः स्वयमेव तर्कयामहे वस्तुतस्तु लीलापि भवति न वेति सन्देह एव ननु सर्वस्यापि जीवस्य मदंशस्य यथा भवस्तथा ममापीति कथमभवस्येत्युच्यते तत्राह भवो निरोध इति सर्वस्यापि प्राणिन उत्पत्तिस्थितिप्रलया अविद्यया देहाद्यध्यासेन भवन्ति स्वतो जीवानां जन्माभावात् तदपि त्वयि सति भवति अन्यथा निराधारं जगत् उत्पत्त्यादिनं स्यात् तत्रापि त्वय्युदासीने न भवति अनित्येन भवति असमवायित्वेन भवति आधारसमवाययोरपेक्षणात् तव चोत्पत्तौ जगत अनादित्वं भज्येत अलीकत्वं च स्यात् यथा तव भव आकस्मिकः एवमेव जगतोऽपि भवेत् अत अभव आश्रयरूपे आत्मरूपे सत्येव जीवानामुत्पत्त्यादिर्भवेत् ॥ ३९ ॥

एवं भगवतो लीलया प्रादुर्भावः स्वरूपनिमित्ताज्ञानं वा अन्यथा सर्वमेव जगन्न स्यादिति आनन्दाविर्भावो भगवान्निरूपितः स एव साधनमित्याह–मत्स्याश्वेति। यथा पूर्वं नवावतारा जाता एवमयमपि दशमः त्रयो जलजाः त्रयो वनजाः त्रयो लोकजाः मत्स्याश्वकच्छपाः नृसिंहवराहहंसाः राजन्यविप्रविबुधाश्च तमोरजःसत्त्वसमानाकृतयः अश्वो हयग्रीवः अश्वोऽपि जलजः हयग्रीवोऽपि जलजः "अप्सु योनिर्वा अश्वः" इति श्रुतेः। नृसिंहः काष्ठजत्वाद्वनजः वराहः आरण्यप्रकृतिक इति अब्जोऽपि वहिर्वायुस्थानत्वादारण्यः राजन्यो रघुनाथः विप्रः परशुरामः विबुधो वामनः तरतमभावात् त्रित्वं मत्स्यादश्व उत्तमः अश्वादपि कूर्मः वास्तव्यत्वात् नृसिंहाद्वराहः भूम्युद्धारपूर्वकहिरण्याक्षमारकत्वात् ततोऽपि ज्ञानप्रदो हंसो महान् क्षत्रियब्राह्मणदेवेषु तरतमभावः स्पष्टः एभिर्नवविधैर्नवविधा अपि रक्षिताः इदानीमेकेनैव नवविधा रक्षणीयाः अयमेव भगवान् तत्तज्जात्यनुकाररूपेणावतारं कृत्वा पाति अधुना ततोऽप्यधिकं विज्ञापयन्ति त्वमेतेषु पूर्वं कृतावतारो नोऽस्मान् त्रिभुवनं चकाराद्धर्मादिकमपि पासि तथा अधुना हे ईश! सर्वसामर्थ्यरूपेणावतीर्णस्तथा पूर्वोक्तत्रयं देवत्रैलोक्यधर्मरक्षाभूभारनिराकरणञ्चाधिकम् अद्यापि लोके व्यवहारः यदूत्तमेति प्रत्युपकारस्ते वन्दनं नमस्कार एव प्रत्युपकार इत्यर्थः। एतान्येव भगवतो दश रूपाणि सर्वपुरुषार्थसाधकानि अत्र दृष्टान्तत्वेन मत्स्याद्युक्तेरयं भावः भूभारभूतासुरराजन्यहननार्थं ह्यवतारः एवं सति तैः सह युद्धं सम्भाव्यते तच्च स्नेहातिशयेन भक्तैः सोढुमशक्यमतो रूपं चेदं पौरुषं "जन्मते मय्यसौ" इत्यादिना देवकीवत् ब्रह्मादयो माहात्म्यज्ञानवन्तोऽपि भक्तत्वेन भूभारहरणे प्रकारविशेषं प्रार्थयन्ति यावत्स्वस्यैश्वर्याप्राकट्येन निगूढत्वेनान्यतो वा शत्रुहननं भवति तावन्न स्वयं युद्धं कार्यमिति तत्र प्रलयाब्धौ सत्यव्रतादि भक्ता रक्षणीयाः एवं सति पुरुषाविरूपेण रक्षणे क्रियमाणे लोकरीत्या क्लेशमकरादिभयसम्भावनया स्नेहेन भक्तानां क्लेशः स्यादिति तदभावाय येन रूपेण जलमध्ये सुखावहस्तद्रूपं जगति हीनजातीयमपि मात्स्यमङ्गीकृत्य रक्षितवांस्तथाऽधुनाऽपि करोत्वेति प्रार्थना अत एव स्वैश्वर्यादिविरुद्धमपि याचकत्वमङ्गीकृत्य भीमेन जरासन्धं मारितवान्न तु स्वयम् हयग्रीवो ब्रह्मणः सत्रे प्रादुर्भूतस्सन् असुरहननवेदरक्षादिकं कृतवान् इहापि राजसूये प्रकटो ब्राह्मणसम्माननेन मर्यादां स्थापयित्वा वेदविरुद्धवादिनं चैद्यमनायासेन मारितवान् कच्छपस्तु "मेनेऽङ्गकण्डूयनम्" इत्यादिवाक्यैः सुखसाधनत्वेनैव मन्दरन्दधार तद्वदिहापि धीर्यबलाधिक्यजबाहुकण्डूशान्त्यर्थमेव युद्धं कार्यं न तु प्रतिभटोपस्थितिमात्रतः तदा त्वन्य एव प्रेरणीय इति प्रार्थना अत एव यत्र युद्धं कृतं तत्र तथैव कृतमिति ज्ञेयं क्रीडार्थं मृगयावत् अत एव "विक्रीडितं तज्जगदीशयोः परम्" इति वचनं यथाऽमृतदानार्थमेव मन्दरधारणं तथेहापि स्वस्वरूपामृतदानार्थमेव गोवर्द्धनोद्धरणं तेन रक्षां च कृतवान् नृसिंहस्तु भक्तापराधमपि पूर्वभक्तमपि भक्तरक्षार्थमकस्मात् प्रादुर्भूय मारितवान् लक्ष्म्यादीनामप्यगम्यो दैत्यस्यैपि भक्तमात्रगम्य इत्यपि ज्ञापितवान् इहापि पाण्डवरक्षार्थं तत्पितामहादीन् भक्तानप्यासुरानेषिणो

न ते भवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ।
भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥ ३९ ॥
मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः ।
त्वं पासि नस्त्रिभुवनं च यथाऽधुनेश भारं भुवो हर यदूत्तम ! वन्दनं ते ॥ ४० ॥

भाषा टीका ।

वैदिक क्रियान के समय जो जन सुनें कहें कारणाकरैं और चितमन करें हैं वे जन आप के श्रीचरणारविन्दों में चित लग वे सों फिर संसार में नहीं परें हैं किंतु आप के नित्यधाम के अधिकारी होजाय हैं ॥ ३७ ॥

हे हरे ! प्रभो ! हम सवन कों अब ये बड़ो आनंद भयो कि, या पृथ्वी कों आप के जन्म लेवे सों आप के श्रीचरण के संचार सों सब भार दूर भयो, अर्थात् भयो सोई है । और ये हू आनंद भयो, कि- सर्वदुःखन कों निवृत्तिपूर्वक याहि पृथिवी कों, आप के ध्वज अंकुश कलशादि चारु चिन्हन वारे परमशोभायुत श्रीचरणन सों चिन्हित हम सब देखेंगे, और स्वर्ग कों भी आप की कृपा युक्त देखेंगे ॥ ३८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तव जन्मना भारोऽपनीत इत्युक्त्या ममापि किं जीववत् संसार उक्तो न हि न हीत्याहुः—नेति । बत हे ईश ! संसारिणस्ते जन्मनः कारणं क्रीडां विना न तर्कयामः । किञ्च हे अभयाश्रय ! न भयमाश्रयत इति तथा तत्संबोधनं हे नित्यमुक्त ! इत्यर्थः । तव जन्मकारणं नास्तीति किं वक्तव्यं यतो जीवात्मन्यपि भवादयस्त्वयि विषये या अविद्यतया कृता न परमार्थतः सन्तीति ॥ ३९ ॥

प्रस्तुतं प्रार्थयन्ते—मत्स्याश्वेति । नोऽस्मांस्त्रिभुवनं चान्यदा यथा पासि तथाऽधुनापि पाहीति वन्दनं ते इति च वदन्तः सर्वे शिरोभिः प्रणमन्ति ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न भवः संसारो भक्तानां जगतामपि वा यस्मात्तस्य बत हर्षे अन्यत्तैः । यद्वा विनोदमात्रार्थत्वे हेतुः हे अभय ! यतः सर्वाश्रयात्मनि त्वय्याश्रित्य वर्त्तमाना या अविद्याविद्याख्यावाङ्मिरुच्छक्तेरिनरा माया तयैव नित्यं भवादयः कृता वर्त्तन्ते ततस्तदन्तःपातिपालनमात्रार्थं नायं स्वसङ्कल्पया प्रयत्नविशेषो युक्त इति विनोदं विना कारणान्तरं न तर्कयामह इत्यर्थः । दुष्टवधार्थप्रयत्नश्च समयस्यैव सम्भवतीति तदर्थं विनोदस्य स्वरूपाऽनुबद्धत्वेन सृष्ट्यादिलीलाभ्यो महान् विशेषो दर्शितः अत एव नागपत्नीभिरुक्तम् । अव्याकृतविहारायेति, अत एव "अजितरुचिरलीलाकृष्टसारम्" इत्यादिकानि श्रीशुकादीनामपि विशेषणानीति ॥ ३९ ॥

हे ईश ! इति तत्र सामर्थ्यं दर्शयन्ति हे यदूत्तम ! इति अधुना श्रीकृष्णरूपत्वेन साक्षाद्भगवत्त्वात् पूर्वतोऽपि विशेषेण पालनं कर्तव्यमिति भावः । अत एव भारं हरेति यद्यपि "मया हतांस्त्वं जहि मा व्यथिष्ठाः" इति रीत्या तव जन्मना भारोऽपनीत इत्युक्तैव तत्प्रार्थना विशेषतो लब्धा तथापि पुनर्बहिस्तल्लीलादर्शनार्थमत्युत्कण्ठयेदमुक्तमिति ज्ञेयम् । अन्यत्तैः यद्वा यथा पासि तथाऽधुनापि पासि पास्यसि काका ततो अधिकमेव पास्यसीत्यर्थः । तदेवाभिव्यञ्जयन्ति भुवो भारं हरेति श्रीनृसिंहाद्यवतारे त्वया हतानामपि हिरण्यकशिपुकालनेमिप्रभृतीनां पुनरत्र जन्मना भुवो भार भवत्येव अधुना तथा विधेहि यथा तेषां पुनरावृत्तिर्न स्यात् ये भक्तानामस्माकं तादृशदुष्टादर्शनेन च परमहितं स्यादि भावः । नन्वेवं दुष्टानां मुक्तिदानमयोग्यमित्याशङ्क्य तदर्थं सका प्रणमन्ति यदूत्तमेति अन्यत्समानम् ॥ ४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभवस्य ते भवस्य जन्म न कारणमित्यन्वयः । अविद्यया संसारिणां ज्ञानाविरोधिन्या प्रकृत्या उत्पत्त्यादयो विकाराः प्रकृतिगता न स्वरूपगता इत्यर्थः ॥ ३९ ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथावतारनिमित्तमाविष्कुर्वन्तः स्तुवन्ति—नेति । हे ईश ! अभवस्य कर्माधीनोत्पत्तिरहितस्य तव भवस्य जन्मनः कारणं नि विना विनोदं लीलार्थं सङ्कल्पं विना अन्यत्र तर्कयामहे यतेत्याश अनितरसाधारणत्वाद्विस्मयः यथा सृष्ट्यादि जगद्व्यापारो वि दमात्रानुकूलसङ्कल्पमूलकस्तद्वज्जन्मादीत्यभिप्रायेणाऽऽहुः— इति । हे अभय ! यतो विनोदादेव निमित्तादविद्यया संसा ज्ञानविरोधिन्या प्रकृत्या जगत उत्पत्त्यादयो विकारास्तस्या आधारभूतेऽन्तरात्मनि च त्वयि कृताः तमेव विनोदमभवस्य भवकारणं मन्यामह इत्यर्थः । आश्रयात्मनि कृता इत्यनेन उ त्त्यादयो विकाराः प्रकृतिगताः न स्वरूपगता इति सूचितम् ॥ ३९

यथा मत्स्याद्यवतारपरिग्रहेणास्मान् रक्षितवानेवमधुना भारापहारद्वाराऽस्मान् पाहीत्याहुः—मत्स्येति । मत्स्यादिषु परिगृहीतो ऽवतारो येन तथाभूतस्त्वमस्मान् त्रिलोकीञ्च पासि रक्षितवांस्तथाऽधुनाऽपि भुवो भारं हराऽपनय हे यदू ते तुभ्यं वन्दनं नम इत्यर्थः ॥ ४० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

लोकानुग्रहमन्तरेणान्यदवतारप्रयोजनं नास्तीति विज्ञापयतीत्याह-नेति। न विद्यते भवः शुक्रशोणितसम्पर्कलक्षणं जन्म यस्य तथा तस्य भवस्य भद्रस्य जन्मादिदोषराहित्यस्येत्यर्थः "भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु" इति यादवः। ननु, कर्दमे लीयत इव हरेर्जन्मादिमत्त्वं सत्यमित्यायातं तथा च तस्य कर्माधीनप्रवृत्तत्वेनेश्वरत्वहानेर्न मोक्षार्थं तदुपासनं विधेयमिति तत्राह-भव इति। त्वयीति षष्ठ्यर्थे सप्तमी अभवाश्रयश्चायमात्मा चेत्यभवाश्रयात्मा। मोक्षाश्रयः स्वामी तस्य मुक्ताश्रयस्य स्वरूपस्य वा तव कृता अङ्गीकृताः भवादयो ऽविद्यया त्वत्स्वरूपाज्ञानेन सत्या इति नरा मन्यन्ते इति यत इति शेषः। अस्य स्वस्य विद्यया इच्छया कृताः सत्या मन्यन्ते इति यतस्तस्मात्स्वरूपानादित्वेन ईश्वरत्वहान्यभावेन त्वदुपासनमेव विधेयमिति भावः—

"अज्ञानादेव मन्यन्ते विष्णोर्जन्मसृती नराः।
स्थितिरूपस्य चान्यस्मात् स्थितिं मोक्षाश्रयस्य हि" इति॥

वचनान्नेन्द्रजालमिति मन्तव्यमिति ॥ ३९ ॥

भक्तसङ्कटपरिहारमन्तरेणान्यदवतारप्रयोजनं न तवास्तीति यत इतो निकृष्टोत्कृष्टजातिग्रहणेन त्रिभुवनमपादित्युपसंहरतीत्याह-मत्स्येति। अश्वो हयग्रीवः कच्छपः कूर्मः विप्रो जामदग्न्यः त्रिभुवनं पास्यथा इति लकारव्यत्ययः तथा सति कार्ये कृतेऽप्यस्माभिरेतावदेवाऽनुष्ठीयते कृतप्रतिनिध्यभावादित्याह-यदूत्तम इति। अस्त्विति शेषः ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दर्शनं प्रमाणमाविर्भावः प्रमेयमिति आविर्भावं संमर्थयति न ते भवस्येति। ते अभवस्य जन्मरहितस्य जन्मनः कारणं विनोदं विना न तर्कयामहे विनोदो लीला वेः कालस्य वा नोदः प्रेरणं कालो हि स्थिरः सर्वानेव मर्यादया यथासुखं करोति स जन्मना नोद्यते अन्यथा क्रियते विना वि संसारनौकायां वा अन्यथा संसारनौः पारं न गच्छेत् अस्मिन्नर्थे न ते नत्रे शरणागते पुरुषे भवनिवारकस्य यो भवो जन्म तस्य कारणं विना विनोदं तर्कयामह इति सम्बन्धो ज्ञेयः यद्वा नतो य इभो गजेन्द्रस्तस्य यमसृतं मोक्षो यस्मात्ताहशस्येत्यग्रे पूर्ववत् तथा च पशुजातीयस्यापि नतिमात्रेण भवनिवारकस्य भवो सम्भावित इति तस्य हेतुं तं तर्कयामह इति भावः नौकारहिता वा संसृतिस्तस्यां सत्यां सर्वप्रेरणं तत्र भवस्य कारणं यद्यप्यत्र प्रमाणं नास्ति यथार्थद्रष्टुरात्तस्याभावात् अद्यापि त्वयाप्यनुक्तत्वात् अतः स्वयमेव तर्कयामहे वस्तुतस्तु लीलापि भवति न वेति सन्देह एव ननु सर्वस्यापि जीवस्य मदंशस्य यथा भवस्तथा ममापीति कथमभवस्येत्युच्यते तत्राह भवो निरोध इति सर्वस्यापि प्राणिन उत्पत्तिस्थितिप्रलया अविद्यया देहाद्यध्यासेन भवन्ति स्वतो जीवानां जन्माभावात् तदपि त्वयि सति भवति अन्यथा निराधारे जगत उत्पत्त्यादिर्न स्यात् तत्रापि त्वय्युदासीने न भवति अनित्येन भवति असमवायित्वेन भवति आधारसमवाययोरपेक्षणात् तव चोत्पत्तौ जगत अनादित्वं भज्येत अलीकत्वं च स्यात् यथा तव भव आकस्मिकः एवमेव जगतोऽपि भवेत् अत अभव आभयरूपे आत्मरूपे सत्येव जीवानामुत्पत्त्यादिर्भवेत् ॥ ३९ ॥

एवं भगवतो लीलया प्रादुर्भावः स्वरूपनिमित्ताज्ञानं वा अन्यथा सर्वमेव जगन्न स्यादिति आनन्दाविर्भावो भगवान्निरूपितः स एव साधनमित्याह-मत्स्याश्वेति। यथा पूर्वं नवावतारा जाता एवमयमपि दशमः त्रयो जलजाः त्रयो वनजा त्रयो लोकजाः मत्स्याश्वकच्छपाः नृसिंहवराहहंसाः राजन्यविप्रविबुधाश्च तमोरजःसत्त्वसमानाकृतयः अश्वो हयग्रीवः अश्वोऽपि जलजः हयग्रीवोऽपि जलजः "अप्सु योनिर्वा अश्वः" इति श्रुतेः। नृसिंहः काष्ठजत्वाद्वनजः वराहः आरण्यप्रकृतिक इति अब्जोऽपि वहिर्वायुस्थानत्वादारण्यः राजन्यो रघुनाथः विप्रः परशुरामः विबुधो वामनः तरतमभावात् त्रित्वं मत्स्यादश्व उत्तमः अश्वादपि कूर्मः वास्तव्यत्वात् नृसिंहाद्वराहः भूम्युद्धारपूर्वकहिरण्याक्षमारकत्वात् ततोऽपि ज्ञानप्रदो हंसो महान् क्षत्रियब्राह्मणदेवेषु तरतमभावः स्पष्टः एभिर्नवविधैर्नवविधा अपि रक्षिताः इदानीमेकेनैव नवविधा रक्षणीयाः अयमेव भगवान् तत्तज्जात्यनुकाररूपेणावतारं कृत्वा पाति अधुना ततोऽप्यधिकं विज्ञापयन्ति त्वमेतेषु पूर्वं कृतावतारो नोऽस्मान् त्रिभुवनं चकाराद्धर्मादिकमपि पासि तथा अधुना हे ईश! सर्वसामर्थ्यरूपेणावतीर्णस्तथा पूर्वोक्तत्रयं देवत्रैलोक्यधर्मरक्षाभूमिभारनिराकरणञ्चाधिकम् अद्यापि लोके व्यवहारः यदूत्तमेति प्रत्युपकारस्ते वन्दनं नमस्कार एव प्रत्युपकार इत्यर्थः। एतान्येव भगवतो दश रूपाणि सर्वपुरुषार्थसाधकानि अत्र दृष्टान्तत्वेन मत्स्याद्युक्तेरयं भावः भूभारभूतासुरराजन्यहननार्थं ह्यवतारः एवं सति तैः सह युद्धं सम्भाव्यते तत्र स्नेहातिशयेन भक्तैः सोढुमशक्यमतो रूपं चेदं पौरुषं "जन्मते मय्यसौ" इत्यादिना देवकीवत् ब्रह्मादयो माहात्म्यज्ञानवन्तोऽपि भक्तत्वेन भूभारहरणे प्रकारविशेषं प्रार्थयन्ति यावत्स्वस्यैश्वर्यादिप्राकट्येन निगूढत्वेनान्यतो वा शत्रुहननं भवति तावत्स्वयं युद्धं कार्यमिति तत्र प्रलयाब्धौ सत्यव्रतादि भक्ता रक्षणीयाः एवं सति पुरुषाविरूपेण रक्षणे क्रियमाणे लोकरीत्या कृशमकरादिभयसम्भावनया स्नेहेन भक्तानां क्लेशः स्यादिति तद्भावाय येन रूपेण जलमध्ये चारः सुखाय हस्तद्रूपं जगति हीनजातीयमपि मात्स्यमङ्गीकृत्य रक्षितवांस्तथाऽधुनाऽपि करिष्यतीति प्रार्थना अत एव स्वैश्वर्यादिविरुद्धमपि याचकत्वमङ्गीकृत्य भीमेन जरासन्धं मारितवांस्तु स्वयम् हयग्रीवो ब्रह्मणः सत्रे प्रादुर्भूतस्सन्नसुरहननवेदरक्षादिकं कृतवान् इहापि राजसूये प्रकटो ब्राह्मणसम्माननेन मर्यादां स्थापयित्वा वेदविरुद्धवादिनं चैद्यमनायासेन मारितवान् कच्छपस्तु "मेनेऽङ्गकण्डूयनम्" इत्यादिवाक्यैः सुखसाधनत्वेनैव मन्दरन्दधार तद्वदिहापि वीर्यबलाधिक्ययजवाहुकण्डूशान्त्यर्थमेव युद्धं कार्यं न तु प्रतिभटोपस्थितिमात्रतः तदा त्वन्य एव प्रेरणीय इति प्रार्थना अत एव यत्र युद्धं कृतं तत्र तथैव कृतमिति ज्ञेयं क्रीडार्थं मृगयावत् अत एव "विक्रीडितं तज्जगदीशयोः परम्" इति वचनं यथा ऽमृतदानार्थमेव मन्दरधारणं तथेहापि स्वस्वरूपामृतदानार्थमेव गोवर्धनोद्धरणं तेन रक्षां च कृतवान् नृसिंहस्तु भक्तापत्यमपि पूर्वभक्तमपि भक्तरक्षार्थमकस्मात् प्रादुर्भूय मारितवान् लक्ष्म्यादीनामप्यगम्यो दैत्यदेशेऽपि भक्तमात्रगम्य इत्यपि ज्ञापितवान् इहापि पाण्डवरक्षार्थं तत्पितामहादीन् भक्तानप्यासुरावेशिनो

दिष्ट्याऽम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान् भवाय नः ।
माऽभूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥ ४१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मारितवान् तथैव कंसादीनपि वनवासे पार्थरक्षार्थमकस्मादाविर्भूय शिष्टशाकान्नं भक्षयित्वा सर्वं समाहितवान् वराहस्तु यदुद्धारार्थं प्रवृत्तस्तत्रैतादृक्पक्षपातवान् येन तन्मात्रविशेषगुणग्राहकेन्द्रियस्यैवाधिष्ठाने प्रकटो ऽभवन्न तु नृसिंहादिवत् इहापि पाण्डवरक्षार्थमागच्छन् तन्मात्रगुणग्राहिविदुरगेह एव स्थितो ऽभवन्न त्वन्यत्र तथा व्रजस्थानुद्धर्त्तुं तन्मात्रसम्बन्धिनि स्थले स्वयमाविर्भूय तथा कृतवान् नत्वन्यत्र स्थितः एवमेव वेदभूम्युद्धारं कुर्वन् हिरण्याक्षवन्मध्येमार्गं प्रतिबन्धकर्त्तारं रुक्मिणमुपेक्ष्यैव स्वकार्यं कृतवान् न तु तदैव हतवानग्रे च तथा कृतवान् हंसस्तु तत्त्वमुपदिश्य ब्रह्मादिविषादहन्ता इहापि वेदमर्यादाविरोधगुरुवधादेर्विमुखस्य तच्चिन्ताविषादं तत्त्वोपदेशेन हृतवान् अन्यथा भूभारहरणं न स्यात् राजन्यस्तु मज्जनपावनं तारकं कृत्वैकभक्तार्थमनेकान् दैत्यानवधीत् तथेहापि भूमिनिमित्तमनेके मारणीयाः एतेनैकस्या भुवो निमित्तमनेकान् कथम्बधिष्यामीति शङ्कापास्ता क्षेपादिभावस्यापि तारकत्वं स्पष्टं विप्रस्तु ब्रह्मवृत्तिरपि घोरं चात्रमूरीकृत्यासुरराजन्यानवधीत् इहापि ब्रह्मत्वेन समत्वेपि दैत्यवधः कार्य एव विबुधस्तु मातृप्रार्थनयाऽविर्भूय ब्रह्माद्यशक्यं त्रिभुवनहरणं वाङ्मात्रेण कृतवान् एवमत्र वृकासुरवधे स्पष्टं देवकीप्रार्थनयाविर्भूय ब्रह्मादिदुरापं स्वानन्दं यदुभ्यो दत्तवान् राज्यलिप्सुं कंसं मारयित्वोग्रसेनाय राज्यं दत्तवान् न तु स्वयं गृहीतवानिति एवं नमस्कारान्तं भगवान् स्तुतः कंसादिवधस्त्वप्रयोजकः तस्मान्न विशेषेण गणितः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्मद्विज्ञापितोऽस्मदादिपालनार्थमवतीर्णो ऽसीत्यस्माकमभिमान एव केवलं वस्तुतस्त्वं स्वैरजन्मकर्मलीलोऽसीत्याहुः—नेति । अभवस्य अजन्मनः भवस्य प्रादुर्भावस्य यत आश्रयात्मनि त्वयि त्वामाश्रित्य वर्तमाना या अविद्या माया तयैव भवादयो जगत्सृष्ट्यादयः कृता इत्यर्थः । हे अभय ! नास्ति भयं यत इति त्वत्स्मरणादेव कंसाद्यसुरभयं निवर्तते तद्वधार्थं तव स्वयमेवाविर्भूयोद्यमो न घटत इति भावः ॥ ३९ ॥

तदप्यस्माकमधीराणां बहुधैवावगतचरं वैकल्यमवगम्यतां चेत्याहुः—मत्स्याश्वेति । तथैव भुवो भारं हरेति भूभारहरणमेव सम्प्रत्यस्माकं पालनमिति भावः । वन्दनं ते इति वदन्तः सर्वे शिरोभिः प्रणमन्ति ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च सर्वात्मनः सर्वगतस्य सर्वदा सर्वं कर्तुं समर्थस्यावतारणं स्वेच्छया लीलार्थमित्याहुः—नेति । यतो यत्र त्वयि अभयानां "सदा पश्यन्ति सूरयः" इत्यादिश्रुतिप्रसिद्धानामाश्रयश्चासावात्मा च तस्मिन् भवादयः अनन्तकोटिब्रह्माण्डात्मकविश्वजन्मादयः अविद्यया विद्यावर्जितया मायया त्वत्कृताः भवन्ति एवंभूतस्याभवस्य "अजायमानो बहुधा विजायते" इत्यादिश्रुत्युक्तप्रभावस्य ते जन्मनः कारणं विनोदं विना न तर्कयामहे इत्यन्वयः । किं यदिदं भूभारहरणादिकमिति भावः ॥ ३९ ॥

तथापि विनोदायावतीर्णः असुरकृतं भूमेर्भारं हर नः पाहीति प्रार्थयन्ते—मत्स्येति । मत्स्यादिरूपभृत् नोऽस्मान् त्रिभुवनं चकाराद्धर्मादिकमन्यदा यथा त्वं पासि तथा अधुनापि पाहि भुवो भारं च हर हे यदूत्तम ! ते वन्दनमिति किरीटकोटिभिः भूसंस्पर्शपूर्वकमभिवन्दनमस्तु ॥ ४० ॥

---

भाषा टीका

हे ईश ! भगवन् ! आप के जन्म को कारण आप के विनोद के विना और कछु हम लोगन की तर्कना में तो नहीं आवै है, काहे सों, कि– जब अभय के एक आश्रय और सब के आत्मस्वरूप ऐसे आप के विषे अविद्या ( प्रकृति ) के करे भये या जगत् के उत्पत्ति विनाश और पालन ये सब भी तो आप अपने विनोद मात्र सेही करैं हैं ॥ ३९ ॥

हे ईश ! जैसे आप मत्स्य, अश्व, ( हयग्रीव ) कच्छप, नृसिंह, वराह, हंस, राम, परशुराम, वामन, इत्यादि अवतारन कों धारण करके या त्रिभुवन की और हम सबन की रक्षा करौ हौ, ताई रीत सौं या समय या पृथ्वी को भार आप दूर करौ, हे यदुकुलोत्तंस ! आप कों नमस्कार है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवकीं प्रत्याहुः—दिष्ट्येति । नोऽस्माकं भवायोद्भवाय साक्षात् परः पुमांस्ते कुक्षिं गतोऽतो भयं माऽभूदिति ॥ ४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमन्यैरलक्ष्यमाणा देवाः श्रीभगवन्तं स्तुत्वा तेनैवातिविस्मितां श्रीदेवकीमाश्वासयन्ति–दिष्ट्याम्ब ! इति हे मातरिति भगवन्मातृत्वेन परमवन्द्यत्वात् यद्यपि मनसो दधारेत्युक्तं तथापि कुक्षिङ्गत इति मातरि तस्यां तथैव वक्तुं योग्यत्वादुक्तं परः

## श्रीशुक उवाच ।

**इत्यभिष्टूय पुरुषं यद्रूप[१]मनिदं यथा ।**
**ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवम् ॥ ४२ ॥**

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुमान् परमपुरुषोत्तम इत्यर्थः । तत्र साक्षात् स्वयमेव न त्वंशादिना अत एव भगवान् सर्वैश्वर्ययुक्तः अंशेन श्रीबलदेवेनेति तस्यापि तस्यां जन्म प्रकाशितमिति ज्ञेयं न इति साक्षात्तदङ्गविशेषयोर्युवयोर्भवायेति किम्वक्तव्यमपि तु तत्प्रजानामस्माकमेवेत्यर्थः । यद्वा, अंशेन मत्स्याश्वादिना योऽस्माकं भवाय भवेत् स एव साक्षात्ते कुक्षिं गत इति यत् एतद्दिष्ट्या । ननु, कंसस्य दुःखेष्टाभरेण बिभेमि तत्राहुः—मुमूर्षोरिति । निकटायातमृत्युत्वादेवं चेष्टत इति भावः । ते भयस्माभूत्त्वं भयमाकुर्वित्यर्थः । ननु, न जाने तावदेव किमनिष्टं स्यादिति तत्राहुः—यदूनां सर्वेषामपि किम्पुनस्तव श्रीवसुदेवादीनां वा तस्य स्वस्य वेत्यर्थः । एवं नित्यमेव देवास्तां स्तुवन्तीति ज्ञेयं तथा च विष्णुपुराणे—

"अदृष्टाः पुरुषैः स्त्रीभिर्देवकीं देवतागणाः ।
बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम्" ॥

इति ॥ ४१ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दिवकीं प्रत्याहुः—दिष्ट्याम्बेति भवाय समृद्धौ ॥ ४१ ॥ ४२ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवकीं प्रत्याहुः—दिष्ट्येति । हे अम्ब ! नोऽस्माकं भवाय समृद्धये अंशेन स्वसङ्कल्पेन हेतुना परमपुरुषो भगवान् साक्षात् तव कुक्षिं प्रविष्टः मुमूर्षोर्भोजपतेः कंसाद्भयं तव माभूत् तव आत्मजो यदूनां गोप्ता भविता भविष्यति ॥ ४१ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्भक्तबहुमानातिशयेनापि भागवतो धर्म इति प्रदर्शनाय देवकीमाह—दिष्ट्येति । दिष्ट्या मङ्गलं "दिष्ट्या स्यान्मङ्गलादिषु" इति यादवः साक्षात्तुर्यः जाग्रदाद्यवस्थातिक्रान्तः भविता भविष्यति ॥ ४१ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसङ्गात्तच्चारित्रं फलरूपं निरूपयन् देवकीसान्त्वनमप्याह—दिष्ट्याम्बेति । हे अम्ब मातः ! सर्वात्मकस्य भगवतो माता मातेव नृसिंहादिवदकस्मादेवाविर्भावो युक्तः यत्ते कुक्षिं गत

एतद्दिष्ट्या उक्तमर्थमनुपपादयितुमाह—परः पुमानिति पुरुषोत्तम इत्यर्थः । अंशेन तव कुक्ष्येकदेशेन प्रद्युम्नांशेन पुत्रो वा साक्षात् भगवानिति ज्ञानक्रियांशव्यावृत्त्यर्थं तवोदरे त्वदर्थं नागतः किन्तु भवाय नोऽस्माकमेवोद्भवाय तव कुक्षिं गतः । तर्हि मम का गतिरिति चेत्तत्राह—तव भयं माभूत्र भविष्यति आशंसायां प्रथमार्थे छन्दसि लुङ् लङ् लिट इति लडर्थे लुङ् माङिलुङ् ( ३।३।१७५ )इति सूत्रात् भोजपतेः कंसात् स हि वचनेनैव भीषयति न तु क्रियां कर्तुं शक्तः वचनं च तस्योपेक्ष्यं यतोयं मुमूर्षुः मुमूर्षूणां विकृता गिरो भवन्ति । ननु, वचनमात्रेणैव कथं भयनिवृत्तिः ? तत्राह—गोप्ता यदूनां भविता तवात्मज इति । तव रक्षायां कः सन्देहः यदूनां सर्वेषामेव तवात्मजो गोप्ता भविष्यति अनेन स्वरूपं कार्यमानुषङ्गिकं च कार्यमुक्तम् ॥ ४१ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवकीं स्तुवन्तं आश्वासयन्ति—दिष्ट्येति । अंशेन बलदेवेन सह कुक्षिङ्गत इति यद्वा योंऽशेन परः पुमान् प्रकृतीक्षणकर्त्ता भवेत् साक्षाद्भगवानित्यर्थः । भवाय भूत्यै ॥ ४१ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीदेवकीं प्रत्याहुः—दिष्ट्येति ! हे अम्ब मातः ! योंऽशेन नोभवायोद्भवायभवति स साक्षात्परः पुमान् ते कुक्षिङ्गतः अत्याश्चर्यरूपं तव भाग्यम् ॥ ४१ ॥

———

### भाषा टीका ।

अब सब देवता श्रीदेवकीजी सूं कहैं हैं कि—हे अम्ब ! ये भी एक बडो आनंद भयो, कि—जो भगवान् अपनें एक अंश सों हम सबन के कल्याण करबे कों समर्थ हैं, वे साक्षात् परम पुरुष तुमारी कुक्षि में आए हैं ताहे सों अब ताकूं मरबे की इच्छा वारे कंस सों भय मत होय, काहे सों, कि—तेरो पुत्र यादवन की रक्षा करन वारो होवैगो ॥ ४१ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्य रूपमनिदं सर्वप्रत्यग्भूतम् यथा यथावत् अस्मात् पश्च-

(१) भविदन्यथा इति वीर० ।

## इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां दशमस्कन्धे गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जित्वा पताविहस्थास्येते इति मन्यमाना ब्रह्मेशानौ पुरोधाय पुरतःकृत्वा ययुरिति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुरुषमिति श्रीदेवकीहृदयपुरे स्थितमित्यभिप्रायेण । यद्वा परमपुरुषोत्तमं यस्य रूपमनिदं प्रपञ्चातीतं परब्रह्मात्मकं तथा तथाभूतत्वेन स्तुतेरविषयमपीत्यर्थः । इत्यनेन देवकीजन्ममात्रेणैव भूभारोऽपनीत इत्यादिगर्भितेन प्रकारेणामितः स्तुत्वेति परमात्मतादिवर्णनेन स्तवनादपि श्रीदेवकीगर्भजातत्वादिवर्णनस्तुतेरुत्कर्षोऽभिप्रेतः ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे श्रीसुदर्शनसूरिकृते शुकपक्षीये

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं यथा यस्य भगवतो रूपम् अविदंस्तथा स्वमत्यनुसारेण तं परमपुरुषमभिष्टूय ब्रह्मरुद्रौ पुरस्कृत्य देवाः स्वर्गं ययुः ॥४२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्रूपमनिदं प्रत्यक्षसिद्धं जगद्विलक्षणं तं पुरुषं पूर्णं यथा यथावदाभिष्टूय यद्वा यद्रूपं यथाऽनिदं प्रतीयते तादृशैर्विशेषणैरभिष्टूय ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

द्वितीयोऽध्यायः ॥ २ ॥

( विजयध्वजतीर्थरीत्या तृतीयः ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

द्वितीयोऽध्यायः ॥ २ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपसंहरति—इतीति । पुरुषमिति, स्वतन्त्रतया सर्वकार्यकर्तृत्वमुक्तं यद्रूपं पूर्वं स्तोत्रे यादृशं रूपं निरूपितम् अनिदं यथोक्तं तथा च न भवति दैत्यानामपि मुक्तिदानेन हि तत्कर्तृत्वात् इदमेव भवदपि तथा न भवति प्रकारभेदेन सर्वमेव सत्यं सर्वमसत्यमित्यर्थः । ब्रह्मेशानौ कथं चिदत्रैव स्थास्यत इति शङ्कया तौ पुरोधायाऽग्रेकृत्वा देवा दिवं प्रतिययुः प्रतिदिवमिति एकविंशतिस्वर्गाः शतं स्वर्गाश्चेति मतभेदेन स्वस्वस्वर्गं स स देवो गत इत्यर्थः । ययुरिति मध्ये दैत्यकृतो विघ्नः कोऽपि न जात इति "याप्रापणे" इति धातुना सूचितम् ॥ ४२ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां श्रीसुबोधिन्यां दशमस्कन्धविवरणे

द्वितीयाध्यायविवरणम् ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यस्य रूपम् अनिदं प्रपञ्चातीतं चिन्मयमित्यर्थः । अस्मान् वञ्चयित्वा एताविह किमपि रहस्यमद्भुतं द्रक्ष्यत इति मन्यमानौ ब्रह्मेशानौ पुरतः कृत्वा ॥ ४२ ॥

इति सारार्थदर्शिन्याम् हर्षिण्यां भक्तचेतसाम् ।

द्वितीयो दशमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं प्राकृतमनिदमप्राकृतम् अप्राकृतविग्रहं परं पुरुषम् इति पूर्वोक्तरीत्या यथाशक्त्याभिष्टूय ब्रह्मेशानौ पूज्यतया पुरोधाय पुरस्कृत्य दिवं प्रति ययुः यद्वा, वयमंशेनात्रावतीर्णा भगवदाज्ञया तथैव निवसामः एतौ तु कदाचिदत्र भगवल्लीलादर्शनार्थं साक्षान्निवसिष्यत अतः पुरोधायेत्युम् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वितीयाऽध्यायार्थप्रकाशः ॥ २ ॥

भाषाटीका ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—भगवान् को जैसो वाचाभगोचर स्वरूप है तारीत सों नहीं जानते भये देवता लोग, भगवान् की स्तुति करके और ब्रह्माजी तथा श्री महादेवजी को आगे करकें फिर स्वर्ग को जात भये ॥ ४२ ॥

इतिश्री मद्भागवत दशमस्कन्ध में द्वितीयाध्याय
की श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ २ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## ॥ तृतीयोऽध्यायः ॥

---

### श्रीशुक उवाच ।

अथ सर्वगुणोपेतः कालः परमशोभनः ।
यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥
दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥ २ ॥
नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ।
द्विजालिकुलसन्नादस्तवका वनराजयः ॥ ३ ॥
ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तृतीये निजरूपेण सम्भूतस्तु हरिः स्वयम् ।
पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥

अथेति मङ्गलार्थम् यर्हि सर्वगुणोपेतः कालो बभूव तदा देवक्यां विष्णुराविरासीदित्यष्टमश्लोकगतेनान्वयः। परमशोभनत्वमेवाह—यर्हीत्यादिना । अजनात्नारायणाज्जन्म यस्य प्रजापतेस्तस्य ऋक्षं रोहिणीनक्षत्रं कथम्भूतम् ? शान्तानि ऋक्षाण्यश्विन्यादीनि ग्रहाश्च तारकाश्च यस्मिन् तत् यर्हीति सर्वत्रानुषज्यते ॥ १ ॥

निर्मलानामुडुगणानामुदयो यस्मिंस्तत्तथा मङ्गलभूयिष्ठाः पुरादयो यस्यां सा ॥ २ ॥

जलरुहैः श्रीः शोभा येषां ते द्विजालिकुलानां सन्नादो येषु ते स्तवका यासु ताः ॥ ३ ॥

समिन्धत अडागमोऽत्र द्रष्टव्यः समैन्धतेति सम्यग्दीप्ता बभूवुरित्यर्थः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वगुणोपेतत्वादेव परमशोभनः यर्हीत्यादिकं तैर्योजितं तत्र यर्ह्यजने जायमाने तत्संनिहितसमये तादृग्जनजन्मर्क्षादिकमासीत् यर्हि च जनार्दने जायमाने तज्जन्मसमय एव च तादृग्दुन्दुभिनादादिकमासीत् तदा देवक्यामाविरासीदिति विशेषो द्रष्टव्यः यद्यप्येवं सार्द्धैरष्टभिरेकमेव वाक्यं स्यात्तथापि सुबोधत्वाय तदन्तर्वाक्यानि पृथक् पृथगङ्कैरेव व्याख्येयानि· सार्द्धाष्टस्वे ऽप्यष्टमश्लोकगतेनेति तद्व्याख्यापरार्द्धस्य तदन्तर्भावविवक्षया शान्तर्क्षादिकत्वं तस्मिंस्तु रोहिणीदिने सर्वेषामृक्षादीनामुग्रदृष्टित्वराहित्यादिना तच्चोग्रादीनामुग्रत्वादिपरिहारादेः अत्र विशेषश्लोकः खमाणिक्यनाम्नि ज्योतिर्ग्रंथे "उच्चस्थाः शशिभौमचान्द्रिशनयो लग्नं वृषो लाभगो जीवः सिंहतुलालिषु क्रमवशात् पूषोशनोराहवः । नैशीथः समयोऽष्टमीबुधदिनं ब्रह्मर्क्षमत्र क्षणे श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परम्ब्रह्म तत्॥" इति किञ्चान्यत्र "वृषकन्यातुलामीनराजेषुस्फुटमुच्चगाः । सोमसौम्यशनिक्षोणीसुतास्तज्जन्मनि स्थिताः ॥ यस्माद्विश्वावसौ वर्षे जन्म श्रीमन्दजन्मनः विश्वमेव वसुश्रीमद्बभूवामुष्य तुष्यतः" ॥ १ ॥

उदयः प्रकाशः ॥ २ ॥

प्रसन्नसलिलत्वजलरुहश्रीत्वयोस्तत्र तत्र पृथक् निर्देशः प्राधान्यमात्रेण अत उभयेषामप्युभयं ज्ञेयम् ॥ ३ ॥

सुखस्पर्श इति शैत्यं पुण्येति सौरभ्यं "पुण्यं तु चार्वपि" इत्यमरः शुचिर्निर्मल इति धूल्याद्यसम्बन्धेन मान्द्यमुक्तं चशब्दोऽत्र वाय्वग्न्योर्युगपतापेक्षया पूर्वोक्तसमुच्चये अत एव तत्र वायौ सतीत्यर्थः । शान्ता निर्वाणप्राया अपि यद्वा प्रदक्षिणावर्त्ताः सन्त इत्यर्थः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ सर्वेति अभूतदिति शेषः ॥ १—३ ॥

पद्य*तस्मिन् पूर्वं शान्ताः अग्नयः तदा समैधिताज्ज्वलुरित्यर्थः यद्वा शान्ता अकलुषाः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवदवतारं प्रस्तौति—अथेति । यर्ह्येव अजनजन्म अजनस्य कर्माद्यत्पत्तिरहितस्य भगवतो जन्म अथ तदा कालः सर्वैर्गुणैरुपेतः अत एव परमशोभनोऽभूदिति शेषः । तदेव प्रपञ्चयति शान्तर्क्षग्रहतारकम् ऋक्षं भगवज्जन्मनक्षत्रं रोहिण्याख्यं तस्मिन् शान्ता अनुकूलाः अन्येषु च नक्षत्रेषु ग्रहाः सूर्यादयः तारकाः अश्विन्यादिव्यतिरिक्तनक्षत्राणि च यस्मिन् यथा भवति तथा अभूदिति क्रियाविशेषणम्, यद्वा, अजनाद्भगवतो जन्म यस्य तस्य प्रजापतेः यदृक्षं रोहिण्याख्यं तस्मिन् इत्यादि पूर्ववत् ॥ १ ॥

तदा दिशः प्रसेदुः प्रसन्ना बभूवुः गगनं निर्मलानाम् उडूनां नक्षत्राणां गणो यस्मिन् तथाभूतं पुराणां प्राकारोपेतानां ग्रामाणां तद्रहितानां व्रजानां गोष्ठानाञ्चाकराश्रयभूता मही मङ्गलभूयिष्ठा बभूव ॥ २ ॥

नद्यस्तु प्रसन्नानि सलिलानि यासु तथाभूताः ह्रदास्तु जलरुहाणां श्रीर्येषु तथाभूताः वनानां राजयः पङ्क्तयस्तु द्विजानां पक्षिणामलीनां भृङ्गाणाञ्च कुलानां सङ्घानां सन्नादो येषु तानि स्तवकानि यासु तथाभूताः ॥ ३ ॥

वायुस्तु शुचिर्धूलिरहितः पुण्यगन्धवहः सुगन्धिस्सुखस्पर्शश्च ववौ प्रससार द्विजातीनां त्रैवर्णिकानामग्नयः पूर्वं शान्तास्तदा समैधत "इन्धि दीप्तौ" जज्वलुः समेधिताः इति पाठेऽपि स एवार्थः यद्वा शान्ताः अकलुषाः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवद्भक्त्यर्थं तदवतारप्रयोजनं समयेनाविर्भूतपूर्णकालादिगुणैर्विलासमाह—अथेति । सर्वेषां ग्रहाणामुच्चस्थानगतत्वादिगुणविशिष्टः सर्वगुणोपेतः परमं शोभनं यस्मात्स तथा अजनजन्मर्क्षं रोहिणी यत्र स तथा शान्तानि प्रसन्नानि ऋक्षाणि ग्रहाश्च तारका यस्मिन् स तथा यर्हि यदैवंविधः कालः ॥ १ ॥

तदा दिशः प्रसेदुरित्यादिकमभूत् निर्मलोडुगणस्य उदयो यस्मिन् स तथा मङ्गलपूर्णाः पुराणि ग्रामा व्रजाकराश्च यस्यां सा तथा ॥ २ ॥

जलरुहाणां पद्मानां श्रियो येषु तथा वनराजयः वनपङ्क्तयः ॥ ३ ॥

समिन्धत ज्वलिताः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति । यर्हि यदा अजनस्य कदाप्यन्यदा जातत्वेनाश्रुतस्य श्रीकृष्णस्य निजजन्मना स्वीक्रियमाणम् ऋक्षं तदूर्ध्वापरान्तकालविशेषगतरोहिण्याख्यम् अभूत्तदैव सर्वकालगुणोपेतः सर्वशुभसमेतश्च कालोऽभूत्तदिच्छायां जातायां दुर्घटघटनीभिः तच्छक्तिरेव वा स्वभावेनैव वा स तथा सम्पन्न इत्यर्थः । सर्वगुणत्वादिकमाह—शान्तेत्यादिना । यथा यत्र तत्र ज्ञेयं तेषां भीषणस्वभावत्वेन सर्वं एव तेभ्यो द्रुह्यन्तीति असुरद्रुहां सर्वप्राणिनाञ्च एव तेभ्यो द्रुह्यन्तीति ॥ १—४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जननं वर्णनं स्तोत्रं सान्त्वनं गमनं तथा ।
षड्विधो भगवानत्र तृतीये विनिरूप्यते ॥
रूपान्तरस्वीकरणमध्यायार्थं इहोदितः ।
प्रतीयमानो भगवानिति षड्विध उच्यते ॥
अष्टभिश्च चतुर्भिर्वै दशभिश्चाष्टभिस्तथा ।
चतुर्दशभिरष्टाभिः षडर्थाः क्रमतोऽत्र हि ॥
ऐश्वर्यमष्टधा यस्मात् अर्द्धमात्रा हरौ परा ।
सार्द्धाष्टभिरतः प्रोक्तमैश्वर्यं सर्वमङ्गलम् ॥
अधिकारिणि काले वै अनन्ता भगवद्गुणाः ।
खण्डशस्ते पववशः सर्वेषां फलबोधकाः ॥
मूले समागते कालः स्वकीयान् सफलान् गुणान् ।
हरौ प्रदर्शनार्थाय प्रकटीकृतवान्यथा ॥
देशोऽपि त्रिविधश्चैव भूतान्यपि तथैव च ।
तत्रस्था ये विदुस्ते ऽपि ज्ञापनार्थं गुणान् स्वकान् ॥
प्रकटीकृतवन्तो वै दोषनाशपुरस्सरम् ।

एवं पूर्वाध्याये भगवत उद्यममुक्त्वा सर्वेषां त्रिविधदुःखदूरीकरणाय रूपान्तरस्वीकरणमुच्यते अत आदौ रूपं वक्तव्यम् अन्यथा रूपान्तरत्वं न स्यात् तस्य च प्राकट्यवद्यधिकारिणां नैमित्तिकगुणप्राकट्यं सर्वं नोच्येत तदा प्राकट्यमपि जननापरपर्यायं स्यात् न ह्येकस्य जनने सर्वे गुणाः प्रकटीभवन्ति महतामन्येषां च जनकयोर्वा यदि स्तोत्रं नोच्येत तादृशमेव जनितमिति तयोर्बुद्धिः स्यात् रूपस्य प्रदर्शनमात्रप्रयोजनव्यावृत्त्यर्थं स्वरूपकथनमपि वक्तव्यम् अन्यथा आश्चर्यमात्रत्वेन निदानाज्ञानात् सन्देह एव तिष्ठेत रूपान्तरेण कार्यं न भवतीति गमनमावश्यकं रूपान्तराभावे सर्वमुक्तिरेव स्यात् लीलाया रसात्मता च न स्यात् अलौकिकं लोकात् दुर्बलमिति ज्ञापयितुं दृष्टेऽप्यलौकिके जनकयोर्भयवर्णनं प्रथममष्टैश्वर्ययुक्तमाविर्भावमाह—यर्ह्येव ते स्तुत्वा गताः अथ तदनन्तरमेव भगवानाविर्भूत इति सम्बन्धः तदैव सर्वगुणोपेतः कालो जातः यावन्तो गुणाः काले स्थापितास्ते सर्वे प्रकटीभूता भगवज्ज्ञापनार्थमित्यर्थः । अत एव परमशोभनो जातः परमस्यापि भगवतः पूर्णगुणस्य शोभाजनकः कालावयवरूपाणि यानि नक्षत्राणि तेष्वपि केवलगुणाधारभूता रोहिण्येव भगवता हि स्वगुणप्राकट्यार्थमेव ब्रह्मा उत्पादितः स तु विकारान् दूरीकृत्य गुणानेव प्रकटयितुं तन्नक्षत्रं गृहीतवान् अत एवाजनस्य जन्मरहितस्य पुत्रोऽपि जन्मरहित एवेति ज्ञापयितुमजनाज्जन्म यस्य तस्य नक्षत्रमित्युक्तं "ततो वै ते सर्वाश्चोद्यानरोहन् तद्रोहिण्यै रोहिणीत्वम्" इति श्रुतेः यर्ह्येवाजनजन्मर्क्षं जातं तदैव सर्वगुणोपेतः कालो जात इति संबन्धः अनेन नक्षत्रारम्भे जन्मोऽपि सूचितं तस्य नक्षत्रस्य सर्वेषां सहायवर्तिनामनुगुणयमाह, शान्तर्क्षग्रहतारकमिति. शान्तान्यन्यानि ऋक्षाणि ग्रहास्ताराश्च यस्य अश्विन्यादीनि नक्षत्राणि आदित्यादयो ग्रहा अन्यानि च नक्षत्राणि ताराः यद्यपि तेषां ज्योतिःशास्त्रे फलं नोक्तं तथाप्यस्तीति शान्तत्वमुक्तम् अनेन स्वाभाविका आनुषङ्गिकाश्च गुणा निर्दोषाः कालगता निरूपिताः ॥ १ ॥

देशस्त्रिविधः अधः उपरि परितश्चेति तत्र परितो दिशः उपरि द्यौरधो भूमिः त्रयाणां दोषाभावपूर्वकं गुणा उच्यन्ते, तत्र

त्वमस्य लोकस्य विभो! रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर!।
राजन्यसंज्ञाऽसुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ २१ ॥
अयं (१) त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाऽग्रजांस्ते (२) न्यवधीत्सुरेश्वर!।
स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विश्वोत्पत्तिसम्भवात् किञ्चिदीश्वरे सर्वेश्वरे ब्रह्मणि त्वयि विरुध्यते इत्यर्थः। ननु ब्रह्मविष्णुशिवाः सृष्टिस्थितिसंहारकर्त्तार इति प्रसिद्धिरत्राह त्वदाश्रयत्वादुपचर्यंते गुणैरिति विष्णुः स्वगुणनियन्ता स्वावतारः "जगृहे पौरुषं रूपं भगवान्" इति "कृष्णस्तु भगवान्स्वयम्" इति च प्रागुक्तेः ब्रह्मशिवौ तदंशविशेषौ गुणावतारौ रजस्तमः प्रकृती "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इति पूर्वोक्तेस्तवाज्ञानुकारिणौ एवं त्वदाश्रयत्वात्तेषामपि तत्कर्तृत्वं गुणैः सत्त्वादिभिरुपचर्यंते यत्तु गुणैः कुर्वद्भिस्त्वयि सृष्ट्यादिकर्तृत्वमुपचर्यंते इति तदयुक्तमेव "यतो वा इमानि भूतानि जायन्ते, इति "जन्माद्यस्य यतः,,(१।१।२)इति श्रुतिसूत्रयोर्ब्रह्मलक्षणप्रतिपादकयोर्निर्विषयत्वप्रसङ्गात् साङ्ख्यपक्षप्रवेशाच्च ॥ १९ ॥

"त्वदाश्रयत्वादुपचर्यंते गुणैः" इत्येतद्विवृणोति--स इति। सः निखिलविश्वजन्मादिकर्ता त्वमवान्तरलोकस्थित्याद्यर्थं शुक्लादिवर्णान् गुणावतारद्वारा विभर्षीत्यर्थः ॥ २० ॥

### भाषा टीका।

यदि कहो, कि-परमात्मा तो निर्विकार है और जो उपादान कारण होवै है सो विकार को आश्रय होवै है तब परमात्मा जगत् के कैसें उपादान होसकें? ऐसी शङ्का होय है, तहां वसुदेवजी कहैं हैं, कि-हे विभो! आप सङ्कल्प के अतिरिक्त और कछु चेष्टा भी नहीं करोहौ, तथा प्रकृति के सत्वादि तीनो गुणोंसे रहित भी हौ, और आप के स्वरूप में विकार भी नहीं होवै है, तथापि समस्त वेद वेदान्त, या जगत् के जन्म स्थिति और प्रलय कों आपही सों कहैं हैं। यदि कहो कि, वेदान्त ऐसो असङ्गत क्यों? कहे हैं, तहां कहैं, कि-आप ईश्वर हौ चेतन अचेतनों के नियामक हौ और चेतनाचेतन आप के शरीर है। तथा आप ब्रह्म हौ, अर्थात् निमित्त उपादान कारणपने के उपयोगी सर्वज्ञत्व सर्वशक्तित्वादिक अनन्त कल्याण गुणन सों और स्वरूप सों भी बृहत् हौ ताईसों आप के विषैं कारणत्व को विरोध नहीं होवै है। अचेतन रूप विशेषण में विकार होने पर भी स्वरूप अविक्रिय ही रहे हैं। और आप के शरीर रूप समस्त कार्य वर्ग के आश्रय अर्थात् धारक होयवे सों जगत् रूप शरीर गत उत्पत्यादिक गुणन सो आप के विषै उपचार मात्र होवै हैं, वास्तव में उत्पत्यादिक आप के शरीर गत है ॥ १९ ॥

यदि कहो, कि जगत् के जन्म और संहार के करन वारेतो ब्रह्मा और महादेव हैं मैं नहीं हूं, तहां कहैं हैं, कि-वेही पूर्वोक्त आप ही त्रिलोक के पालन के तांई अपनी माया सों शुक्लवर्ण अर्थात् शुद्धसत्त्व मय दिव्य मङ्गल विग्रह कों धारण करो हौ, ऐसेंई सृष्टि के अर्थ रजोगुण सें वर्द्धित रक्त वर्ण अर्थात् चतुर्मुख शरीर को धारण करो हौ, ऐसेंई जनों के नाश के अर्थ तमोगुण से वर्द्धित कृष्ण वर्ण अर्थात् रुद्र रूप को धारण करो हौ, [या में इतनोंई तरतम भाव है, कि-पालनार्थ साक्षात् आपही विग्रह को स्वीकार करें हैं और दोनों रूप जीव द्वारक हैं] ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

रिरक्षिषुः रक्षितुमिच्छुरवतीर्णोऽसि कृष्णेन वर्णेन अतः साधूनां रक्षणार्थं राजन्यसंज्ञा ये ऽसुरकोटियूथपास्तैर्निर्व्यूह्यमाना इतस्ततश्चाल्यमानाश्चमूः सेनाः निहनिष्यसे संहरिष्यसि ॥ २१ ॥

किन्तु तथाप्यप्रमत्तेन त्वया भाव्यमित्याह—अयन्त्विति, असभ्यः खलः समर्पितं कथितम् अभिसरत्यागमिष्यति ॥२२॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अधुना तु लोकहितार्थं स्वयमेव मत्पुत्रतां प्राप्तोसि अहो लोकभाग्यं किमुत मद्भाग्यमित्याह--त्वमिति। अस्य विविधदुःखसागरनिमग्नस्य यादवादिभक्तजनप्रधानस्य सर्वलोकस्य रिरक्षिषुः सुपांसुपो भवन्तीति द्वितीयायाः षष्ठी तं रक्षितुमित्यर्थः हे विभो अखिलेश्वरेति अवतारासम्भवं द्योतयति तथाप्यवतीर्णोऽसि तत्रापि मम गृहे मत्सम्बन्धमात्रयुक्ते कारागृहेऽपि अहो परमकारुण्यमाहात्म्यमिति भावः। तस्मात् क्षत्रियच्छद्मासुरचक्रवर्त्तिवृन्दैर्निःशेषेण विशेषेण च उह्यमानाश्चाल्यमाना याश्चम्वस्ताः पुनरावृत्त्यभावेन नितरां हनिष्यस एव तदग्रतस्तासां हननेन तेषां हननस्यापि सुष्ठुतात्तैस्तत्सहितहननमेव विवक्षितं यद्वा निर्व्यूह्यमाना निर्व्यूढाः सिद्धा इत्यर्थः दीर्घपाठस्तु तेषानिर्व्यूह्यमाना निःशेषेण व्यूहं कार्यमाणव्यूहरचनेन रच्यमाना मत्समतः निःशेषेण व्यूहं ... इत्यर्थः ॥ २१ ॥

(१) तमस्यस्तव। (२) न्यहनत् इति च भिज० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अयमिति । अत्र तेषामासां किञ्चिदति पितृस्नेहमूढतया त्विदं निवेदयामीत्यर्थः । तदेवाह तथापीति यद्वा तेषां मध्ये महादुष्टत्वात्तदीयानां नः परमदुःखदत्वात् अद्यापि धृष्टचेष्टतयैव भाविष्याद्ययमेव प्रथमं प्रतिकार्यं इत्याह अभ्यहनत् अभ्यहन् शिलायांपेषयामास न्यवधीदिति पाठस्तु सार्वत्रिकः तैः सम्मतश्च सिद्धत्वेनासमाहितत्वात् अभिसरति आगच्छन्नेव वर्त्तते हे सुरेश्वरेति तच्च त्वदुक्तदेववैरियामसुराणां युक्तमेवेति भावः ॥ २२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तमस्वः तमोगुणाभिभूतः ॥ २२ ॥ २३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यपि भवान् दुष्कक्विनाशपूर्वकं त्रिलोकपालनाधिकृतत्वात्तदुपयुक्तया स्वलीलाधारयया तन्वा अवातरत् तथाप्येनां तिरोधाप्य मनुष्यसजातीयां तनुमाश्रयान्यथाऽधुनैवाऽयं कंसोऽभिद्रवतीत्यत्राह-त्वमिति द्वाभ्याम् । हे विभोऽखिलेश्वर!अस्य लोकस्य रिरक्षिपुः पालयितुमिच्छुः मम गृहे कथञ्चेऽवतीर्णोऽसि अस्येति कर्मणिषष्ठी राजन्यसंज्ञा येऽसुरसङ्घास्तेषां कोटिभिर्निर्व्यूह्यमानाः प्रचोद्यमानाः चमूः सेनाः निहनिष्यसि ॥ २१ ॥

तथा हे सुरेश्वर! असभ्यः असत्सभाप्रवेशानर्हः खलेश्वर इति पाठे दुष्टाग्रगण्यः अयं कंसो मम गृहे तव जन्म श्रुत्वा भविष्यतीति श्रुत्वा तन्मात्सर्यादेव हेतोस्तवाग्रजान्न्यहनद्धतवान् कंसोऽधुना पुरुषैः स्वभटैः समर्पितं निवेदितं भावितमिति यावत्तवावतारं श्रुत्वाऽधुनैवोद्धृतमायुधं खड्गं येन तथाभूतो ऽभिसरत्यभ्येति अत एव तनूं तिरोधापयेति भावः अधुना अभिसरन्तमपि हन्तुं प्रभुरेव त्वं तथाप्यहं ततो बिभेमीति च भावः ॥ २२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वरूपेषु सर्वशक्तिरस्तीत्याशयेन स्तौति-त्वमस्येति । त्वदवतारेण संहारकारणेन रक्षा कथंकारा स्यादित्याशङ्क्यासतां हनने सतां तारतम्येन सुखसमृद्धिः स्यादित्याशयेनाह-राजन्येति । निर्व्यूह्यमानां निहनिष्यसे निहनिष्यसि गमयिष्यसि सतां सुखासुखमधमितीतिविशेषः । "चरभक्षणे" इति धातोः "सतां सुखविधृक्चर्थमसतां पीडनं हरेः" इत्यादेश्च ॥ २१ ॥

स्वात्मनि स्वभक्तेषु द्वेषबुद्धिकरत्वेन द्वेषात्मकं तमो भवतीत्यतस्तदुपादाय स्वत्प्रवर्तनमित्याशयेनाह-अयं तमस्व इति । तमस्वः स्वभक्तद्वेषमूर्तिः तदुक्तं "तमो द्वेषात्मकं शुद्धं सत्त्वात्मागमुदीर्यते" इति वा जन्म भविष्यतीति स्वपुरुषैः समर्पितम् अभिसरत्यभ्यागच्छति उद्यायुधः धृतायुधः ॥ २२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वमस्येति मम त्वदेककामत्वात् कारागृहरूपेऽपि दारेषु वा विभो सर्वत्र सर्वांशेन स्थितः हे अखिलेश्वर ! सर्वकायमनोवागतीताचिन्त्यानन्तशक्ते ! ततो भक्तकृपाप्रवर्त्तिताचिन्त्यशक्त्या तवावयोः प्रवेशोऽपि घटते भवदङ्गीकृतः पुत्रभावोऽपीति भावः न विद्यते इत्यस्य रूपव्याख्यायामपि सत्यमित्यादिद्वयम् ॥ २१ ॥

अथ वृत्तमपि निवेदयन् तथाप्ययन्तु शीघ्रमेव प्रतिकार्य इत्यभिप्रेत्य अयन्त्विति अयेति आनन्तर्ये योगनिद्रया तावदुद्वारेन्द्रियावरणात् अन्तरेवमन्तः किञ्चिज्ज्ञातमिति भानात् ॥ २२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सङ्कल्पेणात्मकमाह-त्वमस्येति । अस्य लोकस्य रिरक्षिपुः रक्षितुमिच्छुः सन् मे गृहे अवतीर्णोऽसि अवद्यरक्षायां हेतुः अखिलेश्वरेति विभुरिति सामर्थ्यम् इदं सङ्कल्पेणाकार्यं देवान् प्रति तद्वैरिदैत्यवधादेव न तु सर्वनाशकत्वेन अतो देवांशजगतो रक्षा एव दैत्यानामेव तु निवारकस्तदाह राजन्यसंज्ञेति राजन्या राजान इति संज्ञामात्रं वस्तुतस्त्वसुरा एव तेषां कोटयः सेनारूपास्तासां यूथपाः महान्तः कंसादयस्तैर्नितरां व्यूह्यमानाः परिपाल्यमानाः प्रेर्यमाणा वा चमूर्निहनिष्यसे नितरां मारयिष्यसे अतो रक्षार्थमेव दैत्यवधः भगवत्सान्निध्यात्सर्वज्ञता तत्र यस्मिन् विदिते सर्वमिदं ख्यातं भवतीत्याप्तज्ञानं वा ॥ २१ ॥

एवमपि ज्ञाते भयं न निवृत्तमिति लौकिकस्य बलिष्ठत्वज्ञापनाय भयात् भगवन्तं विज्ञापयति-अयं त्वसभ्य इति । तुशब्दः पूर्वार्थे स्तुतिलक्षणां व्यावर्तयति भगवानवतीर्ण इति सतामेव सुखं भवति नत्वसताम् अयन्त्वसभ्यः इममर्थं मन्यते अत एव तव जन्मनो गृहे श्रुत्वा ते अग्रजान् मम षट् पुत्रान् न्यवधीत् सुराणामीश्वरेति सम्बोधनं पक्षपातार्थं तर्हि किमधुना कर्त्तव्यमिति चेत्तत्राह स एव क्रूरात्मा कंसः रक्षकैः पुरुषैस्तेऽवतारं निवेदितं श्रुत्वा उदायुधः सन् अधुनैव निकटे एवाभिसरत्यागच्छति वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रयोगः ईश्वरे निवेदनमात्रं सेवककार्यं कर्त्तव्यं प्रभुरेव जानातीत्यस्य तूष्णीं भावः अभिप्रायस्तु यदीदानीं मारणीयस्तदा स्वातन्त्र्येण नोचेदन्यत्र गन्तव्यमिति इदानीं मारणे गुप्ततया गोकुलवासिभिः सह क्रीडोद्धारादिकं न भविष्यतीति तत् कृत्वा पश्चान्मारणम् अतः पितुरभिप्रायादन्यत्र गतवानिति लक्ष्यते ॥ २२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भोस्तात! सत्यं त्वयाऽहं विदितत्तत्त्व एवास्मि त्वद्गृहे किमर्थमवातरमित्यपि जानासि चेद्ब्रूहीत्यत आह-त्वमिति अस्य लोकस्य इमं लोकम् अतः साधूनां रक्षणार्थं राजन्यसंज्ञा येऽसुरकोटियूथपास्तैः निव्यूह्यमानाः इतस्ततश्चाल्यमानाश्चमूः सेनाः ॥ २१ ॥

अतस्त्वत्कृपया तव सर्वमैश्वर्य्यमहं जानाम्येव तदप्यविवेकसमुद्रो मया दुस्तर एव यतः साम्प्रतिकस्य महासुरकंसस्य दौरात्म्यं त्वां ज्ञापयामीत्याह—अयन्त्विति । ननु भवतः

श्रीशुक उवाच।

अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम्।
देवकी तमुपाधावत्कंसाद्भीता शुचिस्मिता ॥ २३ ॥

देवक्युवाच।

रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्।
सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्म(१) दीपः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अलौकिकरूपमाधुर्यास्वादनिमग्नो मां न प्रहरिष्यति प्रत्युत प्रीणयिष्यतीति तत्राह—असभ्यः रसास्वादहेतुर्हि सभ्यत्वमेवेति भावः हिंसायां कैमुत्यमाह-तवेत्यादि। समर्पितं कथितम् अभिमुखमेव सरतीति तमागतप्रायमहं पश्यामीत्यतोऽधुनैव रूपमिदमुपसंहर तस्मिन्नागते तूपसञ्जिहीर्षोतः पूर्वं किं भविष्यतीति मे महाकम्प इति भावः ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भविष्यं कृत्यं विज्ञापयति, त्वामिति ॥ २१ ॥
कंसविचेष्टितं विज्ञापयति—भयमिति ॥ २२ ॥

---

भाषा टीका।

हे विभो! आप या लोक की रक्षा करवे की इच्छासुं अखिलेश्वर होकर कें मेरे घर में अवतरे हौ, सो राजन्य (क्षत्रिय) नाम वारे असुर कोटि यूथपन सों हलचल होन वारी उनकी सेनान कों आप मारोगे ॥ २१ ॥

हे सुरेश्वर! या असभ्य कंस ने तौ आप को जन्म हमारे घर में सुनकें तुमारे बडे भ्रातन को मारगेरे। और अब तुमारे अवतार कों अपने पुरुषन सों सुन कें हाथ में आयुध उठाय कें याई समय आयोई जाय है ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

उपाधावदस्तौत् ॥ २३ ॥

त्वयि भयशङ्कैव तावन्नास्तीति श्लोकचतुष्टयेनाह—देवकी किञ्चिद्विज्ञापयितुं रूपमिति यत्तत्किमपि रूपं वस्तु प्राहुर्वेदाः, किं तद्वस्तु? तदाह—अव्यक्तं अत्र हेतुः आद्यं कारणं, किं परमाणवः? न. ब्रह्म बृहत्, किं प्रधानं? न. ज्योतिश्चेतनं किं वैशेषिकाणामिव ज्ञानगुणम्? न. निर्गुणं, किं मीमांसकानामिव ज्ञानपरिणामि? न. निर्विकारं, किं पुष्कराक्षादीनामिव शक्तिविक्षेपपरिणामि? न. सत्तामात्रं, तर्हि किं सामान्यम्? न. निर्विशेषं, तर्हि किं कारणत्वात् सक्रियम्? न निरीहं सन्निधिमात्रेण कारणम् एवंभूतं किमपि कार्यकल्पं यद्वस्तु स एव साक्षात्त्वं विष्णुरिति। अपरोक्षश्चेत्याह-अध्यात्मदीप इति। बुद्ध्यादिकरणसङ्घातप्रकाशक इत्यर्थः। अथवा अव्यक्तं न केनापि प्रकारेण व्यज्यत इत्यव्यक्तं कथम्? उत्पत्त्या तावन्न व्यज्यत इत्याह—आद्यं सर्वस्य कार्यस्याद्यम् अनादीत्यर्थः। तथा ब्रह्म ज्योतिर्निर्गुणं निर्विकारमिति चतुर्भिः पदैर्देशेन प्रकाशेन च गुणेन च विकारेण च व्यक्तिं निराकरोति तथा सत्तामात्रमिति विशेषेण निर्विशेषमिति। सामान्येन निरीहमिति क्रियया च व्यक्तिं निराकरोति अन्यत्समानम् एवंभूतस्य तव न भयशङ्केति भावः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथ श्रीवसुदेवस्तवानन्तरं तमेनमित्यन्वयः। तं चिरमपेक्षितम् एवं दिव्यरूपेणाविर्भूतमित्यर्थः। आत्मजं निजोदरादेव जातत्वेन भातं तादृशमानोत्पादनं च ममता विशेषजननार्थम् अत एव मम गर्भजोऽभूदित्याद्युक्तिः किन्तु प्रसूतिरीत्यनुकरणात्तद्गोपनाय पूर्वं योगनिद्रया वा भगवत्तेजसा वा बाह्येन्द्रियावरणमपि कृतम् अत एवात्मेत्युक्तं महापुरुषः स्वयम् भगवान् तत्रात्मजत्वदर्शनं भये हेतुः महापुरुषत्वदर्शनं विस्मये हेतुः स्तोत्रे चेति ज्ञेयं तथापि भयस्थितिरात्मजत्वदर्शनमयस्य स्नेहस्य प्राबल्यं दर्शयति ॥ २३ ॥

रूपमिति। तैर्व्याख्यातं तत्राव्यक्तं सर्वागोचरं ननु, वस्तु च सर्वागोचरं चेति न सम्भवति तत्राह—कारणं सर्वकारणं कार्यान्यथानुपपत्त्यैव गम्यमित्यर्थः। न ह्यग्नेरर्चिषोऽग्निः प्रकाश्यते दह्यते वा स इति भावः। ननु, परमाणुसमुदाये स्वव्यव्यक्तत्वं कारणत्वं च विद्यत इति तत्रातिव्याप्तिः स्यादित्याशङ्क्ते किं परमाणव इति परिहरति नेति। तेषां वाय्वादिपरमाणूनां परस्पर व्यावृत्तेनं बृहत्तमत्वमित्यर्थः। तर्हि तत्तद्धर्ममये प्रधानेऽतिव्याप्तिरित्याह, किमिति परिहारे तु स्वतः प्रकाशमानत्वाज्ज्योतिः शब्देन चेतनमुच्यते प्रधानस्य जडत्वात् तत्प्रकाश्यत्वमिति भावः "ज्योतिश्चरणाभिधानात्" ( १।१।२५ ) इति न्यायात् ननु, चितो ज्ञानस्य योगाच्चेतनमुच्यते तर्हि यथा वैशेषिकाणामात्मानः स्वतो जडाः किन्तु ज्ञानगुणयोगादेव चेतना इति मतं तथा किन्त्वत्रापि तद्वदस्त्वित्याशङ्क्ते किं वैशेषिकाणामिति तथैव तत्राशङ्कान्तरं किं मीमांसकानामिव इति अथ भास्करीया यद्वदस्या एव शक्तिकृतविक्षेपेण

---

(१) दीपम् इति विजय०।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ज्ञानक्रियादिरूपतया परिणामं मन्यन्ते तदप्याशङ्कते किं भास्करीत्यादिना तत्परिहरति न सत्तामात्रमिति । सच्छब्देनात्र यत्त्वेवोच्यते तस्य तु प्रवृत्तिनिमित्तं सत्तातन्मात्रमित्यविकृतमेव तदित्यर्थः । तत्तु सोत्प्रासमाक्षिपति । तर्हीति सा खलु सामान्यं तच्च पराजातिरेवोच्यते सा च पूर्वोक्ता व्यक्तादिरूपा न भवतीति हस्तिस्नानमिव सर्वं जातमिति भावः । तत्र सिद्धान्तयति न निर्विशेषमिति सामान्यं खलु विशेषेष्वनुगतमेव स्यात् तत्तु विशेषात् पूर्वमुत्तरमपि वर्त्तमानं न सामान्याकारमित्यर्थः । ततस्तत्प्रकाशकत्वात्तद्वाचकशब्दस्यापि प्रवृत्तिनिमित्तं या चित् सैव सत्तोच्यत इत्यर्थः, चेतनत्वं च स्वयं प्रकाशत्वादेवोक्तमिति भावः । तदेवं सामञ्जस्ये पुनराशङ्कते तर्हीति सक्रियं सक्षोभमित्यर्थः । एवं निरीहमित्याद्यपि सन्निधिमात्रेणेति स्वरूपभूताचिन्त्यशक्त्यैवेत्यर्थः । विशेषतश्चायमर्थः ननु, सारांशविवेके सति जगदपि ब्रह्मत्वेनोपलक्ष्येत तर्हि केन विशेषस्तत्राह, साक्षादिति मायानावृतत्वेनेत्यर्थः । तस्मादिदं व्यक्तत्वं षाड्गुण्यं कृपादिविकारित्वम् अङ्गप्रत्यङ्गविशेषवत्त्वं करचरणादिचेष्टासौष्ठवमपि स्वरूप धर्मवैभवमेव श्रीरामानुजादिमतानुसारेण तत्स्वरूपस्य सधर्मत्वस्थापना तु श्रीभागवतसन्दर्भतट्टीकादौ द्रष्टव्या अतः सत्तामात्रं केवलधर्मरूपं ज्योतिः स्वप्रकाशचैतन्यं ब्रह्म सर्वतो बृहत् आद्यं जन्मराहितं इत्यदोषप्राकृततत्तद्धर्मनिरासेन ज्ञानिनः प्रतिप्रकाशमानं तद्वस्तु यत् रूपं श्रीविग्रहं प्राहुः स तद्रूप एव भवान् न चैतदपि तत्तद्दोषार्हं भवेत् अदृष्टदोषत्वात् विद्वदनुभवसिद्धार्थैः शास्त्रैर्निराकृतत्वाच्चेत्यभिप्रेत्य स्वयमेव निराकरोति तत्र जन्मराहित्यं साक्षादित्यनेनैव निराकरोति तत्तज्जपरिच्छेदवता स्वस्वरूपेणैव प्राकट्यात् परिच्छिन्नत्वं निराकरोति विष्णुरिति सर्वव्यापक इत्यर्थः । "न चान्तर्न बहिर्यस्य" इत्यादिवचनवृन्दात् श्रीयशोदादिभिः सर्वाधारादित्वेनानुभवनीयत्वाच्च व्यक्तत्वं निराकरोति अध्यात्मदीप इति अस्युतास्माकं च बुद्ध्यादिकमेवेदं प्रकाशयसि ततो ब्रह्मवस्त्वयमेव प्रकाशसे ततश्च न केनापि व्यज्यस इति शब्दश्लेषेण च आत्मानमधिकृत्य वर्त्तमाना अध्यात्मान आत्मारामाः तानपि दीपयसि परमानन्देनोल्लासयसीति ब्रह्मतोपि परमाविर्भावत्वं दर्शितं साक्षादित्यनेन च तथैव व्यञ्जितम् अस्फुटस्फुटत्वेन तारतम्यादिति दिक् । यद्वा, यदिति यस्य रूपं श्रीविग्रहं तत् अनिर्वचनीयं वस्तु प्राहुः तदेवाह—अव्यक्तमित्यादिना निर्गुणादित्वं प्राकृतगुणादिराहितत्वम् एवं परब्रह्मत्वमुक्तं स एव त्वं विष्णुः निजैश्वर्येण सर्वव्यापक इति परमेश्वरत्वम् अध्यात्मदीप इति परमात्मत्वम् अन्यत्समानम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रूप्यत इति रूपं स्वरूपम् अव्यक्तमिन्द्रियाग्राह्यं निर्गुणं सत्त्वादिगुणरहितं निर्विकारं शोकमोहादिविक्रियारहितं सत्तामात्रं वृद्धिक्षयादिरहितं निर्विशेषं शब्दादिरहितं निरीहं पुण्यपापरूपव्यापाररहितम् आत्मज्ञानं दीपो यस्य सः अध्यात्मदीपः आत्मविषयज्ञानप्रदो वा ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथैनं देवक्यपि स्तुत्वा प्रार्थयामासेत्याह मुनिः—अथेति महापुरुषस्य भगवतोऽसाधारणानि विलक्षणानि चतुर्भुजत्वादीनि यस्य तमेनमात्मजं वीक्ष्य परमपुरुषं ज्ञात्वा पूर्वं कंसाद्भीताऽपि शुचि स्मितं यस्यास्तथाभूता स्वपुत्ररूपभगवद्दर्शनेन निवृत्तभीतित्वाच्छुचिस्मिता सती देवकी तमुपाधावत् तुष्टाव ॥ २३ ॥

उपाधावनमेवाह-रूपमित्यादिभिः चतुर्भिः। तत् प्रसिद्धं यद्वेदान्तैः समधिगम्यं परमात्मस्वरूपं स एव त्वमिति स्तौति—रूपमिति यत्तद्रूपं वेदान्ताः प्राहुः स साक्षाद्विष्णुस्त्वमित्यन्वयः । रूप्यते प्रकृतिपुरुषविलक्षणत्वेन निरूप्यत इति रूपं परमात्मस्वरूपं वैलक्षण्यमेव दर्शयितुं विशिनष्टि अव्यक्तमित्यादिना. तत्राव्यक्तं निर्गुणं सत्तामात्रं निर्विशेषम् इत्येतानि प्रकृतिव्यावर्त्तकानि विशेषणानि अन्यानि तु पुरुषव्यवच्छेदकानीति विवेकः अव्यक्तं व्यक्तैरिन्द्रियैर्न व्यज्यते न विषयीक्रियते इत्यव्यक्तमहृश्यमतीन्द्रियमित्यर्थः । प्रधानन्तु पृथिव्यादिरूपेण व्यक्तमिति भावः । अत्र "यत्तदद्रेश्यमग्राह्यम्" इत्यादि श्रुतिरनुसन्धेया । यद्वा, तदन्यार्थको नञ् पृथिव्यादि रूपेण व्यक्तादचिद्द्रव्यादन्यदव्यक्तमिति साध्यधर्मोक्तिः तत्र हेतुः आद्यमादौ भवमाद्यं व्यक्तादचिद्द्रव्यादादौ कारणत्वेनावस्थितं, किं तर्हि तत् सूक्ष्मावस्तमचिद्द्रव्यम्? नेत्याह, निर्गुणं सत्त्वादिगुणरहितमनेन सूक्ष्मावस्था चिद्व्यावृत्तिः सत्तामात्रं सतो भावः सत्ता सैव सत्तामात्रं सच्छब्दः सततैकरूपवस्तुवाची वृद्धिक्षयादिरहितमित्यर्थः। निर्विशेषं विशेषाः शब्दस्पर्शादयः आकाशादिभूतपञ्चकगुणास्तेभ्यो निर्गतं तद्रहितमित्यर्थः । एवं कार्यकारणोभयावस्था चिद्द्रव्यव्यावृत्तिः अथाचिद्द्रव्यव्यावृत्तये विशिनष्टि ज्योतिः स्वयं प्रकाशं, किं तर्हि तद्बद्धजीवः ? नेत्याह ; निर्विकारं शोकमोहादिविकाररहितं निरीहं पुण्यपापरूपव्यापाररहितं, तर्हि तर्त्कि मुक्तजीवः ? नेत्याह; अध्यात्मदीपः आत्मन्यध्यात्ममिति विभक्त्यर्थे ऽव्ययीभावः आत्मनि दीपः दीपवत्स्वप्रकाशं नित्यमसङ्कुचितं धर्मभूतं ज्ञानं च यस्य सः अनेन मुक्तजीवव्यावृत्तिः तेषां संसारदशायां सङ्कुचितज्ञानत्वात्. तर्हि किं नित्यसिद्धजीवः ? नेत्याह; ब्रह्मस्वरूपेण गुणैश्च निरतिशयबृहत् अनेन नित्यसिद्धव्यावृत्तिः तत्स्वरूपस्याप्यणुत्वात्सत्त्वं विष्णुरध्यात्मदीप इति पुंस्त्वनिर्देशो विधेयप्राधान्याभिप्रायकः । तत्त्वमिति पाठे तस्य भावस्तत्त्वमबाधितमित्यर्थः । एवं प्रकृत्यादिविलक्षणमबाधितं यद्रूपं तत्त्वम् इत्यध्याहारः । यद्वा तत्त्वमिति पदद्वयं यत्तदित्यत्र तच्छब्दः प्रसिद्धिद्योतकः यत्प्रसिद्धं प्रकृत्यादिविलक्षणं रूपं तत्त्वमित्यन्वयः । प्रकृत्यादीनामपि तच्छरीरकत्वेन तदात्मकत्वात् तदन्यदेवेति तद्व्यावृत्तये साक्षात्त्वमित्युक्तं प्रकृत्यादीनां तदनन्यत्वं शरीरात्मभावकार्यकारणभावनिबन्धनं तव तु तद्रूपानन्यत्वं मृदात्मको घट इति यत्स्वरूपाभेदरूपमिति साक्षच्छब्दाभिप्रेतोर्थः चतुर्मुखादि देवान्तरव्युदासाय विष्णुरित्युक्तम् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपाधावत् गुणस्मरणपूर्वकं तुष्टाव ॥ २३ ॥

भगवदनुग्रहपात्रत्वाद्देवान्तनिर्णीतगुणविशिष्टं स्तौति—रूप

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मिति। यद्यस्य तद्रूपम् एवंविधं प्राहुः वेदान्ता इति शेषः। परोक्षत्वा-त्तदित्युक्ते, कथंभूतम्? अव्यक्तम् आराधनेऽपि स्वप्रसादमन्तरेणा-प्रत्यक्षं "तदव्यक्तमाह हि" (३।२।२२) "अव्यक्तमचलन्ध्रुवं तर्हि शून्यं नेत्याह" आद्यम् आदौ विद्यमानं "आत्मा वा इदमेक एवाग्र आसीत्" किमस्य संज्ञेत्यत्राह-ब्रह्मेति "ब्रह्मविदाप्नोति परम्" अथ कस्मादुच्यते ब्रह्मेति? "बृहन्तोऽस्मिन्गुणाः" संज्ञान्तरमाह-ज्योतिरिति। "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" यद्वा गुणित्वेपि चेतनत्वं माभूद्घटवदित्यत्राह—ज्योतिर्ज्ञानलक्षणप्रकाशरूपं सुख-योज्योतीः साक्षी चेताच गुणाः सत्त्वादयः किं नेत्याह-निर्गुणं केवलो निर्गुणश्च उत्पन्नत्वात् सर्वकार्याणां निर्गुणत्वम् उत्तरक्षणे नास्तीत्यादि विकारः किं न स्यादित्यत्राह—निर्विकारं निर्वि-कारोऽक्षरः शुद्धः अज्ञानादिभिरज्ञानगुणाः किं न स्याज्जीव-गुणवदिति तत्राह-सत्तामात्रं सर्वाशुभनिर्मुक्तगुणैकरूपं "सर्वा-शुभविनिर्मुक्तगुणमात्रो यतो हरिः। सत्तामात्रमतः प्राहुः" एवं विधमन्यन्नास्तीत्याह—निर्विशेषं निर्गतो विशेषो द्वितीयो यस्मा-त्तन्निर्विशेषं "निर्विशेषो ऽखिलोत्तमः" "एकमेवाद्वितीयम्" निरी-हमात्मकर्तृत्वाभिमानादिरहितं न तु क्रियाशून्यं "स इमाल्लोकान सृजत" इति श्रुतेः "अनादराश्चिरीहश्च सेहः सर्वकृती यतः" स साक्षात्त्वम् अन्यो न विद्वज्जनोक्तलक्षसंज्ञाभ्यामयं नारायण इति प्रत्येत्यतः प्राकृतजनप्रत्ययोत्पत्तये तत्सिद्धसंज्ञामाह—विष्णुः। णकारो वंचं पकारः प्राण आत्मा "स यो हैतौ णकारपकारावनु-संहितमृचो वेद" योगिभिर्ध्येयं वस्त्विदमेव नान्यदित्याशयेनाह-अध्यात्मदीपम् आत्मानमधिकृत्य वर्तमानदेहेन्द्रियादिप्रकाशकं "अध्यात्मयोगाधिगमनेन देवं मत्वा धीरो हर्षशोकौ जहाति" यत्त दिति सामानाधिकरण्येन प्रकृते यदित्यस्य षष्ठीत्यङ्गीकारे किं नियामकम्? उच्यते स इति पुंलिङ्गेन परामर्शात् तद्रूपमित्यभ्युपेयते स इति पुनरुक्ते प्रथमायाः षष्ठ्यर्थत्वं न दृष्टमिति चेन्न "सप्तसु प्रथमा" इति सूत्रात् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेत्युक्तमात्मजमिति च तद्भावनश्च ममताविशेषजननाय जीवद्गर्भनिष्क्रमणस्य सर्वाशानङ्गीकारात् तत्सङ्गोपनाय ज्ञेयम् ॥ २३ ॥

रूपं विशेषतश्चायमर्थः। ननु, सारांशविवेके सति जगदपि ब्रह्मत्वेनोपलक्ष्येत तर्हि केन विशेषस्तत्राह—साक्षादिति। माया नावृतत्वेनेत्यर्थः। तस्मादिदं व्यक्तत्वं षाड्गुण्यं कृपाविकारित्वम् अङ्गप्रत्यङ्गविशेषत्वं करचरणादिचेष्टा सौष्ठवमपि स्वरूप-धर्मवैभवमेव अतः सत्तामात्रं केवलधर्मरूपं ज्योतिः स्वप्रकाश-चैतन्यं ब्रह्मसर्वतोऽपि बृहत् आद्यं जन्मरहितं दृष्टदोषप्राकृत-तत्तद्धर्मनिरासेन ज्ञानिनः प्रतिपत्काशमानं तद्वस्तु यद्रूपं श्रीविग्रहं प्राहुः स तद्रूप एव भवान् न चैतदपि तद्दोषाहं भवेत् अदृष्टदोषत्वात् विद्वदनुभवार्थः शास्त्रे निराकृतत्वाच्चान्य-भिप्रेत्य स्वयमपि निराकरोति जन्मराहित्यं साक्षादित्यनेनैव निराकरोत् तत्तन्निजपरिच्छदवता स्वस्वरूपेणैव प्राकट्यात् परि-च्छिन्नत्वं निराकरोति-विष्णुरिति। व्यापकमूर्तिरित्यर्थः। व्यक्तत्वम् अध्यात्मदीप इति प्रत्युतास्माकं बुद्ध्यादिकमेवेदं प्रकाशयते ततो ब्रह्मवत् स्वयमेव प्रकाशते ततश्च केनापि व्यञ्जित इति शब्दश्लेषेण च आत्मानमधिकृत्य वर्तमाना अध्यात्मान आत्मा-रामाः तानपि दीपयसि परमानन्देनोल्लासयसीति ब्रह्मतोऽपि परमाविर्भावत्वं दर्शितं साक्षादित्यनेन च तथैव व्यञ्जितं स्फुटा-स्फुटत्वेन तारतम्यादिति दिक् ॥ २४—२७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तूष्णीं स्थिते वसुदेवे देवकीरूपोपसंहारं कंसस्य भगवज्ज-न्माज्ञानं च प्रार्थयितुं प्रथमतः स्तौतीत्याह-अथैनमिति। स्वस्यै-वायं पुत्र इति ज्ञातवती तथा वृद्धरुत्पादितत्वात् परं स पुत्रः चतुर्भुजादिलक्षणैर्लोकप्रसिद्धभगवत्तुल्योऽयमिति ज्ञात्वा स्वबुध्या स्मृतिपुराणेषु प्रसिद्धं भगवत्स्वरूपं प्रकृते अनुवर्णनीयमिति तदर्थ-माह, महापुरुषस्य पुरुषोत्तमस्य लक्षणानि यत्र तं भगवन्तमुपाधावत् शरणं गता स्तुत्येव शरणं गमिष्यति भगवद्भिमित्तमेव कंसाद्भीता तर्हि भगवत्स्वरूपज्ञानात् भयमेव कथं न निवर्त्तयतीत्याशङ्क्याह सुविस्मितेति आश्चर्यरस एव तस्या उत्पन्नो न तु निर्द्धारितं ज्ञानं जातं येन भयं निवर्त्तेतेत्यर्थः। शुचिस्मितेति पाठे भग-वत्स्तोत्रज्ञानार्थं तस्याः पातिव्रत्यादिधर्मो निरूपितः अथेति भिन्न-प्रक्रमे न तु वेदादिप्रकारेण अन्यथा पौनरुक्त्यं स्यात् ॥ २३ ॥

शरणं गता देवक्यष्टभिः स्तोत्रमाह—माधिदैविकमाध्यात्मिक-माधिभौतिकमिति भगवतो रूपत्रयमादौ निरूप्य शरणागमने हेतुं चोक्त्वा प्रकृते रक्षां भगवत्स्वरूपाज्ञानं च द्वयं प्रार्थयते इदानीं मारणं युद्धार्थं प्रवृत्तावेव पूर्वज्ञानसदृशत्वात् प्राणा न स्थास्यन्ति अतस्तेन प्रकारेण रक्षा न कर्त्तव्या प्रकारान्तरेण रक्षां प्रार्थयन्त्यज्ञानमपि प्रार्थयते अन्यथा प्रथमपक्ष एव सिद्धेत रूपोपसंहारं च प्रार्थयते सर्वाभिव्यक्ते सर्वक्षेपसम्भवात् सर्वमारणा-श्चाशक्यम् अलौकिके च शीघ्रमुपसंहारश्च स्यात् अतः केवलं स्वार्थमुपसंहारप्रार्थना द्वयं तु प्रकृतोपयोगि एवं प्रार्थनात्रयं स्वस्य गर्वाभावार्थम् इदं न जननरूपं किन्तु नटवदनुकरणरूपमिति भग-वदवतारं निरूपयति रूपमिति "रूपत्रयं तथा हेतुः प्रार्थनात्रि-तयं तथा नटत्वमिति विज्ञानं स्वस्य यादृक् तथोदितम्। आदौ भगवानाधिदैविक इति वदन्ती स्वाभिज्ञानप्रमाणे प्रसिद्धया-निरूपयति इदं रूपं तदेव यत्सर्वैराधिदैविकत्वेनोच्यते इदमन्य-ल्लोकसिद्धमलौकिकं त्वाधिदैविकमेव अन्यथा प्रमाणानामनुवाद-कत्वं स्यात् अत इदं रूपन्तदेव किन्तदित्याकाङ्क्षायामाह, यत्तत्मा-हुरिति यत्तदेरानुपूर्व्येण निरूपणमाकाङ्क्षार्थपरत्वेऽपि स्वानुभव-दार्ढ्यार्थं तत्राधिदैविकमेतज्ज्ञापितुं नार्हति वैलक्षण्यात् इत्याशङ्क्य वैलक्षण्यहेतुभूतान् धर्मानत्रैव साधयति अव्यक्तमित्यादि नवभिः पदैर्नवधा हि जगद्विलक्षणं ब्रह्म नवधा निरूप्यते जगद्धर्माश्च नास्मिन् रूपे प्रतीयन्ते तत्राव्यक्तादीनि भूतानीति वाक्यात् अव्यक्त मूलरूपं व्यक्तन्तु जगत् इदं तु व्यक्तमिति लोकप्रतीतिः मूल-भूतं त्वाद्यं भवति इदं त्वाधुनिकं जगच्च स्वरूपकृतं कालकृतं च वैलक्षण्यमुक्तं पदद्वयेन देशकृतं वैलक्षण्यं वदन्ती परि-

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मारोन तदाह,ब्रह्मेति बृहत्वाद्ब्रह्मणत्वाच्च ब्रह्ममूलभूतं जगत्तु परिच्छिन्नमबृंहितं च तथैव रूपम् एवं सदंशेन वैलक्षण्यत्रयं निरूपितं चिदंशेनापि त्रयमाह, ज्योतिर्निर्गुणं निर्विकारमिति प्रकाशकं तथैतन्यं जगत्प्रकाशयति अन्यथा जगदभिव्यक्तिर्न स्यात् त्रिगुणात्मकं च जगत् त्रिगुणातीतमेव हि कारणं भवति गुणानामपि कारणत्वे भगवत्कारणता न स्यात् स्वातन्त्र्याभावात् सदंशा एव गुणा न चिति सम्भवन्ति यदैव भूतेन्द्रियान्तःकरणानि तदैव सगुणं तदैव कारणं भवति यत्प्रपञ्चविलक्षणं प्रपञ्चस्तूत्पत्त्यादिभावविकारयुक्तः अतो निर्विकारमङ्गीकर्त्तव्यं लौकिकानि च ज्ञानानि विकारयुक्तानि रूपादिगुणयुक्तानि चेन्द्रियादिभिश्च प्रकाश्यन्ते विषयकृतं वैलक्षण्यमानन्दांशे निराकरणीयमित्येतदर्थमाह—सत्तामात्रमिति । सत्ता विद्यमानता कालत्रयाबाधितसत्ता वा सर्वमेव हि जगत्सद्रूपमपि विशेषणागरूपधर्मवद्भवति याविद्विशेषनिर्मुक्तं सामान्यं न भविष्यतीत्याशङ्क्य लौकिक एव विषये इयं व्याप्तिः न त्वलौकिक इति सत्तामात्रमपि निर्विशेषणमित्याह, अन्यथा पौनरुक्त्यं स्यात् विशेषा हि व्यावर्त्तकाः मूलसत्तायां व्यावर्त्याभावात् किं विशेषेण कार्ये तु सा विशेषेण सर्वत्रानुस्यूतेति कार्ये न व्यावर्त्तनीयम् अन्यथा तस्य कारणतैव न स्यात् घटपटयोरिव "पूर्णमदः पूर्णमिदम्" इत्यादिश्रुतौ सर्वचेष्टारहितमेव कारणं भवति कार्ये स्वयमेव चेष्टमानमाकाशादेरपि शब्दजननवत्तया चेष्टा वर्त्तते एवावरणापगमे कार्योपगमवत् आकाशापगमस्यापि दृष्टत्वात् अन्धकारवदीहा तत्रापि ब्रह्मणि तु आवरकासम्भावत् अव्यहार्यत्वाच्च निरीहत्वं सिद्धमेव यद्यप्येकस्मिन्नपि विशेषणे सर्वे धर्माः क्रोडीकर्त्तुं शक्यन्ते तथापि नवधा वैलक्षण्यस्य वक्तव्यत्वात् नव विशेषणान्युक्तानि तादृशमिदमेव रूपं नवविधानां प्राणिनां स्वदोषैरेव नव विधत्वप्रतीतिः यथा भ्रमरिकादृष्ट्या गृहीता भूमिरपि भ्रान्तेव दृश्यते तदपि तस्यैव दृष्ट्या एवमत्रापि ब्रह्मविदां दृष्ट्या भगवान् वर्णितगुण एवाऽन्यथा तदभिव्यक्त्यर्थं प्रयत्नं न कुर्युः ब्रह्मादयोपि पश्चादुत्पन्नं न नमस्कुर्युः सायुज्यं चात्र न प्राप्नुयुः एतज्ज्ञानेन च सर्वज्ञा न भवेयुः एतन्निष्ठाश्च निर्गुणा न भवेयुः एतद्भजनेन सर्वविकाररहिता न भवेयुः सर्वेषु पदार्थेष्वेनं च न पश्येयुः एतज्ज्ञानेन च प्रपञ्चो न निवर्त्तेत एतत्कृपया च ब्रह्मनिष्ठा न भवेयुः अतोऽयमेतादृश एव । नन्वेतत्सर्वं सर्वशान्युपास्यत्वेन भगवतः संभवति नत्विदानीमेवाविर्भूतस्य तथा त्वं वक्तुं शक्यत इत्याशङ्क्याह-सत्वमिति । यदेतादृशं तत्त्वमेव तत्र हेतुः विष्णुरिति,विष्णुर्हि पूर्वोक्तप्रकारेण सर्वोपास्यः स एव सर्वेषामधिदेवः स एवाविर्भूत इति ब्रह्मवाक्यादवसीयते । नन्वेवमप्यंशावतारः स्यात् ततश्च मूलत्वाभावादुक्तं सर्वं बाधितमित्याह—साक्षादिति । ननु, वाक्यं.गौणमपि भवति स्तुतिपरमपि भवति तस्मात् कथं निर्णयः ? इति चेत्तत्राह—अध्यात्मदीप इति । अध्यात्मं मदन्तःकरणं वस्तुतो जडं मुग्धं सर्वशास्त्रविहीनं तदेवं प्रकाशयुक्तं त्वत्सान्निध्यात्तदेवास्य कारणमित्यवसीयते आधिदैविकस्याध्यात्मप्रकाशजनकत्वात् अतो मदनुभवेनाऽपि भवानुक्तरूप एव कार्ये वा ऽव्यभिचारिलिङ्गम् ॥२४॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ पत्युर्भयं दृष्ट्वा उपसमीपं भीतेति स्वरूपमनुपसंहर[illegible] स्मयमानं तमालक्ष्य परमेश्वरत्वाहङ्कारेण कंसभयं न गणय[illegible] तदहं हन्त किङ्करोमीत्यति विह्वलेत्यर्थः । शुचिस्मितेत्यस्य पर[illegible] श्वरस्याग्रे कंसः खलु को वराकस्तदप्यावयोर्भयं वर्द्धत ए[illegible] कोऽयमविवेको दुस्तर इति भावः ॥ २३ ॥

किञ्च भक्ताः खलु स्तुत्या भगवन्तमपि वशीकुर्वन्ती[illegible] प्रसिद्धेरेनं महाहठिनं स्तुत्यैव वशीकृत्य स्ववचने स्थापयामि[illegible] मनसि विमृश्य भोः परमेश्वर ! आवयोः प्रतिक्षणमेवातिभये व[illegible] मानेऽपि तव भयशङ्कैव नास्तीत्याह--चतुर्भिः, रूपमिति । यद[illegible] तव तत् प्रसिद्धं रूपमाकारं नारायणराघवहयशीर्षादिकम् अव्य[illegible] सर्वेन्द्रियागोचरम् आद्यम् अजन्यं प्राहुर्वेदाः तथा निर्गुणं नि[illegible] कारं ब्रह्म यस्य तव ज्योतिः प्राहुः "यस्य भासा सर्वमिदं विभ[illegible] ति"इति श्रुतेः "सत्यं ज्ञानमनन्तम्"यद्ब्रह्मज्योतिः सनातनमित्यां[illegible] मोक्तेः—

तत्परं परमं ब्रह्म सर्वं विभजते जगत् ।
ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत ॥

इत्यर्जुनं प्रति हरिवंशे भगवदुक्तेः—

यस्य प्रभा प्रभवतो जगदण्डकोटि-
कोटिष्वशेषवसुधादिविभूतिभिन्नम् ।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं-
गोविन्दमादिपुरुषं तमहम्भजामि ॥

इति ब्रह्मसंहितोक्तेः "ब्रह्मणो हि प्रतिष्ठाऽहम्"इत्यत्र स्वामिचर[illegible] स्तथा व्याख्यानाच्च विभूतिप्रसङ्गे विकारः पुरुषोऽव्यक्तं रज[illegible] सत्त्वन्तमःपरमित्यत्र परमितिशब्दस्य ब्रह्मेति तैर्व्याख्याना[illegible] "मदीयं महिमानं च परब्रह्मेति शब्दितम्" इति मत्स्यदेवो[illegible] क्तेश्च "परात्परं ब्रह्म च ते विभूतयः"इति श्रीयामुनाचार्यस्तोत्रा[illegible] तद्ब्रह्मकृष्णयोरैक्यात् किरणार्कोपमायुजोः इति भक्तिरसामृता[illegible] तथा यस्य तव सत्तामात्रं शुद्धसत्त्वसामान्यं शुद्धसत्[illegible] विलासभूतमिति यावत् स्वविग्रहधामभक्तपरिकरादिकं निर्वि[illegible] विशेषात् प्रपञ्चान्निर्गतं प्राहुः अत एव निरीहं स्व[illegible] परिपूर्णत्वेन वितृष्णं यद्वा सकामभक्तानपि निरीहयन्ती[illegible] निरीहं किम्वा निश्शेषेण ईहयतीति स्वमभिलाषयतीति निर[illegible] स्पृहेहातृड्वांछेत्यमरः सत्वं विष्णुरध्यात्मदीपः सर्वतत्त्वप्रका[illegible] इत्यविद्यायाः अपि मम मनसि यथा स्फोरयसि तथाऽहं वर्ण[illegible] भावः ॥ २४ ॥

———

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीवसुदेवे तूष्णीं स्थिते मथानन्तरं देवकी एनं प्रस्तुतं मह[illegible] पुरुषलक्षणं स्वासधारणलक्षणमात्मजं वीक्ष्य कंसाद्भीता [illegible] मुपाधावत् अस्तौत् पुत्रीभूते भगवति विद्यमानेपि कंसाद्भी[illegible] त्यस्य यदि दैवादल्पतरं ममायुर्भवेत् क्रूरतरः कंसः कृत[illegible] सन्निहित एव मृत्युहेतुः तर्हि हरिलीलारसलाभो न भवि[illegible] तीत्याशयः ॥ २३ ॥

किञ्चिद्विज्ञापयितुं भगवद्गुणस्वरूपनिरूपणेन स्तौति--रू[illegible] मिति । "तंत्वौपनिषदं पुरुषं पृच्छामि,"सर्वे वेदा यत्पदमामन[illegible]

नष्टे लोके द्विपरार्द्धावसाने महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यतेऽशेषसंज्ञः ॥ २५ ॥
योऽयं कालस्तस्य तेऽव्यक्तबन्धो ! चेष्टामाहुश्चेष्टते येन विश्वम् ।
निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्याद्याः श्रुतयो यद्रूपं सर्ववेदवेद्यतया प्राहुस्तत्त्वमित्यन्वयः अत एवोक्तं श्रीमुखेन "वेदैश्च सर्वैरहमेव वेद्यः" इति. हे मातः ! मयि पुत्रदृष्टिं कुरु किवहुभाषणेनेत्यतो रूपं विशिनष्टि—हे भगवन् ! आद्यं सर्वकारणं श्रुतयः प्राहुः "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः तस्मिन् सर्वजनके जन्यभावनाऽन्याय्या अत एवाव्यक्तं व्यक्तं पाञ्चभौतिकं रूपं तद्विलक्षणम् अत एव निर्विशेषं निर्गताः स्वभावतः सर्वे विशेषाः स्थूलत्व अणुत्व जन्ममरणाश्रुतत्तृट्शोकमोहादयः सर्वे दोषा यतस्तत् तत्र हेतुगर्भविशेषणम् निर्गुणं सत्त्वरज आदिगुणरहितम् अत एव निरीहं गुणनिबन्धनेहारहितम् अत एव निर्विकारम् अत एव सत्तामात्रम् । नन्वेवंभूतं सर्वकारणम् कथं भवेदित्यत्राह—ब्रह्मेति । बृहत्वाद्बृंहणत्वाच्च तस्मादुच्यते परं ब्रह्म स्वरूपतो निर्विकारम् अनन्तचेतनाचेतनशक्तिभिः बृंहयति विश्वमिति ब्रह्म । ननु, स्वशक्तिविकारेण कदाचित्तदावृतं न कुतो भवेदित्यत आह-ज्योतिरिति । ननु, मातः ! एवंभूतरूपो विष्णुर्भवतु अहन्तु भवत्याः पुत्र एव त्वद्गर्भोदत्यल्पदेशादल्परूपो जातोऽस्मीत्यत आह--स विष्णुः त्वमेव साक्षादित्यर्थः ॥ २४ ॥

---

### भाषा टीका ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि--तदनन्तर वा अपने पुत्र कूं महा पुरुष के लक्षणन वारो देखके कंस सूं डरपती और शुद्धस्मित वारी श्रीदेवकी भगवान् की स्तुति करत भई ॥ २३ ॥

देवक्युवाच ।

श्रीदेवकी जी बोलीं, कि—जो वो कोई वेदान्तैकवेद्य है, और जाकों वेदान्त अनवधिक स्वरूप और गुणवारो ऐसो ब्रह्म कहे हैं वो विष्णु साक्षात् आप ही हो । अब कछु क विशेषणन सों देवकी जी ब्रह्म कूं प्रकृति पुरुषसों भिन्न बतावें हैं, कि-अव्यक्त अर्थात् इन्द्रियों से जाकी व्यञ्जना न होय. सके और आद्य अर्थात् प्रकृति के पृथिव्यादि विकारन के पूर्व में कारण रूप सों स्थित, ज्योति नाम स्वयं प्रकाशमान इन्द्रियादिकन के अनधीन ज्ञान वारे, सत्वादिक प्रकृति के गुणन सों रहित, विकार रहित, सत्ता मात्र, नाम सदैक रूपसों स्थित, और विशेष जो पञ्च भूत के गुण शब्दादिक हैं तिन सों रहित, और कर्म प्रयुक्त चेष्टा रहित, ऐसे ब्रह्म आप ही हो ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च महाप्रलयेऽप्यवशिष्यमाणस्य कुतो भयमित्याह—नष्टे लोके इति । चराचरे लोके महाभूतेषु लीनेषु तेष्वप्यादिभूतं भूतसूक्ष्मं प्रविष्टेषु तस्मिन्नपि व्यक्तेऽव्यक्तं प्रधानं प्राप्ते अशेषात्मके प्रधाने संज्ञा प्रज्ञा यस्य एवं मयि लीनमिदमस्ति पश्चादेवमुद्भावनीयमिति सोऽशेषसंज्ञः शेषसंज्ञ इति वा ॥ २५ ॥

किञ्च एवं प्रलयहेतुर्योऽयं काल एनं हे अव्यक्तबन्धो प्रकृतिप्रवर्त्तक ! तस्य प्रलयावधिभूतस्य ते तव चेष्टां लीलां चेष्टते विपरिवर्त्तते पुनः पुनर्वत्सरावृत्त्या महीयान् द्विपरार्धरूपः यस्य चेष्टामाहुस्तं त्वा त्वां क्षेमधामाभयस्थानं प्रपद्ये शरणं व्रजामि ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कालवेगेनेति सर्वत्रैव हेतुः एक इति । वैकुण्ठादीनामपि तदभेदाभिप्रायेण यद्वा अशेषा ये तदानीं वैकुण्ठादयस्तत्तत्पदार्थाभिधास्तेऽपि संज्ञा यस्य तत्तद्रूपेणापि यः स्वयमेवेत्यर्थः । यद्वा, शिष्यन्ते महाप्रलयेऽपि तिष्ठन्तीति श्रीवैष्णवमते यथेष्टविनियोगार्हं शेषशब्देन कथ्यन्त इति वा शेषाः श्रीवैकुण्ठलोकपरिच्छदपरिवारादयः तेऽपि संज्ञायन्ते येन यद्ग्रहणेनैव ते गृहीता भवन्तीत्यर्थः । एवम्भूतो भवानेकः शिष्यते तदन्तर्गततरजीववृन्दप्रपञ्चेत्यर्थः । तथैव तृतीये श्रीविदुरप्रश्नः-

"तत्त्वानां भगवंस्तेषां कतिधा प्रतिसङ्क्रमः ।
तत्रेमं क उपासीरन् क उ स्विदनुशेरते" ॥ इति ।

एवमेव कैमुत्येन वक्ष्यते मर्त्यो मृत्युरित्यादि ॥ २५ ॥

कालवेगेनेत्युक्त्वा प्राप्तं कालस्य स्वातन्त्र्यं निरस्यन्ती ततः सुतरां तस्य भयमात्रं निराकुर्वती स्वयमपि कंसादिभयाच्छरणं याति य इति योऽयं निमेषादिर्वत्सरान्तः कालः वत्सरावृत्त्या च महीयान् द्विपरार्द्धरूपः येन च कालेन हेतुना विश्वं चेष्टते तं कालं तस्य तादृशस्य ते तव चेष्टामाहुरित्यन्वयः । अत एवेशानं सर्वेश्वरं ततः प्रपन्नभयहरणमात्रं कियदेतेति भावः । अत एव क्षेमस्याभयस्य सुखप्राप्तेश्च स्थानं यद्वा सर्वमङ्गलवृन्दानामप्याश्रयम् ॥ २६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आदिभूतं भूतादिं महदहङ्कारं व्यक्ते महति ॥ २५ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चेष्टामाहुः—स्वसङ्कल्पाधीनकालेनेत्यर्थः क्षेमधाम क्षेमस्याश्रयं "क्षेमं वहामि" इत्युक्तम् ॥ २६ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आद्यत्वमेव दर्शयितुं प्राकृतप्रलयावशिष्टं वस्तु त्वमेवेत्याह-नष्ट इति । चतुर्मुखस्य तन्मानेन वर्षशतात्मकमायुस्तस्य पञ्चाशद्वर्षात्मकं पूर्वार्द्धमुत्तरार्द्धञ्च परार्द्धमुच्यते तदुक्तम्—

"ब्रह्मणः स्वस्य मानेन ह्यायुर्वर्षशतं स्मृतम् ।
तत्परं वै तदर्द्धं तु परार्द्धमभिधीयते" ॥ इति—

द्विपरार्द्धावसाने द्वयोः परार्द्धयोरवसाने चतुर्मुखलय इत्यर्थः कालस्य वेगेन हेतुना महाभूतेषु पृथिव्यादिषु स्वकारणपरंपरया आदिभूतं भूतादिमहङ्कारं गतेषु तस्मिन् लीनेषु सत्सु तथा ऽव्यक्तेऽहङ्कारप्रकृतिभूते महत्तत्त्वेऽव्यक्तं सूक्ष्मावस्थमचिद्द्रव्यं याते गते सति इदम् "अव्यक्तमक्षरे लीयते अक्षरन्तमसि लीयते तमः परे देव एकीभवति" इति श्रुत्यर्थस्याप्युपलक्षणम् एवं सति यः शिष्यते पदार्थः स एको भवानेव यतो भवान् अवशिष्यतेऽत एव निमित्ताच्छेषसंज्ञः शेषशब्दाभिधेयश्च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टतया अवशिष्ट एकस्त्वमेवेत्येकशब्दाभिप्रायः अनेन "तमः परे देव एकीभवति" इति श्रुत्युक्तैकीभावश्चाभिप्रेतः नामरूपाभ्यामविभाज्यतया स्वाश्रयवस्तुसंश्लेषो ह्येकीभावः अनेन प्रकृतिपुरुषयोर्नित्यत्वं फलितम् एतदभिप्रायेणैव हि श्रुतौ "अक्षरं तमसि लीयते" इत्येतत्पर्यन्तं सर्वत्र लय उक्तः "तमः परे देव एकीभवति" इत्यत्रैकीभावः अयमर्थः, अत्र द्विविधो हि लयो विवक्षितः एकस्तावत्स्वावस्थाप्रहाणेन पूर्वावस्थाप्राप्तिरूपः यथा पृथिवीत्वावस्थायाः प्रहाणेन स्वावस्थाप्राप्तिः इतरस्तु स्वावस्थाप्रहाणमन्तरेण वस्त्वन्तरविभागानर्हसंसर्गविशेषप्राप्तिः यथा प्रकृतिपुरुषयोः पुरुषरूपं प्रकृतिरूपं च परित्यज्य नित्यसिद्धमवाधित्वा विशेष्यभूतेन भगवता विभागानर्हसंसर्गविशेषप्राप्तिः तदेव तम एकीभवतीति विशिष्टैकरूपतया अभिधीयते तदेव चात्रैकशब्देनाभिप्रेतं पूर्वं तु "पृथिव्यप्सु प्रलीयते" इत्यादिना साक्षाल्लयशब्द एव प्रयुज्यते "उभावेतौ लीयते परमात्मनि" इति वैष्णववचनमपि प्रकृतिपुरुषयोर्भगवता सह संश्लेषमात्रमेव कथयतीति न विरोधः संसर्गविशेषेऽपि लयशब्दः प्रयुज्यते यथा "वृक्षेषु पक्षिणो लीयन्ते" इति साक्षात् लयशब्द एव प्रयुज्यते अत एव—

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
अचेतना परार्था च नित्या सततविक्रिया" ॥

इत्यादिषु "तदेतदक्षयं नित्यं जगत्स्थावरजङ्गमम्" इत्यादि वेदपारगैर्दृष्टानां पराशरादीनां वाक्येषु च प्रकृतिपुरुषयोरनादित्वं प्रोक्तम् तस्मादपि तयोर्न साक्षाल्लयः यथा पुद्धरूपेण परिणते वयसि परिगृहीतं नायं तायरूपेणैव तिष्ठति अन्यथा स्नेहानुवृत्त्याद्ययोगात्तद्वत्प्रकृतिपुरुषावपि भगवत्यविभागार्हसंसर्गविशेषमात्रेणैकीभावव्यवहारविषयमात्रभूतौ निक्षेपणजगत्सृष्ट्यादावुपकुरुत इति "महानव्यक्ते लीयते" इत्यादि श्रुताव्यक्तशब्दश्चित्समष्टिसंसृष्टा चित्समष्ट्यवस्थाविशेषपरः अक्षरशब्दस्तु अचित्समष्टिपरः तमःशब्दस्तु सर्वाचित्प्रपञ्चकारणभूताजहत्स्वावस्थसूक्ष्माचित्परः ॥ २५ ॥

ननु, कालवेगेनेति कालावशेषस्यापि सूचितत्वेन कथमेक-मेवावशेष इत्यत्राह—य इति । हे अव्यक्तबन्धो अव्यक्त-निरतिशयसूक्ष्मदशामापन्नस्य प्रधानस्य बन्धो ! तदाश्रय-तद्बन्धुत्वमिह विवक्षितम् इदं दृष्टान्तार्थमुक्तं यथा सूक्ष्माचिद्द्रव्यं त्वयि संश्लेषविशेषमापन्नं त्वदपृथक्सिद्धविशेषणं त्वदेकत्वाविरोधि तद्वदयम कालोऽप्यपृथक्सिद्धविशेषणभूत-कत्वाविरोधीति योऽयं निमेषादिर्वत्सरान्तः कालस्य सू-वस्था निमेषः स्थूलावस्था तु वत्सरः महीयान् महीयस्त्व-ब्रह्मादीनामपि प्रभुत्वरूपं विवक्षितं येन कालेन निमित्तेन भव-विश्वं चेष्टते करोति सृजत्यवत्यत्ति च यद्वा वि-कर्तृ चेष्टते प्रवर्तते तं च कालं तस्योक्तविधस्य ते तव चेष्टा-चेष्टातुल्यमपृथक्सिद्धविशेषणमाहुरतो नायं त्वदेकत्वविरोधि-भावः । यं कालं यस्य तव चेष्टामाहुस्तमीशानं कालस्य नियन्तारं क्षेमधाम क्षेमस्य आश्रयं क्षेमङ्करं त्वां प्रपद्ये शरणं व्रजामि हेतुगर्भमिदं क्षेमधामत्वात्प्रपद्य इत्यर्थः ॥ २६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्गुणत्वादिकं तल्लक्षणमेवेत्याह---नष्ट इति । द्विपरार्द्धावसाने ब्रह्मणः शतायुर्लक्षणः कालः द्विपरार्द्धस्तस्याऽवसाने लोके नष्ट इति सामान्येनोक्तं विशिनष्टि--पञ्चमहाभूतेषु पृथिव्यादिषु अहङ्कारद्वारा आदिभूतं महत्तत्त्वं गतेषु व्यक्ते महत्तत्त्वे अव्यक्तं प्रधानं गते सति अशेषसंज्ञः अशेषाः संज्ञा यस्य स तथा "नामानि सर्वाणि च यं विशन्ति" इति श्रुतेः ॥ २५ ॥

कालवेगेन यात इत्यत्र प्रतीतं कालस्यातन्त्र्यं निवारयति, योऽयमिति । निमेषादिर्वत्सरान्तो योऽयं कालः तं कालं यस्याशेषसंज्ञस्तस्य ते तव चेष्टामाहुरित्यन्वयः । अव्यक्तबन्धो ! मुक्तबन्धो ! प्रारब्धः येन त्वया येन कालेन वा क्षेमधाम निर्भयस्थानं "अभयम् प्रतिष्ठां विन्दते" इति श्रुतिः ॥ २६ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमाधिदैविकरूपं निरूप्याध्यात्मिकं रूपं निरूपयति—नष्टे लोक इति । आधिभौतिकस्य सर्वस्याध्यात्मन्येव लयः तस्यैवात्मत्वप्रतिपादनात् दृश्यते च स्वप्नादौ बाह्यप्रकाशेऽपि आन्तरप्रकाशस्तस्मादयं भगवानात्मा अन्यस्य प्रलयाऽवधित्वं नास्ति तस्य लयावधित्वमाह–लोके ऽप्रकाशे चतुर्दशलोकेषु च नष्टे सर्वनाशो नियतकाल इति ज्ञापयितुमाह—द्विपरार्द्धावसान इति ब्रह्मणः आयुः परशब्देनोच्यते तस्यार्द्धं परार्द्धं परार्द्धद्वये ब्रह्मसमाप्तिः बन्धमोक्षव्यवस्थां लोके वक्तुं ब्रह्मणा आयुषोऽर्द्धे व्यवहारः ब्रह्मण उत्तरायुष्येव ब्रह्माण्डस्थानां मुक्तिरिति ज्ञापनार्थं द्विपरार्द्धस्यावसाने समाप्तौ ब्रह्माण्डस्य तु प्रलयस्तदैव भवति तदा तत्त्वानि तिष्ठन्ति तेषामपि प्रलयमाह—महाभूतेष्वादिभूतं गतेष्विति । आदिभूतशब्देनाहङ्कार उच्यते अग्रे महत्तत्त्वस्यापि

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकृतौ प्रलयस्य वक्ष्यमाणत्वात् अहङ्कारोऽपि महति लीयत इति ज्ञापितं भूतानामादिरादिभूत इति व्युत्पत्त्या आदिभूतशब्द-वाच्योऽहङ्कारो भवति आदौ भूतो जातश्चेत् महत्तत्त्वमेव व्यक्ते महत्तत्त्वे अव्यक्तं प्रकृतिं भूते सति व्यक्ताव्यक्तपदाभ्यामेतत्-सूचयति, अक्षरात् प्रकृतिपुरुषविभागपक्षे प्रकृतिपुरुषयोरप्यक्षरे लयः कालादीनामव्यक्ततैव किं बहुना सर्वमेव व्यक्तमव्यक्ते प्रविष्टं तत्र प्रवेशे कालवेग एव हेतुः भगवतः सर्वोपसंहा-रेच्छायां सर्वोपसंहारार्थमधिकारी कालः वेगवत्तरो भवति एवं स्वयमप्यक्षरे अक्षरं पुरुषोत्तमे पुरुषोत्तमाभिन्ने वा अक्षरे वा तदा भवानेव एकः शिष्यते । तस्य भगवतस्सर्वरूपाणि यानि स्थितान्याधिदैविकानि तेषामपि लयमाशङ्क्य तन्निवृत्त्यर्थमाह-अशेषसंज्ञ इति । अशेषाः सर्वाः संज्ञा यस्य सर्वशब्दवाच्यो भगवानेकः एवेति एक एव शिष्यत इत्यर्थः ॥ २५ ॥

एवमाधिभौतिकानां सर्वेषां लयस्थानभूत अध्यात्मा उक्तः आधिभौतिकं रूपमाह—योयं काल इति । आधिभौतिकानाम् आधिभौतिकभूतो भगवान् न त्वाधिभौतिक एव तथात्वज्ञापकम् आह-कालो यस्य चेष्टेति । कालप्रेरितानि सर्वाण्येवाधिभौतिकानि योऽयं कालः सर्वेषां निमित्तभूतः तस्य सर्वेषां मूलभूतस्य स एव भवानिति ते तव चेष्टामाहुः । ननु, भगवतश्चेष्टा सत्त्वे किं प्रमाणं चेष्टाया वा कालत्वे तत्राहुरिति चेष्टायाः कालत्वे मानमुक्तं चेष्टासत्त्वे मानमाह—चेष्टते येन विश्वमिति । येन कालेन विश्वमेव चेष्टते न हि कारणस्य चेष्टाभावे कार्ये चेष्टा भवति कालवशाच्च चेष्टा चेष्टायाः कर्मरूपत्वात् कर्म च कालजनितं काले कर्म विधानादतो भगवच्चेष्टा रूपः कालः ननु, प्रकृति-कारणपक्षे तद्द्वारा कार्यपक्षे वा न चेष्टारूपः कालः सिद्ध्ये-दित्याशङ्क्याह-अव्यक्तबन्धो इति अव्यक्तस्य प्रकृतेर्बन्धुः सर्व-कार्यकर्त्तोऽतः प्राकृतकार्यपक्षेपि चेष्टारूपः कालः आधिदैविक-कालस्य भगवद्रूपत्वात्तद्व्यावृत्त्यर्थमाह-निमेषादिर्वत्सरान्त इति । यद्यपि परमाणुकाल आदिभूतस्तथापि परमायवादि लवान्ताना-मतिसूक्ष्मत्वाद्व्यवहारानौपयिकत्वमाशङ्क्य निमेषादिरेव गृहीतः द्विपरार्द्धावसानत्वाच्चेष्टारूपकालस्य सम्वत्सरोमध्यम इति ततो-प्याह-महीयानिति । एवं यस्य चेष्टाकालः यश्चावशिष्यते यश्चाधिदैविकः सर्वकारणकारणभूतस्तं त्वां प्रपद्ये शरणं गच्छामि अनेन बालकः पुत्रः कथं शरणाहं इति निरस्तं तं स्वामि-त्वत्र प्रमाणं पूर्वमुक्तमेव आहुरिति अध्यात्मदीप इति च विष्णुरिति च एवं सर्वरूपोपि यदि रक्षादिकं नाविष्कुर्या-त्तदा शरणागतिरप्रयोजिकेति तद्व्यावृत्त्यर्थमाह-ईशानमिति । यत्र भगवत एतावन्तो धर्माः स ईश एव भवति ऐश्वर्यविलम्बं न सहते न चोपेक्षते नन्वीश्वरो दैत्यपक्षपातीचेत्तदापि कार्यं न सिद्ध्यतीति तदर्थमाह-क्षेमधामेति क्षेमाख्यं शुद्धसत्त्वं धाम यस्य अतः शिष्टानामेव पक्षपातं करिष्यतीति न काचिच्चिन्ता आधाररूपधर्मस्यैव प्राधान्यज्ञापनार्थं लिङ्गव्यत्ययः ॥ २६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च महाप्रलयेऽप्यवशिष्यमाणस्य तव कुतो भयमित्याह, नष्टे चराचरे लोके महाभूतेषु लीने सति तेष्वप्यादिभूतमहं-कारं गतेषु सत्सु तस्मिन्नप्यहङ्कारे व्यक्ते व्यक्तं प्रविष्टे सति तस्मिन्नपि व्यक्ते महत्तत्त्वे अव्यक्तं प्रधानं प्राप्ते सति एको भवानेव शिष्यतेऽवशिष्टो भवतीति पूर्वश्लोकोक्तलक्षणं भवत एकस्यैव रूपं ज्योतिः सत्तामात्रं च शिष्यत इति सपरि-वारस्थानपरिच्छदस्यैव तस्य नित्यत्वमभिप्रेतम् अतः शेषसंज्ञः शेषनामा शिष्यत इति व्युत्पत्त्या भवान् शेष उच्यत इत्यर्थः ॥२५॥

कालवेगेनेत्युक्त्या प्राप्तं कालस्यापि स्वातन्त्र्यं वारयन्ती सर्वभीषणात्कालादपि यद्भयं नास्ति तत्र हेतुमाह-योऽयं सर्व-संहारकः कालस्तमपि तस्य तव चेष्टामाहुः हे अव्यक्तबन्धो ! प्रकृतिप्रवर्त्तक ! येन त्वच्चेष्टारूपेण कालेनैव विश्वं चेष्टते स एव कालः कस्तत्राह—निमेषेति । महीयान् पुनः पुनर्वत्सरावृत्त्या द्विपरार्द्धरूपः त्वा त्वां प्रपद्ये यथा त्वं निर्भयस्तथैव स्वमातरं मामपि निर्भयां कुर्वित्ति भावः ॥ २६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवतः सर्वकारणत्वेन सर्वतः आद्यत्वं कारणत्वेऽपि निर्विकारत्वादिमत्वं चोक्तमथ सर्वनिधित्वमाह-नष्टे इति । आदि-भूतं तन्मात्रसंज्ञम् एवं व्यक्ते कार्ये स्वस्वकारणद्वारा अव्यक्तं प्रधानं त्वच्छक्तिभूतां प्रकृतिं सा च त्वच्छक्तित्वात्सदैव प्राप्ता परमकारणम् भवन्तम् अशेषेषु स्वस्मिन् लीनेषु चेतनाचेत-नेषु तत्प्रलयोत्पत्तिस्थितिनिमित्तकालकर्मादिषु च प्रज्ञा यस्य सः सर्वज्ञः भवानेव शिष्यते ॥ २५ ॥

ननु, कालवेगेनेत्यनेन कालस्य पृथगवस्थानं प्रतीयते इत्यत आह-योऽयमिति । हे अव्यक्तबन्धो ! प्रकृतिस्वामिन् ! योऽयं कालः एनं तस्याऽशेषसंज्ञस्य ते चेष्टां शक्तिमाहुः तं सर्वकारणकारणं सर्वज्ञं सर्वशक्तिं त्वां प्रपद्ये शरणं व्रजे ॥ २६ ॥

---

### भाषा टीका

द्विपरार्द्ध नाम ब्रह्मा की आयु के अंत में पंच महाभूतन कों भूतों को आदि जो तामस अहंकार तामें लीन होवे पै, और कालवेग सों व्यक्त कों अव्यक्त में अर्थात् अहं महान् को भी क्रमसूं क्रमसूं अपने कारण प्रकृति में लीन होने पै और तमः शब्द सो कही जाय जो प्रकृति ताको पर देवता रूप आप में लीन होने पै अशेष ( सर्व ) संज्ञावारे वा शेष संज्ञा वारे एक आपही शेष रहो हो ॥ २५ ॥

हे अव्यक्तबन्धो ! हे प्रकृति के लय स्थान ! प्रभो ! जासे सब विश्व अपने २ कार्य की चेष्टा करे है ऐसा यह जो निमेष सूं आदिले के संवत्सर पर्यंत काल है ताको आपकी चेष्टा कहें है ऐसे काल के भी नियामक और अभय के धाम रूप आपके मै शरण हूं ॥ २६ ॥

---

मर्त्यो मृत्युव्यालभीतः पलायँल्लोकान् सर्वान्निर्भयं नाध्यगच्छत् ।
त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥
स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं(१)मांसदृशां कृषीष्ठाः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षेमधामत्वमेवाह–मर्त्य इति । लोकान् प्रति यदृच्छया केनापि भाग्योदयेन हे आद्य ! ॥ २७ ॥

प्रस्तुतं विज्ञापयति—सत्वमिति । भृत्यानां वित्रासं हन्तीति भृत्यवित्रासहा भृत्यविदिति वा छेदः पौरुषमैश्वरं ध्यानधिष्ण्यं ध्यानास्पदं मांसदृशां मांसचक्षुषां प्रत्यक्षं मा कृथाः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यतस्त्वत्पादाश्रितोऽपि निर्भयः सन् सुखी स्यादित्याह–मर्त्य इति । मरणधर्मा यः कश्चित् मृत्युस्तत्परम्परानिर्भयं भयाभावं न प्राप आद्य हे सर्वश्रेष्ठ ! मृत्वादिनियन्तरित्यर्थः । स्वस्थः भयरहितः सन् शेते निर्वृतो भवतीत्यर्थः।यतः अस्मात् त्वत्पदाब्जाद्धेतोर्मर्त्याद्वा तस्मात् सकाशात् मृत्युः पलायते अब्जत्वरूपकेन स्वतः पुरुषार्थत्वमपि तस्य ध्वनितं तत्प्रभावमात्रजातत्वं तु भयाभावस्य यद्वा मृत्युरिति अद्य अधुना त्वयि साक्षात्प्रादुर्भूते सर्वो लोकः स्वस्थः सन् शेते वर्त्तमानसामीप्ये वर्त्तमानवत्त्वं तत्र हेतुः मृत्युरिति अन्यत्समानम् एवं परब्रह्मत्वेन सूचितं निर्भयत्वं प्रलयेप्यनश्विष्यमाणत्वेन सर्वोपसंहारादिहेतुकालबीनत्वेन शरणापन्नमृत्युनिवारणात्तत्तत्के- मुत्येनैव दृढीकृतम् अतः प्रकरणैकवाक्यतानुरोधेन रूपं यत्तादि- त्युक्तक्रमवाक्यं न ब्रह्मपरत्वेन व्याख्यातम् ॥ २७ ॥

स तादृशत्वेन निर्भयः मद्भाग्येन च मत्पुत्रतामासन्नस्त्वम् त्राहि द्विष्टत्वेनारोचकत्वात् साक्षात् कंसनामाग्रहणम् एवं पूर्व- मपि अयं त्वसङ्ग इत्येवोक्तं शब्दश्लेषेण परमोग्रत्वं सूचितम् अर्थश्लेषेण च पितृव्यजत्वव्यक्त्या भयाधिक्यं निकृन्तति समूलं हि "बन्धुभ्यो भयमुत्थितम्" इति न्यायात् नस्त्राहीति अस्मद्रक्षा- मेव कुरु न तु तं घातयितुं प्रार्थये इति कृपाविशेषाय दैन्योक्तिः भो इति परमार्त्या सम्बोधनं तथापि मातृभावस्वभा- वतो भयविषयं तमेवान्तर्धापयितुं छलेनाह, रूपं चेति । पुरु- षस्य व्यष्टयन्तर्यामिणो रूपमाकारं चतुर्भुजत्वात् तत एव विराडन्तर्वर्तिषु ध्यानधिष्ण्यत्वेन प्रसिद्धमित्येवार्थः । द्विभुज- त्वेऽपि गूढत्वं ध्यानधिष्ण्यत्वं च श्रूयते "गूढं परं ब्रह्म मनुष्य- लिङ्गम्" इत्यादि सप्तमादौ "शृङ्गवेणुधरं तु वा" इत्यादि श्रीगोपाल- तापनीध्यानादौ मांसदृशामज्ञानाम् अयोग्यत्वादिति भावः । तत्र हेतुस्तु वक्ष्यते विश्वमित्यादिना ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ध्यानधिष्ण्यं योगिध्येयं पौरुषं परमपुरुषत्वसूचकम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कीदृशं तत्क्षेमधामत्वम् ? यतो मां प्रपद्यसे इत्यत्राह–मर्त्य इति मर्त्यः मरणशीलः जन्मनोऽप्युपलक्षणमिदम् जन्ममरणादि- रूपसंसृतिभाक् पुमान् मृत्युव्यालभीतः मृत्युर्जन्ममरणादिरूप संसारः स एव व्यालः दुष्टसत्त्वस्तस्माद्भीतः मुमुक्षुः सन् इत्यर्थः सर्वान् लोकान् प्रति पलायन् पलायमानः परस्मैपदमार्षम् लोक्यन्ते उपायत्वेनाध्यवस्यन्ते इति लोकाः उपायाः सर्वानुपायाननु- तिष्ठन्नित्यर्थः । निर्भयम् भयस्याभावो निर्भयम् अर्थाभावेऽव्ययीभावः मृत्युव्यालभयाभावं नाध्यगच्छत् प्राप न मुक्तो बभूवेति भावः यदृच्छया यादृच्छिकसुकृतविशेषपरिपाकेन त्वत्पादाम्बुजं प्राप्य उपायत्वेन प्राप्य शरणं प्रपद्येति भावः । स्वस्थः मृत्यु- व्यालभयनिवृत्तये कर्त्तव्योपायान्तररहितः शेते यावज्जीवं सुखं वर्त्तते ततोऽस्मान्मृत्युरपैति अपगच्छति संसारान्मुक्तो भवतीत्यर्थः । त्वत्पदाब्जशरणवरणमात्रेणैव निश्श्रेयसप्रदस्य तव कियदेतल्लौकिकश्रेयःप्रदत्वमिति भावः ॥ २७ ॥

इत्थमभिष्टूयाथ हृद्गतं विज्ञापयति–स त्वमिति । स क्षेमङ्करस्त्वं घोराद्दृष्टुमप्यशक्यादुग्रसेनस्यात्मजात् कंसात् त्रस्तान् भीतान् नोऽस्मांस्त्राहि पाहि यतस्त्वं भृत्यानां वित्रासहा भयापहर्ता भवसि पौरुषं परमपुरुषासाधारणं परमपुरुषत्वसूचकं चेदं रूपं ध्यानधिष्ण्यं योगिनां ध्यानैकशुभाश्रयभूतम् अतस्त्वं मादृशां मांसचक्षुषां प्रत्यक्षं मा कृषीष्ठाः माकार्षः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्षेमधामत्वं वर्णयति–मर्त्य इति । मृत्युरेव व्यालः तस्माद्भीतः पलायन् पलायमानः अस्मान्मर्त्यात् ॥ २७ ॥

भृत्यवित्रासहा भृत्यानां विविधभयनाशकोऽसि मादृशाम् प्रत्यक्षं कृषीष्ठाः प्रत्यक्षं न कुरु ध्यानधिष्ण्यं ध्यानविषयम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एक इति वैकुण्ठानामपि स्वरूपं चेति पुरुषविराडन्तर्यामिणो

(१) मादृशां त्वम् इति वीर० । विज० ।

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रूपम् आकारं चतुर्भुजत्वात् अत एव विराडन्तर्वर्त्ति ध्यानधिष्ण्यत्वेन प्रसिद्धं मांसदृशाम् अज्ञानाम् अयोग्यत्वादित्यर्थः । रूपं चेदमित्यादि प्रकरणव्याख्याविशेषं चतुर्थसन्दर्भस्य सप्तनवतितमपद्यानन्तरप्रघट्टके द्रष्टव्यः नतु मातस्तव किमर्थं भयं तमहं मारयाम्येव तथा ममाप्रत्यक्षतायां गर्भचौर्य्यं तस्माद्भयमेव स्याद् इत्याशङ्क्य यथार्थमेव निवेदयति ॥ २८ ॥ २९ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं भगवतो रूपत्रयं प्रपत्तिं च निरूप्य तस्याः प्रपत्तेः प्रकृतोपयोगित्वाय हेतुं निरूपयति—मर्त्य इति । अतीन्द्रियः कालः लोके स्वज्ञापनार्थं स्वप्रतिकृतिं सर्पमुत्पादितवान् लौकिकास्त्वलौकिकं तद्द्वारैव प्रतिपद्यन्ते यथा सिंहप्रतिकृतिर्ग्राम सिंहः एवं बिडालगवादयश्च व्याघ्रगवयादीनां प्रतिकृतिरूपाः कालः स्वभक्ष्यमेव सृजति । अतः कालसृष्टामर्त्या इत्युच्यन्ते तस्य च भार्या कुण्डलिनी शक्तिः स्वमर्तृज्ञापिका सर्वेषु पुरुषदेहेषु तिष्ठति योगो हि तदुद्बोधकः तच्छरणं गत एव योगी तदा तया प्रार्थितः कालः शीघ्रं न भक्षयति तस्य च आध्यात्मावेद्यः तदुक्तकर्मणापि विलम्बो भवति अन्ये च सर्वे देवाः पुराणोक्तास्तस्याधिभौतिकरूपाणि तेऽपि विलम्बहेतवो भवन्ति इमे त्रिविधा अपि धर्ममार्गवर्तिनः निरन्तरमेकनिष्ठास्तत्प्रपन्ना : ये पुनर्लौकिकाः साधारणाः शीघ्रंभक्षणार्थमेव स्थापिताः उद्गतभूतास्ते चेत्कालातिक्रमार्थं यतन्ते तदा कालकार्यं स्वस्मिन् रोगादिकमनुभूय कालनिवर्तकत्वेन श्रुतान् बहूनेव धर्मान् कर्तुं यतन्ते तद्व्यालभीतस्य पलायनं मूषकस्येवाग्नौ पतितस्य मृत्युः कालस्य मुखं सोपि व्यालः भयहेतुवाचको व्यालशब्दः सुखहेतुक एव यत्र क्वापि गच्छन् क्षुत्पिपासे जरावलीपलितामुपनीचधर्ममनुभवति अतः कालकार्यदर्शनाद्भयं न निवर्तते देवत्वे मानुषत्वे वृक्षत्वे वा बहुकालस्थितधर्मेषु भयं निवर्तेत इत्याशङ्क्य लोकान् सर्वानित्युक्तं निर्भयं भयाभावम् अतः केनाप्युपायेन मृत्युर्न निवर्तेत इति निर्भयं नाध्यगच्छत भयनिवर्तकस्थानं वा शास्त्रानुभवयोः सम्वादे हि तन्निवर्त्तते येपि पूर्वमुक्ताः त्रिविधास्ते कालाधीना इति अवश्यभक्षकत्वेन समर्थो भवन्ति प्रार्थना हि दुर्बला एवं शरणान्वेषणार्थं परिभ्रमणो क्रियमाणे सर्वप्रवर्तको भगवान् कदाचित्परितुष्यति तदा भगवच्चरणप्राप्तिसम्पत्तौ भागवतश्चेति भगवच्चरणद्वयमाधिभौतिकं ज्ञानं भक्तिश्चाध्यात्मिकं चरणावेव प्रसन्नस्याधिदैविकौ तन्मध्ये अन्यतरप्राप्तावपि कृतार्थतेति ज्ञापयितुं त्वत्पादाब्जमित्युक्तं भगवत्सहितं भगवच्चरणारविन्दं प्राप्य यदृच्छया भगवदिच्छया कालसम्बन्धाभावाय यदृच्छयेत्युक्तं नियतकालस्य यदृच्छात्वाभावात् अब्जपदेन च अलौकिको लोक एव ज्ञापकः शोभातिशयो निरूपितः त्रितयापेक्षयाप्यतिशयः अनेनैव विश्वासेन अद्यैव यदैव चरणप्राप्तिस्तदैव स्वस्थः शेते मृत्युनिवारणार्थं यत्नं च न करोति मृत्युः पुनः स्वत एव निवर्तते भगवच्चरणारविन्दमत्र वर्तेत इति अस्मादाध्यादपगमनं युक्तमेव शास्त्रं तु प्रमाणं संवादस्तु अलौकिकभावसिद्धिः कालनियन्ता च भगवान् अतोऽनुभवप्रमाणयुक्तयः अत्रैव सन्तीति न पूर्ववत् अस्मिन् मार्गे शङ्का निष्कपटतया प्रावृत्तौ तु नाऽत्र व्यभिचारः ॥ २७ ॥

एवं शरणागतौ हेतुमुपपाद्य त्रयं प्रार्थयति—सत्वमित्यादि त्रिभिः। अत्रावसरे त्रयं सम्भवति भगवानिदानीमेवान्तर्हितो भवेत् पश्चात् स्वेच्छयाऽन्यत्र स्थितः कंसं मारयेत् तदिमां कथां कंसः श्रुत्वा मारयेदस्मान् ज्ञानदापनयोर्नियोगात् अतो रक्षा प्रार्थनीया इदानीं वा कंसं मारयेत्ततो गच्छेत्ततः कंसपक्षपातिनः पश्चादस्मान् मारयेयुः तदर्थमिदं रूपं लौकिके न स्थापनीयमिति प्रार्थनीयम् एवं रूपेणाऽत्रैव च स्थितिरपि सम्भवति तदा अलौकिकं दृष्ट्वा प्राकृतो लोको द्वेषं कुर्यात् अस्मदादयश्च शीघ्रं मुच्येरन् भक्तिरसानुभवश्च न स्यात् मर्यादा च भज्येतेति अतः रूपाऽप्रदर्शनप्रार्थना युक्तैव एतत्सर्वदोषपरिहारार्थं साम्प्रतं कंसस्याज्ञानं भवत्विति प्रार्थना. इदानीं मारणे वा युद्धसमये स्वजीवनार्थम् अनुपसंहारे पूर्वोक्तपक्षसम्भवात् उपसंहारोऽपि प्रार्थ्यः भगिनीपतिश्चेति कदाचिन्न मारयेदित्याशङ्काव्युदासार्थमाह—घोरादिति । प्रार्थनीयसर्वदानसामर्थ्यार्थं स त्वमिति, पूर्वोक्तधर्म एव त्वं घोरो निर्दयो भयानकः क्रूर इति यावत् उपायेन विषादिना अमारणार्थं उग्रसेनात्मजादित्युक्तम् उग्रसेनस्य शरीरजः कथं वध्यो भवेत् ? घोरत्वात् स मारयेदेव त्रस्तानिति पूर्वपुत्रमारणेन त्राहि पालय उभयपदी धातुरयं प्रचुरप्रयोगात् निश्चीयते ननु, पर्यवसाने बाधाभावात् इदानीं मारणपक्षे किमिति रक्षा प्रार्थ्यते ? इति चेत्तत्राह—भृत्यवित्रासहासीति । भृत्यानामस्मदादीनां वित्रासं भयं हन्तीति तथा असीति तव सङ्कल्पः यथा गन्धः पृथिव्या एव एवं भगवतो भक्तदुःखनिवर्तकत्वमेव यथा अस्मद्रक्षा इदानीममारणेन अन्यत्र गमनेन च कर्तव्या तथा स्थितौ रूपोपसंहारश्च कर्तव्य इत्याह—रूपं चेदमिति । सर्वदा अनेन रूपेण स्थातुमयुक्तमिति इदं रूपं मांसदृशां चर्मचक्षुषां मा कृषीष्ठाः तर्हि कस्यापि मुक्तिर्न स्यादित्याशङ्क्याह ध्यानधिष्ण्यमिति । ध्यानमेव धिष्ण्यं स्थानं यस्य ध्यान एव प्रकाशो भवतु न बहिरतः सर्वं सुस्थं भविष्यतीति भावः मा कृषाष्ठा इत्यनेन चैतत् ज्ञापितम् अयं स्वेच्छयैव प्रकटीकरोति वस्तुतस्तु इन्द्रियावेद्यमेव मांसदृशामित्यनेन देवा एते मांसभक्षकाः मांसमेव पश्यन्ति सर्वत्र न तु विहितं निषिद्धं वा विचारयन्तीत्युक्तं चकारस्तूक्तसमुच्चयार्थः अन्यतरकरणाभावाय ॥ २८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्वच्चरणाश्रितोऽपि निर्भयः किमुत त्वमित्याह—मर्त्य इति । सर्वान् लोकान् प्रति पालयन् निर्भयं भयाभावं न प्राप यदृच्छया यादृच्छिकमहत्कृपालब्धभक्त्येत्यर्थः । त्वत्पादमेवाब्जं धन्वन्तरिं प्राप्य "अब्जोऽस्त्रीशङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे" इति मेदिनी । हे आद्य ! तेन त्वद्भक्तापि त्वया मातृत्वेन स्वीकृतापि कंसादपि केवलमहमेव महाभयविह्वलेति भावः ॥ २७ ॥

त्वं त्वदीयश्च निर्भयः कथमायामेव महाभयग्रस्तौ करोषि

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ! ।
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ २९ ॥
उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ।
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३० ॥
विश्वं यदेतत्स्वतनौ निशान्ते यथा ऽवकाशं पुरुषः परो भवान् ।
बिभर्त्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं(१)हि तत् ॥ ३१ ॥
श्रीभगवानुवाच ।
त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति ! ।
तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इत्याह—स त्वमिति । घोरादिति महाभीषणत्वम् उग्रेति पिता नोग्रः सेना च नोग्रा किन्त्वात्मज एवोग्र इति भयेनैव साक्षात्त्वन्नामाग्रहणम् किञ्च भृत्यानां विविधं त्रासं हंसि पित्रोरावयोः किमन्तर्भयं न हरसीति भावः । भो मातः ! कंसवधार्थमेवावतीर्णोऽस्म्यायातु कंसस्तमधुनैव वधिष्यामि चक्षुर्भ्यां पश्येति तदुक्तिमाशङ्क्य वर्द्धिष्णुना पुत्रभावेन तस्मात् कंसवधमसम्भावयन्ती प्रत्युत कंसादेव तदनिष्टमाशङ्कमाना महाभयकम्पितसर्वाङ्गी हन्त हन्त परमेश्वरत्वाहङ्कारवति पुत्रेऽस्मिन्मेवादय उपाया न घटन्त इत्यतः साम्नैव स्वकृत्यं साधयामीति मनसि विमृश्य तद्रूपमुपसंहारयितुं युक्त्यन्तरमुत्थापयति—रूपमिति । पौरुषमैश्वरं ध्यानधिष्ण्यं ध्यानास्पदं मांसदृशां मांसचक्षुषां प्रत्यक्षं मा कृथाः ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे माध ! सर्वजनक ! ॥ २७ ॥

पौरुषं चतुर्भुजम् ध्यानधिष्ण्यम् अयमर्थः परमविष्णोः परमपुरुषस्य तथावतारभूतश्चतुर्भुजः पुरुषो ध्येयत्वेन प्रसिद्धोऽतस्तद्रूपेण स्थितं त्वां लोका वेत्स्यन्ति अत इदं रूपं मांसचक्षुषां प्रत्यक्षं मा कुर्वीथाः मा कृथाः "एवं भवान् बुद्ध्यनुमेयलक्षणैः" इत्यत्र करणानां भगवद्रूपग्रहणशक्त्यभावो दर्शितः भगवति तु व्यापकत्वादिना च चतुर्भुजत्वेन द्विभुजत्वादिना च स्वरूपप्रकाशनशक्तिरस्त्येव अतः प्रत्यक्षं मा कृथाः अयमाशयः मुक्तिस्तु येषामिच्छसि तेषां द्विभुजरूपदर्शनाद्भविष्यत्येव पुत्रबुद्धिस्तु नरलोके चतुर्भुजेऽप्रशस्ताऽतो द्विभुजो बालो भवेति प्रार्थनेति द्विभुजरूपदर्शनान्मुक्तौ को विवादः तत् स्मरणमात्रेणापि मुक्तिर्भवत्येव ". सत्कृष्णवज्रमनिमान्तराहितामनोमयीं भागवतीं ददौ गतिम्" इति श्रुतिश्च "द्विभुजं ज्ञानमुद्राढ्यं वन मालिनमीश्वरम् चिन्तयेच्चेतसा कृष्णं मुक्तो भवति संसृ[ते]" इति ॥ २८ ॥

———

भाषा टीका ।

"मृत्यु रूप सर्प के भयसों सब लोकों में भागतो भयो मरण धर्म वारो जीव कहूँ अभय को नहीं प्राप्त भयो, पर ... जब आपके चरण कमल में आपकी कृपा सों आयो ... अनन्दसों सोवै है और जाके समीप सों मृत्यु भाग जाय है ॥ ...

सो आप या क्रूर उग्रसेन के पुत्र कंस सों डरपे भये ऐसे ह... री रक्षा करो, काहे सों, कि—आप भृत्यन ( दासन ) के विवि[ध] त्रास के नाश करन वारे हो और हे प्रभो ! आपको ये परमे[श्व]र प्रकाशक दिव्य जो रूप है जाको मुनिजन ध्यान धरे हैं वा ... को मांस चक्षु वारे ऐसे हम लोगन के प्रत्यक्ष न करो ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भवत एव हेतोर्निमित्तात्कंसात्समुद्विजे बिभेमि यतो[ऽ]... चित्ता ॥ २९—३० ॥

किमित्युपसंहर्त्तव्यमेवम्भूतेन मया पुत्रेण तव महती श्ला[घा] स्यादिति तत्राह-विश्वमिति । निशान्ते प्रलयावसाने यथा[व]काशमसङ्कोचतः असम्भावितत्वादुपहास्यतैव स्यादित्यर्थः ॥ ३१ ॥

चतुर्भुजेन रूपेणाविर्भावे कारणं तावदाह- त्वमेवेत्यादि... देशभिः । पूर्वसर्गे प्रथमजन्मनि अभूः आसीः पृश्निर्नाम स्वा[य]म्भुवे मन्वन्तरे तदा अयं वसुदेवः ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, मातस्तव किमर्थं भयं तथा ममाप्रत्यक्षतायां ...

( १ ) यदेतत् । ( २ ) महत् इति च वीर० ।

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

चौर्यापराधेन तस्मात् भयमेव स्यात् इत्याशङ्क्य यथार्थमेव निवेदयति—जन्मत इति । मत्सदर्थमेव बिभेमि नात्मार्थमिति यद्यपि मधुसूदनत्वेन त्वयि क्षुद्रादस्माद्भयं न सम्भवति तथाऽपि तत्र कारणमिदमेवेत्याह—अधीरधीरिति इठाद्धैर्यनिलोपकेनानुकम्पोदयेनेत्यर्थः । अत्र कंसानागमणागत्तुत्कपठया ॥ २९ ॥

तत्रानुमतिमाशंक्य पुनस्तदव्यसहमानाऽऽह-उपेति । शङ्खादिश्रिया सेवितं चत्वारो भुजा यत्र तादृशं यत् रूपम् आकारविशेषः तदेवोपसंहर गोपय रूपान्तरन्तु प्रकटयेत्यर्थः । तथा सति लोके कुत्रापि गोपयितुमशक्यस इति भावः । हे विश्वात्मन्निति युगपदनन्तरूपावकाशत्वाच्च तवाशक्तिरिति भावः अतो ऽधिकभुजद्वयं कौस्तुभादिकं च गोपयन् निगूढं लोकानुरूपमेव रूपं प्रकाशयेत्यर्थः । तथा सति लोके कुत्रापि गोपयितुं शक्यस इति भावः ॥ ३० ॥

नन्वधुना बन्धनात्तारयास्येव त्वां मारयास्येव तं तथैरशेन मया पुत्रेण कीर्तिरेव भविष्यति मांसचक्षुषोऽपि च मत्कृतिमादस्यन्तीत्याशङ्क्य पुनर्वात्सल्यवर्द्धिष्णुना मातृभावेन तस्य तादृशशक्तेरप्रतीत्या व्याजान्तरेणापि तत्प्रार्थयते—विश्वमिति । अत्र तेषामाभासेऽपि किमिति सार्द्धोपमेन वाक्यं ततश्च अधुना मारयास्येवेत्येवोद्धत्येन ध्वनितं स्यात् एवमित्यर्थान्तरं विश्वम् अनन्तकोटिब्रह्माण्डात्मकं निशा प्राकृतप्रलयरात्रिः तदन्ते तस्या नाशे सृष्टिस्थितिसमये परः पुरुषो महत्स्रष्टृरूपः सन् बिभर्तीति सोऽयमेव हि विश्वमन्तर्भावयन् स्वांशिनं तं प्रविश्याविर्भवतीत्यभिप्रायात् गर्भजो गर्भगश्चेति पाठद्वयम् ॥ ३१ ॥

एवं तयोरुक्तिभिरानन्दितो निजप्रसिद्धरूपाविर्भावकारणकथनादिना तौ प्रतिपुत्रवदिव परिसान्त्वयन् मातरि स्नेहविशेषेण तां सम्बोध्याह—त्वमेवेत्यादिना । स्वायम्भुवे मन्वन्तरे सति वर्तमाने, यद्वा, हे सतीति पुनःपुनस्तस्यैव पत्नीतया पातिव्रत्यनिष्ठाभिप्रायेण अकल्मषः रागद्वेषादिरहितः एवमन्योन्यं दाम्पत्ययोग्यतोक्ता ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विडम्बनम् उपहासास्पदम् ॥ ३१ ॥

स्वायम्भुवो स्वायम्भुवमन्वन्तरे अभवः ॥ ३२—३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे मधुसूदन ! अयं पापः कंसः मयि तव जन्म मा विद्यात् जानातु. तत्र हेतुमाह ; भवद्धेतोः त्वद्रूपात्कारणात् भवदवतार रूपात् निमित्तादिति यावत् कंसादहमधीरधीर्हेतुगर्भमिदं धैर्यरहितबुद्धिरस्मात्समुद्विजे बिभेमि ॥ २९ ॥

हे विश्वात्मन् ! अयो मतः अद इति पाठे अदः एतच्छंखचक्रादिभिर्जुष्टं श्रीलक्ष्मीः शङ्खादीनां श्रिया शोभया जुष्टं वा चत्वारो भुजा यस्मिन् अत एवालौकिकं प्राकृतजनेष्वसंभावितं रूपमुपसंहर तिरोधापय ॥ ३० ॥

स्वनाभीकमलदर्शिताखिललोकमपरिच्छिन्नवैभवं श्रीभगवन्तं स्वगर्भे धृतवत्यसीति विस्मयते—विश्वमिति । निशा प्रलयः तस्या अन्तःसृष्टिदशा तदा स्वतनौ स्वतन्वेकदेशभूते नाभीकमले यः परमपुरुषो भवानिदं कृत्स्नं चिदचिदात्मकं विश्वं बिभर्ति सोऽयं भवान् मम गर्भगोऽभूदिति यदन्नृलोकस्य विडम्बनं तद्वदनुकरणमात्रः अहो अत्याश्चर्यमेतस्य भगवतो माहात्म्यमिति विस्मयः ॥ ३१ ॥

तदेवं पितृभ्यां संस्तुतः प्रार्थितश्च स्वात्मनाधारणादिव्यमङ्गलविग्रहप्रदर्शननिमित्तं निवश्युक्त्यनुपोद्घातरूपमितिहासमाह भगवान्—त्वमित्यादिना एतद्धामित्यतः प्राक्तनेन ग्रन्थेन । पूर्वसर्गे इतस्तृतीये जन्मनि स्वायम्भुवे मन्वन्तरे सति त्वमेव पृश्निर्नाम योषिदभूः तदा अयं तव भर्ता वसुदेवस्तु सुतपा नाम प्रजापतिरभूत् कथम्भूतः अकल्मषः विशुद्धः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अप्रत्यक्षकरणे कारणमाह—जन्मेति । मा विद्यात् जानातु समुद्विजे बिभेमि अधीरधीः चञ्चलबुद्धिः ॥ २९ ॥ ३० ॥

हरेर्गर्भवासादिदुःखाऽनुभवो नास्तीत्याशयेनाह—विश्वमिति । निशान्ते रात्रिमध्ये यथावकाशम् अवकाशमनतिक्रम्य यथा स्यात्तथा इति समासः ॥ ३१ ॥

अहं युवयोस्तपःप्रभावादाविर्भावमकरवं न तु कर्माधीनत्वेनेति पूर्वजन्मसञ्चिततपोमाहात्म्यं कथयति त्वमेवेति. अयं वसुदेवः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जन्मत इति । मत्सदर्थमेव बिभेमि नात्मार्थमिति यद्यपि मधुसूदनत्वेन क्षुद्रात्तस्मात्तव न भयं सम्भवेत् तथाप्यधीरधीत्वेनैव बिभेमीत्यर्थः । अतोऽधिकं भुजाद्वयं कौस्तुभादिकञ्च गोपयन् निगूढं लोकानुरूपमेवाकारं प्रकाशयेत्यर्थः । तथा सति लोके कुत्रापि गोपयितुमपि शक्येथामिति भावः । नन्वधुना मारयास्येव तं तथैरशेन मया पुत्रेण तव कीर्तिरेव भवेत् मांसदृशोऽपि च मत्कृतिसुखमादस्यन्तीत्याशङ्क्य तादृशस्नेहेनैव तस्य तादृशशक्तिमप्रतीयती व्याजान्तरेणापि तदेव प्रार्थयते ॥ ३० ॥

विश्वमिति । विश्वम् अनन्तकोटिब्रह्माण्डात्मकं निशा प्रलयरात्रिः तदन्ते तदानीमेव तेषामभिव्यक्तेः परः पुरुषो महत्स्रष्टृरूपः सन् ॥ ३१ ॥ ३२ ॥ ३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मध्यमपक्षे स्वतो निवृत्तावपि कंसश्चेज्जानीयात् स्वयमागत्य युद्धं कुर्यात् अतएव स दोषस्तदवस्थ इति तस्य जन्माज्ञानस्प्रार्थयति, जन्म न इति । असौ कंसकृते जन्म मा विद्यात् यतोऽयं पापः नर्हि तत्स्वरूपं न जानासीति चेत्तत्राह—मधुसूदन इति । यद्यप्येतज्जानीमस्तथापि मध्यमपक्षशङ्कया प्रार्थ्यते । ननु, मध्यमपक्षे को दोषः अविश्वासस्तु न कर्त्तव्य इति चेत्तत्राह भवद्धेतोः कंसादहं समुद्विजे बिभ्यामः कर्त्तव्य इति चेत्तत्राह—अधीरधीरिति । न हि भगवति उत्पन्ने परमानन्दे कोपि क्लेशहेतुर्भवितुमुचितः भव-

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

द्धेतोरित्यनेनैतत् ज्ञापयति-यद्ययज्ञानीयादस्मादुत्पन्नो भगवान-न्यत्र तिष्ठतीति तदा निर्बन्धेन समानयनं वा प्रार्थयेत् पूर्वं प्रतिज्ञातत्वात् अतोऽस्य ज्ञानाभाव एवोचितः ॥ २९ ॥

रूपान्तरस्वीकारे त्वन्यत्रापि स्थापयितुं शक्यते भवनेन रूपे-णेति उपसंहारं प्रार्थयते-उपसंहरेति । अदो वेदयेदमलौकिकं रूपं लोके उचितं न भवतीत्युपसंहर विश्वात्मन्निति रूप-ग्रहणे उपसंहारे च सामर्थ्यं द्योतितम् । स हि विश्वात्मन् सर्वाण्येव रूपाणि गृह्णाति उपसंहरति च अद इति पदेन चैतत् विज्ञापयति-अवतारो नोपसंहर्त्तव्यः अलौकिकत्वमात्रमुप-संहर्त्तव्यमिति सर्वमेवालौकिकमिति सर्वस्यैवोपसंहारे प्राप्तेऽलौ-किकसमानं तत् स्थापनीयमन्यदुपसंहर्त्तव्यमिति वदन्ती अलौकिक-मंशमाह शङ्खचक्रेति । शङ्खचक्रगदापद्मान्यायुधान्युपसंहर्त्तव्यानि अलौकिकी श्रीश्चोपसंहर्त्तव्या भुजानां चतुष्टयं चोपसंहर्त्तव्यं द्वयं स्थापनीयं उपलक्षणमेतत् प्राकृतमायाव्यतिरिक्तं तदुप-संहर्त्तव्यं अविद्यमानोऽपि प्राकृतो भावः स्थापनीयः । यद्यपि चतु-र्भुजरूपं देवादीन् प्रति प्राकृतमेव तथापि साधारण्यात् प्रति तादृशमपि न प्रकटनीयमिति प्रार्थना ॥ ३० ॥

एवं स्तुत्वा प्रार्थयित्वा च विरोधं परिहरति—विश्वमिति, अथवा अलौपसंहारेणाङ्कस्थापने सामर्थ्यार्थं विरोधिगुणमनूद्य अन्यतरस्य प्रदर्शनपरत्वेनोपपादयन्ती समर्थयते—विश्वमिति, स्वतनौ स्वशरीरे विराजि ब्रह्माण्डाख्ये निशान्ते सृष्टिसमये यथावकाशं चतुर्दशभुवनलोकात्मकं विभर्षि प्रलये सूक्ष्मतया निवेशनं भवतीति निशान्त इत्युक्तम् । किमीरतया स्थितिर्निषिद्धा नन्वत्र किं प्रमाणमित्याशंक्याह-पुरुषः पर इति । पुरुषो व्यष्टिः परः समष्टिः भवानिति सम्मत्यर्थं तेन स्वस्वरूपे तादृङ्माहात्म्य ज्ञानपरत्वसम्बोधनम् एवं विश्वाधारभूतोऽपि भवान् मम गर्भगो ऽभूत् यद्यपि विरुद्धसर्वधर्माश्रयस्य भगवतो नेदमाश्चर्यं तथापि स्वप्रतीत्या आश्चर्यं मत्वा परिहरति-अहो नृलोकस्य विडम्बनं महदिति । अहो इत्याश्चर्यं नृलोकस्य मनुष्यमात्रस्य महद्वे-तदनुकरणमिति समाधानं महानपि अल्पमनुकरोति यथा पुरुषो विडालं तथापि ब्रह्माण्डविग्रहस्य परमसूक्ष्मता आश्चर्य-रूपेत्याशंक्याह-महदिति । अनुकरणं सत्यमेव परमलौकिक-मनुकरणम् अनेन गर्भाभावोऽप्युक्तः ॥ ३१ ॥

एवमुभयोः स्तोत्रे सप्रार्थने कृते भगवान् स्वस्य पुत्रत्वे तादृश रूपेण प्राकट्ये च हेतुं वदन् तयोः पूर्ववृत्तान्तमाह-परिज्ञानार्थं त्वमेवेति चतुर्दशभिः । चतुर्दशविधानां प्रामाण्यार्थम्—

> पूर्वस्थितिः तथा कार्यं प्रकारो भजनं हरेः ।
> कालस्तोत्रञ्च प्राकट्यं वरप्रार्थनया सह ॥
> अल्पबुद्धिस्त्वभोगौ च जन्मत्रितयमेन च ।
> त्रिगुणं भगवत्सत्त्वं लौकिकाद्वैदिकान्महत् ॥
> रूपदर्शनकार्यं च साधनं प्रोच्यते महत् ।

प्रथमस्थितिमाह-पूर्वसर्गे प्रथमब्रह्माण्डे प्रथमकल्पे इतः पूर्वकल्पे वा स्वायम्भुवर्की अस्येवाह भगवान्—तस्या दीनत्वेन स्नेहातिशयात् पृश्निरिति नाम त्वमेव प्रश्निरभूः स्वायम्भुवे मन्वन्तरे सतीति सम्बोधनम् अनेनास्याः अधिककृपायां धर्मातिशयो हेतुरुक्तः तदा तस्मिन्नेव समये अयमपि सुतपा इति नाम प्रसिद्धः अयं

च प्रजापतिर्ब्रह्मणः सुतः मरीच्यादिवत् कर्दमवत् स्वभावत एवाऽ-मकल्मषः कामक्रोधलोभादिरहितः एतादृशौ पूर्वं स्थितौ ॥ ३२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो मातः यदीदं रूपमन्तर्द्धापयामि तदा कंस आगत्य गर्भस्ते क्व गत इति गर्भचौर्यापराधेन त्वामधिकं ताडयिष्यतीति चेत्तत्र मम का शङ्केत्याह-जन्मात । मा बिभ्यात् मा जानात् मधुसूदनेति मधुदैत्यं हतवतो मम कंसवधे कः प्रयास इ... मामंस्थास्तदानीन्तनात् मधोरप्ययमिदानीन्तनः कंसः कोटि-गुणितबलाधिक इति भावः । भवद्धेतोरिति मदपराधं प्रकट... मत्ताडनं वधादिकं कुर्यात् चेत्करोतु केवलं भवतः कल्याण-माशासे इति भावः । ननु, तर्हि रूपं यत्तादित्यनेन नष्टे ... इत्यनेन योऽयमित्यनेन मर्त्यो मृत्युव्यालेत्यनेन मदैश्वर्यं वृथै... किमवादीः सत्यं पुत्र ! अथ माताऽहमेवमधीरबुद्धिरेव मा बिभ... ममैव दोषोऽयं निर्मञ्छनं ते यामि मातृवात्सल्येनापि रूपमिदमु-संहरेति भावः ॥ २९ ॥

विश्वात्मन्निति विश्वस्य मध्ये अहमप्यस्मि तन्ममान्तर्भं... स्थित्वा कथमेवमधीरां धियं प्रवर्त्तयसीति तवैवायं दोष इ... भावः । अलौकिकमिति लौकिकनरबालकाकारो भव यथा ... त्वामहं क्वापि गोपयानीति भावः ॥ ३० ॥

ननु, किमित्युपसंहर्त्तव्यम् मया परमेश्वरेण पुत्रेण ... महती प्रतिष्ठैवाभिर्वर्तिं चेन्नाहं प्रतिष्ठामाशासे इत्याह—विश्व-मिति । निशान्ते मन्दिरे "निशान्तवस्त्यसदनभवनागारमन्दिरम्" इत्यमरः । स्वतनुमन्दिरे यथावकाशमसङ्कोचतः नृलोकार... मानुष्या मम विडम्बनमेव तदिदम् अयि मूढे कोटिब्रह्माण्डविग्र... भगवांस्तव मानुषपुत्र्या गर्भे स्थितोऽभूदिति; वक्तुमभिमन्तु-मपि किं न लज्जसे ? इति प्रतिवेशिन्यो मामुपहासिष्यन्तीति प्रत्युताप्रतिष्ठैव मे स्यादिति भावः । ननु. परब्रह्ममूर्त्तेर्भगवत-स्साक्षादपरोक्षानुभविनोर्वसुदेवदेवक्योरपि किमिदमघटमानमा-विधकं भयशोकादिकं नैवं विद्याविद्याभ्यां बहिरङ्गाभ्यां प... भूता खलु यान्तरङ्गा स्वरूपभूता चिच्छक्तिस्तस्या अपि सार-वृत्तिरूपो यः प्रेमा तद्विलासभूतमेवेदं भयशोकादिकमाविद्यकत्व-प्रवादपात्रीभवितुं नैवार्हतीति प्रेम्णोमायातीतत्वे किं प्रमाणमिति चेत् भगवतः प्रेमवश्यत्वान्यथानुपपत्तिरेव मायामयत्वे त... मायावश्यत्वमापद्येतेति किञ्चात्र चान्यत्र च व्युत्पत्त्यर्थमिदं ... श्रूयते "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" "भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेस्तस्य स्वरूपं भक्त्यै-कगम्यमित्यवसीयते सा च भक्तिस्त्रिविधा गुणीभूता प्रधानी-भूता केवला च तासां च क्रमेण ज्ञानं ज्ञानमयी रतिः प्रे-मा चेति फलानि तत्र ज्ञानेन केवलं चित्सुखैकमयं ब्रह्मस्वरूपं ज्ञानमय्यात्या चिदैश्वर्यसुखमयं भगवत्स्वरूपमेव प्रेम्णा तु माधुर्य-मयं कृष्णरामादिस्वरूपमेवास्वाद्यते कस्यचित्प्रेमवत्साधुसङ्ग-महिम्ना प्रधानीभूतापि भक्तिः प्रेमफला स्यात् किन्तु तत्प्रेमै-श्वर्यमेवेत्याहुः, स्वरूपस्य वस्तुत एकत्वेऽप्यास्वादनभेदाद्भेदातिरे... तच माधुर्यं श्रीविग्रहनिष्ठरूपादिपञ्चकस्य भक्तवात्सल्यस्य ली...

युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः॥ ३३॥
वर्षवातातपहिमघर्मकालगुणाननु।
सहमानौ श्वासरोधविनिर्धूतमनोमलौ॥ ३४॥
शीर्णपर्णानिलाहारावुपशान्तेन चेतसा।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः॥ ३५॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

याक्षेति सप्तविधं व्रजस्थस्य तस्य तु वेशवैश्वर्ययोराधिक्यान्नव विधं यदुक्तम्—

"चतुर्धामाधुरी तस्य व्रज एव विराजते।
ऐश्वर्यक्रीडयोर्वेणोस्तथा श्रीविग्रहस्य च" ॥ इति।

प्रेमा च दास्यसख्यवात्सल्योज्वलभेदाच्चतुर्विधः तेष्वपि मध्ये वात्सल्यप्रेमा स्वस्वभावमहिम्नैव कृष्णमनुकम्प्यत्वेन ममत्वातिशयाविषयीकृत्य स्पष्टमप्यैश्वर्यं स्वयमनुभूयमानत्वं प्राप्तमपि तथाऽऽच्छादयति, यथा तन्ममतारसनया निबद्धो वशीभूय स कृष्णः स्वमाधुर्यमपारमप्यानास्वाद्यं वात्सल्यप्रेमवज्जनमास्वादयति। ज्ञानेन वा ज्ञानमयत्वया वा सच्चिदानन्दात्मकवस्तूनां य आस्वादस्तस्मात् कोटिकोटिगुणितं ममता हेतुकमास्वादं प्रेमा प्रवर्त्तयति तथा हि सर्वसन्तापनिवर्त्तकात् परमाह्लादकात् दृश्यमानात् चन्द्रादपि सकाशात्सर्वगुणहीनोऽपि कालत्वादिदोषयुक्तोपि दृश्यमानः स्वपुत्रो यत्सुखमधिकं दत्ते तत्र ममतैव यदि कारणं तदा सर्वगुणमण्डिते स्वभावादेव निरवधिकसुखप्रदे श्रीकृष्णे पुत्रीभूते निरवधिकैव सा ममता प्रेमनिष्ठा किमुतेति ज्ञानप्रेम्णोर्भेदो विवृतः यथाह्यविद्यास्ववृत्त्या ममतया जीवं दुःखयितुमेव बध्नाति तथैव प्रेमा स्ववृत्त्या ममतयेश्वरं सुखरूपमप्यतिसुखयितुं बध्नाति यथा दण्डनीयजनस्य गात्रबन्धनं रज्जुनिगडादिना माननीयजनस्यापि गात्रबन्धनमनर्घसुगन्धसूक्ष्मश्लक्ष्णकञ्चुकोष्णीषादिनेत्यविद्याधीनो जीवो दुःखी प्रेमाधीनः कृष्णोऽतिसुखीति किञ्च यथैवाविद्यया स्वतारतम्येन ज्ञानावरणतारतम्याज्जीवस्य पञ्चविधक्लेशतारतम्यं विधीयते तथैव प्रेम्णापि स्वतारतम्येन ज्ञानैश्वर्याद्यावरणतारतम्यात् स्वविषयाश्रययोः अनन्तप्रकारं सुखतारतम्यं विधीयते इति तत्र केवलः प्रेमा श्रीयशोदादिनिष्ठः स्वविषयाश्रयौ ममतारशनया निबद्ध्य परस्परवशीभूतौ विधाय ज्ञानैश्वर्यादिकमावृत्य यथाधिकं सुखयति न तथा देवक्यादिनिष्ठः ऐश्वर्यज्ञानमिलितत्वेन प्राबल्याभावात् तत्तत्प्रेम्णस्तथा तथा भूतत्वे कारणं तु नान्वेष्टव्यं तासां यशोदादिदेवक्यादीनां नित्यसिद्धत्वादेव तत्तत्तादृशप्रेमविशेषाणामपि नित्यसिद्धत्वादिति सर्वं निरवद्यम्॥ ३१॥

भो मातर्न केवलमस्मिन्नेव जन्मनि त्वद्गर्भगतोऽहमपितु जन्मान्तरेष्वप्यतस्त्वं किमिति स्वदैन्यं मन्यसे न त्वं प्राकृत्येव मानुषीत्याह—त्वमेवेत्यादिचतुर्द्दशभिः। अभूः आसीः स्वायम्भुवे मन्वन्तरे सति वर्तमाने अयं वसुदेवः॥ ३२—३३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भवतः एव हेतोः कंसात्समुद्विजे मयि सति क उद्वेगः अत्राह-मधीरधीरिति॥ २९॥

पौरुषं रूपं प्रत्यक्षं मा कृषीष्ठा इति यदुक्तं तद्विवृणोति, उपसंहर इति॥ ३०॥

निशान्ते प्रलयान्ते विश्वं यथावकाशमसङ्कोचतः स्वगतौ भवान् बिभर्ति स भवान् मम गर्भगोऽभूदिति मम भाग्यं परन्तु असम्भावनया नृलोकस्य विडम्बनमुपहासास्पदं भवेदत उपसंहरेति पूर्वेणान्वयः॥ ३१॥

प्रार्थितं स्वीकृत्य आवयोः प्रार्थनयैव जन्मान्तरे कृतयैव जातोऽस्मीति विज्ञापयति भगवान्—त्वमिति चतुर्दशभिः। हे सति! मातः! स्वायम्भुवे मन्वतरे अभूः आसीः॥ ३२॥

भाषा टीका।

हे मधुसूदन! ये पापी कंस गों में आपके जन्म को न जानलेय, मैं अधीर बुद्धिवारी तुमारे कारण सों या कंस सों बडी डरूं हूं॥२९॥

हे विश्वात्मन्! शंख, चक्र, गदा, और पद्म, की शोभा सों सेवित या अलौकिक चतुर्भुज रूप का आप छुपाय लेओ॥ ३०॥

जो परमपुरुष आप प्रलय के अंत में या विश्व को अवकाश पूर्वक अपने उदर में धारण करौ हौ, सो आप मेरे गर्भ मे आये। अहो यह तो आप को मनुष्य लोक को अनुकरण है॥ ३१॥

श्रीभगवान् उवाच।

श्रीभगवान बोले, कि-हे सति! स्वायंभुव मन्वन्तर में पूर्व जन्म में ये वसुदेवजी सुतपा नामक प्रजापति रहे और पृश्नि नामवारी तुम इन की पत्नी रहीं हो॥ ३२॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तेपाथे तपः कृतवन्तौ॥ ३३॥ ३४॥ ३५॥

**एवं वां तप्यतो[१]स्तीव्रं तपः परमदुष्करम् ।**
**दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥ ३६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तप्यतोराचरतोः इयुर्गतानि मदात्मनोर्मच्चित्तयोः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वै प्रसिद्धौ स्मरणे वा ततस्तदानीमेवेति ब्रह्मादेशपालनपरतोक्ता सन्नियस्येति च शान्तिनिष्ठा अत एव परमम् अनेकार्थस्य तपेः तपः कृत्यर्थव्यक्तय एव तपःशब्दो ऽनूद्यते इत्यभिप्रेत्य तैर्व्याख्यातं तेपाथे तपः कृतवन्ताविति किन्तु उक्तार्थानामप्रयोग इति तत्र कृतवन्तावित्येवार्थः । पर्यवस्यति तत एव चान्वितं स्यादिति ॥ ३३ ॥

तप एव दर्शयति—वर्षेति युग्मकेन। वर्षादीन् कालस्य गुणान् अनु निरन्तरं सहमानौ आतपः साक्षात् रविरश्मितापः घर्म औष्ण्यम् यद्वा आतपः शारदस्य रवेः घर्मो नैदाघस्य किञ्च श्वासरोधः प्राणायामस्तेन प्रथमं सामान्यतो धूता नाशितास्ततो यावदुपलभ्यन्ते तावन्निःशेषेण धूतास्ततः स्वयमनुपलभ्यमाना या अपि सूक्ष्मतमवासनाया उच्छेदनेन विशेषेण निर्धूता मनसो मला: कामादयो याभ्यां तौ एतेन यत्किञ्चित्त्वमध्यमत्वयावत्वक्रमेण तयोराग्रहाधिक्यं बोधितम् अत एव उपशान्तेन सुस्थिरेण किंवा मन्निष्ठेन शमो मन्निष्ठता बुद्धेरित्युक्ते इति शान्तिनिष्ठा मत्तः पुत्रभूतात् कामान् जनकभावोचितसुखानि प्रजासर्ग इत्युक्तत्वात् मादृशो वां वृतः सुत इति वक्ष्यमाणत्वाच्च ॥ ३४ ॥ ३५ ॥

भद्रे ! हे परमभाग्यवतीति तत्र योग्यतोक्ता यद्वा भद्रवने माथुरक्षेत्र एवात्र मय्येव आत्मा चित्तं ययोरिति कामान्तरं निरस्तम् इत्युपरतिनिष्ठा ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सति यदा युवां ब्रह्मणा चतुर्मुखेन प्रजासर्गे निमित्ते आदिष्टावाज्ञप्तौ तत इन्द्रियग्राममन्तर्बाह्येन्द्रियगणं सम्यङ् नियम्य निगृह्य परममुत्कृष्टं तपः तेपाथे चक्राथे पाकं पचतीतिवन्निर्देशः ॥ ३३ ॥

तपसः परत्वमेव दर्शयितुं तौ विशिनष्टि—वर्षवातातपेत्यादि । वर्षादीन् कालगुणाय ऋतुधर्माननुक्रमेण प्राप्तान् सहमानौ घर्मोनपजं स्वेदोदकं "वृषणं" इति धातुः श्वासनिरोधेन प्राणवायुनिरोधेन निर्धूतं मनसो मलं रजस्तमोभ्यामभिभवरूपं ययोः जीर्णानि वृक्षेभ्यो गलितानि पर्णान्यनिलश्च आहारो ययोस्तथाभूतौ मत्सकाशात्कामानभीष्टार्थानभीप्सन्तौ उपशान्तेन रागादिभिरकलुषितेन चेतसा मदाराधनमीहतुः इहाञ्चक्राते कृतवन्तौ इत्यर्थः। आर्षत्वादिजादेरित्यामभावस्तङभावश्च अनुदात्तत्वलक्षण

(१) भद्रे इति वीर० ।

त्मनेपदस्य चक्षिङ्ङित्करणादनित्यत्वाद्वाऽधिजिहीर्षिभवच्छ्र... सामानाधिकरण्याभिप्रायकः प्रथमपुरुषप्रयोगः ॥ ३४--३५ ॥

हे भद्रे ! एवमित्थं परमदुष्करं च तपश्चरतोर्मय्येवात्मा म... ययोस्तयोर्युवयोर्दिव्यादि न देवमानपरिमितानि वर्षाणि वर्षां... वत्सराणां सहस्राणि द्वादश इयुर्व्यतिक्रान्तानि बभूवुः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रजासर्गे तादर्थ्ये सप्तमी ततस्तदा ॥ ३३ ॥

अनुक्रमेण वर्षादिगुणान् सहमानौ श्वासरोधः प्राणाया... स्तेन ॥ ३४ ॥

शीर्णपर्णं वायुना पतितपत्रं कामान् पुत्रादिलक्षणान् ॥ ३... वां युवयोः ॥ ३६—३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनेकार्थस्य तपेः तपःकर्मकत्यर्थव्यक्तय एव तप... शब्दोऽनूद्यते आतपः शारदस्य रवेः धर्मो नैदाघस्य मत्तः पुत्र... भूतात् कामान् जनकभावोचितसुखानि प्रजासर्गे इत्यु... मादृशो वां वृतस्सुत इत्यग्रतश्च वक्ष्यते ॥ ३४—३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतादृशौ पूर्वं स्थितौ तादृशौ प्रति ब्रह्मणा आज्ञामाह—युवामिति... प्रजासर्गे ब्रह्मणा आदिष्टौ तदा ततः तदनन्तरमेव कश्चिद्देशविशे... सन्नियम्येन्द्रियग्रामं ततः प्रभृतिसम्बन्धमकृत्वा परमं तपस्तेपा... सर्वेन्द्रियनिरोधेन सर्वाहारपरित्यागेन वाय्वादि निरोधे विहि... शरीरे सन्तापजननात् तपो भवति परममुत्कृष्टं भगवद्विष... त्वात् एवं तस्मिन् जन्मनि कार्यमुक्तम् ॥ ३३ ॥

तस्य तपसः प्रकारमाह—वातवर्षेति । वर्षवातयोः सह... प्रावृट्काले अनावृतदेशे अन्तरिक्षे स्थित्वा आतपसहनं पञ्चाग्नि... प्रकारेण. हिमसहनं जलवासादिना. घर्मः कालान्तरीयाणि... कालगुणाः अन्येऽपि शीतादयः साधारणा स्तेषामप्रतीकारे... स्थितिरेव सहनम् उभावपि सहमानौ नत्वेकस्तपः करोत्यपर... स्तत्सेवामिति ॥ ३४ ॥

तादृशयोर्भगवत्सेवामाह—शीर्णेति । कियत्कालं तपस... चित्ते शुद्धे भगवत्सेवयैव कार्यं नान्यथेति ज्ञात्वा तपः कुर्वाणा... वेव परिचर्यां कृतवन्तौ सर्वथा आहाराभावे बहिः संवेदनाभावे... च उभयोः परिचर्या न भवतीति यादृशेन तपसा सह परि... चर्यां कृतवन्तौ स विशेष उच्यते, शीर्णपर्णानि शीर्णानि पर्णानि... अनिलो वायुश्च आहारो ययोः परमोपशान्तिः शुद्धसात्त्विकगुणा... विर्भावः स एवोपशमः सोऽपि चित्तस्य स्वभाव एव दे...

तदा वां परितुष्टोऽहममुना वपुषाऽनघे ! ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥ ३७ ॥
प्रादुरासं वरदराड्युवयोः कामदित्सया ।
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥
अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ[1] देवमायया ॥ ३९ ॥
गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ।
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जातस्तदा उपशान्तं चित्तं भवति. एवं यमा नियमाश्चोक्ताः मत्तो हरेरेव कामान् पुत्रादीन् अभीप्सन्तौ सकामौ मदाराधनं मत्परिचर्यामीहतुः कृतवन्तौ ॥ ३५ ॥

एवं तिष्ठतोर्यावान् कालो जातस्तमाह—एवमिति । भद्रे ! इति सम्बोधनं स्त्रीपुंभावेन स्थितयोः सौभाग्यबोधनार्थम् उत्तरोत्तरतपोवृद्धौ परमदुष्करता द्वादशदिव्यवर्षसहस्राणि चतुर्युगं युगधर्मा अपि तयोर्बाधका न जाता इति ज्ञापनार्थं तावत्कालं देहस्थितौ हेतुः मदात्मनोरिति अहमेवात्मनि ययोः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आतपः सौरकिरणोत्थस्तापः घर्मो निदाघोत्थः ॥ ३४-३५ ॥
मदात्मनोर्मच्चित्तयोः ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परमं ममाराधनात्मकं तपः तेपाथे कृतवन्तौ ॥ ३३ ॥
वर्षादीन् कालगुणान् सहमानौ तत्र घर्मशब्दः प्रस्वेदवाचकः "घृ क्षरणे" "स्वेदे घर्मः खेदने च" इति हैमः ॥३४-३५॥
तपस्तप्यतोः आचरतोः ईयुर्गतानि ॥ ३६ ॥

भाषा टीका ।

या समय में जब ब्रह्माजी ने प्रजा की सृष्टि के तांई तुम दोनों कों आज्ञा दीनी तब तुमन ने विषयन सूं इन्द्रियन कों रोक कर कें परम तप कियो ॥ ३३ ॥

वर्षा पवन आतप घर्म इत्यादि काल के गुणन को सह करकें प्राणायाम के बल सों तुम दोनोंने अन्तःकरण के मल को दूर कियो ॥ ३४ ॥

गिरे परे वृक्षन के पत्र और पवन को अहार करके शान्त भयो जो चित्त तासों मो मात्र सों वरदान की इच्छा करकें तुम दोनों हमारो आराधन करत भये ॥ ३५ ॥

या प्रकार सों मेरो विषें चित्त लगाय के परम दुष्कर तीव्र तप करत २ तुम दोनों को देवतान की बारह हजार वर्ष बीत गईं ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमुना वपुषा प्रादुरासं प्रादुर्भूतोऽस्मि ॥ ३७ ॥
वरदराट् वरदेषु श्रेष्ठ इत्यर्थः । तेन सकृद्वरेण च वारं वारमाविर्भाव कारणमुक्तं कामस्य दित्सया दातुमिच्छया मादृशो मया सदृशः ॥ ३८ ॥
मे मत्तोऽपि युवामपवर्गं न वव्राथे न वृतवन्तौ ॥ ३९ ॥
वरं दत्वा मयि गते ॥ ४०—४१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेति सार्द्धकम् । अनघे ! हे सर्वापराधरहिते ! इति तपोनिःशङ्कद्रता सूचिता अत एव वां युवयोःसम्बन्धेन युवां प्रतीत्यर्थः । परितः तुष्टः सन् परीतिकर्मप्रवचनीयं वा तच्च वीप्सायां वीप्सा च जन्मभेदेनेति तथैवार्थः । ननु, भक्त्यैव परितोषस्त्वं न तु तपसा सत्यं पारम्परिकमेव कारणं तदित्याह, तपसा मत्सन्तोषार्थं प्रयुक्तेन जातायां नवधा साधनभक्तौ श्रद्धा तया जाता या तल्लक्षणा भक्तिस्तया नित्यं हृदि भावितः यत्नेन प्रापितः चकाराद्यत्नेनैव यत्नं च प्रेमलक्षणाया प्रापितः पुत्रत्वभावनामध्येवेति ज्ञेयम् अमुना एतेन श्रीकृष्णाख्येन वपुषेति. परितोषादौ सर्वत्र सोऽयम् अमुना वपुषा हृदि भावितः अत एव परि सर्वतो भावेन तुष्टोऽहम् अत एवामुनैव वपुषा प्रादुरासमिति वरदराडिति तैव्याख्यानम् । किञ्च तपसोऽधिकफलदाने तत्र चोत्तरोत्तराधिक्यं च कारणं ज्ञेयम् ॥ ३७ ॥

व्रियतामित्यर्द्धकम् वां युवाभ्यामित्यर्थः । तृतीयायाः षष्ठी मादृशः मत्सदृश एव वृतः न तु साक्षादहं लज्जादिना तथा वरणाशक्तेरिति भावः ॥ ३८ ॥

(१) मग इति वीर विज० वैष्णवतोषिणी । सुबो०

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तादृशेन च मद्भावेन युवां केवलं विषयान्तरोत्पादनं नाहतवन्तौ अपि तु तदनादरेण मोक्षाय योग्यावपि मत्प्रसादनेन तं हस्तप्राप्तमपि नाहतवन्तावित्याह—अजुष्टेति । तत्राजुष्टग्राम्यविषयावित्यनेनाहङ्कारास्पददेहावेशो निरस्तः अनपत्यावित्यनेनापत्योपलक्षितममतास्पदाभाव उक्तः ततश्चापवर्गाचरणयोग्यता दर्शिता तदुक्तं "विनिर्धूतमनोमलौ" इति तत्रापि मे भक्त इति प्राप्तिभावना दृढीकृता तदुक्तं वरदराडिति । तादृशावपि युवां तादृशादपि भक्तो न वव्राथे तत्र क्रमप्राप्तं हेतुं निर्दिशति मोहितौ मम माययेति मम मदीयया मायया झटिति स्वविषयक पुत्रस्नेहमयपादिकया मायया कृपया यद्वा, मद्विषयकपुत्रोचितलालनेच्छामय्या कृपया तिरस्कृतान्यभावत्वादित्यर्थः । दृष्टान्तस्तु सालोक्यसार्ष्टित्यादिषु प्रसिद्ध एवेति नोक्तः ॥ ३९ ॥

अतः साधिते मयि मदेकार्थाद्वैराग्यादपि शिथिलौ जातौ उत्फुल्लमनस्त्वेन स्वस्य मल्लक्षणपुत्रसम्पत्तियोग्यतेच्छया च विषयमप्यर्जितवन्तावित्याह, गते मयीति । पश्चात् ग्राम्यान् भोगानपि युवां भुक्तवन्तौ यतो युवां प्राप्तमनोरथौ भूतौ युवां प्रतिगते इति वा अत्र टीकायां वरं दत्त्वेत्यध्याहृत्यैव व्याख्यातं दत्त्वेति पाठस्य कुत्राप्यदर्शनात् वरं मत्सदृशमित्यत्र च वरशब्दः कर्मसाधनः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्ममायया स्वस्याश्चर्यशक्त्या सङ्कल्परूपज्ञानाद्वा ॥३९-४८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो हे अनघे ! नित्यं भक्त्या हृदि भावितोऽनुध्यातः वां युवयोस्तपसाऽनशनादिरूपेण श्रद्धया च परितुष्टस्सन् वरदराडहं युवयोः कामदित्सया वरान् दातुमिच्छया अमुना चतुर्भुजादिमता वपुषा प्रादुरासं प्रादुर्भूतोऽस्मि प्रादुर्भूतोऽभवमित्यर्थः । ततः प्रादुर्भूतेन मया वरोऽभिमतोऽर्थः व्रियतामित्युक्ते सति वां युवाभ्यां शेपपष्टीयं मादृशः सुतः पुत्रो वृतः याचितः ॥ ३७ ॥ ३८ ॥

ननु, मुक्तिदं श्रीभगवन्तं भवन्तं साक्षात्कृत्य मुक्तिरेवाभ्यां किं न वृता ? इत्यत्राह–अजुष्टेत्यादिना । अजुष्टाः असेविताः ग्राम्यविषयाः शब्दादयो याभ्यां न विद्यते अपत्यं ययोस्तौ दम्पती जायापती युवां मम मायया विमोहितावत एव मे मत्तः अपवर्गं मुक्तिं न वव्राथे अननुभूतविषयत्वादनपत्यत्वान्मन्मायामोहितत्वाच्च नापवर्गं वव्राथ इत्यर्थः ॥ ३९ ॥

मत्सदृशं सुतमेव वरं लब्ध्वा युवां मयि गते सति प्राप्तो मनोरथो याभ्यां तौ तथाभूतौ युवां ग्राम्यान् भोगान् विषयान् अभुञ्जाथामन्वभूतम् ॥४०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वरदराट् वरदराजः कामदित्सया अभीष्टदानेच्छया ॥ ३८ ॥

अजुष्टग्राम्यविषयौ अननुभूतमैथुनादिविषयौ ॥ ३९–४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वां युवां परि प्रति तपसा मत्सन्तोषार्थं प्रयुक्तेन श्र... साधनभक्तौ या श्रद्धा तया जाता तल्लक्षणा या भक्तिस्त... नित्यं हृदि भावितः प्रेमलक्षणया प्रापितः पुत्रभावना मय... ज्ञेयं वां युवाभ्यामित्यर्थः । चतुर्थी षष्ठी तदा वामित्यादि... ३७ ॥ ३८ ॥

अजुष्टेति मम मायया मद्गतपुत्रस्नेहमय्या कृपयेत्यर्थः । मद्वि... षयस्नेहस्यापवर्गसुखातिक्रमित्वादिति भावः ॥ ३९ ॥

युवां गते प्राप्तवति मयि वरं लब्ध्वा अत उत्फुल्ल... नस्त्वेन तादृशपुत्रार्हसम्पत्तियोग्यतेच्छया च विषयोपार्जनं ज्ञेयम् ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कृते अहं प्रसन्नो जात इत्याह—तदेति । वां युवयोः परितस्तुष्टः सर्वभावेन अहमिति न मदंशः नान्यदहं तस्यां... परं वपुरिदं प्रदर्शितः आकारोऽयं वपुः पदेन पुत्रत्वं स्थापयति... अन्यथा तयोः परमस्नेहो न स्यात् अनघे ! इति सम्बोधनं... तादृशेपि रूपे इच्छाभावार्थं यदपि च बालरूपं रूपस्य वर्ति... छत्वात् स्थानात् प्रद्युम्नमूर्तेरिति लोपे त्रयं हेतुः तपः श्रद्धा... नित्यं परिचर्या च एवमपि बहिर्मुखानां न परितुष्यतीति हृदि... भावित इत्युक्तं हृदये सर्वदा मानसपूजादिना भावित... चिन्तितः ॥ ३७ ॥

तदा अहमाविर्भूतो जात इति वदन् आविर्भावस्य फलैक... नियमार्थं वरप्रार्थनामप्याह—प्रादुरासमिति । वरान् ददते ... वरदाः अन्ये ब्रह्मादयः यावत्प्रार्थितमेव हि ते प्रयच्छन्ति ते... राजा वरदराट् स तु ततो बहुगुणमलौकिकं च प्रयच्छति ... एव मादृशसुतवरणे अहमेव वारत्रयं सुतो जात इति वर... राजः आविर्भावे हेतुमाह—युवयोः कामदित्सयेति । युवयो... रिति बहुकालतपस्तप्तौ निर्व्यापतौ ताभ्यां चाल्पमेव प्रार्थि... तपश्च बहु अत एव मन्निष्ठयोस्तपः स्वाभाविकादपि तपसः अधि... फलमिति तद्दानार्थं वरदराडुक्तः साधारणेनैव व्रियतां ... इत्युक्ते तावपि मां साधारणं ज्ञात्वा बालकसौन्दर्येण ... सम्मुग्धौ त्वादृशः पुत्रो भूयादिति वृतवन्तावित्याह—मादृश इति ... वां युवाभ्यां सुतो भूयादित्यर्थात् ॥ ३८ ॥

मोक्षावरणे हेतुमाह–अजुष्टेति । ग्राम्यविषयः स्त्रीसम्भोग... लौकिकः प्रीतिः स्थितैव सेवा न वृत्तेति न जुष्टो ग्राम्य विषयो... याभ्यां वैदिकेनापि लौकिकफलसिद्धिर्भवतीति तत्सम्भावे... लौकिकसिद्धिरिति तन्निषेधार्थमाह–अनपत्यावित्ति । न विद्य... अपत्यं ययोः चकारादन्येपि भोगादयो नाऽनुभूता इति सूचि... दम्पतीपदेनोभयोः सहभावो नियत उक्तः अतोऽपि मोक्षस्यावर... रागस्यानिवृत्तत्वात् ऋणानामनिवर्तितत्वात् विरुद्धाश्रमवि... त्वाच्च मोक्षस्यावरणं सर्वतः शास्त्रार्थपरिज्ञानेऽपि यदेतत् ... तत्र हेतुः, मोहितो मम माययेति । इयं विक्षेपमाया भगवद...

अदृष्ट्वाऽन्यतमं लोके शीलौदार्य्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४१ ॥
तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४२ ॥
तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम् ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ! ॥ ४३ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कामाधिका साधारणी तु शास्त्रान्निवर्त्तत एव अपवर्गे न च तत्राप्ते जन्ममरणानां समाप्तिरपवर्गः । यदि साक्षादपवर्गमप्य-प्रार्थयित्वा भक्तिं प्रार्थयेयुस्तथाप्यपवर्गो भवेत् सापि न प्रार्थि-तेति वै निश्चयेन अपवर्गो न प्रार्थितः । म इति पाठे मत्तः मत्सम्बन्धी वा प्रमेयबलेन अपवर्गं न प्रार्थितवन्त इत्यर्थः ॥ ३९ ॥

वरदानमर्थसिद्धमिति तदनुक्त्वा भगवन्निर्गमे जाते प्रथमतो रागनिवृत्त्यर्थं ग्राम्यभोगा भुक्ता इत्याह—गते मयीति । मत्सदृशं सुतं वरत्वेन प्राप्य तन्निर्द्धारं कृत्वा ग्राम्यभोगेन तत्र विघ्नो भविष्यतीति शङ्कामकृत्वा ग्राम्यान् भोगान् अभुञ्जाथां यतो युवां प्राप्तमनोरथाविति भिन्नं वाक्यं नैश्चिन्त्ये हेतुत्वार्थ-मुक्तं पुनः युवामिति ग्रहणं संस्कारोद्बोधे सम्मत्यर्थम् ॥४०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मदीयव्रतरूपतपःश्रद्धाभक्तिपूर्वकं निरन्तरं मद्ध्यानमेव मत्परितोषे कारणमित्याह—तदेति । अमुना अनेन चतुर्भुजेन अत्र भक्त्येति श्रद्धयेति नित्यमिति भावित इति पदत्रयाधिक्येन नेयं तपोयोगाङ्गभूता भक्तिर्व्याख्येया सा तु मदात्मनोरिव्येता-वन्मात्रेणैव सिद्धेर्दतस्तत्पृथग्भूता प्रेमहेतुभूतैव ततश्च तपो-योगावेवाधिकावनयोरैश्वर्यज्ञानहेतुश्चयाविति केचिदाहुरन्ये तु नित्यसिद्धयोर्देवकीवसुदेवयोः प्रेमान्धैश्वर्यज्ञानमिश्रो नित्य एव तदंशयोः पृश्निसुतपसोर्ज्ञानयोगौ स्वंशिनोस्तयोरकिञ्चित्करा-वित्याहुः, अत्र चिन्तित इत्यनुक्त्वा भावितो भावविषयीकृत इत्य-नेन रागभक्तिरवगम्यते ॥ ३७—३८ ॥

मायया पुत्रस्नेहमय्या "वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः" इत्युपरिष्टादुक्तेः पुत्रस्नेहोऽपि मायाशब्देनोच्यते मोहितौ तदास्वादानन्देन विचित्रीकृतौ ॥ ३९ ॥

ग्राम्यान् भोगानिति तादृशपुत्रोत्पत्तीच्छयेति भावः । "व्यवायो ग्राम्यधर्मश्च" इत्यमरः । पृश्निगर्भ इति सोऽयं त्रेतायुगावतारो लक्ष्यते "विष्णुर्यज्ञः पृश्निगर्भः" इत्येकादशे तत्प्रासङ्गिकोक्तेः ॥४०॥४१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वां युवयोः अमुना वपुषा प्रादुरासमित्यग्रिमेणान्वयः ॥ ३७ ॥ वरदराट् आप्तपर्यन्तदातृत्वेन वरदेषूत्तमः वां युवाभ्याम् मादृशः मत्सदृशः मदर्थात्पुत्रो भवेति साक्षात्कृतगशक्यत्वात् अहमेव सुत-तया वृत इत्यर्थः ॥ ३८ ॥

नन्वावयोस्त्वां पुत्रत्वेन वरणे कोऽधिकारः ? इत्यत आह—अजुष्ट-ग्राम्यविषयाविति । दम्पती सहचरावपि अजुष्टग्राम्यविषयौ असे-वितलौकिकसुखौ ऐहिकसुखत्यागिनावित्यर्थः । अनपत्यौ अनु-त्पादितपुत्रौ आमुष्मिकसुखसाधनपुत्रानुत्पादनेन आमुष्मिक-सुखत्यागिनावित्यर्थः । एवंभूता अपि मुक्तिमिच्छन्ति तेभ्योऽपि श्रेष्ठत्व-माह—अपवर्गं मोक्षमपि न व्रतवन्तौ एवंभूतौ युवां परमो-त्तमाधिकारिणौ मम विषयिकया मायया यमुनापरपर्यायया हरिराधयोः सुतो भवत्विति वासनया मोहितौ सर्वोत्तरं पुत्रं कर्तुं प्रवृत्तावित्यर्थः । अहो युवयोर्मयि स्नेहातिशयः एत-देव वारंवारं सुतभावे हेतुः ॥ ३९ ॥

युवयोर्वाञ्छितं स्वीकृत्य मयि गते ॥ ४०—४१ ॥

---

भाषा टीका ।

ऐसे तप श्रद्धा और भक्ति सों नित्य हृदय में तुम दोनों जब हमारी भावना करत रहे तब मैं तुमारे ऊपर प्रसन्न भयो । और हे अनघे ! शुद्धान्तःकरण वारी ! तब वरदराज ( वर देन वारों को राजा ) मैं तुमारी कामनान को पूर्ण करबे के ताईं याई शरीर से प्रकट भयो और मैंने जब तुम सों कही कि वर मागों तब तुम दोनों ने येही वर मागो कि तुमारे सदृश हमारे पुत्र होवै ॥ ३७ ॥ ३८ ॥

वा समय में ग्राम्य (लौकिक) विषयन को तुमने सेवन नहीं कियो हो, और विना सन्तान के तुम दोनों पति पत्नी वा समय रहे, तासूं मेरी माया सों मोहित होकरकें तुमन ने मोसूं मुक्ति नहीं मांगी ॥ ३९ ॥

मेरे गये पीछे मेरे सदृश पुत्र रूप वर पायकें, अपने मनोरथ को प्राप्त होकें, तुम दोनों ग्राम्य ( लौकिक ) भोगन को भोगत भये ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अदित्यां कश्यपाद्वामन आसेति यत्तदपि तद्रूपयोर्युवयो-रहमेव पुनरासमित्यर्थः ॥ ४२—४३ ॥

**एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे।**
**नान्यथा [1]मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥ ४४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्राक्प्रथमं तावदेतद्रूपं मे जन्मेति स्मरणाय ज्ञानाय दर्शितं मद्भवं मद्विषयम् अनन्तरं त्वदिच्छया बालोऽपि भविष्यामीति भावः ॥४४॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहं तु भवद्भ्यां तदुक्तिचातुर्याच्छलित इव पश्चाद्विचार्य भवन्मनोगतमेव कृतवानित्याह—अदृष्ट्वेति। शीलं सच्चरित्रम् औदार्यं महत्त्वं गुणास्तयोः कारणं कारुण्यादिः तैरात्मनैव समं तुल्यं स्मृतः ख्यातः श्रुत इति पाठः क्वचित् सोऽयमेव त्रेतायुगाधिष्ठाता बभूवेति लक्ष्यते "विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः" इत्यादिकं श्लोकावशे तत्प्रसङ्गतः श्रूयते ॥ ४१ ॥

तयोरिति तैर्व्याख्यातं तत्र तदपीत्यादौ तदपि ममैव पुनरस्तित्वमित्यर्थः। वामन आसेति यदिति उपेन्द्र इति विख्यातो "वामनत्वाच्च वामनः" इति विख्यातो यः स आसेति यदित्यर्थः असेर्लिटि रूपं भ्वादेशाभाव आर्षः। यद्वा, तथा तथा विख्यातः सन् यः कश्यपाददित्यामास बभूव सोऽहमेव तद्रूपयोर्युवयोरास बभूवेति ॥ ४२ ॥

येन पुरा वराय प्रादुरासं तेनैवेति अत एव पृश्निगर्भादित्वे तेनैव वपुषेत्यनुक्तत्वात् न तु तदानीमधुनेव स्वयमेव किन्त्वंशेनैवेति "एते चांशकलाः पुंसः" इत्याद्युक्तेः "पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः" इत्यत्राप्येतदेव गीर्देव्या सूचितमस्ति अत एव वै निश्चये अथ कार्त्स्न्ये तृतीय एव भवे तत्सदृशसुतप्राप्तिलक्षणवरस्य परमपूर्णत्वापेक्षया च सत्यं मे व्याहृतमित्युक्तम् ॥ ४३ ॥

भवत्यस्मिन्निति भवो विषयः अहं विषयो यस्य तज्ज्ञानं निर्णयो मनुष्यरूपेण न स्यात् जन्यत इति चित्सुखपाठः यद्वा यथोक्तं रूपं चेदमित्यादि तत्राह एतच्चतुर्भुजाकारं यद्रूपं दर्शितं तत्तु वरदानमारभ्य प्राचीनतदाकारप्रादुर्भावत्रयस्मरणायैव न तु प्राधान्यापेक्षया नराकृतिपरब्रह्मत्वेनैव स्वयं भगवतो मम तत्र तत्र प्रतिपादनादित्यर्थः। किञ्च अन्यथा प्रकारान्तरेण मम भवो जन्म तत्प्रतीतिर्यत्र तज्ज्ञानं न जायते केनात्र प्रकारान्तरं तदेवाह—मर्त्यस्य द्विभुजत्वादिना प्राकृतमनुष्यस्येव लिङ्गं चिह्नं यत्र तेन गूढेन नराकृतिपरब्रह्मरूपेणेत्यर्थः। तस्माच्चतुर्भुजद्विभुजतया क्रीडतो मम मुख्योऽपि तदाकारः प्रथमं न दर्शित इति भावः। मुख्यत्वञ्चास्य दर्शितम् "एकोऽसि प्रथमम्" इत्यादि "यदमितं ब्रह्माद्वयं शिष्यते" इत्यन्तब्रह्मवाक्ये न चान्तर्न बहिर्यस्येत्यादि श्रीशुकवाक्ये "गोप्यस्तपः किमचरन्" इत्यादिं श्रीशुकदेवेनापि स्वयमनुमोदमानेनानूदितं मथुरापुरस्त्रीवाक्ये "यन्मर्त्यलीलौपयिकम्" इत्यादिश्रीमदुद्धववाक्ये च ॥ ४४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदाऽहं रूपादिभिर्गुणैः समं मत्सदृशमन्यतममदृष्ट्वा तत्समस्याभ्यधिकस्य दृश्यते "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इत्युक्तरीत्या मत्सदृशपुरुषान्तराभावं दृष्ट्वाऽहमेव वां युवयोः सकाशादभवं तदाऽहं पृश्निगर्भ इति स्मृतः पृश्नेस्तव गर्भभूतत्वात्तथा प्रसिद्धः ॥ ४१ ॥

तयोः पृश्निसुतपसोरेवानन्तरजन्मनि कश्यपाऽदितिरूपेण जातयोर्वां युवयोरथ कश्यपाददित्यामहमासं पुत्रोऽभूवम् उपेन्द्र इति विख्यातः प्रसिद्धः इन्द्रानुजत्वादिति भावः। तत् वामनत्वाद्ध्रस्वमूर्तित्वाद्वामनश्चेति विख्यातोऽभूवम् ॥ ४२ ॥

एवं जन्मद्वयमुक्तमथ तृतीयं जन्मेदमेवेत्याह—अस्मिन् तृतीये भवे जन्मनि तयोरेवादितिकश्यपयोरेवैतद्रूपेण जातयोर्युवयोः तेनैव चतुर्भुजादिमता वपुषा भूयोऽहं जातः इति सति मे मया व्याहृतं भाषितं सत्यमेव हि ॥ ४३ ॥

वां युवाभ्यामेतच्चतुर्भुजादिमद्रूपं दर्शितं किमर्थं ते तव प्राग्जन्मस्मरणाय पूर्वमप्यावयोरेष एवोत्पन्न इति ज्ञापनार्थम् अन्यथा प्रदर्शितरूपदर्शनाभावे च मद्भवज्ञानं मदवतारज्ञानं मर्त्यानां युष्माकं न जायते मज्जन्ममिति पाठे मद्विषयकं मदवतारविषयकमिति यावत् ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शीलं वृत्तम् औदार्यं माहात्म्यम् ॥ ४१ ॥
वामनत्वात् सुन्दरत्वात् ह्रस्वत्वाद्वा ॥ ४२ ॥
तृतीये भवे जन्मनि ॥ ४३ ॥
मद्भवज्ञानं मज्जन्मविषयज्ञानं मर्त्यलिङ्गेन मनुष्यशरीरेण ॥४४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अदृष्ट्वेति शीलं सच्चरित्रम् औदार्यं महत्त्वं गुणाः कारुण्यादयः तयोः कारणानि ॥ ४१ ॥

या तयाऽतितुरत्यया अभवन् ता द्वारोऽपि श्रीवसुदेव भागवते सन्ति विवृता इति, द्वयोरन्वयः तदंशस्येव तत् साम्यात् पृश्निगर्भादिरूपद्वयेन पूर्वमाविर्भावः तयाप्यपरितोषात् तृतीये स्वयमेव स्वयं तावदत्रैव तेनैव वपुषेत्युक्त्या गम्यते ॥ ४२—४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यद्यपि युवाभ्यां भ्रमादेव याचितो वरस्तथाप्यविद्यमानं न देयं कृत्रिमं तु न सम्भवति सर्वभावेन स्वस्य द्वैरूप्ये श्रुतिविरोधो मर्यादाभङ्गश्च स्यात् अदानेऽपि तथा सादृश्यस्य भेदसहिष्णुत्वेऽपि तयोराकार एव तात्पर्यमिति तात्पर्यविरो-

( १ ) मद्भवज्ञानम् इति वीर०।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धानात् तात्पर्यज्ञापकं वचनमिति जीववाक्यत्वाद्यथाश्रुतं वचनं वाश्रित्वा अहमेव पुत्रो जात इत्याह—अदृष्ट्वेति । यद्यपि मत्तोऽन्ये केचन सम्भवन्ति मायया सृष्टास्तेषामपि मत्सत्तयैव सत्तेति सर्वात्मनान्यतमत्वं नास्ति असतः सत्ता नाङ्गीक्रियत इति लोके अदृष्ट्वेत्युक्तं यद्यपि कृत्रिममपि रूपसाम्यं शक्यते कर्तुं तथापि शीलौदार्यगुणाः आत्मान्तःकरणनिष्ठाः अलौकिका नोत्पाद-नीया इति विशिष्टस्य मिलितस्य वा अदर्शनमेव अतः अहं सुतो वामभवम् उभयोरपि क्रमेण प्रादुर्भूत इत्यर्थः । "स एकधा भवति द्विधा भवति" इत्यादिश्रुत्या तथा तस्य भवने न कोऽपि विरोधः जन्मैव मुख्यमिति पृश्निगर्भ इति न तत्रास्मैव लोक प्रसिद्धिरुक्ता स्मृत इति प्रमाणम् ॥ ४१ ॥

अपवर्गस्याप्रार्थितत्वात्पुनर्जन्मान्तरं जातं तस्मिन्नपि जन्मनि तयो स्तुल्यत्वात् पुनरहं पुत्रो जात इत्याह–तयोर्वामिति । तयोरेव युवयोः पुनरेवाहं स्वसदृशमदृष्ट्वा पुनरेवाहं जातः तयोर्जन्मा न्तरे अदितिकश्यपत्वं तदाह—अदित्यामास कश्यपादिति । यद्यप्यत्र अदितिगर्भ इति वक्तव्यं तथापि उपेन्द्र इत्येवं लोके विख्यातः नामान्तरप्रसिद्धौ हेतुमाह—वामनत्वादिति । द्वितीये जन्मनि नामद्वयम् उपेन्द्रो वामन इति ॥ ४२ ॥

पुनस्तृतीयं जन्म तयोर्जातं तत्राप्यहमेव पुत्रो जात इत्याह—तृतीये ऽस्मिन्निति । अयं परिदृश्यमानो भवस्तृतीयो भवति अत्रापि नामद्वयं मुख्यं तृतीयस्थाने बहूनि देवकी-नन्दन इति च मुख्यं तदग्रे वक्ष्यामः पूर्वयोर्भवयोरूपभेदोऽस्ति तृतीये तु जन्मनि तेनैव वपुषा तयोरेव भूयो जातः । एवं वारत्रयभवने हेतुमाह—सत्यं मे व्याहृतमिति । यदि कस्मिन्नपि जन्मनि वरानन्तरभावे भगवान् पुत्रो न भवेत् तदा वाक्यम् असत्यं स्यात् पूर्वदेहस्य त्यक्तत्वात् तत्पुत्रो न पुत्रो भवति व्यवहाराभावात् प्रमाणाभावाच्च अतः पुनर्जन्मान्तरे पुत्रत्वेन भाव्यम् अग्रे तु जन्माभावात् पुत्रत्वाभावः सतीति सम्बोधनं सम्माननार्थं सैव पतिव्रता भवति या कल्पादौ यं पतिं प्राप्नोति कल्पान्तपर्यन्तं सर्वजन्मसु तमेव चेत्प्राप्नोति तस्याश्च पुनर्धर्माभिधानं च शास्त्रे निरूपितं या प्रथमं नाम्रियते मृते म्रियेत तादृशीत्वमिति ज्ञापयति मोक्षार्थं व्यभि चारिण्याः स्त्रियास्तु न मुक्तिः अतः सर्वदोषपरिहारार्थं सती ति सम्बोधनमन्ते निरूपितम् ॥ ४३ ॥

एवं पुत्रत्वे हेतुमुक्त्वा तादृग्रूपेणाविर्भावे हेतुमाह—एत-दिति । वां युवयोरर्थे एतत्पूर्वानुभूतं रूपं दर्शितं सम्बन्धि दर्शनेन सम्बन्धिनः संस्कार उद्बुद्धो भवति एतद्विषयको लुप्तोपि संस्कारश्चोद्बुद्धो भवति सांनिध्यासर्वज्ञतायां तु वैराग्यं स्यात् तदा अर्वाचीनभक्तिरसो नानुभूयेत रूपेण तदुद्-बोधनं तु तत्कालमात्रस्यैव स्मरणं वाक्यात् ज्ञानं तु प्रत्यक्षात् दुर्बलमिति न काप्यनुपपत्तिः प्राग्जन्मनोः प्रथमजन्मन एव वा स्मरणाय एतावता क्लेशनायं भगवान् पुत्रो जात इति केवलवाक्ये तु भगवतो माहात्म्यमुच्यमानं शास्त्रार्थपरं स्यात् तदाह—अन्यथा रूपप्रदर्शनव्यतिरेके केवलमुच्यमाने मर्त्य-लिङ्गे रूपे मानुषशरीरे मद्भवं ज्ञानं न जायते साक्षात् भगवानयमिति प्रदर्शिते तु रूपे उच्यमानं ज्ञानमनुभवारूढं भवति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अदित्यां कश्यपाद्वामन आसेति यत्तदपि तद्रूपयोर्युवयोरह-मेव पुनरासमित्यर्थः ॥ ४२ ॥

भवे जन्मनि तेनैव चतुर्भुजेन अहं जात इति प्रथमे जन्मन्यहं पृश्निगर्भः द्वितीयेऽहं वामनः तृतीयेऽस्मिन्नहमेवेत्यस्म-च्छब्दमात्रवाच्यत्वेन ममैव पूर्णत्वं तयोः मदंशत्वमिति बोधितम् एवं त्वमेव पूर्वसर्गेऽभूः पृश्निरिति न तु पृश्निरेव त्वमित्युक्त्या युवामिति पुत्रभावेन नराकृति परब्रह्म भावेन वा कृतस्नेहौ सकृदेव वा चिन्तयन्तौ परां प्रकटलीलात् उत्तरामप्रकट-लीलां पृश्न्यादीनामंशत्वं देवकीवसुदेवयोरंशित्वं च सति हे कोविदे "सन् सुधीः कोविदो बुधः" इत्यमरः ॥ ४३ ॥

मयि भवतीति मद्भवं मद्विषयं मर्त्यलिङ्गेन मयेत्यदं तु स्वयं परिपूर्णस्वरूपो मर्त्यलिङ्गो द्विभुज एव नराकृतिपरब्रह्मत्वा-दिति भावः ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तयोः पृश्निसुतपसोः अदितिकश्यपरूपयोः युवयोः अदित्यां-कश्यपात्पुनरहमासमिति शेषः स च ममावतारः उपेन्द्र इति विख्यातः वामनत्वाद्धस्वत्वाच्च वामनः आसेति योजना ॥ ४२ ॥

तयोः पृश्निसुतपसोः वां देवकीवसुदेवरूपयोः युवयोः ॥ ४३ ॥

एतद्रूपं वां युवयोरर्थे प्राग्जन्मस्मरणाय मे मया दर्शि-तम् प्रथमजन्मनि अयमेवापत्यतया वृतस्तथा प्राप्तश्च स एवा धुना प्राप्तः इति युवयोः स्मृत्युद्बोधनाय दर्शितमित्यर्थः । अन्यथा प्रभुत्वख्यापनाय न दर्शितम् येषां पुत्रतया भक्तिरसास्वाद-नाय प्रवृत्तोऽस्मि तेषु किंप्रभुत्वख्यापनेनेति भावः । नन्वयमावयोः पूर्वजन्मनि पुत्रोऽभूदिति प्राग्जन्मस्मृतिरपि भवद्दर्शने जातापि न जाता किन्तु "त्वमेव पूर्वसर्गे भूः" इत्याद्युपदेशेनोत्पादितात्राह, मर्त्यलिङ्गे मनुष्यदेहे उपलक्षणमेतद्देवादीनाम् मनुष्यादिदेहेषु मद्भवं मद्विषयकं ज्ञानं न जायते उपदेशं विनेति शेषः ॥ ४४ ॥

---

### भाषा टीका

मैंने भी शील औदार्य आदि गुणन में मेरे बरोबर जगत् में और कोई को नहीं देखकें वा समय पै मैं ही तुमारो पुत्र भयो तब मेरो नाम पृश्नि गर्भ ऐसो विख्यात भयो ॥ ४१ ॥

फिर दूसरे जन्म में तुम दोनों अदिति और कश्यप भये, तब वा समय हम अदिति में कश्यप सों उपेन्द्रनाम सों विख्यात होकें उत्पन्न भये, और बहुत छोटे होवे तें वामन कहाये ॥ ॥ ४२ ॥

ता पीछे अब या तुमारे तीसरे जन्म में फिर भी तुम दोनोंहसों उत्पन्न भयो हूं काहे सों, कि—हे सति ! मैंने तुमको प्रथम जन्म में सत्य वर दियो तासों तीनवार सत्य कह्यो ॥ ४३ ॥

युवां मां पुत्रभावेन ब्रह्मभावेन चाऽसकृत् ।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५॥
(यदि कंसाद्बिभेषि त्वं तर्हि मां गोकुलं नय ।
मन्मायामानयाशु त्वं यशोदागर्भसम्भवाम् ॥)
श्रीशुक उवाच ।
इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया ।
पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४६ ॥

भाषा टीका ।

ये जो तुमकों मैने रूप दिखायौ सो तौ पहिले जन्म के स्मरण के अर्थ दिखायौ, अन्य प्रकार सों अर्थात् मनुष्य रूप लेकें प्रकट होवे सों मेरे जन्म को ज्ञान नहीं होवे है तासों मैं या रूप सो प्रकट्यो ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, त्वयि प्रसन्नेऽपि कथमावयोः पुनः पुनर्जन्मेत्यत:परं न भविष्यतीत्याह-युवामिति ॥ ४५—४६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

युवामिति । वाशब्द उपमार्थे विकल्पे वा स्वरूपेण गुणेन च वृहत्तमत्वान्मुख्यत्वेन भगवानेवात्र ब्रह्म तादृशभावेन कृतस्नेहौ सन्तौ मुहुश्चिन्तयन्तौ भावद्वयस्य तुल्यत्वं च विषयमाहात्म्यात् परां मद्गतिं परमवैकुण्ठं तद्गमनं च कश्यपादितिभ्यामेकीभूयाधिकारान्ते ज्ञेयम् अन्यत्तैः तत्रावतारिकायाम् इति कथमित्यन्वयः । अत इत्यादिस्तु सिद्धान्तः अथवा तदेवमपि युवां साधकाविति न मन्तव्यं न च पुनर्मत्प्राप्तौ शङ्का कार्या यतः "एते हि यादवाः सर्वे मद्गणा एव भाविनि" इत्यादि पाद्मकार्त्तिकमहात्म्यवचनात् "यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः । तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ॥ पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परं । न कर्मबन्धनं जन्म वैष्णवानां च विद्यते" इति पाद्मोत्तरखण्डवचनात् मदीयतत्तन्महामन्त्रमज्जन्माष्टमीपूजादिपटलानुसाराच्च युवां नित्यमेवैतादृशौ तथाऽपि ममेव युवयोरपि मत् प्रेम्णैव मत्प्रेमविशेषममाराधनप्रचारार्थं तत्र तत्र स्वांशेन सम्प्रति स्वयमेव चावतरणं लीलामात्रम् एतदेवोक्तं "त्वमेव पूर्वसर्गेऽभूः पृश्निः" इत्यादि तत एवानन्तरमपि मत्प्राप्तौ न साधनवैशिष्ट्यापेक्षत्वं किन्तु तदपि पूर्ववदेव मत्प्राप्तिस्तु स्वत एवेत्याह, युवामिति । पुत्रभावेनेति, भाववैशिष्ट्येन तथा मदाविर्भाववैशिष्ट्येन चेत्यर्थः । ब्रह्मभावेनेति भावसामान्येन भगवन्मन्त्रनयाविर्भाव सामान्येन चेत्यर्थः । येत्यनुकल्पे "पितरौ नान्वविन्देताम्" इत्यादिना "पितरावुपलब्धार्थौ" इत्यादिना "अहो भाग्यमहोभाग्यम्" इत्यादि रीत्या "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादिरीत्या च तारतम्य पूर्वेण मुख्येनेतरेण गौणेन वा चिन्तयन्तौ तत्रापि सकृदपि चिन्तयन्तौ वा यद्यवगपि सम्भवति तदापीत्यर्थः । पराम् अस्याः प्रप प्रकटलीलात उत्तरां तदप्रकटलीलारूपां मद्गतिं यास्येथ एव ना निकसाधनयोग्यतायोग्यताभ्यां तत्रोपकार्यतापकार्यते इति भा तत्र हेतुः, कृतस्नेहौ कृतः स्वभावत एव सिद्धः स्नेहः पुत्रभाव प्रेमा ययोस्तौ स्वभावसिद्धत्वमत्र "अयमात्माऽपहतपाप्मा" वत् यद्वा कृतस्नेहौ चिन्तयन्तौ सकृदेव वा चिन्तयन्तौ अन्य समानम् ॥ ४५ ॥

ततः किं जातमित्यपेक्षायामाह—इतीति इत्युक्त्वा हरिस्तच्चतुर्भु रूपमपहर्त्तुं गोपयितुं प्रवृत्तत्वेन च विख्यापिततन्नामाऽसौ तूष्णी मासीत् ततश्च पित्रोः सम्पश्यतोरेव तयन्यत्र दत्तदृष्ट्योः सतो वान् स्वस्वरूपभूत षाड्गुण्यवानसावात्ममायया "मायास्याच्छाम्ब बुद्ध्योः" इति त्रिकाण्डशेषात् "माया तु वयुनं ज्ञानम्" इति निघण्टु स्वरूपभूतज्ञानशक्त्या वुद्धिसौष्ठवविशेषमयशक्त्येति यावत् "आत्ममाया तदिच्छास्यात् गुणमाया जडात्मिका" इति महासंहि वचनादात्मेच्छया यद्वा "माया दम्भे कृपायां च" इति विश्वको दात्मकृपया शिशुराविष्कृतशैशवो बभूव तत्र विशेषज्ञानार्थमा प्राकृत इति । गौण्या वृत्त्या प्राकृत इवेत्यर्थः । यद्वा न चागन्तु कारेण तादृग्बभूवेत्याह-प्राकृत इति "प्रकृतिश्च स्वरूपं च स्वभावश्च इति पर्य्यायात् "प्रकृतिसिद्धमिदं हि महात्मनाम्" इति प्रयोगा स्वभावसिद्ध एवेत्यर्थः । अर्थान्तरं हि "न चान्तर्न बहिर्यस्य" इत्या "ववन्ध प्राकृतं यथा" इति पूरिते वाक्ये दार्ष्टान्तिकदृष्टान्ताभ्यां नि नीयं स्वाभीष्टलीलाक्रमेण प्रकटयतस्तस्य सर्वदा सर्वशक्तिवि त्वेन तत्तदुपासकाभीष्टलीलादर्शनाय युगपद्योग्यत्वात् सर्व तत्र स्वभावसिद्धमिति भावः । वक्ष्यते च गर्गेण "बहूनि स रूपाणि नामानि च सुतस्य ते" इति ॥ ४६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, एवमपि कथमावयोर्मुक्तिः स्यादित्यत्राह-युवामिति असकृत्पुत्रभावेनापि सकृदपि वा ब्रह्मभावेन परब्रह्मत्वेन मां स्म

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

युवां कृतो मयि निबद्धः स्नेहो ययोस्तौ परामुत्कृष्टां मद्गतिं यास्याथे ॥ ४५ ॥

इतीत्थमुक्त्वा हरिस्तूष्णीं बभूव ततः पित्रोर्देवकीवसुदेवयोः संपश्यतोः सतोरेव सद्यः तदैव स्वाधीनमायया भगवान् षाड्गुण्यपूर्णः प्राकृतः मानुषशिशुः बभूव बालरूपो बभूवेत्यर्थः ॥ ४६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यास्यथे गमिष्यथः ॥ ४५ ॥

प्राकृतवत् न तु प्राकृतः ॥ ४६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यास्यथः ॥ ४५—५३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अधुना तु अप्रार्थिते ऽप्यपवर्गे मुक्तिर्भविष्यतीतित्याह—युवामिति । प्रमेयबलस्य प्रकटीकृतत्वात् शास्त्रस्य गौणत्वात् अविहितस्नेहेन पुत्रभावेन विहितस्नेहेन ब्रह्मभावेन वा विषयस्य तुल्यत्वात् प्रकारस्याप्रयोजकत्वाच्च यथाकथञ्चिन्मयि कृतस्नेहौ परां मद्गतिं व्यापिवैकुण्ठाख्यां यास्येथे माहात्म्यज्ञानपूर्वकसुदृढसर्वतोधिकस्नेहस्य तुल्यत्वात् अत एव भगवान् गोपिकादीनामपि माहात्म्यज्ञानमुत्पादयिष्यति अन्यथा बोधांशः अधिकः स्यात् भक्तानां प्रपञ्चाभावस्य निरोधत्वात् अत एव पूर्वस्कन्धे उत्पत्तिनिरूपणेन स्वरूपत एव भक्ताः निरूपिताः प्रेमज्ञानं निरोधश्च यथैव भवति तदत्रैव वक्ष्यते आर्थिकमत्र नोच्यत इति मां गोकुले नय तत्र स्थापयित्वा तत्रत्यां कन्यामत्र आनयेति मुखतो नोक्तं एतदुक्त्वैव पश्चात्तूष्णीं जात इति ज्ञातव्यम् ॥ ४५ ॥

एभिर्वचनैर्भगवता वसुदेवदेवक्योः स्वावतारात् पूर्वं तदनन्तरं च दुःखप्राप्तौ हेतुरपि निरूपित इति ज्ञेयम् । तथा हि मत्तः कामानभीप्सन्ताविति वाक्यात्तदर्थमेव भगवदाराधनं पूर्वं कृतं न तु भगवदर्थं तस्य चानिष्फलत्वाद्धर्माविर्भावे सौन्दर्यं दृष्ट्वा तादृशः सुतो वृतो न तु स्नेहेनात्र्यप्रभुप्राकट्यं वृतम् अत एव वरं मत्सदृशमित्यादिना स्वप्राप्त्यनन्तरमपि ग्राम्यभोगभोजनमेवोक्तम् एवं सति स्वसाम्यमन्यत्रादृष्ट्वा स्वस्यैव तथाविर्भावने प्रभोर्निर्बन्धोऽभूत् मुक्तानामपि दुरापस्य स्वरूपस्यावपार्थं प्रकटीकरणमापतितं यतः अदृष्ट्वा ऽन्यतममिति वाक्येनायमेवार्थो ज्ञापितः प्रभुणा अतोऽधुना प्रभुप्राकट्यनिमित्तकः कंसकृतो निर्बन्धोभूत् पुत्रवधे निर्बन्धात् कीर्तिमदादिपुत्रनाशोपि साम्ये निर्बन्धात् गुणैस्तत्सम्भवात् गुणसमसंख्यानां तेषां तदा मर्यादार्थं तद्दण्ड इवायं प्रभुणा सम्पादितः अकृतकर्मत्वाद्भगवत एतयोः स क्लेशः स्नेहातिशयहेतुरभूत् क्लेशेन प्राप्तेर्थे तस्यावश्यकत्वात्—

आविर्भावे पुत्रतया साधनं तु तपोऽभवत् ।
अग्रे लीलारसप्राप्तौ साधनं मृग्यमेव हि ॥
भक्तिमार्गीयमित्यात्मवियोगमकरोद्धरिः ।
तदा तु स्वत एवासीत् भगवद्भावसन्ततिः ॥
एतावन्तिदिनान्यासन्नेवं कुर्वन् भविष्यति ।
एतावन्मासिकश्चासीदेवमेवं करिष्यति ॥
एतावद्वार्षिकश्चासीत्तेन चैवंविधाः शुभाः ।
लीलाः कुर्वन् साग्रजः श्रीप्रभुस्तत्र भविष्यति ॥
कुशलवास्ते साग्रजो नु कदा द्रक्ष्यामि तादृशम् ।
एवंविधानन्तभावैरत्यार्त्यां दर्शने तयोः ॥
मिथस्तथालापतश्च सर्वथेन्द्रियवृत्तयः ।
सर्वा हरिपरा आसन् स एव सततं हृदि ॥
वियोगतापतश्चैवऽभूत्तेनासीज्जीवनं तयोः ।
तेनैकादश वर्षाणि तथा कुर्वन् हरिर्विभौ ॥
युवां मामिति वाक्येन चैवमेव वरं ददौ ।
अन्यथैतादृशो भावो न भवत्येव कुत्रचित् ॥
अतो माहात्म्यधीयुक्तः स्नेहोऽभवादिति प्रभुम् ।
चिरात्प्राप्यापि पितरौ सञ्जाते न शङ्कितौ ॥

एवमुक्त्वा रूपान्तरस्वीकरणं कृतवानित्याह—इत्युक्त्वासीदिति । तूष्णींभावः अनुक्तसिद्धोऽपि रूपवत् ज्ञानस्यापि तिरोभावप्रतिपादनार्थः यथा रूपं प्राकृतं स्वीकृतवान् एवं प्राकृतमेव ज्ञानं स्वीकृतवानिति तथा सति रूपान्तरस्वीकरणं सम्यगुपपद्येत नन्वेवं स्वविरुद्धधर्मं कथं स्वीकृतवानित्याह—हरिरिति । यतः स सर्वदुःखहर्ता स्वरूपमप्यन्यथाकरिष्यतीत्याशंक्याह—भगवानिति । रूपज्ञानकार्ययोरपि तदाप्राकट्यं न स्यादित्याशंक्याह—आत्ममाययेति । स्वस्यैव सर्वभवनसामर्थ्येन तथा कृतवान् ततः स्वेच्छया यदा तत्कार्यमायास्यति गीतोपदेशेन भीष्ममुक्तौ च तथैव तदा प्रकटीभविष्यति अन्यदा तु मातृप्रार्थनया रूपान्तरमेव प्रदर्शयतीति भावः यदैव तूष्णीं स्थितस्तदैव सद्यः तत्क्षणमेव प्राकृतः शिशुर्बभूव अच्छिन्ननालो वस्थिसहितः नटानां रूपान्तरस्वीकारे विलक्षणं परोच्चतापेक्ष्यते अत्र तु तन्नापेक्ष्यत इत्याह—पित्रोः संपश्यतोरिति । लौकिकज्ञाननैपुण्यं मातुः परमार्थज्ञाननैपुण्यं पितुः उभयमपि विद्यमानमेव न भगवत्सामर्थ्यस्य प्रतिबन्धकम् ॥ ४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं स्वपितृत्वात् स्वमन्त्रोपासनापटलोक्तवसुदेवादिध्यानपूजादीनां सार्वकालिकत्वप्रदर्शनाद्प्यन्यथानुपपत्तिसिद्धं तयोर्नित्यसिद्धत्वं सङ्गोप्य प्रेमवर्द्धनार्थं साधकत्वमेव ख्यापयन् सिद्धिं प्रतिश्रुत्य तावानन्दयति—युवामिति । वस्तुतस्त्वयमर्थः मम प्रथमागतिरद्यतनी गोकुलं प्रतियास्येकादशे वर्षे मथुरां प्रति पुनर्भाविनी तां परां मद्गतिं युवां यास्येथे यास्यथः प्राप्स्यथ इत्यर्थः साम्प्रतं तु मया सह युवयोर्विच्छेद एव भवतीत्यर्थः ॥ ४५ ॥

आत्ममायया "आत्ममायातदिच्छा स्याद्गुणमायाजडात्मिका"

ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा या योगमायाऽजनि नन्दजायया ॥ ४७ ॥
तया हृतप्रत्ययसर्ववृत्तिषु द्वास्थेषु पौरेष्वपि शायितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकील(१)शृङ्खलैः ॥ ४८ ॥
ताः कृष्णवाहे वसुदेव आगते स्वयं(२) व्यवर्यन्त यथा तमो(३) रवेः ।
ववर्ष पर्जन्य उपांशु गर्जितः शेषोऽन्वगाद्वारि निवारयन् फणैः ॥ ४९ ॥
(४)मघोनि वर्षत्यसकृद्यमानुजा गंभीरतोयौघजवोर्मिफेनिला ।
भयानकावर्त्तशताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ५० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इति महासंहितावचनादात्मेच्छया प्राकृतः प्रकृतिश्च स्वरूपं च स्वभावश्चेति पर्य्यायात् प्रकृतिसिद्धमिदं हि महात्मनामिति शिष्टप्रयोगाच्च स्वभावसिद्धः इत्येवार्थः । अर्थान्तरस्य "न चान्तर्न बहिर्यस्य" इत्यारभ्य "ययन्ध प्राकृतं यथा" इति अग्रिमवाक्ये दार्ष्टान्तिकदृष्टान्ताभ्यां निरसनीयत्वात् ॥ ४६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परां मद्गतिं तमसः परां मद्विभूतिं यास्यथे ॥ ४५ ॥

आत्ममायया स्वेच्छया शिशुः द्विभुजो बाल बभूव कथंभूतः प्राकृतः स्वाभाविकः ॥ ४६ ॥

### भाषा टीका ।

तुम दोनों मोकूं अनेकनवार पुत्र भावना सों और ब्रह्म भावनासों चिन्तमन करते भये मोंमें स्नेह करकें मेरे परम गति कों प्राप्त होओगे ॥ ४५ ॥

और जो तुम कंस सों डरपते होओ तौ मोकूं गोकुल कों लेजाओ और गोकुल में यशोदा के गर्भ सों उत्पन्न होने वारी मेरी माया को शीघ्र ही ले आओ ॥ ० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—भगवान् श्रीहरि ऐसें कह करकें चुपके होके अपनी इच्छा सों माता पिता के देखते तत्काल में प्राकृत बालक से होगये ॥ ४६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यदि कंसाद्बिभेषि तर्हि मां गोकुलं नय यशोदायाश्च तां कन्यां मन्मायामानयेति प्रथममेव भगवता प्रचोदितो वसुदेवो यदा गन्तुमैच्छत्तदैवाजाऽपि या योगमाया सा नन्दजायया निमित्तमात्रभूतया अजनि जाता ॥ ४७ ॥

हृताः प्रत्ययार्थाः सर्वा वृत्तयो येषाम् अथवा हृताः प्रत्यया अन्याश्च सर्वा वृत्तयो येषां जाग्रतामपि तथाभूतेषु द्वारपा[...] सत्सु बृहत्सु कपाटेषु लोहकीलकयुक्तशृङ्खलैर्बृहद्भिः कपा[...] दिभिर्दुरत्यया इति वा ॥ ४८ ॥

स्वयमेव व्यवर्यन्त विवृता इत्यर्थः । व्यव्रियन्तेति वक्त[...] गुणश्छान्दसः रवेर्निमित्तात् ॥ ४९ ॥

गम्भीरो यस्तोयौघस्तस्य जवेन ये ऊर्मयस्तैः फेनिला [...] व्याप्ता भयानकैरावर्त्तशतैर्व्याप्ताऽपि श्रियःपतेः सीतापतेः ॥[...]

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवता प्रचोदित इत्यत्र व्यक्तोक्तिरेव तस्य श्रीहरि[...] "वसुदेववचः श्रुत्वा रूपं संहरदच्युतः । अनुज्ञाप्य पितृत्वेन न[...] गोपगृहं नय" इति अस्यार्थः संहरत् समहरत् । किं कृत्वा? नन्दगो[...] गृहं नयेति पितृत्वेन पितृस्नेहेनानुज्ञायेत्यर्थः । सम्यगा[...] कोमलवस्त्रास्तृतपेटिकायां सुखं निधाय तां शिरस्याधाय कि[...] सावधानं शनैः शनैः कराभ्याम् उत्थाप्य निजाङ्के निधाय बाहु[...] माश्लिष्यन्निव गृहीत्वा सः अनिर्वचनीयभाग्यवान् त[...] पादनिगडः स्वयमेव भ्रष्ट इति ज्ञेयं तर्हीत्यत्र विशेषः श्रीह[...] वंशे "नवम्यामेव सञ्जाता कृष्णपक्षस्य वै तिथौ" इति ॥ ४७ ॥

तयेति युग्मकं प्रत्ययः ज्ञानं द्वास्थाः द्वारस्थिता रक्षि[...] द्वारपालाश्च तेषु तथा च श्रीविष्णुपुराणे "मोहिताश्चाभवं[...] रक्षिणो योगनिद्रया । मथुराद्वारपालाश्च व्रजत्यानकदुन्दुभौ" [...] मोहनादिकं च मायया एव योग्यमिति तथा । तदुक्तं प्रका[...] तु श्रीभगवत एवेति तथैव तदाह—द्वारश्चेति । अथानन्तरं [...] एवेत्यर्थः । याः पिहिता मुद्रितास्ता द्वारोऽपि द्वास्थादीनां [...] प्रत्ययादित्वं स्ववशीकृत्य श्रीवसुदेव आगते सति स्वयमेव वि[...] इत्यर्थः । ताश्च कथमप्युद्घाटयितुं न शक्यन्त इत्याह—बृ[...] कपटादिभिर्दुरत्ययाः ॥ ४८ ॥

कृष्णः "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचक[ः ।]
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥

इत्यनुसारेण सर्वाकर्षकपरमानन्दघनमूर्त्तिस्तस्य वाहे [...] इति वहनादिश्रमो निरस्तः प्रत्युत परमानन्द एव व्यञ्जितः [...] संसारबन्धमपि कर्षति हरतीति कृष्णस्तद्वाह इति स्वयं [...]

(१) शृङ्खलाः इति वीर० । (२) व्यघीयन्त इति वीर० विज० । (३) रवौ इति० वीर० ।
(४) मेघेतिवर्षति इति वीर० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वृतौ च हेतुः व्यवर्यन्तेति कर्मकर्त्तरि प्रयोगः कत्ता चार्थात् श्रीवासुदेव एव तमो यथोद्घाटितं स्यादिति दृष्टान्तेन तदागमनात्पूर्वमेव क्रमेण सम्यग्विवृतिर्ध्वनिता पर्जन्यो गर्जन्मेघः उपांशु मन्दं मन्दं गर्जितं यस्य सः शेष इति समये निजसेवासिद्धये पार्षदप्रवरः श्रीमाननन्त एव शय्यासनपरीधानपादुकाच्छत्रचामरैः "किं नामूस्तस्य कृष्णस्य मूर्त्तिभेदैश्च मूर्त्तिषु" इति ब्रह्माण्डवचनात् अन्वगात् श्रीवसुदेवस्य पश्चादगच्छत् तथा च श्रीविष्णुपुराणे "वर्षतां जलदानां च तोयमत्युल्बणं निशि । सञ्छाद्यानुययौ शेषः फणैरानकदुन्दुभिम्" इति तच्च तेन स्वशिरसि महावृष्टिनिवारणं यत्किञ्चित् लक्षितमेव ज्ञेयं चिन्तया वर्द्धमाने वैवर्ण्ये सद्यः सुखदचमत्कारहेतुत्वेन योग्यत्वात् ॥ ४९ ॥

मघोनि शक्रे स्वयमेव वर्षतीति सत्यपि मायामोहितजनत्वे तद्दर्शनादसौ श्रीवसुदेवादर्शनार्थमेव वृष्टिमकरोत् या खलु जलभूम्योरेकतापादनेन तस्य सहसा यमुनावगाहेऽपि हेतुरभूत् तत्रासकृत्त्वं च तत् क्लेशशङ्कया मध्ये मध्ये विच्छेदनात् स च विच्छेदो निर्जनदेश इति ज्ञेयं यमानुजेति तदानीं परमभीषणत्वाद्यभिप्रायेण तदेवाभिव्यञ्जयति—गम्भीरेत्यादिविशेषणाभ्याम् अत एव नदीति महा शब्दयुक्तं त्वं च श्लेषेणोक्तं तथापि यथा सीतापतेः समुद्रस्तथा सा श्रीवसुदेवस्य मार्गं ददौ परावृत्तावपि तस्यैव तद्दानात् अत एव तैरपि सीतापतेरित्येव व्याख्यातं तथा च श्रीविष्णुपुराणे "यमुनां चातिगम्भीरां नानावर्त्तशताकुलाम् । वसुदेवो वहन् विष्णुं जानुमात्रवहां ययौ" इति ॥ ५० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपांशुगर्जितम् उपांशुत्वं पौराणामप्रबोधाय वारि वर्षजलम् ॥ ४९ ॥

यमानुजा यमुना श्रियःपतेः सीतापतेः ॥ ५० ॥ ५१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः शिशुभावनानन्तरं भगवता शिशुरूपेण प्रचोदित आदिष्टः स शौरिर्वसुदेवः तं सुतमादाय सूतिकागृहाद्बहिर्यदा गन्तुमियेष ऐच्छत् तदा तर्हि व्रजे नन्दस्य जायया यशोदया अजा प्रकृतमिमानिनी योगमाया शक्तिरजनि जनिता जनेः कर्मणि चिणः परस्य तच्छब्दस्य लुक् ॥ ४७ ॥

तदा तया योगमायया हृताः प्रत्ययाः बुद्धयः सर्ववृत्तयः तत् पूर्वकसर्वेन्द्रियव्यापाराश्च येषां तेषु अत एव सर्वेषु द्वाःस्थेषु द्वारपालेषु पौरेषु जनेषु च शायिनेषु निद्रितेषु सत्सु अथ बृहन्ति कवाटेषु आयसानि अयोमयानि कीलानि परस्परबन्धकशङ्कुविशेषारमकानि शृङ्खलाश्च च यासु ताः तृतीयान्तपाठे बृहद्भिः कवाटैरायसकीलैः शृङ्खलैश्च पिहिताश्छादिताः बृहत्कवाटेषु आयसकीलशृङ्खलैः पिहिता इति वा अत एव दुरत्यया दुरतिक्रमाः या द्वारः द्वाराणि ॥ ४८ ॥

ताः सर्वाः कृष्णवाहे कृष्णं वहतीति तथा तस्मिन् वसुदेवे आगते सति स्वयमेव व्यशीर्यन्त विवृता बभूवुः यथा रवौ सूर्ये उदिते सति तमोऽन्धकारो विशीर्यते तद्वत् रवेरिति पाठे रवेः सकाशात् तदा पर्जन्य उपांशुगर्जितः मन्दगर्जितः वर्षन् पौराणामप्रबोधार्थमिति भावः । शेषोऽनन्तः फणैर्वारि वर्षजलं निवारयन्नन्वगादनुययौ ॥ ४९ ॥

असकृन्मेघे निरन्तरं वर्षति सति गम्भीरस्य जलपूरस्य जवेन ये ऊर्मयः तैः फेनिलाः फेनान्यस्याःसन्तीति तथा भयङ्कराणामावर्तानां शतैराकुला व्याप्तापि यमानुजा यमुना नदी मार्गं वसुदेवाय ददौ यथा सिन्धुः समुद्रः श्रियः पतेः सीतायाः पतेः श्रीरामचन्द्रस्य ददौ तद्वदित्यर्थः ॥ ५० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इयेष गन्तुमैच्छत् नन्दजायया नन्दजायायां तर्हि तदा ॥ ४७ ॥

योगमायया हृताः प्रत्ययानां ज्ञानहेतूनां इन्द्रियाणाम् सर्वा वृत्तयो येषु ते तथा तेषु निद्रया मुग्धेष्वित्यर्थः । चशब्दात्पौरेषु निद्रां यापितेषु प्रापितेषु सत्सु मन्त्रौषधादिभिर्दुरत्ययाः सर्वा द्वारश्च बृहत्कपाटायसकीलशृङ्खलैः पिहिताः बृहद्भिः कपाटैः अयोमयैः अर्गलैः शृङ्खलैश्च ॥ ४८ ॥

कृष्णवाहे कृष्णं बिभ्राणे ताः कपाटद्वारः व्यशीर्यन्त विवृताः यथा तमः रवेरुदये उपांशु रहसि अन्वगात् पृष्ठत अयासीत् फणाशब्दः उभयलिङ्गः "फणाद्वयोः" इत्यमरः ॥ ४९ ॥

मघोनि इन्द्रे यमानुजा यमुना तोयौघजवः जलप्रवाहवेगसमुत्का ऊर्मयो यस्यां सा तथा फेनिला फेनवती गम्भीरा च तोयौघजवोर्मिश्च फेनिला च सा तथेति भयानका भयङ्करा आवर्ताः पयसां भ्रमास्तेषां शतैराकुला श्रियः पतेर्दाशरथरामस्य सिन्धुः समुद्र इव ॥ ५० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वीकृत्य रूपान्तरं तत्र स्थितौ प्रयोजनाभावात् स्वयं गमने रूपान्तरस्वीकारवैयर्थ्यात् तस्य वा ज्ञानात् सर्वसमाधानार्थं तं बोधयित्वा तद्द्वारा स्वयं गोकुले गतवानित्याह—तत इति । प्राकृतभावानन्तरं शौरिः चकारादाज्ञापनानन्तरं च सुतं भगवन्तं समादाय सम्यक् गृहीत्वा उत्तमपात्रे वस्त्रं च प्रसार्य तदुपरि स्थापयित्वा स सूतिकागृहात् यदा बहिर्गन्तुमियेष तर्हि तस्मिन् समये नन्दजायया योगमायया अजनि जनिता शौरिरिति गमने भयाभावः । स इति भगवद्वाक्ये विश्वासः सुतमिति तस्यापि पुत्रत्वबुद्धिः प्राकृतत्वज्ञातेति ज्ञापितं सूतिकागृहादिति प्रसवधर्मोऽस्तत्रापि गृहे आविर्भूताः देवक्या अपि सूतिकात्वं जातं साधारणमोहस्य निवर्त्तकं साधारणं ज्ञानमिति गमनस्वाच्छन्द्यं कपाटोद्घाटनं च आत्मन इव देहस्यापि विस्मरणं यथा भवति तदर्थं तस्मिन्नेव समये योगमाया जाता भगवत्समानकाले चेत् जाता भवेत् तदा देवकीवसुदेवयोरपि प्रज्ञापः स्यात् अनेन मुहूर्त्तानन्तरं सा जातेति ज्ञायते नवम्यामेव सा जाता रोहिणी तु तुल्या अतो रोहिण्याः कृत्तिकावेधो न दोषाय सप्तमीवेधस्तु दोषायैव पुत्रोत्सवादिकं

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शुद्धसत्त्वस्यामेव जातामिति शुद्धाष्टम्यभावे नवम्यप्युपोष्या अन्तः स्थिते भगवति मायोद्गमो न भवतीति यदैव बहिर्गन्तुमियेष तर्ह्येव जातेत्युक्तं सा हि योगार्थमेव माया भगवतः कार्योपायार्थमेव लोकान् व्यमोहयतीति मायायाः स्वतन्त्रज्ञानपक्षं व्यावर्त्तयितुं नन्दजायया जनितेत्युक्तं न तु भगवानिव सा स्वतः आविर्भूतेति ॥ ४७ ॥

तस्याः कार्यमाह—तयेति । तया मायया हृताः प्रत्ययानां सर्ववृत्तयो येषु जाग्रत्स्वापयोः प्रत्ययानां ज्ञानानां वृत्तयः संशयादय उच्यन्ते मायामोहितास्तु मूर्च्छिता एव जाताः जगति तस्यामुत्पन्नायां तत्प्रभावः यशोदादयस्तु मुग्धा एव गोकुलवासिनश्च ततः क्रमेण मथुरायां द्वाःस्थाः ततः पौराः न केवलं पूर्ववद्वृद्धिरेव गृहीता किन्तु निद्रया अतिरिक्तबुद्धिरपि सम्पादिता यथा भूयान् कालः लोकान्तरं गतानामिव मुग्धतया गच्छति तथा अनुशायितेषु सुषुप्तिं प्रापितेषु सत्सु इयं हि माया एतावत्कार्यमेव कृतवती अन्यत्त्वन्यथा जातमिति वदन् प्रक्रमान्तरमाह—अथेति । पूर्वं तैरेव द्वारपालकैः सर्वा एव द्वारः बृहत्कपाटायसकीलशृङ्खलैः पिहिताः स्वभावतोपि दुरत्ययाः—

> गजा व्याघ्राः क्वचित् सिंहा विषमाश्चैव भूमयः ।
> दिवसेऽपि गतौ नित्यं सर्वथा भयहेतवः ॥

येषु द्वारेषु गमनमात्रेऽपि साधारणानां बन्धो भवति तत्रापि पिहिताः बृहन्ति कपाटानि तत्र आयसाः कीलाः शृङ्खलाश्च यासु कीलसहिता वा शृङ्खला यासु कुञ्चिकयैव उद्घाटयितुं शक्याः कुञ्चिकापि विषमा ॥ ४८ ॥

एतादृशोऽपि कृष्णवाहे वसुदेवे समागते स्वयमेव व्यवर्यन्त विशीर्णाजाताः स्वयमेवोद्घाटितकपाटाः जाताः भगवतः सर्वमोक्षदातृत्वात् कपाटानामप्यचेतनानामतितामसैः बद्धानां मुक्तिः प्रदर्शिता अनेनान्येषां मुक्तिर्व्याख्याता यदि शुद्धसत्त्वं भगवद्वाहकं चेत् भवति एतत् प्रदर्शनार्थमेव कृष्णवाहे वसुदेव इत्युक्तम् अयमेवोपाय इति ज्ञापयितुं दृष्टान्तमाह—यथा तमो रवेरिति । उपायसहस्रेणापि सर्वं तमो न गच्छति उदिते तु सूर्ये स्वत एव गच्छति तथा शुद्धसत्त्वभगवत्सहिते सत्येव सर्वाविद्यानाशः सर्वासाध्यानां स्वत एव सिद्धिः नान्यथेति निरूपितम् अन्तर्द्वारेषु निर्गतेषु मायायाः प्रवेशे उभयोः सांमुख्यं यदासीत्तदाह—ववर्षेति । वृष्टिरपि सर्वेषामनुत्थाने हेतुः उपांशुगर्जितञ्च अनुत्थाने शब्दान्तरप्रतिबन्धे च अधिकगर्जने तेनैव प्रबोधः एतावन्मायाकार्यं साधारण्येन प्रवृत्तं वसुदेवस्यापि खेदहेतुर्भवति अतस्तन्निवारणार्थं शेषोऽन्वगात् पातालात् समागत्य फणैः पर्जन्यवारि निवारयन् अन्वगात् पश्चाद्भागेन गतवान् भगवत्सम्बन्धात् तत्कृतं तु भयं न भवति अन्तरिक्षे निवारयन् गच्छतीत्येके फणैरिति पदात् अन्वगादिति च पश्चादेव छत्रधारीव गच्छतीति ज्ञायते ॥ ४९ ॥

यथा यथा गोकुलनिकटे गमनं तथा तथा मायासांनिध्यात् गमने क्लेशाधिक्यं भगवत्सांनिध्याच्च तदभाव इति ज्ञापयितुं यमुनोत्तरणे प्रकारमाह—मघोनि वर्षतीति । भगवज्जन्म समये सर्वतो निवृत्ता अपि मेघाः मायाजन्मनि सर्वे समागताः इन्द्रोऽपि मायामोहितो मेघप्रेरको जातः केवलाश्चेत् भग[वति गच्छति निवृत्ता अपि भवेयुः अल्पानां मोहितानाम् अ[...] धैर्यवत्त्वेन महति विरोधासम्भवात् अत आह—मघोनि[...] असकृद्वर्षति सति स्वभावतोऽपि यमुना क्रूरेत्याह—यमानुजेति । अत एव गम्भीरतोयौघजवोर्मिफेनिला गम्भीरो भयानको [...] यस्तोयौघः तस्य जवेन वायुवशाच्च ये ऊर्मयः तत्सहि[ता] फेनिला च त्रिविधोऽपि दोषस्तस्या निरूपितः अतिवेगो राज[सः] फेनादिस्तामसः एवं कालकृतं दोषमुक्त्वा स्वाभाविकं दोष[मा]ह—भयानका ऽऽवर्त्तशताकुलेति । भयानका ये आवर्त्ता भ्रमा[स्]तेषां शतैराकुला सहजप्रवाहरहितव्यग्रा वा आवर्त्ताः ताम[सा] वैयग्र्यं राजसम् एवं स्वाभाविका अपि त्रयो दोषाः एवं दुष्टा[पि] भयान्मार्गं ददौ सर्वा नद्यः समुद्रपत्न्यः रामावतारे समु[द्]रोऽपि मार्गमप्रयच्छन् शोषितः किंपुनस्तस्याल्पसत्त्वा भार्या [...] स्वरूपादेव प्रच्युता भविष्यामीति सिन्धुरिव मार्गं ददौ वि[...] यमुनाजले अग्रे लक्ष्मीभिः सह क्रीडां करिष्यति अत सन्तो[षा]दपि ददौ यथा लक्ष्मीपतेर्जामातुः श्वशुरः समुद्रः क[दा]चित् स्वगृहे नयन् मार्गं प्रयच्छति अथवा श्रीः सीतैव त[स्]एकस्याः कामुकः चेत्समुद्रशोषं कृतवान् बहूनां गोपिका[नां] कामुकः कथं न कुर्यात् ॥ ५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भगवता प्रचोदितः यदि बिभेषि तर्हि मां गोकुलं न[य] यशोदायाश्च तां कन्यां मन्मायामानयेत्यादिष्टः स वसुदे[वः] स्वपादनिगडं स्वयमेव स्रस्तं वीक्ष्य यदा गन्तुमैच्छत् तदा [...] नन्दजायया निमित्तभूतया अजनि जाता किञ्च—

> "गर्भकाले त्वसम्पूर्णे अष्टमे मासि ते स्त्रियौ ।
> देवकी च यशोदा च सुषुवाते समं तदा ॥

इति हरिवंशवाक्ये समं सह समकालमेव सुषुवात इति त[...] र्थावगमादत्र तु देवकीप्रसवोत्तरकाल एव यशोदाप्रसवदर्श[ना]दुभयोरेव शास्त्रवाक्ययोरतिप्रामाण्यादेवमवसीयते य[दा] देवकी कृष्णं सुषुवे तदैव यशोदापि कृष्णं सुषुवे त[द]नन्तरसमये योगमायां च सुषुवे इतिकालभेदेन तस्याश्च प्र[सवस्य] एवेष्यत एव "अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा" इति व[चनात्] किञ्च यशोदाप्रसूतस्य कृष्णस्य चतुर्भुजत्वाद्यनुक्तेर्नराकृति[त्वाद्] ब्रह्मत्वाच्च द्विभुजत्वमेव युक्तम् इति ॥ ४७ ॥

तया योगमायया हृताः प्रत्ययस्य ज्ञानस्य सर्ववृत्तयो [ये]तेषु द्वाःस्थेषु द्वारपालेषु शायितेषु सत्स्विति ज्ञानहरणं य[त्] मायांशभूताया मायायाः कार्यं याः द्वारः पिहिताः ताः [...] र्यन्त व्यभ्रियन्त विवृता इत्यर्थः । बृहत्कपाटगतैरायसकीलशृङ्ख[लैः] दुरत्ययाः दुरतिक्रमाः रवेर्निमित्तात् उपांशु मन्दमन्दगर्जितं [...] सः फणैरछत्रीकृतैरित्यर्थः । शय्यासनपरीधानपादुकाच्छत्रचा[मर]"किमाभूस्तस्य कृष्णस्य मूर्त्तिभेदैश्च मूर्त्तिषु" इति ब्रह्माण्डपु[राणा]यात् ॥ ४८ ॥ ४९ ॥

तोयौघस्तोयसमूहः श्रियः पतेः सीतापतेः ॥ ५० ॥

---

नन्दव्रजं शौरिरुपेत्य तत्र तान् गोपान् प्रसुप्तानुपलभ्य निद्रया ।
सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५१ ॥
देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५२ ॥
यशोदा नन्दपत्नी च जातं परमबुद्ध्यत ।
न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे श्रीकृष्णजन्मवर्णनोनाम
तृतीयोऽध्यायः ॥ ३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवत्प्रचोदित इत्यनेन मां यशोदासमीपे स्थापय तत्कन्यामिहानयेति पूर्वमेव भगवताऽऽज्ञप्त इति गम्यते या योगमायाऽऽख्या अजा भगवच्छक्तिर्नन्दजायया निमित्तभूतया अजनि जाता ॥ ४७ ॥

हृताः प्रत्ययाः येषां सर्वे वासुदेवे अन्तर्यामिणि वृत्तयो येषां ते च ते च ते तेषु ॥ ४८ ॥

व्यवर्षन्त गुणाश्छान्दसः व्यवृषन्त ॥ ४९ ॥

गम्भीरतोयौघजवेन ये ऊर्मयस्तैः फेनिला फेनव्याप्ता ॥५०॥

---

भाषाटीका ।

ताकेपीछे वसुदेवजी ने भगवान् की आज्ञासों सोवर के घर मेंसें अपने पुत्र को लेकरकें जाविरियाँ बाहर गमन करवे की इच्छा करी, वाई समय पै नन्द जी की भार्या श्रीयशोदाजी ने योगमाया को जन्मी ॥ ४७ ॥

वाई योग माया ने वा समय के विषैं सब द्वारपालन के और पुरवासिन के ज्ञान हर लिये और सब इन्द्रियन की वृत्तिन कों हरन करके सबन को सुवाय दिये ॥ और दरवाजे तौ सब बडे २ किवाड और लोह के कील और साकरों से जहां के तहां बंद हो रहे हैं ॥ ४८ ॥

श्रीकृष्ण भगवान् कों लेकें जासमें उन द्वारन के समीप में जब वसुदेवजी आये, तब जैसे सूर्य के सन्मुख भये तें तम दूर होजाय है । ऐसेई वे सब दरवाजे आप ही तें खुल गये ॥ और गर्जना करके मेघ भी बर्षन लग्यो, और वसुदेवजी जैसें न जान पावें ता रीति सों रहस्य में पीछें २ श्रीशेषजी अपने फणन सों वर्षा की बूंदन को निवारण करत जात भये ॥ ४९ ॥

वा विरियां इन्द्र तौ वर्षा करतौ ही और गंभीर जलके प्रवाह के वेग सों उठी जो तरंगै तिनकें मारे फेनसों व्याप्त होरही और सैकरों भयानक भमर जामें पर रहे ऐसी श्रीयमुना जी नदी हो करकें भी "श्रीसीता पति कों समुद्र के नाई भगवान् को मार्ग देत भई ॥ ५० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निद्रया अजया ॥ ५१ ॥

प्रतिमुच्य बद्ध्वा पदोः पादयोः लोहं निगडम् आस्ते स्म ॥५२॥

जातं किञ्चिदिति केवलमबुध्यत न तु तल्लिङ्गं पुत्रः कन्या वेति योगनिद्रया च मोहितेति ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपेत्य समीपे गत्वेति वर्त्मादिकमज्ञानतोऽपि तस्य दैवसाहाय्यं सूचितं द्वारबन्धादिविमोकस्तु पूर्ववत् तदागौ श्रीयशोदासमीपे समभिव्यक्तशैशवमाधुर्येण श्रीवसुदेवस्य स्वस्य चाकृष्टचित्तत्वाच्छिशुमित्युक्तं सुतामिति क्वचित्पाठः निधाय निधिमिव गूढं न्यस्य तस्याः सुताम् उपादाय मायात्वेन कन्यात्वेन च कंसवचनार्थमुपादेयत्वेन च गृहीत्वा एव च श्रीभगवति स्नेहभर एव यदर्थं मायात्वेन ज्ञातायाः अपि स्वीकारः तथा मित्रपुत्रीत्वेन प्रतीयमानाया अपि कंसकार्यवधदोषानपेक्षया गृहानिति चिन्ताव्याकुलस्य श्रीदेवकीलक्षणस्य निजगृहस्य ततो मुहुः स्फुरितत्वेन बहुत्वनिर्देशः ॥ ५१ ॥

दारिकां बालिकां शयने न्यस्येति तस्या उदर्कशोकवृद्धिशङ्कया अनादरेणैव शयन एव न्यस्य न पुनरङ्क इत्यर्थः । पूर्ववदावृतः कपाटादिभिर्निरुद्धः ॥ ५२ ॥

यशोदेति । तादृशपुत्रोत्पत्त्या श्रीनन्दस्य व्रजस्य च कीर्तिविस्ताराभिप्रायेण तथा नन्दयति पुत्रोत्पत्त्या जगदिति नन्दस्वाख्यस्यापि तदानन्दता सूचिता तस्य पत्नीति तस्या अपि जग-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दानन्दकत्वं तथा तत्पतित्वेन तस्यापि यशोविस्तारयां सूचितं परिश्रान्ता प्रसवस्वभावेन जाताऽत्यन्तश्रमा निद्रया योगनिद्रया अतः सुतरां तत्परिजनानामपि तादृशत्वमूह्यं तथा च श्रीविष्णुपुराणे "तस्मिन् काले यशोदाऽपि मोहिता योगनिद्रया। तामेव कन्यां मैत्रेय प्रसूता मोहिते जने" इति. पश्चात्पुत्रदर्शनेन परमहृष्टाऽभूदिति च ज्ञेयं तथा च तत्रैव "ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम्। नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ" इति ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शौरिर्वसुदेवः लोहं निगडम् आवृतः कवाटपिहितद्वारः ॥ ५२ ॥ ५३ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः शौरिर्वसुदेवः नन्दव्रजमुपेत्य तत्र योगमायया हेतुभूतया नितरां सुप्तान् तान्नन्दादीन् गोपाननुपलभ्य ज्ञात्वा यशोदायाः शयने शय्यायां स्वसुतं निधाय तस्या यशोदायाः सुतां मायात्मिकामादाय पुनर्गृहान् स्वनिवासभवनान्यगात् ॥ ५१ ॥

ततस्तां दारिकां पुत्रीं देवक्याः शयने न्यस्य निधाय पूर्ववच्छृङ्खलां पादयोः कृत्वा आबध्याऽऽवृतः पिहितकवाटः सन्नास्ते पूर्ववदवस्तत प्रतिमुच्य पदोर्लोहमिति पाठे लोहः लोहमयं निगडं पदोः पादयोः प्रतिमुच्य पुनर्भूत्वेत्यर्थः ॥ ५२ ॥

नन्दस्य पत्नी यशोदा तु जातमपत्यं पुत्रं परमबुद्ध्यत तत्पुरुषमात्रमबुद्ध्यत न तु तल्लिङ्गं तद्गतचिह्नानि तत्र हेतुः परिश्रान्ता तत्रापि हेतुर्निद्रया मायाशक्त्युपबृंहितया निद्रयाऽपगता स्मृतिर्यस्याः तथा यद्वा जातमपत्यं न सुतं नापि कन्यां चाबुद्ध्यत किन्तु जातमात्रमबुद्ध्यत तत्र हेतुः तल्लिङ्गं स्त्रीपुंमान्यतरचिह्नपरामर्शे परिश्रान्ता तत्र हेतुर्निद्रया अपगतस्मृतिः पूर्ववदर्थः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्दव्रजं नन्दगोकुलम् उपलभ्य दृष्ट्वा निद्रया दुर्गया सुप्तान् गृहाणि बहुवचने पुंलिङ्गः "गृहाः पुंसि च भूम्न्येव" इत्यमरः गृहशब्दस्य भार्यावाचित्वेन नपुंसकत्वं तद्व्यावृत्त्यर्थं बहुवचनम् ॥ ५१ ॥

दारिकां कन्यकाम् ॥ ५२ ॥

परं केवलं जातमबुध्यत तस्य जातस्य लिङ्गं स्त्रीपुं विवेकलक्षणं नाज्ञासीत् तत्र निमित्तमाह—परिश्रान्तेति । प्रसू वेदनयेति शेषः ॥ ५३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
तृतीयोऽध्यायः ॥ ३ ॥
( विजयध्वजतीर्थपाठेन चतुर्थोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
तृतीयोऽध्यायः ॥ ३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं मार्गवद्नदीमुत्तीर्य गोकुले गतस्य कृत्यमाह—नन्दव्र मिति । शौरिरित्युभये नन्दस्य च मित्रत्वात् व्रजे च गवां कदाचित् शब्दो भवति अतः पुरुषगमनशब्देनापि तत्रत्य जागरणम् उपेत्य समीपे गत्वा अनेन शनैर्गमनं सूचितं त त्यान् सर्वदा जागरणयुक्तानपि तदा प्रसुप्तानपि तदा प्र प्तानुपलभ्य केवलमपि शयनं सम्भवतीति निद्रयेत्युक्तं नि बालकं भगवन्तं भगवत्त्वज्ञानेन पुत्रत्वस्य वक्तुमशक्य नामान्तराणामकृतत्वात् भगवत्त्वे स्थापनस्यायुक्तत्वात् नि मित्युक्तं शयने शय्यायाम् अयुक्तमित्याशंक्य शयनपदं दत्तं य दायाः शयने सति यशोदायाः शयनं यत्रेति निधाय नि स्थापयित्वा तत्सुतां मायामुपादाय पुनस्तेनैव मार्गेण स्वगृ मगात् ॥ ५१ ॥

ततो देवक्याः शयने तस्या अपि शय्यास्थानं कृत्वा स्थापयित्वा अर्थेति भिन्नप्रक्रमे यशोदाशयने तूष्णीं रक्षापयन् अत्र तु तदभावः दारिकां कन्याम् अनादरे दारि स्वयमेव पदोः पादयोः लोहं प्रतिमुच्य पूर्ववदेव यदा बज्जन्म न जातं तदा यथा ॥ ५२ ॥

अत्र यशोदायाः शयनं न सम्भवति प्रसवे लोके महा संभवादित्याशंक्याह—यशोदेति यशो ददातीति प्रसवे भर्तुः सुखं भवतीति नन्दस्य पत्नीति तादृशे समये अन्यत्र जागरणं जातकर्माद्या वश्यकत्वात् पत्नीभूताऽपि सावधाना जातमेव परमबुध्यत न तु जातस्य लिङ्गं पुत्रः पुत्रीवेति परिश्रान्ता प्रसवार्थं वेदना महती जाता पश्चात् श्रान्ता तदैव प्रसवो जात इति प्रसवेन सह निद्रापि जाता कृत्वा अपगता स्मृतिर्यस्याः मम प्रसवो जात इति पूर्व सन्धानं स्मृतिः अतःपूर्वं वसुदेवकृतं सुस्थम् ॥ ५३ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
तृतीयाध्यायविवरणम् ॥ ३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्सुतामुपादायेति कंसात्स्वपुत्रस्य रक्षणं मित्रपुत्र्या वधं जानतोऽपि परमधार्मिकस्यापि वसुदेवस्यायमन्यायो न दूषणं प्रत्युत भूषणमेव पूर्णीभूते भगवति वर्द्धिष्णुस्नेहेनैव तादृशविवेकापहारात् ॥ ५१ ॥

प्रतिमुच्य बद्ध्वा पादयोर्लोहं निगडम् आवृतः आस्ते स्म ॥५२॥

परं केवलं जातमबुद्ध्यत न तु पुत्रः कन्या वेति तस्य जातस्य लिङ्गं तत्र हेतुः परिश्रान्ता अतिसौकुमार्य्यात् प्रसवोत्थश्रमयुता प्रसवान्ते चानन्देन श्रमोपशान्त्या च निद्रयेति किञ्चात्र चकार उक्तसमुच्चये यथा वसुदेवपत्नी तथा नन्दपत्नी च जातं स्वगर्भादुत्पन्नमपत्यं परं सर्वोत्कृष्टम् अबुद्ध्यत तन्माधुर्य्यास्वादशक्त्यैव तद्धत्तया तदीयस्वरूपभूतानन्दमनुभवगोचरी चकारेत्यर्थः । किन्तु तस्य लिङ्गं परमेश्वरो ऽयमेवेति लिङ्गविशेषं न अबुद्ध्यतेति भेदः । ननु, तस्याः गर्भजः कृष्ण इति यशो न प्रसिद्धं तत्राह यशोदा तद्यशो ददाति देवक्यै सखीभावात् द्वे नाम्नी नन्दभार्य्या या यशोदा देवकीति च अतः सख्यमभूत्तस्या देवक्या शौरिजायेत्यादिपुराणवचनादवगतादित्यर्थः । व्याख्यानमिदं भागवतामृतवैष्णवतोषिण्यानन्दवृन्दवनादिसम्मत्यैवेति नोपेक्षणीयम् ॥ ५३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयो दशमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निद्रया योगनिद्रया ॥ ५१ ॥

पदोः पादयोर्लोहं निगडं स्वयं प्रतिमुच्य बद्ध्वा आस्ते स्म ॥ ५२ ॥

यशोदा चकारात्तत्रत्यजनता परं केवलं जातमबुध्यत न तु लिङ्गं स्त्रींपुंसोरेकतरलक्षणमबुध्यत निद्रया योगनिद्रया ॥५३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
तृतीयाऽध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषा टीका ।

वसुदेवजी भी यमुनाजी को उतर के नन्द के गोकुल को जायकें तहां योग निद्रासों सब गोपन को सोवत देख कें अपने सुतको श्रीयशोदाजी की शय्या पै पोढ़ाय के श्री यशोदा की कन्या कों लेके फिर अपने घरन कों आये ॥५१॥

वसुदेवजी आयकें वा कन्या कों श्रीदेवकीजी की शय्या पै धीरे से सुवाय कें अपने पांयन में पहिले के नांई लोह (बेडी) डारकें जैसे के तैसे बैठत भये ॥ ५२ ॥

ब्रज में श्रीनन्दजी की पत्नी श्रीयशोदाजी तो "मेरे कछु भयो" इतनोई मात्र जानती भई । काहे सों, कि-प्रसव के परि श्रमसों श्रांत रहीं, और कछु निद्रासों स्मृति भी नहीं रही तासों कन्या भई कि पुत्र भयो एसो कछु वाको चिन्ह नहीं जान्यों ॥ ५३ ॥

इतिश्रीमद्भागवतदशमस्कन्धमें तृतीयाअध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ३ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

——:o:——

## ॥ चतुर्थोऽध्यायः ॥



### श्रीशुक उवाच ।

बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ।
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥
ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ।
आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥
स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ।
सूतीगृहमगात्तूर्णं प्रस्खलन् मुक्तमूर्द्धजः ॥ ३ ॥
तमाह भ्रातरं देवी कृपणा करुणं सती ।
स्नुषेयं तव कल्याण ! स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलः ।
दुर्मन्त्रिभिर्हितं मेने कंसो बालादिहिंसनम् ॥

॥ १ ॥

तद्दृष्टमं जन्म ॥ २ ॥

कालो मृत्युः ॥ ३—४—५ ॥

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आवृताः लग्ना बभूवुः स्वयमेव ततस्तदनन्तरमेव बालस्य बालजातेर्ध्वनिं जातमात्रस्य स्वभावतो रोदनशब्दम् अतः सामान्यतो न स्त्रीत्वं गृहपाला रक्षिणः श्लेषेण कुक्कुरा इव सम्यक् सावधानमुद्यतास्ततोत्थिताः ॥ १ ॥

उपव्रज्य तत्र तेषामनधिकारेऽपि समीपे गत्वा भोजराजाय तं विज्ञापयितुम् ॥ २ ॥

कालः हन्तुं समयोऽयं किं वा साक्षान्मृत्युरयमागत इति विह्वलो भयव्याकुलः अत एव प्रस्खलन् इतस्ततो निपतन् उत्तरार्द्धे शीघ्रं तूर्णमिति वा पाठः ॥ ३ ॥

भ्रातरमिति तं प्रति तादृशोक्तौ योग्यता तस्य तु दुरात्मतोक्ता करुणं यथा स्यात् सतीति तस्या वैक्लव्येन तस्य सानुगस्याचिरादेव नाशः समुचित एवेति भावः । देवी स्वपुत्रस्य गोपनं छिद्रेणैव मया कृतम् इत्यन्तर्घोतमाना प्रियसख्या यशोदायाः कन्यकावधशङ्कया कृपणा दुःखिता च सती तव स्नुषा पुत्रवधूर्भविष्यतीति प्रथमं तावत्क्षोभं जनयति—तद्वधाय अष्टमगर्भतामाशङ्क्य च तामाच्छेत्तुमुद्यतं प्रत्याह—स्त्रियमिति । असमर्थामवध्यां चेत्यं तच्च तव युक्तमेवेत्याह—कल्याण, हे धार्मिकेति यद्वा हे आयुष्मन् ! इति मृत्युभयं निवर्त्तयन्ति अष्टमे गर्भेऽस्मिन्नवतारपवोत्पत्तेः इति मृत्युभयं निवर्त्तयति ॥ ४ ॥

#### श्रीशुकदेवसूरिकृतशुकपक्षीयम् ।

॥ १—९ ॥

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवदवतारं सप्रपञ्चं प्रस्तुत्य अथ ततःप्रभृति कंसोद्योगं प्रस्तौति—बहिरिति । यदा वसुदेवः पूर्ववदास्त तदा बहिरन्तश्च सर्वाः पुरद्वारः द्वाराणि पूर्ववदेवावृताः पिहिताः ततो बालध्वनिं शिशुरोदनमाकर्ण्य गृहपालाः वसुदेवाधिष्ठितकारागृहपालाः समुत्थिता बभूवुः ॥ १ ॥

ते चातितूर्णमुपव्रज्य कंससमीपमेत्य देवक्या गर्भजन्म गर्भस्थशिशूत्पत्तिं भोजराजाय कंसायाचख्युः कथम्भूतं यद्गर्भजन्मनैव समुद्विग्नो मृत्युभयभीतः कंसः प्रतीक्षते तथाभूतमित्यर्थः ॥ २ ॥

स भोजराजः कालोऽयमित्ययमेव तद्वधकालः अन्यथा प्रवर्द्धितो मामेव हन्यादिति बुद्ध्या तूर्णं तल्पाच्छयनादुत्थाय विह्वलः कातरोऽनवहित इति यावत् अत एव प्रस्खलन् विक्षिप्तगतिः मुक्ता विक्षिप्ताः मूर्द्धजाः केशा यस्य तथाभूतः शीघ्रं सूतिकागृहमगात् ययौ ॥ ३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तमागतं भ्रातरं कंसं देवी देवकी कृपणा दीना करुणं यथातथोवाच, तदेवाह--स्नुषेयमिति सार्द्धद्वयेन। हे कल्याण! तवेयं स्नुषा भगिनी सुता एनां स्त्रियं हन्तुं त्वं नार्हसि ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

देवानां देवस्वभावोऽसुराणामसुरस्वभावो मध्यमानां मिश्रस्वभावो दुरत्यज इत्येतदर्थकं प्रतिपाद्यतेऽस्मिन्नध्याये, तत्र कंसादिषु सन्तोऽसन्त इति द्विजीवाः सन्ति तदुक्तम्—

"पूतनाकंसनरकशिशुपालादिषु द्विधा।
जीवाः सन्तस्त्वसन्तश्च तत्र बन्ध्वादिरूपिणः॥
विष्णोः सन्त इति ज्ञेया असन्तः शत्रुरूपिणः।
शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः"॥ इत्यादि

तत्रासतां स्वभावं दर्शयितुमुपक्रमते—बहिरन्त इति। बालध्वनिं रोदनम् ॥ १ ॥

यस्माद्गर्भात् उद्विग्नः भीतः ॥ २ ॥

सूतीगृहमितिदीर्घश्छान्दसः वैलक्षण्यद्योतको वा ॥ ३ ॥

करुणं दयाजनकं वचनमिति शेषः स्नुषा पुत्रभार्या ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

बालस्य बालकजातेर्ध्वनिः ॥ १ ॥ २ ॥

मम कालोऽयं जात इति स्नुषाभविष्यत् पुत्रस्य वधूर्भविष्यति तदेव जानन्तमाह—स्त्रियमिति। दीनदीनवादिति दृष्टान्तः न तु गौणतोक्तिः श्रीयशोदाया निजसखीत्वात् समुद्विजे भवद्धेतोरित्यादिवत् स्नेहलस्वभावत्वाच्च ॥ ३—६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मायायाः कार्यमधुना चतुर्थे विनिरूप्यते।
अन्यथा भगवत्कार्यं न भवेदनिमित्ततः॥
ज्ञापने दुःखसुखदे ततोऽपि ज्ञापने तथा।
कंसस्य सह भृत्यस्य धर्मबाधो न चान्यथा॥
तामसप्रभुके राज्ये कुतो धर्मस्तु तद्गतः।
अतः पूर्वस्य नाशो वै कर्त्तव्यस्तामसाश्च ते॥
ब्राह्मणा अपि तद्देशे स्वभावात्तामसा मताः।
कालस्तथाविधो यस्मात् पश्चाज्जातस्तु सात्त्विकः॥

भगवत्कार्यवैपरीत्यं मायाकार्यं इति ज्ञापयितुम् उद्घाटितकपाटानां द्वाराणां पुनः पिधानमाह—बहिरन्तारिति। पुरो बहिर्द्वाराणि अवान्तरद्वाराणि च सर्वाः पूर्ववदेवावृताः वैलक्षण्ये रक्षकाणां ज्ञानसम्भवात् ज्ञानं भवेदिति पुनर्बन्धनं मायाकार्यमुक्त्वा पूर्वं वसुदेवदेवक्योर्निवृत्तस्यापि भयस्य जननार्थं रोदनमपि कृतवती तेन रोदनेन सर्वेषां जागरणं जातमित्याह—तत इति। बालस्योत्पन्नस्य ध्वनिमिव ध्वनिं श्रुत्वा गृहपालाः सूतीगृहरक्षकाः सम्यगुत्थिताः ॥ १ ॥

तेषां कृत्यमाह--ते त्विति। देवक्यादिभिः प्रार्थिता अपि तत्प्रार्थनां न कृतवन्त इति ज्ञापनार्थस्तुशब्दः तूर्णमिति मध्ये कृत्यान्तरव्यावृत्त्यर्थं दूरात् कथने निलायनादिकं सम्भविष्यतीति तन्निवृत्त्यर्थमुपव्रज्येत्युक्तं देवक्या गर्भस्य जन्म न तु पुत्रः कन्यका वेति भेदः तदिति प्रसिद्धमष्टमम् अकथने ऽनिष्टं करिष्यतीति ज्ञापनार्थं भोजराजायेत्युक्तं यज्जन्म प्रतीक्षत एव कदा भविष्यतीति अर्थादेतादृशाय प्रतीक्षायां हेतुमाह--उद्विग्न इति ॥ २ ॥

ततः कंसस्य कृत्यमाह--स तल्पात्तूर्णमिति। सोऽपि शय्यायां पतित एव स्थितः स महानपि तल्पात् शय्यातः तूर्णमविचारेण प्रथमत उत्थितः पश्चात्कालोऽयमिति विह्वलः अतः परं जीवनसम्भावना नास्तीति निश्चयात् अयं भगवानेव कालः मृत्युदः विह्वलः सर्वावयवविकलः सूतीगृहं प्रसूतिस्थानं शीघ्रमिति सर्वकार्यपरित्यागे सर्वसाधनाननुसन्धाने हेतुः प्रस्खलन्निति मार्गाज्ञानं मुक्तमूर्द्धज इति देहाज्ञानम् ॥ ३ ॥

दृष्ट्वा लिङ्गमज्ञात्वा पुत्रबुद्ध्यैव मारणार्थं प्रवृत्तौ यशोदायाः कन्याया मारणं स्वपुत्रमारणादप्यधिकदुःखदं जातमिति ज्ञापयितुं तस्या वाक्यमाह--तमाहेति त्रिभिः। त्वदीया कन्यका चेयमतो मह्यं प्रदीयतां "भगिनी दानपात्रं हि हेतुकार्यफलैस्त्रिभिः" तं कंसं भ्रातरमाह--यतो देवी सात्त्विक्यपि स्त्रीज्ञात्वा वै दैन्यप्रदर्शनार्थं तथा कृतवतीति असत्यमपि प्राणसङ्कटे परार्थं वक्तव्यमिति ज्ञापनार्थं वा कृपणा अनालोचितयाचिका "कृपणः स तु विज्ञेयो योऽनालोचितयाचकः" इति वाक्यात् करुणं यथा भवति तथा तमाहेति सम्बन्धः। सतीति कालज्ञानाद्याचनं सर्वात्मकत्वाद्भगवतः तथा करिष्यति भर्त्तुर्दोषनिवृत्त्यर्थं वा सतीति अन्यथा स्वपुत्रं स्थापयित्वा परकन्यामारणं दोषः स्यात् स्नुषेति मातुलकन्यापरिणयनपक्षे पितृष्वसुरपि कन्या परिणेया यथा मित्रविन्दा यदा कंसस्य पुत्रः देवकीकन्यामुद्वहेत् तदेयं स्नुषा भवति अनेन तस्याः स्वकन्यात्वं सहजमित्युक्तं ननु पुत्र एव नास्ति कथमियं स्नुषेति चेत्तत्राह—कल्याणेति। त्वं पुत्रजननसमर्थः मद्वरवरप्रयोग तथापि पुत्रो भविष्यतीति अथवा मास्तु स्नुषा तथापि स्त्रियं हन्तुं मार्हसीति अन्यथा अहमेव कथं न हता "स्त्रियाः स्वल्पगुणमत्या वधोयम्" इति यतस्त्वयैव निरूपितम् ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मायावाक्येन कंसस्याऽनुतापो देवकीक्षमा।
दुर्मन्त्रिभिर्मन्त्रणा च चतुर्थे कथ्यते कथा॥

बालध्वनिज्ञातमात्रबालकरोदनशब्दं गृहपालाः श्वान इव ॥ १ ॥

तदष्टमं गर्भजन्म ॥ २ ॥

कालः बालकं हन्तुमपमेव समय इति यद्वा मन्मृत्युरिति भयेन ॥ ३ ॥

देवीस्वपुत्रस्य गोपितत्वादन्तर्धीतमाना सखयाः कन्येयमपि जीवत्विति कृपया सती तत्प्रतारणे कोविदा स्नुषा तव भाविनः

बहवो हिंसिता भ्रातः ! शिशवः पावकोपमाः ।
त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥
नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ! ।
दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥
श्रीशुक उवाच ।
उपगुह्यात्मजामेवं रुदन्त्या दीनदीनवत् ।
याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥
तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ।
अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुत्रस्येयं वधूर्भविष्यतीति बुद्ध्या तदपि बलादाच्छिद्य जिघृक्षन्तं तमाह—स्त्रियं प्रदेयमथवा हे कल्याणेति स्त्रीवधोत्थपापेन तवाकल्याणं मा भवत्विति भावः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदनन्तरं किं वृत्तमित्याकांक्षायां सूचीकटाहन्यायेन कन्यकावृत्तप्रतिपादनाय चतुर्थोऽध्याय आरभ्यते—बहिरन्त इति ॥ १ ॥
ते तु तूर्णं त्वरितम् उपव्रज्य निकटं गत्वा यत्प्रतीक्षते तदष्टमं जन्म ॥ २ ॥
अयमष्टमो गर्भः कालः मम विनाशहेतुः ॥ ३ ॥
स्नुषेयं तव त्वत्पुत्राय दास्यामीति भावः ॥ ४—५ ॥

भाषा टीका ।
श्रीदेवकीनन्दनाय नमः ॥
श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—बाहर भीतर पुर के द्वार सब प्रथम सरि के आपते आप लग गये। ता पीछे बालध्वनि को सुनके कंस के गृहपाल ( नोकर ) उठ बैठे ॥ १ ॥
और वे तो बड़ी जल्दी कंस के निज समीप जायकें देवकी के वा सन्तान को जन्म सुनावत भये, जासों उद्विग्न होकें कंस जा गर्भ की प्रतीक्षा करतो रह्यो, कि—कब जन्मै और कब मारूं ॥ २ ॥
वो कंस अपनी शय्या से बड़ी जल्दी उठकें और "ये मेरो काल है" ऐसें अति विह्वल होयकें, मारे घबराट के केश जाके खुल गये ऐसो कंस गिरतो पड़तो बड़ी जल्दी सोवर के घर को गयो ॥ ३ ॥
बिचारी दीन देवकी देवी वा कंस भ्राता सों दीनता सों बोली, कि—हे कल्याण ! मेरे भैया कंस ! ये छोरी तेरे पुत्र की वधू होयगी और ये स्त्री जात है या कों तू मारबे कों योग्य नहीं है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अङ्ग हे भ्रातः ! ॥ ६ ॥
दीनदीनवत् दीनादपि दीनवत्तु तथा पुत्रस्यान्यत्र नीतत्वात् सा च योगमायेति ज्ञातत्वात् याचितोऽप्याचिच्छिदे हस्तादाकृष्य जग्राह ॥ ७ ॥
अपोथयत् दृढबलेन चिक्षेप ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भ्रातरिति स्नेहं जनयति, पावकवत् तेजस्विनः बहव इति निर्दयत्वमुक्त्वा शङ्कमानाह—दैवेति। एकेति गूढोपालम्भं दैवं कार्पण्यात् ॥ ५ ॥
स्नेहमुत्पादयन्ती पुनरपि तथैव प्रार्थयते—नन्विति। निश्चये हि यतः दीना बन्धनागारवासादिना प्रभो हे अदेयदानेऽपि समर्थ मन्दायै पुत्रभाग्यहीनायै मे मह्यं इमामिति पाठे इमामपीत्यर्थः सद्योजातां किञ्चिदपि कर्त्तुमक्षमां ननु अष्टमगर्भत्वादियं कन्यापि न ह्यहन्तव्या यतः चरमां वार्द्धक्येन त्वद्भयेनाप्यन्यापत्योत्पत्तिसम्भावनानिवृत्तेः ॥ ६ ॥
आत्मजामिति । श्रीयशोदया महात्म्याः माधवेनाभिन्नमन्यत्वविवक्षया अत एव दीनदीनवदिति दीनदीनो यो जनस्तद्वत् कर्मधारयवदुत्तरपदेष्वित्यधिकारस्थेन "प्रकारे गुणवचनस्य" (८।१।१२)इति सूत्रेण द्विरुक्त्या हि दीनदीनः सिद्ध्यति "भीतभीत इव शीतमयूखः" इतिवत् मायादित्यज्ञानेऽपि स्नेहस्वभावेन "क्रूरे नीचेऽधमे खलः" इति विश्वः ॥ ७ ॥
खलत्वमेव दर्शयति—तामिति । जातमात्रां गर्भजलादिक्लिन्नमित्यर्थः। तथा च श्रीहरिवंशे "सा गर्भशयनक्लिष्टा गर्भाम्बुक्लिन्नमूर्द्धजा" इति ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आचिच्छिदे हृतवान् ॥ ७ ॥

अपोथयत् अताडयत् स्वार्थोन्मूलितसौहृदः स्वप्रयोजनार्थं त्यक्तस्नेहः ॥ ८ ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दैवविसृष्टेन दैवप्रेरितेन दैवेन मत्पुत्रमृत्युतया कल्पितेनेत्यर्थः त्वया बहवः पावकवत्प्रकाशमानाः मम शिशवो हताः हे भ्रातः ! इयमेका पुत्रिका प्रदीयताम् ॥ ५ ॥

ननु, हे भ्रातः ! अहं तवावरजा कनीयसी दीना च हताः सुताः यस्यास्तथाभूता चातो हे प्रभो अङ्ग हे भ्रातः मन्दभाग्यायाः ममैकां चरमामन्त्यां प्रजां कन्यां दातुमर्हसीति ॥ ६ ॥

इत्यमात्मजामुपगुह्योरसि बाहुभ्यां संप्रगृह्य दीनदीनवत् दीनादपि दीनस्तद्वत्तितरां दीनवदित्यर्थः । वत्करणेन स्वसुतस्यान्यत्र स्थितत्वाद्वस्तुतो दैन्याभावः सूच्यते रुदन्त्या तया याचितोऽपि खलो दुरात्मा कंसस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे हृतवान् ॥ ७ ॥

तां जातमात्रामेव न तु कृतनालच्छेदाम् इत्यर्थः । भगिन्याः सुतां चरणयोर्गृहीत्वा स्वप्रयोजनार्थं त्यक्तभगिनीतत्सुतास्नेहः शिलापृष्ठेऽपोथयदताडयत् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दैवेन निसृष्टेन प्रेरितेन ॥ ५ ॥

चरमां प्रजाम् अवरसन्ततिम् ॥ ६ ॥

आचिच्छिदे आकृष्टवान् ॥ ७ ॥

अपोथयत् अताडयत् स्वार्थेन स्वप्रयोजनेन उन्मूलितम् उत्पादितं सौहृदं स्नेहलक्षणं यस्य स तथा ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मजामिति भिन्नात्मतयैवोक्तम् ॥ ७ ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अष्टमो मारणीय इति चेत्तत्राह--बहवो हिंसिता भ्रातरिति । स्त्रिया मारकत्वं न सिद्धं पुत्रास्तु हता एव यद्यप्येक एव मारणीयः तत्स्थाने बहवो हताः भ्रातरिति सम्बोधनं दयार्थम् । आकृत्या पराक्रमोऽपि तेषु सम्भाव्यत इति तदर्थमाह पावकोपमा इति स्नेहे त्वयपतीति तस्य दोषाभावमाह त्वया दैवनिसृष्टेनेति "अनुरक्तो गुणान् ब्रूते' इति वाक्यात् दैवेन भगवदिच्छया प्रेरितेन भवता पुत्रा हताः एषा तु अवध्येति दैवेन न प्रेर्यत इति भावः । एका इयं पुत्रिका अभ्रातृमतीति इमामप्यस्ततो गत्वा पुत्रिकाधर्मेण दत्वा ससन्ताना भविष्यामीति ज्ञापयति—एकेति । यद्यपरा उत्पत्स्यते तदा मारणीयेति ज्ञापितं प्रकर्षेण दीयतामिति कालान्तरेऽप्यमारणीया ॥ ५ ॥

अवश्यं दाने हेतुमाह—नन्वहमिति । अवश्यदानमेव फलं नान्यदिति सम्बोधनं युक्तिग्रहणार्थम् अहं ते ह्यवरजेति अवरजत्वे उभयानुभवः प्रमाणम् अवरजा दयापात्रं दीना दुःखिता शोकादिना तत्र हेतुः हतसुतेति प्रभो इति सम्बोधनं दानसामर्थ्यद्योतनार्थम् अत एव दातुमर्हसि मन्दाया इति अतः परं रजोऽभावः सूचितः अतश्चरमां प्रजां इमामिति अन्या कन्यात्वेन न देया इयमेव देयेति ॥ ६ ॥

तथापि न त्यक्तवानित्याह—उपगुह्येति । एवमात्मजामुपगुह्य विलापनपूर्वकं रुदन्त्या हस्तात् तां बालामाचिच्छिदे देवकीं विनिर्भर्त्स्य विनिर्भर्त्सने हेतुः तां याचितः सन् आत्मजामिति आत्मनो भगवतः सकाशाज्जातां व्यवहारे शब्दाः परमार्था एवेति न्यायात् देहादावात्मशब्दवत् आत्मज शब्दोऽपि पुत्रत्वेन परिग्रहमात्रेऽपि वक्तुं शक्यते एवमिति पदात् एतादृशानि वाक्यानि बहुवारमुक्तानीति ज्ञापितं रोदनं यशोदाकन्यकेति दीनादपि दीना यथा दैवहता पुत्रभर्त्रादिरहिता व्याधिग्रस्तापि सा दीनदीना तथेयं स्वपुत्रनाशं दृष्टवती परापत्यनाशमपि पश्यतीति हस्तादिति एकेन हस्तेन तस्या एकं हस्तं धृत्वा द्वितीयेन तस्या द्वितीयहस्तादाचिच्छिदे एवंकरणे हेतुः खल इति ॥ ७ ॥

गृहीत्वा यत् कृतवान् तदाह—तां गृहीत्वेति । चरणयोरिति मारणार्थमेव विपरीततया ग्रहणमात्रेणैव तस्याः नाशः सूचितः जातमात्रामिति । नालादिसहिताम् अतिकोमलत्वप्रदर्शनेन तस्य खलत्वं समर्थितं स्वसुः सुतामिति सर्वथा विरुद्धकर्तृत्वमुक्तम् अपोथयत् प्रक्षाल्यमानवस्त्रमिव प्रक्षिप्तवान् शिला अङ्गणस्था यथा स्नानार्था भवति ननु सौहार्दमुभयविषयकं कथं त्यक्तवानित्याह—स्वार्थोन्मूलितसौहृद इति । स्वार्थमुन्मूलितं सौहृदं येन ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

बहव इति निर्दयत्वमुक्त्वा शङ्कमानाऽऽह—दैवेति । ममैवैतद्दुरदृष्टं तत्र को दोष इति भावः । प्रदीयतामित्यनेन त्वयापि मां शून्यक्रोडां मा कुर्विति दैन्यम् ॥ ५ ॥

अङ्ग, हे भ्रातः ! ॥ ६ ॥

एवमनेन प्रकारेणात्मजां स्वकन्यामेवेत्यर्थः । दीनदीनवत् दीनादपि दीनजन इव न तु तथा तस्याः स्वापत्यत्वाभावात् तां देवकीम् आचिच्छिदे आकृष्य जग्राह ॥ ७ ॥

अपोथयत् बलेन चिक्षेप ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अङ्ग हे भ्रातः ॥ ६ ॥

आत्मजामुपगुह्य दीनादपि दीनवद्रुदन्त्याः हस्तात् एवमुक्तप्रकारेण याचितोऽपि त्वामष्टमो गर्भो हन्तेति सामान्योक्त्या कन्यामपि ताम् आचिच्छिदे आकृष्य जग्राह आत्मजामिति आत्मजशब्दः औरसे यौगिकोऽपि पुत्रत्वेन परि-

सा तद्धस्तात्समुत्पत्य सद्यो देव्यम्बरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥
दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ।
धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥
सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ।
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥
किं मया हतया मन्द ! जातः खलु तवान्तकृत् ।
यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहीते तु रुढः जनकात्मजेत्यादिवत् मृगं प्रति पञ्चमे आत्मजविश्लेषेति भरतोक्तेश्च तथा च पुत्रो यशोदायाः पुत्रिका देवक्यास्तयोर्विनिमयात् अत एव नन्दस्यात्मजे इत्यादि योगाः सङ्गच्छन्ते ॥ ७ ॥

अपोथयत् प्रक्षालयवस्त्रमिव बलेन चिक्षेप ॥ ८ । ९ । १० । ११ ॥

---

### भाषा टीका ।

हे भ्रातः ! पावक सरी के दीप्तिवारे बुढ़ेरे पुत्र तैनें मार गेरे। और तेरोई कहा दोष है, दैवने प्रेरणा करी तब तूने मारे परंच अब तौ एक या पुत्री कों मोकों देदे ॥ ५ ॥

और देख मैं निश्चै तेरी छोटी बहिन हों दीन हों और मेरे सब पुत्र मारे गये तासों हे प्रभो ! पीछली संतान या छोरी कों तौ मो मन्दभागिनी के ताईं तूं देवे कूं योग्य है ॥ ६ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—देवकी या प्रकार छोरी को गोद में छिपाय कें दीन सों दीन होयके रोय कें कंस सों वा छोरी ( लड़की ) को मागती रही। पर वा खल ने फटकार कें देवकी के हाथ सें कन्या को छुड़ाय लीनी ॥ ७ ॥

और हाथकी भई अपनी बहिन की पुत्री ऐसी वा कन्या के चरणन कों पकड़ करकें कंस वाकों शिला पै पछाड़नो भयो, केवल एक अपने स्वार्थ के ताईं वाने सब सुहृदपने कों जड़सों उखाड़ कें फेंक दियो ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सद्य एव देवीभूत्वा ॥ ९—१०—११ ॥

कृपणानिति अन्यान् शिशून् हनिष्यसीति ज्ञात्वा वारयति पाठान्तरे मा मां कृपणां वृथाऽहिंसीर्हिंसितवानसीति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सा तद्धस्तादिति । सद्यः समुत्पत्य अधः क्षिप्यमाणापि वलादूर्ध्वमुत्प्लुत्य अत्र विशेषो भविष्योत्तरे "कंसासुरस्योत्तमांगे पादं दत्वा गता दिवम्" इति देवी दिव्यरूपा सती अदृश्यत कंसादिभिः सर्वैः तच्च निजोक्तौ कंसस्य विश्वासार्थं महाभुजत्वेन महाकायत्वं च विभीषिकार्थं श्रीविष्णोः श्रीदेवकीयशोदयोर्मनासि युगपत्प्रविष्टस्येति तस्यास्तदनुजात्वं साधितम् अनुजेति तदापि श्रीयशोदादि दंपतीद्वयस्यैकात्मतां बोधयति एवमात्मजामप्युक्तम् ॥ ९ ॥ १० ॥

सिद्धेत्याद्युपलक्षणम् ॥ ११ ॥

मन्द हे अल्पबुद्धे ! मया हतया इति यद्यहं हताप्यभविष्यमित्यर्थः यस्तवान्तं करिष्यति स यत्र कचिन्निश्चित्य वक्तुमनर्हे देशे जात इत्यतो मयाद्य त्वं न हन्यस इत्यर्थः । स तावत्कः ? इत्यपेक्षायामाह—पूर्वशत्रुः पूर्वजन्मनि यस्त्वां हतवानित्यर्थः । कृपणां देवकीं बन्धनादिना मा हिंसीः पतिसहितामेनां बन्धनान्मोचय धनादिकं च प्रत्यर्पयेत्यर्थः । कृपणानिति पाठे तद्धर्मेणान्यान् बालकान् तौ तत्सम्बन्धिनश्चेत्यर्थः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा विष्णोरनुजा कन्या तस्य कंसस्य हस्तात् समुत्पत्य ऊर्ध्वमुत्पत्य सद्य एव देवी स्वरूपं बिभ्रती सत्यम्बरमाकाशं गताऽधिष्ठिता अदृश्यत कंसादिभिर्दृष्टा बभूव कीदृश्यायुधैः सहिताश्च अष्टौ महान्तो भुजा यस्याः ॥ ९ ॥

दिव्यस्रगादिभिः भूषिता अम्बरं वस्त्रम् आयुधान्येव दर्शयन् विशिनष्टि—धनुरादीन् बिभर्तीति तथा ॥ १० ॥

तत उपाहृता समर्पिताः बलय उपायनानि यैस्तैः सिद्धादिभिः स्तूयमानेदं वक्ष्यमाणमब्रवीत् ॥ ११ ॥

तदेवाह—किमिति । हतयापि मया तव किं प्रयोजनं न किञ्चिदपि हे मन्द ! तवान्तकृत् नाशकृत्पूर्वशत्रुर्शरीरवाप्या पूर्वस्मिन्क शत्रुः यत्र कचित्प्रदेशे जात एव खलु त्वां ऊर्ध्वं जनिष्यमाणानपि शिशून् हन्यादिति तस्मादेव वारयति कृपणान् शिशून् वृथा मा हिंसीः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अदृश्यत जनेनेति शेषः ॥ ९—१० ॥
उरवः बलयः पूजा यैस्ते तथा तैः ॥ ११ ॥
त्वया हतया मृतया तव कोर्थ इति शेषः, कुत इत्यत्राह, जात इति खलु विचारशून्यस्त्वम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विष्णोरनुजेति च ॥ ९—११ ॥
हतया यद्यहं हताप्यभविष्यमित्यर्थः ॥ १२—१७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—सा तद्धस्तादिति । यदैव पापाणां प्रति प्रक्षिप्तवान् तदैव हस्तात्समुत्पत्य उत्पतनं कृत्वा सद्य एव सा देवतारूपा जाता ततः अम्बरं गता आकाशे श्येनवत् स्थिता कंसादिभिः सर्वैरेव तथा ऽदृश्यत तस्याः तथात्वे सामर्थ्यं विष्णोरनुजेति यशोदा देवकी परस्परविचारैणैकैव पश्चाच्च जाता यदि वा भगवान् यशोदासुतः यदि वा देवक्याः उभयथापि सा अनुजा लोकप्रसिद्धेः विष्णोरनुजात्वेन तथा सामर्थ्यं ज्ञापितं त्रिगुणां रूपमाह—सायुधाष्टमहाभुजेति । भगवत्कार्यं स्वकार्यं च करिष्यतीत्यष्टभुजात्वं भगवत्कार्यं देवक्यादीनां बन्धनिवृत्तिः स्वकार्यं सर्वेषां दुःखदानं धर्मनाशश्च भगवत्कृतिसिद्ध्यर्थम् आयुधसहिता अष्ट महाभुजा यस्याः ॥ ९ ॥

यथा भगवान् आविर्भावविपरीतं रूपं प्रदर्शितवान् एवमियमपि आविर्भावादिदानीं रूपान्तरं गृहीतवतीति तस्याः सामग्रीमाह—दिव्येति । दिव्याः स्रजो मालाः अम्बराणि वस्त्राणि दिव्यान्येव. आलेपश्चन्दनादिः रत्नयुक्तान्याभरणानि च एवमलङ्करणचतुष्टयसहिता । दर्शनकृतोऽयं क्रमः प्रथमतो गन्धात् अदृष्टाया अपि स्रजां प्रतीतिः ततो वस्त्राणां ततश्चन्दनाभरणानामिति । आयुधानि गणयति—धनुरिति । धनुर्वामभागहस्ते शूलमिषुश्च दक्षिणयोश्चर्म वामे असिर्दक्षिणे शङ्खो वामे चक्रं दक्षिणे गदा वाम इति गदान्तानि बिभर्तीति गदाधरा ॥ १० ॥

तस्याः स्वरूपं भगवत इव सर्वजनीनमिति ज्ञापयितुमाह, सिद्धचारणेति । सिद्धचारणगन्धर्वास्त्रिगुणाः अन्ये च अप्सरेरिति । "बहुलं छन्दसि" इत्यनेन ऐकपद्यं तु सुगमम् अस्याः षड्गोपजीवका एते. कंसदर्शन एव उपाहृता उरुबलयः पूजासाधनानि यैः बलिशब्दो जयजयादि शब्दानामप्युपलक्षकः अतस्तैः स्तूयमाना कंसवधं कर्तुं शक्ताऽहमिति ज्ञापयती इदं वक्ष्यमाणमब्रवीत् ॥ ११ ॥

इयमत्र वक्तव्यं कथं न हन्यते ? कथं वा रक्षार्थं न स्थीयते ? इत्युभयसमाधानं तदाह—किं मयेति । मया हतया किम् अहन्तु एननेऽप्यपकारं न करोति किं पुनरहता अत एतद्वृत्तान्ताज्ञानात् त्वं मन्दः अवधे हेतुः जातः खलु तवान्तकृदिति । यस्तु तवान्तं नाशं करिष्यति स तु जात एव क्वचित् यत्र क्वचिदिति विशेषाकथनं देवगुह्यम्, ननु, शत्रुत्वाविशेषेपि सामर्थ्ये विद्यमानेऽपि यद्भगवतैव हन्यते न त्वयेति को विशेष इति चेत्तत्राह–पूर्वशत्रुरिति । ममत्विदानीं भवान् शत्रुः तदप्यन्यबुद्ध्या भगवांस्तु भवतः पूर्वशत्रुः अतस्तेनैव हन्तव्यः आकाशवाण्यापि तथैवोक्तम् अतः कृपणां देवकीं मा हिंसीः तस्या वधे न कोपि पुरुषार्थः सिद्ध्येत अतो वृथैव मा हिंसीः ॥ १२ ॥



---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समुत्पत्य अधः क्षिप्यमाणापि बलादुत्प्लुत्य "कंसासुरस्योत्तमाङ्गे पादं दत्वा गता दिवम्" इति भविष्योत्तरम् अनुजा विष्णोरित्यनेन कृष्णस्य यशोदागर्भजत्वं सूचयति––सायुधाष्टेत्यादि कंसस्य भीषणार्थं स्वर्चाचि विश्वासोत्पत्त्यर्थं च ॥ ९ ॥ १० ॥ ११ ॥

मया हतया किमिति यद्यहं हताप्यभविष्यमित्यर्थः । यत्र । क्वचित् वक्तुमनर्हे देश इत्यर्थः । कृपणां देवकीं कृपणानिति पाठे अन्यान् शिशून् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृपणां गुप्तप्रभावां मात्रङ्कगतां मा माम् अहिंसीः हिंसितवानसि ॥ १२ ॥

---

भाषा टीका ।

परंच वो कन्या तौ वा कंस के हाथ सौं वाई समै ऊपर को उछल के आयुधन के सहित अष्ट भुजा वारी देवी हो करकें विष्णु की छोटी वहिन ऐसी देख परत भई ॥ ९ ॥

दिव्य मालान कूं धारण करें दिव्य वस्त्र पहिरें सुन्दर चन्दन को लेप कियें, रत्ननके आभरणन सों विभूषित, धनुष, शूल, बाण, ढाल, खड्ग, शंख, चक्र, गदा, इन आयुधन कों धारण कियें ॥ १० ॥

सिद्ध, चारण, गन्धर्व, अप्सरा, किन्नर, उरग, ये सब भेट लायके जाकी स्तुति कर रहे, ऐसी वो देवी कंस सों ऐसे बोलत भई ॥ ११ ॥

देवी बोली, कि—रे मन्द ! मेरे मारवे सें तोकूं कहा मिलेगो, तेरो नाश करन वारो पहिलो शत्रु तो जहां कहूं प्रगट होगयो, विचारे दीन गरीबन की हिंसा मत करै ॥ १२ ॥

---

इति प्रभाष्य तं देवी माया भगवती भुवि ।
बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥
तयाऽभिहितमाकर्ण्य कंसः परमविस्मितः ।
देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥
अहो भगिन्यहो भाम ! मया वां वत पाप्मना ।
पुरुषाद[(१)] इवापत्यं बहवो हिंसिताः सुताः ॥ १५ ॥
स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत् खलः ।
[(२)]काँल्लोकान् वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बहुनामनिकेतेषु वाराणस्यादिस्थानेषु ॥ १३ ॥

परमविस्मितः कथं दैवी वागनृता जातेति ॥ १४ ॥

भाम, हे भगिनीभर्त्तः ! पुरुषादो राक्षसो यथा स्वापत्यमेव हिनस्ति तद्वत् ॥ १५—१६—१७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रभाष्य आदिश्य भगवती पूर्वोदिष्टभगवत्प्रसादेनाधिकैश्वर्य-युक्ता सती बहुनामेति नानानामसु निकेतेषु नानानामत्वेन पूज्याभूदित्यर्थः ह हर्षे ॥ १३ ॥

विमुच्य कारागाराद्भिःसार्य्य विशब्देन रक्षिसङ्कोचाच्च निगडाद्मोचनमग्रे वक्ष्यति देवक्याः प्राग्विमोचनं स्त्रीणामेव तद्युक्तेः विशेषतो भगिनीत्वात् तस्या दुःखविशेषाच्च प्रश्रितः यद्वा तया अभिहितमाकर्ण्य तां तं च विमुच्य नम्रः सन्नब्रवीत् कीदृशो भूत्वा कन्याया आकस्मिकवैभवादि तादृशवाक्यैश्चात्यन्तविस्मितोऽभूच्चेति ॥ १४ ॥

अहो द्वयमार्त्तिसम्बोधने यत्र खेदे पुरुषादा हि पुरा स्वापत्यादा आसन् तत्रैकां राक्षसीं स्वापत्यमदन्तीं दृष्ट्वा देव्या कृपयोक्तम् इतः प्रभृति राक्षसबालाः जन्मत एव प्रवृद्धा भवन्त्विति ॥ १५ ॥

त्यक्तकारुण्यः बालानां भागिनेयानां निर्दोषाणां बहूनां वृथा मारणात् इति धर्मो नापेक्षित एव लोकश्च नापेक्षित इत्याह, त्यक्ताज्ञातयो देवकादयः सुहृदश्च बन्धवो भवद्रादयो येन सः अत एव खलः नु वितर्के कांल्लोकान् वै इति पाठे वै निश्चये मृतः सन् कान् लोकान् गमिष्यामि व्युतिरेके दृष्टान्तोऽयं ब्रह्महा यथा कांश्चिल्लोकान् न गच्छति तद्वच्च कांल्लोकान् गमिष्यामि न कानपि तस्य प्रसिद्धैर्महारौरवादिभिः प्रायश्चित्तपर्य्याप्तिर्न तु ममेति मम त्वन्याहतेऽप्योऽपि दुर्गतय इत्यर्थः । हे स्वसरिति दैन्यात् श्वसन्निति पाठे इह लोकेऽपि जीवन्मृत इत्यर्थः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहुनामनिकेतेषु नानासद्मेषु ॥ १४ ॥

भामः भगनीपतिः पाप्मना पापवता सुताः वामित्यन्वयः ॥ १५ ॥

मृतः श्वसन् जीवन्मृतः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थं तं कंसं प्रभाष्य सा भगवती पूज्या माया देवी भुवि बहुनामनिकेतेषु नानासंज्ञकस्थानेषु बहूनि पूर्वं भगवदुक्तानि दुर्गादीनि नामानि यस्यास्तथाभूता बभूव हेत्याश्चर्ये ॥ १३ ॥

ततस्तया माययाऽभिहितमाकर्ण्य कंसः सुतरां विस्मितः देवकीं वसुदेवं च विमुच्य निगडान्निर्मोच्य विनीत इदमब्रवीत् ॥ १४ ॥

तदेवाऽऽह—अहो इति सार्द्धैरष्टभिः । भगिनीपतिर्भावः पुरुषाद इव राक्षस इव राक्षसेनेवेत्यर्थः । विभक्तिव्यत्यय आर्षः । उपेत्य समीपमेत्य मया पाप्मना पापात्मना वां युवयोः बहवः सुताः हिंसिताः बतेति खेदे ॥ १५ ॥

स तु त्वत्पुत्रहन्ताऽहं तु त्यक्तं कारुण्यं येन त्यक्ता ज्ञातयः सुहृदश्च येन तथाभूत अत एव खलोऽत एव कांस्तु लोकान् प्राप्स्यामि नरकानपि न गमिष्यामि केवलं स्थावरतां गमिष्यामीति भावः । अत एव ब्रह्महेव श्वसन् जीवन्नपि मृतः मृततुल्यः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"माया भगवती दुर्गा" इतिशब्द आदिवचनः इत्यादीत्यर्थः "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इति यादवः ॥ १३ ॥

सतां स्वभावं दर्शयति—तयाभिहितमिति ॥ १४ ॥

बत खेदे बहवो राक्षसाः यत्क्रूरकर्म कुर्वन्ति सम्भूय तन्मयैकेन कृतमित्यतः पुरुषादैरिति बहुवचनम् ॥ १५ ॥

ब्रह्महा ब्राह्मणं हतवान् मृतः श्वसन् जीवन्मृतः ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमुक्त्वा गतेत्याह—इतीति । प्रकर्षेण भाषित्वा स्पष्टतया निरूप्य अनेन सम्वादान्तरमपि कंसेन सह कृतवतीति लक्ष्यते

(१) इवोपेत्य इति वीर० विज० । (२) हा कान् लोकान् इति विज० ।

मूलं हि विष्णुर्देवानां यत्र धर्मः सनातनः ।
तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥ ३९ ॥
तस्मात्सर्वात्मना राजन् ! ब्राह्मणान् ब्रह्मवादिनः ।
तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रूढपदो बद्धमूलः ॥ ३८ ॥

देवानां मूलं विष्णुः स च यत्र धर्मस्तत्राऽऽस्ते धर्मस्य मूलं वेदादय इति ॥ ३९ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तथापि देवेन्द्रोऽस्मदग्रमागन्ता तत्राह किमिति । ननु ब्रह्मा तत्सहायो भविता तत्राहुः—ब्रह्मणेति । तपःपरत्वेन विक्रमाभावात् तपो व्ययभिया शापाप्रवृत्तेश्च तेन सहायेनापि सता किमित्यर्थः मन्महे मन्यामहे ननु, देवा भीताः पलायिष्यन्त एव तत्राहुः तत इति । तेषां देवानां मूलस्य बालकरूपेणावतीर्य स्थितस्य गुप्तस्य विष्णोः खनने हिंसनेऽस्मान् नियुङ्क्ष्व ॥ ३७ ॥

ननु, गुप्तश्चेदसमर्थ एव स मम इति किङ्करिष्यति तत्राहुः—यथेति । कदाचिन्महोपद्यादिप्रभावेण तच्चिकित्सासम्भवमाशङ्क्य दृष्टान्तान्तरमाहुः—यथेन्द्रियेति । बद्धमूलत्वादेव महान् विवृद्धः सन् चाल्यते स्थानादुन्मूलयितुमपि न शक्यते किमुत हन्तुमित्यर्थः ॥ ३८ ॥

अथ मूलस्य तस्य गुप्तस्यापि हननोपायं सार्द्धश्चतुर्भिर्वदन्तो मूलत्वमेव तद्रहस्यविदामृषीणां वचनानुवादेनापि सपरिकरं निर्दिशन्तस्तद्धननमेव दृढीकुर्वन्ति मूलमिति हि वेदे प्रसिद्धं सनातनः अनादिसिद्धो वेदप्रसिद्धः नतूपधर्मादिरित्यर्थः । धर्मः अपूर्वः तपः स्वधर्माचरणं नित्यनैमित्तिकलक्षणं यज्ञशब्देन काम्यकर्माण्युपलक्ष्यन्ते सदक्षिणा इति तथैव साङ्गतया धर्ममूलतासिद्धेः ॥ ३९ ॥

अथ तथापि तस्य विष्णोरहोऽनुद्रवेऽपि तत्परिकरहननेनैव हननं स्यादित्याहुः—तस्मादिति । सर्वात्मना सर्वेणैव प्रयत्नेन हन्मः तेषां हननमेवास्माकं तद्धर्मोपमर्दकः परमो धर्म इति तान् हन्मानेवेत्यर्थः । हे राजन्निति तव प्रभावेणैव सुतरामेवेति भावः ब्राह्मणहनने हेतवः ब्रह्मेत्यादि तत्राद्ये स्वतो वेदादिनाशसिद्धेः गोहनने हेतुः हविर्दुघाः घृतादियज्ञीयद्रव्यप्रदाः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सापत्न्यान्नोपेक्ष्या इत्येतदेव सदृष्टान्तमुपपादयन्ति—यथेति । यथाऽङ्गे शरीरे समुत्पन्न आमयो व्याधिस्तावन्मूलियत्नं मूलोन्मूलनेनोपेक्षितोऽत एव रूढमूलः ततश्चिकित्सितुं प्रतिकर्तुं न शक्यते यथा च तावद्योगिभिरुपेक्षितः इन्द्रियग्रामस्ततो दुर्निग्रहस्तथा रिपुरपि तावदुपेक्षितस्ततो रूढबलश्चालयितुमपि न शक्यते तर्हि किं तत्सपत्नानां मूलं यदुच्छिनाशितव्यम् इत्यत्राहुः— मूलं इति । सनातनोऽनादिनिधनाविच्छिन्नसम्प्रदायवेदोपवेदबोधितो धर्मः वर्णाश्रमानुगुणो यत्र विष्णौ यच्छिष्यवधीनः स विष्णुर्देवानां मूलं रहस्सेवी स कथं छेत्तव्य इत्यत्राहुः तस्येति ब्रह्म वेदः गावश्च विप्राश्च गोविप्राः तप इति पृथक् पदं ब्रह्मादयस्तस्य विष्णोर्मूलम् इत्यनुषङ्गः ॥ ३८ ॥ ३९ ॥

तस्मात् हे राजन् ! सर्वात्मना नानोपायेन ब्रह्मवादित्वादिगुणयुक्तान् ब्राह्मणान् हविः सान्नाय्यं दुहन्तीति तथा तांश्च गाः हन्मः हनिष्यामः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेषां मूलोत्पाटने ॥ ३७ ॥

अङ्गे शरीरे आमयः कुष्ठादिः रूढं पदं व्याप्तं स्थानं येन सः ॥ ३८ ॥

कः साक्षात् मूलमित्यत्राह—मूलमिति । तस्य विष्णोर्मूलम् ॥ ३९ ॥

हन्मः हनिष्यामः हविर्दुघाः यज्ञयोग्यं घृतं दुहन्तीः छन्दसि हकारस्थाने घकारः ॥ ४०–४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथेति । बद्धमूलत्वेन महान् विवृद्धः सन् ॥ ३८ ॥
धर्मोऽपूर्वः तपः स्वधर्मः यज्ञाः काम्यधर्माः ॥ ३९ ॥
सर्वात्मना सर्वेणैव प्रयत्नेन ॥ ४०—४५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

देवेन्द्रस्तु यद्यपि वृत्रहा तथाप्यल्पवीर्यः अन्यथा वज्रादिप्रार्थनं कथं कुर्यात् ब्रह्मा यद्यपि महान् भवति तथापि ब्राह्मण एव तपस्वी एवं यद्यपि सर्वे देवा अप्रयोजकाः तथापि राजनीतिविचारेण ते नोपेक्ष्या इत्याह—तथापीति । देवानां दैत्यानां च सापत्न्यमस्ति कश्यपदायादाः सर्वे भिन्नमातृजाः ते शत्रव एव परस्परं भवन्ति अतः सहजत्वेऽपित्वात् यदैव ते पुष्टा भविष्यन्ति तदैव मारयिष्यन्तीति नोपेक्ष्याः क्षीणदशायामेव मारणीया अयमर्थो भवति नवेति विचारका जानन्ति वयं त्वेवं मन्महे एवं माहात्म्यं नीतिं चोक्त्वा किं कर्त्तव्यमित्याकाङ्क्षायामाहुः—तत इति । यदेव देवानां मूलं भविष्यति तस्यैव खनने नियुङ्क्ष्व आज्ञापय अनुव्रतानिति योगेन रूढ्या च सर्वे भवन्तमनुसृता वयं मूलमग्रे वक्तव्यं खननं च मध्ये उपेक्षा

विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ।
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनुः ॥ ४१ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

को दोष इति चेत्तत्राहुः–यथेति । आमयो रोगः ज्वरादिः अङ्गे आविर्भूतः तमनादृत्य यदि स्नानभोजनादिकं कुर्यात् तदा रूढपदः सन् चिकित्सितुं न शक्यते अङ्गमेव नाशयति सङ्क्षेपेनापि तज्जनितसन्निपाते चिकित्सा अशक्या अनेन सम्बन्धे विद्यमाने कथं मारणीया इति शङ्का निवारिता तेषां सर्वनाशकत्वात् इति लौकिकबाधकत्वेन निरूपितं वैदिकबाधकत्वेन दृष्टान्तान्तरमाह यथेन्द्रियग्राम उपेक्षित इति । योगिना परमपुरुषार्थे साध्ये इन्द्रिय समूहो नोपेक्षणीयः तेषामुपेक्षायाम् "इन्द्रियैर्विषयाकृष्टैः" इति न्यायेन सर्वनाशो भवति प्रथमं चेदिन्द्रियं पश्चान्निवारयितुमशक्यं यथैहिकामुष्मिकनाश एताभ्यां तथा सर्वनाशो देवैर्दैत्यानां तदाह–रिपुर्महान् बद्धबलो न चाल्यते । इति महान् स्वापेक्षयापि स्वरूपतः ते चेत् संबद्धबला भवन्ति तदा चालयितुमप्यशक्याः अतो नोपेक्षणीयाः ॥ ३७ ॥ ३८ ॥

मूलमाह–मूलं विष्णुर्हि देवानाम् इति । देवानां मूलं विष्णुः विष्णुप्रभवा देवाः सत्त्वगुणाधीनाः तस्याधिष्ठाता तु विष्णुः इमां युक्तिं हिशब्द आह, प्रकारान्तरेणापि देवानां मूलं विष्णुरित्याह–यत्र धर्मः सनातन इति । धर्मो यागादिः स तु देवतोद्देशेन द्रव्यत्यागात्मकः स केवलं वेदोक्तः सनातनः "तानि धर्माणि प्रथमान्यासन्" इति श्रुतेः । यज्ञाभावे देवानां भक्ष्याभावात् यज्ञो देवानां मूलं स च स्वदेवतानियाम्यः तस्य च देवता विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेः । न केवलं तस्य नियामकत्वं किन्त्वाधारत्वमपि, तदाह—यत्रेति । यत्र विष्णौ सनातनो धर्मः "धर्मस्य प्रभुरच्युतः" इति वाक्यात् तस्मात्-लौकिकवैदिकदेवानां मूलं विष्णुः तस्यापि मूलमाह—तस्येति, चकाराद्देवानामपि ब्रह्म वेदः गावो विप्राश्च तपो यज्ञाः सदक्षिणाः प्रमाणं वेदः हविरेकत्र मन्त्राश्चैकत्र । द्विविधो हि धर्मः प्रवृत्तिनिवृत्त्यात्मकः प्रवृत्त्यात्मको यज्ञः निवृत्त्यात्मकस्तपः सदक्षिणा इति दक्षिणा यज्ञस्य भार्या अनेन प्रवृत्तिधर्मत्वं तस्योक्तं पञ्चात्मको वा मूलत्वेन निरूपितः अनेन द्वयं मूलत्वेनोक्तं ब्राह्मणा गावश्च तत्र दुहन्त्यो गावः यज्ञकर्त्तारस्तपस्विनो वेदविदो ब्राह्मणाः ॥ ३९ ॥

तेषां खननमाह–तस्मादिति । सर्वात्मना लौकिकवैदिक साधनैः स्वतः परतः साक्षात् परम्परया च यथैव ते निवृत्ता भवन्ति. ब्राह्मणानां विशेषणं ब्रह्मवादिनः वेदवेदार्थविदः उभयविधं च कुर्वन्तीति तपस्विनो यज्ञशीलाश्च हविर्दुघाः पयोदोग्ध्रीः गाः हनधातोः लटि बहुवचनं हन्म इति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदपि क्षुद्रा अपि शत्रवो नोपेक्षणीया इति नीतिशास्त्ररीतिरनुसरणीयैवेत्याहुः—तथापीति ॥ ३७ ॥

रूढपदो बद्धमूलः ॥ ३८ ॥

धर्मःसनातन इति धर्म एव तं जीवयंस्तस्य मूलमित्यर्थः । तस्य धर्मस्य मूलं वेदादयः ॥ ३९ ॥

तेषामपि मध्ये ब्राह्मणवधेनैव सर्वं नङ्क्ष्यन्तीत्याहुः—तस्मादिति । किञ्च यज्ञानां कारणं हविस्तस्य गाव इति ताश्च वध्या इत्याहुर्गाश्चेति ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथापि शत्रूपेक्षा दोषावहा इत्याहुस्तथापीति ॥३७॥

रूढपदः बद्धमूलः सन् ॥ ३८ ॥

प्रथमतस्तु तव शत्रुः कन्यकावाक्याद्यत्र क्वचन जातस्तद्वधोपायस्तूक्त एव अथ मुख्यमिममुपायं शृण्वित्याहुः–मूलमिति । देवानां मूलं विष्णुः सच यत्र धर्मस्तत्र वसति तस्य धर्मस्य मूलं तु ब्रह्मगोविप्रादयः ब्रह्म वेदः ॥ ३९—४४ ॥

---

भाषा टीका

और इन्द्र तो विचारो अल्प वीर्य वारो करेगोई कहा । और रात दिन तप करन वारे ब्रह्मा से भी कछु नही होसके है। है तो बात ऐसें ई, तथापि आखर तौ देवता अपने वैरी हैं। ता सों उनकी उपेक्षा नहीं करनी चाहिये, ताई सों हम आपके अनुवर्त्तन में स्थित हैं, सो हम सबन को देवतान की जड खोदवे में आज्ञा करौ ॥ ३७ ॥

जैसे अंग में कोई रोग होवे, और मनुष्य वाकी उपेक्षा कर देवे तौ फिर वो अपनी जड जमाय लेवे है, और फिर वाकी चिकित्सा करनी अशक्य होजाय है। और जैसें योगि जन इन्द्रियन की उपेक्षा कर देवें तो फिर वे उन के वस की नहीं रहें हैं। ऐसेई वैरी जब अपनो बल बांध लेय और महान् होजाय है तब फिर वो चलायो नहीं चले है ॥ ३८ ॥

और देवतन की मूल जड तौ विष्णु है जामें सनातन धर्म रहे है। और वाके भी मूल रूप अर्थात् पुष्टिकरनवारे वेद, गौ, ब्राह्मण, तप, और दक्षिणान सहित यज्ञ हैं ॥ ३९ ॥

हे राजन्! तासों सर्व प्रकार सों वेदवादि ब्राह्मणन कों, यज्ञ करवे वारे तपस्विन कों, तथा हवि कों दोहन करनेवारी गायन कों हम सब लोग अब मारते हैं ॥ ४० ॥

स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ।
तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ।
अयं वै तद्वधोपायो यदृषीणां विहिंसनम् ॥ ४२ ॥

श्रीशुक उवाच ।

एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः ।
ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४३ ॥
सन्दिश्य साधुलोकस्य कदने कदनप्रियान् ।
कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

॥ ४१ ॥

किञ्च विप्रादयो हरेरेव तनवो यस्मात्तस्मादयमेवोपाय इत्याहुः, अयमिति ॥ ४२ ॥ ४३ ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न केवलं ते विष्णोः परिकरा अपि तु तनुनिर्विशेषाः अपीति पूर्ववदनुवदन्ति—विप्रा इति । "तपः स्वधर्माचरणं सत्यं यथार्थभाषणम्" इति साधारणधर्माः दमादयः प्रायो निवृत्तिधर्माः क्रतवश्च प्रायः प्रवृत्तिधर्मा इति विवेचनीयं पूर्वतोऽत्राधिक्येन दमादीनामुक्तिस्तद्वतामप्यृषीणां जिघांसया तनूरित्येकत्वं समाहारप्राधान्येन तनुरिति ह्रस्वान्तपाठो न वहुत्र ॥ ४१ ॥

एवं तद्धनने सति देवतान्तरहिंसा तु पिष्टपेषणमेवेत्याहुः—स हीति—स हि स एव तथा असुरद्विडपि स एव द्वितीयो हि शब्दः प्रसिद्धौ तर्हि कथमसौ साक्षादेव न हिंस्येत तत्राहुः गुहाशयः सर्वेषां हृदयवासत्वात्तस्मान्नि पृथिव्यां जातत्वेऽपि गुप्तत्वादसौ न दृश्यते अन्यथा जीयतैवेति भावः तस्मात् पूर्वयुक्तिमेव संक्षिप्योपसंहरन्ति—अयमित्यर्द्धेकेन । गुप्तत्वाद्वालयवालेष्वपि प्रायो नैव प्राप्यः गावस्त्वत्र दुग्धादिना राज्यजीविका अपि भवन्ति तेषां धर्ममूलत्वमप्येषामेव हिंसयाऽप गच्छेदित्यभिप्रेत्याहुः-ऋषीणामिति । ब्रह्मवादिप्रभृतीनामेव तद्वधोपाय इत्यस्य तु अयं भावः पूर्वं खलु धर्मस्य तज्जीविकात्वेनैव तदाश्रयत्वमुक्तं तस्य च वेदादयो मूलानि अतस्तत्तनुतुल्या एव ते तत्र च विप्रास्तेषामप्याश्रयाः ततस्तस्य दुर्गपतेरिव गुहाशयस्य तदाश्रयमूलजीविकास्थानहिंसयैव हिंसा स्यादिति ॥ ४२ ॥

स्वतो दुर्मतिः पुनश्च दुर्मन्त्रिभिः सह सम्मन्त्र्य हितमिति हितामिति वा पाठः ॥ ४३ ॥

कदने निमित्ते ॥ ४४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुहाशयः हृदयगुहानिगूढः ॥ ४२—४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्रादयो हरेस्तनूः शरीरम् ॥ ४१ ॥

स हि विष्णुः सुराणामध्यक्षोऽधिपतिः असुरान् द्वेष्टीति तथाभूतश्च हृदयगुहानिगूढः स विष्णुरेव मूलं यासां तथाभूताः सेश्वरा इन्द्रादिलोकपालैः सहिताः चतुर्मुखरुद्रसहिताश्च सर्वा देवताश्च एवं सत्ययमेव तस्य विष्णोर्वधोपायः, कोसौ ? यदृषीणां विहिंसनमित्येषः यद्वा तद्वधोपायः देववधोपायः ऋषिविहिंसनेन तच्छरीरे विष्णौ नष्टे सति तन्मूला देवाः स्वयमेव नङ्क्ष्यन्तीति भावः ॥ ४२ ॥

इत्थं दुर्मन्त्रिभिः सह सम्मन्त्र्य आलोच्य स दुर्मतिरसुरः कंसः कालपाशेन यमपाशेनावृतो ऽतएव ब्रह्महिंसामेव हितं मेने अमन्यत ॥ ४३ ॥

ततः साधुजनस्य कदन उपद्रवे निमित्ते तत् कदनमेव प्रियं येषां तान् कामरूपधरान् दानवान् दिक्ष्वाज्ञाप्य स्वयं गृहमाविवेश ॥ ४४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं विष्णुमूलत्वेन ब्राह्मणगवां निराकरणं निरूप्य भगवच्छरीरत्वेनाप्येतान् निरूपयन्ति—साक्षान्निराकरणाय विप्रा इति । विप्रा गावः चकाराद्न्यान्यप्यङ्गानि वेदाः चकारात्तङ्गानि व्रतानि वा "तपः सत्यं दमः शमः" इति ब्रह्मचर्याद्याश्रमधर्माः तपः शारीरो धर्मः सत्यं वाचः दमः इन्द्रियाणां शमोन्तःकरणस्य श्रद्धा सर्वत्र दया च सर्वेषु तितिक्षाऽतिक्रमसहनम् एवं दशविधतो दशावतारः क्रतवः असङ्ख्याताः ज्योतिष्टोमादयः एते सर्वे सर्वदुःखहर्त्तुर्भगवतस्तनूस्तन्वः तस्माद्विष्णौ प्रयत्नः प्रतिष्ठितः ॥ ४१ ॥

उपसंहरन् तस्य मूलत्वमाह–सहीति ।"मुख्ये कार्यसम्प्रत्ययः" इति न्यायात् गौणानां देवानां निराकरणं व्यर्थं पूर्वोक्तन्यायेन सर्वसुराणां विष्णुरेवाध्यक्षः प्रभुः किञ्च अन्ये देवाः तथा असुरान् न द्विषन्ति कदाचित्सहभावोऽपि लक्ष्यते हरिस्त्वसुरद्विडेव मारयितुमपि न शक्यते साक्षाद्यतो गुहाशयः गुहे अन्तःकरणे वा तिष्ठतीति अध्यक्षत्वं च न लौकिकप्रभुवत्

ते वै रजःप्रकृतयस्तमसा मूढचेतसः ।
सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ४५ ॥
आयुः श्रियं यशो धर्म्मं लोकानाशिष एव च ।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां दशमस्कन्धे ऽसुरमन्त्रणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

किन्तु मूलभूतोऽप्यस्तीत्याह–तन्मूला हीति । स्त्रीलिङ्गप्रयोगः अवगणानार्थः महादेवस्य ब्रह्मणश्च स्वतन्त्रतामाशङ्क्याहुः—सेश्वराः स चतुर्मुखा इति । अतो विष्णोः प्रतीकारः कर्त्तव्यः प्रतीकारश्च ऋषीणां निराकरणमेवेत्याह—अयमिति । ऋषिपदेनैव सर्वे धर्मा उक्ताः ॥ ४२ ॥

एवं तेषां वचनं श्रुत्वा किं कृतवानित्याकाङ्क्षायामाह–एवमिति । नन्वयं क्षत्रियः ब्राह्मणरक्षकः कथं ब्रह्महिंसां हितत्वेन मेने तत्राह दुर्मन्त्रिभिरिति । एते दुष्टा मन्त्रिणः पर्यवसानदोषदर्शनाभावात् तैः सह सम्यक् मन्त्रणं कृत्वा दुर्मतिर्जातः बुध्या हि सर्वनिर्णयः बुद्धिनाशकस्तु दुःसङ्गः तत्रापि मन्त्रित्वेन गृहीतः अत एव ब्रह्महिंसां स्वस्य हितत्वेन मेने, ननु, दुस्सङ्गेपि कथं स्वाभाविको भावः अन्यथा जात इतिचेत्तत्राह–असुरः कालपाशेनावृतश्च असुरत्वात् स्वभावदुष्टः कालपाशावृतः आपद्ग्रस्तः आपदि सर्वबुद्धिनाशो भवति तत्रापि कालपाशपदाभ्यां महती आपदा निरूपिता ॥ ४३ ॥

एवं बुद्धिभ्रंशे जाते यत् कृतवांस्तदाह–सन्दिश्येति । साधुलोकस्य कदने पीडायां कदनप्रियान् स्वतोपि कदनेच्छून् कदनकरणार्थं तत्साधकनानारूपधारकान् दशादिक्षुदयादिश्य स्वविषये अन्यविषये च कामरूपधराणां सर्वत्रैव सामर्थ्यसम्भवात् दानवानिति क्रूरान् राक्षसमात्रे दानवपदप्रयोगः स्वगृहमाविशत् यथा उपद्रवे कश्चित् प्रभोः स्थाने गतः दर्शनमेव न प्राप्नुयात् एतदर्थं गृहे प्रवेशनम् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्राह्मणवध एव तस्य शरीरपातो भावीत्याहुः—विप्रा इति ॥ ४१ ॥

ऋषीणां विहिंसनमिति सर्वमूलस्य विष्णोरपि मूलत्वादिति भावः ॥ ४२—४४ ॥

---

भाषा टीका ।

विप्र, गौ, वेद, तप, सत्य, दम, शम, श्रद्धा, दया, तितिक्षा, और यज्ञ, ये ही सब तौ हरि के शरीर हैं ॥ ४१ ॥

वो जो विष्णु है सोई सर्व देवतन कों अध्यक्ष है, और असुरन को द्वेषी तथा सबन के हृदयरूप गुहा में शयन करने वारो है । और महादेव तथा ब्रह्मा सों आदि ले करकें जितने देवता हैं वे सब विष्णुमूलक ही है ॥ और वा विष्णु के वध को येई उपाय मुख्य है, कि– ऋषीन कों पीडा देनों और उनकी हिंसा करनी ॥ ४२ ॥

श्रीशुक उवाच ।

श्री शुकदेव जी बोले, कि– वो दुर्मति कंस ऐसे दुष्टमंत्रीन के साथ में सलाह करकें वेद वा ब्राह्मणों की हिंसाई को अपनो हित मानतौ भयो, काहे सों, कि– वो असुर वा समे काल के पाश के वश में हो गयो ॥ ४३ ॥

कंस भी हिंसा विहारी यथेष्टरूपधारी दानवन कों साधुजनो की हिंसा के निमित्त आज्ञा देकर कें अपने गृह में प्रवेश करतौ भयो ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आरात्समीपमागतो मृत्युर्येषां ते ॥ ४५ ॥

सतां विद्वेषो न मृत्युमात्रहेतुः किं तु बह्वनर्थकारीत्याह आयुः श्रियमिति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी

रजःस्वभावत्वात् कुपथगामिबुद्धयः उद्रिक्तेन तमसा च साधुदर्शितमपि सत्पथमपश्यन्तः विद्वेषफलमाह—आरादित्यादिना ॥ ४५ ॥

लोकान् धर्मसाध्यस्वर्गादीन् आशिषः निजवाञ्छितानि आयुरादीनां यथोत्तरं श्रेष्ठत्वं किं पृथङ्निर्देशेन सर्वाण्यपि श्रेयांसि साध्यसाधनानि पुंसः साधिताशेषपुरुषार्थस्यापि जनस्य महतां

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तादृशां श्रीविष्णोरप्युपजीव्यशीलत्वेन प्रसिद्धानाम् अतिक्रमो वाचनिकाद्यनादरोऽपि ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

महदतिक्रमः महतामतिक्रमः ॥ ४६ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
शुकपक्षीये श्रीसुदर्शनसूरिकृते
चतुर्थेऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ते दानवाः रजसा विक्षिप्तस्वभावास्तमसा विमूढमावृतं चेतो येषामत एव ते सतामेव विक्षेपणमप्रीतिं दुःखमिति यावत् चेरुश्चक्रुः, कथम्भूताः? सन्निहितमृत्यवः सद्विक्षेपणस्य मृत्युसान्निध्यावहत्वादिति भावः ॥ ४५ ॥

न केवलं मृत्युमेवावहन्त्यपित्वायुरादीन्यपि हन्तीत्याह–आयुरिति। महदतिक्रमः महद्विषयापचारः पुंसामपचरतामायुरादीनि सर्वाणि श्रेयांसि हन्ति नाशयति श्रीः सम्पत्तिः धर्मः पुण्यं लोकाः धर्मप्राप्यफलानि यद्वा देहानुबन्धिनो जनाः आशिषः कामाः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आरात्समीपे ॥ ४५ ॥

विष्णवादिमहदतिक्रमफलमाह–आयुरिति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥
( विजयध्वजतीर्थरीत्या पञ्चमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतिक्रमो वचसाऽपि ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ते च ततोऽप्यधिकं कृतवन्त इत्याह—वै निश्चये न ते स्वभावत एव रजःप्रकृतयः राजसाः क्रूरा भवन्ति अङ्ग तु केवलं पुनस्तमसा मूढं चित्तं येषां पूर्वसिद्धविवेकनाशार्थं तमः रजस्तमोभ्यां व्याप्ताः सात्त्विकान् द्विषन्त्येव अतः सतां विद्वेषं विशेषेण द्वेषो यस्मात् तादृशमुपद्रवं धर्मं धनादि नाशनरूपम् आ समन्ताच्चेरुः कृतवन्तः अनेन तेषां स्वरूपतः अन्तःकरणनाशात् धर्मतश्च उपद्रवं कृतवन्त इत्युक्तं भवति ननु स्वाम्याज्ञाप्ताः अधिकं किमर्थं कृतवन्तस्तत्राह आरादागतमृत्यव इति मृत्युग्रस्तास्तथा कृतवन्तः विकलो ह्यन्यथा करोत्येव ॥ ४५ ॥

मायैवैतत्कारितं सर्वनाशार्थमिति ज्ञापयितुं महदतिक्रमस्य फलमाह—आयुः श्रियमिति । जीवानां षडुत्तमा गुणाः तदभावे प्राणी अकृतार्थः स्यात् तत्र प्रथममायुः जीवतो हि सर्वं भवति ततः श्रीः रूपष्टस्तस्या उपकारः ततो यशः कीर्तिस्ततोऽप्यन्तरङ्गधर्मः तैः साध्या लोकाः स्वर्गादयः तत्र लोके सर्वा एवाशिषः चकारादैहिका अपि पुत्रादयः एवकारेण सर्वेषामेवाशीष्टं प्रदर्शितम् अतो यस्य यदभीष्टं तदेव नाशयतीत्युक्तं भवति अन्यथा गणिताश्चेत्तस्याभीष्टा न भवेयुस्तदा इष्टमेव चेष्टितमिति महदतिक्रमः किं कुर्यात् अतो यत्किञ्चिदेवाभीष्टं तदेव हन्ति लोकसिद्धास्तु गणिताः अनुक्तसर्वसंग्रहार्थं सर्वाणीति पुंस इति स्वगन्धस्यापि महतो भगवदीयस्य अतिक्रमः उल्लङ्घनं महत्त्वं भगवत्सम्बन्धादेव अन्यथा मात्रप्रमाणस्य कथं महत्त्वं स्यात् एवं भगवच्चरित्रसिध्यर्थं मायाकार्यं निरूपितम् ॥ ४६ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
चतुर्थाध्यायविवरणम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भीतं राजानमाश्वासयति—आरादित्यादिना ॥ ४५—४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थो दशमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आरादन्तिके आगतो मृत्युर्येषां ते आसन्नमृत्यव इत्यर्थः ॥ ४५ ॥

न केवलं सद्विद्वेषस्य मरणमात्रं फलमपित्वायुरादीनां बहुपदार्थानां संक्षय इत्याह–आयुरिति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थोऽध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

वे भी रजोगुणीप्रकृतिवारे तमोगुण से मोहितचित्त जिनको देखे वे सब दैत्य लोग सज्जनों के साथ विद्वेष करन लगे। काहे सों, कि-अब उनकी मृत्यु निकट आय पहुची ॥ ४५ ॥

महज्जनों के साथ वैर करवे को फल केवल मृत्यु मात्र नहीं है किन्तु महान् पुरुष को जो अपराध है सो पुरुष के आयु, श्री, यश, धर्म, और वा धर्म सों संपादन किये जो स्वर्गादि लोक, और नाना प्रकारके मनोरथ सों प्राप्त होवे वारी सम्पदन को तथा सर्व श्रेयनको नाश कर देवे है तात्पर्य यह है, कि-भगवदपराधसर्वनाश को हेतु है यामें तो कहनोंई कहा परञ्च भगवत्सम्बन्धसों जिन जीवन को महत्व प्राप्त भयो है [ अर्थात् स्वतः तो जीव अणु ही है ] तिन के अपराध से तो जो जो जा जा अपराधी पुरुष को अभीष्ट है तिन सर्व अभीष्टन कों नाश हो जाय है। यही मूल में सर्व श्रेय पद सों विवक्षित है ॥ ४६ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें चतुर्थ अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्त ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

———:०:———

## ॥ पञ्चमोऽध्यायः ॥



श्रीशुक उवाच ।

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
(१)आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलङ्कृतः ॥ १ ॥
वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ।
कारयामास विधिवत्पितृदेवार्चनं तथा ॥ २ ॥
धेनूनां नियुते प्रादाद्विप्रेभ्यः समलङ्कृते ।
तिलाद्रीन् सप्त रत्नौघशातकौम्भाम्बरावृतान् ॥ ३ ॥
कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ।
शुद्ध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे जातकं नन्दः सूनोः कृत्वा महोत्सवम् ।
गत्वाऽथ मथुरां प्राप वसुदेवागमोत्सवम् ॥ १ ॥

महामना उदारचित्तः ॥ १ ॥ २ ॥

नियुते द्वे लक्षे सप्त तिलपर्वतांश्च प्रादात्, कथम्भूतान्? रत्नौघैः रत्नसमूहैः शातकौम्भाम्बरैः सुवर्णरसाक्तैरम्बरैश्चावृतान् ॥ ३ ॥

द्रव्याणां गोहिरण्यादीनां मध्ये केषाञ्चिद्दानैरेव शुद्धिर्यथा तथाऽन्नदानादियुक्तजातकर्मादिसंस्कारैरेव गर्भाणां शुद्धिरिति दर्शयितुं प्रतिनियतानि शोधकानि दृष्टान्तत्वेनोदाहरति—कालेनेति । कालेन भूम्यादि, स्नानेन देहादि, शौचेनामेध्यलिप्तादि, संस्कारैर्गर्भादि, तपसा इन्द्रियादि, इज्यया ब्राह्मणादि, दानैर्द्रव्याणि संतुष्ट्या मनः आत्मा आत्मविद्यया इति ॥ ४ ॥

—

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्दस्त्विति युग्मकम् । नन्दयति जगदिति श्रीनन्दस्य यथार्थसञ्ज्ञत्वं दर्शयन् तुशब्दोक्तैश्वर्यज्ञानप्रधानात् श्रीवसुदेवादपि शुद्धवात्सल्यरीत्या सौभाग्यभरमभिव्यञ्जयति—आत्मजेत्यादिना, कुरूद्वहेत्यन्तेन । अतः श्लाघिष्यते च राज्ञा "नन्दः किमकरोद्ब्रह्मन्नित्यादिभ्याम्" आत्मज इति । अत्रात्मजत्वमुत्पन्नत्वमात्मजत्वेनोत्पन्नत्वमित्यर्थत्रयं प्रत्येकान्वयाभ्यां व्यज्यते नीलोत्पलवत् तत्रान्यथाप्रतिपत्तिनिरासार्थं तत्रात्मजत्वं पुत्रभावेनात्मनि प्रादुर्भूतत्वमेव नान्यत् तदुक्तम्—"आविवेशांशभागेन मन आनकदुन्दुभेः" । "ततो जगन्मङ्गलमच्युतांशम्" इत्यादिवच्छ्रीनन्दयशोदयोरपि गम्यते—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥

इत्यादेः "भक्तिरेवैनं गमयति भक्तिरेवैनं दर्शयति" इत्यादेश्च श्रुतेस्तथ "भक्त्याऽहमेकया ग्राह्यः" इति श्रीभगवदुक्तेश्चाराद्भाविष्यते तादृश प्रेमास्पदतया परमपुरुषार्थरूपाय तत्प्राकट्याय सततमन स्त्वलक्षणभक्तेरावश्यकत्वात् श्रीनारदपूर्वजन्मनि श्रीध्रुवप्रह्लादादिषु च दृष्टत्वात् तत् क्रतुन्यायेन "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति श्रीभगवदुपनिषत्प्रामाण्येन च तत्प्राकट्य विशेषाय तद्विशेषस्य चापेक्षितत्वात् अनयोरेतादृशभक्तिदृ दर्शनं तु ब्रह्मवरे करिष्यते एतदेवाह—महामना इति । अस्य तादात्म्यापत्त्या महान् श्रीकृष्ण एव मनो यस्य तद्धारणसामर्थ्य महन्मनो यस्येति वा "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः" इत्युक्तानुसारेण महामनस्त्वं सर्वश्रे मुख्यं यच्चौदार्यादयोऽपि गुणा अन्तर्भवन्तीति उपलक्षणञ्चैतत् श्री यशोदाया अपि वक्ष्यते च "नन्दः किमकरोद्ब्रह्मन् श्रेय एवं महोदयं । यशोदा च महाभागा" इति तदेवमनयोस्तयोश्चात्मनि तत्त्व जातत्वे समानेऽपि फलेन फलकारणमनुमीयत इति न्यायेनाति विशेषः तयोश्चतुर्भुजत्वेन अनयोः द्विभुजत्वेनेति अयोत्पन्न नाम च बहिस्ताद्दृश्यप्राकट्यमेव नतु जीववत् प्रकारान्तरं तथा नयोस्तयोर्निर्विशेषमेव आत्मजत्वेन पुत्रतयोत्पन्नत्वे त्वस्ति विशे षोऽपि प्रेरणां विनैव पुत्रत्वव्यञ्जिकया ऽऽकृत्या प्रकृत्या चानयोः प्राकट्यात् तयोस्तु पुत्रत्वाप्रत्यायिकाया तथा तथा प्राकट्यात् तत्तु युक्तम् अनयोरेव प्रीतेः शुद्धपितृभावमयत्व दुरूहत्वाच्च तच्च नन्दस्त्वित्यादिना तु शब्दव्यक्तवैशिष्ट्य

(१) वेदज्ञान् इति वीर० ।

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत्र दर्शयते परपरत्र च वर्णयिष्यते तयोस्त्वैश्वर्यज्ञानाच्छन्नमेव विदितोसीत्यादिना तद्दर्शितं तद्दशभावं विना तु श्रीवराहदेवस्य न ब्रह्मपुत्रत्वेन श्रीकृष्णदेवस्य च नोत्तरा पुत्रत्वेन प्रसिद्धिः तयोस्तस्य तस्य नाभिमानोऽपि तस्मात् सर्वांशेन श्रीनन्दस्यात्मजत्वेनोत्पन्नोऽसौ क्रियया त्वन्यास्पृष्टतयैव वक्ष्यते आहूयेत्यादिग्रन्थेन अत एव श्रीमता गर्गेणात्रैव प्रधानता वक्ष्यते च "प्रागयं वसुदेवस्य क्वचिज्जातः तवात्मजः" इति श्रीब्रह्मणाऽपि स्वपुरुषार्थता समर्थयिता "नौमीड्यते" इत्यादौ "पशुपाङ्गजाय" इति सर्वतो वैशिष्ट्येन भगवता श्रीशुकदेवेन च "नायं सुखापो भगवान् देहिनां गोपिकासुतः" इति आगमविद्भिरपि "सकललोकमङ्गलो नन्दगोपतनयो देवता" इति. तस्मात् "नन्दस्त्वात्मज उत्पन्ने" इत्येवोक्तं नतु नन्दस्तमात्मजं मत्वेति अतोऽत्र मायाजन्म च श्रीवसुदेवादौ व्याजमात्रायैव तत्राप्यस्यैवान्तरङ्गत्वज्ञातं तस्या मातुरुदरान्तरे स्थितिरस्य तु हृदय इति तदेवं समानमातृकत्वेनैव विष्णोरनुजात्वेन सा प्रोक्ता तदेवं स्थिते यदा स्वाविर्भूतचतुर्भुजरूपाच्छादनाय श्रीदेवकीच्छा जायते तदा यशोदाहृदयस्थद्विभुजरूपस्य तद्रूपाच्छादनपूर्वकाविर्भावस्तत्रासीदिति गम्यते अत एव "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः" इति स्वप्रोक्तसमाधानार्थं श्रीगर्गेण पुनर्वक्ष्यते "बहूनि सन्ति रूपाणि नामानि च सुतस्य ते" इति । अथ पूर्ववद्गर्गवाक्येन च श्रीनन्दयशोदयोरभिमत्या सिद्धान्तगत्या च श्रीकृष्णो निजात्मजत्वं मुख्यत्वेनैव स्थापितं देव्यां तु तत्तदात्मनानुभूतं वृत्तं निश्चिन्वत्योः श्रीवसुदेवदेवक्योस्तत् तदभावात् उपगुण्यात्मजामित्यस्मिन्निव न गौणत्वेनेति विवेचनीयं तदेवं सिद्धान्ते स्थिते महोत्सवानुकूल्येन तदेव प्रथयिष्यामः । पुत्रे चोत्पन्ने जाताह्लाद इति न केवलं पुत्रो जातः किंत्वाह्लादोऽपि जात इति सहोक्तिः पुत्रव्याजेनाह्लाद एव जात इत्युत्प्रेक्षा स्वतः सम्भविवस्तुना व्यज्यते तेन चाह्लादस्य प्राचुर्यं ध्वनयत इत्यालङ्कारिकाः एतच्च महोत्सववैशिष्ट्ये हेतुः विशेषतः प्रान्ति पूरयन्ति कामानिति विप्रास्तान् तत्रापि वेदज्ञानजातकर्मादि वैदिकविधिसम्यग्विदः श्रोत्रियान् "यावतीर्वै देवताः सर्वास्ता वेदाविदि ब्राह्मणे वसन्ति" इति श्रुतेः । शुचिः वैष्णवतिलकाचमनादिना विशेषतः पवित्रः सन् जातकर्म "भूयास्त्वपि" इत्यादिमन्त्रैर्मेधाजननादिकर्ममयं वैदिककर्मविशेषं तैर्विप्रैः प्रयोज्यकर्तृभिः कारयामास तेषामेव तत्र कर्तृत्वाभिधानात् तत्र च "कर्मफलं प्रयोक्तरि" इति न्यायात् फलं तस्यैव वै इति पाठे तच्च प्रसिद्धमेवेत्यर्थः । विधिना यथाविधीत्यर्थः । विधिवदिति क्वचित्पाठः अस्य यथापेक्षं पूर्वैः परैश्च सर्वैरन्वयः चार्थे तथापितृदेवार्चनं च नान्दीमुखश्राद्धेन कारयामासेत्यनेन स्वयमकरणमुक्तं तत्र च जाताह्लाद इत्यनेनानन्दजाड्यमेव हेतुरुक्तः यद्वा तथाप्यत्र तदाम्रेडिताद्यवष्टम्भेन चकारेत्यर्थः ॥ १ ॥ २ ॥

नियुते धेनुतिलचाणि एतच्च द्वादशाध्याये प्रकटीकरिष्यामः तत्र क्षीरस्वामिकारिकायां दिग्दर्शनं यथा "एकं दशशतसहस्रायुतं प्रयुतावयवलक्षमथ नियुतम्" इति सम्यगलङ्कृते यथोक्तरौप्यखुरस्वर्णशृङ्गादिभूषिते तिलाद्रिपरिमाणादिकमुक्तं भविष्योत्तरे

"उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिमतः ।
त्रिभिः कनिष्ठो राजेन्द्र ! तिलशैलः प्रकीर्तितः ॥
पूर्ववच्चापरं सर्वं विष्कम्भं पर्वतादिकम्" ॥

तच्चोक्तं तत्रैवादौ धान्याद्रिप्रसङ्गे "इत्थं निवेश्यामरशैलमग्र्यमतस्तु विष्कम्भगिरीन् क्रमेण । तुरीयभागेन चतुर्दिशं च संस्थापयेत्पुष्पविलेपनाढ्यान्" इत्यादि ते च मन्दरादयश्चत्वारः तथा तत्रैव "मेरुर्महान् व्रीहिमयस्तु मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् । पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः ॥ पश्चाच्च गारुत्मतनीलरत्नैः सौम्ये च वैडूर्यसरोजरागैः । ब्रह्माथ विष्णुर्भगवान् पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ॥ किञ्च "शुक्लाम्बराण्यम्बुधरावली स्यात् पूर्वेण कृष्णानि च दक्षिणेन ॥ वासांसि पश्चादथ कर्बुराणि रक्तानि चैवोत्तरतो घनानि" इत्यादि द्रोणसंख्या चोक्ता "खारीद्रोणाढकप्रस्थाः कुडवं च पलं पिचुः । शाणाकौ मासकश्चेति यथा पूर्वं चतुर्गुणाः" इति एवं षट्पञ्चाशदधिकपलशतद्वयेनैव द्रोणः स्यात् तदेवाभिव्यञ्जयंस्ततोपि वैशिष्ट्यमाह–रत्नौघेति । शातकौम्भाम्बराणृतत्वं सुमेरोर्वर्णस्यापि साहश्याय ततः पूर्वेऽप्योऽन्यान्येतानि तादृशानि सप्तबहुलरत्नादियुतान् प्रकर्षेण पादप्रक्षालनादिपूर्वकं निजजनैस्तत्तत् गृहेषु तत्तत्प्रस्थापनादिप्रकारेणादात् ॥ ३ ॥

ननु, यद्यानन्दजडोऽभूत्तर्हि स्वयं कर्तुं कालविलम्बं कथं न कृतवान् ? उच्यते पुत्रप्रेम्णैवेत्याह—कालेनेति । तत्रदृष्टान्तैर्यथा कालं गर्भशुद्धेरावश्यकत्वमभिप्रेतम् अन्यस्तैः अत्र भूम्यादीत्यध्याहृतानि द्रव्याणि अर्थाः गर्भशुद्धेर्दार्ष्टान्तिकत्वं द्रव्यशुद्धेस्तु दृष्टान्तत्वं पूर्वस्यैव साध्यत्वात् अतस्तथाशब्देन पूर्वेण यथेति गम्यते यथा तथेति पाठश्च क्वचित् भूमिशुद्ध्यादीनां तूपादानं दृष्टान्तपोषणार्थमेवेति व्यञ्जितं यद्वा कालादिभिर्द्रव्याणि भूम्यादीनि शुद्ध्यन्त्येव आत्मा तु आत्मविद्यया स्वरूपज्ञानेनैव किंवा भगवद्भक्त्यैव न त्वन्यथा अत एव द्रव्याणीत्यनेन गृहीतस्याप्यात्मनः पृथङ्निर्देशः तस्य तु श्रीमत्परात्परब्रह्मणा स्वयं भगवता पुत्रतया जायमानेनैव सद्यो जगदपि शोधितं तथापि तेन परमप्रेम्णैव तत्कृतम् इति सर्वेषां मादृशां च महासुखदमिति भावः ॥ ४ ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—३ ॥

प्रसङ्गात् द्रव्यशुद्धिहेतूनाह—कालेनेति कालश्चोदितकालः ॥

४—८ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं "तस्यां रात्र्यां व्यतीतायाम्" इत्यादिना मथुरायां प्राभातिक वृत्तान्त उक्तः अथ व्रजे तद्वृत्तान्तमाह—नन्द इत्यादिना तत्र आरम्भेत्यन्तः प्राक्तनेन । आत्मजे उत्पन्ने सति जात आह्लादो यस्य महदौदार्यप्रवणं मनो यस्य तथाभूतो नन्दो वेदज्ञान् ब्राह्मणानाहूय स्वयं स्नातः शुचिरलङ्कृतश्च ॥ १ ॥

ततः स्वस्त्ययनं माङ्गलिकं सूक्तं वाचयित्वा यथाविधि जातकर्म कारयामास तथा पितॄणां देवानां चार्चनं कारयामास ॥ २ ॥

ततः सम्यगलङ्कृते द्वे धेनूनां नियुते लक्षे विप्रेभ्यः प्रायच्छत्तथा रत्नौघैः शातकौम्भाम्बरैः सुवर्णरजतादिभिः

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

सुवर्णनिष्कैरम्बरैर्वा दक्षिणार्थं निहितैरावृतान् सप्त तिलपर्वतान् प्रादात् ॥ ३ ॥

किमर्थमेवं स्नानादि कर्म अकरोत् कारयामास प्रादाच्च ? इत्यत्राह–कालेनेति। आत्मा आत्मविद्ययेति दृष्टान्तार्थं यथाऽऽत्मविद्यया परमात्मोपासनया आत्मा प्रत्यगात्मा शुद्धचति हेयगन्धरहितो भवति तथा द्रव्याण्यपि कालादिभिरेव शुद्धन्ति इत्यभिप्रायेण तच्छुद्धयर्थमकरोदित्यर्थः । द्रव्यशब्दोऽत्रानुबन्धिगेहदेहापत्यदेवतापशुहिरण्यादिवित्तधान्येन्द्रियाभिप्रायकःतत्र कालेन दशदिनात्मकेन गेहस्य शुद्धिः स्नानशौचाभ्यां देहस्य जातकर्मादिसंस्कारैरपत्यस्य तपसा मन्त्रजापेनेज्यया च गृहदेवतायाः दानैः पशुहिरण्यधनधान्यानां सन्तुष्टचा मनम इति विवेकः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवदवतारहृष्टमनसो नन्दस्य भगवद्भक्त्यतिशयेन चित्तविभ्रमो सद्भक्तानां भगवद्भक्तिश्चन्द्रोदय इव समुद्रवृद्धिः स्वाभाविकीति प्रकाश्यतेऽस्मिन्नध्याये, जाताह्लादः प्रादुर्भूतानन्दः ॥ १ ॥

स्वस्त्ययनं माङ्गल्यवचनं तथापि पितृदेवगन्धर्वाद्यर्चनं कारयामास नन्दयामास ॥ २ ॥

शातकौम्भाम्बरावृतान् गर्भीकृतशान्तकुम्भान् ॥ ३ ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मज इति पुत्रीभूत इत्यत्र व्याख्यास्यते पूर्वमेव महामनाः श्रीकृष्णाविष्टचित्तः अधुना तु तस्मिन्नेव आत्मजे जाते जाताह्लाद इत्यादिभिः आविवेशांशभागेन मन इत्यादि साम्यं बोधयन्नपि मानवैशिष्ट्यं बोधयति—कारयामासेति । आनन्दजाड्यात् ॥ १ ॥ २ ॥

धेनूनामिति नियुतमत्र शतगुणितमयुतं ज्ञेयम्“एकं दश सहस्रमयुतं प्रयुतारुयलक्षमथ नियुतम्”इति चीरस्वाम्युक्तेः विलम्ब्य कथं स्वयं न कृतवान् उच्यते ॥ ३ ॥

पुनरेतमेवेत्याह—कालेनेति । द्रव्याणि भूम्यादीनि तत्र भूमेः कालेनत्यादि ज्ञेयम् ॥ ४—६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं चतुर्भिरध्यायैर्जन्म विष्णोर्निरूपितम् ।
हेतुधर्मोत्तराङ्गैश्च राजसादिगुणैर्युतम् ॥
सप्तसप्ततिभिः कृत्यं हरेरत्र निरूप्यते ।
भगवान् स्वेन धर्मैश्च सप्तथैकादशेन्द्रियैः ।
कृत्यं चकार यस्माद्धि ततस्तावद्भिरुच्यते ॥
त्रिविधानि च कर्माणि त्रिविधानां हिताय हि ।
तत्रातिक्रमणे रोधस्तामसे राजसे भवेत् ॥
कालातिक्रमणे शिष्टे कालस्तत्रैकविंशतिः ॥

“द्वादशमासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंशः इति श्रुतेः” ।—

लौकिकेषु तु धर्मेषु यत्रैव हरिवेशनम् ।
निवर्तते तदेवात्र वहृर्हारुमयं यथा ॥
स्वभावस्यान्यथाभावो न वै शक्यः कथञ्चन ।
अतस्त्रिविधजीवेषु त्रिविधा भगवत्कृतिः ॥
लौकिकं तामसे मुख्यं कामान्ता च कृतिः स्फुटा ।
कामोद्भूते तथा प्रीतिस्तेनादौ तन्निरूप्यते ॥
बाललीला मध्यलीला प्रौढलीला तथैव च ।
कामलीलेति लोके वै चतस्रः सुखदाः स्मृताः ॥
एकं भगवतः कार्यं बहूर्थानां च साधकम् ।
प्रपञ्च विस्मृतिः सर्वा तदा सक्तिश्च वर्यते ॥
येनैव त्रिविधा भक्ता न स्मरन्ति जगत् क्वचित् ।
कृष्णे च सन्नतात्मानस्तत्कार्थं भगवत्कृतम् ॥
बाललीला सप्तविधा प्रथमं सा निरूप्यते ।
बालभावरता ये हि तेषां रोधस्ततो भवेत् ॥
उत्सवाविष्टचित्ता ते येप्याश्चर्याभिवेशिनः ।
अलौकिका रता येऽपि ये चोपद्रवणोत्सुकाः ॥
स्त्रीस्वभावरता ये वै ये च तत्वे च लौकिके ।
सर्वोद्योगपरा ये च तेषां रोधो निरूप्यते ॥
जन्मोत्सवो हरेरत्र पञ्चमे विनिरूप्यते ।
आवश्यकं परित्यज्य कृतं तदिति सूच्यते ॥
अन्यथा ज्ञानशक्ता च तेनैव विनिवार्यते ।
उत्सवस्त्वन्यथा न स्यात् द्रव्यानयनमेव च ।
आसक्तिबोधनार्थाय तस्यान्ते भयवर्णनम् ॥

पूर्वं यशोदाशयने सुतं निधाय तत्सुतामादाय पुनर्गृहानगादित्युक्तम्। “जातं परमबुध्यत”इति च ततो मायायां निर्गतायां यशोदा प्रबुद्धा पुत्रं ज्ञातवतीः ततः सर्वेषु ज्ञापितेषु यदासीत्तदाह, नन्द इति । पितुः पुत्रः अतो नन्दः जातकर्म कारयामासेति सम्बन्धः तुशब्दः पूर्वकथां व्यावर्तयति शङ्काञ्च व्यावर्तयति तदाह आत्मजः उत्पन्न इति यस्य यथा प्रतीतिस्तथैव शुकेनानूद्यते भगवता तथैव तेषां बुद्धेः सम्पादनात् अन्यथा तत् भगवच्चारित्रं न स्यात् अतः आत्मनः सकाशाज्जातः पुत्र एवायमिति नन्दस्य बुद्धिस्तदाह–आत्मज उत्पन्न इति । वासुदेवोऽप्येवाविर्भूत इति सिद्धान्तः । अन्यथा केवलमायाजनितं स्तन्यं भगवान्न पिबेत् सिद्धवत्कारेण च शुको न वदेत् अन्तःकरणप्रतीत्यापि पुत्रोऽयमिति निश्चयार्थमाह–जाताह्लाद इति । यद्यपि पुत्रजन्मज्ञान एवाह्लादः तथाप्यन्यथाज्ञानमपि भवेदिति तद्व्यावृत्त्यर्थं जन्मैव निमित्तत्वेनोक्तं रूपान्तरेऽपि स्वीकृते भनुभावो ऽवर्जनीयो भवत्येव अतः प्राकृतोऽपि नन्दः महामना जातः प्राकृतानामल्पमेव मनो भवति अल्पकार्यकारि महान्मदत्कार्यकारि मनो यस्य महान्तमुत्सवं करिष्यामीति सोऽपि विधिपूर्वकः कर्तव्य इति ब्राह्मणाकारणं कृतवानित्याह–ब्राह्मणेति । विशेषेण प्रान्तीति तेषां पूरकत्वमुक्तम् अन्यथार्थनाशकत्वेन ते निन्दिताः स्युः उत्सवे तेषामाकारणे हेतुमाह–वेद

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ज्ञानिति "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः। सर्वदेवतासान्निध्ये हि महानुत्सवः तत्र विहितानि कर्माण्याह—स्नात इत्यादि स्नानं नैमित्तिकं सूतकसम्भावनायामाह—शुचिरिति। अन्यथापि शुद्धिं सम्पादितवान् अलङ्कृत इति अलङ्करणं शुभसूचकं विशिष्टालङ्कारे उत्सवः सर्वजनीनो भवति ॥ १ ॥

सर्वकर्मस्वादौ स्वस्तिवाचनं जातकर्मेति कर्म नामधेयं क्षत्रियवैश्ययोरन्यद्वारा करणं विधिः पुरोहितशाखानुसारेण आत्मजस्येति पुत्रे यो विधिः भगवान् स्वस्मिन् पुत्रत्वं प्रकटितवानिति वैदिककर्मणां सार्थकत्वं गार्भिकबैजिकदोषाभावकीर्तनं च तथैव नैमित्तिको वा आत्मसंस्कारपक्षः भगवच्चरित्रमेवेदमिति सिद्धान्तः पितृदेवार्चनं नान्दीश्राद्धं तथा विधानपूर्वकं युगलेन संस्कारनिरूपणं प्रवृत्तिमार्गनिष्ठत्वाय ॥ २ ॥

महामना इति विशेषणस्य कृत्यमाह—धेनूनामिति। नियुतं लक्षं लक्षद्वयमपि प्रत्येकमलङ्कृतं भगवत्सांनिध्यात् द्रव्यक्रियाणां न परिक्षयः विप्रेभ्य इति समुदायेन दानं संकल्पमात्रव्यावृत्त्यर्थमाह—प्रादादिति। विशेषणापूरकत्वात् नाप्यपि परिक्षयः तिलाद्रीन् तिलपर्वतान् रत्नौघानिति पृथक् रत्नानामोघः समूहो येष्विति वा शातकौम्भेन सुवर्णेनाम्बरैश्चावृतान् अर्थेषु तिला मुख्याः गावो हिरण्यं वासांसि तिला रत्नानि चेति पञ्चानां दानं सर्वाण्येव सर्वदैवत्यानि ॥ ३ ॥

बहुदत्तमिति शङ्कां वारयितुं तस्य ततोऽपि बह्वस्तीति वदन् शुद्ध्यर्थमप्येतावद्दातव्यं भवतीति वदन् समानैरन्यैः कालादिभिः सह द्रव्यं निरूपयति—कालेनेति। कालादिना प्राणिनः सर्वे शुद्ध्यन्ति नव शोधकानि तत्र कालो मुख्यः सर्वं कालोद्भवमिति उत्पन्नः पुत्रः शतं वर्षाणि जीवति तत्र दशदिशानि षट्त्रिंशच्छतानामेको भागो भवति संपूर्णे काले तावान् कालस्त्वशुद्धः एवं द्रव्याण्यपि ज्ञातव्यानि जननादौ कालेनैव शुद्धिः न स्नानादिना वंशशुद्धिजनकः कालः स्नानं संपूर्णदेहशोधकं शौचमेकदेशस्य लौकिकव्यवहारार्थं त्रिधेयं शुद्धिः अदृष्टाद्युत्पत्त्यर्थं त्रिधा शुद्धिमाह संस्कारैर्जातकर्मादिभिः देहो वैदिककर्मार्थं संस्कृतो भवति एतेषां भूतसंस्कारकत्वमेव तपस्त्वन्तःकरणशोधकम् अदृष्टोत्पत्तिद्वारेति केचित् इज्या यागः तेन भगवान् सन्तुष्यति एवमाधिभौतिकस्याध्यात्मिकस्याधिदैविकस्य च संस्कारकाणि त्रीणि निरूपितानि एवं षड्भिरपि सर्वे शुध्यन्ति बहिः शुद्धिमाह—दानैरिति। दानैर्द्रव्याणि शुद्ध्यन्ति दानव्यतिरेकेण द्रव्याणां न शुद्धिः वित्तानुसारेण च दानम् अतो लक्षद्वयं दानं गवां शुद्ध्यर्थमेव अल्पानि प्राप्तानि सन्तुष्ट्यैव शुद्ध्यन्ति अतो द्रव्यशुद्धौ द्वयमुक्तं आत्मा तु जीवः आत्मविद्ययैव शुद्ध्यति सोऽहमस्मीत्यादिरूपया ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

कृष्णजन्मोत्सवो दातुं फरं श्रीमथुरागमः।
नन्दस्य वसुदेवेन संलापः पञ्चमेऽभवत् ॥

नन्दस्त्वति तुकारेण वसुदेव आत्मजे उत्पन्ने जाताह्लादोऽपि कंसभयात् सङ्कुचितमना जातकर्मादिकं कर्तुं न प्राभूत् नन्दस्तु आत्मजे उत्पन्ने जाताह्लादो महामना अतिविस्तृतमनाः स्वस्तिवाचनपूर्वकं जातकर्म कारयामासेति तुकारादेवैतन्मात्रे वसुदेवार्द्धे प्राप्ते नन्दग्रहेऽपि कृष्णस्योत्पत्तिः श्रीमन्मुनीन्द्राभिप्रेताऽवगम्यते "गर्भकाले त्वसम्पूर्णे" इति पूर्वोक्तेर्वैशम्पायनसम्मतापि न च तुकारोऽत्र पादपूर्णार्थं इति वाच्यं "नन्द आत्मज उत्पन्ने जाताह्लादो महामनाः" इति विनापि तुकारेण पादपूर्त्तेः। नच तदपि तुकारोऽनर्थक एव आत्मनो जात आत्मजस्तस्मिन्निति जनिधातुप्रयोगादेवाभीप्सितसिद्धेरिति वाच्यम् "उपगुह्यात्मजामेवम्" इत्यत्रानौरसापत्येऽप्यात्मजशब्दप्रयोगात् किञ्च नाडीच्छेदात्पूर्वमेव जातकर्मोपक्रमश्रवणात् नाडीच्छेदश्च गर्भजत्वं विना कथं सम्भवेत् ? किञ्च कृष्णस्य नन्दपुत्रत्वे खलु नैकधा प्रयोगाः किन्तु बहव एव नते सर्वे एवामुख्यार्थीभवितुमर्हन्ति तथाहि "अहदयतानुजाविष्णोः" इति "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः" इति "नौमीड्य ! ते" इत्यादौ "पशुपाङ्गजाये" इति देहिनां गोपिकासुत" इति गौतमीये "वल्लवीनन्दनं वन्दे" इति क्रमदीपिकायामपि "देवतासफललोकमङ्गलो नन्दगोपतनयः समीरितः" इति। मन्त्रेऽपि "नन्दपुत्रपदं गतम्" इत्यादयः केचित्तु कृष्णस्य वसुदेवपुत्रत्वयादवत्वसखत्वरुक्मिणीकान्तत्वादिभ्योऽपि प्रेममिश्रसम्बन्धमूलकेभ्यः सकाशात् नन्दपुत्रत्वसुबलसख्यगोपीकान्तत्वानि प्रेमैकमूलकानि कृष्णस्य नन्दाद्यतिवश्यत्वव्यञ्जकान्यार्थवचनपरदर्शनेन महानुभावसहस्रानुभवेन च परमोत्कृष्टानीत्यतस्तादृशभावतारतम्येनैव तत्तद्व्यपदेशतारतम्यमन्यथा वराहदेवस्य ब्रह्मपुत्रत्वं कृष्णस्य चोत्तरागर्भगतत्वेनोत्तरापुत्रत्वमपि प्रसिद्ध्येतेति श्रुवाणा यशोदागर्भजत्वाभावमेव स्वाभीष्टसाधकं मन्यन्ते न च नन्दयशोदयोः कृष्णे स्वपुत्रत्वं बुद्ध्यैव तत्रापि सम्बन्धस्योपाधित्वं वाच्यं नहि वस्तुशक्तिर्बुद्ध्या पराहन्यत इति न्यायात् नहि निर्हेतुकः प्रेमाहेतुबुद्ध्यैव सहेतुको भवति न हीश्वरे जीवबुद्ध्येश्वरो जीवो भवति किन्तु कृष्णस्य मृद्भक्षणादावनृतभाषणस्यापि सत्यत्वमिव कृष्णस्य प्रियपरिकराणामपि ज्ञानभावादेरनृतस्यापि सत्यत्वमात्मारामैरप्युपादेयत्वमुपास्यत्वं प्रेमपदत्वं चेति सिद्धान्तः। जाताह्लाद इति पुत्रेण सहाह्लादोपि जात इति सहोक्त्यलङ्कारः पुत्रव्याजेनाह्लाद एव जात इत्युत्प्रेक्षा च कारयामासेत्याह्लादोत्थजाड्येन स्वयङ्करणासामर्थ्यात् ॥ १—२ ॥

नियुते विंशतिलक्षाणि "एकं दशशतसहस्राण्ययुतं प्रयुतान्यलक्षमथ नियुतम्" इति क्षीरस्वामी। तिलाद्रिपरिमाणमुक्तं भविष्योत्तरे—

"उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिर्मतः।
त्रिभिः कनिष्ठो राजेन्द्र ! तिलशैलः प्रकीर्तितः" ॥

द्रोणसङ्ख्या च—

"खारीद्रोणाढकप्रस्थाः कुडवश्च पलम्पिचुः।
शाणको मासकश्चेति यथापूर्वं चतुर्गुणाः" ॥

इति ॥ ३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

आवश्यकस्य विविधदानादियुक्जातकर्मणो गर्भशोधकस्य प्राक् बालकस्य दृष्टान्तान् दीपकालङ्कारेणाह–कालेनेति। कालादिभिर्द्रव्याणि शुद्ध्यन्ति तत्र कालेन वस्त्रादीनि स्नानेन देहादीनि शौचेनामेध्यलिप्ताङ्गादीनि संस्कारैर्गर्भादीनि तपसा इन्द्रियादीनि इज्यया ब्राह्मणादीनि दानैर्धनादीनि सन्तुष्ट्या मनः आत्माऽऽत्मविद्यया परमात्मनः स्वरूपानुभवेन जीवः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीनन्दं श्रीयशोदां च बालं वन्दे तयोर्मुदा।
तत्प्रियां श्रीमतीं सर्वं गोपीगोपगवादिकम् ॥
चतुर्भिर्वर्णितं जन्म वसुदेवगृहे हरेः।
अथान्यद्दुष्करं दिव्यं श्रीनन्दोत्सवपूर्वकम् ॥
संसारतापशान्त्यर्थं भुक्तिमुक्तिप्रदं नृणाम्।
सपञ्चत्रिंशताध्यायैर्व्रजे कर्मापि वर्ण्यते ॥
"जन्मकर्म च मे दिव्य"मित्युक्तं हरिणा स्वयम्।
तद्द्वयं मोक्षमिच्छद्भिः श्रोतव्यं परमादरात् ॥

श्रीवसुदेवेन भगवदिच्छयैव सुज्ञाततत्त्वेन भगवत्स्वरूपगुणादिवर्णनमात्रतः पूजयित्वा श्रीनन्दगृहे भगवान् संस्थापितः इत्युक्तं श्रीनन्दस्तु पूर्वोक्तरहस्येन स्ववेश्मनि प्रविष्टं पुत्रवत्सलतयाऽऽराधितवानित्याह—नन्दस्त्विति। जातः आह्लादः दैहिकहर्षलिङ्गो यस्य सः महामनाः प्रफुल्लितान्तःकरणः स्नातः शुचिः कटककुण्डलादिभिरलङ्कृतः विप्रानाहूय स्वस्त्ययनं मङ्गलं सूक्तं वाचयित्वा आत्मजस्यापत्यस्य यथाविधि जातकर्म कारयामास पितृदेवार्चनं तथा विधिवत् कारयामासेति द्वयोरन्वयः ॥ १–२ ॥

धेनूनां नियुते बद्धे रत्नौघैः शातकौम्भाम्बरैः सुवर्णरसाकैरम्बरैश्चावृतान् सप्त तिलाद्रींश्च विप्रेभ्यः प्रादादित्यन्वयः ॥ ३ ॥

जातकर्मादिसंस्कारैरपत्यशुद्धिरिति दृष्टान्तैरुपपादयति–कालेनेति। अत्रापत्यमित्यध्याहृत्य द्रव्याणि यथाकालादिभिर्यथायथं शुद्ध्यन्ति तथा संस्कारैः जातकर्मसंस्कारैरपत्यं शुद्ध्यतीत्यन्वयः। तत्र कालेन भूम्यादि स्नानेन देहादि शौचेन प्रक्षालनसङ्घर्षणादिरूपेण अमेध्यलिप्तादि तपसेन्द्रियादि इज्यया ब्राह्मणादि दानैर्न्यायार्जितसुवर्णाम्बरादि सन्तुष्ट्या मनः आत्मा जीवः आत्मविद्यया परमात्मोपासनया ॥ ४ ॥

---

भाषा टीका।

श्रीनन्दगोपप्रियात्मजाय नमः ॥

या पञ्चम अध्याय के विषैं सब जगत् सों अधिक श्रीनन्द गोकुल के भाग्य के उत्कर्ष को, और नन्दजी ने अपने पुत्र को जातकर्म करवाय वार्षिक कर देवे कों मथुरा में जाय राजा को कर चुकाय वसुदेवजी सों मिले इतनी कथा को वर्णन हैं ॥ तहां प्रथम श्रीशुक मुनीन्द्र ने अठारह श्लोकन में लोकोत्तर श्रीयशोदानन्दन के जन्म के परम आह्लाद सों श्रीनन्दमहोत्सव को वर्णन करयो है—या जो इतनी बात जानवे की है, कि–साक्षात् परात्पर अखिलाधीश जो परब्रह्म परमात्मा हैं वे तो काहे कों काहू के लौकिक पुत्र हो सकें? काहे सों, कि—आपके जन्म कर्म ही दिव्य हैं। और आप ही को वाक्य है, कि–"पिताऽहमस्य जगतो माता धाता पितामहः" तब जो सकल जगत् को पिता पितामह स्वतः सिद्ध है, वो पुत्र कैसे होय सकै, पर प्रेम के वश होय वेतें जो वाकों प्रेम नें अपनो पुत्र मान लेवे तिनहीं को पुत्र होसकै है। तहां लीला चरितन सों तौ देखवे में आवे है, कि जैसो कछु वात्सल्य श्रीनन्दयशोदा को है, तैसो श्रीवसुदेव देवकी को नहीं है। काहे सों, कि–वात्सल्य को विरोधी ऐश्वर्य ज्ञान है सो श्रीवसुदेव देवकी को ऐश्वर्यज्ञान मिश्रित वात्सल्य रह्यो ॥ और श्रीनन्द यशोदा कों तौ आप के ऐश्वर्य देखवे पै भी "ये मेरे पुत्र को औत्पत्तिक प्रभाव है" ये सोई स्थिर भाव रह्यो, कबहूं कृष्ण में सिवाय अपने पुत्र पने के ईश्वर पने की गन्ध न भई। तासों प्रभुके विषैं पुत्र पने के भाव में श्रीनन्द यशोदा कछु इकीस रहे। और याई वात्सल्यभाव में श्रीवसुदेव देवकी कछु उन्नीस रहे। परंच प्रभु ने जन्म को अनुकरण जो कछु थोरो बहुत कियो सो तौ केवल मथुरा में श्रीदेवकी मात्र ही में, गोकुल में श्री यशोदा में नहीं। ऐसो श्रीभागवतजी के प्रचरन सों सिद्धान्त प्रतीत होवै है ॥

अब श्रीशुकदेवजी महाराज परम हर्ष में होयके श्रीनन्द महोत्सव को वर्णन करें हैं—

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–हेराजन्! मथुरा में विचारे वसुदेवजी ने तौ पुत्र जन्म के उत्सव को सुख न पायौ पर नन्दरायजी तौ पुत्र के उत्पन्न भये पै बडेई आल्हाद को प्राप्त भये, और बड़े उदारचित्त होयकें दैवज्ञ (ज्योतिष जाननवारे) ब्राह्मणन को बुलायके स्नान करत भये और शुद्ध होयके सब वसन भूषणन कों धारण करत भये ॥ १ ॥

ऐसे अलङ्कृत होयकें ब्राह्मणन सों स्वस्तिवाचन करवायके अपनें पुत्र को विधिपूर्वक जातकर्म करावत भये तथा देवतन को और पितृन को पूजन करावत भये ॥ २ ॥

और ब्राह्मणन कों भली भांत अलंकार पहिराय दो लक्ष गायन कों अलंकृतकर के देत भये। और रत्नन के समूह सों और सुनहरी जरी के वस्त्रन सों ढके भये ऐसे सात तिलन के पर्वतन कों भी ब्राह्मणन कों देत भये ॥ ३ ॥

गौ सुवर्ण आदि द्रव्यन की शुद्धि जैसे दान से होवे है तैसेई अन्नदानादि सहित जात कर्मादिक संस्कारन सोंई गर्भन की शुद्धि होवें है, या बात जनाव ने के श्रीशुकदेवजी द्रव्यन की शुद्धि बतावें हैं, कि—काल, सों स्नान और शौच सों, तथा संस्कारन सों, तप सों, इज्या सों और दान करबे सों द्रव्यन की शुद्धि होवे है और आत्मा की शुद्धि आत्मविद्या अर्थात् ब्रह्म विद्या सों होवे है ॥ ४ ॥

---

सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः ।
गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ ५ ॥
व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः ।
चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ॥ ६ ॥
गावो वृषा वत्सतरा हरिद्रातैलरूषिताः ।
विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ ७ ॥
महार्हवस्त्राभरणकञ्चुकोष्णीषभूषिताः ।
गोपाः समाययू राजन्नानोपायनपाणयः ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सौमङ्गल्यगिरः स्वस्तिवाचका विप्रादयो बभूवुः तत्र" सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" ॥ ५ ॥

संमृष्टानि संसिक्तानि च द्वाराण्यजिराण्यङ्गणानि गृहांतराणि गृहमध्यानि च यस्मिन् स तथा चित्रध्वजेषु पताकानां स्रजश्च चैलपल्लवतोरणानि च तैर्भूतः ॥ ६ ॥

हरिद्रातैलैः रूषिता लिप्ताः विचित्रधातवश्च बर्हस्रजश्च वस्त्राणि च काञ्चनमालाश्चालङ्कारतया विद्यन्ते येषां ते तथा भूता गवादयो बभूवुरित्यर्थः ॥ ७ ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भेर्यं आनकभेदाः सुषिरभेदाश्च दुन्दुभयश्च आनकभेदाश्च युग्मत एव हस्ताभ्यां काष्ठीद्वयेन वाद्यन्तेते नेदुः स्वयमेव मुहुरित्यस्य सर्वैरन्वयः हर्षभरेण तेषां तत्र तत्राऽऽवृत्तेः ॥ ५ ॥

संशब्दाभ्यामन्यदिनतो विशेषो बोध्यते चैलानि खण्डितवस्त्राणि अन्यत्तैः तत्र पताकानां स्रजो मालाकारेण सन्निवेशाः भूषित इत्यध्याहारात् यद्वा स्रजः पुष्पमालाः चित्राणि विविधानि यानि ध्वजादीनि तैः समभ्यस्त ॥ ६ ॥

चकारौ पूर्वैर्तुल्यप्रतिपादिकौ तेन महिष्यादयोऽप्युपलक्ष्यन्ते वृषावत्सतरा इति पाठः क्वचित् ॥ ७ ॥

तदेवं सर्वस्यैव गोकुलस्य श्रीनन्दयशोदे प्रति परमानुरागं दर्शितवान् दर्शयति च—महार्हेति सप्तभिः । सम्यगाययुरिति स्वस्वगृहे तत्तन्मङ्गलरचनां प्रवर्त्यैवाययुरित्यर्थः व्रजः संमृष्टेत्युक्तत्वात् सम्यक्त्वमेव दर्शयति परमहर्षव्यञ्जकाभ्यां महार्हेत्यादिविशेषणाभ्यां महार्हैर्बहुमूल्यैर्निधिवत् गृहान्तः सुरक्षितैरपि वस्त्रादिभिर्भूषिताः सन्तः यान्येव परमोल्लासेन दास्यन्ते च नानोपायनैर्महार्हरत्नादिभिर्युक्ताः पाणयो येषां ते राजन्निति श्लेषेण हे प्रेम्णाविराजमान यद्वा राजादिष्वुपायनविशेषणं गोपा इति गवासक्त्या तत्स्वभावमापन्नया जात्यैव सुस्निग्धचित्ता इति भावः श्लेषेण तत्र च तादृशतत्प्रेम्णा गां पृथ्वीमपि पान्तीति पक्षमप्रेऽपि ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा विप्राः सौमङ्गल्यगिरः स्वस्तिपाठका बभूवुः सूतादयो गायकाश्च जगुः पुराणादीनिति शेषः तत्र सूताः पौराणिकाः मागधाः वंशावलीपाठकाः वन्दिनः स्तुतिपाठकाः भेर्यो दुन्दुभयश्च मुहुर्मुहुर्नेदुः ॥ ५ ॥

संमृष्टानि सम्मार्जिन्या शोधितानि संसिक्तानि चन्दनोदकादिभिः सम्यक् स्नापितानि द्वाराण्यजिराण्यङ्गणानि गृहान्तराणि गृहमध्यानि च यस्मिन् तथाभूतो व्रजो बभूव तथा विचित्रध्वजादिभिरलङ्कृत इति शेषः । ध्वजादीनामितरेतरयोगद्वन्द्वः चित्रपदं प्रत्येकान्वयि द्वन्द्वादौ श्रुतत्वात् ॥ ६ ॥

गवाद्यो हरिद्रातैलाभ्यां रूषिताः उपलिप्ताः विचित्राः गैरिकादिधातवश्च एषां सन्तीति तथाभूता बभूवुः तत्र बर्हस्रजो मयूरपिञ्छमालाः महार्हाण्यनर्घाणि वस्त्रादीन्येव भूषणान्यलङ्कारा येषां भूषिता इति पाठे तैर्भूषिता अलङ्कृताः उपायनानि पाणिषु येषां तथाभूता गोपाः हे राजन् समाययुराजग्मुः ॥ ७–८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वकृतस्तुतिपाठकाः सूताः परकृतस्तुतिजीविनो मागधाः प्रबन्धस्तुतिपाठका वन्दिनः ॥ ५ ॥

द्वारश्च अजिरं च गृहान्तरश्च द्वाराजिरगृहान्तराणि संमृष्टानि संशोधितानि संसिक्तानि चन्दनजलादिना प्रोक्षितानि द्वारादीनि यासां तास्तथा चित्रध्वजपताकया स्रक्चैलपल्लवैश्चैवयुतास्तोरणा यासां तास्तथा ॥ ६ ॥

विचित्रधातवः बर्हस्रजः पिञ्छमालावस्त्राणि काञ्चनमालाश्च येषां सन्तीति विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ ७ ॥

महार्हाणि महामोल्यानि वस्त्राणि आभरणानि कञ्चुकानि

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कवचानि उष्णीषाणि शिरोवेष्टनवस्त्राणि भूषणानि येषां ते तथा ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रसङ्गान्नन्दस्य माहात्म्यमुक्त्वा अग्रे वक्ष्यमाणमुत्सवमुपपत्त्या निरूप्योत्सवमनेकप्रकारमाह—सौमङ्गल्येति दशभिः । विद्याकृतो वाद्यानुत्सवः स प्रथमं निरूप्यते सौमङ्गल्यं सुमङ्गलता यैर्वेदैः पौराणैर्वाक्यैर्मङ्गलं भवति तच्च निरन्तरं पठन्तीति सौमङ्गल्यप्रतिपादिका गिरो येषामित्युक्तं गिरां वैयर्थ्याभावो विप्रपदेनोक्तः सूताः पौराणिकाः मागधाः वंशशंसकाः बन्दिनो वैतालिकाः तेपि सौमङ्गल्यगिरो जाताः गायका अन्ये केवलनृत्यादिसहिताश्च स्त्रियश्च वाद्यवादकाश्च नेदुः भेर्य उत्सवसूचिकाः दुन्दुभयो मङ्गलवाद्यानि शुभकर्ममात्रे प्रवृत्तानि मुहुरिति अग्रपर्यन्तं वादयित्वा पुनर्निवृत्ता वादयन्तीति एतद्वाद्यमपि सङ्गीतशास्त्रसिद्धम् अतो विद्याकार्यं सर्वमुक्तम् ॥ ५ ॥

भूसंस्कारानेकविधानाह—व्रज इति । सम्यक् मृष्टा रजोदूरीकरणेनोज्वलीकृताः ततः सम्यक् सिक्ताः गन्धोदैर्द्वारादयो यस्मिन् द्वाराणि अन्तराणि बाह्यानि च अजिरमङ्गणं गृहान्तरं गृहमध्यं गृहाः अन्तराणि च तदुपरि भागानामपि मार्ज्जनं भवति एतादृशो व्रजो जातः चित्रध्वजादिभिरपि युक्तो जातः एते बहिः शोभाजनकाः गरुडादिचिन्हिता ध्वजाः जयपत्राङ्किताः पताकाः उभये विचित्राः स्रजो मालाः पुष्पनिर्मिताः चैलैः पल्लवैश्च कृतास्तोरणा अपि वस्त्रादिभिर्यावानलङ्कारो भवति स सर्वोऽपि तत्र कृत इत्यर्थः ॥ ६ ॥

गवां शोभामाह—गाव इति । गावो वलीवर्दाः धेनवश्च वृषास्तु स्थूलककुदो महान्तः चकारादवान्तरभावापन्ना वृक्षाश्च वत्सावत्सतर्यश्च सर्वे हरिद्रायुक्ततैलेन रूषिता विचित्रा गैरिकादिधातवः बर्हाणि मयूरपिच्छानि वस्त्राणि काञ्चनमालाश्च ते वर्तन्ते येषां हरिद्रातैलं मङ्गलार्थं धात्वादयः शोभार्थाः ॥७॥

गोपानामाह—महार्हेति । अमूल्यानि वस्त्राणि यानि स्थापितानि तान्यपि तस्मिन् दिवसे परिहितानीति ज्ञापयितुमाह—महार्हेति । अमूल्यानि वस्त्राणि परिधेयानि आभरणान्यपि तथा बहिः कञ्चुकोष्णीषैर्भूषिताः कथिञ्चद्धनैरपि तेषामकथनमुत्सवाभक्तिख्यापनार्थं गोपा व्रजान्तरस्थिता अपि यावन्तो नन्दपरिचिताः सर्वे सम्यगाययुः राजन्निति सम्बोधनम् उत्सववर्णनायां संमत्यर्थं नानाविधान्युपायनानि वस्त्राभरणदुग्धदध्यादीनि रिक्तहस्तगमनाभावार्थमेतदुक्तं न तु नन्दस्य तैः काचिदसमृद्धिः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदा विप्राः सौमङ्गल्यगिरः सौमङ्गल्यं गीर्षु येषां ते शुभाशीर्वादका बभूवुः सूतादयो जगुः—

"सूताः पौराणिकाः प्रोक्ताः मागधाः वंशशंसकाः ।
बन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः" ॥ ५ ॥

आदौ सम्यक् मृष्टानि पश्चात् चन्दनपुष्पादिरसैः संसिक्तानि द्वाराण्यजिराण्यङ्गणानि गृहमध्यानि च यस्मिन् सः चित्रध्वजपताकाभ्यां तथा चित्राभ्यां स्रजां चैलानां चेलखण्डानां पल्लवानां चेति त्रिविधैस्तोरणैर्विभूषितोऽभूदिति शेषः ॥ रूषिता लिप्ताः ॥ ७—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदा विप्रादयः सौमङ्गल्यगिरो बभूवुः गायकाश्च जगुः भेर्यो दुन्दुभयश्च नेदुः मुहुरिति सर्वत्रान्वेति ॥ ५ ॥

किञ्च सम्मृष्टानि मार्ज्जन्यादिभिः शोधितानि संसिक्तानि सुगन्धोदकैरुत्स्नापितानि च द्वाराणि अजिराण्यङ्गणानि अन्तराणि गृहान्तराणि च यस्मिन् तथा चित्रैः ध्वजादिभिर्भूषित इति शेषः व्रजो बभूव ॥ ६ ॥

हरिद्रातैलाभ्यां रूषिताः उपलिप्ताः विचित्राः नानावर्णाः धातवः गैरिकादयः बर्हस्रजः मयूरपिच्छमालाश्च वस्त्राणि च काञ्चनमालाश्च विद्यन्ते येषां ते तथाभूता बभूवुः ॥ ७ ॥

महार्हैर्वस्त्रादिभिर्भूषिताः अलङ्कृताः नानाविधानि उपायनानि पाणिषु येषां ते ॥ ८ ॥

---

भाषा टीका ।

ब्राह्मणलोग सब सुन्दर मांगलिक वचन उच्चारनलगे सूत मागध बन्दीजन बिरुदावलीन को गान करन लगे, बारं बार भेरी और दुन्दुभि बाजे बाजन लगे ॥ ५ ॥

सगरो व्रज द्वार आंगन और घरन के भीतर बाहर गलीन में सब जगे अच्छी तरियांसो बुहारी लगाय के चंदन अरगजा सुगन्ध जलन सों सींचो गयो, और चित्र विचित्र ध्वजा पताका माला वस्त्र पल्लव और तोरणन सों विभूषित करयो गयो ॥ ६ ॥

गायें वृषभ, और बडे छोटे बछरा हरदी तैल सों भूषित भये और गेरू इत्यादिक नाना प्रकार की चित्र विचित्र धातुन की चित्रामन सों, तथा मोर पंख की माला कलङ्गीन सों सुन्दर वस्त्र और सोनेन की मालान सों भूषित होत भये ॥ ७ ॥

हे राजन व्रजिरिया गोपन ने जब नन्दराय के पुत्र की बधाई सुनी तब बडे हर्षित होयकें बडे २ बहुमूल्य वस्त्र और नाना प्रकार कटक कुण्डलादिक आभरणन कों पहिर कें माथे सों मन्दील बांध के अच्छी तरियां विभूषित होयकर कें अपने २ हाथन में नाना प्रकार की भेंट लैकें सब गोपनन्द महर के घर आवत भये ॥ ८ ॥

---

गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ।
आत्मानं भूषयाञ्चक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ ९ ॥
नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः ।
बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १० ॥
गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यश्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुण्डलपयोधरहारशोभाः ॥ ११ ॥
ता आशिषः प्रयुञ्जानाश्चिरं पाहीति बालके ।
हरिद्राचूर्णतैलाद्भिः सिञ्चन्त्यो जनमुज्जगुः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आकल्पा अलङ्काराः ॥ ९ ॥

नवकुङ्कुमकिञ्जल्कैर्मुखपङ्कजेषु भूतिः श्रीर्यासां ताः ॥ १० ॥

सुमृष्टान्युज्ज्वलितानि मणिमयानि कुण्डलानि यासां निष्कानि पदकानि कण्ठेषु यासां ताश्च शिखाभ्यश्च्युतानि माल्यवर्षाणि यासां ताः नन्दालयं व्रजतीर्व्रजन्त्यः पथि विरेजुः सवलयाः कङ्कणभूषिताः व्यालोलैः कुण्डलादिभिः शोभा यासां ताः ॥ ११ ॥

जनं सिञ्चन्त्यः अजनमुज्जगुरिति वा ॥ १२ ॥ १३ ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोप्यः श्रीयशोदाया यातृभूतयः चशब्द उक्तसमुच्चये ततो गोपा आकर्ण्येति पूर्वेणाप्यन्वयः आसां पश्चाद्भावोऽन्तःपुरवासात् मुदिता इत्येनेन तेभ्योऽपि मोदविशेषं दर्शयति—यशोदायाः व्रजयशःप्रदाया अनपत्यायाः श्रीव्रजेश्वर्याः सुतस्य उद्भवमुत्पत्तिमाकर्ण्यैव मुदिताः तस्यां तस्मिंश्च नित्यसहजप्रेमसद्भावात् अत एव वस्त्रादिभिः आत्मानमभूषयन् ॥ ९ ॥

नवकुङ्कुमकिञ्जल्कादपि मुखपङ्कजानां भूतिः शोभा यासामिति तदानीमनुरागावेशेन मुखशोभातिशय उक्तः किञ्च बलिभिः महारत्नादिमयैरक्षतपात्राद्युपहारैः सह तान् गृहीत्वेत्यर्थः मोदविशेषमेवाह—त्वरितमित्यादिना । पृथुश्रोण्योऽपि त्वरितं जग्मुः तत्र चलत्कुचा इत्यतिशयस्य लक्षणं सर्वं चोत्कण्ठातिशयस्येति ज्ञेयम् ॥ १० ॥

भक्तिविशेषेण पुनस्ता एव वर्णयति—गोप्य इति । शिखाः धम्मिल्लाग्राणि नन्दालयं व्रजन्त्य एव विशेषतो रेजुरिति तासां देहादिशोभातत्सम्पत्तौ सत्यामपि श्रीनन्दनन्दनप्रेमसम्बन्धेनैव विशेषतः शोभेति भावः ॥ ११ ॥

चिरं पाहीति तासामत्युल्लासोक्तिः तथा च तस्य सार्वदिकीं सर्वसम्पत्तिमात्मना सङ्गतिमात्मनि प्रीतिं चाशासत अल्पार्थे कः अत्यन्तबाल्यात् बालक इति तदानीं तस्मिन् तदेवोचितमिति भावः । यद्वा बालकेऽपि ततश्च प्रेमस्वभावादेवेति अजनं भगवन्तमुज्जगुः उच्चैर्मङ्गलगीतप्रबन्धेन बालकमङ्गलार्थं नमकीर्त्तयन् जीवेति पाठस्तु तासामतिकारुण्योक्तिः उपलक्षणं चैतत् सर्वेषाम् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आकल्पो भूषणम् ॥ ९ ॥ १० ॥

कुण्डलं कर्णभूषणं निष्कं कण्ठाभरणं सवलयः सोपहाराः ॥ ११—१९ ॥

---

श्रीमद्वीरराघवचार्यकृतभागवतचन्द्रचन्द्रिका।

तथा गोपानां स्त्रियोऽपि यशोदायाः सुतोद्भवमाकर्ण्य मुदिता हृष्टाः वस्त्रादिभिरात्मानमलञ्चक्रुः आकल्पा भूषणानि आदिशब्देन चन्दनलेपादिसङ्ग्रहः ॥ ९ ॥

नवाः कुङ्कुमकिञ्जल्का येषु तेषां मुखपङ्कजानां भूतिः श्रीः शोभा यासां ताः कङ्कुमानां किञ्जल्कत्वरूपणेन मुखानां पङ्कजत्वरूपणं पुष्कलं पृथुश्रोण्यः पृथुजघनाः चलन्तौ कुचौ यासां ता बलिभिरुपायनैः सहिताः त्वरितं यथा तथा जग्मुः ॥ १० ॥

संमृष्टानि निर्मलीकृतानि मणिकुण्डलानि यासां ताश्च निष्काः पदकाख्यभूषणानि कण्ठे यासां ता इति बहुव्रीहिद्वयगर्भकर्मधारयः चित्राण्यम्बराणि यासां पथि शिखाभ्यः च्युतानां गलितानां माल्यानां पुष्पाणां वृष्टयो यासां व्यालोलानां गतिरभसेन चलतां कुण्डलादीनां शोभा यासां ताः वलयैः सहिताः नन्दस्याऽऽलयं प्रति व्रजतीर्व्रजन्त्यः विरेजुः ॥ ११ ॥

ता गोप्यः पाहीत्यस्मानिति शेषः । बालके आशिषः प्रयुञ्जानाः हरिद्रातैलचूर्णैर्हरिद्रायास्तैलमिश्रचूर्णैरद्भिश्च यद्वा हरिद्रया तैलेन चूर्णैः सुधाख्यद्रव्यचूर्णैरद्भिर्दधिमिश्रोदकैश्च परस्परं जनं सिञ्चन्त्य उज्जगुः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आकल्प आभरणम् ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नवकुङ्कुमकिञ्जल्कानि अभिनवकुंकुमकेसराणीव मुखपङ्कज भूतयः मुखकमलश्रियो यासां तास्तथा वलिभिर्युताः पृथुश्रोणयः विशालकटितटाः ॥ १० ॥

व्रजतीः व्रजन्त्यः लोलत्वं कुण्डलादीनां गमनविशेषेण सवलयाः सकटकाः सापाङ्गनयनाः ॥ ११ ॥

हरिद्रातैलचूर्णाद्भिर्जनं सिञ्चत्यः अजनं कृष्णमिति केचित् ॥१२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नवेति अत्युल्लासात् नवकुङ्कुमकिञ्जल्कादपि मुखपङ्कजभूतिः यासां वलिभिरुपहारैः सह ॥ १० ॥ ११ ॥

पाहीत्युल्लासेनाशीः जीवेति पाठस्त्वतिकारुण्येन अजनं श्रीविष्णुं मङ्गलार्थम् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

गोपीनामप्यवस्थामाह--चतुर्भिः गोप्यश्चतुर्विधाः सम्बद्धा असम्बद्धाश्च उभयविधा अपि सङ्गता असङ्गताश्च गोप्य इति चकारादन्या अपि तत्र तत्र निलीनाः तथाविधाभूत्वा याता इति निरूप्यते ब्राह्मणाः स्त्रियः अन्याश्च तासां नन्दप्राधान्याभावात् यशोदाया अपत्योत्पत्तिसम्भावनारहितायाः सुतस्य अक स्मादुद्भवं श्रुत्वा श्रवणेनैवान्तःसन्तोषस्तासां जातः चतुर्विधपुरुषार्थस्तासां विशेषाकारेण सेत्स्यतीति आकर्ण्यैव मुदिता न तु निश्चयमप्यपेक्षन्ते तासां निवेदनीय आत्मैवेति आत्मानमेव भूषयाञ्चक्रुः आत्मपदप्रयोगश्च शरीरादीनामप्यविकृतत्वाय सशरीराणामेव ब्रह्मानन्दानुभवात् उत्तमानि वस्त्राणि परिधाय तथा आकल्पान्याभरणान्यपि अञ्जनं कज्जलम् आदिशब्देन तिलक माल्यादीनि ॥ ९ ॥

श्रवणादिगमनपर्यन्तम् आत्मालङ्कारो यावता भवति तावत् कृत्वा प्रचलिता इत्याह–न वेति । ताः सर्वा देवतारूपाः भगवत्संमुखे गच्छन्त्यो विकसितवदना जाताः स अलौकिको विकास इति तं वर्णयति चर्वितताम्बूलाः सुखस्पर्शवशाद्वा आरक्त रेखायुक्ताः मुखभागास्तासां नूतनं कुङ्कुमं काश्मीरं तस्य ये किञ्जल्काः उत्तमाः आरक्ताः त एव योजिताः तिलकादौ पिष्टा वा रेखाकाराः कृताः तत्सदृशा वा किञ्जल्काः एतादृशानि मुखपङ्कजानि तैर्भूतिर्यासाम्—

गन्धो रूपं तथा स्पर्शः कटाक्षभ्रमरोक्तयः ।
ताभिश्चतुष्टयं ज्ञेयं रसं ज्ञास्यति माधवः ॥

वलि पूजासाधनानि स्रगादीनि यद्यपि सर्वस्वमेव ज्ञेयं तथापि त्वरितं जग्मुः त्वरागमनन्तासामत्यशक्यं यतः पृथुश्रोणयः चलत् कुचाः अभ्युन्नतया कुचयोः चलनं गमनप्रतिबन्धकं भवति यत्राशक्यं ताः सम्पादयन्ति तत्र शक्ये कः सन्देह इति भावः । अत एव माल्यानां बन्धनं शिथिलं त्वरया यथा कथंचित् बन्धनात् तेन मार्गे च्युतिरग्रिमवाक्ये कथयिष्यते ॥ १० ॥

एवं गच्छन्तीनां स्वरूपमुक्त्वा नन्दगृहे प्रविशन्तीनां स्वरूपमाह—गोप्य इति । दूरादागत्य यथा कथञ्चित् यदा नन्दनिकटे समागताः तदा सर्वशोभानां प्राकट्यात् विरेजुरिति । ता वर्णयति गोप्य इति । पुनर्ग्रहणमग्रपश्चात् भावेन समागतानां सम्भूय गमनार्थं नन्दालयं व्रजतीर्विशेषेण रेजुः पूर्वं पिहिताभरणा अपि प्रकटाभरणा जाताः तथा प्रकटवस्त्राः माल्यानां पुष्पाणां शिखातः च्युतानां गतिसूचिका वृष्टिरिव मार्गे जाता वलयानामपि शब्दतो रूपतश्च प्राकट्य व्यालोलाः कुण्डले पयोधरौ हाराश्च तैः शोभा यासां तद्वशा राजसाः तामसाः सात्त्विकाश्च लीला जाताः अनेन तासामुत्सवासक्तिरुक्ता सुष्ठु मृष्टे उज्ज्वले मणियुक्ते कुण्डले यासां निष्कयुक्तः कण्ठो यासामस्ति ताः निष्ककण्ठ्यः पूर्वोक्ताश्च ता निष्ककण्ठ्यश्च विचित्राणि अम्बराणि यासां पथि शिखातः च्युतानां माल्यानां वर्षो यासां नन्दालयं नन्दगृहं वलयसहिताः व्यालोलकुण्डलपयोधरहाराणां शोभा याभिः ॥ ११ ॥

तत्र गतानां कृत्यमाह–ता आशिष इति । ताः गोप्यः एवमुत्कण्ठतया समागताः आशिषः प्रयुञ्जाना जाताः तासां भगवदावेशात् सत्या एवाशिषो निर्गता इत्याह—चिरं पाहीति बालके आशिषो न परोक्षतया निरूपयन्ति किन्तु प्रत्यक्षतयेति पाहीति मध्यमपुरुषप्रयोगः तासां सर्वभावेन पालनमल्पकाल एवेति ज्ञात्वा बहुकालरक्षार्थं प्रार्थना एतदपि प्रत्येकं वचनं तासां प्रत्येकं भगवत्स्फुरणात् एवमाशिषः प्रयुञ्जानाः भगवद्भावेनात्यन्तं मत्ताः हरिद्राचूर्णतैलजलान्येकीकृत्य परस्परं सिञ्चन्त्यः अजनं भगवन्तमुज्जगुः हरिद्राचूर्णयोगेनैव आरक्तो भवति तैलेन च संपृक्तं न कदापि त्यजति बहुकालमिममर्थं ज्ञापयति जले योजितं प्रसृतं भवति ननु कुलस्त्रीणां कथमेवंभावस्तत्राह—अजनमुज्जगुरिति । भगवद्भावज्ञापकमजनपदं स हि भगवांस्तत्र न जात इति ताभिर्ज्ञातम् अतो भगवति प्राप्ते सर्वापेक्षाभावात् तथा सिञ्चन्त्यः उच्चैर्जगुः एवं विद्यावतां भूमेर्गवां गोपानां गोपीनां चालङ्कारा निरूपिताः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गोप्यः श्रीयशोदाया मातृप्रभृतयः ॥ ९ ॥

नवकुङ्कुमकिञ्जल्कादपि मुखपङ्कजे भूतिः शोभा यासां ता वलिभिः स्वर्णमुद्रारत्नहारानर्घवस्त्रनारिकेलादिफलाक्षतदूर्वाचन्दनपुष्पमालाद्यैः स्वर्णपात्रस्थैः स्वर्णरसरञ्जितवस्त्राच्छादितैर्वामपाणिगृहीतैः सहिता इत्यर्थः । पृथुश्रोण्योऽपि त्वरितं जग्मुः हर्षौत्सुक्यावेगवशात् ॥ १० ॥

वर्णिता अपि ताः पुनर्भक्तिभरेणातृप्त्या वर्णयति–गोप्य इति । शिखा धम्मिल्लाग्राणि व्रजतीर्व्रजन्त्यः ॥ ११ ॥

सूतिकान्तर्गृहं प्रविश्य चिरं पाहीति राजपुत्रत्वेन राजीभूत्वेति भावः । जीवेति पाठे वात्सल्यकामरूपोदयः ततो वहिर्निस्सृत्य हरिद्रादिभिः परस्परं जनं सिञ्चन्त्य उच्चैर्जगुः ॥ १२ ॥

---

अवाद्यन्त विचित्राणि वादित्राणि महोत्सवे ।
(१)कृष्णे विश्वेश्वरे ऽनन्ते नन्दस्य व्रजमागते ॥ १३ ॥
गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः ।
आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः ॥ १४ ॥
नन्दो महामनास्तेभ्यो वासोऽलङ्कारगोधनम् ।
सूतमागधवन्दिभ्यो येऽन्ये विद्योपजीविनः ॥ १५ ॥
तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ।
विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आकल्पाः अलङ्काराः आदिना ताम्बूलसुगन्धादिसङ्ग्रहः ॥ ९॥

नवकुङ्कुमकिञ्जल्कैः मुखपङ्कजेषु भूतिः श्रीर्यासां ताः बलिभि-रुपायनैः सहिताः त्वरितं जग्मुः ॥ १० ॥

सुमृष्टमणिकुण्डलाश्च ताः निष्ककण्ठ्यश्च शिखाभ्यश्च्युतं माल्यवर्षं यासां ताः वलयैः कङ्कणैः सहिताः व्यालोलैः कुण्डलादिभिः शोभा यासां ताः नन्दालयं व्रजतीः व्रजन्त्यः पथि विरेजुः ॥ ११ ॥

हरिद्राचूर्णतैलाद्भिः परस्परं सिञ्चन्त्यः बालके श्रीनन्दनन्दने आशिषः प्रयुञ्जानाः अजनं विष्णुमुज्जगुः ॥ १२—१४ ॥

---

भाषा टीका ।

तापीछे गोपीन ने जब अपनी यशोदा के पुत्र को जन्म सुन्यो तब तौ मारे हर्ष के हरी होगईं । और बड़ी जल्दी आप आपकों वस्त्र अलंकार अञ्जनादिकन सों विभूषित करत भईं ॥ ९ ॥

जैसें कमलन की शोभा किञ्जल्कनसों होवै हैं तैसें कुंकुमरूप किञ्जल्क सों है मुख कमलन की शोभा जिनकी ऐसी वे सगरी गोपी अपनी २ भेट को लेकर के बड़ी जल्दी नन्द घर को जाती भईं यद्यपि उनके कटिपश्चाद्भाग और स्तनन के भारीपनसूं वे शीघ्रगमन नहीं कर सकतीं हीं तथापि प्रेम के मारे शीघ्र गमन करे हैं तासों चलते समें उनके उरोज चलायमान होत जाय हैं ॥ १० ॥

अब एक श्लोक में श्रीशुकदेवजी श्रीव्रजदेवीन के गमन को वर्णन करें है, कि—सगरी गोपीं स्वच्छमणि कुंडलन को कर्णों में धारण किये, कंठ में पदक पहिरे चित्र विचित्र पचरंगी ओढ़नी ओढ़ें हाथन में कंकणन कों पहिरें हैं और जल्दी २ जो गमन करें हैं तासों मार्ग में शिखान में सों पुष्पन की मालान की वर्षा होतजाय है और वेग सों चलवे सों कर्ण कुंडल न्यारे कपोलन पै झोटा लेतजांय हैं । कंठ में जो हार हमेल पहिरे हैं वे उरोजन पै लटकत जांय हैं । ताईं सों अधिक शोभा होत जाय है ॥ ११ ॥

वे सगरीं नन्द भवन में पौंच कें वा यशोदा के बालक कों "लाला तूं सदा हमारो रखवारो बनो रह" या प्रकार असीस देत भईं । और हरदी को चूर्ण, तेल, दधि, दूध, जल, सबकों मिलाय के जनन को सींचती भईं गावत भईं ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेभ्यः प्रादात् ॥ १५ ॥

यथोचितमन्यानप्यपूजयत् ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अवाद्यन्त वादकैरिति शेषः । विचित्राणि "ततं वीणादिकं वाद्यमानद्धं मुरजादिकं । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्" इति चतुर्विधानि एकैकस्याबान्तरवैचित्र्यावादनवैचित्र्या च विचित्राणि किंवा अवाद्यन्त प्रभवादिष्वपु वाद्यमानेषु जगति यानि वादित्राणि तान्यपि स्वयं जनैश्च वादितानि बभूवुरित्यर्थः तत्र हेतुः महोत्सवे यावदुत्सवे यावदुत्सवोपरि विराजमाने तन्महसि तत्राऽपि हेतवः कृष्णे जगच्चित्ताकर्षकमाहात्म्यतया स्वयमवतीर्णे भगवति विश्वेश्वरे सर्वप्रभौ अनन्ते स्वरूपैश्वर्यमाधुर्यैरपरिच्छिन्ने नन्दस्य व्रजं परमप्रेमानन्दामृतसमुद्रतया परमं निजोचितपदम् ईयुषि तस्मिन्नुदयतीत्यर्थः । आगत इति क्वचित्पाठः ॥ १३ ॥

हृष्टाः सन्तो दध्यादिभिः परस्परम् आ सम्यक् सिञ्चन्तः नवनीतैश्च परस्परं विशेषेण लिम्पन्तः परस्परं चिक्षिपुः यत्नेन प्रच्छन्नतया वा पिच्छिलपङ्कं स्खलयामासुः ॥ १४ ॥

नन्द इति युग्मकम् तेभ्यो गोपीभ्यो गोपेभ्यश्च तथा सूतादिभ्यश्च ये चान्ये विद्योपजीविनः गायकवादकादयः तेभ्योऽपि वास आदिकं प्रादादिति शेषः । तत्र धनं स्वर्णरूप्यादि यथोचितमित्युत्तरपद्यपदेनाप्यन्वयः । स्वत एवाऽदीनात्मा उदारचित्तः

(१) कृष्णे विश्वेश्वरेऽनन्ते नन्दव्रजमुपेयुषि इति वीर० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्प्रति तु महामना इति पुनरुक्तिः पूर्ववत् श्रीकृष्णमनस्त्वेन तत्रौदार्यविशत्वादिगुणानां मुहुरतिशायिताभिप्रायेण न केवलं तावता तृप्तवान् किञ्च तैस्तैरिति तैस्तैः कामैः सह पुनश्च ये ये स्वैरं प्रार्थितास्तत्तत्कामदानपूर्वकं सर्वांस्तान् यथोचितं जातिवयोविद्याऽनुरूपं अपूजयत् स्रक्चन्दनताम्बूलप्रोत्साहनादिभिः सम्मानितवांश्च दानादेरुद्देश्यमाह विष्णोराराधनस्य योऽर्थः फलं तत्सन्तोषः तस्मै परमवैष्णवत्वात् कामितार्थानन्यकामत्वाच्च नत्वपूर्वमाश्राय तथा स्वपुत्रस्याभ्युदयाय च अनेन कर्मणा श्रीविष्णुः सन्तुष्यतु तत्प्रसादेन च मम पुत्रस्याभ्युदयो भवत्विति सङ्कल्पयन्नित्यर्थः । अथ च विष्णोराराधनस्य यत्फलं तद्रूपाय तदभ्युदयाय तद्गृहे रूपगुणाखिलैश्वर्यप्रकाशनायेति पदश्लेषेण यदेव मननप्राप्तं तच्च तस्य रागप्राप्तत्वात् परममहदिति प्रकरणार्थेन च मुनीन्द्रः सिद्धान्तमपि विन्यास्थदिति ज्ञेयम् अत्र चशब्दोऽप्यर्थे स च दुर्लभत्वं सूचयति "नन्दः किमकरोद्ब्रह्मन्" इत्यादेः "नेमं विरिञ्चः" इत्यादेः "युवां श्लाघ्यतमौ" इत्यादेश्च ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अंशेन बलरामेण सह विश्वेश्वरे श्रीकृष्णे नन्दव्रजमुपेयुषि सति तस्मिन् महोत्सवे विचित्राणि वाद्यान्यवाद्यन्त ॥ १३ ॥

गोपास्तु हृष्टाः दध्यादिभिः परस्परमासिञ्चन्त्यः नवनीतैर्विलिम्पन्तश्च ते चिक्षिपुः ॥ १४ ॥

नन्दस्तु विपुलकीर्तिरत एव तेभ्यः सूतादिभ्योऽन्ये च ये विद्योपजीविनः भरतशास्त्रादिविद्ययोपजीवन्तीति तथाभूतेभ्यश्च वस्त्रादिकं ददौ ॥ १५ ॥

तैस्तैस्तेषामभीष्टैरुच्चावचैः कामैर्यथोचितमदीनात्मोदारमनाः नन्दः सम्यगपूजयद्विष्णोर्गृहदैवतस्याराधनार्थं स्वपुत्रस्याभ्युदयार्थं च ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपेयुषि प्राप्तवति ॥ १३—१४ ॥

तेभ्यो गोपेभ्यः यथोचितं दत्वा अपूजयत् ये अन्ये विद्योपजीविनः तेभ्यश्च यथोचितं दत्वा ॥ १५ ॥

किं फलमुद्दिश्येति तत्राह—विष्णोरिति ॥ १६—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अवाद्यन्त त्रैलक्ये तत्र हेतुः कृष्णेत्यादि नन्दस्य व्रजं पराकाष्ठापन्नप्रेमत्वात्तदभीष्टलीलायोग्यमित्यर्थः । परस्परं चिक्षिपुः [illegible]यामासुः ॥ १३ ॥ १४ ॥ १५ ॥

[illegible] [illegible]राराधनस्य योऽर्थः फलं तत्सन्तोषः त[illegible] स्वपुत्राभ्युदयार्थश्च अनेन कर्मणा विष्णुः सन्तुष्यतु तेन च मत्पुत्रस्य श्रेयो भवत्विति सङ्कल्पयन्नित्यर्थः । तदागमनेन जाताभीष्टत्वान्नन्दगोपाभिनन्दिता व्यचरन्महोत्सवकर्मार्थं ततः ॥ १६ ॥ १७ ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लौकिकवाद्यकृतमुत्सवमाह—अवाद्यन्तेति स्वभावतो दशविधानि वाद्यानि विचित्राणि ततोऽप्यनन्तानि महोत्सवे भगवतो जन्मोत्सवे वादका वादयामासुः महोत्सवे निमित्तमाह—कृष्ण इति । संज्ञा नामकरणानन्तरमेव भवतीति भगवति नियमाभावात् पूर्वसंज्ञानामेव गर्गेणोक्तत्वात् "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इति वाक्यात् कृष्णः सदानन्दः आनन्देवावश्यं वादित्राणि किञ्च विश्वेश्वरे विश्वस्यैव नियन्तरि महति समागते अन्ततो गत्वा वादित्राण्यपि वादनीयानि वादके वादकान्तरवदन्यथा शङ्का नास्तीति सर्वथा महोत्सवः कर्तव्य इत्याह अनन्तः इति न विद्यते अतो यस्य अनन्तः कालो वा अन्यथा स मारयेदिति तत्रापि नन्दस्याल्पस्य तत्रापि व्रजे अल्पस्य गृहे महति समागते महोत्सवः कर्तव्य एव अन्यथा महानपकुर्यात् किञ्च द्रोणो वसूनामित्यारभ्य ततो भक्तिर्भगवति कृष्णे ब्रह्मणा आदेशमित्यन्तैर्वाक्यैः परमभक्तत्वेन नन्दस्य तदा वादित्रवादनमुचिततरम् ॥ १३ ॥

गोपिकानां भगवत्स्मरणेनैव भगवदावेशो जातः गोपानां तु भगवत्संनिधानेन भगवद्धर्मप्राकट्ये आवेश इति भगवदाविष्टानां गोपानामुत्सवप्राकट्यमाह—गोपा इति । दधिक्षीरघृताम्बुभिर्मिलितैः परस्परमासिञ्चन्तः दध्यादि मुखेषु विलिम्पन्तः नवनीतैः पिण्डैः चिक्षिपुः अन्योन्यस्योपरि प्रक्षिप्तवन्तः अथवा यस्य यत्प्राप्तिः केचित् दध्ना केचित् क्षीरेण केचित् घृतेनाम्बुभिश्च. आसिञ्चनं तुल्यतया विलेपनमाधिक्ये अतिरसाविष्टे नवनीतैः क्षेपः अतिमत्ततया एवं सर्वेषां महानुत्सव उक्तः ॥ १४ ॥

एवं सर्वकृते उत्सवे सर्वेभ्यो दानरूपं नन्दस्योत्सवमाह नन्दो महामना इति त्रिभिः । विद्यावतामन्येषां स्त्रीणां च सर्वाभीष्टदानं तत्र विद्यावतां प्रथमतो दानमाह—महामना इति । विद्यातारतम्येन दानं तत्र एक एव बहुविधो भवति तथा सति बहुदानं तत्र कर्तव्यं तत्राल्पसत्वस्य क्षोभः स्यात् तन्निवृत्त्यर्थमाह—तेभ्यः पूर्वोक्तेभ्यः वासांस्यलङ्करणानि गावो धनं च गोधनं गोष्ठं वा अनेन ब्राह्मणेभ्य एव वस्त्रालङ्करणपूर्वकमेकैकस्यैकमेकं गोष्ठं दत्तवानिति लक्ष्यते । अन्येषामनुवादाय अन्येभ्यो यथायोग्यं दत्तवानित्याह—सूतेति । एतेभ्यो दानं कीर्त्यर्थं ये चान्ये गायका वैद्याः ज्योतिर्विदश्च अन्येऽपि याचनिकाः स्त्रियश्च तेभ्यः सर्वेभ्य एव वासोऽलङ्कारगोधनानि दत्तवानिति सम्बन्धः ॥ १५ ॥

अन्येभ्यो दानमाह—तैस्तैरिति । येषां येषां ये ये कामाः अभिलषिताः तैस्तैः कामैर्विष्णुबुद्ध्या तानपूजयत् अदीनात्मेति न दीनो लुब्धः आत्मा अन्तःकरणं यस्य । ननु, यदि अदेयं प्रार्थयेत् कश्चित् दैत्यो वा तदा किं कुर्यात् तत्राह—यथोचितमिति उचितमनतिक्रम्य देये सम्प्रदाने च उचितत्वम् एवं सर्वेषां पूजनप्रयोजनमाह—विष्णोराराधनार्थायेति । विष्णुप्रीत्यर्थं स्वपुत्रस्य

रोहिणी च महाभागा नन्दगोपाभिनन्दिता ।
व्यचरद्दिव्यवासस्स्रक्कण्ठाभरणभूषिता ॥ १७ ॥
तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् ।
हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप ॥ १८ ॥
गोपान् गोकुलरक्षायां निरूप्य मथुरां गतः ।
नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ! ॥ १९ ॥
वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् ।
ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥ २० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अभ्युदयार्थं च तस्य ज्ञानानुरोधात् भिन्नतया कथनं चकाराद् ग्रहादिप्रार्थनार्थं च ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अवाद्यन्तेति त्रिलोक्यामेव यतः कृष्णे विश्वस्यैवेश्वरे तानि वाद्यान्यनन्तान्येव यतोऽनन्ते इति ॥ १३ ॥

चिक्षिपुः प्रयासार्थं बलेन प्रच्छन्नतया पिच्छलपङ्के स्खलयामासुः ॥ १४ ॥

महामना महोदारमनाः प्रादात् येऽन्ये तेभ्योऽपि विद्याः नृत्यगीतवाद्यशस्त्रशास्त्राद्याः तैस्तैरिति यान् यान् अयाचन्तेत्यर्थः । यथोचितं विद्यागौरवादिकमनतिक्रम्येत्यर्थः । दानादेः फलमाह–विष्णोराराधनस्यार्थः विष्णुसन्तोषस्तस्मै तस्यापि फलं स्वपुत्रस्याभ्युदयः अनेन दानादिकर्मणा विष्णुः प्रसीदतु विष्णोः प्रसादेन मत्पुत्रः कुशली भवत्विति सङ्कल्पयन्नित्यर्थः । चकारेण नवग्रहदिक्पालादीनामपि स्वपुत्रं प्रतिप्रसादार्थम् ॥ १५–१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेभ्यो गोपेभ्यः सूतादिभ्यश्च प्रादात् ॥ १५ ॥

विष्णोः परम्परागतस्योपास्यस्याराधनार्थाय तस्यैव स्वपुत्रस्योदयाय च यथोचितमपूजयत् पूजार्हानिति शेषः ॥ १६–१७ ॥

---

भाषा टीका ।

जा बिरियां विश्वेश्वर श्रीकृष्ण नन्द के व्रज में पधारे तब या महोत्सव में बड़े विचित्र बाजे बाजत भये ॥ १३ ॥

या प्रकार गोपनि की लीला कूं देखकें गोप हर्ष में तौ रहेई वे भी परस्पर में दधि, क्षीर, घृत, जल, सींचत भये और एक दूसरेन कें मांखन लेपबे को लगपरे और मांखन फेंक२ कें मारन लगे ॥ १४ ॥

और नन्दजी भी उदारचित्त हो करकें तिन सब सूत, मागध, नन्दीजनों, को और जिनने विद्यासों उपजीवन करन वारे हैं तिनकों वस्त्र अलंकार गोधन देत भये ॥ १५ ॥

और उदार चित्त श्रीनन्दरायजी ने निज २ पुरुषन की जो २ कामना रही तिन २ कामनान सों पूरण करके पूजा करी सो काहे के अर्थ, कि–विष्णु के आराधन के लिये और अपने पुत्र के उदय के लिये यो पुत्र भलेई विष्णु होमये दुसरी बात है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेर्निवासेन ये आत्मनि गुणाः सर्वप्रियत्वादयस्तैः रमाया आक्रीडं विहारस्थानम् ॥ १८ ॥

वार्षिक्यं प्रतिवर्षं देयम् ॥ १९ ॥

भ्रातरं सखायं तदवमोचनं तस्य नन्दस्य वसतिस्थानम् ॥ २० ॥ ॥ २१ ॥ ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रोहिणी रोहयति जनयति व्रजसुखं तच्छीलेति रोहिणी अद्यैव स्वनामनिरुक्तिसाफल्यपरमोत्कर्षं प्राप्तेति भावः । सा च महाभागा तादृशस्वीयपुत्रोदयेन तस्यापि परमाश्रयस्य निजप्राणसहचर्याः श्रीयशोदायास्तनयस्याभ्युदयेन च तत्तद्वात्सल्यादिलीलामाधुर्यलाभेन च अन्याभ्यः श्रीवसुदेवपत्नीभ्यः श्रीदेवकीतश्च भाग्यविशेषवती त्वदागमनमात्रेणमङ्गलेनैवायं मम पुत्रो जात इति श्रीमन्नन्दाभिधगोकुलराजेनाभिनन्दिता सती "गोपो भूपेऽपि" इत्यमरः । श्रीमन्नन्देन गोपैश्चाभिनन्दिता सतीति वा यदुल्लासेनैव तद्दत्तानि दिव्यानि मर्त्यदुर्लभानि यानि वास आदीनि स्वयमपि तदुल्लासेनैव सर्वं दुःखं विस्मृत्य तैर्मण्डिता सती व्यचरत् महोत्सवे तस्मिन् प्रीत्या विविधव्यापारेण इतस्ततो बभ्रामेत्यर्थः । एतदर्थमेव स्वगृहान्तःस्थापितस्य तदीयाभिनवबालकस्यात्रानुक्तिरिति ज्ञेयम् ॥ १७ ॥

ननु, सद्य एव धेनुनियुतद्वयस्य सम्यगलङ्कारसम्पादनं सप्ततिलाद्र्यादिसाधनं व्रजासङ्ख्येयधेनुद्रव्यालङ्करणं बहुवस्त्रा-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

लङ्कारादिदानं च कथं सिद्धम्?" इत्यपेक्षायामाह—तत इति । प्राक् स्वत एव "मथुरा भगवान् यत्र" इत्यादिन्यायेन "योऽसौ गोपेषु तिष्ठति" इति तापनीश्रुत्या "जयति जननिवासः" इति "प्रीयात् इन्द्रो गवाम" इति "भगवान् गोकुलेश्वरः" इति श्रीशुकोक्त्या च हरेर्निवासभूतो य आत्मा तस्य स्वस्यैव ये गुणास्तैः सर्वसमृद्धिमान् व्रजः तत इति तत् तस्य जन्मारभ्य तु रमाक्रीडं बभूव "चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् । लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानं गोविन्दमादिपुरुषं तमहं भजामि" इति ब्रह्मसंहितानुसारेण तत्तन्मन्त्रादौ स्वयं भगवन्नित्यप्रेयसी तया सेव्यत्वेन "नायं श्रियः" इत्यादौ वैकुण्ठश्रीविजयेन तासु स्वयोषिदादिसर्वान्ययोषित्वपरिहारेण च व्रजदेवीनामेव परमरमारूपाणां तासामपि परमरमायाः श्रीराधायाश्च तदानीमेवाविर्भावाद्विहारस्थानमपि बभूवेत्यर्थः यदि च तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् मन् हरेर्निवासात्मगुणै रमाक्रीडं यथा स्यात्तथाऽभूदिति सरलान्वयः क्रियते तदपि पूर्वपद्यवार्थः प्रसज्जेत तदारभ्य तस्य व्रजः सर्वसमृद्धिमानासीदिति मात्रं किं वक्तव्यं यः खलु हरिनिवासलक्षणस्य स्वरूपस्य गुणै रमाणां तासामप्याक्रीडतयाऽऽसीदिति ततो जगल्लक्ष्मीमात्रदृष्टचाध्यात्मिकफलवैसरूप्यात्तस्मभवात्तदानीं तत्र किमिवासम्भवं यत्र चिन्तामणिमन्दिरादयोऽपि निगूढलीलायां सन्तीति भावः । तां चाष्टाविंशाध्यायादौ प्रतिपादयिष्यामः तदेवं प्रसङ्गतः श्रीव्रजदेवीनामपि भगवद्वत् प्राकट्यमात्रं जन्म सूचितं रमाक्रीडशब्देन च सर्वसमृद्धिमत्त्वं वाच्यं पौनरुक्त्यं स्यात् रमान्तराक्रीडत्वे वाच्ये प्रसिद्धिविच्युतिर्भवति "हरेर्निवासात्मगुणैः" इत्येतावता विचित्रसिद्धेरात्मपदवैयर्थ्यं जायते तस्मादविचारप्रतीत मर्थान्तरं नादृतम् ॥ १८ ॥

पूर्वमपुत्रत्वेन धनादौ ममत्वाभावतः श्रीनन्दस्य कंसाद्भयाभिकत्वमस्यैव नासीत् अधुना तु पुत्रमहारत्नप्राप्त्या सर्वतः शाङ्कितपरया तद्रक्षार्थं व्यग्रस्सन् दुष्टनृपभयसमाधानार्थं राजधानीं शीघ्रं स्वयमेव गत इत्याह—गोपानिति । निरूप्य नियुज्य वार्षिकं वाव्यन्य वर्षान्तरारम्भकरवात्तत्रैव देयं हे कुरूद्वहेति यथा कुरुकुलमन्तानैकाङ्कुरोऽस्तत्र रक्षार्थं श्रीयुधिष्ठिरादयो व्यग्रास्तथेति भावः ॥ १९ ॥

उपश्रुत्य जनपरम्परया श्रुत्वा श्रीवल्लवेन्द्रस्य सर्वजनादृतत्वात् तत्प्रस्थानं राज्ञे कंसाय दत्तकरं च ज्ञात्वा अन्यथा व्यग्रचित्ततया सुखगोष्ठ्यसम्भवात् भ्रातरं वैश्यकन्यायां शूरवैमात्रेयभ्रातुर्जातत्वादिति श्रीमध्वाचार्याः तथोक्तं ब्रह्मवाक्ये "तस्मै मया सवरः मतिसृष्टः स चास नन्दाख्य उतास्य भार्या । नाम्ना यशोदा स च शूरतात्सुतस्य वैश्याप्रभवोऽथ गोपः" इति वैश्याप्रभव इति पितामह्याः स्वज्ञातित्वात् अत एव स्कान्दे "यादवानां हितार्थाय धृतौ गिरिवरो मया" इति. श्रीभगवद्वाक्यं "यादवेष्वपि सर्वेषु भवन्तो मम वल्लभाः" इति हरिवंशे तद्भ्रातृत्व प्रति श्रीगर्गवाक्यं च तस्य अनमोचनं शकटादिकम् अवसमन्तात् यत्र तत्कृतनामस्थानं तस्य पूर्वं गमनं पुत्रवार्तीत्कण्ठया तद्रक्षणाय झटिति प्रस्थापयितुमिच्छया च ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तदवमोचनं यत्र समवहारा मुच्यते तदवमोचनं प्रथा
निवासस्थानम् ॥ २०—२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्विवैर्योम:प्रभृतिभिर्भूषिता सती महाभाग्यवती रोहि
नन्देनान्यैर्गोपैश्चाभिनन्दिता व्यचरत् ॥ १७ ॥

अथ नन्दवसुदेवयोः यादृच्छिकसमागमं विवक्षुस्तावद्व्रजस्य स
मस्परसमृद्धत्वमाह—तत इति । तत आरभ्य भगवतः प्रवेशादार
नन्दस्य व्रजः सर्वाः समृद्धयः भोग्यभोगोपकरणादिसमृद्धयोऽ
सन्तीति तथा हरेर्निवासेन हेतुना ये आत्मगुणाः महोत्सवादय
तैः रमाक्रीडं लक्ष्मीविहारस्थानञ्चाभूत् हे नृप ! आक्रीडम्
नपुंसकत्वमार्षं सामान्ये नपुंसकं वा क्रियाविशेषणं वा ॥ १८

एवं सति कदाचिन्नन्दो गोकुलरक्षायां निमित्ते व्रजरक्षा
गोपान्निरूप्यादिश्य कंसस्य वार्षिक्यं वर्षे देयं करं स्वामिग्रा
भागं दातुं हे कुरूद्वह ! मथुरां गतः ॥ १९ ॥

तदा वसुदेवोऽपि भ्रातरमागतं नन्दमाकर्ण्य राज्ञे कंसा
दत्तः करो येन तं च ज्ञात्वा तस्य नन्दस्यावमोचनं निवे
स्थानं ययौ अवमुच्यन्ते गमनोपयुक्तपरिकरबन्धा यत्रेति त
वमोचनमवतरणस्थानम् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रमाक्रीडं लक्ष्मीविहारस्थानं क्रियाविशेषणं वा ॥ १८ ॥
वार्षिक्यं प्रतिवत्सरं देयम् ॥ १९ ॥
तदवलोकनः तस्य नन्दस्य दर्शनेच्छुः ॥ २०—२२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वबालके जाते पूतनादिदुष्टगणात् कंसात् भीत्या शीघ्र
मेव करं दातुम् ॥ १९ ॥

उपश्रुत्य परम्परया श्रुत्वा पश्चादन्यमुखात् दत्तकरं ज्ञात्वा
अस्य पूर्वं गमनं पुत्रसम्बन्धेनोत्कण्ठाविशेषात् भ्रातरं विदु
तदेतच्चतुर्थसन्दर्भे पञ्चदशोत्तरशततमवाक्ये द्रष्टव्यम् ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्त्रीरूपां दाने रोहिण्यै दत्तं भयादप्रकटं भवेदिति भगवद
वेशात् दातुः प्रतिगृहीतुश्च भयाभावं ज्ञापयितुं रोहिणीचरित
निरूपयति—रोहिणी चेति । भगवदागमनव्यतिरेकेणापि वसु
द्रोत्पत्त्यैव सा कृतार्थेत्याह—महाभागेति । यद्यपि देवकी व्यति
रिक्ता अन्या अपि वसुदेवस्त्रियो भाग्यवत्यस्तथापीयं बा
लीलादि द्रक्ष्यतीति महाभागेति वा चकारात् सर्वा एव स्त्रि
स्त्रीत्वेन गुप्ततया प्रचारं चारयति–नन्दगोपेनाभिनन्दितेति । प्रच
रार्थं निर्भयस्थित्यर्थं च अत एव दिव्यानि वासांसि

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कण्ठाभरणानि तैर्भूषिता त्रिविधानि हि स्त्रीणामलङ्करणानि भवन्ति वस्त्रमयानि सुवर्णमयानि पुष्पमयानि च तत्र अयं तिलकं चरणहस्तयोः स्वभावतोऽपि भवन्ति कण्ठाभरणानि तु पदकहारादीनि वैशेषिकाणि अतस्तेषां ग्रहणं विशेषणा-वरत्। गृहिणीव सर्वकार्यकर्त्री जाता अनेन रोहिणीसम्बन्धा-दयं कृष्णा इति ज्ञानकृतं भयमपि निवारितम् ॥ १७ ॥

एवं सर्वैः प्रकारैः सर्वस्व व्ययिते नन्दस्य समृध्यभाव-माशङ्क्य भगवन्निवासात् तस्य महती समृद्धिर्जातेत्याह-तत आरभ्येति । यदा पूर्वोक्तदानानि दत्तवान् ततःप्रभृति विष्णु-बुध्या पूजितत्वात् तस्यात्यानुषङ्गिकमेतत्फलं सर्वाः धनपशु-धान्यादि समृद्धयः न केवलं नन्दस्य किं तु सर्वेषामित्याह-व्रज इति । न केवलं समृद्धिमात्रं किं तु वैकुण्ठवत् कान्ति-विशेषोपि जात इत्याह-हरेरिति । गोकुलं गवां संगृहीत् स्थानं कुत्सितमेव भवति अतस्तदभावार्थमेतदुक्तव्यं कान्तिश्चाधिदै-विकी सर्वोत्तमा सा लक्ष्मीनिवासादेव भवतीति तदाह-रमाक्रीडमभूदिति रमायाः आ समन्तात् क्रीडा यस्मिन् तत् रमाक्रीडं वैकुण्ठस्थानं तदभूत् तत्र हेतुः हरेर्निवासात्म-गुणैरिति । स हि सर्वदुःखहर्ता भक्तानां वैकुण्ठपर्यन्तं गमन-मप्यसहमानः इहैव वैकुण्ठं समानीतवानित्यर्थः । आनीतेऽपि वैकुण्ठे यदि भगवान् न तिष्ठेत् तत्रापि त्रिभुवनसुन्दररूपेण तत्रापि ऐश्वर्यादि सर्वगुणप्राकट्येन तदा वैकुण्ठेपि शोभा न स्यात् तदाह पदत्रयेण निवासात्मगुणैरिति निवासः स्थानं गृहं स्थितिर्वाऽऽत्मा देहः परमानन्दरूपः गुणाः ऐश्वर्यादयः तैः कृत्वा रमायाः क्रीडनं स्थितौ स्थितिः परमानन्दनिग्रहेण रणयां गुणैरासमन्ताद्रमणमिति नृपेति सम्बोधनं यत्रैव राजा तिष्ठति सैव राजधानी भवतीति ज्ञापनं सम्मत्यर्थम् ॥ १८ ॥

एवमुत्सवं निरूप्य तस्य स्थानस्य वैकुण्ठत्वं च भक्त-त्रिभोत्सवार्थं निरूप्य उत्सवसिद्धपर्यन्तमत्यावश्यकमपि न कृतवानिति ज्ञापयितुं जाते उत्सवे अन्तरासक्तिज्ञापनार्थं भग-वदर्थमुत्तमवस्तूनामानयनार्थं च मथुरां प्रति गतवानित्याह—गोपानिति । अथवा देवकीवसुदेवयोरपि स्नेहातिशयात् । गोकुले भगवज्जननं कोपि जानाति न वेति संशयेन मनसि खेदो भवतीति श्रीनन्दसंवादेन तन्निराकरणपूर्वकं तयोरप्युत्सवः सम्पत्स्यत इत्युत्सवानन्तरमव्यवधानेनैव व्रजेन्द्रस्य मथुरागमन-मुच्यते एवं सत्युत्सवलक्षणोऽध्यायार्थोऽप्यन्तः सङ्गच्छत इति तदाह—गोपानिति । एतेन वसुदेवकृत स्थितिनिषेधानन्तरं व्रजे-न्द्रस्य पुनर्मथुरायामनागमनात् व्रज एव कंसनैरपेक्ष्येण यथा सुखं स्थित्वा भगवदैश्वर्यमपि निरूपितं भविष्यति पूर्वं रक्षाया-मनादरः स्थितः इदानीमादरेण गोकुलरक्षार्थं गोपानन्तरङ्गा-न्नादिश्य स्वयं मथुरां गतः करो हि प्रजाभिः सर्वाभिरेव देयेत इदानीमपि तस्मिन् देशे आगमनानन्तरमेव करप्रवृत्तिः वर्षपर्यन्तं यद्देयं तदेकदा दीयते महद्भिः नन्दस्तु महान् भवतीति तत्रागमनं कुरुद्वहेति सम्बोधनं राजधर्मज्ञाप-नार्थम् ॥ १९ ॥

वसुदेवासक्तिज्ञापनार्थं पश्चात् करदानं निरूपितं तथापि ईश्वरे भगवति विद्यमाने अन्येभ्यः करदानमनुचितमिति ततः-प्रभृति तन्निवृत्यर्थं वसुदेवपुत्रो भविष्यतीति शङ्कानिवृत्त्यर्थम् उत्पन्नाधिकस्य ज्ञातत्वात् कंसकृतोपद्रवाभावार्थं कंसमन्त्र-णस्य श्रुतत्वात् विशेषरक्षार्थं च शीघ्रं नन्दं ततः प्रेषयितुं वसुदेवसमागमनवार्त्ता निरूप्यते—चतुर्णां मध्ये एकस्याप्यभा-वेनोत्सवः सिध्यतीति तत्र प्रथमं वसुदेवसमागमनमाह-वसु-देव इति । मायाकृतस्य ज्ञापनं भगवत्कार्यमिति भगव-च्चरित्रेना वसुदेवस्य नन्दस्य च धर्मभ्रातृत्वं यस्मिन् कल्पे यस्मिन्नेव ब्रह्मणा एव जाताः कश्यपोपि भवति ब्रह्मणा एव तदा भ्रातृत्वं सिद्धमेव ततः पूर्वजन्मनि तथैवेति जन्मान्तरेऽपि धर्मभ्रातृत्वं तदाह—भ्रातरं नन्दमागतमिति । आगमनात्पूर्वं चेत् शृणुयात् निवारयेदेव करदानात्पूर्वमपि चेज्जानीयात् तदा न दापयेत् दानपर्यन्तं च राजकीयास्तत्रवमोचने समायान्ति तेषा-मज्ञानार्थं ज्ञात्वा दत्तकरं राज्ञे इति चोक्तम् अवमोचनमुत्तरणा-स्थानं यत्र शकटादिकमवमुच्य स्थीयते ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महाभागा वसुदेवपत्नीभ्यः सर्वाभ्योपि श्रीकृष्णबाल्य-लीलोत्सवलाभादिति भावः। नन्दगोपेन नन्दराजेन "गोपो भूपेऽपि" इत्यमरः । अभिनन्दिता त्वदागमनमङ्गलेनैव मत्पुत्रोऽयमभूदिति व्यचरत् समागतस्त्रीजनसम्माननार्थमित्यर्थः । दिव्यवास आदिभिः श्रीयशोदानन्दाभ्यां दत्तैर्भूषिता पत्युर्बन्धनादिदुःखं स्वस्य च तद्विच्छेदादिदुःखं श्रीकृष्णजन्मोत्सवानन्देन विस्मृतैवेति भावः ॥ १७ ॥

ननु, कुबेरेणाप्यशक्यं नराणां कामितपूरणं श्रीनन्दराजेन कथं कृतमित्यत आह—तत इति । हरेर्निवासभूतस्य आत्मनो गुणैर्व्रजः सर्वसमृद्धिमानेव सर्वदा तत आरभ्य तु रमायाः सर्व-सम्पत्तेराक्रीडं क्रीडास्पदमभूत् यदि सर्वसम्पत्तिरेव नन्द-भवने क्रीडितुमारेभे तदा कस्य देयवस्तुनस्तत्राभाव इति भावः ॥ १८ ॥

चिरात् सर्वमनोहरपुत्रोत्पत्त्या प्राप्तमहानिधिरिव "श्रेयांसि बहुविघ्नानि"इति विमृश्य श्रीनन्दराजो यथा देवपितृदिक्पाल-ग्रहादीन् पूजादिभिः प्रसादयामास तथा देशाध्यक्षं दुष्टनृपं कंसमपि स्वर्णमुद्रारत्नवस्त्राद्युपहारेण प्रसादयितुं वार्षिक-करदानमिषेण तत्समीपङ्गन्तु न विलम्बं इत्याह गोपा-निति ॥ १९ ॥

भ्रातरं वैश्यकन्यायां शूरवैमात्रेयभ्रातुर्जातत्वादिति भारत-तात्पर्ये श्रीमध्वाचार्यचरणोक्तं ब्रह्मवाक्यं "तस्मै मया स वरः सन्निसृष्टः स चास नन्दाख्य उताश्च भार्या । नाम्ना यशोदा स च शूरतातसुतस्य वैश्याप्रभवोऽस्य गोपः" इति वैश्याप्रभव इति पितामहास्तज्जातित्वात् अत एव स्कान्दे "बान्धवाना हितार्थाय धृतो गोवर्द्धनो मया"इति भगवद्वाक्यं "यादवेषु च सर्वेषु भवन्तो मम वल्लभाः" इति तद्भ्रातॄन् प्रति रामवाक्यं च तदवमोचनं तस्य वसतिस्थानम् ॥ २० ॥

---

तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ।
प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ २१ ॥
पूजितः सुखमासीनः पृष्ट्वाऽनामयमादृतः ।
प्रसक्तधीः स्वात्मजयोरिदमाह विशाम्पते ॥ २२ ॥
दिष्ट्या भ्रातः ! प्रवयस इदानीमप्रजस्य ते ।
प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत ॥ २३ ॥
दिष्ट्या संसारचक्रेऽस्मिन् वर्तमानः पुनर्भवः ।
उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततः श्रीनन्दगृहे भगवत्प्रवेशादारभ्य हरेर्निवासाद्धेतोर्ये आत्मनि गुणाः सर्वसमृद्धिमत्वादयस्तैः रमायाः आक्रीडं क्रीडा-स्थानम् ॥ १८ ॥

निरूप्य आदिश्य वार्षिक्यं प्रतिवर्षं देनम् ॥ १९ ॥

तस्य नन्दस्य अवमोचनं निवेशस्थानम् ॥ २० ॥

---

भाषाटीका ।

या समय महाभाग्य वारी श्री रोहिणीजी यद्यपि प्रोषित भर्तृकाहीं तथापि नंदराय के अभिनन्दन सों दिव्य वस्त्र, माला, और कंठ के आभरणन सों विभूषित होय कें विचरतीं भई ॥ १७ ॥

हे नृप वा समय सों लेकर कें नन्द को व्रज सर्व समृद्धि युक्त होतभया । सो हरि के निवास सों और कछु अपने स्वाभाविक गुणन सों साक्षात् लक्ष्मीजी को क्रीडा-स्थान होतभयो ॥ १८ ॥

या प्रकार अष्टादश पद्यन सों नन्दोत्सववर्णन करकें श्रीनन्द मथुरा गमनादि को वर्णन करं हैं-कि नन्दजी अपने चतुर गोपनकों गोकुल की रक्षामें राखकें कंसके वार्षिक कर देवे कों मथुराकूं जात भये ॥ १९ ॥

वसुदेवजीने भी अपने भ्राता नन्द को मथुरा में आए भये सुनी और जब जानी कि नन्दजी राजा कंस को कर चुकाय आये तब वसुदेवजी उनके गाढानके उतारेपै जात भये ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुनर्भवः पुनर्जात इव तत्र हेतुगर्भं विशेषणं संसारचक्रे वर्त्तमान इति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी

तन्दृष्ट्वेत्यादौ नन्द इत्यस्याद्यादार्थं ततश्च कंसभयादिना तस्याग-मनासम्भवेऽपि सहसैवागतं तं श्रीनन्दं दृष्ट्वा यद्वा सहसा स[...] द्येवोत्थाय प्रीतः लब्धः परमानन्दः ततश्च प्रेम्णा विह्वलः कम्पादि[...] विकारैराकुलः सन् यतः प्रियतमं यद्वा ततः प्रेमविवश[...] क्षणं बभूव तत्र श्रीनन्दस्तमागतमित्येतावत्यंशे देहः प्राणमिवा[...] दृष्टान्तः न तु दृष्ट्वेत्याद्यंशेपि तत्रासम्भवेनाव्याप्तेः ततश्च [...] दृष्ट्वेत्यादिकं सर्वं योजयित्वा पश्चात् कः किमिवागतमित्युद[...] योजनीयं देहः प्राणमिवेति वर्षाज्येष्ठस्यापि श्रीवसुदेवस्य श्रीन[...] न्देनानमस्कृतत्वाद्वयसाऽनुजत्वं लक्ष्यते तच्च पुनर्जनिष्यमाणापत्य[...] वचसा व्यक्तीभविष्यति "दिष्ट्या भ्रातः प्रवयसः" इत्या[...] दिना ॥ २१ ॥

ततश्चार्थात् श्रीनन्देन पाद्यादिना पूजितः श्रीवसुदेवः त[...] स्ववासागतत्वात् अनामयं कुशलमित्यर्थः । सविनयवचनादि[...] आदृतश्च सन् इदं वक्ष्यमाणमाह-प्रसक्तधीरिति । वक्ष्यमाण[...] सर्वस्यापि पुत्रार्थकत्वात् स्वशब्देन तदानीं तत्सङ्गस्वभावे[...] तस्य भगवद्बुद्धिमिश्रत्वेऽपि वात्सल्यमेवासीदिति भावः । त[...] श्रीशुकेन स्वानुमोदनं च व्यञ्जितं विशाम्पते प्रजानाथ ॥ २२ ॥

दिष्ट्येति । अनेन रहस्यं दूतप्रस्थापनं गम्यते बहुलयज्ञादि[...] प्रयासैरप्यनुत्पत्तेः प्रजामात्रस्याशाया निवृत्तस्यापि इदानीं यत्प्र[...] समपद्यत परमोत्तमपुत्रत्वेन सम्पन्नतया जातेत्यर्थः । एतद्दिष्ट[...] सोऽयं सिद्धान्तसरस्वतीसंवादः स्वमते तु छलेनैव तथोक्तं सम्[...] गप्राप्यतेत्येवार्थः प्रजेत्येव वा छलोक्तिः सन्ततिमात्रार्थत्वा[...] अत्रैवं विवेचनीयम् अनेन तदभिप्रायाज्ञानादेव प्रजामात्राशा त[...] दर्शिता तस्य तु तादृशप्रजताया एवाऽऽशा प्रागासीत् फलेन फ[...] कारणानुमानात् अत एव दुर्लभत्वज्ञापनाय विलम्बोद्भू[...] तथा तस्य प्रवयस्त्वादिकमपि तत् ज्ञापनं तु पुत्रतापन्ने श्रीभगव[...] स्नेहभरोद्दीपनार्थं लोके हि वयोधिकस्यानपत्यस्य बहुप्रयत्नेनाप्य[...] प्राप्तापत्यस्य अत एव निराशस्याकस्मादुत्पन्ने पुत्रोत्तमे अत्यन्त[...] स्नेहोदयत इति ॥ २३ ॥

अद्य दिष्ट्या भवानुपलब्धः यतः प्रियदर्शनं दुर्लभं ननु भ[...] तु त्वद्वशस्य न दुर्लभत्वं तत्राह पुनर्जात इव भवानिति त[...] कुतः संसारचक्रे वर्त्तमानः चयोच्चयो मृत्युसम्भावनादित्यर्थः । ए[...] च्चानिष्टाशङ्कीनि बन्धुहृदयानीति उक्तमिति तेषामभिप्रायः य[...] संसारचक्रे वर्त्तमानो भवानस्मिन्नेव जन्मनि पुत्ररूपेण पुनर्जा[...]

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इव दिष्ट्योपलब्धः यतः प्रियमात्रस्य दर्शनं दुर्लभं किमुतैतादृशानन्दयुक्तस्येत्यर्थः। यद्वा दिष्ट्या भद्रं कथम् अस्मिन् संसारचक्रे अद्य पुनर्भवो जन्मैव वर्त्तमानः ममेत्यर्थात् यतो भवानद्योपलब्धो दृष्ट इति तत्र हेतुः दुर्लभमिति ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुनर्भवः पुत्ररूपेणोत्पत्तिः दक्षिणा भवति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमागतं वसुदेवं दृष्ट्वा प्राणं प्रति देह इव यथाप्राणे आगते सति देह उत्तिष्ठति तद्वदनेन प्राणवन्निरतिशयप्रीतिविषयत्वं सूचितं सहसाऽऽशु उत्थाय नितरां प्रीतः प्रेम्णा विह्वलश्च प्रियतमं वसुदेवं दोर्भ्यां सस्वजे आलिङ्गितवान् ॥ २१ ॥

ततस्तेन पूजितो वसुदेवः सुखं यथा तथा आसीनमुपविष्टं नन्दमनामयमारोग्यमाधिव्याधिराहित्यमादरयुक्तः पृष्ट्वा हे विशाम्पते! आत्मजयोः प्रसक्तधीरासक्तचित्तः इदं वक्ष्यमाणमाह ॥ २२ ॥

तदेवाह-दिष्ट्येति षड्भिः। हे भ्रातः! अप्रजस्यानपत्यस्य सतः प्रवयसः वृद्धस्य अतएव प्रजाशायाः सन्तानवाञ्छायाः निवृत्तस्य तवाधुना प्रजा पुत्रः समपद्यत जात इति यदेतद्दिष्ट्या दिष्ट्येत्यानन्दद्योतकमव्ययमयमस्माकं महानानन्दो जात इत्यर्थः एवमुत्तरत्रापि ॥ २३ ॥

अस्मिन् संसारचक्रे वर्त्तमानः पुमान् पुनर्भवतीति पुनर्भवः पुत्ररूपेणोत्पन्नः इत्येतद्दिष्ट्या तद्वद् भवान् मयोपलब्धो दृष्ट इत्येतत् दिष्ट्या तत्र हेतुः दुर्लभं हि प्रियस्य दर्शनमिति यद्वा अस्मिन् संसार चक्रे वर्तमान एवाहं पुनर्भवः पुनर्जातः कथञ्चित्कंसभयाद्विमुक्तः पुनर्जातप्राय इत्यर्थः। यद्वा अस्मिन्नेव जन्मनि मया पुनर्जातप्रायेण त्वमुपलब्ध इत्येतत् दिष्ट्या शृङ्खलितस्य मम प्रियतमभवद्दर्शनं दुर्लभं हीत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रवयसः वृद्धस्य इदानीं प्रजा समजायतेति यत् अतो दिष्ट्या ॥ २३ ॥

इदञ्चैकं मङ्गलमभूदित्याह—दिष्ट्येति । पुनः पुनर्भवतीति पुनर्भवः तस्मिन् किञ्चोद्यमिति ? तत्राह-दुर्लभमिति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दृष्ट्वा प्रीतः सस्वजे तदङ्गसङ्गाच्च प्रेमविवशो जातः ॥ २१ ॥

अत्र वयःकनिष्ठेनापि श्रीनन्देनानमस्कृतत्वात्तस्य ज्येष्ठत्वं गम्यते आदृतो विनयवाक्यादिना स्वात्मजयोरिति, तस्यवात्सल्यं सूचितम् तत्र तस्य प्रजायां आशा न साधारणयाः किन्तु तादृश्या एव अन्यथा तदप्राप्तेः ॥ २२--२३ ॥

पुनर्भवो जन्म वर्त्तमानोऽभूत् ममेत्यर्थात् तत्र हेतुः उपेति संसारचक्रेऽस्मिन् प्रियदर्शनं दुर्लभमिति ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भ्रातृत्वख्यापनार्थं नन्दस्य सम्मानमाह-तं दृष्ट्वेति । सहसोत्थानमत्यादरख्यापकं लोकव्यवहारादपि भवतीति तन्निवृत्त्यर्थमाह-देहः प्राणमिवागतमिति । मूर्च्छितो देहः प्राणे समागते शीघ्रमुत्तिष्ठति तेजोविशेषं च प्राप्नोति यथा अयः पिण्डोऽग्निसम्बन्धे तथा सर्वदेवतामये वसुदेवे निकटे समागते तेजोज्ञानं सर्वे च सद्गुणाः वसुदेवनिष्ठाः अत्र समागताः वसुदेवाधिदैविकं रूपं च तदाह-प्राणे समागते देह इवेति इदं तु भगवच्चरित्रमेव अत एवात्यन्तप्रीतः आगमनेन सर्वस्वप्राप्त्या च अत्यन्तं प्रीतः प्रियतमस्तु व्यवहारे स्निग्धो भवति परमार्थतश्च मायां दूरीकृत्य भगवन्तं दत्तवानिति न ज्ञानादशादधिकः प्रियो भवति इदानीं च सर्वस्वं दत्तवान् क्षेमालिङ्गनमाह—दोर्भ्यां सस्वज इति । अन्यत्तु कृत्यमालिङ्गनत्यागं च न कृतवानित्यत्र हेतुमाह-प्रेमविह्वल इति प्रेम्णा उद्गमेन विवशो जातः एतादृशोऽपि पुनः स्वानस्थितः अग्रिमकार्यं कृतवानिति भगवच्चरित्रम् ॥ २१ ॥

लौकिकमाह—पूजित इति । अन्यथा देवगुह्यमुच्यमानं तस्मिन् न स्थिरीभवेत् आदौ पूजितः ततः सङ्कोचाभावेन सुखमुपविष्टः स्वयमप्यनामयमारोग्यं पृष्ट्वा "वैश्यं पृच्छेदनामयम्" इति वाक्यात् आदृतः नन्देन परमादरेण गृहीतः देवगुह्यकथनार्थं हेतुमाह-प्रसक्तधीः स्वात्मजयोरिति एकः पुत्रो नन्देनापि ज्ञायते अपरस्तु न ज्ञायत इति साक्षादुभयोः कुशलं पृष्टमशक्यम् अतः साधारणं पृष्टव्यमिति तस्य प्रकृताऽनुपयोगित्वमाशङ्क्य दैत्यर्थमाह—प्रकर्षेण सक्ता धीर्यस्येति, इदं वक्ष्यमाणं साधारणरूपमाह—विशाम्पते इति । वैश्यानां राजेति । सम्बोधनं गूढवचनज्ञानार्थम् ॥ २२ ॥

आदौ तं पुत्रवत्त्वेन प्रोत्साहयति--दिष्ट्येति । हे भ्रातः! प्रवयसो वृद्धस्य ते प्रजाशायां निवृत्तायां प्रजाशातः स्वयमपि निवृत्तस्य प्रजा समपद्यतेति यत् एतद्दिष्ट्या परमभाग्येन इदानीमप्रजस्येति यद्यपि स्पष्टतया निरूपितः प्रजाभावः तथाप्यन्वये भ्रमो भगवत्कृतो निरूपितः अप्रजस्य कृत्रिमप्रजापि न सम्पादितेति ज्ञापितं वृद्धत्वात् स्वरूपा ऽयोग्यता निरूपिता आशाया निवृत्तत्वात् प्रयत्नो निवारितः इच्छाया अपि निवृत्तत्वात् पुरोहितादिद्वाराऽपि प्रयत्नो निवारितः प्रजाशब्द अपत्यमात्रवाची अतो नानृतं समपद्यतेत्यकस्मादागमनं मायायागपि रेतो जनितत्वाभावाय वृद्धत्वादि कीर्तनं तं प्रति भगवत्यपि तथात्वख्यापनाय उभयं भगवदिच्छया अतो दिष्ट्येति युक्तम् अनेन सामान्यतस्तस्य स्वरूपमप्युक्तम् अन्यथा भ्रातृवचने दोषः स्यात् ॥ २३ ॥

आगमने जातं स्वदर्शनं चाभिनन्दति--दिष्ट्येति । अस्मिन् संसारचक्रे वर्त्तमानः पुनर्भवः पुनरुत्पन्नः मया उपलब्ध इति

नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ।
ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ २५ ॥
कच्चित्पशव्यं निरुजं भूर्य्यम्बुतृणवीरुधम् ।
बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ २६ ॥
भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ।
तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ २७ ॥
पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ।
न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥ २८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यत् एतदपि दिष्ट्या संसारो हि चक्रभ्रमात्मकः भ्रमणे पतितः अत एवाधो गच्छेत् दूरे स्थितस्तु परिभ्रमेत् चक्रे वर्त्तमानस्तु पुनर्न दृश्यत एव चक्रे वर्त्तमानेन उभयोरन्यतरस्य वा मज्जनसम्भवात् मग्नश्चेत्पुनरुत्तिष्ठति तस्य पुनर्भव एव तथा सर्वमारकस्य कालस्य संवत्सरात्मकस्य वशं गताः पुनर्वत्सरान्ते चेत्तिष्ठन्ति तदा पुनर्भूता एव। स सम्वत्सरः प्रजापतिर्जातः जनकत्वात् अन्यथा कालो भवेत् तत्रापि पुत्रादिसौख्यं चेत् प्राप्नुयात् तदा पुनरुत्पन्नः पुत्ररूपेण अलौकिकः स्यात् एतद्भाग्यव्यतिरेकेण न भवतीति दिष्ट्या अतः संसारचक्रे स्थितिरपि दिष्ट्या पुनर्भवोपि दिष्ट्या मया उपलब्धोपि दिष्ट्या मृत्युरसमन्निकटे सर्वदा वर्त्तत इति भवानिति स्नेहः अप्रेत्यलभ्यलाभः एतस्य केवलमदृष्टसाध्यत्वे हेतुमाह–दुर्लभं प्रियदर्शनमिति। संसारे सर्वमप्रियं दुःखदत्वात् तत्र प्रियदर्शनं दुर्लभमेव प्रियस्य प्रीतिजनकस्य ॥ २४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तं वसुदेवं सस्वजे नन्दः ननु ननमस्कार वयसा ततो ज्येष्ठत्वात् ॥ २१ ॥

आह वसुदेवः ॥ २२ ॥

अनपत्यस्य वृद्धस्य पुत्रो जात इत्युक्ते मिथ्योक्तिः कन्येत्युक्ते नन्दस्याप्रतीतिरतः अर्भेत्यपत्यवाचकशब्दप्रयोगः मत्पुत्रन्यासं स्वकन्याचौर्यं च कथञ्चिन्नन्दो जानाति न वेति शङ्कयापि तच्छब्दप्रयोगः ॥ २३ ॥

दिष्ट्येति बन्धनादिक्लिष्टस्य मम पुनर्भवो वर्तमानोयं पुनर्जन्मैवाभूदित्यर्थः। यतो भवानुपलब्ध इत्येतावत्कालपर्यन्तमहं भवदनुपलम्भान्मृत इवासमिति भावः ॥ २४ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं श्रीवसुदेवं पूजितः श्रीनन्द इति शेषः ॥ २१—२२ ॥

दिष्ट्या भद्रम् ॥ २३ ॥

पुनर्भवः पुनर्जातो यथा भवानुपलब्धः मयेति शेषः ॥२४॥२५॥

———

### भाषा टीका

नन्दरायजी वसुदेवजी को आवते देखकें जैसें प्राणन के आये पै शरीर खडो हो जाय तारीतसों उठकें खडे होय गये और प्रेमसों विह्वल होयकें अपने परम प्रिय श्रीवसुदेवजी को दोनों भुजानसों आलिङ्गन करत भये ॥ २१ ॥

हे राजन् ! नन्दजी ने श्री वसुदेवजी कों आसन के ऊपर बैठार कें जब बडो सत्कार कियो, तब अपने दोनों पुत्रनके विषै प्रसक्तबुद्धिवारे वसुदेवजी बडे आदर सें नन्दजी सों एसें पूँछत भये ॥ २२ ॥

वसुदेवजी बोले, कि–हे भ्रातः ! इतनी बडी अवस्था में अब ताईं तुमारें सन्तान नहीं भई और प्रजा ( पुत्र ) की आशा सें तुम निवृत्त भी होचुके हे। पर तो भी परमेश्वर की कृपा सों जो अब तुमारे पुत्र उत्पन्न भयो ये वडोई मङ्गल भयो ॥ २३ ॥

या संसार चक्र में वर्त्तमान पुनर्जन्म को प्राप्त भये के नाईं आप के मिलवे को जो लाभ भयो सो भी वडोई मङ्गल भयो काहे सों, कि–या संसार में प्रिय जनों को दर्शन अति दुर्लभ है ॥ २४ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्लभत्वमेवाऽह–नैकत्रेति। प्रियश्चासौ संवासश्च प्रियसंवासः हे प्रियेति वा स्रोतसः ओघेन नीयमानानां प्लवन्तीति प्लवाः तृणकाष्ठादयस्तेषां यथैकत्र स्थितिर्नास्ति तद्वत् ॥ २५ ॥

कच्चिदिति। पशव्यादिरूपं तस्मिन्वने निर्दोषगोपयोवध्यादि प्रभूतगोपिकास्तन्यादिना पुत्रत्वगविषया पृच्छति प्रसक्तधीः स्वात्मजयोरित्युक्तत्वात् ॥ २६ ॥

भवद्भ्यामुपलालितः सन्कच्चिद्वर्तत इति शेषः ॥ २७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुत्रादर्शनक्लेशानाह—पुंस इति। सुहृदो बन्धून् प्रत्यनुभावितः सम्पादितो यस्त्रिवर्गः स हि पुंसो विहितो युक्तः शास्त्रेण वा प्रोक्तो न स्वमात्रपर्यवसितः अतस्तेषु क्लिश्यमानेषु सुखाय न भवतीत्यर्थः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एकत्र संवासः सदास्थितिर्न स्यात् तत्र हेतुः चित्रेति व्यूह्यमानानां विविधं नीयमानानां "वहप्रापणे" ॥ २५ ॥

निरुजं नीरुजं ह्रस्वत्वं छन्दोनुरोधात् रुजाशब्दश्चायं टाबन्तः अधुना यत्रास्स इति पशूनां सुखानुसारेण श्रीमथुरामण्डले कदाचित् कस्मिंश्चिद्वने स्थितेः यद्वा अधुनेत्यस्य पूर्वार्द्धे सर्वैरपि पदैरन्वयः विशेषतस्तदानीं तत्तदपेक्षया सुहृद्भिर्वृत इति तत्रापि तत्तद्गुणानां बहुदेशव्यापितापेक्ष्य इति भावः ॥ २६ ॥

उपलालितः निजपुत्रवल्लालितो यः स कच्चित् कुशली वर्त्तत इत्यर्थः। अन्यत्तैः। यद्वा किं भवन्तं तातं मन्यमानो भवति इति स्नेहं वर्द्धयति वस्तुतस्तु जातमात्रस्य तद्भावो न सम्भवेत् मम सुत इति पुरैव श्रीवसुदेवेन तज्जन्मनोपि श्रवणात् तथा च श्रीहरिवंशे "प्रागेव वसुदेवस्तु व्रजे शुश्राव रोहिणीं। प्रजातां पुत्रमेवाग्रे चन्द्रात्कान्ततराननम्" इति अस्यार्थः प्रजातां जनितवतीम् अग्रे श्रीनन्दनन्दनजन्मनः पूर्वमिति तयोर्जन्म च प्रायः समकालमेव ज्ञेयं तथा च तत्रैव तदानीं श्रीवसुदेवोक्तौ "वर्द्धमानावुभावेतौ समानवयसौ यथा। शोभेतां गोव्रजे तस्मिन् नन्दगोप! तथा कुरु" इति। अत एव तयोर्युगपद्रिङ्गणादिलीला वक्ष्यते श्रीपुरुषोत्तम द्वारिति तज्जन्म नत्त्वत्र क्रियते तच्च श्रीकृष्णस्याष्टमासिकत्वात् तस्य तु द्वादशमासिकत्वादुपपद्यत इति ॥ २७ ॥

एवं मित्रपुत्रादीनामपि पालनादिना भवतः परमकृतार्थता पूर्वैव अहं त्वधुना धनादिमानपि पुत्रकलत्रमित्रादिदुःखेनाकृतार्थ एवेत्याह—पुंस इति। पुम्मात्रस्य तोपेक्ष्य तदेव पौरुषमिति भावः। हि एव अनुभावित एव क्लिश्यमानेषु क्लेशं प्राप्नुवत्सु अर्थाय सुखाय न कल्पते किन्तु दुःखायैवेत्यर्थः तेषां क्लेशे सति धर्मस्याप्यनादरणीयत्वात् "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्" इति स्मृतेः ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

चित्रकर्मणां विविधकर्मणां प्लवशब्दः काष्ठपरः ॥ २५ ॥
पशव्यं पशुहितं निरुजमरोगम् आस्से वससि ॥ २६–२७ ॥
अर्थाय प्रयोजनाय ॥ २८ ॥ २९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

दुर्लभत्वमेवाह—नैकत्रेति। सुहृदाम् एकत्र प्रियसंवासः प्रियसंवासो सम्वासश्च प्रियेण प्रियगोष्ठिपूर्वकं सहवास इति वा हे प्रियेति वा न सुलभः किन्तु दुर्लभ इत्यर्थः। यथा स्रोतसः प्रवाहस्यौघेन पूरेण व्यूह्यमानानामितस्ततो विविधं नीयमानानामत एव चित्रकर्मणां विविधकर्मणां प्लवानां प्लवन्तीति तथा प्लवानामुत्प्लुत्य प्लवन्ति उत्प्लुत्य गच्छन्तीति तथा तेषां प्लवानां काष्ठादीनामेकत्र वासो दुर्लभस्तद्वत् ॥ २५ ॥

यत्पशव्यं पशुभ्यो हितं निरुजं नीरोगं भूरि बहुलमम्बु जलं तृणानि वीरुधो गुल्मानि च यस्मिन् यस्मिन् त्वं सुहृद्भिर्युक्तः आस्से तद्वनमधुना कच्चिदास्ते कच्चिदितीष्टप्रश्नद्योतकमव्ययं कुशलमास्ते किं तदस्माकमिष्टमित्यर्थः ॥ २६ ॥

तथा हे भ्रातः! मम सुतो बलरामः मात्रा रोहिण्या सह भवतो व्रजे कच्चित्, कथम्भूतः? भवन्तमेव तातं पितरं मन्वानः भवद्भ्यां दम्पतीभ्यां पुत्रवदुपलालितः ॥ २७ ॥

अथ सत्यपि सन्ताने तद्दर्शनस्पर्शनोपलालनाद्यभावान्निर्विण्णः किञ्चिल्लोकपरिपाट्याऽऽह—पुंस इति। त्रिवर्गस्त्रयाणां धर्मार्थकामानां वर्गः स यदि सुहृदो देहानुबन्धिनः प्रत्यनुभावितोनुभवप्रापितः तर्हि स पुंसो युक्तः यद्वा विहितः शास्त्रानुमतः अन्यथा त्रिवर्गे स्वानुभवमात्रपर्यवसिते सत्यत एव हेतोः सुहृत्सु क्लिश्यमानेषु च सत्सु त्रिवर्गोऽर्थाय प्रयोजनाय न कल्पते व्यर्थ इत्यर्थः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दुर्लभत्वमुपपादयति—नैकत्रेति। प्रियसंवासः हर्षेण निवासः प्रियैः संवासो वा चित्रकर्मणां नानाविधपुण्यपापवतां स्रोतसो नद्याः ओघेन प्रवाहेण व्यूह्यमानानां विविधं नीयमानानां प्लवानां काष्ठादीनां पोतानां वा ॥ २५ ॥

कच्चिदिति साऽनुनयप्रश्नः पशव्यं पशुहितं निरुजं नीरोगकरम् ॥ २६ ॥

नन्दस्य कृष्णो मम सुत इति भ्रान्तिं निवारयति—भ्रातरिति ॥ २७ ॥

त्रिवर्गो धर्मादिः पुंसः विहितो वेदे इति शेषः। स सुहृदामनिमित्तबन्धूनां जनानामनुभावतः प्रभावान्निश्रयाद्वा भवति हि यस्मात्तस्मात् तेषु सुहृत्सु क्लिश्यमानेषु सत्सु त्रिवर्गः अर्थाय प्रयोजनाय न कल्पते समर्थो न भवति ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

सम्वासः सदास्थितिः ॥ २५ ॥

निरुजं नीरुजं रुजा रोगः अधुनेत्यन्यत्र पूर्वमासीदिति ज्ञापितम् ॥ २६–२७ ॥

सम्प्रति कंसान्मुक्तस्य नानास्थानगतस्वजनस्य तद्दुःखेन तदपालनस्य स्वं व्यर्थमित्याह, पुंस इति ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं खेदे अत्रैव स्थातव्यमिति शङ्कां परिहरन् मनोगमनदोषं च परिहरन् दर्शनस्य दुर्लभत्वमुपपादयति—नैकत्र प्रिय-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सम्वास इति । प्रिययोरेकत्र सम्वासः न सम्भवति तत्रापि सुहृदां बन्धूनां मध्ये प्रिययोः तत्र हेतुश्चित्रकर्मणामिति यद्येकं कर्म भवेत् एकदा एकत्रैवोत्पन्ना भवेयुः । प्रपायामेकदा सह समागता इव तत्राप्यनियमः । तदेव मिलितानां चित्रं कर्म येषां कर्माधीनाः कर्मणैव उत्क्रान्तिगत्या ऽऽगतिमन्तो भवन्ति न केवलं कर्माधीना एव तत्रापि कालो महान् बाधक इति दृष्टान्तेन कालस्य बाधकत्वमाह-ओघेनेति । प्रवाहेण यथा विक्षेपत ऊह्यमानाः तृणा मिलिताः पुनर्वियुक्ता भवन्ति तत्रापि प्लवाः नौकारूपाः तत्रोभयोः प्रवर्त्तकत्वं जलस्य कर्णधारस्य च प्रवाहस्य सहजत्वख्यापनाय स्रोतस इत्युक्तम् । अनेन प्लवानां गमनागमनमध्ये सङ्गतिः क्षणमात्रमेव भवतीति निरूपितं पारे-गतस्यापि दर्शनाभावश्च ॥ २५ ॥

एवं दर्शनं नन्दं चाभिनन्द्य देवगुह्यप्रकारेणाह-कच्चिदिति। कच्चिदिति सम्भावना प्रश्ने बृहद्वनं पशव्यं कच्चित् पशूनां हितं यत्र पशवो रमन्ते परस्परया पशुस्थाने आधिदैविकपशु-सद्भावे वा पशूनां रमणं तत्रापि निरुजं कच्चित् देशविशेषे पशून् रोगा भवन्ति यत्रैवाकाले पशुनाशः सर्वथा रोगाभावस्तु भगवत्सान्निध्यात् इति सामान्यभावेन भगवत्त्वं ज्ञापितं पशूनां भक्ष्यादिसम्पत्तिं च पृच्छति भूरीणि अम्बूनि तृणादीनि वीरुधो लताश्च यस्मिन् जलानां बहुत्वं सरसता व्यापकं तेन दुग्धसम्पत्तिरपि निरूपिता तृणानां बहुत्वं पशूनामभिवृद्धिहेतुः वीरुधामाधिक्यं घृताधिक्यजनकं सौगन्ध्यजनकं च सम्भाव-नायां हेतुमाह-बृहद्वनमिति । अर्थतः शब्दतश्च बृहद्वनं शब्दतो धर्मश्च हेतुश्चोक्ताः तदिति प्रसिद्धम् अधुना यत्रास्स इति सर्वदा स्थितिस्थानं प्रष्टव्यं न स्यात् कदाचित्तस्य स्थितिर्गोष्ठेष्वपि भवतीति तद्व्यावृत्त्यर्थमाह-सुहृद्वृत इति । बन्धुभिः कुटुम्बेनापि सहितो यत्र वर्त्तस इत्यर्थः ॥ २६ ॥

एवं देशकुशलतां पृष्ट्वा बालकयोः कुशलं पृच्छति-भ्रात-रिति । अन्यत्र भार्यापुत्रयोः स्थापनमनुचितमिति भ्रातरित्युक्तं मम सुत इति भ्रातुर्भवः मात्रा सह भवद्व्रजे कुशली कच्चित् ? मात्रा सहेति वचनात् रक्षामात्रमेव तव कर्त्तव्यं बालकशुश्रू-षात्वन्यत एव सिद्धा भाराधिक्यं मा तातं भवन्तं मन्वान इति दीनत्वं पालनादिकं लौकिकं न प्रष्टव्यमेव यतो भवद्भ्यां नन्दयशोदाभ्याम् उपलालितः पालनप्रीणनानन्तरम् उपलालनम् अतस्ते च निरूपिते भगवांस्तु न प्रष्टव्य एव प्रकारान्तरेण तु पृष्ट एव ॥ २७ ॥

नन्विदानीं तथापि सर्वसमृद्धिरस्ति अतः कथं दैन्यं भापस इत्याशङ्क्याह-पुंस इति । पुंसः त्रिवर्गो धर्मार्थकामाख्यः शास्त्रे अभिहितः कर्त्तव्यत्वेन समीचीनत्वेन च परं सुहृदः सम्बन्धी चेत् एकाकिना तु मोक्ष एव सम्पादनीयः न धर्मादि त्रयं हि युक्तश्चायमर्थः एकाकिनस्त्रिवर्गाविषयभावात् प्रयोजनाभावाच्च सुहृत्पदेन चेतनविषयमात्रत्वमुक्तं तेन यत्र क्वापि त्रिवर्गयत्ने सुहृदो भवत्येव किंच न सुहृत्सम्बन्ध-मात्रेण त्रिवर्गस्योपयोगः किन्तु सुहृदैवानुभावितः पुष्टः सह सम्ब-द्धित इत्यर्थः । ततः किमत आह—न वेत्त्विति । तेषु क्लिश्य-मानेषु सुहृत्सु सत्सु त्रिवर्गः पुरुषार्थोय न कल्पते पुरुषार्थरूपो न भवति तेषां तत्र मुख्यत्वाद्यथात्मनः कंसस्य पुत्रमारकत्वा-त्ताकारणं देवकीपुत्रत्वं संभाव्येतेति अतो दीनत्वमुचितम् द्रव्यादिदानं तु भेदजनकम् ॥ २८

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वेवञ्चेद्दावामेकत्रैव वसावस्तत्राह-नैकत्रेति । हे प्रिय ! ओघेन स्रोतसो वेगेन व्यूह्यमानानां विविधं नीयमानानां प्लवन्तीति प्लवा-स्तृणकाष्ठादयस्तेषाम् ॥ २५ ॥

पशुभ्यो हितं पशव्यं निरुजं ह्रस्वत्वं छन्दोनुरोधात् रुजा-टावन्तः ॥ २६ ॥

मम सुतः सुखं वर्तत इति शेषः । मन्वान इति वर्तमान-सामीप्यान्मंस्यमान इत्यर्थः ॥ २७ ॥

मम तु गृहाश्रमो विफल एवेत्याह—पुंसः सुहृदः स्त्रीपुत्रा-दीननुलक्षीकृत्य त्रिवर्गः शास्त्रेण विहितो भावितः स्वकर्मभिः निष्पादितः तेषु सुहृत्स्विति स्त्रीपुत्रयोर्मद्विच्छेदात् मम च पुत्रलालनादि सुखानवाप्त्या न अर्थाय न प्रयोजनाय ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र त्वमधुनास्से तद्बृहद्वनं कच्चित्किंपशुभ्यो हितं निरुजं निर्गतरोगम् ॥ २६ ॥

मम सुतः रौहिणेयः भवद्भ्यां दम्पतीभ्यामुपलालितः सन् भवद्व्रजे वर्तते इति शेषः ॥ २७ ॥

यत्र तत्र कंसभयाद्वर्तमानानि बहुकलत्राणि रौहिणेयं च संस्मृत्य तत्कारुण्यवशादाह-पुंस इति । सुहृदः स्वकीयान् प्रति अनुभावितः सम्पादितस्त्रिवर्गः अर्थधर्मकामसमूहः पुंसो विहितः शास्त्रेण सार्थकतया प्रोक्तः तेषु क्लिश्यमानेषु तु अर्थाय न कल्पते किन्तु निरर्थो भवतीत्यर्थः ॥ २८ ॥

---

भाषा टीका ।

सुहृदन को एकत्र प्रिय सहवास नहीं होयसकै है । क्यों सों, कि—वे सब विचित्र कर्म वारे हैं । जैसे जलके प्रवाह में बहवेवारे तृण काष्ठ आदिक कब हूं मिलें हैं और कब हूं बिछुरें हैं ॥ २५ ॥

भलाँ तुम अपने महावन की कुशल तो कहौ पशुन के हित देवेवारो, बहुत जल तृण वृक्ष जामें, और जहां आज काल आप अपने सुहृदन सहित रहो हौ सो वन तो निरुपद्रव है ॥ २६ ॥

हे भ्रातः ! भलाँ तुमारे व्रज में अपनी माता सहित हमारो पुत्र बलदेव तो सुखी है ? वा जगै आप कोंई पिता जान होय गौ काहे सों, कि—आप दोनोंई तो वाको लालन पालन करौ हौ ॥ २७ ॥

पुरुष कों बंधुन के तांई अर्थ, धर्म, काम, रूप त्रिवर्ग को संपादन शास्त्र सूं विहित है । फिर जबवे सुहृदही दुःख पावें लगें तब वा त्रिवर्ग को कहा फल होयगो ॥ २८ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कराभ्यां गाढं स्तनं प्रपीड्य अपिबदिति सम्बन्धः । एवं निर्भयतया स्तनपानप्रवृत्तौ हेतुमाह-भगवानिति । ईश्वरत्वात् स्त्रीमारणादोषः परिहृतः "पुमान् योषिदुत क्लीब" इति वाक्यात् वीर्य्यवत्त्वात् जीरणादिसामर्थ्यं द्योतितं यशोवत्त्वात् अलौकिकचरित्रकरणं श्रीयुक्तत्वान्न प्रकारान्तरेण मारणं तादृशशोभानाश प्रसङ्गात् ज्ञानित्वात्तस्या दोषपरिज्ञानेन मारणावश्यकत्वं वैराग्ययुक्तत्वात् दैत्यपक्षवधो न बाधकः । एवं तस्या मारणे हेतुषट्कं गुणैः धर्मिणा च मोक्षदानम् अन्यथा न पिबेत् अत एव तस्याः सर्वप्रायश्चित्तार्थं प्राणैः सममपिबत् प्राणरक्षार्थं हि तया सर्वं कृतं प्राणो भक्षितं तु सर्वं भगवदर्पणं भवति शिशूनां प्राणा अपि अत्र सन्तीति तेषामपि मुक्तिः सूचिता बहुवचनेन च प्राणपदेनेन्द्रियाण्यपि गृह्यन्ते ततः सर्वैव सा सग्री तदीया पीता भवति । ननु, निन्दितपदार्थं भगवान् कथं गृहीतवान् ? अपहतपाप्मा हि सः तत्राह-रोषसमन्वित इति । रोषेण सम्यगन्वितः यथा तदीयोंऽशो दुष्टो भगवति सम्बद्धो न भवति यथा वा स सर्वोऽप्यंशो दग्धो भवति भगवान् सर्वसमन्वित इति क्रोधसमन्वितत्वेऽपि न दोषः । पूर्वं रोषसम्बन्धो नास्तीति वक्तुं प्राणैः समं रोषसमन्वित इत्युक्तं सर्वात्मकत्वात् नाऽसङ्गत्वं गच्छति न तु तस्या मारणार्थं रोषोऽपेक्ष्यते वीर्यस्योक्तत्वात् स्तनद्वारापि प्राणपानं न विरुध्यते साधनफलरूपाः तदीया क्रिया नाशितेति ज्ञापयितुं कराभ्यामित्युक्तम् १०॥

अतो भगवता पेपीयमाने स्तने तत्र स्थितो भगवान् मायारूपोऽपि भगवत्येव प्रविष्टः तत्सङ्गे आधिदैविकी पूतनापि भगवति प्रविष्टा आध्यात्मिक्यास्तु कृत्यमाह—सा मुञ्च मुञ्चेति । सा पूर्वमेवं निर्बन्धयुक्ताऽपि भगवता निःपीडिता तदानीमपि भगवत्स्वरूपमज्ञात्वा वचनत्रयमुक्तवती मुञ्च मुञ्चालमिति यथा प्राकृते बालके पेपीयमाने च स्तनव्यथायां मुञ्च मुञ्चेत्युच्यते अतिव्यथायां पुनः पुनः बालकस्य क्षुन्न निवृत्तेति ज्ञात्वा अलमित्याह—बालो हि स्वबुद्ध्या पूर्णतां न जानाति अन्योक्तं च गृह्णाति अत आह-अन्तःस्थितो दुष्टभावो गतः तेन लौकिकभाषा मात्रोक्ष परिज्ञानार्थं गतेऽपि प्राणे भगवत्सम्बन्धस्य विद्यमानत्वात् प्राणावस्था एव तस्याश्चेष्टामाह-इति प्रभाषिणीति । भगवान् कराभ्यां प्रपीड्येति यदुक्तं तद्बालकेन स्तने मर्द्दनं पीडाजनकं न भविष्यतीत्याशङ्क्याह, अखिलजीवमर्माणि निपीड्यमानेति । जीवस्य मर्मस्थानानि बहूनि यत्र प्रहारेण जीवो गच्छति अखिल एव जीवमर्माणि मर्मस्थाने नितरां पीड्यमाने सति निःपीड्यमाना वा वस्तुतस्तु अखिलेत्युक्ता मर्माणीत्येकवचनं यदुक्तं तेनाखिलपदं जीवविशेषणमेव तथा च तया स्वस्मिन्नानीता ये बालका न जीवास्ते जीवमर्मस्थाने स्थापिता इति तान्स्वस्मिन्नानेतुं भगवांस्तन्निष्पीडनमेव कृतवानित्यभिप्रेतोऽर्थः । बालकद्रोहाज्ञायां भगवानेव निमित्तमिति तादृशानां स्वस्मिन्नानयनमावश्यकमिति तथा । अत एव बालखेलारम्भे ताननुभावयन् मृत्स्नामप्यनुभावितवानत एव "नाहं भक्षितवान्" इति वचनं सत्यम् । अत एव तस्या उरसो भगवत् क्रीडायोग्यत्वाऽपि भक्तानां तत्र स्थितिरासीद्यत एत एव व्रजप्रसङ्गे च वयस्यैरिति पदेन वक्ष्यन्ते तदा अतिव्यग्रया निवृत्तवाक् नेत्रे विवृत्य विपरीततया प्रसार्य चरणौ भुजौ च इतस्ततः क्षिपन्ती नितरां खिन्नं सम्पूर्णगात्रं यस्या[illegible] तादृशी सती रुरोद उच्चैः शब्दं कृतवती अतिबालक[illegible] एवं भावः आश्चर्यजनको भवतीति इत्युक्तम् । अनेनान्तःपी[illegible] महती तस्याः सूचिता भगवतश्च पराक्रमः आकर्षणात्म[illegible] वायौ प्रविष्ट एवं कृतवानिति वीर्यं निरूपितं सात्त्विके [illegible] हस्तपादौ राजसौ गात्रं तामसमिति त्रिगुणपीडा निरूप[illegible] रजोमध्यस्थमुभयसङ्गतं भवतीति द्वयं निरूपितं निर्गमनसम[illegible] प्राणस्य महान् घोषो रोदनं तेनाकृष्ट एव प्राणः भगव[illegible] आकृष्ट इति ज्ञापितम् ॥ ११ ॥

भगवतो माहात्म्यं शृङ्गग्राहिकया प्रदर्शयिष्यन् भगवदाकृष्[illegible] माणप्राणाकृतस्वनस्यमाहात्म्यमाह-तस्याः स्वनेनेति । शब्दस्[illegible] मूर्त्तः मूर्त्तकार्यं चेत् कुर्यात् तदा अलौकिकं भवति चरण[illegible] घाघातेन हि कम्पो भवति शब्देनैव तथा जातमित्याह-मह[illegible] द्यौश्च चचालेति । तत्तदधिष्ठातृदेवतानां भीतत्वात् कम्प [illegible] केचित् पुरुषोत्तमस्य वीर्यमवताराणामपि वीर्यादधिकमि[illegible] ज्ञापयितुं ब्रह्माण्डविग्रहस्य पुरुषस्यापि स्वनेन कम्पो ज[illegible] इत्युच्यते एकदेव सर्वत्र कम्पजनने हेतुः अतिगम्भीररंहसे[illegible] अत्यन्तं गभीरमधःस्थलविदारणसमर्थमुपरिस्थितिभजनसमर्थं [illegible] वेगो यस्य तेन पर्वतसहिता पृथिवी ग्रहनक्षत्रादिसहिता द्यौ[illegible] श्चकारात् तदुपरितना लोकाः पर्वतानां महत्वात् स्थिरत्वा[illegible] कम्पाभावमाशङ्क्य अद्रिसहितेत्युक्तं ग्रहाणां भचक्रे ध्रुवे प्रति[illegible] ष्ठितानां चलनाभावमाशङ्क्य सग्रहेति उभयोरुभयं प्राप्तं [illegible] "नक्षत्रविहिताहं चित्रविहिताहम्" इति श्रुतेः । पातालादिशाम[illegible] बन्धात् दूरस्थितत्वाच्चलनाभावमाशङ्क्याह-रसादिशश्चेति तासामपि चलनं प्रतिस्वनजननं चाधिकं तत्रत्यानां तु [illegible] किञ्चिदवशिष्टमित्याह-जनाः पेतुः क्षितावित्ति । ननु, कम्पे उ[illegible] पत्तिरुक्ता देवताभयात् पुरुषभयाच्चेति जनानां विवेकधैर्यादि युक्तानां पाते को हेतुरिति चेत् तत्राह-वज्रनिपातशङ्कयेति वज्र एव पतितः कश्चित् पतिष्यति वा तेन भयादेव पात[illegible] विवेकेनापि पातः सम्भवति उच्चैः स्थिते तस्य तेजः प्रस[illegible] मानो वज्रः तं मारयेदिति ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, यशोदारोहिण्यौ कथं तां न न्यवारयेतां? तत्राह[illegible] तामिति । वामं वल्गु जनन्या इव चेष्टितं यस्यास्ताम् अन्त[illegible] गृहमध्य एव वीक्ष्य अन्तस्तीक्ष्णे बहिर्मार्दवे च दृष्टान्तः श्[illegible] चर्ममयः कोशः परिच्छद आवरणं यस्य तथाभूतमसिमिव[illegible] तस्याः प्रभया ऽवधर्षिते अभिभूते मत्पुत्रस्याभ्युदयाय किमि[illegible] मास्त्रिका किमियमिन्द्राणी मूर्त्तिमती त्रैलोक्यसम्पत्तिर्वा वात्स[illegible] ल्येन स्तन्यं पाययती मोहिते सत्यौ जननी जनन्यौ निरी[illegible] माणे एव केवलमतिष्ठतां न तु निवारितवत्यौ ॥ ६ ॥

तस्मिन्नेव स्थाने दुर्जरं विषरूपं वीर्यं यस्य तत् घोरा पूत[illegible] शिशोः शिशवे गाढं प्रपीड्येति तया त्याजयितुमशक्यः स[illegible] भावः । रोषसमन्वित इति मदीयं व्रजबालकानपीयं जिघांस[illegible] रोषमयी दुष्टसंहारिका शक्तिरेवा ऽऽविशन्ती प्राणान् स्तनं [illegible]

निशाचरीत्थं व्यथितस्तना व्यसुर्व्यादाय केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमास्थिता वज्राहतो वृत्र इवापतन् नृप ! ॥ १३ ॥

पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् ।
चूर्णयामास राजेन्द्र ! महदासीत्तदद्भुतम् ॥ १४ ॥

ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ।
गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्द्धजम् ॥ १५ ॥

अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ।
बद्धसेतुभुजोर्वङ्घ्रि शून्यतोयह्रदोदरम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अपिबच्छोषयत् । न तु स इति कुठारसमन्वितो वृत्तमच्छिनदिति वत् ॥ १० ॥

निष्पीड्यमाना अर्थाद् बालकेन चरणौ भुजौ च मुहुर्मुहुर्निक्षिपती ॥ ११ ॥

रसा रसातलानि च ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोपैर्गोपीभिश्चोक्तप्रकारेणानिवारिता नन्दगृहे बालं ददर्शेत्युक्तम् । अथ यशोदारोहिण्यावपि तां न न्यवारयेतामित्याह-तामिति, कोशपरिच्छदासिवत् मृदुचर्ममयः कोशः परिच्छदमावरणं यस्य स चासावसिश्च तद्वत् तीक्ष्णचित्ताम् अन्तरतितीक्ष्णस्वभावामतिवामचेष्टितां बहिरतिवाममत्यन्तं मृदुचेष्टितं यस्यास्ताम् वरस्त्रियमन्तरागृहमध्ये वीक्ष्य तत्प्रभया च धर्षिते ऽभिभूते जननी जनन्यौ निरीक्षमाणे एव केवलमतिष्ठतामासाताम् ॥ ९ ॥

घोरा क्रूरा पूतना अङ्कमादाय बालमिति शेषः । उल्बणं दुःखेनापि जरयितुमशक्यं दुर्जरं वीर्यं विषं यस्मिन् तं स्तनं शिशोस्तस्मिन् श्रीमन्मुखे ददौ । अथानन्तरं भगवान् रोषसमन्वितः तदनुग्रहार्थं तत्क्रौर्यानुरूपः स्तनं गाढं प्रपीड्य प्राणैः समं सह तत् स्तन्यमपिबत् ॥ १० ॥

निःछिन्नानि निःशेषतः स्वेदयुक्तानि गात्राणि यस्याः सा चरणौ भुजौ च मुहुः क्षिपती ह स्फुटं रुरोद ॥ ११ ॥

अतिगभीररंहसाऽतिगभीरवेगेन रसाः रसातलानि ॥ १२ ॥

---

भाषा टीका ।

बड़े तीक्ष्ण चित्तवारी और अति मनोहर चेष्टावारी वा पूतना कों " ऊपर मखमली म्यानवारी और भीतर सो बड़ी तीक्ष्ण धार वारी ऐसी तरवार के नाई वा सुन्दरी स्त्री कों" देखकें और वाकी प्रभा सों धर्षित होयके दोनों जननी श्रीयशोदा और रोहिणीजी देखती की देखतीं रह गईं कछु न बोल सकीं ॥ ९ ॥

वा उग्र घोर पूतना ने अत्यन्त दुर्जर विष सों लिप्त वही उल्बण अपनों स्तन वा बालक के मुख में दियो ॥ तदनंतर भगवान् ने भी अपने दोनों हाथों से जोर से वाके स्तन को पकर कें दबाय के रोष कों साथी करकें प्राणों के सहित वाको स्तन पान कर लियो ॥ तहां भगवान् ने दूध पियो और रोष ने प्राण लिये येई क्रम ठीक है ॥ १० ॥

भगवान् ने अखिल जीव के मर्म स्थान में जब वाकों जोर सो पीडन कियो तब वो पूतना भी " अरे छोड २ " ऐसें चिल्लाय के नेत्रन कों फाडकें प्रस्वेद सों भीजगयो गात्र जाको हाथ पांव कों फेंकती भई रोवती भई ॥ ११ ॥

वो निशाचरी पूतना ऐसी तरियां सों जब अति मर्मरूप स्तन प्रदेश में पीडित भई तब बिना प्राणों की मुख फाडकें केश और हाथ पामन कों पसार के गोष्ठ ( खिरक ) में मरती समैं निजरूप सों स्थित होय कें। हे नृप ! ऐसें गिरी, कि—जैसें इन्द्र के वज्र सों ताडित होयकें वृत्रासुर गिरयो हो ॥ १२—१३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यादाय मुखं विवृत्य निजरूपमास्थिता मरणसमये कपटमयुक्तमितीव वृत्रो वज्राहतः ॥ १३ ॥

पतन्नपि तस्या देहः षट्क्रोशमध्यवर्तिनो द्रुमांश्चूर्णीचकार ॥ १४ ॥

ईषामात्रोग्रदंष्ट्रास्यं ईषा लाङ्गलदण्डस्तत्प्रमाणोग्रा दंष्ट्रा यस्मिन्स्तत्तथाभूतमास्यं यस्मिंस्तत्तस्याः कलेवरं वीक्ष्य गोपा गोप्यश्च सन्तत्रसुः सन्त्रासहेतुत्वेन पुनरष्टभिः पदैर्विशिनष्टि—गिरिकन्दरवन्नासिके यस्मिंस्तत् गिरेश्च्युतौ स्थूलोपलौ ताविव स्तनौ यस्मिंस्तत् रौद्रं घोरम् प्रकीर्णा अरुणा मूर्द्धजा यस्मिंस्तत् ॥ १५ ॥

अन्धकूपाविव गभीरे अक्षिणी यस्मिंस्तत् पुलिनवदारोहौ

### श्रीधरस्वामिकृतभावार्थदीपिका ।

जघने ताभ्यां भीषणाम् यद्वाः सेतव इव भुजौ ऊरू अङ्घ्री च यस्मिंस्तत् शून्यतोयहृद इवोदरं यस्मिंस्तत् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निजरूपम् उलूकीस्वरूपं गोष्ठे व्रजगाया गोष्ठसमीपदेशे गोदोहार्थवरोधन स्थाने नतु जनवासे द्रुमाणामेव चूर्णितत्वेन कथ्यमानत्वात् चरणयोः पञ्चात्मकभुजयोश्च विक्षेपणोत्तनात् सा खेचर्यैकदोत्पत्त्येति पूर्वदर्शितत्वाच्च हेनृप ! एतादृशकथोद्बोधनेन नूनं पासीति भावः ॥ १३ ॥

तत्राप्यद्भुतमाह-पतेति । न केवलं जीवन्नेव जीवान् जघान म्रियमाणोऽप्यतितरामित्यपि शब्दार्थः तदेव षट्क्रोशीद्रुमचूर्णित्वं तत्रापि तन्मात्रचूर्णित्वं च यत्तदद्भुतं महद्देवासीत् स एव च तस्याः श्रीभगवल्लीलाद्यकेरेव महिमा इत्यवगमयितुं स्तौति, राजेन्द्रेति ॥ १४ ॥

इंषेति त्रिकम् । रौद्रत्वमेव दर्शयति-इंषेत्याद्यष्टविशेषणैः । तत्र च भीषणामिति पुनरुक्तिर्जघनयोरति भयङ्करत्वाभिप्रायेण पूर्वं तस्या निष्ठुरतरनादेन अधुना च तद्बालहरणमजानन्तो गोपागोप्यश्च तादृग्देहदर्शनेन सम्यक् त्रस्ता बभूवुरित्यर्थः । स्मेति प्रसिद्धौ एतद्रूपकमेवेत्यर्थः ॥ १५ ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गव्यूतिः क्रोशद्वयं त्रिगव्यूत्यन्तरं सार्द्धयोजनावकाशम् ॥१४ ॥
इंषा युगाग्रयष्टिः गण्डशैलः पर्वताद् गलितस्थूलपाषाणाः ॥ १५—२१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्यथितौ पीडितौ स्तनौ यस्याः सा निशाचरी व्यादाय मुखं विवृत्य केशादीन् प्रसार्य गोष्ठे व्रजे निजरूपमास्थिता मरणस्य स्वासाधारणरूपगतत्वादिति भावः । हे नृप ! वज्रेण हतो वृत्रासुर इवापतत् ॥ १३ ॥

तस्या देहः पतमानोऽपि षट्क्रोशवर्त्तिनो द्रुमांश्चूर्णीचकार हे राजेन्द्र ! तच्छरीरं महदद्भुतमासीत् ॥ १४ ॥

अद्भुतत्वमेव दर्शयितुं तद्रूपं विशिंषन् तद्वीक्ष्य गोपागोप्यश्च अबिभयुरित्याह-इंषेति त्रिभिः । इंषा लाङ्गलदण्डः तत्प्रमाणाग्रा दंष्ट्रा यस्मिंस्तदास्यं यस्मिन् गिरिकन्दरे इव नासिके यस्मिन् गण्डशैलवदुन्नतौ पृथू च स्तनौ यस्मिंस्तौद्रं भीमं प्रकीर्णा अरुणाश्च मूर्द्धजाः केशा यस्मिन् ॥ १५ ॥

अन्धकूपाविव गभीरेऽक्षिणी यस्मिन् पुलिनवदारोहौ जघने ताभ्यां भीषणं यद्वाः सेतव इव भुजावूरू अङ्घ्री च यस्मिन् शून्यं तोयं यस्मिंस्तथाभूतो ह्रद इव उदरं यस्मिन् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यसुः विगतप्राणाः ॥ १३ ॥

त्रिगव्यूत्यन्तरे षट्क्रोशमध्ये ये द्रुमाः वृक्षाः तान् "गव्यूतिः स्यात् क्रोशयुगम्" इत्यमरः ॥ १४ ॥

इंषा रथदारुविशेषः कन्दरो गुहा रोगविशेषव्यावृत्त्यर्थं गिरीति विशेषणं गण्डशैलः स्थूलपाषाणाः ॥ १५ ॥

आरोहो नितम्बः बद्धसेतुवत् स्थिरा भुजोर्वङ्घ्रयो यस्य तत्तथा भुजौ ऊरू च अङ्घ्री च भुजोर्वङ्घ्रयः शून्यं तोयं यस्मिन् शून्यतोयः स हृद इव उदरं यस्य तत्तथा ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वस्तुतस्तु भगवान् रोषेऽपि कारुण्यादिगुणाव्यभिचा... गोष्ठे गोदोहार्थगवावरोधनस्थले न तु गवाद्यावासे द्रुमाणामेव चूर्णितत्वेन कथ्यत्वात् ॥ १३ ॥

पतेति, अत्र तावत् द्रुमचूर्णयितृत्वं तथापि न मनुष्य गवादि वर्जितत्वं चेत्युभयमत्राद्भुतं तच्च भगवच्छक्तिव्यञ्जकमेव ॥ १४ ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्तनकृतकार्येण वीर्यमाहात्म्यमुक्त्वा भगवद्राक्षसप्राणानां पुनरावृत्तिमाशङ्क्य तत्परिहरन् पूतनायाः सर्वजनीनमरणमाह—निशाचरीति । इत्थं व्यथितस्तना व्यसुर्भूत्वा ... तत्र निशाचरीति कठिनप्राणत्वं निरूपितं तादृश्याः शीघ्रं प्राणपरित्याग आश्चर्यहेतुर्भवति राक्षसाः व्यथां महतीमपि सहन्ते तादृश्यपि इत्थं व्यथितस्तना जाता येन साङ्गे सम्पूर्णे एव शरीरे महान् क्षोभो जातः ततः प्राणानपि त्यक्तवती प्राणत्यागोऽपि वैकल्यात् तदाह—व्यादाय मुखं केशांश्चरणौ भुजौ अपि प्रसार्य गोष्ठे अवीरचङ्क्रमावपि कृत्रिमरूपग्रहणकारणाभावात् भगवत्सम्बन्धेन कृतार्थत्वात् निजरूपमास्थिता अथ तत् तस्याः स्वरूपमत्यन्तं स्थूलं सर्वोपद्रवकारि इति दृष्टान्तेनाह—वृत्र इवेति । वृत्रः स्वेच्छयापि पतति ततः पुनरुत्थानं भवेदिति वज्राहत इत्युक्तं नृपेति सम्बोधनं महत्त्वविश्वासार्थं मुखव्यादानादिकं प्राणोत्क्रमणार्थं न भवति किन्तु नाडीनां वायुवशादाकर्षं तथा सर्वचेष्टा मुखव्यादानेनैव देहक्लेशो निरूपितः आदिमध्यावसानेषु क्लेशो जात इति वा केशचरणभुजानां ग्रहणं प्रसारणं सत्त्वपरित्यागेन मुक्तिसूचकं निजरूपं राक्षसं रूपं यथा वृत्रे हते त्रयो लोकाः स्वस्थाः तथा पूतनावधे जाता इति एवमाध्यात्मिकपूतनाया मरणमुक्त्वा आधिभौतिक्या भूमौ पातः—

> साधारणस्थितिर्लोके पूर्वाध्याये निवारिता ।
> अविद्यापूतना नष्टा गन्धमात्रावशेषिता ॥
> अतः परं निरोधस्तु गोकुले सुगमो भवेत् ।
> प्रपञ्चविस्मृतिः सा हि कृष्णासक्तिसमन्विता ॥

इति ॥ १३ ॥

सन्तत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरम् ।
पूर्वं तु [1] तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः ॥ १७ ॥
बालं च तस्या उरसि क्रीडन्तमकुतोभयम् ।
गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः ॥ १८ ॥
यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ।
रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥ १९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पूतनाया वधमुक्त्वा काचिदल्पप्रयोजिका मारितेति शङ्कां दूरीकर्तुं तस्या देहस्य मृतस्यापि महत्त्वमाह—पतमानोपीति । अपिशब्देन कृत्रिमसामर्थ्यं ततोऽपि महद्रूपं भवतीति सूचितं त्रिगव्यूत्यन्तरद्रुमान् क्रोशषट्कमध्यस्थितवृक्षान् चूर्णयामासेति भारस्याल्पमुक्तं लम्बनाऽप्युक्ता भगवद्वीर्यस्यास्पष्टत्वात् लोके तदेव महदद्भुतमासीत् अलौकिकात्मनेपदप्रयोगेन तद्देहदाह एव तानि काष्ठान्युपयोक्ष्यन्त इति ज्ञाप्यते एतच्च भगवदिच्छयेति च गोकुलवासिनां गव्यूतिरेव प्रसिद्धा त्रिगव्यूत्यधिको देशस्तैर्न दृष्ट इति तावदेवोक्तं राजेन्द्रेति इन्द्रेण वृत्रवधः कृत इति तन्नाम्ना सम्बोधनं विश्वासार्थम् ॥ १४ ॥

तद्रूपमघवशो वर्णयति—ईषेतित्राभ्याम् । ईषा लाङ्गलदण्डः चतुर्हस्तः ईषामात्रा उग्रा दंष्ट्रा यस्मिन्नास्ये अनेन तत्र कृषीवलानां दण्डस्थानीया एव दंष्ट्रा जाता इत्युक्तम् तादृशमास्यं यस्मिन् रूपे गिरेः कन्दरगाधा नासिका यस्य क्रीडास्थानं तज्जातमिति गण्डशैलाः पर्वताच्च्युताः स्थूलाः पाषाणाः गण्डशैलाविव स्तनौ यस्य प्रकीर्णा अरुणवर्णा मूर्द्धजा यस्य ॥ १५ ॥

अन्धकूपवत् गभीरे अक्षिणी यस्य पुलिनवन्नदीसैकतप्रदेश एव आरोहस्थानं जघनभागः तत्र गुह्येन भीषणं भयानकं बद्धा सेतव इव भुजौ ऊरू अङ्घ्री यस्य शून्यं तोयं यस्मिन् तादृशहृदवदुदरं यस्य .नवविशेषणानि प्राकृतगुणानां सर्वेषां समवायार्थानि अविद्या हि नवधा विभीषिका ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निजरूपमास्थिता मृत्युपीडितया तया निजमायया रचितुमशक्यत्वात् ॥ १३ ॥

पतमानः पीडावैयग्र्यवशादन्तःपुरात्तस्मादुत्पत्य ग्राममप्युल्लङ्घ्य तद्बहिःप्रदेशे पतन्नित्यर्थः । अपिकारेण न केवलं जीवन्त्येव सा जीवान् जघान अपि तु मृताऽपीति भावः । षट् क्रोशमध्यवर्त्तिनो द्रुमान् तावतां द्रुमाणां चूर्णनं द्रुममात्रचूर्णनं ग्रामोल्लङ्घनं चेत्यद्भुतं द्रुमाश्च ते कंसारामस्थास्तद्भोग्यफला इति वैष्णवतोषिणी ॥ १४ ॥

तस्याः कलेवरं वीक्ष्य गोपा गोप्यश्च तत्रसुः । ईषा लाङ्गलदण्डस्तत्प्रमाणा उग्रा दंष्ट्रा यस्मिंस्तदास्यं यस्य पुलिनवदारोहो जघनं तेन भीषणं बद्धाः सेतव इव भुजावूरू अङ्घ्री च यस्मिन् तत् शून्यतोयहृद इव उदरं यस्मिन् तत्पूर्वं तु तस्याः शब्देन भिन्नानि विदीर्णानि हृदादीनि येषां ते ताश्च ॥ १५—१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यादाय मुखं विवृत्य ॥ १३—१४ ॥

ईषा हलीषा तत्प्रमाणाः उग्राः दंष्ट्राः यस्मिन् तदास्यं यस्मिन् तत् गिरिकन्दरेव नासिका यस्मिन् तत् गण्डशैलाविव गिरिच्युतस्थूलोपलाविव स्तनौ यस्मिन् तत् रौद्रं भयङ्करं प्रकीर्णाः अरुणा मूर्द्धजाः केशा यस्मिन् तत् ॥ १५ ॥

अन्धकूपाविव गभीरे अक्षिणी यस्मिन् तत् पुलिनाकाराभ्यां जघनाभ्यां भीषणं बद्धसेतव इव भुजोर्वङ्घ्रयो यस्मिन् तत् शून्यतोयहृदवदुदरं यस्मिन् तत् ॥ १६ ॥

---

भाषा टीका ।

गिरते २ मैं हू वाको देह छः कोश के वृक्षन को चूर्ण करतो भयो हे राजेन्द्र ! वा समैं ये बात भी बड़ी अद्भुत होत भई ॥ १४ ॥

वासमें को रूप देखो तौ वामें हलके दंड के नाईं बड़ी बड़ी जाके मुख में डाढे हैं. और जैसें गिरि की कन्दरा होय ता रीति की नासिका है छोटे पर्वत के टोर सरी के जाके स्तन हैं और बडो भयानक जाको कलेवर बिखरे भये लाल २ जामें केश ॥ १५ ॥

अंध कूप सरी के गंभीर जामें नेत्र पुलिन सरी की दोनों जाघन सों बडो भयंकर और बंधे भये सेतु के नाईं हैं भुजा ऊरु अंघ्रि जा मैं सूखे हृद ( दह ) सरी को उदरजा मैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्वमेव तस्याः शब्देन भीताः पुनर्दर्शनेनातित्रसुरित्याह—पूर्वं त्विति । तस्या निःस्वनितं शब्दस्तेन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते ॥ १७ ॥ १८ ॥ १९ ॥

(१) तन्निःश्वसित इति वीर० ।

## गोमूत्रेण स्नापयित्वा पुनर्गोरजसाऽर्भकम् ।
## रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशाङ्गेषु ललाटादिषु केशवादिद्वादशनामभिः ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ बालहरणवृत्तं जानन्त्यः श्रीयशोदानिकटस्था गोप्यस्तु मोहव्याप्ते श्रीयशोदारोहिण्यौ परित्यज्य विद्रुतास्तन्मृतकदेहात्तं बालं गृहीत्वा गृहमानीतवत्य इत्याह—बालं चेति । तत्र बालमिति तथापि तल्लीलामात्राविष्कारेण तासां तद्बुद्ध्या च स्नेहवृद्धिः सूचिता बालत्वादेवाकुतोभयं वस्तुतस्तु न कुतोऽपि भयमन्येषामपि यस्मात्तम् अत एव तस्या उरसि क्रीडन्तं सहसावलोकपूर्वकश्रीहस्तपादनर्तनादिना क्रीडां कुर्वन्तम् अत एव जातः सम्भ्रमो विस्मयो हर्षावेगो वा यासां तथाभूताः सत्यः साक्षात् पतितपूतनामहोच्चदेहारोहणेऽप्यातिर्यक्तयाऽभिमुखं गत्वा जगृहुः यतो गोप्यः श्रीकृष्णे सहजस्नेहाकुलत्वेन प्रसिद्धाः तेनैव सर्वशक्तिमत्त्वञ्चेत्यर्थः । तथैव न्यासादिनरक्षणमपि वक्ष्यते एता हि प्रायः श्री व्रजेश्वरीसवयस्का ज्ञेयाः मातृवत् स्नेहेन रक्षाद्याचरणात् ॥ १७—१८ ॥

बालस्येति, स्नेहभरेण तादृशरक्षायोग्यत्वं बोधयन्ति । एवमग्रेऽपि यशोदारोहिणीभ्यां सममिति तयोः प्राक्पुत्रारिष्टशङ्कयाऽतिव्याकुलत्वेन किञ्चित्कर्त्तुमशक्तेस्तत्राप्राधान्यात् साहित्यञ्च तयोः सम्यक् शोकोपशमनार्थं ज्ञेयं सर्वेश इति बह्वर्थात् कारकात् माङ्गलिकार्थेऽपं शस् प्रत्ययः बाह्याभ्यन्तरादिभेदेन सर्वत्रैवेत्यर्थः । सम्यगुत्तमप्रकारं यथा स्यात् आदिशब्देन सर्षपनिर्मञ्छनसूर्पकोणस्पर्शनादीनि ॥ १९ ॥

सम्यक्त्वमेव दर्शयति—गोमूत्रेणेति । ललाटादिद्वादशाङ्गेषु केशवादिद्वादशनामभिः शकृता गोमयेन रक्षां चक्रुः तानि च विधिवच्छोकानि पाद्मोत्तरखण्डे तिलकनिर्माणविधौ—

"ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवं तु गोविन्दं कण्ठकूपके ॥
विष्णुं च दक्षिणे कुक्षौ बाहौ च मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके ॥
श्रीधरं वामबाहौ तु हृषीकेशं तु कन्धरे ।
पृष्ठे तु पद्मनाभं च कट्यां दामोदरं न्यसेत्" ॥ इति

एवं सहजपरमवैष्णवतया श्रीभगवन्नामभिरेव रक्षाविधिः कृत इति ज्ञेयम् ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्कलेवरं वीक्ष्य गोपा गोप्यश्च सन्तत्रसुः, कथम्भूताः ? पूर्वं पतनात्पूर्वं तस्याः निश्वसितं शब्दः निश्वासमारुतो वा तेन भिन्नानि हृदादीनि येषां तथाभूताः ॥ १७ ॥

तथा तस्य उपरि क्रीडन्तं न कुतोऽपि भयं यस्य तं बालं च वीक्ष्येति पूर्वेणान्वयः जगृहुरित्युत्तरेण वा तूर्णं यथा तथा समभ्येत्य जातः तस्या मरणाद्बालस्य जीवनाच्च जातः सम्भ्रमो यासां ता गोप्यः जगृहुराददुः ॥ १८ ॥

ततस्ता गोप्यो यशोदारोहिणीभ्यां सह बालस्येश्वरस्य श्रीकृष्णस्य गोपुच्छभ्रमणादिभिरुपायैरक्षां चक्रुः ॥ १९ ॥

तदेव प्रपञ्चयति गोमूत्रेणेत्यादिना । आदिशब्दग्राह्यान् दर्शयति—गोमूत्रेणेति । तावच्छिशुं गोमूत्रेण स्नापयित्वा ततो गोरजसा च स्नापयित्वा गोशकृता गोमयेन द्वादशस्वङ्गेषु द्वादशपुण्ड्रस्थानेषु ललाटादिषु केशवादिभिर्द्वादश नामभिः रक्षाञ्चक्रुः ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सन्तत्रसुः भीता अभूवन् तस्याः निःस्वनितेन अशनि… क्रूरशब्देन भिन्नानि हृत्कर्णमस्तकानि यासां तास्तथा ॥ १७ ॥

तूर्णं शीघ्रम् ॥ १८–१९ ॥

गोरजसा गोरेणुना गोशकृता गोमयसहितेन केशवादि… नामभिः ललाटादिद्वादशावयवेषु ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीयशोदायोरप्राधान्यं शोकवैवश्येन ॥ १७–२० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत एव तादृशावयवैर्विभीषिका जातेत्याह—सन्तत्रसुरिति सम्यक् तत्रसुः भीताः स्मेति प्रसिद्धे भगवत्सान्निध्यात् भय… भावमाशङ्क्य प्रमाणं कथयन्नाह—संवीक्ष्येति । प्रथमतः भा… नात्र तथाभयं सम्यग्दर्शने तु भयं जातमिति । गोपा गोप्य इति तेषां मुग्धभावेन सम्यक् दर्शनप्राप्तिर्निरूपिता कलेवरं मृतशरीरं नन्वेतावत्कालमदर्शनं कुतस्तत्राह—पूर्वमिति । तस्या निस्वनितेन रोदनेन भिन्नानि हृदयकर्णमस्तकानि येषां तामस… भूयिष्ठत्वात् त्रिविधावयवाः सर्वत्र निरूप्यन्ते ॥ १७ ॥

एवं तस्या रूपं सकार्यं निरूप्य स्वापेक्षया भगवन्… मुत्कृष्टं दृष्टवन्त इति वक्तुं भगवन्तं पूतनाहृदये स्थितं वर्णय… बालमिति । एतावती पूतनां मारयिष्यन्नपि न स्थूलरूपं कृत… वान् अत एव कृष्णाननारचरित्रमत्यलौकिकम् अयन्त्य साध… विरुद्धकार्यत्वात् चकागाद्बालं ददृशुः पूतनां च यस्त्वर्थं… स्वसमानधर्मव्यावृत्त्यर्थं तस्या उरसि क्रीडन्तमिति सर्वेषां हृद… अन्तर्बहिरपि क्रीडतीति सूचितम् न हि तल्लोकदृष्ट्या क्रीड… स्थानं भवति नापि मुग्धभावेन क्रीडा तथा सत्यपरिचि… दर्शने भयाविष्कारं कुर्यात् तत्तु नास्तीत्याह—अकुतोभयमिति

**गोप्यः संस्पृष्टसलिला अङ्गेषु करयोः पृथक् ।**
**न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत ॥ २१ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

संवीक्ष्य तत्रसुरिति पूर्वेणैव सम्बन्धः । दृष्ट्वेत्येव वा त्रासस्य भिन्नविषयत्वापत्तेः कलेवरदर्शने त्रासः स्नेहविषयको भगवद्विषयक इति एवं दृष्ट्वा यत्कृतवत्यस्तदाह–गोप्य इति । गोपापेक्षया गोपीनां स्नेहः साहसञ्चाधिकमिति ता एव गृहीतुं प्रवृत्ताः अत एवाविचारेण तूर्णमभ्येत्य जगृहुः भगवद्ग्रहणानन्तरं जातसम्भ्रमा जाताः पूतनादेहं दृष्ट्वा भगवत्सम्बन्धं च महानयमुत्पात इति मनसि सञ्जातभया जाताः ॥ १८ ॥

ततः स्वातन्त्र्येण किञ्चित्कर्तुमशक्ताः यशोदारोहिणीभ्यां सहिता जाताः यशोदारोहिण्योः स्त्रीप्रकृतिकत्वात् गोपीनामग्निकुमारत्वेन ऋषित्वात् गोपानां तत्तदभिमानिदेवत्वात् तत्रापि केवलभगवदुपासकानां गोपसम्बन्धरहितत्वात् उपायमन्त्रद्रष्टृत्वेन प्रसिद्धा इति ता इत्युक्तम् यशोदारोहिणीभ्यां समं बालस्येति वा सम्बन्धः । सहार्थे समशब्दः सममित्यव्ययम् ननु, भगवानयमिति ज्ञात्वा कथं रक्षां चक्रुस्तत्राह–बालस्येति । यतो भगवान् बालभावं प्राप्तः अतो यथाऽन्ये उपचाराः तथैतदपि कर्तव्यमित्यर्थः । सर्वत इति अन्तर्बहिः केनाप्यंशेन यथा अनिष्टसम्बन्धो न भवति तथा रक्षां कर्मविशेषं मन्त्राभिमन्त्रणारूपं विदधिरे कृतवत्यः सम्यगित्याधिदैविकप्रकारेण तत्तद्दैवतं तत्रास्थापितवत्य इत्यर्थः । आदौ स्थितस्य दैत्यसम्बन्धस्य परितो वा विद्यमानस्य आधिभौतिकादित्रितयस्य निवृत्तिं गोपुच्छभ्रामणादिभिः कृतवत्यः आधिभौतिकमनिष्टं तीर्थस्नानादिना गच्छति गवां पुच्छेषु तीर्थानि सन्ति तेषां भ्रामणे मन्त्रेण तत्रस्थानि तीर्थानि परितः स्थापितानि भवन्ति आदिशब्देन मन्त्रध्याने अपरयोर्निवर्त्तके एवमेकप्रकारेण बाह्यतो रक्षा कृता लोकसिद्धा परम्परया प्राप्ता ॥ १९ ॥

आर्षज्ञानेनापि सिद्धां रक्षामाह–गोमूत्रेणेति । बालकं तथैव गोमूत्रेण स्नापयित्वा पुनर्गवामागतानां सम्मुखं खुरोद्धूतरजसा स्नापयित्वा आर्द्रे शरीरे रजः सर्वत्र सम्बद्धं भवतीति पुनः स्नापनम्. ननु, कथं भगवति संस्काराः क्रियन्त इत्याशङ्क्याह–अर्भकमिति । पूर्वं केवलमन्त्रेण कृता रक्षा इदानीं सद्द्रव्येणेति रक्षायां विशेषः सशकृता गोरजसेति गोमयेन सहिता गोखुरमृत्तिका पुनरङ्गेषु स्थापिता द्वादशाङ्गानि भवन्ति "पुरुषं ब्रह्म सर्वां" इत्यादिश्रुतेः स्मार्तानि वा ।

> ललाटं बाहुमूले च हृदयं नाभिपार्श्वकम् ।
> कण्ठः स्कन्धौ कटिर्मूर्द्धा स्तनौ चेति विदुर्बुधाः ॥

नामभिः केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरेति, एवमियं द्वितीया रक्षा निरूपिता आध्यात्मिकी ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उरसि पर्वतवदुत्तुङ्गे क्रीडन्तं प्रवेष्टुं सूतिकागारमनीशानां वनौकसां दिदृक्षापूर्तय इव निष्क्रान्तं स्वपुराद्बहिः ॥ १८ ॥

रक्षाविधाने यशोदारोहिण्योरप्राधान्यं तयोः शोकोत्थवैयग्र्यातिशयेन सर्वशः सर्वेष्वङ्गेषु आदिशब्देन सर्षपनिर्मञ्छनसूर्पकोणस्पर्शादीनि ॥ १९ ॥

शकृता गोमयेन द्वादशाङ्गेषु ललाटादिषु नामभिः केशवाद्यैः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्याः कलेवरं शरीरं तत्तस्याः निःस्वसितेन शब्देन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते ॥ १७—१८ ॥

समं सहिताः ॥ १९ ॥

नामभिः केशवादिभिः द्वादशाङ्गेषु ललाटादिषु ॥ २० ॥

---

### भाषा टीका ।

ऐसे वा पूतना के कलेवर को वे सब गोप और गोपीजन देख करकें बडे त्रास कों प्राप्त होत भये ॥ और पहिले तो वाके शब्द ही सों हृदय कर्ण और मस्तक सबन को चिरीगयो रह्यो ॥ १७ ॥

और बालक कों तो वाके वक्षःस्थल पै निर्भय खेलतो भयो देखके गोपान ने हरबराय कें जल्दी जायकें कृष्ण कूं उठाय लीने ॥ १८ ॥

संपूर्ण गोपी और यशोदा रोहिणी श्रीकृष्णचन्द्र कों गोपुच्छ को झारो देकें फूंक मारि रक्षा करत भई श्रीकृष्णचन्द्र को गोमुत्र सों रक्षा करायके ॥ १९ ॥

गोरज में लुटाय गोबर लगाय कें द्वादश अङ्गन में केशवादि द्वादशनाम न सों रक्षा करत गई ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनाचान्ता एव प्रथममतिसम्भ्रमेणैवं रक्षां कृत्वा किञ्चिल्लब्धश्वासाः पुनस्तात्पर्येण बीजन्यासमकुर्वन्नित्याह—गोप्य इति संस्पृष्टसलिला आचान्ताः आत्मनि प्रथममङ्गेषु करयोश्च पृथक् अजाद्येकादशबीजानां मध्ये करशुद्धौ त्रीणि करयोः सन्धिषु चत्वारि चत्वारि तथा अङ्गुल्यादावेकैकस्मिन्नङ्गे अजाद्येकैकं बीजं न्यस्य बालस्याप्यङ्गेषु तथैवाकुर्वत ॥ २१ ॥

अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः ।
(१)हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ २२ ॥
चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च ।
कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २३ ॥
इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु ।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अङ्घ्रि अङ्घ्री जानु जानुनी भुजं भुजौ कं शिरः ॥ २२ ॥
तथा दिक्षु रक्षामकुर्वन्नित्याह—चक्रयग्रत इति । चक्रसहितो हरिस्तवाग्रतोऽस्तु सहगदो गदासहितो हरिस्तव पश्चादस्तु त्वत्पार्श्वयोर्धनुर्धरो मधुहाऽसिधरो अजनश्चेतावास्ताम् शङ्खधर उरुगायश्चतुष्कोणेषु क्षितावधस्तात् ॥ २३ ॥
एवं बहीरक्षां कृत्वाऽन्तरङ्गामकुर्वन्नित्याह-इन्द्रियाणीति ॥२४॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ रक्षानन्तरं गोप्य इति श्रीयशोदारोहिण्यौ व्यावर्तयति-पूर्ववत् अत एव वक्ष्यतेऽपि गोपीभिरिति, मातेति च, ताभ्यः पृथक्त्वेन ताभ्यास्तत्र वक्ष्यमाणरीत्या अजादीश्वरान्तैकादशबीजानि सानुस्वारतत्तदाद्यक्षररूपाणि नमःशब्दान्तानि ज्ञेयानि ॥ २१ ॥
ततश्च पद्यैरेतैरक्षां चक्रुरित्याह-अव्यादिति । अङ्घ्रिजान्वित्यनयोः 'सुपां सुलुक्'(७।१।३९) इत्यादि छान्दससूत्रेण सुब्लुक् भुजमित्यत्र 'सुपांसुपः' इति औट्स्थाने अमादेशः अजाद्याः केशवादिवत्तत्तन्नामप्रधाना मूर्तिभेदाः मणिमानित्यपि तन्नामा भगवत्प्रादुर्भावविशेषः हृत् जीवाधारपद्मम् उरो वक्षः ॥ २२ ॥
तार्क्ष्यसहित उपेन्द्रः पुरुषः पुरुषोत्तमः ॥ २३ ॥
इन्द्रियाणीति सार्द्धकम् । अवत्विति पुनरुक्तिः रक्षायोऽत्यन्तवैयग्र्यात् एवमग्रे पात्वित्याद्यपि परो भगवान् यः स्वयं भगवानित्यर्थः । सरस्वतीसंवादश्चायं तेषां तदंशत्वेन ममतास्पदत्वात् स्वस्य स्वयं भगवत्त्वेनैवाहन्तास्पदत्वाच्च अंशेनांशस्य रक्षा भवतु स्वयं च स्वस्येति प्रार्थयामह इत्यर्थः । अतस्तत्तदङ्गावतारास्तत्तदावरणरूपाश्च ते इति ज्ञेयम् ॥ २४ ॥ २५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अजशब्दवाच्यतत्त्वत्रयनियन्ता सर्वजगत्कारणं श्रीमन्नारायण इति तासां परतत्त्वज्ञानित्वमनेनोच्यते उत्तरतन्नामसु तदेवतत्त्वं विवक्षितव्यमिति भावः ॥ २२—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमनाचान्ता एव तावत्सम्भ्रमेण रक्षां विधायाथ लब्धाश्वासा आचान्ताः विशेषतो रक्षां चक्रुरित्याह—गोप्य इति संस्पृष्टसलिला आचान्ताः गोप्यः आत्मनि स्वशरीरे करेरितरेष्वङ्गेषु पृथगेकैकशो न्यस्य अकारादिक्षकारान्तानि मातृकाबीजानि विन्यस्याथ बालस्यात्मनि करयोरङ्गेषु च बीजन्यासमकुर्वन् अकुर्वन् चिकीर्षिताजादिभगवन्नामघटितविष्णुकवचपठनयोग्यतायै तत्स्थबीजस्फूर्तये च तावत्स्वाङ्गेषु बीजन्यासं विधाय तत्कवचमन्त्रजापपूर्वकरक्षाप्रार्थनायाः सुप्रतिष्ठितत्वाय बालस्याङ्गेषु बीजन्यासं चक्रुरित्यर्थः ॥ २१ ॥
अथ कवचमन्त्रजपपूर्वकरक्षाविधानं दर्शयति—अव्यादित्यादि प्रणयेत्यतः प्राक्तनेन । अजादिशब्दाभ्यां योगरूढिभ्यां भगवत्साधारणाः अजः कर्मायत्तोत्पत्तिरहितः भगवानङ्घ्रि तथाङ्घ्रिं अव्याद्रक्षतु जानु जानुनी मणिमा अणोर्जीवस्याप्यन्तरात्मतया प्रवेशयोग्यः पातु ऊरू यज्ञः यज्ञाराध्यो यज्ञभुक्तत्फलदश्च कटितटमच्युतः आश्रितान्न च्यावयतीत्यच्युतः हयास्यो हयग्रीवो जठरमव्यात् हृच्च केशाश्च तेषां समाहारस्तदीशः पातु वस्तिमूत्रकोशः वस्त्युदरहृत्केशमिति क्रमो ऽत्र विवक्षितः । अव्यादजोऽङ्घ्रिमीश्वरः कमित्युपक्रमोपसंहाराभ्यां पादादिशिरःपर्यन्तावयवक्रमस्यात्र विवक्षितत्वप्रतीतेः जठरं नाभेरुपरि भागः तत उपरिभाग उदरमिति विवेकः केशशब्दोऽत्र लोमपरः कण्ठमिनः सर्वव्यापकः "इण् गतौ" इति धातुः । यद्वा गत्यर्था बुद्ध्यर्थाः सर्वज्ञः अत एव विष्णुरित्यनेन न पौनरुक्त्यं विष्णुर्व्यापकः "विष्लृ व्याप्तौ" इति धातुः मुखम् उरवस्त्रिलोकसङ्क्रमकाः क्रमाः पादविक्षेपा यस्य सः मूर्द्धानमीश्वरः सर्वान्तरात्मा ईशः सर्वाधिपतिरिति न पौनरुक्त्यं विष्णुशब्देन व्याप्तिमात्रम् ईश्वरशब्देन तु प्रशासनपूर्वकव्याप्त्या धारकत्वम् ॥ २२ ॥
एवं पादादिशिरःपर्यन्तं रक्षां विधायाथ दिक्षु रक्षां विदधुः चक्री अग्रतः पुरतश्चक्रधरः पश्चात्पृष्ठतः सहगदो गदासहितो हरिराश्रितार्तिहरः पार्श्वयोस्तु धनुरसी धनुःखड्गौ बिभ्रताविति शेषः । मधुहाऽजितश्च धनुर्द्धरो मधुहाऽसिधरोऽजितश्चेत्यर्थः कोणेष्वाग्नेयादिषु शङ्खः शङ्खोऽस्यास्तीति अर्शआदित्वान्मत्वर्थीयोऽच् उपर्यूर्ध्वायां दिश्युपेन्द्रः क्षितावधस्ताद्धलधरः सङ्कर्षणः समन्तात्सर्वतोऽनुक्ता दिशः काश्चित्सन्ति चेत्तत्र सर्वत्र पुरुषः सर्वप्राणिहृदयगुहावस्थितः ॥ २३ ॥
एवं बहिरङ्गरक्षां सम्प्रार्थ्याथान्तरङ्गरक्षां प्रार्थयामासुः इन्द्रियाणीति । हृषीकाणाम् इन्द्रियाणाम् ईशोऽन्तःप्रविश्य नियन्ता योगेश्वरो योगनिर्वाहकः ॥ २४ ॥

(१) हृत्केशवस्त्युदर, इति वीर० ।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संस्पृष्टसलिलाः आचान्ताः अङ्गेषु न्यस्य पृथक्करयोश्च न्यस्य आत्मनि मध्ये देहे च न्यस्य अथानन्तरं मङ्गलकरं वा बालस्य बीजन्यासम् अष्टाक्षरन्यासम् अकुर्वत ॥ २१ ॥

अत्राजादयो मूर्तिविशेषाः अङ्घ्रिम् अङ्घ्री जानु जानुनी अङ्घ्रिमित्यन्वयः अणिमान् गरिमानित्यर्थः ॥ २२ ॥

मधुसूदनादयश्चत्वारः चतुर्षु कोणेषु ॥ २३—२४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बीजम् अजादीनां प्रथमाक्षरं सानुस्वारम् ॥ २१ ॥

अङ्घ्रिजान्विति "सुपां सुलुक्"(७।१।३९)इत्यादिना सुलुक् ॥२२॥

तार्क्ष्यसहित उपेन्द्रः पुरुषः प्रकृतिद्रष्टा ॥ २३ ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आधिदैविकीमाह—गोप्य इति । पूर्वं कर्तृकर्मणोरसंस्कारः कर्मण एव मध्यमे कर्तुरपि तृतीये प्रथममात्मसंस्कारः द्विविधो निरूप्यते सम्यक् स्पृष्टसलिला इति बहिः स्नानमन्तराचमनं चोक्तं ततः बीजमन्त्रानेकादश आत्मनि न्यासं कृतवत्यः स्वस्मिन्नागतायां देवतायामन्यस्मिन् स्थापनम् अनुभवसाक्षिकं भवति ततस्त्याजित आधिदैविको दोषः स्वात्मानं वा गृह्णीयात् बलिदोषस्य त्याजकग्राहकत्वात् "आग्नि वै जातम्" इत्यत्र तथोक्तेः आत्मन्यपि द्विगुणरक्षा कृता करणकर्तृभेदेन साक्षात्करणे कर्तरि च दोषसम्बन्धसम्भवात् तदाह अङ्गेषु वक्ष्यमाणेषु उक्तेषु वा तैरेव नामभिः करयोरिति करतलकरपृष्ठाभ्यां सह दशाङ्गुलीषु दक्षिणाङ्गुष्ठमारभ्य वामाङ्गुष्ठपर्यन्तासु पृथगिति करयोरेव वा सम्बद्धने तेनाङ्गुलिचतुष्टये पर्वत्रये न्यासो भवति "अङ्गुल्यङ्गुष्ठपर्वसु" इति वचनात् पृथगिति । दशन्यासा वा निरूपिता मातृकान्यासादयः एवमात्मनि न्यस्य सर्वा देवताधारभूताः सत्यः अथ भिन्नप्रकारेण देवताः सर्वा बहिःस्थिता विधाय बालस्य भगवतः बीजैरेकादशभिः न्यासमकुर्वत कृतवत्यः ॥ २१ ॥

बीजानि स्थानानि च गोप्यानीति भङ्ग्यन्तरेण देवताप्रार्थनारूपेण रक्षां स्तोत्ररूपां वदन्त्याह—अव्यादिति । भगवतः एकादश रूपाणि मूलतः प्रसिद्धानि वैष्णवतन्त्रे अन्यानि तु न समर्थानि उपढौकनेनारोपितसामर्थ्यानि वा भवन्ति तत्र प्रथममजः न जायत इत्यविकृतः मूलभूत इति यावत् सोऽक्षरात्मको भवति सः अक्षरात्मा अजः भगवतः अङ्घ्रिमव्यात् अङ्घ्रिरयमाध्यात्मिकः सत्त्वाधिदैविक इति मन्त्रयोऽस्यवतारादिरूपे पादस्थत्वेन निरूपणात् ततः स एव सर्वोपास्यरूपोऽभवत् दुर्जयत्वादणिमान् भवति बीजरूपाण्येतानि नामान्यविकृतानि जानुद्वयं सोऽव्यात् स्थूलादग्रे सूक्ष्मभावात् एतत् द्वयं प्रमेयबलेन रूपद्वयेन निरूपितम् प्रमाणबलेन पुनः पृथक् निरूपयति—अथेति । अनेन भक्तिमार्गो ज्ञानमार्गश्च प्रमेयबलादेव सिद्ध्यतीति ज्ञापितं यज्ञ ऊरू अव्यात् स हि यजननात्मकः अच्युतः यज्ञस्यैवाधिदैविकं रूपं कटितटमव्यात् स हि रक्षकः न केनापि प्रकारेण च्युत इति वेदानां यज्ञानां च नित्यताप्युक्ता हयास्यो जठरमव्यात् नष्टेषु वेदेषु रक्षणार्थमवतीर्णः उदरं सर्वमेव जगत् तच्च कर्मणा परिपाल्यत इति यज्ञे प्रादुर्भूत उक्तः हृत् हृदयं केशवोऽव्यात् कश्च ईशश्च केशौ तयोर्वै सुखं यस्मादिति ब्रह्मशिवयोर्बुद्ध्यहङ्कारनियामकयोरपि सुखदातान्तर्यामी हृदयपरिपालको भूयात् हृदयं स्तनयोर्मध्ये निम्नस्थानम् उरस्तूच्चस्थानं स्तनादुपरि कण्ठादधः त्वदुरः ईशोऽव्यात् यस्त्वाधिदैविककालरूपः येन प्रकृतेर्गुणाः क्षुब्धा भवन्ति त्वदुर इति उरसि लक्ष्मीरपि वर्तते अतस्तद्व्यावृत्त्यर्थं त्वत्पदम् इनस्तु कण्ठं तुशब्दो ब्रह्माण्डमध्यस्थितं वक्तुं बहिः स्थिताद् व्यावृत्तिमाह—इनः सूर्यान्तःस्थितो नारायणः स कण्ठमव्यात् सरस्वतीस्थानं तत् त्रयीमयात्मकश्च ततो जगद्रक्षायां स्थितः क्रियाशक्तिर्विष्णुर्भुजमव्यात् क्रिया भुजयोरेव प्रतिष्ठितेति ततो भक्त्याधकत्वेन दैत्येषु समागतेषु तन्निवृत्त्यर्थं समागतो बलिबन्धनकर्ता उरुक्रमो वामनः मुखमव्यात् ततः कं शिरः ईश्वरोऽव्यात् यस्तु सङ्कर्षणरूपः यस्य केशौ सितकृष्णौ स शिरःप्रधानभूत इति । शिरःपालनं युक्तमेव ॥ २२ ॥

एवं पादादिशिरोन्तानां रक्षाप्रार्थनया निरूपिता बाह्यतः परितो रक्षामाह—चक्र्यग्रत इति । पुरुषस्य यावन्तो भागा बहिर्भवन्ति तेषु तत्र तत्र प्रयोजकौ रक्षत्विति प्रार्थयन्ति चक्री चक्रपाणिः चक्रं गृहीत्वाऽग्रे रक्षतु पूर्वभागं परिपालयतु सहगदः गदाधरः गदासहितः पश्चादव्यात् पृष्ठभागं परिपालयतु । ननु, महतः कथं पृष्ठभागपरिपालनमुच्यते ? तत्र प्रार्थनया हेतुमाह—हरिरस्त्विति । स हि सर्वदुःखहर्ता यथा वा प्रार्थनया गजेन्द्रमागत्योद्धृतवान् न तु वैमनस्यं विचारितवान् अत इदानीमपि प्रार्थनया पश्चाद्धरिः स्वयमस्तु स्थितः सन् परिपालयत्वित्यर्थः । त्वत्पार्श्वयोर्दक्षिणवामयोर्धनुर्धरः असिधरश्च मधुसूदनः अजनश्चाव्यात् दक्षिणपार्श्वे धनुर्गृहीत्वा राक्षसान् तत्रत्यान् दूरादेव मारयतु अजन उत्तरपार्श्वे सर्वज्ञानिभेदयः सर्वेषां जन्मादिसर्वदुःखनाशकः असिं गृहीत्वा अविद्याच्छेदकः अव्यात् आयुधयोरपि स्वतः सामर्थ्यं द्योतयितुं भिन्नतया निरूपणं चकारादुत्तरभागस्थिताः हरिवर्णादिमूर्तयोऽपि पालयन्त्वित्युक्तम् कोणेषु चतुर्षु विदिक्षु शङ्खं गृहीत्वा उरुगायः अवतु शब्दो हि सः सर्वेषां दैत्यानां दर्पहन्ता "विष्णोर्मुखोत्थानिलपूरितस्य" इति वाक्यात् अत एव प्रत्येकं कोणेषु भिन्ना निरुक्ता सोऽप्युरुगायः उरुभिर्नारदादिभिर्गीयत इति अत एकेनैव सर्वत्र रक्षा सम्भवति उपरि उपेन्द्रः तार्क्ष्यः अव्यात् गरुडारूढः मन्वन्तरावताररूपः गरुडस्यापि रक्षकत्वमुभयत्रापर्यैव भवतः क्षितौ हलधरः हलं गृहीत्वा सङ्कर्षणः अधोभागं पालयतु एवं प्रत्येकं रक्षामुक्त्वा सामान्यत आहुः पुरुषः समन्तादिति पुरुषो नारायणः समन्तात् पालयतु यस्योदरे सर्वं वर्तन्त इति स हि सर्वत्र तिष्ठति ॥ २३ ॥

एवं बाह्यरक्षामुक्त्वाऽऽध्यात्मिकांशभूतानां प्राणादीनां रक्षामाहुः—इन्द्रियाणीति । हृषीकाणामिन्द्रियाणामेव नियामकत्वेन स्थितः अव्यादिति पूर्वेण सम्बन्धः । इन्द्रियाणि दश चक्षुषश्च

पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान् परः ।
क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ २५ ॥
व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः ।
भुञ्जानं यज्ञभुक्पातु सर्वग्रहभयङ्करः ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रूपत्वात् भगवतः प्राणान् नारायणः अवतु प्राणापानादयो दश प्राणाः नारं जीवसमूहः तदयति प्रेरयति प्रविशतीति वा प्राणमूलकं हि सर्वम् अतो नारायणात् प्राणरक्षा अन्तःकरणचतुष्टयस्य रक्षामाह—श्वेतद्वीपपतिर्वासुदेवः श्वेतद्वीपस्य शुद्धसत्त्वरूपत्वात् चित्तरक्षकश्च स भवत्येव अनिरुद्धो योगिभिः संराध्यः अतो योगीश्वरः मनः अव्यात् योगशास्त्रं च मनोमूलकमेव बुद्धिं प्रद्युम्नः स वंशकर्त्ता स प्रथमम् ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रथममनाचान्ता एवातिसम्भ्रमेणैव रक्षां कृत्वा पश्चाल्लब्धाश्वासा यथाविधानमेव रक्षां चक्रुरित्याह—गोप्य इति । संस्पृष्टसलिला आचान्ता आत्मनि आत्मनः अङ्गेषु करयोश्च न्यस्य अङ्गन्यासकरन्यासौ कृत्वेत्यर्थः । अथ अनन्तरं बालस्याङ्गेष्वङ्घ्र्यादिषु बीजन्यासादिनामाद्यैकैकाक्षरस्य सानुस्वारस्य नमःशब्दान्तस्य न्यासं तेन अं नमोऽजस्तवाङ्घ्री अव्यात् मं नमो मणिमांस्तव जानुनी अव्यादित्येवं प्रयोगः ॥ २१ ॥

ततश्च पद्यैरेतै रक्षां चक्रुरित्याह-अव्यादिति । अङ्घ्रि अङ्घ्री मणिमान् तन्नामा भगवत्प्रादुर्भावविशेषः जानु जानुनी जङ्घेऽच्युत इति सन्धिरार्षः यज्ञोऽच्युत इति च पाठः हयग्रीवाधारपक्षम् उरो वक्षः ॥ २२ ॥

तथा दिक्षु रक्षामकुर्वन्नित्याह—चक्र्यग्रत इति । चक्रसहितो हरिस्तवाग्रतोऽस्तु सहगदो गदासहितो हरिस्तव पश्चादस्तु त्वत्पार्श्वयोर्धनुर्धरो मधुहा असिधरोऽजनश्चास्तु कोणेषु शङ्खधर उरुगायोऽस्तु उपर्युपेन्द्रोऽस्तु तार्क्ष्यः क्षितावधःस्तादस्तु हलधरः पुरुषः समन्तादस्तु ॥ २३—२६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सम्भ्रमापन्नत्वेनानवहिताभिर्गोपीभिर्यत्कृतं तदुक्तमथ किञ्चित् स्वास्थ्यं प्राप्य ताभिर्यत्कृतं तदाह—गोप्य इति नवभिः । संस्पृष्टसलिलाः आचान्ताः प्रथममात्मनि स्वदेहे अङ्गेषु अङ्घ्र्यादिषु करयोश्च पृथक् पृथक् अजाद्येकाक्षरबीजानां मध्ये करशुद्धौ शीर्ण करयोः सन्धिषु चत्वारि चत्वारि अङ्घ्र्याद्यङ्गेषु च वक्ष्यमाणक्रमेण बीजानि न्यस्य बालस्याप्यङ्गेषु तथैवाकुर्वत ॥ २१ ॥

अजः कर्मायत्तजन्मशून्यः श्रीवासुदेवः तव अङ्घ्रि अङ्घ्री अव्यात् रक्षतु मणिमान् कौस्तुभी जानुनी इनः सर्वगः "इनः गतौ" ॥ २२ ॥

दिक्षु रक्षामप्यकुर्वन्नित्याह—चक्रीति । पार्श्वयोः धनु धनुर्द्धरः असिधरश्च भगवदीयानामायुधानां केवलानामपि स्व सामर्थ्यसूचनाय धनुरसीत्युक्तम् कोणेषु चतुष्कोणेषु मधु अजनः शङ्खः शङ्खधरः उरुगायश्च अस्तु क्षितौ अधस्तात् ॥ २३ ॥

अन्तरङ्गां रक्षामप्यकुर्वन्नित्याह-इन्द्रियाणीति ॥ २४ ॥

———

भाषा टीका ।

गोपी हाथ पांव धोइकें आचमन करिकें अपने अङ्गन तथा करन में न्यारो न्यारो न्यास करके बालक को अं न्यास करत भई ॥ २१ ॥

हे श्रीकृष्णचन्द्र ! अजन्मा भगवान् तुम्हारे चरणन की रक्षा करैं, मणिमान् भगवान् तुम्हारे ऊरून की रक्षा करैं, यज्ञ भगवान् तुम्हारी जंघान की रक्षा करैं, अच्युत भगवान् तुम्हारे करकी रक्षा करैं, हयग्रीव भगवान् तुम्हारे उदर की रक्षा करैं, केशव भगवान् तुम्हारे हृदय की रक्षा करैं, विष्णु भगवान् तुम्हारी भुजान की रक्षा करैं, उरुक्रम भगवान् तुम्हारे मुखारविन्द की रक्षा करैं, ईश्वर भगवान् तुम्हारे मस्तक की रक्षा करैं ॥ २२ ॥

चक्रधारी भगवान् तुम्हारे अग्रभाग में रक्षा करैं, गदा धारण करिवे वारे भगवान् तुम्हारे पीछेते रक्षा करैं, धनु को धारण करिकें मधु नामा दैत्य के मारन वारे भगवान् और खड्ग धारण करन वारे भगवान् ये दोनों तुम्हारे दाहिनी ओरतें और बाईं ओरतें रक्षा करैं, और शंख कूं धारण करन वारे उरु गाय भगवान् चारों कोंणनते रक्षा करैं, उपेन्द्र भगवान् तिहारे ऊपर रहो, तार्क्ष्य भगवान् पृथ्वी में रक्षा करैं, हलधर भगवान् सर्वत्र रक्षा करैं ॥ २३ ॥

हृषी केश भगवान् तुम्हारी इन्द्रीनकी रक्षा करैं, और नारायण भगवान् प्रानन की रक्षा करैं, श्वेतद्वीप के पति भगवान् तुम्हारे चित्त की रक्षा करैं, और योगेश्वर भगवान् तुम्हारे मन की रक्षा करैं ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मानमहङ्कारम् ॥ २५—२९ ॥

डाकिन्यो यातुधान्यश्च कूष्माण्डा येऽर्भकग्रहाः।
भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः॥ २७॥
कोटरा रेवतीज्येष्ठा पूतना मातृकादयः।
उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः॥ २८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

क्रीडन्तमिति च सार्द्धकम्। गोविन्द इत्यादिकं तु तत्तत्क्रीडानुरूपेण तत्र गोविन्दो गोमध्ये क्रीडापरः कश्चिदेव इति तासां भानं माधवः लक्ष्मीसंवाह्यमानचरणः शेषशायी वैकुण्ठो विकुण्ठासुतो जयविजयसनकादिसमाधानार्थं कृपया स्वयं पादव्रजनेव बहिर्निर्गतो यः स इत्यर्थः। श्रियः पतिः परमव्योमसिंहासनस्थो महानारायणः यज्ञभुक् स्पष्ट एवेति सर्वग्रहभयङ्कर इत्यस्य सर्वैरप्यन्वयः। क्रीडादिषु ग्रहदोषेभ्योऽपि रक्षार्थम्॥ २६॥

डाकिन्य इति त्रिकम्। आदिशब्दाच्चरकीज्वालामुख्याद्या देव्यागणाः बालग्रहा इति पुनरुक्तिर्बालके तेभ्यो भयाधिक्यात् केचिदाहुः अर्भकरूपेण ये प्राणिनो गृह्णन्ति तेऽर्भकग्रहाः पिशाचभेदा इति॥ २७—२९॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पृश्नेर्गर्भत्वादपरत्वात्पृश्निगर्भः भगवान् षाड्गुण्यपूर्णः परः प्रकृतिपुरुषविलक्षणः आत्मानम् इत्यनेन चित्ताहङ्कारौ विवक्षितौ॥ २५॥

सर्वग्रहभयङ्कर इति एतद् यज्ञभुग्विशेषणम्॥ २६॥

कूष्माण्डादयो ग्रहावान्तरविशेषाः॥ २७॥

देहादीनि द्रुह्यन्तीति तथा॥ २८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आत्मानं मध्यम्॥ २५॥ २६॥

अर्भकग्रहाः बालग्रहाः॥ २७—२९॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भ।

परो भवान् स्वयं भगवानित्यर्थः। सरस्वतीसंवादश्चायं "मतस्ते विष्णोः" इति च वक्ष्यते तेषां तदंशत्वेन ममतास्पदत्वात् स्वस्य स्वयं भगवत्त्वेनैवाहन्तास्पदत्वाच्च अंशेनांशरक्षा भवतु स्वयञ्च स्वस्य इति प्रार्थयामह इत्यर्थः॥ २५॥ २६॥

अनस्तत्तदङ्गावतारास्तद्वावरणरूपाश्च तेत इति ज्ञेयम् अर्भकबालग्रहयोरैकार्थ्येन पुनरुक्तिर्बालकेभ्यो भयाधिक्यात्॥ २७॥ २८॥ २९॥ ३०॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वृष्णि प्रद्युम्नः स वंशकर्त्ता स प्रथमं पृश्निगर्भो जात इति स एवावतु आत्मानमहङ्कारं भगवान् सङ्कर्षणो ऽवतु स चास्मात्परः चतुर्मूर्त्त्युक्तः आत्मानं जीवरूपं च परः पुरुषोत्तमः अव्यात् देहं च भगवान् सर्वनियामकोऽव्यात् आत्मानमेव वा भगवानव्यादिति कृत्रिमभगवत्त्व व्यावृत्त्यर्थं पर इति सर्वावस्थासु रक्षां प्रार्थयन्ति—क्रीडन्तं बालकलीलया शृङ्गचर्य्यादिष्वपि गच्छन्तं गोविन्दः पातु यस्तु सदा गवामिन्द्रः गुप्ततया रक्षकः शयानं माधवः पातु लक्ष्म्याः तत्र प्रयोजकत्वात्॥ २५॥

व्रजन्तं शनैःशनैर्बाललीलया गच्छन्तं वैकुण्ठः पातु स हि गतिप्रदः गतिदानार्थमेव वैकुण्ठं निर्माय स्थितः अनेन सर्वत्र पदस्थापने कोमलत्वादिसुखदो भवत्विति प्रार्थितम् आसीनमुपविष्टं त्वां लक्ष्मीपतिरवतु स हि लक्ष्मीविवाहसमये उपविष्टः लक्ष्म्या वृतः तादृशभावापन्नः सर्वसौभाग्ययुक्तो लक्ष्मीपतिः आसीनमवतु सर्वमेव जगत् भगवत्युपविश्य तिष्ठतीति, तदर्थमाह—त्वामिति। एवं देहावस्थाचतुष्टयमुक्त्वा क्रियावस्थायामाह—भुञ्जानमिति। स्तन्यं दुग्धादिवा स्तनक्षीरादिना वा यज्ञभोक्ता विष्णुः पातु भोजने क्रियायां कालफलनियामकाः ग्रहाः सन्तितैरवश्यं स्वकालोद्भवं फलं देयमित्याशङ्क्याह—सर्वग्रहभयंकर इति। सर्वेषां ग्रहाणां कालक्रियाद्रव्यादिनियामकानां नवग्रहाणां भयजनको भवति अन्यथा यज्ञादीनां फलदातृत्वं न स्यात् तत्तत्कालफलमेव तेषां स्यात् अतो यदा यज्ञभोक्ता फलं प्रयच्छति तदा ग्रहा निवृत्ता भवन्ति निवृत्तिरपि न वचनादिना किन्तु रूपमेव दृष्ट्वा भीता निवृत्ता भवन्ति तत उक्तं भयङ्कर इति॥ २६॥

एवं सहजदोषाणां निवर्तकैः निवृत्तिं प्रार्थयित्वा आगन्तुकान् दोषान् गणयन्त्यः स्वत एव तेषां भगवन्नाम्ना नामोच्चारणेन निवृत्तिमाहुः—डाकिन्य इति त्रिभिः। एके महादेवसम्बन्धिनो दोषाः स्थूला अन्ये आध्यात्मिकाः मध्यमाः ततो व्याधिभौतिकाः निकृष्टाः स्वप्नादिष्वेव तेषां भयजनकत्वं डाकिन्यः स्त्रिय एव दुष्टाः दास्य इव पतिरहिता सेनारूपाः यातुधान्यो यक्षादिस्त्रियः चकारात्तदवान्तरभेदाः कूष्माण्डादयः पुरुषाः कुत्सितो य ऊष्मा तत्कृता अण्डा इव ये भवन्ति कूष्माण्डशब्दो यौगिको दुष्टमहादेवगणवाचकः अत्रैव तेषां विनियोगः रूढो लौकिकः नैमित्तिको वैदिकः अतो दोषगणनायां तदुभयव्यावृत्त्यर्थं च इत्युक्तम् अर्भकग्रहाः अर्भकरूपाग्रहाः तेऽपि पिशाचविशेषाः बालका एवभूत्वा सर्वान् गृह्णन्ति भूतप्रेतपिशाचाः प्रसिद्धाः यक्षरक्षांसि च विनायका विघ्नकर्तारः ते सच्छिद्रभिन्ना भवन्तीति तेषामधिपतिर्विनायकः उक्तः स

स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये ।
सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ २९ ॥

श्रीशुक उवाच ।

इति प्रणयवद्धाभिर्गोपीभिः कृतरक्षणम् ।
पाययित्वा स्तनं माता संन्यवेशयदात्मजम् ॥ ३० ॥
तावन्नन्दादयो गोपा मथुराया व्रजं गताः ।
विलोक्य पूतनादेहं बभूवुरतिविस्मताः ॥ ३१ ॥
नूनं बतर्षिः सञ्जातो योगेशो वा समास सः ।
स एव दृष्टो ह्युत्पातो यदाहानकदुन्दुभिः ॥ ३२ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तु न क्वापि स्वत आयातीति तन्निवृत्त्यर्थं य इत्यन्यत्राप्यनुसन्धेयः ॥ २७ ॥

ततो हीनाः स्वतन्त्रस्त्रीरूपाः कोटरा पूर्वदेशे कुठारेति प्रसिद्धा तथा रेवती रेणुकेति केचित् ज्येष्ठा दक्षिणदेशे प्रसिद्धा पूतनेयमेव अज्ञानात् कीर्तनं वस्तुतस्त्वेते मन्त्रास्तेच यादृशास्तादृशा एव कीर्तनीयाः अन्यथा "मन्त्रो हीनः स्वरतो वर्णतोवा" इति वाक्यात् मन्त्रस्यान्यथात्वेन रक्षोपयोगित्वं न स्यात्तेन तथा कीर्तनं तज्ज्ञानेपि अतएवाऽप्रस्तुतस्यापि वृद्धग्रहस्य कीर्तनं मातृकाः षोडश प्रसिद्धाः आदिशब्देन सर्वा एव ग्रामदेवताः एव तावत्यः स्त्रियः उन्मादादयः पुरुषा उद्धतो मादो यैः यतः प्राणिन उन्मत्ता भवन्ति यः इति रोगव्यावृत्त्यर्थं अपस्मारा अपि बुद्धिभ्रंशहेतवः यतो रोगरूपा अपि भवन्तीति य इति तेष्वपि ग्रहणाम् उभयेषामुभयत्वम् लोकसिद्धमिति तद्व्यावृत्तिर्युक्तैव त्रिविधानन्यानाह–देहप्राणेन्द्रियद्रुह इति । केचित् देहे द्रोहं कुर्वन्ति येन देहे निरन्तरं पीडा भवति तथा प्राणेषु येन क्षुधाविर्न भवति इन्द्रियाणां च स्वावधियांद्रि ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मानमहङ्कारं परः सर्वमूर्तिः स्वयं पदार्थः ॥ २५—२९ ॥

भाषा टीका ।

पृश्निगर्भ भगवान् तुम्हांरी बुद्धि की रक्षा करैं, परम भगवान् तुम्हारे अत्मा की रक्षा करैं, क्रीडा करते समय गोविन्द भगवान् तुम्हारी रक्षा करैं, सोवत समय माधव भगवान् तुम्हारी रक्षा करैं ॥ २५ ॥

वैकुण्ठ भगवान् तुम्हारी चलती वेर रक्षा करैं, लक्ष्मीपति भगवानु वैठते रक्षा करैं, समस्त ग्रहन के भय के कारन हारे यज्ञ भोक्ता भगवान् भोजन समय रक्षा करैं ॥ २६ ॥

डाकीयातुधान और जे बालकन के ग्रहते भूत प्रेत पिशाच यक्ष राक्षस विनायक गण हैं ते ॥ २७ ॥

और कोटरा रेवती ज्येष्ठा पूतना और मातृ कान इं आदि लेके राक्षसी हैं ते और उन्माद हैं ते और जे जे अपस्मार रोग के करन वारे इंद्रिन के द्रोही ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सन्न्यवेशयच्छाययामास ॥ ३० ॥ ३१ ॥

विस्मयमेवाऽऽह–नूनमिति । वत विस्मये साम्प्रतं स ऋषिस्तपःप्रभाववान् योगेशो ज्ञानी वा सम्यगास यतः स एव दृष्ट इति ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति एवं कृतं रक्षणं रक्षा यस्य तं तत्र हेतुः प्रणयेन स्नेहेन वद्धाभिः वशीकृताभिः इति श्रीयशोदागृहे वद्धवत्तासां भाशी तथा सदावस्थितिः तथा च श्रीभगवदर्थं परमव्यग्र तथा विविधव्यापारपरता च ज्ञेया स्तनं पाययित्वेति मातुः स्नेहस्वभावतः तथा लोके स्तनपानेन बालस्य स्वास्थ्यश्रवणाच्च ॥ ३० ॥

तावदिति गमने शैघ्र्यमुक्तं मथुरापुर्य्याः सकाशात् व्रजं व्रजदर्शनयोग्यदेशं प्राप्ताः विलोक्य दूरतो विविधकल्पनया निभाल्यपर्वताकारत्वेन दूरत एव दर्शनासम्भवात् तत्र च श्रीशुकदेवोक्तसम्वादेनात्यन्तविस्मिता इत्यर्थः ॥ ३१ ॥

अतिविस्मितानां तेषामन्योन्योक्तिमाह—नूनमिति । वितर्के आनकदुन्दुभिः प्रागेतादृशो नासीत् अधुना च ऋषिः सम्यक् जातो वृत्तः ऋषिवाक्यस्यैव प्रामाण्यात् । ननु ऋषित्वेऽपि

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किमपि न दृष्टम् इत्याशङ्क्य पक्षान्तरमाह-योगेश इति । अन्तः उपासनानिष्ठः संशयद्वाभ्यां तत्तन्निष्ठा बोध्यते । तत्र हेतुः स एवेति आनकदुन्दुभिरिति । तादृशजन्मत्वेन योग्यतास्य बोधयन्ति, अन्यस्तैः । यद्वा कोऽपि यः पूर्वजन्मनि ऋषिर्योगेशो वा समास अत्र सन्देह एव विकल्पः स एवानकदुन्दुभिः सन् सञ्जातः अन्यस्समानम् एव सर्वज्ञत्वादेव सोऽवददिति तैर्मतम् अत एव सुविस्मिताः ॥३२॥

---

श्रीमद्वीरराघवाचार्यभागवतकृतचन्द्रचन्द्रिका ।

वृद्धग्रहाः बालग्रहाश्च ते सर्वे विष्णोर्नामानि गृह्णन्तीति तथा तेभ्यो भीरवः भीता नश्यन्तु ॥ २९ ॥

इत्थं प्रणयेन स्नेहेन बद्धाभिर्यन्त्रिताभिर्गोपीभिः कृतं रक्षणं यस्य तमात्मजं माता यशोदा स्तनं दुग्धं पाययित्वा सन्न्यवेशयत् शाययामास ॥ ३० ॥

तावत् तदा नन्दादयो गोपा मथुरायाः सकाशात् व्रजमागताः सन्तः पूतनाया देहमवलोक्यातीव विस्मिता बभूवुः ॥ ३१ ॥

वसुदेवोक्तं यथार्थमेवाभूदिति सोदाहरणं विस्मयन्ते-नूनमिति आनकदुन्दुभिर्वसुदेवः समागतो यमुत्पातम् आह स एवोत्पातो ऽधुनाऽस्माभिर्दृष्टः अतः स आनकदुन्दुभिः ऋषिर्योगी वा पूर्वजन्मनि सन्नधुनैनंरूपेण नूनं सञ्जातः यतेति विस्मये ऋषित्वमुत्पत्तिसिद्धातीन्द्रियार्थदर्शित्वं योगित्वं तपःप्रभावकृतं तद्दर्शित्वम् इति विवेकः । समवद्गत इति पाठे स वसुदेवः ऋषिर्योगीशो वा सन् अधुनैवं सञ्जातः कुतः यत् यतः गतः समागतः आनकदुन्दुभिः यमुत्पातमाह——सोऽधुना अस्माभिर्दृष्ट एवेत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रणयबद्धाभिः बद्धस्नेहाभिः संन्यवीविशत् संवेशं निद्रामकारयत् ॥ ३० ॥ ३१ ॥

वसुदेवः ऋषिः त्रिकालदर्शी योगेशः कपिलान्यतमः समासतः संक्षेपतः सङ्कोचं कृत्वा जातदृष्टः अस्माभिरिति शेषः ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तावदिति विलोक्य ज्ञात्वा तत्र दूरतोऽपि दर्शनेन यत् किञ्चिल्लक्षणेन चेति ज्ञेयं ये नीचजातयो व्रजौकसस्त एवेत्यर्थः ॥ ३१-३३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लौकिकानाह—स्वप्नदृष्टाः स्वप्न एव भयपलायनाशिरश्छेदादि दर्शनेदेवः महोत्पाताश्च तेषां लक्षणं स्वप्नाध्याये भवति वृद्धबालग्रहाश्च भवन्ति नियतास्तेऽभगवदीयं भ्रामयन्त्येव अतः पिशाचवत् भ्रान्तवत् वृद्धा बालाश्च तिष्ठन्ति अत्रापि कालरोगव्यावृत्त्यर्थं य इति एवं सर्वाननूद्य विनियोगमाह—सर्वे इति । उक्ता अनुक्ताश्च ते सर्वे अस्मद्वाक्यात् स्वत एव नश्यन्तु पलायन्तां तेषां निवृत्तौ नाधिकः प्रयास इति विशेषणमाह, नामग्रहणमात्रेणैव भीरव इति । विष्णोस्ते तथैव नामग्रहणेन न ते तिष्ठन्ति कुतः पुनस्तत्समीप इति अतोऽस्मागिर्वचनादेव निराक्रियन्ते एवं सर्वप्रकारेण त्रिविधामपि रक्षां कृतवत्यः ॥ २९ ॥

ततो यज्जातं तदाह—इतीति । प्रणयेन स्नेहेन बद्धाभिः न तु लौकिकन्यायेन बद्धपदात् न प्रेरणया नापि निवारिताः तिष्ठन्तीति ज्ञापितं गोपीभिरिति पुनर्वचनं मध्ये ब्राह्मणादिशिक्षया कृतमिति व्यावृत्त्यर्थं कृतं रक्षणं यस्य रक्षाबन्धनादिकमपि कृतमिति ज्ञायते पूतनास्तनपानेनाजीर्णशङ्का व्यावर्तयति--पाययित्वा स्तनमिति । माता यशोदा गोपिकादीनां गाढ्यर्थं ज्ञानात् स्तनादानम् अनुपद्रवज्ञापकं च स्तनपानम् आत्मजं पुत्रं संन्यवेशयत् सम्यक् पर्यङ्के न्यवेशयत् शायितवती एवं युद्धध्युत्पादनादेतद्भगवच्चरितं निरोधरूपं च स्पष्टमेव ॥ ३० ॥

एवं पूतनावधं कृत्वा अग्रिमलीलासिद्ध्यर्थमज्ञानदोषं चाभिमन्त्रणादिना सम्यक् जातं इति स्नापयित्वा पूतनाया मोक्षो जात इति ज्ञापनार्थमग्रिमचरित्रमारभते--तावदिति, यावदध्यायसमाप्ति । देहसौरभ्येण हि मुक्तेति ज्ञातव्यम् रूपदर्शनाद्भयं जायत इति गन्धाग्रहश्च तद्वाद्दे स्पष्टं भवति तद्दाहश्च प्रभुसाध्यः अतो नन्दागमनमाह—तावदिति यावद्दोऽप्य एतावत्कृतवत्यः तावत्काले जाते मथुरायां गता नन्दादयः पूर्वोक्तगोपिकानां पतयः गोपिकाप्राधान्यात् प्राधान्येनोक्ताः मथुरायाः सकाशात् व्रजं गताः शुकस्तत्रैव भगवति स्थित्वा वदतीति गता इत्युक्तवान् तादृशं पूतनादेहं विलोक्य अतिविस्मिता जाता लौकिकं न स्मृतवन्तः अन्यथा तेषां निरोधो न स्यात् ॥ ३१ ॥

बालक्रीडायां तेषामासक्तिर्न वक्तव्येति तदर्थं व्यापारान्तरं कर्तव्यमिति तेषामत्र प्रमाणपरतामाह—नूनमिति । बतेति । खेदे वसुदेवः नूनम् ऋषिरेव सञ्जातः पूर्वं क्षत्रियः स्थितः इदानीमृषिर्जातः ऋषिवाक्यमेव हि प्रमाणम्. ननु, लौकिकऋषिरप्रयोजकः अन्यथा मन्त्राणां लौकिकत्वं स्यात् अत आह, योगेशो वा स सम्पन्नासेति योगेश्वराः सर्वं जानन्ति योगचक्षुषा समितिः सभायामपि ज्ञानात् स वसुदेवः प्रसिद्धत्वात्तस्य तदुचितमिति नासम्भावना तस्य वाक्यस्य सम्वादमनुवदन्ति स्वज्ञानवाक्यांय यमुत्पातमानकदुन्दुभिराह—स एवास्माभिर्दृष्ट इति । हि इति युक्तश्चायमर्थः "तदुदितः स हि यो यदनन्तरः" इति न्यायात् यादृच्छिकसम्वादित्वं परिहरन् आह-आनकदुन्दुभिरिति । आनका दुन्दुभयश्च तस्य जन्मनि नेदुः अतः प्रामाणिकोऽयं तस्य ज्ञानम् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रणयरशनया यशोदागृहे एव बद्धाभिः पाययित्वेति स्तनपानमेव बालानां स्वास्थ्यलक्षणमिति भावः । संन्यवेशयत् शाययामास ॥ ३० ॥

कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः ।
दूरे क्षिप्त्वाऽवयवशो न्यदहन् काष्ठवेष्टितम् ॥ ३३ ॥
दह्यमानस्य देहस्य धूमश्चागरुसौरभः ।
उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ॥ ३४ ॥
पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयापि हरये स्तनं दत्त्वाऽऽप सद्गतिम् ॥ ३५ ॥
किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ।
यच्छन् प्रियतमं किं नु रक्तास्तन्मातरो यथा ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतिविस्मिताः किंशङ्कया भ्रमादच्छिन्नपक्षः कोऽपि पर्वतो नभोव्यापिनोऽप्यवज्रत्वात् महीरुहांश्चूर्णयित्वा पपात किम्वा स्वयमेव साहजिक्या भ्रान्त्या कयापि योगिन्या वा देशान्तरं प्रापिताः स्मः किम्वा कस्याप्यैन्द्रजालिकस्येदं कर्मेति सन्दिहाना इत्यर्थः ॥ ३१ ॥

तत्र श्रीव्रजराजस्तु निश्चिनोति-नूनं निश्चितमेव ऋषिरस्मत् कुले वसुदेवः सर्वज्ञत्वादनुमीयते योगेशोऽष्टाङ्गयोगाभ्यासी योगजनेत्रेण भाविवृत्तदर्शित्वात् समास सम्यग्दीप्यते स्म "असदीसौ" ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संव्यवेशयत् सम्यक् शाययामास ॥ ३०—३१ ॥

वतेति विस्मये सः वसुदेवः यदाह स पत्रोत्पातः दृष्टः हि हेतौ नूनमिति निश्चये पूर्वम् ऋषिर्मन्त्रद्रष्टा योगेशः विष्णुध्याननिष्ठो वा सम्यगास इदानीं सञ्जातः अत एव आनकदुन्दुभिरिति हेतुगर्भं विशेषणम् । सामान्यस्य जन्मनि आनकादिना नादं देवा न कुर्वन्तीति भावः ॥ ३२ ॥

भाषा टीका ।

और जे स्वप्न में देखे वडे उत्पात हैं और वृद्धग्रह वालग्रह हैं, ते समस्त नाश कों प्राप्त होय, विष्णु भगवान् के नाम लियेतें डरपवेवारे आपही संपूर्ण नष्ट होइ जाय हैं ॥ २९ ॥

या प्रकार हाथ जोरि गोपीन नें विष्णु भगवान् की प्रार्थना से रक्षा करकें श्रीकृष्णचन्द्र कूं माता को सौंप दियो तव यशोदा जी ने स्तनपान कराय के श्रीकृष्ण चन्द्रकों शय्या पर पौढाय दीयो ॥ ३० ॥

तव तांई नंदादिक व्रजवासी मथुराते गोकुल में आये तव मार्ग में मृत्यु को प्राप्त भई पूतना को देखिकें वडो आश्चर्य मान्यो ॥ ३१ ॥

नन्दजी कहन लगे, कि—वसुदेवजी निश्चय कोई ऋषि है वसुदेवजी ने कही भैया शीघ्र मथुरा ते गोकुल को जा गोकुल में उत्पात होयगो सोई नेत्रन तें देख्यो ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विस्मयान्तरमाह—दह्यमानस्येति कृष्णेन निर्भुक्तोऽत सपद्याहतः पाप्मा यस्य ॥ ३३ ॥ ३४ ॥

प्रसङ्गात्कैमुत्यन्यायेन भक्तिवैभवमाह—पूतनेति ॥ ३५ ॥

श्रद्धया आस्तिक्येन भक्त्या प्रेम्णा रक्ता स्निग्धाः तन्‍तर इति वत्सहरणलीलाभिप्रायेण बहुवचनं गोगोपिकास्तन्मातरोऽभवन्निति ॥ ३६—४३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं यावच्छ्रीनन्दादयो निकटमायान्ति तावत्तैः गोकुल रक्षायां स्थितैः श्रीमदुपनन्दादिभिर्नियुक्तास्तदुचिता व्रजौकसः व्रजाश्रिताः कनिष्ठजातयो नितराम दहन् पुनर्जीवनशङ्कया निः हुरिति पाठः क्वचित् ॥ ३३ ॥

अगरुणोऽपि सौरभं यस्य सः धूमश्चेति चकारेण पूतना देहोऽपि कृष्णनिर्भुक्तत्वादगरुसौरभोऽभूत्तद्वक्त्रसम्बन्धादिसो लक्ष्यते तत्र हेतुः कृष्णेन सौगन्ध्यसौरूप्यादिनिजाशेषोत्कर्ष केन भगवता निःशेषेण भुक्तः प्राणैः सह स्तनपानात् अत सपदि धूमघ्राणसमय एव आ सम्यक् हतो नाशितः पाप्मा धू सेविनामपि सर्वेषां येन स चासौ स च तस्य एवं भगवदुच्छि ष्टस्य महिमा दर्शितः पवित्रं वस्तु भक्त्या समर्पितं किमुते वक्ष्यते च पूतनेत्यादिना ॥ ३४ ॥

पूतनेति युग्मकम् । जात्या राक्षसी तत्रापि लोकबालघ्नी तत्रा रुधिराशना हरय इति तत्तद्दोषहरणाभिप्रायेण परमात्मने प्रायेष्वन्तर्बहिरिन्द्रियेषु ज्ञानक्रियाशक्तिप्रदत्वेन सामान्यतस् वञ्चिताय कृष्णाय विशेषतः पूतनादीनामपि तादृशहितक स्वरूपो यो गुणैकदेशस्तदादिगुणगणप्रकटनेन सर्वचित्त स्वभावत एव स्वहितस्याकर्षकाय तस्मै तद्वद्विद्वेषाभावेन य सद्गतिं सतां गतिं श्रीकृष्णमेव प्राप्नोतीति ॥ ३५ ॥

किंपुनः किमुतेत्यर्थः । तत्रापि श्रद्धया विश्वासेन किमुत त

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भक्त्या आदरेण किमुत प्रियतममित्युक्तेः क्रमप्राप्त्या चायमर्थो लभ्यते तत्रापि प्रीत्या स्वस्य श्रीकृष्णस्य वा प्रियं यच्छन् किमुत तत्रापि प्रीत्यातिशयेन प्रियतरं यच्छन् किमुतेत्येवार्थः तत्राप्यतिप्रीत्यातिशयेन प्रियतमं यच्छन् किमुत इति किञ्च तत्रापि रक्तास्तदेकजीवनास्तत्सुखैकसुखाश्च यथा यच्छन्ति तथा यच्छन् किन्तु किमुतेत्येवार्थः पुनरुक्तिः कैमुत्येऽपि वैशिष्ट्याय तत्रापि तन्मातरो यथा यच्छन्ति तथा किमुतेति अत एव मातरः सर्वदृष्टान्तत्वेन सर्वोपरि पृथगेव स्थापिताः भोजनविषये मातॄणामेव सर्वाधिकरागात्प्रेयस्यादयोपि न दृष्टान्तिता इति ज्ञेयम् ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सद्गतिमगमत् प्राणापहारकथनेन बुद्धिदोषस्य प्रायश्चित्तं कृतम् अतः पापीयस्या अपि भगवत्सम्बन्धात् सुगतिलाभो युक्तः ॥ ३५—३६ ॥

---

श्रीमद्वीरराघवचार्यकृतभागवतचन्द्रचन्द्रिका।

ततस्ते व्रजौकसस्तत्पूतनाकलेवरमवयवशः परशुभिश्छित्वा दूरे क्षिप्त्वा काष्ठैर्वेष्टितं कृत्वा ददहुः ॥ ३३ ॥

विस्मयान्तरमाह—दह्यमानस्येति। दह्यमानस्य देहस्य सम्बन्धी यो धूमः सोऽगरुसन्निभः कृष्णागरुतुल्यगन्धः समुत्थितः यः समुत्थितः सोऽगरुसन्निभो बभूवेति शेषेणवाऽन्वयः अगरुसौरभ इति पाठे अगरोः सौरभ इव सौरभः यस्य सः इत्यर्थः। तत्र हेतुं वदन् देहं विशिनष्टि—कृष्णेति । श्रीकृष्णस्य भगवतो निर्भुक्त्या हेतुभूतया सपद्येव कारस्न्येन आहतं पापं यस्य तस्य कृष्णनिर्मुक्तेति पाठान्तरं तदा कृष्णेन भगवता हेतुना निर्भुक्त्या हेतुभूतयेत्यर्थः ॥ ३४ ॥

यतो हतपाप्मा ऽत एव मुक्तिमनर्हापि प्रापेत्याह—पूतनेति। अपिशब्दस्य लोकबालघ्न्यादिभिः प्रत्येकं सम्बन्धः जिघांसया हन्तुमिच्छया हरये स्तनं दत्त्वापि सद्गतिं सतां प्राप्यां गतिं मुक्तिमवाप ॥ ३५ ॥

यतोऽप्रियं गरलं यच्छन्ती मुक्त्यनर्हापि केनचिद्भगवत्सम्बन्धमात्रेणैव सद्गतिमवाप किंपुनर्भगवद्भक्त्या सद्गतिं प्राप्नुवन्तीत्याह—किंपुनरिति। श्रद्धया भगवत्प्रियाचरणोपयुक्तया त्वरया भक्त्या श्रद्धया च परमात्मने श्रीकृष्णाय किञ्चित्प्रियतमं यच्छन् समर्पयन् सद्गतिं प्राप्नोतीति किंपुनर्वक्तव्यमित्यर्थः। प्रियं यच्छन् सद्गतिं प्राप्नोतीत्यत्र दृष्टान्तः रक्तास्तन्मातरो यथेति रक्ता अनुरक्ताः तस्य श्रीकृष्णस्य मातरो यशोदादयो यथा प्रियतमं स्तन्यं यच्छन्त्यः सद्गतिं प्रापुस्तद्वत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूतनाविशेषेणी सद्गतिं स्वर्गं पूतना त्वसद्गतिं नरकं "पद्लृ विशरणगत्यवसादनेषु" इति धातुः ॥ ३५ ॥

रक्ता अनुरक्ताः ॥ ३६ ॥ ३७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कृष्णनिर्भुक्तेति तत्सौगन्ध्याधानमपि व्यञ्जितम् ॥ ३४ ॥

राक्षसी लोकबालघ्नी रुधिराशनेति क्रमशोऽधमताधिक्यम् ॥ ३५ ॥

परमात्मने ज्ञानक्रियाशक्तिप्रदत्वेन तत्सामान्यतस्तावद्धिताय कृष्णाय विशेषपूतनादीनामपि तादृशहितकारिता रूपो यो गुणैकदेशस्तदादिगुणगणप्रकटनेन सर्वचित्तानां स्वभावतः स्वस्मिन्नाकर्षकाय तस्मै तद्धृदयमात्राभावेन यथाकथञ्चित् किञ्चिदपि यच्छन् किं पुनः किमुतेत्यर्थः । तत्रापि श्रद्धया विश्वासेन किमुत तत्रापि भक्त्या आदरेण किमुत तत्रापि स्वस्य श्रीकृष्णस्य वा प्रियतरं यच्छन् प्रीत्येत्यर्थात् अत्रापि प्रीत्या प्रियं प्रीतिविशेषेण प्रियतरमिति क्रमः कार्यः अतः प्रीतिविशेषतररूपेण प्रेम्णा प्रियतममित्याद्यपि गम्यं तत्रापि रक्तास्तदेकजीवनास्तत्सुखैकसुखा यथा यच्छन्ति तथा यच्छन् किन्तु किमुतेत्येवार्थः पुनरुक्तिः किमुत्येऽपि वैशिष्ट्याय तत्रापि तन्मातरो यथा यच्छन्ति तथा किमुतेति ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सर्व एव व्यवहारसिद्ध्यर्थं परशुभिः तस्याः कलेवरं छित्त्वा क्षिप्त्वा अवयवशो दूरे क्षिप्त्वा राशीकृत्य गन्धादिव्यावृत्यर्थं काष्ठवेष्टितं कृत्वा निर्दहन् जले क्षिप्ते राक्षसानां गतिर्दुर्ज्ञेयेति पुनर्जीवेत् अदाहे वा खण्डशो नयेयुः पश्चाद्योजयेयुः अतो दाह एवोचित इति तेषां बुद्धिः तस्या मुक्तिज्ञापनाय भगवता तथा सम्पादितं "भस्मान्त एव मुक्तिः" इति श्रुत्यभिप्रायः ॥ ३३ ॥

तस्या मुक्तिलक्षणमाह— दह्यमानस्येति। दह्यमानस्य देहस्य सम्बन्धी धूमः काष्ठभ्रमव्यावृत्त्यर्थं तथोक्तं चकारात् अङ्गारा अपि सोज्ज्वला देहोपि घृतवत् ज्वलतीति ज्ञातव्यम् अगरुजनितधूमवत् सौरभं यस्य सः अगरुसौरभः सर्वजनीनार्थमुत्थितः ऊर्ध्वगतः ऊर्ध्वगमनमप्युत्तमगतिज्ञापकं. ननु, दुष्टाया देहस्य कथं तथात्वमित्याशङ्क्य हेतुमाह—कृष्णनिर्भुक्तमपदि आहतपाप्मन इति। यदैव कृष्णेन नितरां भुक्तं तस्याः स्तन्यं प्राणाश्च कृत्स्नभुक्त एव सपदि तस्मिन् कृष्णभुक्तक्षण इत्यर्थः। सपदीत्यव्ययं कृष्णभुक्तस्य सपदि अव्यवहितः क्षणः तस्मिन्नेव आ समन्तात् हतं नष्टं पापं यस्य देहस्य आहतपाप्मा देहः ॥ ३४-४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्रजौकसोऽन्यजा उपनन्दाद्यादिष्टाः निःशेषेण देहुः पुनर्जीवनशङ्कया विषधरजीवानां दाहेनैवोपशान्तेः ॥ ३३ ॥

तद्देहस्य कृष्णमुखस्पर्शोत्थं महिमानमाह—दह्यमानस्येति । कृष्णनिर्भुक्तेन कृष्णकृतस्तन्यपानेन सपद्याहतः पाप्मा यस्य तस्य ॥ ३४ ॥

प्रसङ्गात् कैमुत्यन्यायेन भक्तेर्महिमानमाह—पूतनेति। जिघांसयापि किमुतौदासीन्येन किमुततरां श्रद्धया किमुततमां श्रद्धया भक्त्येत्यर्थः। हरये भगवत्प्रादुर्भावमात्राय किमुत कृष्णाय परमा-

पद्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः ।
अङ्गं यस्याः समाक्रम्य भगवानपिवत्स्तनम् ॥ ३७ ॥
यातुधान्यपि सा स्वर्गमवाप[1] जननीगतिम् ।
कृष्णभुक्तस्तनक्षीराः किमु गावोऽनु मातरः ॥ ३८ ॥
पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ।
भगवान् देवकीपुत्रः[2] कैवल्याद्यखिलप्रदः ॥ ३९ ॥
तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ।
न पुनः कल्पते राजन् ! संसारोऽज्ञानसम्भवः ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

रमने सर्वपरमस्वरूपावतारिणो विपस्तनमपि किमुत विपेतरद्वस्तु किमुततरां प्रियं किमुततमां प्रियतरं किमुतातितमां प्रियतमं पूतनानाम्ना प्रसिद्धा राक्षस्यपि किमुत मानुष्यः किमुततरां भक्ताः किमुततमां रक्ताः अनुरागयुक्ताः तत्रापि किमुततमां तन्मातरोऽतिवत्सलाः वत्साहरणलीलागतास्तास्वप्यातततामानिर्वाच्यत्वात् श्रीयशोदा तु दूरत एव प्रणतिपात्री कृत्येव स्थापिता नतूर्ल्लिखितेतिकरणसम्प्रदानकर्मकर्तृपदेषु कैमुत्यमपडवी ॥ ३५—३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रथमं श्रीकृष्णसंस्पर्शादेव सपद्याहतः पाप्मा यस्य पुनः गोपैर्भगवदीयैर्दह्यमानस्य अगरुसौरभवत् सौरभो यस्य सः उत्थितः सन् कृष्णेन निर्मुक्तोऽभूत् ॥ ३४ ॥

अतः साऽपि कृतार्था ऽभूदित्याह—पूतनेति । सद्गतिं मातृगतिम् ॥ ३५ ॥

यदा पूतना जिघांसया दुर्जरवीर्यमुल्बणं स्तनं देहधूमसौरभं च श्रीकृष्णाय दत्वा मातृगतिमाप तदा रक्ताः भक्ता भागवताः श्रद्धया भक्त्या च किञ्चिदपि प्रियतमं पत्रपुष्पादिकं कृष्णाय परमात्मने यच्छन् तन्मातरः यशोदादेवकीरोहिण्याद्याः यथा तथा गतिं प्राप्नुवन्तीति किंपुनर्वक्तव्यमित्यर्थः ॥ ३६—३९ ॥

भाषा टीका ।

तब वे सगरे ब्रजवासी पूतना के शरीर कूं फरसान तें काटि २ कें दूर लेजाय लकरियन पै पटक कें दाह करत भये ॥३३॥

जा सौं पूतना को देह जरायौ तब जरते (सौं) देह मैं सूं अगरु चन्दन के नाई सुगंध वारी धुआं उठत भयो । श्रीकृष्ण ने ई जाको स्तन पान कियौ तातेंसों वाके सब पाप तत्काल दूर होगये ॥ ३४ ॥

सब लोगन के बालकन कों मारन वारी रुधिर की पीवनवारी राक्षसी भगवान् कों मारवे कूं आई सो वो भी स्तन पान करायकें सुन्दर गति कूं प्राप्त भई ॥ ३५ ॥

तौ फिर जो श्रद्धा और भक्ति सौं श्रीकृष्णचन्द्र परमात्मा कूं अति प्यारी वस्तु देकें सुन्दर गति कूं पावें यामें कहनोई कहा । जैसें अनुराग वारी उनकी माता ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, यद्येवं दुष्टा तर्हि कथं सद्गतिमाप ? उच्यते तन्महिमदृष्ट्या नाश्चर्यं तदपीति वदंस्तस्यास्तामेव सद्गतिं पुनराश्चर्यविशेषाय परमविशेषतो दर्शयति—पद्भ्यामिति युग्मकेन । भक्तानामेव नान्येषां हृद्येव स्थिताभ्यां नतु साक्षात्कर्तुं शक्याभ्यां ये सर्वैरपि लोकैर्वन्दिता श्रीब्रह्मशिवादयोऽपि महाभक्तास्तैरप्युद्देशमात्रेण वन्दितुं योग्याभ्यां नतु साक्षात्सेव्याभ्यां सम्यगाक्रम्य न तु यथा कथञ्चित् स्पृष्ट्वा यस्याः स्तनमप्यपिबत् तथाभूता सती सद्गतिमापेति किमाश्चर्यमित्यर्थः । तत्र च मातृवेषभावानुकरणे कारणात्तत्करुणैव कारणमिति भावः तदुक्तं "सद्वेषादिव पूतना" इति "कंवा दयालुं शरणं व्रजेम" इति च "ब्रह्मा भवो लोकपालाः स्वर्वासस्मेभिकाङ्क्षिणः" इतिवत् स्वर्गं परमसुखानुभवस्थानं "य एतत्पूतनामोक्षम्"इति वक्ष्यमाणरीत्या प्रपञ्चातीतं "पूतनापि सकुलात्वामेव देवापिता"इति रीत्या "गोकुलं वनवैकुण्ठम्"इति श्रीकृष्णोपनिषद्रीत्या "गोकुलाख्यं महत्पदम्"इति श्रीब्रह्मसंहितारीत्या च श्रीगोकुलस्यैव प्रापञ्चिकलोकानभिव्यक्तस्वं "चिन्तामणिप्रकरसद्म" इत्यादिब्रह्मसंहितावर्णितप्रकारविशेषं "गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामि"इति तत्र प्रसिद्ध्या श्रीगोलोकाख्यं श्रीकृष्णलोकमेव अत एव जननीगतिं तत्रापि जनन्या श्रीयशोदाया इव गतिं निजलालनाद्यधिकृतधात्रीवर्गप्रवेशमित्यर्थः । निर्पत्स्यते च जननीनामन्यगतिरिति भावः । तदुक्तं "त्वामेव देवापिता"इति 'लेभे गतिं धात्र्युचिताम्'इति च । ननु, तस्या दृष्टान्तत्वं मातृणामपि तथैव गतिरभिप्रेयते नेत्याह—कृष्णेति । तस्मादेव गावो मातरश्च जननीगतिमवापुरिति किमुवक्तव्यं गावस्तास्तदीया गाव एव मातरश्च मातर एव नित्यमित्यर्थः । अप्रस्तुतानां

(१) जगतीपतिम् इति वीर० (२) कैवल्याद्यखिलार्थदः इति वीर० तोप० क्रमस० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गवां प्रयोगो मातृषु कैमुत्याय अनुमातर इति वा छेदः। यद्वा किमु गावः वत्सा अनुमातरः मातृसदृश एव अतः श्रीयशोदा तु सर्वमूर्द्धमणिवदेव दूरे रक्षितेति ज्ञेयम् अत्र क्षीरपदाधिक्यात् पूतनायां तदनुकरणमित्येव च सिद्धम् ॥ ३७—३८ ॥

तस्याः स्वर्गं विशेष्टुं तद्विशेषणां जननीगतिं विशिनष्टि—पयांसीति, युग्मकेन। अयमर्थः कैवल्याद्यखिलार्थदः कामिनां धर्मादिमात्रार्थदः ननु स्वस्वरूपव्यञ्जकः मुमुक्षूणां तु कैवल्यदो निर्विशेषब्रह्माख्यस्वस्वरूपतादात्म्यमात्रप्रापकः ननु सविशेषभगवदाख्यस्वस्वरूपोपलम्भकः तथा भगवान् भक्तानामपि भगवत्स्वरूपमात्रेण ननु ममताविशेषमयप्रेमविशेषप्रदेन पुत्रादिरूपेण तत्प्रापक इत्यर्थः। तथा श्रीदेवकीपुत्रः श्रीदेवक्या अपि जन्मनैव पुत्रः ननु पितरौ नान्वविन्देतामित्यादिना श्लाघिष्यमाणतादृशभावमयलालनेनापीत्यर्थः। स एव यासां गवां मातॄणां च अलमत्यर्थं पुत्रस्नेहस्नुतम् अलमत्यर्थमेवाऽपिबत् परस्परं तद्भावस्य गाढत्वेनाधिक्येन च सर्वोत्तमत्वं दर्शितम् एतच्च "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादिवज्ज्ञेयम् अतस्तासामज्ञानसम्भवः संसारः संसारित्वं न पुनर्नतु कल्पते घटते ज्ञानादुपर्य्युपरि समारूढत्वात् संसारिकेषु "मुक्तानामपि सिद्धानाम्" इत्यादि न्यायेन शुद्धभक्तस्यापेक्षस्य परमदुर्लभत्वात्तद्विधानामसम्भव इति ॥ ३९ ॥

तदेव व्यञ्जयति—अविरतं नित्यमेव श्रीकृष्णे सुतेक्षणां सुतभावं कुर्वतीनामेव सतीनां यत्र श्रीकृष्णस्तत्र नित्यमेवैतादृशीनामेवेत्यर्थः। हे राजन्! भगवत्तत्त्वज्ञाने विराजमानेति सिद्धान्ते सावधानं करोति अतः स्वर्गस्य जननीगतिमिति विशेषणेनाप्रापञ्चिकत्वमेव सुतरामिति चागतम् ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुतेक्षणां सुतबुद्धिं "न पुनः कल्पते राजन्! संसारः" इति अस्मिन्नवतारे ईश्वरत्वस्य प्रकटत्वात् ईश्वरः पुत्रत्वं गत इति ज्ञातत्वान्मोक्षो युज्यते ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, मातॄणां सद्गतिप्राप्तिरसिद्धेति कथं दृष्टान्ततेत्याशंकायां तामपि कैमुत्यन्यायेन सिद्धवत्करोति—पद्भ्यामिति सार्द्धचतुर्भिः। लोकैर्वन्दिता ये ब्रह्मादयस्तैरपि वन्द्याभ्यां भक्तानां हृदयकमलस्थाभ्यां पद्भ्यां भगवान् यस्याः पूतनाया अङ्गं समाक्रम्य स्तनं विषपूर्णं स्तनमिहापिबत् ॥ ३७ ॥

सा यातुधानी पूतनापि स्वर्गं निरतिशयानन्दरूपं जगतीपतिं हरिमवाप किमुत कृष्णेन भुक्तं स्तनयोः क्षीरं यासां ता मातरः जगतीपतिमवापुरिति वक्तव्यमित्यर्थः। पौरवी भद्रा मदिरादिमात्रन्तराभिप्रायकं बहुवचनम् अनुशब्दोऽत्र यथा शब्दार्थकः यथा गावस्तद्वदित्यर्थः ॥ ३८ ॥

तासामपि मुक्तिरसिद्धेति दृष्टान्तानुपपत्तेरित्यतस्तां विशिनष्टि—यासां गवां पुत्रस्नेहेनैव स्नुतानि पयांस्यलं नितरां भगवानपिबत्, कथम्भूतः? देवकीपुत्रः कैवल्याद्यखिलार्थदः कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिरिति यावत् तत्प्रभृतिपुरुषार्थचतुष्टयप्रदः कैवल्यादिपुरुषार्थप्रदानाय देवकीपुत्रत्वेनावतीर्ण इत्यर्थः ॥ ३९ ॥

कृष्णेऽविरतमविच्छेदं यथा तथा सुतेक्षणां सुतबुद्धिं कुर्वतीनां तासां मातॄणां हे राजन्! अज्ञानसंभवः संसारः पुनर्न कल्पते न प्रवर्त्तत इत्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपि स्वर्गं गर्हितं स्वर्गं नरकमित्यर्थः। "अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" (१।४।९६) इति पाणिनिः जने ये नीचास्तैर्गम्यत इति जननीगतिः स्पष्टोऽन्योऽर्थः यद्वा जनन्या इव गतिं विचित्रगतिं योग्यतानुसृतगतिमित्यर्थः "इर्विचित्रे स्मरे पुमान्" इति यादवः। अनेनापि पूतनाया नरकगतिः उर्वरयाः स्वर्गगतिरिति सूचितम्। नु सविकल्पां गतिं योग्यतयेति शेषः। यद्वा अनु योग्यतासदृशीं "नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु" इत्यमरः ॥ ३८ ॥ ३९ ॥

सुतेक्षणं पुत्रदर्शनम् ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तन्महिमदृष्ट्या तु नाश्चर्यं तदपीत्याह—पद्भ्यामिति। तथाभूता सती सा सद्गतिमापेति किमाश्चर्यमित्यर्थः। तत्र च मातृवेषभावानुकरणकारणात् तत्करणमेव कारणमिति भावः। तदुक्तं "सद्वेषादिव पूतना" अपीति "कं वा दयालुं शरणं व्रजेम" इति च ॥ ३७ ॥

एवं तस्याः सामान्यतः सद्गतिमुक्त्वा पुनराश्चर्यविशेषाय परमं विशेषतो दर्शयति—यातिचत्यर्द्धेन। स्वर्गं ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकांक्षिण इतिवत् परमसुखानुभवस्थानम् "य एतत् पूतनामोक्षम्" इति वक्ष्यमाणरीत्या च श्रीगोकुलस्यैव प्रापञ्चिकलोकानभिव्यक्तं "चिन्तामणिप्रकर सद्म" इत्यादि ब्रह्मसंहितावर्णितं प्रकाशविशेषं गोकुल एव निवसतीत्यादि तत्रैव प्रसिद्धं श्रीगोलोकाख्यं श्रीकृष्णलोकमेव अत एव जननीगतिं तत्रापि जनन्या अपि श्रीयशोदाया इव गतिं निजलालनाद्यधिकृत धात्रीवर्गप्रवेशमित्यर्थः। तदुक्तं स्यामेव देयार्पितानि लेभे गतिं धात्र्युचितामिति च. ननु, तस्या दृष्टान्तत्वेन मातॄणामिति तथा गतिरभिप्रेयते नेत्याह—कृष्णेति। तस्मादेव गावो मातरश्च जननीगतिमवापेति। किमु वक्तव्यं गावस्तास्तदीया मातरश्च मातर एवेत्यर्थः ॥ ३८ ॥

तस्याः स्वर्गं विशेषयितुं जननीगतिमपि विशिनष्टि—पयांसीति द्वाभ्याम् "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादिवद्व्याख्येयमर्थः। यः कैवल्याद्यखिलार्थदः कामिनां धर्मादिमात्रार्थदः न तु स्वरूपमात्रव्यञ्जकः मुमुक्षूणाञ्च कैवल्यदो निर्विशेषब्रह्माख्यस्वस्वरूपतादात्म्यमात्रप्रापकः ननु सविशेषभगवदाख्यस्वस्वरूपोपलम्भकः तथा भगवान् भक्तानामपि भगवत्स्वरूपमात्रेण ननु ममताविशेषमयप्रेमविशेषप्रदेन पुत्रादि-

कटधूमस्य सौरभ्यमवघ्राय व्रजौकसः ।
किमिदं कुत एवेति वदन्तो व्रजमाययुः ॥ ४१ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रूपेण तत् प्रापक इत्यर्थः । तथा देवकीपुत्रः श्रीदेवक्या अपि जन्मनैव पुत्रः नतु तादृश भावमयेन लालनेनापीत्यर्थः । स एव यासां गवां मातॄणाञ्च अलमत्यर्थं पुत्रस्नेहस्नुतम् अजमत्यर्थमेवापिबत् इति परस्परं तद्भावासक्तिर्दर्शिता: तस्याः सर्वोत्तमता च अतस्तासामज्ञानसम्भवः संसारः संसारित्वं न पुनर्नेतु कल्पते युज्यते ज्ञानादुपर्युपरि समारूढत्वात् सांसारिकेषु "मुक्तानामपि सिद्धानाम्" इत्यादिन्यायेन शुद्धभक्तस्याप्येकस्याप्येकस्य परमदुर्लभत्वात् तद्विधामप्यसम्भवाच्च किमुत तासां तदेव व्यञ्जयति अविरतं नित्यमेव श्रीकृष्णे सुतभावं कुर्वतीनामेव सतीनां यत्र श्रीकृष्णस्तत्र नित्यमेव तादृशीमेवेत्यर्थः ॥३९॥४०॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवतो निष्कारणकृपाप्रापितं पूतनायाः सौभाग्यं तावत् पद्येनाह—पद्भ्यामिति द्वाभ्यम् । भक्तहृदिस्थाभ्यामिति पूतना न भक्ता नाप्यभक्ता किन्तु तस्य वैरिणीति भावः । लोकवन्दितैः ब्रह्मरुद्रादिभिरपि वन्द्याभ्यामिति पूतनया तु पादौ न वन्दितौ नाप्यवन्दितौ मरणसमये स्वहृदयात् सकाशात् निष्कासयितुं यतमानयाप्यशक्नुवत्या स्वपाणिभ्यां यावद्बलं ताडितावेवेति भावः । सम्यगाक्रम्य न तु यथाकथञ्चित्स्पृष्ट्वा स्वर्गं "ब्रह्मादयो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः" इतिवत् पूतनापि सकुचा स्वामेव देवापितेति ब्रह्मोक्तेर्वैकुण्ठमेव न तु नश्वरं स्वर्गं तमपि कीदृशं जनन्याः श्रीयशोदायाः प्रकाशभेदेन गतिर्यत्र तमिति श्रीगोलोकमेव तस्येह स्वर्गपदेनोक्त्या सुखैश्वर्य्योत्तरं सालोक्यमवाप न तु प्रेमसेवोत्तरामिति बुद्ध्यते जनन्याः सम्बन्धिनीं गतिमिति तु न व्याख्येयं रक्षास्तन्मातरो यथेति पूर्वत्र "कृष्णभुक्तस्तनक्षीराः किमु गावोऽनुमातरः" इत्युत्तरत्र च ततः सकाशात्तन्मातॄणामप्यन्यासामप्याधिक्यप्रतिपादनात् वैरित्वेन कंसादिसाम्येऽपि यस्या वेषभावानुकरणकारणादेवैतावत्कृपापात्रीबभूव पूतना तस्याः श्रीयशोदाया गतिं प्राप्तुं योग्यतां सा कथं भजताम् ? इत्यत एव "लेभे गतिं धात्र्युचिताम्" इत्युद्धवेनोक्तम् अत एवात्रापि जननीशब्देन धात्र्येव व्याख्येयेति केचित् तत्रापि धात्र्युचितेति शब्देन धात्रीसम्बन्धिनी गतिर्न लभ्यते महाराजोचिता सम्पद्दस्येत्युक्ते महाराजतुल्यैव सम्पत् प्रतीयते नतु महाराजसम्बन्धिनीति तस्मात्सुखैश्वर्य्योत्तरे गोलोके धात्री सारूप्यं पूतना प्रापेति सिद्धान्तः ॥ ३७ ॥

ननु किमु गावोऽनुमातर इति कैमुत्येन मातॄणामपि वैकुण्ठप्राप्तिरेव यद्यभिप्रेयते तर्हि वैरभाववात्सल्यभावयोस्तुल्यत्वापत्तिः सा च भगवत्यविवेचकत्वलक्षणं दोषमेव समर्पयेद्यदि च धातुधान्यपि सा वैकुण्ठमवाप किमुतानुरक्ताः परमवत्सलाः मातरो गावश्च किन्तु तास्ततोऽप्युत्तमं फलं लभन्त इत्यभिप्रेयते तर्हि तदेवाभिव्यज्यतां किन्तदित्यपेक्षायामाह—पयांसीति । अन्येभ्यः कैवल्याद्यखिलप्रदोऽपि यासां पयांसि अत्यतिशयेन दुर्लभबुद्ध्या अपिबत् "स्तन्यामृतं पीतमतीव ते मुदा" इति ब्रह्मोक्तेश्च तेन ताभ्यः किमयं वाञ्छितं दास्यति प्रत्युता एवास्मै वाञ्छितं ददतीति स्ववाञ्छितपूरणायोग्यलक्षणं फलं गोगोपीभ्यः कृष्णो ददावित्यर्थः आयातः ततश्च वैकुण्ठस्थितेः गोलोकस्थितेः सकाशात्तद्रूपैव स्थितिस्तासां सर्वोत्कृष्टेति सिद्धान्तो ऽवगतः देवक्याः पुत्रोऽपि तासां पयांस्यपिबत् कृतस्या इति ततोऽपि तासामुत्कर्षो ध्वनितः न च तासां संसारध्वंसं लक्षणं फलमेव दातव्यमस्तीति वाच्यं संसारो हि देहगेहपतिपुत्राद्यासक्तिरूपस्तत्र तासां देहसम्बन्धिस्तन्यामृतं कृष्णः पिबति गेहे कृष्णः खेलति पतिः कृष्णस्य पिता पुत्रः स्वयं कृष्ण एवेति तदाद्यासक्तेः संसारत्वं न घटते इत्याह—तासामिति सुतेक्षणं सुतभावं न तु कल्पते न घटते अज्ञानसंभव इति ज्ञानिनां ब्रह्मानुभव एव तावत् संसारित्वाभावप्रतिपादकः ब्रह्मानुभवादपि शान्तभक्तानां ब्रह्मतया भगवदनुभवः श्रेष्ठः ततोऽपि दास्यभाववतां भगवतः प्रभुत्वेनानुभवो भगवद्वशीकारकत्वात् श्रेष्ठः ततोऽपि सख्यभाववतां सखित्वेन भगवद्वशीकारातिशयात् ततोऽपि वात्सल्यवतां सुतत्वेनानुभवः श्रेष्ठः इति संसाराभावे कैमुत्यं भक्तिरसामृतसिन्धोरवगन्तव्यम् ॥ ३८—४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अविरतं निरन्तरम् ॥ ४० ॥

---

भाषा टीका ।

भक्तन के हृदय में विराजन वारे और लोक वन्दित ऐसे ब्रह्मादिकन करिकें वन्दित ऐसे श्रीचरणारविन्दन सों पूतना को अंगदाबि के भगवान् श्रीकृष्ण, स्तन पान करत भये ॥ ३७ ॥

माता की गति जो स्वर्ग है ताय तौ वो पूतना राक्षसी पावत भई । और भलां जिन गायन कें और गोपिन के स्तन के दुग्ध को पान आप श्रीकृष्णचन्द्र ने कीनो है वे सुन्दर गति कों प्राप्त होय यामें कहनोंई कहा है ॥ ३८ ॥

मोक्ष कूं आदि लै करकें सब पदार्थन के देन वारे भगवान् श्रीदेवकी पुत्र, जिनके पुत्रपने के स्नेह सूं द्रवमन वारे दूधन कों धाय धाय कें पीवत भये ॥ ३९ ॥

और सदा श्रीकृष्ण में पुत्र बुद्धि करन वारी । हे राजन् भलां तिनकों फिर अज्ञान सों जाकी उत्पत्ति ऐसो संसार कैसें होय सके ॥ ४० ॥

---

ते तत्र वर्णितं गोपैः पूतनागमनादिकम् ।
श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन् सुविस्मिताः ॥ ४२ ॥
नन्दः स्वपुत्रमादाय (१)प्रेत्यागतमुदारधीः ।
मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरूद्वह ! ॥ ४३ ॥
य एतत्पूतनामोक्षं कृष्णस्याऽऽर्भकमद्भुतम् ।
शृणुयाच्छ्रद्धया मर्त्यो गोविन्दे लभते रतिम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम् वैयासिक्यां
दशमस्कन्धे नन्दवसुदेवसङ्गमो नाम
षष्ठोऽध्यायः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदार्भकमर्भकचरितं, किं तत् ? पूतनामोक्षमिति ॥ ४४ ॥
भक्तुं दैत्यकुलानीशः पूतनायाः शिशुच्छलात् ।
स्तन्यापोशनतः प्राणैः प्राणाहुतिमकल्पयत् ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कटः श्मशानमिति चीरस्वामी व्रजौकसः ये तद्वृत्तान्तात् पूर्वमन्यत्र गतास्ते तथा ॥ ४१ ॥

ते पूर्वोक्ताः श्रीमन्नन्दादयश्च सम्प्रत्यागताः गोपैः श्रीगोकुलरक्षानियुक्तादिभिः तत्र व्रजे पूतनागमनादिकं विशेषतः श्रुत्वा आदिशब्दात् स्तनदानमहार्त्तनादादि शिशोश्च स्वस्ति श्रुत्वेति तेन सुविस्मयेन वात्सल्यपोषणं ध्वनितम् ॥ ४२ ॥

तेष्वपि नन्दस्य वैशिष्ट्यमाह—नन्द इति । सम्भ्रमे गते सति परमां मुदं लेभे तत्र हेतवः नाम्नैव तावच्छ्रीनन्दः तत्राप्युदारधीः दयादिगुणगणार्णवमानसः तत्रापि स्वपुत्रमादाय अङ्के कृत्वा प्रोत्यागतः तत्रापि मूर्द्ध्न्यवघ्रायेति किन्तु प्रोत्यागत इति हन्त-मत्प्रवासादेतावाननर्थो जात इति पश्चात्तापवानपीति गम्यते कुरूद्वहेति पूर्ववत् एतदारभ्य च श्रीकृष्णस्याधोक्षजेत्याख्या व्रजजनैः कृता यथा च श्रीहरिवंशे वासुदेवमाहात्म्ये—

"अधोऽनेन शयानेन शकटान्तरचारिणा ।
राक्षसी निहता रौद्रा शकुनीवेषधारिणी ॥
पूतना नाम घोरा सा महाकाया महाबला ।
विषादिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्दने ॥
ददृशुर्निहतां तत्र राक्षसीं वनगोचराः ।
पुनर्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षजः ॥"

इति ॥ ४३ ॥

अहो पूतनायाः साक्षात्सम्बन्धादिना तादृश्याङ्गतौ किमाश्चर्यं तद्वार्ताश्रवणेनापि सर्वोऽपि तस्मिन् रतिमपि लभत इत्याह—य इति । यो मर्त्यो मरणधर्मा यः कश्चिदेतच्छ्रीकृष्णस्याद्भुतार्भकचरितं शृणुयात् स गोविन्दे गोकुलेन्द्रे भमवति रतिं लभते इत्यर्थानुसन्धानमप्यनपेक्ष्य नामादिवद्वस्तुशक्तिरेव स्थापिता तथाप्यर्थानुसन्धाने सति कारुण्यविशेषालोचनात्फलस्य चैष्य-वैशिष्ट्ये गम्येते कीदृशं पूतनाया अपि मोक्षः संसारात्तुच्छफलान्तराच्च निर्गमो येन तत् अत एवाद्भुतम् अर्भकभावापरित्यागेऽपि तादृशमारणमोक्षणादिना विस्मयकौतुकावहं निशम्येति पाठे यस्तन्निशम्य भवति स श्रद्धया सह रतिं लभते पाठस्त्वयं तेषामसम्मतः असङ्गतस्याप्यस्याव्याख्यानात्—

अविद्यायाः क्षयादेव लभ्योऽहमिति मन्मथीम् ।
प्रागहन् पूतनां कृष्णो राघवस्ताडकामिव ॥—

किञ्च

आरम्भादेव लीलाया वकीधात्रीगतिप्रदः ।
कृष्णः स्वगुणमाधुर्यं तृष्णयामास वैष्णवान् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
षष्ठोऽध्यायः ॥ ६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कटधूमस्य शवधूमस्य ॥ ४१ ॥
शिशोः स्वस्ति सुखेनावस्थानम् ॥ ४२—४४ ॥
इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
षष्ठोऽध्यायः ॥ ६ ॥

(१) प्रेत्य इति विजय० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्रजौकसः कटधूमस्य अवधूमस्य सौरभ्यमाघ्राय किमिदमत्याश्चर्यमिदं कुतो वाऽस्य सौरभ्यमागतमित्येवं वदन्तः व्रजं जग्मुः ॥ ४१ ॥

ते मथुराया आगता नन्दादयः गोपैर्व्रजस्थैर्वर्णितं पूतनाया आगमनादिप्रकारं तन्निधनं मरणं शिशोः श्रीकृष्णस्य स्वस्ति सुखेनावस्थानं च श्रुत्वा सुनितरां विस्मिता बभूवुः ॥ ४२ ॥

प्रोष्य देशान्तरं गत्वा पुनरागतो नन्दः उदारधीर्विपुलानन्दयुक्तबुद्धिः स्वपुत्रमादाय मूर्द्ध्न्युपघ्राय हे कुरूद्वह परमां मुदं प्राप ॥ ४३ ॥

प्रकृतपूतनावृत्तान्तादिश्रवणफलमाह—य इति । किं यः पुमानेतत्पूतनामोक्षम् एतदिति सामान्याभिप्रायकं क्लीबत्वं बाल श्रीकृष्णस्याद्भुतं कर्म चेष्टितं तत्र युक्तः समाहितचित्तो निशम्याकर्ण्य गोविन्दे गतिं लभते गत्यर्थानां बुद्ध्यर्थाः गतिं ज्ञानं भक्तिमिति यावत् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कटधूमस्य अवधूमस्य अन्ये व्रजौकसः ॥ ४१ ॥ ४२ ॥
प्रोष्य प्रवासं कृत्वा ॥ ४३ ॥
फलमाह—य इति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥
( विजयध्वजतीर्थरीत्या सप्तमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कटेति । व्रजौकसः तद्वृत्तान्तात् पूर्वमन्येऽपि व्रजान्निर्गताः ते सम्प्रत्यागताः पूर्वमागतश्च विशेषतः श्रुत्वा ॥ ४१—४३ ॥

य इति पूतनायाः मोक्षः संसारात् असांसारिकात्तन्मूलफलान्तराच्च निर्गमो यत्र तत् केवलमार्भकस्य अयत्नेन तद्वत्य एव तस्मिन् अपि तु अर्भकपौगण्डकैशोरात्मके सर्वावस्थेपि गोविन्दे गोकुलाधिष्ठातरि तस्मिन्नित्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं देहधूमे निर्गते यदासीत्तदाह—कटधूमस्येति । अत्र एद श्लोकाः विगीताः सर्वत्र दृश्यन्ते तेऽप्यध्यायत्रयवत् व्याख्येयाः स्पष्टत्वाश्चोपक्ष्यन्ते तन्मातरो वसुदेवस्त्रिय इति व्याख्यात कटस्य प्रेतदाहस्थानस्य चितायाः सम्बन्धि धूमस्य सौरभ्यम् घ्राय व्रजौकसः गोरक्षणार्थं कार्यान्तरार्थं वा दूरे स्थिताः किमि माश्चर्यमिति व्याकुलाः समीचीनं गंधमाघ्राय अगरुज्वलनं ज्ञात्वा कुत एवेति वदन्तः तत्तत्कार्यं परित्यज्य व्रजमेवा अनेन व्रजस्थानां सर्वेषामेव प्रपञ्चविस्मृतिरुक्ता भगवद्गुण वस्यान्तःप्रवेशश्च येन अन्तःस्थितः प्रपञ्चो निवर्तिष्यते ताम प्रपञ्चः तामसी च पूतना अतो युक्तं गन्धस्य प्रप नाशकत्वम् ॥ ४१ ॥

तेषामपि निदानपरिज्ञाने विस्मय एव जात इत्याह—तत्रेति । तत्र गोकुले गोपैर्वर्णितं पूतनागमनादिकं श्रुत्वा मा शब्देन स्तनदानादिप्रकारं तन्निधनं पूतनामरणं च शिशो स्वस्ति कल्याणं त्रयं श्रुत्वा अत्यन्तविस्मिता जाताः सर्वे मग्ने आगमनमेवाश्चर्यम् अकस्मात् मरणं ततोपि तस्या महा भक्षको मृत्युः बालं त्यक्तवानिति सुतरां विस्मयः ॥ ४२ ॥

नन्दस्य प्रोषितस्य पुत्राघ्राणं विहितमिति आजन्मकृ तदानीं कृतवानित्याह—नन्द इति । आश्चर्ये जिज्ञासा नोत्प नष्टविद्यायां तथादर्शनात् स्वपुत्रं बलभद्रव्यावृत्त्यर्थं विहितत आदाय हस्ते गृहीत्वा तथा करणे हेतुः प्रोष्यागत इति नून मिदं कर्म कृत्वा यदुद्देयमिति मनसि कृतवान् भगवते नानाविधान्याभरणानि कृत्वा समानीतवान्, तदाह—उदार रिति । उदारा धीर्यस्य तदानीमुत्पन्ना सर्वोऽपि बुद्धिस्था नन्दस्यापि मोक्षदात्री तस्य तामवस्थां ये च भावयन्ति मूर्ध उपघ्राणं विहितं वात्सल्यप्रेमसूक्तेन द्विवस्परीत्यादिना गन्धं प्रपञ्चस्य नाशितत्वात् भगवदाघ्राणे परमानन्दो हृदि इत्याह—परमां मुदमिति । कुरूद्वहेति सम्बोधनं समस्तोपाख्या विश्वासार्थम् ॥ ४३ ॥

पूतनाया मोक्षं स्थापयितुं कैमुतिकन्यायेन तच्चरित्रश्रोतृ मपि मोक्षादप्यधिकां भक्तिं फलत्वेनाह—य एतदिति । ए पूतनामोक्षं कृष्णस्यार्भकं बाल्यसम्बन्धि चरित्रम् अद्भुतं लौकि कोपपत्तिरहितम् अनिष्टार्थं मारणमिष्टजनकमिति वा निश्च श्रद्धया युक्तो भवति अमर्त्यो वा भवति देवभावं प्राप्नो देवा हि सत्ये प्रतिष्ठिताः सर्वथेदं सत्यमिति मन्यते गोविन्दे गतिं मोक्षं रतिं वा लभते इदमपि विगीतमि केचित् ॥ ४४ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
षष्ठमाध्यायविवरणम् ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रासङ्गिकं सिद्धान्तं समाप्य प्रस्तुतमाह—कटधूमस्येति । "क श्मशानम्" इति क्षीरस्वामी, कुतः किमिदमिति किमेतावानगरु धूम इन्द्रपुरीमपसृत्य भूतलमपि भित्त्वा सुतलं प्रवेष्टुमुत्स किंवा बलिसद्मतो निःसृत्यामरावतीमधिरोहति किमु दिव्य

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कुबेरपुरात् किं वा प्रतीच्यादुरुणालयादित्येवं बहुधा सन्दिहाना इत्यर्थः ॥ ४१ ॥

सुविस्मिता इति धन्यो वसुदेवः सत्यमाह--ईदृशामपि विपत्तौ शिशोः स्वस्ति नारायणं विना कः कुर्यादित्याद्युक्तवन्तः ॥ ४२ ॥

प्रोष्यागत इति हन्तमत्प्रवासादेवैतावानर्थो जात इति किमहं मथुरामगच्छमिति पश्चात्ताप उदारधीरिति हन्त निर्बुद्धयो द्वारपालाः अपि केऽपि तां पुरं प्रवेष्टुं न न्यषिध्यन्निति सर्वेषां धियो निनिन्द ॥ ४३ ॥

य एतत् आर्भकम् अर्भकचरितं पूतनाया अपि मोक्षो यत्र तत् अत एवाद्भुतं शृणुयात् स रतिं लभते निशम्येति पाठे तुष्येत् तिष्ठेदिति वाऽध्याहार्य्यम् यद्वा यः श्रद्धया निशम्य लभते स गोविन्दे गोविन्दविषयकरतिमान् भवेदित्यर्थः ॥ ४४ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
षष्ठोऽध्यायोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कटधूमस्य शवधूमस्य ॥ ४१—४३ ॥
आर्भकम् अर्भकचरितम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षष्ठाऽध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका ।

ब्रजवासी मनुष्य वा पूतना के मृतक शरीर के धुआं कों सूंघ कें कहत भये, कि—ये कहा है कहां ते ऐसी सुगंध आवे है, ऐसें कहत २ गोकुल कूं आवत भये ॥ ४१ ॥

गोकुल में ब्रजवासीन नें पूतना को आय वो बालक को उठाय वो फिर मृत्यु को होय वो सुनकें और श्रीकृष्ण को आनन्द मङ्गल सुनकें नंद ते आदि लेके सब ब्रजवासी बडो आश्चर्य मानत भये ॥ ४२ ॥

हे राजन् ! उदारबुद्धिवारे श्रीनंदरायजी वा समैं अपनें पुत्र कूं मानों पर लोक जायकें आयो ऐसें जानिकें वाकों गोद में उठाय कें माथो सूंघ कें बडे आनन्द को प्राप्त होत भये ॥ ४३ ॥

ये जो श्रीकृष्णचन्द्र के बालकपने की क्रीडा रूप बडो आश्चर्य पूतना को मोक्ष भयो ता कूं ( अथवा बाल काल में श्रीकृष्ण को पूतना सूं छूटजायवो जो है ता कूं ) जो मनुष्य श्रद्धा करिके श्रवण करें है ते गोविन्द में रति पावें हैं ॥ ४४ ॥

इतिश्री मद्भागवत दशमस्कन्धमें छटमें अध्याय
की श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

———:०:———

॥ सप्तमोऽध्यायः ॥

—०:०:०—

(१)एवं बहूनि कर्माणि गोपानां शं सयोषिताम् ।
नन्दस्य गेहे ववृधे कुर्वन् विष्णुर्जनार्दनः ॥
(२)( एवं स ववृधे विष्णुर्नन्दगेहे जनार्दनः ।
कुर्वन्ननिशमानन्दं गोपालानां सयोषिताम् ॥ २ ॥ )

राजोवाच ॥

येन येनावतारेण भगवान् हरिरीश्वरः ।
करोति कर्णरम्याणि मनोज्ञानि च नः प्रभो ! ॥ १ ॥
यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्धयत्यचिरेण पुंसः ।
भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद मन्यसे चेत् ॥ २ ॥
अथाऽन्यदपि कृष्णस्य(३) तोकाचरितमद्भुतम् ।
मानुषं लोकमासाद्य तज्जातिमनुरुन्धतः ॥ ३ ॥
(४)( विस्तरेणेह कारुण्यात् सर्वपापप्रणाशनम् ।
वक्तुमर्हसि धर्मज्ञ ! दयालुस्त्वमिति प्रभो ॥ ० ॥ )

श्रीशुक उवाच ॥

कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषिताम् ।
वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्क्षिपन् शकटं व्योम्नि तृणावर्त्तमधः क्षिपन् ।
दर्शयन् विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥
कृष्णाऽऽर्भकसुधासिन्धुसम्प्लवानन्दनिर्भरः ।
भूयस्तदेव सम्प्रष्टुं राजाऽन्यदभिनन्दति ॥

येन येनेति येन येन मत्स्याद्यवतारेणापि यानि कर्माणि करोति तानि नः कर्णसुखावहानि मनःप्रीतिकराणि च भवन्त्येव ॥ १ ॥

तथापि यच्छृण्वतः पुंसः पुरुषमात्रस्यारतिर्मनोग्लानिस्तन्मूलभूता विविधा तृष्णा चापगच्छति तथा सत्त्वशुद्धिर्हरिभक्तिर्हरिदाससख्यानि च भवन्ति तदेव हारं हरेश्चरितं मनोहरं वा वद मन्यसे चेत् अनुग्रहं यदि करोषीति ॥ २ ॥

अत्यौत्सुक्येन पुनर्विशिनष्टि—अथेति । अनुरुन्धतोऽनुकुर्वतः ॥ ३ ॥

उत्थानं शिशोरङ्गपरिवर्त्तनं तत्र कर्त्तव्ये कौतुकाप्लवे उत्थानाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षस्याऽपि योगे ऽतिमहोत्सवे समवेतयोषितां मिलितपुरन्ध्रीणां मध्ये वादित्रादिशोभितमभिषेचनं सती यशोदा चकार ॥ ४ ॥

---

(१)इत्यधिकः पठ्यते वीर० एवंविधानि चान्यानि सलीलाकार्याणि योषिताम् । आनन्दमनिशं कुर्वन् ववृधे नन्दवेश्मनि ॥ इति पाठभेदः
(२) श्लोकोऽयं विजयध्वजतीर्थपाठः ।
(३) तोकाचरितमिति वीर० ।    (४) श्लोकोऽयं विजय० पाठः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

येनेति युग्मकम् । तत्र च "गोविन्दे लभते रतिम्" इत्युक्त्वा श्रवणकीर्तनाद्यशेषसाधनानां परमफलरूपायाः श्रीभगवद्रतेः सिद्धिं बालचरितारम्भादेव श्रुत्वा स्वस्यापि तदुद्दीपनमनुभूय जातपरमानन्दः सन् परमौत्सुक्येन कदाचित् कथान्तरापातशङ्कया तादृशतच्चरितान्तरमेव प्रष्टुमादौ तदीयाशेषावतारचरितान्यभिनन्दति-येनेति । भगवानित्यादिपदत्रयेण तत्कर्मणामपि क्रमेण सर्वैश्वर्ययुक्तत्वं तथा अशेषदोषदुःखहरत्वमन्तर्बहिरिन्द्रियहरत्वं च तथावश्यसेव्यत्वमन्यथा दण्डकर्तृत्वमप्यभिप्रेतम् कर्णारम्यत्वेन शब्दस्यैव तादृशमाधुरीमयत्वं ध्वनितं मनोज्ञत्वेनार्थस्य चेति प्रभो ! हे सर्वशक्तियुक्त ! इति सर्वमस्माकमिन्द्रियवृत्तिवृत्तं त्वया ज्ञायत एवेति भावः ॥ १ ॥

विपृच्छितमाह-यच्छृण्वत इति । अरतिः श्रवणादौ मनोऽप्रवृत्तिः प्रवृत्तौ च सत्यां द्विविधा तृष्णा सत्त्वं चित्तं शुद्ध्यति दुर्वासनाक्षयेण नैर्मल्यात् रसग्रहणसमर्थं भवति अचिरेणेत्यस्य सर्वत्रैवान्वयः । अन्यैश्चिरेणैव तत्तत्सिद्धेः हरौ व्रजस्य मम तव च मनोहरे भगवति भक्तिः प्रेमा तस्य पुरुषे जने भक्ते इत्यर्थः । अन्यत्तैः । एतच्चाल्पबुद्धिरहं मन्ये किन्तु तत्र ममापि दृढता तव महाबुद्धेरभ्युपगमादेव स्यादित्याह-यदि त्वं तथा मन्यसे तदा वद परमविनयोक्तिरियं यद्वा यदि पुनरधुनापि गुप्तं न करोषीत्यर्थः सविनयनर्मोक्तिरियम् ॥ २ ॥

कीदृशं तत्तव । चित्तस्थं हारं तत्राह—अथेति । अथ अनन्तरमेव न तूपोद्घातादिनापि व्यवधानेन श्रीकृष्णस्य लीलामाधुरीभिश्चित्ताकर्षकस्य तोकाचरितमेव वदेति पूर्वेणैवान्वयः । तदेवं स्वचमत्कारे हेतुमाह-अद्भुतं रूपगुणविलासलीलाचातुरीभिः क्वचित्तदनुगततदूर्ध्वैश्वर्यमिलनेन च विस्मयावहं तच्चास्मान् मनुष्यानेव कृपयितुं प्रकटितमित्याह—मानुषं लोकमासाद्य मर्त्यलोकेऽवतीर्य तज्जातिमपि स्वलीलयाऽऽत्मसात्कुर्वतः स्वाभेदेन व्यवहरत इत्यर्थः ॥ ३ ॥

श्रीशुकदेवोऽपि तदुक्तमेवानुमोदमानः क्रमप्राप्तं बाल्यलालामेव कथयति-कदाचिदित्यादिना । कदाचित् मासत्रय एव वयःप्राकट्यसमये "त्रैमासिकस्य च पदा शकटोऽपवृत्तः" इति द्वितीयोक्तेः तत्रैव जन्मर्क्षयोगे इति नाक्षत्रमासोऽभिप्रेतः तत्रैव च दैवादौत्थानिकं यत्कौतुकं वृत्तं तस्याप्लवने सर्वतो व्याप्तौ सत्याम् औत्थानिकं बहिर्निष्क्रमणमिति केचित् तत्तु चिन्त्यम् "चतुर्थे मासि निष्क्रमः" इति स्मृतेः । तत्र च सावनमासग्रहणात् सूनोरिति । तदेकपुत्रायास्तस्याःस्नेहभरेण तन्महोत्सवे परमासक्तिं बोधयति सती सर्वकर्मस्वेवोत्तमेत्यर्थः । स्त्रीप्रधानकर्मत्वादस्या एव कर्तृत्वमुक्तं न तु प्राग्वच्छ्रीनन्दस्य ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

येनेति येन केनापीत्यर्थः । कर्णरम्याणि कर्णरसावहानि ॥ १॥

अपैति अपगच्छति अरतिर्दुःखरस्वास्थ्यं यस्मिन् सति सुखहेतवोऽपि न सुखाय भवन्ति वितृष्णा विविधा तृष्णा हारं मनोहारि चेष्टितम् ॥ २—३ ॥

उत्थापनकौतुकाप्लवे उत्थापनं गृहाद्बहिःप्रवेशः निष्क्रमणं तत्र कौतुके यत् स्नानकार्यं तस्मिन् तद्योगकाले इत्यर्थः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं तावत्पूतनानिर्हरणतन्मुक्तिप्रदानादिरूपं भगवद्बालचेष्टितमभिधायाथ चेष्टितान्तराणि विवक्षुस्तावद्राजस्तद्विषयपृच्छामुत्पादयति-एवमिति । एवंविधानि दुष्टनिर्हरणतन्मुक्तिप्रदानादिरूपाणि अन्यान्यपि बहूनि बालचेष्टितानि सयोषितां सखीकानां गोपानां शम् आनन्दं च कुर्वन् विष्णुर्जनार्दनो भगवान्नन्दस्य गेहे ववृधे एधाम्बभूव ॥ ० ॥

तर्हि तानि वद यानि भगवानकरोदिति विपृच्छिषुस्तावदितरावतारचेष्टितेभ्यः श्रीकृष्णावतारचेष्टितानां वैलक्षण्यं वदन् पृच्छति राजा—येनेति । भगवान् हरिरीश्वरो येन येन मत्स्याद्यवतारेण यानि यानि कर्माणि करोति चकार तानि नोऽस्माकं श्रोत्रसुखावहानि तथा हे प्रभो ! मनोज्ञानि मनःप्रीतिकराणि च भवन्त्येवेत्यर्थः ॥ १ ॥

तथापि यत्कृष्णचेष्टितं शृण्वतः पुंसः पुरुषमात्रस्यारतिर्मनोग्लानिर्दुःखरस्वास्थ्यं वा यस्मिन् सति सुखहेतवोऽपि न सुखाय भवन्ति तथाविधं तद्विविधा तृष्णा शब्दादिविषयस्पृहा चापैत्यपगच्छति अचिरेण सत्त्वमन्तःकरणञ्च शुद्ध्यति हरौ भगवति रतिरनुरागस्तत्पुरुषेषु भगवद्भक्तेषु सख्यं च भवति तदेव चरित्रं भूयः पुनःभूयो विपुलं यथा तथा वद तदेव हारम् इति पाठे हारं मनोहारि चेष्टितमित्यर्थः । मन्यसे चेत् वक्तुमिष्टं मन्यसे चेद्वद स्वतन्त्रस्त्वमहं नियोक्तुमप्रभुरिति भावः॥२॥

किं तदित्यत्राह-मानुषं लोकमासाद्य मानुषावतारं प्राप्य तज्जातिं मानुषजातिमनुरुन्धतोऽनुकुर्वतः कृष्णस्य यदन्यदपि पूतनानिर्हरणरूपबालचेष्टितादन्यदप्यद्भुतं तोकाचरितं बालचेष्टितं वदेत्यनुषङ्गः ॥ ३ ॥

एवमापृष्टोऽन्यान्यपि बालचेष्टितानि विवक्षुस्तावच्छकटासुरवधात्मकं चेष्टितं वर्णयति-कदाचिदित्यादिना एकदा इत्यतःप्राक्तनेन । औत्थानिककौतुकाप्लवे गृहाद्बहिः शिशोर्निष्क्रमणं तत्सम्बन्ध्यौत्थानिकं तस्मिन् कौतुके उत्सवे च आप्लवः स्नानं यस्मिन् तस्मिन् दिने जन्मर्क्षेण रोहिणीनक्षत्रेणापि योगे सति महोत्सवे समवेतानां समुदितानां योषितां मध्ये वादित्रादिभिः शोभितमभिषेचनं सूनोः सती यशोदा चकार ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवति भक्तिकरणार्थम् अनन्यसाध्यगाहात्म्यं वर्ण्यतेऽस्मिन्नध्याये ; तत्र शुकः परीक्षितः प्रश्नबीजमुत्थापयन् कृष्णानुचारसूचनपूर्वकं कृष्णकथामाह-एवमिति । एवमुक्तप्रकारेण जनार्दनः दुष्टजनानर्दयति हिनस्तीति "अर्द हिंसायाम्" इति धातुः ॥ ०॥

कर्णरम्याणि श्रोत्रसुखजनकानि मनोज्ञानि मनःप्रीतिजनकानि ॥ १ ॥

अरतिस्तत्र वितृष्णा निवृत्ततृष्णा विषयेषु रागयुक्तभावो वा सत्त्वमन्तःकरणम् ॥ २ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तोकाचरितं बालचरितम् ॥ ३ ॥

ननु यक्षं मह्यं किं ददातीति तत्राह—दयालुरिति ॥ ० ॥

उत्थापनकौतुकाप्लुवे वहिर्निष्क्रमणोत्सवसम्भ्रमणो उत्सवहेतुकः प्लव इतस्ततः प्लुतिर्यस्मिन् स तथा तस्मिन् जन्मर्क्षयोगे कृष्णस्य जन्मनक्षत्रसंयोगो यस्मिन् तस्मिन् दिवसे इति शेषः कासां प्लव इति तत्राह—समवेतानि । सम्मीलितस्त्रीणां "क्रमनिम्नमहीभागे कचित्प्लुतिखगप्लवाः" इति यादवः स्त्रीणां मध्ये सती प्रशस्तकर्मा ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बाल्यलीलारम्भत एव रतिफलं श्रुत्वा स्वस्यापि तदुद्दीपनमनुभूय जातपरमानन्दस्तदेव भूयः पृच्छति——येनेति त्रिभिः ॥ १ ॥

यदेत्यनेन यद्यपि तथापि यत्तदन्यदपीति शृङ्खलया त्रयाणां किञ्चिदध्याहारेणान्वयः कर्णौति पदद्वयं शब्दार्थयोः पृथङ्माधुर्यानुभवेन हारं हारवत् स्पृहया हृदि धार्यं चेन्मन्यसे पूर्ववत् तृप्तं न करोषीत्यर्थः । तत्तादृशमन्यदपि तोकाचरितमेव वदेत्यन्वयः ॥ २ ॥ ३ ॥

अभिषेचनं कुशाग्रेणेति शेयं चकार कारयामास ॥ ४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूतनासुपयःपानं भगवच्छास्य यत्कृतम् ।
अलौकिकत्वज्ञानाय तत्षष्ठे विनिरूपितम् ॥
ततोऽप्यलौकिकं लोके विशेषासक्तिबोधकम् ।
सप्तमे त्रिविधं प्राह शकटोत्पाटनादिकम् ॥
उत्क्षेपणमवक्षेपः प्रसारणमितीर्यते ।
राजसानां तामसानां सात्त्विकानां च सङ्ग्रहे ॥
सुप्तं चित्तमथोल्लास्य त्याजयित्वा च लौकिकान् ।
स्वासक्तिसिद्ध्यै प्रीत्या दुःखं च कृतवान् क्वचित् ॥
यशो हि सर्वगं चेत्स्यात् स्वासक्त्यैव च तद्भवेत् ।
यशोदानन्दयोरत्र निष्प्रपञ्चो विधीयते ।
आनुषङ्गिकमन्येषां गोपानां सर्वदेहिनाम् ।
गोपीनामिति तत्राद्ये यशोदाया वितन्यते ॥

पूर्वाध्याये आश्चर्योत्पादनेन प्रपञ्चविस्मृतिं कारयित्वा विशेषाकारेण यशोदायाः स्वासक्तिं वक्तुं मतान्तरे प्रपञ्चविस्मृतिमात्रस्यैव पुरुषार्थत्वात् तदासक्तिं न वक्ष्यतीत्याशङ्क्य राजा पृच्छति—येन येनेति त्रयेण ।——

सर्वं चारित्रं हितकृत् गुणकृच्च ततोऽधिकम् ।
तत्रापि स्नेहजनकं तद्वक्तव्यमिति स्थितिः ।

आदौ सर्वमेव चरित्रं भगवतः सर्वोत्तममित्याह—येन येन मत्स्यकूर्मादिमध्ये यद्यत्करोति तदेव नः कर्णरसायनीति सम्बन्धः कृष्णावतारचरित्र एव कस्यचित् प्रीतिपक्षे तद्गतो भेदो द्वेषापरपर्यायः सिध्येदिति तन्निवृत्त्यर्थमेतद्वक्तव्यं येनैवावतारेण करोतीति अवतारपरत्वे लौकिकबुद्धिर्भगवति भविष्यतीति त… नादरश्च वक्तव्यः तदाह—वीप्सया वस्तुतस्तु भगवान् का… कृतौ प्रयोजनं हरिरिति तथाऽऽविर्भावे उपपत्तिः ईश्वर इ… इदानीन्तनानामस्माकं तथा भाग्याभावात् दर्शनाभावेऽपि … दादिप्रसादात् कर्णरसायनि भवन्ति लोके उपनिबन्धनाभा… शङ्कापि नास्तीत्याह—चरितानीति उपनिबद्धं कृत्यं चा… चकारात् महतां मुखात् अकस्मादप्युक्तं न इति श्रोतॄ… सर्वेषां प्रभो ! इति सम्बोधनम् अन्तःकरणज्ञानार्थमन्यथा क… दण्डकरणे सामर्थ्यार्थं च ॥ १ ॥

यद्यपि साभिप्राये ज्ञाते सर्वमेव चरित्रम् एतादृशगुणज… भवति तथाप्यापाततोऽपि यच्चरित्रं सर्वदोषनिवृत्तिपूर्वकसर्वगु… दायकं भवति तद्वक्तव्यमित्याह—यच्छृण्वत इति । यच्छृ… शृण्वतः पुरुषस्य भगवच्चरित्रविषयिणी या अरतिः सा अ… माहात्म्ये स्वोपकारे च ज्ञाते तथात्वं विशेषेण संसारवि… यिणी तृष्णा चापैति संसारस्य बाधकत्वे ज्ञाते गुणदो… भावरूपावेतौ साधारणौ दोषाभावरूपौ वा गुणानाह—स… च शुद्ध्यति अचिरेण शीघ्रमेव पुंसः स्वतन्त्रस्य सत्त्वमन… करणं शुद्ध्यति कामक्रोधादिवासनारहितं भवति ज्ञानात्म… संसारातीतचरित्रे श्रुते यथा भगवतो मुखारविन्दे त्रैलोक… वर्णने किञ्च भक्तिर्हरौ यथोलूखलबन्धने तत्पुरुषे भगवत्सं… सख्यं यथा यमलार्जुनभञ्जने चकारात्तत्सेवकसेवकेऽपि त… हारं मनोहारि यथा भवति तथा वदेति प्रार्थना यदि मन्य… इति तादृशं फलमस्य सिद्ध्यत्विति यदि तव कृपा वर्णा… कारेण बोधनं मनोहारि भवति ॥ २ ॥

एवं पञ्चविधं चरित्रं पृष्टं तद्वक्ष्यति क्रमेण तृणावर्तवधा… आश्चर्यरूपः तृणावर्तवध इत्यरतिर्गच्छति तृष्णा च संसारे गच्छ… भगवति सर्वसत्त्वात् अन्तःकरणं देहेन्द्रियादिकमपि शुद्ध… भगवतो नामधेयादिश्रवणेन उलूखलबन्धने भक्तिः यमलार्जुनभ… सख्यमिति एतत्पञ्चविधात्पूर्वमपरमेकं कृष्णासक्तिजनकं साधार… णत्वेन वक्तव्यमित्याह—अथान्यदपीति । अथेति भिन्नक्रमे आद… वेव वक्तव्यम् अनन्तरं शीघ्रमेव वक्तव्यम् अन्यदपि यथा बाल… पूतनावधः तथाऽतिबाल्ये यच्चरित्रं कृष्णस्येति अवतारान्तर… बाल्यचरित्रव्युदासः बाल्ये चरित्रसम्भवार्थं वा भगवतो ना… तोकाचरितं तोकेनाचरितं तोक उत्थानासमर्थः तदप्यत्तु… मलौकिकं लोके हेतुकल्पनारहितं तत्रापि लौकिकभावेन इ… मित्याह—मानुषं लोकमासाद्येति । मनुष्यलोके भूमिं मानुषभावं … आसाद्य स्वीकृत्य तज्जाति शिशोर्ज्ञातिलीलामनुरुन्धतः जाति… लीलामनतिक्रम्य यथा गोपालशिशोः तादृशं पूतनावधतुल्य… मेकं वक्तव्यमिति प्रार्थना ॥ ३ ॥

शुकस्तादृशमेव शकटभञ्जनलक्षणं चरित्रमाह—कदाचिदिति चतुर्दशभिः । सर्वेन्द्रियाणामन्तःकरणस्य च प्रीतिजनकम् आद… उत्सवमाह--कदाचिदिति। औत्थानिकं कर्म निष्क्रमणात्मकं "चतुर्थे मासि निष्क्रमः" इति तस्मिन्नेव दिवसे रोहिणीनक्षत्रम् औत्था… निकं कर्म कृत्वा तत्र कौतुकाविष्टे चित्ते जाते उत्सवेन तत्क… कर्तव्यमिति विचिन्त्य तस्मिन् दिवसे जन्मर्क्षस्यापि यो… सति समवेतानां मिलितानां योषितां सर्वस्त्रीणां मध्ये तूर्यादि… वादित्रैः नानाविधगीतैः स्त्रीकर्तृकैः पुरुषकर्तृकैश्च द्विजाद…

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ब्राह्मणानां मन्त्रवाचकैः सह सूनोः पुत्रस्य अभिषेचनं कलशस्थापनपूर्वकं ब्राह्मणैः क्रियमाणम् मन्त्रवत्प्रोक्षणरूपं चकार मङ्गलस्नानादिकं तु पूर्वमेव कृतमस्ति प्रोक्षणसंस्कारे अभ्युदयो भवति यतः सा सती पतिव्रता पत्युस्तथेच्छेति अन्यत्रोत्सवकरणाभावार्थं वा ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्नातः सुप्तोत्थितः कृष्णः सप्तमेऽत्र उदाक्षिपत् ।
तृणावर्त्तमहत्त्वाख्ये विश्वं मातरमैक्षयत् ॥
रदच्छदबलं व्यक्तं पूतनास्तनचूषणे ।
शकटेऽङ्घ्रिबलं पादयोस्तृणावर्तवधे बलम् ॥
विश्वरूपद्वये तावदैश्वर्य्यं निजमातरि ।
एवमादिममैश्वर्य्ययुग्मं बाल्ये प्रदर्शितम् ॥

अहो भगवदवतारान्तरलीलामात्रस्याप्यस्मन्मनोहरत्वेऽपि श्रीकृष्णबाल्यलीला मामतिलोभयत्यतस्तामेव ब्रूहीत्याशयेनाह—येन येन मत्स्याद्यवतारेणापि यानि कर्माणि करोति तान्यपि नः कर्णाभ्यां रस्यान्यास्वाद्यानि मनोज्ञानि मनोऽप्यानन्दयितुं जानन्त्येव किन्तु तेष्वपि मध्ये यत् शृण्वन्तः पुंसः पुम्मात्रस्यापि अरतिः श्रवणादावप्रवृत्तिरपैति नश्यति अनर्थनिवृत्त्या निष्ठोत्पद्यत इत्यर्थः । ततश्च वितृष्णा तत्र तृष्णाभावः अपैति रुच्युत्पत्त्या आकाङ्क्षा जायत इत्यर्थः । ततश्च सत्त्वं चित्तं शुद्ध्यति दुर्वासनानिवृत्त्या भक्तिरसास्वादसामर्थ्यं भवति यथा पैत्तिकरोगनिवृत्त्या रसनासितामाधुर्य्यग्रहणसमर्था स्यात् आसक्त्युत्पत्त्या रतिर्जायत इत्यर्थः । अचिरेणेति सर्वत्र योज्यं ततश्च भक्तिप्रेमा स्यात् तत् पुरुषे वैष्णवे सख्यमिति यद्यपि भक्त्यारम्भत एव वैष्णवे सख्यं विहितं तदपि प्रेम्णि सत्येव वैष्णवमात्रे निरुपाधिकं सख्यं भवेदित्यत्रैवोक्तं हारं हरेश्चरितं श्लेषेण हारमिव हृदये धार्य्यं यद्यपि भगवच्चरितमात्रस्याप्यरतिनिवृत्त्यादिप्रेमान्तवस्तुप्रापणे सामर्थ्यमस्त्येव तदपि श्रीकृष्णबाल्यादिचरितमचिरेणैव तत्तत् प्रापयतीत्यत्रैवोक्तं मन्यसे चेदिति यदि तथैतत् सम्मतं स्यादिति भावः ॥ १—२ ॥

मत्यौत्सुक्येन तदेव पुनः स्पष्टयति—अथेति । तज्जातिं मानुषजातिमनुरुन्धत इति मानुषजात्यनुरोधेनैव भूर्लोके प्राकट्यं न तु देवादिजात्यनुरोधेन देवादिलोक इति देवादिभ्योऽपि मानुषाणां सौभाग्यं द्योतितम् ॥ ३ ॥

कदाचिन्मासत्रयवयसि सति "त्रैमासिकस्य च पदा शकटोऽपवृत्तः" इति द्वितीयोक्तेः मासस्य चरणावुदगित्यत्र तु मासात्रयः परिच्छेदका यस्येति व्याख्येयम् उत्थानमुत्तानशायिनः शिशोरितरथैक् शयनसामर्थ्योद्गमः तत्र भवे कौतुकाप्लवे तद्द्रष्टुं व्रजवासिनां कुतूहलसमुद्रनिमज्जने सतीत्यर्थः । तस्मिन्नेव दिने जन्मर्क्षस्यापि योगे सति समवेतयोषितां मिलितपुरन्ध्रीणां मध्ये वादित्रादिभिः शोभितमभिषेचनं यशोदा चकार ॥ ४ ॥

———



श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्स्याद्यवतारचरितमप्यस्माकमतिप्रियं भवति किं पुनः साक्षाद्धरेश्चरितमतस्तच्चरितं नो वदेत्याह—येनेति द्वाभ्याम् । येन येन मत्स्याद्यवतारेण यानि यानि चरितानि करोति तानि नोऽस्माकं कर्णरस्याणि श्रोत्रसुखावहानि मनोज्ञानि मनःप्रियाणि सन्ति ॥ १ ॥

तथापि यत् श्रीकृष्णचरितं शृण्वतः पुंस इत्युपलक्षणं श्रोत्रवतां सर्वेषाम् प्राणिनाम् अरतिः श्रीकृष्णपराङ्मुखत्वं वितृष्णा विविधा तृष्णा संसारप्रापिका च अपैति अपगच्छति येन सत्त्वं शुध्यति हरिभक्तिर्हरिभक्तसख्यं च भवति तदेव हारं हरेः चरितं वद अनुग्रहं यदि करोषि ॥ २ ॥

मानुषं लोकमासाद्य प्राप्य तज्जातिमनुरुन्धतः मानुषजात्यनुरोधेन वर्तमानस्यापि कृष्णस्य सदानन्दस्वरूपस्य अद्भुतमत्याश्चर्यमयं तोकाचरितं वदेत्यनुषङ्गः ॥ ३ ॥

एवं पृष्टः शकटोत्पाटनतृणावर्तनिष्पेषणादिभगवच्चरितं वर्णयति—कदाचिदित्यादिना । कदाचित् उत्थानं शिशोरङ्गपरिवर्तनं तन्निमित्तकरणीयः औत्थानिकः कौतुकाप्लवः उत्सवयुक्तः आप्लवः महास्नानं यस्मिन् जन्मर्क्षस्य रोहिण्याश्च योगो यस्मिन् तस्मिन् दिने समवेतयोषितां मध्ये वादित्रादिभिः शोभितम् सूनोः अभिषेचनं महास्नानं सती यशोदा चकार ॥ ४ ॥

———

भाषा टीका ।

ॐ शकटासुरभञ्जनाय नमः ॥

राजोवाच ॥

राजा परीक्षित् बोले, कि—हे प्रभो ! षट् ऐश्वर्य सों परिपूर्ण अखिल जगत के नियंता श्रीहरि जिन २ अवतारन कों धारण करिकें काननकूं रमायवेवारे मन को हरन करिवेवारे चरित्तन कों करें हैं ॥ १ ॥

जिनके श्रवण करिवे सों मन की ग्लानि भाज जाय है और विशेष तृष्णा दूर होयजाय है, और शीघ्रही अंतःकरण शुद्ध होय है, श्रीहरि में भक्ति और भक्त जनन सों मित्रता होय है। तासों जो आपके मन में आवे तो उनहीं श्रीहरि के मनोहर चरित्तन कूं कहौ ॥ २ ॥

ताके पीछें मनुष्य लोक में आय कें उनकी जाति के अनुरोध सों लीला करन वारे श्रीकृष्ण के और भी बाल चरित्रन कों वर्णन करौ ॥ ३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! कोई एक समैं श्रीकृष्ण के करवट लेवे के उत्सव को दिन आयो और वाई दिन आपके जन्म नक्षत्र को भी योग हो या उत्सव के कुतूहल में सब गोपिका डूब रहीं मो गाजे बाजे सों गीत गावत भई ब्राह्मणन पै स्वस्तिवाचन पढवाय कें श्रीयशोदाजी अपने लाला ( पुत्र ) को अभिषेक ( स्नान ) करावत भई ॥ ४ ॥

———

नन्दस्य पत्नी कृतमज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः ।
(१)अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जातनिद्राक्षमशीशयच्छनैः ॥ ५ ॥
औत्थानिकौत्सुक्यमना मनस्विनी समागतान् पूजयती व्रजौकसः ।
नैवाऽशृणोद्वै रुदितं सुतस्य सा रुदन् स्तनार्थी चरणावुदक्षिपत् ॥ ६ ॥
अधः शयानस्य शिशोरनोऽल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्त्तत ।
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूवरम् ॥ ७ ॥
दृष्ट्वा यशोदाप्रमुखा (२)व्रजस्त्रिय औत्थानिके कर्मणि याः समागताः ।
नन्दादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै शकटं विपर्यगात् ? ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्नादिभिः सुपूजितैर्विप्रैः कृतमङ्गलं सञ्जातनिद्रे अक्षिणी यस्य तमशीशयच्छायितवती शकटस्याधस्तात्पर्यङ्के ॥ ५ ॥

उदक्षिपदूर्ध्वं चालितवान् ॥ ६ ॥

तदधः शयानस्य शिशोरल्पकश्चासौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतमनः शकटं व्यवर्त्तत विपरीतमपतत्, कथं ? विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजतातिरिक्तकांस्यादिमयानि यथा भवन्ति तथा चक्रे च अक्षश्च चक्राक्षाः व्यत्यस्ताश्चक्राक्षा यस्मिन् विभिन्नः कूवरो युगन्धरो यस्य तच्च तच्च यथा भवति तथा व्यवर्त्ततेति ॥ ७ ॥

अद्भुतदर्शनेनाकुला बभूवुः तदेवाह—कथमिति । विपर्यगाद्विपरीतमपतदिति ॥ ८—९ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्दस्य पत्नीति तद्वदौदार्यं तत्र तस्यानुमतिः साहचर्यञ्च सूचितं कृतं तया गोपीभिश्च मज्जनादिकं यस्य तम् आदिशब्दाद्गोरोचनातिलकवेशादि पूर्वोक्ताभिषेकोऽप्यत्रान्तर्भाव्यते स्वस्त्ययनं स्वस्तिवाचनादि मङ्गलकर्म अन्नाद्यम् अन्नं तदुपकरणञ्च आज्यमित्रि केचित् स्रक् रत्नादिमाला अभीष्टम् आत्मनो विप्राणां वा यस्य यत्प्रियं द्रव्यं धेनुविशेषणं वा शनैरिति सुकुमारतया निद्राभङ्गशङ्कया च ॥ ५ ॥

अश्रवणे हेतुः, मनस्विनी परमोदाराचित्तेत्यभ्यागतपूजायां श्रद्धा दक्षता सावधानता चोक्ता तथा औत्थानिके परमोल्लासमयपुत्रोत्सवविशेषे औत्सुक्यं कर्मसाङ्गतार्थमुत्कण्ठा वैयग्र्यं यस्य तथाभूतं मनो यस्याः तथाभूता च सती समागतान् सर्वानेव व्रजवासिनो जनान् गन्धमाल्याभरणादिभिः पूजयन्तीति अतो ये च रक्षमाणा बालास्तत्रासंस्ते तया पुत्रपार्श्वे रक्षिता एव प्रायशो गमेयुरिति ज्ञेयम् । एतत्कारणं किञ्चिदपि तत्कूजनं प्रत्याख्यातं वै निश्चये तेन च सत्यमेतदिति सशपथं तदेव दृढीकृतम् अन्यथा शेषकृत्यपरित्यागेनाप्यद्रवमागता स्यादिति भावः । स च रोदनेनापि मातरमप्राप्य स्तनार्थी रुदन्नेव चरणावूर्द्ध्वं

मुहुरुत्क्षिप्तवानिति बाल्यलीलासौष्ठवमुक्तम् "शकटासुरभञ्जनः" इ… ब्रह्माण्डपुराणोक्तानुसारेण शकटाविष्टस्य दैत्यस्य वधा… मिति लभ्यते तच्चानुषङ्गिकमेव भवतु श्रीभगवच्चरितस्य स्वभा… वत एव सर्वसमाधानशक्तिमयत्वात् रोदनं च मातुः स्तन… पानार्थं स्तनार्थीत्युक्तेः अस्य तन्मनःस्थितभावस्य मुनीन्द्र… णानुस्मरणाद्यथार्थमेव चेदं तच्च तद्वात्सल्यवश्यतामयबाल… लीलावेशेन ज्ञेयम् भक्तभाववश्यत्वात् "लोकवल्लीलाकैवल्यम्" इति सिद्धान्तः ॥ ६ ॥

अधः गृहाद्बहिर्महाशकटस्याऽधस्ताद्बालपर्यङ्किकायां शया… नस्य अल्पकेन अत्यल्पप्रमाणेन प्रवालतोऽपि मृदुना च अङ्घ्रि… केन हतं हननमुद्रया स्पृष्टमात्रमित्यर्थः । यद्वा हन्तेर्गत्यर्थत्वा… गतं प्राप्तमित्यर्थः । तच्च असुराविष्टत्वाच्छकटस्योच्चस्यापि भूमि… प्रविश्यवक्रत्वान्निकटप्राप्तत्वेन भगवद्विग्रहस्य विभुतास्वभा… वा सम्भाव्यम् असुरस्त्वन्तर्द्धानेन तदाविष्ट इत्यन्तर्द्धानेन… विलयं प्रापित इति ज्ञेयम् एवं बाल्यलीलायामेव तदव्यभिचा… रेण निजैश्वर्यविशेषाविर्भावाच्छ्रीकृष्णस्य सर्वतो विशिष्टो महि… दर्शितः यतः स्वयं श्रीविष्णुरूपेण नृसिंहाद्यवतारेण चासु… घातादिकं विग्रहाद्याटोपविक्रमविशेषेणैव श्रीरघुनाथाद्यवतारे… च बाल्ये केवलं लौकिकलीलैव अत्र तु विचित्रमधुरलौकिक… बाल्यलीलानुगतमेवैश्वर्यमिति परमाद्भुतभगवत्ता माधुरी सि… श्रीविष्णुधर्मेऽपि तदुक्तं श्रीमदर्जुनेन—

"तालोच्छ्रिताग्रं गुरुभारसारमायामविस्तारवदद्य जातः ।
पदाग्रविक्षेपविभिन्नभाण्डं चिक्षेप कोऽन्यः शकटं यथा त्वम्" ।

इति. अत्र तालशब्देन पञ्चहस्तप्रमाणपरिणततालवृक्ष एवं… च्यते वृहत्स्कन्धेव विवक्षितत्वात् तथा श्रीब्रह्मणा द्वितीयस्कन्धे

"तोकेन जीवहरणं यदुलूकिकायाः-
त्रैमासिकस्य च पदा शकटोऽपवृत्तः ॥
यद्रिङ्गतान्तरगतेन दिविस्पृशोर्वा-
उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम्" ॥ इति

अस्यार्थः तोकेन बालेन सता उलूकिकायाः पूतनायाः… अन्तरगतेन अर्जुनयोरेव मध्यप्राप्तेन कृष्णेन इतरथा श्रीकृष्णस्य… भगवत्ताविशेषप्रकटनं विना न सम्भाव्यं न सम्भवेदित्यर्थः

(१) अन्नाज्यवास इति सुबो० ।

(२) व्रजस्त्रियश्चौत्थानिके इति वीर० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनः शकटस्यास्यातिबृहत्त्वमत्वात् मातापि तदधः पुत्रं शायितवतीति ज्ञेयम् ॥ ७ ॥

याः श्रीयशोदाप्रमुखाः याश्च व्रजस्त्रियः औत्थानिके पर्वणि समागताः ये च नन्दादयस्ते सर्वे दृष्ट्वा शकटविपर्ययं वीक्ष्य तस्याद्भुतस्य उत्पाततया शङ्कितस्य दर्शनेन व्याकुलचित्ताः सन्तः कथं शकटं विपर्ययगादित्यूचुरिति शेषः । पर्वण्यत्र कर्मणीति क्वचित्पाठः वै विस्मये ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अशीशयत् शायितवती ॥ ५ ॥

औत्थानिकम् उत्थापनमङ्गलम् ॥ ६ ॥

अनः शकटं व्यवर्त्तत विपर्यस्तमभवत् रसानां कुप्यानां भाजनं रसकुप्यभाजनं हेमव्यतिरिक्तं वस्तु कुप्यं स्थापितं शकटमिति शेषः ॥ ७—१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्नाद्यैरन्यैर्वासोभिः स्रग्भिरन्यैश्च स्वाभीष्टैर्धेनुभिश्च सुपूजितैः विप्रैः कृतं स्वस्त्ययनं यस्य कृतं मज्जनादिकं यस्य आदिशब्देनाङ्गरक्षादिकं विवक्षितं सञ्जातनिद्रे अक्षणी यस्य तं सुतं नन्दस्य पत्नी यशोदापि तं शनैः निद्राभङ्गभयादिति भावः । अशीशयत् शाययामास ॥ ४ ॥५ ॥

औत्थानिके उत्सवे एवौत्सुक्ययुक्तं मनो यस्यास्तथाभूता मनस्विनी औदार्यप्रवणमनाः सा यशोदा समागतान् व्रजौकसः पूजयन्ती सुतस्य रुदितं नाश्रृणोन्न शुश्राव स हि स्तनार्थी रुदन् चरणावुदक्षिपदूर्ध्वमचालयत् ॥ ६ ॥

तदाऽधः व्योम्नि आपततो ऽसुरात्मकस्य शकटस्याधोलम्बमानप्रेङ्ख इत्यर्थः । शयानस्य शिशोः श्रीकृष्णस्याल्पकश्चासौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतम् अनः शकटं व्यवर्तत विपरीतमवर्तत, तदेव दर्शयितुं विशिनष्टि—विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजतव्यतिरिक्तकांस्यादिमयानि पात्राणि यस्मिन् व्यत्यस्ते चक्रेऽक्षश्चक्राधारदारुविशेषश्च यस्मिन् विभिन्नः कूबरो युगन्धरो यस्मिंस्तच्च ॥ ७ ॥

दृष्ट्वेति यशोदाप्रभृतयो व्रजस्त्रियो याश्चौत्थानिके कर्मणि समागतास्ताः नन्दादयो गोपाश्च दृष्ट्वाऽद्भुतदर्शनेनाकुलाः सम्भ्रान्ताः कथमेतच्छकटं स्वयमेव विपर्ययगाद्विपरीतमभूत् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्नाद्यवास आदयो येषां ते तथा तैः विप्रः कृतस्वस्त्ययनं माङ्गल्यवचनं यस्य स तथा सञ्जाता निद्रा ययोस्ते तथा ते अक्षिणी यस्य स तथा तम् अशीशयत् शायितवती शयनगतमकारयदित्यर्थः ॥ ५ ॥

कदा तु उत्थानकम् उत्सुकयति पश्यतीति उत्थानकौत्सुक्यं स्वार्थे ष्यञ् प्रत्ययः तादृशं मनो यस्याः सा तथा मनस्विनी प्रशस्तमनाः उदक्षिपत् क्षिप्तवान् ॥ ६ ॥

अथ उत्क्षेपानन्तरम् अनः शकटं व्यवर्त्तत विपरीतमभोमुखमपतत् अल्पकौ अणुतरौ प्रवालवन्मृदू अङ्घ्री अल्पकप्रवालमृद्वङ्घ्री ताभ्यां हतं पीडितं ध्वस्तानि इतस्ततो विक्षिप्तानि नानारसपूर्णकुप्यात्मभाजनानि यस्मिन् तत्तथा कुप्यानि द्वीपान्तरस्थमृद्विशेषरचितातिचक्रं रथाङ्गं वृत्तदारु अक्षो नाम चक्रप्रोतदारुविशेषः कूबरो युगन्धरः व्यत्यस्तौ व्याश्रितौ चक्राक्षौ विभिन्नो विशीर्णः कूबरश्च यस्य तत्तथा ॥ ७ ॥

तद्विपर्ययगात् विपरीतं गतम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भ ।

अन्नाद्यम् अन्नं तदुपकरणाञ्च ॥ ५ ॥

स्तनार्थीति बाल्यलीलांशो दर्शितः ॥ ६ ॥

अध इति शकटासुरभञ्जन इति । ब्रह्माण्डपुराणात् असुरावेशेनैव भूमौ प्रविशच्चक्रत्वाद्बृहस्यापि शकटस्याल्पकेन चरणेन स्पर्शो ज्ञेयः ॥ ७—९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं महोत्सवमुक्त्वा बालकविस्मरणार्थं बालकस्य पर्यङ्कस्थापनमाह—नन्दस्य पत्नीति । नन्दस्य पत्नी नन्दकार्यमवश्यं करोति तदभावे ज्ञातीनां वैमनस्यं स्यात् अतः कृतमज्जनादिकं भगवन्तं सञ्जातनिद्राक्षं शयनं कारितवतीति सम्बन्धः । आदौ स्त्रीणामाकारणं कृत्वा स्नानस्थानमलङ्कृत्य नानाविधगीतैः तैलेन नानाविधसुगन्धद्रव्यैः स्नानं कारयित्वा आभरणानि परिधाप्य कस्तूरीगोरोचनादितिलकं दत्वा धूपादिना च आर्द्रतां दूरीकृत्य सर्वाभरणभूषितं विधाय तदनन्तरं विप्रैः कृतं स्वस्त्ययनं रक्षाबन्धनादिकं यस्य तादृशं तेभ्यो ब्राह्मणेभ्यः बहु दत्वा सन्तुष्टानामाशिषं गृहीत्वा आन्तानिनये कृते सञ्जातनिद्राक्षं मन्यमानां शयनं कारितवती अन्नगोदनः आज्यं घृतं वासः वस्त्राणि स्रक् माला अभीष्टं प्रार्थितं धेनवश्च तैः सर्वैरेव पूजिता ब्राह्मणाः तेषां ब्राह्मणानां ज्ञानशक्तिमङ्गलार्थं सञ्जातनिद्राक्षता अन्यथा आशिषो न प्रयुञ्जीरन् शर्वरीति । यथा निद्राभङ्गो न भवति तथा कृतस्वापनेन, ब्राह्मणानां प्रीतिः चतुर्विधा भवति आदौ स्वाद्यभोजनेन पश्चाद्धस्तैः उभाभ्यां स्वयं पूर्णाभूत्वा ऐहिके यावदपेक्षितं तत्प्रार्थयन्ति ततो वैदिककर्मसिद्ध्यर्थं धनवश्च एवं चतुर्भिः पूजिताः लौकिकख्यापनार्थं मालया च पूजिताः अन्तःकरणपूर्वकं स्वस्त्ययनं कुर्वन्ति तेषां यथा परमार्थसंवर्धिस्तिरोहिता भवति तथा सम्यक् निद्रा ॥ ५ ॥

एवं कृते प्रसङ्गात् सर्वेषामेव बहिर्मुखता जातेत्याह—उत्थानिकौत्सुक्यमना इति । ब्राह्मणार्थे निमीलने कृते भगवतो ज्ञानशक्तेर्निमीलितत्वात् लौकिकप्राबल्यम् अथापि प्रपञ्चात् पूर्वाध्यायाभ्यां निरोधस्योक्तत्वात् नात्यन्तलौकिके यशोदाया बुद्धिः किन्तु भगवत्सम्बन्धे लौकिके तदाह—औत्थानिके कर्मणि शोभार्थं यदौत्सुक्यमुत्सुकता लौकिकाभिनिवेशः तत्रैव मनो यस्या इति भगवत्सम्बन्धस्य गौणत्वात् प्रवाहस्य बलिष्ठ-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

त्वात् भगवदंशमपि परित्यज्य लौकिकसंभावनार्थम् मभिमानवती च जातेत्याह—मनस्विनीति। एवं बाह्याभ्यन्तरभेदेन तस्या बहिर्मुखत्वं जातं स्वकार्यमपि कृतवतीत्याह—समागतान् पूजयतीति। ये लौकिकव्यवहारेण सम्यगागताः तान् पूजयती माल्या कुङ्कुमोपहारैः बालाः पुरुषाःस्त्रियश्च सर्वे पूजिता इति पुंल्लिङ्गनिर्देशः ते चेत्सन्तो भवेयुः सर्वथा भगवदीयाः तथापि न दोषः स्यादिति तद्व्यावृत्त्यर्थमाह—व्रजौकस इति। व्रज एव तामसे ओकः स्थानं येषामिति तामसभूयिष्ठ एव स्थिताः न तां पदवीमारोढुमर्हन्ति भगवांस्तु निरोधार्थमेव समागत इति लौकिकप्रकारेणैव प्रपञ्चविस्मरणपूर्वकं स्वासक्तिं करिष्यन् रोदनं कृतवान् मदीया अप्येवं बहिर्मुखा जायन्त इति च ज्ञापयितुं कल्पान्तरे ज्ञानशक्तितिरोभावे तस्मिन् शकटे दैत्यः कश्चिदाविष्टः स नेतुं समागत इति तन्निवृत्त्यर्थं रोदनं शकटोत्क्षेपश्चेत्याहुः—अत एव ब्रह्माण्डपुराणे "शकटासुरखण्डनः" इति भगवन्नाम अत्र तु शकटमात्रं तद्धर्माभिनिवेशो वा साधारणधर्माणां परित्यागासम्भवात्। एवं सर्वभावेन बहिर्मुखत्वे भगवता प्रबोध्यमानापि प्रकारं न गृहीतवतीत्याह, नैवाशृणोदिति। एवकारेण श्रवणसम्भावनापि निवारिता। ननु, श्रुत्वैव कार्यव्यग्रा उपेक्षां कृतवतीति कथं न कल्पते? तत्राह—वै निश्चयेन अन्यथा चित्तमर्द्धमप्यत्रागतं भवेत् तदाधिकरोदनेनापि समागच्छेत् अतस्तन्निषेध एव सुतस्य रुदितं श्रुतं न विलम्बं सम्पादयति तत्रापि सा महता कष्टेन प्राप्तपुत्रा अश्रवणे वा हेतुः पूर्वोक्तन्यायेन बहिर्मुखेति तदा भगवान् रोदनमात्रेण कार्यासिद्धिं ज्ञात्वा रुदन्नेव स्तनार्थी सन् चरणावूर्द्ध्वमुदक्षिपत् यथा बालकाः चरणावूर्द्ध्वं घर्षणेन प्रसारयन्ति बाक्यापेक्षया कृतेः प्रबलत्वात्तथाकरणम् अनेन भगवान् मनसैव निरोधं कथं न कृतवान्? इति परिहृतं केवलक्रियायां क्रीडाबुद्धिः स्यात् शकटभङ्गेप्याक्लिष्टकारित्वं न स्यात् एवं कृते त्वानुषङ्गिकं जातमिति न क्लिष्टं पूर्वं रोदनं यशोदाया बहिर्मुखत्वज्ञापनाय अन्यथा मनसैव कथं न कुर्यात् अयं च निरोधः स्वार्थः अन्यथा पञ्चानां पदार्थानामग्रे वक्ष्यमाणत्वात् पञ्चपर्वाविद्यातेनैव नाश्यत इति व्यर्थमेतत्स्यात् तच्च स्वप्रयोजनं स्तनार्थित्वं स्वार्थमुत्पन्नस्य स्वाधिनियोगावश्यकत्वज्ञापनाय स्तनमेव अपेक्षते न तु पानं तदग्रे वक्ष्यति स्वयमेव नाहं भक्षितवानिति मृत्प्रसङ्गे अतः पूतनास्तनसमये यावन्तो बालकाः तद्भक्षिता अत्र समागताः तेषामक्षार्थम् अवश्यं स्तनापेक्षा दुष्टत्वं पूतनासम्बन्धिक्रोधेन नाशितं तान् स्वसमानत्वेन सम्पादयितुं स्वभोग्यगोपिकादर्शनदोषाभावार्थं तानेव तासु समारोपयितुं ज्ञानं चोपदेष्टुं प्रथमं स्वकीयमेव सर्वथा निर्दुष्टं तेभ्यो ददाति ते च बहवः पीडिता भवन्ति अतस्तेन अर्थित्वं भक्त्यैव तेषां निस्तारो जात इति ख्यापयितुं चरणयोर्व्यापार उक्तः अवतारविषयिणी भक्तिरिति पुष्टेति ज्ञापयितुं द्विवचनम् ॥ ६ ॥

एवं कृते यज्जातं तदाह—अधः। शयानस्येति अधस्तादवलम्बे शकटस्य पृष्ठभागाधः पल्यङ्के शायितो भगवान् छायार्थं यदि निरोधो नाङ्गीक्रियते तर्हि भवत्कृता छायापि माऽस्त्विति ज्ञापयितुं शकटाक्षेप इति ज्ञापयति—अधः शयानस्येति। शिशोरित्युत्थानासमर्थस्य तथा बुद्धिः सम्पादितेति नान्यथा... भगवतो भिन्नतया सम्बन्धित्वेन निरूपणं चरणस्यैव माहा... ज्ञापनार्थम् अतः शकटम् अल्पकप्रवालमृदङ्घ्रिहतं सत्... तेन विपरीततया पतितं तद्गतानां कार्याणां नाशस्त्वग्रे ... सकार्यस्यानसः भङ्गो जातः पूतनायां तु भगवतः ओष्ठद्वयमन्... हस्तद्वयसम्बन्धश्च जात इति तदपेक्षया अधिकमाहात्म्यज्ञापना... अल्पसम्बन्धो वक्तव्यः अत एव विचारे क्रमेणैतानि चरित्रा... गृहीतानि तदुक्तं द्वितीयस्कन्धविवरणे अत्यन्तमल्पावस्था... प्रवालापेक्षयापि मृदु अल्पको वा प्रवालः नूतनाम्रपत्रमत्यल्प... तदपेक्षयापि मृदुभगवच्चरणारविन्दं तथैवारक्तमूर्द्ध्वरेखायुक्तं ताद्दशाङ्घ्रिभ्यां अङ्घ्रिणा वा हतमल्पं ताडितं सत् चलनेप्यवं... विपरीततया पतितं मारणसमये चरणस्य महत्त्वं जातं ... ष्यतीति शङ्काव्युदासाय प्रवालतुल्यतया वर्णितं मृदुत्वम्... दृष्टान्तो माभवत्विति आकृतावपि समानमिति वक्तुम् अल्पत्व... निरूपिता तदपेक्षयापि मृदुत्वकथनं शकटादेः प्रत्युत सु... जनकमिति ज्ञापयितुं पदा शकटोपवृत्त इति विचारे एवं... पदं गृहीतम् अत्र तु चरणावित्युक्तं समासे सन्दिग्ध... करणता एकस्यैव युक्तेति अङ्घ्रिणा हतमिति समासः ... ऽवस्थासाधनवैपरीत्यं कार्ये निरूपितं भाराक्रान्तमनः चाव... न शक्यमिति ख्यापयितुं विशेषणद्वयमाह—बाह्याभ्यन्तरभे... विध्वस्तेति विशेषेण ध्वस्तानि अधः पतितानि नानार... युक्तानि घृतमधुगुडदधिनवनीतादियुक्तानि कुप्यभाजनानि चर्म... निर्मितानि रसस्थापनार्थं कुप्यानि तस्मिन् देशे प्रसिद्धा... अनेन तेषां स्थापनमपि भगवतो न सम्मतं सर्वनिषेधेऽपि... एव विद्यमानत्वात् भाजनपदेन तान्येव व्यवहारपात्राणि... ज्ञापितम् एवं शकटस्थितानां सर्वेषामधः पात उक्तः न... भगवदुपरि रसान्तरं स्थातुं शक्नोति अतो भक्तेरल्पांशेना... ते सर्वे निराकृताः भिन्नरसवान् भगवदुपरि स्थितः स्वरूपतो... नष्ट इत्याह—व्यत्यस्तचक्राक्षविभिन्नकूबरम् इति। व्यत्यस्ते... इतस्ततः पतिते चक्रे तन्मध्ये स्थितः अक्षोपि लोहमयः ... स्ततः पतितो यस्य विशेषेण भिन्नं कूबरमग्रिमभागो ... यस्य व्यत्यस्तचक्राक्षं च तद्विभिन्नकूबरं च संसारकालच... उभयसंग्राहकश्चाहङ्कारः विशेषेणात्यन्तमस्तं गतो भवति भक्त... कदेशेनापि क्रियाशक्तेर्महत्त्वात्तथात्वमुचितमेव कूबरं उत्थाप... मस्यास्तीति कूबरं तद्विशेषेण कालात्मकेन भिन्नं भवत... स्वभावत उभा अपि भगवद्विरुद्धा धर्मा भक्त्यंशेन नश्य... न्तीति ॥ ७ ॥

अनेन भगवान् तद्देहमेव दूरीकृतवानित्युक्तं तदा लौकिक... नाशात् तन्नाशद्वारा तत्कर्त्तरि भगवति निविष्टा इति ... प्रथमतः सर्वेषां तन्नाशाविचारमाह—दृष्ट्वेति। दूरे पतित... एव दृष्ट्वा न तु भगवन्तं तत्सम्बन्धं वा स्त्रीषु यशोदा मुख्या... पुरुषेषु नन्दः गोपिकानां ज्ञानं भविष्यतीति तद्व्यावृत्त्यर्थमाह... व्रजस्त्रिय इति। तथापि मुख्ये कार्यसम्प्रत्यय इति न्यायेन... गोपिका एव व्रजस्त्रियो भविष्यन्तीत्याशङ्क्याह—औत्थानि... कर्मणि याः समागता इति। यशोदायाः साधारण्ये प्रवेशा... मुख्या अपि साधारण्य एवाभिनिविष्टाः नन्दादयोऽपि औत्था... निककर्मेति कृत्वा गृह एव स्थिताः अन्यतोऽपि समागताः ...

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चकारेणोक्ताः स्त्रीणामपेक्षया अद्भुतदर्शनेन आकुला जाताः किं जातं किं भविष्यतीति शकटपाते सर्वे हेतुं विचारयन्तीत्याह-कथमिति। स्वयमेव वलीवर्द्दाद्यभिघातव्यतिरेकेणैव वै निश्चयेन स्वयमेव शकटं विपर्ययगात् विपर्ययं प्राप्तवत् विपरीततया पतितश्च भिन्नतया शकलतश्च अगात् कथं तावत् दूरे पतितमित्यर्थः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अन्नादिभिरन्नाविद्दानेन सुष्ठुपूजितैर्विप्रैः कृतमङ्गलं सञ्जातनिद्रे अक्षणी यस्य तं बालं कृष्णं शनैरिति निद्राभङ्गशङ्कया क्रोडे निष्पन्दं धृत्वैव स्वयमपि शयित्वा अशीशयत् बृहत्प्राङ्गणैकदेशस्थस्य शकटस्याधःस्थिते पल्यङ्के निश्चलं निःशब्दं च शाययामास। ततश्च निद्रापूर्तिं द्वारैव स्वयमुत्तस्थाविति शनैःपदेनैव द्योतितं ज्ञेयम् ॥ ५ ॥

औत्थानिके उत्सवे औत्सुक्ययुक्तं मनो यस्याः सा मनस्विनी वस्त्रालङ्कारमाल्यगन्धचन्दनतैलसिन्दूरादिकं ददाना व्रजौकसो महोत्सवागतनारीः नैवेति व्रजस्त्रीजनसम्माननवचनप्रतिवचनाद्यावेशवशादित्यर्थः। स्तनार्थीति निद्रान्त एव क्षुधोद्गमादिति भावः मदीयरोदनशब्देन नावधासि तिष्ठ त्वदूगृहशकटस्फोटनशब्देनैव त्वामवधापयानीति मात्रे कुप्यन्निव शकटभङ्गार्थमेव चरणौ उच्चिक्षेपेत्युत्प्रेक्षा गम्या ॥ ६ ॥

अल्पकश्चासौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतमिति तेन वामनावतारस्य कटाहभेदार्थमिव शकटभङ्गार्थं तच्चरणयुगं न वर्द्धितं नापि नृसिंहावतारस्य कठोरहिरण्यकशिपुविदारणार्थमिव जातैवातिकठिनमिति भावः बाल्यादिलीलामाधुर्याविरोध्यति सुदुर्घटम् ऐश्वर्यमेतत् कृष्णस्य पूर्णत्वप्रतिपादकं व्यवर्त्तत विपर्य्यस्तीभूयापतत् विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजतातिरिक्तकांस्यादिमयानि पात्राणि यत्र यद्यथा स्यात्तथा व्यत्यस्तानि विपर्यस्तानि चक्रे च अक्षश्च चक्राक्षाः व्यत्यस्थाश्चक्राक्षा यस्मिन् निदीर्णः कूबरो युगन्धरश्च यत्र तद्यथास्यात्तथा शकटासुरभञ्जन इति ब्रह्माण्डपुराणात् असुरावेशेनैव भूमौ प्रविशच्चक्रत्वादुच्चस्यापि शकटस्य निकटे प्राप्तत्वेनाल्पकेन चरणेन स्पर्शो ज्ञेय इति वैष्णवतोषिणी ॥ ७ ॥

यशोदाप्रमुखाः याश्च व्रजस्त्रियः पर्वाणि कर्मणीति च पाठः विपर्य्ययगात् विपर्य्ययस्तं सदपतदित्यूचुरिति शेषः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सञ्जातनिद्रे अक्षिणी यस्य तं शकटस्याधः अशीशयत् शायितवती ॥ ५ ॥

औत्थानिके कर्मणि औत्सुक्ययुक्तं मनो यस्याः सा उदचिपत् उर्द्धमचालयत् ॥ ६ ॥

तदा अल्पकश्चासौ प्रवालवन्मृदुश्च योऽङ्घ्रिस्तेन हतम् अतः शकटं व्यवर्त्तत विपरीतमपतत् तस्मिन् शकटे प्रविष्टः शकटासुरोपि नष्टो ज्ञेयः "शकटासुरविनाशी च" इति वचनात् तदेवाह—विध्वस्तानि नानारसवन्ति कुप्यभाजनानि स्वर्णरजतव्यतिरिक्तानि कांस्यादिमयानि भाजनानि पात्राणि यथा भवन्ति तथा व्यत्यस्ते चक्रे अक्षश्च यस्मिन् विभिन्नः कूबरो युगन्धरो यस्मिन् तच्च तच्च यथा भवति तथा व्यवर्त्तत ॥ ७ ॥

अद्भुतस्यात्याश्चर्यरूपस्य अकस्मात् शकटविपरीतपतनस्य दर्शनेन आकुला बभूवुः, तदाह-कथमिति। विपर्ययगाद्विपरीतमपतत् ॥ ८ ॥

---

भाषा टीका।

ता पीछे व्रजरानी श्रीयशोदाजी ने अन्नादिक देकें वस्त्र माला और बडी उत्तम २ गायें ब्राह्मणन कों दीनी, और पूजन कर्यो। ता पीछें स्नान करे भये अपने बालक कों फिर उन ब्राह्मणों सों स्वस्ति वाचन करायो इतने में लाला की आंखों में आई जो नींद सोई यशोदाजी ने धीरे धीरे से वाकूं सुवाय दीनो ॥ ५ ॥

और वा करवट लेवे की बधाई के उत्सव में हर्षवारी उदार मनवारी श्रीव्रजरानी अपने घर पै आज या बधाई के दिन में आयवे वारे व्रजवासी और व्रजवासिनीन को पूजन सत्कार करत २ अपने लाला कों भूल गई, कि—कब सों नहीं प्यायो है भूखो होयगो। ताई सों बडी वारसों रोवन वारे अपने सुत को रोवनो श्रीयशोदा ने नहियें सुनौ, तब पीवे की इच्छा वारे वा बालक ने अपने कोमल छोटे से श्रीचरण कों ऊपर कों चलाय दियो ॥ ६ ॥

गाढाके नीचे पलकिया पै सोवन वारे वा बालक के नये पल्लव के नाईं मृदुचरणन की नेंक ठोकर लगवे तें वो गाढा ऊपर तें उलटो गिर्यो। तब वा पै धरे जो अनेक तरियां के तांबे पीतर के वासन कूसन ते सगरे नीचें गिर परे, और वा गाढा के पहिया न्यारे निकस गये, धुरी न्यारी निकस गई, जुआ जुदो टूट गयो, ऐसें वो गाढा हू तहस नहस होय गयो ॥ ७ ॥

तब तौ यशोदा तें आदि लेकें जितनीं गोपी या करवट देवेके उत्सव में आई हीं तिन सबन ने और नन्द सों आदि लेके सब गोपन नें देखके बड़ो आश्चर्य मान्यो, और सगरे कहन लगे, कि—ये गाढा कैसें उलटि पर्यो ॥ ८ ॥

( इति ब्रुवन्तो ऽतिविवादमोहिता जनाः समन्तात्परिवव्रुरार्त्तवत् । )

[(१)]ऊचुरव्यवसितमतीन् गोपान् गोपींश्च बालकाः ।
रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः ॥ ९ ॥
न ते श्रद्दधिरे गोपा बालभाषितमित्युत ।
अप्रमेयं बलं तस्य बालकस्य न ते विदुः ॥ १० ॥
रुदन्तं सुतमादाय यशोदा ग्रहशङ्किता ।
कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ॥ ११ ॥
पूर्ववत् स्थापितं गोपैर्बलिभिः सपरिच्छदम् ।
विप्रा हुत्वाऽर्चयाञ्चक्रुर्दध्यक्षतकुशाम्बुभिः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न श्रद्दधिरे विश्वासं न जग्मुः उत अपि बालस्यैतन्न सम्भवति एते च बालाः किं जानन्तीति ॥ १० ॥

रक्षोघ्नैः सूक्तैः कृत्वा ॥ ११ ॥

भगवत्प्रभावानभिज्ञविप्रचेष्टितं विडम्बयन्नाह–पूर्ववदित्यादिना बलिभिः शक्तैः यद्वा, अष्टदिक्षु बलिभिः सहितं सपरिकरं यथापूर्वं स्थापितं विप्रा दध्यादिभिरर्चयामासुः हुत्वा ग्रहादिहोमं विधाय ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अद्भुतदर्शनाकुलत्वादेव अव्यवसिता किं दैत्येन ग्रहादिना वेत्यादि विनर्त्तनकरणोन्नयने निश्चयमगता मतिर्येषां तान् बालकांस्तन्माधुरीकृष्टचित्तत्वेन तदेकहृदयः एतच्छकटम् अनेनेति एतदिति च प्रत्यक्षत्वं तत्कालीनत्वञ्च सूचयति अत एवाहुः संशयोऽत्र नास्ति किमुताप्रतीतिरित्यर्थः ॥ ९ ॥

ते परमभगवत्प्रियत्वेन सर्वज्ञानयोग्या अपीत्यर्थः । अप्रमेयं भगवत्तया विशेषतस्तु बाललीलाविष्कारेण तर्कागोचरं बलं न विदुः ततो न श्रद्दधिरे च तत्र पुनस्ते इति हेत्वन्तरं पुत्रभावमयतत्प्रेमानन्दमत्ता इत्यर्थः । तादृशतत्प्रेम्णः सर्वाच्छादकत्वादिति भावः–

"श्रुत्वैतद्भगवान् रामो विपक्षीय नृपोद्यमम् ।
कृष्णं चैकं गतं हर्तुं कन्यां कलहशङ्कितः ॥
बलेन महता सार्द्धं भ्रातृस्नेहपरिप्लुतः ।
त्वरितः कुण्डिनं प्रागाद् गजाश्वरथपत्तिभिः" ॥

इतिश्रीबलदेवस्यापि तथात्वश्रवणात् "नेमं विरिञ्च" इत्यादौ तस्य स्तुतेश्च ननु, तादृशप्रेमवैवश्येन स्वर्गाऽनुसन्धानं नाम मास्तु अन्येषामुक्त्या सम्भवेदित्याशङ्क्य हेत्वन्तरमाह—उत अपि बालभाषितमित्यतोऽपीति गोपा अपि न श्रद्दधिरे किमुत गोप्य इत्यर्थः ॥ १० ॥

अत एव विशेषतः श्रीयशोदायाः स्नेहभरेण चेष्टितमाह-रुदन्तमिति । ग्रहेभ्यो बालग्रहादिभ्यः विप्रैः कर्तृभिः सूक्तैः रक्षोघ्नादिभिः करणैः "रक्षोहणो बलगहनः" इत्यादिभिः पश्चाच्च स्वस्ता स्तनमपाययत् ॥ ११ ॥

श्रीनन्दानुवर्त्तिनां विप्राणामपि तादृश एव भाव इति दर्शयन्नाह-पूर्ववदिति । बलिभिर्बलवद्भिरित्यादिना शकटस्य परमगुरुत्वं बृहत्वञ्च दर्शितं तदुक्तं "ताडोच्छ्रिताग्रम्" इत्यादि अनन्तरं निस्सङ्कोचं माता पुत्रं शायितवती हुत्वा आदावनिष्टनिवृत्त्यर्थं आज्येन व्याहृतिभिः सामान्यतो ग्रहहोमं विधाय पश्चाद्दधिभिः अक्षतैः कुशसहितप्रोक्षणजलैश्च शकटमर्चयामासुः गोपजातेः तदाश्रयप्रधानत्वात् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्येवं ब्रुवन्तः ब्रुवन्तश्च ब्रुवत्यश्च ब्रुवन्तः "पुमान्स्त्रिया" (१।२।६) इत्येकशेषः अतीव विषादेन दुःखेन मोहिताः जना यशोदादय आर्त्तवत् समन्तात् सर्वतः परिवव्रुः परिविवेष्टिरे तदा अव्यवसिता शकटागमनतद्विपर्ययाद्यगोचरा मतिर्येषां तान् गोपान् गोपींश्च प्रति बालकाः श्रीकृष्णस्य समन्ततः क्रीडन्तो बालकाः ऊचुः किमिति ? एतच्छकटमनेन बालकेन कर्त्रा पादेन निक्षिप्तं विपर्यासं प्रापितमत्र न संशयः कार्य इति ॥ ९ ॥

ते नन्दादयो गोपा न श्रद्दधिरे विश्वासं न जग्मुः बालस्यैतन्न संभवत्येते च बालकाः किं जानन्तीति बालकस्याप्रमेयमपारं बलं च न वै विदुः ॥ १० ॥

ततो रुदन्तं सुतमादाय यशोदा बालग्रहशङ्किता कस्मिंश्चिद् बालग्रहमाशङ्कमाना ऽत एव विप्रैः कर्तृभिः सूक्तैः रक्षोघ्नादिभिः करणैः कृतं स्वस्त्ययनं यस्य तं कृतानिष्टपरिहारककर्माणं शिशुं स्तनमपाययत् ॥ ११ ॥

ततो बलिभिः शक्तैरथवाऽष्टदिक्षु बलिभिर्गृहशान्तिकादिविहितपूजात्मकैः सहितं सपरिकरं यथा पूर्वं स्थापितं विप्रा दध्यादिभिरर्चयामासुः हुत्वा ग्रहादिहोमं विधायार्चयाञ्चक्रुरित्यर्थः ॥ १२ ॥

(१) तदूचुरव्यक्तमतीन् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अव्यक्तमतीननिश्चितबुद्धीन् न व्यक्ता मतिर्येषां तेऽव्यक्तमतयः तान् कुलवृद्धान् ॥ ९ ॥

बालभाषितवत् बालभाषितमिति विकल्प्य संशय्य "उता प्यर्थविकल्पयोः" इत्यमरः ॥ १०—११ ॥

स्थापितमन इति शेषः बलिभिः प्राणशक्तिमद्भिः सपरिच्छदं सपरिकरम् ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते वात्सल्यपूर्णचित्ताः ॥ १०—१५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवत्यत्यन्तमसम्भावना तेनान्योक्तेपि निमित्ते तेषां विश्वासो न जात इत्याह द्वाभ्यां–ऊचुरिति । ननु, विपरीतभावनायुक्तेभ्यो न वक्तव्यमिति सिद्धान्तात् कथमुक्तवन्त इत्याशङ्क्याह बालका इति । ज्ञानवन्तोपि विवेकरहिताः परस्वभावाधिकारादिकं न विचारितवन्तः तर्हि कथं ज्ञानवत्त्वमित्याशङ्क्य तेषां श्रोतॄणां विपरीतज्ञानं स्वभावदोषश्च नास्तीत्याह–अव्यवसितमतीन् गोपान् गोपीश्चेति न व्यवसिता निश्चयं प्राप्ता मतिर्येषामुपायान्वेषणपरा एव न तु विपरीततया किञ्चिन्निश्चितवन्तः तथा सति न वक्तव्याः स्युः गोपा गोप्य इति स्वभावतो दोषाभावः गोरक्षणधर्मः पातिव्रत्यधर्मश्चोक्तः चकारात्तादृशा एव ब्राह्मणाः अन्येपि उपायान्वेषणे अदृष्टेनापि वक्तव्यमिति अनेन बालकेन रुदता एतदनः पादेन क्षिप्तं नास्त्यत्र संशयः न हि दृष्टे अनुपपन्नं नाम व्याघातात् दृष्टानुसारिण्येव कल्पना च कर्तव्या अतः संशयाभाव इति बालाभिप्रायः रोदनं निमित्तमिति नास्यापि दोषः ॥ ९ ॥

कर्तृकरणयोरसम्भावनयां नाङ्गीकृतवन्तः प्रत्यक्षमेतत् प्रत्यक्षमूलकं च वाक्यं तर्कविरुद्धं नाङ्गीकर्त्तव्यमिति तदाह–न ते श्रद्दधिरे गोपा इति । गोप्यस्तु मध्यस्था जाताः त इति बहिर्मुखाः ज्ञानं तु जातमत्यन्तासत्यप्यर्थे शब्दात् ज्ञानोत्पत्तिसम्भवात् अतो ज्ञातवन्तः न तु श्रद्दधिरे यतो गोपा अलौकिकज्ञानरहिताः हेत्वन्तरमप्याह, बालभाषितमप्युनेति बाला प्रमाददृष्टमपि वदन्ति भूतादिना तथा कृते क्षिप्तोपि पादः अन्यथा सिद्धः करणत्वेन ज्ञात इति बालास्तु भगवत्पराः भगवत्सामर्थ्यं भूताद्यभावं च दृष्टवन्तः अन्यैस्तु तद्दर्शनाभावात् स्वप्रतीतिसिद्धमेवाङ्गीक्रियत इति अश्रद्धायां हेतुमाह–अप्रमेयमिति । बालकस्य बलं न ते विदुः यद्यपि बलं ना प्रत्यक्षं तथापि कार्येणानुमीयते स्वस्मिन् कार्यकारणभावस्य प्रत्यक्षसिद्धत्वात् यद्ययं बलिष्ठः स्यात् स्वयमेवान्तन उत्तिष्ठेत् कार्यान्तरं वा कुर्यात् रोदनं च न कुर्यात् अतो नैयायिकवत् इदानीन्तनमीमांसकवत् भ्रान्ताः बलं न विदुरित्यर्थः । तत्र हेतुः अप्रमेयमिति बालकस्य बलं न ते विदुः यद्यपि बलं न प्रत्यक्षं अप्रमेयमिति । न तेषां दोषः नापि तर्कस्य किन्तु तस्य बालकस्य बलमेवाप्रमेयं प्रमातुमयोग्यं "अलौकिकास्तु ये भावा नतांस्तर्केण योजयेत्" इति तु तेषां न बुद्धिः अलौकिकत्वनिश्चयाभावात् सन्देहस्त्वनेन जातः जिज्ञासोत्पादिकात्तु पूतना वसुदेववाक्यपूतने च सन्देहोत्पादके यद्यपि बालकाः अलौकिकं जानन्तीत्यपि न जानन्ति तथापि मुख्येनैव चरितार्थत्वादेकमेवोक्तम् ॥ १० ॥

ततोत्यन्तमविचार्य लौकिक एव प्रवृत्ता इत्याह–रुदन्तमित्यादि सप्तभिः । चतुष्टयमत्र कर्त्तव्यम् उत्पातोऽयमिति रोदनप्रतीकारः ग्रहकृतोपद्रवस्य बालकानिष्टस्य निवृत्तिः शकटस्थापनं शकटसम्बन्ध्युत्पातपरिहारश्च वस्तुतस्तु द्वयमेव कर्त्तव्यं रोदनप्रतीकारः शकटस्थापनं च तथा सति लौकिकबुद्धिर्दृढा भविष्यतीति तन्निवृत्त्यर्थं भगवदिच्छयोत्पन्नभ्रमस्य वर्णनं भगवच्चरित्रत्वाय तत्रादौ भगवद्विषयकं द्वयमाह—तेषामज्ञानस्थापनार्थं भग्नेपि शकटे रोदनं ग्रहसम्भावनायामपि सुतत्वाद्ग्रहणं यशोदेति लौकिकबुद्धिनिपुणेति ग्रहशङ्कासम्भावना कश्चिद्बालग्रहादिः अत्र प्रविष्टो रोदनं कारयतीति सम्भावना अतः शीघ्रं स्तनं न दत्तवती किन्त्वभिज्ञैर्ब्राह्मणैः कृतं स्वस्त्ययनं यस्य रक्षाबन्धनाभिमन्त्रणादिकं स्वस्त्ययनं सुष्ठु उक्तं येषां येषां वचनं प्रमाणं अतस्ते रक्षां कृत्वा तद्गतदोषादर्शनात् सुष्ठु उक्तवन्तः ततः स्तनमपाययत् ॥ ११ ॥

एवं भगवति द्वयमुक्त्वा शकटे द्वयमाह षड्भिः—भगवद्गुणैरेवानिष्टनिवृत्तेः पूर्ववदिति यथा तस्यानसः संस्थानं पूर्वमासीत् यथा वा कुप्यस्थितिः तदाह पूर्ववदेव गोपैः स्थापितमिति बलिभिरिति तस्य महत्त्वमुक्तं परिच्छदादिसहितं तस्य परितो भागा एव परिच्छदाः अथवा पूजार्थं परिच्छदं वा सम्पादितवन्तः तादृशं शकटमेव शकटाधिष्ठात्री देवतां तत्रावाह्य विप्रास्तदभिज्ञाः विशेषेण रिक्तपूरणसमर्थाः प्रथमतः अनिष्टनिवृत्त्यर्थं सामान्यतः होमं कृत्वा आज्येन व्याहृतिभिः सर्वत्र निमित्ते सामान्यहोमः पश्चात्तच्छकटमर्चयाञ्चक्रुः दधिमिश्रिताः अक्षताः तस्य परितः स्थापिताः कुङ्कुमाक्षता इव कुशसहितानि प्रोक्षणजलानि च ब्राह्मणैः क्रियमाणं समन्त्रकमेव भवति ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अव्यवसिता किन्त्वौत्पातिकः किम्वा ग्रहादेः कर्मेदमित्यनिश्चिता मतिर्येषां तान् ॥ ९ ॥

न श्रद्दधिरे न विश्वसन्ति स्म ॥ १० ॥

सूक्तैरक्षोघ्नमन्त्रैः कृतं स्वस्त्ययनं यस्य तम् ॥ ११ ॥

बलिभिर्बलवद्भिर्गोपैः पूर्ववदेव शकटं स्थापितमिति तस्य वृहत्त्वं व्यञ्जितम् अर्चयाञ्चक्रुरिति गोपजातीनां तदाश्रयप्रधानत्वात् सर्वधनागारपदत्वेन लक्ष्म्या अधिष्ठानत्वाच्च ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अव्यवसितमतीन् अलब्धशकटपतननिमित्तमतीन् ॥ ९–१० ॥

रक्षोघ्नैर्मन्त्रैः कृतं स्वस्त्ययनं मङ्गलं यस्य तम् ॥ ११ ॥

ये ऽसूयानृतदम्भेर्ष्याहिंसामानविवर्जिताः ।
न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥ १३ ॥
इति बालकमादाय सामर्ग्यजुरुपाकृतैः ।
जलैः पवित्रौषधिभिरभिषिच्य द्विजोत्तमैः ॥ १४ ॥
वाचयित्वा स्वस्त्ययनं नन्दगोपः समाहितः ।
हुत्वा चाग्निं द्विजातिभ्यः प्रादादन्नं महागुणम् ॥ १५ ॥
गावः सर्वगुणोपेता वासःस्रग्रुक्ममालिनीः ।
आत्मजाभ्युदयार्थाय प्रादात्तेचाऽन्वयुञ्जत ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कर्मठविप्रस्वभावं प्रसङ्गात्सूचयति । बलिभिर्गोपैः सपरिच्छदं पूर्ववत्स्थापितं शकटं विप्राः हुत्वा ग्रहादिहोमं विधाय दध्यादिभिरर्चयाञ्चक्रुः ॥ १२ ॥

---

भाषा टीका ।

( ऐसें आपस में कहत २ अत्यन्त विवाद सों मोहित होयकें कोई कछु कहै कोई कछु ऐसें सब जने आर्त्त से होय कें चारों तरफ सें घिर आये ) और जब या बातको गोपन कों कछु निश्चै न भयो और बडे व्यग्र देखे तब जिन छोटे २ बालकन कों यशोदाजी रखवारी पै कर गई हीं वे बालक गोपन तें कहन लगे, कि—याई कनुआं ने रोय रोय कें पांय की ठोकर मारी तासों ये गाढा गिरयो है या बात में संशय मत करौ ॥ ९ ॥

ऐसें उन बालक नें तो भौत २ कही परंच उन गोप लोगन ने उनकी बातन में श्रद्धा नहींयैं कीनीं और कहन लगे, कि—बालकन कोई तौ कहनों है या को कहा विश्वास है। सो काहे सों, कि–वा बालक के अप्रमेय बलकूं वे नहीं जानते हैं ॥ १० ॥

तब तौ वा पलकिया पै तें रोवते बालक कों यशोदा जी ने गोद में उठाय लीनो, और ग्रह की शंका सों ब्राह्मणन को बुलवाय कें सूकन सों स्वस्ति वाचन करायकें स्तन प्यावत भई, जो स्तन अच्छी तरियां पिये तो जानिये कि डरयो नहीं ॥ ११ ॥

ता पीछें बडे २ बली गोपन नें वा गाढा को पहिले की नाई जमाय दीनो, और वाके ऊपर जो कछु सामग्री ही सो सब ठिकानें सों वाई पै धर दीनी तब फिर ब्राह्मणों ने हवन करिकें दधि, अक्षत, कुश, और जल सों श्रीहरि की पूजा कीनीं ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

असूया गुणेषु दोषाविष्करणम् ईर्ष्या अक्षान्तिः असूयादिभि- विवर्जितास्तेषामाशिषः कृतास्तैः प्रयुक्ताः ॥ १३ ॥

इत्येवमभिप्रेत्य सामर्ग्यजुर्भिरुपाकृतैः संस्कृतैः पवित्रा ओ- षधयो येषु जलेषु तैः कृत्वा द्विजोत्तमैः कर्तृभिरभिषिच्याभिषे- कारयित्वा ॥ १४ ॥

हुत्वा हावयित्वा ॥ १५ ॥

गावो गाश्च प्रादात् अन्वयुञ्जत आशिषो युयुजुः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधुनाऽन्येभ्यो विशेषतः श्रीवल्लवेन्द्रस्य श्रीयशोदायचोदि- माह—य इति चतुर्भिः । तत्र य इति त्रिकम्, तत्रैवैकेन तेषां ब्रा- ह्मणानां सर्वोत्तमत्वमाह, य इति । असूयादिचतुष्कविवर्जनेन प्र- धर्मपरत्वं हिंसामानविवर्जनेन च मोक्षपरत्वं "सत्यञ्च समदर्श- इति—

नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ इति च

एकवाक्यतया सत्यशीलत्वेन परमवैष्णवत्वं चोक्तम् एव सर्वश्रेष्ठ्येनास्यान्ते पृथगुक्तिः ॥ १३ ॥

इतीति त्रिकान्तर्युग्मकं सामर्ग्यजूंषि तच्छेदमन्त्राः पवित्रौ- षधयः सर्वौषधयो महौषधयश्च ॥ १४ ॥

महागुणं रसामोदादि विशिष्टम् ॥ १५ ॥

गाव इति सार्द्धकम् । अभ्युदयः सर्वोपद्रवशान्तिपूर्वकं स एव निजपुरुषार्थः स्नेहभरात्तं साधयितुं ते च विप्रा- अन्नभोजनाद्यनन्तरं अयुञ्जत प्रयुक्तवन्तः आशिष इत्युत्तर- स्यात् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सामर्ग्यजुरुपाकृतैः तन्मन्त्रसंस्कृतैः "ब्रतान्वपुः ॥ १३—१६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो येऽसूयादिदोषविवर्जितास्तेषां सत्यशीलानामनृतवादशीलानामाशिषः कदाचिदपि विफला न भवन्तीति बुद्ध्वा बालकमादायेत्यन्वयः। तत्र असूया गुणेषु सत्स्वपि दोषाविष्करणम् अनृतं मिथ्याभाषणं दम्भो वञ्चनम् ईर्ष्यात्वक्षमा हिंसा भूतद्रोहः मानः अहङ्कारः ॥ १३ ॥

द्विजोत्तमैः कर्तृभिः सामर्ग्यजुर्मन्त्रैरुपाकृतैः संस्कृतैः पवित्रा ओषधयो येषु तैर्जलैरभिषिच्य स्नापयित्वा ॥ १४ ॥

स्वस्त्ययनं वाचयित्वा च नन्दाख्यो गोपस्समाहितचित्तः हुत्वाऽग्निं हावयित्वा महागुणं षड्रसोपेतमन्नं द्विजातिभ्यः प्रादात् प्रायच्छत् ॥ १५ ॥

साधुत्वबहुक्षीरत्वादिभिः सर्वैर्गुणैर्युक्ताः वासांसि स्रजः हेममालाश्चासां सन्तीति तथा ताः गाश्चात्मजस्याभ्युदयार्थं द्विजातिभ्यः प्रायच्छत् ते च मन्त्रविदो युक्ताः समाहिताः द्विजातयोऽन्वयुञ्जत प्रयुयुजिरे आशिष इति शेषः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति कृत्वा स्थिता एव विप्राः सत्याशिष इत्याह—य इति ॥१३॥
उपाकृतैः संस्कृतैः ॥ १४—१५ ॥

पुत्रस्याभ्युदयार्थाय अभ्युदयप्रयोजनाय जातैः प्राक्सङ्कल्पिता इति शेषः प्राग्जातेरग्रजस्य बलभद्रस्य वा ॥ १६–२० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ते च विप्रा आशिषोऽन्वयुञ्जतेत्यन्वयः ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सामान्यत उभयोः प्रतीकार उक्तः यशोदाप्रेरणयैव एतदुभयं जातं नन्दस्तु विशेषाकारेण द्वयमेकत्र स्थापयित्वा शान्तिं कृतवानित्याह—येऽसूयानृतेति चतुर्भिः। नन्दस्यादौ ब्राह्मणेषु वैशिष्ट्यबुद्धिः ततः शकटे समारोप्याभिषेकः ततः स्वस्तिवाचनादिपूर्वकं होमो दानं च एवं कृतस्य वैयर्थ्याभावसाधनं च पञ्चभि वक्ष्यति । तत्रादौ ब्राह्मणेषु महत्त्वबुद्धिर्जातेत्याह, य इति. ब्राह्मणे वेदलौकिकीबुद्धिस्तद्वाक्याद्भगवत्यप्यग्रे भविष्यतीति सूचितं ब्राह्मणाः स्वभावत उत्तमाः अविकृतस्वरूपाः दोषषट्केन तु प्राकृता भवन्ति भगवति तु षड् गुणाः अधिकाः निर्दुष्टो ब्राह्मणः धर्मी भगवांश्च एकस्तुल्यो वा अतो यथा भगवद्विचारितं सत्यमेव भवति तथा ब्राह्मणोक्तमपि सत्यं भवति कृतं तु सर्वेषां पूर्वाविरोधितत्र ब्राह्मणेषु षड् दोषास्तत्सामर्थ्यप्रतिबन्धकाः तद्रहितास्तु निर्दुष्टाः तान् दोषान् वर्जनार्थं गणयति कामक्रोधलोभा दोषा अपि अवस्थाविषयभेदेनैव दोषा भवन्तीति तेन गणिताः तत्कार्यभूता एव सर्वावस्थासु सर्वविषया ये ते दोषाः इति षड् गण्यन्ते असया [illegible] दोषः अदुष्टे दोषारोपणात् अयं वाङ्मविषयको

दोषः अनृतं वाचनिकः मिथ्याभाषणारूपः दम्भः परस्य स्वोत्कर्षख्यापकचेष्टादिः निमित्ताभावे तु नैमित्तिकाभावश्चेति तदा दम्भः ईर्ष्या परगुणानामसहनेन दोषचिन्तनं मानसं ततो हिंसा मारणं तस्मिन्नपि सम्पन्ने मानोऽभिमानः एवमेकेनैव त्रिदोषेण प्राणी नष्टो भवति किम्पुनर्द्वयेन असूयानृते दम्भहिंसे ईर्ष्यामानौ वाक्कायमनसाम् एत एव दोषाः एतद्विवर्जिताश्चेत् तेषामाशिषो न विफलाः कृता भवन्ति विफलकर्तारस्तु निवृत्ता इति । ननु, प्रकृतिसम्बन्धो वर्तत इति कायवाङ्मनोदोषनिवृत्तावपि स्वभावदोषस्य विद्यमानत्वात् कथं निर्दुष्टत्वमित्याशङ्क्याह सत्यशीलानामिति । सत्यमेव शीलं स्वाभाविको धर्मो येषां यत् भगवतः सत्यरूपमुक्तं तदेव तेषां स्वभावः सत्यव्रतादिः एतादृशा ब्राह्मणा ब्रह्मविदः तेषामिति पुनरनुसन्धानवाक्यसमये दोषाभाववत्त्वज्ञापनार्थम् ॥ १३ ॥

अत उत्पातेषु सत्स्वपि तेषां वाक्यान्निवृत्ता भविष्यन्तीति ज्ञात्वा बालकं शकटे समारोप्य अभिषेकं कारितवानित्याह—इतीति । स्वयं यशोदाहस्तात् गृहीत्वा तत्र शकटनिकटे समानीय वेदत्रयविद्भिः ब्राह्मणैः सामर्ग्यजुस्त्रिविधैरपि मन्त्रैः उपाकृतैः उप समीपे आ समन्तात् कृतैः मन्त्रैरलौकिकत्वेनोत्पादितजलैः पवित्रा ओषधयो येषु शतावर्यादयः तादृशैः पवित्रैरनुपहतैर्जलैः अभिषिच्य स्नानङ्कारयित्वा माज्र्जयित्वा च ॥ १४ ॥

ततो भगवन्तमलङ्कृत्य स्वस्तिपुण्याहवाचनादिकं कारयित्वा स्वयं नन्दगोपः उपविश्य स्वयमपि समाहितः सावधानो भूत्वा ब्राह्मणसंनिधाने होमं कृत्वा ब्राह्मणैरपि होमं कृतवान् तदाह—द्विजातिभ्यः प्रादादन्नमिति महागुणं बहुव्यञ्जनसहितं भोजितवानित्यर्थः ॥ १५ ॥

तदा दक्षिणा गावः सर्वगुणोपेता बहुदोग्ध्र्यः सुन्दर्यः साध्व्यश्च गवामलङ्कारार्थं वासः स्रङ्माला रुक्ममय्यः सुवर्णमय्यो मालाश्च सर्वालङ्करणयुक्ता गावो दत्ता इत्यर्थः। प्रयोजनमाह—आत्मजाभ्युदयार्थायेति । आत्मजस्य भगवतः अभ्युदयोऽभिवृद्धिः स एव स्वस्यार्थः प्रयोजनं अयमर्थशब्दोऽर्थान्तरव्युदासार्थः ते च अन्वयुञ्जत अनु पश्चात् प्राप्त्यनन्तरं आशिष अयुञ्जत योजितवन्तः न केवलमुक्तवन्तः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीनन्दस्तु ब्राह्मणाशीर्भिरेव मे बालकः कुशलीति जानामीत्याह—य इति । मायो गर्वः तेषां तैः कृताः आशिषो न विफलाः इति विश्वस्येति शेषः ॥ १३ ॥

उपाकृतैः संस्कृतैः पवित्रा ओषधयः सर्वौषधिमहौषध्यादयो यत्र तैर्जलैः करणैर्द्विजोत्तमैः कर्तृभिरभिषिच्य अभिषेकं कारयित्वा हुत्वा हावयित्वा महागुणमतिस्वादागोरसयुक्तम् ॥ १४ ॥ १५ ॥

गावः गाः गुणाः बहुपयस्वित्वादयः ते विप्रा अनु अनन्तरम् अयुञ्जत स्वीचक्रुः ॥ १६ ॥

---

विप्रा मन्त्रविदो युक्तास्तैर्याः प्रोक्तास्तथाऽऽशिषः ।
ता निष्फला भविष्यन्ति न कदाचिदपि स्फुटम् ॥ १७ ॥
एकदाऽऽरोहमारूढं लालयन्ती सुतं सती ।
गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत् ॥ १८ ॥
भूमौ निधाय तं गोपी विस्मिता भारपीडिता ।
महापुरुषमादध्यौ जगतामास कर्मसु ॥ १९ ॥
दैत्यो नाम्ना तृणावर्त्तः कंसभृत्यः[1] प्रणोदितः ।
चक्रवातस्वरूपेण जहारासीनमर्भकम् ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीनन्दस्तु वेदोक्तकर्मनिष्ठैर्द्विजोत्तमैर्जलाभिषेकादिकं कारयित्वा तेभ्यः स्वपुत्राभ्युदयार्थाय भोजनं बहुगुणवत्यः गावश्च प्रादादित्याह-य इति चतुर्भिः । तेषां तैः कृताः प्रयुक्ताः आशिषः विफला न भवन्ति ॥ १३ ॥

इति एवं विश्वासेन द्विजोत्तमैः वेदोक्तक्रियाकारयितृभिः सामादि संस्कृतैः पवित्राः ओषधयो येषु तैर्जलैः अभिषिच्य स्नापयित्वा ॥ १४ ॥

हुत्वा हावयित्वा ॥ १५ ॥

ते द्विजातयः अन्वयुञ्जत आशिषो युयुजुः ॥ १६ ॥

भाषा टीका ।

भलां जो ब्राह्मण असूया, अनृत, दंभ, ईर्षा, हिंसा, मान, इन सों वर्जित, हैं तिन सत्य शीलन की करी भई असीसें विफल नहीं होय सकें ॥ १३ ॥

ऐसें विचार कें नंदराय ने बालकों गोद में लेकें साम, ऋक्, यजु, इन वेदन कें मंत्रन सों पवित्र औषधीन के जलन सों ब्राह्मणन के द्वारा अपने पुत्र को अभिषेक करा यकें ॥ १४ ॥

बडी सावधानी सों फिर स्वस्तिवाचन करायकें अग्नि में होम कराय ब्राह्मणन कों बडे गुणवारे अन्न को दान करत भये ॥ १५ ॥

और बडी गुणवारी गायन कों सुन्दर जरकसी वस्त्र उढाय, सोनेन सों सींग मढाय, रूपे सों खुर मढाय, फूलन की और सोनेन की मालान कूं पहिराय नंदराय अपने पुत्र के अभ्युदय ( कल्याण ) के तांई ब्राह्मणन कों देत भये, और वे ब्राह्मण भी आशीर्वाद देत भये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तास्तथैव बभूवुरित्यर्थः ॥ १७ ॥

उत्क्षिप्य मृदुपादेन शकटं व्योम्नि लीलया ।
तृणावर्तं पदापीड्य भुव्यपातयदर्भकः ॥

आरोहमुत्सङ्गम् ॥ १८ ॥

तृणावर्तात्स्वमृत्युपरिहाराय कृष्णेनैवात्मन उत्सङ्गादुत्तारयत् कृतं भारमजानत्युत्पातशङ्कया महापुरुषमादध्यौ श्रीकृष्णोदरवर्तिनां जगतां भारेण पीडिता विस्मिता च सती ... जगतां मध्ये कर्मसु आस बभूव न तु जगदुदरं तं ... त्यर्थः ॥ १९ ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कीदृशास्ते ? वेदविदः वेदार्थाभिज्ञाः मन्त्रविद इति प... बहुत्र तथापि तदुपलक्षणत्वेन स एवार्थः । अतो युक्ता भगवद्भ... इत्यर्थः । "भगवान् ब्रह्मकार्त्स्न्येन" इत्यादेः "श्रद्धावान् भजते यो... स मे युक्ततमो मतः" इति श्रीभगवद्गीतातः अतस्तैर्या आशि... प्रोक्तास्तास्तथैव बभूवुः । तदिच्छानुसारेण यथावसरं ताः श्रीभ... वति व्यक्ता बभूवुरित्यर्थः ॥ १७ ॥

व्रजे विराजमानोऽहं काश्चिदर्हामि नावृतिम् ।
इति चिक्षेप भगवान् उपरिस्थमनः स्फुटम् ॥

एकदा एकाब्दवयःप्राकट्ये "एकहायन आसीनम्" इ... एत्द्विशाध्यायोक्तेः लालयन्ती मुखचुम्बनं स्तनपानञ्च तथा ... चिल्लीलया कराभ्यां उत्तोलनं चेत्यादिलालनं कुर्वन्ती सती ... गामिष्टेत्यर्थः । इति लालने मौष्ठवमभिप्रेतं वोढुसत्वतोन पर्याप्त... अत्रास्या एकाकिनीत्ववर्णनम् "एकदा गृहदासीषु" इत्या... वक्ष्यमाणप्रकारान्तरेण मन्तव्यम् ॥ १८ ॥

भूमौ निधायेति तैर्ध्यानं तत्र स्वमूर्तिरत्र ... सैवोच्यते मृत्युशब्देन च परामत्र एव नन्दत्सम्भवात् कृतं ... शितमित्यर्थः । अतः श्रीकृष्णोदरवर्त्तिनामिति विभुत्वेन तदु... वर्त्तिनामिवेति व्याख्येयम् परिच्छिन्नत्वेपि विभुत्वन्तु दामा... लीलायां स्थापयितव्यं निग्रहरूपत्वेपि विभुत्वं विभुत्वेऽपि अन्या... त्वमप्रिमाप्रिमलीलायां स्थापयितव्यम्, यद्वा, भूमाविति स...

[१] प्रचोदितः इति वीर० । वैष्णवतोषिणी ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

खट्वादेर्भारासहनत्वाभिप्रायेण चेति भावः भारपीडितेति तादृशप्रसङ्गे तादृशशक्त्युदयादिति भावः जगतां महापुरुषमीश्वरमित्यर्थः। कर्मसु स्वस्त्ययनादिरूपतद्वात्सल्यमयेषु "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्यनेन तस्यां कैमुत्यायातात् ॥ १९ ॥

दैत्य इति युग्मकम् वात्यारूपदैत्यत्वेन दुर्वृत्तत्वमहावलिष्ठत्वम् अप्रतिकार्यत्वं चोक्तं कंसभृत्य इति परमक्रूरत्वं तत्र च प्रचोदितः पूर्वं बालघातित्वेन पूतनैव सामान्यतस्तावत् प्रस्थापिता तस्याश्च छद्मभयमूर्त्तेरपि मरणाच्छङ्काकुलस्सद्ममूर्त्यैव शकटासुरः प्रस्थापितः तस्य च विलायनादन्तर्भीतः सन् मूर्त्तामूर्त्तधर्मा बलवत्तरो दुर्ग्रहरूपो महावायुरेव प्रकृष्टतया प्रस्थापित इत्यर्थः स च गत्वे निष्पीड्य गृहीत इति भाविकौतुकसूचनं चात्र आसीनं तत्र मातृदृष्टिपथ एवेति तस्या विस्मयादुःखातिशयो दर्शितः अर्भकं प्रकटितवाल्यं संवृतगौरवमित्यर्थः ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

या आशिषः प्रोक्तास्तास्तथेत्यर्थः ॥ १७ ॥

गिरिकूटवदिति भाविकार्योपयोगाय गुरुत्वापत्तिः ॥ १८ ॥

जगतां भारेण पीडिता महापुरुषम् आदध्यौ कर्मसु गृहकृत्येषु आस अवर्त्तत ॥ १९—२४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यदभिप्रायेणाशिषोऽन्वयूयजन् ताश्च तथैव बभूवुरित्याह—तैर्विप्रैर्या आशिषस्तदा प्रोक्तास्ताः कदाचिदपि स्फुटं नूनं निष्फला न भविष्यन्ति ॥ १७ ॥

अथ तृणावर्त्तासुरवधात्मकमन्यदपि भगवतो बालचेष्टितं विवक्षुस्तावत्तदुपोद्घातरूपं चेष्टितमाह—एकदेति द्वाभ्याम्। कदाचित् सती यशोदा आरोहमुत्सङ्गमारूढं बालकं सुतं श्रीकृष्णं लालयन्तीति गिरिकूटवत् गिरिशृङ्गस्येव शिशोर्गरिमाणं भारं वोढुं न सेहे नासहत तृणावर्त्तान्मातुरपमृत्युपरिहाराय चिकीर्षितकार्योपयोगाय च तदङ्कादवरोढुं च भगवता कृतं भारं न सेहे इति भावः ॥ १८ ॥

कदाचिदप्यस्य शिशोरेवंविधा गरिमा न दृष्ट इति विस्मिता भारेण पीडिता च शिशुं भूमौ निधायोत्पातशङ्कया महापुरुषं भगवन्तमादध्यौ ध्यातवती ततो जगतां कर्मसु गार्हस्थ्यकर्मसु आस प्रवृत्ता बभूव यद्वा श्रीकृष्णोदरवर्तिनां जगतां भारेण पीडिता सती यद्वा जगतां मध्ये कर्मस्वास न तु जगदुदरं तं भगवन्तं वेदेत्यर्थः ॥ १९ ॥

तदा तृणावर्त्ताख्यो दैत्यः कंसस्य भृत्यः तेन च प्रचोदितः चक्रवातस्वरूपेणागत्यासीनं यशोदया त्यक्तमर्भकं श्रीकृष्णं जहार हृतवान् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ताश्च आशिषस्तैः प्रोक्तास्तत्तथैव बभूवुरिति शेषः। ब्रह्मण्यदेवत्वेन तत्तत् प्रकाशानामङ्गीकारादिति भावः ॥ १७ ॥ १८ ॥

जगतां महापुरुषम् ईश्वरमित्यर्थः। कर्मसु स्वस्त्ययनादिरूपतद्वात्सल्यमयेषु "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्यनेन कैमुत्यात् पूतनादिना कार्यादिसिद्धेः कंसेन स्वमृत्यु एव प्रकटतया प्रेरित इत्यर्थः ॥ १९ ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, कथमयं ज्ञायते। तत्राह—विप्रा इति। प्रथमतो विप्रा विशेषेण पूरकाः निर्दुष्टाः तदैव तेषां विशेषपूरकत्वं भवति तत्रापि मन्त्रविदः ऋषयः तत्रापि युक्ताः सत्कर्मकर्तारः एवं गुणत्रययुक्तैः या आशिषः प्रोक्ताः ता कदाचिदपि निष्फला न भविष्यन्तीति स्फुटं सत्यम् अतस्तैर्योजनं युक्तमेव ॥ १७ ॥

एवमेकं चरित्रं यशोदानन्दयोर्भगवत्परतासाधकं निरूप्य पुष्टानां पञ्चानां मध्ये प्रथमस्योत्तरत्वेनोपाख्यानमारभते एकदेत्यष्टादशभिः।

"वाचिकं कायिकं चोक्तं मानसं तूच्यतेऽधुना।
अन्यथा ज्ञानतः सर्वं करोतीति भविष्यति ॥
लौकिकेनापि भावेन यावत् कृष्णैकतानता।
तावन्नूतनकृत्यानि न करोति हरिः स्वयम् ॥
वर्षेण तु परावृत्तिर्द्धर्माणां भवतीति हि।
अतो वर्षान्तरं कृत्यं तृणावर्त्ते गतं कृतम् ॥
देहबुद्धिर्भगवति निवृत्ता चेन्निवर्त्तयेत्।
तत्पराणां देहगतिं सजातीया विशेषतः" ॥

अष्टादशविद्यास्वपि भगवतो देहो नास्तीति ज्ञापयितुं एकदैव गुरुत्वं लघुत्वं चोच्यते।

"पूतनावधमारभ्य कंसो जानाति गोकुले।
हरिरस्ति जगद्वन्द्यो मम हन्तेति सर्वथा ॥
तमानेतुं तृणावर्त्तं ततः प्रेषितवान् स्वयम्।
त्रयो ह्यत्यन्तबलिनः सर्वकार्यविचक्षणाः ॥
तृणावर्तो वकः केशी तथान्यान्यो महान् स्मृतः।
तृणावर्त्तः सकलं विश्वमावर्त्तयति सर्वथा।
तृणावर्त्तस्ततः प्रोक्तस्तथादौ प्रतियोजितः" ॥

भगवान् सर्वज्ञः तृणावर्तं मथुरातः प्रचलितं ज्ञात्वा गुरुपदार्थं न नयतीति स्वयमेव गुरुर्जातः तत्र यशोदायाः गुरुत्वज्ञानं भवत्विति तस्यास्ततो व्युदासार्थं च तस्या अङ्के उपविष्टः स्तनं पिबन्नेव गुरुर्जातः तद्भगवतः सहजं गुरुत्वं तद्गरिमाणमविभुं लघुत्वं यशोदा ज्ञातवतीत्याह—एकदेति। कालविशेषस्त्रज्ञानतः अभिमतश्च रोहमङ्कमारूढम् आरूढोपविष्टं स्वयमेव लालयन्ती कुन्तलानि प्रसारयन्ती मुखचुम्बनादिना भगवतो हासं जनयन्ती जाता सुखे हितकर्त्तव्यं सतीति तस्यास्तथा भाग्ये हेतुभूतो धर्मः उक्तः लौकिकभावेनैव स्नेहादिकं करोतीति तदित्यर्थं गुरौ जाते शिशोर्गरिमाणं वोढुं न सेहे न शक्ता गिरिकूटवत् गिरिसमूहमिव यथा भूमिरपि एकत्र पर्वत-

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कोटीनां समुदायं न सहते इयमप्यदितिः आधिदैविकरूपापि न सेह इति वक्तुं दृष्टान्तः अन्यथा अयुक्तो दृष्टान्तो नोक्तः स्यात् क्रमेण भगवान् गुरुर्जात इति न तस्या भङ्गः ॥ १८ ॥

अत एव यावच्छक्यं गृहीत्वा अशक्ये भूमौ स्थापितवतीत्याह—भूमौ निधायेति । तं भगवन्तं भूमौ स्थापने हेतुभूतस्याविवेकस्य निधानमाह—गोपीति । यद्यपि महती तथापि गोपभार्या स्थापनानन्तरं भारं स्मृत्वा विस्मिता । ननु, पुत्रगुरुत्वं मातुः सुखदं भवतीति कथं विस्मयः ? इति चेत् तत्राह—भारपीडितेति । भारेण पीडिता अलौकिकोऽयं भारः पीडाजनकत्वात् मतो विस्मिता अग्रे भीताऽपि भविष्यति क्रमेण माहात्म्यज्ञानात् तदा किं कर्त्तव्यमिति विचार्य उत्पातशङ्कया महापुरुषं पुरुषोत्तमं दध्यौ ध्यातवती सर्वानिष्टनिवृत्त्यर्थं महापुरुष एवायमिति वा ध्यातवती जगतां ब्रह्माण्डकोटीनामपि मध्ये स्वामिनम् अयं सर्वजगतां महापुरुष इति स्तौति पदात् गुरुत्वेन पुरुषान्तरं ज्ञात्वा व्रतक्षतिभयभीतेव परमपुरुषं सर्वेषामेव भर्त्तारं ज्ञातवती आसमन्तात् दध्याविति भवत्ययं न वेति ध्यानं प्रतीत्यर्थं ततो भगवन्तं ज्ञात्वा तस्य परिचर्यार्थं स्नानादिकर्मसु आस तत्तत्कार्याणि कर्तुमारब्धवतीत्यर्थः । अन्यथा क्षणवियोगे प्राणा एव गच्छेयुः समागतस्तु मोहयिष्यतीति न काप्यनुपपत्तिः लालनफलमानुषङ्गिकं ज्ञानमिति च अज्ञानाद्वा जगतो भर्त्तारं भगवन्तं ध्यात्वा गृहकर्मसु गतेति उभयोः आद्यः साधीयान् ॥ १९ ॥

एवं मातरि निर्गतायां तृणावर्त्तः समागत इत्याह—दैत्य इति । जालैव क्रूर उक्तः नाम्नैव तृणावर्त्त इति माहात्म्यम् अप्रतीकारे हेतुः, कंसभृत्य इति । अवश्यानिष्टकर्तृत्वज्ञापकं प्रयोदित इति तेनैव कंसेन प्रकर्षेण प्रेरितः एवं चतुर्भिर्धर्मैस्तस्य महत्त्वमुक्तं तन्निराकरणे भगवन्माहात्म्यज्ञापनार्थं दैत्यत्वेन देवविरोधित्वं नाम्ना महाबलत्वं भृत्यत्वेन स्वधर्मः वचनं ततोऽप्यावश्यकं सत्त्वरजस्तमोगुणानां प्रत्येकसमुदायभेदेन विरोधित्वं चोक्तं तं तृणवद्भगवान् निराकरिष्यतीति चतुर्विधपुरुषार्थबाधकत्वेनोक्तः तादृशः सर्वभक्षणार्थं कृत्रिमवेषं कृत्वा जहारेत्याह, चक्रवातस्वरूपेणेति । चक्रस्वरूपो वातश्चक्रवातः चक्रवाते स्वरूपं यस्य परितश्चक्रवातं कृत्वा वायुरायातीति भ्रममुत्पाद्य तत्सङ्ग एव लघुदेह उपविष्टं भगवन्तं निधिमिव जहार । ननु, महत्त्वात् कथं जहार ? इत्याशङ्क्याह, अर्भकमिति वेगवशात् महाबलः स्वोपास्यभगवद्बलात् भगवन्तं जहार सहजबलं उत्थातुमेव न शक्नुयात् अत एव भगवानक्लिष्टकर्मा ॥ २० ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ये विप्रा युक्ताः योगिनस्तैर्या आशिषः प्रोक्तास्तास्तथा बभूवुरिति शेषः ॥ १७ ॥

राजत्यखिलसम्पत्पतौ मय्यपि सञ्चितैः किमेभिर्वस्तुभिरिति स्वमनोऽभिनदीश्वरः एकदा एकाब्दवयसि वृत्ते सति "एकहायन आसीनो ह्रियमाणो विहायसा" इत्यग्रेतनोक्तेः आरोहमुत्सङ्गमारूढं तं लालयन्ती भुजाभ्यामुत्तोलनान्दोलनादिभिरुल्लासयन्ती गिरिकूटवत् गिरिशृङ्गस्येव शिशोर्गरिमाणं वोढुं न सेहे आगमिष्यन्तं तृणावर्त्तं समातृकमेवामुं हरिष्यन्तमालक्ष्य मातुर्यशोदायाः क्लेशो मा भूदित्यैश्वर्य्यैव शक्त्या तदुत्सादं भारः कल्पयामासेति ह्येवं किञ्चिदप्युपरि तोलयान्न मां व्योम्नि खेलितुमनायत्तोऽस्म्यहम् इत्यमुष्य किल सत्यकामतैवानयत्तृणाविवर्त्तनासुरम् ॥ १८ ॥

भूमाविति । सम्भ्रमेण विस्मितेति मच्छिशोरयमाकस्मिको भारः कुतस्त्यो न जाने कस्यचिद्बालग्रहस्यावेशजनितो वेति शङ्कया जगतां महापुरुषं श्रीनारायणमादध्यौ वैकुण्ठविशमूर्द्धमालोक्य भगवंस्त्वयैव दत्तोयं सुतस्त्वयैव पालनीय इति ध्यानेनोवाचेत्यर्थः । ततश्च व्यग्रा तत्स्वस्त्ययनाद्यर्थं कर्मसु विप्राह्वानादिषु आस बभूव ॥ १९ ॥ २० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तादृशद्विजोत्तमप्रयुक्ताः आशिषः सर्वदा सत्या भवन्तीत्याह विप्रा इति ॥ १७ ॥

आरोहमुत्सङ्गं तृणावर्तोन्मातुरक्षार्थं श्रीभगवतैवाविष्कृतं गरिमाणं भारम् ॥ १८ ॥

भारपीडिता तं भूमौ निधाय किमिदमिति विस्मिता स्वशिशुकुशलार्थं महापुरुषमादध्यौ तं च कुशलिनं दृष्ट्वा जगतां प्राणिनामावश्यकानि यानि कर्माणि तेषु आस प्रवृत्ता बभूव ॥ १९—२० ॥

---

## भाषा टीका

मंगल के जानिवे वारे ब्राह्मणन नें जो असीसें दीनीं हैं ते काई समय में भी निष्फल नही होवेंगी ये बात प्रकट है ॥ १७ ॥

ॐ तृणीकृततृणावर्त्ताय नमः ।

श्रीशुकदेवजी शकटासुर की लीला समाप्त करि के अब तृणावर्त्त की लीला कूं वर्णन करें हैं, कि— एक दिनकी बात व्रजरानी श्रीयशोदाजी अपने सुत कूं गोद में बैठारें लाड करती हीं ता समैं श्रीकृष्णचन्द्रने अपने शरीर को बोझ बढायो सो यशोदापै अपनें पुत्रको बोझ सहारचो नही भयो ( बोझ बढायवे को कारण येई है भगवान् ने विचारी, कि—धरती पै और गोद में तौ बहुत खेल्यौ पै आकाश में न खेलपायो ता सों आज ये आकाशी घोडा आवन वारो है, सो मैया की गोदमें रहूंगो तौ जानें मैयाकूं कछु सुख दुःख होय तासों जामें मैया आपही मोकूं छोड दे तासों बोझ बढायो ) ॥ १८ ॥

तबतौ व्रजरानीजू बडी विस्मित होयकें बोझते पीडित होयकें अपने लालाकूं पृथिवी पै बैठारकें नारायण को ध्यान करत भईं । ता पीछे घरके काम काज में लग गईं ॥ १९ ॥

इतने में कंसको चाकर कंसको पठायो भयो तृणावर्त्त दैत्य पवन के बभूरे को रूप धरकें श्रीकृष्णकूं उडाय के लेगयो भगवान् ने हु विचारी कि खूब घोडा मिल्यो ॥ २० ॥

---

गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः ।
(१)ईरयन् सुमहाघोरशब्देन प्रदिशो (२)दिशः ॥ २१ ॥
मुहूर्त्तमभवद्गोष्ठं रजसा तमसाऽऽवृतम् ।
सुतं यशोदा नापश्यत्तस्मिन् न्यस्तवती यतः ॥ २२ ॥
नापश्यत्कश्चनात्मानं परं चापि विमोहितः ।
तृणावर्त्तविसृष्टाभिः शर्कराभिरुपद्रुतः ॥ २३ ॥
इति खरपवनचक्रपांसुवर्षे सुतपदवीमबलाऽनिलक्ष्य माता ।
अतिकरुणमनुस्मरन्त्यशोचत् भुवि पतिता मृतवत्सका यथा गौः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईरयन्निनादयन्नित्यर्थः ॥ २१ ॥
यतो यत्र न्यस्तवती तस्मिन् स्थाने नापश्यत् ॥ २२ ॥ २३ ॥
खरपवनचक्रात् पांसुवर्षे सति ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्यथा हरत्याश्चकेः रेणुभिरावृण्वन् अत एव तत्रत्यानां चक्षूंषि तज्ज्योतींषि च मुष्णन् प्रदिशः विदिशः दिशश्च ॥ २१ ॥
रजसा तत्कृततमसा च श्रीभगवद्दर्शनविनाशकाभ्यां रजस्तमोगुणाभ्यामावृतं प्रथमं योगिनां हृदयमिवासीदिति श्लेषयोपमा च तस्मिन् तत्रैव स्वपार्श्वे न्यस्तवत्यपि यतो यस्माद्व्रजमाद्देहतोनापश्यत् तस्मिन्नित्यत्र स्वयमिति क्वचित्पाठः ॥ २२ ॥
परम् अन्यमात्मानमपि नापश्यत् चकारात् किञ्चिन्नाश्रृणोच्च विमोहितः किञ्चिदनुसन्धातुमप्यशक्त इत्यर्थः ॥ २३ ॥
एवमत्यन्तगौरवप्रकाशनेनात्मनोऽनन्यशक्यनयनं श्रीभगवता तल्लीलाशक्त्यैव वात्सल्येन बोधितापि पुत्रादर्शनमात्रेणैवात्याकुला सती किञ्चिदनुसन्धातुमक्षमा बहु विललापेत्याह—इतीति । पूर्वोक्तप्रकारखरपवनचक्रसम्बन्धपांसुवर्षे सति सुतस्य पदवीं मार्गं केनापि चक्षुषानाधिगमस्यैव अबला किञ्चित्कर्त्तुमनुसन्धातुं चाशक्ता केवलं भुवि पतिता सती अतिकरुणं काष्ठपाषाणवज्रसारादीनामपि भेदकं यथा स्यात्तथाऽनुस्मरन्ती अशोचत् तदेव विलापं चक्रे यद्वा, प्रागशोचत् पश्चात् मोहेन भुवि पतिता यतो माता हि खेदातिशये स्नेहभरेणानुसन्धानाभावे परमार्त्तत्वे च ... मृतेति अदर्शनमात्रेण महानिष्टशङ्कोत्पत्तेः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथम्भूतस्सन् ? कृत्स्नं गोकुलं चक्रवातरूपेणावृण्वन् व्याप्नुवन् रेणुभिर्व्रजौकसां चक्षूंषि मुष्णन् पिधापयन् महता घोरेण च शब्देन दश च दिशः पूरयन् ईरयन्निति पाठे नादयन् ॥ २१ ॥
तथा गोष्ठं मुहूर्त्तं रजसा तमसा च परागान्धकाराभ्यामावृतमभूत् तथा च यशोदा यतो यत्र न्यस्तवती निहितवती तत्र देशे सुतं नापश्यन्न ददर्श ॥ २२ ॥
तथा कोपिजनः परमन्यमात्मानं च नापश्यत्, कुतः ? यतो विमोहितः तत्र हेतुः तृणावर्त्तेन विसृष्टाभिः प्रयुक्ताभिः शर्कराभिः सिकताभिरुपद्रुतः ॥ २३ ॥
इतीत्थं खरात्कठिनात्पवनचक्रात्पांसुवर्षे सति सुतपदवीमनिलक्ष्यादृष्ट्वाऽबला माता यशोदाऽतिकरुणं यथातथाऽनुस्मरन्ती भुवि पतिता यथा मृतवत्सा गौस्तद्वच्छुशोच ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईरयन् शब्दयुक्ताः कुर्वन्नित्यर्थः ॥ २१ ॥
यतो यत्र न्यस्तवती तस्मिन् स्थले ॥ २२ ॥
शर्कराभिः अणुतरशिलाभिः ॥ २३ ॥
इतिशब्दः प्रकारवचनः आदिवचनो वा "इति हेतुप्रकारादिसमाप्तिषु" इत्यमरः । खरश्चण्डः पवनो वायुः तेन चक्रपांसवः मण्डलीकृतरजांसि तेषां वर्षे समूहे सुतपदवीम् अविचक्षमाणा विगतदर्शना अपश्यन्तीत्यर्थः । पुत्रमनुस्मरन्ती निरन्तरसंश्चिन्तनोपेता अत एव भुवि पतिता अबला अतिकरुणमशोचदित्यन्वयः ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

२१—२६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य तृणावर्त्तस्य उपासितमायारूपस्य भगवन्माहात्म्यमाह—पञ्चभिः । अविद्यारूपस्तेषामिति—
"अयोग्यतादर्शने हि हरेश्चादर्शनं ततः ।
सर्वज्ञानं ततः स्वस्मिन् यशोदास्नेह एव च ॥
गोपिकानां तथा स्नेहः पञ्चपर्वाणि लौकिकान् ।

(१) पूरयन् (२) दश =" इति च वीर० ।

## रुदितमनुनिशम्य तत्र गोप्यो भृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ।
## रुरुदुरनुपलभ्य नन्दसूनुं पवन उपारतपांसुवर्षवेगे ॥ २५ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रथमतोऽज्ञानं तत्कृतं वक्तव्यं ज्ञाने अंशत्रयं वेद्यांशः इन्द्रियांशः अन्तः करणांशश्चेति त्रयाणामपि तत्कृतदोषसम्बन्धमाह स हि न तूष्णीं जहार किन्तु गोकुलं सर्वमावृण्वन् अन्धकारेण वेष्टयन् तमोगुणकार्य्यमेतत् रजोगुणकार्यमाह मुष्णन्चक्षूंषि रेणुभिरिति । सर्वेषां दृष्टिः पांसुभिः कृत्वा हृता देवतात्वात् सा दृष्टिः तेन च गृहीता स पश्यति तेन पश्यन्तीति न तु केवलं तिरोहिता अन्तः करणे वैयग्र्यं चोत्पादयतीत्याह–पूरयन्निति । सुमहाघोरं यथा भवति तथा शब्देन दश दिशः पूरयन् कुसूले धान्यं निर्बन्धेनापि पूर्यते एवं यथा सर्वविन्तु भयमुत्पद्यते तथा शब्दं पूरितवान् आधिदैविकादित्रयस्यापि भयमुत्पादयितुं पदत्रयं सुमहाघोरमिति प्रदिश इति प्रकृष्टा दिशो देवसम्बन्धिन्यः अनेन देवपक्षपातिनामेव भयं न दैत्यपक्षपातिनामित्युक्तम् ॥ २१ ॥

ततो भगवद्दर्शनमाह–मुहूर्त्तमिति । बहिः स्थितानां गोकुलदर्शनमपि न जातं बहिर्मुखानां भगवद्दर्शनं कथं भविष्यति ? इति वदन् दृष्टान्तपूर्वकमाह, मुहूर्त्तं घटिकाद्वयं गोष्ठं सर्वमेव गोकुलं रजसा पांसुना तमसा तमोरूपेण रजोजनिततमसा वा आवृतमासीत् ततः अन्तः स्थितं भगवन्तं यशोदापि नापश्यत् सुतबुद्धिश्च जाता । ननु, भगवद्दर्शनं सर्वेषामेव दुर्लभं किमाश्चर्यं यशोदा नापश्यदिति; तत्राह–स्वयं न्यस्तवती यतः स्वयमेव तत्र न्यस्तवती स्थापितवती स्वस्थापितं स्वयमेव द्रष्टुमुचितमेव तथाप्यदर्शनम् आश्चर्यं यत इति सप्तम्यर्थे वा स्वयं न्यस्तवतीति भ्रमाभावः ॥ २२ ॥

यथा भगवति विदिते सर्वं विदितं भवति एवं भगवत्यविदिते सर्वमेवाविदितं जातमित्याह–नापश्यदिति । कोप्यात्मानं स्वदेहं परदेहं च नापश्यत् चकारात् घटपटादिकं च शब्दादिनापि प्रतीतिर्न जातेत्याह—विमोहित इति । विक्षेपेण मोहितः किञ्च अज्ञानकार्य्यमपि प्राप्तवानित्याह—तृणावर्तेन विक्षेपेण सृष्टाभिः शर्कराभिः विक्षेपेण उपद्रुतः पीडितः तामसपीडैवाज्ञानकार्यम् ॥ २३ ॥

एवमज्ञानं सकार्यं निरूप्य तदपगमार्थं यशोदाया गोपिकानां च भगवति प्रेमातिशयमाह—भिन्नवृत्तेन द्वाभ्याम् । तत्र प्रथमं गोपिकाया भगवति पुत्रत्वेन स्नेहातिशयमाह—इतीति । एव तृणावर्त्तकृते उपद्रवे जाते इति एतावति सति खरः पवनो यस्य चक्रस्य स खरपवनचक्रः तृणावर्त्तः तस्य पांसुवृष्टिभिः कृत्वा वर्षांसु मार्गानिव सुतपदवीं पुत्रमार्गमितस्ततः पर्यटन्त्यप्यविलक्ष्य ध्वजवज्रांकुशाम्भोजचिह्नैरपि चिन्हितां भूमिमदृष्ट्वा माता सर्वथा स्नेहाधिकरणं कश्चिद्भगवानात्मानं विहाय गत इति भगवतः कृपोत्पादनार्थम् अतिकरुणं यथा भवति तथा अनुस्मरन्ती अशोचत् आत्मानं शोचितवती अकृतार्थाहमिति ततो भगवद्विरहात् भुवि पतिता जात क्रियाशक्तिलुप्ता ज्ञानशक्तिरपि लुप्तेति वदन् मुर्च्छिता जातेति दृष्टान्तेनाह, मृतवत्सका ग‍ौरिति गौरश्रानजन्तुः तत्रापि वत्से गते विवेकाभावात् मूर्च्छा भवत्येव अमृतवत्सकेति मृतवत्सका तु मृतमाघ्राय निवृत्तैव भवति नष्टवत्सैव तथा भवति ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तावदेव दैत्यो जहारेति तद्धरणकाले ऐश्वर्य्येण शक्त्या भारलाघवं कृतमिति ज्ञेयं दिशो विदिशश्च ईरयन् प्रतिध्वनयन् यतो यत्र न्यस्तवती तस्मिन् स्थले ॥ २२—२३ ॥

खरपवनचक्रात् पांसुवर्षे सति अविलक्ष्य अदृष्ट्वा ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आवृण्वन् प्राप्नुवन् प्रदिशो दिशः ईरयन् निनादयन् । यतः यत्र ॥ २२ ॥ २३ ॥

इति एवं खरपवनचक्रात् कर्कशवातचक्रात् पांसुवर्षे सति ॥ २४ ॥

---

### भाषा टीका ।

वा समै वानें तौ मारे धूरिके वर्षा के सबगोकुल को ढक दियो और रजसों सबन की आखन को ढांकतो भयो बडे घोर शब्द सों दिशा और विदिशान कों ढांकतो भयो ॥ २१ ॥

दो घडी ताईं तौ उडी जो रज तासों और अन्धकार सों गोकुल छायगयो जहां यशोदाने अपने सुत को बैठारा जगै नही देख्यो ॥ २२ ॥

वा समें तृणावर्त दैत्य को वर्षाई ककरीली रेतसों उपद्रुत होयकें मोहित होयकें अपन पै कों और दूसर कों हूं नहीं देख सकतौ भयो ॥ २३ ॥

या तरियां बडी तीक्ष्ण पवन चली और धूर बरसी जब कछु दीखबे लग्यो तब अब लाविचारी मैया यशोदा कों सुतकी को नहीं पायकें अपने पुत्रके शोक करती बडी करुणा पूर्वक रोवत भई और सोचकरतइ धरती में गिरपडी जैसें हाल के बछरासों वियोगावती गाय होय ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपारतः पांसुवर्षस्य वेगो यस्मिंस्तथाभूते पवने तत्र तस्या रुदितमनुनिशम्य गोप्यो रुरुदुः ॥ २५ ॥

तृणावर्तः शान्तरयो वात्यारूपधरो हरन् ।
कृष्णं नभोगतो गन्तुं नाशक्नोद्भूरिभारभृत् ॥ २६ ॥
(१)तमश्मानं मन्यमान आत्मनो गुरुमत्तया ।
गले गृहीत उत्स्रष्टुं नाशक्नोदद्भुतार्भकम् ॥ २७ ॥
गलग्रहणनिश्चेष्टो दैत्यो निर्गतलोचनः ।
अव्यक्तरावो न्यपतत् सह बालो व्यसुर्व्रजे ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वात्या चक्रवातस्तद्रूपधरः कृष्णं हरन् शान्तरयः कथञ्चित् नभोगतस्ततःपरं गन्तुं नाशक्नोदित्यर्थः ॥ २६ ॥

गुरुमत्तयाऽतिगौरवेण तं तथा अश्मानमश्मवन्तं पर्वतप्रायं मन्यमानस्तेनैवात्मनो गले गृहीतत्वात्तं त्यक्तुमिच्छन्नपि नाशक्नोदित्यर्थः ॥ २७—२९ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पवने उपारत पांसुवर्षवेगे सति गोप्यः प्रतिवेशिन्यः तत्र च श्रीव्रजेश्वरीगृहे रुदितम् अनुनिशम्य वीप्सया श्रुत्वा तत्र च श्रीनन्दसूनुमनुपलभ्य गत्वाप्यदृष्ट्वा भृशमनुतप्तधियः सत्यस्ततएवाश्रुपूर्णमुख्यः सत्यो रुरुदुः अनुरक्तेति पाठे श्रीनन्दपत्न्यां श्रीनन्दसूनौ च अनुरक्ता धीयांसां ताः नन्दसूनुमिति श्री नन्दस्य तदनुगत्वात् श्रीव्रजवासिनां च सर्वेषां रोदनं सूचयति ॥ २५ ॥

ततश्च तेषामार्तिरोदनेन नभोगमनलीलां विहाय दैत्यं हन्तुमुद्यत इत्याह—तृणेति । तृणावर्त्तो वात्याया रूपधरः कृष्णं हरन् नभोगतोभूत्वा तत्र तेनाविष्कृतभारेण भूरिभारभृत्सन् तत एव च शान्तरयः सन् गन्तुं नाशक्नोत् ॥ २६ ॥

अश्मन्तम् अश्मवन्तं नीलमणिपर्वतं न तु नन्दसूनुं तं मन्यमानः अतो हरणाशक्त्या च मोक्तुमिच्छन्नपि नाशक्नत् यतस्तेनैव गले गृहीतः अत एवाद्भुतं लोकातीतं कौतुकावहं वा अर्भकं अश्मन्तमिति युधोरनाकाविति ज्ञापकाच्छान्दसो वलोपः किन्तु पाठोयं क्वचिदेव अश्मानामिति पाठस्तु बहुत्र अत्र च मतुब्लोपः छान्दसः अश्माणमिति पाठश्च बहुत्र टीका च तत्र तत्र तत्तत्प्रकारैव अश्मशब्देन पर्वत उच्यते आगमादौ तथा दृष्टत्वात् पर्वतशब्देन चाभाष्यते अश्मशब्देन कथञ्चित् पर्वत इति अत्र च यथाहि केनचिद्युध्यैर्नीयमानो बलको भयाच्छ्रलं गृह्णाति तद्वत् गलग्रहणादिना लौकिकबाललीला च ॥ २७ ॥

गलग्रहणेनैव निश्चेष्टः हस्तपादप्रक्षेपणाद्यशक्त इत्यर्थः । गलग्रहणादेव निर्गतेव बहिर्निस्सृते लोचने यस्य सः किञ्च न व्यक्तः किमुक्तमिति बोद्धुमशक्यः रावः आर्तनादो यस्य सः सहबालः श्रीबालगोपालसहितः व्यसुर्मृतो व्रजमध्ये नितरां पृष्ठतः सर्वाङ्गपातमपतत् पूर्वं पूतनायाः पादादिविक्षेपेण महासंनादेन च व्रजवासिनां महाभयं वृत्तमासीत् तदधुना माभूदिति गलग्रहणेन नभस्येव मारणम् अत एव नभसि गमनार्थं तृणावर्त्तेन स्वस्य हारणमपीति नव्यम् ॥ २८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पवन इति सप्तमी स्पृष्टि स्प्रष्टुमशक्यम् ॥ २५—२७ ॥
व्यसुः गतप्राणः ॥ २८—२९ ॥

———

श्रीमद्वीरराघवाचार्यभागवतकृतचन्द्रचन्द्रिका ।

ततस्तस्य रुदितमाकर्ण्य भृशं नितरामनुतप्ताः धियो मनांसि यासामश्रूणि मुखे यासां तथाभूताः गोप्यः तत्रागत्य नन्दसूनुं श्रीकृष्णमनुपलभ्यादृष्ट्वा रुरुदुः उपारतः पांसुवर्षस्य वेगो यस्मिंस्तथाभूते पवने सति तत्र तस्या रुदितमनुनिशम्येत्यन्वयः ॥ २५ ॥

वात्या चक्रवातः तद्रूपधरस्तृणावर्तः श्रीकृष्णं हरन् शान्तवेगः कथञ्चिन्नभो गतः ततः परं नभो गन्तुं नाशक्नोत्तत्र हेतुः भूरिभारभृदिति ॥ २६ ॥

तं बालं गुरुमत्तया आत्मनः स्वस्याश्मानं कूपे पिपतिषोः कण्ठलग्नपाषाणतुल्यं मन्यमानः यद्वा आत्मनः स्वस्मादपि गुरुमत्तयाऽश्मानं बालव्याजं परं मन्यमानस्तेन दृढं गले गृहीतः तमुत्स्रष्टुं त्याजयितुं नाशक्नोत् ॥ २७ ॥

गले ग्रहणेनैव निश्चेष्टो निर्गते उद्गते लोचने यस्य स दैत्यः अव्यक्तमस्पष्टं वाक्यं रावो यस्य तथाभूतः निरुद्धगलत्वादिति भावः । बालेन श्रीकृष्णेन सहितो व्यसुर्गतप्राणो व्रजे न्यपतत् ॥ २८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपारतः उपरतः शान्तः पांसुवर्षवेगो यस्य पवनस्य स तथा तस्मिन् सत्यपि कृष्णस्य अन्तरिक्षगमनात् भुवदर्शनम् उपरि चक्षुर्दौर्बल्यादित्यर्थः ॥ २५ ॥

ननु, मूर्तद्रव्यादर्शनं देशान्तरसंयोगाद्देशान्तरप्रवेशलक्षणसंयोगाद्वेत्युभयथा सम्भाव्यते अत्र कथमिति स्त्रीणां शङ्कामपनेतुमुपक्रमते ; तृणावर्त इति. शान्तरयः निवृत्तवेगः ॥ २६ ॥

अश्मानं श्वेतपाषाणम् ॥ २७ ॥

(१)तमश्मन्तं इति वैष्णवतोषिणी क्रम० चक्र०

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्गतलोचनः निष्क्रान्तनेत्रमांसपिण्डः अव्यक्तवाक्यः वचनावृत्तिरहितः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अश्मन्तमिति वक्ष्यमाणच्छान्दसः ॥ २७—३० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं यशोदायाः परमस्नेहेन मूर्च्छापर्य्यन्तमवस्था निरूपिता गोपिकानामाह—रुदितमनुनिशम्येति । गोप्यः स्वयमेव ज्ञानसम्पन्नाः भगवति नीयमाने रोदनं कुर्वन्त्यः स्वरोदनं शृण्वन्त्य अन्यरोदनमपि श्रुतवत्य इति अनुनिशम्येत्युक्तं तत्र भमवद्गृहे गोप्यो भगवदीयाः भृशमत्यर्थमनुतप्ता धीयांसाम् अस्माभिस्तत्र भगवन्तं गृहीत्वा कथं न स्थितमित्यनुतापयुक्ताः स्वबुद्धिदोषं स्मरन्त्यो भृशं तप्ताः अश्रुप्रोञ्छनेऽप्यशक्ताः अश्रुपूर्णमुख्यो जाताः अश्रुभिः पूर्णं मुखं यासामिति स्वयं तत्र गृहे गत्वा नन्दसूनुमनुपलभ्य रोदनेऽपि लौकिकदोषनिवृत्त्यर्थं प्रभुपुत्रमनुपलभ्य सर्वा संहत्य रुरुदुः एवं रोदने क्रियमाणे देवता अन्तर्हिता तस्यामन्तर्हितायां पवनोऽपि उपारतः पांसुवर्षस्य वेगो यस्य तादृशो जातः ॥ २५ ॥

तस्मिन् तथा जाते तृणावर्त्तोऽपि शान्तवेगो जात इत्याह—तृणावर्त्त इति । प्राप्ते भगवति नयन एव सामर्थ्यस्याव्यापृतत्वात् पूर्वं वात्यायां रूपधरो भूत्वा हरन् आकाशं गतः कृष्णं हरन् गन्तुं नाशक्नोत् उर्ध्वगमन एव देवतावशात् बलं जातं न तिर्यग्गमने तत्र हेतुः भूरिभारभृदिति स्वसामर्थ्यापेक्षयापि अधिकं भारं बिभ्रत् ॥ २६ ॥

ततः अशक्तो यत् कृतवान् तदाह—तमश्मानमिति । तं भगवन्तं बालकं सूक्ष्मरूपमतिगरिष्ठम् अश्मानं हीरकं नीलमणिं वा मन्यमानो जातः तत्र हेतुः आत्मनो गुरुमत्तयेति आत्मनोऽप्यतिबलिष्ठस्यापि गुरुमत्तया अशक्यगौरवेण कृत्वा अश्मानं मान्यमानो जातः तत उत्स्रक्ष्यामीति विचार्य भगवता गले गृहीतस्सन् उत्स्रष्टुमपि नाशक्नोत् ननु हस्तौ मोचयित्वा कथं न त्यक्तवानित्याह अद्भुतार्भकमिति अद्भुतः अलौकिकः त्याजने क्रियमाणे सम्बन्धो भवति विपरीता हि भगवल्लीला प्राप्तव्य इत्युक्ते न प्राप्नोति त्यज्यत इत्युक्ते न त्यक्तो भवति ॥ २७ ॥

तदा भगवान् यत्कृतवान् तदाह-गलग्रहणेति । उच्चस्थाने बालकस्वभावस्थापक इव गलं गृह्णाति भगवान् देहेन प्राणैः सह त्यक्तव्यः तत्प्रियत्वस्यैव देहादौ समारोपणात् तस्मिन् विद्यमाने भगवान् न त्यक्तो भवति हस्ते गृहीत्वा त्यजन्निव तदा गलग्रहणेन निश्चेष्टो जात इति तदा भगवान् दयया त्यक्ष्यतीत्याशङ्क्याह दैत्य इति अत एवातिनिष्पीडनेन निर्गते लोचने यस्य शब्देनापि भयं जनयिष्यामीति विचार्य ततोऽपि पीडितः अव्यक्तरावो जातः न व्यक्तो रावः शब्दो यस्य तदा विवशः सन् हृदयस्थितबालकः इव व्रजमध्ये न्यपतत् न हि गोकुलसर्वस्वं कश्चिदन्यत्र नेतुं शक्तः नितरामपतदि[...] सर्वाङ्गे भूमिसम्बन्ध उक्तः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपारतः पांसुवर्षस्य वेगो यस्मिंस्तथाभूते पवने स[...] तत्र व्रजेश्वर्या रुदितं निशम्य अनु पुरान्तरादपि गोप्य आग[...] तत्र रुरुदुः ॥ २५ ॥

प्रथमं कृष्णं बालकान्तरमिव हरन्नभः अत्यूर्द्ध्वं ग[...] ततश्च भूरिभारभृदिति तत्र ऊर्द्ध्वप्रदेशे महाभारं तं प्रति[...] शान्तरयः ततश्च वोढुमसमर्थ एव ततो गन्तुं ना[...]क्नोत् ॥ २६—२८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपारतः पांसुवर्षवेगो यस्मिन् एवम्भूते पवने सति य[...]दायाः रुदितमनुनिशम्य तत्र गत्वेति शेषः । नन्दसूनुमनुप[...] गोप्यो रुरुदुः ॥ २५ ॥

पूतनाप्राप्तरूपेण नन्दव्रजं प्राप्य विनष्टोऽतो वात्यारूप[...] वात्या चक्रवातस्तद्रूपधरः कृष्णं हरन् शान्तरयः मन्थरवेगो[...] तथाभूतोऽपि कथंचिन्नभोगस्ततः परं गन्तुं नाशक्नोत् यतो भू[...]भारभृत् ॥ २६ ॥

अद्भुतार्भकं दुर्ज्ञेयाचिन्त्यशक्ति बालकम् आत्मनः स्व[...] गुरुमत्तयाऽतिगुरुत्वेन अश्मानं गिरिकूटं मन्यमानः तमुत्[...] नाशक्नोत् तत्र हेतुं दर्शयति गले गृहीतः तेन [...] शेषः ॥ २७ ॥ २८ ॥

---

### भाषा टीका ।

वाम में यशोदाजी को रुदन सुन कें सगरीं गोपी [...] आंई और धूर बरसा वेगवारी वियार बन्द भये पै [...] जगे नन्दलाल को भौत ढूंड्यो जब नाईं मिले तब [...] सन्ताप कों प्राप्त भईं और सब रुदन करत भईं ॥ २[...]

बबूरे रूप धारण करनवारो कृष्णकं आकाश में [...] बडे बोदाकेमारें दूर न लेजाय सक्यो तब वाको वेग [...] हैगयो ॥ २६ ॥

और श्रीकृष्णचन्द्र तौ दैत्यके गरें मूंठि बांध कें [...] गये और अपन येकूं भारी होय वें ते वा बालक कूं [...] मानत भयौ और वा अद्भुत बालक कों भौत छुडा[...] चाह्यो पर छुडाय न सक्यो ॥ २७ ॥

गरे के दबाय वेते चेष्टा जाकी नष्टहे गई आंख[...] ढेला फटगये बुरी तरियां तें चिल्लाय कें वो दैत्य व्र[...] विना प्राणको मरिके गिरयो और बालक वाके [...] आयो ॥ २८ ॥

---

तमन्तरिक्षात्पतितं शिलायां विशीर्णसर्वावयवं करालम् ।
पुरं यथा रुद्रशरेण विद्धं स्त्रियो रुदत्यो ददृशुः समेताः ॥ २९ ॥
प्रादाय मात्रे (१)प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लम्बमानम् ।
तं स्वस्तिमन्तं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तम् ।
गोप्यश्च गोपाः किल नन्दमुख्या लब्ध्वा पुनः प्रापुरतीव मोदम् ॥ ३० ॥
अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः ।
हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते ॥ ३१ ॥
किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदम् ।
यत्सम्परेतः पुनरेव बालको दिष्ट्या स्वबन्धून् प्रणयन्नुपस्थितः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्योरसि लम्बमानं कृष्णमादाय मात्रे प्रतिहृत्य समर्प्य विस्मिताश्च बभूवुरिति विहायसा गगनमार्गेण पुरुषादेन नीतं तथापि मृत्युमुखात्प्रमुक्तं पुनर्लब्ध्वा मोदं प्रापुरिति ॥ ३० ॥

परस्परं हर्षकथामाहुः—अहो बतेति । निवृत्तिं गमितो मृत्युं प्रापितः कोऽत्र विस्मयो युज्यत एवैतदिति तेष्वेव केचिदाहुः हिंस्र इति ॥ ३१ ॥

नोऽस्माभिः चीर्णं कृतम् पूर्तं वापीकूपादिनिर्माणम्, इष्टं पञ्चयज्ञाग्निहोत्रादि, दत्तं दानं यदस्मात्तप आदेः प्रणयन् हर्षयन् ॥ ३२—३४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शिलायां पशुपादसम्मर्दकर्दमाद्युद्धवार्थं गृहान्तिके शिलावद्भूभाग एव न त्वन्यस्य कस्यचिदुपरीत्यर्थः । अनेन पूतनावद्वक्षवर्गचूर्णनं परिहृतम् अत एव विशेषणः शीर्णा भग्नाः सर्वे अवयवा यस्य करालं कठिनतराङ्गमपि यद्वा अत एव करालं रौद्रम् आकाशान्निक्षेपणया पतने दृष्टान्तः । पुरमिति अत्रापि विशीर्णत्वादियोज्यं समेताः श्रीयशोदापार्श्वे मिलिताः यद्वा, अन्योन्यं मिलिताः सत्यो रुदन्त्यः रुदत्यो वा समेताः सर्वा एव युगपद्ददृशुः यतः स्त्रियः स्त्रीत्वेन प्रेमक्षोभवत्स्वभावतः स्नेहविशेषेण श्रीकृष्णासक्तचित्ता इत्यर्थः । अत एव तासां शोकाधिक्येन शीघ्रनन्दनोदनार्थं तासामेवान्तिके निपातनादादौ ताभिस्तद्दर्शनम् ॥ २९ ॥

ततः श्रीकृष्णं च दृष्टवतीनां चेष्टामाह—प्रादायेत्यर्द्धकेन । हस्तद्वयगृहीताङ्गत्वादुरसि लम्बमानं पूर्वमावेगस्य बलवत्त्वात्पश्चादेव विस्मयः दैत्योरसि लम्बमानत्वेनालम्भलाभादिना तस्याः परममाग्यानुसन्धानेन च विस्मिताः अनन्तरं यमुनायामेव तच्छरीरं बाहयामासुरिति ज्ञेयं स्वस्तिमन्तं सर्वथा कुशलिनं स्वस्तिमत्त्वमेवाह—विहायसा पुरुषादेन नीतम् अतोऽस्मद्दृष्ट्यगम्यस्थाने भक्षकेन नीतत्वात् मृत्युतुल्यस्य तस्याहारत्वेन सुखं प्राप्तमपि तस्मात्प्रकर्षेण स्तनादिराहित्येन मुक्तम् उर्वरितमिति यद्वा विहायसा पुरुषादेन नीतमिति अत्युच्चपातादिसम्भवात् साक्षान्मृत्युमुखमिव प्राप्तमपि तस्मात् प्रमुक्तं गोप्यः श्रीयशोदाद्याः तासामादौ निर्देशः ताभिः प्राक् लब्धत्वात् स्नेहविशेषेण मोदाधिक्याच्च गोपाश्च किल निश्चितं तादृशं लब्ध्वा पुनरिति पूतनादिभयापेक्षया किं वा जन्मापेक्षया पुनर्जातमित्यर्थः ॥ ३० ॥

एवं तेषां निरन्तरं स्नेहविशेष एव व्यवर्द्धत न च तद्विघातकमीश्वरज्ञानं वृत्तमित्यन्योन्यं तेषां हर्षवार्त्तयैवाह—अहो बतेति । परमविस्मये अत्यन्तहर्षे वा अत्यद्भुतमेवाहुः, एष इत्यादिना एष व्रजैकप्राणरूपः परमसुकुमारोऽभिनवः बालः किञ्चिदपि कर्तुमशक्त इत्यर्थः । निवृत्तिङ्गमितोऽपि पुनरभ्यगात् अस्मदभिमुखं प्राप्तः अपि अभयं यथा स्यात्तथा वा शत्रोरपि तस्य मरणात् नाद्भुतं चैतदित्याहुः, हिंस्र इति । हिंस्रः विचारहीनं जिघांसुः खलः वञ्चकश्च अतः स्वपापेन विहिंसितः साधुर्हिंसामात्रादिदोषरहितः समत्वेन आत्मवत् परमसुखदुःखदर्शनजेन पुण्येन प्रमुच्यते प्रमुक्त इत्यर्थः । एवं पुनः पुनरुपद्रवेण दुष्टकंसादपि चिन्ता न कार्येति भावः साधुरिति श्रीनन्दमुद्दिश्योक्तं गोपसाधारणवाक्यत्वात्, यद्वा, हिंस्र इत्यादिकमर्थान्तरन्यासे तत्र च हिंस्यत इत्यर्थः ॥ ३१ ॥

पुनः प्रहर्षेणात्मभाग्यमभिनन्दन्तस्तथैवाहुः किमिति अधोक्षजस्यार्चनं यस्मात् तदर्पितत्वात् तद्भक्तिसाधकमित्यर्थः । "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इत्युक्तेः । तादृशं तप आदि तत्र तपः कृच्छ्रादि पूर्तादिकश्लोकम्—

"वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥
अग्निहोत्रं तपः सिद्धं वेदानाञ्चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥
शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेद्यां च यद्दानं तद्दत्तमभिधीयते" ॥ इति

यद्वा, अधोक्षजस्यार्चनरूपं तप आदि तत्र तप एकादशीव्रतादिपूर्तादिकञ्च तत्सेवाङ्गत्वेन कृतमिति ज्ञेयम् एवं सादृश्ये सम्परेत इव पुनरपि स्वबन्धून् प्रणयन् कुर्वन् सृजन् जीवयन्निति यावत् उपस्थितः समीपमागतः । ३२ ॥

(१) परिगृह्य इति वीर० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वस्तिमन्तम् अपेतभयम् ॥ ३०—३१ ॥
पूर्तं तटाकनिर्माणादिः ॥ ३२—३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्तरिक्षाच्छिलायां पतितमत एव विशीर्णाः सर्वावयवाः यस्य तं दैत्यं रुद्रशरेण विद्धं पुरमिव करालं भयङ्करं सङ्घीभूताः रुदन्त्यश्च स्त्रियो ददृशुः ॥ २९ ॥

ततस्तस्य दैत्यस्य उरसि लम्बमानं कृष्णमादाय मात्रे यशोदायै प्रतिगृह्य समर्प्य विस्मिता बभूवुः विहायसा गगनमार्गेण पुरुषादेन दैत्येन नीतमथापि मृत्युमुखात् प्रमुक्तं स्वस्तिमन्तं जीवन्तं बालं लब्ध्वा नन्दप्रधाना गोप्यश्च नितरां मोदं हर्षं प्रापुः किल ॥ ३० ॥

अथ गोपादीनां मिथः सन्तोषवादमाह—अहो इति द्वाभ्याम् । रक्षसा निवृत्तिं गमितो विनाशं प्रापित एव बालः पुनरभ्यगात् अहो अत्याश्चर्यमेतत् कोऽत्र विस्मयः युक्तमेवैतदिति तेष्वेव केचिदाहुः हिंस्र इति हिंस्रः क्रूरः खलः स्वपापेनैव निहतः साधुस्तु समत्वेन स्वस्मिन्नितरेषु च समभावेन भयान्मुक्तो भवतीति ॥ ३१ ॥

तत्रापि केचिदाहुः-किमिति । नोऽस्माभिः तप आद्यन्यतमं किञ्चिच्चीर्णं पूर्वजन्मनि सम्पादितं स्यात् कुतः यद्यस्मात् संपरेतो मृतोऽपि बालकः पुनरपि स्वबन्धून् रमयन्नुपस्थितः दिष्ट्यायं महानानन्दो जात इत्यर्थः । अन्यथैतद्दुर्लभमिति भावः । तपः कृच्छ्रचान्द्रायणादि पूर्तं स्मार्तं कर्म तटाकादिनिर्माणं वा इष्टं श्रौतं दत्तं दानं तेषां समाहारद्वन्द्वः प्रणयमिति पाठे प्रणयन् हर्षयन्नुपस्थित इत्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुरं त्रिपुरसंज्ञम् ॥ २९—३१ ॥

समत्वेन गुणेन "अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः" इति भारतवचनादधोक्षजशब्दो निरुक्तः वापीकूपतडागादि पूर्तम्—

"अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥
शरणागतसन्त्राणं भूतानां चाप्यहिंसनम् ।
बहिर्वेदि च यद्दानं तद्दत्तमभिधीयते" ॥

प्रणयं स्नेहं कुर्वन् "प्रणयः प्रसरः समौ" इत्यमरः ॥ ३२ ॥ ३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

"युवोरनाकौ"(७।१।१ इति ज्ञापकात् प्रमुच्यते प्रमुक्त इत्यर्थः ॥३१॥
अधोक्षजशीणनार्थं तप आदि ॥ ३२—३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा मायायां गतायां पतन् सर्वजनीनो जात इत्याह-तमन्तरिक्षात्पतितमिति । अन्तरिक्षात् दूरादाकाशात् निरालम्बात् शिलायां पतितं भगवद्दासक्ताः स्त्रियो ददृशुरिति सम्बन्धः व्रजमध्ये महान् पाषाणो भवति । यत्र स्थितो नन्दः सर्वमेव दोहगनुसन्धत्ते सा शिला व्रजपुत्रीवस्थिता दैत्यघातिनी अत एव विशीर्णाः सर्वे अवयवा यस्य मृतोऽपि सर्वेषां भयानकः किं पुनर्जीवन्नित्याह, करालमिति । करालः क्रूरः भगवन्मारणीयत्वे हेतुः "पुरं यथा रुद्रशरेण विद्धम्" इति सर्वोपद्रवकारीणि पुराणि त्रैलोक्या अतिपीडिताः अतः सर्वे देवप्रार्थनया भगवांस्तं मारितवान् नोचेद्दहश्च एव भवेत् न तु गच्छेत् विकलस्यापि मारणे हेतुः रुद्रशरेण स्वेनैव नारायणेन विद्धमिति न हि दुष्टेषु वधक्रियया व्यासेषु दया उचिता त्रिपुरं यथा शरेण विद्धमेव परिभ्रमत् पतति तथा पतितं रुदन्त्यो रोदनं विस्मृत्य आश्चर्याद्ददृशुः यथास्थानस्थिता अपि तत्र समेताश्च जाताः ॥ २९ ॥

तथाभूता यत्कृतवत्यस्तदाह—मादायेति । तस्योपरि लम्बमानं भगवन्तमादाय मात्रे प्रतिहृत्य समर्प्य स्तनपानादिना स्वस्थं ज्ञात्वा विस्मिता जाताः परमाश्चर्यं प्राप्तवत्यः राक्षसस्पर्शे सहजदोषजनकेऽपि दोषस्पर्शाभावात् अपहतपाप्मन एवैतत् सम्भवति अपहतपाप्मत्वनिश्चयाभावाद्विस्मयः किञ्च विस्मयान्तरे हेतुमाहुः, कृष्णञ्च तस्योपरि लम्बमानमिति वायुर्वधुः कृष्णः पूर्वं गुरुरनुभूतः लघुरधस्तात्पतितो विशीर्णः भगवांस्तु तस्योपरिभागे तमस्पृष्टेव यत्र पाषाणाविव पाषाणे पतिते पत्रं तदुपरि लम्बमानं शनैःशनैरायाति तद्वत् मध्य एवादायेति सम्बन्धः अत आदायैव च विस्मिताः प्रतिहृत्य च विस्मिताः चकारात्पतितं दैत्यमपि दृष्ट्वा विस्मिताः भगवन्तमभीतं दृष्ट्वा वा एवमान्तरालौकिकदोषाभावाद्विस्मयत्रयमुक्तं बाह्यलौकिकदोषाभावात् विस्मयत्रयमाह-पुरुषादेन नीतं विहायसा मृत्युमुखात्प्रमुक्तमिति पुरुषादाः राक्षसाः पुरुषमेवादन्तीति तेन शरीरोपघातः अवयवोपघातो वा अनर्थभावी प्रमादाद्विगलितस्यापि तथेत्याह, विहायसेति । आकाशमार्गे उच्चैस्त्यक्तोऽपि खेदं प्राप्नोति न चानयोः अन्यथापि सम्भवतो नियतमृत्युरूपावेतौ तथापि सर्वथा सम्बन्धाभावं कदाचित्दुर्वैरितोऽपि भवेत् तदपि नास्तीत्याह, मृत्युमुखात् प्रमुक्तम् अपक्षेपे पञ्चमी मृत्युमुखं प्राप्य स्वेच्छया प्रकर्षेण मृत्युं मारयित्वा स्वयं मुक्तं मृत्युर्दैत्ये स्थितः मुखमाकाशे एव त्रितयादपि मृत्योर्मुक्त इति लौकिकाश्चर्याणि तादृशोऽपि स्वस्तिमान् कल्याणवान् शोभा हर्षो वा न केनाप्यंशेन न्यूनं इति एवं तासामाश्चर्याभिनिवेशमुक्त्वा प्रपञ्चे विस्मृते भगवद्दासक्तं परमानन्दं च प्राप्तवत्य इत्याह—गोप्यश्चेति । गोप्यः चकारादन्येऽपि गोपा अपि अर्भकं लब्ध्वा प्रमोदं प्रापुः तेषां विस्मयस्यानुक्तत्वात् प्रपञ्चविस्मरणाभावे प्रकृष्टो मोदो न भवतीति युक्त्यभावेऽपि प्रमाणस्य बलिष्ठत्वात् जात एवेति विशेषमाह—उपपत्तिं चाह-नन्द एव मुख्यो येषामिति मुख्ये प्रपञ्चविस्मरणस्य सिद्धत्वात् परमानन्द उचितः तदाह—नन्दो बालकं लब्ध्वा अवस्थापि परमानन्दजनिका अतीव मोदं

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मानन्दं प्रापुः अर्द्धमात्रमत्र पतितं यत्र सम्बन्धो निरूपितो भवति । सर्वा गोप्यो गोपाः यशोदानन्दमुख्या एकत्रोपविश्य विमर्शं कृतवन्तः ॥ ३० ॥

तं विमर्शमाह–अहो इति द्वाभ्याम । समेत्य चैकत्र कृताशिषोऽभवन् विचारयामासुरुपायमत्र एवमर्थः सखण्डो भवति भगवतो नयनमारभ्य स्वस्यागमनपर्यन्तं यत्किञ्चित् कृत्यं तत् सर्वमहो आश्चर्यं नात्रोपपत्तिः काचित्सम्भवति आश्चर्यमपि लोके प्रसिद्धं भवति यथा नटविद्यायां मायायां स्वप्ने च ततोऽप्येतदधिकमित्याह–अत्यद्भुतमिति । मायायां प्रदर्शनमात्रमिति । ज्ञानस्वद्भुतं यत्पुनः चणान्तरे ऽन्यथा न भवति ततोऽधिकं यत्कदाचिदपि न जातं कचिदपि तदत्यन्तमद्भुतं तत् स्वस्य अत्यन्तमनिष्टमिति तत् स्मृत्वा वदन्त्याहुः, एष इति । अचतात्याहतत्वं प्रत्यक्षतया प्रदर्शितं विपरीते हेतुः सुदृढो जात इत्याह, रक्षसा क्रूरेण बालोऽतिसूक्ष्मः इतो निवृत्ति गमितो दूरे नीतः अन्येन नीतः स्वयमागत इत्याश्चर्यं बालत्वात् तत्रापि रक्षसा निवृत्तिपदेन क्रियानिष्पत्तिरपि सूचिता एवं सति पुनरागमने का उपपत्तिरिति शङ्कायामाहुः, हिंस्र इति । हिंस्रो मारको राक्षसः स्वपापेनैव विहिंसितः मृत्युस्तत्र तिष्ठत्येवान्यमारणार्थं स तु पापपुरस्सरमेव प्रवर्त्तते अतः पूर्वं बहूनां वधानां कृतत्वात् स्वाधारे पापमस्ति अपापे विषयं चेत्प्रयुक्तः तमगृहीत्वा व्याघुट्यागच्छन् स्वाश्रयमेव गृह्णातीति हिंस्रः स्वपापेन विहिंसितो भवति । किञ्च मृत्युरत्यन्तंदुष्टे आश्रये न तिष्ठति अतोऽपि हेतोः तं भक्षितवानित्याह, खल इति । खलः पिशुनः न ततो दुष्टोऽस्ति जगति कश्चित् विषये पापाभानमाहुः "साधुः समत्वेन भयाद्विमुच्यत" इति अपहतपाप्मरूपं ब्रह्मैव तस्यापि बहूनि रूपाणि सन्ति तत्रापि यत्समं रूपं तत् सर्वदोषराहितं "निर्दोषं हि समं ब्रह्म" इति वाक्यात् यः सर्वत्र समदृष्टिः स दोषाभावान्न हन्यते यस्तु साधुः स समदृष्टिरेव भवति अतोऽयं बालकोऽपि समदृष्टिः साधुर्भवितुमर्हति अतः साधुरयं समत्वेन भयादुपस्थिताद्विशेषेण मुच्यते एतावता कृत्रिमं भगवत्त्वं ज्ञातमिति ॥ ३१ ॥

एवं ज्ञाननिष्ठैः निर्णयः कृतः कर्मनिष्ठानां निर्णयमाह–किं नस्तपश्चीर्णमिति । पूर्वजन्मन्यस्माभिः सर्वैरेव किञ्चित् तपश्चीर्णं येन तपसा एतादृशो बालकः निधिरूपः अस्माकं स्थाने तिष्ठति एवं राजसानां सिद्धान्तः सात्त्विकानामाह–अधोक्षजार्चनमिति । न हि तपसाऽलौकिकं प्राप्यते अयं च बालको लोकोत्तरः अतः अयं विष्णुप्रसादादेव प्राप्यते विष्णुश्च पूजितः प्रसन्नो भवति तत्रापि साधारणरूपेण पूजितः साधारणमेव फलं प्रयच्छति अस्माभिस्त्वलौकिकप्रकारेण पूजितः तदाह अधोक्षजेति अधः अक्षजं ज्ञानं यस्मात् शास्त्रदृष्ट्या शोधितैरश्चनं नेन्द्रियग्रहणार्थं तामसानां निर्णयमाह–पूर्तेष्टदत्तमिति । पूर्तं खातादि इष्टं यागादि दत्तं तुलापुरुषदानादि लौकिकप्रकारा एते अतो बहिर्मुखानामेव निर्णयः अन्तर्मुखानामाह–उत भूतसौहृदामिति । सर्वेषु भूतेषु भगवानस्तीति तेषु दानसन्मानादिभिः सौहृदं कर्त्तव्यं तत् केवलं ज्ञानमार्गं भविष्यति तद्व्यावृत्त्यर्थम् उतेत्युक्तं भूतसौहृदमपि पूर्वोक्तेन सह लोकधर्मवर्णाश्रमेण कर्माणि कुर्वन् लोकसौहृदमपि करोति तस्यैव फलम् इति अन्तर्मुखानां कर्मिणां सिद्धान्तः एवं कल्पनायां हेतुमाह, यदिति । कर्मिणां लौकिकत्वादमङ्गलवचनं लोकोत्तरा न निन्दितं पुनरेव पूर्ववत् बालकोऽपि दिष्ट्या स्वभाग्येनापि स्वबन्धून् स्वस्यपित्रादीन् प्रकर्षेण नयन् सर्वलोकप्रसिद्धान् कुर्वन् उपस्थित इति यत् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च निष्पन्नस्त्रीयनभोविहाराभिलाषो निष्पादितस्वर्गपुरपुरन्ध्रीकर्त्तृकस्वदर्शनाभिलाषश्च बालकृष्णस्तं हन्तुं प्रवृत्ते इत्याह–तमिति । आत्मनः सकाशादत्यतिगौरवत्वेन तम् अश्मन्तं अश्मवन्तं पर्वतं मन्यमानः उरस्थं निःसारयितुं नाशकत् तत्र हेतुः गले गृहीतस्तेनैव बाल्यलीलया स्वपतनभयादिति भावः अश्मन्तमिति "युवोरनाकौ" ( ७ । १ । १ ) इति वलोपश्छान्दसः अश्मानमिति पाठे मतुल्लोपश्च अश्मनामिति पाठे आश्मायां शिलासमुद्गिवेत्यर्थः ॥ २९ ॥

तस्योरसि लम्बमानं कृष्णमादाय मात्रे प्रतिहृत्य विस्मिता बभूवुः उरसीति कृष्णस्य व्यथाभावः सूचितः । असुरस्य पृष्ठप्रदेशे एव शिलापतितत्वात् विहायसा गगनमार्गेण पुरुषादेन मनुष्यभक्षकेण नीतम् अत एव मृत्योर्मुखादिव मुक्तम् ॥ ३० ॥

एवं बालत्वेपि महासुरहन्तृत्वलक्षणेनैश्वर्येण प्रकटीभूतेनापि तेषां नन्दादीनां वात्सल्यं न जहास प्रत्युतावर्द्धतेत्याह—अहो बतेति त्रिभिः । अद्भुतादपि यदद्भुतं तस्मादप्यत्यद्भुतमेतत् यदेष बालो निवृत्तिम् अमङ्गलव्यञ्जकत्वान्मरणनाशादिशब्देन वक्तुमनर्हां दशां प्रापितोऽपि अभ्यगात् पुनर्बन्धूनामभिमुखं प्राप्तः कोऽत्र विस्मयो युज्यत एवेति तेष्वेव मध्ये केचिदाहुः, हिंस्र इति । स्वपापेन निरपराधनरबालकहरणलक्षणेन साधुर्बालकः समत्वेन बालत्वादेव शत्रुमित्रादिषु तुल्यबुद्धित्वेन ॥ ३१ ॥

श्रीनन्दादयस्तु यद्यस्य बालस्यामङ्गलमभविष्यत्तदा सर्वे वयमभविष्यामेत्यतोऽस्माकमेवैतद्बहुतरसुकृतफलमित्याहुः–किमिति चीर्णं कृतं पूर्वं बाल्यादिनिर्माणम् इष्टं पञ्चयज्ञादि यत् यस्मात् नः आदेः प्रयाणं कुर्वन् सृजन् जीवयन्निति यावत् प्रयाणयन्तं कुर्वन्निति वा ॥ ३२—३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तं तृणावर्त्तं शिलायां पतितं ददृशुः ॥ २९ ॥

कृष्णं च तस्योरसि लम्बमानं आदाय मात्रे प्रतिहृत्य सगर्वं विस्मिता बभूवुः ॥ ३० ॥

निवृत्तिमदर्शनं गमितो नीतः ॥ ३१ ॥

किं नः अपि नोऽस्माभिश्चीर्णं कृतम् यत् यस्मात् नः आदेः स्वबन्धून् प्रयायन् हर्षयन् ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

### भाषा टीका ।

जैसें महादेवजी के बाणकों मारयो त्रिपुरासुर देख

दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने ।
वसुदेववचो भूयो मानयामास विस्मितः ॥ ३३ ॥
एकदाऽर्भकमादाय स्वाङ्कमारोप्य भामिनी ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ ३४ ॥
पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ।
मुखं लालयती राजन् ! जृम्भतो ददृशे [(१)]इदम् ॥ ३५ ॥

भाषा टीका ।

गिर्यो होय तारीत सों आकाश तें शिलापै गिर्यो और अङ्ग जाको बिखर गयो, ऐसे वा कराल कुरूप दैत्य कूं सगरी स्त्री जुरि के देखत भईं ॥ २९ ॥

मनुष्यन को खायवे वारो राक्षस आकाश में जाकों ले गयो, बालकियां की मृत्युके मुख तें बच्यो, और वाई राक्षस की छाती पै लटक्यो और बडे आनन्द सें किलक रह्यो, ऐसे वा कन्हुआं [ कृष्ण ] को गोपीन ने बडी जल्दी वाकी छातीपै तें उठाय कें यशोदा कों दीनो, और बडो विस्मय कर्यो, और नन्दादिक गोप और सिगरी गोपी अपने मनोरथ कों पाय कें सब बडे हर्ष को प्राप्त भये ॥ ३० ॥

और सब कहन लगे, कि—अहो ! ये बडोई आश्चर्य भयो, देखो या बालक के मारिबे में राक्षस ने कछु कसर नहीं राखी, पर तौभी हरि की कृपा सों ये तौ फिर भी आय गयो । ठीकै तो है, हिंसा करन वारो खल अपने पाप सों आपही मार्यो गयो, और हमारो बालक तौ बिचारो साधु हो तासों भय ते छूट गयो । साधु जन तौ समताई करि कें भय सें छूट जांय हैं ॥ ३१ ॥

भलां देखो हमने कौन तप कियो, है कि—भगवान् की पूजा करी हैं, अथवा कुआ बाउरी तलाब बनवाये हैं, कि यज्ञ करे है, कि दान दिये है, अथवा प्राणीन तें स्नेह कर्यो है, जिन पुण्यन के प्रताप तें मृत्यु कों प्राप्त होय केऊं ये बालक अपने बन्धून कों आनन्द देवे कूं फिर आय गयो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तृणावर्त्तागमे दृष्टगौरवाशङ्किनीं प्रसूम् ।
बोधयन् दर्शयमास जृम्भमाणो मुखे जगत् ॥
पीतप्रायस्य पीतः प्रायः स्तनो येन तस्य ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सामान्यतः सर्वेषां श्रीभगवति स्नेहभरो दर्शितः विशेषतः श्रीवल्लवेन्द्रस्योत्पातनिर्द्धारेण पुनस्तच्छङ्कयाऽसौ व्यवर्द्धततरामित्याशयेनाह-दृष्ट्वेति बहुश इत्यनेनान्यान्यपि श्रीभगवतस्तादृशानि चरितानि सूचितानि तानि च श्रीमाथुरलोकप्रसिद्धानि श्रीधराख्यच्छद्मविप्राभिभवचातुरीमयादीनि श्रीमुनीन्द्रेण राज्ञो ऽश्रु... श्रुतत्वेनानुक्तान्यपि ज्ञेयानि बृहद्वन एव नान्यत्रेति विशेषशङ्का... दानम् । एवं व्रजानन्दात् पृथिवीपालनाच्च नन्दगोप इति श्लेषः ॥

रजस्तमःस्वभावं मदूभ्रामकं गुरुमानिनं निष्पिशिजान् कि... र्ष्मीति तृणावर्त्तदुहानपि अथ पूर्वपूर्वभयात् पुनर्गा... शङ्कया शुष्यन्तीमिव तां सान्त्वयितुं लीलाशक्तिरेव त... कांश्चत् प्रभावं दर्शयति-एकदेत्यादिना । आदाय पर्य... कायां शयानं तं ततो गृहीत्वा भूमौ क्रीडन्तं ततो वा ... गृहीत्वा भाविनी स्वभावतः सद्भावयुक्ताः विशेषतस्तत्र पुत्रस्नेहरसेन परिप्लुताऽत्यन्तं निमग्ना अत एव प्रस्नु... प्रकर्षेण वस्त्राद्यार्द्रीकरणेन सदा क्षरत्स्तन्यम् ॥ ३४ ॥

पीतप्रायस्येति पीता गावो विभक्ता भ्रातर इति... कर्त्तरि क्तः भावक्तान्ताद् पीतं पानं प्रायमीपदासिद्धं यस्य वा टीकामते स्तनशब्दलोपोऽत्रार्ष एव जननीति सुतस्य च स्नेहभरं बोधयति तत्र च रुचिरस्मित इति परमसौन्द... अतो लालयन्ती जृम्भमाणस्य तल्लालनजनितानन्दभरालस्य जृम्भां कुर्वतस्ततः मुखे मुखविवरान्तः द्वितीयान्तपाठे ... लालयन्ती तद्द्वारा जठरे ददर्शेति ज्ञेयं "कृत्स्नस्य चान्त... जनन्या" इति ब्रह्मस्तुतेः सप्तम्यन्तः पाठ एव तेषां स... अग्रेऽपि मुखे दर्शनस्य व्याख्यानादिदमस्माभिर्दृश्यते ... विश्वं नरवन्यद् तस्य विग्रहस्याचिन्त्यशक्त्या विभुत्वादि... भावः अत एव तत्र विश्वस्य सम्पर्को नास्ति तदुक्तं श्रीभग... वुपनिषत्सु । "मया ततमिदं सर्वं जगदव्यक्त मूर्तिना । ... स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ नच मत्स्थ... भूतानि पश्य मे योगमैश्वरम्" इति जगदुदरस्थन्तु तदंशांश... दकशायिन एव तच्च प्रलयकाले सूक्ष्मतयैवेति ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंविधान्यन्यान्यप्यद्भुतानि बहुशो बृहद्वने बृहति अ... वने दृष्ट्वा नन्दगोपो विस्मितः पुनर्वसुदेवस्य वचो "नेह ... बहुदिनं सन्त्युत्पाताश्च गोकुले" इत्येतद्वचो मानयामास ... मेवाभूदित्यमन्यत ॥ ३३ ॥

अथ भगवान् तृणावर्तागमे प्रदर्शितस्य गरिम्णो ... दर्शयामासेत्याह-एकदेति । प्रस्नुतं कर्त्तरिक्तः स्तनं प्रस्नु... पाययामास कथम्भूता स्नेहेन परिप्लुता परितो व्याप्ता ॥ ३४ ॥

(१) जगत् इति वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे राजन् ! पीतप्रायस्य पीतप्रायस्तनस्य कृतस्तन्यपानस्येत्यर्थः । पीतमिति भावे क्तः पीतं पानमस्यास्तीति पीतम् अर्श आदित्वान्मत्वर्थीयोऽच् प्रत्ययः । यद्वा भुक्ता ब्राह्मणा इतिवत्कर्तरि-क्तः प्रायशब्दः सदृशवाची सम्यक्पानानतिरिक्तार्थपरः तस्य सुतस्य रुचिरं सुन्दरं स्मितं यस्मिंस्तन्मुखं लालयन्ती चुम्बनादिना लालनं कुर्वन्ती जृम्भतः आस्यं विवृण्वतः सुतस्य मुखे इदं वक्ष्यमाणं साक्षात्मकं जगद्ददर्श मुख इति पाठान्तरं तदा रुचिरस्मितं सुतं लालयन्ती पीतप्रायस्य जृम्भतः मुखं विवृण्वतः सुतस्य मुखे इदं जगद्ददर्श इत्यन्वयः ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भामिनी तेजस्विनी ॥ ३४ ॥

इदं वक्ष्यमाणं ददर्श आस्य इति शेषः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पीवेति । पीता गावो विभक्ता भ्रातर इत्यादिप्रयोगदर्शनात् कर्त्तरि क्तः आगतप्राय इतिवत् इदं यदस्माभिर्दृश्यते तदेव नान्यदित्यचिन्त्यशक्त्या तस्य विग्रहस्य विभुत्वं दर्शितं जगदुदरत्वं प्रलये तदंशांशस्य गर्भोदशायिन इत्यर्थः ॥ ३५—३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वेषां निर्णय उक्तः नन्दस्तु उत्पातसम्भवे हेत्वन्तरं ज्ञातवान् नान्य इति विशेषमाह—दृष्ट्वेति । बहुशोऽद्भुतानि दृष्ट्वा वसुदेववचो मानयामासेति सम्बन्धः पूतनाशकटतृणावर्ताः त्रयः प्रसिद्धाः अन्येऽप्येवंविधाः अतश्च सर्वाण्येवाद्भुतानि रसात्मकविस्मारकाणि नन्दगोप इति सम्पूर्णनामज्ञानक्रियासमन्वितमनाश्चर्ये हेतुः पारमेष्ठ्यपरिज्ञानात् बृहद्वन एवैतज्जायत इति भूयः वसुदेववचो मानयामास स हि ज्ञान एव महत्त्वं मन्यते न तु क्रियायां भाव्यर्थस्यैव तादृशत्वात् किमाश्चर्यं यद्यप्यलौकिकं स्यात् पूर्वं केनापि न ज्ञायते ज्योतिःशास्त्रादौ न प्रसिद्धमिति तस्य ज्ञानमेव स्मृत्वा विस्मितश्च जातः॥३३॥

एवमेकमुपाख्यानं पञ्चानां मध्ये निरूपितं द्वितीयमाह—एकदेति चतुर्भिः ।

"भक्तिर्ज्ञानं तथा पूर्वा विस्मयश्च ततः परम् ।
जातो लौकिकभावस्य दृढत्वादिति रूप्यते" ॥

आदौ स्वतन्त्रा पूतना निवर्तिता ततः परतन्त्रोऽपि शकटः ततः सर्वमारकः हेत्वन्तरं च न प्रदर्शितं तथाप्यसम्भावनाया दृढत्वात् न दृढा भगवत्यासक्तिर्भविष्यतीति असम्भावनानिवृत्त्यर्थं स्वस्मिन्नेव तादृशं रूपं प्रदर्शितवान् भगवान् स्वनिष्ठधर्मपरिज्ञाने भक्तिरेव हेतुरिति प्रथमतो भक्तिमाह—एकदा गृहकार्याविष्टत्वाभावदशायां भगवदेकपरवशचित्तदशायां वा अर्भकं बालकं कलवाक्यं च वर्णाधिकम् आदाय क्रीडन्तं बलात् स्वय गृहीत्वा स्वस्याङ्कं समारोप्य सर्वोत्तमासनं दत्त्वा भामिनी परमसौभाग्यवती सर्वाभरणभूषितं च विधाय भामिनी नाम युक्ता च तेन भगिन्या अपि सौभाग्यं द्योतितम् एवं परम्परा सौभाग्यवती स्वतः कामवशाद्योत्तमा प्रकर्षेण स्नुतं स्नेहवशात्क्षिरितं स्नेहेन च परिप्लुता अन्तर्बहिर्व्याप्ता जातस्नेहकार्या च स्तनं पाययामास—प्रयतात्मत्वं भामिनीपदेनोक्तं प्रशब्देन शक्त्युपहृतत्वमुक्तं स्नेहपरिप्लुत्वात् भक्त्या दानमुक्तम् अन्तःस्थित बालानामल्पतृप्तत्वात् स्वतः मपानं अपेक्षाया अपि विद्यमानत्वादन्यप्रेरणाया पानम् अत एव भगवतो न सर्वपानम् अधिकपाने बालानामुपद्रवो भवतीति प्रयोजककर्तृव्यापारनिवृत्त्यर्थं भक्तिप्रचुरां कृत्वा स्वधर्मं दर्शितवान् "ये यथा मां प्रपद्यन्ते" इति न्यायेन भक्त्युद्धततद्धर्म गृहीत्वा कृपया फलरूपं स्वधर्मज्ञानं सम्पादयति ॥ ३४ ॥

अतो दानाभिनिवेशं परित्यज्य कौतुकाभिनिविष्टा भगवद्धर्मपरा प्रदर्शितं धर्मं दृष्टवतीत्याह—पीतप्रायस्येति । सर्वात्मना भगवता न पीतमेव आपाततः पीतं तथाकरणे हेतुर्जननीति जननबुद्धिः स्वेनैवोत्पादितेति भगवच्चरित्रं मा पूर्वोक्तभक्तियुक्ता कार्यार्थं भक्तेः पुनरनुसन्धानं कार्यदशायां सद्भावज्ञापनाय तस्येति तिरोधानार्थमागतस्य रुचिरं स्मितं तस्य मुखस्य मोहसहितं स्नेहं जनयतीति परमसौन्दर्यं भावयन्ती तादृशं मुखं लालयन्ती जाता राजन्निति सम्बोधनं राजलीलायामस्यानुभवः सिद्ध इत्यग्रे वक्ष्यमाणस्य अपूर्वत्वात् सावधानतया स्थातव्यमिति ज्ञापनार्थम् अभिप्रायज्ञानक्रियारूपे ते यशोदायां योजयितुं जृम्भा भगवतः अन्यथा द्रष्टुं सा न शक्नुयात् भिन्नं जगन्मायिकं वा तत्र दृष्टवतीति पक्षं व्यावर्तयितुं तुशब्दः इदं जगत् जृम्भतो भगवतः स्वतः प्रथमामुखद्वारा भगवति ददर्श इदं ब्रह्माण्डमात्रस्यैव प्रदर्शनम् अग्रेऽसम्यगधिकारे सिद्धे सर्वस्यापि दर्शनं वक्ष्यति "द्युभ्वाद्यायतनं स्वशब्दात्" । १ । ३ । १ । इत्यधिकरणे प्रपञ्चाधारत्वे ब्रह्मत्वं सिद्धं तदाचिन्त्यानन्तशक्तिमति सर्वं सम्भविष्यतीति आश्चर्यं विहाय भगवत्परं चित्तं भवति ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पीतप्रायस्येति । पीता गावो विभक्ता भ्रातर इतिवत्कर्त्तरि-क्तः स्तनं पीतवत्प्रायस्येत्यर्थः । मुखे सुतनिघराज्ञः द्वितीयान्तपाठे मुखं लालयन्ती तद्द्वारा जठरे ददर्शेति, द्वयं "कृत्स्नस्य चान्तर्जठरे जनन्या" इति ब्रह्मस्तुतेः इदमस्मदृश्यं विश्वमेव तदीयविग्रहस्य मातृक्रोडगतस्याप्यचिन्त्यशक्त्या विभुत्वेन सर्वजगदधिष्ठानत्वात् जृम्भत इति जृम्भणोचितक्षणेऽपि सविशेषसर्वविश्वदर्शनमचिन्त्यशक्त्यैव निष्पादितम् ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदं विश्वम् ॥ ३५ ॥

---

खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।
द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ॥ ३६ ॥
सा वीक्ष्य विश्वं सहसा राजन् ! सञ्जातवेपथुः ।
संमील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे शकटभञ्जन तृणावर्त्तवधो नाम
सप्तमोऽध्यायः ॥ ७ ॥

भाषा टीका ।

श्रीनन्दराय जी ऐसे २ भौत से अर्जुन उत्पातन कों महावन में देखिकें बड़े विस्मयकों प्राप्त होयकें फिर वसुदेवजी के वचन की सुध करत भये ॥ ३३ ॥

ॐ विश्वरूपप्रदर्शकाय नमः ॥

अब यहां ते आगे चार श्लोकन में अध्याय समाप्ति तक भैया कों विश्वरूप दिखायवे की लीला कहें हैं ॥ एक समैं श्रीयशोदाजी अपने लाला कूं गोद में बैठारिकें स्नेह में डूबि कें वात्सल्य के मारे दुग्धतें स्रवते स्तन को पान करावती हीं ॥ ३४ ॥

श्रीकृष्ण प्राय करकें पीचुकेहे कछुक पीवे कों रह्यो तब यशोदा अपने लाला के बालकपने की रुचिर मुस्क्यांन वारे मुख में ठोडीपे अँगुरिया लगायकें लालन करन लगीं, इतने में कृष्ण को जभाई जो आई सो यशोदाजी कों कृष्ण के मुख में ये सब दीसवे लग्यो ॥ ३५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नगान् गिरींस्तद्दुहितॄर्नदीः ॥ ३६ ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इदन्तापरामृष्टमेवाह--खमिति । अन्तरिक्षं रोदसी दिवं भूमिं च एवं भुवःस्वर्भूरितिलोकत्रयम् ॥ ३६ ॥

वीक्ष्य साक्षाद्दृष्ट्वा सहसा अकस्मात् युगपच्चेत्यमरः । विश्वम् अशेषं जगद्देशेष्वनुक्तमपि तत्कारणादिकं संगृहीतं तच्चाग्रे पुनर्विश्वदर्शने वैकारिकाणीत्यादिना व्यञ्जयितव्यं सञ्जातवेपथुः परमाद्भुतत्वेन उत्पातशङ्कया वा नेत्रे संमील्य तद्दर्शनाय निजाक्षिणी मुद्रयित्वा अनेन निजाक्ष्यां बहिर्नेत्राभ्यामेवैक्यं तत्तद्दर्शनं बोधितं न च दिव्यदृष्ट्यादिप्राप्तिः प्रत्युत ततः कृष्णप्रेमानन्दलक्ष्म्या एव दासीयमाना काचिदियमपि शक्ति-स्तस्यां वर्त्तत इति लक्ष्यते नेत्रनिमीलनादनादृतैव सेति तत्र तदुक्तं श्रीनारदपञ्चरात्रे—

"हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः ।
भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रताः" ॥ इति

तथापि तदानीमुद्भूतत्वात्ताहशलीलोदयावसरे स्वदास्यं सफलयन्ती विस्मयद्वारा तामाश्मेश्वरीमुल्लासयितुमेव मनुवर्त्त इति च गम्यते मृगशावाक्षीति मुनेः श्रीकृष्णात्मा स्वत्वमय विस्मयशोभाविशेषविरोचमानतन्मातृलोचनसहजसौन्दर्यस्फुर-णोल्लासमयं वचनम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नगान् पर्वतान् तद्दुहितॄः नदीः ॥ ३६—३७ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्दृष्टजगदन्तर्भूतपदार्थानाह—खमिति । खमाकाशं रोदसी द्यावा पृथिव्यर्णकमव्ययं ज्योतिरनीकं शुक्राङ्गारकादिज्योतिश्चक्रं सूर्या-दीनामपि इतरेतरयोगद्वन्द्वः नगान् गिरीन् तद्दुहितॄर्नदीः स्थावरजङ्गमात्मकानि भूतानि तानि च ददर्श इत्यन्वयः ॥ ३६ ॥

हे राजन् ! सा मृगशावाक्षी यशोदा सुतस्य मुखं तानि

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

युक्तं विश्वमवलोक्य सञ्जातो वेपथुः शरीरकम्पो यस्यास्तथाभूता स्वकीये नेत्रे निमील्य विस्मिता बभूव ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रोदसी द्यावापृथिव्यौ ज्योतिरनीकं ज्योतिर्गणं तेषां पर्वतानां दुहितॄः नदीः ॥ ३६ ॥

मृगशावाक्षी मृगबालाक्षी ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तमोऽध्यायः ॥ ७ ॥
( विजयध्वजतीर्थरीत्याऽष्टमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तमोऽध्यायः ॥ ७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र दृष्टं भ्रमव्यावृत्त्यर्थं गणयति—खमिति । आदौ खमाकाशं विस्तीर्णं ततो रोदसी द्यावापृथिव्यौ तत्तु तदाधारं तथा ज्योतिरनीकं ज्योतिश्चक्रं द्यावापृथिव्याधारं दश दिशस्तत एव विभक्ताः सूर्येन्दुवह्नयः त्रिविधं ज्योतिः श्वसनो वायुः अम्बुधयः समुद्राः भूम्याकाशौ उक्तावेव एवं पञ्चभूतान्युक्तानि भूमिभेदाः द्वीपादयः अलौकिकज्ञानार्थं सप्तद्वीपाः नगाः पर्वताः तद्वर्षावर्षकाः तद्वान्तरज्ञानहेतवः तद्दुहितरो नद्यः वनानि तद्वान्तरभेदाः अल्पीयांसोऽपि ततोऽपि सूक्ष्मा दृष्टा इत्याह—भूतानीति । यानि प्रसिद्धान्यपि यथा कल्पवृक्षाः यथा नारदादयः ब्रह्मादयो वा आधाराधेयभावस्तु तस्या न प्रतीतः अकस्मात् जृम्भानन्तरमेव सर्वं दृष्टम् अग्नीषोमात्मकत्वाच्च जगतः ॥ ३६ ॥

अद्यापि तस्यास्तथाधिकारो न जात इति । अधिकारार्थं प्रदर्श्य पुनर्नेत्रनिमीलनं तत्तिरोहितं कृत्वा विस्मयाविष्टेव भगवता कृतेत्याह—सा वीक्ष्येति । विश्वं तया पूर्वं श्रुतमिदानीं दृष्टं सहसा गमनादिकारणव्यतिरेकेणैव न जानाति भगवता कथं सम्पादितमिति "तस्माज्जृम्भमाणादग्नीषोमौ निरक्रामताम्" इति श्रुतेः । तिरोभावप्रस्तावात् सिद्धवत्कारेणोक्तं सहसेति अकस्मात् तस्मिन् दृष्टे सम्यक् जातो वेपथुः कम्पो यस्याः ततः समीचीनमेव विश्वमधिकाराभावात् भयानकं जातं ततो नेत्रे सम्मील्य तत्र स्वभावो हेतुर्बलिष्ठ इति दृष्टान्तमिवाह—मृगशावदृक्षिणी यस्याः मृग एव भीरुः ततोऽपि शावो बालकः सौन्दर्यं चाक्ष्णोर्निरूपितं भगवद्दर्शनयोग्यत्वाय ततोऽन्तःकरणे विस्मय एवोत्पन्न इत्याह, सुविस्मिता आसीदिति सुतरां विस्मिता आसीत् पूर्वं कार्यदर्शनापेक्षयापि कारणे दृष्टे अधिको विस्मयो जात इत्यर्थः—

"पूतनासुपयःपाता बालदुःखनिवारकः ।
प्रपञ्चस्मृतिहन्ता च गोकुले राजते हरिः ॥
स्वासक्त्यर्थं शकटभित् तृणावर्तविनाशकः ।
सामर्थ्यज्ञापनार्थाय विश्वाधारः प्रसीदतु ॥ ३७ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
सप्तमाध्यायविवरणम् ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नगान् द्वीपाख्याकरान् जम्बाविवृक्षान् पर्वतांश्च तद्दुहितॄः नदीः ॥ ३६ ॥

सहसा अकस्मात् युगपच्च सञ्जातवेपथुरुत्पातशङ्कया सम्मील्येति श्रीविष्णुध्यानार्थं भगवन्नारायण रक्षरक्ष मत्सुतमस्मादुत्पातात् इति वित्रस्तदृष्टित्वान्मृगशावाक्षी "पूतनादिवधैश्वर्यं न प्रेम समचूकुचत् । प्रत्युतावर्द्धयत्तस्मिन्नरिष्टप्रतिशङ्कया ॥ नन्दभाग्यादिहेतूनां तत्राभूद्यदि कल्पनम् । ततो निर्हेतुरैश्वर्यमैश्वरी शक्तिरागता । विभुत्वदर्शिका कृष्णदेहस्य स्फुटमेव हि ॥ तथापि विस्मितैवासीन्मत्पुत्रस्येदमद्य किम् ॥ नन्वैश्वर्यज्ञानसम्भ्रान्त्या वात्सल्यं शिथिलाभवत् ॥ न चात्र सम्भवेत् किञ्चित् पूर्ववद्धेतुकल्पनम् ॥ तथापि वस्तुनो गाढप्रेमोर्मिमयमेव हि ॥ इति निष्कम्पताप्रेम्णाः ख्यापितास्याम्मुहुर्मुहुः ॥ एवं च—

"प्रेमदेव्याः परीक्षार्थमागच्छन्त्यन्तरान्तरा ।
शक्तिरेषा हरेः किन्तु तया दासी कृता भवेत्" ॥

इति । ॥ ३७ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
दशमे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दृष्टमाह--खमिति ॥ ३६ ॥३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तमऽध्यायार्थप्रकाशः ॥ ७ ॥

---

भाषा टीका ।

आकाश, द्यावापृथिवी, तारागण, दिशा, सूर्य, चन्द्र, अग्नि, पवन, समुद्र, द्वीप, पर्वत, नदीं, वन, और सब स्थावर जंगम भूत प्राणिन कों कृष्ण के मुख में देखत भई ॥ ३६ ॥

मृग शिशु सदृश नेत्र वारी भोरी यशोदाजी अपने लाला के मुख में ये सब विश्व देखिकें, हे राजन् ! कंपित होय गई और नेत्रन कों मूदकें बड़े विस्मय कों प्राप्त होत भई जान वे की बात है,, कि - श्रीहरिः सदा सर्वदाही अखन्ड ऐश्वर्य सों परिपूर्ण हैं ता सों ये विश्वरूप दर्शन कछू अपनी माता कों ऐश्वर्य दिखायवे कों नहीं करायो। तथा पि वो ऐश्वर्य जब आप में नित्य है तब स्वभाव ही सों काहुसमय देखपरै है ऐसेई और हू आगे मृद्भक्षण के प्रसङ्ग में विश्वरूप को यशोदा कों दर्शन भयो है ॥ अथवा श्री व्रजराज को ऐसो दृढ वात्सल्य है कि- विश्वरूपदेखिवेते हूं अन्यथा नहीं भयो या बात के जनायवे कों दिखा यो होय ॥ ३७ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें सातमें अध्याय की

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता ॥ ७ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥



# ॥ अष्टमोऽध्यायः ॥

—०:०:०—

## श्रीशुक उवाच ।

गर्गः पुरोहितो राजन् ! यदूनां सुमहातपाः ।
व्रजं जगाम नन्दस्य वसुदेवप्रचोदितः ॥ १ ॥
तं दृष्ट्वा परमप्रीतः प्रत्युत्थाय कृताञ्जलिः ।
आनर्चाधोक्षजधिया प्रणिपातपुरस्सरम् ॥ २ ॥
सूपविष्टं कृतातिथ्यं गिरा सूनृतया मुनिम् ।
नन्दयित्वाऽब्रवीद्ब्रह्मन् पूर्णस्य करवाम किम् ॥ ३ ॥
महद्विचलनं नृणां गृहिणां दीनचेतसाम् ।
निःश्रेयसाय भगवन् ! कल्पते नान्यथा क्वचित् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टमे नामकर्मास्य बालक्रीडाकुतूहले ।
मृद्भक्षणाभियोगे च विश्वरूपं निरूप्यते ॥
विश्वरूपादिबालस्य निशम्याशङ्किनः पितुः ।
नामकृद्गर्गवाक्येन निजं तत्त्वमसूसुचत् ॥

॥ १—३ ॥

पूर्णस्तेत्कथं धनिनां गृहमागतस्तत्राह—महद्विचलनमिति । महतां स्वाश्रमादन्यत्र विचलनं न स्वार्थं किन्तु गृहिणां मङ्गलाय ननु तर्हि त एव महद्दर्शनार्थं किमिति नागच्छन्ति तत्राह दीनचेतसां कृपणानां क्षणमपि गृहं त्यक्तुमशक्नुवतामित्यर्थः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमैश्वर्यसम्वलितं बाल्यचरितमसुरमारणप्रसङ्गेन लीलान्तरव्यन्तरितमप्युक्त्वा पुनः परावृत्य केवलं बाल्यस्वाभाविकं परममनोहरं यथाक्रमं कथयन्नादौ दिगविशिष्टशताह इति ज्योतिःशास्त्राभिप्रायेण प्रायः शततमदिने नामकरणमाह—गर्ग इत्यादिना जना इत्यन्तेन । हे राजन्निति पूर्वलीलाश्रवणसुखाविष्टं राजानं कथान्तरेऽवधापयति, सुमहातपाः अनिर्वचनीयभाग्यवान् येन श्रीवसुदेवस्य श्रीनन्दस्य श्रीकृष्णस्य चैवं परमात्मीयतां प्राप्त इति भावः ॥ १ ॥

आनर्च नन्द इति शेषः । अधोक्षजधिया परमेश्वर इव भक्त्येत्यर्थः ॥ २ ॥

सूपविष्टं पादप्रक्षालनादिना पथि श्रमापनोदनेन सदासने सुखोपविष्टं कृतम् आतिथ्यं मधुपर्कार्घ्यपर्यालक्षणं यस्य तं सूनृतया मधुरस्तोत्ररूपया मुनिं नन्दाभिप्रेतश्रवणाय प्राक् कृतमौनमित्यर्थः । पूर्णस्य श्रीभगवद्भक्त्या सिद्धसर्वार्थस्य तत्र हेतुः ब्रह्मन् हे सर्ववेदार्थज्ञानेन बृहत्तम ! "भगवान् ब्रह्म कार्त्स्न्येन" इत्यादिना "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिना च तद्भक्तावेव तत्पर्यवसानात् ॥ ३ ॥

महतां श्रीभगवत्सेवादिनिष्ठत्वाद्विशेषेण चलनं स्वस्थानादन्यत्र दूरे गमनं नृणामिति स्वभावत ऐहिकपारलौकिककर्मपराणामित्यर्थः । तत्रापि गृहिणां जायापुत्रादीनामपि तत्तद्धितव्यग्राणाम् अत एव दीनचेतसां निःश्रेयसाय सर्वमङ्गलाय भगवन् हे सर्वज्ञेत्यर्थः । प्रवृत्तिश्चेदित्यादिवचनादतो धिन्नानां अवच्छिन्नानाम् अस्मेषु मद्विधेषु कृपया स्वयमागमनमुचितमेवेति भावः । कल्पते घटते अन्यथा दीनजननिःश्रेयसार्थव्यतिरेकेण कदाचिदपि न घटते महतां निःश्रेयसस्वाभाव्यात् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥
तं गर्गं प्रीतः नन्दः सूनृतया मधुरया ॥ २ ॥ ३ ॥
महद्विचलनं महतामागमनम् ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ गर्गेण कृतसंस्कारस्य तत्सूचितमाहात्म्यस्य भगवतो मात्रे विश्वरूपप्रदर्शनं तद्विस्मापनादिरूपं च चरित्रमाहाएमे-गर्ग इति । गर्गः यदूनां पुरोहितोऽत एव वसुदेवेन प्रचोदितः नन्दस्य व्रजं जगाम ॥ १ ॥

अधोक्षजधिया भगवद्बुध्या नमस्कारपूर्वकं यथा तथा आनर्च अर्चितवान्नन्द इति शेषः ॥ २ ॥

अतिथये निवेदितभक्ष्यादिकमातिथ्यं तत्कृतं भुक्तं येन तं सूपविष्टं गर्ग सूनृतया मधुरया गिरा नन्दयित्वा हर्षयित्वा अब्रवीत्, उक्तिमेवाह-ब्रह्मन्नित्यादिना यदूनामहमित्यतः प्राक्तनेन। हे ब्रह्मन् ! पूर्णस्याऽऽप्तकामस्य तव किं करवाम न किमप्यपूर्व-प्रीतिकरं कर्म कर्तुं प्रभवामेत्यर्थः । यद्वा पूर्णस्य परब्रह्मानन्दा-नुभवपूर्णस्य तव किंकरवाम किङ्करा वयमित्यर्थः ॥ ३ ॥

पूर्णश्चेदहं कथं धनिनां गृहमागतः? तत्राह-महद्विचलनमिति। हे भगवन् महतां भवतां विचलनं स्वाश्रमादन्यत्र सञ्चारः विषया-दिसङ्गदीनचेतसां मादृशां गृहिणां निःश्रेयसायैव कल्पते अन्यथा तु कदाचिदपि न कल्पते नतु स्वार्थं किन्तु मादृशानु-ग्रहार्थमेवेत्यर्थः ॥ ४॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेस्तत्तदवतारे तत्तद्योनिर्विहितं कर्म कर्तव्यमिति देवजन-शिक्षणार्थं तद्विधीयतेऽस्मिन्नध्याये ॥ १ ॥

आनर्च पूजितवान् ॥ २ ॥

सूनृतया यथार्थमधुरया पूर्णस्य कृतकृत्यस्य ॥ ३ ॥

महतां पुंसां विचलनं गमनम् ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

अधोक्षजधिया तदधिष्ठानत्वेनाभेददृष्ट्या ॥ २-४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

येनैव तु चरित्रेण सत्त्वं शुद्ध्यति सर्वथा ।
सर्वस्य मूलं तदस्मात्तदष्टम उदीर्यते ॥
नामान्यत्र शोधकानि ततो रूपाण्यनेकशः ।
ज्ञानं भक्तिश्च भाग्यं च पञ्चार्थाः सत्त्वशोधकाः ॥
संस्कृतान्येव नामानि शोधकानीति संस्कृतिः ।
स्वेच्छालीलाविशिष्टं हि रूपमानन्दभावतः ॥
अन्येच्छया कृतान्यत्र चरित्राणि ततोऽन्यथा ।
ज्ञानमत्यन्ततो दृष्टं माहात्म्यज्ञानपूर्वकम् ॥
स्नेहश्चालौकिके तद्वत् हेतुश्च महतां कृपा ।
पूर्वस्मिन् हृदये सिद्धे स्वत एवाग्रिमं भवेत् ॥
तत्राङ्कुरितयं प्रोक्तं गुरुर्दुस्सङ्गवर्जनम् ।

विरोधे भगवदासक्तिसिद्ध्यर्थमन्तःकरणशुद्ध्यर्थं च भग-वतो नामकरणोत्सवमाह-गर्ग इत्येक विंशत्या । चिरकालो असंस्कृत एव तिष्ठत्विति स्वतो नामकरणं चिरकालातिक्र तथैव भगवत्प्रेरणात् कालस्य निमित्तत्वाभावान्न दोषः तत् ज्ञात्वा वसुदेवः स्वपुरोहितं प्रेषयामास क्षत्रिय पुरोधसैव संस्काराः क्रियन्त इति वसुदेवश्च आत्मानम् देविकं वसुदेवं नन्दे स्थापितवान् तेन बलभद्रभगवतोर पेण पुत्रत्वज्ञानादिकं न दोषाय भयनिवृत्त्यर्थं बाधनज्ञापं प्रसङ्गात् अन्यथा प्राकृतानामलौकिकबुद्धिरपि बाधिका नामकरणहेतुभूतो गर्गः समागत इत्याह, गर्ग इति। राज्ञ सम्बोधनं गुप्तचर्या राजपरिज्ञातेति ज्ञापनार्थं यदूनां पुरोहि वंशस्यैव स्वत एव हितकारी तेनान्तःकरणशुद्धिरुक्ता म नुभावत्वमाह, सुमहातपा इति । सुमहत् तपो यस्य सः स्मात् कार्यसिद्धिमुहूर्तं ज्ञात्वा नन्दस्य व्रजं जगाम अन्त स्थितः शुको वदति पितुराज्ञाव्यतिरेकेण पुत्रसंस्कारो न कर्त इति तदर्थमाह, वसुदेवप्रचोदित इति वसुदेवेन प्रकर्षेण चोदि प्रेरितः ॥ १ ॥

आगतस्य पुरस्कारमाह-तं दृष्ट्वेति । आकांक्षितपदार्थदर्शन परमप्रीतिः प्रत्युत्थानं धर्मनिष्ठताज्ञापनार्थं कृताञ्जलिः विन तेनान्तःकरणशुद्धिरुक्ता अतिथिरयमिति अत्र भगवत्पूजां कृत नित्याह-आनर्चेति । अतिथिबुद्ध्यापि पूज्यते हरिबुद्ध्याप्यर्चि आतिथ्येन तु विप्राग्र्यू इति वाक्यात् तदाह अधोक्षजधियं चतुर्भुजं भगवन्तं ज्ञात्वा आनर्च अर्चां कृतवान् तत्रापि भ मार्गानुसारेणेत्याह-प्रणिपातपुरःसरमिति । प्रणिपातः अपग दूरीकरणं तद्दास्यैव नित्यसेवकस्य सम्भवति नान्यस्य तदेव पु रस्सरमग्रे यथा भवति तथा ॥ २ ॥

प्रार्थनां वक्तुं किञ्चिदुक्तवानित्याह-सूपविष्टमिति । सुष्ठुयम क्लेशाभावेन वैयग्र्यं परित्यज्य उपविष्टं स्वकृत्यमाह-कृतमा यस्मै यस्मिन्निति वा अतिथेर्हितं भोजनान्तं कर्म तत् गृह कर्तव्यं भक्तिमार्गानुसारेण पूजितत्वात् अस्मिन् स्नेहे आर्वि जाते गद्गदया वाचया अब्रवीत् येन स सर्वमेव सामर्थ्यं वि युञ्जीत, कापट्याभावायाह-मुनिमिति । स हि सर्वज्ञस्तदेव जानाति अन्यत्र भगवद्बुद्ध्या स्तोत्रं क्रियमाणमारोपितवि भवतीति तन्निवृत्त्यर्थमाह, सूनृतयेति । स्तोत्रेणानन्दयित्वा स ज्ञात्वा अब्रवीत् ब्रह्मन्निति सम्बोधनं ब्राह्मणस्य तत्परमोन्न ख्यापनम् अयं ब्रह्मशब्दः परब्रह्मवाचक इति ख्यापयितुं पू करवाम किमित्याह वृहत्त्वाद्बृहणत्वाद्ब्रह्म दर्शादिषु किर्मारितं तादृशस्य अन्यैः कर्तव्य उपकारे देशाभावात् कृत्रिमत्व त्वात् तथापि सदृशव्याख्यानात् किं करवाम देहेन्द्रियान्तः णानां न्यूनत्वात् तत्रोपकारः कर्तुं शक्यते ब्रह्मभूतस्य तद निवृत्तस्तत्र कृतं न प्रयोजनाय भवतीति ॥ ३ ॥

एतावता तवास्माभिः काप्युपकारः कर्तुं न शक्यते त्वया त्वनुकम्पैव क्रियत इत्याह—महद्विचलनमिति । महा स्वतः कार्याभावात् न कुत्रापि गच्छन्ति तादृशाश्चेद् क दृच्छन्ति परोपकारार्थमेव गच्छन्तीति ज्ञातव्यम् विशेषेण च ग्रामान्तरगमनं न तु स्नानाद्यर्थं तत्र परार्थं विचार्य यस्यैव गृहे गच्छन्ति तस्यैव कार्यं साधयन्तीति निश्चि अन्यथा गृहासक्तचित्तानां बद्धानां तत्रापि परमदुःखेन

ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम् ।
प्रणीतं भवता येन पुमान् वेद परावरम् ॥ ५ ॥
त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान् कर्तुमर्हसि ।
बालयोरनयोर्नॄणां जन्मना ब्राह्मणो गुरुः ॥ ६ ॥
गर्ग उवाच ।
यदूनामहमाचार्यः ख्यातश्च भुवि सर्वतः ।
सुतं मया संस्कृतं ते मन्यते देवकीसुतम् ॥ ७ ॥
कंसः पापमतिः सख्यं तव चानकदुन्दुभेः ।
देवक्या अष्टमो गर्भो न स्त्रीभवितुमर्हति ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तानां दीनचेतसां गृहे न गच्छेयुः तेषां च मुख्यं प्रयोजनं तद्दुःखनिवृत्तिः ततः परमानन्दावाप्तिरिति अतो निःश्रेयसायैव गमनं तादृशफलदाने सामर्थ्यं भगवन्निति यद्यपि ते न प्रार्थयन्ति तथापि गमनमेव तथा कल्पते अन्यथैतत्फलानुद्देशे क्वचिदपि देशे गमनं न कल्पते ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टमे नामकरणं रिङ्गणं गव्यमोषणम् ।
मृद्भक्षणं विश्वरूपदर्शनं च निगद्यते ॥

असुरवधप्रसङ्गसङ्गत्यैव तृणावर्त्तवधमुक्त्वा तत्प्राचीनानि नामकरणादीनि चरितान्यनुस्मृत्य वक्तुमुपक्रमते–गर्गः पुरोहित इत्यादिना ॥ १—३ ॥

पूर्णस्य तव किं करवाम अपि तु न किमपि कर्त्तुमर्हाम इत्यर्थो वा किंशब्दस्य प्रश्नार्थत्वात् पूर्णस्य तव किमपेक्षितं वर्त्तते तत् ब्रूहि वयं करवामेत्यर्थो वा आद्ये मम त्वद्गृहागमनस्य वैयर्थ्यं द्वितीये पूर्णत्वस्येति चेन्मैवमुभयत्राप्युभयं न व्यर्थं प्रत्युताभिनन्दनीयत्वात् परमसार्थकं कृपापारवश्यात् सनत्कुमारवामनादीनां परमपूर्णानामपि पृथुबलिप्रभृतिगृहागमनस्य दृष्टत्वादित्याह–महतां स्वाश्रमादन्यत्र विचलनं गृहिणां निःश्रेयसाय परममङ्गलाय कल्पते समर्थं भवति तदेव तेषामपेक्षितमपीत्यर्थः। नृणामिति गृहिष्वपि मध्ये नृणामेव ननु देवादीनाम् एवं नृष्वपि मध्ये गृहिणामेव न तु ब्रह्मचार्यादीनां तत्रापि दीनं तृणादपि दुर्भगमन्यं चेतो येषामिति तेनैव महत्कृपाधिक्यलम्भनात् नतूत्तमम्मन्यकठोरवक्रचेतसाम् इत्यर्थः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टमे गर्गकृतं बालनामकरणं बालचरितं च वर्णयति–गर्ग इति ॥ १-३ ॥

महतां विशेषतः चलनं जनमुद्दिश्य गमनं निःश्रेयसाय भुक्तिमुक्तिरूपाय कल्याणाय ॥ ४ ॥

---

भाषा टीका ।

ॐ नन्दव्रजजनानन्दिने नमः ॥

अब श्रीशुकदेवजी नाम करण की लीला कहैं हैं

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन्! बडे तप करवे वारे यादवन के पुरोहित गर्गाचारी वसुदेवजी के पठाये तें नंद के गोकुल कूं जात भये ॥ १ ॥

नन्दरायजी उनकूं देखिकें बडे प्रसन्न भये और उठिकें हाथ जोरिकें प्रणाम पूर्वक भगवत्बुद्धि सों पूजन करत भये ॥ २ ॥

गर्ग मुनिकों सुन्दर आसन पै बैठारिकें उनको सत्कार कियो, और मीठी वाणी सों उनको अभिनन्दन करिकें नन्दरायजी ऐसें बोले, कि—हे ब्रह्मन्! आप सदृश महत्पुरुषों को आयबो तौ विचारे दीन चित्तवारे गृहस्थन के कल्याण करवेई कें तांई है, नहीं तौ आप सरीकेनकों कांहू कों कहूं जाय वो होयसके है ॥ ३ ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वया बालयोर्नामकरणादि करणीयमिति वक्तुं तस्य ज्ञानातिशयमाह–ज्योतिषामयनमिति । यदतीन्द्रियज्ञानसाधनं ज्योतिषामयनं तत्प्रतिपादकं ज्योतिःशास्त्रमित्यर्थः। तत्साक्षात् भवता प्रणीतं येनान्योऽपि पुमान् परावरं परं कारणं पूर्वजन्मकृतं कर्म अवरं कार्यं तस्मिन् जन्मनि भाविफलं तद्वेद उक्तं च जातके "यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिं व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव इति ॥ ५ ॥

विवक्षितमाह—त्वं हीति द्वेयो मन्त्रविच्च त्वमतो नाम-

### श्रीधरस्वामिकृतभावार्थदीपिका ।

करणादिसंस्कारान् कर्तुमर्हसीत्यर्थः । नन्वेतद्गुरुणा करणीयमिति चेत्तत्राह–नृणामिति ॥ ६ ॥

अत्युत्साहिनं नन्दं प्रति गुप्तमेतत्कार्यमित्यभिप्रायेण प्रत्याचक्षाण इवाह–यदूनामिति । भवतु तथापि त्वमत्रागत इति को विद्यादिति चेदत आह, ख्यातश्चेति । ततः किमत आह–सुतमिति । कंसो मन्यते मन्येत कल्पयेदित्यर्थः ॥ ७ ॥

ननु, यदुकुमार इति कथञ्चिज्जानातु तत्र च वसुदेवस्य सुतस्तत्रापि देवक्यां जात इति कुतो जानीयात्तत्राह–कंसः पापमतिरित्यादि ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ज्योतिषां ग्रहाणाम् अयनमिति करणे ल्युट् अयतेर्गत्यर्थतया ज्ञानार्थत्वात् करणस्यापि हेतुत्वात् तत्प्रतिपादकमित्येवार्थः । तच्च प्रणीतमित्युक्त्या ज्योतिःशास्त्रमित्येव पर्य्यवसीयते कीदृशं तत् ज्ञानं ज्ञानान्तरस्यापि साधनं तथा अतीन्द्रियम् इन्द्रियागोचरज्ञानजनकत्वात्तदतिक्रान्तं तदेवं विशेषणद्वयस्य अतीन्द्रियज्ञानसाधनमित्येव निर्गलितोर्थः । यद्वा, अयनं ज्ञानसाधनं शास्त्रमित्यर्थः । यत् यस्मात् तत् भवदादिषु विख्यातमतीन्द्रियं ज्ञानं स्यादिति परं पूर्वजन्मवृत्तम् अवरम् एतज्जन्मभाविफलं तद्वेदेति बालयोस्तत्तद्भवता कथनीयमिति भावः । तत्र पूर्वजन्मवृत्तजिज्ञासा तु पूर्वजन्मनि शुभावस्मिन्नपि शुभं भावीत्यभिप्रायेण अत एवाग्रे श्रीभगवतः पूर्ववृत्तकथनं पुमान् यः कश्चित्पुरुष इति तच्छास्त्रस्य सुगमत्वादिगुण उक्तः ॥ ५ ॥

हि यतो ब्रह्मविदां श्रेष्ठः महाभागवतोत्तमत्वात् अत एव संस्कारान् जात्यनुरूपान् जन्मना जात्यैव किंपुनर्ज्ञानादिनेत्यर्थः॥६॥

यदूनामिति त्रिकम । सर्वतः सर्वेषां पापमतिः दुष्टबुद्धिः अपि हन्तेति सम्भावनार्थस्यापिशब्दस्य यद्गीत्यर्थः । हन्ता देवकीपुत्रादिहननशीलः कंसो यदि प्राप्ताशङ्कः स्यात् तर्हि तत्संस्कारकर्मास्माकं महानेवान्यायरूपः स्यादित्यर्थः । टीकायां तु हन्ता गन्ता तदा सद्य एवेति व्याख्येयम् ॥ ७ ॥

तत्रेदं ज्ञेयम् विविक्ते नामकरणादिरसया भयमुत्पादयति वस्तुतस्तु गत्यर्थाद्धनधातोः गमनेन प्राप्स्यति आयास्यतीत्यर्थः अपीत्येवपाठो युक्तः यद्यपि देवीवाक्ये "जातः खलु तवान्तकृत् यत्र क्वचित्पूर्वं शत्रुः" इत्युक्त्वा प्रत्युतानकदुन्दुभिसम्बन्धाशङ्कापयात्येव तथा तादृशवद्धस्य पुत्रसञ्चारे सत्यमप्यकिञ्चित्करं स्यात्तथापि पापमतित्वात् दुर्मन्त्रप्रवीणत्वेनेदमाशङ्किष्यत एवेति भावः । मद्वक्षुरेवासावस्य पुत्रतया जातः किन्त्वयस्यैव शिक्षया दारिकायमाणो मां वञ्चयन्नन्दगृहं प्रविष्ट इति ॥ ८—९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्योतिषामयनं ज्योतिःशास्त्रं ज्ञायते ऽनेनेति ज्ञानं ज्ञानसाधनम् अतीन्द्रियम् अतीन्द्रियविषयं परावरम् अतीतमागामि च ॥ ५—२० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

त्वया बालयोर्नामक्रिया कार्येति वक्तुं तस्य विज्ञानातिशयमाह–ज्योतिषामयनमिति । यज्ज्ञानमतीन्द्रियज्ञानसाधनं ज्योतिषामयनं तत्प्रतिपादकं ज्योतिःशास्त्रमित्यर्थः । तत्साक्षाद्भगवत्प्रणीतं येन ज्योतिषामयनेनान्योपि पुमान् परापरमतीतमागामि च वेद ॥ ५ ॥

विवक्षितमाह–त्वमिति । भो ब्रह्मविदां श्रेष्ठ ! त्वमनयोर्बालकयोः संस्कारादीन्नामकरणादीन् कर्तुमर्हसि दैवज्ञत्वान्मन्त्रवित्त्वाच्च त्वं कर्तुमर्हसीति भावः । ननु, नाहं त्वद्गुरुरित्यत्राह, नृणां जन्मना ब्राह्मणो गुरुः नृणामिति सामान्यनिर्देशेन ब्राह्मणानां क्षत्रियादीनां च ब्राह्मणमात्रस्वभावतो गुरुरित्यभिप्रेतम् ॥ ६ ॥

अत्युत्साहिनं नन्दं प्रति गुप्तमेतत् कार्यमित्यभिप्रायेण प्रत्याचक्षाण इवाह–यदूनामिति । यदूनामचार्यत्वेन भुवि प्रसिद्धोऽहं यदि त्वत्पुत्रं संस्कुर्यां तर्हि मया संस्कृतं त्वत्पुत्रमपि देवकीपुत्रं पापमतिः कंसः मन्यते मत्कर्तृकसंस्कारेण लिङ्गेन देवकीसुतमेवाध्यवस्यतीत्यर्थः ॥ ७ ॥

ननु, यदुकुलाचार्येण त्वया संस्कृतं कथञ्चिद्यदुकुमारं जानातु तत्र वसुदेवस्य पुत्रः तत्रापि देवक्यां जात इति कुतो जानीयात्तत्राह–सख्यमिति । नन्दवसुदेवयोः सख्यं प्रसिद्धमेव वर्तते अशरीरवाण्याभिहितो देवक्या अष्टमो गर्भो न स्त्रीभवितुमर्हति किन्तु पुमानेव सः मद्भयात् वसुदेवेन सख्युः नन्दस्य सन्निधावेव निहित इत्येवं देवकीदारिकावचश्चिन्तयन् गताशङ्कः गतसंशयः हन्तापि हन्यात्तर्हि तदस्माकं महाननयः अनीतिरनुचितं स्यादित्युक्त्वा गर्गस्तूष्णीं बभूवेत्यर्थः ॥ ८ ॥ ९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्योतिषामयनं ग्रहाणां राशेराश्यन्तरगमनगोचरं ज्योतिःशास्त्रं ज्ञायते अनेनेति ज्ञानम् अतीन्द्रियं त्रिकालविषयं परावरम् अतीतानागतविषयम् ॥ ५ ॥

संस्कारान् गर्भाधानादीन् संस्कारकर्ता मदन्यः किं स्यादिति तत्राह—नृणामिति ॥ ६ ॥

तत्र नन्दं गर्गो वक्तीत्याह—गर्ग इति । चशब्दो हिशब्दार्थे योऽहं यदूनामाचार्य इति सर्वतो भुवि ख्यातो हि ततः कंसेन ज्ञातेऽनर्थो भविष्यतीति स क इत्याह सुतमिति ॥ ७ ॥

"कसि हिंसायाम्" इति धातोः हिंसाशीलः अत एव पापमतिः तर्हि तं कृष्णं हन्ता हनिष्यति तदा नो महान्

योऽन्यायोऽपराधो भविष्यतीति शेषः । कथमयं कंसो मया संस्कृतं ते सुतं देवकीसुतं मन्यते, निमित्तमाह, सख्यमिति तवानकदुन्दुभेश्च सख्यमस्तीति जानाति अतोऽनयोः सुतविनिमयो भविष्यतीति मन्यते निमित्तान्तरमप्यस्तीत्याह, देवक्या इति पश्चितयश्चिति हेतोः तव हन्ता कचिज्जात इति निश्चयेन कन्यावचसाऽपि तस्य तद्धननिवृत्तिर्न भवतीत्याशयं श्रुत्वेति गताशङ्को नष्टहननशङ्कः आगताशङ्कोऽपि वा ॥ ८-९

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्योतिषां ग्रहाणाम् अयनमिति करणे ल्युट् अयतेर्गत्यर्थतया ज्ञानार्थत्वात् करणस्यापि हेतुत्वात् तत्प्रतिपादकमित्यर्थः । तच्च प्रणीतमित्युक्त्या ज्योतिःशास्त्रमित्येव पर्यवसीयते कीदृशं तज्ज्ञानं तत्साधनम् अतीन्द्रियम् इन्द्रियागोचरज्ञानजनकत्वात्तदतिक्रान्तञ्च तदेव विशेषणद्वयस्य अतीन्द्रियज्ञानसाधनमित्येव निर्गलितोऽर्थः ॥ ५ ॥

जन्मना जात्यैव ॥ ६—८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं ब्रह्मविस्वेन परोपकारैककार्यत्वेन च स्तुत्या सर्वज्ञतामुपपाद्य तत्सार्वज्ञ्यं यथान्येषामब्रह्मविदामपि भवति तथोपायं कृतवानिति स्तौति—ज्योतिषामयनमिति । अनेनान्यस्यापि तत्तत्पदार्थरहितस्यापि तत्तत्पदार्थकरणसामर्थ्यं द्योतितं ग्रहादिवस्तुरहितस्यापि तद्वलजनकत्वं ज्योतिषां सूर्यादीनाम् अयनं स्थानम् इदमित्थतया यस्मिन् क्षणे यो ग्रहो यत्र वर्त्तते तस्य ज्ञानं यस्मात् तत् ज्योतिषामयनं ज्योतिःशास्त्रम् अलुक्समासः ज्योतिषां सम्बन्धि वा अयनं ज्ञानमस्मात् तत्रापि सामान्यतो ग्रन्थकर्त्तारः सुगमाः परोपजीविकाः त्वन्तु ब्रह्म सूर्यवत् साक्षात्कर्ता तथापि यत् प्रसिद्धं सर्वपापविप्रतिपन्नं तादृशमेव तत् त्वदुक्तं तच्छास्त्रं केवलं ज्ञानमेव ब्रह्मस्वरूपं यस्मिन् विदिते सर्वमिदं विदितं भवतीति तच्च ज्ञानरूपं शास्त्रमतीन्द्रियमिन्द्रियागोचरमन्यस्य बुद्धिगम्यमपि न भवति गुरूपदेशव्यतिरेकेणैतादृशं शास्त्रं भवता प्रणीतं येन शास्त्रेण कृत्वा पुमान् परावरं वेदभूतभविष्यद्वेद परं स्वापेक्षया पुरुषोत्तमपर्यन्तम् अपरं परमाणुपर्यन्तम् ॥ ५ ॥

अतः सर्वज्ञो भवान् ब्राह्मणोत्तमः अतः पुत्रयोः संस्कारान् कर्त्तुमर्हसीत्याह—त्वं हीति । ब्रह्मविदेव ब्राह्मणः स हि सर्वज्ञः त्वन्तु ब्रह्मविदामपि श्रेष्ठः अन्यस्यापि ज्ञानोत्पादने यत्नकरणात् अतः बालयोरनयोः संस्कारान् कर्तुमर्हसि यथैकं नामकरणं तथान्यान्यपि कर्म्माणि विद्याभाग्यफलकानि संस्कारत्वेनाप्युक्तानि जातेष्ट्यादीनि ऐन्द्रबार्हस्पत्यादीनि च अन्यानि च प्रसिद्धानि लोके साम्प्रतं लुप्तानि उभावप्येनावसंस्कृतौ ननु, गुरुणा पुरोहितेन कर्त्तव्यं न तु येन केनचिदिति चेत्तत्राह "जन्मना ब्राह्मणो गुरुः" इति उत्पत्तिमात्रेण सर्वोपि ब्राह्मणः गुरुर्भवति अतो भवानपि गुरुरिति अवश्यं कर्त्तव्यम् ॥ ६ ॥

तत्र गर्गः गुप्ततयैव एतत् कर्त्तव्यमिति साक्षात्तथोक्तं ग्रामीणत्वाच्च भेदयतः इति वैदिके कर्म्मणि असुराणां ज्ञानमयुक्तमिति यथा, "इदमुच्चैर्यज्ञेन चराम तथो सुराः पाप्मानुविन्दन्ति उपांशूपसद्ा चराम तथा नो सुराः पाप्मानाद्भुवास्यन्ति" इति श्रुतेः तथापि सावलौकिकभयं नोत्पेत तावच्च निवर्तेत इति भयमुत्पादयति त्रिभिः । यदूनामिति सर्वज्ञानां वचनं सर्वतो मुक्तं भवति सर्वे स्पष्टं वदन्ति न वदन्ति च उत्पमानमप्यनुत्कमिव भवति द्रव्यसंस्कारविरोधे द्रव्यं बलीय इति न्यायेन उच्चैः क्रियमाणो द्रव्यविरोधो भवति विरोधे कारणं कंसः तस्यापि देवकीपुत्रः मया कृतः संस्कारः देवकीपुत्रत्वं ख्यापयतीत्याह—अहं सर्वदामेव यदूनां यदुवंशोद्भवानामाचार्यः संस्कारकर्त्ता नान्येषां तत्रापि भुवि सर्वतः ख्यातः महर्षिः सर्वे एव धर्माः सर्वेषां प्रसिद्धा भवन्ति अतोऽस्मागमनमपि प्रसिद्धमेव ततः किमत आह—ते सुतं मया संस्कृतं कंसो देवकीसुतमेव मन्यते निर्द्धारितोऽयमर्थः यादवान्यस्य मया संस्कारो न क्रियते इति ॥ ७ ॥

मन्यतां को दोष इति चेत्तत्राह—पापमतिरिति । स हि मारकः अतो देवकीपुत्रत्वज्ञानमनिष्टजनकं नन्वत्र देवकीपुत्रस्य कः प्रसङ्गः ? तत्राह—सख्यं तव चानकदुन्दुभेरिति अतः सखिगृहे अष्टमः पुत्रः स्थापितोऽयमिति मन्यते चकारोऽर्थविशेषख्यापकः सोपि दुष्टस्तव च सख्यमिति उभयोः सम्बन्धित्वज्ञापनाय षष्ठी ननु देवकीगर्भः स्त्रीरूपः तेन दृष्ट एव कथं सन्देह इति चेत्तत्राह—देवक्या अष्टमो गर्भः स्वमारकत्वेन श्रुतः स्त्रीभवितुं नार्हति ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बालकद्वयनामकरणार्थं प्रार्थनाबीजं सूजयन्नाह—ज्योतिषां ग्रहादीनाम् अयनं ज्ञापकं ज्योतिःशास्त्रं यद्यतः अतीन्द्रियं ज्ञानं भवेत्तद्भवता ज्ञायत इति किं वक्तव्यं त्वया प्रणीतं कृतं येनान्योऽपि पुमान् परमुत्तरकालभावि वस्तु अपरं पूर्वकालभूतं वस्तु वेद जानाति तेन बालके मम जातस्य पुत्रस्य जन्मलग्नादिकं विचार्य्य हस्तपादादिलक्षणं च दृष्ट्वा भद्राभद्रादिकं कथनीयमिति भावः ॥ ५ ॥

किञ्च एतादृशमहानुभावस्यापि तव मद्गृहागमनं गृहिणः श्रेयसायैव तच्च मम निःश्रेयसमैहिकं पारलौकिकञ्च तत्रैहिकं निःश्रेयसमद्य निष्पाद्यमेकं स्वचरणेषु निवेदयामि कृपया श्रावयेत्याह—त्वमिति । न केवलं ज्योतिर्विदामेव त्वं श्रेष्ठः इति भावः तेनोभयगुणयुक्तत्वात्त्वमेव दैवज्ञो मन्त्रविच्च कर्त्तुमर्हसीत्यर्थः । नन्वेतद्गुरुणा करणीयमिति चेत्तत्राह नृणामिति ॥ ६ ॥

स्वयं विश्वद्गुरुस्वाहितं नन्दं च कंसाद्भीषयमाणः गुप्तमेवैतत् कारयेत्यभिप्रायेण प्रत्याचक्षाण इवाह—यदूनामिति । तव यदुत्वेऽपि क्षत्रियत्वाभावात् यदुत्वख्यातिः अहन्तु यदुपुरोहितत्वेन ख्यातश्चेति मत्कृतमिदं न गुप्तं स्यादत्रतीति भावः ॥ ७ ॥

सर्वतः सर्वैर्यां मन्यते मंस्यते नन्वेतावत्कोऽनुसन्धास्यतेत तत्राह कंसः तदपि त्वयि तु ब्रह्मवादिनि सोपि न द्रोहमाचरिष्यतीति चेदत्र आह पापमतिः मादृशान् जिघांसत्येवेति भावः किञ्च तवाप्यवश्यमपकरिष्यत्येवेत्याह—सख्यमिति । वसुदेवद्रोहिणः कंसस्य वसुदेवसखे त्वय्यपि द्रोहसम्भावितेति भावः तर्हि किं कुर्यां किं करवाणीत्याह—देवक्या इति । देवकीदारिकावचः श्रुत्वा अष्टमो गर्भो न स्त्रीभवितुमर्हतीति चिन्तयन् इत्यन्वयः मच्छत्रुर्विष्णुरेव देवक्या गर्भे जात एव किन्तु वसुदेवच्छिद्रया तस्य सख्युर्नन्दस्य गृहे प्रविष्ट इति देवकीदारिका-

इति सञ्चिन्तयन् श्रुत्वा देवक्यादारिकावचः ।
अपि हन्ता गताशङ्कस्तर्हि तन्नोऽनयो [(१)] भवेत् ॥ ९ ॥

नन्द उवाच ।

अलक्षितोऽस्मिन्रहसि मामकैरपि गोव्रजे ।
कुरु द्विजातिसंस्कारं स्वस्तिवाचनपूर्वकम् ॥ १० ॥

श्रीशुक उवाच ।

एवं सम्प्रार्थितो विप्रः स्वचिकीर्षितमेव तत् ।
चकार नामकरणं गूढो रहसि बालयोः ॥ ११ ॥

गर्ग उवाच ।

अयं हि रोहिणीपुत्रो रमयन् सुहृदो गुणैः ।
आख्यास्यते राम इति बलाधिक्याद्बलं विदुः ॥
यदूनामपृथग्भावात्सङ्कर्षणमुशन्त्युत ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वच इति मद्दिष्टदेवी दुर्गेव देवकीदारिकारूपा भूत्वा यत्र कचिज्जात इति पक्षेन देवक्यामपि जन्मसम्भाव्यविष्णुनिषेधशङ्कयैव मां स्पष्टमनुक्त्वा तमन्विष्य शीघ्रं जहीति मामभिव्यञ्जयामासेति चिन्तयन् तदन्वेषणे प्रवृत्तौ मन्नामकरणचिह्नेन आगता नन्दगृहे वसुदेवसुतोऽस्तीत्याशङ्का यस्य तथाभूतस्सन्नागत्य यदि हन्ता हनिष्यति तर्हि नोऽस्माकं महान् अनयः यदीति अपीति च पाठः ॥ ८—९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बालयोर्नामकरणादौ तद्योग्यताकथनपूर्वकमाह्वानं प्रवर्तयति ज्यौतिषामिति द्वाभ्याम् । यदतीन्द्रियं ज्ञानं तत् प्रकाशकं ज्योतिषामयनं प्रतिपादकं शास्त्रम् तत्साक्षाद्भवता प्रणीतम् येन परं पूर्वजन्मसञ्चितं कर्म अवरं वर्तमानजन्मनि भोग्यं कर्मफलं पुमान् वेद ॥ ५ ॥

ब्रह्मविदां वेदविदां श्रेष्ठः दैवज्ञत्वान्मन्त्रवित्त्वाच्च संस्कारान् नामकरणादीन् कर्तुमर्हसि ॥ ६ ॥

गुप्तसंस्कारचिकीर्षुः प्राकट्ये दोषमाह—यदूनामिति त्रिभिः । गम्यते मन्यते ॥ ७ ॥

ननु त्वत्कृतं संस्कारमात्रतो निरपराधे मयि विद्वेषजननाय मदीये पुत्रे देवकीपुत्रशङ्कां कुतः करिष्यति ? अत्राह—कंस इति । पापे विद्वेषानर्हेष्वपि विद्वेषाचरणे मतिर्यस्य सः तव आनकदुन्दुभेः सख्यं चकारात्तस्यानकदुन्दुभेर्यद्यर्थं देवैर्वसुदेवजन्मसमये आनकादिनादः कृतः स मम भ्रातुर्वसुदेवाज्जातः किमिति च आनः खलु तथान्नकृत इति देवक्यादारिका वचः श्रुत्वा "देवक्या अष्टमो गर्भः न स्त्रीभवितुमर्हति" इति च सञ्चिन्तयन् अपि यदि आगताशङ्कः स्यात् स मम भगिनीपुत्रो नन्दगृहे वर्तते किमित्येवम् आगताऽशङ्का यस्य स तथाभूतः स्यात्तर्हि महान् अनयो नः अस्माकं स्यादिति द्वयोरन्वयः हन्तेत्यव्ययम् ॥ ८—९ ॥

भाषा टीका ।

सूर्यादि ग्रहन की स्थिति जनावनवारो साक्षात् अतीन्द्रियज्ञा[न] को प्रतिपादन करनवारो ज्योतिषशास्त्र ही आपने बनायो [है] कि—जासों पुरुष आगे पीछे की बातन को जानि लेवे है ॥ [५]

वेद के जानन वारे ब्राह्मणन में श्रेष्ठ जब आप [ह]मारे पधारे हौ तौ फिर इन दोनों बालकन को नाम करण संस्[कार] करवे कूं आपही योग्य हौ, और आप कहौ कि तुमारे पुरोहित [गर्ग] आंडिल्यैह, सो तौ महाराज ब्राह्मण तौ जन्मही सों गुरु होय है ॥ [६]

गर्ग उवाच ॥

गर्गाचार्यजी बोले, कि—हे नन्दरायजी ! और भी कार[ण] है, कि—हम यदून के आचारी ( पुरोहित ) हैं, ऐसे जग[त] में ख्यात हैं, और जब हम तुमारे पुत्रको संस्कार क[रें] तब वो पापी कंस कहूं वसुदेव को पुत्र न जान ले[वे] काहे सों, कि—तुमारो और वसुदेवजी को बडो मेल है और एक बात और भी तौ है, कि—देवकी को आठ[वो] गर्भ कन्या होयवे के योग्य नहीं रह्यो ॥ ७—८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

"किं मया हतया मन्द" ! इत्यादि देवकीकन्यावचः श्रु[त्वा] "देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति " इति [चि]सञ्चिन्तयन् सामान्येन कचिदस्तीति ज्ञात्वा युवयो[र्] सख्यं सञ्चिन्तयंस्त्वद्गृहे भवेदिति सम्भाव्य मत्संस्कार[...]

(१) महान् इति पाठ० ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

खिन्नेन चागताशङ्कः आगता आशङ्का यस्य स अपि यदि हन्ता हनिष्यति तर्हि तत्तदा नो महाननयः स्यादिति ॥ ९ ॥

द्विजातिसंस्कारं द्विजातीनामवश्यं कर्त्तव्यं संस्कारमात्रं केवलं स्वस्तिवाचनपूर्वकं कुर्विति ॥ १० ॥ ११ ॥

यदूनामपृथग्भावात्कुतश्चिद्धेतोर्विप्रतिपद्यमानानां यदूनामपृथग्भावात् भावो भावनं तस्मात् अन्योन्यशिक्षया सैक्यकरणादित्यर्थः । सम्यक्कर्षत्यैकीकरोतीति सङ्कर्षणमप्युशन्ति मन्यन्ते वक्ष्यन्तीत्यर्थः । गर्भसङ्कर्षणं तु न प्रकाशयति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोव्रज इति स्थानसंस्कारानपेक्षा च दर्शिता रहसीति दिने गवां सपालानां वने गमनात् द्विजातिसंस्कारं यथा स्वं-स्ववेदशानुरूपनामकरणलक्षणं पुण्याहस्वस्तिऋद्धयश्चित्युक्त्या स्वस्तिवाचनं स्यात् स्वस्तिवाचनमन्त्राणां पठनं च स्वस्तिवाचनं यद्वा "पुनन्तुमादेवजनाः' पुनन्तु मनसा धिया' पुनन्तु-विश्वा भूतानि, जातवेदः पुनीहिमाव" इत्यादिमन्त्राः तच्च सर्वकर्मस्वावश्यकं न बहिर्लौकवेद्यं च अतः केवलं तत्पूर्वकम् ॥ १० ॥

तद्व्रजजनैरप्यलक्षिततया रहसि तादृशसंस्कारमात्रकरणं स्वस्य कर्त्तुमिष्टमेव. ननु, श्रीमगवदैश्वर्याभिज्ञेन तेन कुतस्तत्कृतौ सङ्कोचो न कृतः तत्राह-बालयोरिति । लोकहितार्थं स्वभक्तप्रमोदनार्थं च प्रकटितबाल्यलीलयोस्तयोस्तदनुरूपा लीलातदीयैश्वर्यज्ञानिनामपि मोहिनीति भावः । तत्र रहःस्थाने बालकद्वयानयनतद्दर्शनञ्च गर्गानन्दशुभाशीर्वादादिवर्णनमूह्यम् ॥ ११ ॥

अयं वै इति सार्द्धकम् । अयं हीति क्वचित् । अयमित्यङ्गुल्या निर्दिश्य करेण स्पृष्ट्वा वा बोधयति । एवमग्रेऽप्यस्येति अत्र प्रकटार्थः रौहिणेयपुत्र इत्येतदप्येकं नामेत्यर्थः । सुहृदः श्रीवसुदेवादीन् भवदादींश्च आख्यास्यत् इति नाम्नोऽस्य मत्कर्तृत्वं व्याजमात्रमेव किन्तु तादृशतया स्वयमेव ख्यातिर्भविष्यतीत्यर्थः । एवमुत्तरत्रापि विदुरिति वर्त्तमानसामीप्ये वर्त्तमानत्वम् एवमुत्तरत्रापि एनमिति शेषः । यदूनां श्रीवसुदेवादीनां भवदादीनां च अपृथग्भावात् निर्विशेषपितृत्वादिभावात् तेनोभयकुलस्यापि स्वस्मिन्नाकर्षणादित्यर्थः । एषामपि यादवत्वेन तदैक्यं द्वारकातो व्रजमागतस्य रामस्य वचनेन हरिवंशे व्यक्तम्—

> प्रत्युवाच ततो रामः सर्वांस्तानभितः स्थितान् ।
> यादवेष्वपि सर्वेषु भवन्तो मम बान्धवाः ॥ इति

यदूनामहमाचार्य इति तु प्रसिद्धिमात्रमवलंब्य प्रोक्तम् अपि तु शब्दाज्नामान्तराण्यपि सूचितानि उतेति पाठे स एवार्थः अप्रकटार्थे तु शोभनं हृद्येषां तान् सात्वतान् आत्मारामादीन् रमयन् रामः विदुर्जानन्तीति तत्रास्ना सदातनत्वं व्यञ्जयति एवमुत्तरत्रापि किञ्च सङ्कर्षणनाम्नोऽपि निरुक्त्यन्तरमपिशब्दात् ज्ञेयम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तवन्तं गर्गं प्रत्याह नन्दः—अलक्षित इति । अस्मिन् गोकुले मामकैर्मदीयैरप्यलक्षितः रहसि निर्जने देशे स्वस्तिवाचनपूर्वकं द्विजातिसंस्कारं द्विजातीनामवश्यकर्त्तव्यं संस्कारं तूर्यघोषादिरहितं कुर्वित्यर्थः ॥ १० ॥

इत्थं सम्यक् प्रार्थितो द्विजो गर्गः स्वेन कर्तुमिष्टमेव तदा बालकयोर्नामकरणं रहसि गूढस्सन् चकार ॥ ११ ॥

तदेव दर्शयति—अयमित्यादिना । गुणैः सुहृदो रमयतीति तस्मिन् रामशब्दस्य प्रवृत्तिनिमित्तप्रदर्शनं बलाधिक्यादिति बलशब्दस्य तथा यदूनामपृथग्भावात्कुतश्चिन्निमित्ताद्विप्रतिपद्यमानानां तेषामन्योन्यस्नेहसाभाद्विघटनैनैकमत्यसम्पादनरूपात्सम्भानानां तेषामन्योन्यस्य कर्षणात्प्रवृत्तिनिमित्तात्संकर्षणशब्दाभिधेयम् उशन्तीच्छन्ति जना इति शेषः । सम्यक्कर्षत्याकर्षति वैमुख्यनिवर्त्तनेनैकतां नयतीति सङ्कर्षणमुशन्तीत्यर्थः । गर्भसङ्कर्षणात् सङ्कर्षणः सङ्कर्षणाख्यस्यानन्तस्यांशत्वाद्वा सङ्कर्षण इति व्युत्पत्तिद्वयमप्यभिप्रेतम् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मामकैरप्यलक्षिते अज्ञाते अस्मिन् व्रजे तत्रापि रहसि ॥ १० ॥

आशीर्वचनपूर्वकं नामकरणप्रकारमाह—चकारेति ॥ ११ ॥

यदूनां मध्ये उशन्ति इच्छन्ति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपीति सम्भावनार्थत्वाद्यदीत्यर्थः । हन्तेति शीले तृन् हिंसाशीलः कंसो यदि पापशङ्की भवतीत्यर्थः ॥ ९—११ ॥

यदूनां श्रीवसुदेवादीनां भवतां चापृथग्भावात् पितृत्वादिसाधारणबुद्धेरित्यर्थः । तदुक्तं श्रीहरिवंशे गोपवर्गं प्रति तेन स्वयमेव "यादवेष्वपि सर्वेषु भवन्तो मम बान्धवाः" इति निर्द्धारणं हि सजातीयेष्वेव षष्ठीसप्तम्यौ विधत्ते गोषु कृष्णाः सम्पन्न क्षीरा इतिवत् तदेवं सति सङ्कर्षति अभेदबुद्ध्यैकीकरोति सङ्कर्षण इति विवेचितम् अनेन गोपानामेव यदुवंशोद्भवत्वमप्यवगतं तच्च श्रीकृष्णसन्दर्भादौ प्रतिपादितमेव ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कथमियं स्त्रीति सञ्चिन्तयन् कंसो मारयेदिति सम्बन्धः शङ्काया कारणान्तरमप्यस्तीत्याह—अथवा देवकीदारिकात्र इति देवक्या दारिका बालिका तस्याः वचः "किम्मया हतया मन्द जातः खलु तवान्तकृत्" इति अतः अस्याः आकाशवाण्याश्च ऐकार्थ्यं विचार्यमाणो देवक्याः पुत्रो रात्रावानीय वसुदेवेन स्थापितः तत्र च कन्या तत्र नीतेति कल्पति तदा अपीति सम्भावनायामागताशङ्कस्सन् हन्ता हनिष्यति तदा इति नोऽस्माकं महाननयः स्यात् अतस्तव पुत्रस्य संस्कारो अथा प्रसिद्धतया न कर्तव्य इति फलितम् ॥ ९ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

नन्दः तस्य प्रतीकारमाह-अलक्षित इति ।

ज्ञापितं च हरेस्तत्त्वं स्नेहाधिक्यान्न बुध्यते ।

अतो निरोधः कर्तव्यः शास्त्रं तत्राप्रयोजकम् ।

अस्मिन् गोष्ठे गुप्तस्थाने मामकैरप्यलक्षितः अनुमानेनाप्यज्ञातस्सन् द्विजातिसंस्कारं कुरु अनेनेयं वार्ताप्येकान्त एव कृतेति ज्ञायते गवां व्रजे न कश्चिदभिज्ञो नागरिकवत् गवां बुद्ध्या तुल्या एव भवन्ति मामकानां स्वरूपं मया ज्ञायत इति तेषामज्ञानं साधनीयम् एतेनान्ये व्याख्याताः द्विजातीनां मन्त्रवत्संस्कारो भवति अन्येषाममन्त्रकं भवति अतो मन्त्रप्राधान्येनैव कर्तव्यं नोत्सवप्राधान्येन तदाह-द्विजातिसंस्कारमिति मङ्गलमावश्यकमिति विचार्य मङ्गलमपि वैदिकमेव कर्तव्यमित्याह-स्वस्तिवाचनपूर्वकमिति । स्वस्तिवाचनं पुण्याहवाचनं पुण्याहस्वस्ति ऋद्धयः त्रिस्त्रिरुक्ताः स्वस्तिवाचनं तत्सर्वकर्मसु आवश्यकम् ॥ १० ॥

एवमुक्ते स्वाभिलषितं सिद्धमिति कृतवानित्याह-एवं सम्प्रार्थित इति । ज्ञातेऽपि लोके प्रतीकारं करिष्यामीति तस्याभिप्राय इति ज्ञापयितुं विप्र इति शीघ्रं च तस्य कर्तव्यमिति पुरोहितत्वात्स्वस्य चिकीर्षितमेव तन्नामकरणं कर्म प्रसिद्धमिति वा सर्वत्र गूढः स्वयमपि गुप्तः सन् वेषान्तरेण यावत् तत्र तिष्ठति रहस्येकान्ते उभयोरपि नामकरणमुभयोरनुगुणमुहूर्तं बालयोरिति केचामिप्रायो वा ॥ ११ ॥

ज्येष्ठानुक्रमणो नामकरणं कुर्वन्नादौ ज्येष्ठस्य नामत्रयमाह-अयमिति सार्द्धेन । वस्तुतो ब्रह्मणव्यवहार्ये स्वरूपतो नामाभावात् सङ्केताभावात् गुणयोगादेव नामानि भवन्ति उभावत्र पुत्रो वसुदेवस्य तत्रैको मातृनाम्ना अपरः पितृनाम्ना प्रथमं गुप्ततया मातृनाम्ना नामाह अयं वै निश्चयेन रोहिणीपुत्रः अतो रौहिणेय इत्युक्तो भवति रोहिण्यामाविर्भूतत्वाच्च इति च वै निश्चयेनेति यशोदायाः पुत्रत्वे सन्देह इति ज्ञापितं यदि भगवान् प्राकृतः केनाप्यंशेन भवेत् तदा याशोदेयः दैवकेय इति नाम भवेत् यथा रौहिणेय इति तस्मादयमेव वै निश्चयेन रोहिणीपुत्रः किञ्च यौनिकृतसम्बन्धाध्यासोप्यस्य दृढ इत्याह—रमयन् सुहृदो गुणैरिति । सुहृदः सर्वानेव सम्बन्धिनः गुणैः स्वसामर्थ्यैः पालनपोषणप्रीणनादिभिः रमयन् लोके राम इत्याख्यास्यते गुणैः सुस्वभावादिभिर्वा अयं च बलिष्ठो भविष्यति तथा अदृष्टदर्शनादित्यन्यबुद्धिः अतो बलाधिक्याद्बलरूपमेवैनं विदुः भगवदाज्ञया मायाकृतमपि कर्मास्मिन् लोके प्रसिद्धं भवत्विति गर्भसङ्कर्षणात्सङ्कर्षण इति भगवद्वचनाद्देवगुह्यत्वात्तल्लोके न वक्तव्यमिति प्रकारान्तरेण सङ्कर्षणव्युत्पत्तिमाह-यदूनामिति । यदूनां मध्ये अस्य न पृथग्भावोस्ति सर्वत्रात्मबुद्धिरेव अत एव भगवता मातृद्वयमस्य सम्पादितं भिन्नमातृसुतेषु वैराभावज्ञापनार्थम् अतो भगवत्कृतं संवदन्तीति नात्यन्तं दोषोपि यदूनां वा अस्मिन् पृथग्भावो नास्तीति सम्यक् सर्वेषामाकरणं यस्मिन्निति सङ्कर्षणम् उशन्ति वदन्ति उत अपि अनेन सङ्कर्षणपदे अर्थान्तरं मुख्यमस्तीति ज्ञापितम् ॥ १२ ॥

———

### श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भाग्यवशादेव मद्गृहमायातमीदृशमाचार्य्यं क[illegible] पुनरहं लप्स्ये तस्माद्बाद्विनायुत्सवाङ्गं दिनान्तरे सविस्त[illegible] करिष्ये साम्प्रतमद्य केवलं शास्त्रीयमावश्यकं कृत्यमेवैनद्वा[illegible] कारयामीति मनसि विभाव्याह-अलक्षित इति । मामकैर्भ्रा[illegible] दिभिरपि गोव्रजे इति स्थानसंस्कारोपि नापेक्ष्यः रहसि[illegible] दिने सपालानां गवां वने गमनात् द्विजातिसंस्कारं बालयो[illegible] रनयोः क्षत्रवैश्यानुरूपनामकरणलक्षणं पुण्याहस्वस्तिऋद्ध[illegible] स्त्रिस्त्रिरुक्त्या स्वस्तिवाचनं भवेत् तस्य सर्वकर्मस्वावश्यकत्वा[illegible] तत्पूर्वकम् ॥ १०—११ ॥

यदूनां वसुदेवादीनां भवदादीनां च अपृथग्भावात् निर्वि[illegible] शेषपितृत्वादिभावात् अस्मिन्नुभयकुलस्याकर्षणात् तथ हरि[illegible] वंशे—

प्रत्युवाच ततो रामः सर्वांस्तानभितःस्थितान् ।

यादवेष्वपि सर्वेषु भवन्तो मम वल्लभा ॥ इति

तद्वचनेनैव व्यक्तं गर्भसङ्कर्षणं तु न प्रकाशयति ॥ १२ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मामकैरप्यलक्षितः किम्पुनः परकीयैः ॥ १०—११ ॥

यदूनामपृथग्भावात् स्वस्य तन्मध्यवर्तित्वात् यदुविरोधि[illegible] पुरादिसङ्कर्षणात् सङ्कर्षणमुशन्ति मन्यन्ते वक्ष्यन्तीत्यर्थः ॥ १२ ॥

———

### भाषा टीका ।

कंस ऐसें विचारेगो और देवकी की छोरी के वचनन [illegible] जब स्मरण करेगो, और ताहू पै गर्गाचारीने नंद के पु[illegible] को नाम धरचो है या बात कूं कंस विचारि कें वसुदे[illegible] को पुत्र जान कें कहूँ मन में शङ्का लायकें जो बालक [illegible] आय मारे तौ हम सबन को बडो अनर्थ होय जायगो ॥ [illegible]

नन्द वचन ॥

इतनी बात सुनिकें नन्दजी बोले, कि—हे महाराज! [illegible] ऐसें बात है तौ हमारी गऊन के खिरक में जहां हमा[illegible] ऊ सब जनें न देखिपावें तहां स्वस्ति वाचन करकें द्विजा[illegible] तिन के उचित संस्कार कर पुत्रन को नाम धरदेव ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि— नन्दराय ने ऐसे जब प्रार्थना करी तब गर्गाचारीजी कौं तौ ये कार्य अवश्य करनोई हौ तासों एकांत में छिपके दोनों बालकन को नाम करण करत भये ॥ [illegible]

गर्ग उवाच ॥

तब गर्गाचारीजी बोलत भये, कि—ये रोहिणी को पु[illegible] अपने गुणनसों सुहृदन को रमावेगो तासों राम ऐसें विख्या[illegible] होयगो, और बलके अधिक होयबेतें बलदेव कहावेगो, और नन्दरायजी ! यादवन के साथ एकी भाव होयबेतें संकर्ष[illegible] भी कहावेगो ॥ १२ ॥

———

आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १३ ॥
प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥ १४ ॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १५ ॥
एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ।
अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अस्य तव पुत्रस्य अन्तः कृष्ण इत्येकं नाम भविष्यति ॥ १३ ॥

प्रागयमिति सामान्योक्त्या ऋषिरयं जन्मान्तरगतं नाम कथयतीति नन्दो मन्यते स्म अत एवं वासुदेव इति सम्प्रचक्षत इति ॥ १४ ॥

गुणानुरूपाणि ईश्वरः सर्वज्ञ इत्यादीनि कर्मानुरूपाणि गोपतिर्गोवर्धनोद्धरण इत्यादीनि तानि सर्वाण्यहमपि नो वेद जना अपि नो विदुरिति ॥ १५ ॥

जातफलमाह--एष इति। आधास्यदाधास्यति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं जन्मक्रमापेक्षयादौ श्रीबलदेवस्य नामानि व्यज्य श्रीकृष्णस्य नामानि प्रकाशयन्नाह-आसन्निति। तत्र प्रकटार्थोऽयम् अनुयुगं युगे युगे वारम्वारं तनूर्गृह्णतोऽस्य शुक्लादिवर्णास्त्रय आसन् इदानीं त्वत्पुत्रत्वे तु जगन्मोहनश्यामवर्णतामेवायं गतः एतदुक्तं भवति तनूर्गृह्णत इति स्वातन्त्र्योक्त्या योगप्रभाव इवोक्तः तत्र च शुक्लादिरूपग्रहणेन श्रीनारायणस्वभावव्यक्त्या तदुपासनायोग एव पर्यवसायितः पूर्वपूर्वमवतारेषु शुक्लाद्युपासनया तत्तत्साम्यादिप्राप्त्या शुक्लतादिप्राप्तिः सम्प्रति तु कृष्णता प्रसिद्धसाक्षान्नारायणोपासनया तत्साम्यप्राप्त्या कृष्णताप्राप्तिरिति, वक्ष्यते च "नारायणसमो गुणैः" इति. इत्थं पूर्ववृत्तमुक्तं परमभागवतः श्रीनन्दश्च नापिनः एवं परमोत्कर्षप्राप्त्यैतत्स्वरूपनिष्ठत्वात् कृष्णत्वेन तावन्मुख्यं नामधेयम् अतो नाम्नापि कृष्णतां गत इत्यर्थोऽपि ज्ञेय इत्यभिप्रायः अप्रकटार्थस्तत्रार्थश्चायम् अनुयुगं युगे-युगे तनूर्गृह्णतः प्रकटयतस्त्रयो वर्णा आसन् प्रकटा बभूवुः तत्र यो यः शुक्लः प्रादुर्भावः यो यो रक्तः यो यः पीतश्च उपलक्षणाच्चैतं वर्णान्तरवतां स सर्वोपीदानीमस्याविर्भावसमये कृष्णतामेतद्रूपतामेतदन्तर्भूततामेव गतः सर्वांशमेवादाय स्वयमवतीर्णत्वात् अतः स्वयं कृष्णत्वात् सर्वनिजांशस्य कृष्णीकर्तृत्वात् सर्वाकर्षकत्वाच्च मुख्यं तावत् कृष्णेति नाम अतः "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्यादिका निरुक्तिरप्यन्तर्भवति सर्ववृहत्तमानन्द एव सर्वान्तर्भावात् अतः स्वाभाविकमेवैतन्महानाम यत्र प्रणवे वेदा इव तान्यन्यान्यपि नामानि रूपे रूपाणीवान्तर्भूतानि युक्तं च विशेष्यरूपस्य तस्यान्यनामगणविशेषणकत्वात् उक्तं च प्रभासपुराणे—"मधुरमधुरमेतन्मङ्गलं मङ्गलानाम्" इत्यादौ "सकलनिगमवल्लीसत्फलम्" इत्यन्ते कृष्णनामेति "नाम्नां मुख्यतरं नाम कृष्णाख्यं मे परन्तप" इति च। यदस्य प्रथममप्यक्षरं महामन्त्रत्वेन प्रसिद्धम् ॥ १३ ॥

प्रागिति प्रकटार्थे तवात्मजोऽयं कश्चिदन्यत्र वसुदेवादपि जातः, तत्कथं? तत्राह-प्राक् अस्य तस्य च पूर्वजन्मनीत्यर्थः एवं श्रीवसुदेवस्य पूर्वजन्मन्यपि तन्नामासीदिति श्रीनन्देनावगतम् अप्रकटार्थे इहैव जन्मनि पूर्वं कंसकारागृहे वसुदेवाज्जातोऽपि तवात्मज एवेति पूर्वसिद्धान्तानुसारेण अन्यथा तवात्मज इत्यस्याधिक्यं स्यात् अर्थद्वयेऽपि श्रीमन् हे परमभाग्यसम्प्रयुक्त! इति तादृशपुत्रप्राप्तेः पाठान्तरे श्रीमान् परमशोभासौभाग्याभ्यां युक्तोऽयं तवात्मजः अभिज्ञा इत्यनेन निरुक्त्यन्तरात्तन्निरुक्तेरेवान्तरङ्गत्वं बोध्यते ॥ १४ ॥

रूपाणीति दृष्टान्तत्वेनोक्तं यथा शुक्लादिरूपाणि तथा नामान्यपि जन्मान्तरसम्बन्धीनि बहूनि सन्तीत्यर्थः। तान्यहं वेद जनास्तु न विदुरित्यर्थः। लोकेष्वसंभाव्यत्वात्तानि बहूनि तु न प्रकाशयन्न् इति भावः अप्रकटार्थे तु गुणानुरूपाणि रूपाणि श्रीनरनारायणनृसिंहादीनि कर्मानुरूपाणि श्रीमत्स्यादीनि अथ गुणानुरूपाणि नामानि भक्तवत्सल इत्यादीनि कर्मानुरूपाणि जगत्स्रष्टा जगत्पालक इत्यादीनि सन्तीत्यनेन सच्चिदानन्दघनरूपाणामिव नाम्नामपि नित्यता सूचिता सा च गुणकर्मानुरूपाणीति साधिता गुणानां नित्यभगवत्समवेतत्वान्नित्यत्वाभिव्यक्ता तथा कर्मणां च श्रीगोवर्धनधरकालियमर्दनाद्युपासनानामनादिसिद्धवेदप्रसिद्धेरत एव तत्तदुपासकपरम्परायाश्च विच्छिन्नतापत्तेः श्रीभगवतो भक्तेच्छामयत्वाच्च नित्यत्वासिद्धा तदनुरूपनाम्नामपि तथाभासिद्धिः तच्च सर्वं श्रीभागवतामृते निवृत्तमस्ति एवं गुणकर्मनामाऽनन्त्याद्रूपाणीव नामान्यनन्तानि लौकिकवत्प्रतीयमानान्यपि सच्चिदानन्दत्वेनालौकिकानि तदुपासकहृदयैकवेद्यतत्त्वानि नाहमपि वेद जना अपि न विदु-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रित्यर्थः । अत उक्तं श्रीविष्णुपुराणे "अनाख्येयाभिधानं त्वामनाख्येय-प्रयोजनम्" इत्यादि. द्वितीयस्कन्धे—

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥

इति ॥ १५ ॥

गोपान् गोकुलशब्देन तत्रत्यांश्च सर्वानेव नन्दयति हर्षयतीति तथा सः इति तस्य स्वभाव उक्तः शीलार्थे प्रत्ययात् कर्मणापि वो युष्माकं व्रजजनानां सर्वेषामेव श्रेयः ऐहिकामुष्मिकमङ्गलम् आधास्यति तथा अनेन कृष्णेन हेतुना सर्वाणि दुर्गाणि कंसाद्युपद्रवान् अञ्जः अनायासेन तरिष्यथ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परमात्मत्वं सूचयन्निव तिरोधापयन्निव नामानि चकारेत्यभिप्रायेणाह—आसन्निति । प्रतियुगं तनूर्विग्रहान् गृह्णत उपाददतः अस्य तव पुत्रस्य शुक्लादयस्त्रयो वर्णा आसन्नधुना तु कृष्णतां प्राप्तः अतः कृष्ण इत्येकं नाम भविष्यति अनुयुगं तनूर्गृह्णत इत्यनेन परमपुरुषत्वं सूचितम् ।—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥"

इत्यादिव्युत्पत्त्यन्तराणि त्वभिप्रेतानि ॥ १३ ॥

आधुनिकमपि वसुदेवापत्यत्वमाच्छादयन् प्राह—प्रागयमिति । अयं श्रीमान् प्राग्वसुदेवापत्यत्वाद्वासुदेव इत्यभिज्ञाः सम्प्रचक्षते अनया सामान्योक्त्या ऋषिरयं जन्मान्तरगतं नाम कथयतीति नन्दो मन्यते स्म "वसन्ति यत्र भूतानि वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिगीयते" इति व्युत्पत्तिस्त्वभिप्रेता श्रीमानित्यनेन श्रियः पतित्वं सूचितम् ॥ १४ ॥

तथा गुणकर्मानुरूपाणि बहून्यस्य नामानि सन्तीत्याह—गुणेति । यानि गुणानुरूपाणि "भगवान्नारायण"इत्यादीनि कर्मानुरूपाणि मधुसूदनः इत्यादीनि बहूनि नामान्यहं मादृशो मुनिरेव वेद न तु त्वादृश इत्यर्थः । अनेनात्रापि परमपुरुषत्वं सूचितं यद्वाऽहमेव न वेद किंपुनस्त्वादृशो न वेदेत्यर्थः ॥ १५ ॥

जातकफलमाह—एष इति । वः युष्माकमेषः श्रेयः ऐहिकमामुष्मिकं चाधास्यति गोपान् गोकुलं च नन्दयतीति नन्दनः अनेन सुतेन हेतुभूतेन यूयं सर्वाणि दुर्गाणि दुःखान्यञ्जः आशु तरिष्यथ अञ्ज इति तरणक्रियाविशेषणमव्ययम् ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तनूः शरीराणि ॥ १३ ॥

क्वचिन्मथुरायां निग्रहगृहे अभिज्ञाः तद्विज्ञप्रलयविवेकज्ञाः ॥ १४ ॥

न केवलमस्य वर्णनिमित्तं नामगुणानुगुणानि, नामानि सन्तीत्याह—बहूनीति "कृषिर्भूवाचकः शब्दः" इति वचनात् गुणानुगुणं कृष्णेति नाम मधुहननकर्मानुरूपं मधुसूदनेति ॥ १५ ॥

यदि यूयमभजिष्यंस्तर्हि युष्माकं तु श्रेय आधास्यत् अकरिष्यत् आधास्यतीति वा अञ्जः सम्यक् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आसन्निति प्रकटार्थोऽयं प्रतियुगं तनुर्गृह्णतो भगवतो वर्णास्त्रयः अस्य बालकस्यासन् तस्य विवरणं शुक्ल इत्यादि इदानीं त्वत्पुत्रत्वावसरे तु कृष्णतां साक्षान्नारायणतां रूपगुणादिभिस्तत्तुल्यतामेव गत इत्यर्थः । उपसंहरिष्यते च "नारायणसमो गुणैः" इति एवं तत्तदुपासनाप्रभावरूपं पूर्वं वृत्तमुक्त्वा अत एव परमोत्कर्षरूपनिष्ठत्वात् कृष्ण इत्येवास्य मुख्यं नाम ज्ञेयमिति भावः ॥ १३ ॥

वास्तवार्थस्तु प्रागिति तवात्मजोऽयं क्वचित् कार्ये निमित्त एव वसुदेवस्य जात इति एवात्मजत्वमेवास्य स्वाभाविकम् इति भावः । वक्ष्यते च सुतस्य त इति ॥ १४ ॥

बहूनीति । प्रकटार्थे कति वाच्यानीति भावः वास्तवार्थे तु गुणानुरूपाणि श्रीनृसिंहरूपादीनि कर्मानुरूपाणि श्रीकूर्मादीनि ॥ १५—१८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्मूर्तेर्भगवतः चत्वारि नामानि वक्तव्यानि तत्र द्वयमाह द्वयं तु गुप्ततया अनेकभेदभिन्नं वक्ष्यति चतुष्टयस्य च द्वयं प्रवेशश्च तत्रादौ कृष्णोऽयमिति नामवक्तव्यं तत्र भगवान् कथमस्येति शङ्कां वारयन् वर्णपरत्वेन सत्यं वदन्नाह—आसन्निति । अयमनुयुगं तनूर्गृह्णाति अन्यथा युगमेव न स्यात् भगवान् जगच्चेति द्वयं युगशब्देनोच्यते तत्रैकश्चेन्नाविर्भवेत् एकमेव स्यात् न तु युगलं धात्वर्थोपयोगो द्वयोरेव अतो भगवता अवश्यमनुयुगमवतारः कर्तव्यः तत्र युगधर्मख्यापनार्थं रूपं तथा कर्तव्यम् अन्यथा लोकानां प्रतीतिर्न स्यात् तदा "शुक्लो रक्तस्तथा पीतः" इति त्रयः वर्णाः अस्यासन् अग्रे च कदाचिद् भविष्यति तत इदानीं कृष्णतां गतः कृष्णवर्णं प्राप्तवानित्यर्थः । एतं कृष्णत्वं न प्राप्तवान् किन्तु स्वयं कृष्णत्वं प्राप्तः सर्वगतत्वात् सर्वसमन्वयाच्च अनेन परब्रह्मत्वम् उक्तं च—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥—

इति निर्वचनात् यद्यपि सदैव कृष्णस्तथापि प्राकृतस्वरूपस्य नामधेयेषु स्वस्वरूपात्मकनरत्वप्रकटनाद्दशेष्वपि स्वरूपानन्ददानार्थम् इदानीमेव कृष्णत्वं प्रकटितवानित्यर्थः । एतद्दीपनाय शब्दकर्तृं वर्णक्रममुक्तवान् तेनायं सङ्कर्षणरूपोऽप्युक्तः कालानुगुणत्वात् पुरुषोत्तमरूपोऽप्युक्तः सर्वसमन्वयात् ॥ १३ ॥

नामान्तरमाह—प्रागयमिति । कश्चिद्देशविशेषे प्राक् स्वहृद् गमनात् पूर्वमेव वसुदेवस्य पुत्रो जातः वसुदेवस्येति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

च सामानाधिकरण्यात् आधिदैविकस्य वसुदेवस्य तव आत्मजो जात इत्युक्तं भवति अनेन प्रद्युम्नताप्युक्ता वसुदेवे शुद्धसत्त्वे आविर्भावात् अनिरुद्धता च वस्तुतस्त्वयं तवात्मजः कचिद्वसुदेवस्य जात इति तस्य बुद्धिः वासुदेवत्वे हेतुः श्रीमानिति लक्ष्मीपतिरयमित्यर्थः । इमं गूढाभिप्रायम् अभिज्ञाः एतद् ज्ञातारः अभितोऽस्य स्वरूपं ये जानन्ति "यावान् यश्चास्मि यादृशः" इति अत एव सम्यक्त्वेन प्रकर्षेण च वक्ष्यते ॥ १४ ॥

एवं नामद्वयमुक्त्वा गुणयोगाद्वयमनन्तनामेति सर्वशास्त्रेषु तानि नामानि स्वत एव ज्ञातव्यानीत्यभिदिशति–बहूनीति । बहून्यसङ्ख्यातानि नामानि रूपाणि च अन्यथा क्रियायां निवृत्तायां तन्नाम न स्यात् पाचकपाठकवत् रूपं चेत्तादृशं भिन्नं भवति तदा कचित् गुणयोगात् प्रवृत्तं रूपे नामावश्यकत्वात् गवादिवत् सर्वदा भवति चकारात् नामरूपयोः क्रियायाश्च नित्यत्वं प्रतिपादयति सन्तीति तेन भगवान् गोवर्द्धनमुद्धरन् सर्वदा वर्त्तत इति गोवर्द्धनोद्धरणधीरः क्रियानामभ्यां सहितः गोवर्द्धनोद्धरणरूपः सर्वदा वर्त्तते अद्यापि प्रतिकृत्यनुभवो भक्तानाम् अतोऽनन्तान्येव रूपाणि नामानि च अस्यैव कृष्णस्य भगवता तदाह–सुतस्य त इति । अन्यथा तस्य भ्रमो भवेत् वसुदेवस्य विद्यमानत्वात् न वाक्यं बाधितार्थं स्तुत्यर्थमननुरूपाण्यपि कदाचित् भवन्तीति तद्व्यावृत्त्यर्थमाह, गुणकर्मानुरूपाणीति । गुणानाम् औदार्यादीनां कर्मणां कालीयदमनादीनां च अलौकिकानां नामान्यप्यलौकिकानि भवन्तीति गुणकर्मानुरूपाणि तानि रूपाणि नामानि च अलौकिकत्वेन अहमेव वेद नो जनाः व्यवहरन्त्युच्चारयन्ति च तथापि विचाराभावात् न जानन्ति यतो जनाः जननादिभावधर्मयुक्ताः क्लिष्टाः इत्यर्थः । विचारस्तु क्रियायामनित्यतायां रूपे वा कालादिपरिणामेन प्रतिक्षणमन्यभावे तत्सम्बन्धेन प्राप्तं नाम अन्यदा अन्यस्मिन् वा सम्बन्धरहितत्वात् वाचकमेव न भवेत् ततो निरर्थकानि नामानि न फलन्ति नाप्यन्तःकरणं शोधयन्ति अतः स्वरूपाज्ञानेन केवलमुच्चारितानि रूपसम्बन्धाभावात् स्वतोऽप्यलौकिकत्वाज्ञानात् अग्न्युच्चारणे दाहाभाववत् भगवन्नामोच्चारणेऽपि न प्रपञ्चनिवृत्तिः नामानि च वर्णात्मकत्वेनैव ज्ञातानि पुरुषं जगच्च नामयन्ति उच्चारयितुरप्रेऽवश्यतया स्थापयन्तीति नामानि रूपवत् नामरूपस्यापि भगवतो रूपाणि यथा भगवद्रूपं प्राकृततुल्यं प्रतीयते ग्राहकदोषात् एवं नामान्यपि लौकिकानां ग्राहकदोषादेव लौकिकवर्णयुक्तानीव प्रतीयन्ते वस्तुतस्त्वखण्डान्येव तथा ज्ञानपूर्वकं शुद्धभावेन वस्तुतत्त्वे ज्ञात एव तद्बुद्ध्या उच्चारितानि न तु लोकसिद्धानुवादकरूपाणि नामानि सर्वपुरुषार्थानि फलन्ति नान्यथेति सिद्धान्तः अतो लोकन्यायेन उच्चारयितरि फलाभावे दोषसम्बन्धे वा न काप्यनुपपत्तिः एतस्यैव तारतम्येन चित्तशुद्ध्यतिशयो नाम्ना भवति अन्यथा त्वावृत्तं स्वाधिदैविकसहितमेवेति कदाचित्फलति यदाधिदैविकोद्बोधपर्यन्तमावर्त्तेन कालादीनां तु नाममाहात्म्यज्ञानात् उच्चारयितुः परित्यागः अनुगुणत्वात् सारूप्येण साधकमिति लौकिकस्यापि प्रवर्त्तनापरत्वेन मोक्षदातृत्वमिति अजामिलोपाख्यानस्यापि न वैयर्थ्यम् अन्यथा तत्र एव वैकुण्ठे गमनं स्यात् अतः उपायपरत्वमेव लौकिकस्य तस्य तस्मात्सुष्ठूक्तं तान्यहं वेद नो जना इति अनेन अनन्तान्येव नामान्युक्तानि उपास्यरूपाणि च अन्तःकरणशोधकानि तद्वस्थां भगवद्रूपस्य स्मृत्वा तन्नाम ग्राह्यमिति अन्यथा नामप्रसङ्गे रूपकथनं व्यर्थं स्यात् ॥ १५ ॥

ज्योतिःशास्त्राभिज्ञत्वात् रूपनामज्ञानार्थं भगवतो गुणकर्माण्याह–चतुर्भिः । तत्रादौ द्वयेन कर्माण्याह, एष व इति । एष भगवान् परिदृश्यमानो वः युष्मान् श्रेयः आधास्यत् धृतवान् पोषितवान् पूतनास्तनपयःपानादिकं बालगतया कृतं तद्भवतां श्रेयो निमित्तम् अविद्या हि पञ्चपर्वा सा नाशिता शकटः संसारात्मको भञ्जितः अविद्याकार्यरूपः मोहात्मकश्च तृणावर्त्तो मारितः एवं त्रिदोषदूरीकरणेन ज्ञानोत्पादनेन च आ समन्तात् श्रेय आधास्यत् स्वयं सर्वपुरुषार्थरूपोऽपि दोषवशात् गृहीतुमन्यैर्न शक्यत इति दोषदूरीकरणद्वारा श्रेयोधारकत्वं किञ्च न केवलं सकृद्दत्तवान् किन्तु ध्रुवेण तिष्ठति अतोऽग्रेऽपि दास्यति यावता च भवद्भिः परमश्रेयो गृहीतं भविष्यति तावत्करिष्यतीत्याकारः भूतेल्लुङ् तेन सिद्धं भवतां श्रेयः इत्युक्तम् अनेन भवद्भक्त्यर्थं बहूनि कर्माणि करिष्यतीति कर्माण्युक्तान्येव दोषाभावार्थं करिष्यमाणानि कृतानि कर्माणि चोक्त्वा परमानन्ददायकान्यपि कर्माणि करिष्यतीत्याह, गोपगोकुलनन्दन इति । गोपान् गोकुलं च नन्दयतीति गोपशब्देन गोप्योऽपि गृहीताः गोकुलशब्देन गावः तत्सम्बन्धिनश्च यावन्तस्तदुपजीवकाः उभयविधानप्यानन्दयिष्यतीति क्रीडा तत्प्रतिघातवधश्चोक्तः । ननु, त्वया कंसो ज्ञात्वा मारयिष्यतीति भयं जनितं तत्र का गतिरिति चेत् तत्राह—अनेनेति । अनेन भगवता सर्वाण्येव दुर्गाणि सङ्कटस्थानानि कंसोपद्रवरूपाणि सर्वाणि यूयमञ्जसाऽनायासेन सर्वं एव तरिष्यथ अतः कंसादिभयमपि न कर्त्तव्यम् इदं तु वसुदेवस्यास्माकं चोपद्रवो भविष्यतीत्युक्तं नतु भवतामिति भावः एवं सर्वदुःखनिवृत्तिपूर्वकसर्वपुरुषार्थसिद्धिरस्माद्भवतामित्युक्तम् अतोऽस्य चिन्ता नास्तीत्युक्तमेव ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तव पुत्रस्त्वयं कोऽपि महापुरुष एवेति श्रीनन्दं बोधयन्नाह, आसन्निति । प्रतियुगं तनूर्गृह्णतोऽस्य शुक्लादयस्त्रयो वर्णा आसन् गृह्णत इति स्वातन्त्र्योक्त्या योगप्रभावो दर्शितः इदानीं द्वापरान्ते कृष्णतां गत इति सत्याद्यवताराणां चतुर्णां शुक्लादीनामुपासनासिद्धत्वेन तत्तत् सारूप्यप्राप्त्येति भावो नन्दं बोधयितुं गोपितः वस्तुतस्तु अस्यावतारिणस्तत्तद्युगावतारोऽवतारा अंशा एव इदानीमयमवतारी पूर्णः कृष्णत्वं प्राप्तः यतो यः शुक्लो यो रक्तः यः पीतश्च उपलक्षणमेतत् योयोऽन्यो मन्वन्तरावतारलीलावतारपुरुषावतारादिश्च स सर्वोऽपि इदानीमंशिनोऽस्यावतारसमये कृष्णतामेतद्रूपतामंशिष्वन्तर्भूततां गतः सर्वांशावतारैरेवावतीर्णत्वात् ननु "कृते शुक्लश्चतुर्बाहुः" इति "त्रेतायां रक्तवर्णोऽसौ" इति "द्वापरे भगवान् श्यामः" इति कलौ "कृष्णवर्णं त्विषा कृष्णम्" इत्येकादशोक्तेः "कथ्यन्ते वर्णनामभ्यां शुक्लः सत्य-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

युगे हरिः। रक्तः श्यामः क्रमात्कृष्णस्त्रेतायां द्वापरे कलौ" इति भागवतामृतोक्तेश्च पीतोऽयं किं युगीयोऽवतारः न च आसन्निति भूतकालनिर्देशेन क्रमप्राप्त्या पीतोऽपि द्वापरयुगावतार इति वाच्यम्। युगावतारप्रकरणापठितत्वात् न च तत्रस्थ श्यामपदस्य पीतार्थत्वमत्रस्थपीतपदस्य वा श्यामार्थत्वं कल्प्यमिति तथा पीत इत्यकारप्रश्लेषेणापीतः श्याम इति वा वाच्यं सर्वथापि व्याख्याने अनुयुगमिति वीप्साप्रयोगात् तनूरिति बहुवचनाच्च वीप्सया चैकैकस्मिन्नपि युगे वर्णत्रयस्य प्राप्तेर्नाभिमतार्थलाभः नचेदानीमिति पदेन कलियुगस्यादिमोंऽश एव वाच्यनीय इति वाच्यं कृष्णावतारस्य द्वापरान्तर्भवत्वेन प्रसिद्धः—

"यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम्।
तदैवेहानुवृत्तोऽसावधर्मप्रभवः कलिः॥ इति—

प्रथमोक्तेश्च कृष्णावतारानन्तरमेव कलियुगप्रवृत्तेः तस्मादेवमत्र व्याख्येयं यत्तदोर्नित्यसम्बन्धात् यथा इदानीं द्वापरान्ते कृष्णतां गतः स्वयमयमवतारी तथा तेनैव प्रकारेण इदानीं कलियुगादिभागे पीत इति किञ्चित् स्थूलकालमवलम्ब्य इदानीमिति पदार्थं उभयत्राप्यन्वेतीति ननु तर्हि साक्षात् क्रियमाणोऽस्य कृष्णो वर्णः किमिदानीन्तन एव किम्वापूर्वमप्यासीदेव तस्यैव प्राकट्यमधुनेति तत्र न केवलं कृष्णावर्ण एव पूर्वमासीत् अपि त्वन्येऽपि वर्णा आसन्नेवेत्याह आसन्निति त्रयोऽपि वर्णा यथासम्भवं पूर्वपूर्वयुगे तदानीं दृश्यमानात्तत्तत्पूर्वमपि आसन्नेव नित्यस्थितानामेव तेषां तदानीं प्राकट्यं न तु ते तदानीमेवापूर्वा अभवन्नित्यर्थः। अस्य कथम्भूतस्य अनुयुगं तनूरवतारान् गृह्णतः "अवताराह्यसङ्ख्येयाः" इति सूतोक्तेः "काहो कथं वा कति वा" इति ब्रह्मोक्तेश्च एवं च वैवस्वतमन्वन्तरगताष्टाविंशचतुर्युगीयद्वापरकलियुगयोः स्वयमवतारी कृष्णः पीतश्च प्रादुर्भवति तद्युगद्वयावतारौ श्यामकृष्णौ तदा तत्रैवान्तर्भूतौ तिष्ठतः तत्र पीतस्य "सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी। संन्यासकृच्छमः शान्तो निष्ठाशान्तिपरायणः" इति भारताद्युक्तत्वेऽपि विशिष्य स्पष्टतयाऽन्यत्र क्वाप्यनुक्तिरिति रहस्यत्वात् छन्नः कलौ यद्भवांस्त्रियुगोऽथ सत्वमिति सप्तमस्कन्धे श्रीप्रह्लादेनापि छन्नत्वेनैवोक्तत्वात् छन्नत्वं च स्वीयतत्त्वभावयोरन्यदीयवर्णभावाभ्यामावृतत्वेन तदानीन्तनजनैः प्रायो दुर्लक्ष्यत्वमेवेति स्वस्य दुर्लक्ष्यत्वं चिकीर्षा च तस्य रहस्यवस्तुजातव्यञ्जकताहेतुकमेवेति गौडीयभक्तसुधीभिरवद्यावगम्यं तत एव तत्प्रज्ञापकवचनस्य—

नानातन्त्रविधानेन कलावपि तथा शृणु।
कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम्।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः॥

इत्यस्य युगावतारप्रकरणमध्यपठितस्य तथैव छन्न एवार्थोऽवसीयतेऽर्थान्तरेण स यथा नानाकल्पौ सर्वकलियुगे अपि कारणात् वैवस्वताष्टाविंशचतुर्युगीयकलावपि तन्त्रविधानेन तन्त्राख्यस्यार्थावधिना श्वेतो भारतीत्यादिवत् एकप्रयत्नोच्चार्येण एकदेशार्थद्वयबोधकेन शब्देनेत्यर्थः। शृण्विति शृण्वन्तमपि राजानं प्रति पुनः प्रेरणं रहस्यत्वेन तन्त्रेणोच्यमानमर्थं विशिष्याव[...]पयितुं नानातन्त्रविधानेनेति कलौ तन्त्रस्य प्राधान्यं द[...]मितित्वर्थान्तरं तन्त्रस्याप्याच्छादनार्थं ज्ञेयं कृष्णेति स[...] युगपदेव कृष्णवर्णः कृष्णवर्णोदेहं रूचत्वं व्यावर्त्तयति [...] कान्त्या अकृष्णं इन्द्रनीलमणिवदुज्ज्वलमित्यर्थः। एककलियुग[...] कृष्णवर्णम् किन्तु त्विषा कान्त्या अकृष्णं शुक्लरक्तश्यामा[...] मुक्तत्वात् पारिशेष्येण पीतमन्तः कृष्णं बहिर्गौरमित्यर्थः। [...] कृष्णावतारलीलाविवर्णनात् कृष्णवर्णं साङ्गोपाङ्गेत्यादिकमुभ[...] पक्षेऽपि स्पष्टप्रच्छन्नत्वाभ्यां तुल्य एवार्थः॥ १३॥

प्राक् पूर्वं वसुदेवस्य वसुदेवात्तथात्मजोऽयं कचिद्देवा[...] स्थले जात इति प्राक् पूर्वजन्मनि वसुदेवस्यापि पूर्वजन्म[...] वसुदेव इत्येव नामासीदिति नन्दो बुध्यते स्म अभिज्ञा [...] न केवलमहमेक एवेति प्रामाण्यं दर्शितम्॥ १४॥

बहूनीति न केवलं कृष्ण इति नाम वासुदेव इति नाम म[...] कृतमिति भावः रूपाणीति न केवलं मयोक्तानि शुक्लादीन्येवेत्य[...] गुणकर्मानुरूपाणीति भक्तवत्सलसर्वज्ञगोवर्द्धनधरादीनि कृ[...] शब्दः सत्तार्थो णश्चानन्दात्मकस्ततः कृष्णः भक्ताद्याकर्षणा[...] तद्रूपत्वाच्च मन्त्रमयवपुरिति गोविन्दो गोविचारणादर्पा[...] केशवाचार्यादिव्याख्यानादित्यर्थः। तान्यहं वेदज्ञोऽपि न वेद अ[...] नो विदुरिति किं पुनरित्यर्थः नन्दस्तु मत्पुत्रस्य महापुरुषत्वाज्ञान[...] जन्मगतमिदं सर्वज्ञत्वादयं वक्तीति बुध्यते॥ १५॥

आधास्यत् आधास्यति गोपानां गवाञ्च कुलं नन्दयती[...] सः तेषां कुलस्य नन्दनः ब्रह्ममोहने पुत्र इति वा हे गोपे[...] वा अञ्जः सुखेन सर्वदुर्गाणीति यदा यत्रोपद्रव आयास्य[...] तदा त्वदिष्टदेवेन श्रीनारायणेनाविष्टोऽयं त्वत्पुत्र एव त्वद[...] भयमाश्रयितव्य इतीति भावः॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अस्य भवत्पुत्रस्य अनुयुगं तनूः मूर्तीर्भक्तेच्छया गृह्ण[...] प्रकटयतः शुक्लादयो वर्णा आसन् इदानीं तु स्वाभाविक[...] कृष्णतां गतोऽतः कृष्ण इत्येकं नाम भविष्यतीत्यर्थः॥ १३॥

वसति सर्वं यत्र वासयत्याच्छादयति सर्वमिति वा व[...] स चासौ देवश्चेति वसुदेवापत्यत्वेनेदानीं जातत्वाद्वासुदेव इ[...] च गोपयितुं सामान्यतो नामान्तरमाह–प्रागयमिति। अयं तव[...] त्मजः कचिद्वसुदेवाज्जातोऽतोऽभिज्ञाः वासुदेव इति सम्प्रवद[...] नित्यं श्रीरस्यास्तीति श्रीमानिति वा सम्प्रचक्षते नित्ययो[...] मतुप्॥ १४॥

किम्बहुना ते सुतस्य बहून्यनन्तानि गुणानुरूपाणि भक्त[...] इत्यादीनि कर्मानुरूपाणि सर्वकारण इत्यादीनि नामानि रूपाणि च सन्ति तान्यहमपि नो वेद जना अपि नो वि[...] रनन्तत्वात्॥ १५॥

जातकफलमाह—एष इति। एष तव सुतः [...] भुक्तिमुक्तिलक्षणं श्रेय आधास्यत् आधास्यति अनेन हेतु[...] तेन यूयं सर्वदुर्गाणि अञ्जस्तरिष्यथ॥ १६॥

---

पुराऽनेन व्रजपते ! साधवो दस्युपीडिताः ।
अराजके रक्ष्यमाणा जिग्युर्दस्यून् समेधिताः ॥ १७ ॥
(१)य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥ १८ ॥
तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः ।
श्रिया कीर्त्याऽनुभावेन (२)गोपायस्व समाहितः ॥ १९ ॥
इत्यात्मानं समादिश्य गर्गे च स्वगृहं गते ।
नन्दः प्रमुदितो मेने आत्मानं पूर्णमाशिषाम् ॥ २० ॥

भाषा टीका।

और या तुम्हारे पुत्र के तौ युग युग में जन्म लेवें सो तीन वर्ण भये, पहिलें शुक्ल फिर रक्त फिर पीत, अब या समैं कृष्णता ( कारेपन ) कों प्राप्त भयो है ॥ १३ ॥

पहिले ये कहूं तुमारो पुत्र वसुदेव के भयो तासों जा कों श्रीवासुदेव ऐसे हूं अभिज्ञजन कहैं हैं ॥ १४ ॥

और तुमारे सुत के तौ भौत से नाम और रूप हैं पै वे सब गुणन के और कर्मन के अनुरूप हैं। तिनैं मैं जानूं हूं और कोऊ नहीं जाने हैं ॥ १५ ॥

और ये तुम्हारो पुत्र गोपन कों गऊन आनन्द देतौ भयो तुमारो कल्याण करैगो,, और या के सहारे सें बिना श्रम सहजमें तुम सब दुखःन सों तर जाओगे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अनेन रक्ष्यमाणाः समेधिताश्च दस्यून् विजिग्युरिति ॥ १७ ॥ ॥ १८ ॥ १९ ॥

इति चात्मानं प्रति समादिश्य आत्मानं श्रीकृष्णं वा आशिषामाशीर्भिः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्ववृत्तमाह-पुरेति । जन्मान्तरे प्रकटार्थे साधवो देवाः । दस्यवो दैत्याः अराजके इन्द्रस्य पदच्युतौ ॥ १७ ॥

महाभागे परमपुण्यवति ! यद्वा हे महाभागे इत्यन्ते यशोदासम्बोधनं "सस्त्रीको धर्ममाचरेत्"इति न्यायात् महाभागा इति क्वचित्पाठः मानवाः जीवमात्राणि इति नृगति लिखिच्येत्यादिवत् अरयो बाह्याः प्रतिपक्षजनाः आन्तराश्च कामादयः विष्णुपक्षान् देवान् दैत्या इव अप्रकटार्थे भागो भग एव निजाशेषभगवत्ताप्रकटनपरे विष्णुपक्षशब्दो देवतापर्यायो ज्ञेयः समुदायस्यैकदेशोपि दृष्टान्तो भवतीति न चाभिमन्निवशब्दोऽनुपपन्नः ॥ १८ ॥

गुणादिभिर्नारायणेन परमवैकुण्ठनाथेन समः अप्रकटार्थे नारायण एव समो यस्येति नारायणादपि माहात्म्यमधिकं बोधितम् उपमानादुपमेयस्य किञ्चित् सादृश्यमात्रेण न्यूनतापत्तेः तत्र गुणा आत्मनिष्ठा धर्माः करुणादयो रूपादयश्च बहिर्निष्ठानाह ; श्रिया सम्पत्त्या कीर्त्या सत्ख्यात्या अनुभवेन प्रतापेन पक्षद्वयेऽपि यद्यपीदृशस्तथापि तवात्मनो जातः स्वप्रभावमन्तर्धाप्य त्वामेवानुगत इति सुसमाहितः परमावहितस्सन् एतं गोपाय बाल्ये अस्मिन्नस्य रक्षायां प्रयत्नं कुर्वित्यर्थः । वस्तुतस्तु स्नेहवर्द्धनार्थमेवेदम् अत्रैव बाल्यादीनामन्वयः सर्वथा सर्वात्मना च रक्षेत्यर्थः। तत्र कीर्त्या स्वस्य केवलस्य सत्पुत्रकस्य च कीर्तिविख्यापनेन लोकरञ्जनयेत्यर्थः। गोपायस्वेति पाठे आत्मनेपदमार्षं यद्वा एनं गोपगुप्तं कुरु न तु सर्वत्र प्रकटय दैवात्प्राप्तमहानिधिमिवेत्यर्थः । इदं च परमदुर्लभताहशस्नेहविवृद्धये अयसुसमाहितः अयेन शुभावहेन विधिना सुष्ठु सावधानः अथवा गोपानाम आयो लाभस्तस्मिन् सुसमाहितोऽयमिति पाठान्तरम् आयस्वशब्दाभ्यां योगक्षेमे अभिहिते तदेवं प्रकटार्थेऽपि नारायणस्य साम्येन तन्नामान्येवास्य नामानि तथा ततो विशिष्टान्यन्यान्यपि भविष्यन्तीति भावः अतः श्रीनन्देनैव गोकुले विख्यापितानि मुकुन्दादिनामानि च यां गोप्यादयो वदन्तीति ज्ञेयं नन्देति श्लेषेण अतो ऽधुना नन्दं कुर्वित्यर्थः ॥ १९ ॥

स्वगृहं गत इति तदग्रे संभ्रमादिना तद्विशेषादस्फूर्तेः अत एव प्रकर्षेण मुदित इति एतदनन्तरं निजपुरोहितादीनानीय प्रकटमेव स्वयं नामकरणमहोत्सवः कृत इति ज्ञेयम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे व्रजपते ! अराजके संरक्षकरहिते जगत्यत एव दस्युभिर्दुष्टस्तैः पीडिताः साधवो धर्मानुवर्त्तिनः अनेन त्वत्पुत्रेण पुरा पूर्वजन्मनि समेधिता रक्ष्यमाणाश्च दस्यून् जिग्युर्जितवन्तः अनेन

(१) महाभाग इति वीर० वैष्ण०    (२) गोपाय सुसमाहित इति वीर०। वैष्ण० चक्रवर्त्ती।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय" इति भगवदुक्तिरभिप्रेताऽधुनाऽपि साधुपरित्राणार्थमेव जात इति च भावः ॥ १७ ॥

हे महाभाग ! अस्मिन् त्वत्पुत्रे पुरा पूर्वजन्मनि समेधिना ये मानवाः प्रीतिं कुर्वन्ति तान् अरयः शत्रवो नाभिभवन्ति यथा विष्णुरेव पक्ष आश्रयो येषां तान् देवानसुरांस्तद्वत् अत्र प्रीतिशब्देन प्रीत्यात्मिका भक्तिरभिप्रेता अरिशब्देन प्रकृतिसम्बन्धप्रयुक्तकामक्रोधादयः ये एतस्मिन् भक्तिं कुर्वन्ति मानवाः ते मुक्ता भवन्तीति भावः । विष्णुपक्षानिवासुरा इति दृष्टान्तेनायं साक्षाद्विष्णुः यूयं तु देवांशप्रभवाः कंसादयस्त्वासुरसम्पत्त्याभिजाता इत्यभिप्रेतम् ॥ १८ ॥

तस्मादेवं भाविगुणत्वात् हे नन्द ! श्रिया कीर्त्या प्रभावेन अन्यैश्च गुणैर्नारायणतुल्योऽयं भविताऽत एनं समाहितः सावधानचित्तस्त्वं गोपाय पालय ॥ १९ ॥

इतीत्थमात्मानं प्रति समादिश्य गर्गे स्वगृहङ्गते सति ततो नन्दः प्रमुदित आशिषाऽभिमतार्थजातेन पूर्णप्रायमात्मानममन्यत ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पृथ्व्यवतारे अराजके राष्ट्रे अरक्ष्यमाणाः ॥ १७ ॥

विष्णुपक्षान् विष्णुसहायान् "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति यादवः ॥ १८—१९ ॥

इत्यादि आत्मानं नन्दम् आत्मानं स्वम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नारायणपरमव्योमाधिप एव समो यस्य तादृशोऽपि इत्यादिभिर्द्वारैः गोपानामेव शुभावहे विधौ सुसमाहितं पाठान्तरे स्वेन स्वयमेव समाहित इति वास्तवोऽर्थः । प्रकटार्थे तु यद्यपि नारायणस्य समस्तथापि तवात्मजतां प्राप्त इति तथैव गोपनीय इत्यर्थः ॥ १९ ॥

गत इति तदग्रे सम्भ्रमादिना तद्विशेषास्फूर्त्तेः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

माचोप्यस्माद्भविष्यतीति वक्तुं तदर्थमिन्द्रियजयमपि वक्तुं पूर्वोक्तेपि प्रमाणमाह-पुरानेनेति । हे व्रजपते ! अनेन भगवता कृत्वा दस्युपीडिता अपि साधवः समेधिताः सन्तः दस्यून् जिग्युः क्षुद्रोपद्रवोपि चोरवत् कंसादिभिः कर्त्तुं न शक्याः यतोऽस्य स्वभावकृतिरेव तादृशी व्रजपत इति सम्बोधनं सर्वस्यापि व्रजस्य यथासुखं विहरणयुक्तस्य सर्वतः कुशलं भविष्यतीति ज्ञापयति तेन यत्र क्वापि स्थातव्यं न चिन्तयेदितिभावः । पुरेति वचनात् सदाननोऽयं न तु त्वद्गृहेऽधुनाऽवतीर्ण इति ज्ञापितम् अनेनेति न तस्यावतारः किन्त्वयमेव सम्बोधनं तु ज्ञानाभावज्ञापकं दस्यवो रावणादयः असद्दस्युपदे तथा निर्वचनस्योक्तत्वात् यस्याभिमेषयेनरदेवस्य च इति सवाटव्यामिन्द्रियाणि चोक्तानि कंसोपि तृणावर्तादिप्रेषणात् दस्युः नन्वनेन दस्यवो मारिता इत्यत्र किं प्रमाणं तत्राह—साधव इति । यद्यन्तःकरणस्थितचौरान् बहिःस्थितांश्च न मारयेत् तदा साधव एव न भवेयुः विशेषाकारेणापि मारयतीत्याह दस्युपीडिता इति दस्युभिरुपहृतधनाः पुनः समेधितास्तथैव कृताः ततोऽप्यधिकाश्च ततो जिग्युः स्वयमेव तान् जितवन्तः अतो भवन्तोऽप्यनेन समेधिनाः स्वयमेव दस्यून् जेष्यन्ति एवं भगवतस्त्रिविधानि कर्माणि निरूपितानि सर्वदोषनाशकानि सर्वसुखजनकानि सर्वसामर्थ्यजनकानीति. ननु, कथं साधूनां दुष्टोपद्रवः पूर्वं राज्ञां विद्यमानत्वात्. तत्राह—अराजक इति । न विद्यन्ते राजानो यस्मिन् देशे परशुरामेण सर्वे हताः कार्त्तवीर्यश्च विवेकादयः अत एव अरक्ष्यमाणाः रक्षकाणामपेक्षामपि न कृतवन्तः अतः कंसापेक्षां परित्यज्य स्वतन्त्रतया राजवत् स्थातव्यमित्युपदेशोऽप्युक्तः ॥ १७ ॥

एवं कर्माण्युक्त्वा गुणानाह-य एतस्मिन्निति । गुणास्त्वनुभावरूपाः क्रियां नापेक्षन्ते ये महाभागाः एतस्मिन् भगवति प्रीतिं स्नेहं कुर्वन्ति तान् अन्यो नाभिभवन्ति स्वत एव तर्हि सर्व एव कथं प्रीतिं न कुर्वन्तीत्याशङ्क्य भगवत्प्रीतौ स्वरूपयोग्यता सहकारियोग्यतां चापेक्ष्यत इत्याह-मानवाः मनोरंशाः सधर्मरूपाः धर्मार्थं एवोत्पन्ना इति स्वरूपयोग्यता मन्वन्तराणि सद्धर्म इति वाक्यात् महाभागा इति—

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥"

इति वाक्यात् परमभाग्येनैव प्रीतिर्जायते प्रीतिमिति सर्वदैकविधप्रीतिकरणार्थमेकवचनं पटवत् वृद्ध्यर्थं वा खण्डकरणाभावार्थं वा हेतुस्तूक्त एव य इति प्रसिद्धतया तेषां निर्देशः भवन्तस्त इति प्रतिनिर्देशार्थः एतान् परिदृश्यमानान् गोकुलस्थान् नन्वन्तर्यामिप्रेरणेनैव ते न बाधन्ते अवश्यं चैतद्वक्तव्यं भक्तिस्तु अन्तर्यामिप्रेरणार्थो अतो नानेन प्रकारेण भगवद्गुणा उक्ता भविष्यन्तीत्याशङ्क्याह-विष्णुपक्षानिवासुरा इति । विष्णुपक्षे पक्षपाते येषां विष्णुरेषां रक्षक इति येषु ज्ञानम् अतः स्वकीयवैगर्ध्यशङ्कया आसुरा न बाधन्ते अन्तर्यामी तेषां नान्यथा प्रेरकः आसुराणामासुरभावेनैव प्रेरणानियमात् अतो विशेषाकारेणैव पालयिष्यतीति सर्वजनीनत्वात् अंबरीषादिचरित्रे तथा प्रसिद्धेः अस्य प्रीतेरेषोऽनुभावः गुणास्त एव ये सानुभावाः परम्परयाऽप्यनुभावं सम्पादयन्ति अनेन साक्षाद्गुणा अनन्ता एव वक्तुमशक्या इति सूचितम् ॥ १८ ॥

एवं गुणे प्रदर्शनमात्रमुक्त्वा विशेषाकारेण वदन् उपसंहारमिषेण रक्षामुपदिशति-तस्मादिति । यस्मादयं महानुभावः पूर्वोक्तकर्मा अलौकिकः तस्मात् हे नन्द ! सर्वानन्दकारिन् त्वमासक्त्याय च एनं पालयेति भावः अयं ते कुमारः गुणैः कृत्वा नारायणसमः नारायणस्य समः द्विविधोऽपि नारायणः अक्षरपुरुषोऽन्तर्यामी च गुणैरेव कृत्वा तत्समः कर्मादिस्वधिकानि अनुभावश्च नराज्जातानीति पक्षे यावन्तो जीवगणाः सृष्टा उत्पन्नाः ते सर्वे भगवद्गुणव्यापका तावद्गुणप्रसिद्धौ तादृशो जात इति द्वितीयपुरुषस्य तु विशेषेण स्वसंबन्धयोग्यजीवराशिपरिग्रहात् स्वतुल्यतामापादयितुं स्वभावनिवर्त्तकाः सादृ

कालेन व्रजताऽल्पेन गोकुले रामकेशवौ ।
जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ विजह्रतुः ॥ २१ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भावा गुणा उक्ताः तृतीयपुरुषे त्वन्तर्यामिणि जीववदय इव तदधीनत्वेन तस्य सर्वकार्यप्रेरक इति भक्तिजनका असाधारणा गुणा उक्ताः त्रिविधा अपि भगवति कृष्णे सन्तीति गुणैः कृत्वा नारायणसमानः धर्मान्तरैरपि नारायणसमतामाह-श्रिया कीर्त्यानुभावेनेति । ब्रह्माण्डमध्ये नारायणत्रयं यो वैकुण्ठे लक्ष्मीसहितः यः सूर्यमण्डले सर्ववेदसहितः यो भूमौ सर्वब्राह्मणेषु यज्ञनारायणः तत्सदृशोऽपि यथा सर्वजगज्जनन्या अक्षरानन्दरूपायाः सर्वशोभानिधानरूपायाः य एतत्त्रयकर्त्ता लक्ष्म्या जगज्जनकत्वं तस्या अपि परमानन्दः सर्वशोभारूपाया अपि शोभा यथा व्यापिवैकुण्ठस्थो भगवान् लक्ष्म्या एतावत्करोति एवं कृष्णोऽपि करोति यथा सवितृमण्डलस्थः कीर्त्ति स्थापयति सर्वलोकेषु न ह्यन्यस्मिन् "उदिते दिनकरसकलं कमलायते भुवनम्" इति वाक्यात् कीर्त्तिः सूर्ये प्रतिष्ठिता यतः सर्वेषां स्वत एव शीताज्ञानादिसर्वदुःखनिवृत्तिः सर्वसुखं च भवति एवं कृष्णकीर्तेरपि यतः प्रभृत्युदितः ततः प्रभृति सूर्यवदेव भागवतादिषु प्रकाशते यथा यज्ञा आधिदैविकाः सर्वेषां सर्वकार्यकर्त्तारः दूरादेव माहात्म्यज्ञापकाः तथा महानुभावो भगवान् एवं षड्भिः नारायणैस्तुल्यो भगवान् कृष्णः गुणैः षड्गुणैः श्रिया कीर्त्यानुभावेन च तस्यैव विवरणम् एवं भगवद्गुणानुक्त्वा चकारेण सत्यं शौचमित्यादि प्रथमस्कन्धोक्तगुणानपि सङ्गृह्य परमनिधानत्वेनोपपाद्य सावधानान्तःकरणोभूत्वा प्रपञ्चविस्मरणेन गोपायस्वेत्युपदिशति गोपायस्व समाहित इति एतावता सर्वथाऽपेक्षा कर्त्तव्या न क्वापि गन्तव्यं न नेय इत्युक्तम् ॥ १९ ॥

एतावदुक्त्वा गते यज्जातं तदाह-इतीति । आत्मानं नन्दं भगवन्तं वा सम्यगादिश्योपादिश्य गर्गे स्वगृहं मथुराङ्गते नन्दस्तद्वाक्यात् प्रमुदितः सन् आशिषाम् आशीर्भिः पूर्णमात्मानं मेन इति सम्बन्धः । स्वस्यायोग्यत्वेन महतो ज्ञानात् न भीतो जातः नाप्ययं पुत्रो न भवतीति ज्ञात्वा दुःखितो जातः येन केनापि प्रकारेण प्राप्तत्वात् गर्गोक्तं प्रमाणमिति ज्ञापयितुं कृष्णो भगवानात्मेति नन्दश्च कृतार्थ इति अयं ज्ञापयितुमात्मपदं सम्यगुपदेशः नास्मिन् शङ्का कर्तव्या नाप्यन्यस्माद्भयं सत्यप्रत्ययश्चेति आदेशः आज्ञा अन्यथा गर्गोऽपि क्रुद्धोऽदिति एतावदुपदेशं कृत्वा नामकरणं च गर्गे गच्छति यदि कंसो मध्ये व्यसनं कुर्यात् तदापि चित्तस्वास्थ्यं न भवतीति गर्गे स्वगृहं गत इत्युक्तम् चकारात् बालकयोः स्वस्मिन्नपि अन्येषु वा तत्र स्थितेष्वन्यन्तरङ्गेषु स्वगृहं गतेषु गोकुलेऽपि गर्गकर्मणः प्राकट्याभावार्थं तदा नन्दः सार्थकनामा भविष्यामीति प्रकर्षेण मुदितः प्राप्तमहानिधिः आशिषां सर्वकामितपदार्थानामन्येषां च पूरणार्थं पूर्णपरमातिशयकाष्ठां प्राप्तं मेने स्वमनस्येव तथा ज्ञातवान् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुरा जन्मान्तरे साधवो देवाः दस्यवो दैत्या अराजके इन्द्रस्य पदच्युतौ ॥ १७ ॥ १८ ॥

नारायणसम इति त्वदिष्टदेवेन सन्तुष्टेन श्रीनारायणेन स्वसमः पुत्रस्तुभ्यं दत्त इति भावः । अतो मुकुन्दमधुसूदननारायणादि नामभिरप्यभिधीयतां किन्तु "श्रेयांसि बहुविघ्नानि" इति विभाव्य सुसावधानस्सन् गोपाय प्रतिक्षणं पालय रक्षितः पुत्रः अयं ते नारायण इव सर्वोपद्रवेभ्यो रक्षिष्यतीति भावः । गोपायस्वेति पाठे आत्मनेपदमार्षं वस्तुतस्तु नारायणः समो यस्य तत्रापि गुणादिभिरेव नतु दैत्यमोक्षदस्वभक्तमहाभावप्रदत्वलक्ष्मीदुर्लभरासविहारित्वादिभिर्महागुणादिभिरिति सर्वोत्कर्षो आत्यन्तिकः श्रीनारायणादप्यस्य व्यञ्जितः गोपानाम् भावे लाभे अये शुभावहविधौ वा सुसमाहितः ॥ १९ ॥

आत्मानं स्वं प्रति प्राणानाहृत्य सौगन्ध्येन तुष्टयोः पूतनानसोः शिष्टवर्गप्रकृष्टस्य गर्गस्यापि मनोऽहरत् ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरा अराजके रक्षकरहिते काले अनेन रक्ष्यमाणाः समेधिताः दस्यून् जिग्युः जितवन्तः ॥ १७ ॥ १८ ॥ १९ ॥

इत्येवमात्मानं प्रति समादिश्य गर्गे स्वगृहं गते नन्दः आशिषाम् आशीर्भिः आत्मानं पूर्णं मेने अमन्यत ॥ २०—२१ ॥

---

### भाषा टीका ।

हे व्रजराज ! पहिले या ने अराजक समय में चोरन सों पीडित महात्मान की रक्षा करी । तब वे वढ़िवार पाय कें चोरन कों जीतत भये ॥ १७ ॥

जो महाभाग मनुष्य या तुमारे कन्हुआ में प्रेम करि हैं तिन कों वैरी जन कबहूं न सतें हैं । जैसे विष्णु के पक्षवारेतें असुर दूर डरपें हैं ॥ १८ ॥

हे नन्दराय ! तस्मात् ये जो तुह्मारो पुत्र है सो श्री, कीर्ति प्रभाव और गुणनसों साक्षात् श्रीनारायण के समान होवें गो याकी तुम सावधानी सों रक्षा करो ॥ १९ ॥

या प्रकार सों नन्दराय के प्रति गर्ग मुनि नें परमात्माकों नन्द के पुत्र बताय कें उनके गुणन को वर्णन कियो और ता पीछे गर्गाचारी अपने घर कूं आवत भये तब नन्दरायजी भी अपन कू मनोरथो सो पूर्ण मानत भये ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

बालक्रीडाचमत्कारैः कृष्णो रामेण संयुतः ।
परमानन्दमाधत्त व्रजे नन्दयशोदयोः ॥

तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु ।
तन्नादहृष्टमनसावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरन्ति मात्रोः ॥ २२ ॥
तन्मातरौ निजसुतौ घृणया स्नुवन्त्यौ पङ्काङ्गरागरुचिरावुपगुह्य दोर्भ्याम् ।
दत्वा स्तनं प्रपिबतोः स्म मुखं निरीक्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदम् ॥ २३ ॥
यर्ह्यङ्गनादर्शनीयकुमारलीलावन्तर्व्रजे तदबलाः प्रगृहीतपुच्छैः ।
वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहा जहृषुर्हसन्त्यः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूर्णत्वमेव दर्शयन्नाह—कालेनेति ॥ २१ ॥

अनुकृष्य पुनः पुनराकृष्य सरीसृपन्तावतिशयेन चलन्तौ कथम् ? घोषाः कटिपादभूषणकिङ्किण्यस्तेषां प्रघोषेण रुचिरं यथा तथा तेषां नादेन हृष्टं मनो ययोस्तौ लोकमितस्ततो गच्छन्तं जनमनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत् प्रभीतवच्च मात्रोरन्ति समीपे उपेयतुरुपजग्मतुः ॥ २२ ॥

तदा च तन्मातरौ निजसुतौ दोर्भ्यामुपगुह्य प्रमोदं ययतुः कथम्भूते ? घृणया कृपया स्नुवन्त्यौ पयःपूर्णपयोधरे सत्यौ पङ्काङ्गरागेण च रुचिरौ । कथम्भूतं मुखं निरीक्ष्य ? मुग्धं मन्दं स्मितं यस्मिन् अल्पा दशनाश्च यस्मिंस्तच्च तच्च ॥ २३ ॥

यर्ह्यङ्गनानां दर्शनीया कुमारलीला ययोस्तथाभूतौ जातौ तदान्तर्व्रजे व्रजस्य मध्ये तदबला व्रजाङ्गनास्तौ प्रेक्षन्त्यः प्रेक्षमाणा विस्मृतगृहकृत्याः हसन्त्यो जहृषुर्हृष्टा बभूवुः, कथम्भूतौ ? ताभ्यां प्रगृहीतानि पुच्छानि येषां तैर्वत्सैरितस्ततोऽनुकृष्यमाणौ ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं तस्य श्रवणकृतं पूर्णत्वमुक्त्वा दर्शनकृतमपि वक्तुमारभते—कालेनेत्यादि । कालेन व्रजतेति शकटभञ्जनानामकरणाच्च किञ्चित्काले गते सतीत्यर्थः । तृणावर्त्तवधस्यैतदुत्तरकालीन एव एकहायन इत्युक्तत्वात् एकाब्दे हि शिशोः पादव्रज्या दृश्यते बलिष्ठस्य तु तन्मध्येऽपि व्यतिक्रमकथनं तु तुष्टत्वभादूमुग्धलीलात्वसाधारण्येन काचिदावेशेन च गोकुले व्रजमध्ये इति तत्रैव तन्महामधुरलीलया तत्रत्यानां महाभाग्यं बोधयति एवमग्रेऽपि बोध्यम् रामस्तल्लीलया गोकुलरमणात् को ब्रह्मा ईशश्च तावपि वयते लीलामाधुर्येण वशीकरोतीति किम्वा प्रथमरूढप्रशस्तकेशविलासयुत इति. यद्वा—

अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः ।
सर्वज्ञाः केशवं तस्माद् मामाहुर्मुनिसत्तमाः ॥

इति भारतरीत्या ततोऽपि देदीप्यमानतया विवक्षित इति केशवः तौ इति रिङ्गणलीलया जगन्मनोहरताभिप्रेता केशवस्य पश्चान्निर्देशः अनुजत्वेन हे तातेति कथ्यबाल्यलीलाविशेषस्मरणेन प्रेमवैवश्यात् सलालनं सम्बोधनं यद्वा तातस्य श्रीनन्दस्य गोकुल इति सुखविहारस्वाच्छन्द्यं बोधितम् ॥ २१ ॥

अनुकृष्येति सरीसृपन्तौ कुटिलं गच्छन्ताविति च रिङ्गणलीलायामपि बलिष्ठत्वं द्योतयति अङ्घ्रियुग्ममित्यादिषु कमलादिरूपकाग्रस्वस्य तदतिक्रमस्फूर्तेः क्वचिच्च तत्प्रयोगस्त्वन्यस्य तद्द्वारापि स्फू
इति ज्ञेयं व्रजस्य कर्दमेष्विति प्रायो गोमूत्रगोरसादिनिपा
प्राङ्गणस्य पङ्कमयत्वात् बहुत्वं च स्थानबाहुल्यात् लोकं कां
दागतं मुग्धवत् गृहजनं मत्वैवानुसृत्य पश्चादन्यं ज्ञात्वा प्रभी
वत् मात्रोरन्तिकमुपेयतुः प्रशब्दाज्जीतत्वाधिक्येन बाल्यलील
सौष्ठवं बोधितं बतिप्रत्ययाद्यथान्यो मुग्धादि बालस्तथैव लील
वेशेनेत्यर्थः । अन्यत्तैः यद्वा, घोषो व्रजस्तेन तत्रत्यास्तेषां प्र
घोषैः अहो रिङ्गणस्य महाश्चर्यत्वमित्याद्युच्चशब्दैरुचिरं य
स्यात् तस्य घोषस्य तेन वा प्रकृष्टेन नादेन समन्वयत् ॥ २२
पङ्को व्रजकर्दम एवाङ्गरागस्तेन रुचिरौ रुचिरत्वं च "मुग्ध
किं न सुन्दरम्" इति न्यायेन "सरसिजमनुविद्धं शैवलेनापि रम्य
इत्यादिवत् विशेषतस्तु बाल्यलीलायां तदादेरेव शोभनत्वा
निजौ स्वीयौ सुतौ इति तयोर्द्वौ प्रत्येव स्नेहभर उक्तः नि
निजेत्यनुक्तत्वात् अत एव प्रकर्षेणास्वेच्छया कदाचित् मा
विपर्ययेणापि पिबतोः स्तनं दत्वा तत्तदन्तरामुखं निरीक्ष्य सम्य
गवलोक्य च अत एव प्रकृष्टं नेमं विरञ्चो नायं सुखाप इत्या
वक्ष्यमाणानुसारेण तत्तदानन्दतोऽप्यधिकतममोदं प्रापतु
स्म हर्षविस्मये वा मुखमित्येकत्वं स्वस्वलाल्यमुखापेक्षया अन्य
यद्वा मुग्धं सुन्दरं स्मितं यत्र प्रमाणतः सङ्कुचाताश्चाल्पा द
यत्र तच्च तच्च ॥ २३ ॥

अथ किञ्चिद्वयोऽतिरेकेण बलवृद्धिशाकट्यादितस्ततोऽधि
व्रजमध्ये विहरद्भ्यां सर्वासामपि व्रजस्त्रीणामत्यानन्दो अ
इत्याह—यर्हीति । अङ्गनादर्शनीयेत्यादिकं तत्कौतुके तासामेव प्रा
न्यात् वत्सैस्तर्णकैः बहुत्वम् एकवत्सपरित्यागेन मुहुर्वत्सान्त
ग्रहणात् एकदैव त्रिचतुःपुच्छग्रहणाद्वा प्रशब्देन कदाचि
पुच्छत्यागो निरस्तः अत एव स्थानेस्थाने अनुकृष्यमाणौ
एव प्रकर्षेणोत्तभाणाः अत एव मुक्तं गृहं तत्रत्यकृत्यं कि
प्रेक्षणार्थं तत्र तत्र सर्वव्रजे परिभ्रमणेन गृहमेव याभि
हसन्त्यः अद्भुतत्वात् किंवा अहो बलिष्ठताविति तौ परिह
तर्णकैरप्याकृष्यमाणत्वात् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रिङ्गमाणौ चङ्क्रमणं कुर्वन्तौ ॥ २१ ॥

सरीसृपन्तौ घोषप्रघोषरुचिरं घोषस्य प्रघोषेण घो
क्षणाद्यध्वनिना रुचिरं यथा भवति तथा व्रजकर्दमेषु सरीसृ

### श्रीसुदर्शनसूरिकृत शुकपक्षीयम्।

इति क्रियाविशेषणं तन्नादहृष्टमनसौ घोषस्य श्लाघ्यध्वनिहृष्टमनसौ मात्रोरन्ति यशोदारोहिण्योरन्तिकम् ॥ २२ ॥ २३ ॥

यर्हि यदा तत्तदा प्रेक्षन्त्यः प्रेक्षमाणाः उज्झितगृहा उन्मर्दितगृहाः जहृषुर्हृष्टा अभवन् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ भगवतः काश्चित् बालक्रीडा अनुवर्णयन् विश्वरूपप्रदर्शनादिकमाह—कालेनेति। गच्छताऽतिक्रममाणेन कियता कालेन व्रजे रामकेशवौ सह जानुभ्यां पाणिभ्यां चेत्यर्थः। रङ्गमाणौ चङ्क्रमणं कुर्वन्तौ सरीसृपन्ताविति यावद्विजह्रतुः क्रीडां चक्रतुः ॥ २१ ॥

विहारमेव वर्णयति—ताविति। तौ रामकेशवौ घोषप्रघोषरुचिरं घोषाः पादभूषणकिङ्किण्यः तेषां घोषेण व्रजगतश्लाघ्यध्वनिना वा रुचिरं यथा तथा व्रजकर्दमेष्वङ्घ्रियुगमनुकृष्य पुरः प्रसारितजान्वनुगतं यथा तथा पश्चाद्गतजानुसमाकृष्येत्यर्थः। सरीसृपन्तौ पुनः पुनरतिशयेन वा चरन्तौ तेषां घोषाणां नादेन तस्य घोषस्य व्रजस्य नादेन वा हृष्टं मनो ययोस्तौ लोकमितस्ततः पर्यटन्तं जनमनुसृत्य त्रिचतुराणि पदान्यनुगम्य मुग्धवत्प्रभीतवच्च मात्रोः रोहिणीयशोदयोरन्ति समीपमुपेयतुरुपजग्मतुः ॥ २२ ॥

तदा तयोः रामकेशवयोर्मातरौ घृणया करुणया स्नुवन्त्यौ पयःपूर्णस्तनाभ्यां पयः स्रवन्त्यौ पङ्करूपेणाङ्गरागेण रुचिरौ सुतौ बाहुभ्याम् उपगुह्य उरसि संवेश्य स्तनं दत्त्वा मुखं निधाय प्रपिबतोः सुतयोः मुग्धं सुन्दरं स्मितमल्पा दशनाः सूक्ष्माः दन्ताश्च यस्मिंस्तन्मुखमवलोक्य प्रमोदं प्रापतुः ॥ २३ ॥

यर्हि यदाऽङ्गनानां दर्शनीयाः कुमारलीला ययोस्तौ तथाभूतौ अन्तर्व्रजे व्रजमध्ये व्रजस्था अबलाः प्रेक्षमाणाः विस्मृतगृहकृत्याः हसन्त्यो जहृषुः कथम्भूतौ ताभ्यां प्रगृहीतानि पुच्छानि येषां तैर्वत्सैरितस्ततोऽनुकृष्यमाणौ जगृहुरिति पाठे तु गृहीतवत्य इत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

व्रजता गच्छता रङ्गमाणौ चेष्टमानौ वा ॥ २१ ॥

सरीसृपन्तौ पुनःपुनः भृशं गच्छन्तौ सर्पन्तौ घोषाणां किङ्किणीनां प्रघोषेण प्रकृष्टेन शब्देन रुचिरः घोषप्रघोषरुचिरः स चासौ व्रजः तस्य कर्दमेषु "आभीरपल्लीकिङ्किण्योर्घोषो गोपालशब्दयोः" इति वचनात् तन्नादेन किङ्किणीस्वरेण हृष्टमनसौ मुग्धप्रभीतवत् लोकं बहिर्जनमनुसृत्य विडम्ब्य मात्रोः यशोदारोहिण्योः अन्ति आन्तिके समीपे उपेयतुः प्राप्तवन्तौ ॥ २२ ॥

घृणया दयया स्तन्यं स्रवन्त्यौ अङ्गरागश्चन्दनं मुग्धं कोमलं स्मितं मन्दहासश्च अल्पदशना अणुतरा दन्ता यस्य तत् मुग्धस्मितं बालदशनाश्चास्मिन्निति वा ॥ २३ ॥

अतिरमणीयाः कुमारलीलाः बालक्रीडाः ययोस्तौ तथा तौ यर्हि यदा अन्तर्व्रजे व्रजमध्ये आगता आगतौ द्वासुपर्णोनिवत् तद् बलाः व्रजयोषितः तदा प्रेक्षयन्त्य उत्स्मृतगृहाः विस्मृतगृहव्यापाराः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कालेनेति प्राचीनलीलेयं नामकरणस्य शततमपर्यन्ताह निर्णयात् तृणावर्तवधस्य वार्षिकत्वात् अस्य वर्षाभ्यन्तरे च सम्भवात् ॥ २१ ॥ २२ ॥

प्रसङ्गेनावेशेन च व्यतिक्रमः स्तम्भादयः प्रपिबतोः स्तनं दत्त्वा तत्तदन्तरा मुखं निरीक्ष्य च ॥ २३—२४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं नामचरित्रमुपपाद्य रूपचरित्रं वक्तुं भगवत्कृतिः कालरूपेति तस्मिन्नेवाधिदैविके गच्छति सति भगवद्गतिरित्याह—कालेनेति दशभिः। दशधा भगवद्रूपमत्र वक्ष्यते अवान्तरानन्तभेदयुक्तम्।

> गतौ गतिविशेषे च भूमौ रूपद्वयं हरेः।
> यशोदायां तथा रूपमुपविष्टं त्रिधा मतम् ॥
> अन्याश्रितं स्वतश्चैव कथं चित्सर्वथा तथा।
> उत्थितं तु त्रिधा रूपं युक्तं त्रिविधलीलया ॥
> बालकैर्मुग्धलीलाद्या धाष्ट्र्यधैर्यसमन्विते।
> निर्गुणायस्यरूपश्च ज्ञापिते तु ततः परम् ॥
> सात्त्विकादिविभेदेन तत्तद्धृदयगामिनी।
> तांस्तांस्तु क्रमशो भावान् दूरीकृत्याग्निमे स्थिरा ॥
> यशोदार्थमियं लीला प्रसङ्गादन्यगामिनी।
> यदैव ता गृहे व्यग्रास्तदैवं दशधा हरिः ॥

तत्रादौ उपविष्टस्य हरेः अल्पचलनात्मिकां गतिलीलामाह—कालेनेति। स्वतो व्रजता कालेन कृत्वा अल्पेनैव गोकुले नर्तापि यशोदाया अङ्गणे रामकेशवावुभावपि नामकरणेन भगवदावेशात् भगवन्तौ योगिध्येयौ ब्रह्मादिवन्द्यौ च रामकेशवौ मत्यर्थीयो वप्रत्ययश्चात्र सौन्दर्यार्थे परिगृह्यते वस्तुतस्तु लौकिक एव केशवशब्दः तद्धितान्तः न तु भगवद्वाचकः केशयोः वं सुखं यस्मादित्यर्थः। प्रत्ययापेक्षायाभावात् उभयोर्न्यूनाधिकभावेऽपि वयसि स्थितयोः समाना गतिर्भगवद्गतिरयेन भगवत्सन्निधानेन नामद्वारा सम्बन्धानन्तरमेव भगवत्त्वम् अत उभौ जानुभ्यां सह पाणिभ्यां रिङ्गमाणौ जातौ शनैः तदा अन्योन्य विजह्रतुः विहारं कृतवन्तौ क्रीडां कृतवन्तावित्यर्थः—

> "जानुभ्यां गमनं विष्णोर्दैत्यानां मर्दनाय हि।
> बहिर्दैत्यपतिर्भूत्या न निवारयति स्वतः ॥"

उपविष्टयोः नम्रीभूतयोः गमनं पादाधीनमेवेति जानुभ्यामेव गमनमुच्यते पादयोस्तु स्वहभावः तत्र प्रतिष्ठाभावात् सम्पूर्णेनापि शरीरेण रिङ्गमाणाविति जानुभ्यां सह रिङ्गमाणौ पाणिभ्यां सह रिङ्गमाणाविति सहपदप्रयोगः अनेन अरंग अल्पचलनेऽपि भूमौ शयानावेव भवतः पुनरुत्थाने च तथा ग॰

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृपाणि भगवतः सहस्राणि ध्येयानि हसद्रूपाणि चरणमुपविष्टानि चरणं प्रचलितानि च इयं प्रथमगतिः उत्तरश्लोकोक्तगतिपर्यन्तमनुसन्धेयोत्तरोत्तरपुष्टा उत्तरस्यादिना पूर्वावसानस्य न्यायसिद्धत्वात् ॥ २१ ॥

द्वितीयमाह-तावङ्घ्रीति । गतिविलासा अत्र निरूप्यन्ते प्रथमतः अलसवलितगतिः तावुभावपि एको भगवानिति न वैलक्षण्यं जानुभ्यामेव गच्छन्तौ मध्ये मध्ये जानुपीडामिव भावयन्तौ अङ्घ्रियुग्मम् अनुकृष्य पादाग्रमधोमुखं कृत्वा जानुपर्यन्तं भूमिष्ठं विधाय शनैराकृष्य पश्चात् शीघ्रं सरीसृपन्तौ द्रुतं गच्छन्तौ भगवतस्तथा गमने हेतुमाह-घोषप्रघोषरुचिरमिति । घोषःशब्दः प्रकृष्टो घोषः ताभ्यां रुचिरं यथा भवति तथा प्रथमं गच्छन्तौ नूपुरक्षुद्रघण्टिकादीनां वादनमाकर्णयन्ताविव शब्दे दत्तकर्णौ शब्दगतिं विचारयन्तावङ्घ्रियुग्ममनुकृष्य शनैश्चलितो सशब्दः किं स्वाभरणादेव जायते अन्यस्मादिति वेति विचारयितुं गतेः शैघ्र्यं कुरुतः तदा प्रघोषो भवति तस्यापि विचारार्थं पुनः स्थितौ भवतः तदा प्रघोषेण रुचिरं यथा भवति तथा सरीसृपन्तौ भवतः पुनरेवं घोषप्रघोषाभ्यां बहुधा गतितरतमभावं प्राप्तौ व्रजकर्दमेषु गतौ भूमिदेहसम्बन्धकृतशब्दवैलक्षण्यग्रहणाय तत्रापि चेत् शब्दः आभरणानामेव नान्यस्येति तन्नादहृष्टमनसौ जातौ अस्मद्गत्या तदनुगामीशब्दोपि रुचिरो भवतीति एवं बहुधा आवृत्तिर्मनःपरितोषार्था अनेन भगवान् चरित्रं कृत्वा तत्प्रतिपादकं वाक्यं च विधाय उभयोर्योग्यतायां सम्माननं वक्तुः श्रोतुश्च करोतीति लक्ष्यते एवं तयोरेव परस्परं गतिलीलामुक्त्वा अन्यानुरोधेनापि गतिलीलामाह—अनुसृत्यलोकामिति । यं कश्चित् स्त्रियं पुरुषं वा गच्छन्तमनुगच्छन्तः गन्तव्यमेवेति कथमन्यथा अयं गच्छेदिति कियत् दूरगमनानन्तरं तस्मिन् परिवृत्य दृष्टे दूरं गते वा मुग्धप्रभीतवत् त्वमातुरन्ति समीपे उपेयतुरिति सम्बन्धः गमने ज्ञानद्वयम् अस्मदीयाः केचन गच्छन्तीत्यतोऽस्माभिरपि गन्तव्यं गन्तव्यमेव वा तथा सति एकाकिना न गन्तव्यमिति तस्मिन् दूरं गते पश्चात् पुरस्ताच्चासहायमात्मानं मत्वा भीतौ भवतः व्यावृत्य प्रदर्शने तु नायं मदीय इति मुग्ध एव परिचयात् धर्मान्तरे तथा बुद्ध्यभावात् मुग्धवत् परावृत्तिर्भवति मुग्धश्चासौ प्रभीतश्चेति प्रकर्षभये मुग्धभावोपि हेतुः अन्यथा भये कारणाभावात् तस्मादेकाकी बिभेतीति भयमात्रकारणत्वेऽपि प्रकर्षभयेनान्यो हेतुः गमनागमनलीला शीघ्रं सिद्धैव तथापि मुग्धभीतभावो गमनागमनयोः क्रमेण सौन्दर्यसूचकौ उभावुभयत्र वा तदा एकाकिना नागन्तव्यमिति गमनं बालकयोः परिचयो मातर्येव विशिष्ट इतिवदिति ज्ञात्वाऽपि तथानुकरणेन पुनर्गमनागमने तत्र हास्यादिना बहवः प्रकाराः भावुकानां मनोहरा भवन्ति लोकमित्यालोकयन्तम् उज्ज्वलवस्त्रादियुक्तं मात्रोरन्तीत्यनेनैव सामीप्ये सिद्धे पुनरुपेतीति ग्रहणं कदाचिद्द्रागत्योपयेव पतनः कदाचिन्मध्ये· कदाचिद्दूरविप्रकर्षेणेति प्रकारभेदज्ञापकम् ॥ २२ ॥

एवं नानाविधगमनागमनाभ्यामुपविष्टलीला अनन्ततया बहुधा वर्णिता मात्रा सह नानाविधक्रियाभिः स इति तस्योपविष्टस्य लीलामाह-तन्मातराविति । यशोदारोहिण्यौ निजसुतौ स्वं स्वं सुतं गृ... उत्कण्ठत्वस्नेहेन स्नुवन्त्यौ पङ्क एव योषमङ्गरागः तेन रुचिरौ दोर्भ्याम् उपगुह्यालिङ्ग्य स्तनं दत्त्वा पिबतोश्च मुखं निरीक्ष्य प्रकर्षेण मोदं ययतुरिति सम्बन्धः नृत्यन्ताविव समागच्छन्तौ धृत्वा वा नृत्यं कुर्वन्तौ मातृप्रेरणया वा अन्यप्रार्थनया वा नृत्यं पश्यन्तौ वा स्तोत्रे पञ्चधा नृत्यं हेतुः लीलाभावाश्चासङ्ख्याताः रोपभावाश्च त्रिविधाः स्तोत्रविषयाः तत्र स्तोत्रं द्वेधा सम्भवति परमार्थतो लोकतश्च लौकतो घृणा घृणया अस्तुवन्त्याविति पदच्छेदे परमार्थतः स्तोत्रं घृणया उपलक्षिते वा मातरौ भगवद्व्यतिरिक्ते सर्वत्र घृणा सञ्जातेति मधुप इत्यादौ घृणा स्नेहदयाप्युच्यते भगवत्कर्तृकोपगूहनदशाभिन्ना ताभ्यामुपगूढयोरन्या अत्रापि बहवो भेदाः सम्भवन्ति स्तनपानदशा तु स्वतन्त्रा आलिङ्गितयोर्वा गया... भावात् स्तनपानं निरीक्षणलीलापि बहुविधा सर्वत्र प्रमोदः फलम् उभयोर्मातृत्वमन्यथा शङ्कितं भविष्यतीति शुद्ध... दार्ढ्यार्थं निरूपितं भगवतोपि मातरि वैलक्षण्यभावाज्ञ... नार्थं निजसुताविति उक्तं भगवत्सम्बन्धेपि सर्वपुरुषार्थं भगवद्रूपेण भिन्नतया वा ज्ञानाभावाय घृणा निरूपि... भौमाः सर्वं एवावयवाः सुगन्धा भवन्ति विजातीयैश्चोपहत... अन्यथा भवन्ति अलौकिकं तेजश्चोद्भवति तदोत्तम... भवति तत उच्यन्ते कस्तूरीकुङ्कुमचन्दनादिषु अङ्गराग... पदानि वस्तुतस्तु मृदवयवा एव गन्धतेजोभ्यां सहिता... व्यपदिश्यन्ते तत् भगवत्सम्बन्धाद्दोषनिवृत्तिपूर्वकं गुणाधान... मुचितमेव अतः पङ्कस्याङ्गरागत्वं पङ्कवद्प्रयोगाच्चैवं ज्ञायते अङ्ग... सम्बन्धानन्तरमेवाङ्गरागत्वमिति रुचिराविति परमार्थापेक्षया आधिक्यं सूचयति स्वेनैव ह्यङ्गरागत्वं सम्पादितं स्वतेज... अनुभावेन वा पुनस्तेनैव रुचिरत्वम् अङ्गरागस्य माहात्म्य... ख्यापनाय ततोप्यधिकतेजसा आविर्भावः प्रत्यक्षतः पङ्कदर्श... युक्तयोरपि पङ्काङ्गरागरुचिरत्वं निःसन्दिग्धं भावितमिति दोर्भ्यां... मुपगूहनमुक्तं निर्दुष्टभाव एव भगवत्युचित इति न तु दोष... त्वमङ्गीकृत्य अविहितभावख्यापनार्थं दत्वा स्तनमित्युक्तम् अन्यथा... मुक्तिलीलायां प्रवेशः स्यात् गमनागमनाभ्यां बालकाः क्षुधिता इति प्रकर्षेण पानं मन्तव्यं स्त्रीणां बाललीला कथं भवति... रवगना योगे ध्याने वा केवलस्यैव भाव्यत्वात् गम... तु नास्ति अवर्गीनत्वादित्याशङ्क्याह—स्मेति । सर्वलोकप्रसिद्धे लीला अतो नालौकिकप्रकारो ज्ञाने वक्तव्यः मुखानित्य... वचनम् एकस्य भावेशित्वेन शकटांकनेव मुखमिति ज्ञापयि... तदग्रे विस्तारेण वक्ष्यते । ननु, मुखस्य भक्तिरूपत्वात् ... सम्यक् निरीक्षणं जाते कथं लौकिकभावः सिद्ध्येत्? इत्याशङ्क्याह मुग्धस्मितालपदशनमिति । स्मितस्य दन्तानां च माया स्व... रूपत्वान्मोहकत्वं मुग्धं सुन्दरं स्मितम् अल्पता आसक्तिजनक... च निरूपिता मोहकं रत्यन्तैवासक्तिं जनयति अल्पदशना... तथा चीरकणसहिता दन्तपङ्क्तिरुक्ता अतो लौकिकालौकिक भावयोः मिश्रणात् प्रकृष्टो मोदः एवं लीलात्रयं कथ... निरूपितम् ॥ २३ ॥

संक्रमणयोर्लीलामाह-यर्ह्यङ्गनेति त्रिभिः । अत्र सर्वा ए... स्त्रियोऽधिकारिण्यः अन्यासां सामान्यतो निरोधाभावे तस्य...

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दोषेण जनन्याः रोष उत्पद्यमानो न भवेत्, राजसभावास्तु कोटिशो भवन्ति तान् सर्वानेव सङ्गृह्य यद्यङ्गनादर्शनीय कुमारलीलावित्युक्तम् अङ्गनास्तु तरुण्यः तासां दर्शनीया कुमारलीला ययोः तास्त्रिविधा भवन्ति कौतुकाविष्टाः रसाविष्टाः कामाविष्टाश्चेति यदैव तौ तासां दर्शनीयलीलौ तदैवातिमुग्धत्वख्यापनार्थं वत्सपुच्छावलम्बनेन स्थितौ भवतः लौकिकाभिनिवेशभयात् शुकेन न विशेषत उक्तः कुमारोऽत्र द्विवार्षिकः कुत्सितो मारो यस्मादिति कन्दर्पकोटिलावण्याधिकसुन्दर उक्तः तद्गतोत्कृष्टभावा अप्यस्मिन् निरूपिताः अङ्गनानां दर्शनीयाः भावनार्थं जातानुभावानां वा निर्भयेन दर्शनार्थं यर्हीति तृणावर्तवधपर्यन्तम् अन्यदा वा यावदयं भावो न जात इति तावन्निरन्तरदर्शनं न जातमिति ज्ञापितम् दृष्टिस्पर्शसम्बन्धैः त्रिविधाः सुखदा उक्ताः एतादृशावङ्गनादर्शनीयकुमारलीलौ अन्तर्व्रज इति व्रजमध्ये सर्वासामेव दर्शनयोग्यस्थाने तदवला अज्ञावलाः अन्यत्र गमनयोग्यतारहिताः वत्सैरितस्ततो ऽनुकृष्यमाणौ जगृहुरिति सम्बन्धः । वत्सा गोपुत्राः भगवांल्लीलार्थं कर्माङ्गदेवताभावं तदवलम्बनं वा करोति ते तु मूढाः इतस्ततः प्राकृते वैकृते च संयोजयन्ति यथा “गर्भपादच्छेदनं कृत्वा विष्णवे शिपिविष्टाय जुहोति” इति श्रुतिरिकस्य व्याख्या इति फलार्थम् एतेऽपि वत्साः भगवता प्रकर्षेण गृहीतं पुच्छं येषां द्वयोरेकस्य वा प्रकर्षेण ग्रहणात् न तेषां धावनं प्रदानार्थमेव यतो मुग्धभावः अतो न स्खलनमत्र उभाविति भगवान् स्वत आवेशतश्च क्रीडतीति वक्तुम् अनुकर्षणं शनैः शनैः कर्षणं भगवानपि वत्समाकर्षति वत्सश्च भगवन्तम् अतो वत्सस्यापि नेष्टगतिः अत इतस्तत आकर्षणं वत्सैरिति बहुवचनं धृतस्य पलायनेऽपि पुनरन्यग्रहणार्थम् एवं पराधीनभगवद्गतिं दृष्ट्वा प्रेक्षन्त्य एव स्थिताः अत्रैव तात्पर्ययुक्ता उपनिषद इव स्थिताः नत्वन्याधीनत्वेन अन्यथा ज्ञातवत्यः एवं कर्मभ्यः त्याजयित्वा स्वार्थं ग्रहणमाश्रमपरित्यागव्यतिरेकेण न भवतीति गृहं विडालादिभिरप्युपद्रुतं परित्यज्य तदवेक्षामकृत्वा जगृहुः हसन्त्य इति अस्मत्परिग्रहे नैवमितस्तत आकर्षणं भवति नवास्खलनसम्भावना प्रेक्षन्त्यो ज्ञानपरा उज्झितगृहाः विरक्ताः हसन्त्यः फलार्थिन्यः त्रिविधानां ग्रहणार्थमुक्तं ग्रहणानन्तरं विनियोगस्तु पूर्वमेव कथितः । सम्भूय ग्रहणपक्षे ततोऽपि सर्वतो नयनं सम्भवति उज्झितगृहा इति वचनादन्यत्रापि नयनं हसन्त्य इत्यपि तथा किं बहुना सर्वप्रकारेण जगृहुः सर्वासामेव यथा ग्रहणं भवति तथा भगवान् गोपुच्छधारणलीलेयं पराधीना निरूपिता ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कालेन व्रजतेति—

ऐश्वर्यमिश्रां कृष्णस्य प्रोच्य बाल्यस्य माधुरीम् ।
केवलामेव तां प्राह नित्यभाव्यामुपासकैः ॥

इति ॥ २१ ॥

अङ्घ्रियुग्ममनुकृष्येति जानुभ्यां सञ्चलनेन अङ्घ्र्योराकर्षणात् सरीसृपन्तौ कुटिलं गच्छन्तौ व्रजकर्दमेषु गोरसगोवत्समूत्रादिकर्दमितव्रजाङ्गणेषु घोषाणां गोपगोपीनां प्रघोषः हो हो हो इति मुखकरतालिकादिघोषः तेन रुचिरं यथा स्यात्तथा यतस्तन्नादेनादिघोषाः किङ्किणय इति स्वामिचरणाः लोकं व्रजपुरन्ध्रीजनं कञ्चिदागतं मुग्धवत् मातरं मत्वैवानुसृत्य पश्चादन्यं ज्ञात्वा मात्रोरन्तिकमुपेयतुः पतिप्रत्ययाद्यथान्यो मुग्धादिबालस्तथैव लीलावेशेनेत्यर्थः ॥ २२ ॥

तदा च तयोर्मातरौ निजसुतौ दोर्भ्यामुपगुह्य प्रमोदं ययतुः निजानिजेत्यनुक्तत्वात् तौ द्वावपि प्रति तयोर्द्वयोः सुतबुद्धिः ते द्वे प्रत्येव तयोरपि मातृबुद्धिर्बुध्यते घृणया वात्सल्योत्थकृपया स्नुवन्त्यौ दुग्धस्राविस्तने यत्रौ “सुन्दरे किं न सुन्दरम्” इति न्यायेन पङ्क एवाङ्गरागतुल्यस्तेनापि रुचिरौ मुखमित्येकत्वं स्वस्वबाल्यमुखापेक्षया मुग्धं मनोहरं स्मितं यत्र प्रमाणतः सङ्कुचितश्चाल्पा दशना यत्र तत्र तत्र ॥ २३ ॥

यर्हि किञ्चिद्वयोधिक्यप्रकटने सति अङ्गनानाम् आ सम्यक्प्रकारेण दर्शनीया अतिचित्ताकर्षिणी कुमारसम्बन्धिनी लीला ययोस्तथाभूतावभूतां तत् तदा अबलास्तौ प्रेक्षन्त्यः प्रेक्षमाणा जहृषुः, कीदृशौ ? ताभ्यां गृहीतपुच्छैर्वत्सैरितस्ततश्च आकृष्यमाणाविति शयानानां वत्सानां पुच्छान् जानुचङ्क्रमयोग प्राप्य किमिदमिति साश्चर्यं मौग्ध्येन यदा करतलेन मुष्टीकृत्य गृहीतस्तदा वत्सैरुत्थाय पलाय्यते ततश्च मौग्ध्येन मुष्टिमत्यजन्तौ प्रत्युत भयेन दृढतरीकुर्वन्तौ भूतले घृष्यमाणौ रुदन्तौ विलोक्य हसनाद्वत्सादपि दुर्बलौ युवामिति हसन्त्यो यत्नेन पुच्छं त्याजयामासुरिति ज्ञेयम् ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तौ योगिध्येयपादपद्मौ रामकेशवौ व्रजकर्दमेषु अङ्घ्रियुग्ममनुकृष्य पुनः पुनराकृष्य सरीसृपन्तौ सवेगं धावमानौ कथमित्याकाङ्क्षायामाह—घोषप्रघोषरुचिरमिति। घोषाः कटिकरचरणभूषणकिङ्किणयस्तदीयेन प्रकृष्टघोषेण नादेन रुचिरं यथा तथा तन्नादेन किङ्किणीशब्देन तस्य लोकस्य वा नादेन हे राम ! हे केशव ! इत्येवं सन्मुखीकरणार्थं प्रयुक्तेन हृष्टमनसौ लोकं जनं किञ्चिदवलोकनाविना मुग्धवदनुसृत्य भीतवत् मात्रोरन्तिकमुपेयतुरुपजग्मुरित्यर्थः ॥ २२ ॥

तदा तयोर्मातरौ घृणया करुणया स्नुवन्त्यौ पयः स्रवन्त्यौ पङ्कानां रागेण रुचिरौ शोभमानौ निजसुतौ दोर्भ्यां बाहुभ्यामुपगुह्य स्तनं दत्त्वा प्रपिबतोः मुग्धं मन्दं स्मितं यस्मिन् अल्पाः कुन्दकुड्मलवद्दशनाश्च यस्मिन् तत्र तत्र तन्मुखं निरीक्ष्य प्रकृष्टं मोदं ययतुः प्रापतुः ॥ २३ ॥

मात्रोः स्वबालसंसर्गजं परमानन्दमुक्त्वा गोपाङ्गनानां तत्संसर्गजं परमानन्दमाह—यर्हीति । यर्हि यदा अन्तर्व्रजे व्रजमध्ये उभौ रामकेशवौ बालकत्वाद्दर्शने सदा अङ्गनादर्शनीयकुमारलीलौ भवतः । तत्र बहुधा तासामेव सञ्चारात् अनन्यदवलाः अन्तर्व्रजावलाः रामकेशवाभ्यां प्रगृहीतपुच्छैः वत्सैरितस्ततोऽनुकृष्यमाणौ प्रेक्षन्त्य अस्थानन्दवशाद्धसन्त्यश्च

शृङ्ग्यग्नि(१) दंष्ट्र्यसिजलद्विजकण्टकेभ्यः (२)क्रीडापरावतिचलौ स्वसुतौ निषेद्धुम् ।
गृह्याणि कर्त्तुमपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसो ऽनवस्थाम् ॥ २५ ॥

कालेनाल्पेन राजर्षे ! रामः कृष्णश्च गोकुले ।
(३)अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसा ॥ २६ ॥
ततस्तु भगवान् कृष्णो वयस्यैर्व्रजबालकैः ।
सह रामो व्रजस्त्रीणां चिक्रीडे जनयन् मुदम् ॥ २७ ॥
कृष्णस्य गोप्यो रुचिरं वीक्ष्य कौमारचापलम् ।
शृण्वन्त्याः किल तन्मातुरिति ह्योचुः समागताः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्यानन्दसम्प्लवनिमग्नत्वादुज्झितगृहाः जहृषुः हृष्टाबभूवुः अहो भाग्यमन्तर्व्रजचरीणां तत्रत्यवत्सानां चेति भावः ॥ २४ ॥

### भाषा टीका ।

कछु थोरे से काल बीते पै श्रीबलराम सुखधाम और आनन्द कन्द श्रीकृष्णचन्द्र ये दोउ भैया हाथन सों और घुटुवनसों चलवे लगे और चल २ के विहार करत भये ॥ २१ ॥

वा चिरिया व्रजकी कीचन में वे दोऊ भैया अपने नेंक नेंक से श्रीचरणारविन्दनको घसीट२ के सरपटवे लगे तब आपके चरणन के बीच में जो नूपर और पैजनियान को बडो रुचिर शब्द होयवे लग्यो तब वा नादसों प्रसन्न होयके भोरे और डरपते से लोक के बालकन के नाईं जल्दीसों अपनी दोऊ मातान के समीप में आवत भये ॥ २२ ॥

मैया यशोदा और रोहिणीजी इन दोऊन के स्तनन सों स्नेह के मारे दूध चुचायतो जाय है ऐसीं दोनों माता कीच और केशर सों रुचिर अपने दोऊ बालकन कों अपनी भुजान सों आलिङ्गन करि कें अपनों २ आंचर देकर कें पीवते भये दोऊ बालकन कों भोरो भारो हंसतो भयो छोटे २ दतुलियान वारो एसो मुख निरखि कें बडे प्रमोद कों प्राप्त होत भईं ॥ २३ ॥

जासमें व्रजके मध्य गोपीन के देखिवे लायक श्रीकृष्ण और दाऊजी कुमार अवस्था की लीलान कूं करन लगे कहा करते हे ? कि—जायके घुटवन चलकें बछरान की पूंछ पकर के ठाडे होयजाते तब बछरा इनको जहां तहां खेंचे फिरते या लीलाकूं अपने २ घरन कों छोडकें देख २ के हँस २ के गोपीजन बडे आनन्द को प्राप्त होत भईं ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिचपलौ तौ शृङ्ग्यादिभ्यो निषेद्धुं गृहोचितानि कर्मा[णि] च कर्त्तुं यत्र यदा तज्जनन्यौ न शेकाते तदलं मनसो अ[नव]स्थामापतुरिति गृहसौख्यस्य परा काष्ठा दर्शिता ॥ २[५] ॥ २६ ॥ २७ ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्चाधिकवयोबलप्रकटनेन क्रीडालोलतया मात्रोरपि प्र[...] प्रेमविह्वलं चक्रतुरित्याह—शृङ्गीति । यतः क्रीडापरौ अतः शृङ्ग्या[...] घर्त्तुमभिसरन्तौ तेभ्यो निषेद्धुं निवारयितुं यद्वा शृङ्ग्यादिभिः क्रीडा[...] अतस्तेभ्यो निषेद्धुं न शेकतुः "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११) [...] नेन प्रगृह्यत्वात् पचेते अमू इति वत्सन्ध्यभावेऽपि सन्धिरार्षः [...] अतिचलौ परमचपलौ तत्र शृङ्गिणो वृषादयः दंष्ट्रिणः कुक्कु[रा]दयः वानरादयो वा असयः खड्गाः पाठान्तरे अहयः स[र्पाः] खड्गानां सम्बरणादिसम्भवादिदमेव युक्तं द्विजा मयूरा[दयः] खशब्देन सहानिषेधेऽन्यस्याशक्यता ताडनादावयोग्यता च त[...] शृङ्ग्यादिभ्यो निषेधस्यावश्यकता सा च स्नेहाकुलतया स्व[...] स्थापनेन च बाहुमात्रेणेति च बोध्यते तज्जन्मना तु [...] यतया जातासक्तेर्गृहस्य च कृत्यमावश्यकमपि तत एव [...] न शक्यते अत एव मनसः अनवस्थाम् अस्थिरताम् अलम[त्य]र्थमापतुः एतच्च श्रीभगवत्पराणां व्रजजनानां तेषां तदर्थकर्म[...] चित्तास्थैर्यमपि चापलाख्यसञ्चारिभावतया स्थायिनं [...] ख्याख्यं भक्तवृन्ददुर्लभं भावं पुष्णन् तत्समाधिनिष्ठातोऽप्युत्[...] भजति एवमेव व्याख्यातं गृहसौख्यस्य परा काष्ठा दर्शितेति [...] श्रीब्रह्मस्तुत्यादौ "तावद्रागादयस्तेनाः" इत्यादि. "यद्धामार्थसुहृ[त्]प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्यादिकैमुत्यप्रतिपादकवचन[...] "नाविन्दन् भयवेदनाम्" इत्याद्यग्न्यावेशनिषेधवचनतो 'नेमं विरि[ञ्चो]' इत्यादितद्भाग्यप्रशंसावचनतोऽपि व्यक्तमेव अतः श्रीरामकृष्ण[यो]रन्योन्यमासक्त्या शोभाभरः श्रीवैशम्पायनेनोक्तः—

तावन्योन्यं गतौ बालौ बाल्यादेवैकतां गतौ ।
एकमूर्त्तिधरौ कान्तौ बालचन्द्रार्कवर्चसौ ॥

( १ ) दंष्ट्र्याहि इति विज० वीर० । ( २ ) क्रीडापरावतियलौ इति वीर० सुबोधिनी० । ( ३ ) आकृष्ट इति वीर० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एकनिर्माणनिर्मुक्तावेकशय्याशनाशनौ।
एकवेषधरावेकं पुष्पमाणौ शिशुव्रतम्॥
एककार्यान्तरगतावेकदेहौ द्विधा कृतौ।
एकचर्यौ महावीर्यावेकस्य शिशुनां गतौ॥
एकप्रमाणौ लोकानां देववृत्तौ च मानुषौ।
कृत्स्नस्य जगतो गोपौ संवृत्तौ गोपदारकौ॥
अन्योन्यव्यतिषिक्ताभिः क्रीडाभिरभिशोभितौ।
अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे॥
विसर्पन्तौ तु सर्वत्र सर्पभोगभुजावुभौ।
रेजतुः पङ्कदिग्धाङ्गौ दृप्तौ कलभकाविव॥
क्वचिद्भस्मप्रदिग्धाङ्गौ करीषप्रोक्षितौ क्वचित्।
तौ तत्र परिधावेतां कुमाराविव पावकौ॥
क्वचिज्जानुभिरुद्घृष्टैः सर्पमाणौ विरेजतुः।
क्रीडन्तौ वत्सशालासु शकृद्दिग्धाङ्गमूर्द्धजौ॥
शुशुभाते श्रिया जुष्टावानन्दजननौ पितुः।
जनश्च विप्रकुर्वाणौ प्रहसन्तौ क्वचित् क्वचित्॥
तौ तत्र कौतूहलिनौ मूर्द्धजव्याकुलेक्षणौ।
रेजतुश्चन्द्रवदनौ दारकौ सुकुमारकौ॥

इति॥ २५॥

एव मुत्कण्ठया युगपदिव वर्णयितुमिच्छुः शीघ्रमेव रिङ्गणपादव्रजययोरादिममादिमं भागं वर्णयित्वा पुनस्तत्तल्लीलामाधुरीविशेषस्मरणोल्लासादन्तिममन्तिमं भागमपि वर्णयितुं प्रत्यावर्त्तते कालेनेत्यादिना। अल्पेनेति स्वल्पस्यस्यापि वृद्धिबलातिरेकप्रकटनात् अघृष्टानि भूमिघर्षणमप्रापितानि जानूनि येषु तैः पाद्भिः पादैरोजसा गोकुले विचक्रमतुर्बभ्रमतुः अञ्जसेति पाठे अनायासेन बलिष्ठत्वात् गोव्रज इति पाठे गोशब्दस्योक्तिर्धेनुज्येतिवत् सा च तस्य मनोहरत्वं पवित्रत्वं च बोधयितुं हे राजन्नु श्रुते सर्वत्रेति तल्लीलामाधुरीमद्विधवत् त्वयाप्यनुभूयत इति भावः॥ २६॥

तदेवं साधारण्येन तयोर्लीलां वर्णयित्वा पुनः श्रीकृष्णसम्बन्धेन रामस्यापि तादृशत्वं व्यञ्जयितुं तस्य विशेषतः सर्वव्रजमनोमोहनलीलावर्णनेन प्राधान्यं वक्तुमाह—ततस्त्विति। तु भिन्नोपक्रमे कृष्णो भगवान् इति स्वयं भगवत्त्वेन स्वतः प्राधान्यं सहराम इति लीलातोऽपि बोधयति अथ च भगवान् निजभगवत्तासारमाधुरीविशेषप्रकटनपरः कृष्णः सर्वजनाकर्षकमाधुर्यः सहरामस्तस्याप्याकर्षकः रामेति तस्य परमरमणसाहाय्यादत्रैव तन्निरुक्तिमर्य्यादापर्य्याप्तिरिति भावः। तत्तादृशरसन्नित्यर्थः वयस्यैः सखिभिः सहेति मिथः प्रणयविशेषेण तादृशलीलासौष्ठवं दर्शितं तत्र योगवृत्त्या समवयस्त्वं रूढार्थशक्त्या समानगुणजातिशीलव्यवसायवेषत्वं च ध्वनितं तथैव सखित्वोपपत्तेः तत्र हेतुः व्रजस्य तदात्मीयत्वेन प्रसिद्धस्य तस्य व्रजविशेषस्य बालकैः चिक्रीडे चिक्रीड॥ २७॥

तात्तत्क्रीडोल्लासितचित्तामङ्गया तन्मातुः स्वपामपि प्रेमविनोदविशेषाय मिथः सम्मन्त्र्य तस्यां चुकुशुरित्येतस्याह—कृष्णस्येति। गोप्यः पुरन्ध्र्यो वृद्धाश्च रुचिरं मनोहरमिति प्रेमकौतुकमेव व्यक्तं श्टण्वन्त्याः श्टण्वत्याः इति तस्यास्तत्रावहितत्वं सूचितं यद्वा नित्यं शृण्वत्या अपि समागताः समवेत्यागताः इ स्फुटम् ऊचुः चुकुशुः किलेत्यनृते वस्तुतो न चुकुशुरित्यर्थः। तादृशञ्च चापल्यं तासां मुख्योक्त्यैवातिमनोहरं स्यादिति मुनीन्द्रेणापि तद्द्वारैव वर्णितमित्येव श्रेयम्॥ २८॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

शृङ्गिणो विषाणिनः दंष्ट्रिणः श्वप्रभृतयः असिः खड्गः द्विजाः मयूराद्याः गृहाणि गृहकार्याणि मनसोऽनवस्थानम्॥२५॥

ईषद् घृष्टजानुभिः पद्भिः विचक्रमतुः कदाचिज्जानुभ्यां कदाचित्पद्भ्यां गमनं चक्रतुरित्यर्थः॥ २६-२८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नितरां क्रीडासक्तावतिचलौ इति पाठे क्रीडापरौ अत एवातिचलौ सर्वतश्चरन्तावतिबलौ इत्यपि पाठः शृङ्ग्यादिभ्यः स्वसुतौ निषेद्धुं वारयितुं गृहाणि गृहोचितानि कर्माणि कर्तुं च यदा तयोर्जनन्यौ न शेकाते नाशक्नुतां निषेधगार्ह्ये युगपत्कर्त्तुमसमर्थे भूतामित्यर्थः। शृङ्गिणो हरिणादयः दंष्ट्रिणः शुनकादयः द्विजा मयूरादयः पक्षिणः तदा ते मातरावलं नितरां मनसोऽनवस्थामकुशलत्वं प्रापतुरिति गृहिणां सौख्यस्य परा काष्ठा प्रदर्शिता॥ २५॥

हे राजर्षे! आकृष्टजानुभिः पद्भिर्विचङ्क्रमतुः कदाचित् जानुभ्यां क्रमणं कदाचित्पद्भ्यां गमनं चेति मिश्रञ्चक्रतुरित्यर्थः॥ २६॥

ततो वयस्यैस्तुल्यवयस्कैर्व्रजबालकैः सह रामेण सहितः कृष्णो व्रजस्त्रीणां हर्षं जनयन् चिक्रीडे॥॥ २७॥

रुचिरं सुन्दरं कौमारप्रयुक्तं चापल्यमवलोक्य तस्य कृष्णस्य मातुः यशोदायाः शृण्वन्त्याः सत्याः इति वक्ष्यमाणप्रकारेणोचुः॥ २८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शृङ्गिणो गवादयः दंष्ट्रिणः सारमेयप्रभृतयः गृहाणि गृहकर्माणि अनवस्थां व्याकुलताम्॥ २५॥

न घृष्टानि अघृष्टानि तानि च जानूनि येषां ते तथा तैः विचक्रमतुः पादविक्षेपं चक्रतुः॥ २६॥ २७॥

रुचिरं च तद्दिनम् उदारश्च तत्कुमारभावोचितं चपलत्वं यासु तास्तथा तन्मातुः शृण्वत्याः ता इति वक्ष्यमाणप्रकारेणोचुः॥ २८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अनवस्थां वात्सल्यपोषकचापलाद्व्यसञ्चारिमात्रं तदीयगृहकर्मणोऽपि तत्प्रेममयत्वेन स्थापितत्वात्॥ २५॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनरिङ्गणपादव्रज्या लीलयोरन्तिममन्तिमं भागं वर्णयितुमाह कालेनाल्पेनेति ॥ २६ ॥

साम्येन द्वयोर्लीलामुक्त्वा विशेषतः श्रीकृष्णलीलामाह–ततश्चेत्यादिना ॥ २७ ॥ २८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वतो गतिलीलामनेकविधामाह—शृङ्गीति । गोपिकास्तु स्वत्वभावदोषरहिताः अलौकिकभावेनापि वशीकृताः विचाराभावात् रसेनापि तारुण्यात् कौतुकेनापि अन्यार्थं च निरूपिता शीघ्रमेव विस्मृतप्रपञ्चाः भगवदासक्ता निरूपिताः यशोदारोहिण्यौ तु तद्विपरीते इति तयोस्तदुभयसम्पादनार्थं पङ्गुभ्यां स्वेन च सप्तधा लीलां कृतवान् ।

दुष्टस्य दुष्टसम्बन्धे शिष्टः पुष्टिं विमुञ्चति ।
नान्यथेति हरिः प्रीतः सत्यः क्रूरगतोऽभवत् ॥
शृङ्गिणो दंष्ट्रिणश्चैव पक्षिणश्च विघातकाः ।
चेतनास्त्रिविधा एव ततोऽन्ये तु चतुर्विधाः ॥
कृत्रिमाः सहजास्तेऽपि खड्गाग्निजलकण्टकाः ॥

शृङ्गिणो गावः अग्निर्धूमार्थं खेदार्थं वा कृतः दंष्ट्रिणो मर्कटाः अग्निः खड्गादिसाधनानि जलं कूपगर्तादि स्थितं कलशादिस्थितं वा पातनात् द्विजाः पक्षिणः शुकादयः कण्टकानि छित्त्वा स्थापितानि परितो वेष्टनरूपाणि तेभ्यो निवारणं वचनान्न भवति आज्ञाकारित्वेऽपि चाञ्चल्यात् वस्तुतस्तु आज्ञां दातुमपि न प्रेरयति उपद्रवस्थाने निर्बन्धेन निवारणं तत्तु कर्त्तुमयुक्तमित्याह–क्रीडापरावेति । क्रीडैव परा उत्कृष्टा नियामिका ययोर्बालकयोः तर्हि क्रीडासाधनानि सम्यक् स्थले कृत्वा देयानीति चेत् तत्राह–अतिचलाविति । अत्यन्तं चञ्चलौ तर्ह्यन्यः कश्चिद्वेचकः स्थाप्य इति चेत्तत्राह–स्वसुताविति । स्वेनैव सूनाविति तदर्थं क्लेशसहनात् स्नेहाधिक्याच्च नान्यविनियोगं कुरुतः क्रिययैव च निषेधः कर्त्तव्यः ततस्तत आदाय सम्यक् स्थाने स्थापनीयौ तथा प्रतिक्षणं क्रियमाणे गृहकार्ये तयोरपि भोजन स्नानादिनिमित्तं कार्यं न सिद्ध्येत तत्राह गृह्याणि कर्त्तुमपीति गृहे अवश्यकर्त्तव्यानि गृह्याणि लौकिकनिष्ठता भगवन्निष्ठता च परस्परं विरुद्धा आसक्तिस्तुल्या मध्यलीलैवेति पञ्चमलीलायां तु वक्ष्यति तदर्थं सर्वपरित्यागम् उभयोस्तुल्यत्व स्थापनायापिशब्दः यदा न शेकाते तदा मनसः अनवस्थामापतुः वैयग्र्यं चिन्तां च प्राप्तवत्यौ तयोर्जनन्याविति ताभ्यां सह क्रियानिषिध्यत इति ज्ञापितं क्षणमपि मनसो नैकत्र स्थैर्यं तयोर्जातमित्यर्थः ॥ २५ ॥

एवं मात्रोर्निरोधार्थं बहुविधां लीलामुक्त्वा स्वतन्त्रतया स्थितस्य भूमेर्मर्दनक्लेशनिवृत्त्यर्थं पद्भ्यां सम्वाहयन्ताविव गतिविलासं कृतवन्तावित्याह—कालेनाल्पेनेति । यदर्थं तत्कर्म कर्त्तव्यं तत्प्रयोजनमल्पमिति अल्पेनैव कालेन गोव्रजे पाद्भिश्चक्रमतुः अञ्जसाऽनायासेनैव नान्यावलम्बनापेक्षा कालो गत्यात्मक इति क्रीडायामिवात्रापि करणता अल्पस्य कालस्य कोमलत्वात् कोमलचरणस्पर्शे भूमेः खेदो गच्छतीत्यल्पत्वमप्युक्तं रा... इति उभयधर्मवत्त्वेन सम्बोधनम् अग्रिमचरित्रश्रवणाभि... बोधकं निरोधानुसन्धानार्थं च रामः कृष्णश्चेति नामग्रह... इत्युत्पादनसामर्थ्यजननाय अन्तःस्थितरूपेण बहिः परमान... विषयरूपेण च भूमेः सुखदानार्थं स्वतन्त्रतया उभयोस्त... त्वाय भिन्नतया निरूपणं चकारस्तूभयसमुच्चयार्थः विषयस्या... नयने मनसो बहिरानयने च विनियोगात् गवां व्रज ... खुराघातक्लेशः स्पष्टतया तत्र निरूपितः जान्वाघर्षणे ... दैत्यवधे अग्रिमकार्ये व्यर्थं स्यादिति पद्भिरिति अनेकधा ... स्थापनैः विशेषेण चङ्क्रमतुः "छन्दसि लुङ् लङ् लिटः" (३... इति स्मृतेः भगवत् क्रियाया नातीतत्वं सर्वथा ज्ञातव्यम् ॥ २...

एवं राजसीं लीलां कृत्वा लीलान्तरं कृतवानित्याह–त... स्त्ववति त्रिभिः । राजसतामसीं तामसतामसीं च स्वतो ब... मनुचितां मत्वा अन्यमुखेन निरूपयितुं मध्ये वाक्या... ततश्चतुर्भिर्निरूपितं भवति. एवं भूमिक्लेशनिवृत्त्यनन्तरमाक्री... भूमौ स्वांशैर्बालकैः सह महाराजलीलां कृतवानित्याह–... इति । तुशब्दः पूर्ववल्लीलाव्यावृत्त्यर्थः नातःपरं परतन्त्रलील... स्वातन्त्र्ये सामर्थ्यार्थमाह, भगवानिति । आवेशिनः स्वात... दौर्बल्यात् कृष्ण एवोक्तः रामस्तु सहभावेन एकेन का... भगवत्सेवकेन ते गृहीता इति तैः सह क्रीडेति ज्ञापि... वयस्यैरित्युक्तं समानं वयो येषां ते. वयस्याः देशोप... इत्याह, व्रजबालकैरिति । क्रीडायां बालका मुख्याः रामस्तु स्वा... र्निविशतीति सहराम इत्युक्तम् अत्र लीलायां साक्षान्निरो... व्रजस्त्रीणामेव तासामेव तथात्वात् ज्ञानद्वारा यशोदायाः ... सर्वथा गृहीतपरित्याजनार्थं लीलां कुर्वन् आदौ लौकिक... प्रकारेण तासामनुरागं जनितवानित्याह, व्रजस्त्रीणां मुदं जन... विति । व्रजसम्बन्धान्निरोध आवश्यकः यथैव क्रीडया ... कृतया तासां सन्तोषो भवति न तु स्वसामर्थ्येन अन्य... प्रयोजनत्वेन करणे तन्निर्देशो न स्यात् निरोधजनकत्वं स्वस... वेति स्वधर्मत्वेन निर्दिष्टं कार्यसाधनत्वेन बालकानामुपयो... रामस्य रक्षकत्वेन स्वतः सन्तोषजननं राजलीलायां च ... राजा मन्त्री रामः सेवका बालका इति यावत्यो गोप... याहग्भावापन्नाः तत्तदनुगुणां लीलामनन्तामेव भगवान् कृत... नित्यर्थः ॥ २७ ॥

यास्तु सर्वथा प्राकृतस्वभावाः लौकिकवाक्यपरिनिष्ठि... वा तासां प्रपञ्चविस्मरणं साधारणसात्त्विकलीलया न भ... तीति यत्रैव ता आसक्तास्तदेव कार्यं नाशयन् तन्निरो... कृतवान् तच्चेत् सह्यं स्यात् सर्वथा निरोधो न सिध्येदि... तत्कार्यमसहमानमिति ज्ञापयन् तथाविधा गोप्य उपाल... कृतवत्य इत्याह–कृष्णस्येति । स्वतन्त्रकर्तृत्वं भगवत एवेति ... बाला नापि राम उक्तः किन्तु कृष्ण एवोक्तः रुचिरं मनो... भवत्येव निरोधस्तु सिद्धः तथापि न स्वतोऽस्माकं तथा ... इति स्वदोषपरिहारार्थं यशोदायै निवेदयन्ति । ननु, सर्व... पूर्णाः भगवत्कृपया प्राप्तसम्पदः कथमेवमुपालम्भं कृतव... इत्याह–गोप्य इति । गोपभार्यात्वादेवं ननु, भगवति दोषद... तथा वचने निरोधो न सिध्येदित्याशङ्क्याह कौमारचाप... मिति । कौमारवयस एव चापलं चपलता वयस एतायं ...

वत्सान् मुञ्चन् क्वचिदसमये क्रोशसञ्जातहासः—
स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः।
मर्कान् भोक्ष्यन् विभजति स चेन्नात्ति भाण्डं भिनत्ति—
द्रव्यालाभे सगृहकुपितो यात्युपक्रोश्य तोकान् ॥ २९ ॥
हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैः—
च्छिद्रं ह्यन्तर्निहितवयुनः शिक्यभाण्डेषु तद्वित्।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं—
काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥ ३० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

न तु भगवत इति तासां बुद्धिः सम्यगागताः लोकन्यायेन समागताः नतूपालम्भनार्थमेव परस्परमेव तन्मातुः यशोदायाः शृण्वन्त्याः सत्याः प्रोचुः एतादृशं वचनमयुक्तमपि सर्वलोकप्रसिद्धत्वादुच्यत इति स्वस्य दोषाभावख्यापनायाह—किलेति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अतिचलौ तौ शृङ्ग्यादीन् धर्तुं चलन्तौ तैः सह क्रीडितुमिच्छन्तौ वा तौ तेभ्यो निषेद्धुं गृहोचितानि कर्माणि च कर्तुं यत्र यदा तज्जनन्यौ न शेकतुः तदा मनसोऽनवस्थां चापल्यं वात्सल्यस्थायिपोषकसञ्चारिभावम् आपतुः तत्र शृङ्गिणो वृषादयः दंष्ट्रिणः कुक्कुरादयः द्विजाः पक्षिणः ॥ २५ ॥

अघृष्टानि भूमिघर्षणमप्राप्तानि जानूनि येषु तैः पद्भिर्जानुसङ्कर्षणं विनैवेत्यर्थः। ओजसा नञ्जसेति च पाठः ॥ २६ ॥

सहराम इति गव्यमोषणादिलीलायां कृष्णस्यैव प्राधान्यात् ॥ २७ ॥

रुचिरं सुखदं हन्तैतादृशं सुखमस्मत्प्रियसख्या श्रीयशोदया न प्राप्तं तदस्मचाक्षुषमेतत्तस्याः श्रावणमप्यस्त्विति तत्र गत्वा शृण्वत्याः शृण्वन्त्यै स्वपुत्रचरित्रश्रवणार्थं गृहकार्यंशतमपि त्यजन्त्यै तन्मात्रे उपालम्भनदानमिषेण परमानन्दमेव दातुमिति भावः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पुनर्मात्रोः भाग्यातिशयं द्योतयन् बाललीलामाह—शृङ्गीति, अतिचलौ अतिचपलौ यतः क्रीडापरौ क्रीडासंसक्तौ शृङ्ग्यादिभ्यः स्वसुतौ निषेद्धुं वारयितुं गृह्याणि गृहोचितानि कर्माणि यत्र यदा तयोर्जनन्यौ न शेकाते नाशक्नुतां तदा अलमत्यर्थं मनसोऽनवस्थामस्वास्थ्यं प्रापतुः आश्चर्यभूता तयोर्भगवत्कृपापात्रतेति भावः ॥ २५ ॥

अन्तःपुराद्बहिर्निर्गत्य तत्रत्यानां प्रमोदं जनयन् सहरामः श्रीकृष्णश्चिक्रीड इत्याह—कालेनेति द्वाभ्याम् ॥ २६ ॥ २७ ॥

अथ बालकृष्णक्रीडाकृष्टचित्तानां गोपाङ्गनानां तच्चापल्यनिवेदनव्याजेन तन्मात्रग्रे तदपूर्वप्रेमसूचकं सम्भाषणमाह—कृष्णस्येति सार्द्धैस्त्रिभिः ॥ २८ ॥

---

भाषा टीका।

श्रीयशोदा और रोहिणी दोनो मैया, बड़े चंचल क्रीड़ा परायण दोनो बालकन कूं गऊ, वृषभ, बन्दर, तरवार, जल, पक्षी, अथवा ब्राह्मण, और कांटेन सों जब निषेध करवे कूं और घरके काम काज करवे कूं समर्थ नहीं होत भईं तब अपने मन की सुस्थिरता कूं नहीं प्राप्त होत भईं ॥ २५ ॥

हे राजन्! व्रजमें श्रीबलदेवजी और श्रीकृष्णचन्द्र थोरेइसे कालमें घुटुवनकों टेक कें विनाश्रमसों श्रीचरणनसों चलवे लगे ॥ २६ ॥

तब तो श्रीकृष्ण भगवान् व्रज के बालक ऐसे अपने सखान सहित और श्रीबलदेवजी सहित व्रजस्त्रियन कूं आनन्द उपजावत क्रीड़ा करत भये ॥ २७ ॥

अब श्रीशुकदेवजी उराहन की लीला कूं वर्णन करें हैं कि गोपी लोग सदा नित नई भगवान् की कुमार अवस्था की चपलता वारी क्रीड़ान कों देखि २ कें एक समय में सिगरी जुर मिलके श्री यशोदा मैया के समीप जायके या कन्हैया के सुनत २ ऐसें बोलत भईं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कृष्णचापलचौर्याणि सर्वदाखिलसद्मतः।
प्रजल्पन्त्यः समागत्य गोप्यो गोप्यै मुदं ददुः ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

असमयेऽदोहकाले क्रोशे सञ्जातहासः स्तेयं चौर्यार्जितं न तु दत्तं तत्रापि स्वादु नेतरत् दधि च पयश्चात्ति किं च भोक्ष्यन् अर्कान् मर्कटान् प्रति विभज्य ददाति तेषां मध्ये तृप्तत्वेन कोपि नात्ति चेत्तर्हि भाण्डं भिनत्ति क्वचिद्द्रव्यस्यालाभे सति स गृहाय धक्ष्यामीति कुपितो याति । यद्वा सगृहा गृहिणस्तेभ्यः कुपितस्तेषां तोकान् पर्यङ्कादिषु सुप्तानुपक्रोश्य रोदयित्वा यातीति ॥ २९ ॥

कल्पितैः स्तेययोगैरित्युक्तं तत्प्रञ्चयति—हस्ताग्राह्य इति । दुर्ग्राह्यशिक्यस्थभाण्डेष्वन्तर्निहिते दध्यादौ वयुनं ज्ञानं यस्य स छिद्रं रचयति तद्विच्छिद्ररचनादिवित् ध्वान्तयुक्ते गृहे स्वाङ्गमेवार्थप्रदीपं रचयति—विक्षेपतो धृतमणिगणं यर्हि यस्मिन् काले ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तद्यथाहुः—वत्सानिति सार्द्धद्वयेन । तत्र पूर्वार्द्धमेकं वाक्यम् अवतारिकाविनोदाय तु पृथगिव व्याख्यायते तत्र प्रथमोपद्रवमाहुः, वत्सान् मुञ्चन् बहुत्वं स्वेषां वैयग्र्यविशेषबोधकं ननु प्रत्युत वत्सपालायमानत्वं खल्विदं कोऽनु दोषः तत्राहुः असमये अदोहनकाले ननु, बालकेनाज्ञानतः खलु इदं कृतं कथमनुशोचथ प्रतिगृहं विद्यमाना बहवो लोका रुन्धीरन् तत्राहुः क्वचित् कृत्यान्तरव्यग्रतया यदा ते रोद्धुं न शक्नुवन्ति तदैवेत्यर्थः । एवं चेत्तर्हि कथं न भीषयध्वे ? तत्राहुः,क्रोशे सम्यग्जातहासः अक्रोशनार्थम् इति परममोहनतोक्ता वत किमर्थं वत्सान् मुञ्चन् तत्र हसन्त्यः सानुकरणमाहुः, दधिपयोऽत्तीति.तदर्थमेव गृहजनानितस्ततो धावयितुं वत्सान् मुञ्चतीत्यर्थः । अहो कठिनास्तर्हि कथं स्वयमेव पूर्वं नददध्वेत्यत्र सस्मितभ्रूविलासेन शनैरिवाहुः स्तेयमेवात्ति न तु दत्तम् अतएव दत्तमपि तादृशं न भुङ्क्त इति भावः । अपि का वो हानिर्यतः ततः पतितभाण्डस्य गोरसमात्रस्यात्यल्पप्रमाणपाने तत्राहुः गृहस्वाम्यादर्थं प्रयत्नस्थापितं स्वाद्वेवात्ति तत्रापि अथ कारणं नैवास्ति अहो परमचतुराणां वो गोरसमसावशिक्षितचातुर्य्यश्चोरयेदिति न सम्भावयामः तत्राहुः कल्पितैः पूर्वमदृष्टाश्रुतैरधुना स्वबुद्ध्यैव रचितैःस्तेयोपायैः अये युष्मत्पितृपितामहादीनां पुण्यफलमेवेदं यदयं परमकृपणानामदत्तमपि भुङ्क्ते तर्हि कथमिव पश्चादपि नानुमोदध्वे ? तत्राहुः, मर्कानिति. वरं सखिगणान्वितः स्वयमत्तु अहो मोक्ष्यन् स्वभोजनात् पूर्वमेव मर्कटान् सर्वान् प्रति विभज्य ददाति । किञ्च, तेषां वनात्फलादितृप्तत्वेन यद्येकोऽपि नात्ति तर्हि स्वयमपि नात्ति भाण्डं च भिनत्तीत्यर्थः । एतत्तु पूर्वं तासां द्वारागतवानरवृन्दाय नवनीतं दातुं निजोपदेशस्याकरणकोपेनेति लभ्यते यद्वा, सपरमतुर्वीलः कदाचित्त्वया यत्नेन बहुभोजितस्तेनैतत् स्वयं नात्ति तर्हि भाण्डं भिनत्ति तद्दोषमारोप्येति शेषः । ननु, कथमेवं ज्ञानेपि भाण्डानि न गोपायथ ? तस्माद्भूयमेव तथा क्रीडयन्त्यो मम बालकं चपलीकृतवत्य इत्यत्राहुः । द्रव्येति. स इति परोक्षनिर्देशो दर्शनेप्यदर्शनं सूचयन्ति सम्प्रति सौम्यप्रकृतिदर्शनादन्यत्वं वा सर्वं गृहस्थितजनं प्रत्यपि कुपितः सन् तोकान् तोकानि बालापत्यान्यपि रोदयित्वा याति द्रवति तानि च राधाचन्द्रावल्यादीनि तल्लघुभ्रातादीनि ज्ञेयानि सगृहशब्देनैव वा गृहस्थितजना उच्यन्ते ॥ २९ ॥

अहो किमिदमपूर्वं कथयथ ? के ते स्तेययोगास्तानपि शृणु स्तत्राहुः—हस्तेति । विधिं हस्तग्राह्यतोपायम् आद्यशब्देन "पीठनिषण्णबालकगले" इति श्रीबिल्वमङ्गलाद्युक्तानुसारेण स्कन्धारोहणादि हि निश्चितम् अथ ततोपि दूरे रचत तत्र शिक्यवर्त्तिभाण्डेषु दीर्घसद्व्यलगुडादिना छिद्रं रचयति । करोतु पीठाद्युपायात् दूरतश्छिद्रस्य तु निजाभीष्टधाराया दुर्घटास्फुटदपि भाण्डं तत्राहुः तद्वित् ननु, बहुषु भाण्डेषु निजाभीष्टं कथं प्राप्नुयात्तत्राहुः,अन्तरिति भाण्डलक्षणविशेषज्ञो भावः । अथ कथमन्तस्तमपि गृहकोष्ठिकायां न रक्षत ? तत्राहुः ध्वान्तेति स्वशब्देन मणिगणसापेक्षत्वमपि खण्डितं ततो मणिगणाधरणमप्युत्कपठ्यैव कुत्रचिन्मदङ्गकिरणाभेद्यमपि यदि गाढं तमो भवेदिति अनेनेदमप्युक्तं भवति यदि धृतमणिगणः न स्यात् तदा कुत्रचित् कथञ्चित्तमो लेशशेषेण किञ्चिदवशिष्टं स्यात् इति चोरस्यास्य मणिपरिधापनेन तथापि तत्र साहसी जनो मन्यते गृहस्वामिभिर्दुर्लभोयं मणिगणोऽप्याच्छिद्यत्ततः दद्यप्रभृति नायमलङ्करणीय इति तच्च भावयन्ति अपूर्वं धृतानर्घ्यमणिगणोऽपि गोरसचोर इतीति परिहसन्ति चेति यदीदं सत्यं स्यात् तदा निह्नुत्य गृहात्वैनात्रानीयतां तत्राहुः काल इति । यस्मिन्न सम्भवति तस्मिन् समयविशेष इत्यर्थः । ननु कोऽसौ तत्राह यर्हीति एवमेवेदं न पौनरुक्त्यं तेष्विति यतिभङ्गेन पृथक् पाठोयम् अथवा तत्तद्भाण्डेषु तत्तद्द्रव्यं कथं जानाति तत्राह, तद्वित् लक्षणेनैवेति पूर्ववत् ननु मिथ्याप्रलापिन्यः ! किमिदं कथयथ ? ममायं बालकोऽद्यापि मुग्ध एव. तत्राहुः, अन्तरेव निहितं संवृत्य धृतं वयुनं ज्ञानं सर्वबुद्धिवृत्तिः सः अन्यत्सगानं तदेवं निगूढपरद्रव्यस्य समयस्य च ज्ञानं दुर्गारोहणाच्छिद्रकरणलक्षणक्रियाद्वैधप्राधीयस्यं सञ्जातहासाद्यैः मोहनविद्यात्वं चोक्तं तैश्च सम्पूर्णगुणैर्महाचोरतोक्ता ॥ ३० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्रोशसञ्जातहासः जनानामाक्रोशे जातहासः भुङ्क्ते स्तेययोगैः चौर्यरूपैरुपायैः चौर्यस्योपायैः मर्कान् दधिसारस्य नवनीतं प्रच्छन्ने इत्याह—विभजति सखिभ्य इति शेषः । यद्वा मर्कं मर्कटं प्रति विभजति स्वोपभोक्तव्यमधिकं मर्कटादिभ्यो ददातीत्यर्थः । सर्वं नात्ति स मर्कः कृत्स्नोपभोगान्नात्ति चेत् केवलं भाण्डं भिनत्ति कृत्स्नं च क्षपित्वा भाण्डं च भिनत्तीत्यर्थः । यद्वा मर्कटको नात्ति चेत् भुक्तावशिष्टगव्यसहितं भाण्डं भिनत्तीत्यर्थः । द्रव्यालाभे दधिक्षीरादेः कृष्णभयात् प्रच्छन्ननिहितत्वात् तदलाभे सति स गृहे कुपितः तस्मिन् गृहे कुपितः तोकान् बालानुपक्रोश्य प्रहारतोदनादिभिः कुपितान् कृत्वेत्यर्थः ॥ २९ ॥

अन्तर्निहितवयुनो अन्तर्निहितनवनीतादिभोग्यद्रव्यज्ञानवान् शिक्यस्थभाण्डे दृषद्भिः छिद्रं रचयतीत्यन्वयः । ध्वान्तागारे अन्धकारावृतागारे धृतमणिगणं स्वाङ्गम् अर्कप्रदीपं प्रकाशं स्वाङ्गं रचयति सन्निधापयति ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह–वत्सानित्यादिना सार्द्धद्वयेन । असमये क्वचित् वत्सान् मुञ्चन् क्रोशेन जनानामाक्रोशेन सञ्जातो हासो यस्य तथाभूतो भवति स्तेयं चौर्यार्जितं न तु दत्तं तत्रापि स्वादु नेतरत् दधि पयश्चात्ति खादति कल्पितैः स्तेययोगैः चौर्योपायैः स्वयं भोक्ष्यमाणः मर्कान् प्रति विभज्य ददाति तेषामपि मध्ये तृप्तः कोऽपि नास्ति चेत्तर्हि भाण्डं भिनत्ति मर्कं भोक्ष्यन् विभजति सचेत्रास्ति इति पाठे मर्कं नवनीतं "मर्कं तु दधिसारः स्यान्नवनीतं प्रचक्षते" इत्यभिधानाद्विभजति सन्निभज्य इति शेषः यद्वा स मर्कटो नास्ति चेत् स्वभुक्तावशिष्टनवनीतोपेतं भाण्डं भिनत्तीत्यर्थः । क्वचिन्नवनीतादिद्रव्यालाभे सति प्रच्छन्ननिहिततया तदलाभे सति स्वगृहकुपितः अस्मद्गृहेभ्यः कुपितः सगृहेति पाठे स कृष्णः यद्वा सगृहा गृहिण्यस्तेभ्यः कुपितः तेषां तोकान् पर्यङ्कादिषु सुप्तानुपक्रोश्य रोदयित्वा याति ॥२९॥

कल्पितैः स्तेययोगैरित्युक्तं तत् प्रपञ्चयति—हस्ताग्राह्य इति । उच्चस्थे नवनीतादिभाण्डे हस्तेन गृहीतुमशक्ये सति पीठकोलूखलाद्यैर्विधिं तद्ग्रहणसाधनविधानं रचयति शिक्यस्थभाण्डेषु अन्तर्निहितेषु दध्यादौ वयुनं ज्ञानं यस्य तथाभूतः छिद्रं रचयति शिलोत्क्षेपणादिभिः छिद्रं करोति तद्वित् छिद्ररचनादिवित् ध्वान्तागारे अन्धकारावृतगृहे धृतमणिगणां दिव्यमणिविभूषितगात्र पदार्थप्रदीपं तत्तदर्थप्रकाशकं स्वाङ्गं स्वशरीरं रचयति सन्निधापयति इत्येवं कस्मिन् समये करोति श्रीकृष्णस्तं कालमाह–यस्मिन् काले गोप्यो गृहकर्मसु प्रवणचित्तास्तदैवं करोतीत्यन्वयः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असमयानप्राप्तदोहनवेलान् अस्मदादीनां क्रोशेन सञ्जातो हासो यस्य स तथा अथ कदाचित् स्वेन कल्पितैस्स्तेययोगैः चौर्योपायैः स्तेयं चौर्योपत्तं दधि पयश्च स्वाद्वत्ति पिबति च स कृष्णः मर्कं वाव्वं मार्जारं वा वानरं वा भोक्ष्यन् भोजयिष्यन् विभजति विभागं करोति नास्तिचेन्नवनीतादिभाण्डं भिनत्ति कदाचित्-उपायानां भावेऽभावे च द्रव्यालाभे दध्यादिद्रव्याप्राप्तौ कुपितः ताडनादिना बालानुत्क्रोश्य रोदयित्वा यातीत्यन्वयः "मर्को मनसि वायौ च तोके मार्जारकीटयोः" इति च ॥ २९ ॥

स्तेययोगं दर्शयति– हस्तेति । ह्रस्वत्वेन हस्ताग्राह्ये सति हस्तेन ग्रहणार्थं पीठकाद्यैर्विधिम् उपायं प्रकारं रचयति शिक्यस्थितभाण्डेषु मध्ये अन्तर्निहितवयुते अन्तर्निचितनवनीतभाण्डे तद्वत् यथालब्धुं शुलभं तथा छिद्रं लगुडादिना विवरं करोतीत्यन्वयः गृहान्धकारे क उपाय इति तत्राह—ध्वान्तागार इति । अन्धकारावृतगेहे धृतमणिगणां धृतसूर्यादिप्रकाशाधिकप्रकाशरत्नगणसम्वीतं स्वाङ्गं स्वदेहम् अर्थप्रदीपं पदार्थप्रकाशकं करोतीति शेषः । कस्मिन् समये इत्यत्राह–काल इति ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वत्सानित्यादि । वनात् फलादिभिस्तृप्ततरत्वेन तेषु कोऽपि नास्ति चेत् तर्हि स्वयमपि नास्ति भाण्डञ्च भिनत्तीत्यर्थः ॥ २९ ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतो निरोधलीलां तत्तद्दोषदूरीकरणार्थं कृतां तदभिनिवेशेन तावत् कृतस्वदोषरहिताः भगवद्गुणान् गणयन्ति षड्भिः जीवस्य दोषरूपान् भगवतो गुणान् ईश्वरोऽहि हीन कर्म न करोति वत्समोचनम् अनीश्वरकर्मेति केचित् सर्वमोक्षदाता भगवान् मत्स्यनिधिकर्त्ता यावद्दिनं क्षुधितान् वत्सान् मातृसमागमेऽपि दुःखिता माभवन्त्विति मर्यादासमयोल्लङ्घनं कृत्वा वत्सान् मुञ्चति कचिदिति यत्र वत्सविमोके मातृतः पूर्वं बन्धनमशक्यम् आक्रोशे कृते भगवान् अमानी मानदस्तासाम् दुर्बुद्धिं ज्ञात्वा सञ्जातहासो भवति माया उत्तरोत्तरं मोहिका प्रवृद्धा भवति, एवं बहिःस्थितानाम् आन्तरं दुःखं क्षुत्कृतं मोहकृतं च नाशयति मोहोऽपि सम्यक् मोहो जायते भगवद्विषयकः येन केनाप्युपायेन सर्वोऽपि मनोव्यापारो भगवद्विषयक इति लक्षणः एवमुभयविधान् कृतार्थीकृत्य स्वकीयेषु स्वयं भोक्तव्यमिति स्वान्तः स्थितबालकान् अन्नादिना सम्वर्द्धयितुं वीर्यविरुद्धमिव चौर्येण भुङ्क्ते इत्याहुः–स्तेयमिति । यस्तु हरति स चोरः हरिर्हि भगवान् स्मरणेनैव सर्वं हरति स्तेयेन प्राप्तं स्तेयं पक्वान्नादि ओदनव्यञ्जनात्मकं सूपादि पायसान्तं तत्रापि यत्स्वादु भवति रस्यं गोपिकागृहे स्वयमुपविश्य बालकानुपवेश्य तानन्यत्रैव प्रेषयित्वा यद्यत्स्वादिष्टं खण्डलड्डुकादिकमोदनादिकं च भुङ्क्ते अथ तृप्त्यनन्तरमन्नसमाप्त्यनन्तरं वा दधिपयः प्रथमं दधि पश्चात्पयः पयःपानान्ते शनैर्गोजनं करोतीत्यर्थः । चौर्ये भगवता उपाया बहव एव कल्पिताः दूरे शिक्ये स्थालीं पूर्णजलां स्थापयित्वा अधश्चेत् शेते तदापि नालेन जलं पीत्वा स्थालीमुत्तार्य वंशद्वारा समारुह्य नयति एवमनेकप्रकारा अपरिज्ञाने परिज्ञानेऽपि नवनीतभाण्डे भाण्डमग्रे स्थापयित्वा सावधानस्थितायामपि दुग्धादिना पूर्णमुखः तदक्ष्णोः फूत्कारं कृत्वा अक्षिनिमीलने नयति क्षणादृष्टश्च भवति नसोऽस्त्युपायो येन भगवतः सकाशात् रक्षितुं शक्यते इतोऽपि भगवतः अवाङ्मनोगोचरा उपायाः ते सर्वे भगवतैव कल्पिताः न तु चौरशास्त्रे सिद्धाः बालकैः सह भुङ्क्त इत्येके वस्तुतस्तु अन्तः स्थितबालकप्रीत्यर्थमेव तथा करोति स्वयं भोक्ष्यन् बालकेषु तृप्तेषु मर्कान् विभजति मर्का मर्कटाः मर्केभ्यो विभजतीत्यर्थः । ते हि पूर्वं रामावतारभक्तास्तेष्वपि तृप्तेषु स्वयमध्यात्मा स्वीकृतभावो भुङ्क्ते जगदात्मा सोऽपि चेन्नात्ति "योत्ता यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनम्, क इत्थावेद यत्र सः" इति श्रुतेः । स प्रसिद्धः तदेकं भगवद्रूपं भोक्तृ सम्बन्ध्यन्तमेव शुद्धान् भुङ्क्ते यत्पुनर्मोक्षसम्बन्धि न भवति दैत्याविष्टं वा तत् सः अत्ता न भक्षयति तदा भाण्डं भिनत्ति दैत्यानां सम्बन्धि अन्यैर्न भक्षणीयमिति द्रव्याणामभावे तु अलाभे वा अन्यत्र स्थापिते सगृहकुपितो भवति सगृहे गृहसहिते गृहस्थे कुपितो भवति अयुक्तकरणात् सगृहा हि धर्मार्थमेव भवति धर्माभावे गृहवैयर्थ्यात् धर्मश्च द्रव्यैर्भवति

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्रव्यसाधकाश्च पुरुषाः ईश्वरस्य कोपभयात् दिनान्तरे समृद्धिं करोत्येव अथवा गृहस्थं बहिर्गमयेत् ताडयेद्वा एवमलौकिकक्रोधः लौकिकमाह-यात्यनुक्रोश्य तोकानिति । तोकान् बालकान् स्तनन्धयान् स्वदपेक्षयाप्यन्तःस्थिता बालकाः तेषु क्षुधितेषु तदीयेन भवता स्थातुमयुक्तं भवति इत्यनुक्रोश्य रोदनं वा कारयित्वा मयि विमुखे रुद्रः प्रवेक्ष्यतीति एवं भगवतः षड्गुणा निरूपिताः ॥ २९ ॥

धौर्त्यं क्रियाप्रकारमुक्त्वा ज्ञानप्रकारमाह-हस्ताग्राह्य इति । पञ्चविधं ज्ञानं सप्रकारं निष्प्रकारं च काले वस्तुनि निःसाधनं अल्पासाध्ये अत्यन्तासाध्ये च अन्धकारस्थापिते आलोकापेक्षायां सप्रकारं ज्ञानम् अनेन पूर्णाविद्यानिरूपिता भवति लौकिकबुद्ध्या तु सर्वं ज्ञानं परोपद्रवाय भवति तदीयांशानां ज्ञाने तज्ज्ञानमपि भवतीति वस्तुतस्तूपकार एव यत्र भगवतः कुसूलादौ वस्तु हस्तेनाग्राह्यं भवति तत्र पीठे उलूखलमधोमुखं प्रतिष्ठाप्य तदुपरि बालकं वा निवेश्य गृहवंशान् वा धृत्वा वस्तु गृह्णाति रिक्तभाण्डेषु तु न प्रयत्नं करोति तत्र हेतुः अन्तर्निहितवयुन इति अन्तः भाण्डमध्ये निहितं वयुनं ज्ञानं यस्य शिक्यभाण्डेषु दुग्धादियुक्तेषु अन्तः कुन्तादिना छिद्रं करोति अधस्ताच्च भाण्डान्तरं स्थापयति दध्यादौ तु न करोति शर्करादौ तु पातयति घनीभूतदध्यादौ च तत्सर्वं वेति तद्वित् ध्वान्तागारे तु धृतमणिगणं स्वाङ्गम् अर्थतः प्रदीपभूतं रचयति यद्विदानीमप्रकाशमानमपि तदानीमन्धकारगृहे सूर्यवत् प्रकाशते मणींश्च प्रकाशयति अर्था एव वा प्रदीपा भवन्ति स्वाङ्गमेव वा अर्थार्थं प्रदीपो यस्य तस्यान्यस्मिन्नागते एतदपि सर्वं काले यदा गोप्यो न जानन्त्येव दूरे वागता भवन्ति किञ्च यर्हि गृहकृत्येषु पाकादिषु मन्दस्नानादौ बालकतर्पणे वा अत्यावश्यके सुष्ठु व्यग्रं चित्तं यासां मथनादिसमये वा कालविलम्बे वा कृतमेव नोत्पद्येत ॥ ३० ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सखि यशोदे ! शृणु स्वपुत्रस्य चौर्यचातुर्यमित्याहुः-वत्सानिति । एतत्पुरेऽद्य शून्यगृहेषु दधि चोरयामीति मनसि कृत्वा गत्वा गत्वा गृहान् जनशून्यांश्चिक्षीषुः क्वचिद्दिवसे असमये अदोहकाले वत्सान् मुञ्चन् भवति ततश्चेतस्ततो धावतो वत्सान् परावर्तयितुं तदनुपदं गृहान्निःसृत्य जनेषु धावत्सु शून्यगृहान् प्रविश्य दधि चोरयित्वा पलायत इति भावः । अन्यस्मिन्नहनि अरे दधिचोरः कृष्ण आगतस्ताड्यतां बध्यतामित्यादिक्रोशे आक्रोशकृते सति सञ्जातहासो भवति अथ तदनन्तरमेव महामाधुर्यहास्यमधुपानवैवश्येन जडीभूतास्वस्मासु पश्यन्तीष्वपि निषेद्धुमपारयन्तीषु दधि पयोऽत्ति तत्रैवोपित्वा भुङ्क्ते नापि पलायत अस्माकं मोहिनीकृतत्वादिति भावः ननु ! चेद्दधिलम्पटमिमं प्रथममेवोदरपूरं कथं न भोजयध्वे ? तत्र त्वयाऽभीक्ष्णं भोजितस्यास्य न बुभुक्षादिकं किन्तु स्तेयं स्तनकर्मैव स्वादु मतश्चोरितमेव दध्यादिकमस्मै रोचते न तु दत्त-मिति भावः । तदेवं परोक्षमपरोक्षं चेति द्विविधं चौर्यं मोचनहासाभ्यां ज्ञापितम् एवं कल्पितैः स्वबुद्ध्यैव रचितैः योगैश्चौर्योपायैरपरैरपि लोष्ट्रक्षेपादिभिरपरस्मिन् परि दिने भोक्ष्यन् स्वभोजनात् पूर्वमेव मर्कान् मर्कटान् विभजति अयमयं भवतां प्रत्येकं भाग इति विभज्य बहुत्र भोजितत्वेनातितृप्तत्वात् तेषां मध्ये स एकोऽपि नास्ति चेत्तदा युष्मान् विना किमर्थं भोजनेनाहमपि न भुञ्जे दुःखेन भाण्डं दधिपूर्णं भिनत्ति कदाचित् शून्यगृहे प्रां दध्यादिद्रव्यालाभे सति सगृहाय गृहसहितजनायैव कु तिष्ठ रे तिष्ठ श्वः प्रातरेवाहमङ्गारमेकं गृहीत्वैव चौर्यार्थमे यत्र दधि न प्राप्स्यामि तद्गृहं सबालकवृद्धमेव दह त्युक्त्वा तोकान् बालापत्यानि उपक्रुश्य नखाद्याघातेन भित्वा याति कस्मिंश्चिदन्यस्मिन् गृहे प्रविष्टस्सन् ह गृहीतुमशक्ये दधिभाण्डे विधिमुपायं रचयति उपर्यु निहितद्वित्रिपीठारोहणेन वा उलूखलारोहणेन वा बालस्कन्धा णेन वेत्यर्थः । अतितुङ्गशिक्यवर्तिभाण्डेषु अन्तर्निहिते द वयुनं ज्ञानं यस्य सः भाण्डचैकदशनेनैवेति भावः । अत्र पवितुमशक्तः सशल्यकलगुडेन छिद्रं रचयति तद्वित् छिद्रं छिद्रेण धारां पातयितुं धारया च व्यादत्तं स्वस्य वा च मुखं पूरयितुं वेत्तीति सः न चान्धकारेऽपि चौर्यं सा मित्याहुः, ध्वान्तयुक्ते अगारे स्वाङ्गं स्वीयश्यामाङ्गमप्यर्थं रचयति तत्रापि धृतमणिगणमिति किमप्यविदित न तिष्ठ भावः । कथं सावधाना न तिष्ठत ? इति चेत्तत्राहुः, काले इ यद्यप्यस्य स्मितकलभाषणमधुरचलनगात्रलावण्यादिभिरेव प्र चौर्यनिष्पादिनी मोहनीविद्यैवास्ति तदापि बाल्यमौग्ध्य परोक्षचौर्यमिव एवासौ बुद्ध्यत इत्यत एव का कुत्र कि इति बालसहचरप्रेषणादिना प्रतिक्षणमनुसन्धत्त भावः ॥ २९—३० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्वचित् कदाचित् असमये अदोहकाले वत्सान् मुञ्च क्रोशसञ्जातहासः क्रोशेन असमये वत्सविमोचननिमित्तेन आक्रो शेन सञ्जातः हासो यस्य स तथाभूतो भवति स्तेयं चो र्जितं दधि पयश्चात्ति अन्यदपि स्वादुवस्त्वपि क्वचित् भो मर्कान् मर्कटान् प्रति विभजति तन्मध्ये कोऽपि नात्ति चेत्त भाण्डं भिनत्ति क्वचिच्च द्रव्यालाभे सति सगृहेभ्यो गृह कुपितो याति क्वचिच्च तोकान् बालान् उपक्रोश्य याति ॥ २९ ॥

कल्पितैस्स्तेययोगैरित्युक्तं, तदाह—हस्ताग्राह्ये इति । द यस्मिन् काले गोप्यः गृहकृत्येषु सुव्यग्रचित्ताः भवन्ति हस्ताग्राह्ये उच्चस्थे दध्यादिभाण्डे सति पीठकाद्यैर्विधिं र यति अत्युच्चैः पीठकादिविधानेनापि हस्ताग्राह्येषु भाण्डे अन्तर्निहिते दध्यादिवयुनं ज्ञानं यस्य सः यष्ट्यादिना छि रचयति तद्वित् तां छिद्ररचनां जानातीति स तथा ध्वान्ता गारे तु स्वाङ्गं स्वाभाधारणां प्रकाशरूपमङ्गमर्थप्रदीपम् दधिभाण्डादीनां दीपवत् प्रकाशकं रचयति तदपि म

एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ—
स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते ॥
इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभि—
र्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छत् ॥ ३१ ॥
एकदा क्रीडमानास्ते रामाद्या गोपदारकाः ।
कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन् ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मयाभरणविद्योतितत्वादतिप्रकाशकं भवतीत्याहुः धृतमणिगणमिति ॥ ३० ॥

———

भाषा टीका ।

सिगरी गोपी बोली, कि हे यशोदाजी ! तुम अपने सुत को क्योंनहीं वरजो हो, देखो तो सही तुमारे लाला गऊ न दोहन के पहिलेई साभ सवेरे हमारे घरन् में आय के बछरान कों खोल देवे है बछरा सिगदूधे पीजांय हैं दूधदुहनवारे खाली दोहनी लेके उठि आवें हैं और एक तो डाठचोई नाइजाय है पर जो कदाचित् कबहूं नेक याको डाटें तौ वो हंस देवे है तब वाकी हांसी देख हमहूं को हांसी आय जाय है तब हम कछुनाइं कहपावें हैं और जो कछु दूधदही हमारे घरन में चोरी के उपायन सों याकूं पायजाय है वडो मीठो लगे है और वाई कू ये खाय है और अच्छेसे अच्छो पदार्थ याकूं हाथसों देवे तौ हमसों कहे है कि हमारे घर में कहा कमती है और चोरी के दूध दही को आप पै खायो जाय सो खावे है और बन्दरन कूं डारिदेइ है वाकोऊ जब पेट भरो होय और वो जब नहीं खावे तब हमारे गोरस के चिकने बासनन कूं फोर डारे है और कहवे लगजाय है कि याके घरको दही माखन कछुकाम को नाइ जो जो बन्दर भी नाय खावे हैं और जो हम कोई दिन नेक छिपाय कें धर देवें और याके हाथ कछू न परे तब क्रोधकरिकें कोशै है कि आगि लगो या घर में हमारि तौ चौहनी को सुगन विगर गयो और जो कहूं हमारे नेक २ से बाल बच्चासो ये होय तौ उनको चकें चीमटी भरिके रुवाय के जाय है ॥ २९ ॥

और जो हम ऊंचे छीकेन पैं धरि देवें जहां याके हाथ न पहुंचे तब पट्टा पीढा ऊखरी तर ऊपर धरिकें चुराबे में के उपाय बनाय लेइ है। ताहू पै छींकेन ताई जो हाथ न पोंचे तब नीचे तें बासन में परमान छेद करि देइ है। और जामें कछु भर्यो होय वोतौ याकूं अवश्य मालूम परई जाइहै और जो हम अंधेरे में धरि देवें तो मणीन के गहने पहिरे हैं सो उजेरो कर लेवे है। वीर ! यशोदा ! सांची पूंछे तौ तेरीऊ सलाह जान परेहै तब तौ मणीन के गहने पहिराय राखे हैं नहीं तौ उतार न लेती । तब यशोदाजी बोली, कि—वीर ! अहो ! अब मैं गहने उतार लऊंगी तब बहुतेरी सखी बोलीं नाइवीर ! गहनो कहा करेगो याको तौ देहै दिया सरी को प्रकाश करेहै तब यशोदाजी बोली, कि—नेक चौकसी राखो करो तब सगरी बोली, कि—वीर ! हम चौकसी तौ करेई हैं पै घर के काम काज में नेक हमारो चित्त लग्यो और ये कब को पहुंच गयो तासों हमारो बस तौ नाइं चले है॥ ३० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

रे रे चोरेत्याक्षिप्तः सन्नुशति जल्पति त्वमेव चोरोऽहं गृहस्वामीत्यादीनि धार्ष्ट्यानि प्रागल्भ्यानि अथवा उशति हे कमनीये यशोदे ! यद्वा, उशति वास्तौ खर्चिते गृहे मेहनादीनि कुरुते एवं स्तेयोपायैर्विरचिताकृतिः कर्म येन सः त्वत्समीपे सुप्रतीकः साधुरिवास्ते सभये नयने यस्मिंस्तच्च तच्छ्रीयुक्तं मुखं च तदालोकिनीभिर्व्याख्यातार्था प्रख्यापितजन्मफला तत्तत्कर्मफला वा उपालब्धुमाक्षेप्तुं नैच्छत् ॥ ३१ ॥

कदाचिदपराधान्तरे उपालभत तदा तु महदाश्चर्यमभूदिति कथयन्नाह-एकदेति ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तस्य भयातिशयं दृष्ट्वा संक्षेपेणैवोपसंहरन्त्यः किमन्यन्यदपि हास्याय व्यञ्जयन्ति एवमित्यर्द्धेन । एवं स्तेयोपायैर्विरचितकृतिः कृतकृत्यस्सन् पुनर्धाष्ट्यानि आसां सम्बन्धविशेषेण हसन्तीनां वृद्धानामुत्तरीयाकर्षणादीनि स्वगृहिणी सहवासनिर्देशादीनि च कुरुते किं बहुना आसां वास्तौ मूत्रादीनि च कुरुते एता मार्जयितुं नित्यं न शक्नुवन्ति क्षणमागम्य पश्यत चेति भावः । अहो पश्यत सोऽयमेव नान्यः इति परस्परमाहुः सुप्रतीक इति । तदेवं प्रेमविनोदं वर्णयित्वा श्रीयशोदायाः स्नेहपूरं दर्शयति इत्यमिति । तासां स नर्मप्रेमविशेषमयं कोशनफलमाह—सभयेत्यादि । इत्थं व्याख्यातः अर्थः तद्वर्णनीयं परमप्रागल्भ्यं यस्यां सा अत एव प्रहर्षोदयेन पुत्रचाञ्चल्यादिकौतुकेन तासां कौतुकपरताया वितर्केण च प्रहसितमुखी प्रहासितं हासप्रारम्भसहितं मुखं यस्य-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हसितयुक्तमित्यर्थः । तादृशं मुखं यस्याः सा हि एव उपालब्धु- मिच्छामपि नाकरोत् किन्तु वत्स ! ईदृशीश्चेदृशं व्यवहारं कथं करोषि? इति सलालनमुवाचेत्यर्थः । इदमेव निश्चित्य ताभिरप्यागत्य क्रोशनं कृतं यथा मातृशैथिल्यमनुभूयाधिकमस्मद्गृहे चापल्यं विधास्यत्ययमिति अन्यथा तु तस्य सङ्कोचनं नाकरिष्यतैवेति भावः । अत्र—

जगज्जनमलध्वंसिश्रवणस्मृतिकीर्तनाः ।
मलमूत्रादिरहिताः पुण्यश्लोका इतिस्मृताः ॥ इति

पुराणान्तरवचनेन कैमुत्यापातात् "त्वक्श्मश्रुरोमनखकेश- पिनद्धम्" इत्यादिश्रीरुक्मिणीदेवीसिद्धान्तानुसाराच्च यद्यपि तत्र सम्भवति तथापि बाल्यलीलाविनोदार्थं मृषैव प्राप- ञ्चितानि मेहनादीनीति ज्ञेयं रोचमानतार्थप्रधानोऽत्र वशधातु- स्ततः कमनीये इति व्याख्यातम् ॥ ३१ ॥

पुनरेतत्पूर्वां कामपि पूर्ववदद्भुतलीलामनुस्मृत्याह—एकदे- त्यादि । ते तथाविधाः रामाद्या इति तेषु ज्येष्ठवर्गं बोधयति अत एव श्रेष्ठया गोपायन्ति श्रीव्रजेश्वर्याज्ञया सर्वतः श्रीकृष्णं रक्षन्तीति गोपाश्च ते दारकाश्च दारुपुत्तलिकावत् तदाज्ञा- कारिणः यद्वा दारानन्दपत्नी तस्याः काः श्रीकृष्णमृद्भक्षणनिवेद- नेन तत्सुखरूपाः तस्याः सुखप्रदा इत्यर्थः । कृष्णा इति भुवस्सकाशान्मुदाकर्षकत्वान्मृदमिति कोमलमृत्तिकाम् अत एव मञ्चितत्वान्निवारितोपीत्यर्थः । एवं मात्रे मृद्भक्षणासहनलीलायै न्यवेदयन् भतिशयनिवारणाय विनयेन मृद्भक्षणमपतयन्त इत्यर्थः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यस्मिन् कृष्णः द्वारे देहल्यादिप्रदेशे विरचितकृतिः विर- चितचौर्यव्यापारः सुप्रतीको यथास्ते सुप्रतीकाख्यदिग्गज इव अप्रधृष्य आस्ते सभयनयनं भयसूचकनयनसहितं श्रीमुखं कृष्णस्य श्रीमुखमालोकयन्तीभिः व्याख्यातार्था निवेदित- चौर्यादिव्यापारान् उपालब्धुं भर्त्सनादि कर्तुम् ॥ ३१—३५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं कुर्वंश्चोरोऽयमित्युक्तः चेद्धार्ष्ट्यानि प्रागल्भ्यान्युशति जल्पति त्वमेव चोरोऽहमेव गृहस्वामीति वदतीत्यर्थः । वास्तौ स्वार्चिते गृहे मेहनादीनि मूत्रोत्सर्जनादीनि कुरुते स्तेयोपायैर्विरचिताकृतिः कर्म येन तथाभूतोपि स्वसमीपे यथा सुप्रतीकः साधुस्तद्वदास्ते एवमित्थं सभयं नयने यस्मिन् तच तच्छ्रीयुक्तं मुखं तत्कृष्णमुख- मालोकिनीभिस्स्त्रीभिर्व्याख्याताः प्रख्यापिता अर्थाश्चौर्यादिव्यापारा यस्यास्तथाभूतापि प्रहसितं मुखं यस्याः सा यशोदा उपालब्धुं पुत्रमाक्षेप्तुं नैच्छत् ॥ ३१ ॥

कदाचिदपराधान्तरे सत्युपालभत तदा तु महदाश्चर्यमभू- दिति कथयन्नाह—एकदेति स्पष्टोऽर्थः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं तदा धार्ष्ट्यानिभिर्भयरत्नाद्विशति गृहमिति शेषः । उपनिष्ठ च वास्तौ देहल्यादौ मेहनादीनि पुरीषोत्सर्जनादीनि करोति स्तेयोपायैस्तेयव्यापारैः विरचितकृतिः निर्मितचौर्यव्यापारः शोभनानि प्रतीकान्यङ्गानि यस्य स चार्वङ्गः सच्चरित्रः पुरुषो यथा तथा ऽऽस्ते इत्यन्वयः सुप्रतीको मार्जारो वा सभयं नयनं यस्मिंस्तत्सभयनयनं च श्रीमुखं च सभयनयनश्रीमुखं श्रियां युक्तं मुखं श्रीमुखम् आस्यावलोको यासामस्तीति सभयनयन- श्रीमुखावलोकिन्यस्ताभिर्व्याख्यातः प्रकाश्य कथितोऽर्थः सुत- विषयो व्यापारो यस्याः सा तथा उपालब्धुं निर्भर्त्सयितुं इत्यर्थशब्दः सप्तम्तिवचनः ॥ ३१ ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उशति कमनीय इति वशेरत्र रोचमानतार्थप्राधान्या- न्नह्युपालब्धुमैच्छदिति तदेतदेवाभिप्रेत्य ताभिरपि क्रोशनं कृतमिति भावः ॥ ३१ ॥

पुनरेतत् पूर्वां कामपि पूर्ववदद्भुतलीलास्मृत्याह—एक- देत्यादि । एवं निगूढेति व्याख्यायां यथेचम् ॥ ३२—३५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं ज्ञानप्रकारमुक्त्वा पर्यवसानमाहुः-एवं धार्ष्ट्यानीति । हे उशति कमनीये ! धार्ष्ट्यानि वस्त्रविमोचनादीनि कुरुते उशति कमनीये भाण्डादौ च मेहनादीनि कुरुते वास्तौ यत्र वास्तुदेवता पूजिता भवति किञ्च स्तेयोपायैः भ्रमजनकैः विरचिताकृति- राकृतिर्यस्य पतिवत् पुत्रवत् भ्रातृवच्च तिष्ठति तत्र कार्यार्थं एतादृशोपि सुप्रतीकः साधुवदास्ते धार्ष्ट्यादिकरणं पुरीषादि- करणं चौर्यकरणं रूपान्तरकरणं साधुवत् स्थितिश्चेति पञ्चधा रूपसंग्रहः देहवत् इन्द्रियवत् प्राणवत् अन्तःकरणवत् आत्म- वच्चेति पञ्चधा अज्ञानस्य पञ्च शेषभूतानि रूपाणि एवं क्रिया- रूपान् ज्ञानरूपान् आकृतिरूपाञ्चिरूप्योपसंहरति—इत्थमिति । एवं प्रकारेण स्त्रीभिः व्याख्यातार्थापि प्रहसितमुखी सती उपालब्धुं नैच्छत् उपालम्भे ह्ययं कार्यं स्त्रीणां मनोरञ्जनं बालकस्य भय- जननं च तदुभयं प्रथमत एव जातं भयसहितं नयनं यस्य स भयनयनो भगवान् तस्य श्रीयुक्तं मुखं तदालोकिनीभि- रेवमुपालम्भनकर्त्र्योपि भगवन्मुखनिरीक्षका एव ज्ञानशक्तेरेव भयं न तु क्रियाशक्तेः तदाह—सभयं नयनं यस्येति । श्रीमुखं मुखम् आक्रोशयतीनां दृष्टिर्भगवद्विषयिणी मा भवत्विति भिया मूर्तिमत्यैव मध्ये व्याप्तम् अतः सभयं नयनं यथा भवति तथा श्रीमुखस्य आलोकिनीभिः एवं व्याख्यातः अर्थः स्वगृहव्यापार- रूपो यस्यां तथा सती लोकदृष्ट्या भगवतो धौर्त्यं स्मृत्वा उभयोर्भयनयने दृष्ट्वा भगवान् स्त्रियश्च भीता भगवान् भय- स्त्रियो भगवतो भयश्चेति अनेकरसाभिनिविष्टाप्रकर्षेण हसित- मुखी भगवन्तमुपालब्धुं नैच्छत् नामलीलया वसुदेवः कृतार्थ एव जातः इयं तु लौकिकन्यायेन प्राप्तमनोरथा लौकिकभाव- दार्ढ्यादेव दोषान् न गृहीतवती न तु माहात्म्यज्ञानात् ॥ ३१ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भक्तिदृढकर्मा भगवांश्च यावन्नात्यन्तासक्त्या वैदग्ध्यं न प्राप्नोति तावन्न वदति नापि प्रदर्शयति अनेन च प्रकरणेन तस्याः स्वविषयकोऽध्यासो निवर्त्तितः यतो वाच्यता सहनं जातं भगवद्विषयकगाढाध्यासेन सोऽप्युद्गतः स्वसमानविषयकविरोधेनैव निवर्तिष्यत इति तदर्थं प्रकरणान्तरमारभते ज्ञानरूपम् अन्तःकरणशोधकम् एकदेत्येकादशभिः मनसोह्येकादशवृत्तयः तासां निवर्त्यत्वम् एकादशधा ज्ञानं वक्तव्यम् ।

"दोषां निवृत्तये यत्नो वाक्यं वाक्यं च तस्य तुत् ।
तत्साधिकाकृतिर्विष्णोर्ज्ञानं पूर्वनिवारकम् ॥
ज्ञानस्योत्कर्षसिद्ध्यर्थं विषयाणां च वर्णनम् ।
ततो भयं तन्निवृत्तौ पूर्वपक्षस्य युक्तयः ।
सिद्धान्तेन प्रतिष्ठानं भीतायाः शरणागतिः ॥

भगवत्यध्यासस्य दृढत्वात् भिन्नविषयको दोषो न बाधक इति समानाश्रयविषयकं दोषं बाला अनिरुद्धा आहुरित्याह-एकदा यदा भगवत्प्रवणमेव चित्तं स्थितम आक्रीडमानाः आ समन्तात् क्रीडां कुर्वाणाः समानभावेन सर्वेषु क्रीडारसजनिका भवति अतो भगवति साम्ये स्फुरिते विवेकिना स्वास्मिन् दोषदर्शनवद् भगवत्यपि दोषं दृष्टवन्तः त इति ये स्त्रीणां सुखार्थं नीताः तेषां स्त्रीसङ्गात् निरोधस्याकृतत्वात् भगवति दोषदृष्टियुक्तेति तत्कार्यं प्रदर्शयितुं रामाद्या इत्युक्तं स हि रमयति सर्वा एव स्त्रियः अतो दोषदृष्टिः गोपबालका इति गोपाः अनिरुद्धा गोभिः सह सङ्गात् तत्तुल्यज्ञानाः तेषां बालका इति स्वरूपतोपि दोषसम्भवहेतुः स्वसम्बन्धिस्तनादिपानेन पुष्टान् स्वचरणसम्बन्धिभक्तिरसाल्लोडितमृत्स्नां बालकेभ्योऽन्तःस्थितेभ्यो ददत् बहिर्मुखैः दध्यादिभक्षणवत् मृद्भक्षणमपि कल्पितं ततस्तदनिष्टं मत्वा बालाः प्रोचुः, कृष्णो मृदं भक्षितवानिति. पञ्चवर्षपर्यन्तं मात्रा शिक्षणीय इति मात्रे न्यवेदयन् ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न केवलं चौर्य्यमेव कुरुते इत्याहुः-एवमिति । हे उशति हे कमनीये ! स्वपुत्रगुणश्रवणेनानन्दिते हे यशस्विनि ! वास्तौ देवपूजार्थमामृष्टलिप्तभूमौ मेहनादीनि मूत्रपुरीषोत्सर्गादीनि धाष्ट्यांन्युपद्रवान् पुरन्ध्रीजनवेणयुत्तरीयाकर्षणविवाहचिकीर्षया पादप्रहारादीनि किञ्च तवानेन तनयेन महती सम्पत्तिर्भाविनीत्याह—स्तेयरूपैरुपायैर्विस्ताजैर्विशेषेण रचिता कृतिर्व्यापारो येन सः बाल्ये दधि चोरयति यौवने परवित्तकलत्रादीन्यपि चोरयिष्यतीति भावः । त्वत्समीपे तु सुप्रतीकः साधुरिवास्ते तासां प्रेमविशेषमयफूत्कारफलमाह, सभयनयनं माता मां ताडयिष्यतीति शङ्काव्याकुलं श्रीमुखं सचकितविह्वलदृष्टित्वलक्षणशोभाविशिष्टं मुखमालोकितुं शीलं यासां ताभिर्व्याख्यातोऽर्थः श्रीकृष्णधाष्टर्यदर्शनश्रवणभावणादिविविधभावशोभिततन्मुखावलोकनोत्थम् आनन्दो यस्यै सा अत एव प्रहसितमुखी तासां वस्य चानन्देन प्रफुल्लितमुखी उपालब्धुमावेष्टुं नैच्छदिच्छामपि नाकरोत् गत्सुतधाष्टर्येनेमा आनन्देन निमज्जन्तु तत्तत्सूचयन्त्यो मामपि निमज्जयन्त्वित्याकाङ्क्षयेति भावः ॥ ३१ ॥

पुरन्ध्रीणां सूचनं वात्सल्यरसास्वादफलकं समाप्य सहचराणामपि सूचनं विस्मयरसास्वादोदर्कमाह-एकदेति । दध्नः स्तेये अनुपालम्भं प्रोच्य प्राह मृदोऽशने उपालम्भं जनेष्येति द्वये प्रेमेति हेतुताम् ॥ ३२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमन्यान्यपि धाष्ट्यानि कुरुते किञ्चोशति वास्तौ स्वर्चिते गृहे मेहनादीनि मूत्रोत्सर्गादीनि कुरुते को हीत्यसाधुकारी तं ब्रूतेत्यत आहुः-स्तेयोपायैर्विरचिताकृतिः कर्म येन सः त्वत्समीपे सुप्रतीकः साधुरिवास्ते तासां भाषणं श्रुत्वा माता किञ्चकार तत्राह-सभये उपालम्भशङ्कया भययुक्ते नयने यस्मिन् तत्स्वाभाविक्या श्रिया युक्तं मुखं श्रीमुखं तच्च तच्च तदालोकिनीभिर्व्याख्यातः पुत्रकर्मरूपोऽर्थो यस्याः सा तथाभूतापि प्रहसितमुखी सती पुत्रमुपालब्धुमाक्षेप्तुं नैच्छत् ॥ ३१ ॥

यदा श्रीयशोदा पुत्रवात्सल्यात्तुपालब्धुं नैच्छत्तदा तूपालम्भशङ्कया भयभीतोऽभूत्स्वस्य भक्तपारवश्यतां सूचितवानित्युक्तम अथ यदा स्वबालकस्यारोग्यमिच्छती सा मृद्भक्षणे उपालम्भं चकार तदा मदुपालम्भनिमित्ततः पश्चात्तापं करिष्यतीति शान्त्यर्थं स्वस्य सर्वोपद्रववर्जितत्वसर्वाश्रयत्वप्रकाशनेन भक्तवश्यतां दर्शितवानित्याह श्रीशुकः—एकदेत्यादिना ॥ ३२ ॥

———

भाषा टीका ।

अरी वीर ! यशोदा ! ऐसी ऐसी ढिठाई ये करे है और लिपे पुते घरन में मूति जाय है, थूक देइहै, जगे विगारि जाइ है, और चोरी के उपायन के रात दिन प्रयत्न रच्यो करे है। और या विरियां तुम्हारे ढिग भोरो भारो गरीब सो बैठ्यो है, यातरियां भय सहित नेत्र और श्रीमुख को आलोकन करनवारी गोपीन ने जब यशोदाको लाला के सब चरित सुनाये तब यशोदाऊ हांसिवेलगी, और लाड के मारे कृष्णचंद्र कूं डांटिवे की इच्छा नहीं करत भई ॥ ३१ ॥

ॐ लीलयामृद्भक्षकाय नमः ।

अब यहां सों माटी खाइवे की लीला कहें हैं, कि—

एक समें सग खेलत खेलत कृष्ण सखा समुदाई।
दाऊ सहित गोप बालन नें मा पै खबर जनाई॥
यशोदा तेरे लाला ने माटी खाई ॥ ३२ ॥

सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी ।
यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत ॥ ३३ ॥

यशोदोवाच ।

कस्मान्मृदमदान्तात्मन् ! भवान् भक्षितवान् रहः ।
वदन्ति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययम् ॥ ३४ ॥

श्रीकृष्ण उवाच ।

नाहं भक्षितवानम्ब ! सर्वे मिथ्याभिशंसिनः ।
यदि सत्यगिरस्तर्हि समक्षं पश्य मे मुखम् ॥ ३५ ॥
यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान् हरिः ।
व्यादत्ताऽव्याहतैश्वर्यः क्रीडामनुजबालकः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपालभ्य निर्भर्त्स्य भयेन सम्भ्रान्तप्रेक्षणे चपलनिरीक्षणे अक्षिणी यस्य तम् ॥ ३३ ॥

अदान्तात्मन् ! चपलगात्र ! रह एकान्ते ॥ ३४ ॥

नाहं भक्षितवानिति न हि बाह्यं किञ्चिन्मया भक्ष्यते मत्कुक्षावादावेव सर्वमस्तीति भावः । समक्षं प्रत्यक्षम् ॥ ३५ ॥

व्यादेहि मुखं प्रसारयेति व्यादत्त प्रसारितवान् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पलायनमाशङ्क्य करे गृहीत्वा हितैषिणीति तत्रोपालम्भन-ताडनादिकमपि हितमिति तज्जातीयस्य प्रेम्णः परमाश्चर्यत्वं व्यञ्जितं पुत्रमिति तस्या एव तद्योग्यत्वं मातुः परमदुःखभय-प्रदेनात्मापराधेन ताडनमप्याशङ्क्य भयसम्भ्रान्तप्रेक्षणाक्षम् अतः केवलमभाषतैव नतु ताडितवतीत्यर्थः ॥ ३३ ॥

उपालम्भनमेव किञ्चिदुद्दिशति–कस्मादिति । अदान्तात्मन् हे असंयतेन्द्रिय ! रह इति श्रीरामादीनां साक्षात् मृद्भक्षणाशक्तेः हि हेतौ निश्चये वा तावका इति मिथ्यापवादादिकं निरस्तम् एते साक्षाद्दृष्टमाना इति नाम्नापलपितुमपि शक्यसीति भावः नतु, मातर्नमैवैते वदन्तीति चेत्तत्राह–तवाग्रजोऽपि वदतीति । अत्र चायमिति स्वरसाद्वादेवाभ्योक्तौ न कोऽपि संशय इत्यर्थः अग्रज इति श्रीवसुदेवनन्दयोर्भ्रातृत्वेन श्रीरोहिणीयशोदयोः परमसख्येन श्रीनन्देन पुत्रत्वं वाचयित्वा लालयमानत्वेन च तथा व्यवहारात् ॥ ३४ ॥

नाहं भक्षितवानिति श्रीकृष्णवाक्यं बाल्यकेलौ मिथ्योक्ते-रप्यदोषत्वात् प्रत्युत वर्णनश्रवणाभ्यां श्रीशुकादिसाधुगणसुख-हेतुत्वेन गुणत्वात् हे अम्बेति ताडनशङ्कया स्नेहं विवर्द्धयति अयं इत्यनेन मदग्रजोऽप्ययमन्यथावादवदेव मन्यतां न चात्र विशेष इति भावः मे मुखं पश्येति समग्रमक्षणतस्तच्चिह्नापगमन-नात् ॥ ३५ ॥

स श्रीकृष्णाख्यः भगवान्निखिलशेषभगवत्तायुक्तत्वेन भनस्मृत्र हेतुरपि हरिः सर्वमनोहरः माधुर्यातिशयस्यैव प्राधान्यप्रका-नेन धन्यशील इत्यर्थः । अत एव न विशेषेण न च आ समं हतन्यक्कमैश्वर्यमपि येन सः किन्त्वनाहतमपि तत् यस्य नित्य स्थित्वा निजोचितलीलाविशेषावसरं सदाप्रतीक्षते कदाचित्तु च तादृश इत्यर्थः । क्रीडामनुजबालकश्च स्वयं क्रीडया लील मनुजबालकः तत्सदृश इत्यर्थः । यद्वा, क्रीडामनुजाः तदीयतादृ-नित्यलीलासम्बन्धिमनुष्याः नरवद्दृष्टवशा मायासम्बन्धिमनुष्य श्रीनन्दादयः तेषां बालकः आगमानुसारेण नित्यतल्लीलः उभ यथा स्वेच्छामयस्वरूपाविर्भावोचितलीलारसाविष्ट इत्यर्थः । अत ए व्यादेहीत्युक्तमात्रो व्यादत्त व्यादात् मातृकोपरविरश्मिलेशवशा मुखनीलाम्बुजं विकसितं दधारेत्यर्थः । भयसम्भ्रान्तप्रेक्षणाक्षमि चोक्तं तदेवमसौ सदैव तादृशलीलारसभोगी तादृशतदैश्वर्यशक्ति-रेव तु स्वयं वा तमेवालिङ्ग्य वा तदभीष्टलीलारससम्पादना दुःसमाधानं समादधाति यथाऽधुना मातरि कोपाच्छादकभावान्त रापादनेन तथा सर्वमेवास्यान्तर्विद्यते ततो न किमपि भक्ष वतीति तद्वचः सत्यापनेन च तल्लक्षणाग्जिप्रभुमाहात्म्य विस्मयादिद्वारामातुस्तत्प्रेमपोषाय च विश्वं दर्शितवती यच्च च तृणावर्त्तवधादौ तस्मिन् भारादिकमाविर्भावितवती तदं माचिन्तितसर्वार्थसिद्धेरैश्वर्यमपि मद्देव सिद्धमिति ज्ञेयम् ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

व्यादेहि आस्यं विवृतं कुरु ॥ ३६ ॥ ३७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा यशोदा हितमिच्छन्ती कृष्णं करे गृहीत्वोपालभ्य निर्भर्त्स्य भयेन सम्भ्रान्तप्रेक्षणे चपलालोकने अक्षिणी यस्य तं श्रीकृष्णमभाषत ॥ ३३ ॥

भाषणमेवाह–कस्मादिति । हे अदान्तात्मन् ! चपलगात्र उद्द

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स्वमावेति वा कस्माद्धेतोर्भवान् रहसि मृदं भक्षितवान् ? नाहं भक्षितवानित्यत्राह–वदन्तीति। तव सम्बन्धिन एव त्वं भक्षितवानिति वदन्तीत्यर्थः ॥ ३४ ॥

एवमुक्तः कृष्णः प्राह–नाहमिति। हे अम्ब! नाहं भक्षितवान् मत्कुक्षौ सर्वमादावेव अस्तीति भावः। एते वदन्तीत्येतत् प्रक्षिपति–सत्यं इति। यद्येते सत्या गिरो वाचो येषां तथाभूताः तर्हि समक्षं प्रत्यक्षं मम मुखं पश्य ॥ ३५ ॥

एवमुक्तया जनन्या तर्हि मुखम् आस्यं व्यादेहि विवृतं कुर्वित्युक्तः भगवान् हरिः व्यादत्त विवृतमकरोत् व्यात्ताननं विश्वरूपदर्शनोपयुक्तेन धर्मेण विशिनष्टि–अव्याहतमवतारदशायामप्यप्रच्युतमैश्वर्यमीश्वरसाधारणं "पराऽस्य शक्तिर्विविधैव श्रूयते' स्वाभाविकी ज्ञानबलक्रिया च, सत्यकामः सत्यसङ्कल्पः" इत्यादि वेदान्तावगतं सर्वशक्तित्वादिकल्याणगुणजातं यस्य सः तर्ह्यवश्यभूतस्य जीववत्कुतो मनुजबालकत्वापत्तिस्तत्राह–क्रीडया निमित्तभूतया मनुजबालकः न तु कर्मणेति भावः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भयेन संभ्रान्तानि अनवस्थितानि चञ्चलानि प्रेक्षणानि दर्शनानि यस्य तत्तथा तच्चाक्षि यस्य स तथा तम् ॥ ३३ ॥

तत्र किं प्रमाणमिति तत्राह–वदन्तीति ॥ ३४ ॥

मिथ्यावादित्वं प्रत्यक्षतो दर्शयामीत्याशयेनाह यदीति ॥ ३५ ॥

यदि असत्यगिरो बालाः, यदि त्वया न मृद्भक्षिता तर्हि मुखं विदारयेत्याह–यद्येवमिति। व्यादत्त विदारितवान् क्रीडार्थे मनुजबालकः प्रशस्तमानुषबालवपुः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

किञ्च स श्रीकृष्णाख्यः भगवान् नित्याशेषभगवत्तायोगेन मनःसङ्कल्पहेतुतायोग्योऽपि हरिः माधुर्यातिशयेन प्राधान्येन सर्वमनोहरः अतो न विशेषेण च आ सर्वतो हतं त्यक्तम् ऐश्वर्यमपि येन सः किन्त्वनाहतमपि तत् यस्य निकटे स्थित्वा निजोचितलीलाविशेषावसरं सदा प्रतीक्षते कदाचित् तादृश इत्यर्थः। क्रीडामनुजास्तदीयतादृशनित्यलीलासम्बन्धिमनुष्याः श्रीनन्दादयः तेषां बालकः नित्यतल्लीलः अत एव व्यादेहीत्युक्तमात्रो व्यादत्तेति विदारिते आस्ये सतीत्यर्थः ॥ ३६–३८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सम्भावितं तादृशि तेन देहापकारं ज्ञात्वा दोषनिवृत्त्यर्थं यत्नं कृतवतीत्याह–सा गृहीत्वेति। एकस्मिन् करे पुत्रं गृहीत्वा भर्त्सयतेति सम्बन्धः सेति निरोधमध्यस्थिता भगवति क्रियाशक्तिरेव लौकिकी तस्या दृढेति करे गृहीत्वेति तावानेवांशस्तया गृहीत इति भगवांस्तु पुन्नाम्नो नरकात्त्रायते येन पापेन मातापितरौ पुरुषशब्दवाच्यमुपलक्षणात् स्त्रीशब्दवाच्यं च शरीरम् अस्थिपुरीषादिरूपात् सर्वरोगादिरूपं तामिस्रादिसर्वनरकेभ्योऽधिकं प्राप्तवन्तौ स्वयं तत्र सन्ततौ प्रविष्टः तत्कार्यं स्वयं करिष्यन् तद्दोषमङ्गीकृत्य तौ तस्मात् देहसम्बन्धात् त्रायत इति पुत्रो भवति तादृशम् उपालभ्य उपालम्भनं कृत्वा आलम्भनमिव क्रूरं वाक्यमुक्त्वा स्वस्य परमनिधानरूपपुत्रः कुशली भवत्विति हितमेवान्वेषमाणा यशोदा परमभाग्यवती ज्ञानेऽप्यधिकारिणी मारणे कृते अन्तः स्थिताः क्लिष्टाः भविष्यन्ति ततो महापुरुषद्रोहात् नास्याः कदापि ज्ञानं भविष्यतीति भयेन सम्भ्रान्तं प्रेक्षणं यस्य अक्ष्णः प्रदर्शयिष्यमाणं ज्ञानमेव स्वाधिकरणस्य अग्रे भविष्यतागतस्य विरोधिगुणप्रादुर्भावात् गमनप्रतिबन्धशङ्कया सम्यक् भ्रान्तं प्रेक्षणं गमनरूपं यस्य तथाविधं भवति भगवत्प्रेरणया गन्तव्यमेव विरोधीच गुणो बलिष्ठो बाधां मा करोत्विति तादृशं भगवन्तं कायिकव्यापारेणायोजयित्वा भगवत्प्रेरिता अभापत वाक्यमेवोक्तवती तद्वाक्यं च भगवता परिहर्तव्यं क्रिया चेदशक्या भवेत् भक्तद्रोहात् ॥ ३३ ॥

यशोदाया वाक्यमाह–कस्मादिति। इच्छया भक्षितमिति चेत् सा इच्छा अपकारिणीति तन्निवारणमुचितं तदकरणादुपालभ्य एवेति सम्बोधनेनाह–अदान्तात्मन्निति। न दान्तः आत्मा अन्तःकरणं यस्य अन्तःस्थितबालापरिज्ञानादाह–भवान् भक्षितवानिति रहः एकान्ते निष्कास्य बालकान् भक्ति प्रादयितुं देवगुह्यत्वादेकान्ते कृतवान् तद्बाला बहिः स्थिताः अदम्भक्षणार्थमेकान्ते भक्षितवानित्याहुः, प्रमाणमाह–वदन्ति तावका इति। त्वदीयास्त्वनृतं न वदन्तीति हि युक्तश्चायमर्थः तेऽपि हितकारिण इति अन्यथा कल्पनेनाप्यपि समर्था इति वयो निर्दिशति–कुमारा इति। तेषां जीवत्वात् कल्पकत्वाभावेऽपि भ्रमः सम्भवति यथा दृष्टं च वचनम् अतोऽपि न परमार्थदृष्टिरिति चेत् तत्राह–तेऽग्रजोऽप्ययमिति अग्रे जातत्वात् काचिद्बुद्धिरुत्कृष्टा वदतीत्यत्र प्रमाणमाह–अयमिति। प्रत्यक्षमेव वदतीति नात्रासम्भावना ॥ ३४ ॥

भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्तते यदा तत्र हरिः स्वामी नाविष्टः सोऽन्यथा वदेदिति भगवांस्तु तद्वाक्यं विषयबाधात् प्रमाणम् आप्तानां भ्रान्तत्वादित्याह–नाहमिति। हे अम्बेति! सम्बोधनप्रतारणाय अनेन तस्यां महती कृपा प्रदर्शिता अहं तु न भक्षितवान् बालकैर्भक्षितमिति भावः। एवं सम्बोधनेन स्ववाक्यप्रामाण्यमप्युक्त्वा विरोधिवाक्यस्याप्रामाण्यमाह–सत्यं इति। एते बालकाः सरामाः गोप्यश्च ये केचित् मया यत्किञ्चित् भक्षितं यदा कदापीत्याहुः, ते सर्वे एव मिथ्याभिशंसिनः मिथ्या अनृतमेवाभिशंसन्ति "अनश्नन् अन्यो अभिचाकशीति" इति श्रुतिविरोधात् "यस्य ब्रह्म च क्षत्रं च, उभे भवत ओदनः" "चराचरग्रहणात् (१।२।९) भुङ्क्ते विश्वभुक्" इत्यादिवाक्यान्यधिदैविकरूपधर्मप्रतिपादकानि अतः पुराणपुरुषपराणि न भवन्तीति ये केचित् भगवन्तं भोक्तारं मन्यन्ते उपदिशन्ति च ते सर्वे मिथ्याभिशंसिनः नैवेद्यं च तुष्टिदं भवति निवेदनमात्रेण आरण्यानां भक्षणं तु अन्तःस्थितभक्तानां शुद्धाशसम्बन्धेन कृतार्थत्वाभावात् "पत्रं पुष्पम्" इति वाक्यं च न विरुध्यते नन्वत्र किं युक्तं किं भगवान् भक्षयति न वेति भक्षयतीत्येव बहुवाक्यसम्भवात् प्रत्यक्षतो दर्शनात् भुङ्क्ते इत्यादिवाक्यानां यथाश्रुतार्थस्य

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सिद्धेः "अनश्नन्नन्यः" इति वाक्यं जीवभोगजननार्थं समागतो ऽन्तर्यामी जीवभोग्यं जीवभोग्यप्रकारेण न भुङ्क्त इत्येतावन्मात्रपरं तस्मात् प्रत्यक्षसम्वादात् भक्षणमेव सत्यमिति चेत् तत्राह, यदि सत्यगिर इति। लोके वाक्यं सम्वादिप्रमाणं तदर्थमत्र सम्वादो नास्तीत्यनूद्य दूषयति तर्हि समक्षं प्रत्यक्षं स्वचक्षुषा वाक्यसम्वादार्थं मुखमध्यं पश्य यदि भक्षितं भविष्यति तदंशास्तद्गन्धश्च भविष्यति सर्वं भक्षितमिति शङ्कायां च कालान्तरभक्षणस्यापि निवारणार्थं च भक्षणप्रयोजनं मुखेऽस्ति न वेति तदपि द्रष्टव्यमिति भावः ॥ ३५ ॥

लौकिकाः युक्तिपुरःसरं पदार्थं गृह्णन्तीति यशोदा तद्वाक्यमङ्गीकृत्य तत्रापेक्षितं प्रार्थयित्वा द्रष्टुमुद्युक्ता ततो भगवान् प्रदर्शितवानित्याह—यद्येवमिति। यदि प्रत्यक्षसम्पादि तववाक्यं नान्येषां तदा व्यादेहि मुखव्यादानं कर्त्तव्यम् एवमुक्तः व्याददेति सम्बन्धः स यतो निरोधार्थमेवागतः अन्यथा लौकिकपरमार्थयोर्भिन्नविषयत्वात् लौकिके परमार्थप्रदर्शनमयुक्तं स्यात् निरोधसामर्थ्यं भगवानिति करणावश्यकत्वे हेतुः, हरिरिति। अन्यथा प्राणिनः कृतार्था न भविष्यन्तीति विशेषेण भावस्त मुखं प्रसारितवान्। ननु, प्राकृतस्वीकारात् स्वधर्माणां तिरोभावसम्भवात् कथं सर्वसम्वादो भविष्यतीत्याशङ्क्याह—अव्याहतैश्वर्यं इति। न केनापि प्रकारेण व्याहतमैश्वर्यं यस्य अस्तु, तर्हि कथं प्राकृतस्वीकारः ? तत्राह-क्रीडार्थमेव मनुजबालकः न तु प्रदर्शनार्थमपि अतः क्रियाशक्तावेव लौकिक्यां तिरोभावः तदपि विशेषप्रयोजनाभावे अन्यदा तु क्रिया शक्तेरपि प्राकट्यं ज्ञानशक्तिस्त्वतिरोहितैव सर्वदा अतः प्रदर्शितवानित्यर्थः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

करे गृहीत्वेति पलायनाशङ्कया उपालभ्य निर्भर्त्स्यं हितैषिणीत्युपालम्भताडनादावपि प्रेम्णः पोष एव ननु तत्र दोषः पुत्रमिति मातुरियं रीतिरेव नत्वनीतिः भयसम्भ्रान्तेति परमेश्वरस्यापि तादृशत्वं प्रेमवश्यत्वद्योतनया भूषणमेव न तु दूषणमिति भावः ॥ ३३ ॥

हे अदान्तात्मन् ! चञ्चलगात्र हे अनवस्थितचित्त ! मृदमिति मद्गृहे किं सितादिकं न प्राप्नोषीति भावः ! रह इति मत्साक्षात्त्वद्वयस्यैः वदन्ति तावका इति नायं मिथ्यापवाद इति भावः मत्ताडनाकाङ्क्षिण एते मद्वैरिण एवेति चेत्तत्राग्रजो बलदेवोपीति अर्यामिति स्वरसाद्वादेवेति नात्र सन्देह इति । भावः ॥ ३४ ॥

कृष्ण उवाच—नाहमिति। वात्सल्यबाधेन ताडनभयान्मिथ्योक्तिर्वात्सल्यरसपोषिका अत एव वात्सल्यादीनां रसानां प्रेमपरिणामत्वात् प्रेमवतां च भक्तत्वात् भगवतश्च भक्तवत्सलत्वात् भक्तवात्सल्यस्य च पृथिव्युक्तसत्यशौचदयादिनित्यचिन्मयसर्वगुणगणचक्रवर्त्तित्वात् भक्तवात्सल्यगुणाङ्गभूता चेत्येवं भूतत्वे मिथ्यादयो भगवति न दोषायन्ते प्रत्युत भ

गुणचूडामणयो भवन्तीति विवेचनीयम् ॥ ३५ ॥

व्यादेहि मुखं प्रसारय ननु, माता ममापराधं मा पश्यत्वितीच्छयैव ताडनाद्भीतेन भगवता मिथ्योक्तं मुखप्रसारे मृत्तिकाभक्षणलक्षणव्यक्त्या सा तस्येच्छा कथं सफलास्यादि आह-न व्याहतं प्रेममाधुर्यवत्त्वेन निजैश्वर्यानुसन्धानाभावे न पराहतं किन्तु स्वकृत्यावसरे स्वयमेव सावधानमै यस्य सः सत्यसङ्कल्पताशक्त्या प्रेरिता ऐश्वरीशक्तिः स्वयं प्रकटीभूय विश्वं दर्शयित्वा श्रीयशोदां विस्मयरसनिमग्नां कृत्य पुत्रभर्त्सनफलकं कोपं विस्मारयामासेति भावः। नन्व भगवतः प्रेममाधुर्यास्वादेन यतो यशोदाभर्त्सनताडनादिषु तस्य भयं स्यादत्त ईश्वरो ऽहमिति स्वयमेव निजैश्वर्यम स्न्धाय निर्भय एव कथं न तिष्ठत्वित्यत आह, क्रीडेति। क्रीड प्रधानो मनुजबालक इति शाकपार्थिवादित्वान्मध्यपदलं शाक एव प्रधानं यस्य तथाभूतः पार्थिव इत्यत्र पार्थि यथानिजास्वाद्येषु खण्डादिवस्तुषु मध्ये शाकमेव प्रधानं मन्य तथैवायमीश्वरो मनुजबालकक्रीडां तादृशप्रेममयीमेव प्रधानं मन्य न तु स्वीयसर्वैश्वरत्वादिकमिति भावः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सा यशोदा हि तमारोग्यमिच्छतीति सा तथाभूता कृ सदानन्दं करे गृहीत्वा उपालभ्य निर्भर्त्स्य भयेन पुनर लम्भनशङ्कोद्भवेन सम्भ्राते ऐक्षणे सम्भ्रमयुक्ते निरीक्षणे य तमभाषत ॥ ३३ ॥

तदेवाह—कस्मादिति । हे अदान्तात्मन् ! अनियतबुद्धे र एकान्ते ॥ ३४ ॥

एवं मात्रोक्तो हरिराह—नाहमिति। हे अम्ब मातः ! अहं भक्षितवान् सर्वं मत्कुक्षौ स्वत एव वर्तते इति भावः। य एते सत्यगिरः सत्या गिरो वाचो येषां ते तथा तर्हि सम प्रत्यक्षं मे मुखं पश्य ॥ ३५ ॥

माता आह-यद्येवं तर्हि व्यादेहि मुखं विवृतं कुरु मा इत्युक्तो हरिरपि व्यादत्त मुखं विवृतं चकार कथम्भूतः अव्या तैश्वर्यः अव्याहतमखण्डितमैश्वर्यं सर्वज्ञत्वसत्यसङ्कल्प सर्वशक्तिमत्त्वसर्वात्मत्वनिःसमानातिशयत्वसर्वैश्वरत्वादिकं य सः पुनः कथम्भूतः क्रीडामनुजबालकः क्रीडाप्रियः पु भूतपुरुषोत्तमविहारः प्रियो मनुजः क्रीडामनुजः श्रीनन्दस्य बालकः अजहत्स्वाभाविकैश्वर्यो गोपालसूनुरित्यर्थः ॥ ३६ ॥

---

### भाषा टीका ।

तब बाला को हित चाहन वारी यशोदा मैया ने कृ को हाथ पकरिकें डरपायो और डरपवेते भय सहित च चितवनवारे नेत्र जाके ऐसे कृष्णते यशोदा बोली ॥ ३३ ॥

यशोदाजी कहन लगी, कि-अरे चपल । तैने अकेले में उ के माटी क्यों खाई, ये तेरे साथ के खेलन वारे ह

सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः ।
साद्रिद्वीपाब्धिभूगोलं स वाय्वग्नीन्दुतारकम् ॥ ३७ ॥
ज्योतिश्चक्रं जलं तेजो नभस्वान् वियदेव च ।
वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ॥ ३८ ॥
एतद्विचित्रं सह जीवकालस्वभावकर्माशयलिङ्गभेदम् ।
सूनोस्तनौ वीक्ष्य विदारितास्ये व्रजं सहात्मानमवाप शङ्काम् ॥ ३९ ॥
किं स्वप्न एतदुत देवमाया ? किं वा मदीयो वत बुद्धिमोहः ? ।
अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ? ॥ ४० ॥

भाषा टीका ।

बालक कहें हैं, और तेरो बडो भइया बलदेव भी कहे है ॥ ३४ ॥

तब भय सों डरपते भये श्रीकृष्णचन्द्र अपनी मैया सों बोले, कि-री मैया! मैंने माटी नहीं खाई और ये सब झूठ बोले हैं, और आज खेलत२ दाऊ सों भी खटक गई है, तासों ये सब मोय पिटाय वेकूं डोले है, और जो तूं इन्हें साचे मानती होय तौ तूं अपने सामने मेरो मुख देखिले ॥ ३५ ॥

तब मैया बोली, कि—जो तूंने सांचेऊ माटी नहीं खाई तौ अपनों मुख उघारके दिखाइ दै, ऐसे जब भगवान् सों कही, तब अखण्ड अप्रतिहत ऐश्वर्यवारे होय कें भी क्रीडा सों मनुज बालक होय वे वारे भगवान् श्री हरि अपनें नेंकसे मुख कों उघार कें मैया कूं दिखावत भये ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र तस्मिन्मुखे विश्वं ददृशे ददर्श तत्प्रपञ्चयति-जगज्जङ्गमं स्थास्नु स्थावरं खमन्तरिक्षं लोकं साद्रिद्वीपाब्धिभूगोलं पर्वतद्वीपसमुद्रसहितं भूगोलं-भूर्लोकं वायुः प्रवहः अग्निर्वैद्युतः इन्दुश्च तारकाश्च तत्सहितम् ॥ ३७ ॥

ज्योतिश्चक्रं स्वर्लोकं वैकारिकाणि देवाः मन इति वैकारिकशब्देन गृहीतमपि वैलक्षण्यात्पुनरुक्तं इन्द्रियाणि च तैजसानि मात्रास्तामसाः शब्दादयः ॥ ३८ ॥

एवमेतद्विचित्रं विश्वं सहैकदैव वीक्ष्य विचित्रतामाह-जीवश्च गुणक्षोभकः कालश्च परिणामहेतुः स्वभावश्च जन्महेतुः कर्म च तत्संस्कारः आशयश्च एतैर्लिङ्गानां चराचरशरीराणां भेदो यस्मिंस्तत् तत्र व्रजं च सहात्मानं स्वसहितं क्वचिद्वीक्ष्य सूनोस्तनावयवे विदारिते आस्ये शङ्कामवाप ॥ ३९ ॥

तामेवाह-किं स्वप्न इति । परितो विलोक्याह-नायं स्वप्नः तर्हि किं देवस्य हरेर्माया ? तथाचेदन्ये किं न पश्यन्ति ? तर्हि किं वा मदीय एव कश्चिद्बुद्धिमोहो विपर्यासः ? दर्पणे मुखवत् एवं तर्ह्ययं कृष्णोऽपि कथमन्तः प्रतीयते ? अन्तर्बहिश्चैकरूपेण च कथं जगत्प्रतीयते ? तथासति बिम्बप्रतिबिम्बयोरिव परस्परं वैपरीत्येन प्रतीतिः स्यादित्याशङ्क्याऽन्यथा वितर्कयति—अथो इति । अथवाममामुष्यार्भकस्यापि सतो यः कश्चनाचिन्त्य आत्मयोगः स्वीयमैश्वर्यम् औत्पत्तिकः स्वाभाविकः ॥ ४० ॥



---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सेति युग्मकं तत्र तस्मिन् भगवति तज्जठरान्तरित्यर्थः भक्षणापलापोपयोगित्वात् वक्ष्यते च तैः तनूदराश्रितं विश्वमिति चराचरात्मकं विश्वमेव विवृणोति—खमित्यादिना भेदमित्यन्तेन, वैद्युतोऽग्निर्ज्योतिश्चक्रंऽपि ज्ञेयः खमन्तरिक्षं भुवर्लोकमित्यर्थः वियदेव वियदपि ददर्श स्थूलानां तत्परिच्छेद्यानां तत्कार्याणां जलादीनां वा का वार्त्तेत्यर्थः एवमग्रेप्यनुवर्त्यं चकाराद्हङ्कारादींश्च अत्र निराकाराणामपि वीक्षणं तदधिष्ठातृदेवानामभेदभानेन ज्ञेयम् ॥ ३७ ॥ ३८ ॥

कदा वीक्ष्य विदारितास्ये सति तस्मिन् व्रजं सहात्मानं आत्मभ्यां स्वाभ्यां श्रीकृष्णयशोदाभ्यां सहितं वक्ष्यते च श्रीब्रह्मणा "यस्य कुक्षाविदं सर्वं सात्मं भाति" इति एवं तस्यैव बालविग्रहस्याचिन्त्यशक्त्या युगपद्विभुत्वमध्यमत्वे तत एतस्यैव जगतोऽन्तः स्थितत्वबहिःस्थितत्वे दृष्टिते शङ्कामवाप विविधाशङ्कामकरोदित्यर्थः । यद्वा, पुत्रं प्रति शङ्कामकरोत् वीक्ष्येति पूर्ववत्सिद्धान्तः ॥ ३९ ॥

एतद्दर्शनम् उतवादे वतानिश्चयस्य माया ना यत खेदे उत्पत्तिक आत्मयोगः जन्मनैव स्वसिद्ध पुत्रार्थमस्माभिः वारं वारं विविधाश्चर्यदर्शनात् ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृत शुकपक्षीयम् ।

वैकारिकाणि सात्विकाहङ्कारकार्याणि इन्द्रियाणि मनश्चेत्यन्वयः मात्रास्तन्मात्राणि पञ्च आशयो वासना लिङ्गं शरीरम् ॥ ३८-३९॥
ममार्भकस्य मम सुतस्य औत्पत्तिकः स्वतो ऽणिमाद्यैश्वर्ययोगः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सा यशोदा तत्र विवृते आस्ये विश्वं ददर्श, तदेव प्रपञ्चयति—जगज्जङ्गमं स्थास्नु स्थावरं खमन्तरिक्षं लोकः पर्वतद्वीपसमुद्रसहितः भूर्लोकः वायुः प्रवहश्चाग्निर्विद्युतश्चेन्दुश्च तारकाश्च तत्सहितम् ॥ ३७ ॥

ज्योतिश्चक्रं जलमावरणजलं तेजः सूर्यादिज्योतिः नभ आकाशः स्वः स्वर्लोकः वियदावरणत्वादीनि वैकारिकाणि सात्त्विकाहङ्कारकार्याणि श्रोत्रादीनि दशेन्द्रियाणि मनश्च मात्रास्तामसानि शब्दादितन्मात्राणि पञ्च, त्रयो गुणाः सत्त्वरजस्तमांसि ॥ ३८ ॥

एवमेतद्विचित्रं विश्वं सहैकदैव वीक्ष्य विचित्रतामेव दर्शयन् विशिनष्टि—जीवाः क्षेत्रज्ञाः सर्वोत्पत्तिनिमित्तगुणक्षोभकश्च कालः परिणामहेतुः स्वभावश्च जन्महेतुः कर्म चाशयो वासना च तैर्लिङ्गानां शरीराणां भेदो यस्मिंस्तं सहात्मानमात्मना यशोदया कृष्णेन च सहितं व्रजं च सूनोस्तनौ तत्रापि विदारिते व्यात्ते आस्ये अवलोक्य शङ्कां संशयमवाप ॥ ३९ ॥

शङ्कामेव दर्शयति—किमिति । एषः शिशोरस्य अल्पवदने विश्वदर्शनरूपः किं स्वप्नः ? जागरावस्थायां न हि स्वप्नः सम्भवति इति विमृश्य वितर्कयति—उत देवमायेति । तथा चेत् घटपटादीनिव सर्वे किं न पश्यन्तीति विमृश्य शङ्कते—किं वेति । बुद्धिमोहो बुद्धिविपर्यासः भ्रम इति यावत् तथा चेत्पुनः पुनः दर्शनेऽपि यथावत्कथं प्रतीतिरतो न बुद्धिमोह इति विमृश्य शङ्कते अथो इति । अथोऽथवा मदीयस्यामुष्यार्भकस्यापि सतः यः कश्चनाचिन्त्यः औत्पत्तिकः उत्पत्तिसिद्धः स्वाभाविक इति यावत् आत्मयोगः आत्मनः परमात्मनः स्वस्य योगः कुक्षिस्थाखिलविश्वत्वादिकल्याणगुणयोगः तन्मूलक इत्यर्थः ॥४०॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जगज्जङ्गमं स्थावरं सामान्योक्तं विशिनष्टि—खमित्यादिना । खप्रदेशः भूगोलं भूमण्डलं वायवग्नी भांगौ ॥ ३७ ॥

ज्योतिश्चक्रम् अश्विन्यादिनक्षत्रमण्डलं जलतेजसी वाह्याभ्यन्तरगते नभः क्रतुविशेषः अन्तरिक्षं वा स्वः स्वर्गः परलोको वा वियद्वाह्यं सर्वगतं वा वैकारिकाणीन्द्रियाधिष्ठातृदेवतानि ॥३८॥

स्वभावः सात्त्विकादिः कर्म अदृष्टम् आशयः संस्कारः लिङ्गं लक्षणं सूक्ष्मशरीरं वा बुद्ध्यादिसमूहो वा भेदः तत्तद्वस्तुव्यावर्तकधर्मः ॥ ३९ ॥

शङ्कां प्रकटयति—किमिति । औत्पत्तिकः स्वाभाविकः आत्मयोगः आत्मैश्वर्यातिशयः ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सहात्मानम् आत्मभ्यां स्वाभ्यां श्रीकृष्णयशोदाभ्यां सहितमिति ॥ ३९ ॥

तस्यैव बालविग्रहस्याचिन्त्यशक्त्या युगपद्विभुत्वमध्यमत्वेन एतास्यैव जगतोऽन्तःस्थितत्वबहिःस्थितत्वे दर्शिते औत्पत्तिक आत्मयोगः जन्मनैव स्वस्मिन् अपूर्वार्थं सम्प्राप्तिः ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सापि भगवता प्रेरिता भगवदिच्छया प्राप्तज्ञानशक्तिः तन्मध्ये स्थितं जगद्दृष्टवतीत्याह—सा तत्रेति । सा निरोधमध्यस्थिता तत्र मुखविवरे विश्वं ददृशे आपाततो दर्शनं व्यावर्तयितुं विशेषाकारेण दृष्टं निर्दिशति—जगदिति द्वाभ्याम् । विश्वशब्दः समुदायेन भगवद्रूपम् आधिदैविकं वा जगदन्यल्लौकिकं विश्वरूपं प्रतिकृतिरूपमिति उपनिषदः आधिदैविकमिति प्रदर्शनं कार्यकारणरूपमिति उभयोः समाधानमिति विचारकाः अर्थभेदानाह—स्थास्नुचरिष्णुचेति । स्थावरं जङ्गमं च चकारात् तद्वर्गाः सर्व एव साद्रिद्वीपाब्धिभूगोलमिति अधः खण्डः उपरि खण्डं वक्ष्यत्यग्रिमश्लोके अयमपि भेदस्तया ज्ञात इति अद्रिः मर्यादया द्वीपा जम्ब्वादयः अब्धयो लवणादयः एतैः सहितं भूगोलं सवाय्वग्नीन्दुतारकामिति भूगोलस्यैव विशेषणं वायुस्तत्रोपलक्ष्यत एव अग्निश्चेन्दु प्रथमाहुतिफलरूपः "सोमो राजा भवति" इतिश्रुतेः । यद्वा यज्ञियं रूपं भूमिष्ठं तत्र वर्तत इति "यदम यज्ञियमासीत् तदमुष्यामदधात्" इति श्रुतेः । तारका अपि भूमि भोगार्थं तत्र गच्छन्तीति पुनरायान्ति चेति तारका भूमिष्ठा एव श्येना इव ॥ ३७ ॥

उपरितनं दलमाह—ज्योतिश्चक्रमिति जलं मर्यादा सलिलं वा इदमन्तरासीदिति । वृष्टिर्वियद्गङ्गा च तेज सूर्यादिधुवान्तानां किरणाः विद्युदादयो वा नभस्वान् वायुः रितनः वियदाकाशः वैकारिकाणि सात्त्विकानि सर्वविकार साध्यानि वा इन्द्रियाधिष्ठातृरूपाणि इन्द्रियाणि ब्रह्माण्डाद्बहिः स्थितानि ब्रह्माण्डमपि गृहं घटवत् प्रतीयते इन्द्रियाणि ततो बहिः पदार्थान्तरवत् सर्वदर्शनसामर्थ्यं भगवता द मित्युक्तमेव इन्द्रियाणि राजसानि मनश्च सात्त्विकं मात्रास्ता मसाः तेषां निधानभूता गुणाश्च त्रय इति अहङ्कारगुण प्रकृतिगुणाः मायागुणाश्च ॥ ३८ ॥

एतद्दृष्टमनूद्य तद्दर्शनेन तस्या अपूर्वत्वात् भयं जातमित्याह एतदिति । विचित्रमिति । युक्त्यापि न निर्णेतुं शक्यं कार्य न्यपि दृष्टवतीति तान्यनुवदति जीवकालस्वभावकर्म आशय लिङ्गानां भेदः तत्सहितं जगत् जीवाः त्रिविधाः देवमानु दानवाः कालोपि तथा भूतभविष्यद्वर्तमानरूपाः स्वभावः प्रकृ धर्मः भगवद्रूप इति निबन्धे निवृत्तं कर्म च आशयो हृद् कोशः यस्मिन्नाशेरते जीवाः लिङ्गं लिङ्गशरीरं स्थूलकोशाल लिङ्गभेदा वा स्त्रीपुंनपुंसकाः एतत्सर्वं स्थानविशेषस्थापित नात् सूनोस्तनौ वीक्ष्येत्युक्तं विदारितमास्यं तस्मिन् अन्तर्बहि सर्वत्रैव जगद्व्याप्तमिति वदन् तनौ विदारितास्य इति द्वयं स्वप्नभ्रमव्युदासार्थं व्रजमपि दृष्टवती मायाव्युदास आत्मानम् आत्मना सहितं व्रजमिति विशिष्टकथनं सर्वभ्र व्युदासाय एवमग्रेण सर्वं दृष्ट्वा शङ्कामवाप ॥ ३९ ॥

अन्याः शङ्कायाः व्युदासार्थं लौकिकप्रकारेण पक्षान्तरा परिहरति—किं स्वप्न इति । अन्यदा अप्रतीतं यत्कदाचित्प्रतीय तद्विधा भवति स्वप्नेऽपि कदाचिदलौकिकं प्रतीयते त स्थानस्य सन्ध्यत्वात् शीघ्रगमनात् कार्त्स्न्येनानभिव्यक्तस्वरूप प्रकृते तद्वैलक्षण्यात् नायं स्वप्नो भवितुमर्हति पूर्वापर सन्धानाच्च अतः पक्षान्तरमाह—उत देवमायेति । मायाः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नात्यन्तं मोहकं देवानां तु माया मनुष्यव्यामोहिका भवति मोहवशाच्च अतिरिक्तभानमपि सम्भवतीत्याशङ्क्य सा भगवति न सम्भवति भगवत् प्रयत्नानन्तरभावित्वादस्य भगवत्कृतापि माया न भवति तथा सति स्थिरता न स्यात् मम च तत्र दर्शनं न स्यात् उभयोश्चादर्शनं तर्हि दर्शनमेव भ्रान्तमिति पक्षं स्वीकरोति "किं वा मदीयो बत बुद्धिमोहः" इति बुद्धि-मोहोप्येतादृशः कदापि न जात इति विशेषमाह-मदीयइति। अन्यैर्न दृश्यत एव तथा सति ते वदेयुः न हि दृष्टे अनु-पपन्नं नाम इति न्यायात् मदीय एवायं बुद्धिमोहः एवं सति स्वस्य महत्वात् बनेति हर्षः, यद्येवं स्यात् बालकान्तरे स्थला-न्तरेऽप्येवमुपलभ्येत अस्मिन्नेव बालके उपलभ्यत इति न पूर्वोक्ताः पक्षाः किन्त्वस्यैव कश्चन अनुभावः इत्याह-अथो इति। पूर्व-पक्षव्युदासार्थः अमुष्येति अग्रेऽपि परिदृश्यते सूक्ष्मः तस्मिंश्च जगद्विशालं ममार्भकस्येति पूर्वभावसद्भाव्यम् अन्यथा निरोधो न स्यात् मुक्तिश्च स्यादिति कोऽयं तव बालकस्य गुण इति चेत् तत्राह-यः कश्चनेति। भिन्नतया इदमित्थतया वा ज्ञातुं न शक्यते इदानीमेव देवनान्तरसम्बन्धाज्जातं भविष्यतीत्या-शङ्क्याह-उत्पत्तिक इति। स्वाभाविकोऽयमुत्पत्तिसिद्धः पूर्वमप्य-नुभूतत्वात् पूतनादीनां मारणाच्च केवलं प्रदर्शकत्वे पूतना-दीनां वधो न स्यात् अत आत्मयोगः आत्मनः एव भगवतः योगरूपेयं विभूतिरित्यर्थः॥ ४०॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत्र मुखान्तर्जठरे कृत्स्नस्य चान्तर्जठरे इति ब्रह्मस्तवोक्तेः जगत् जङ्गमं स्थास्नु स्थावरं खं भुवर्लोकं साद्रीति भूगोल-मित्यस्य विशेषणं सवाब्धीति ज्योतिश्चक्रमित्यस्य वायुप्रवहः अग्निर्वैद्युतः नभस्वान् नभस्वन्तं वैकारिकाणि देवान् गुणान् सत्त्वादींस्त्रीन् अत्र निराकाराणामपि दर्शनं तदधिष्ठातृदेवतानां मूर्तिमत्त्वात्॥ ३७—३८॥

पुनश्च प्रपञ्चयति—एतद्विश्वं सह युगपदेव वीक्ष्य जीवश्च गुणक्षोभकः कालश्च परिणामहेतुः स्वभावश्च जन्महेतुः कर्म च तत्संस्कारः आशयश्च तैर्लिङ्गानां शरीराणां भेदो यस्मि-न्नत् तनौ कुक्षौ विदारिते प्रसारिते आस्ये आस्यद्वारा कुक्षा-वित्यर्थः। सहात्मानम् आत्मपतिपुत्रादिसहितं व्रजं च यस्य कुक्षा-विदं विश्वमिति अक्षोक्तेरस्यैव विश्वस्यान्तःस्थितत्वे बहिः स्थितत्वे अचिन्त्ययोगमायया दर्शिते ततश्च कृष्णशरीरस्य जग-न्मध्यवर्त्तित्वजगद्व्यापकत्वाभ्यां परिच्छिन्नत्वापरिच्छिन्नत्वे वास्तवे एव दर्शिते ऐश्वर्योपासकानां विश्वस्मिन् भगवद्दर्शनं भग-वति विश्वदर्शनं यदुक्तं तदेतदेव माधुर्योपासकशिरोभाग्यं-राम्बुजया श्रीयशोदयापि दृष्टं दृष्ट्वा च शङ्कां पुत्रं प्रत्यनिष्टा-शङ्काम् अवाप॥ ३९॥

तादृशदर्शनस्य कारणं वितर्कयति--किंस्वप्नः एतद्दर्शनं किं स्वप्न-जनकं? नहि नहि; निद्रालस्यनयनकालुष्याद्यभावात् तर्हि किं देव-माया? नहिनहि; मम निकृष्टाया मोहने देवानां प्रयोजनाभावात्. तर्हि किं मदीय एव कश्चिद्बुद्धेर्मोहः विपर्यासः? नहिनहि; स्वास्थ्यसमये सम्प्रति मम बुद्धिमोहकारणाभावात्. अथो अथवा अमुष्य मम बालकस्य "नारायणसमो गुणैः" इति गर्गवर्णित-महाप्रभावत्वात् कश्चनाचिन्त्य आत्मयोगः आत्मीयमैश्वर्यम्॥ ४०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सा यशोदा तत्र तस्मिन् मुखे विश्वं चेतनाचेतनात्मकं सर्वं कार्यजातं ददृशे तत्प्रपञ्चयति जगत् जङ्गमम् स्थास्नु स्थावरम् खमन्तरिक्षलोकम् अद्रिद्वीपाब्धिसहितं भूगोलं भूगोलकम् पञ्चमभूतस्य भूमेर्भूविवराणामतलादीनां चानेन सङ्ग्रहः वायुः प्रवहश्च अग्निर्वैद्युतश्च इन्दुश्च तारकाश्च तत्-सहितम्॥ ३७॥

ज्योतिश्चक्रं स्वर्लोकम् पञ्चमभूतस्य भूमेरुक्तत्वाज्जलादिकं भूतचतुष्कम् चशब्देन महदहङ्कारौ गृह्येते वैकारिकम् इन्द्रियाणि च तैजसानि मात्राः तामसाः शब्दादयो ये गुणाः सत्त्वादयः तांश्च ददृशे इति पूर्वेणैवान्वयः॥ ३८॥

सहैकदैवैतत् विचित्रं विश्वं सहात्मानं स्वसहितं व्रजं च विदारितास्ये सूनोस्तनौ वीक्ष्य शङ्कामवाप विश्वविचि-त्रतां दर्शयितुं तद्विशिनष्टि, जीवः कर्तृभोक्तृत्वादिधर्मवान् गुण-क्षोभकः कालश्च परिणामहेतुः स्वभावश्च जन्महेतुः कर्म च आशयो वासना च तैर्लिङ्गानां चराचरशरीराणां भेदाः यस्मिन् तत्॥ ३९॥

शङ्कामेवाह—किमिति। एतत्किं भवति इति सामान्यतः सन्दिह्य विशेषतो वितर्कयति—किं स्वप्नः सम्भवन्ति हि महा-स्वप्नोऽपि दैवात् उत देवस्य विष्णोर्मायासम्भवति हि साऽपि मार्कण्डेयादिभिर्दृष्टत्वात् किम्वा मदीयो बत बुद्धिमोहः बुद्धि-मोहेनापि जनाः आश्चर्याणि पश्यन्ति अथ पूतनावधादिकं गर्गवाक्यं च संस्मृत्य श्रीकृष्णकृपया च श्रीकृष्ण एव सर्व-रूपः परमेश्वर इति वितर्कयति—अथो इति। अथवा अमुष्य ममार्भकस्यापि सतः कश्चनाद्भुतः औत्पत्तिकः स्वाभाविकः आत्मयोगः आत्मनः परमेश्वरस्य स्वासाधारणयोगः सर्वात्मत्व-सत्यसङ्कल्पत्वादिलक्षणः अयं न कस्यापि पुत्रः किन्तु सर्वकारणकारण इति भावः॥ ४०॥

---

### भाषा टीका।

तब यशोदाने वाके मुख में स्थावर जङ्गम सबही जगत् देख्यो, सो कहें हैं कि—अन्तरिक्ष, दिशा, पर्वत, द्वीप, समुद्र, भूगोल, वायु, अग्नि, चन्द्रमा, तारागण,॥ ३७॥

सूर्य चन्द्र आदिक ज्योतिन को समुदाय, जल, आकाश को महापवन, आकाश, सात्त्विक अहंकार सों होयवे वारे इन्द्रियन के अधिष्ठाता देवता, और इन्द्रियें, मन, शब्दादिक विषय, और तीनों गुण॥ ३८॥

जीव, काल, स्वभाव, कर्म, अंतःकरण, लिङ्गदेह सहित या सब विचित्र जगत् को मुख उघारन वारे अपने सुत के

अथो यथावन्न वितर्कगोचरं चेतो मनः कर्म वचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणताऽस्मि तत्पदम् ॥ ४१ ॥
अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती ।
गोप्यश्च गोपाः सह गोधनाश्च मे यन्माययेत्थं कुमतिः स मे गतिः ॥ ४२ ॥
इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ।
वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥ ४३ ॥
सद्यो नष्टस्मृतिर्गोपी साऽऽरोप्यारोहमात्मजम् ।
प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथापुरा ॥ ४४ ॥

### भाषा टीका ।

देह में यशोदा ने देख्यो । और कहा देख्यो, कि—वाई मुख में एक यशोदा हात में साटी लेकें कान्हके मुख में माटी खायवो देख रही है तब श्रीयशोदाजी कूं बडी शंका भई ३९

और यशोदाजी मन में विचारन लगीं, कि—ये मोकूं स्वप्न भयो है, कि—परमेश्वर की माया है, अथवा मेरी ई बुद्धि को कछु मोह है, और ऐसें तो न होय कि, ये मेरे बेटाई को कछु स्वाभाविक योग परयो होय, तब हीं तो कब हूं २ याके मुख में ऐसे दीसबे लगे है ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चरमं पक्षमाभिस्यायमीश्वर इति निश्चित्याह—अथो इति । चेतश्चित्तं चित्तादिभिर्न वितर्कगोचरं जगद्यदाश्रयं यदधिष्ठानं येन करणाधिष्ठात्रा यतो बुद्धिवृत्त्यभिव्यक्तात् नन्विदमवितर्क्यं भवतु तत्पदं कीदृगत आह—सुदुर्विभाव्यमिति इदम् अत्यन्तमचिन्त्यमित्यर्थः ॥ ४१ ॥

एवं प्रपञ्चप्रतीत्योज्जीतं तत्त्वं पुनर्जीवसंसृतिहेतुमायाश्रयत्वेनोपनयन्त्याह—अहमिति । यशोदानामाऽहमसौ मम पतिः अमुष्य व्रजेश्वरस्याखिलवित्ताधिष्ठात्र्यहं सती जाया एष कृष्णो मे सुतः गोप्यादयश्च मदीया इतीत्थं कुमतिर्यन्मायया स एव मे शरणमिति ॥ ४२ ॥

वैष्णवीं स्वीयाम् ॥ ४३ ॥

प्रवृद्धेन स्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा पुरेवासीत् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ चरमतर्कमपि तत्र क्षुत्पिपासाकोमलत्वादिदर्शनेनासम्भाव्य पुनर्वहुर्विधैर्वितर्कैर्निश्चयमप्राप्नुवती सर्वदुर्वितर्कनस्पादकं श्रीनारायणमेव तत्कारणं निश्चित्य तं च सदुर्ज्ञेयं मत्वा केवलं प्रणमति—अथो इति । कर्मशुभमदृष्टमैहिकं च कायिकव्यापाराश्च न वितर्कगोचरं वितर्कागोचरमित्यर्थः । तादृशमपि यदाश्रयं स साधनेन यतो हेतोरञ्जसा प्रतीयते साक्षादनुभूयते तस्य पदाऽ अत एव सुदुर्विभाव्यम् अचिन्त्यकार्यवृन्दस्य कारणत्वेन परम चिन्त्यस्वरूपशक्तिकम् ॥ ४१ ॥

अथ बाह्यमनुसन्धाय निजस्वाभाविकावस्थितिमेव श गच्छति—यदीति । इत्थं निजबालके उच्चावचदर्शनहेतुः कुमतिर दुर्विभाव्यया मायया स एव मम तद्भक्तिविमुखायाः शर मिति यद्वा, यदित्यादौ तथापीत्याक्षेपलब्धं तदेतत्सर्वं स्वर करन्यायेन विस्मयादिद्वारा तस्याः प्रेमैव पुष्णातीति दर्शितम्

तदेवं तन्निष्ठामेव दृष्ट्वा सोऽपि परमतुष्टस्तद्वैव्यग्र्यप्रदर्श व्यग्रश्च संस्तम्भावमेव तस्या विस्तारयामासेत्याह—इत्थमिति । इत्थ अहं ममासावित्यादिना विदितं निर्द्धारितं तत्त्वं प्रथमपादद्वये श्रीकृष्णलीलायाथार्थ्यं यया तस्यां गोपिकायां सदातातृभा श्रीकृष्णपालयिष्यां स तया प्रार्थित ईश्वरः मायां तद्विष दयामेव व्यतनोत् पूर्वतोऽपि विस्तारयामास यथा तद्विरो प्रायगोहशदर्शनादिकं पुनर्न जातमिति तां विशिनष्टि-पु प्राचुर्ये मयट् प्राचुर्यं चान्यदीयस्नेहापेक्षया तस्याऽप्र सम्बन्धित्वं प्रत्याचष्टे वैष्णवीं विष्णोः स्वरूपशक्तिम् ॥ ४३ ॥

ततश्च सद्यो नष्टा तिरोहिता स्मृतिस्तदनुसन्धानं यस्यास्त भूतासीति आरोहमङ्कम् आत्मजं निजोदरादुत्पन्नमिति तज्ज्ञान वादः नष्टस्मृतित्वमेव द्रढयति यथा पुरेति ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चेतःपष्ठोबुद्धिपरः मनः कर्मणो व्यापाराः यदाश्रयं धेयं यतः उत्पद्यते येन सर्वं तिष्ठति प्रलीयते यत्रेत्यध्या प्रतीयत इति पाठे अतीयव्यजत उत्पद्यत इत्यर्थः दुर्विभाव्य अप्रतर्क्यं पदं प्राप्यतत्त्वं प्रणतास्मीत्यर्थः ॥ ४१ ॥

वित्तपाशीत्यर्थः । यन्माययेत्थं कुमतिरिति भवामीति स मे गतिरस्मीत्यर्थः ॥ ४२ ॥

प्रजास्नेहमयीम् ॥ ४३ ॥

आरोहमङ्कम् ॥ ४४—४६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चरमं पक्षमाभित्यायमीश्वर इति निश्चित्य तं प्रणमति—अथो इति । चेतसा बुद्ध्या मनःकर्मणा मनोव्यापारेण वचोभिरञ्जसा तत्त्वतः आशु वा यथावद्याथात्म्येनाथो विश्वं न वितर्कगोचरं नानाविधतर्कागोचरं यदाश्रयं यदाधेयं यत उत्पद्यत इति शेषः । येन जीवति प्रमीयते यस्मिन् लीयते "यतो वा इमानि भूतानि" इति श्रुत्यर्थप्रत्यभिज्ञानसामर्थ्याद्यतो येन प्रमीयते इति पदार्थेच्छिन्नानां जायते जीवति यस्मिन्निति पदानामध्याहारः तत्सुदुर्विभाव्यम् इदमित्थन्तया चेतोमनःकर्मवचोभिः तर्कयितुमशक्यं पदं पद्यते गम्यते प्राप्यत इति पदं मुमुक्षुप्राप्यं परमात्मस्वरूपं प्रणताऽस्मि नमस्कृतवत्यस्मि न वितर्कगोचरमिति कार्यस्य जगतस्तर्कागोचरत्वमुक्तं तत्कुत इत्यपेक्षायां कारणस्य तथाविधत्वादित्यभिप्रायेण सुदुर्विभाव्यमित्युक्तं प्रतीयते इति पाठे यतः प्रतीयते व्यज्यते उत्पद्यत इत्यर्थः ॥ ४१ ॥

ममाहम्ममते यत्सङ्कल्पायत्ते स एव मम तन्निवृत्त्युपाय इत्यध्यवस्यति—अहमिति । ममासौ नन्दः पतिः एष मे सुतः सगोपाः सहगोधनाश्च गोप्यो मे मदीयाः अहं सती व्रजेश्वरस्य नन्दस्याखिलवित्तपा समस्तद्रव्यगोप्त्री अस्मीति कुमतिरहं ममताबुद्धिर्यन्मायया यस्य सङ्कल्पेनाभूत् स एव भगवान् मम गतिरहंममतानिवृत्त्युपायः ॥ ४२ ॥

इत्थं गोपिकायां यशोदायां विदितं तत्त्वं बालस्य याथात्म्यं यया तथाभूतायां सत्यामेव स कृष्णरूप ईश्वरः विभुः विष्णोः स्वस्य सम्बन्धिनीं प्रजास्नेहमयीं पुत्रस्नेहप्राचुर्यावहां मायां व्यतनोत् विस्तारितवान् ॥ ४३ ॥

सद्यस्तदेव नष्टा स्मृतिः पुत्रे परमात्मत्वस्मृतिर्यस्याः सा गोपी पुत्रमारोहमङ्कमारोप्य पूर्ववत्प्रवृद्धेन पुत्रस्नेहेन कलिलं व्याप्तं हृदयं यस्यास्तथाभूता बभूव ॥ ४४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"ब्रह्मविदाप्नोति परम्" इति उपनिषद्वेद्यं ब्रह्मैव मम पुत्रतां प्राप्तमिति यस्मात्तस्मान्मया बोद्धुमशक्यमिति न दूषणं किन्तु ब्रह्मादिभिः सुष्ठु दुर्विभाव्यमित्याशयेनाह—अद इति । अदो वस्तु यथा ! यादृशं तत्तादृशमिति चेतोमनःकर्मवचोभिः चेतो ब्रह्मा मनो रुद्रः कर्म पुष्करनामा देवः इन्द्रो वा वचो वाग्वा बृहस्पतिर्वा उमा वा अञ्जसा साक्षादेतैः कृतविविधतर्कगोचरं विरचितनानानुमानविषयं न भवति विरुद्धतर्कगोचरं न भवतीति किमिति योज्यम् । नन्विदं तर्हि शून्यप्रायमिति तत्राह—यदाश्रयमिति । यत्पदं आश्रयो यस्य तद्यदाश्रयं जगदिति शेषः । प्रलये ब्रह्माश्रयत्वेन तिष्ठतीत्यनेन जगद्ब्रह्मणोर्भेदः सिद्धः स्थितिकाले च येन जीवनं सिध्यति सृष्टिकाले च यतः प्रतीयतेऽभिव्यज्यते उत्पद्यत इत्यर्थः । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति श्रुतिः । अनेन जन्मादिकारणत्वं स्वलक्षणमित्युक्तं भवति । ननु, घटादिवत् किमिति न ज्ञायत इति तत्राह सुदुर्विभाव्यमिति । सुखेन दुःखेन च विभाव्यं विशिष्टत्वेन विरुद्धत्वेन च ज्ञेयम् "सुदुःशोभनदुःखयोः" इति यादवः । "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठा" इति श्रुतेः । द्वैतवादिभिः सम्यक् अद्वैतवादिभिः असम्यक् ब्रह्म ज्ञेय तत्र द्वैतवादिनः सम्यग्ज्ञानेन स्वयोग्या मुक्तिः अद्वैतवादिनः प्रमाणविरुद्धज्ञानेन तम इति विवेकः "अन्धन्तमस्य मद्विमानमिति वीतशोकः, तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" इत्यादिश्रुतेः । तमुभयविधेषु कति तत्राह—प्रणतेति । पद्यत इति पदं स्वरूपं तस्यैतद्भावस्य भेदनिवृत्येन द्वैतनिष्ठेनाहमित्यर्थः ॥ ४१ ॥

नित्यपरतन्त्रे आत्मनि स्वातन्त्र्यबुद्धिरभेदबुद्धिरित्याशयेनाह—अहमिति । व्रजेश्वरस्य नन्दस्याखिलवित्तानि पाति रक्षतीति अखिलवित्तपा यस्य हरेर्मायया इच्छया इत्थं कुमतिरात्मनस्स्वातन्त्र्यबुद्धिरहमभूवम् अतः स हरिर्मे गतिः मत्स्वातन्त्र्यबुद्धिमपनुद्य स्वस्वातन्त्र्यज्ञापकत्वेनाभयोऽस्त्वित्यन्वयः ॥ ४२ ॥

प्रजास्नेहमयीं पुत्रस्नेहमयीं पुत्रस्नेहरूपाम् ॥ ४३ ॥

प्रवृद्धस्नेहकलिलहृदयाऽभूदिति शेषः ॥ ४४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ चरमतर्कमपि तत्र क्षुत्पिपासाकोमलतादिदर्शनेनासम्भाव्य निश्चयमप्राप्नुवती परमाचिन्त्यशक्तिं श्रीनारायणमेव तत्कारणं निश्चित्य तच्च सुदुर्ज्ञेयं मत्वा केवलं प्रणमति—अथो इति । तस्य पदं पदाब्जम् अथ बाह्यमनुसन्धाय निजं भावं द्रढयन्त्याह—अहमिति । पादत्रयेण पुनस्तत्सुखान्तःस्थितमनुसन्धायाह ॥ ४१ ॥

यदिति कुमतिः निजबालके विश्वरूपदर्शनरूपा ॥ ४२ ॥

तत्त्वम् अहम्ममेति पादत्रयोक्ततल्लीलायाथार्थ्यं स तया प्रार्थित ईश्वरः मायां तद्विषयां दयां पूर्वतोऽपि विस्तारयामास वैष्णवीं विष्णोः स्वरूपशक्तिं तदेवमहो परमभाग्यवती श्रीयशोदेत्याह ॥ ४३—४४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवद्विभूतिरूपमेतदिति ज्ञात्वा यत् कर्तव्यं तत् कृतवतीत्याह—अथो इति । अथो दर्शनानन्तरं यस्माद्भगवतः सकाशादेतत् प्रतीयते यत्सुदुर्विभाव्यम् अतः सः अलौकिको भवतीति तत्पदं प्रणताऽस्मीति सम्बन्धः एतद्दर्शनस्यालौकिकत्वं वक्तुं लौकिकबुद्ध्यविषयत्वमाह—चेतोमनःकर्मवचोभिः यथावद्वितर्कगोचरं न भवतीति चित्तं योगादिभावितं मनःकर्मवचांसि अलौकिकानि अलौकिकबुद्ध्यापि नैतावत्कल्पयितुं शक्यते इदमित्थमिति अतीन्द्रियाणामपि दृष्टत्वात् मनसो बहिरस्वातन्त्र्यात् लौकिकव्यवहारबाधक कायिकमप्यदृष्टं गृहीतम् अदृष्टवशादपि एतद्विषयो वक्तुं न शक्यते अलौकिकत्वात् परस्परव्याघाताच्च न वचसा आपाततः कल्पनायामपि यथावद्वितर्कगोचरं न भवति तथैव मायिकांशस्याविपक्षकल्पनायामपि अञ्जसा सामस्त्येन नोपपद्यते न हि स्वस्यापि तत्र पूर्वापरानुसन्धानसहितस्य प्रतीतिः सम्भवति, तथैव पदार्थानां विचारेऽपि स्थैर्यं च अवस्था देशकालाश्च किञ्च एतत्सर्वं प्रद-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शेषः स्वमाहात्म्यार्थं स्वभिन्ने स्थानं प्रदर्शयति स्वस्मिंश्च पदार्थानां भाररूपत्वात् न स्थापयेत् स्थानस्थादेशकालानां भ्रमासम्भवात् येन च चक्षुषा प्रतीयते तच्चक्षुरपि नाक्समदीयम् अन्यथा विद्यमानानां ज्योतिश्चक्रस्थपदार्थानाम् अन्यदापि दर्शनं स्यात् अतः सामर्थ्यं दत्त्वा स्वत एव क्वचिस्मिन् विद्यमानं जगत् स्वमाहात्म्यज्ञापनार्थं प्रदर्शितवान् अतो ज्ञानमाहात्म्यात् तत्पदं प्रणतास्मि नमो नम इत्येतावत्सदुपशिक्षितमिति शास्त्रार्थत्वात् ॥ ४१ ॥

प्रणतायाः प्रार्थनामाह–अहमिति । सर्वोऽपि दुर्बुद्धिर्भगवत्प्रणताया गच्छतीति दुर्बुद्धीर्गणयति आदौ अहं यशोदेति ममासौ नन्दः पतिरिति एष भगवान् विश्वाधारः मे सुत इति अहं पुनः व्रजेश्वरस्य अखिलवित्तपा सती पतिव्रता चेति नन्दस्य व्रजेश्वरत्वं तत्स्त्रीत्वं च स्वस्य ततस्तस्य धनसम्बन्धस्तद्रक्षकत्वं च स्वस्य तदपि सामस्त्येनोभयत्र तत्रापि पातिव्रत्यं भगवानपि परपुरुष इति तद्भजनं च अतः स्त्रीणां पतिरेव विष्णुरिति च एता गोप्यः गोपभार्याः स्त्रियोऽस्मदीयाश्चेति चकारात्तद्बालकास्तत्सम्बन्धाश्च तथा गोपाः सह गोधनाः स्वपरिकरसहिताः गोष्ठसहिताश्च एते सर्वे मे मम यन्मायया इत्यकुमतिरहं स मे गतिरस्तु अहमिति चतुर्विधोऽध्यासः जातिलिङ्गकृतो देहभेदेन ममेति शतप्रकारा पतिपुत्रधनगोपगोपीगणां पङ्क्तिधानामनेकप्रकारत्वात् इत्थं अहं ममेति कुबुद्धिः यन्मायया मे आत्मनो जीवरूपस्य ब्रह्मरूपस्य वा कुत्सिता चासौ मतिश्च तदीया माया हि तेनैव निवर्त्यो बुद्धिप्रकाराः सर्वे मायाया एवेति न तैः स्वकार्यसिद्धिः मायातिरिक्तस्त्वहमेव मायामोहविषयत्वात् पृथक्तया पुनर्मे इति वचनं मायासम्बन्धव्युदासार्थं सम्बन्धस्यैव गतित्वाभावाय गतिरत्र प्राप्यस्वरूपं फलम् ॥ ४२ ॥

एवमुपालम्भार्थं प्रवृत्ता शरणागता जाता एवं ज्ञाने जाते भक्तिसुखं न प्राप्स्यतीति भक्त्या नन्दस्य ब्रह्मानन्दापेक्षया महत्त्वात् भक्त्यर्थं दैव्या मायया मोहितवानित्याह—इत्थमिति त्रिभिः । एवं पूर्वोक्तप्रकारेण विदितं तत्त्वं यया तत्त्वज्ञानानन्तरं तस्यामातृत्वाभावाद् गोपिकाया इत्युक्तम् ननु भगवान् ज्ञानं कुतो नाशितवान् तत्राह स इति स निरोधकर्त्तानुनाशनीये ज्ञाने किमर्थमुत्पादितवान् उत्पाद्य वा किमर्थं नाशितवानिति उभयाभिप्रायो ज्ञातव्य इति चेत्तत्राह ईश्वर इति । स हि कर्तुमकर्तुमन्यथाकर्तुं समर्थः अन्यथा च करोति अतो नात्रोपपत्तिरन्वेष्टव्या वैष्णवीमाधिदैविकीं स्नेहवर्द्धिनीं निरोधोपयोगिनीं विशेषेणाततोत् विहितस्नेहभावव्युदासार्थमाह–व्रजास्नेहमयीमिति । यावदात्मीयतया परमस्नेहे रस उत्पद्यते न तावदीश्वरभावेन भयज्ञानस्य स्नेहप्रतिबन्धकत्वात् अत्र च लौकिकत्वेऽपि प्रजारूपेणैव स्नेह उचितः नान्यथेति अनन्तविधासु मायासु प्रजास्नेहमयीमेव व्यतनोत् ननु विरोधिज्ञानस्य जातत्वात् कथं प्रजाबुद्धिर्भगवति भविष्यतीत्याशंक्याह–विभुरिति । स हि सर्वसमर्थः एकस्मिन्नेव वस्तुनि कोटिशो बुद्ध्युत्पादनसमर्थः अन्यथा पूर्वविरुद्धधर्मा उत्तरत्र न

भवेयुः "प्रच्छिन्ना जालवन्मायया नया ज्ञानं विनाशितम् । प्रमाद
वलं दृष्ट्वा मोहयामास गोपिकाम्" ॥ ४३ ॥

मायामोहे ज्ञानं नष्टमित्याह—सद्य इति । तदानीमेव
स्मृतिर्यस्याः अनेन पदार्थानुभवोपसंहृतिः प्रदर्शिता अ
अनुभवेऽस्मरणायोगात् सद्यः तत्क्षणमेव नष्टा स्मृतिर्य
अत्र भगवन्मननमनुभवस्मरणयोर्मध्ये न संस्कारः अनु
स्मृतिमेव जनयति यथेन्द्रियसंयोगः उत्तरोत्तरमनुभवोऽ
तथा स्मृतिरपि केनचिद्धोध्यते नाश्यते च निरन्तरनाशो
अप्रामाणिके वेदविरुद्धवादिनामेव मतसिद्धे विवेकेन
द्बोधनमाशङ्कयाह गोपीति तत्रापि सा आरोहमङ्कस्थानं
वन्तमारोप्य प्रवृद्धस्नेहकलिलहृदया सती पूर्ववदेवाभवत्
व्यापारोऽपि ज्ञानसाध्यः आरोपणात् पूर्ववत् कृतः स्नेहो
ज्ञानानन्तरमान्तरः स्नेहोऽन्यथा भविष्यतीत्याशंक्य प्र
स्नेहेन कलिलं हृदयमित्युक्तं न हि विहितस्नेहे हृदये
लता भवति कलिलमत्र पङ्किलमिव मोहसहितः स्नेहः ता
मेव हृदयं जातमिति कालान्तरेऽपि न कलिलनिवृत्तिः
वस्यापरित्यागे मायया भक्तत्वमेव स्यात् न तु निरोध
यथा पुरेत्युक्तम् ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्थं तर्कमपि तत्र स्वपुत्रे क्षुत्पिपासामौग्ध्यचाञ्चल्य
दर्शनेनासम्भाव्य स्वबुद्ध्या कमपि निश्चयं कर्तुमशक्नुवती
तर्कागोचरस्यापि वस्तुनो वस्तुनः कारणं भगवानेवेति म
न्यतो निश्चिन्वती तत्पदाब्जं सुतस्वस्तिकामा प्रणमति अथो
यथावत् याथार्थ्येन नैव वितर्कस्य गोचरं क्लीबत्वमापि इदम
माश्चर्यमिदं यदाश्रयं योऽस्याधिष्ठानं यतः यश्चास्योत्पत्तिहेतुः
प्रतीयते यश्चास्य प्रतीतिहेतुः तत्पदन्तस्य भगवतः पदं
णारविन्दं चेतश्चित्तं तदादिभिः प्रणतास्मि सुदुर्विभाव्यं
श्रीनां ध्यातुमशक्यमतः केवलं प्रणमामि स एवास्य
तस्य सर्वानिष्टं प्रशमयत्विति भावः ॥ ४१ ॥

हन्त हन्त स एव सुतस्यास्य दाता स एव रक्षितापि
देव तत्र मम पुनरज्ञायाः किमहङ्कारममकाराध्या
तौ जिहासती श्रीविष्णुं प्रपद्यमाना प्राह—अहमिति । अखि
वित्तपा निखिलधनरक्षणाभिमानवतीत्यर्थः । गोप्यश्चेति गो
गोपानां सर्वगोधनानां चाहमेव स्वामिनी महाराज्ञीत्यभि
यथा कुमतिस्तथैव लोकोत्तरस्यास्य सर्वव्रजजनप्राणभू
बालकस्याहं माता अहमेव पालयित्री दानध्यानादिभि
देवाद्याराधनैर्नित्यं विष्णुपूजनैश्च सर्वानिष्टेभ्यो रक्षामहमेव
कारयन्ती भवामि ततोऽस्य स्वस्तीत्यभिमानोऽपि कुमतिः
यतो गोकुलैश्वर्यस्य श्रीविष्णुनैव दत्तत्वात्तत्र यथाममाभिमा
नौचित्यं तथैव तेनैव कृपया दत्ते पूतनादिरिष्टेभ्यः प्रति
पाल्यमाने च परमलोकोत्तरेऽस्मिन् सुते लौकिक्या गोप
निकृष्टाया अस्ययोग्याया मम मातृत्वरक्षयित्रीत्वाद्यभिमानं
नौचित्यात् कुमतिरेवेति विवेकजिघृक्षैव श्रीयशोदायाः
कीयं ननु विवेकः यथा महामोहान्धानामपि व्यावहारिक

त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्वतैः।
उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥ ४५ ॥

राजोवाच।

नन्दः किमकरोद्ब्रह्मन् ! श्रेय एवं महोदयम्।
यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥ ४६ ॥
पितरौनान्वविन्देतां कृष्णोदारार्भकेहितम्।
गायन्त्यद्यापि कवयो यल्लोकशमलापहम् ॥ ४७ ॥

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कादाचित्कपारमार्थिकप्रसङ्गभवा स्त्रीपुत्राद्यासक्तिजिहासेति ज्ञेयम् ॥ ४२ ॥

इत्थमनेन प्रकारेण विदित तत्त्वं ममत्वजिहासा यदा तस्यां यशोदायां स्यात् तर्हि का मां लालयिष्यती प्रतिच्छणं का पालयिष्यतीत्यतः पुत्रस्नेहमयीं स्वरूपे मयट् पुत्रस्नेहरूपं प्रेमविशेषं व्यतनोदित्यर्थः। मोहनसाधर्म्यान्मायां तेन च तां प्रेमां प्रेमाण्याच्छादयेत्यर्थः ॥ ४३ ॥

नष्टस्मृतिरिति यथा स्वप्नदृष्टोर्थः कश्चित् कश्चिद्विस्मर्यते तथैव सद्य एव सा विश्वदर्शनादिकं विसस्मारेत्यर्थः। प्रवृद्धेन सङ्कोचकारणादप्यैश्वर्यज्ञानादसङ्कुचितेन प्रत्युत प्रबलीभूतेन स्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं भगवदिच्छयैव भगवन्तं ज्ञात्वा तदिच्छामन्तरेण दुर्ज्ञेयत्वं कैमुतिकन्यायेन प्रतिपादयन् तं प्रणमति—अथो इति। यदाश्रयम् चेत आदिभिः यथावत् याथात्म्येन वितर्कगोचरं न भवति अथो अतः तत्तु दुर्विभाव्यम् सुतरां दुर्ज्ञेयम्। ननु, दुर्ज्ञेयं भवत्या कुतो ज्ञायते ? अत आह—येन यतः प्रतीयते इति येनैव अनुग्राहकेन यत्प्रतीयते यतोऽतोऽञ्जसा साक्षात्स्वगृहे वर्तमाने तत्पदं प्रणतास्मीत्यन्वयः ॥ ४१ ॥

एतावन्तं कालं यदिच्छयैवाहं पुत्रतया तमवेदिषं न परब्रह्मतयेति द्योतयितुं देहे अहन्ता पतिपुत्रादौ ममता यस्य मायया भवति स मे गतिर्भवत्वित्याह—अहमिति। व्रजेश्वरस्य नन्दस्य अखिलवित्तपा सती जायाऽहम् मम पतिः एषः कृष्णो मे सुतः पोष्यः सहगोधनाः गोपाश्च मे मदीयाः इतीत्थं कुमतिर्यन्मायया स एव कृष्णो मे गतिः शरणं भवतु ॥ ४२ ॥

वैष्णवीं स्नीयां मायां सङ्कल्परूपां व्यतनोत् विस्तारितवान् ॥ ४३ ॥

सद्यो नष्टा स्मृतिः सुते पुरुषोत्तमस्मरणं यस्या सा प्रवृद्धस्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा यथा पुरा तथा आसीत् परब्रह्मणयात्मजभावव्यवसायवती आसीदित्यर्थः ॥ ४४ ॥

---

भाषा टीका।

चित्त, मन, कर्म, और वाणी सों जो सहज में ठीक विचारवे में नहीं आवे है ऐसो जगत् जाके आश्रय सों है जाकरिके चले है और जातें उत्पन्न होय के देखिवे में आवे है, ऐसो अत्यंत दुःखसों भावना में आवे जो तत्त्व ताकूं मैं नमस्कार करूं हूं ॥ ४१ ॥

देखो तो सही ये मैं हूं, ये मेरो पति है, ये मेरो बेटा है, और व्रजराज के सब घर की मालिकनी मैं हूं, और ये गोप गोपी गोधन सग मेरेई हैं, ऐसी कुमति जाकी माया सों मोकूं होय रही है, यशोदाजी कहे है, कि—वोई हमारो रखवारो है ॥ ४२ ॥

जाविरियां यशोदाजी को ऐसें तत्त्व ज्ञान होयवे लग्यो तव प्रभुनें अपनी पुत्र स्नेह मयी निज माया को विस्तार करयो ॥ ४३ ॥

तब तो श्रीयशोदाजी की तत्काल श्रीकृष्ण में से ईश्वर पने की बुद्धि नष्ट होइ गई, और जैसे पहिले रही ताई रीति सों अपने पुत्र कूं गोद में बैठारिकें स्नेह की बढ़ावर सों वात्सल्ययुक्त हृदय वारी होय गई ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मायाबलोद्रेकमाह-त्रय्येति। त्रय्या कर्मकाण्डरूपया इन्द्रादिरूपेण उपनिषद्भिर्ब्रह्मेति साङ्ख्यैः पुरुष इति योगैः परमात्मेति सात्वतैर्भगवानित्युपगीयमानं माहात्म्यं यस्य तम् ॥ ४५ ॥

अतिविस्मयेन पृच्छति—नन्द इति। महोदयं महानुदय उद्भवो यस्य तत् ॥ ४६ ॥

ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि यं नान्वविन्देतां न प्राप्नुतां

श्रीशुक उवाच ।

द्रोणो वसूनां प्रवरो धरया सह भार्यया ।
करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णस्योदारं महदर्भकेहितं बाललीलां यच्च कवयो गायन्ति तद्यो विन्दत्स किं श्रेयोकरोदिति ॥ ४७ ॥

ब्रह्मण आदेशाद्गोपालनादिलक्षणात् ॥ ४८ ॥ ४९ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवमहो परमभाग्यवती श्रीयशोदेत्याह—अध्येति । अध्या कर्मोपासनामय्या तत्तदन्तर्यामिपर्य्यवसानया उपनिषद्भिः स्वरूपगुणाभ्यां सर्वबृहत्तमे तस्मिन्नेव पर्य्यवसिताभिः साङ्ख्ययोगैः सेश्वरैः तैश्च श्रीभागवतार्थपर्य्यवसानैः पुराणैरित्यर्थः । सात्वतैः तदुपासनामयैः पञ्चरात्रागमैः अनयोरपि वेदाङ्गत्वात्तत्साहित्योक्तिः उपहीने यत्किञ्चित् गीयमानमाहात्म्यं न तु सम्यक् आमनन्त्यात् तं हरिम् आत्मजम् अमन्यत किन्तु पुत्रभावेन साक्षात् तथा लालितवतीति काका चमत्कारातिशयो व्यञ्जितः अत्रेदं विचार्य्यं न तावदस्या विश्वदर्शनमुत्कर्षहेतुः—

"यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत" ।
तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपातः ॥

इति प्रथमसाधनेपि द्वितीयस्कन्धावज्ञानत्वात् न च विश्वदर्शनेन श्रीकृष्णे परमेश्वरज्ञानमभूत् तुर्य्यानिर्णयेऽप्यमुष्य ममार्भकस्येत्याद्युक्तत्वात् ईश्वरस्य यत्तच्छब्दाभ्यां परोक्षतयैव निर्देशात् पञ्चमनिर्णये च पत्यादिगणपालित्वेन एष मे सुत इति यन्माययेति च तथैव दर्शनात् अन्यथा श्रीदेवकीवदसौ तमेवास्तोष्यत् न चेश्वरज्ञानमुत्तमं पुत्रादिभावमयश्रीकृष्णानुभवस्त्वनुत्तम इति प्रकरणार्थः दर्शितव्याख्यया तस्यार्थस्याप्रवेशात् अन्ययोत्तरग्रन्थे प्रश्नोत्तरे च न सङ्गच्छेते तस्यास्तादृगीश्वरज्ञानं परित्यज्य तदाचरणं चाननुशोच्य स्तनपायनादिकस्यैव राज्ञाश्लोष्यमाणत्वात् श्रीवसुदेवदेवकयोः सत्यपि सर्वज्ञाने तदुदारार्भको हितानुभवाभावेन शोचिष्यमाणत्वात् ऋषीनां परमज्ञानवतां श्रीव्यासादीनामपि तद्गानमात्रभाग्यत्वेन वक्ष्यमाणत्वात् श्रीशुकेनापि तत्प्राग्जन्मकथनमारभ्य महिमारोहक्रमतः सर्वज्ञानभक्तिगुणतमयोर्गिरिश्रमवयोरहो तादृश्याः श्रियोऽपि तन्न्यूनपदे स्थापयिष्यमाणत्वात् अन्येषामर्वाचीनानामपि ज्ञानाश्रितामसुखाय श्रीकृष्णत्वेन साभारणोऽप्योपि गोपिकासुततया श्रीकृष्णं भजद्भ्यो न्यूनयिष्यमाणत्वाच्च । अन्यत्र च तादृशः भावस्यैव तत्तस्ततोनिश्चयः श्रूयते राजन् पतिर्गुरुरलमित्यादौ "इत्थं सतां ब्रह्मसुखानुभूत्या"इत्यादौ च ततः किम्पुनस्तदीयस्येति दर्शित एवार्थः साधीयान् ॥ ४५ ॥

इत्थं तस्यां तादृशं श्रीभगवतः स्नेहं तस्याश्च तस्मिन् वात्सल्यं श्रुत्वा तद्भाग्यभरेणातिविस्मितः श्रीनन्दस्य नन्दा[...] भाग्यं पृच्छति नन्द इति । किन्तरत् एवम् ईदृशो महान् उ[...] सर्वतः स्नेहोत्कर्षो यस्मात् महाभागेति ततोपि तस्याः श्र[...] अधिकमभिप्रैति, तदेवाह; पपाविति । अतः पीत्वामृतं [...] तस्याः पीतशेषं गदाभृत इत्युक्तरीत्या श्रीदेवक्यास्तथा[...] बालकरूपेणान्यासां गोपीनां स्तनपाने सत्यपि पूर्वैश्व[...] ज्ञानमिश्रत्वात् यथाकथञ्चित् तत्राप्यसमये वारैकजातत्वा[...] तत्रान्यरूपत्वादुभयत्र परस्परैतादृशस्नेहाभावादत्रैव स्तनपा[...] सम्यगभिप्रेतम् ॥ ४६ ॥

किञ्च पितराविति पितृत्वेन सर्वलोकख्यातौ लब्धवरौ चा[...] श्रीकृष्णस्य उदारं राजन् पतिरित्यादौ "अस्त्वेवमङ्ग भज[...] भगवान् मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग[...] इत्युक्तदिशापरमादेयस्यापि दातृवत् अर्भकेहितं तत् अनु[...] पश्चात् अपि नाविन्देतां मथुरायां गतेन बाल्यलीलासम्बरणा[...] किं वाच्यं साक्षादनुभवमाहात्म्यं तस्य भक्ता गुरवोऽपि यद्वा[...] नापि कृतार्थं मन्याः परः परार्द्धं कालं गमयन्तीत्याह य[...] कवयः श्रीब्रह्मादयः पूर्वपरार्द्धादौ श्रीनारदादिप्रत्युपदेशमारभ्य[...] अद्यापि गायन्ति अहो सर्वेषामपि तद्भाग्यविशेषे हेतुरित्या[...] यदेव चाद्य कलिकालेपि लोकमात्राणां सर्वेषामपि शमलापह[...] एकत्रापि गीयमानेन सम्बन्धपरम्परया कृतार्थीकरणात् "मद्भक्तियुक्तो भुवनं पुनाति" इति अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिरितिवत् अत उक्तं श्रीसूतेन कृष्णचरितं कलिकल्मषघ्नमिति यद्वा कवय आत्मारामशिरोमणयोऽपि भवद्विधा महाभागवता अनादितः श्रुतिपुराणगीयमानमपि अद्यापि गायन्ति परमानन्दभरेण यत्र तत्राप्युन्मत्ता इव गायन्त एव वर्तन्ते [...] च कथयन्ति मात्रं यच्च लोकस्यातिहीनस्यापि मद्विधस्य यच्च[...] मलं तदन्तरायकं कर्म तस्य हन्तृ यच्छ्रवणमात्रेण मद्विधोऽपि परमकृतार्थतां मन्यत इत्यर्थः । तद्योणवाविन्दत् स सा च किं श्रेयो ऽकरोदिति पूर्वेणान्वयः एवं महाविस्मयो व्यञ्जितः ॥ ४७ ॥

अथास्याग्रिमाध्याये मुख्यः सिद्धान्तो वक्ष्यते प्रथमं तावत्किमकरोच्छ्रेय इति साधनगतं तत्प्रश्नमनुसृत्य तत्र सिद्धान्ताभासं यावदेतदध्यायं वक्तुम् आदौ तयोरंशेन यत्पूर्ववृत्तं तद्भेदेनाह—द्रोण इति त्रिभिः । प्रवरः परमश्रेष्ठः श्रीनन्दांशत्वात् आदेशात् श्रीमथुरामण्डले गोपालनप्रायवासश्रीवसुदेवसख्यादिलक्षणात् ॥ ४८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पितरौ देवकीवसुदेवौ कृष्णरामार्भकेहितम् कृष्णरामाईहार्भकौ तयोश्चेष्टितं यल्लोकनं यद्दर्शनं शमलापहं पापापहम् ॥ ४७ ॥ जातयोनौ जाते भवतीर्णो भवति सतीत्यर्थः ॥ ४८—५२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मायावैभवं प्रकटयितुमाह—त्रय्येति । त्रय्या वेदपूर्वभागेन तद्बोधिततत्तत्कर्माराध्यत्वेन उपनिषद्भिर्वेदोत्तरभागैः सर्वकारणत्वोपास्यत्वप्राप्यत्वादिना साङ्ख्यैर्योगैश्च ज्ञानयोगकर्मयोगानुगृहीतभक्तियोगैकप्राप्यत्वेन सात्वतैः पञ्चरात्रसंहिताभिः परव्यूहविभवार्चारूपत्वेनोपगीयमानं माहात्म्यं यस्य तं हरिमाश्रितार्तिहरं सा विदित्वापि तदैव केवलमात्मजममन्यत ॥ ४५ ॥

श्रुतैवम्विधयशोदानन्दभाग्यातिशयस्तत्कारणं पृच्छति राजा—नन्द इति द्वाभ्याम् । हे ब्रह्मन् ! एवमेवंविधं महानुदय उत्तरफलं यस्य तच्छ्रेयः यतः कारणादभवत् तत्किमकरोन्नन्दो यशोदा चेति प्रश्नः महाभाग्यमेव सूचयन् यशोदां विशिनष्टि यस्याः स्तनं हरिः पपावपिबत् ॥ ४६ ॥

कुतश्च कारणात्पितरौ देवकीवसुदेवौ श्रीकृष्णस्योदारं विपुलमर्भकेहितमर्भकचेष्टितं नान्वविन्देतां न प्राप्नुतां न दृष्टवन्तौ इति प्रश्नान्तरम् ईहितं विशिनष्टि—यत्कृष्णोदारार्भकेहितं लोकस्य शृण्वतो वदतश्च जनस्य दुरितापहन्तृ कवयो नारदादयोऽद्यापि गायन्ति ईदृशकृष्णोदारार्भकेहितादर्शननिमित्तं किमिति प्रश्नार्थः ॥ ४७ ॥

इत्थमापृष्ट आह शुकः—द्रोण इति । वसूनां प्रवरः श्रेष्ठो द्रोणः धरया धराख्यया भार्यया सह ब्रह्मणश्चतुर्मुखस्यादेशान् गोरक्षणादिरूपान् करिष्यमाणस्तं ब्रह्माणमुवाच भूभारावतरणाय भगवानवतरिष्यति पयःप्रदानेनापि भगवन्तमाराधयितुं गोरूपेण मुनयश्च स्वांशैर्जनिष्यन्ते त्वन्तु गोरक्षणार्थं भार्यया सह गोपेषु जनिष्यसे इत्येवं ब्रह्मणोक्तस्तमाहेत्यर्थः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रजास्नेहमयीं मायां शृङ्गग्राहिकतयैव दर्शयति—त्रय्येति । त्रय्या "अग्निमीळे" इत्यादिकया, उपनिषद्भिः "एष पन्थाः" इत्यादिकाभिः सत्त्ववान् हरिः तद्विषयैः सात्वतैः साङ्ख्ययोगैः पञ्चरात्रादिशास्त्रैः यद्वा साङ्ख्ययोगैः यथार्थज्ञानप्रतिपादकैः ब्रह्मतर्कादिभिः सात्वतैः पञ्चरात्रादिवैष्णवतन्त्रैः ॥ ४५ ॥

श्रेयः पुण्यं पूर्वजन्मनीति शेषः "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । महानुदयः फलं यस्मात्तथा महान् भागो भाग्यं यस्याः सा महाभागा "भागो भाग्यांशतुर्यांशा" इति यादवः ॥ ४६ ॥

कृष्णरामनाम्नोरर्भकयोः बालयोः ईहितं चेष्टितं विन्दतिर्लाभार्थोऽप्यत्र ज्ञानार्थः चेष्टानुकूलज्ञानलाभं नाप्नुवन्ताविति "विद ज्ञाने तु वेत्तीति विदॢ लाभे तु विन्दति" इतिवचनात् लोकशमलापहं जनपापहरम् ॥ ४७ ॥

प्रस्तारभ्यते कथान्तरमिति शेषः "प्रस्तारम्भे प्रसिद्धेद" इति यादवः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्रय्येति त्रय्या कर्मोपासनामय्या सर्वान्तर्यामिपर्यवसानया उपनिषद्भिः स्वरूपगुणाभ्यां सर्वबृहत्तमे ब्रह्मणि तस्मिन्नेव पर्यवसिताभिः साङ्ख्ययोगैः सेश्वरैः ते च श्रीभागवतार्थपर्यवसानानि पुराणानि मन्तव्यानि सात्वतैः तदुपासनामयपञ्चरात्रागमैः उप यत्किञ्चिद्गीयमानं नतु सम्यक् आनन्त्यात् तं हरिम् आत्मजममन्यत पुत्रभावेन साक्षात्तथा लालितवतीति काक्वा चमत्कारातिशयो व्यञ्जितः । अथ विश्वरूपदर्शनमीश्वरभावं चाननुबोध्य पुत्रभावमयस्तनपायनबाल्यलीलाऽनुभवावेशानुमोदते ॥ ४५ ॥

नन्द इत्यादि नायं सुखाप इत्यन्तोऽध्यायद्वयात्मको ग्रन्थः ॥ ४६—५२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः परं प्रमाणान्तरेणापि न स्मृत्युद्बोध इत्याह—त्रय्येति । त्रयी वेदत्रयी तत्र क्रियाशक्तेः प्रतिपादितत्वात् भगवन्माहात्म्यप्रतिपादकत्वम् उपनिषत्स्वपि ब्रह्मप्रतिपादनाद्भगवज्ज्ञानशक्तिप्रतिपादनं साङ्ख्येऽपि नित्यानित्यवस्तुविवेक भगवत्सम्बन्धतद्राहित्यभेदेनैव योगोऽपि निश्चिन्ततया भगवच्चिन्तनं चकारात्पशुपतिमतेपि भगवन्माहात्म्यनिरूपणमेव तथा सात्वतैः वैष्णवतन्त्रैरपि वेदस्य द्विरूपत्वात् षड्दर्शनैरपि उपगीयमानमाहात्म्यो भगवान् तादृशं तावन्ति प्रमाणानि श्रुत्वाऽपि हरिमात्मजमेव सा अमन्यत अतो भक्तौ प्रतिष्ठिता अविहितायाम् पुत्रभावेन ॥ ४५ ॥

एतस्याः एतावत्त्वं कथं न त्वन्यासामिति शङ्कां परिहरन् महापुरुषकृपामाह—सप्तभिः । नन्दः किमकरोदिति प्रश्नो द्वयेन कर्मव्युदासस्य वक्तव्यत्वात् ब्रह्मन्निति सम्बोधनं ज्ञानार्थं नामकरणप्रकरणे नन्दस्यैव प्रथमतो निरोधकथनात् किं श्रेयः धर्मरूपं लोकवेदयोरप्रसिद्धत्वात् प्रश्नः अप्रसिद्धार्थमेवाह—एवं महोदयमिति । एवं महानुदयो ऽभ्युदयो भगवान् पुत्र इति यस्य श्रेयसः भिन्नतया यशोदाया अपि निरूपणात् भिन्नतया प्रश्नः यशोदा चेति नन्दापेक्षयापि निरन्तरसम्बन्धात् महाभागा किञ्च यस्याः स्तनं सर्वदुःखहर्तापि पपौ सा हि जानाति क्षुन्निवृत्त्यर्थं भगवान् पिबतीति अतो हरेरपि सा हरिरित्युक्तं भवति बालकलोपपत्तेपि तदीयस्तन्येनैव तथाकरणादुत्कर्षः ॥ ४६ ॥

ननु, प्रसिद्धमेव तत्सुकृतं यथा वसुदेवेन कृतमिति चेत् तत्राह—पितराविति । यद्यपि पितरौ जातौ तथापि तादृश आनन्दो नानुभूतः यादृश एताभ्यामनुभूतः तदाह—नान्वविन्देतामिति । एतदनन्तरमपि न विन्देताम् अग्रे अन्यथैव करणात् अयं महानानन्द इति ज्ञापयति—कृष्णोदारार्भकेहितमिति । कृष्णस्य अर्भकेहितं बालकचेष्टितम् अनधिकारिणोऽपि सर्वपुरुषार्थदानादुदारं साधनफलं हीनं तत्रापि लौकिकं साध्यफलादप्यधिकः परमानन्दः स चेत् साध्यस्वर्गादिसाधनं तदा पशुपुत्रादिजन्यम् अलौकिकं सुखं लौकिकञ्च तादृशमेव तत्र साधनोत्कर्षे साध्योत्कर्षो हष्टो

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लोके यथोत्तमैः सूत्रैः उत्तमः पटः यथोत्तमशर्करया भक्ष्यमिति यत्र परमानन्द एव प्रथमकक्षा तेन साध्यं लौकिकं लौकिकवस्तुनोऽप्यधिकं ततोऽप्यलौकिकं दिव्यपुत्रपश्वादिरूपं ततोऽपि स्वर्गादिः तादृशमुक्तं कृष्णः परमानन्दः स च अर्भकः तस्य च लीला साप्युदारेति साक्षाल्लीला परमदुर्लभेति किं वक्तव्यं यतः शृण्वतामपि श्रुतापरमानन्दं जनयन्तीत्याह—गायन्ति इति । अद्यापि व्यासादयः शब्दरसाभिज्ञाः निर्दुष्टशब्दार्थचमत्कारो रसचमत्कारो वा तेन रसेन मत्ताः गायन्ति अद्यापीति कालविलम्बेऽपि तद्रसानुवृत्तिः सूचिता । किञ्च, यच्चरित्रं लोकस्य मलं दूरीकरोति अतो दोषनिवर्तकं गुणाधायकं च श्रुतमपि भवति तत्र साक्षात् तादृशभाक्तृणां किं भाग्यं वक्तव्यमित्यर्थः ॥४७॥

अत्र महापुरुषकर्मैव कारणमिति वक्तुमुपाख्यानमारभते—द्रोण इति पञ्चभिः । "प्रार्थनाप्रश्नदाने च भक्तिरागमनं हरेः" पूर्वकल्पे अष्टवसुषु द्रोणो नाम कश्चित् यद्यप्यस्मिन् कल्पे न तस्य भार्या धरा तथापि कल्पान्तरे तथेति न विरोधः तस्मिन् कल्पे ब्रह्मादयः ब्रह्मण एव जाता इति सृष्ट्यर्थमाज्ञापितः भार्यया सह सृष्टिलक्षणामाज्ञां करिष्यमाणः तं ब्रह्माणमुवाच हेत्वाश्चर्यं क्व सृष्टिकर्तृत्वं क्व भक्तिरिति ॥ ४८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवक्या अपि सकाशात्तस्या उत्कर्षमभिव्यञ्जयितुमैश्वर्यदर्शनादपि स्वीय वात्सल्यप्रेम्णः सङ्कोचाभावमाख्यायैश्वर्यश्रवणादप्याह—त्रय्या यज्ञपुरुषत्वेन उपनिषद्भिर्ब्रह्मत्वेन साङ्ख्यैः पुरुषत्वेन योगैः परमात्मत्वेन सात्वतैः पञ्चरात्रैर्भगवत्त्वेन कर्मिप्रभृतिभिरुपगीयमानमाहात्म्यं देशकालानियमात्तस्याः समक्षमसमक्षं वा उप आधिक्येन गीयमानैश्वर्यं हरिं सा आत्मजममन्यतेत्यस्मदभीष्टदेवतेनावयोर्व्रतनियमसत्कृतपूजनादिभिःसन्तुष्टेन पर्जन्याभिधानमदीयश्वशुरकृतनिरवद्यबहुतपःसन्तोषितेन श्रीनारायणेन कृपया दत्तो लोकोत्तरः पुत्रोऽयं यत्कर्मिप्रभृतिभिस्त्रय्यादिप्रतिपाद्यत्वेन स्तूयते तत्र खलु "नारायणसमो गुणैः" इति सर्वत्र गर्गेण गीयतया नारायणसाम्यप्रथया अन्यदुष्करपूतनादिवधानामेतत्कर्तृकत्वप्रथया चायमेव नारायण इति तेषां विश्वास एव हेतुर्वस्तुतस्त्वयं मत्पुत्र एव मां मातरं क्षणमप्यदृष्ट्वा विकलीभवत्यहं चैनं क्षणनिमेषव्यवहितं ज्ञात्वा विह्वलीभवामीत्यावयोर्जन्यजनन्योरनुभव एवात्र प्रमाणमिति मनसि सा समाधत्ते । किञ्च, कर्मिप्रभृतयस्त्रय्यादिभिर्यथा हरिं यज्ञपुरुषादिकं मन्यन्ते तथैवेयं वात्सल्यप्रेम्णा हरिम् आत्मजं मन्यते तेभ्यस्तत्तदनुरूपं फलं ददानस्तेषामनुग्राहकोऽवशायिना-स्पीष्टे अस्यैतु वात्सल्यप्रेमानुरूपं फलं दातुमसमर्थो ऋणीभवन्नस्या अनुग्राह्योऽप्यदय ईशितव्यत्वेनातिष्ठन् आनन्दतुष्टोऽप्यस्यास्तन्यामृतार्थी रोदितीत्यादिविशेष उत्तराध्याये स्पष्टीभविष्यति पद्यमिदं कृष्णलीलायां परिभाषासूत्ररूपं ज्ञेयं परिभाषा ह्येकदेशस्था सकलं शास्त्रमभिप्रकाशयति यथा वेश्मप्रदीप इति "इको गुणवृद्धी"(१।१।२) इति यत्र यत्र गुणवृद्धी श्रूयते तत्र तत्र इकः परिभाषोपतिष्ठते यथा तथैव कौमारकैशोरमाथुरकुरुक्षेत्रादिगतलीलासु यत्र य- दैश्वर्यप्रसङ्गस्तत्रेदमुपतिष्ठत इति ॥ ४५ ॥

ऐश्वर्यदर्शनश्रवणाभ्यामपि तस्याः प्रेमदार्ढ्यमाकर्ण्य कर्मि- प्रभृतिभ्यो भक्तेभ्यश्चाभिव्यज्यमानमुत्कर्षं च जानन्नपि विस्म- येन पृच्छति—नन्द इति । महान् उदयः फलं यस्य तत् महाभाग्यं नन्दादपि तस्याः श्रेयोऽधिकमभिप्रैति ॥ ४६ ॥

ननु, "पीतशेषं गदाभृतः" इति वचनाद्देवक्या अपि स्त- पपावित्यत आह—पितरौ अस्मत्कुले पितृत्वेन ख्यातौ देवकीवसु- देवौ कृष्णस्य उदारमतिसुखप्रदमतिमहच्च अर्भकेहितं बालचरितं न अन्वविन्देतां चक्षुरादिभिरास्वादयितुं नालभताम् उदारपदं रामतातृत्वाभिमानिनी रोहिणी वत्साहरणलीलाप्राप्तमातृभाव- गोप्यश्च व्यावृत्ताः यत् अर्भकेहितम् ॥ ४७ ॥

कृष्णावतारस्य तदीयबाल्यलीलानां च नित्यत्वादेव नन्दयशो- दयोर्नित्यसिद्धत्वं स्पष्टमिति नात्येनादृशः प्रेमा साधनसिद्धे भवितुमर्हतीत्यापि जानतोऽपि राज्ञोऽस्य प्रश्नोऽयं यथा मह्य- वद्युत्पन्नस्येत्यतस्तत्र ममाप्युत्तरं तादृशी भवितुमर्हतीति प्रदं- राजन्युदासीनमना एवाह, द्रोण इति । आदेशात् गोपालनादि- लक्षणात् तं ब्रह्माणम् ॥ ४८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेवाह—त्रय्येति । त्रय्या कर्मनिर्णयपरया पूर्वमीमांसा- शास्त्रेण कर्मयोज्याः इन्द्रादयोऽस्यास्तद्द्वारेण उपनिषद्भिः कर्मणा शुद्धान्तःकरणेनाधिकारिणा साक्षादेव सर्वज्ञः सर्व- शक्तिः सर्वकारणकारणः सर्ववेदैकवेद्यः ध्यानादिसाधन- सम्पत्त्या लभ्यते इति साङ्ख्यैः तत्त्वसङ्कलनया पुरुषो ज्ञेय इति योगैश्चित्तवृत्तिनिरोधलक्ष्यत्वेन सात्वतैः पञ्चरात्रिकैः वेदार्थ- विद्भिः व्यूहाङ्गित्वेनोपगीयमानं माहात्म्यं यस्य तं सा आत्मज- ममन्यत अहो तस्या भाग्यमिति भावः ॥ ४५ ॥

महानुदयः पुत्रीभूतपरमपुरुषलीलानुभवाहः उद्भवो यस्मात् तत् ॥ ४६ ॥

पितरौ देवकीवसुदेवावपि यन्नान्वविन्देतां न प्राप्नुवता- यच्च कवय आत्महितार्थं जगद्धितार्थं च गायन्ति तत्कृष्ण- स्योदारमनुपममर्भकेहितं बालचेष्टितं तत्स सा च अविन्दत् स सा च किं श्रेयोऽकरोदिति योजना ॥ ४७ ॥

त्वं गोपो भव इयं गोपी इत्यादिरूपात् ब्रह्मणः आदेशात् करिष्यमाणस्तं ब्रह्माणम् ॥ ४८ ॥ ४९ ॥

———

भाषा टीका ।

और वेदत्रयी, उपनिषद्, सांख्य, योग, और भक्तजन जाको माहात्म्य गावें वा श्रीहरि कों यशोदा अपनो बे- मानत भई ॥ ४५ ॥

राजोवाच ॥

राजा परीक्षित बोले, कि—ब्रह्मन् ! नन्दराय ने ऐसो क-

जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ ।
भक्तिः स्यात् परमा लोके यया ऽञ्जो दुस्तरं तरेत् ॥ ४९ ॥
अस्त्वित्युक्तः स भगवान् व्रजे द्रोणो महायशाः ।
जज्ञे नन्द इति ख्यातो यशोदा सा धरा ऽभवत् ॥ ५० ॥

भाषा टीका ।

पुण्य करयो हो ? जासों इनकों एसो आनंद प्राप्त भयो और बड़भागिनि यशोदानें कहा कीनो, कि—जासो श्रीहरि ने वाकों स्तन पान करयो ॥ ४६ ॥

और हे महाराज ! जो साक्षात् माता पिता श्रीदेवकी वसुदेव हैं तिनकों कृष्ण भगवान् की परमोदार बाल लीलान को सुख नहीं प्राप्त भयो । लोकके पापन कों नाश करन वारे जिन लीला चरित्रन कूं ज्ञानिजन अब तांई गावें हैं ॥ ४७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—वसून में श्रेष्ठ द्रोण अपनी धरा भार्या के सहित ब्रह्माजी की आज्ञा करवे के तांई तिनसों बोलत भये ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स एवेह द्रोणो जज्ञे स च नन्द इति ख्यातः । सा च धरा यशोदाऽभवत् ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र यद्यपि श्रीमन्नन्दांशत्वाच्छुद्धभगवन्माधुर्यांशस्फूर्तियोग्य-तथापि तत्तदेव मुनिसङ्गेन तदैश्वर्यज्ञानमात्रस्य श्लेषेण स्वाभीष्ट-माह-जातयोरिति । भुवि जातयोः सतोर्नौ आवयोः हरौ मनो-हरताप्रधाने भगवति अत एव विश्वेषामीश्वरेपि महादेवे परमक्रीडापरे भक्तिः प्रेमलक्षणा स्यात् प्रार्थनायां लिङ् पर-मेति स्वमनस्याहृतं तद्विशेषं बोधयति । स च पितृत्वोचित-वात्सल्याख्य इति फलेनानुमीयते "ये यथा मां प्रपद्यन्ते" इत्यादि श्रवणात् एवं वचनमात्रलभ्यापराधेऽपार्थपरित्यागमयया प्रार्थ-नया पूर्वमपि तयोस्तादृशभक्तेरस्तित्वमवगम्यते अस्तित्वेपि प्रार्थना तादृशप्रेमोत्कण्ठयैव अतृप्तिस्वभावत्वात् प्रेम्णः यथा श्रीध्रुवस्य कुबेरे साक्षात् पुत्रत्वप्रार्थना तु केवलकामनामय्यपि स्यात् तादृशपुत्रेण स्वमहिमाद्युक्तः अतः प्रेमस्वभावत्वात्तत्प्राधा-न्येनैव प्रार्थितं नान्यथा यत्र तादृशत्वेन कृष्णस्याप्यनुगतिः जाता जातेति एवं श्रीवसुदेवादितः साधनेप्युत्कर्षो दर्शितः साधनस्य साध्यस्य च शुद्धभक्तित्वात् अतः शुद्धभगवत्प्रेम-मात्रत्वेन तत्र सर्वेषामपि हितं प्रार्थितं न तु कामिजन-वत्स्वमात्रस्यैव नदाह, ययास्मद्भक्त्या तच्छ्रवणकीर्तना-दिनान्योऽपि लोकः सर्वो दुर्गतिं तरेत् इति लोके इति सप्त-म्यन्त पाठे लोके यथा प्रसिद्धयान्योऽपीति शेषः । एवमुभयो-रपि वात्सल्यशुद्धत्वे मातृभावस्वाभाव्यात् श्रीयशोदाया आधिक्यमपि ज्ञेयम् ॥ ४९ ॥

स एवेत्यत्र विवक्षया इह श्रीमथुराप्रदेशे स भगवानिति पाठे परमादरो दर्शितः पूर्वतोऽपि महायशाः सन् ॥ ५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तमेवाह-जातयोरिति । भुवि लोके जातयोर्नौ आवयोर्भुव्यवतीर्णयोः विश्वेश्वरे महादेवे ब्रह्मादीनामपि देवे भगवति हरावार्तिनाशिनि परमा भक्तिः स्याद्यथाभक्तिस्यात्तथाऽनुगृहाणेत्यर्थः । तत्प्रार्थनायां हेतुं वदन् तान् विशिनष्टि-यया भक्त्या दुस्तरम् उपायान्तरेण तरितुमशक्यं संसृति निमित्तं पापमञ्ज आशु तरेत् ॥ ४९ ॥

अस्त्विति । तथैवास्त्विति ब्रह्मणोक्तः स एव भगवान् द्रोण एनेह लोके व्रजे नन्द इति विख्यातो जज्ञे तथा सैव धरा-यशोदा ऽभवद्यशोदारूपेण जज्ञे ॥ ५० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महादेव इत्यनेन शङ्करोऽत्रोच्यते इति शङ्काव्यावृत्त्यर्थं विश्वेति, लोके जनमध्ये ॥ ४९—५० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रार्थनामेवाह-जातयोरिति । भुवि जातयोर्नौ आवयोः हरौ भक्तिः स्यात् प्रार्थनायां लिङ् शास्त्रतः साधनैश्च आयमाना-ज्ञानकर्मणोरङ्गत्वात् जीवेषु न परमा भवति वरप्रसादात् लौकिकानामुत्कर्ष इव भक्तेरप्युत्कर्षो भविष्यतीति परमा प्रार्थ्यते लौकिकोपकारं दृष्ट्वा यत्र कश्चिद्भक्तिर्भवति यथा धातरि तत्र पुरुषार्थरूपं तद्व्यावृत्त्यर्थमाह—महादेव इति । यतः परमाधिको देवो नास्ति यस्तु देवेषु परमां काष्ठां प्राप्तः स महादेवः स्वयं वसुः ब्रह्मा च देवेषु श्रेष्ठः ततोऽपि महान् महादेवो भगवान् पुरुषोत्तम एव भवति स्वत उत्कर्ष उक्तः कार्यतोपि उत्कर्षमाह—विश्वेश्वरे हराविति । सर्वस्यापि सर्व-फलदातरि सर्वस्यापि सर्वदुःखनिवारके ततः किं स्यादत आह-ययाञ्जो दुर्गतिं तरेत् इति । देहसम्बन्धो दुर्गतिः अनाया-सेन तरणं भक्त्यैव अन्यकृतत्वात् नौकारूढवत् ॥ ४९ ॥

ब्रह्मा पुनः साधनोपदेशयोरसमर्थः ब्रह्मवाक्यं न मृषा

ततो भक्तिर्भगवति पुत्रीभूते जनार्दने ।
दम्पत्योर्नितरामासीद्गोपगोपीषु भारत ! ॥ ५१ ॥
कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः ।
सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ॥ ५२ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैसिक्यां दशमस्कन्धे विश्वरूपदर्शने
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भवतीति भगवत्प्रसादात् भक्तिरित्यस्यैवाह—ततः स्वे स्वर्गं एव सृष्टि-मुत्पादितवान् ततोधिकारे समाप्ते प्रलये च जाते ब्रह्मलोके स्थितो भावि भगवदवतारं ज्ञात्वा ब्रह्मणा प्रेरितः स एव द्रोणः इह व्रजे नन्द इत्याख्यातो जज्ञे पूर्वनामाग्रे न प्रकाश नीयमिति भगवानानन्दः अयं नन्द इति फलग्रहणार्थं व्यापित परित्यज्य शिष्टांशेन प्रसिद्धः नन्दस्य वरः कथं न क्षीणः सृष्टे-रपि गतत्वादित्याशङ्क्याह–महायशा इति । महद्यशो यस्य याव-द्यशः तावन्न क्षीयत इति यशोदापि सैवाभवत् अन्यथा व्यभिचारे धर्मक्षयात् भक्तिर्न भवेत् ॥ ५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जातयोरित्यनेन भाविनि जन्मनीति लभ्यते । महान् देवः क्रीडा यस्य तस्मिन् भुवि स्थितो यो विश्वेश्वरस्तस्मिन् विश्वेपीश्वरा यत्र तस्मिन् "परावरेशो महदंशयुक्तं" इत्युद्ध-वोक्तेः पूर्णे इत्यर्थः । हरौ आवयोर्मनश्चौरे परमेति फलेन फल-कारणमनुमीयत इति न्यायात् स्वहृदयविचारिता पितृत्वो-चितवात्सल्यमपीत्यर्थः । ययास्मद्भक्त्या भविष्यन्त्या तच्छ्रवण-कीर्त्तनादिना अन्योपि सर्वो लोकः दुर्गतिं तरेदिति शुद्ध-प्रेमभक्तिप्रार्थनया तज्जन्मनि तयोस्तदनुरूपसाधनभक्तिरप्येका शुद्धैवासीदित्यवगम्यते ननु पृश्निसुतपसोरिव भक्तिस्तपो योगौ चेति पूर्वं व्याख्यातमेव तत्प्रसङ्गे तत्फलम ॥ ४९ ॥

स एव द्रोणो व्रजे इह नन्द इति ख्यातः सा धरैवेह यशोदेति नित्यसिद्धयोर्यशोदानन्दयोः साधनसिद्धौ धराद्रोणौ प्रविष्टावभूतामित्यर्थः ॥ ५० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स द्रोणः भक्तियुक्तः ब्रह्मणेति शेषः ॥ ५० ॥

---

### भाषा टीका ।

द्रोण बोले, कि—जब हम जन्म लेवें तब हमारी मं महान् देव ऐसे विश्व के ईश्वर श्रीहरि में होय, सो ऐसी पर भक्ति होय कि–जाके प्रभाव सों ये जीव विन प्रयास संस समुद्र के पार लगिजाइ है ॥ ४९ ॥

तब ब्रह्माजी ने वरदान दियो "तथाऽस्तु" ऐसें हो तब वेई महाभाग्यवान् बडे यशस्वी द्रोण नाम वारे वसु न राय नामसों विख्यात होत भये । और उनकी पत्नी धरा हीं सो यशोदाजी होत भई ॥ ५० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गोपगोपीनामपि वस्तुस्वभावादस्त्येव भक्तिस्तयोः पुनर्नित मिति ॥ ५१ ॥

स्वलीलया पुत्रभावानुकारिण्या ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तादृशभक्तेर्हेतोः पुत्रीभूते योऽन्यस्य कस्यचि पुत्रो नासीत् तस्मिन् पुत्रतां प्राप्ते तयोरेव शुद्धोद्रिकतात भावात् अतः पुत्रभूत इति क्वचित् पाठः सङ्गत एव कथन्ऽपि जनैर्ब्रह्मादिभिः भक्तैरर्थ्यते याच्यते मात्रं न तु लभ्य यः तस्मिन्नपि यतो भगवति स्वयं भगवति श्रीकृष्ण इत्यर्थ तस्मिन् भक्तिर्नितरां पूर्वतोऽपि वरीयस्यासीत् तथा प्रसि व्रजजनमुख्यत्वेन स्वाभाविकपरमवात्सल्यवतीषु गोपगो ष्वपि नितरामासीदित्यर्थः । पुत्रीभूतत्वादेवेति ॥ ५१ ॥

तत्र प्रस्तुतसिद्धान्ताभासदृष्ट्या तावदुपसंहरति—ह स्वयं भगवत्त्वेन परमस्वतन्त्रोपि ब्रह्मणो जगद्गतसर्वनिज गुरोरादेशं वरं सत्यं कर्तुं तेन सामान्यतया दिष्टापि

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तयोः परमविशिष्टतयाऽगोप्या भक्तिरित्थमेव प्रकटा स्यादिति निदर्शनया जगत्यव्यभिचारित्वेन ख्यातं विधातुं परमस्मरणया-महर्षिन श्रीरामेणापि सह व्रजे वसन् तदानीं प्रकटीकृते तयोस्सम्बन्धिनि व्रजविशेषे स्वयमपि तत्पुत्रतया प्रकटीभूय नित-सन् स्वया निजस्वाभाविक्यैव लीलया तेषां तयोस्तत्सङ्गिनां च प्रीतिं तद्विशेषं चक्रे वक्ष्यमाणतात्त्विकसिद्धान्तानुसारेण त्वयमर्थः । ननु, यदि तादृशी भक्तिस्तयोः पूर्वमपि विद्यत एव तर्हि ब्रह्मादेशेन किं कृतं तत्राह कृष्ण इति स्वेषु भक्तेषु या लीला तद्भक्तवशायाल्लीलेत्यर्थः तयैव तेषां प्रीतिं कर्त्तुं व्रजे वसन् कृष्णो ब्रह्मणा आदेशं वरं सत्यं चक्रे "विप्रा वेदविदो युक्ताः" इत्यादिवत् कृपया तन्महिमानमप्यदर्शयत् इत्यर्थः । अत-स्तदादेशेन तस्यैव हितं कृतमिति भावः तदादेशं विनाऽप्यन्येषां गोपादीनां तद्भावकथनात् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
ऽष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे भारत ! गोपगोपीषु मध्ये दम्पत्योर्यशोदानन्दयोः पुत्र-भूते अपुत्रेऽपि पुत्रतां प्राप्ते जनार्दने भगवति ततो ब्रह्मवरात् भक्तिरासीत् ॥ ५१ ॥

कुतस्तयोः पुत्रभूतो हरिस्तत्राह—कृष्ण इति । ब्रह्मणश्चतु-र्मुखस्यादेशं वरदानात्मकं सत्यं कर्तुं स्वस्य तयोः पुत्रभूतस्य लीलया बालचेष्टया तेषां नन्दादीनां प्रीतिं च कर्तुं रामेण सहितो व्रजे वासं वसतिं चकार चतुर्मुखादेश एव नन्द-यशोदयोरुक्तश्रेयःप्राप्तौ देवकीवसुदेवयोः कृष्णोदारार्भकेहिता वष्टौ च कारणमित्यर्थः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपगोपीषु मध्ये नितराम् ॥ ५१—५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥
( विजयध्वजतीर्थपाठे नवमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो जातयोरेव भक्तिर्जातेत्याह—तत इति । भगवति भक्ति-र्जाता भजनसहितप्रेमात्मिका । ननु, साधनव्यतिरेकेण कथं जातेत्याशङ्क्यं प्रकारमाह—पुत्रीभूत इति । अपुत्र एव पुत्रत्वं ज्ञापितवानिति पुत्रीभूतः जायत एव पुत्रे स्नेहो भक्तिश्च ननु भगवान् किमित्यवतीर्णः, तत्राह—जनार्दन इति । अनानामुत्पादिका-मविद्यामर्दयतीति अतो मोक्षदानार्थमागतः प्रसङ्गादिदमपि कृतवान् न तु प्रासङ्गिकमुत्पादयितुमर्हति सर्वार्थं च तथा जात अतः दम्पत्योः स्वधर्मनिष्ठयोः नितरां भक्तिरासीत् गोप-गोपीषु सतीषु तन्मध्ये वा सत्सङ्गव्यतिरेकेणापि भारतेति सम्बोधनं सर्वष्वेवं वंशीयेषु सत्सु यथा भारत एवालौकिको जात इति ज्ञापयितुम् ॥ ५१ ॥

नन्वेतज्जातं ब्रह्मवाक्याच्चेत् तदा निरोधो भगवत्क्रियमाणो न भविष्यतीत्याशङ्क्याह—कृष्ण इति । भगवान् हि सर्वमेव योजयितुं शक्नोति अतः ब्रह्मणा आदेशं वरं सत्यं कर्त्तुं व्रजे समागत्य बलभद्रसहितो वसन् तत्रत्यानां तेषां सर्वेषाम् एवं स्वलीलया प्रीतिं चक्रे स्वस्याधिकारी ब्रह्मेति तद्वाक्यं सत्यं कर्तव्यं यद्यन्यत्र साधनवति देशे तमुत्पादयेत् तदा सन्देहोऽपि भवेत् तदर्थं व्रजे समागतः नन्वयुक्ते देशे कथमागत इति चेत्तत्राह—विभुरिति । स हि सर्वसमर्थः सर्वत्रैव स्थित्वा सर्वं कर्त्तुं शक्नोति बलभद्रो वेदात्मा साक्ष्यर्थं सह गृहीतः तेषां प्रीतिजननेन स्वेच्छास्थित्यधिको व्यापार अतः माह वसंश्चक इति ब्रह्मवाक्यापेक्षया अधिकं च कृतवानि-त्याह—तेषामिति । येष्वेतौ स्थितौ तेषामपि स्वलीलया प्रीतिं कुर्वन् लीलयेति मनोरञ्जिका क्रियोक्ता ॥ ५२ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे
अष्टमाध्यायविवरणम् ॥ ७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जनार्दनः गोपीजनान् प्रेम्णा पीडयति नवनीतचौर्यांशुपद्रवै-रुद्वेजयतीति वा स्तन्यरसं याचमान इति वा गोपगोपीषु मध्ये दम्पत्योर्यशोदानन्दयोर्भक्तिर्नितरामासीदिति गोपाः गोप्यश्चापि द्रोणधरयोरनुवर्तिनस्तादृशसाधनवन्तः पूर्वजन्मन्यासन्निति ज्ञापितम् ॥ ५१ ॥

आदेशं परमा भक्तिरस्त्विति वरं प्रीतिं चक्रे प्रेमाण-मुत्पादयामास ॥ ५२ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
दशमस्याष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोपगोपीनां भगवद्भक्तिरासीत्तत्तद्भाग्यवशात् तेषु मध्ये दम्पत्योस्तु ततः ब्रह्मवचनात् नितरां भक्तिरासीदित्यन्वयः ॥ ५१ ॥

तेषां नन्दादीनां स्वलीलया पुत्रत्वादिभावानुकारितया ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टमाऽध्यायार्थप्रकाशः ॥ ८ ॥

भाषा टीका ।

तब नन्दराय और यशोदा इन दोउन की प्रीति रूप भक्ति अपने पुत्र रूप श्रीजनार्दन भगवान् के विषैं अत्यन्त होत भई । और कृष्ण के परिकर रूप सब गोप गोपीन में कृष्ण के प्रिय होयबेतें प्रीति होत भई ॥ ५१ ॥

श्रीकृष्ण भगवान् परमसमर्थ होयकें अपने भक्त जो ब्रह्मा ताको वचन सत्य करिवे के तांई श्रीबलदेवजी के सहित ब्रज में वास करकें अपनी लीलान सों ब्रजवासीन में प्रीति बढावत भये ॥ ५२ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें अष्टम अध्याय की, श्रीवृन्दावनस्थ पं० भागवताचार्यकृत भाषा टीका समाप्ता ॥ ८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

## ॥ नवमोऽध्यायः ॥

श्रीशुक उवाच ।

एकदा गृहदासीषु यशोदा नन्दगेहिनी ।
कर्म्मान्तरनियुक्तासु निर्ममन्थ स्वयं दधि ॥ १ ॥
यानि यानीह गीतानि तद्बालचरितानि च ।
दधिनिर्मन्थने काले स्मरन्ती तान्यगायत ॥ २ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे पय उत्सिक्ते गत्वा गोप्यथ तत्कृतम् ।
विलोक्य भाण्डभङ्गादि कृष्णं दाम्ना बबन्ध तम् ॥
तनूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतसः ।
बन्धनद्व्यङ्गुलापूर्त्या पूर्णतामन्वदर्शयत् ॥

स्वयं दधि निर्ममन्थ ॥ १ ॥

तदा चागायतेति चकारान्वयः ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तत्र तात्त्विकसिद्धान्तं वक्तुं तत्प्रतिपादनयोग्यां पूर्वोपरविलक्षणां लीलामुदाहरन् दधिपयश्चौर्य्यानुक्रमस्यक्रान्तामनुस्मृत्य वर्णयति—एकदेत्यादिना । यशोदेति दामोदरत्वादिना श्रीकृष्णाय प्रेमवश्यतातिशययशोदानात् नन्दस्य रोहिणीस्पर्द्धानुरूपत्वेन तस्यापि माहात्म्यमवगन्तव्यमिति बोध्यते एकस्मिन् दिने गृहदासीषु यावद्गृहकर्माधिकारिणीषु सर्वास्वेव कर्मान्तरे नैमित्तिकस्वरूपे नियुक्तासु सतीषु चाखिलेष्वेव मध्येषु सत्सु दध्येकं ममन्थ तच्च पुत्रश्रेयोनिबन्धनेज्यानिवेद्याय पुत्रोपभोगाय च ज्ञेयं तथा तस्यैव सर्वोपादेयत्वेन गृहीतत्वात् अत एव निःशिष्टतया ममन्थ अन्यथा लोकशास्त्रप्रसिद्धासङ्ख्यजनुमतविलकालुब्धानां तयैकया दधिमन्थनासम्भवः स्यात् कर्मान्तरं चात्र परमविशिष्टं ज्ञेयं सर्वपरित्यागेन सर्वासामेव नियुक्तत्वात् गोपानमपि तद्दिने यतस्ततो गतत्वेनावगम्यमानत्वात् तच्च नूनमिन्द्रयागरूपं तस्यैव व्रजे तादृशमान्यचरत्वात् कार्त्तिकमासोपास्यदामोदरलीलायाः समकालत्वाच्च तत् यागस्य च कार्त्तिकीयत्वं तदारम्भेनैव प्रवर्त्तितश्रीगोवर्द्धनमखस्य कार्त्तिकशुक्लप्रतिपदि लोकागमयोर्विधीयमानत्वात् तथा च शरद्वर्णनायामासपणसहयोगेन स एव इन्द्रियैश्च महोत्सवैरिति कथ्यते अत्र इन्द्रियार्थैरित्यर्थत्वेऽपि इन्द्रमिन्द्रियकामास्त्विति न्यायेन स एव देवतेति ॥ १ ॥

यानि यानि तस्य बालस्य च चरितानि . इह तव सभायां या गीतानि तानि सर्वाणि स्वयं स्मरन्ती वात्सल्यविलासेन भावयन्ती दध्नो निर्मन्थनं यत्र तस्मिन् काले गानावसरे अगायत चकार उक्तसमुच्चये निर्ममन्थ अगायच्चेति नानाकविजनरचितानि सर्वाणि स्वयं तत् गुणनिबद्धानि चेति ज्ञेयं गीतरूपेणेति शेषः ॥ २ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥ २ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं प्रदर्शितविश्वरूपस्य कृष्णस्याथापरिमेयतारूपपूर्णताप्रदर्शनमाह नवमेन—एकदेति । गृहदासीषु कर्मान्तरनियुक्तासु व्यापारान्तरे प्रविष्टासु दासीषु सतीषु अत एव यशोदा स्वयमेव दधि निर्ममन्थ ॥ १ ॥

तस्य श्रीकृष्णस्य बालचेष्टितानि गद्यपद्यादिरूपेण कविभिर्यन्निबद्धानि तानि सर्वाणि तदा दधिनिर्मथनकालेऽगायत च ॥ २ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्रातीताध्यायसङ्गतिरनुसन्धेया नन्दस्य गेहिनी भार्या ॥ १ ॥
दध्नो निर्मथनं यस्मिन् स तथा तस्मिन् काले ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एकदेति प्रायोऽयं दीपमालिकामहोत्सवो भवेत् दामोदरलीलोपासनस्य कार्त्तिकेऽभिधानात् ॥ १—५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शास्त्रार्थतो यथा भक्तिर्हरौ भवति निश्चला ।
तदर्थं नवमे प्राह चरित्रं परमाद्भुतम् ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वरूपं च कृपालुत्वं हरेर्ज्ञातव्यमञ्जसा ।
अतो दयासुसम्मिश्रं ज्ञानमत्र निरूप्यते ॥
निरोधो यदि भक्तानां स्वस्मिन् स्वस्य च तेषु च ।
तदोभयसुसम्बन्धात् दृढो भवति नान्यथा ॥
ज्ञानवैराग्यरूपैर्हि स्वाधीनो भगवान् भवेत् ।
अतोऽध्यायत्रये लीला जीवाधीना निरूप्यते ॥
अतिपौरुषमेतद्धि जीवानामिति निश्चितम् ।
द्वादशाङ्गमतिक्रम्य षड्भिर्वश्यो भवद्गुणैः ॥
पञ्चपर्वाविद्यां हि लोकानामपि नाशयेत् ।
अतः पञ्चभिरुक्तो हि विचारो भगवद्गतः ॥

तत्र प्रथमं यशोदाया अति पौरुषं कार्यं सिद्धमिति वक्तुं क्रियया भगवत्प्राप्तिमाह—एकदेति दशभिः । भक्तिर्हि दशविधा गुणातीतया भगवान् प्राप्यते नवविधमाहिनस्नेहेन वा ततो द्वाभ्यां वशीकरणोद्यमः कायद्वयसमावेशार्थः ततो वशीकरणं षड्भिः पञ्चभिरविद्याबाधनमिति ।

निवारितापि संसारं मोहिता भक्तना पुनः ।
गुणगाने स कालोऽभूत् अतो द्वाभ्यां ततोऽभवत् ।
अतः कृतो निबन्धो हि भक्तिसारं हरिः पपौ ॥
ततो रिक्ता पूर्वबुद्ध्या सङ्गतान्यश्चकार ह ॥
एवं निरुद्धा चेत् भ्रान्त्या कोपयुक्तो हरिर्भवेत् ।
चौर्यं दृष्ट्वा लोकदृष्ट्या प्रीता तस्मान्न पश्यति ॥
जिज्ञासायां ततो दृष्ट्वा प्राप्त्यर्थं यत्नमाचरत् ।
विरुद्धान् तान् हरिर्ज्ञात्वा तपसे निर्गतस्ततः ॥
पूर्णे तपसि तत्प्राप्तिरेवं दशभिरुच्यते ।
परोक्षवादा ऋषयः परोक्षं च हरिप्रियम् ॥
आसक्तिं चेत्स्वतः कुर्याज्जीवः कृष्णः पलायते ।
तदा दृढो निरोधः स्यान्नान्यथेत्यंत्र निर्णयः ॥

पूर्वाध्याये आधिदैविकमोहस्य प्रतिपादितत्वात् तत्कार्यमाह—एकदेति । यदा भगवदिच्छया सर्वा एव गृहदास्यः क्षेत्रादि संस्कारार्थं तत्वमङ्गलनादिगृहनिर्गमार्थं वा सर्वा एव गताः तदा यशोदा स्वयं दधि निर्ममन्थेति सम्बन्धः दास्यश्चतुर्विधाः प्रभुभ्यो देयाः गोष्ठक्षेत्रविचारिकाश्चान्याः यशोदासख्यो नन्दभोग्याः गृहकार्यकर्त्र्यश्च तत्र गृहदासीषु कर्मान्तरनियुक्तासु सतीषु प्रकरणात् भगवदभ्युदयार्थमेव कर्मान्तरमिति लक्ष्यते स्वतः करणे हेतुः नन्दगेहिनीति गेहिन्याः कर्मैतदावश्यकम् ॥ १ ॥

एवं संसारव्यापृतिरपि भगवदीयानां भगवद्गुणगानार्थमेव जातेत्याह—यानि यानीति । उपनिबन्धनं स्वमेव कर्तुं शक्यते स्त्रीणामद्यापि तथा सामर्थ्यात् यानि प्रसिद्धानि भगवच्चरित्राणि पूर्वम् इह गोकुले वा शास्त्रतो लोकतश्च तन्मध्ये यानीह प्रसिद्धानि वीप्सया सर्वाण्येव अनेन गानमेव मुख्यं न तु दधि मन्थनमिति ज्ञापितम् अन्यथा शीघ्रं दधि मन्थने सर्वाणि गीतानि गातुं न शक्यानि स्युः तस्य बालचरितानि स्वदृष्टानि चकाराद्गोपिकादिभिरप्युक्तानि तस्य भगवतो बालचरितानि येषु तानि वा गीतानि चकारादन्यानि च दध्नो नितरां मथनं यस्मिन् काले भगवतो गुणगानस्य स एव काल: यस्मिन् काले क्रियाशक्तेराधिदैविकस्यापीन्द्रियं मोदं भवति तदाह—दध्नो नितरां मथनं यस्मिन् काल इति । ननु कथं तस्यैव कालस्य गाने हेतुत्वमिति चेत्तत्राह—स्मरन्तीति तानि गीतानि स्मरन्ती तस्मिन्नेव काले गीतानां स्मरणं भवतीति ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निपिद्ध्य मन्थनं पीत्वा स्तनं चातृप्तिमान् क्रुधा ।
भाण्डं भित्त्वा द्रुतो मात्रा नवमे बद्ध ईश्वरः ॥
चौर्यक्रोधादिमान् मात्रा बद्धस्त्वं कृष्णरोदिषि ।

अतिचमत्कारकारकस्यासाधारणस्य श्रीकृष्णविषयकस्य यशोदाश्रयकमहावात्सल्यप्रेम्णः साधनमप्यसाधारणमपूर्वं भवितुमर्हतीति तदनाकर्णितवतः प्रश्नकर्तुः राज्ञोऽपि चित्तं नाति प्रसन्नमालक्ष्य तत्र मुख्यं सिद्धान्तमभिव्यञ्जयितुं दिनान्तरस्य दामबन्धनलीलां वक्तुमुपक्रमते—एकदेति । दीपमालिकामहोत्सव दिन इति श्रीवैष्णवतोषणी अत्र श्यामैककर्णातुरङ्गवत् पद्म सङ्ख्यास्वपि गोषु मध्ये व्रजस्य याः पद्मगन्धाद्या अतिसुस्वादु सुगन्धिपयसं सुगन्धितृणमात्रचारिण्यः सप्ताष्ट एव गावः वर्त्तन्ते तासामेव दुग्धदध्यादिकं मत्पुत्रस्य रोचकं भविष्यतीति निश्चारयन्ती श्रीयशोदा निर्ममन्थ स्वयमिति स्वपुत्रस्य नीयनवनीतोत्कृष्टदुग्धावर्त्तनादौ वात्सल्यप्रेमोत्थहठादेव दासीनाम् विश्वस्तमसम्भाव्यम् अद्यारभ्य कालकस्य भक्ष्यनवनीत दुग्धादिकं सर्वमहमेव साधु साधयिष्यामि यथा तत्तदेव रोचक कृष्णश्चौर्यार्थं परगृहं न यास्यतीति भावः दधीत्यनन्तानां दध्नां मध्ये यदेकं सारभूतं पूर्वेद्युः स्वयमेव साधितं तदेवेति भावः । निर्ममन्थेत्युपलक्षणं दुग्धमप्यावर्तयामास ॥ १ ॥

स प्रसिद्धो यो बालः कृष्णस्तस्य चरितानि यानि गीतानि गीतच्छन्दसा कविपुरन्ध्रीभिः स्वयं वा निबद्धानि तानि स्मरन्ती अनुसन्दधती अगायत गृहान्तः शयितकृष्णादर्शनोत्थस्य स्वान्तक्षोभस्योपशान्तये इति भावः ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टमाध्याये श्रीकृष्णस्यान्तरानन्त्यमुक्तमथ नवमे बहिरा वर्णयितुमाह—एकदेति ॥ १ ॥

दधिनिर्मथने काले च बालचरितानि अगायत ॥ २ ॥

---

भाषा टीका ।

दामोदराय नमः ।

अब श्री शुकदेवजी या नवम अध्यायमें दामोदर लीला को वर्णन करे हैं ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले कि एक समय की बात नन्दजी के घरवारी श्रीयशोदाजी अपने घरकीं दासीन और कामकाजमें लगीभई देखिके स्वयं आपही दधि को मथत भई ॥ १ ॥

क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धम्—
पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः।
रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ कुण्डले च—
स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममन्थ ॥ ३ ॥
तां स्तन्यकाम आसाद्य मथ्नन्तीं जननीं हरिः।
गृहीत्वा दधिमन्थानं न्यषेधत्प्रीतिमावहन् ॥ ४ ॥

भाषा टीका।

और दधि मंथन के समय पै जो जो श्रीकृष्णकीबाललीला हैं तिन चरित्रन के गीतन कों स्मरण करके यशोदाजी गावत भई ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सूत्रनद्धं काञ्चीबद्धं रज्ज्वाकर्षेण श्रमो ययोस्तयोर्भुजयोश्चलन्तौ कङ्कणौ च कबराद्विगलन्त्यो मालत्यो यस्याः सा ॥ ३—४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्थं तदेकस्निग्धायां तन्मातरि निजस्नेहभरोदया तामेव वर्णयन् परमसौन्दर्येण परमस्नेहेन च तन्मातृत्वयोग्यतां दर्शयति—क्षौममिति। तत्र सुभ्रूः पृथुकटितट इत्युपलक्षणेन सर्वाङ्गसौन्दर्यं व्यञ्जितं वेषसौन्दर्यं क्षौममित्यादिना क्षौमम् अतसीतन्तूत्थं वास्कं "क्षौमास्या तुमाक्षुमा" इति चामरः अतिसूक्ष्मं चेद् अवलोक्यते नानारागं चांत अत्र तु सचित्रं पीतं ज्ञेयम् अस्याः क्रमदीपिकाभिप्रायतः श्यामवर्णत्वेन शोभाभराच्छया एतस्याः पीतवर्णत्वं तु गौतमीये सूत्रनद्धमिति तत्रापि शोभादर्शिना सूत्रं नीविबन्धं मन्थनार्थं विशेषतो वा तन्नद्धं स्वाभाविकचेष्टासौन्दर्यमाह—रज्ज्वेत्यादिना। कुण्डले च चलन्ती कबरः केशबन्धः मालतीत्यत्र कप्रत्ययाभावः समासान्तो विधिरनित्य इति ज्ञापनात् मालतीति तस्या एव कार्त्तिके प्राधान्यात् स्नेहमाह, पुत्रेति। जातेति च पुत्रचरितगानात् सुभ्रूरिति भ्रुवश्चालनव्यञ्जनया हर्षादिभावविलासोऽपि वर्णितः ॥ ३ ॥

तत् स्नेहविशेषमयबाल्यलीलानुरूपया क्षुधा स्तन्यकामः तां तादृक् स्नेहरसमयीं यतो जननीमिति श्रीकृष्णान्तःस्थितभावमेवानुवदति—तेन च तस्याः सुखमेवाभूदित्याह—प्रीतिम् आसमन्तात् वहन् प्रापयन् स्तनपाने प्रयत्नात् मन्थनदण्डग्रहणेन निषेधनसामर्थ्याच्चातुर्याच्च एवं मनोहरत्वाद्धरिः शय्यातः उत्थायेति ज्ञेयं कार्त्तिके प्रातरेव मन्थनव्यवहाराद् बाल्यान्तरैरसम्मिलितत्वाच्च ॥ ४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

सूत्रनद्धं काञ्चीगुणबद्धं चलद्भुजकङ्कणाकुण्डले च स्विन्नं वक्त्रं बिभ्रतीत्यन्वयः "जातकं दधि सम्प्रोक्तम्" इतिकोशात् दधि निर्ममन्थ कीदृशी पंच बिभ्रती वासः कुचयुगं कङ्कणौ कुण्डले वक्त्रञ्चेति ॥ ३ ॥ ४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कथम्भूता ममन्थेत्यत्राह—क्षौममिति। वासःप्रभृतीनां द्वितीयान्तानां बिभ्रतीत्यनेनान्वयः पृथु कटितटे सूत्रनद्धं काञ्चीबद्धं क्षौमं वस्त्रं जातः निर्मथनानुकूलव्यापारजः कम्पो यस्य तत्पुत्रस्नेहेन स्नुतयोः पयः स्राविणोः कुचयोर्युगं च रज्ज्वाकर्षणे श्रमो ययोस्तयोर्भुजयोश्चलन्तौ कङ्कणौ कुण्डले च स्विन्नं प्रस्वेदभरितं वक्त्रं च बिभ्राणा कबराद्विगलन्त्यो मालत्यो यस्याः शोभने भ्रुवौ यस्यास्तथाभूता निर्ममन्थ आगायत चेत्यर्थः ॥ ३ ॥

तामेवं निर्मन्थनीं जननीमासाद्य समीपमेत्य स्तन्यं कामयमानो हरिः श्रीकृष्णस्तस्याः प्रीतिमवाहन् दधिमन्थनदण्डं गृहीत्वा न्यषेधत् निवारयामास ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

क्षुमनामकक्रिमितन्तुना कृतं क्षौमं सूत्रेण काञ्च्या नद्धं बद्धं पुत्रस्नेहातिशयेन स्नुतयोः क्षरितयोः कुचयोः युगं पुनः कीदृशं जातः आविर्भूतः कम्पश्चलनं यस्य तत्तथा तत् शोभने भ्रुवौ यस्याः सा सुभ्रूः वद्धया रज्ज्वा आकर्षः तेनोत्पन्नः श्रमः आलस्यं तेनोपेतयोर्भुजयोश्चलन्तौ कङ्कणौ स्वगात्रगायमानशब्दयुक्तत्वात्तथाविधौ स्विन्नं स्वेदजलोपेतं कबरात् केशबन्धात् विगलती मालती मल्लिका यस्याः सा कबरविगलन्मालती अत्र द्वितीयान्तपदस्य बिभ्रतीत्यनेनान्वयः। पृथु विशालम् ॥ ३ ॥

न्यषेधत् निवारितवान् ॥ ४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं गानपरतया मन्थने क्रियमाणे गानस्यामृतरूपत्वात् दधिमन्थनं न भवतीति गानस्य गौणभावं सम्पाद्य भगवज्जनोपयिकं देहमपि पीडयित्वा भगवदुपभोग्यं रसमपि निरुध्य,

तमंकमारुढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ।
अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥ ५ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तद्दुःखनामपि निवार्य भौतिकीं क्रियां श्रमजनिकां शक्तिमपि पीडयन्तीं मुक्तानामपि क्षोभजनिकां कृतवतीत्याह-क्षौमं वासइति । क्षौमं पट्टवस्त्रं नदतिपिच्छिलं भवतीति तद्दार्ढ्यार्थं सूत्रेण दोरकेण बद्धं क्रियते उत्थिता सती मन्थनं करोति मन्थनावेशात् वस्त्रस्याप्यननुसन्धानमिव वक्तुं स्थूलं कटितटं विभ्रती इत्युक्तं कटिस्थौल्यात् मध्ये कृशभावेन बद्धं वासः परं न पतति अयुक्तकरणं वा ज्ञापयितुं वस्त्रादिसौन्दर्यं वर्ण्यते तटपदेन च अस्या नतिरूपत्वं नद्या इव प्रदर्शितम् अनेनावश्यकी शारीरापेक्षापि मन्थनार्थं परित्यक्तेति सूचितम् पुत्रस्नेहेन सहजधर्मेण आधिक्यात् प्रेरितं दुग्धं बहिरपि निःसरत् न विचारितवतीत्याह-पुत्रस्नेहेति । दुग्धं यद्यपि स्रवति तथापि पुत्रस्नेह एव स्नुतौ यत्र तादृशं कुचयुगं विभ्रती स्नेहे वृथा गच्छति सति तदभिमानिनी देवता भीता सती कुचयुगमपि कम्पयति तादृशमपि विभ्रती अनेनाधिभौतिकाध्यात्मिकाधिदैविकापेक्षामपि त्यक्तवतीत्युक्तं भवति. चकारादन्तर्यामिप्रेरणामपि नन्वेनमतिक्रमे भगवता रक्षकत्वेन स्थापितौ दण्डधरौ मृत्युयमौ कथं न तां दण्डितवन्तावित्याह-सुभ्रूरिति । शोभने भ्रुवौ यस्याः भ्रुवौ यम इति वाक्यात् भाव्यर्थमङ्गीकृत्य पर्यवसानात् शोभनभ्रूत्वं रज्जोर्नेत्रस्याकर्षणे यः श्रमः तत्सहितं भुजद्वयं तावत् पर्यन्तं चलन्ति कङ्कणानि ययोः एतादृशौ हस्तौ विभ्रती अनेन भक्तिमार्गः कर्ममार्गश्च तद्धर्माः तन्नियमाश्च सर्वे क्षिप्ता इत्युक्तम् कुण्डले साङ्ख्ययोगद्वयमपि क्षिप्तं सर्वत्र विभ्रतीति सम्बन्धः । चकाराच्छिरश्च जातकम्पम् इत्यनुवर्तते एतदर्थमेव पृथङ् निर्देशः । अन्यथा स्नुतसकम्पकुचयुगमित्येव वदेत् वक्त्रमपि स्विन्नं परमक्षोभात् स्वेदयुक्तं निर्गतसारा भक्तिरप्युच्यते कवरे केशपाशे सिद्धस्थाने स्थिता विगलन्ती मालती यस्यां कवरात् केशपाशात्सिद्धस्थानात् विगलन्ती मालती यस्याः इति वा मा लक्ष्मीः अलं यस्मिन् तादृशं जगत् अतिक्रम्य वर्त्तत इति मालती ब्रह्मविद्या सापि गच्छति एवं प्रपञ्चासक्तां निर्मथ्य आकृतिमात्रवर्णनायां वैयर्थ्यं शुकवाक्यविरोधश्च भवेत् ॥ ३ ॥

पूर्वमङ्गवान् बालकानामर्थे स्तन्यकामः सन् भ्रमं वारितवानित्याह-तामिति । आसाद्य निकटे गत्वा नैकट्यदर्शनाभ्यां क्रियाभ्यामाभ्यां उभयविधनिरोधसिद्धिः मध्नतीमिति । दध्यांधिकृतत्वं स्वस्यापि प्रयासः जननीमिति निरोधावश्यकत्वं तथा बुद्धिस्तेनैव कृतेति हरेरिति समाप्यतोऽपि सर्वदुःखहर्ता साम्प्रतं कर्त्तुरत्यन्ताभ्याभिनिवेशात् करणप्रतिबन्धमेव कृतवानित्याह-गृहीत्वा दधिमन्थानमिति । मन्थानदण्डं हस्तेन धृत्वा प्रीतिमावहन् न्यषेधत् मन्थननिषेधं कृतवान् निषेधे अपकाराकरणाय प्रीतिमावहन् इति यथा तस्याः स्वस्मिन् प्रीतिर्भवति तथा कुर्वन् सर्वाङ्गं चालयन् हस्तौ पादौ चैव विचालयन् मुखाब्जं मधुरारावं बिभ्रत् कृष्णः ...
गतः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वात्सल्यप्रेम्णा रूपगुणाभ्यां च कृष्णस्य यशोदैवानुरू... मातेति द्योतयन् वात्सल्यरसोपासकानामवश्यकर्त्तव्यं श्रीकृ... मातुर्ध्यानमाह—क्षौममतसीतन्तूत्थं पीतचित्रमतिसूक्ष्मं ... तेनास्याः श्यामवर्णत्वं क्रमदीपकोक्तं ध्वनितं सूत्रनद्धं ... नियद्धं पृथुकटितटे सुभ्रूरित्याभ्यां सर्वाङ्गसौन्दर्यं च ... रज्जोराकर्षणे श्रमो ययोस्तयोर्भुजयोश्चलन्तौ कङ्कणौ ... मित्यन्तानां विभ्रतीत्यनेन सम्बन्धः । मेघतुल्यात् कवराद्विगल... जलबिन्दुश्रेणीव मालती यस्याः सा कप्रत्ययाभाव आर्षः ।...

आसाद्य प्रातरन्तर्गृहात् प्रबुद्ध्य बहिर्निःसृत्य क्षुधा ...न्मुखः सन्नित्यर्थः । मन्थानं मन्थनं दण्डं गृहीत्वेति मातर्म... थानेति स्ववचनं मानयिष्यन्तीं मातरमभिज्ञापयेति भावः । ... चातुर्यं ज्ञात्वा या मातुः प्रीतिस्ताम् आवहन् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूत्रेण काञ्च्या नद्धं बद्धं क्षुमायाः विकारः क्षौमं व... कुचयुगं च रज्ज्वाकर्षणे श्रमो ययोस्तयोर्भुजयोश्चलन्तौ कङ्क... च कुण्डले च स्विन्नं प्रस्वेदयुक्तं वक्त्रं च विभ्रती कवरा... लन्त्यो मालत्यः यस्याः सा दधि निर्ममन्थ ॥ ३ ॥ ४ ॥

---

भाषा टीका ।

सूत्रते बांधी भई रेशमी सारी कमरिमें धारणकरे पु... के स्नेहते दोनों स्तनन सों दूध चुचावतो जाय है ... के खींच वे सों श्रम भरे भुजन में पहिरे जो कंकण ... चल २ कें शब्द करे हैं मथवे सों कुण्डल और कुच ... त जांय हैं मुख पै पसीनानकी बूंदें आइगई हैं माथेके ... शनतें मालती की माला बिखरती जाय है या प्रकार सों ... यशोदाजी आप ही दधि मन्थन करत भईं ॥ ३ ॥

इतने ही में स्तनपीवे की इच्छा सों श्रीहरि दधि मथ... में मैयाके पास जायकें अपनीमैया कूं प्रीति बढावत ... पकरकें रोकने लगे और बोले कि अरी मैया पहिले ... प्यायदे फिर मथी करिओ ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अधिश्रिते चुल्लीमारोपिते उत्सिच्यमाने अतितापेनोद्... माने ॥ ५ ॥

[१] सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमन्थभाजनम् ।
भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दृषदश्मना शिलापुत्रेण अन्तरं गृहमध्यं गतः रह एकान्ते नवनीतमभक्षयत् ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सस्मितं पयसः स्वयं स्नुतत्वान्मधुरत्वाच्च स्मितेन गण्डे ईक्ष्यमाणेन सहितं मुखं तस्येक्षमाणा अतृप्तमपि त्यक्त्वा । ननु, तं पाययन्त्येवाङ्कं कृत्वा कुतो न गता तत्राह—जवेनेति । तथा सति वेगेन गमनासिद्धेः तत्रैव हेतुः उत्सिच्यमान इति उद्गिरतीत्यर्थः । एवं दृष्टिगोचरे मनानिदूरे पयः पाकस्थानं ज्ञेयं तत्पयोपि मथ्यमानदधिवदेव इति स्वाभिकतरत्वगोऽपि कृतः । अथवा "यद्यामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति कैमुत्यात् तस्यास्तु विशेषतः सर्वे तस्यैव पितरौ च पुत्रस्यापानदुःखं सोढ्वाप्युदर्कदेहधनविद्यादिसम्पत्त्यर्थकर्माणि सदैव हते तच्चोपपायनस्तनपनताडनादौ प्रसिद्धम् अन्यत्र च न सम्भवतीत्यन्यभावदुर्बोधो मातापितृस्नेहपरिपाकः खल्वसौ गोपजातीनाञ्च सर्वतो दुग्धसम्पत्तावेवाग्रहः ततोऽयं बालको न काञ्चिदपि स्वसम्पत्तिरक्षां जानातीत्यतो मयैवाधुना सा कर्त्तव्येति धिया तत्परित्यागेन तदर्थगमनमपि तत्स्नेहमयमेव यथात्मसम्पत्त्यर्थं सह्यमानेप्यात्मदुःखे स्नेहविशेष एवात्मनि गम्यते तद्वदिति विवेचनीयम् अत एव तुशब्दः ॥ ५ ॥

जातकोप इत्यादिकमशेषं मातृस्नेहमयबाल्यलीलावेशमाधुर्यं वर्णितं तत्तज्ञानां तन्मनस्येवोद्भूतत्वात्तच्चेष्टानां च रहस्येव कृतत्वात्तात्त्विकमेवेति दर्शितं प्रौढहृदया मृषा वृथापि बाल्यस्वाभावेनैव अश्रु यस्य सः "लावण्यम्पदयति यस्तस्याः" इत्यादिभङ्गिपद्ये मिथ्यासौ विहितेन्द्रिय इति वत् । यद्वा, कदाचित्कैतवादिना मिथ्यारोदिति अधुना तु अमृषाश्रुः अतृप्तत्वादिति मुनीन्द्रस्य सविनोदसाश्चित्त्वं दृषदश्मनेति निःशब्दं तत्तले शनैरल्पच्छिद्रार्थम् अन्तरमन्तर्गृहं गतः सन् हैयङ्गवं हैयङ्गवीनं ह्योगोदोहस्य सद्यो नवनीतं तादृशघृतमेव तदित्यमरसम्मतावपि कालस्तु नवनीतमित्याहेति क्षीरस्वामिलेखात् तदिदं च प्रथमम् पितादुद्धृत्य घृतत्वात् ह्योगोदोहोद्भवत्वं न व्यभिचरति ॥ ६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उत्सिच्यमाने स्थाल्या बहिर्निर्गच्छति ॥ ५ ॥

दृषदश्मना पेषणयदमना हैयङ्गवं नवनीतं हैयङ्गवशब्दः वर्जितः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं निषेधन्तं कृष्णमङ्कमुरसङ्कमारूढं स्नेहेन स्नुतं स्तनमपायत्, कथम्भूता ? स्मितेन सहितं सुतस्य मुखमीक्षन्ती तदाधिश्रिते चुल्लीमारोपिते पयसि क्षीरे उत्सिच्यमाने गाढाग्निसम्पर्कात्पात्राद्बहिर्निर्गच्छति अतृप्तं स्तन्यपानादतृप्तं पुत्रमुत्सृज्य सा यशोदा जवेन ययौ जलप्रक्षेपादिना क्षीरतापं शमयितुं जगाम ॥ ५ ॥

स उत्सृष्टः कृष्णः सञ्जातकोपः दद्भिर्दन्तैः स्फुरन्तं चलन्तमरुणमधरमधरोष्ठं सन्दश्य मृषाऽश्रूणि यस्य तथाभूतो दृषदश्मना पेषणयदमना दधिमन्थभाजनं निर्भिद्य अन्तरं गृहमध्यं गतः हैयङ्गवं नवनीतं जघासैकान्ते नवनीतमभक्षयादित्यर्थः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतृप्तमसम्पूर्णप्राशनम् अधिश्रिते चुल्ल्यां निहिते अधिकं पाकं प्राप्ते वा पयसि उत्सिच्यमाने उद्रिच्यमाने सति पयः अवरोपयितुमिति शेषः ॥ ५ ॥

दद्भिः दन्तैः दधिमथ्यमानं दधिमस्तुपूर्णपात्रं "दधिमण्डो भवेन्मस्तु" इति हलायुधः दृषदश्मना शिलापुत्रकेण मृषाश्रुः अविद्यमाननेत्रजलः दुःखोत्पन्नबाष्पो न भवतीत्यर्थः । हैयङ्गवं नवनीतम् अन्तरं बहिर्भावम् अन्तर्धानं वा गृहान्तरं वा
" अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥"
"अन्तरं परिधानीये बाह्ये स्त्रीपेऽन्तरात्मनि ।
क्रतुमध्येऽवकाशे च तादर्थ्ये वसरेऽवधौ ॥
विक्षेपविवरान्तर्धिव्यवसानविनार्थयोः" इति यादवः ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स जातेति अन्तरं गृहाभ्यन्तरगृहं गतः ॥ ६ ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवता प्रीतिर्ज्ञनितेति भगवदर्थं प्रपञ्चासक्तिं परित्यज्य स्तनं पायितवतीत्याह—तमङ्कमिति । स्वयमेव अङ्कमारूढम् ईषदुत्थितं स्तनमपाययत् यथा सा विमुच्य न गच्छति तदर्थमङ्कमारूढः दैत्यानाक्रमयितुं च स्नेहस्नुतमिति नास्याः स्तनपानजनितोपि क्लेशः यद्यपि मोहितायाः प्रपञ्चासक्तिर्महती गृहे च बहुकार्यं दास्यश्च न सन्ति तथापि मन्दहासयुक्तं मुखं पश्यन्ती अपाययत् इदानीं स्थित्यर्थं मोहनं पूर्वमोहनस्य सङ्कोचश्च एवं निर्बन्धेन स्थापितापि दोषवशात्त्यक्त्वा निर्गतेत्याह—अतृप्तमुत्सृज्येति न तृप्ता यस्मिन् प्रतिबन्धं कुर्वाणमप्युत्सृज्य ऊर्द्ध्वं त्यक्त्वा जवेनाऽतिवेगेन सा पूर्वोक्ता प्रपञ्चपरा ययौ उद्देश्यपर्यन्तं गतवती गमने लौकिकमावश्यकं कार्यमाह—उत्सिच्यमाने पयसीति अधिश्रितेऽग्नौ स्थापिते पयसि उत्सिच्यमाने विष्यन्दमाने सति विष्यन्दनं द्रव्यनाशकं दोषजनकं च तुशब्दः

(१) स जात इति वीर० ।

उत्तार्य गोपी सुशृतं पयः पुनः प्रविश्य सन्दृश्य च दध्यमत्रकम् ।
भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ॥ ७ ॥
उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं शिचि स्थितम् ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात् सुतमागमच्छनैः ॥ ८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रक्रमान्तरमाह-भगवदनुरोधेन यथा मन्थनं परित्यज्य भगवदनुरोधं कृतवती मन्थनाविरोधेनैवं भगवदनुरोधेन दुग्धोत्तारणं न कृतवती किन्तु भगवदनुरोधं परित्यज्यैव कृतवतीति ॥ ५ ॥

ततो बालकानामतृप्तत्वात् भगवान् जातकोपो जातः यतः स बालकरक्षकः बालकरक्षाप्रतिघाते भक्तिमार्गेण वैषम्यात् अकस्मादेव क्रोधो जातः स्थित एव निमित्तवशादुद्गतः ततः कोपः यशोदां मारयिष्यतीति क्षोभं तद्गतं भाण्डं च स्फोटितवानित्याह—अधरं दद्भिः सन्दश्य दृषदश्मना दधिमथनभाजनं भित्त्वेति अधरस्य दंशे हेतुः स्फुरितारुणेति स्फुरितो ऽरुणश्चाधरश्च जात इति क्षोभाद्भगवत्परित्यागे क्षोभस्यैवापराधो भवति तदा क्षोभ आधिदैविकः यशोदां मारयितुम् आध्यात्मिकं वा स्वयं वा विज्ञापनार्थमागतः तदा स्फुरणं जातं तद्वयं निवारणीयं रजोगुणश्च प्रादुर्भूतो जातः भयमुत्पादयितुं भिन्नं तदुभयमपि निवारयितुमोष्ठदंशः दन्ताः स्नेहकाला: यशोदानिष्ठाः तैस्तेषां निवारणं कृतम् अनुकरणं तु स्पष्टमेव दधिमण्डः तक्रं तदाधारभूतं भाण्डं नवनीतं तु भिन्नं जातमस्ति ततो दृषदश्मना दृषत्सम्बन्धि कुट्टनपाषाणेन भित्त्वा दैत्याविष्टेव सा निर्गता तेषां दैत्यानामाधिदैविकानां यज्ञायुधेनेव जनितशब्देन निवारणं कर्त्तव्यं तत्र महति शब्दे क्रियमाणे भाण्डमेव भिन्नम् एवमुपकारं कृत्वा मृषाश्रुर्जातः दधिभाण्डभङ्गेऽपि दोषसम्भवात् यद्यपि स्वतः कृते भङ्गे दोषो नास्ति तथापि रुद्रः समागत इति लोकं ज्ञापयितुम् अश्रूण्यवर्त्तयत् अन्यथा भाण्डदेवतायाः भङ्गो न स्यात् अश्रूणां कार्यं च रजतादिनिमित्तकं च तदुभयाभावान्मृषाश्रुत्वं यशोदाया नाशशङ्कया वा तथापि स्वयं रक्षक इति अश्रूणां मृषात्वमेव वस्तुतस्तु भाण्डे दैत्य आविष्टः तद्वधार्थमेव तत् कृतवान् ततस्तस्याश्रमः सार्थको भविष्यतीति हैयङ्गवं रह एकान्ते बालकार्थं जघास जहारेति वा स्वस्यापि भक्षणं प्राप्स्यन्तीत्यन्तरं गतो भेदं प्राप्तवान् तत्र ततःप्रभृति ते भिन्नाः कृताः गृहमध्ये गतः तत्राप्येकान्ते आधिदैविकदैत्यानामगम्यस्थाने बालकार्थमेव जघास भक्षितवान् ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो बालस्यास्य बुद्धिरित्युक्ता मन्थनाद्भिरस्योपविष्टा स्वयमेवाङ्कमारूढं तम् उत्सृज्येत्यत्र हेतुः अवेनेति तत्रापि हेतुः उत्सिच्यमाने अतितापेनोद्रिच्यमाने सति पयसि उत्तारणार्थमित्यर्थः । अधिश्रिते चुल्लीमारोपिते । ननु, तर्हि कृष्णादपि तस्या दुग्धमतिममतास्पदमभूत् यदनुरोधेनातृप्तः कृष्णोऽप्युपेक्षितः सत्यम्—

"तद्भक्षणयेयादिषु कापरपेक्षता—
यया पुनः सोऽपिममेत्युपेक्ष्यताम् ॥
प्रेम्णो विचित्रापरिपाट्यूर्मीरिता—
बोध्या तथा प्रेमवतीभिरेव या" ॥ ५ ॥

मृषा वृथापि बाल्यस्वभावादेवाश्रुर्यस्य सः दृषदश्मशिलापुत्रेण निःशब्दछिद्रार्थं तत्तले इति ज्ञेयम् अन्तरं गृहाभ्यन्तरं हैयङ्गवं ह्योगोदोहस्य सद्योनवनीतम् ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधिश्रिते अग्निकुण्डस्थपात्रस्थे उत्सिच्यमाने पात्रादुद्गच्छमाने ॥ ५ ॥

दृषदश्मना शिलाखण्डेन अन्तरं गृहमध्यं गतः रहः एकान्ते हैयङ्गवं नवनीतं जघास अभक्षयत् ॥ ६ ॥

---

भाषा टीका ।

तब तौ श्री यशोदाजी अपने लाला कों गोद में बैठाय कें स्नेह नें अपने स्तन को पिवावन लगी और पिवावे में श्रीकृष्ण को मन्द हास वारो मुख निरखिकें प्रसन्न होंयजाती ही इतने में अगीठी पै धर्यो जो दूध सो वाको आयो जो उफान सोई यशोदाजीने बिनाई तृप्त भयें कृष्ण कूं छोडिके बडे वेग सों दूध उतारिवे को गई ॥ ५ ॥

बस यशोदाजी तो आप कूं छोडिके दूध उतारवे कूं गई और कृष्ण कुं आयो जो क्रोध सोई तो आप के होंठ फरकन लगे और फरकते भये अरुण होठ कूं दांतन सों काटि कर कें दधि को जो माठ हो ताकूं पत्थर सों फोरि कें और झूठे आंशू बनाय कें भीतर सों माखन निकासि कें एकान्त में खायवे लगे ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुश्टतं सुतप्तम् दधिमन्थनस्थानं प्रविश्य भिन्नं सन्दृश्य दृष्ट्वा ।
उलूखलाङ्घ्रेः परिवर्त्तितस्योलूखलस्योपरि शिचि शिक्ये ।
चौर्येण विशङ्कितं चञ्चलमीक्षणं यस्य तं सुतम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुशृतं पक्वं भग्नं भिन्नं तच्च सुतस्यैव कर्मेति विलोक्य निर्धार्य तादृशे कर्मण्यन्यस्याप्रवृत्तेर्भङ्गचातुर्य्यविशेषोपलब्धेस्तस्य कोपसम्भावनाच्च तमपि तत्रापश्यन्ती जहास तस्यातिचापल्येन भेदने चातुर्येण भीत्याऽपसरणेन गृहान्तस्तत्किङ्किण्यादितच्चालितभाण्डादिशब्दाश्रवणेन च ॥ ७ ॥

काकादिभयाद्विवर्त्य स्थापितस्योलूखलस्योपरि स्वास्तिकासनेनोपविष्टम् अन्तर्गृहप्रवेशानन्तरं यत्किञ्चिदेव भुक्त्वा सत्वरमवशिष्टं हैयङ्गवीनं सभाण्डमेव गृहीत्वा मातृवञ्चनाय पश्चात् द्वारेण निर्जनं गृहपश्चाद्देशं गत्वेति शेषः । पूर्वं शिक्ये स्थापितं यत् तद्देवेति विशेषचापल्यदर्शनमप्युक्तं पश्चात् सुतस्य पृष्ठतः तद्दृष्टिवञ्चनार्थम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनुत्तानप्रदेशमुत्तार्य आश्रयणस्थानादन्यत्र निधाय दध्यमत्रकं दधिभाजनम् ॥ ७ ॥

उलूखलाङ्घ्रेरुपरि अधोमुखविन्यस्तोलूखलस्योपरीत्यर्थः मर्कटाय मार्जारायेति केचित् मर्कार्थं दधिसारार्थमागताय सखीजनायेति केचित् अथ पूर्णलक्षणोपहृतं हैयङ्गवं मर्काय मर्कटाय कामं ददतमित्यन्वयः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा गोपी यशोदा सुशृतं सुपक्वं पय उत्तार्य चुल्या अवरोप्य पुनस्तत्र प्रविश्य दध्यमत्रकं दधिमथनभाण्डं भग्नं विलोक्य च तत्सुतस्य कर्म प्रति जहास हसितवती तं सुतं तत्र न पश्यती नापश्यच्च ॥ ७ ॥

नत उलूखलाङ्घ्रेरुपरि अधोमुखविन्यस्तोलूखलभागस्योपरि व्यवस्थितं मर्काय मर्कटाय मार्जारायेति केचित् नवनीतार्थमागताय सखीजनाय वा हय्यङ्गवं नवनीतं काममिष्टं यथा तथा ददतं प्रयच्छन्तं चौर्येण विशङ्किते चञ्चले ईक्षणे यस्य तं निरीक्ष्य पश्चात्पृष्ठतः शनैराजगाम ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्तार्य चुल्या अन्यत्र निधाय दध्यमत्रकं दधिभाण्डं भग्नं भग्नं स्वसुतस्य तत्कर्म विलोक्याऽऽलोक्य ॥ ७ ॥

उलूखलाङ्घ्रेः उलूखलबुध्नस्य चौर्येण विशङ्किते किञ्चिन्मीलनमीलने कुर्वाणे ईक्षणे यस्य स तथा तं पश्चात्पृष्ठतः ॥८॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उलूखलेति पश्चाद्द्वारेण तस्मान्निर्गम्येति शेषः ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—उत्तार्येति । पयस्तु सुशृतं सम्यक् पक्वं तदुत्तार्य भूमौ स्थापयित्वा पुनः सुशृतमिति प्रथममुत्सेकं उत्तार्य पुनराधिश्रित्य ततः शृतं पुनरुत्तारितवतीत्यर्थः । प्रविश्य मन्थनस्थानम् अनेनाङ्गणे पयोऽधिश्रितमिति ज्ञायते बहिर्गृहे मन्थनं तद्गृहं प्रविश्य सन्दृश्य च दध्यमत्रकं भग्नम् अमत्रकं भाण्डं सम्यक् दृष्ट्वा कर्तृकरणकर्मणां याथार्थ्यं चकारात् नवनीताभावं च दधिगण्डप्रवाहं च ततः तत्कर्म स्वसुतस्येति च सन्दृश्य सम्यक् ज्ञात्वा लौकिकाविष्टचित्ता दैत्यानां निवारणात् जहास हास्यं कृतवती न तु क्रोधं भगवांश्चेत् तत्रैव तिष्ठेत् न किञ्चित् कुर्यात् तदा स्वस्यैव वापराध इति अतृप्त्तपरित्यागात् तूष्णीमेवं तिष्ठेत् भगवांस्तु रूढं तस्यालौकिकज्ञानं दूरीकर्त्तुं दृढमिति ज्ञापयितुं वा तस्याः तामसभावोत्पत्त्यर्थं ततो गतः ॥ ७ ॥

तत्र च गत्वा पूर्वमपि दैत्यावेशेन यत्सम्पादितं हैयङ्गवादिकं तदपि शिक्ये स्थितं कामं यथेच्छं मर्कटाय प्रयच्छति मर्कटोपि दंष्ट्रित्वात् क्रूरजन्तुः हैयङ्गवमप्यनुपयुक्तं शिक्यं च निर्ऋतिपाशः स्वयं च उलूखलाङ्घ्रेरुपरि व्यवस्थितो भवति उलूखलं विपरीतं कृत्वा तत्र स्थितः तेषां दोषनिवृत्त्यर्थं यज्ञपुरुषो भूत्वा सुपर्णाचयन इव स्थितः अग्नेर्नाभिरूपत्वात् उलूखलस्य तदुपरि स्थितः सन् अतिरिक्तमतिरिक्ताय प्रयच्छत्यतिरिक्तस्य शान्त्यै ततो यशोदा अन्तः प्रविश्य तथाभूतं पुत्रं दृष्टवतीत्याह, उलूखलाङ्घ्रेरिति. पूर्वं तत्र भगवद्दर्शने मर्कटोऽपि न दृष्टस्तेन शङ्कापि भतोऽन्वेषणमपि कर्त्तव्यम् अन्वेषणे पुनश्चित्तं भगवत्परं जातमिति भगवन्तं दृष्टवती दोषाणाम प्रयोजकत्वज्ञापनाय उलूखलं विपरीतं कृतं तदा सुपर्णो यत्र विपरीतः कृतो भवति अतः सर्वदोषनाशकाग्नेरपि यत्र वैपरीत्यं तत्र दोषाणां किं वक्तव्यमिति ज्ञापितं काममिति यथेच्छं सन्देहाभावात् देयमेव तत् स्वो गोः सम्बन्धि हैयङ्गवं पूर्वकालगोः सम्बन्धि नवनीतं चौर्ये जाते विशङ्किते ईक्षणे यस्य भगवता चौर्यं कृतमस्ति तस्याः चौर्यदोषनिवारणाय सर्वपतिरपि तथा भावोत्पादनात् लोकानुसारेण नवनीतहरणं चौर्यमित्युच्यते तत्र दोषदृष्टौ तस्याः ज्ञानं कालेन नाद्यत इति विशेषाकारेण वा शङ्कितमीक्षणं यस्य तथा भवति चौर्यविशङ्कितायां वा ईक्षणं यस्य उभयथापि तस्या ज्ञाननाशशङ्का तादृशं स्वयं निरीक्ष्य सुतं पश्चात् पृष्ठभागे पृष्ठं च पश्यन्ती पापदृष्टिः शनैरागमत् ईदृग्मात्रमागतवती न हि पापदृष्टिः शीघ्रमागन्तुमर्हतीति ॥ ८ ॥

---

### श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुशृतं सुपक्वं दधिमन्थनस्थानं प्रविश्य दध्यमत्रकं दधिपात्रम् अतिचिक्कणत्वेनातिदृढत्वेनानुकम्पायां कन् भग्नं विलोक्येति वामतर्जन्या नासाग्रं स्पृष्टेति ज्ञेयम् ॥ ७ ॥

दधिलिप्तचरणचिह्नेन किङ्किणीशब्देन च तच्चालितभाण्डादि

तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससार भीतवत् ।
गोप्यन्वधावन्न यमाप योगिनां क्षमं प्रवेष्टुं तपसेरितं मनः ॥ ९ ॥
अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिः सुमध्यमा ।
जवेन विस्रंसितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ १० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शब्देन च गृहान्तः स्थितं नवनीतं भुञ्जानमनुमाय हसन्ती किञ्चिद्विलम्ब्य यावत्तत्र यियासति स्म तावदेव पश्चद्वारेण निःसृत्य बहिः प्राङ्गणान्तरे काकादिभयादधोमुखीकृतोलूखलस्योपरि कृष्णे स्वस्तिकासनेनोपविष्टे सति यदभूत्तदाह—उलूखलेति । शिचि शिक्ये स्थितं ततश्चोरयित्वा आनीतमित्यर्थः । चौर्यांचेतो-मातृताडनभयाद्विशङ्किते तदागमनानुसन्धानपरे ईक्षणे यस्य तं गृहान्तर्गतैव तिर्यग्ग्रीवं निरीक्ष्य पश्चात् तद्दृष्टिवञ्चनार्थं तत्पृष्ठतस्तं जिघृक्षन्ती शनैरिति स्वचरणशब्दाभावार्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दधिमथकं दधिमन्थनभाण्डं भग्नं सन्दृश्य दृष्ट्वा तत्-सुतस्य कर्म विलोक्य जहास हसितवती तं स्वसुतं न पश्यती नापश्यत् ॥ ७ ॥

ततः किं वृत्तमित्याकाङ्क्षायामाह—उलूखलाङ्घ्रेः अधोमुख-स्योपरि शिचि शिक्ये चौर्येण विशङ्कितं विशङ्का जाता यस्य तदीक्षितमीक्षणं यस्य तम् ॥ ८ ॥

---

### भाषा टीका ।

इतने में यशोदाजी खूब औटे दूध कूं चूल्हेपै तें नीचे उतारि फेर वही मथवे की ठौर आयकें दही के माठ कूं फूट्यो देखिके विचारन लगी, कि-यें मेरे सुत ही को काम है और वा कूं भी तहां नहीं देख्यो तव बडी हसिवे लगी, कि-बडो सयानो है डरप कें भाजगयो कि मैया मारेगी ॥ ७ ॥

नेक आगें बढिकें यशोदाजी देखें तो पिछवाडे की तरफ कूं एक बडो उलूखल धरयो हो ताके ऊपर आप बैठे हैं, और बंदरन कूं छींके में सों निकास २ कें मांखन खवाय रहे हैं, और कहूं मैया न आय जाय या भय सों चोरी के कारण इत उत कूं देखते जाय हैं, ऐसे कृष्ण कूं देखिके पिछाडी सूं यशोदाजी धीरे सों आय पहुंची ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तपसा ऐकाग्र्येणेरितं तदाकारतां नीतमत एव क्षमं योग्यं प्रवेष्टुं योगिनां मनोऽपि यं नाप तम् अयत्ना अन्वधावत केवलं तत्रापि यतो योगिनां मनोऽपि यं प्रवेष्टुं न क्षममिति ॥ ९ ॥

अन्वञ्चमाना एवं कृष्णमनुगच्छन्ती बृहत्योश्चल-श्रोण्योर्भारेणाक्रान्ता स्तब्धा गतिर्यस्याः सा विस्रंसितात्के-बन्धाच्च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा यद्वा कम्पितात्केशबन्धात्पुरः पतितानि प्रसूनान्यनुपश्चाद्गतिर्यस्याः सा परामृशद्धृतवती ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रकर्षेण सम्यगीक्षित्वेति स्वताडनार्थं तस्या यष्टिग्रहण-सम्भवात् प्राक् कदापि तद्दर्शनाच्च तन्निस्तारार्थम् अतः स-सन् अपससार मातृवञ्चनाय यमलार्जुनाख्यचैत्यवृक्षसन्नि-नानाजनता सदननिजपुरपुरोद्धारं प्रत्येवेति ज्ञेयं भीतवत् सहजमातृस्नेहभरज्ञानेन तत्त्वतोऽन्तर्भयाभावात् यद्वा भीतो-यथा तथैवेत्यर्थः । एषा मातरि वादयादिलीलामाधुरी मा-तस्मिन् दिने पुरोद्धारमपि निर्गतजनं ज्ञात्वाऽन्वधावदेवं-योगः समाधिः तद्वतां मनः प्रवेष्टुं ब्रह्मणि श्रीभगवत एवा-ंशान्तरे वा लीनीभवितुं क्षमं योग्यमपि तपसा ऐकाग्र्येण त-त्वदुन्मुखत्वाय प्रेरितमपि यं नाप नास्पृशदपीत्यर्थः । नायमिति स्पष्टीभावित्वात् तम् अन्वधावत् पदे पदे प्राप्यमानमिवाप अहो अस्तु तावदस्याः सन्ततमङ्कशयनादिसमयसौभाग्यं वनसमयसौभाग्यमपि परमयोगिनां मनसोऽप्यगोचर भावः । साक्षाच्च धारणात्तस्याः सर्वभक्तेभ्योऽप्यधिको भाग्य-दर्शितः ॥ ९ ॥

बृहदित्यादिरूपापि जवेन परामृशत् तं पृष्ठतो धृत-स्नेहमयेनेति शेषः । यतो जननी ॥ १० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न यमाप तपसेरितं योगिनां मनः यं प्रवेष्टु न क्षमम-दित्यर्थः ॥ ९ ॥

अन्वञ्चमाना अनुगच्छन्ति परामृशत् ॥ १० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामागतामात्ता उद्धृता यष्टिर्यया तां प्रसमीक्ष्य त्वरया स-तत उलूखलाङ्घ्रेरवरुह्य भीतवदपससार पलायितवान् तद्-तमपसरन्तं सुतमन्वधावत् "यतो वाचो निवर्तन्ते अ-मनसा सह" इत्युक्तरीत्या वाङ्मनसापरिच्छेद्यवैभवं प-मन्वधावदित्येतदहो विचित्रमित्यभिप्रायेण विशिनष्टि यं श्री-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

योगिनां मनोपि प्रवेष्टुं न क्षमम् अमर्यमास तमन्वधावत् कथंभूतं मनः तपसा ईरितं प्रवणीकृतम् ॥ ९ ॥

अन्वञ्चमानाऽनुधावन्ती वृहत्योः श्रोण्योर्भरेणाक्रान्ता स्तब्धा गतिर्यस्याः शोभनो मध्यमः मध्यप्रदेशो यस्याः जवेन हेतुना विस्रंसितात्केशबन्धनाच्च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा जननी परामृशत् पस्पर्श जग्राहेत्यर्थः ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभिससार गमनं प्रारब्धवानित्यर्थः । गोप्या कृष्णानुधावनं न तत्त्वबुद्ध्या कृतं किन्तु भ्रान्तिबुद्ध्येत्याशयेनाह–तामिति । तपसेरितं प्रेरितं क्षमं समर्थम् ॥ ९ ॥

अन्वञ्चमाना जवं विहाय शनैरनुगच्छती "अञ्चु गतिपूजनयोः" इति धातुः हंसीवद्गमनवतीत्यर्थः । शनैर्गमने निमित्तमाह, वृहदिति । वृहत्योः स्थूलयोश्चलत्योः श्रोण्योर्भारेणाक्रान्ता लब्धा गतिर्यस्याः सा तथा विस्रंसितात् विस्रस्तात् केशबन्धात् च्युतानामपि प्रसूनानाम् अनुगतिर्यस्याः सा तथा परामृशत् पस्पर्श जग्राह वा ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तामिवि अपसरणं मातृवञ्चनार्थं पुरोद्वारायैव ज्ञेयं प्रवेष्टुं ब्रह्मणि लीनतां प्राप्तुं तपसा प्रेरितमपि यत् यं नाप ॥ ९॥१० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तां दृष्ट्वा अयोग्यां स्प्रष्टुमिति ततो निर्गतवानित्याह–तामात्तयष्टिमिति । यष्टिरत्र गोवत्सनिवारिका तस्या भगवत्यपि वत्सबुद्धिर्जाता आत्ता गृहीता यष्टिर्यया दर्शनादेव न पलायितवान् किन्तु तस्या अन्तर्गतं बाह्यं च भावं प्रकर्षेण सम्यक् दृष्ट्वा नैकट्यमपि नार्हतीति ज्ञात्वा तद्दोषपरिहारार्थं त्वरासहितः ततोऽवरुह्य अपससार प्रतिमुखतयैव पलायनं कृतवान् तस्या दोषेण स्वस्मिन् स्थितबालकानामपि दोषो भवष्यतीति ज्ञापयितुं दृष्टान्तमाह—भीतवत् । यथा भीतः तदपकारं स्वस्मिन् जानाति तथा भगवानपि तद्दोषं स्वस्मिन् विचारितवान् अनेनैव न भीत इति ज्ञापितं सापि गोपी अतोऽन्वधावत् अनुपश्चात् धावनं कृतवती तस्या अविवेकं प्रकटयितुं शुको भगवन्तं विशिनष्टि, यं भगवन्तं योगिनां सिद्धयोगानां निवृत्तदोषं मनः तत्रापि तपसा ईरितं प्रेरितं धर्मेण संस्कृतमपि यं प्रवेष्टुं नाप न प्राप्तवत् अत इयमपि अर्थादेव न प्राप्तवतीत्यर्थः ॥ ९ ॥

एवं भगवति दोषदर्शने भगवदीयोपि भगवन्तं न प्राप्नोतीत्युक्तं तादृशेऽपि भगवान् कृपां करोतीति भगवत्कृपया भगवन्तं स्पृष्टवतीत्याह–अन्वञ्चमानेति । प्रतिकूलोऽपि भगवदर्थश्रमः सार्थकः भाग्ये अन्वञ्चमाना श्रोण्योराकर्षणं कुर्वन्ती रथाकर्षणे बलीवर्दवत् भाराक्रान्तगतिर्जाता भरेण भारेणाक्रान्ता गतिर्यस्याः दुष्टा गतिर्भारेणैवाक्रान्ता ततो बुद्धिरपि दोषादेर्निवृत्तागमनार्थमेव प्रवृत्ता तदाह–सुमध्यमेति । जननीति वचनात्सदुग्धयोस्तनयोरपि भारः सूचितः जननीत्वाच्च न वर्णितः । वस्तुतस्त्वजननी जननी न कदाचिदप्येवं करोति सुमध्यमेत्यनेन मध्ये भक्ता बहिर्व्यामोहिता परं दुष्टभावात् भारेण गत्या क्रमणमुक्त्वा शोभनमध्यभावं वदन् तस्या दोषाभावो गुणश्चोक्तः अभिमानाभावार्थं चाह—जवेनेति । वेगेन विशेषेण स्रंसितानि केशबन्धात् च्युतानि प्रसूनानि तेषामनु पश्चात् गतिर्यस्याः पुष्पाण्यपि सङ्गे चलन्ति प्रकृष्टा सूना येषां तानि प्रसूनानि उत्तारणमात्रेणैव ते नश्यन्तीति देवार्थं च तेषां सूना तान्यपि बध्वा स्थापितवती तानि च पुनः केशबन्धाद्विगलितानि उत्पत्तिप्रलयौ तदभिष्ठात्र्यौ देवते च तत्रैव सम्बद्धे तद्रूपाणां च बन्धनं यत्र ततस्तु मुक्ता न पुनर्जन्मभाजः ततो मोक्षश्च भगवदर्थक्रियया अतः केशानामपि बन्धविमोकस्तत एव विस्रंसितः केशबन्धः ततः च्युतानि प्रसूनानि एतस्या दोषाभावो गुणो मुक्तानुगतिश्चेति धर्मत्रयेण भगवन्तं परामृशत् परितो धृतवती आलिङ्गितवतीत्यर्थः तस्याः दोषमात्रं दृष्ट्वाभगवान् रोदितीति तस्या विवेकभ्रंशलक्षणमपराधं च कृतवान् यशोदाबुद्ध्या तु भाण्डभेदनमपराधः अत्यन्तमौढ्यदोषनिवृत्त्यर्थं च ज्ञानशक्तेर्यर्थमाणमपि करोति ज्ञानशक्तिस्तु भगवत्कृत्यैव सोज्वला भवति "यथा यथात्मा परिमृज्यते' इति वाक्यात् यशोदायाः निरोधः सर्वथा व्यर्थो मा भवत्विति स्वकार्यं तदभावश्च दृष्ट्वा भयेन विह्वले ईचणे यस्य सोपाधिकं निरुपाधिकञ्च ज्ञानं तस्या गमिष्यत इति विह्वलता ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुत्रभीषणार्थमात्तयष्टिं भीतवदिति साहजिकमातृस्नेहभरज्ञानेन तत्त्वतोऽन्तर्भयाभावात् यद्वा भीतवदिति मतुबन्तं भययुक्तं यथा स्यात्तथाऽपससार दुद्रावेत्यर्थः । "भयभावनया स्थितस्य" इति कुन्त्युक्तेः । गोपी यशोदा योगः समाधिस्तद्युक्तं मनः तपस । ज्ञानेनेरितमपि प्रवेष्टुं ब्रह्मणि लीनीभवितुं क्षममपि यं नाप नायं सुखाप इत्यादौ स्पष्टीभावित्वात् ॥ ९ ॥

न च योगिदुष्प्रापं तमनुधावनेन मा न प्रापेति वाच्यमित्याह–अन्वञ्चेति । विस्रंसितात् केशबन्धात् च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा परा पृष्ठतोऽमृशत् तं धृतवती ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्ता यष्टिर्यया तां प्रसमीक्ष्य सत्वरः तत उलूखलाद्भुवः अवरुह्य भीतवत् अपससार पलायितवान् गोपी यशोदापि तमपसरन्तमन्वधावत् यं श्रीकृष्णं तपसा शास्त्रीयेणालोचनेन ईरितं तत्प्रवणीकृतमत एव क्षमं योग्यं योगिनां मनः प्रवेष्टुं न क्षमम् ॥ ९ ॥

कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥ ११ ॥
त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला ।
इयेष किल तं बद्धुं दाम्नाऽतद्वीर्यकोविदा ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जनन्यपि अन्वञ्चमाना अनुगच्छन्ती बृहत्योः श्रोण्योर्भरेण भारेणाक्रान्ता मन्थरा गतिर्यस्याः सा जवेन विस्रंसितात् केशबन्धनाच्च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा परामृशत् जग्राह ॥ १० ॥

भाषा टीका ।

श्रीकृष्ण छडी हाथ में लिये मैया कों आवती देखिकें बडी जलदी उलूखलसों नीचे उतर करके डरपे कीसीनाईं भाजिचले तब उन भगवान के पीछे गोपी यशोदा भाजती भई, कि—योगिजनों को तपसों शिक्षित मन जिनको नहीं पाय सक्यो ॥ ९ ॥

सुन्दर मध्य भाग जाको ऐसी यशोदा मैय्या कृष्ण के पीछे२ भाजी परञ्च चलायमान बडे नितम्बन के भार सों जल्दी भाज नहीं सकतीं तौ भी वेग सूं भाजिवेतें केशजुदे खुलगये चोटी में सूं पीछे२ फूल न्यारे बरसते जाते हे या तरियाँ जैसे तैसे कृष्णों कूं पकरि पायो ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अञ्जन्मषिणी अञ्जन्ती सर्वतः प्रसरन्ती मषी ययोस्ते आक्षिणी स्वपाणिना कषन्तं सम्मर्दयन्तं भिषयन्ती कृत्स्नध्वा-न्हसः भीषयन्ती भयमुत्पादयन्ती अवागुरदभर्त्सयत् ॥ ११ ॥
इयेष ऐच्छत् अतद्वीर्यकोविदा तत्प्रभावानभिज्ञा ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृतम् आगः येन तम् अतस्ताडनमाशङ्क्य तत्परिहारार्थं प्रकर्षेण रुदन्तम् अत एव अञ्जन्मषिणी अश्रुभिः प्रसरत् कज्जले अक्षिणी वाञ्छयमानमपि मातृहस्तेनाश्रुमार्जनमपराधादप्राप्य स्वस्यैव पाणिना कषन्तं सम्मर्दयन्तं बहुलाश्रुनिर्गमार्थं किंवा अस्रापसारणार्थं मार्जयन्तं किञ्चित् भयेन विह्वले ईक्षणे नेत्रे यस्य तं किंवा तथा रुदन्तम् उच्चैर्वीक्षमाणा अवलोकयन्त्यपि पुनस्ताडशाचिकर्माभ्याससङ्कोचनेन सुप्रकृततपोदानार्थं भिषयन्ती भाययन्ती भाययितुम् अवागुरत् अवागुरत 'गुरीउद्यमे' हे अशान्त दोषक्रान्त लुब्धप्रकृते वानरप्रिय गृहलुण्ठाक इतः प्रभृतिनवनीतादिकं किञ्चिन्न दास्ये बद्धा गृहान्तर्धास्ये यथा कुत्रापि गत्वा क्रीडितुं न शक्नोषि क्रीडनकानि सहचरबालकांश्च द्रष्टुमपि न शक्ष्यसीत्यादिवाक्येन तथा यष्ट्युत्थापनप्रायादिना ताडनोद्यममिव कृतवतीत्यर्थः न च ताडयामास उद्वीक्ष्यमाणेति सभयत्वेणा भयविह्वलेक्षणं यथा स्यात्तथा उच्चैरूर्ध्वमुखतया अवलोकयमाना इति तस्य कातर्यमुक्तम् अतो ऽवागुरदेव यद्वा भयेन विह्वले कम्पमाने हस्ते गृहीत्वा क्षणमवागुरत् अन्यत्समानम् ॥ ११ ॥

यतो ऽर्भकमात्रे वत्सला किमुत स्वार्भके तस्मिन् इत्यर्थः। अतो ऽतद्वीर्यकोविदा तत्प्रभावानुसन्धानरहिता स्नेहभराक्रान्तचित्तत्वेनान्यास्पूर्तेः यद्वा तद्वीर्यकोविदा तच्चापलभरतुर्वारताद्यभिज्ञा अतस्तं—बद्धुमेवैच्छत् किल प्रसिद्धौ निश्चये वा ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पस्पर्शं अञ्जन्मषिणी अञ्जितकज्जले अवागुरत् उद्यतहस्त अभूत् ॥ ११ ॥
अतद्वीर्यकोविदेति पदम् ॥ १२ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तं हस्ते गृहीत्वा भीषयन्ती भयं प्रापयन्ती अवागुरत्ताडयितुमुद्यतहस्ताऽभूत् कथम्भूतं कृतमागोऽपराधो येन तमञ्जन्ती सर्वतः प्रसरन्ती मषिः कज्जलं ययोस्ते अक्षिणी स्वपाणिना कषन्तं मर्दयन्तं भयेन विह्वले चकिते ईक्षणे यस्य तम् ॥ ११ ॥

तं तदा अवगुरन्त्यपि सा सुतं भीतं विज्ञायार्भकवत्सला अत एव यष्टिं त्यक्त्वा तत्प्रभावानभिज्ञा दाम्ना रज्ज्वा तं बद्धुमियेषैच्छत् खलु ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अञ्जन्मषिणी अञ्जिता मषिः अञ्जनं ययोस्ते अञ्जन्मषिणी अक्षिणी नेत्रे कषन्तं निष्पीड्य कलुषयन्तं भीषयन्ती अवागुरत् ताडनार्थं हस्तमुद्धृतवती ॥ ११ ॥
दाम्ना वत्सपाशेन अतद्वीर्यकोविदा कृष्णमाहात्म्यमजानती ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भीषयन्ती भाययितुमित्यर्थः । अवागुरत् अवागुरत भर्त्सनादिना ताडनोद्यममिव कृतवती ॥ ११ ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं परमकृपालुं गृहीत्वा यत् कृतवती तदाह— कृतागसमिति । कृतम् आगः अपराधो येन कोऽयमपराध इत्याकाङ्क्षायामाह—तमिति । व्यामोहकं यशोदाबुद्धौ तु भाण्डभेत्तारं यद्यपि स्वयमीश्वरः न कोऽप्यपराधो भवति तथाप्येषा व्यामोहिकां लीला तामस्यन्तं व्यामोहितवान् यथाऽग्रे उत्तरलीलासु प्रतिबन्धिका न भवति. अन्यथा अत्यन्तमासक्ता अग्रिमकार्ये प्रतिबन्धिकैव स्यात् तद्वासुराणां व्यामोहाय सतामपि च कुत्रचित् "सा मां विमोहयति भीरपि यद्बिभेति" इति वाक्यात् निदानाज्ञानाच्च मोहः लोकदृष्ट्या मारयिष्यतीति प्रकर्षेण रोदनम् इदमपि द्वितीयं व्यामोहकम् अक्षिणी कषन्तमिति बालभावाद्दाढ्यकरणं पूर्वकृतमोहस्य दाढ्यार्थम् अञ्जनं शोभार्थं तथैव कृतम् अञ्जनसाधनीभूतमप्युक्ते अक्षिणी स्वपाणिनेति पर्यायेण एकेनैव पाणिना भगवदीयक्रिययैव भक्तिरूपया नयनमुज्वलं भवतीति. कषन्तमिति तत्रस्था कणाङ्करपि नाशिता तेन रजोगुणोऽपि शामितः मारणसाधनीभूतः अत एव तिष्ठन्नपि भगवान् तादृशचेष्टया स्थितः तां न दृष्टवान् सैव पुनस्तमुद्वीक्षमाणा ऊर्द्ध्वं विलोकयन्ती न तु पार्श्वे तथा सति भक्तिर्वा भवेत् भगवांस्तु परितः स्थिता गोपीः पश्यति तासामपि दोषारोपाभावार्थं भयम् अन्तः स्थितोऽप्ययं भावः मोहनार्थमेव प्रकटितः । एवं त्रिभिर्द्धर्मैः सा मोहिता नातः परमुत्थास्यति अत एवाग्रे ऽस्याः कापि स्नेहकला न निरूपिता श्रृण्वन्त्यश्रूण्यवाक्षात्क्षीदिति गुणानां माहात्म्यं "जनन्युपहृतं प्राश्य तत्कथाभवयोत्सुके" इत्यादि तु रोहिणीसद्भावात् तस्या अपि भावोऽस्यां सङ्क्रान्त उक्तः नन्दस्यैव मुख्यत्वात् एतादृशी भगवतः सर्वाङ्गसम्बन्धं परित्यज्य हस्ते गृहीत्वा भिषयन्ती भाययन्ती अवागुरत् आगूरणसङ्कल्पं कृतवती यथा पामरा अनिष्टागूरणानि कुर्वन्ति अनेन तस्या अनृतवादित्वमपि निरूपितम् ॥ ११ ॥

ततः किं कृतवती ? इत्याकाङ्क्षायामाह—त्यक्त्वा यष्टिमिति । अनेन पूर्वं यष्टिरानीतेति लक्ष्यते तेन मनोदुष्टा मनःसङ्कल्पं च त्यक्तवती तेन मनोदोषस्य गतत्वात् चिकित्स्यत्रिदोषा जातेति निरूपयति—यष्टिं त्यक्त्वा सुतं च भीतं विज्ञाय भगवद्धर्मानपि ज्ञात्वा अर्भकवत्सला जाता तथापि तस्या न सर्वात्मना दोषनिवृत्तिरित्याह—इयेषेति । निरूपकस्यापि दोषो भवतीति शुको भीतः सन्नाह—किलेति । प्रसिद्धिरेषा नत्वकर्माभिस्तथा इदं नापि भावितं कदाचिदपि दाम्ना बद्धुमियेषेति अन्तःकरणशरीरपरिकरदोषा निरूपिताः नन्वसाध्ये कथं प्रवृत्ता ? लोके अनिष्टेऽपि प्रवर्तमानः असाध्ये न प्रवर्तत इति तत्राह—अतद्वीर्यकोविदेति । तस्य भगवतो वीर्यं न जानातीति पूतनातृणावर्तादयो मारिताः कोऽस्या मारणे प्रयास इति ॥ १२ ॥

---



### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

योगिदुष्प्रापं तं न केवलं धृतवत्येव किन्तु ब्रह्मरुद्रादिभिरनिशं स्तूयमानं तमभर्त्सयदपि महाकालयमादीनामपि भयहेतुं तं यष्टिमात्रेणाप्यभाययदपीत्याह—कृतागसमिति । अञ्जन्मषिणी अञ्जन्ती सर्वतः प्रसरन्ती मषी ययोस्ते अक्षिणी स्वपाणिना स्ववामपाणिपृष्ठेनैव सम्मर्दयन्तं दक्षिणपाणेर्मातृगृहीतत्वात् भिषयन्ती यष्ट्या भाययन्ती हृत्सुगाढाणी यद्वा भीषयमाणा तदा हृत्परस्मैपदे आर्षे अवागुरत भो अशान्तप्रकृते ! वानरबन्धो ! मन्थनीस्फोटक ! अद्य नवनीतादिकं कुतः प्राप्स्यसि तथा बध्नाम्यद्य यथा सहचरबालकैः सह खेलितुं नवनीतमपहर्तुं च न प्रभविष्यसि इदानीं यष्टिताडनात् किं बिभेषीति तर्जयन्ती यष्ट्युत्थानेन ताडनोद्यमं चकार नतु ततार "गुरी उद्यमे" ॥ ११ ॥

मातर्मा मा ताडयेत्युक्ते "ताडने यदि तवातिशया भीस्तत् किमद्य दधिभाण्डमभाङ्क्षीः । मातरेवमथ नैव करिष्ये पातय स्वकरतो बत यष्टिम"इति पुत्रोक्तिकातर्यविक्लवमना हन्त कदाचिदयं मन्युना वनं प्रविशेदिति शङ्कया तन्निरोधार्थमुपायं निश्चिकायेत्याह—त्यक्त्वेति । तद्वीर्यस्य सर्वव्यापकत्वलक्षणस्य तदैश्वर्यस्य न कोविदा शुद्धतन्माधुर्यैकनिमग्नत्वादिति भावः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृतागसं कृतापराधम् अञ्जन्ती प्रसरन्ती मषी ययोस्ते अञ्जन्मषिणी अक्षिणी स्वपाणिना कषन्तं मर्दयन्तं हस्ते गृहीत्वा भिषयन्ती अवागुरद्भर्त्सयत् ॥ ११ ॥

अतद्वीर्यकोविदा उक्तप्रकारया भगवदिच्छयैव तत्प्रभावानभिज्ञा बद्धुमियेष ऐच्छत् ॥ १२ ॥

---

### भाषा टीका ।

तब तौ अपराध जिनने कियो ऐसे श्रीकृष्ण रोवते जाय हैं, और कजरारे नेत्रनकूं हाथन सो मीडते जाय हैं और बारम्बार ऊपर को यशोदा के मुख की ओर देखत जांय हैं, डर के मारे नेत्र चञ्चल होय रहे हैं, ऐसे श्रीकृष्ण को हाथ पकरि कैं मैया अपने पुत्र के हितके तांई डरपावत भई ॥ ११ ॥

अपने बालक पै लाड करन वारी यशोदा ने विचारी, कि- ये बहुत डरप जायगो तौ जाने कैसें होय, तब यशोदाजी छडी को फैंक कैं वाकूं रसरी सों बांधबे की इच्छा करत भई, काहे सों, कि—अपने बालक के प्रभाव कूं नहीं जानती ही ॥ १२ ॥

---

न चान्तर्न बहिर्यस्य न पूर्वं नापि चाऽपरम् ।
पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ॥ १३ ॥
तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अकोविदत्वमेवाह—नचान्तरिति पञ्चभिः । बन्धनं हि बहिःपरिवृतेन दाम्ना अन्तरावृतस्य भवति तथा च पूर्वापरविभागवतो वस्तुनः पूर्वतो दाम धृत्वा परितः परिवेष्टनेन भवति तत्सर्वं तद्रहितस्याह, न चान्तरिति । किञ्च व्यापकेन व्याप्यस्य बन्धो भवति तच्च विपरीतमित्याह, पूर्वापरमिति । किञ्च तद्व्यतिरिक्तस्य चाभावाच्च बन्ध इत्याह जगच्च य इति ॥ १३ ॥
तं मर्त्यलिङ्गमधोक्षजमात्मजं मत्वा बबन्धेति ॥ १४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो प्रेमबलं श्रीयशोदाया इत्याह—नचेति युग्मकेन । व्यापकत्वेन बहिर्नास्ति अनन्तत्वप्रतियोगितया प्रतीतमन्तरपि नास्ति एवं पूर्वापरे अपि जगच्च य इति कारणकार्याभेदे कार्यव्यतिरेकात् यदन्यत् जगदित्यर्थः । ततश्च तच्छक्त्यैव जगच्छक्तेस्तदंशांशभूतया रज्ज्वा कथं तद्बन्धः स्यात् न हि वाह्निर्बिन्दो बहेतुरिति भावः । सर्वत्रैव नञ् प्रयोगस्तत्तदभाववाद्व्याप्ति ज्ञात एव समुच्चये चकाराद्यपिशब्दश्च तमेव बबन्ध यत्तदोः सामानाधिकरण्याच्च स्वरूपान्तरमित्यर्थः ॥ १३ ॥
यथा प्राकृतं बालं तथैव च तर्हि कथं बबन्ध ? तत्राह—मर्त्यलिङ्गं दृश्यमानमनुष्यबालकाकारं तर्हि कथं न चान्तरित्यादि तत्राह—अधोक्षजम् इन्द्रियज्ञानातीतरूपम् अत एव "नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः । तामृते परमात्मानं कः पश्येदमितं प्रभुम्" इति नारायणाध्यात्मवचनात् न केनापि व्यज्यत इत्यव्यक्तं उभयथाप्यचिन्त्यस्वरूपतद्धर्ममित्यर्थः । श्रुतिश्च "अर्वाग्देवा अस्य विसर्जनेनाथ को वेद यत आबभूव" इत्याद्या तस्मात् "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्" इत्युपपत्त्युपदेशात् "श्रुतेस्तु शब्दमूलत्वात् (२।१।२७)" इति न्यायेन अस्थूलोऽनणुरमध्यमो अव्यापको हरिरित्यादि "अस्थूलश्चानणुश्चैव स्थूलोऽणुश्चैव सर्वतः । अवर्णः सर्वतः प्रोक्तः श्यामो रक्तान्तलोचनः ॥ ऐश्वर्ययोगाद्भगवान् विरुद्धार्थोऽभिधीयते" इति श्रीमध्वाचार्यदर्शितश्रुतिपुराणप्रामाण्येन तथैव "तुरीयमतुरीयमात्मानमनात्मानमुग्रमनुग्रं वीरमवीरं महान्तममहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखम्" इति श्रीनृसिंहतापनीश्रुतेः "मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्" इति साक्षाच्छ्रीस्वयंभगवदुपदेशेन प्रत्येकाचिन्त्यविरुद्धाविरुद्धानन्तशक्तिमयत्वात् घटत एव युगपत् तत् द्वयमपीत्यर्थः अतः श्रीमत्या मात्रैव निजाङ्कप्रविष्टस्यापि तस्य मुखान्तर्निखिलं दृष्टं सर्वरज्जुभिरपि द्व्यङ्गुलमात्रं न पूर्यत इत्यपरमिति च अतः स्वाभिकाचिन्त्यशक्तित्वात् मायाकल्पना च परास्ता कल्पनापांल्लघुः कल्पनपरिग्रह इति न्यायात् व्यर्थत्वाच्च तर्हि कथं तां स्फुरत्तत्त्वां नास्फुरत् ? तत्राह—आत्मजं मत्वा वात्सल्यरसपूर्णमनस्तदंशाच्छादनादित्यर्थः । तच्च बन्धनमुदरे ज्ञेयं दामोदरत्वेन प्रसिद्धत्वादत्र नोक्तं । श्रीहरिवंशे तूक्तं "दाम्ना चैवोदरे बद्ध्वा प्रत्यबन्धदुलूखले" इति, तच्च तु स्वाभाव्यधर्मेण वस्तुतो बन्धनं तु भगवद्गमनशङ्कयैव कृतम् उलूखलं पुरोद्वारःप्रत्यन्तरपातितमन्यदेव द्वाराग्राग्नरक्षणार्थमाचितचैत्यतरुयुगलसमीपगतत्वात् चैत्यत्वं वक्ष्यते ॥ १४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न चान्तरिति बन्धनस्य परितो वेष्टनरूपत्वात् तदशक्यतया परिच्छिन्नत्वमुक्तम् ॥ १३—१७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, किं तद्वार्थं यदनभिज्ञानात् बद्धुमियेष इत्यतस्तदाह यत् तदनभिज्ञा प्राकृतमिव बबन्धेत्याह—नेति द्वाभ्याम् बन्धो हि बहिरेव सम्बधीतेन दाम्नाऽन्तरागृहीतस्य भवति तथा पूर्वपरविभागवतो वस्तुनः पूर्वं दामतो धृत्वा परितः परिवेष्टनेन तत्तदस्तीत्याह—न चान्तरिति । किञ्च व्यापकेन व्याप्यस्य बन्धो भवेत् तच्च विपरीतमित्याह—पूर्वापरमिति । यो जगतः कृत्स्नस्य पूर्वापराभ्यामेव परमुत्तराभ्यामेव बहिश्चान्तश्च व्याप्य वर्तते तस्य जगदन्तर्भूतेन व्याप्येन दाम्ना कथं बन्धनं भवेदित्यभिप्रायः किञ्च सर्वस्य तत्कारणकतया तदन्तरात्मकत्वेन तच्छरीरकतया च तत्पृथक्सिद्धवस्त्वन्तराभावात्स्वनिष्ठवस्तुसाधनकं बन्धनं न संभवतीत्यभिप्रायेणाह—जगच्च य इति । कार्यकारणयोः शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यम् ॥ १३ ॥
मर्त्यस्येव लिङ्गं शरीरं यस्य तमुक्तविधमधोक्षजं मत्वा देवकीसुतमात्मजं मत्वा गोपी दाम्ना साधनेन उलूखले बबन्ध बन्धनं धर्मं चकार प्राकृतं केवलमर्त्यं यथा तद्वत् ॥ १४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यशोदाया अज्ञानं प्रकटयितुं तत्स्वरूपं निरूपयति—न चेति यस्यान्तः स्वतन्त्रमवस्तु नैवास्ति यस्य बहिश्च वस्तु नास्ति सर्वत्र सर्वदा नान्तर्बाह्यविशेषाभावात् यस्मात्पूर्वमपरं नास्त्येव अविनाशित्वेन सिद्धत्वात् यः कृष्णः जगतः पूर्वमपरं बहिरन्तश्च वर्तते

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शेषः । जगतां विनाशित्वात्परिच्छिन्नत्वाच्च यश्च जगन्मयः तत्सत्ताया अपि तदधीनत्वेन तत्त्वव्यपदेशः ॥ १३ ॥

तदव्यक्तं ब्रह्मसंज्ञं कृष्णाख्यमर्भकमनुतर्याल्लं मत्वा "तदव्यक्तमाह हि" ( ३ । २ । २२ ) इति सूत्रं मर्त्यलिङ्गं मनुष्यलक्षणशरीरं अक्षजमिन्द्रियजं ज्ञानं तदधः कृतं यस्मात्स तथा इन्द्रियागोचरमित्यर्थः । अनेनाव्यक्तपदं विवृतमिति ज्ञातव्यम् ॥ १४ ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न चान्तरिति किञ्च ॥ १३ ॥

इदन्तूलूखलं पुरोद्वाराभ्यन्तरप्राङ्गणपतितमन्यदेव ज्ञेयं चैत्ययुगलस्य तस्य पुरोद्वाराप्रस्थत्वात् चैत्यत्वञ्च "यौ तावर्जुनवृक्षौ तु व्रजे सत्योपयाचनौ" इति हरिवंशात् ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शुकोऽपि तां दूषयन्निव बन्धाभावे परमार्थतो युक्तिं प्रदर्शयति—न चान्तरिति । भगवति बन्धाभावः द्वेधापि भवति भगवत्स्वरूपविचारेण बन्धनसाधनस्वरूपविचारेण च तत्रादौ स्वरूपं विचारयति—बन्धनं हि कार्यद्वयं सम्पादयति बहिर्निरोधमन्तस्तापं च तत्तस्यैव भवति यस्यान्तर्बहिर्भावो भवति भगवांस्तु पूर्णः सर्वं व्याप्य तिष्ठतीति न कस्मादपि भगवानन्तर्भवति निरवयवत्वाच्च न कोऽपि तस्य परिच्छेदकः चकारात् अन्तः शब्दव्यवहार्यं आकाशः अतः सशब्दोऽपि भगवति न प्रवर्तत इत्युक्तम् अन्तर्यामिब्राह्मणे सर्वान्तरो भगवानुक्तः न तु भगवतः 'अन्तरं क्वचित् सर्वान्तरः केनान्तर्भावमापद्येत आधारत्वे तु नान्तरभावना रूपादिषु तथोपलब्धेः न हि फलस्यान्तः स्वरूपं तिष्ठति बीजवत् तथा सत्यदृश्यः स्यात् अतो न केनाप्यंशेन भगवतोऽन्तरमस्ति नापि बहिः व्यापकत्वात् बहिः स्थित एवाकाशोऽन्तस्तिष्ठतीति नाकाशाद्बहिरस्ति किञ्चित् अतोऽन्तःकरणे खेदो बहिरावरणं वा नास्तीत्युक्तम् किञ्च बन्धनं हि वेष्टनात्मकं तद्द्विविभागे सति भवति निरवयवस्याविरूपस्य स्वत एव भासमानस्य ज्ञातृज्ञेयभावतिरोधायकस्य केनाप्यंशेन पूर्वभागोऽपरभागो वा न सम्भवति अनेनैव दक्षिणोत्तरभावा अपि परिहृताः सर्वत्र स्थितः पूर्वापरभावेनैव गम्यते अतः स्वरूपकृता वा दिक्कृता वा अन्तरादिधर्मा भगवति न सन्तीति न बन्धसम्भावना साधनस्वरूपविचारेणापि न भवतीत्याह—पूर्वापरमिति । रज्ज्वादीनां पूर्वभागे परभागे चाग्रमेव वर्तते तत्र यशोदैव प्रमाणं भगवति सर्वं दृष्टवती यतः सर्वस्यापि भगवान् बहिरपि भवति व्यापकत्वात् अन्तरपि भवति सर्वान्तरत्वात् चकारात्स्वरूपमपि । किञ्च जगतां न एतावान् यतो जायते गच्छति चेति जगत् यदि भगवानेव न स्यात् कथं जगद्भवेत् पूर्वभावाभावं न भवेत् परभावाभावे न गच्छेत् जगतश्चेद्भगवान् बहिर्न भवेत् जगति गच्छति गच्छेत् यदि सर्वान्तरो न भवेत् जगदिति । यदीदं

सर्वप्रतीतिसिद्धं न भवेत् अतः स्थितिगतिधर्मैरेव जगतो निर्वर्तितधर्मत्वात् । किञ्च यो जगत् न हि स्वात्मना स्वयं बद्धो भवति तथात्वात् बन्धकानां वैयर्थ्यापत्तेः ॥ १३ ॥

किञ्च जगन्नाथं सर्वमेव जगद्व्याप्य तिष्ठतीति एतत्तात्पर्येण जगत्कार्यं करोति ततः कथमयं स्वबन्धेन जगत्प्रस्थेत् ? अतो न केनापि प्रकारेण भगवतो बन्धनमर्हतीति निश्चित्य भक्ताः नाहं वा योऽन्यथा विचारयति स निष्फलप्रयासो भवतीति तां दूषयन्निव तस्या अज्ञानमाह—तमिति । तं पुत्रपुत्रकाल्पनम आत्मजं स्वशरीरजातं मत्वा दाम्ना बबन्धेति सम्बन्धः देहस्तु प्राकृतः तस्या इति तदज्ञानः सुतरां प्राकृतो भवति । ननु, कश्चिन्महात्मापि पुत्रो जायते देवादयोऽपि ततो लोके कारणैर्लक्षणैरपि दृष्टेनात्मत्वमाश्रज्य तथा कर्तुं शक्यत इति चेत्तत्राह—अव्यक्तमिति । न केनापि अंशेन व्यक्तं ये हि महात्मानो भवन्ति ते स्वधर्मान् प्रकटीकुर्वन्ति यथा भरतादयः भगवांस्तु तथा न करोतीति प्राकृतबुद्धिस्तस्यां दृढा मनुष्यानवधानामेव तथा करणं न तु परमकाष्ठां गतस्य । किञ्च यदि गुप्त एव सन् तूष्णीं तिष्ठेत् तथापि सन्देहः स्यात् अन्यताक्षेपेन वा माहात्म्यं जानीयुः प्रत्युत भगवान् विपरीतधर्मान् बाधयति अतः कथं प्रतीतिरित्याह—मर्त्यलिङ्गमिति । मर्त्यस्यात्मप्राकृतस्य लिङ्गानि यस्मिन् इति तथैव स्वरूपं गुणान् चेष्टां च प्रदर्शयतीत्यर्थः । ननु, तथापि अत्यन्ताभिज्ञा यथा नष्टं परिचिन्वन्ति तथा सर्वावधानलक्षणानन्तगुणानन्दात् आनन्दमयत्वाच्च कथं न ज्ञायते ? इत्याशङ्क्याह—अधोक्षजमिति । अधः अक्षजं ज्ञानं यस्मादिति न हि भगवान् गुणा वा कस्यचिदपि चक्षुर्गोचरा भवन्ति इच्छा तु नास्तीत्यवगम्यते विरुद्धप्रदर्शनात् । किञ्च इयञ्च यशोदा गोपिका अतिप्राकृतरूपा अतोऽनभिज्ञा कथं जानीयात् ? उलूखलोपरि पादं दत्त्वा भगवान् क्रीडति अपेक्ष्य नाभिमन्यति अतो भगवान् गोकुलस्थितमूलूखलं स्वाश्रयत्वेन ज्ञापयितुमत्र बन्धनं कारितवान् गोपिकायास्तु बुद्धिर्यथान्यत्र न गच्छतीति दाम पशूनां बन्धकम् ननूलूखलदामहस्ताभिप्रितदेवानां कथं तूष्णीं भावः ? तत्राह—प्राकृतं यथेति । तेषामपि बुद्धिर्भगवता तथा सम्पादितेति अयं देहाकारेण भासमान एव भगवान् सच्चिदानन्दरूप इति ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मादिस्तम्बपर्यन्तं स्वमायागुणैर्निबध्नन्तमपि सर्वव्यापकमपि महामहेश्वरं तं स्वप्रेमबलादेव पट्टमयदाम्ना बबन्धापीत्याह—न चान्तरिति द्वाभ्याम् । बन्धनं हि बहिःपरीतेन दाम्ना आवृतस्य परिच्छिन्नस्य वस्तुनः सम्भवति यस्य तु विभुत्वाद्बहिर्न विद्यते तत्प्रतियोगित्वादन्तश्च न विद्यते तत्र क वा दाम्ना स्थातव्यं किं वा तेनावरीतव्यमिति भावः । सर्वदेशव्यापकत्वमुक्त्वा प्रसङ्गात् सर्वकालव्यापकत्वमाह—न पूर्वं नापि चापरमिति । यस्मात् प्राक् पश्चात् कालो न स्त इत्यर्थः । किञ्च व्यापकेन व्याप्यस्य बन्धो भवति तच्चात्र विपरीतमित्याह—पूर्वापरमिति जगच्च यः इति तच्छक्तिकार्यत्वादित्यर्थः । ततश्च

तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः ।
द्व्यङ्गुलोनमभूत्तेन सन्दधेऽन्यच्च गोपिका ॥ १५ ॥
यदासीत्तदपि न्यूनं तेनान्यदपि सन्दधे ।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सम्पूर्णेन जगतापि तद्बन्धो न सम्भवेत् किं पुनर्जगदंशांशभूतेन दाम्नेत्यर्थः । न च साकारत्वेन तस्य विभुत्वं सम्भवेदिति वाच्यं साकारस्यैव तस्योदरे सर्वजगत इदन्तास्पदस्य यशोदया दृष्टत्वात् तर्हि सा कथं बबन्ध ? तत्राह—तम् आत्मजं मत्वा असाधारणवात्सल्यप्रेमविषयीकृत्वेत्यर्थः। तस्य प्रेमाधीनत्वाद्विभुत्वेऽप्यचिन्त्यशक्त्यैव बन्धनमिति भावः। अव्यक्तं प्रेमवश्यत्वादेव प्रच्छन्नीभूतमहैश्वर्यं मर्त्यलिङ्गं मनुष्याकारं तदप्यधोक्षजमतीन्द्रियं यथा प्राकृतं बध्नाति तथैव चित्पुञ्जमपि तं बबन्धेत्यहो प्रेमबलं तस्या इति भावः ॥ १३ ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरिः पलायनपरत्वात् स्वबन्धनं नैच्छत् यशोदा तु तं बद्धुमैच्छत् तत्र कस्य जयः ? कस्य पराजयः ? इत्याकाङ्क्षायां यशोदाजयं दर्शयन् अपरिमितोऽपि भक्तवात्सल्येन परिमित इत्यचिन्त्याद्भुतस्वाभाविकशक्तिमत्त्वं भगवतो दर्शयति–नचान्तरिति षड्भिः । यो जगच्च कार्यकारणयोर्भेदाभेदसम्बन्धात् ॥ १३ ॥

उक्तप्रकारेणामर्त्योऽपि मर्त्यलोके जाता सती मर्त्यलिङ्गं मनुष्यस्वभावं भगवदनभिज्ञतालक्षणमाश्रित्य अधोक्षजमुक्तप्रकारेणाधोक्षजेच्छयैवात्मजं मत्वा प्राकृतवदप्राकृतशरीरं बबन्धेत्यन्वयः ॥ १४ ॥

---

भाषा टीका।

शुकदेवजी कहे हैं, कि—जाको भीतरलो भाग और भीतरलो भाग नहीं और जाको आगो पीछो समय नहीं और जो जगत के पहिले पीछे बाहर भीतर वर्तमान है, और आप स्वयं जगत है ऐसो जो पुरुष है ॥ १३ ॥

वा अव्यक्त अधोक्षज मनुजरूपधारी परमात्मा कूं गोपी यशोदा अपनो बेटा मानिके रसरीसों उलूखल में बान्धत भई जैसे कोई साधारण मनुष्य के बालक कूं बांधवे लगे ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्व्यङ्गुलोनं द्वाभ्यामङ्गुलाभ्यामूनमपूर्णम् ॥ १५ ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वशब्देन कृतागस इत्यनेन च बन्धनयोग्यतोक्ता शिशु
परवालकवदुपेक्षानौचित्यात् द्व्यङ्गुलोनमिति प्रथमाया रज्ज्वा
द्व्यङ्गुलोनत्वात् उत्तरासां च तस्य बाल्योचितहठवत्त्वाद्
तत्र दर्शितानुभावया तद्विभुताशक्त्या तथैव रक्ष
किञ्च स्थितेपि प्रेमणि वैयग्र्यविक्षिप्तज्ञातत
विशेषाभ्यां द्वाभ्यामूनत्वेन तद्वशीकरणं न स्यात
एव "दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्वबन्धने" इति वक्ष्य
इति दैवी सूचना अन्यदामसन्धानं च मातापुत्रयोर्मत्सरं
श्रुत्वा आगताभिः प्रतिवेशिगोपीभिः परिहासेन तदर्पणात् ॥ १
यदित्यस्य अन्यदित्यनेन पूर्वेणान्वयः । यद्यस्मादिति वा
अनेनेति बन्धनं दाम यद्यदादत्त बन्धनं तत्सर्वमपि द्व्यङ्गुलन्यूनम
पूर्वेणैवान्वयः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कृतागसोऽत एव बध्यमानस्य सतः तद्बन्धनार्थमुप
दाम द्व्यङ्गुलोनमभूत् द्वाभ्यामङ्गुलिभ्यामपूर्णमभवत् तेन द्व्यङ्
गुलोनेन दाम्ना सहान्यद्दामान्तरं सन्दधे ॥ १५ ॥

यत्संहितं दाम तदपि न्यूनमभवदित्येवं यद्यदादत्त सन्धा
जग्राह तत्सर्वं न्यूनमेवाभूत ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनेनापि कृष्णस्य ब्रह्मत्वं निश्चयितुं शक्यमित्याशयेनाह—
तद्दामेति । येन बबन्ध तद्दाम द्व्यङ्गुलोनमभूदित्यन्वयः । गोपिका
यदा तेन द्व्यङ्गुलोऽनेनान्यद्दाम सन्दधे तदपि न्यूनमासी
दिति ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यदन्यत् सन्दधे तदपि द्व्यङ्गुलं नूनमासीदित्यन्वयः । यदि
प्रथमाया रज्ज्वा दैवात् द्व्यङ्गुलोनत्वं जातं ततश्च तस्य बाल्यो
चितहठवत्तां दृष्ट्वा तद्विभुत्वशक्तिकृतत्वात्मानं प्रकाशितवती
सर्वस्या एव द्व्यङ्गुलोनत्वं जातम् ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गुणोपसंहारन्यायेन न चान्तर्न बहिरित्यादिधर्माः अस्यैवे

एवं स्वगेहदामानि यशोदा सन्दधत्यपि ।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताऽभवत् ॥ १७ ॥
[(१)]स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयाऽऽसीत्स्ववन्धने ॥ १८ ॥
एवं सन्दर्शिता ह्यङ्ग ! हरिणा भृत्यवश्यता ।
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ज्ञापयितुं बन्धनेऽप्युपायं वदन् भगवान् सामिवद्धो जात इत्याह तद्दामेति । भगवता स्वस्मिन् दोषद्वयं प्रदर्शितं तत्पुत्रत्वम् अपराधश्च तदा रज्जुः अन्तर्बहिः स्थितं भगवन्तं तिरोहितं मत्वा वेष्टनं कृतवती स्वयं बहिः स्थिता अन्तः स्थितस्य भगवतः तदाह—तद्दाम बध्यमानस्य स्वार्भकस्य कृतागस इति । अन्यथा बहिरपि रज्जुर्न भवेत् वेष्टकमपि न भवेत् तथापि परितो वेष्टनरूपा न जाता पूर्वापरयोर्भगवत एव सत्त्वात् अतो द्व्यङ्गुलं न्यूना जाता लोके परिमाणे प्रथमपरिमाणमङ्गुलिस्तत्र प्रथमातिक्रमकारणाभावात् अल्पवैलक्षण्ये महतो योजनायामाश्चर्यमपि भवतीति द्व्यङ्गुलोनमेवाभूत् रज्ज्वाद्यन्तयोर्भगवान् स एवायं क्रोडीकृतः न तु ततः केनापि धर्मेण भिन्न इति ज्ञापयितुमेवमाह—व्यापकत्वस्य दर्शनार्थमेव तिरोभावात् रज्जुस्थूलतायामपि नोदरस्थौल्यं प्रतिबिम्बादौ तथोपलब्धेः अतो वैलक्षण्याज्ञानात् ते नान्यदपि दाम तावत्प्रमाणकं सन्दधे योजितवती चकाराद्भिसहस्रमपि ततोऽपि स्थूलम् । ननु, अङ्गुलद्वये न्यूने किमित्येतावद्योजितवती ? तत्राह—गोपिकेति । मौढ्यं तस्या अनुवर्तत इति ॥ १५ ॥

ततः किमभूदित्याशङ्कायामाह—यदासीदिति । उभयोः सम्बन्धे पुनः सा एकैव रज्जुर्जाता तदाह—यदासीदिति । उभयोः सम्बन्धे यदेकमासीदित्यर्थः । तदपि पूर्वोक्तन्यायेनैव न्यूनमासीत् द्व्यङ्गुलं तेनापि विशिष्टेन पुनरन्यत् सन्दधे तत्तृतीयं तदपि द्व्यङ्गुलमेव न्यूनं त्रिसत्या हि देवा इति भगवतो जगदाद्यन्तः स्थितिवारत्रयं प्रदर्शिता मानुषभावं ततोऽपि बहुवारं कृतवतीत्यनुवदति, यद्यदादत्तबन्धनमिति । यद्यदेव योजनार्थं गृहीतवती तत्तदेव द्व्यङ्गुलोनमभूत् सर्वा एव गोप्यः अङ्गणमध्ये तथाकरणात् द्रष्टुमागताः ता अद्यापि तथा न निरुद्धा इति तदा स्मयन्त्यो जाताः गर्विष्ठाः हसन्मुखा वा स्वस्यापि भुजबन्धनादिकं भावयिष्यन्त्यः सुस्मयन्त्यो जाताः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्मा सम्भविष्यत्यपि तस्य बन्धने प्रथमं तदाकारस्य मातृक्रोडपरिच्छिन्नस्यापि विभुत्वमाह त्रिभिः—तद्दामेति । सहचरैः सह खेलनं परगृहेषु दधिचौर्यं चावश्यकं मात्यहिकं कथं चिकीर्षोर्मम बन्धनं मा भवत्विति तदिच्छायां जातायां मत्प्रभुं का बध्नीयादिति तदीयसत्यसङ्कल्पताशक्त्या प्रेरिता विभुताशक्तिः सहसैव तद्देहे प्रादुरभूदित्याह, द्व्यङ्गुलोनं द्वाभ्यामङ्गुलिभ्यामपूर्णं ततश्च तेन दाम्ना सह अन्यद्दाम सन्दधे ग्रन्थिं दत्त्वा जुगुम्फेत्यर्थः ॥ १५ ॥

बध्यतेऽनेनेति बन्धनं दाम ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत् अधोक्षजबन्धनार्थं गृहीतं दाम द्वाभ्यामङ्गुलाभ्यामूनमभूत् तेन दाम्ना सहान्यद्दामान्तरं सन्दधे ॥ १५ ॥

यदा तदपि न्यूनमासीत् तदा तेनान्यत्सन्दधे इत्यन्वयः ॥ १६ ॥

———

भाषा टीका ।

यशोदा खोट करनवारे अपने पुत्र कों जा रसरीसें बांधती ही बांधते समें वो रस्सी दो अंगुल ओछी भई तब यशोदा ने और दूसरी जोरी ॥ १५ ॥

और जो रसरी जोरीही सों भी जब ओछी परी तब और हूं जोरी, वो रसरी हू जब ओछी परी तब और भी जोरी, या तरियां यशोदाजी जो जो रसरी लेती गईं सोई २ दो अंगुल ओछी होत गईं ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्मितं कुर्वन्तीनां मध्ये स्वयमपि हसन्ती विस्मयमाप ॥ १७ ॥ १८ ॥

नचैवं स्वातन्त्र्यभङ्ग इत्याह—एवं सन्दर्शितेति । सेश्वरमिदं विश्वं यस्य वशे यदधीनमित्यर्थः ॥ १९ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुष्ठु स्मयन्तीनां स्मयमानानामपि गोपीनाम् अनादरे षष्ठी नातिनिर्बन्धेन सन्धीयमानेऽपि मुहुर्बन्धने रज्जुपर्यायैरपर्यवसिते परमाश्चर्येण यत्र तासां सुस्मितं तदप्यनादृत्येत्यर्थः । स्वगेहे यानि दामानि मन्थनेत्राणि तानि सर्वाण्यपि सन्दधती सती यद्वा

(१) स मातुरिति वीर०

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सन्दधती बन्धनाभिनिवेशेन सन्धानं कुर्वत्यप्यभवत् सप्तम्यर्थे षष्ठी गोपीषु स्मयन्तीषु सतीषु स्वयमपि स्मयन्ती विस्मिताप्यभवत् अतोऽस्मिन् दिने सपुत्रा श्रीरोहिण्यपि श्रीमदुपनन्दादिगृहे निमन्त्रितैव गतासीदिति गम्यते अन्यथा सा न्यवारयिष्यदिति ॥१७॥

सः स्वयं भगवान् कृष्णः सर्वचित्ताकर्षकलीलः स्वेति पाठे श्रीकृष्णस्यापि तस्यां स्नेहाधिक्यं बोधयति । अत एव कृपया मातुर्दुःखदर्शनाद्घनतया स्वबन्धने दुर्घटेप्यासीत् मातृशब्देन तद्वात्सल्यमेव मूलं कारणमित्युक्तं बालयस्वभावजातां हठवत्तां परित्यज्य घनायां कृपायां तद्विभुत्वशक्तेरज्जूः प्रति किञ्चिदौदासीन्येन छितयैव तया स्वयमेव बद्धो बभूव अन्यास्तूर्वरिता एवेत्यर्थः । परिश्रमश्च फलभरस्येव बलवतस्तस्य ग्रहणेन रज्जुसन्धानादिना च ॥ १८ ॥

ननु, पूर्णत्वं परमेश्वरत्वं च साधितं तथा बुभुक्षा तृष्ण्याभावः कोपश्चौर्य्यं भयं पलायनं बलाद्ग्रहणं रोदनं बन्धनं च वर्णितं तत्तदप्यन्तरत्वेन रहस्यत्वेन भवतामपि रसहेतुत्वेन तात्त्विकमेवाधिगम्यते ततः कथमिव तादृशे तत्त्वादिति उच्यते सत्यं तत्र गुणैः पूर्णत्वमीश्वरत्वं च वर्त्तते तथाऽपि भक्तानुग्रहस्त्ववश्यं मन्तव्यः यं विना न ते कस्यापि सुखकरा भवन्ति अकोमलहृदयत्वेनारोचमानत्वात् ततस्तेषां गुणत्वमपि हीयते जनसुखहेतवो धर्मा हि गुणाः स्वतश्च निर्दयतारूपो दोष एव न च तस्मिन् न सम्भवति साधारणत्वापातेनानैश्वर्यात् "अयमात्माऽपहतपाप्मा एष उ एव वामनीः वासानि वामानि सर्वाण्यभियन्ति" इति श्रुतेः। तस्मात् सर्वेषां गुणत्वसाधको दोषान्तरविरोधी च स एव मुख्यो गुणो मन्तव्यः यथैव षष्ठे पुंसवनव्रतप्रसङ्गे स एवादौ पठितः "यथा त्वं कृपया भूत्या तेजसा महिनौजसा। जुष्ट ईशगुणैः सर्वैस्ततोऽसि भगवान् प्रभुः" इति स च भक्त्यनुरूप एव स्यात्यः न्यूनत्वे दोषस्य तदवस्थत्वात् तत्र यदि सर्वतो भावेन निरुपाधितद्वशतामयी भक्तिः स्यात्तर्हि तस्यापि तद्वशत्वपर्य्यन्तता युक्ता न चैवमैश्वर्यं हीयते अन्यत्र जागरूकत्वात् यथा बद्धस्यापि वक्ष्यमाणयोर्नलकूवरमणिग्रीवयोः किञ्च प्रत्युत तेन गुणेन सर्वोत्कर्षणाद्गुणीभूयैवैश्वर्यवृद्धिः स्यात् अतो भक्तवश्यताप्यावश्यकता तथा च श्रीवैकुण्ठदेवेन स्वयमप्युक्तम् "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः" इत्यादि अत्र साधुभिरिति तद्ग्रस्तहृदयत्वे हेतुः साधुषु प्रोज्झितकैतवेषु ममापि निष्कैतवताया एव युक्तत्वादित्यर्थः। अतः सा च वशता तदनुकूलतान्तर्बहिरीहामय्येव स्यादिति तद्भावभावितयावत्यादिभावत्वादुक्तैव तस्यापि तत्तद्भाविताति अतस्तादृशस्यापि श्रीकृष्णस्य तादृशं भावं तात्त्विकमेव मत्वा विस्मयानन्दाभ्यां श्रीकुन्तिदेव्यपि मुमोह यथा तद्वाक्यं "गोप्याददे त्वयि कृतागसि दामतावद्या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम् । वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति" इति. तदेतदभिप्रेत्याह, एवमिति । एवमुक्तप्रकारेण दर्शिता तत्रापि सम्यक् अन्यत्र बन्धनपर्यन्तममता विलासास्पदत्वाभावात् अङ्गेति प्रेमसम्बोधने हि निश्चये हरिणेति तथा भक्तानां मनोहरणात् स्ववशेन स्वतन्त्रेणापि यतः कृष्णेन स्वयं भगवतेत्यर्थः । तदेवाभिव्यञ्जयति--यस्येति ॥ १९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वबन्धने कृपयाऽऽसीत् अनुगुणा आसीदित्यर्थः ॥ १८ ॥ १९ ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं स्वगृहस्थानि सर्वाणि दामानि सन्दधत्यपि सन्दधत्येव तु तथापि निवृत्तेत्यर्थः । तद्वीक्ष्य विस्मयन्तीनां गोपीनां मध्ये स्वयं विस्मिता बभूव ॥ १७ ॥

तदा स्विन्नं प्रस्वेदभरितं गात्रं यस्याः विस्रस्तं कबरं स्रजः यस्याः तस्याः स्वमातुः परिश्रमं दृष्ट्वा तस्यां कृपया स्वबन्धनेऽनुगुण आसीत् ॥ १८ ॥

नचैतावता स्वातन्त्र्यभङ्ग इत्याह–एवमिति । स्ववशेन स्वतन्त्रेणापि स्वनशत्वमेवाह यस्य वशेऽधीनतायां ब्रह्मादीश्वरसहितमिदं जगद्वर्त्तते तेन श्रीकृष्णेन हरिणैवमित्थम् अङ्ग हे राजन् भक्तवश्यता सन्दर्शिता सर्वत्र स्वतन्त्रोप्यहं भक्तेषु परतन्त्र इति दर्शयितुमवध्यतेत्यर्थः। तथा चाहुः श्रीवत्साङ्कमिश्राः "अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे" इति तथा भवतापि अष्टमे स्कन्धे उक्तम् "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज" इति ॥ १९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं स्वगेहसमस्तदामसञ्चयसमाप्तौ सुतमाहात्म्यं स्मयन्ती मन्दं हसन्ती विस्मिता भवदित्यन्वयः ॥ १७ ॥

अणिमा लघिमा योगशक्तिः स्वाभाविकी हरेरित्यभिप्रेत्याह स्वमातुरिति । मातृविषयकृपया स्वबन्धन आसीत् स्वयमेव बद्धोऽभूदित्यन्वयः ॥ १८—१९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यत्र स्थितेऽपि प्रेमणि भक्तवैयग्र्यविशेषतज्ज्ञानतत्कृपाविशेषाभ्यां द्वाभ्यामूनत्वेन तद्वशीकरणं न स्यादित्येषा दैवी सूचना वक्ष्यते च "दृष्ट्वा परिश्रमं कृष्णः कृपयासीत् स्वबन्धने" इति. अतः श्रीरोहिण्यादिश्रीमदुपनन्दादिगृहे निमन्त्रितैव गतासीदिति लभ्यते अन्यथा सा वात्सल्यादवारयिष्यदिति ॥ १८ ॥

एवमपि एतत्प्रकारेणैव सम्यग्दर्शिता न ऊर्द्धमस्तीति भावः ॥ १९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गृहस्थसर्वदामव्ययीकरणेपि न बन्धनं निवृत्तमित्याह-एवमिति । पूर्वोक्तन्यायेन सर्वाण्येव दामानि योजितवती यदा यशोदा यशो ददाति द्यति वा सन्दधत्यपि द्व्यङ्गुलन्यूनभावाद्विस्मिताऽभवदिति सम्बन्धः । यशोदागृह एव भगवता पुत्र

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

स्वमपराधश्च दर्शित इति तद्गृहदामान्येव अन्तर्बहिर्भगवत्तिरोभावात् सम्बद्धानि न तु गेहान्तरस्थितानि अन्यासां तु तद्धर्मप्रवृत्तिरेव नास्ति अन्तर्बहिस्तिरोधानाभावात् रज्जूनामानयनं यशोदाकर्तृकमेव न हि तादृश्या अन्यः सहायं कर्त्तुमर्हति पूर्वं तु वारद्वयत्रययोजनायां रोपे गते स्मयन्ती जाता ततोऽपि बहुवारयोजनायां विस्मिता चाभवत् आश्चर्यं प्राप्तवती ततो रज्जूनामन्वेषणार्थं निर्बन्धेन यत्नं कृतवती ॥ १७ ॥

ततः सामर्थ्याभावे गोपिकानां समक्षं परमलज्जां प्राप्य भग्नमानसङ्कल्पा मृतप्राया आसीत् तदा भगवान् परमकृपालुस्तादृशदुःखेऽपि सद्वुद्ध्याऽयुक्तमपि कृतवानित्याह—स्वमातुरिति । ततो भगवान् कृपया स्वबन्धने आसीदिति सम्बन्धः । तत्र कारणद्वयमाह—स्वमातुः खिन्नगात्रायाः विस्रस्तकबरस्रजः इति । मातुर्हि परितोषः कर्त्तव्यः "मातृदेवो भव" "दशभ्यो माता गरीयसी" इति वाक्यात् नापि तस्या अपत्यान्तरमस्ति यो ह्युपस्थितं दुःखं निवारयेत् यत इयं स्वस्यैव माता अतो मातृत्वं स्थापयित्वा तस्या दुःखमसहमानेन तथा कृतम् । किञ्च गोकुलवासिनां खेददूरीकरणार्थमागतो भगवान् स कथं खिन्नगात्रायाः सर्वाङ्गे जातखेदाया न परिश्रमं दूरीकुर्यात् ? किञ्च गोकुलवासिनां सर्वसौभाग्यदानार्थमागतः स कथं विस्रस्ताः कबरात् केशपाशात् स्रजो यस्यास्तादृशीं पश्येत् ? अनेन सर्वाभरणानामेव तिरोभावः सूचितः । एवमेतादृश्याः परिश्रमं दृष्ट्वा इतस्ततः पर्यटनं खेदः प्रस्वेदः मुखशोषो महती च ग्लानिरित्यादिः परिश्रमशब्दार्थः । तत्रापि भगवान् कृष्णः सदानन्दः अननुभूतदुःखो दुःखितानामसमक्षः परदुःखमपि न पश्यति तदपूर्वं यशोदादुःखं दृष्ट्वा कृपया व्याप्तः मात्रर्थं खिन्नगात्रार्थं स्नगभावार्थं च स्वस्यैव स्वयं बन्धकरूपगुणाङ्गुलत्रयभूतो जातः द्वाभ्यां पूरितमङ्गुलमात्रं च बन्धनं जातं तदा स्वस्यैव स्वयमेव बन्धने जाते आसीत् प्रकरणात् गृहीत इति अवक्तव्यत्वान्नोक्तम् ॥ १८ ॥

ननु, किमर्थं भगवानेतावत्कृतवा बन्धनरूपो जात इति चेत्तत्राह-एवमिति । एवमपकारिण्यां लोके स्वकीयत्वमात्राभिमानेनापि एतावतीमभूतपूर्वां कृपां करोतीति स्वस्य भक्तवश्यता प्रदर्शिता प्रदर्शनस्यापि प्रयोजनमाह—हरिणेति । स इह सर्वदुःखहर्ता तत्प्रसिद्ध्यर्थमसम्बन्धेन दुःखहर्तृत्वेऽतिप्रसङ्गात् संसार विषयः स्यादिति सम्बन्धार्थं कृपालुतां प्रदर्शयति—कृपा च सर्वधर्मधर्मिभ्यो बलिष्ठेति वक्तुं भक्तवश्यताशब्देनैवोक्ता ननु भक्त्या चेद्धर्मधर्मिणामुपमर्दः क्रियते तदा स्वरूपस्य प्रच्युतत्वात् फलाभावात् प्रदर्शनमपि व्यर्थं स्यादित्याशङ्क्याह-स्ववशेनापीति । स हि स्ववश एव न केनाप्युपमर्दः अनेन फलसाधकत्वमुक्तं फलरूपत्वमाह-कृष्णेनेति । नन्वेवं कृते अन्यो महान् वादिनं मंस्यते ततो माहात्म्यस्य न्यूनभावान्न तथा फलत्वमित्याशङ्क्याह-यस्येदं सेश्वरं वश इति । तत्तदधिष्ठातृदेवतासहितं सर्वं यस्य जगत् वशे अतो नान्यथाभावनं केनाचिदपि कर्त्तुं शक्यमिति भावः ॥ १९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गोपीनां गोपीषु प्रतिवेशपुरन्ध्रीषु स्मयमानासु सतीषु विस्मितेत्यहो मुष्टिपरिमितमस्योदरं शतहस्तपरिमितेन दाम्नापि न वेष्ट्यते तत्रोदरं तिलमात्रमपि न विपुलीभवति दामाप्यङ्गुलीमात्रमपि न न्यूनीभवति तदपि वेष्टनं न पूर्यत इत्येको विस्मयः प्रतिवारमेव वेष्टने द्व्यङ्गुलन्यूनतैव नतु त्र्यङ्गुलचतुरङ्गुलादिन्यूनतेति द्वितीयश्च विस्मयः ॥ १७ ॥

ततश्चाहो मणिमयानतिदीर्घकिङ्किणीवेष्टितावलग्नस्यास्य गृहस्थितसर्वदामभिरपि यद्बन्धनं न निष्पद्यते तदस्य शुभं यो बालकस्य ललाटपत्रे विधात्रा बन्धनं लिखितमित्यनुमीयते तदित उद्यमात् प्रियसखि यशोदे ! विरम्यतामिति पुरन्ध्रीजनप्रबोधितयापि यशोदयाद्य सन्ध्यापर्य्यन्तमप्येतद्ग्रामस्थैरपि दामभिर्ग्रथितैरेतदुदरस्यावधिरधिजिगमिषणीय इति प्रौढवाद्वत्या पुत्राभिगत्या परमेश्वरबन्धनोद्यमे ह्यपरित्यक्ते सति भक्तभगवतोर्मध्ये भक्तहठ एव तिष्ठेदित्यतो मातुः श्रममालक्ष्य मातृवत्सलो भगवानेव स्वहठं तत्याजेत्याह, स इति । स्वमातुरिति च पाठः कृपयेति सर्वशक्तिचक्रवर्त्तिनी परमभास्वती कृपाशक्तिरेव भगवच्चित्तं नवनीतमिव विद्रुतीकृत्य तत्र स्वयं प्रादुर्भूय पूर्वोद्भूते सत्यसङ्कल्पताविभुताशक्ती तत्र सहसैवान्तर्द्धापयामासेत्यर्थः । अत्र परिश्रममिति कृपयेत्येताभ्यां द्व्यङ्गुलन्यूनतासमाहिता भक्तनिष्ठाभजनोत्था भ्रान्तिस्तद्दर्शनोत्था स्वनिष्ठा कृपाचेति द्वाभ्यामेव भगवान् बद्धो भवेत् ते द्वे यावन्नाभूतां तावदेव द्व्यङ्गुलन्यूनता आसीत् तयोरुद्भूतयोस्तु बद्धोऽभूदिति प्रेम्णा स्वबन्धनप्रकारः स्वमातरि स्वयमुदाहृतो भगवतेति ज्ञेयम् ॥ १८ ॥

भगवतः परमपारमैश्वर्य्ये सत्यपि प्रेमवश्यता निबन्धनं बन्धनमिदं परमचमत्कारित्वाद्भूषणमेव नतु दूषणमित्याह—एवं हरिणा स्वस्य आत्मारामत्वेऽपि बुभुक्षया पूर्णकामत्वेऽप्यतृप्त्या शुद्धसत्त्वस्वरूपत्वेऽपि कोपेन स्वाराज्यलक्ष्मीवत्त्वेऽपि चौर्य्येण महाकालयमादिभयदत्वेऽपि भयपलायनाभ्यां मनोजवानत्वेऽपि मात्रा बलाद्ग्रहणेन आनन्दमयत्वेऽपि दुःखरोदनेन सर्वव्यापकत्वेऽपि बन्धनेन भक्तवश्यता स्वाभाविक्येव स्वस्य सम्यक् दर्शिता अज्ञान् प्रति दर्शनाय उपयोगाभावात् ब्रह्मभवसनत्कुमारादीन् विज्ञानमप्यतिचमत्कारं प्रापय्यानुभावितेनेति नेदमनुकरणमात्रत्वेन व्याख्येयं "दर्शयंस्तद्विदां लोके आत्मनो भक्तवश्यताम्"इत्यत्र तद्विदामिति प्रयोगादिति भावः । स्ववशेन स्वाधीनेनापि, ननु, तर्हि कुतः स्वाधीनत्वं ? तत्राह—यस्येति । चिच्छक्तिसारभूतेन प्रेम्णैव तस्यानन्दातिशयार्थमेव भक्तवश्यत्वं निष्पद्यत इति प्राक् प्रपञ्चितम् ॥ १९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं स्वगेहदामानि स्मयन्तीनां गोपीनां च दामानि सन्दधती स्मयन्ती हसन्ती विस्मिता अभवत् ॥ १७ ॥

खिन्नं प्रस्वेदेन व्याप्तं गात्रं यस्याः विस्रस्ता कबरस्रजो यस्याः तस्या मातुः परिश्रमं दृष्ट्वा स्वबन्धने कृपया आसीत् अनेन

नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ २० ॥
नायं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनां(१) चात्मभूतानां यथा भक्तिमतामिह ॥ २१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पूर्वोक्तमन्तर्बहिरादिव्यवहाररहितत्वं यथा कृष्णो भवति तथान्तर्बहिरादिव्यवहारार्हत्वमपि स्वेच्छयास्त्येवाऽचिन्त्यशक्तियोगात् तथा च श्रुतिः "अणोरणीयान् महतो महीयान्" इति ॥ १८ ॥

स्वाधीनस्यापि सेश्वरविश्वनियन्तुः स्वभक्ताधीनतामाह—एवमिति। ईश्वरैर्ब्रह्मशिवादिभिः सहितम् ॥ १९ ॥

भाषा टीका।

या प्रकार सूं यशोदाजी अपने घर भरे की रस्सीन कूं जोरिहारी तौ भी श्रीकृष्ण न बांधे गये तब या लीला कों देखनवारी सिग गोपिन ने हंसदियो तब यशोदाजू कों भी हंसी आय गई और सुतके न बंधवेतें बडे विस्मय कूं प्राप्त होत भई ॥ १७ ॥

सब गात्र में पसीना जाकें आय गयो, और श्रम सों केशन में सू माला जाकी गिर गई, ऐसी अपनी मैया के परिश्रम कूं देखिकें आई जो करुणा सोई श्रीकृष्ण आपही सें बंधन में आय गये ॥ १८ ॥

हे राजन्! सब लोक पालन सहित ये जगत जाके वश में है ऐसे स्ववश में होयकें भी श्रीकृष्ण ने अपनी भक्तवश्यता ऐसें दिखाई कि यहां ताई मैं इनके आधीन हूं, कि—भक्त मोकूं बांधें चाहे छोरें ॥ १९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

भगवत्प्रसादमन्येऽपि भक्ता लभन्ते इदं त्वतिचित्रमिति सरोमाञ्चितमाह—नेममिति। विरिञ्चः पुत्रोऽपि भवः स्वात्मापि श्रीर्जायापि ॥ २० ॥

फलितमाह—नायमिति। देहिनां देहाभिमानिनां तापसादीनां ज्ञानिनां निवृत्ताभिमानानामपि ॥ २१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक्त्वमेवाभिव्यञ्जयन् यन्निमित्तमेकदा गृहदासीष्वित्यादिकमुदाहर्तुमारब्धं तस्य "नन्दः किमकरोद्ब्रह्मन्" इत्यादिप्रश्नस्य तात्त्विकं सिद्धान्तमाह—नेममिति द्वाभ्याम्। विरिञ्चो भक्तादिगुरुः भवो वैष्णवानां दृष्टान्तरूपः श्रीर्लक्ष्मीर्नित्यप्रेयसी च सा तु विशेषेणाङ्गसंश्रया तद्वक्षोविलासापि प्रसादं तत्तन्महाभाक्तरूपं लेभिरे एव कीदृशादपि 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' इत्युक्तदिशाप्रायो मुक्तिमात्रप्रदातुरपि किन्तु गोपी श्रीयशोदागोपेश्व... यत्तदनिर्वचनीयं प्रसादशब्देनापि वक्तुं शङ्कनीयं किमपि प्राप त... पमिमं पूर्वोक्तं प्रेमपरिपाकरूपं प्रसादं तथाऽप्यनन्यविषयत्व... तच्छब्दवाच्यं न विरिञ्चः प्राप न भवः प्राप न श्रीरपि प्राप... यद्वा, गोपी यत्तत्प्राप तद्रूपमिमं विरिञ्चादयो न लेभिरे न ले... न लेभिर इत्यर्थः। नञ्त्रयवशेन क्रियावृत्तिः अङ्गसंश्रयेति स... श्रेयस्या अपि तस्यास्तदङ्गसंश्रयत्वेनात्मविषयकतदीयता मु... तस्मिन् ममता तु तदनुगता सा चैश्वर्यज्ञानसम्भ्रान्ता अस्या... स्वप्रभावैव ममता भावान्तरा क्षुभिता च मदेकगतितया म... कर्तव्यहितता भावना चाधिकेति तत्प्रसादाधिक्यमिति ... वक्तव्यं तदीय एव म इति तस्माद्ब्रह्मणो वरेण तत्प्राप्तिं ... वति यः स्वयमेवेदं प्रार्थयत एव "तद्भूरिभाग्यमिह जन्म किम... टव्याम् यद्गोकुलेपि कतमाङ्घ्रिरजोभिषेकम्" इति भावः ॥ २० ॥

अथ कथमस्यास्तादृशी तत्प्राप्तिर्जाता परेषां वा कथं ... तत्राह—नायमिति। अयं गोपिकासुतो भगवान् देहित्वेनाभिमा... वतां तप आदिभिर्न सुखापः किन्तु "एतावानेव यजता... निःश्रेयसोदयः। भगवत्यचलो भावो यद्भागवतसङ्गतः" इत्युक्त... कथञ्चित् कदाचित् तद्भक्तसङ्गो यदि स्यात् तदा क्रमत ... प्राप्यः एवं ज्ञानिनां देहाद्यतिरिक्तात्मज्ञानवताम् आत्मभूत... तद्विज्ञानवतामपि न सुखापः किन्तु पूर्ववत्तद्भक्तसङ्गादेव आ... भूतानामिति पाठं केचित्पठन्ति तत्र आत्मैव पोतस्तरणसाधनं ... ज्ञानिनामित्यर्थः। तर्हि सुखाप इत्यपेक्षायां तन्निदर्शनमाह—... इह श्रीगोपिकासुतो भक्तिमतां सुखापः अनेन महानाराय... भक्तिमन्तोऽपि व्यावृत्ताः युक्तं च तेषामसुखाप इति देहिनां ज्ञानि... च देहसामान्यदृष्ट्या भक्तान्तराणां च गोपलीलादृष्ट्या त... दरानास्पदत्वात् तद्भक्तानां सुखाप इति च युक्तम्" इत्थं ... ब्रह्मसुखानुभूत्या"इत्यादिषु तेषां तादृशतल्लीलायाः सर्वोत्तम... अनुभवादिति ज्ञेयम् तत्र गोपिकासुत इति निर्विशेषणमेवो... लक्षणं गोपिकाया एव सर्वोपादेयत्वेन विवक्षितत्वात् इहशब्द... तद्वाच्येव न जगदादिवाची प्राप्तत्वात् व्यर्थत्वाच्च भक्तिम... त्रैकालिकभक्तपरम्परा एव अविशेषेण प्राप्तत्वात् तामुपादि... वेदानां तदुपदेशकोपदेश्यपरम्पराणां चानाद्यनन्तकालभावि... तत्र विशेषणं भक्तिसुखप्राप्तिरूपयोः साधनसाध्ययोरुभयो... वस्तुयोर्दत्तं तस्मात्त सार्वकालिकतद्भक्ता गोपिकासुतत्वेनैव स... यन्ति लभन्ते च तमिति स्थितं निर्वेध तस्य तद्रूपेणावधि... सिद्धा तथा गोपिकासुतत्वेनैव साधननिर्णयो गोपिका... तत्साधनत्वे स्वाश्रयदोषापातान्न साधनान्तराच्च इति सैव निर्द्धा... अत एव गोपिकायाः सुखाप इति किं वक्तव्यं गोपिकायास्तु ...

( १ ) चात्मपोतानां इति सुबो० विजय० वीर० पाठः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एव स इति व्यञ्जितम् उपलक्षणं चैतत् श्रीनन्दस्य तदीयानामपि तेषां तादृशत्वं च श्रीकृष्णजन्माष्टम्यादिग्रन्थे तदीयनानामन्त्रे चावरणपूजायां द्रष्टव्यं तस्मात्पूर्वं मया तयोरंशाभ्यां द्रोणधराकृपाभ्यां यल्लीलागात्रं तदेवापातप्रबोधमात्रार्थमुक्तमिति भावः ॥ २१ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सुखापः सुखेन प्राप्यः ॥ २१–२३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, सत्यं भक्तपरतन्त्र इति गोपी तु न भक्तेऽस्ति कथं तत्पारतन्त्र्यमीश्वरस्येत्यत्राह—नेति । भक्तिप्रयोजनं हि भगवत्प्रसादस्तं च यादृशं निग्रहानुग्रहादिपर्यन्तविधेयत्वरूपं विमुक्तिदाद्भगवतो गोपी लेभे न तादृशं ब्रह्मा रुद्रो साक्षात् वक्षःस्थलाश्रया लक्ष्मीरपि लेभिरे प्रेमपूर्वकानुध्यानात्मिकादिभक्तिः सा गोप्यामप्यविशिष्टेति भावः ॥ २० ॥

तथा च भक्तानामेवायं सुलभो नान्येषामित्याह—नायमिति । अयं भगवान् गोपिकासुतो यथेह भक्तिमतामात्मा स्वयमेव पोतः भवार्णवतारणे प्लवस्थानीयः येषां तेषां ज्ञानिनां यथा सुखापः सुखप्राप्यः न तथेतरेषामित्यर्थः ॥ २१ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत् तत् यं तम् ॥ २० ॥

निरन्तरनिरतिशयभक्तिप्रभवैव भगवत्कर्षणनिपुणेत्याशयेनाऽऽह—नायमिति । आत्मैव परमात्मैव पोतो नौर्येषां ते तथा तेषाम् ॥ २१ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नेममित्यादि द्वयम् ॥ २०—२३ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेतादृशो भावः पूर्वमपि सिद्धः ततः शास्त्रप्रसिद्धत्वात् किं प्रदर्शनेनेत्याशङ्क्याह—नेमं विरञ्च इति । इमं प्रसादं न कश्चित् पूर्वं प्राप्तवान् भक्ता एव हि महान्तः प्राप्नुवन्ति तत्र भक्तेषु भक्त्या स्वरूपतश्च महान्तस्त्रयः पुत्रो ब्रह्मा भक्तः प्रवृत्तिमार्गसर्वधर्मप्रवर्तकः सर्वेषां हेतुभूतः तथा महादेवोपि पौत्रः सर्वनिवृत्तिधर्मप्रवर्तकः प्रलयकर्ता गुणावतारश्च भगवदर्थमेव सर्वपरित्यागेन तपस्तपति ततोपि लक्ष्मीर्भार्या ब्रह्मानन्दभूता उरस्यपि लब्धपदा जगज्जननी निरन्तरं पादसेवनपरा एवमेते त्रयः यदीमं प्रसादं न प्राप्तवन्तः तदा कोऽन्यः प्राप्तुमर्हतीति तदाह—इमं प्रसादं न वा विरञ्च्यः न वा भवो न वा श्रीः प्रत्येकसमुदायाभ्यां प्रसादं न लेभिरे । न च तेषां दोषोस्तीति शङ्कनीयं ? यतस्त्रयोप्यङ्गेन सम्यगाश्रयन्ति एका वक्षः अन्यो नाभिमन्यः पादाविति तेषां त्रयाणामपि गुणावताराणां यद्दुर्लभं तदन्येषां दुर्लभमेव, स कः प्रसादः ? इत्याशङ्क्य तमनुवदति गोपी यत्तत्प्रापेति । जात्या स्वरूपतोपि हीना प्रसादस्तत्रैव प्रसिद्धः न तु केनचिन्निरूपितः न हि सर्वमोचकः कश्चिदात्मानं बध्नाति स्वेदस्तु ज्ञानमपि दत्त्वा विदेहकैवल्यं वा दत्त्वा मोचयितुं शक्यते किं स्वयं बन्धनेन अतः प्रसिद्धः प्रसादोऽयमेव नान्य इत्यर्थः ॥ २० ॥

ननु, ते महान्तो मूढा चेयमिति मूढानुरोधेन कुतोऽर्थः कथं प्रमादः स्यात् ? तत्राह—नायं सुखाप इति । नह्यत्र बन्धनं निरूप्यते किन्तु वश्यता सा न कस्यापि सिद्ध्यति यावन्तः कर्मिणो देहाभिमानिनः येऽपि ज्ञानिनः निरभिमानिनो मुक्ताः उभयेषामपि अयं भगवान् न सुखापः सुखेन प्राप्तुं शक्यः तत्र हेतुः देहिनामिति । एकत्र देहाभिमानो दोषः अन्यत्र नैरपेक्ष्यं तदाह—आत्मपोनानामिति । आत्मा स्वरूपं पोतः संसारसमुद्रतरणोपायो येषां न हि समुद्रतरणमात्रेण पारम्भितो महाराजः प्राप्यते भक्तिमतां त्विहैव सुलभः तत्र हेतुः गोपिकासुत इति । यतो गोपिकायाः सुतो जातः अतः सर्वे भक्ता भवन्त्वित्येवं भगवता कृतमिति भावः । इहेत्यस्मिन् अवतारे भक्तिमतामिति भक्तेर्विशेषणत्वमुक्तं नतु भक्तानाम् ॥ २१ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भक्तवश्यस्य तस्य भक्तेष्वपि मध्ये व्रजेश्वर्या आधिक्यमपारवश्यत्वातिशयदर्शनेन सरोमाञ्चमाह—नेममिति । विशिष्टा मुक्तिः विमुक्तिः प्रेमा तत्प्रदादपि कृष्णात् यत् प्रसादं गोपी श्रीयशोदा प्राप तत् तं प्रसादं विरिञ्चो भवः श्रीरपि न लेभिरे न लेभिरे न लेभिर इत्यन्वयः । ननु त्रयेण लेभिर इत्यस्य त्रिरावृत्त्या प्राप्त्यभावातिशय उक्तः यद्वा विरिञ्चो भवः श्रीरपि प्रसादं न लेभिरे अपि तु प्रसादं लेभिरे एव किन्तु गोपीयं प्रसादं प्राप इमं न लेभिर इत्यन्वयः । विरिञ्च्यः पुत्रोपि "स आदिदेवो भजतां परो गुरुः" इत्युक्तेर्भक्तानामादिगुरुरपि भवः स्वात्मापि वैष्णवानां यथाशम्भुरित्युक्तेस्ततोप्युत्कर्षवानपि श्रीर्जायापि अङ्गसंश्रयत्वेन सख्यभक्तिरसवत्त्वात् दासाभ्यां ताभ्यामुत्कर्षवत्यपि यस्याः सकाशात् प्रेम्णा न्यूना एव सा यशोदा साधनसिद्धा पूर्वजन्मनि ब्रह्मदत्तवरा धरा आसीदिति महानेवानयः नांह्रि ब्रह्मणो वन्दानलभ्यमेतादृशं प्रेमसौभाग्यं भवितुमर्हति स ब्रह्मापि "तद्भूरिभाग्यमिह जन्म किमप्यटव्याम्" इति प्रार्थयमानोऽस्या न्यूनातिन्यूनकक्षायामेव गणयन् इत्यतः श्रुतिस्मृत्यागमप्रसिद्धे नित्यसिद्धे एव नन्दयशोदे त्वया श्रेयं "नन्दः किमकरोद्ब्रह्मन् ! श्रेय एवं महोदयम्" यशोदा चेत्यदपरिमर्षे त्वदीयप्रश्ने मयाप्यस्पष्टप्रायं द्रोणो वसूनां प्रवर इति तदेकांशाश्रयं प्रत्युत्तरं दत्तमिति भावः ॥ २० ॥

किञ्च, श्रीभागवतेऽस्मिन् भगवत्प्रेमैव सर्वपुरुषार्थशिरोमणित्वेनोद्घुष्यते तस्य मूलभूताश्रयाणां भक्तानां मध्ये नित्यसिद्धस्य एव तस्य नित्यस्थितिः सम्भवेत् तेष्वपि मध्ये गोकुलवर्तिनः

कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः ।
अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥ २२ ॥
पुरा नारदशापेन वृक्षतां प्रापितौ मदात् ।
नलकूबरमणिग्रीवाविति ख्यातौ श्रियाऽन्वितौ ॥ २३ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायम्
वैयासिक्यां दशमस्कन्धे उलूखलबन्धनं नाम
नवमोऽध्यायः ॥ ९ ॥

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात्त्वादय एव श्रेष्ठाः येषां वात्सल्यादिभावविषयीभूतः कृष्णस्तदनुगमनभक्तिर्मद्भिरेव सुलभो नान्यैरित्याह—नायमिति । अयं गोपिकासुतो न सुखापः केषां देहिनां देहाध्यासवतां भक्तिमतां ज्ञानिनां देहाध्यासरहितानामात्मारामभक्तानां तथा तथाभूतत्वे सत्येव प्राप्तियोग्यतायां निषेधसम्भवात् आत्मभूतानां पूर्वश्लोकनिर्दिष्टानां विरिञ्चिभवश्रियां तत्र विरिञ्चिभवयोः स्वावतारत्वेन लक्ष्म्याः स्वरूपशक्तित्वेनात्मभूतत्वम् एवं त्रिविधजनानां गोपिकासुतो भगवान्न सुखापः किं तर्हीति विकुण्ठाकौसल्यादिसुत एव दुःखमेवाभिव्यञ्जयति यथा इह श्रीयशोदायामेतदुपलक्षितेषु वात्सल्यमख्यकान्तभावाश्रयेषु व्रजलोकेषु या भक्तिः क्षिय उरगेन्द्रभोगभुजदण्डेत्यादिना यथात्वल्लोकवासिन्य इत्यादिना च व्यञ्जिता श्रुत्यादिभिरनुगतिमयी तद्वतां यथासुखापस्तथा नेति नेन गोपिकाद्यनुगतमयस्वन्यूनतादुःखाङ्गीकारस्तु विरिञ्चिभवलक्ष्म्यादिभिरीश्वराभिमानिभिः स्वस्वलोकास्थतैर्दुःशक एव अन्येषां तु तादृशोपदेशस्याभावादरोचकत्वाद्वा तदनुगत्यभाव एवेति भावः । अत्र सुखापदुष्प्रापशब्दाभ्यां प्राप्त्यप्राप्ती एवोच्यते इति केचिदाहुः भक्तैर्बन्धस्याप्यन्यमोचकत्वं वक्तुमाह—कृष्णस्त्विति ॥ २१ ॥ २२ ॥ २३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीयशोदाकृतायाः श्रीकृष्णभक्तेः फलकथनद्वारेण सर्वोत्तमतामाह—नेममिति । यद्यपि "भक्तियोगेन तन्निष्ठो मद्भावायोपपद्यते" इति श्रीमुखवचनाद्भगवान् भक्त्यैव स्वभावापत्तिलक्षणां मुक्तिं ददाति तस्मान्मुक्तिदात् प्रसादविशेषमपि तद्भक्ताः लेभिरे क्रियापदेन कर्तृपदमाक्षिप्यते. परन्तु यं प्रसादं गोपी यशोदा प्राप तमिमं न विरञ्चिः न भवः न श्रीः प्राप इतरेषां का कथेति भावः एवंविधायाः भक्तेर्मुक्तितोपि दुर्लभत्वं मुक्तिं ददाति "कर्हिचित्स्म न भक्तियोगम्" इत्यादौ बोध्यम ॥ २० ॥

प्रसङ्गात् भक्तिसम्बन्धवर्जितानां ज्ञानादीनां भगवत्प्राप्त्यकारणत्वं भक्तेस्तु भगवत्प्राप्तिहेतुत्वमाह—नायमिति । आत्मभूतः अनुभवविषयीकृतो यैस्ते आत्मभूतास्तेषां ज्ञानिनां किं पुनर्वक्तव्यं कर्मादिनिष्ठानां न सुखाप इति ॥ २१ ॥

भाषा टीका ।

विशेष मुक्ति के देन वारे भगवान् श्रीकृष्णचन्द्र पुत्र पने के सम्बन्धते जो कछु प्रसाद या गोपी यशोदा पायो ता प्रसाद कों ब्रह्माजी नहीं प्राप्त भये महादेव ने नहीं पायो नित्यवक्षस्थल में विराजवे वारी श्रीलक्ष्मीजु भी नहीं पायो ॥ २० ॥

ये गोपिका सुत भगवान् अर्थात् श्रीयशोदा नन्दन अपने आत्म स्वरूप जान न वारे ज्ञानि निज भक्तन कों होवें हैं तैसें और देह धारी को सुख सें नहीं प्राप्त हैं । अथवा आत्मस्वरूप ज्ञानि जनन सों भी भक्तन कों सों मिलें हैं ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्तैर्बद्धस्याऽप्यन्यमोचकत्वमाह—कृष्णस्त्विति ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
नवमोऽध्यायः ॥ ९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं श्रीगोपिकायां कृष्णवात्सल्यं प्रन्यश्राव्याहतज्ञाना वक्तुं प्रस्तौति—कृष्णस्त्विति । एवं यशोदा श्रीकृष्णं बन्ध चान्यं मोचयामासेति भिन्नोपक्रमे तुशब्दः गृहकृत्येष्विति त्वेन तेषामनुपरतिः सूचिता तं त्यक्त्वा गमनं च तस्य समीपस्थत्वात् वक्ष्यमाणानां बालानां रक्षितत्वात् इदं च तोलूखलाकर्षणाशक्तेरमननेन पुत्रस्यान्यत्र गमनशङ्का तथा च श्रीविष्णुपुराणे तस्या वाक्यं "यदि शक्नोषि गच्छ चञ्चलचेष्टित" इति. पूर्वमद्राक्षीदित्युक्तं तत्र पूर्वं पूर्वं तद्दर्शन

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अस्मात् गच्छ तदुक्तिस्तद्विशेषानुसन्धानापेक्षयेति तच्च यद्यपि स्वयोग्यत्वात् तल्लीलाशक्तिकृतमेव तथापि स्वबन्धनानुसन्धानेन तद्बन्धनानुसन्धानस्य योग्यत्वादिवस्तुप्रेक्षणीयं दृष्ट्वा विचारितवानित्यर्थः ॥ २२ ॥

अथ तमेव तस्य विचारमाह-पुरेति । मदादभिमानात् मधुमत्ततायाश्च हेतोः यतः श्रिया सम्पदा ऽन्वितौ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो अत्याश्चर्यमेतत् यत्संसृतिबन्धब्रह्मशापादिमोचनोऽपि भगवान् लौकिकेन दाम्ना बद्धः इत्येतदभिप्रायेण यमलार्जुनमुक्तिप्रदत्वरूपं चरित्रान्तरं प्रस्तोतुमाह-कृष्णस्त्विति । मातरि उलूखलबद्धवत्यां यशोदायां गृहकृत्येषु व्यग्रायां प्रवणचित्तायां सत्यां बद्धः कृष्णः प्रभुः विप्रशापादिमोचनसमर्थः पूर्वं धनदस्य कुबेरस्यात्मजौ गुह्यकौ यक्षौ ॥ २२ ॥

नलकूबरमणिग्रीवाख्यौ श्रिया युक्तौ सन्तौ पुरामदाच्छ्रीमदान्निमित्तान्नारदस्य कुपितस्य शापेन वृक्षतां तरुजन्म प्रापितावर्जुनौ अर्जुनाख्यौ वृक्षौ ददर्श ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पूर्वजन्मनि गुह्यकौ अधुना अर्जुननाम्ना ककुभवृक्षौ ॥ २२ ॥
शापनिमित्तमाह-मदादिति । किं नामानाविति तत्राह-नलेति । मदकारणमाह श्रियेति ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥
( विजयध्वजतीर्थरीत्या दशमः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वमनोरथे सिद्धे गोपिका बहिर्मुख्यो यथायथं गताः भगवांस्तु तथा न गतः किन्तु तस्यामेवावस्थायां महत्कार्यं कृतवानित्याह-कृष्णस्त्विति । तुशब्दः पूर्वसम्बन्धं व्यावर्तयति, नायं बन्धेन व्यग्रः यतः कृष्णः सा चेद्भगवन्तं वशीकृत्य तथैव तिष्ठेत् न किञ्चित् कुर्याद्भगवान् निरोधस्य सिद्धत्वात् सा पुनर्गृहकृत्ये व्यग्रा जाता तथा जातायाम् अर्जुनवृक्षावद्राक्षीत् तत्पातनेन च तस्याः प्रपञ्चविस्मारणं करिष्यामीति । ननु, कोऽयमत्याग्रहः तत्राह-मातरीति । तस्यामप्यवस्थायां पातने सामर्थ्यमस्तीति ज्ञापयति, प्रभुरिति । अर्जुनौ जातिविशेषवृक्षौ सखिशब्दवाच्यौ । ननु, गोपिकार्थं कथं तयोः पातनमपराधाभावादित्याशंक्याह-पूर्वं गुह्यकाविति । देवयोनिभूतौ वृक्षौ जातौ अतस्तयोर्वृक्षत्वमनभिप्रेतं तथापि प्रयोजनाभावात् सम्बन्धाभावात् किमिति मोचनीयावित्याशङ्क्याह धनदात्मजाविति । धनदः कुबेरो भक्तः तस्य पुत्रौ ॥ २२ ॥

ननु तौ महान्तौ कथमेवं जातौ तत्राह-पुरेति । पूर्वं नारदशापेन वृक्षत्वं प्राप्तौ । ननु, नारदः किमिति शापं दत्तवान् तत्राह-मदादिति । श्रीमदेन मत्तौ अतो मदात् हेतोः नारदशापः शापेन च वृक्षत्वमिति । ननु, तथाभावयोग्यावेव तौ किमिति मुच्येते ? इत्याशङ्क्याह-नलकूबरमणिग्रीवाविति ख्यातौ इति । नलः कूबरो यस्य नलोऽति सुन्दरः सोऽपि कुब्जतुल्यः मणियुक्ता ग्रीवा यस्य एवं नाम्ना ख्यातौ तेषां नामख्यातिश्च न शान्तेति तदुद्धारो युक्तः । किञ्च श्रिया चान्वितौ अद्यापि तौ परित्यज्य श्रीर्न गता अतः कीर्तिश्रियोर्विद्यमानत्वादुद्धारमर्हतः ॥ २३ ॥

इति श्रीभागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
नवमाध्यायविवरणम् ॥ ९ ॥

---

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ऋजुदित्यावेव बद्धोऽहं मात्रा तदनुगाभवन् ।
किं कुर्वे इति संचिन्त्य मोचयत्तत् पुरद्रुमौ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
दशमे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वानन्यभक्तैर्बद्धोऽपि अन्यान्विमोचयतीति सूचयन् चरित्रान्तरं, वक्तुमाह-कृष्णस्त्विति ॥ २२ ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाध्यायार्थप्रकाशः ॥ ९ ॥

भाषा टीका ।

ॐयमलार्जुनभञ्जनाय नमः ॥

अब यहां सूं आगे यमलार्जुन के तारिवे की कथा कहें हैं, कि—मैया तो श्रीकृष्ण भगवान् कूं बांई उलूखल सों बांधिकें अपने घर के काम काज में लग गईं और भगवान् ने तौ कुवेर के पुत्र गुह्यक जाति जो पहलें हे तिन यमलार्जुन कों देखे । गोविन्दनें यों विचारी, कि—पहले मैया मोकूं पिवावते सों छोड गईं जवतौ मैंने केवल दही को माठही फोर्यो हो अबकी फिर बांधके मोकूं भूल गईं तासों एसो शब्द करूं, कि—जामें सिगरो ब्रज इकट्ठो होय जाय ॥ २२ ॥

जो दोनों पाहिले मदसों नारदजी के शाप सों वृक्ष होय गये हे, और बडे रूप सौन्दर्य वारे जो नलकूबर और मणिग्रीव या नाम सौं विख्यात हे तिनको प्रभु ने देखे ॥ या॰ इतनो सिद्धान्त जानवे योग्य है, कि—खल की प्रीति तें महात्माजनको रूठिवोहु अच्छो, जो इन दोउन के श्रीनारदजी कृपा नहीं करते तौ आज ये दोनों श्रीगोविन्द कृपा कटाक्ष के पात्र कैसें होते । तस्मात् प्रथम भागवत की कृपा होयवे तें या चेतन की ओर भगवान् देखें हैं ॥

इतिश्रीमद्भागवत दशमस्कन्धमें नवमें अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे नवमोऽध्यायः ॥ ९ ॥



## ॥ दशमोऽध्यायः ॥

राजोवाच ।

कथ्यतां भगवन्नेतत्तयोः शापस्य कारणम् ।
यत्तद्विगर्हितं कर्म[1] येन वा देवर्षेस्तमः ॥ १ ॥

श्रीशुक उवाच ।

रुद्रस्यानुचरौ भूत्वा सुदृप्तौ धनदात्मजौ ।
कैलासोपवने रम्ये मन्दाकिन्यां मदोत्कटौ ॥ २ ॥
वारुणीं मदिरां पीत्वा मदाघूर्णितलोचनौ ।
स्त्रीजनैरनुगायद्भिश्चेरतुः पुष्पिते वने ॥ ३ ॥
अन्तः प्रविश्य गङ्गायामम्भोजवनराजिनि ।
चिक्रीडतुर्युवतिभिर्गजाविव करेणुभिः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमेऽपातयन्द्रिङ्गन्नन्तरा यमलार्जुनौ ।
तत्रत्याभ्यां च देवाभ्यां कृष्णः स्तुत इतीर्यते ॥

यद्विगर्हितं कर्म येन वा देवर्षेर्भागवतोत्तमस्यापि तमः क्रोधस्तदेतत्कथ्यतामिति ॥ १—३ ॥

गङ्गायामन्तर्मध्ये कथम्भूते ? अम्भोजानां वनानि तेषां राजयस्ता विद्यन्ते यस्मिंस्तस्मिन् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तस्य बद्धस्य मातृकोपाद्धयग्रस्य चाऽत्याहृतसार्वज्ञमयीं विचाररूपामान्तरलीलामपि कौतुकात् पृच्छति—कथ्यतामिति । तमोऽभूदिति शेषः । तदेतच्छापस्य कारणमिति योज्यं येनासीद्देवर्षेस्तम इति पाठान्तरं सुगमम् आर्षत्वाच्छन्दोभङ्गादोषः ॥ १ ॥

श्रीशुकदेवश्च तादृशतद्विचारमनुसृत्य वक्तुमारब्धवान् तत्र रुद्रस्येति युग्मकम् वारुणीं क्षीरोदमथनाज्जातां किं वा वरुणनिर्मितामिति महामादकत्वमुक्तं तां पीत्वा कैलासोपवनमध्ये या मन्दाकिनी तस्यां तत्समीपे पुष्पिते वने प्रथमं चेरतुः ॥ २—३ ॥

गङ्गायां चिक्रीडतुः किं कृत्वा अन्तः प्रविश्य अन्तः कथम्भूते ? अम्भोजवनानां राजयश्चेत्यव्ययविशेषणत्वेन नपुंसकत्वान्नुम ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तमः कोपहेतुरज्ञानम् ॥ १-४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्ते लब्धप्रश्नावसरः पृच्छति राजा—कथ्यतामिति । यद्विगर्हितं कर्म येन वा देवर्षिर्भागवतश्रेष्ठः कुपितः तदेतत्कर्म तयोः शापस्य कारणं हे भगवन् ! कथ्यतां देवर्षेर्येन वा तम इति पाठे देवर्षेर्भागवतोत्तमस्यापि तमः क्रोध इत्यन्वयः ॥ १ ॥

तस्योत्तरमाह मुनिः—रुद्रस्येत्यादिश्लोकद्वयं स्पष्टार्थम् ॥ २—३ ॥

गङ्गायामन्तर्मध्ये कथम्भूते अम्बुजानां वनानि तेषां राजयो यस्मिन् तस्मिन् श्रीष्मादित्वादिनिः करेणुभिरिभीभिर्गजाविव युवतिभिः सह चिक्रीडतुः क्रीडाङ्कृतवन्तौ ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरेव संसारान्मोक्ष इति दर्शयितुं नलकूवरमणिग्रीवयोः शापमोक्षप्रकारं निरूपयत्यस्मिन्नध्याये ; तत्र राजा शुकं पृच्छति, राजेति । यद्विगर्हितं निन्दितं कर्म तत्कथ्यतां येन कर्मणा देवर्षेस्तमोगुणकार्यक्रोधोऽभूत् ॥ १ ॥ २ ॥

वारुणीं वारुणाज्जाताम् ॥ ३ ॥

अम्भोजवनराजिनि जल इति शेषः ॥ ४ ॥

---

(१) येन वा देवर्षिः कुपितः । इति वीर०

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्युगलमोक्षणलीलाश्रवणरसपोषार्थं पृच्छति कथ्यतामिति । १—३ ॥

अम्भोजवनेन राजितुं शीलं यस्य तस्मिन् ॥ ४—६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तु नवमाध्याये भक्तिरुक्तातिदुर्लभा ।
कृष्णसेवकसख्यस्य हेतुर्दशम उच्यते ॥
वैराग्यं भगवद्धर्मः षड्गुणोऽत्र निरूप्यते ।
गुणानां भगवत्त्वाय स एव हि यतोऽभवत् ॥
वैराग्यमनिवर्त्यं तु भगवद्वाक्यतो भवेत् ॥
विशेषतस्तु यद्वाक्यं न निवर्त्तेत केनचित् ॥
तादृशं शापरूपं स्यात् भक्तानामेव तादृशम् ।
अतो वैराग्यकथने शापो मोक्षावधिर्मतः ॥
शापोद्यमस्तथा हेतुः शापश्चापि प्रसादभाक् ।
वाक्यस्यापि फलं शीघ्रं स्तुतिश्चानुग्रहस्तथा ॥
षड्भिर्द्वादशभिश्चैव त्रिभिः षड्भिस्तथैव च ।
दशभिः पञ्चभिश्चेति षडर्थाः क्रमतो मताः ॥
अपूर्वत्वात् श्रोतुमिच्छा तेन प्रश्नः परीक्षितः ।
स्वस्यापि तादृशत्वेन तज्जन्मोक्षाशया पुनः ॥

पूर्वाध्यायान्ते शापेन यमलार्जुनौ जाताविति श्रुत्वा कथं वा तयोर्भगवानुद्धारको जात इति पृच्छति—कथ्यतामिति । भगवन्निति सम्बोधनं कथनेन स्वदुःखदूरीकरणसामर्थ्यार्थम् एतदिति हृदये बाधकत्वेन स्थितं तयोर्नलकूवरमणिग्रीवयोरेकरूपस्य शापस्य कारणं चतुष्टयन्तु तेनैव वक्तव्यं शापविस्तारः विमोक्षणं स्तुतिर्भगवत्प्रसादश्चेति अतोऽधिकं द्वयं पृच्छति । यत्तद्विगर्हितं कर्मेति । यत् प्रसिद्धं तादृशशापहेतुभूतं जातं तदवश्यं विगर्हितं निन्दितमेव भवति देवानान्तु पापं न सम्भवतीति प्रश्नः । किञ्च येन कृत्वा देवर्षेः देवतानामपि मन्त्रद्रष्टुः तमः क्रोधो भवति. अनेन शापे हेतुः पृष्टः विगर्हितेन शापोद्यमः सर्वो हि विगर्हिते कृते शापं दातुमुद्यक्तो भवति देवर्षिस्तु साधारणो न भवतीति विशेषतो हेतुर्वक्तव्यः ॥ १ ॥

तत्र प्रथमं विगर्हितेन शापोद्यममाह—षड्भिः, रुद्रस्येति ।

उन्मादश्च प्रमादश्च निन्दिताऽऽचरणं तथा ।
महत्स्वपि तथा धार्ष्ट्यं सिद्धचर्यं महतां हृशि ॥
धार्ष्ट्यंतयोर्न सङ्गस्य ततश्चोद्यम ईर्यते ।

प्रथमतो महतस्तयोस्त्वमनुचितमित्याह—रुद्रस्य महादेवस्य रुत रोगाणि द्रावयतीति तादृशस्य सेवकयोः रोगसम्बन्धोऽनुचितः अनुचरपदेन पश्चाद्गच्छतस्तयोश्चितत्वात् अणुमात्रविभेदोऽपि दोषायेति एतादृशावपिभूत्वा सुहृत्तौ जातौ अनेनाति मत्तौ तत्र हेतुः धनदात्मजाविति धनं सर्वेभ्यो ददातीति तदात्मजत्व धनित्वं सिद्धमेव. उभयोश्च सह क्रीडा निन्दिता उभौ च पुष्टौ जातौ तत्रापि महादेवस्य गृहरूपो यः पर्वतः कैलासः तस्य उपवनं आरोपितफलपुष्पप्रधाने वने तत्रापि रम्ये सर्वदानविवर्जिते वने स्वभावतो विरक्तो महादेवः तस्य स्थाने विरक्ता एव तिष्ठन्ति तत्राप्युपवने योगिनां भगवच्चिन्तनस्थाने तत्रापि रम्ये भगवत्प्रमादस्थाने तत्रो…
दोषमाह—मन्दाकिन्यामिति । मन्दाकिनी भागीरथी …
मन्दाकिन्यां दोषाभावात् तत्रापि मद उत्कटो यथा …
मदो धनादिकृत एव सुरादिकृतस्तत्र वक्ष्यते ॥ २ ॥

महतः स्वरूपदोषा उक्ताः आगन्तुकदोषैः सुतुष्टिकृत… वारुणीमिति । द्वन्द्वजो हि दोषो दुर्निवार इति द्वयोः … वारुणी वरुणोद्भवा अमृतसङ्गे उत्पन्ना दैत्यभावबोधिका … मदिरा मादिका आसुरदोषभावादत्यधिकदोषजनिका … वारुणीं मदिरां पीत्वा मदेनाऽऽघूर्णिते लोचने ययोः … ज्ञानवन्तौ तत्रापि अनुपश्चाद्गायद्भिः स्त्रीजनैः सहितौ … दोषो मोहहेतुः सम्बन्धश्च. पुष्पिते वने रजोयुक्ते चेरतुः … मायौ जातौ मन्दाकिन्यामिति सामीप्ये सप्तमी कैलासे … पवने सति मन्दाकिन्यामपि सत्यां मदोत्कटाविति वा … पुष्पिते वन इति न दोषवचनेन विरोधः ॥ ३ ॥

दोषान्तरमाह—अन्तः प्रविश्येति । जले क्रीडा गङ्गायां निषि… "गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत्" इत्यत्र क्रीडा… निषिद्धत्वात् तत्रापि नोद्धृत्य किन्त्वन्तः प्रविश्य अम्भोज… वनराजयो वनपङ्क्तयो यत्र अनेन भगवत्सान्निध्यमपि गङ्गा… कृतपूजार्थं लक्षितम् । गजाविव करेणुभिरिति क्रीडायामनव… तोक्ता ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कुवेरात्मजयोः शापः कथा प्रोक्ता पुरातनी ।
तद्विमोचयिता कृष्णस्ताभ्यां तु दशमे स्तुतः ॥

तयोर्विगर्हितं यत्कर्म येन वा कर्मणा देवर्षेरपि तमः … एतत्तयोः शापस्य कारणं कथ्यतामित्यन्वयः ॥ १—३ ॥

गङ्गायां चिक्रीडतुः किङ्कृत्वा अन्तर्मध्ये प्रविश्य … अम्भोजानां वनराजिर्यत्र तस्मिन् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नलकूवरमणिग्रीवयोः प्राग्वृत्तं वृक्षभूतयोस्तयोः यत्नं … कृतं श्रीकृष्णस्तोत्रं च दशमेऽध्याये निरूपयति—तयोः शाप… कारणं यत्तद्विगर्हितं कर्म येन देवर्षेः भागवतोत्तमस्यापि … तदेतत्कथ्यताम् ॥ १ ॥ २ ॥ ३ ॥

अम्भोजानां वनानि तेषां राजयस्ता विद्यन्ते यस्मिन् तस्मिन् … गङ्गायामन्तर्मध्ये प्रविश्य चिक्रीडतुः क्रीडां कृतवन्तौ ॥ ४ ॥

---

भाषा टीका ।

ॐ दामोदराय नमः ॥

राजोवाच ॥

राजा परीक्षित पूछत भये, कि—हे भगवन् ! इन दोनों यमलार्जुन के शाप को कहा कारण है सो आप कहवे …

यदृच्छया च देवर्षि(१)र्भगवांस्तत्र कौरव ! ।
अपश्यन्नारदो देवौ क्षीवाणौ समबुध्यत ॥ ५ ॥
तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः ।
वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ॥ ६ ॥
तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ ।
तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ॥ ७ ॥

नारद उवाच ।

न ह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः ।
श्रीमदादाभिजात्यादिर्यत्र स्त्रीद्यूतमासवः ॥ ८ ॥

भाषा टीका ।

योग्य हो । कौनसो ऐसो निन्दित कर्म इनन ने कियो, कि ? जासों देवर्षि साक्षात् नारदजी कों हू क्रोध होय आयो ॥१॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—महादेवजी के अनुचर कुबेर के पुत्र बडे दर्पधारे और मतवारे होयकें मंदाकिनी के किनारे रमणीय कैलास के बगीचा में ॥ २ ॥

वारुणी मदिरा कों पान करकें मदतें चलायमान होय रहे नेत्र जिन के ऐसे वे दोनो नलकूवर मणिग्रीव पुष्प जामें खिल रहे ऐसे बगीचा में गान करनवारे स्त्री जनन के साथ विचरत भये ॥ ३ ॥

विचरत २ कमल वन की पंक्ति जामें फूलिरही ऐसी गंगाजी में भीतर प्रवेश करिकें उन युवतिन के साथ क्रीडा करन लगे, जैसें हथिनीन के साथ दो मत्त गज विहार करते होंय ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपश्यत् दृष्ट्वा च क्षीवाणौ मत्तौ समबुध्यत ॥ ५ ॥

कुत इत्यत आह—तं दृष्ट्वेति ॥ ६ ॥

अनुग्रहार्थाय अनुग्रहश्च मदनाशोऽर्थश्च श्रीकृष्णदर्शनं तदर्थम् इदं वक्ष्यमाणं नह्यन्य इत्यादि ॥ ७ ॥

जोष्यान्प्रियान्विषयान् जुषतः सेवमानस्य पुंसः श्रीमदादन्य आभिजात्यादिः सत्कुलविद्यादिजनितो मदः अन्यो वा रजोगुणो रजःकार्यः हास्यदर्पादिरूपो न हि तथा बुद्धिभ्रंशो बुद्धिं प्रनाशयतीति तथा किं तु श्रीमद एवेति तदाह—यत्रेत्यादि चतुर्भिः । यत्र श्रीमदे ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वर्थे चकारो भिन्नोपक्रमे । यद्वा अपश्यत् सम्यगबुध्यत चेति चकारान्वयः । यदृच्छया स्वैरितया आगत इति शेषः । देवर्षिरिति नियन्तृत्वं भगवानिति दयालुत्वमिति वक्ष्यमाणशापानुग्रहयोर्योग्यतोक्ता हे कौरवेति तत्र तस्यागमनासम्भवेऽप्यागमनात् कौतुकेन सम्बोधनम् ॥ ५ ॥

गुह्यकाविति तदा सात्त्विकत्वाभावेन देवत्वहानेः केवलयक्षतयोपलक्षितौ एवशब्देन देवीनामाग्रहेणापि न पर्यधातामिति बोध्यते ॥ ६ ॥

सुरात्मजावपि मदिरामत्तौ यतः श्रीमदेन अन्धौ सदसद्दृष्टिहीनौ मदिरेत्यादि विशेषणद्वयं शापस्येति चानुग्रहे हेतुर्विवेचनीयः तयोरनुग्रहार्थायेति तौ प्रति स्वयोग्यस्यानुग्रहस्य योऽर्थः उपशान्तिभगवद्भक्तिभगवत्साक्षात्कारसंवलनरूपः तस्मै तं प्रापयितुं स्थावरत्वप्रापकं शापं दास्यन् अनुग्रहस्वभावत्वाद्देयां सोऽयमनुग्रहपरापराधं स्वशापादभिभूयस्वरूपेणैव पर्यवसितः स्यात् ततश्च तद्रूपोऽर्थः स्वयमेव व्यक्तीभवतीति भावः । तत्र च सति यत्खलु विशेषेणावृन्दावनान्तर्भाविभीमद्व्रजराजद्वाय्र्यर्जुनाख्यगोपसखनामवृक्षतया जन्म प्राप्ततुः यच्च येन येनावतारेणोत्स्यादिरीत्या परममहितलीलार्थी बालगोपालसाक्षात्कारादिकं लभेते तत्रैव सम्भावयामः तदर्थी तेन श्रीमद्देवर्षिणा तु "तोकेन जीवहरणं यदुलूखलिकायाः" इत्यादिरूपः निरर्गलकारुण्यमयतल्लीलागानं क्रियमाणमासीदिति तत्कारुण्यतादात्म्यापन्ननिजानुग्रहेणा तत्पर्यन्तोऽप्यर्थो दत्त इति जगौ तत्त्वतोऽन्तः कोपाभावेन गाथारूपेणाग्रे स्वयमवोचत् ॥ ७ ॥

श्रीमदेनान्धं दृष्ट्वा श्रीभ्रंशरूपं शापं दातुमादौ श्रीमदं निन्दति—न हीति पञ्चभिः । अभिजातिः सत्कुलं तदुद्भवः आभिजात्यो मदः आदिशब्दाद्विद्यादिमदः तथा चोक्तं "विद्यामदो धनमदः तथैवाभिजनो मदः । मदा एतेऽवलिप्तानां त एव हि सतां दमाः" यत्र श्रीमदे सति स्वत एव सद्दरूपाः प्राप्तेः तेषां कामक्रोधयोर्गादाहेतुत्वात् तयोश्च "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" इत्यादिना निन्दितत्वेन श्रीमद्गीतासूक्तत्वात् ॥ ८ ॥

(१) गतवान् इति पाठ० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्षीवाणौ मदान्धौ ॥ ५ ॥

पर्यधुः परिहितवत्यः ॥ ६ ॥ ७ ॥

जोष्यात् सेव्यात् विषयात् आभिजात्यादेः आदिशब्दो धनपरः बुद्धिभ्रंशः भ्रंशकरः रजोगुणा इत्युपचारः रजोगुणवर्धकः यत्र श्रीमदे मुख्ये सति स्त्रीद्यूतमधूनि भवन्ति तस्मादन्यो नेत्यन्वयः ॥ ८ ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे कौरव ! भगवान् देवर्षिर्यदृच्छया तत्रागतो देवी तौ ददर्श क्षीवाणौ मदान्धौ समबुध्यत ज्ञातवांश्च ॥ ५ ॥

कुत इत्यत्राह-तं दृष्ट्वेति । देव्यो विवस्त्रा अतएव तं दृष्ट्वा व्रीडिताः शापाच्छङ्किताः वासांस्यादधुः गुह्यकौ नैव पर्यधातां किन्तु विवस्त्रौ नग्नावेवासाताम् ॥ ६ ॥

सुरस्य कुबेरस्यात्मजौ दृष्ट्वा मदनाशरूपानुग्रहार्थम् शापं दास्यंस्तावदिदं वक्ष्यमाणमाह अनुग्रहार्थाय भगवद्भविष्यद्दर्शनरूपप्रयोजनाय चेति केचिद्व्याचक्षते ॥ ७ ॥

तदेवाह-नेति । जोष्यान्विषयान् जुषतः सेवमानस्य पुंसः श्रीमदात्सम्पत्प्रयुक्तमदादन्यः आभिजात्यादिः आदिशब्देन विद्यादिसङ्ग्रहः आभिजात्यादिजनितो मदः श्रीमदवद्बुद्धिभ्रंशकरः रजोगुणा कार्यकामक्रोधाविवर्धको न हि किन्तु श्रीमद एव नितरां बुद्धिभ्रंशकरः रजोगुणश्चेत्यर्थः । तदाह-यत्रेत्यादिना । यत्र यस्मिन् श्रीमदे सति स्त्रीसङ्गद्यूतमधुपानादिरूपदुर्व्यसनानि संभवन्ति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्षीवाणौ मत्तौ अश्लीलवचनौ वा ॥ ५ ॥

पर्यधुः सम्वेष्टितवत्यः ॥ ६—७ ॥

किं तद्गीतामिति तत्राह-नहीति । विषयान् जुषतः सेवमानस्य पुंसः जोष्यात् सेव्यात् विषयात् श्रीमदात् श्रिया धनसम्पदोत्पन्नमदादाभिजात्यादेरभिजनानिमित्तमदात् विद्यानिमित्तमदाद्वान्यः बुद्धिभ्रंशः ज्ञाननाशकरो रजोगुणः रजोविकारो नास्ति विषयादिरेव ज्ञाननाशकर इत्यर्थः । तत्कथमत्राह-यत्रेति । यत्र विषयाभिजात्यधनमदेषु स्त्रियो द्यूतमासवम् असुतर्प्यं मद्यपानं भवति हिशब्दोऽवधारणे " हि हेतावधारणे " इति वाक्यः । अन्यो नास्त्येव. मद्यपानादयो भवन्त्येवेत्यर्थः । आसव इति पाठे मद्यमित्यर्थः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्विधानामनुग्रहस्य योऽर्थः श्रीकृष्णादर्शनं तस्यै ॥ ७ ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विषयं निरूप्य शापहेतोः समागममाह—यदृच्छयेति । देवैरिति भाव्यर्थपरिज्ञानं देवयोनीनामुपकारकर्तृत्वं च भगवानिति सर्वसामर्थ्यं कार्यं भगवत्तानि भगवत्कृपापात्र तत्रेति तस्यां गङ्गायां कौरवेति सम्बोधनं महतोऽपि
पदः प्रमाद्यतीति स्वदृष्टान्तेन ज्ञानार्थम् आदौ देवावपश्यत्
क्षीबाणौ समबुद्ध्यत क्षीवशब्दः अकारान्तः नकारान्तो
क्षीवो मत्तः देवानां स्वर्पिसम्माननाभावायोगात् ॥ ५ ॥

ततो यज्जातं तदाह—तं दृष्ट्वेति । नारदं दृष्ट्वा देव्यस्त्र
विवस्त्राः सत्यः स्वस्मिन् नारदे च एकैकं धर्मं ज्ञात्वा
स्वस्मिन् लज्जा जाता कामोद्बोधेनानिष्टजनकत्वे शाप
वस्त्रपरिधानेनोभयं भवतीति शीघ्रं वासांसि क्षोभो न
ततः पूर्वमेव पर्यधुः गुह्यकावपि विवस्त्रौ तत्र नग्नदर्शन
मङ्गलं निषिद्धं स्त्रीसङ्गात् क्षोभकं च तत्रापि गुह्यकौ
ययोः ॥ ६ ॥

तथा सति तयोः शापोपक्रमाह—तौ दृष्ट्वेति । सुरा
भूत्वा मदिरामत्तौ असुरकार्यं कृतवन्तौ श्रीमदेन च
मनुष्यदोषं च प्राप्तवन्तौ अत उभयोः फलं महापुरुषसां
भवतीति "अत्यन्तनिन्दितैर्दोषैर्जन्तुः स्थावरतां व्रजेत्" इति
स्थावरत्वमेव युक्तमिति विचार्य कर्मणैवैतद्भविष्यतीति
कृपया परीतस्तयोरनुग्रहार्थं शापं दास्यन् इदं वक्ष
हेतुभूतं जगौ । अन्यापराधे बालकेन कृते पित्रा शिक्षणं
साध्यमनिष्टमपि फलं नात्यन्तं दुःखदं भवतीति कर्मविर
फलभावनातः पूर्वमेव स्वयं शापं दत्तवान् महापुरुष
उद्बुद्धं च जातम् अतो वृहद्वने वृक्षौ जातौ वृक्षाणां
अर्जुनजातीयानां मुक्तिः प्रसिद्धा । "नर्मदातीरसञ्जाताः सर
पादपाः । नर्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्"
वाक्यात् तत्रापि गतां छायाजनकौ महतो न
भिक्षापकौ च भविष्यतः फलं तूत्कृष्टं भविष्यत्येव अतः
फलात् शापः समीचीनः ॥ ७ ॥

ननु, शापेऽदत्ते कदाचिदुत्कृष्टकर्मापि सम्भवति ततः
क्षये मुक्तिरेव कदाचिद्भवेत् सत्सङ्गे भक्तिर्वा ततः कि
शापं दत्तवानित्याशङ्क्य तयोः सत्कर्मसत्सङ्गौ दुर्लभौ
तदर्थं तयोर्विद्यमानदोषस्य तदुभयाजनकत्वं निरूपयति
श्चभिः । नह्यन्य इति सन्मार्गः सत्सङ्गो वा सद्बुद्ध्या
श्रीमदेन तु सद्बुद्धिः कदापि नोत्पद्यते तदाह, अन्यो जो
जुषतः प्राणिनः बुद्धेर्भ्रंशहेतुर्न भवति बुद्धिरत्र सा
"सत्त्वात्सञ्जायते ज्ञानम्" इति तस्य बाधकं त्रिविधं गुणा
आश्रयनाशकम् आश्रयविरोधान्तरजनकं च तत्र श्री
भवति यद्यपि "इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः ।
हरते बुद्धेः सत्यस्तोयमिव हृदात्" इति. विषयमात्रसं
बुद्धिभ्रंशहेतुस्तत्रापि यथा श्रीमदात् बाह्याभ्यन्तरदोष
रूपात् अन्यः प्रकारान्तरेणोत्पन्नः विषयानुभवः सा
अन्तस्थाभावात् परिहार्यो भवति अयं त्वपरिहार्यः
नान्तर्बहिर्दोषो जन्यते इत्याह आभिजात्यादिरिति ।

"विद्यामदो धनमदस्तथैवाभिजनो मदः ।
एते मदामदान्धानां त एव हि सतां दमाः ॥

हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः ।
मन्यमानैरिमं देहमजरामृत्युनश्वरम् ॥ ९ ॥
देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ १० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

इति तत्र धनमदो मध्यमः उभयमदयोः साधकः यथा मध्यमं गृहं दग्धं सत् पार्श्वस्थितयोरपि दाहं सम्पादयति आभिजात्यस्य आदिः श्रीमदः ततोऽप्यनर्थसम्पादकः तस्य मदान्तरापेक्षया दुष्टविषयजनकत्वं हेतुत्वेनाह, यत्र स्त्रीद्यूतमासव इति अन्यान्यपि दूषणानि वक्ष्यति। ततः प्रथमं दोषत्रयमाह यदपरिहार्यं प्राणिनः सर्वहेतवः कायवाङ्मनांसि तत्र स्त्री कायनाशिका द्यूतमनृतं वाङ्नाशकम् आसवः बुद्धिनाशकः आसवो मदिरा द्यूतं पानं स्त्रिय इति अधर्मपादा अप्येते तत्रापि प्रथमं स्त्रीनिर्देशः तेष्वाधिक्यख्यापकः।

न तथास्य भवन्मोहो बन्धश्चान्यप्रसङ्गतः।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥

इति श्रीमदेस्त्वेते भवन्त्येव धनमदकृतस्त्रियोऽसत्य एव भवन्ति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दृष्ट्वा च वीणापाणौ मत्तौ सम वुद्ध्येन मत्तयोरनयोर्मम कृपा न फलवती भविष्यतीति तयोर्मदापनोदनार्थं वध्याविति भावः ॥ ५—६ ॥

अनुग्रहस्य अर्थः फलं भगवत्साक्षात्कारस्तदर्थं शापं दास्यन्निति यथा अतिवत्सलः पित्रादिकोऽतिमधुरं क्षीरादिकं भोजयिष्यन् पुत्रादिकमतिनिद्राणमालक्ष्य तन्निद्राभङ्गार्थं नखक्षताघातं करोति तद्वदित्यर्थः। जगाविमन्येऽपि श्रुत्वा स्वहितं जानन्त्विति भावः ॥ ७ ॥

जोष्यान् प्रियविषयान् जुषतः सेवमानस्य पुंसः श्रीमदान्धस्य आभिजात्यादिर्बुद्धिभ्रंशको हि निश्चयेन न भवति यथा श्रीमदोऽवश्यमेव बुद्धिभ्रंशयतीत्यर्थः। अभिजातिः सत्कुलं तदुद्भवः आदिशब्दाद्विद्यादिमदः रजोगुणोद्भवत्वाद्रजोगुणः श्रीमदे सति यथा पापानि जायन्ते तथा नान्यमेत्याह-यत्रेति, चतुर्भिः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तौ वीणापाणौ समबुद्ध्यत सम्यक् ज्ञातवान् ॥ ५ ॥

तन्मतत्वज्ञापकं गङ्गायामन्तः प्रविश्य युवतिभिश्चिक्रीडतुरित्युक्तमथ द्वितीयं तन्मतत्वज्ञापकमाह—तं दृष्ट्वेति। तं दृष्ट्वा देव्यो वासांसि पर्यधुः गुह्यकौ नैवपर्यधत्तामिति ॥ ६ ॥



मदनाशपूर्वकव्रजवासगोपगोपीश्रीकृष्णादर्शनरूपानुग्रहार्थम् ॥ ७ ॥

जोष्यान् प्रियान् विषयान् जुषतो जनस्य बुद्धिं भ्रंशयतीति बुद्धिभ्रंशः बुद्धिनाशहेतुः रजोगुणः कामक्रोधलोभजनकश्च श्रीमदात् संपज्जनितान्मदात् अन्यो मदः आभिजात्यादिः सत्कुलविद्यादिजनितो न हि किन्तु श्रीमद एव यत्र श्रीमदे स्त्री द्यूतं च आसवश्च उपादीयते स्त्रीद्यूतमिति समाहारद्वन्द्वः ॥ ८ ॥

---

भाषा टीका।

हे कौरव ! ( कुरुवंश में होन वारे ! ) हे राजन् ! इतने में अकस्मात् भगवान् नारदजी आय पहुँचे और देखन लगे तब उनकी चेष्टा सों देवर्षि श्रीनारदजी जान गये, कि ये दोनों मतवारे होय रहे हैं ॥ ५ ॥

श्रीनारदजी कूं देखिकें के सगरी देवांगना लज्जित होय कें शाप देवे की शंका सों जल्दी सों वस्त्रन कों धारण करत भई, और उन मतवारे दोनों गुह्यकन ने वस्त्र नहीं धारण कीने और वृक्ष सरीके नग्न ठाडे रहे ॥ ६ ॥

तब श्रीनारदजी उन दोनों कुबेर के पुत्रन कूं मदिरामत्त श्रीमदांध देखिकें उन दोउन के अनुग्रह के तांई शाप देवे कूं ऐसें गावत भये ॥ ७ ॥

नारद उवाच ॥

श्रीनारदजी बोले, कि—ग्राम्य विषयन कों भोगन वारे पुरुषन की बुद्धि को भ्रंश करने वारो श्रीमदसों उत्पन्न रजोगुण और आभिजात्य ( जातिकृत बडप्पन ) सदृश अन्य कोई पदार्थ नहीं है। जा धन के होयवे सों स्त्रीप्रसंग, जुआ खेलनो, मदिरा पान, इत्यादिक अनर्थ होवें हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

इमं नश्वरं देहमजरामृत्यु अजरश्च अमृत्युश्च यथा तथा मन्यमानैः ॥ ९ ॥

नरदेवभूदेवसंज्ञितमपि श्वादिभिर्भक्षितं विट्संज्ञितं दग्धं भस्मसंज्ञितमन्यदा कृमिसंज्ञितं तत्कृते तदर्थं यो भूतध्रुक् भूतद्रोग्धा। यतो भूतद्रोहान्निरयो भवति स किं स्वार्थं वेद नैव वेदेत्यर्थः ॥ १० ॥

देहः किमन्नदातुः स्वं निषेक्तुर्मातुरेव च ।
मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥ ११ ॥
एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ।
को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृते ऽसतः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीं देहेऽहम्भावोऽपि न घटत इत्याह-देह इति । निषेक्तुः पितुः मातुः पितुर्वा मातामहस्य पुत्रिकाकरणे ॥ ११ ॥

अव्यक्तप्रभवाप्ययमव्यक्तात्प्रभवस्तस्मिन्नेवाऽप्ययो यस्य तमात्मसात्कृत्वा आत्मेति मत्वा असतो मूढादृते ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च महापापजनकं परद्रोहलक्षणं सुदुष्टं कर्मात्र घटत इत्याह—हन्यन्त इति । भोजनसुखार्थं पशव इति साक्षात् भक्ष्याभक्ष्यविचारोऽपि निरस्तः निर्दयैरसद्भिः यतः अजितेन्द्रियैः अत एव इमं साक्षाज्जरादिधर्मकमपि तत्र च प्रतिक्षणपरिणामित्वेन नाशशीलमपि अजरामृत्युवत्स्थिवति मन्यमानैः टीकायां अजरश्च योऽदेहविशेषः पश्चान्मृत्युरप्यन्यः तयोः द्वन्द्वैक्यं तद्वन्मन्यमानैरित्यर्थः ॥ ९ ॥

स्वस्य अर्थे हितमित्यर्थः ॥ १० ॥

देहे ममता निर्द्धारणमपि न घटेत बहुविप्रतिपत्तेरित्याह देह इति-स्वं धनं स्वीयमित्यर्थः । बलिनः बलाद्दिष्टयाद्यर्थं गृह्णतः एवशब्दस्यापि पूर्वैरप्यन्वयः क्रेतुर्वा बलिनोऽग्नेरिति वा बलिनः क्रेतुरग्नेरिति वा पाठः ॥ ११ ॥

एवं पूर्वोक्तप्रकारेण देहं साधारणमपि विद्वान् जानन् तथा अव्यक्तं प्रधानपरकारणावस्थायामविविक्तं भूतपञ्चकं तत्र प्रभवाप्ययौ यस्येत्यापातमात्रप्रतीतमपि जानन् को नाम तमात्मत्वेनाङ्गीकृत्य जन्तून् हन्ति न कोपि असन्तस्तु जानन्तो ऽपि घ्नन्तीत्यर्थः ॥ १२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अदग्धाऽभक्षितस्य, श्वादिभिर्भक्षितस्य, दग्धस्य, च देहस्य कृमिविड्भस्मावस्थाः भवन्ति भूतधुक् भूतद्रोही यतो द्रोहात् ॥ १० ॥

निषेक्तुर्गर्भाऽऽधातुः क्रेतुः द्रव्यप्रदानेन स्वीकर्तुः बलिनः बलात् गृहीतुः ॥ ११ ॥

ऋतेऽसतः असता विना ॥ १२ ॥ १३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च यत्र श्रीमदे मर्तीमं देहं जरादिरहितं मन्यमानैरत एवाजितेन्द्रियैरत एव निर्दयैः पशवो हन्यन्ते ॥ ९ ॥

इमामित्यनेनाभिप्रेतं विशदयति-देवेति । देवसंज्ञितमपि अन्ते भूदेवस्वर्देवादिसञ्ज्ञितमपि शरीरमन्ते तदारम्भकप्रारब्धावसाने कृम्यादिसंज्ञितमेव दग्धं चेद्भस्मसंज्ञितं श्वादिभिः चेद्विट्संज्ञिकमित्यर्थः । तत्कृते एवंविधशरीरसुखार्थं यो भूतानि द्रुह्यतीति तथा यतो भूतद्रोहाद्धिरयो नरकः स पुमान् वेद न किमपि हितमहितञ्च जानातीत्यर्थः ॥ १० ॥

नन्वन्ते यत्किञ्चित्संज्ञिकमस्तु जीवद्दशायां स्वाधीनत्वात् सुखार्थं यतितव्यमेवेत्यत्र तद्दशायामपि न नियतं स्वत्वमित्याह-देह इति । अग्नेः शुनोपि वाने दृष्टान्तार्थं देहो यथाग्नेः शुनश्च स्वं तथा जीवद्दशायामपि नियमो नान्नदात्रादीनां न भवतीत्यर्थः । किमित्यनेन लोके प्रसिद्धिः द्योत्यते नाश परिणामरूपत्वाद्यस्याप्नेन वर्द्धते तस्य स्वं तथा रेतः प्रसेक्तुर्गर्भाधातुः तथा मातुः पितुर्मातामहस्य च पुत्रि काले तथा सङ्कल्पात् पितृवन्मातृपितरं प्रत्यपि पारतन्त्र्यात् दिति भावः क्रेतुर्द्रव्यदानेन स्वीकर्तुः बलिनः बलाद्गृहीतुः ।

एवं साधारणं नत्वेकस्यैव नियतस्वमव्यक्तात् प्रकृतेः उत्पत्तिस्तस्मिन्नेवाप्ययो लयश्च यस्य तमिमं देहमात्मसात् आत्मेति मत्वा असतो मूढानृते विना विद्वान् कः पुमान् हन्ति देहाभिमानिनश्चेत् हन्युर्विद्वांस्तु न हन्यादेवेत्यर्थः । यद्वा मिमं देहं साधारणमव्यक्तप्रभवाप्ययं च विद्वान् जानंश्चेत् असाधारणदेहात्माभिमानिनः पुरुषाद्विना कोपि पुमानात्म कृत्वा आत्मत्वेन मत्वा जन्तून् हन्यात् एवं विद्वांस्तु पुनर्देहा भिमानेन न हन्यात् साधारणमविद्वांसस्तु देहात्माभिमानेन रित्यर्थः । अविद्वानिति वा छेदः तदा साधारणमव्यक्तप्रभव यश्चाविद्वानजानंश्चरकुतस्तज्ज्ञान्विना अन्यः कश्चित् देहाभि मानेन हन्यादिति वा अन्वयः ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सन्तु स्वर्गादयः ततः किमत्राह-हन्यन्त इति । यत्र स्वर्गे सत्सु इमं नश्वरं देहमजरामृत्युनश्वरं जरामृत्युरहितं मन्य पशवो भूतानि हननमत्रबहुविधं देहवियोगकरणं धना देशोच्चाटनम् अभिमानभङ्गकरणमित्यादि ॥ ९ ॥

यज्ञे पश्वालम्भनवत् परलोकविषयत्वेन पुण्यसाध हिंसनं किं न स्यादित्यत्राह-भूतध्रुगिति । नायं स्वार्थः पारलौकिकप्राप्तानन्द इत्यत्राह, किमिति । किंशब्दः प्रश्ने "प्रश्ने क्षेपे विकल्पे किम्"इति यादवः । वेदान्विनज्ञाने रेण किमपि न जानातीत्यन्वयः । किमिति नवेदेति निरय इति । यतो निर्गमनरहितं तमो भवतीत्यर्थः । "भय

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इतिधातुः। हिंसामात्रेण तमसोऽभावेपि हिंसाविशेषेण तमः स्यात् तथा हि नित्यभूतत्वात्सर्वोत्कृष्टं ब्रह्म तद्द्रोहः सर्वेशस्य ब्रह्मणोंऽशेन दुःखिना जीवेन सहैकत्वकथनोपासने प्रथमहिंसा सार्वज्ञ्यादिगुणान् श्रुतानपहाय निर्गुणत्वचिन्तनं द्वितीया तदवताराणां दुःखश्रमाज्ञानादिकल्पनं तृतीया प्रत्यक्षादि प्रमाणसिद्धस्य प्रपञ्चस्य तद्विवर्तत्वकथनं चतुर्थीत्यादिकम् एवंविधस्य तमःप्राप्तिः स्यादिति निरूप्यत इत्यर्थः ॥ १० ॥

अनन्तरश्लोके देहस्यानित्यत्वमुच्यते देहस्य जगवन्तः पातित्वेन जगद्ब्रह्मविवर्तमिति कथयतः कथं तम इत्याशङ्क्यात्र साधारणत्वमेवोच्यते प्राप्तिसद्भावादित्याशयेनाह, देह इति. अन्नदातुः पोषयितुः निषेक्तुः गर्भाधानकर्तुः मातुः पितुः मातामहस्य विक्रेतुः द्रव्यादिप्रदानेन बलिनः बलात्कारेण ग्रहीतुः ॥ ११ ॥

अव्यक्तात्प्रकृतेः प्रभव उत्पत्तिः अव्यक्ते अप्ययः प्रलयो यस्य स तथा तम् आत्मसात् आत्मत्वेन असतः ऋते ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

हन्यन्त इति अजरश्च यो देहविशेषः पश्चादमृत्युरप्यन्यस्तथा योरैक्यं तन्मन्यमानैरित्यर्थः ॥ ९—१० ॥

देह इति स्वं वह्निरिति शेषः ॥ ११—२४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दोषान्तरमप्याह—हन्यन्ते पशवो यत्रेति। यत्र श्रीमदे प्रत्यहं भक्षणार्थं पशवो हन्यन्ते निर्दयैरिति बाला आमा अपि हन्यन्त इति सूचितं कोमलमांसत्वात् किञ्च अजितात्मभिः वाणयैव पापानि क्रियन्ते "नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति" इत्यत्र निरूपणात् तेषां स्वेष्टसाधनताज्ञानवतां कथं स्वानिष्टे प्रवृत्तिरिति चेत्तत्राह—मन्यमानैरिति। पूर्वोक्तप्रकारेण विषयभोगः स्वभावतः सुखहेतुर्भवति पर्यवसाने परलोके च दुःखहेतुर्भवति स च परलोकोऽस्य देहस्य नाशे ते हि धनमदेन वस्तुतत्त्वं न जानन्ति अत इदं शरीरं नश्वरमपि अजरामृत्युजानन्ति जरामृत्युरहितम् ॥ ९ ॥

ननु, सत्यमेव देवा अजरामरा इति तत्राह—देवसंज्ञितमपीति यथा अजशब्दः अजायां न योगेन वर्तते किन्तु ब्रह्म कदाचित्तेन रूपेण सोमाहरणार्थं गतवदिति तथा अमरानिर्जरा इत्यपि यथा मनुष्याणां यावता कालेन जरामृत्युर्वा भवति तथा न भवतीति यथा न स्वपिति पश्चाच्छायी प्रथमप्रबोधी च तमाहुर्न स्वपितीति अधिकारिणः तथात्वाद्वा वस्तुतस्तु देहस्याहं देवसंज्ञितमप्यन्ततस्तदेव भवति। अतः अन्ते कृमिविड्भस्मसंज्ञितमेव भवति देहस्य त्रिविधा प्रतिपत्तिः दह्यते भक्ष्यते विशीर्यते वा विशीर्णपक्षे कृमयो भवन्ति भक्षणे ततो विड् भवति दाहे भस्म पूर्वं देवसंज्ञामपि प्राप्य अन्ते कृमिविड्भस्म संज्ञाः प्राप्नोति। एवं सति यस्तादृशदेहकृते भूतध्रुक् स किं स्वार्थं वेद अपि तु न वेद यतो भूतद्रोहान्नरकपातः विशेषाकारेण हननमुक्तमिति श्रीमदस्य तदव्यभिचारात् प्रकृतेपि तदस्तीति हिंसा निन्दा अनेन दृष्टान्तेन स्त्रीसेवका अपि स्वार्थं न विदुरित्युक्तम्। अतः स्वार्थापरिज्ञानात् धर्मसत्सङ्गाभावात् शाप उचित एवेति भावः अनेन देहार्थं प्रयत्नो न कर्तव्य इत्यर्थादुक्तम् ॥ १० ॥

तच्छास्त्रान्तरे विरुध्यति "आत्मानं सततं रक्षेद्दारैरपि धनैरपि" इति "तस्मादस्य वधो राजन्! सर्वार्थवध उच्यते" इत्यादिवाक्यैः रक्षाया अवश्यविधानात्तत्राह—देहः किमन्नदातुः स्वमिति। अविचाराद्देहरक्षार्थं प्रयत्नवचनानि विचारे तु न रक्षणीयं स्यादिति सन्देहजनकान् पक्षानाह—देहः केन सम्बन्धेन सम्बन्धी भवतीति विचारणीयं तत्रात्मा न भवति। अहंविवेकेपि तद्भेददर्शनात् आत्मीयत्वं तु भवति साचात्मीयता किं निबन्धना बहूनामेवैकस्मिन् शरीरे आत्मीयत्वबुद्धिः शरीरस्योत्पत्तिर्द्विविधा आद्या प्रत्यहं च जायमाना प्रत्यहं चेत् देहोऽन्नदातुर्भवति अन्नमयत्वाच्च देहस्य आद्यश्चेन्निषेक्तुः पितुः लोकप्रतीत्या। चेदुत्पत्तिः मातुर्भवति परलोकसाधकत्वं मातुः पितुर्भवति पुत्रिकापुत्रपक्षे तथैव शास्त्रार्थत्वात् एवं स्वरूपस्थितिर्धर्मविकास्थितिमप्याह—क्रेतुर्वा बलिन इति। यो वा विक्रीणीते यो वा बध्वा गृह्णाति सत्यविचारैश्चेत् अग्नेः शुनोऽथवेति कृमिपक्षे न स्वत्वं कस्यचित् ॥ ११ ॥

ततः किमत आह—एवमिति। एवं सर्वेषां साधारणं देहम् आत्मसात्कृत्वा कोवा जन्तून् हन्तीति सम्बन्धः तत्रापि। विद्वान् यतोऽयं देहः साधारणः वस्तुतस्त्वयं देहो न पूर्वोक्तानां मध्ये कस्यचिदपि भवितुमर्हति यतः अव्यक्तमेव प्रभवः उत्पत्तिस्थानमप्ययस्थानं च नन्वेतादृशाघातका अपि बहवो दृश्यन्त इति चेत्तत्राह—असत ऋत इति। ये सच्छब्दवाच्या देवाः सन्तोपि तेनैवंविधा इत्यर्थः ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

जरामृत्युभ्यां दृष्टाभ्यामपि इमं देहं न नश्वरं मन्यमानैः ॥ ९ ॥

नरदेवभूदेवसंज्ञितमपि अन्ते मरणान्तरं श्वादिभिरभक्षितं पुत्रादिभिरदग्धं चेत्कृमिसंज्ञितं भक्षितं चेत् विट्संज्ञितं दग्धं चेत् भस्मसंज्ञितं भवेत् तस्य देहस्य कृते यो भूतध्रुक् यतो भूतद्रोहात् ॥ १० ॥

देहे ममताभिमानमपि न घटते बहुविप्रतिपत्तेरित्याह, देह इति। निषेक्तुः पितुः स्वं धनं मातुः पितुः मातामहस्य वा पुत्रिकाकरणे सति बलिनो बलाद्विष्टचर्यं गृह्णतः ॥ ११ ॥

अव्यक्तात्प्रभवस्तस्मिन्नेवाप्ययो यस्य तम् आत्मसात्कृत्वा आत्मत्वेनाङ्गीकृत्य असतोऽज्ञान् विना ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च यत्र श्रीमदे निर्दयैः पशवो हन्यन्ते निर्दयत्वे हेतुमाह—अजितात्मभिः न जितः आत्मा हिंसापूर्वकविषयप्रवणं मनो यैस्तैः ननु प्राणहिंसया नश्वरं देहं ते किं विचार्य नपंयन्त्यत आह—नश्वरमपीमं देहम् अजरामृत्यु अजरश्च अमृत्युश्च यथा भवति तथा मन्यमानैरिति ॥ ९ ॥

*( मन्यमानैरिमं देहमजरामृत्युनश्वरम् ।
देहसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितम् ) ॥ ० ॥
असतः श्रीमदान्धस्य दारिद्र्यं (१) परमञ्जनम् ।
आत्मौपम्येन भूतानि दरिद्रः परमीक्षते ॥ १३ ॥
यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ।
जीवसाम्यं गतो लिङ्गैर्न तथा विद्धकण्टकः ॥ १४ ॥
दरिद्रो निरहंस्तम्भो मुक्तः सर्वमदैरिह ।
कृच्छ्रं यदृच्छयाऽऽप्नोति तद्धि तस्य परं तपः ॥ १५ ॥
नित्यं क्षुत्क्षामदेहस्य दरिद्रस्याऽन्नकाङ्क्षिणः ।
इन्द्रियाण्यनुशुष्यन्ति हिंसापि विनिवर्त्तते ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च यत् नरदेवभूदेवादिसंज्ञितमपि ,अन्ते कृमिविड्भस्मसंज्ञितं भवति श्वादिभिर्भक्षितं विट संज्ञितं दग्धं भस्मसंज्ञितमन्यदा कृमिसंज्ञितं च भवति तत्कृते एवंविधशरीरकृते यो भूतधुक् भूतानि द्रुह्यतीति स तथा यतो भूतद्रोहान्निरयो नरकप्राप्तिः स्यात्स किं स्वार्थं वेद नैव वेद ॥ १० ॥

अन्नप्रदादिसाधारणो देहे मदीयोयमित्यपि न सम्भवतीत्याह देह इत्यादिना ॥ ११ ॥

अव्यक्तात्प्रकृतेः प्रभवस्तस्मिन्नेवाप्ययो यस्य तद् अव्यक्तप्रभवाप्ययम् ॥ १२ ॥ १३ ॥

---

भाषा टीका ।

जा धन कों पायके निर्दय अजितेन्द्रिय लोग या देह कूं अजर अमर नित्य मानकें पशून की हिंसा करें हैं ॥ ६ ॥

अब या समय में या देह कूं भलेंई देव कह दीजिये पर अंत में तौ ये कृमि, विष्ठा, अथवा भस्म होय जाय है। ता देह के लिये भूत प्राणीन सों द्रोह करन वारो हू कहा अपने स्वार्थ कूं जानें हैं ? जाके हेत नरक में गिरे है ॥१०॥

भलां प्रथम ये तौ विचारो, कि—जाके ताईं इतनो अनर्थ करो हो सो ये देह कौन को है ? कहा अन्न देवे वारे को देह ? अथवा अपनों है ? कि गर्भाधान करन वारे पिता को है। कि ? उदर में धारण करन वारी माता को है । कि ? माता के पिता ( नाना ) को है। अथवा कोई बली को है, कि जो जोर वारी अपनों काम कराय लेवे है । अथवा मोल लेवे वारे स्वामी को है। कि ? अग्नि को है। अथवा कुत्तान को है ?। पहिलें याई को निश्चै नहीं होय सके ॥ ११ ॥

ऐसो सर्व साधारण प्रकृति सों उत्पन्न होनवारो प्रकृति में लीन होनवारो ऐसे या देह को अपन करके खोटेन के विना को जंतून को पीडा देवेंगो ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं श्रीमदविचेष्टितमुक्त्वा तत्प्रतीकारं निश्चिनोति इति परं श्रेष्ठं दारिद्र्यमेव केवलमिति वा कुत इत्यत आत्मौपम्येनेति ततो न द्रुह्यतीति भावः ॥ १३ ॥

सदृष्टान्तमाह—यथेति । मुखम्लान्यादिलिङ्गैः सर्वेषां जीवानां सुखदुःखे समे इति ज्ञातवानित्यर्थः ॥ १४ ॥

किञ्च दारिद्र्यं मोक्षमपि साधयतीत्याह—दरिद्र इति श्लोकचतुष्टयेन निरहंस्तम्भो निर्गतोऽहङ्काररूपः स्तम्भो यस्मात्सः ॥ १५ ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो यतासाधोरन्यस्यान्यथापि कथञ्चिद् हितं स्यात् श्रीमत्तस्य त्वसाधोर्दारिद्र्यमेवेत्याह—असत इत्यादि । परममिति निदानविपर्ययन्यायेन ॥ १३ ॥

यतो यथेति जन्तोः कस्यचिदपि प्राणिनः तां कण्टकवेधकृतां नेच्छति तस्य सा भवत्विति न वाञ्छतीत्यर्थः । यतो लिङ्गैः मुखम्लान्यादिभिर्जीवस्य तस्य साम्यं निजदुःखानुसारेण कृपोदयेन तुल्यावस्थत्वं गतः प्राप्तो भवति आविद्धकण्टकः कण्टकेनाविद्ध इत्यर्थः । राजदन्तादिवत्परनिपातः यद्वा अविद्धः अभग्नः कण्टको यत्र सः ॥ १४ ॥

अहङ्कारेण धनित्वादिगर्वेण यस्स्तम्भो नम्रत्वाभावः निर्गतो यस्मात् अतः सर्वैर्धनादिसंबन्धिभिर्मदैश्चिर्विवर्जितो भवति किं च अन्नाद्यभावेन यदृच्छया स्वभावत एव प्राप्नोति

* इति विजयध्वजतीर्थीयेऽधिकपाठः (१) परमाञ्जनमिति वीर०

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यद् तद् तप इति अभिमाननाशकत्वात् तद्य परं श्रेष्ठमिति प्रसिद्धतपोवदभिमानादिहेतुत्वात् ॥ १५ ॥

तस्येन्द्रियजयादिकं च तपो साध्यमपि स्वतो भवतीत्याह—नित्यमिति। अन्नकाङ्क्षिणः अदयमानेच्छोः अनु निरन्तरं शुष्यन्ति विषयरसानुपरमन्तीत्यर्थः। अत एव हिंसाविषयोपभोगार्थपरपीडनादिलक्षणाप्युपरमति एवं श्रीमदादजितात्मता ततश्च हिंसादिकं तद्विपरीते तु दारिद्र्ये हिंसादिनिवर्तकं जितात्मत्वमित्युक्तम् ॥१६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

लिङ्गैर्हेतुभिर्जीवसाम्यं गतः इति जीवानां स्वस्य च तुल्यतां मन्वानः अविद्धकण्टक इति पदं कण्टकाविद्धः ॥ १४ ॥

निरहंस्तम्भः अहङ्कारस्तम्भरहितः ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं श्रीमदस्यानर्थमुक्तां प्रदर्श्याथ तत्प्रतीकारार्थं निश्चिनोति—असत इति। तत्कुतः इत्यत आह; आत्मौपम्येनेति. दरिद्रः केवलमात्मदृष्टान्तेन भूतानीक्षते यथा स्वस्याघातादिना दुःखादिकं तथा प्राणिमात्रस्यापीत्यात्मौपम्येन भूतानि पश्यन् तेभ्यो द्रुह्यतीत्यर्थः ॥ १३ ॥

उक्तमेवार्थं सदृष्टान्तमाह—यथेति। यथा कण्टकविद्धाङ्घ्रिः लिङ्गैरन्तर्गतसुखदुःखादिव्यञ्जकमुखविकासम्लानतादिनिमित्तैर्जीवसाम्यं गतः स्वेतरजीवानां स्वस्य च तौल्यं मन्वानः तां कण्टकवेधजां व्यथां दुःखं कण्टकवेधां वा नेच्छति तथैवाविद्धकण्टको नेच्छतीति नेत्यर्थः ॥ १४ ॥

किञ्च दारिद्र्यं परम्परया मुक्तिसाधनमपीत्याह—दरिद्र इति चतुर्भिः। निरहंस्तम्भः निर्गताहङ्काररूपस्तम्भः सर्वैरभिजनवित्तविद्याप्रयुक्तैर्मदैर्मुक्तः यदृच्छया स्वप्रयत्नमन्तरेणैव कृच्छ्रं कायशोषणादिकं प्राप्नोति तत्कृत्यमेवास्य केवलमुत्कृष्टं वा तपः ॥१५॥

तदेवाह—नित्यमिति। क्षुधा क्षामः क्षीणो देहो यस्य तस्य तत्र हेतुरन्नकाङ्क्षिणः तत्रापि हेतुर्दरिद्रस्येन्द्रियाणि विशुष्यन्त्यत एव हिंसा च निवर्तते ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रसङ्गात्प्रागुक्तं स्मारयति—मन्यमानैरिति। कीदृशं प्रथमं देवसञ्ज्ञितं मरणो कृम्यादिसंज्ञितं भवति देवोऽयं भट्टारकोऽयं कृमिकिटः विष्ठाकृष्णः भस्मित इति ॥ ० ॥

ननु, श्रीमदान्धस्याप्यपरिहाराय किमौषधं? तर्हीति तत्राह, असत इति। असतः हननादिकर्तुः दारिद्र्यं दरिद्रभावः कथं तदञ्जनं आम्यनाशनमभूदिति, तत्राह, आत्मेति. आत्मौपम्येन आत्मसाम्येन भूतानि सुखासुखसंसक्तानि ॥ १३ ॥

अत्र दृष्टान्तमाह—यथेति। तां कण्टकव्यथां जन्तोरात्मव्यतिरिक्तस्य तल्लिङ्गैः सुखदुःखविकासकार्श्यादिसूचकैर्जीवेषु सुखादिमत्तया साम्यं साधर्म्यं गतो ज्ञातवानविद्धकण्टकस्तथा न ॥१४॥

ननु, दारिद्र्यं परमं सुखमित्युक्तं तस्यापि दुःखानुभवः प्रतीयते तत्कथमिति तत्राह—दरिद्र इति। निरहं स्तम्भः अहंमानवर्जितः विद्यादिसर्वमदैर्मुक्तः दरिद्रः यदृच्छया दैवेच्छया यत्कृच्छ्रमाप्नोति तत्कृच्छ्रमस्य दारिद्रस्य परं तपो भवति "एतद्वै परं तपो यद्व्याधितस्तप्यते" इति श्रुतिर्हिशब्दगृहीता ॥ १५ ॥

ननु, कृच्छ्रानुभवः कथङ्कारं तपोभवतीत्याशङ्क्य तं प्रकारं दर्शयति—नित्यमिति। अनुशुष्यन्ति देहशोषमनुशोषं गच्छन्ति इन्द्रियप्राबल्यदौर्बल्ये प्रवृत्तिनिवृत्ती स्यातां ते चान्नसत्ताभावाद्विना स्याताम् अन्नाभावादिन्द्रियप्राबल्यसाध्या हिंसालक्षणा प्रवृत्तिर्नश्यतीत्यर्थः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह—असत इति। असतो लक्षणं श्रीमदान्धस्येति, श्रीमदेन अन्धस्य यथाहि भगवान् "यस्यानुग्रहमिच्छामि हरिष्ये तद्धनं शनैः" इति। तथा नारदोऽप्याह—यथा काचकमलादिना अन्धस्याऽञ्जने दत्ते दृष्टिर्भवति न तु स्वभावत एवान्धस्य अयं च श्रीमदेनान्धः श्रिया अभावो येनैव भवति. तदेव अञ्जनं भवति तत् दारिद्र्यमेव दारिद्र्यं नाम दुरदृष्टसहितसम्पत्त्यभावः सन्त्यञ्जनान्यन्यान्यपि व्याध्यादीनि परं दारिद्र्यं परममञ्जनं न केवलं दारिद्र्यस्य दोषनिवर्तकत्वं किन्तु गुणजनकत्वमपीत्याह—आत्मौपम्येनेति। आत्मा उपमानं यत्र तज्ज्ञानमात्मौपम्यं यथा आत्मनि सुखदुःखानुभवः तथा सर्वस्येत्यनुसन्धानं यथा आत्मसुखार्थं यतते दुःखनिवृत्त्यर्थं च न तु दुःखार्थं तथा सर्वेषामपि सुखदुःखाभावार्थं यतत इत्यर्थः ॥ १३ ॥

आत्मौपम्येन भूतानां दर्शनं दरिद्रस्यैव नान्यस्येत्यत्र दृष्टान्तमाह—यथेति। दारिद्र्यं सर्वदुःखनिदानं दारिद्र्यं गतः सर्वाण्येव दुःखान्यनुभवति नत्वदरिद्रः प्रतीकारबाहुल्यात् स्वानुभवेनैव कण्टकेन विद्धाङ्घ्रिः कण्टकव्यथामन्यस्मै न वाञ्छति जातामपि दूरीकरोति लिङ्गैः स्वानुभवैः परदुःखज्ञापकैः कृत्वा जीवसाम्यं गतः सर्वेषु जीवेषु समत्वं प्राप्तः न तथा अविद्धकण्टकः समत्वं प्राप्नोति ॥ १४ ॥

ननु, तथापि दारिद्र्यस्य दुःखरूपत्वात् फलोत्तमत्वेऽपि स्वरूपतो ऽनिष्टरूपत्वात् कथं तदुच्यते? इत्याशङ्क्याह—दरिद्र इति, दारिद्र्यं मोक्षसाधकम् अतः स्वरूपतो दुःखरूपमपि तपोवत् आश्रयणीयमेव. तस्य मोक्षसाधकत्वमाह—दरिद्रः प्रथमतो निरहंस्तम्भः अहंलक्षणः स्तम्भो निर्गतो यस्मात् मोक्षे अहङ्काराभावः कारणम् अहमित्यस्य आत्मपरत्वव्यावृत्त्यर्थं स्तम्भपदम् अहङ्कारस्तम्भेनैव अज्ञानगृहं सुस्थिरं भवति। किञ्च, सर्वमदैरपि मुक्तो भवति यदृच्छयैव च कृच्छ्रं क्षुधादिकं प्राप्नोति ततः किमत आह—तद्धितस्य परन्तप इति। यत्कष्टेन तपः कर्तव्यं तत्तस्य स्वभावत एव सम्पद्यते विहितत्वं स्वप्रयोजकम् ॥ १५ ॥

किञ्च, मोक्षे इन्द्रियजयः योगशास्त्रसिद्धः साधनान्तरेण यथा साङ्ख्ये अहङ्काराभावः दारिद्र्ये इन्द्रियजयः स्वभावत एव भवति

दरिद्रस्यैव युज्यन्ते साधवः समदर्शिनः ।
सद्भिः क्षिणोति [1]तं तर्षं तत [2]आराद्विशुद्ध्यति ॥ १७ ॥
साधूनां समचित्तानां मुकुन्दचरणैषिणाम् ।
उपेक्ष्यैः किन्धनस्तम्भैरसद्भिरसदाश्रयैः ॥ १८ ॥
तदहम्मत्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः ।
तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः ॥ १९ ॥
यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ।
न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥ २० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाह—नित्यमिति । सर्वदा क्षुत्क्षामदेहस्य अन्नकाङ्क्षिणः इन्द्रियाण्याशु शुष्यन्ति "विषया विनिवर्त्तन्ते निराहारस्य देहिनः" इति वाक्यात् दरिद्रस्येति हेतुः इन्द्रियप्रागल्भ्याभावादेव हिंसा निवर्तते ज्ञानेन्द्रियप्रागल्भ्याभावाच्च तद्धेतुभूता तृष्णापि विषयाभावाच्च ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीमद्रोगप्रतीकारं निश्चिनोति—असत इति । परं केवलम् ॥१३॥

लिङ्गैर्मुखम्लान्यादिभिर्दृष्टैर्जीवे परस्मिन् साम्यङ्गतः पूर्वानुभूतस्वव्यथासादृश्यं तत्रानुमिमान इत्यर्थः । अविद्धकण्टकः कण्टकेनाविद्धः राजदन्तादिः ॥ १४ ॥

दारिद्र्ये सति मोक्षसाधनानि स्वत एव भवन्तीत्याह—दरिद्र इति त्रिभिः । अहङ्कारेण धनित्वादिगर्वेण यः स्तम्भः नम्रत्वाभावः । स निर्गतो यस्मात् सः सर्वमदैर्मुक्त इति दरिद्रस्य सर्वैरनादृतत्वात् सत्कुलमदादयोऽपि प्रायो नश्यन्तीति भावः ॥ १५ ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लिङ्गैस्तद्दुःखचेष्टाभिः ॥ १४ ॥

निर्गतोऽहङ्कारात्मकस्तम्भो यस्मात्स निरहंस्तम्भः ॥१५॥१६॥

---

### भाषा टीका

धनके मदसों मदान्ध ऐसे असत पुरुषन कों दारिद्र्य ही परम अंजन है । जो दरिद्री है सो विचारो अपने सरीको पराये को देखे है ॥ १३ ॥

जैसें जाकों कांटो लग्यो होय सो पुरुष दूसरे प्राणी के ताईं भी वा व्यथा कों नहीं चाहै है । काहे सो, कि—सुख दुःखादि की समता के अनुमान सों अपने सरीको जाने हैं । तैसें जाकों कांटो नही लग्यो होय सो नहीं जान सके ॥१४॥

दरिद्री विचारो निरभिमान और अगर्वीलो और सर्व मदों से मुक्त होयकें हरीच्छा सों जो कछु कष्ट सों पावै है, वाको परम तप है ॥ १५ ॥

नित्य ही क्षुधा सो कृश जाको देह रहे है, और अन्नकी आकांक्षा करन वारो ऐसे दरिद्री पुरुष की इन्द्रियाँ शिथिल होय जांय हैं, ताइं तें हिंसा भी निवृत्त हो जाय है । काहे सो, कि—जो आप ही अशक्त होवेगो सो दूसरे कों कैसें मारेगो ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

युज्यन्ते स्वत एव सङ्गच्छन्ते तर्षं तृष्णाम् ॥ १७ ॥

ननु, साधूनामपि धनिकः प्रियः स्यान्न दरिद्र इति तत्राह—साधूनामिति । धनेन स्तम्भो गर्वो येषां तैः ॥ १८ ॥

तमोमदम् अज्ञानकृतं मदम् ॥ १९ ॥

तमःप्लुतौ तमोव्याप्तौ ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किञ्च सत्सङ्गत्या चायं कृतार्थो भवतीत्याह—दरिद्रस्यैव साधवोऽपि दरिद्रस्यैव युज्यन्ते प्रयत्नं विनाऽपि मिलिता भवन्ति. उभयेषामपि विविक्तसञ्चारादिति भावः । एवकारार्थः धनिनां तेषां जनसङ्कुलप्राये तद्वासे दुर्घटगमनत्वादिति भावः । न चान्यलोकवद्भिरपि दरिद्रस्यायोगो धनिनो योगश्च यतं पाद्यत इत्याह—समं धनहानिलाभयोस्तुल्यम् द्रष्टुं शीलं येषां अतः सद्भिर्युज्यमानमात्रैर्हेतुभिस्तमर्थाविषयकमपि सर्वं तर्षं हन्दरिद्र एव क्षिणोति आराच्छीघ्रं हि निश्चितम् १७ ॥

ननु, साधुभिर्मा क्रियतां स्वलाभार्थं धनियोग धनिनः अनुग्रहार्थं तु क्रियतां तत्राह—साधूनामिति । एते साधवः सदाचाराः ते तु यत्र स्त्रीद्यूतमासव इति दर्शनादसन्तो सदाचाराः एते समचित्ता धनित्वाधनित्वयोः समदृष्टयस्ते तु धनगर्वित्वेन विषमदृष्टयः एते मुकुन्दचरणैषित्वेन तदेकाश्रयास्ते तु विपर्ययेणासदाश्रयाः इत्येवं प्रकृतिविरोधादनभिरुचेरुपेक्ष्यैस्तादृशैः मयानुग्रहायोग्यैस्तादृशानुग्रहरूपं प्रयोजनं किं स्यान्नेत्यर्थः ॥ १८ ॥

---

(१) संतर्पम् इति सुबो० । ( २ ) आराद्विसिद्ध्यति इति विज० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, माध्व्या मत्तता क्षणादपयास्यति तत्राह–श्रीमदान्धयोरिति । श्रीमदान्धतायाः स्थायित्वादसकृन्माध्वीपानेन मत्ततात्यनुवर्त्तत्स्यंवेत्यर्थः । अत एव स्त्रैणयोः स्त्रीलम्पटयोः ननूपभोगेन स्त्रैणता शाम्येत् नेत्याह अजितात्मनोः असंयमितमनसोरिति ॥ १९ ॥

पुत्रौ भूत्वापि तमोगुणव्याप्तौ न केवलमज्ञानेन नग्नौ किं तु मदेन मत्यवज्ञयापीत्याशयेनाह—सुतुमंदावितिति । मस्य वटोत्तमे नग्नत्वे को वा दोष इति महानुष्टमदावित्यर्थः ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

युज्यन्ते सम्भाषणादियोग्याः तर्षं तृष्णाम् आरात्समीपे आसन्नमपि तमो विशुद्ध्यति निरस्यतीत्यर्थः ॥ १७ ॥

उपेक्ष्यैः किं धनस्तम्भैः स्तम्भहेतुभिर्धनैः किम् ? ॥१८-२०॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंविधस्य दरिद्रस्यैव समदर्शिनः साधवो युज्यन्ते सङ्गता भवन्ति, ननु, परिशुष्केन्द्रियस्यापि विषयतृष्णानपायात् श्रीमदान्धात्कोऽस्य विशेष इत्यत्राह–सङ्गैः सद्भिः हेतुभिस्तत्तर्षं विषयतृष्णां क्षिणोति क्षपयति । यद्वा, तत्तर्षं कर्तृ क्लीबत्वमार्षं क्षिणोति नश्यति ततस्तत्तर्षक्षयादारात्समनन्तरमेव विशुद्ध्यति प्रकृतिसम्बन्धरूपाशुचिरहितो भवति विसिद्ध्यतीति पाठे मुक्तो भवतीत्यर्थः ॥ १७ ॥

ननु, धनमेव स्वापेक्षितमत आह–साधूनामिति । मुकुन्दचरणमेव निरतिशयपुरुषार्थरूपं मन्वानानां समचित्तानां स्वतुल्यभूतान्तरदर्शिनां साधूनामत एवोपेक्ष्यैर्धनस्तम्भैः स्तम्भहेतुभि, र्धनैरसद्भिरनर्थमूलमदहेतुत्वेन दुष्टैरत एवासतामाश्रयैस्ते आश्रयो येषां तैरिति वा एवंविधैर्धनस्तम्भैः किं ? न किञ्चदपि प्रयोजनमित्यर्थः । यद्वा, साधूनामपि धनिकमेव प्रियः स्यादित्यत्राह–साधूनामिति । धनेन स्तम्भो येषां तैरसदाश्रयैः सदाश्रयरहितैस्तत्समागमरहितैरित्यर्थः । अत एवोपेक्ष्यैरसद्भिः किमिति ॥ १८ ॥

तत्तस्माच्छ्रीमदानिवृत्तेरेव पुरुषार्थपर्यवसायित्वाद्वारुण्या माध्व्या सुरया मत्तयोः श्रीमदेनान्धयोरजितेन्द्रियययोः स्त्रीषट्ययोर्यैवयोः स्तमोमदमज्ञानकृतं मदं हरिष्याम्यपनेष्यामि ॥ १९ ॥

यद्यस्माल्लोकपालस्य पुत्रौ भूत्वापि इमौ भवन्तौ तमसा व्याप्तौ विवाससं नग्नमात्मानं न विजानाते ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततः किमत आह–दरिद्रस्येति । युज्यन्ते सङ्गस्यन्ते सत्सङ्गिनो भवतीत्यर्थः । तत्फलमाह—सद्भिरिति । रसोऽप्यस्य परं दृष्ट्वा निवर्तत इति स्मृतेः । विषयतृष्णा निवर्तत इत्यर्थः । ततः विषयतृष्णा निवृत्तेरारात् क्षिप्रं सिध्यति मुक्तो भवतीति "आराद्दूरसमीपयोः" इति च ॥ १७ ॥

सच्छित्तया विद्यादिमदान्धानामपि दरिद्रस्येव श्रेयः किं न स्यात् ? इत्याशङ्क्य सतामुपेक्षणीयत्वेन सत्सङ्गत्या श्रेयःसिद्धिर्दवीयसीत्याशयेनाह—साधूनामिति । महतां दर्शने धनेन स्तम्भैः प्रावण्यगुणरहितैः असतामाश्रयभूतैः ॥ १८ ॥

नन्वस्तु प्रकृते भवतैनयोः किं क्रियते दण्ड उत उपेक्षा वा ? इत्याशङ्क्य दण्ड एव क्रियत इत्याह–तदहमिति । माध्व्या मधुकृतया ॥ १९ ॥

तमः प्लुतौ अज्ञानाऽऽवृतौ विवाससं वस्त्रहीनम् आत्मानं न विजानीत इति यतोऽतः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मनोरथरूपा तृष्णा स्थवशिष्यते तस्या अपि निवृत्तिमाह, दरिद्रस्यैवेति । साधुसङ्गात् तृष्णापगमः ते हि भगवत्प्रेरिताः परिभ्रमन्ति लोकानामुद्धारार्थं ते हि अनावृतत्वाद्दरिद्रस्यैव गृहं गच्छन्ति तेषां काण्डद्वयनिष्णातत्वमाह—साधवः समदर्शिन इति । तत्रापि विश्वासार्थं सदाचार एव मुख्यः तदाह—सद्भिः क्षिणोति सन्तर्षमिति । सन्तर्षः तृष्णा समीचीनापि धर्मार्थमपि यात्रार्थमपि वा धनाकाङ्क्षा ततः शीघ्रमेव सिद्ध्यति ॥ १७ ॥

ननु, सन्तोऽपि मर्यादारहिते दरिद्रगृहे कथं गच्छेयुः ? तत्राह—साधूनामिति । सतां धनिनां च परस्परं विरुद्धा धर्मा ते हि साधवः सदाचाराः ते ह्यसन्तोऽसदाचाराः साधवस्तु समचित्ताः ते तूपेक्ष्या एव विषमचित्ताः समचित्तानां विषमचित्ता उपेक्ष्या एव भवन्ति. साधवस्तु मुकुन्दचरणैषिणः मोक्षदातुः चरणान्वेषणपराः अन्ये त्वसदाश्रयाः असत्स्वेव हि धनं तिष्ठति तदर्थं तच्चरणान्वेषिणः यतस्तमेवाश्रित्य तिष्ठन्ति अतो धनस्तम्भैः धनेन स्तम्भप्राया जाता गृहभारवाहकाः तैर्न किञ्चित्करणमित्यर्थः । एकोऽप्यंशो नोभयोस्तुल्यः अतः श्रीमदनिवृत्तिः कर्तव्या दारिद्र्यं च सम्पादनीयं निन्दितकर्मणा च इयावत्त्वं मदद्दूरीकरणं तु सतामावश्यकं सतां दर्शनं ब्रह्मज्ञानवत्सर्वदोषनिवर्त्तिका अन्यथा त्रिदोषयुक्ता नाशमेव यास्यन्तीति ॥ १८ ॥

तयोर्दोषान् गणयति—माध्व्या मत्तयोः माध्वीपदेन रस्यत्वादनिवृत्तिः फलं तु नाशकमेव वारुणी दैत्यत्वसम्पादिका श्रीमदेन च अन्धौ स्त्रैणौ च अतो दोषत्रयं दूरीकरिष्यामि तमः अज्ञानं मदः अजितेन्द्रियत्वं च ॥ १९ ॥

एवं हेतुं निरूप्य शापमाह—प्रसादान्तं त्रिभिः । यदिति, दोषानुवादः शापश्च प्रसादश्चेत्यनुक्रमात् अनुवादमाह–यदस्मात् कारणात् इमौ लोकपालस्य कुबेरस्य रक्षायां प्रतिष्ठितस्य पुत्रौ भूत्वा तत्पदाभिषेकयोग्यौ तमसाप्लुतौ । किञ्च विवाससं नग्नमात्मानं च न विजानीतः । किञ्च दुर्मदौ ॥२०॥

---

अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ।
स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ॥ २१ ॥
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ।
वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः ॥ २२ ॥

श्रीशुक उवाच ।

एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमम् ।
नलकूवरमणिग्रीवावासतुर्यमलार्ज्जुनौ ॥ २३ ॥
ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः ।
जगाम शनकैस्तत्र यत्राऽऽस्तां यमलार्ज्जुनौ ॥ २४ ॥

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नच दरिद्रस्यैका तृष्णैव सर्वदोषमयीति वाच्यं तस्या अपि प्रतीकार सम्भवादित्याह-दरिद्रस्यैकेति । धनित्वदारिद्र्ययोस्तुल्यदर्शित्वेनोभयगृहान् कृपया गच्छन्तोपि साधवो दरिद्रस्यैव युज्यन्ते दरिद्रेणैव तद्वन्दनसम्भाषणसम्वादादिसम्भवात् तस्यैव ते स्वयं योगजनितफलदायका भवन्तीत्यर्थः । ननु धनिनो मदान्धस्य अनयोः सन्निधौ वर्त्तमानोऽहमेव प्रमाणमिति भावः । ततश्च सद्भिः सत्सङ्गमहिम्नैव तं तर्षं तृष्णां दरिद्रः स्वयमेव छिणोति क्षीणीकरोति तत्कृपालब्धस्य भक्त्यमृतस्य तृष्णाहरस्वभावत्वात् अत एव पूर्व्वमुक्तं कृच्छ्रं यदृच्छयाप्नोतीति कृच्छ्रस्य यादृच्छिकत्वं ननु कर्मजनितत्वं भक्तस्य कर्मानङ्गीकारात् ॥ १७ ॥

न च साधूनां धनोपाधिको धनिकसंयोगः सम्भवतीत्याह-साधूनामिति । धने स्तम्भो गर्वो येषां तैः असद्भिरवैष्णवैः असदाश्रयैरवैष्णवसेविभिः तेन गर्वरहिता अदरिद्रा वैष्णवसेविनो धनिनोपि साधुभिः संयुज्यन्त एवेति भावः ॥ १८ ॥

तदनयोर्गर्वरोगस्य कां चिकित्सां करोमीति मनसि विचार्य्य निश्चिनोति—तदहमिति चतुर्भिः । माध्व्या मधुमध्या तमोऽज्ञानम् ॥ १९ ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संसारहेतुभूतं तर्षं तृष्णाम् ॥ १७ ॥

साधवो जनस्य शुद्ध्यर्थं तत्समीपे सङ्गच्छन्ति न धनार्थं सा च शुद्धिर्धनेन स्तम्भो गर्भो येषां तेषां न घटतेऽत उपेक्ष्यैस्तैः सङ्गैरसङ्गैर्वा साधूनां किं ? न किमपीत्यर्थः ॥ १८ ॥

तमोमदं तमो धनजाड्यं तत्कृतं मदम् ॥ १९ ॥

तमःप्लुतौ धनजाड्यव्याप्तौ विवाससमात्मानं देहमपि न विजानीतः आत्मानं तु सुतरां न विजानीत इत्यर्थः ॥ २० ॥

---

भाषा टीका ।

और समदर्श साधुजन दरिद्री लोगन कोई मिलसं फिर वो दरिद्री महात्मान को सहवास करकें अपनी ... की विषय पिपासा ( चाहना ) कों नाश करे है तदनन्तर ... ही शीघ्र शुद्धान्तःकरण वारो होय जाय है ॥ १७ ॥

मुकुन्दचरणारविन्द को चाहन वारे समचित्त साधु ... कों उपेक्षा करवे योग्य धनके गर्वीले खोटे आश्रय ... असत् पुरुषन सों कहा प्रयोजन है ? ॥ १८ ॥

तासों अजितेन्द्रिय श्रीमदान्ध, स्त्रीलम्पट और वा... मदिरा सों मत्त होय रहे, ऐसे इन दोउनकों अज्ञान ... भयो जो मद ताकूं अब मैं दूर करूंगो ॥ १९ ॥

काहे सों, कि—ये दोनों लोकपाल के पुत्र होय के ... रूप अंधेरेमें डूब गये, ये ऐसे दुर्मद होय गये, कि— ... देहकों विना वस्त्रन के होयवे पै भी इन कों ज्ञान नहीं है ... हम नग्न है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शपति-अतोऽर्हत इति । अनुगृह्णाति-स्यातां नैवमित्यादि मत्प्रसादेन स्मृतिः स्यात् ॥ २१ ॥

स्वर्लोकतां देवत्वं पुनर्लब्ध्वा मदनुग्रहाल्लब्धभक्ती भ... ष्यत इति ॥ २२—२३ ॥

प्रस्तुतमाह—ऋषेरिति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत इति युग्मकम् । अतो निजकर्मदोषादेवेत्यर्थः । स्थाव... वृक्षयोनिमर्हतः तमःप्लुतत्वेन स्थावरतुल्यत्वात् अतः स्थावर... परमदारिद्र्ये सति एवमीदृशौ पुनर्न स्यातामि... स्थावरत्वं बहूनां वर्त्तते नैतावता शिक्षा स्यात् तत्राह—

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पूर्वजन्मवृत्तानुस्मरणम् अत एव सदा परमभगवत्प्रियायां व्रजजनानां सेवा च ताभ्यां कृता तथा च श्रीहरिवंशे "यौ तावर्जुनवृक्षौ तु व्रजे सत्योपयाचनौ" इति ॥ २१ ॥

वासुदेवस्य मयि योऽनुग्रहस्तस्मात्तस्यैव सान्निध्यं लब्ध्वा दिव्यशरच्छत इति तावत्काल एव श्रीभगवदवतारात् लब्धभक्तौ भविष्यथ इति भक्तिरसिकानां भक्तिव्यतिरिक्ताशीरस्फूर्तेः लब्ध्वेति भक्तेः स्थिरतां बोधयति ॥ २२ ॥

पूर्वोक्तं तत्रागमनस्य यादृच्छिकत्वं दर्शयति—गत इति। यमलौ सहजातौ अर्जुनौ आसतुः बभूवतुः श्रीकृष्णाख्यार्जुननामगोपसखत्वात् तन्नाऽम्नाप्येतौ किल सोऽनुगृहीष्यतीति तत्कृपयैवेति भावः ॥ २३ ॥

तदेवमितिहासं प्रदर्श्य तस्य सम्प्रति यद्भगवदनुस्मृतत्वं दर्शितं तदेव दर्शयति—ऋषेरिति। तद्वचः सत्यता योग्या सा च तेनैव प्रवर्तनीयेति भावः। तत्रापि भगवतः भक्त्याख्यपरमविद्याज्ञानात्परमपूज्यस्य भागवतमुख्यस्येति च क्वचित्पाठः हरिरिति तच्छापादुद्धरणाभिप्रायेण शनकैरिति शब्दसमुत्थानेन मात्राद्यागमनशङ्कया किंवा बाल्यलीलया ततश्चोलूखलस्य शनैराकर्षणेन पतनमपि न जातमिति ज्ञापितम् एवं बलेन तदाऽऽकर्षणार्थं रिङ्गणेनैव गमनम् उक्तं च द्वितीये "यद्रिङ्गतान्तरगतेन" इति ॥२४॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

स्थावरतामर्हतः "विवासस्त्वं स्थावरस्य हि युज्यते इत्यभिप्रायः ॥ २१ ॥

वृत्ते अतीते स्वर्लोकिनां स्वर्देवलोकयोग्यताम् ॥ २२—२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतः स्थावरतामर्हतः विवासंसमात्मानमजानतोर्वृक्षाच्छादनरहिततरुजन्मयुक्तमिति भावः। इत्थं शप्त्वाऽनुगृह्णाति—स्यातामित्यादिना। एवमेव सर्वदा स्थावराकृती यथा न स्यातां तथाऽर्हतः यद्वा किमर्थमेव निरपराधयोः शापं प्रयच्छसीत्यत्राह—पुरा तरुजन्मनः प्राग्यथा स्यातां यादृशौ श्रीमदान्धौ स्यातामेवं तरुजन्मनः पश्चान्माभूतामित्येवमनुग्रहार्थं शाप इत्यर्थः। प्रकारान्तरेणाप्यनुगृह्णाति तत्रापि स्थावरत्वेऽपि मत्प्रसादेन हेतुना स्मृतिः पूर्वजन्मस्मृतिः स्यात् ॥ २१ ॥

तथा मदनुग्रहाद्धेतोर्दिव्यवर्षशतान्ते वासुदेवस्य वसुदेवसूनोर्भगवतः सान्निध्यं लब्ध्वा वृत्ते तरुत्वेऽतीते भति पुनः स्वर्लोकतां देवत्वं लब्ध्वा वासुदेवे लब्धा भक्तिर्याभ्यां तथाभूतौ भविष्यतः ॥ २२ ॥

स देवर्षिरित्थमुक्त्वा बदर्याश्रमं गतः नलकूबरमणिग्रीवौ तु सहजातावर्जुनौ वृक्षावासतुः ॥ २३ ॥

भागवतमुख्यस्य नारदस्य तद्वचः सत्यं कर्तुं हरिः श्रीकृष्णः शनैरुलूखलमाकर्षन् यत्र यमलार्जुनौ स्थितौ तत्र जगाम ॥ २४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्थावरतां प्राप्तुमर्हथः तत्र स्थावरत्वेऽपि ॥ २१ ॥
स्मृतेः फलमाह—वासुदेवस्येति ॥ २२ ॥
यमलार्जुनौ सहोत्पन्नार्जुनौ ॥ २३—२५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अतो दोषत्रयेण स्थावरतां शुद्धतामसत्वमर्हतः कर्मणा एव तथा फलं भवतीति ततः किमत आह—यथा पुनरेवं नैव स्याताम्।

"ज्ञाननाशः क्रियानाशो भोगनाशस्तथैव च।
दुःखं शीघ्रं चानिवृत्तिर्वृक्षत्वे हि भवन्ति वै" ॥

ननु, कर्मणैवैतद्भविष्यति तव कः प्रसाद इति चेत् तत्राह—स्मृतिः स्यान्मत्प्रसादेनेति। पूर्वजन्मवृत्तान्तस्मरणं शापेन वृक्षभावस्मरणञ्च यद्यपि वृक्षयोनौ न भवति सत्त्वांशाभावात् तथाप्यहं भगवत्कृपया सर्वभावं प्राप्त इति मदंशो गुप्त एव तत्रापि वर्तते अग्निवत् तत्राहं चेत् प्रसन्नः उद्रिक्तसत्त्वगुणः तदा मदंशस्तत्रापि प्रकटो भविष्यतीति स्मृतिः स्यात् तत्रापि तस्मिन्नपि जन्मनि इदानीमपि ॥ २१ ॥

किञ्च अधिकोऽनुग्रहोऽपि क्रियते प्रसादस्तु स्वधर्माऽऽविर्भावः अनुग्रहस्तु परदोषाणां स्वीकारः अतस्तदीयो दोषोऽस्माभिर्गृहीत इति कर्मफलस्यापि भोगात् वासुदेवस्य सान्निध्यं प्राप्स्यथ पुरुषापराधः इति पुरुषायुपपर्यन्तं भोगः देवत्वात् दिव्यं दिव्यशरच्छते वृत्ते अतीते वासुदेवस्य सान्निध्यं लब्ध्वा ततः स्वर्लोकतां च लब्ध्वा नलकूबरत्वं च प्राप्य पूर्वावस्थातो विशिष्टौ लब्धभक्ती भविष्यथः भक्तिस्तत्र प्राप्तव्या अनेनाप्राप्तभक्तेरेव स्वसाधनरूपा भक्तिर्भवति गच्छति च अनयोस्तु नैसर्गिकी रतिर्भविष्यतीति भावः ॥ २२ ॥

एवमुक्त्वा ब्रह्मवाक्यमन्यथा न भविष्यतीति तादृशवाक्यसुख्यार्थं ततो गत इत्याह—स एवमिति। स नारदः देवगुह्यकत्वं एवमुक्तः कर्तारिक्तः पश्चान्नारायणाश्रमं गतः तद्दोषपरिहारार्थं तज्ज्ञानार्थं देवर्षिरिति मिलितानां मध्ये नारदस्य गमनमुक्त्वा नलकूबरयोराह—नलकूबरमणिग्रीवाविति। यमलावेकत्रोत्पन्नौ मूले मिलितौ अर्जुनो जातिविशेषः ॥ २३ ॥

एवं शापदातुः प्रायश्चित्तं शापगृहीतुः शापफलप्राप्तिश्चेति निरूप्य स्मृतिरपि तत एव भविष्यतीति तामनुक्त्वा अनुग्रहफलं भगवत्सान्निध्यं तयोर्जातमित्याह—ऋषेरिति। स हि भाव्यर्थं जानात्येव तज्ज्ञात्वैव तथोक्तवानिति। किञ्च भगवतापि स्वकृपया तस्मिन् भगवत्त्वं सम्पादितं तदाह—भगवत इति। तस्य ऋषित्वं भगवत्वं वाक्यसत्यत्वं च कर्तुं स्वयं च सर्वदुःखहर्ता यत्र यमलार्जुनावास्तां तत्रैव शनकैर्जगाम आरात् पुनः स्त्रीणामनुसरणं भविष्यतीति भगवानेवं प्रकारेण तत्र गतस्तौ ज्ञापयितुं यत्र स्त्रियो मामेवं कुर्वन्ति तत्र युवां कथं करिष्यन्ति? अतः स्त्रीसङ्गो न कर्तव्य इति तदानीमपि स्त्रीदर्शनाभावाय शनैर्गतः तयोरागमनं न सम्भावितमिति यत्र तावास्तां तत्र स्वयं गतः ॥ २४ ॥

———

देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ ।
तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना ॥ २५ ॥
इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ ।
आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् ॥ २६ ॥
बालेन निष्कर्षयताऽन्वगुलूखलं तद्दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ ।
निष्पततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ कृतचण्डशब्दौ ॥ २७ ॥
तत्र श्रिया परमया ककुभः स्फुरन्तौ सिद्धावुपेत्य कुजयोरिव जातवेदाः ।
कृष्णं प्रणम्य शिरसाऽखिललोकनाथं बद्धाञ्जली विरजसाविदमूचतुः स्म ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्थावरतामिति निरावरणयोः स्तब्धयोरगुणयोरनयोः स्थावरत्वमेवोचितमिति भावः । स्थावरत्वेऽपि मत्प्रसादेन स्मृतिरस्तु स्मृतौ सत्यामपि मदनुग्रहादित्यादिदेवमानेन शरच्छते वर्षशते वृत्ते सति वासुदेवस्य सान्निध्यं लब्ध्वा लब्धभक्ती सन्तौ स्वर्लोकतां भविष्यतः प्राप्स्यतः भूप्राप्तौ परस्मैपदमार्षम् ॥ २१-२३ ॥

प्रस्तुतमाह ऋषेरिति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं विचिन्त्य तत्कल्याणार्थमेव शपति—अत इति । अतः अनर्थकारिणः उपदेशाभावात् स्थावरतां स्थावरभावम् अर्हतः शापस्यैवानुग्रहरूपत्वं दर्शयति यथा येन स्थावरभावेन एवं तुर्वन्तौ पुनर्न स्यातां माऽभूतामित्यर्थः । पुनरनुगृह्णाति स्मृतिः स्यादिति तत्रापि स्थावरत्वेपि मत्प्रसादेन स्मृतिः स्यात् मदनुग्रहादिति पदमुत्तरश्लोकान्वयि ॥ २१ ॥

अत्यन्ततोऽनुगृह्णाति—वासुदेवस्येति । मदनुग्रहात् दिव्यशरच्छते वृत्ते सति वासुदेवस्य सान्निध्यं लब्ध्वा स्वर्लोकतां देवभावं भूयः पुनर्लब्ध्वा लब्धभक्ती भविष्यथः ॥ २२ ॥

यमलौ सहजातौ च तावर्जुनौ वृक्षविशेषौ च यमलार्जुनौ आसतुः ॥ २३ ॥

प्रकृतमाह—ऋषेरिति ।—

स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् ।
वासुदेवस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते ॥
वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यथः ॥

इति ऋषेर्वचः सत्यं कर्तुं तत्र हरिस्तु यः क्लेशहरः जगाम ऋषेर्वचसः सत्यत्वकरणे हेतुं दर्शयितुं विशेषणं भागवतमुख्यस्येति ॥ २४ ॥

---

भाषाटीका ।

तासों अब ये दोऊ स्थावरपने कूं प्राप्त होयवे कों योग्य है, कि-जासों फिर उन्मत्त न होय जांय और वा[...]स्था हू में मेरी प्रसन्नता सों और अनुग्रह सों फिर भी [...]वनी रहेगी ॥ २१ ॥

और देवतान के सौ वर्ष के पीछें श्रीवासुदेव भग[...] की समीपताकों पाय कें फिर स्वर्ग लोककों प्राप्त हो[...] और दोऊन कों श्रीहरि की भक्ति प्राप्त होवैगी ॥ २२ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि-वे देवर्षि श्रीनारदजी ऐसे क[...] कें श्रीनारायणाश्रम कूं चले गये, और नलकूवर म[...]ग्रीव दोनों यमलार्जुन होत भये ॥ २३ ॥

तब भागवतों में मुख्य ऐसे श्रीनारदजी के वचन सत्य करवे कूं श्रीहरि धीरे सों तहां जान गये, [...] नन्दमन्दिर के निकट वे दोऊ यमलार्जुन भये खडे ह[...]

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किमिति सत्यं कर्त्तव्यं तत्राह—देवर्षिरिति । यद्यत[...] ततः ॥ २५ ॥

यमयोर्यमलयोः सहजातयोः आत्मनः कृष्णस्य त[...] प्रवेशमात्रेण ॥ २६ ॥

ननु अश्वतीत्यन्वक् तत्र हेतुः दामोदरेणेति उत्[...] उत्पादितोऽङ्घ्रिबन्धो मूलबन्धो ययोस्तौ परमस्य श्रीकृ[...] विक्रमितं विक्रमस्तेनातिवेपः कम्पो येषु ते स्कन्धप्र[...] विटपा ययोस्तौ ॥ २७ ॥

ककुभः प्रति सर्वतः स्फुरन्तावित्यर्थः । यद्वा दिशः [...] यन्ताविति कुजयोर्वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमानुपैति त[...] विरजसौ निर्मदौ निरहङ्कारिणौ नष्टगर्वाविति यावत् ॥[...]

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यत् यस्मात् देवर्षिर्मे प्रियतमस्तत्तस्मात् तेन मह[...] महानुभावेन यद्यथा गीतं तथा तेन प्रकारेणेमौ धनदात्मजौ [...]यिष्यामि स्थावरयोनेरुद्धृत्य पुनः स्वर्गं दत्त्वा परमभक्ति[...] करिष्यामीत्यर्थः ॥ २५ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति अस्माद्धेतोः कृतमहदपराधयोर्मद्बाल्यलीलाक्रीडनकताप्राप्त्यैव तादृशत्वं स्यादिति विचार्येत्यर्थः । तिर्यग्गतं श्रीभगवदभिप्रायानुसारेण तिर्यक्त्वं प्राप्तमित्यर्थः "तिर्यक् वक्रे तिरोऽर्थे च" इति विश्वः । अत्र गात्रपदेन यत्नं विनेति ध्वन्यते गतमिति तस्यैव कर्तृत्वं इति तस्य स चेतनत्वमिव सूचितं तच्च लीलाशक्तेः स्वयं सर्वसम्पादकत्वेन यथा हरिवंशे "तद्दाम तस्य बालस्य प्रभावादभवद्दृढम्" इति. पाद्मे "नमस्तेऽस्तु दाम्ने स्फुरद्दीप्तिधाम्ने" इति ॥२६॥

तत्तिर्यग्गत्या तयोरन्तरं निःशेषेण कर्षता आकर्षता दामोदरेण कर्त्रा उत्कलिताङ्घ्रिबन्धौ सन्तौ तरसा वेगेन निश्शेषं पेततुः कथं तदाह—परमेत्यादि । विटपा अत्र शाखाः "विटपः पल्लवे षिड्गे विस्तारे गुल्मशाखयोः" इति विश्वः । अन्यत्तैः । यद्वा, परमिति छेदः दामोदरेणैव यत् आविक्रमितं विक्रमसदृशीकृतं तेनातिवेप इत्यादिः परं केवलं स्वयमेव निपेततुः न तु पूतनावत् किञ्चिदपातयतामित्यर्थः, बालेनेति । बलाप्रकटनादिना बाल्यलीलाया अव्यभिचारः दामोदरेणेति तस्मादेव माधुर्यं उत्कलितेत्यादिना चैश्वर्यं सूचितम् एवं पूर्ववन्मधुरं भगवत्ताप्रकटनमूह्यम् अत्र च नामकरणं हरिवंशे "स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात् । गोष्ठे दामोदर इति गोपीभिः परिगीयते" इति ॥२७॥

तत्र तयोर्वृक्षयोः स्थितौ सिद्धौ देवावित्यर्थः । अतः सर्वा दिशः स्फुरन्तौ द्वितीयया प्रतिशब्दो लभ्यते तृतीयया सह शब्दवत् पदे अन्तर्भूतण्यन्तमिदं शोभयन्तावित्यर्थः । यद्वा कुजयोः ककुभः दिग्भागात्तदन्तिके उपेत्य मिथो ज्योतिर्मिलनादेकजातवेदा इव स्फुरन्तौ शिरसैव प्रकर्षेण नत्वेति दण्डप्रणामे शीघ्रं श्रीमुखादिसन्दर्शनासिद्धेः कृष्णमिति तदानीमप्युलूखलाकर्षणाभिप्रायेण ननु, दामोदरत्वेनात्यन्तबाल्यलीलापरं बालकं कथं प्रणतवन्तौ तत्राह—अखिलेति । तदैश्वर्यस्वभावात् तत्र च श्रीनारदानुग्रहेण तद्विज्ञानोत्पत्तेरिति भावः । यद्वा, ननु तादृशकृतापराधौ श्रीनारदप्रसादेन स्मृततद्वृत्तौ च कथं लज्जादिकं विहाय श्रीभगवत्पार्श्वोपगमनादिकमकुर्वतां तत्राह—अखिलेति । अनन्यगतित्वादित्यर्थः । विरजसौ विगतापराधौ सन्तावित्यर्थः । स्म विस्मये महापराधिनोरपि सद्यस्तादृशत्वसिद्धेः ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इमौ धनदात्मजौ प्रति यत् तन्महर्षिणा गीतं तत्सत्यमित्यन्वयः ॥ २५ ॥

अन्तरे मध्यभागे उलूखलं तिर्यग्गतं यथा भवति तथा ययौ ॥ २६ ॥

उलूखलं निष्कर्षयता आकर्षयता दामोदरेण उत्कलिताङ्घ्रिबन्धौ उन्मूलितमूलभागौ पवनविक्रमितातिवेपदिति पवनतुल्यपराक्रमवशात् जातकम्पाः स्कन्धाः प्रवालानि ययोस्तौ तादृशस्कन्धानमर्दयन्तावित्यर्थः ॥ २७ ॥

स्फुरन्तौ स्फोरयन्तौ कुजयोः वृक्षयोः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्वचः सत्यं कर्तुमित्येतदेव प्रपञ्चयति—देवर्षिरिति द्वाभ्याम् । यत् यतो देवर्षिः नारदः मम प्रियतमः तस्मात्तेन महात्मना धनदात्मजावुद्दिश्य यद्गीतं तत्तथैव साधयिष्यामि करिष्यामि ॥ २५ ॥

इत्यभिप्रायेण यमयोरर्जुनयोरन्तरेण मध्ये ययौ तदा आत्मनः स्वस्य कृष्णस्य प्रवेशमात्रेण उलूखलं तिर्यक् पतितमभूत् ॥ २६ ॥

अग्रश्लीलस्यनक् अनुसरत्तमुलूखलं निष्कर्षयता आकर्षता दामोदरेण हेतुना तरसा बलादुत्कलिताबुत्पाटितावङ्घ्रिबन्धौ मूलभागौ ययोः परमस्य श्रीकृष्णस्य निक्रमितेनातिवेपः कम्पो येषु ते स्कान्धादयोयर्योः कृतश्चण्डः शब्दो याभ्यां तथाभूतौ निपेततुः ॥ २७ ॥

तत्र तदा तयोर्वृक्षयोर्वा परमया श्रिया शोभया ककुभो दिशः स्फुरन्तौ प्रकाशयन्तौ कुजयोर्वृक्षयोः स्थितोऽग्निर्यथा मूर्तिमान् बहिरुद्गच्छति तद्वदुत्थितौ सिद्धौभूत्वा उपेत्य श्रीकृष्णसमीपमेत्य कुजयोर्जातवेदा इव सिद्धावुपेत्य उत्थायेति वा अखिललोकानां नाथमीश्वरं श्रीकृष्णं शिरसा प्रणम्य बद्धोऽञ्जलिर्याभ्यां विगतं रजः रजोगुणकार्यं ययोस्तौ सात्त्विकावित्यर्थः । निर्मलाविति च तौ नलकूबरमणिग्रीवाविदं वक्ष्यमाणमूचतुः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्तरेण मध्ये आत्मनिर्वेशमात्रेण आत्मनः सान्निध्यमात्रेण वा तिर्यग्गतं तिरश्चीनम् ॥ २६ ॥

यदा बालेन दामोदरेण तदुलूखलं निष्कृष्टमाकृष्टं तदा तावर्जुनौ निपेततुः कीदृशौ उत्कलिताङ्घ्रिबन्धौ उन्मूलितमूलौ पवनस्य तदानीमुद्भूतवायोर्विक्रमितेन पराक्रमेणातिवेल्लैः वेलां सीमानमतिक्रान्तैः स्कन्धैः प्रवालैर्विटपैः " अति स्यादधिकार्थोक्तौ प्रशंसायामतिक्रमे " इति ॥ २७ ॥

तत्र तस्यामवस्थायां कुजयोर्वृक्षयोः जातवेदौ अग्नी इव उपेत्य अभिव्यज्य विरजसौ शापमोक्षेण सत्त्वस्वभावमाप्तौ बद्धाञ्जली सिद्धौ यक्षौ शिरसाऽखिललोकनाथं कृष्णं प्रणम्य इदं वक्ष्यमाणमूचतुः स्म गुणस्मरणपूर्वकमुक्तवन्तावित्यन्वयः । स्मृतौ वृत्तान्तपेक्षस्मेति च ककुभो दिशः स्फुरन्तौ प्रकाशयन्तौ ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यत् देवर्षिर्मे प्रियतमः तत्तस्मादिमौ धनदात्मजौ तथा साधयिष्यामि यत् यथा तेन महात्मना गीतमित्यन्वयः ॥ २५ ॥

आत्मनिर्वेशमात्रेण अयत्नेनापीत्यर्थः । तेन चोलूखलस्य तिर्यग्गत्या लीलाशक्तेः प्रभुता दर्शिता एवमन्यत्रापि ज्ञेयम् ॥ २६ ॥

परमविक्रमितेति पततोस्तयोरेव महामर्दस्तेनेत्यादि ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कुजयोः ककुभः सकाशात् उपेत्य स्फुरन्तौ सम्भ्रमेण कम्पमानौ द्वयोस्त्विषा परस्परमिलितत्वात् एकीभूयाग्निरिवोपेत्य त्वत्प्रेक्षया तन्महिमपरिपाटीमारभते ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवत्सेवकेषु भगवत्कृपा अतो भगवत्सेवकानुवृत्तिः कर्तव्येति गत्वा भगवान् यमलार्जुनयोर्भङ्गं करिष्यति तत्कृतः सान्निध्यं तु वरप्रदानं तथैव च भक्तिरपि भविष्यति सान्निध्यादेवेदं शरीरं परित्यज्य नलकूवरत्वमेव प्राप्स्यतः अतो भङ्गो अनुचित इत्याशङ्क्य भगवतोऽभिप्रायमाह—देवर्षिरिति । एकमत्र सन्दिग्धं स्मृतिर्जाता न वेति तदपि प्रकटीकर्तव्यम् अमर्याद-रूपं च देवर्षिराह मत्सत्त्वगुणोद्रेकेपि दुर्लभं तदतितामसे भविष्यति । ननु तन्मिथ्यैव भवतु अविचारितवचनादित्याशङ्क्याह मे देवर्षिः प्रियतम इति आर्षज्ञानमर्यादा भज्येत नारदश्च मदीयः यन्मत्सेवकैः कृतं तन्मयैव कृतमिति तत्राप्यत्यन्तं प्रिय-प्रीतिविषयः । अतः स्नेहात्सर्वमेव कर्तव्यमन्यथा स्नेहमर्यादापि न स्यात् यद्यस्मादिमौ च धनदात्मजौ कुवेरोऽतिभक्तः अतो मूलभावश्च शुद्धः अतस्तावन्तमर्थं त्याजयित्वा धनांशे भक्त्यु-पयोग्यांशं योजयित्वा तत्रैव स्वयं प्रविश्य शुष्कौ कृत्वा स्वाधि-दैविकभावेन तच्छिद्रीर्थी विधाय तत उद्धृत्य दृढभक्तौ कर्तव्यौ तदा नारदवाक्यं सत्यं भवति, तथैवाहं साधयिष्यामि यत्तेन गीतं तत्तथा । ननु, किं परार्थं एतावानुद्यमस्तत्राह—महात्मनेति महानेव तस्यात्मा ॥ २५ ॥

महत्त्वं भगवत्प्रवेशादिति विचार्य भगवानुभयोरन्तः प्रविष्ट इत्याह—इत्यन्तरेणेति । यमयोरर्जुनयोरन्तरा कृष्णो ययौ केवलं वहिरेव ययाविति पक्षं दूषयितुं तुशब्दः सदा-नन्दरूपत्वात् दोषो दुःखं च तयोस्तदानीमेव निवृत्तं भगवत्-संपृक्तं तु उलूखलं दारुमयं भवतीति स्वसजातीयोद्धारार्थम् आत्मनो भगवतः वृक्षयोर्निवेशमात्रेण उलूखलं तिर्यग्भूतं जातम् ऋजुत्वे तु तदपि मध्ये निर्गच्छेत् दारुपुनर्भगवत्सम्बन्धं यदि सजातीयं न मोचयेत् तदा स्वस्याधिदैविकत्वं जातं व्यर्थं स्यात् ॥ २६ ॥

एवमुलूखले तिर्यक्प्रकारेण पतिते भगवान् यत्कृतवांस्तदाह-बालेनेति । उलूखलं निष्कर्षता बालेन तरसा उत्कलिताङ्घ्रिबन्धौ निष्पेततुः भूमेर्भगवत्सम्बन्धादार्द्रता सात्त्विकभावात् अतः शिथिलसर्वभागावाकर्षणे उत्कलिताङ्घ्रिबन्धौ जातौ अन्वक् अनुकूलतया आकृष्टं यथा भवति तथा उलूखलं नितरां कर्षते उलूखलाकर्षणेन तावत्याकृष्टौ अन्वगीयदिति वा दामोदरेत्य-न्वर्थनाम बालस्योदरेणाकर्षणमल्पमेव भवति तत्राप्युलूखलस्य स्थूलस्य रज्जुरपि सूक्ष्मा अत्याकर्षणे नश्येत् अनेनापि साक्षा-द्भगवानित्युक्तं रज्जूलूखलयोरभङ्गेप्यर्जुनयोर्भङ्गात् उपपत्तिस्तु रज्जुर्भगवद्रूपेति पूर्वमुक्त उलूखलं त्वाधिदैविकं रूपं प्राप्तवत् अतो युक्तमेव मूलतः पतनं क्रियाशक्तेरल्पीयस्या अप्युद्गताया-महत्कार्यं जातमित्याह——परमविक्रमितातिवेपस्कन्धप्रवाल-विटपाविति । परमं विक्रमं प्रापितौ परमविक्रमितौ यथा भीमेन हनुमता वा बलाबलात्यते परमविक्रमितयोरिव ययोर्महानिस्तः स्कन्धप्रवालविटपानां ययोः स्कन्धस्य चलनमतिकठिनं तदे-कदेशप्रवालानां पृथक्तया चलनमत्याश्चर्यं ताभ्यां युक्तानां विट-पानां चलनमिति किञ्च कृतश्चण्डः शब्दो याभ्यां पाते महान् शब्दः आसुरभावस्य वा नाशदशायां तदभिमानिनः शब्दः एवमसुरनाशिकाया भगवत्क्रियाशक्तेर्माहात्म्यमुक्तम् ॥ २७ ॥

एवं तयोर्दोषपरिहारमुक्त्वा गुणमाह—तत्रेति । परम-श्रिया दश दिशः स्फुरन्त्यो जातास्तावपि स्फुरन्तौ सन्तौ उपेत्येति सम्बन्धः अस्यैव स्फुरच्छब्दस्य विभक्तिलिङ्गविप-रिणामेन दिक्शब्देनापि सम्बन्धः प्रकाशमानया तत्सम्बन्धिन्या वा कृत्वा तत्र देशे तयोर्वृक्षयोर्वा स्फुरन्तौ निर्गच्छन्तौ भिन्न-विराजमानौ ततो, निर्गतौ ककुभः सम्बन्धि तेजो विद्युति इव अत एव परमशोभात्वेन निर्दिष्टं यथा दामोदरेण मोचनमेवं नग्नेनापि पीताम्बरतुल्यतेजः सम्पादनमित्यद्भुतचरित्रमुक्तं निर-मनात्पूर्वमेव यावदभीष्टं तावद्रूपं सम्पन्नमिति सिद्धौ कुजयो-र्वृक्षयोः सकाशादागत्य भगवन्निकटे पूर्ववृत्तान्तज्ञानवत्तामपि भ्रममिवोत्पादयन्तौ ताविति दृष्टान्तेनाह—जातवेदा इवेति दृष्टान्तेपि द्वित्वमत्यन्तदुर्लभं कुजयोः अरणिद्वयरूपयोः सका-शाद्यथा भौतोऽग्निर्भवति जातो वेदो यस्मात् क्रियाकाण्ड-निमित्तजन्मा वह्निरिवेत्यर्थः । ततो भगवन्तं प्रणम्य पूर्वज्ञानप्रा-दाद्यर्थात् शिरसेति साष्टाङ्गनमस्कारं भूमौ कृत्वा देवानामितर-नमस्कारशङ्कां भूमिसम्बन्धशङ्कां च व्युदस्य बद्धाञ्जलीभूय भगवन्तं वक्ष्यमाणप्रकारेण ऊचतुः स्मेति सम्बन्धः शाप-विमोक्षे जातेपि भगवन्तमपृष्ट्वा अस्तुत्वा च न गन्तव्यं यतो भग-वानखिललोकनाथः सर्वलोकाधिपतिः स्वयमेकलोकाधिपतेः पुत्रौ तदाज्ञाव्यतिरेकेण गते तस्मिन् लोके स्थितिरपि न स्यात् भक्तिस्तु दूरे अञ्जलिबन्धो विज्ञापनार्थः तादृशयोः कथं भग-वत्स्तोत्रेऽधिकार इत्याशङ्क्याह-चिरजसाविति । अत्रासम्भावना-व्युदासाय स्मेति प्रसिद्धिरुक्ता ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यद्यस्माद्देवर्षिर्मे प्रियतमस्तस्मादिमौ मया साधयिष्यामि यद्यथा तेन महात्मना गीतमित्यन्वयः ॥ २५ ॥

इति विचार्य्य यमयोः सहजातयोर्द्वयोरन्तरेण मध्ये ययौ ततश्च आत्मनः प्रवेशमात्रेण उलूखलं तिर्यग्गतं तिरश्चीनमभूत् ॥ २६ ॥

तत्तिरश्चीनमेवोलूखलम् अन्वक् स्वानुकूल्यं यथा स्यात्तथा निःशेषेण कर्षता बालेन उत्कलित उत्पाटितोऽङ्घ्रिबन्धो ययोस्तौ परमविक्रमिते न अतिबलेनाकर्षणेनातिवेपमानाः स्कन्धादयो ययोस्तौ दामोदरेणेति "स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात् । गोष्ठे दामोदर इति गोपीभिः परि-गीयते" इति हरिवंशोक्ता प्रसिद्धिः स्मारिता ॥ २७ ॥

ककुभो व्याप्य स्फुरन्तौ कुजयोर्वृक्षयोः जातवेदा अग्निर्यथा मिथो ज्योतिर्मिलनादेक एव जातवेदा इव स्फुरन्तावित्यर्थः ॥ २८ ॥

---

कृष्ण कृष्ण ! महायोगिंस्त्वमाद्यः पुरुषः परः ।
व्यक्ताव्यक्तमिदं विश्वं रूपं ते [1]ब्राह्मणा विदुः ॥ २९ ॥
त्वमेकः सर्वभूतानां देहास्वात्मेन्द्रियेश्वरः ।
त्वमेव कालो[2] भगवान् विष्णुरव्यय ईश्वरः ॥ ३० ॥
त्वं महान् प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी ।
त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥ ३१ ॥
गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ।
कोन्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृतः ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेव श्रीमुखोक्त्या प्रपञ्चयति—देवर्षिरिति । यत् यतो देवर्षिर्मे प्रियतमस्तत् ततः इमौ उद्दिश्य यन्महात्मना गीतं तत्तथा साधयिष्यामीत्यन्वयः ॥ २५ ॥

इति एवं विचार्य यमयोः युगलयोरन्तरेण मध्ये ययौ तदा आत्मनः परमात्मनो निर्वेशमात्रेण प्रवेशमात्रेण उलूखलं तिर्यग्गतं प्राप्तमभूत् ॥ २६ ॥

तत्तदा अन्वञ्चति अन्वनुगच्छतीत्यन्वक् उलूखलं निष्कर्षयता दामोदरेण बालेन हेतुना उत्कलित उत्पाटितोऽङ्घ्रिबन्धो मूलबन्धो ययोस्तौ परमस्य श्रीकृष्णस्य विक्रमितेन विक्रमेण संवेपः अतिकम्पो येषु ते स्कन्धप्रवालविटपा ययोस्तौ कृतचण्डशब्दो याभ्यां तौ निष्पेततुः ॥ २७ ॥

तत्र तस्मिन् समये जातवेदाः अग्निरिव ककुभो दिशः स्फुरन्तौ द्योतयन्तौ कुजयोः स्वशरीरभूतयोरर्जुनयोः निर्गत्य विरजौ विगतमदौ उपेत्य श्रीकृष्णसमीपमेत्य कृष्णं प्रणम्येदं वक्ष्यमाणं "स्मृतिः स्यान्मत्प्रसादेन" इति श्रीनारदप्रसादेन स्मृतिं प्राप्योचतुः स्म ॥ २८ ॥

---

### भाषा टीका ।

श्रीभगवानने विचारी, कि देवर्षि मोकूं अतिप्रिय हैं और ये ही दोनो कुबेर के पुत्र हैं तासों जो कछु वा समें महात्मा को वाक्य निकसो है वाही रीति सों सिद्ध करूं गो ॥ २५ ॥

ऐसे विचार के दोनों अर्जुन वृक्षन के बीच होके श्रीकृष्ण जात भये, तब दोऊन के मध्य मे सों आप तौ निकसगये और ऊलूखल तिरछो होय के अटक गयो ॥ २६ ॥

कमरि मे रसरी जाके बँधरही ऐसे वा यशोदा के बालक ने उलूखल खींचवे कूं एक झटोका जो मारयो सोई तो बड़े वेग सों जड़सहितउखड़के गुद्दे डार पत्तोंसान सहित कम्पित होय के नीचे गिरे और गिरवे कों बड़ोई शब्द भयो ॥ २७ ॥

तब या जगे उन वृक्षन में सों अग्नि सदृश वर्ण जिन को और अपनी परम शोभा सों दिशान कों जगर मगर कर रहे ऐसे दो निर्मल सिद्ध पुरुष आय के अखिल लोक के नाथ श्रीकृष्ण कों माथे सों प्रणाम करके हाथ जोरि के ऐसें स्तुति करन लगे ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गोपालं मां युवां देवौ किमिति प्रणताविति चेत्तत्राहतुः-हे कृष्ण, कृष्ण ! महायोगिन् ! अचिन्त्यप्रभावस्त्वं न गोपालः किन्तु परः पुरुषः यत आद्यः कारणभूतः तत्रापि न निमित्तमात्रं किन्तूपादानमपि त्वमेवेत्याशयेन तुष्टुवतुः-व्यक्ताव्यक्तमिति । स्थूलसूक्ष्ममिदं ते रूपं ब्राह्मणाः ब्रह्मविदो विदुः ॥ २९ ॥

नियन्तापि त्वमेवेत्यूचतुः—त्वमेक इति । देहः असवः प्राणाः आत्मा ऽहङ्कारः इन्द्रियाणि च तेषामीश्वरः । नन्वस्य कालो निमित्तं प्रकृतिरुपादानं प्रकृतेर्जातो महान् विश्वात्मतया परिणमते पुरुषः कर्त्ता नियन्ता च किमत्राहम ? अत आहतुः—त्वमेव काल इत्यादिना सार्द्धेन । यतो भगवानीश्वरो विष्णुरव्ययमतः कालो नाम तव लीला ॥ ३० ॥

प्रकृतिः शक्तिः पुरुषोंऽशः महान् कार्यम् अतस्त्वमेव सर्वमित्यर्थः ॥ ३१ ॥

नन्वहमेव चेत्सर्वं तर्हि घटादिज्ञाने मज्ज्ञानं किं न भवति ? भवतीति चेत्सर्वोऽपि ब्रह्मवित्स्यादत आहतुः-गृह्यमाणैरिति । दृश्यत्वेन वर्तमानैर्बुद्ध्यहङ्कारेन्द्रियादिभिर्द्रष्टा त्वं न गृह्यस इति भावः । ननु, तर्हि जीवो जानातु ? नेत्याहतुः-कोन्विहेति । जीवाद्युत्पत्तेः प्रागेव स्वप्रकाशतया सिद्धं त्वां को वा जानाति ? गुणसंवृतो देहाद्यावृतः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यद्यप्यावां महापराधिनौ तथापि त्वया नितरामनुगृहीतौ तव तवोचितमेवेति निवेदयितुमुपक्रमेते-कृष्णेति । हे नराकृतिपरब्रह्मन् लीलापरमानन्देन प्रेमसम्भ्रमेण वा किं वा जिह्वाकर्षककृष्णनामस्वभावेन वा । यद्वा, उलूखलकर्षणादिबालखेलारतस्य महाचञ्चलस्य क्षणं स्थैर्यापादनेनाभिमुखीकरणाय कृष्णत्वमेव

(१) ब्रह्मणा इति सुबो० वीर० पा० । वैष्णवतोषिणी ( २ ) भगवानिति वीर० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रपञ्चयतः—महायोगिन् ! अचिन्त्यानन्तैश्वर्येत्यर्थः । यतः प्रकृतिद्रष्टा तावत्पुरुषस्त्वं तु परः पुरुषस्तस्याप्यंशी अंशित्वेऽपि महानारायणादिभेदेन बहुविधाविर्भावः स्यादिति तत्रापि त्वमाद्यः स्वयं भगवान् इत्यर्थः । तथा च दर्शितं "ईश्वरः परमः कृष्णः" इत्यादि ब्रह्म संहितापद्याभ्याम् अतः सर्वतो गुणाधिकस्य तव ईदृशी कृपा ऽपि युक्तैवेति भावः । किञ्च ईशस्यापि तव ब्रह्मणः परमबृहतो रूपमधिष्ठानं कार्यं वा विदुरिति ब्राह्मणा इति क्वचित्पाठः । एव-मावयोरपि नित्यत्वदीयत्वेनाऽनुग्रहो घटतैवेति भावः ॥ २९ ॥

किञ्च त्वमिति एतच्चार्द्धकम्, इत्थं तवैव सर्वप्रवर्तकत्वेन तत्त्वतोऽस्मदपराधाभावात् किं वा स्वन एव बहिरन्तस्त्वदेक-नाथत्वावनुग्राह्यौ भवाव एवेति भावः । ननु, सर्वप्रवर्तकः कालः जगत्कारणानां च महदादीनामेव रूपं विश्वं तत्राहतुः—त्वमेवेति सार्द्धेन । कालादित्वे हेतुतया भगवान् इत्यादिविशेषणचतुष्कं भगवान् सर्वसामर्थ्ययुक्तः विष्णुर्व्यापकः न व्येति चीयत इत्यव्ययः ईश्वरः सर्वनियन्ता कालस्य त्वदंशत्वेनैव तत्तद्धर्मत्वात् त्वमेव मुख्यः कालः इत्यर्थः । तथा महत्तत्त्वस्य व्यापकत्वेनैव महत्त्वा-त्तदादिव्यापकस्त्वमेव मुख्यो महानित्यर्थः । तथा "भगवानेक आसेदमग्र आत्मात्मनां विभुः" इत्यादितृतीयस्कन्धादितो भग-वांस्त्वमेव सर्वकारणत्वेनाव्ययत्वात् मुख्या प्रकृतिरित्यर्थः । तथा पुरुषस्य त्वदंशत्वेनैव देहेन्द्रियादिसत्त्वात् त्वमेव मुख्यः पुरुष इत्यर्थः । सूक्ष्मेति "भूमिरापोऽनलो वायुः" इत्यादिगीतो-क्ताष्टावयवकार्यात्मकप्रकृतेः कारणावस्थोक्ता रजःसत्त्वेति विश्वस्य वैचित्र्यापेक्षया सच्चिदानन्दशक्त्यैक्यव्यवच्छेदार्थं च सा च तव प्रकृतित्वानुगतैव प्रकृतिः । "प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात्" ( १।४।२३ ) इति न्यायात् मूलप्रकृतिस्तु त्वमेवेत्यर्थः । यद्वा, सूक्ष्मा दुर्ज्ञेया तर्हि कथं ममापि रजआदिमयत्वं ? नेत्याह—अरजः सत्त्वतमोमयीति अव्यक्तः सूक्ष्मचैतन्यरूपत्वात् अध्यक्ष इति पाठे देहाद्यधिष्ठातेत्यर्थः । तमेव लक्षयति—सर्वक्षेत्रस्य देहस्य विकारा बाल्याद्यवस्थास्तदनुसन्धानकर्ता तथा चैकादशे "नात्मा जजान न मरिष्यति नैधते ऽसौ न क्षीयते सवनविद्व्य-भिचारिणां हि" इति । यद्वा, पुरुषः प्रकृत्यधिष्ठाता सृष्टिहेतुः अव्यक्तः सर्वागोचरः पाठान्तरे सर्वसाक्षी अत एव सर्वैरिति ॥ ३०—३१ ॥

निर्णेतुं सत्त्वात्कर्तुम् अन्यत्रैः तत्र विकारैः प्राकृतैरित्यस्य व्याख्या बुद्धिनिर्धारैरिति गुणैरित्यस्य चेन्द्रियादिभिरिति । अथ च श्लेषेण एवं परमानुग्रहकृदपि साक्षात् दृश्यमानोऽपि त्वम-स्मादृशैर्वशीकर्तुं तत्त्वतो ज्ञातुं वा न शक्यत इत्याहतुः—गृह्येति, गृह्यमाणैः साक्षादनुभूयमानैः अविकारैः सदैव विक्रियाशून्यैः प्राकृतैः स्वाभाविकैर्गुणैः कारुण्यादिभिर्विशिष्टोऽपि त्वम् अग्राह्यः वशीकर्तुमशक्य इत्यर्थः । परमस्वतन्त्रत्वात् अवतारिकायाः पक्षा-न्तरे तत्त्वतो ज्ञातुमशक्यः एकस्यैव युगपद्विभुत्वमध्यमत्वादिना परमदुर्वितर्कत्वात् तत्र च इह श्रीनन्दगोकुले प्राक् प्रथमत एव सिद्धं नित्यं प्रकटतया वर्तमानमपि त्वां गुणान् भक्ति-वत्सलत्वान् सम्यक् श्रितः आश्रितोऽपि कः विशेषेण ज्ञातुम् अर्हति योग्यो भवति ब्रह्मोऽपि वा अपि तु न कोऽपि लौकिका-लौकिकताप्रकटनेन परमदुर्बोधलीलत्वात् । यद्वा, गुणैर्वो... ग्राह्योऽपि त्वं तान् गुणान् संश्रितः नैवंद्ध इत्यर्थः । ... तुक्तिस्त्वावेशश अतः कोऽन्वित्यादिवन्धनदर्शनेन परममाह... नार्हति भावः । सम्वृत इति पाठेऽपि सम्यक् वृतत्वेन एवार्थः ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रूपं शरीरम् ॥ २९ ॥

देहदेहान्तर्गतोऽस्मद्धृदयकमलस्थः परमात्मा त्वं जीवशरी... ऽस्मादिन्द्रियेश्वरः इत्यन्वयः ॥ ३०—३१ ॥

गुणैर्गुणमयैः कार्यैः गृह्यमाणा एतत्कारणमित्यनुमीयमान... इन्द्रियैरग्राह्यम् प्राक्सिद्धं कारणभूतम् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोपबालं मां युवां देवौ किमिति प्रणतावित्यत्राहतुः— कृष्ण कृष्ण ! महायोगिन् ! अचिन्त्यप्रभाव ! न केवलं गोप... लस्त्वमपितु परमपुरुषः, कोऽसौ ? य आद्यो जगत्कारणभूतः ... कार्यकारणयोः प्रायशः सालक्षण्यदर्शनात्कथं चिदचिदात्मक... जगतस्तद्विलक्षणोऽहं कारणमित्यत्राहतुः—व्यक्तं नामरूपा... मव्यक्तं चेदं विश्वं ब्रह्मणः सर्वशक्त्यादिकल्याणगुणैर्बृहत... रूपं शरीरं विदुर्वेदान्ता आमनन्तीत्यर्थः । वेदान्ताश्च "... पृथिवी शरीरं यस्यात्मा शरीरं यस्याव्यक्तं शरीरं यस्या... शरीरम्" इत्याद्याः सूक्ष्मचिदचिच्छरीरकत्वेन कारणभूतः स्थू... चिदचिच्छरीरकत्वेन कार्यावस्थश्च त्वमेवेति भावः ॥ २९ ॥

न केवलमुपादानकारणमेवापि तु निमित्तकारणमपीत्या... प्रायेण तदुपयुक्तगुणवत्तामाहतुः—त्वमेक इति । एकश्च... अधिष्ठानान्तरव्यावृत्तिः सर्वभूतानां यानि देहादीनि तेषामीश्वरः नियन्ता तत्रासवः प्राणाः आत्मा मनः भवन्ति देवमनुष्या... रूपेण जायन्त इति भूतानि क्षेत्रज्ञास्तेषां देहादिसम्बन्धोपा... नोपयुक्तसार्वज्ञ्यादिगुणयोगेनान्तःप्रविश्य नियन्तेत्यर्थः । एवं निमि... जगत्कारणत्वं तच्छरीरकत्वञ्चोक्तम् ॥ अथ तदुभयनिबन्धनं ... दन्तभूत कालादिसामानाधिकरण्यमाहतुः—त्वमेव काल इत्या... त्वमेक इति स्थितिकालत्वमुक्तं त्वमेव काल इति लयकारण... कालो मृत्युः त्वं महानित्यादिना सामानाधिकरण्यमुच्यते ... विवेकः हे भगवन् ! अव्यय इत्यनेन कारणत्वप्रयुक्तदोषपरिहा... भगवन्नित्यनेनावतारदशायामपि षाड्गुण्यपूर्तिरुक्ता, विष्णुरित्य... वैभवाविशदत्वञ्च ॥ ३० ॥

त्वं महान् महत्कारणत्वात्तच्छरीरकत्वाच्च तत्समानाधिकर... एवमुत्तरत्रापि द्रष्टव्यं न केवलं महानेवापि तु तत्तत्कारण... रज आदिगुणत्रयात्मिका सूक्ष्मा नामरूपविभागानर्हा प्रकृति... त्वमेव तथा पुरुषो जीवस्त्वमेव, कथम्भूतः ? अध्यक्षः देहप्रभृ... जीवपर्यन्तानामधिष्ठाता क्षेत्राणि शरीराणि बुद्धिपर्यन्तेन्द्रि... सहितानि तानि वेत्तीति तथा युगपद् चेन्द्रियवृत्तिविवि...त्यर्थः ॥ ३१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रूपं ते ब्रह्मणो विदुरित्यनेनैवंविधं त्वां केवलं वेदान्ता एव विदुर्न त्विन्द्रियाणीत्यभिप्रेतं तदेव विशदयन्तौ उपपादयतः गृह्य-माणैरिति । प्राकृतैर्गुणैर्विकारैर्गुणपरिणामरूपैरिन्द्रियैस्त्वमग्राह्यः गृहीतुं विषयीकर्तुमशक्यः, तत्र हेतुं वदन्तौ गुणान् विशिंषः-गृह्य-माणैरिति । यथा श्रोत्रादिभिर्गृह्यमाणाः शब्दादयो न श्रोत्रादीन् गृह्णन्ति तथा त्वया गृह्यमाणा विकारास्त्वां न गृह्णन्तीति भावः । नन्वग्राह्यस्य मम कारणत्वसमव्याप्तोपास्यत्वानुपपत्तिस्ततश्च कारणत्वानुपपत्तिरित्यत्राहतुः—कोन्विति । गुणैर्गुणकार्यैरिन्द्रियैः संवृतः आवृतः सहित इति यावत् कोनु पुमान् प्राक् सिद्धं गुणेभ्यः प्रागेव तत्कारणतया तत्प्रकाशतया च सिद्धं त्वाम् इह ज्ञातुं विषयीकर्तुमर्हन्ति गुणसंवृतः को वाऽर्हतीत्यनेन विशुद्धमनास्तु ज्ञातुमर्हतीति सूचितम् अनेनानुपास्यत्वं परिहृतम् यद्वा ननु तर्हि जीवो जानात्वित्यत आहतुः कोन्विति ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यक्ताव्यक्तं कार्यकारणात्मकं रूप्यत्वात्प्रतिमात्वेन सन्निधि-योग्यत्वाद्रूपमुच्यते न तु साक्षाद्रूपम् " रूप्यत्वात्तु जगद्रूपं विष्णोः साक्षात्सुखात्मकम् " इत्यादिस्मृतेः । ब्राह्मणाः वैदिकाः ॥ २९ ॥

सन्निधियोग्यं दर्शयति—त्वमिति । सर्वभूतानां देहे आत्मनो मनस इन्द्रियाणामीश्वरः स्वविषयशक्तिप्रदः न केवलमन्तरेव प्रवर्तकः बहिरपि सर्वशक्तिमत्त्वात्तच्छक्तिप्रबोधक इति भावे-नाह, त्वमिति । तदुक्तं " विष्णुः सर्वगुणोद्रेकात्काल इत्यभिधी-यते " इति " कल कामधेनौ "(१) इति धातुः । विष्णुः व्यापनशीलः व्याप्तस्याकाशवदुत्पत्तिविनशौ स्यातामिति नेत्याह, अव्यय इति " जातस्य हि ध्रुवो मृत्युः " इति स्मृतेः अन्तर्यामीति वा आत्माऽन्तर्यामीति ॥ ३० ॥

प्रकृत्यादेरचेतनत्वेन स्वतः प्रवृत्त्यनुपपत्तेः तत्सत्ताया अपि तदधीनत्वेन तत्तद्व्यपदेशो युक्त इति भावेन स्तौति—त्वमिति । महान् महत्त्वं पूर्णगुणत्वेन पुरुषशब्दवाच्योऽपि त्वमेवेत्याह, त्वमिति । अध्यक्षः साक्षी साक्षित्वं व्यनक्ति—सर्वेति, सर्वक्षेत्राणां कारण-भूतानि प्राणाद्यर्थः स्वस्वायुरित्यादीनि विकारशब्दवाच्यानि वेत्ति जानाति तत्त्वेन पश्यतीति सर्वक्षेत्रविकारवित् ॥ ३१ ॥

नन्वव्यक्तो हरिरिति पुरस्तादुदीरितं तत्कथं " दृश्यते त्वग्र्यया बुद्ध्या " इतीन्द्रियविषयत्वोक्तेरत्राह, गृह्यमाण इति । स्वयमेव स्वात्मानं गृह्णाति न त्वन्य इत्यर्थः । तदुक्तं " स्वात्मना गृह्यमाणः " इति किमेवं विवेकः क्रियते ? इति तत्राह, अग्राह्य इति । विकारैः प्राकृतैः महदहङ्कारादभिमानिभिः ब्रह्मादिभिरग्राह्यः । ननु, नित्य-धर्मापस्थाभिर्गुणादिभिरग्राह्य एवेत्यत्राह, गुणैरिति । सत्त्वादिभि-गुणाभिमानिनीभिरपि, ननु " वेदाहमेतं पुरुषं महान्तम् " इति श्रुतेः । अग्राह्यश्चेत् कथमुच्यते ? इति तत्राह, क इति । अत्र संस्थि-तिशब्देन उत्पत्तिर्लक्ष्यते स्थितेरुत्पत्त्यपेक्षत्वात् इह जीवराशौ कः पुमान् गुणभूतस्य हरेः क्रीडायामन्तरङ्गस्य जगतः स्थिते-रुत्पत्तेः प्राक् सिद्धम् " आनीदवातं स्वधया तदेकम् " इति श्रुतिसिद्धं ब्रह्म विज्ञातुमर्हति शक्नोति अर्हति स्यादिति ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कृष्ण कृष्णेति परमस्वरूपत्वात् परमनामत्वाच्च प्राङ्निर्देशो वीप्सा च परः पुरुषो भवान् तत्रैऽपि आद्यः स्वयं भगवानित्यर्थः ॥ २९—३२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दशभिः प्राणभृच्छ्लोकैश्चक्रतुः स्तोत्रमुत्तमम् ।
ज्ञानवैराग्ययोरत्र निर्णयः समुदीरितः ॥
मूलरूपो भवान् पूर्वं जगद्रूपस्तथैव च ।
अद्वयरूप इति त्रेधा ज्ञानरूपो निरूपितः ॥
माहात्म्यज्ञापनार्थाय दुर्ज्ञेयत्वं च वर्णितम् ।
सर्वरूपोऽपि सर्वस्मिन् गृह्यमाणैर्न (२) गृह्यते ॥
आध्यात्मिकस्ततो नायं भौतिकोऽपि ततो न हि ।
दैविकत्वेन सर्वः स्यात् द्वयं तस्माच्च जायते ॥
अतः सर्वत्वकर्तृत्वे ज्ञानभक्ती फलिष्यतः ।
अतो ज्ञानं निरूप्याऽऽदौ भक्तिमाहतुरुत्तमाम् ॥
अनेनैव च वैराग्यं ज्ञानाज्जनकता यदि ।
तदा सर्वं परित्याज्यमन्यथा स्याद्विनाशनम् ।
भक्तिसिद्ध्यैतु यज्ज्ञानं श्लोके षष्ठे निरूप्यते ॥
अन्यथाभावशङ्कया व्यावृत्त्यर्थं भवान्परः ।
भगवन्तं नमस्कृत्य गमनप्रार्थना कृता ॥
तदयुक्तं भक्तिमतामिति भक्तिस्तु पञ्चधा ।
भक्तैः सदैव सा कार्या परोक्षेणैव सिद्ध्यति ॥
गुप्तो रसस्तद्बुद्बुदो रसतां याति नान्यथा ।
गुणप्रधानभावत्वमेकत्र हि विरुध्यते ॥
अतोऽत्र भगवान् लीलां स्वयं कर्तुं समुद्यतः ।
स्वस्यैव रसभोगार्थं परार्थं चेत्यनिर्णयः ॥
तादृशां विमोचनं नैव शक्यं यत्नशतैरपि हि ।

पूर्वं स्मृतिः सम्बिद्धेऽति तन्निर्णयार्थं भगवानागत इत्युक्तम् । सा स्मृतिः सर्वलोकप्रसिद्धा भवतीति कृष्णस्वरूपं ज्ञातं निरू-पयतः ज्ञानी प्रियतमोतो मे इति वाक्यात् अन्यथा सर्वस्य स्तुतिर्विरुद्ध्येत । तत्र प्रथमं पुरुषोत्तमो भवानित्याहतुः—कृष्ण-कृष्णेति । आदरे वीप्सा कृष्णः सदानन्दः स एव कृष्णनामा च उभयविधाज्ञाननिवृत्त्यर्थं वा तथोक्तम् आकुला चेष्टया च नावयोर्भ्रम इत्याहतुः—महायोगिन्निति । लौकिका अपि नानार्थान् गच्छतां प्रभुर्न हीनभावं न प्राप्नुवन्ति, कुतः पुनर्निर्दोषपूर्ण-गुणविग्रहः अतो नामरूपे वर्णनार्थे न बाधके आद्य इति ॥ मूलभूतत्वमेव महत्त्वं सर्वोऽपि स्वापेक्षया महत्त्वं ज्ञातव्यम् आद्य-स्तु तथा आद्यत्वं मतान्तरे अचेतनस्यापि सम्भवतीति तद्व्या-वृत्त्यर्थमाह-पुरुष इति । साङ्ख्यतुल्यतामाशङ्क्याह-पर इति । पुरु-षोत्तम इत्यर्थः । निराकारपक्षनिवृत्त्यर्थं पुरुषपदं तस्मिन् पक्षे

(१) कामधेनाविति सप्तम्यन्तपाठ एव पुस्तक उपलभ्यः ।

(२) ख-ग पुस्तक योस्तु गृह्य माणेन, इति पाठः ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अयं विकृतो भवेदेव परः कालादीनामपि नियन्ता एवं भगवतो मूलरूपत्वं निरूप्य कार्यरूपाभावे मूलरूपत्वं नोपपद्यत इति कार्यस्य चान्यथात्वे तस्य गौणत्वमविकृतत्वमसङ्गित्वं च विरुध्यत इति कार्यरूपमपि त्वमेवेत्याह—व्यक्ताव्यक्तमिदमिति । इदं सर्वमेव जगत् द्विरूपमेव भवति कालेनापरिगृहीतमव्यक्तं भवति परिगृहीतं व्यक्तं भवति आकाशपरमाणवादीनामपि व्यक्तमेति केचित् तदा सर्वमेव जगत् कालादितृणास्तम्बान्तं व्यक्तमव्यक्तं च भवति अवयुज्यानुवादो वा उभयथापि इदं जगत् तवैव रूपम् अत्र प्रमाणमाह—ब्रह्मणो विदुरिति । ब्रह्मणो वेदात् ब्राह्मणा इति वा ते ब्रह्मणा इति वा तदा सर्वा एव श्रुतयः प्रमाणमित्युक्तं भवति रूपमिति स्वरूपं निरूपकम् वा ॥ २९ ॥

एवं सर्वरूपत्वं भगवतो निरूप्याधिदैविकप्रकारेण सर्वरूपत्वमाह—त्वमेक इति । तत्तदाधिदैविकानां भेदो भविष्यतीत्याशङ्क्याह—एक इति । देवादीनामुत्तमत्वात्तदाधिदैविकत्वमस्तु कृमिकीटाधिदैविकत्वं तु न भविष्यतीत्याशङ्क्याह—सर्वभूतानामिति । आब्रह्मतृणास्तम्बान्तजातिभेदानां देहाः असवः प्राणा आत्मा अन्तःकरणम् इन्द्रियाणि ईश्वरो जीवः स्वात्मा जीवो वा इन्द्रियपदेन प्राणाः इन्द्रियाण्यन्तःकरणञ्च ईश्वरोन्तर्यामी आधिभौतिकादीनामीश्वरो वा देहद्वयसहितजीवस्य वा नियामकत्वपक्षे भिन्नतया कालादीनामपि तथात्वमिति कालादिरूपतामाह—त्वमेव काल इति । कालो भगवच्चेष्टेति केचित् वस्तुतस्तु त्वमेव कालः तत्र हेतुमाह—भगवानिति । ऐश्वर्यं सर्वस्यापि कालकृतमेवेति काल एवेश्वरः तथा बलमपि तारुण्यम् एव बलं तपोयोगादिभिरपि कालपुष्टैरेव बलं सिध्यति यशोपि काल एव न हि सर्वदा कस्यचिद्यशो भवति एवमन्येपि गुणाः कालान्वयव्यतिरेकात् काल एव षड्गुणहेतुरिति गम्यते ननु कालस्तु विश्वात्मकः योहि व्यापको भवति सकलयति न हि योयं व्याप्तुं न शक्नोति सकलयति अतो विष्णुरेव कालो नान्य इत्याशङ्क्याह—विष्णुरिति । त्वमेव विष्णुराधिदैविकः कालः यज्ञरूपो वा पालको वा सत्वात्मकः तस्यभिन्नत्वे भगवतस्तदधीनत्वं स्यात् अव्ययो ऽक्षरमपि त्वमेव अन्यथा भगवतः समवायित्वं न स्यात् अक्षरमेव हि समवायिकारणं प्रकृतिपुरुषोपादानत्वात् सर्वं समाप्नोषि ततोसि सर्वं इति सर्वत्वमन्यथाप्युपपद्यते वस्तुनः परिच्छेदकत्वं न सर्वथादिसंम्प्रतिपन्नम् अतोऽक्षरो भगवानेव ईश्वररूपमथान्तर्यामिरूपं भिन्नरूपं वा अधिकारित्वे न निर्दिष्टं अस्याऽसाधारणो धर्म ऐश्वर्यं भवति ॥ ३० ॥

एवमाधिदैविककालादिरूपत्वं निरूप्याध्यात्मिकत्वमाधिभौतिकत्वं च निरूपयितुं मध्यमभावं निरूपयति—त्वं महानिति । सर्वस्यापि जगतः अङ्कुरभूतो महान् तस्यापि क्षेत्ररूपं प्रकृतिः तस्या अपि कार्योत्पत्तिसाधारणरूपं योनिवत् प्रकृतिः सा सूक्ष्मा तस्या अपि मूलभूता गुणास्तन्मय्याधिदैविकी प्रकृतिर्गुणाश्च त्वमेव एवं पञ्चरूपत्वमुक्तम् एवं योनिरूपत्वमुक्त्वा बीजरूपत्वमाह—त्वमेव पुरुष इति । तस्याः प्रकृतेः पु तस्यास्तावत्वसम्पादकः अध्यक्षः साक्षी साक्षिरूपं भिन्नां मिद्धान्तः क्षेत्रज्ञश्च तथा क्षेत्राभिमानी जीवः सोपि क्षे भवति क्षेत्रं जानातीति व्युत्पत्त्या यः क्षेत्रज्ञः स मुख्यो भ एतावता यत्रैव प्रमाणप्रवृत्तिः केनापि प्रकारेण तदेव भ मित्युक्तं भवति ॥ ३१ ॥

तत्प्रमाणं श्रुतिरेव न तु प्रत्यक्षमित्यलौकिकत्वसम्पादनं भगवतः प्रत्यक्षग्राह्यत्वं निराकरोति । गृह्यमाणैरिति गृह्यमाणै घटपटादिभिः कृत्वा त्वमग्राह्यः तद्रूपोपि तैर्गृहीतैर्न गृही भवसि नवा तैः सह तेषां धर्माणां त्वदाश्रयाणां धर्मा सहभानानियमात्. तत्र हेतुः—विकारैरिति । विकारे हि प्रकृ प्रतीयते यथा सन्निपाते तत्र प्राकृतास्तिरोभवन्ति स्वप्रका मेव हि जडैः सह भासते यथाज्ञानं विषयैः तथा भगवा विषयान् प्रकाशयन् विषयैः सह कुतो न भासत इति चे तत्राह—प्राकृतैरिति । प्रकृतिर्हि जडा पुरुषाच्छादिका प्रकृ प्रविष्टं पुरुषं न प्रकाशयति तथा प्रकृतेरपि तत्र स्थितो भ वानाच्छाद्यत इति न भगवान् गृह्यते ज्ञानस्त्वन्यनिष्ठ पुरुषो भगवान् प्रकृतिं स्त्रियमुपमर्द्य कथं न प्रकाशत इत् शङ्क्याह—गुणैरिति । गुणा हि बन्धकाः रञ्जकाश्च अतः प्रकृ प्रविष्टस्तद्गुणानुरक्तः तद्गुणैर्वशीक्रियत इति तैः सह प्रकाशते ननु गुणाः साम्प्रतमेव जाताः भगवांस्तु मूल इति गुणक्षोभात्पूर्वमेव ज्ञात्वोत्तरत्रापि तदनुवृत्तिः कथ क्रियत इत्याशङ्क्य तत्परिहरन् भगवान् तथैव करोतीत्य हेतुं वदंस्तादृशस्य भक्तिमार्गप्रवर्तकत्वमाह—कोन्विहार्हतीति इहास्मिन् संसारे नु इति वितर्के पश्चादुद्भूतः कोवा प्रा सिद्धं गुणक्षोभात् पूर्वस्थितं विज्ञातुं इदमित्थतया द्रष्टुमर्हं अपि तु न कोपि नन्वयमध्यात्मस्थास्तेदानीं सिद्धः कुतो ना नीति चेत्तत्राह—गुणसंवृत इति । गुणैर्वेष्टितः गुणा हि पू बुद्धिं दूरीकृत्य स्वरूपमप्यावृतवन्तः अतो ज्ञातृज्ञेययोरावरणा न ज्ञानं सम्भवति ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उलूखले बद्धं गोपालबालं मां युवां देवौ किमिति प्र णाविष्यत आहतुः—कृष्ण कृष्णेति । द्वित्वं द्वयोरेव युगपदु त्वं परः पुरुषो भगवान् तत्राप्याद्यः स्वयं भगवान् अतस्त्वं गोपालबालो भवस्येवेति भावः हे महायोगिन्नचिन्त्यप्रभा अस्मन्मोचकस्य तवैतद्बन्धनकारणमतर्क्यमिति भावः सर्व स्वरूपस्य तव केन बन्धनं सम्भवेदित्याहतुः—व्यक्ताव्यक्तं कार्यकारणात्मकम् ॥ २९ ॥

नच त्वदन्यो बन्धकः कोपीश्वरोस्तीत्याहतुः—त्वमिति । असवः प्राणाः आत्माऽहङ्कारः सर्वात्मकत्वात्त्वमेवैक ईश्वर इत्याहतुः—त्वमिति । कालोनाम तव चेष्टा महान् कार्यं प्रकृति शक्तिः पुरुषोंऽशः कीदृशः अध्यक्षोऽन्तर्यामी सर्वेषु देहे विकारान् मन आदीन् वेत्ति अतो विष्णुरीश्वर एको भग त्वमेव ॥ ३० ॥ ३१ ॥

तस्मै तुभ्यं भगवते वासुदेवाय वेधसे ।
आत्मद्योतगुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ३३ ॥
यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैः(१) वीर्यैर्देहिष्वसङ्गतैः ॥ ३४ ॥
स भवान् सर्वलोकस्य भवाय विभवाय च ।
अवतीर्णोंऽशभागेन साम्प्रतं पतिराशिषाम् ॥ ३५ ॥
नमः परमकल्याण ! नमः(२) परममङ्गल ! ।
वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वरूपयैव त्वं दृश्यसे वस्तुतस्त्वमदृश्य एवेत्याहतुः-गृह्यमाणैस्त्वया दृश्यमानैर्विकारैर्बुद्धीन्द्रियादिभिर्द्रष्टा त्वं न गृह्यसे कीदृशैः प्राकृतैर्गुणकार्यैः तेनाप्राकृतैरगुणकार्यैर्बुद्धीन्द्रियादिभिस्तु त्वं दृश्यस एवेति भावः । नन्वप्राकृतत्वाज्जीवो जानातु नैवेत्याहतुः-कोन्विहेति । प्राक् सिद्धमिति त्वदीयतटस्थशक्तिविलासत्वाज्जीवस्यापि त्वं कारणमित्यर्थः । गुणसंवृत इति गुणातीतस्तु स त्वद्भक्त्या कथञ्चित्त्वां जानातीति भावः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे कृष्ण कृष्ण ! महायोगीन् ! यः देवर्षिणोक्तः वासुदेवस्य सान्निध्यं लब्ध्वा लब्धभक्ती भविष्यथ इति स त्वम् आद्यः पुरुषो विश्वहेतुः परः निःसमानातिशयः विश्वभिन्नाभिन्नत्वं भगवत आहतुः व्यक्ताव्यक्तं चिदचिदात्मकं विश्वं ब्राह्मणाः सनकनारदादयस्ते रूपमाहुः स्वरूपतो भिन्नमपि तज्जत्वादिहेतुभिस्त्वत्तोऽभिन्नमाहुरित्यर्थः "सर्वं खल्विदं ब्रह्म तज्जलानिति" इतिश्रुतेः ॥ २९ ॥

भगवतः सर्वनियन्तृत्वमाहतुः-त्वमेक इति । सर्वभूतानां ब्रह्मादिपिपीलिकापर्यन्तानाम् देहादीनामीश्वरः एको मुख्यस्त्वमेवासि एवं सार्द्धेन विश्वहेतोर्भगवतो विश्वभिन्नाभिन्नत्वं तद्गतसर्वभूतदेहादिनियन्तृत्वं चोक्तमथ पृथक् पृथक् अचेतनानां कालादीनां भगवच्छक्तित्वेन चेतनानां भगवदंशत्वेन च भिन्नत्वेपि भगवदभिन्नत्वमाहतुः-काल इति सार्द्धेन ॥ ३० ॥

पुरुषो जीवः जातावेकवचनम् ॥ ३१ ॥

ननु, सर्वरूपोऽहं चेत्तर्हि सर्वे ब्रह्मविदो भवन्त्वित्यत्राहतुः गृह्यमाणैरिति । प्राकृतैः कार्यभूतैः गुणैरिन्द्रियैः ग्राह्याः ये प्राकृताः कार्यभूताः विषयाः तैः कारणभूतस्त्वमग्राह्योसि यद्यपि कार्यकारणरूपस्त्वमेवासि कार्यभूतैरिन्द्रियैः कार्यरूपो ग्राह्योपि "कारणं तु ध्येयम्" इति श्रुतेः मुक्तिप्रदेन कारणरूपेणाग्राह्योसीत्यर्थः । अतः गुणसंवृतः गुणैः प्राकृतैस्त्रिभिः पराभूतः प्राक् सिद्धं विश्वकारणं त्वां विज्ञातुं कोनु इह संसारे अर्हति न कोपीत्यर्थः । अतः सर्वे ब्रह्मविदो न भवन्ति किन्तु कश्चिद्गुणातीतस्त्वदनुग्रहेण त्वां जानातीति भावः ॥ ३२ ॥

---

भाषा टीका ।

नलकूबर, मणिग्रीव बोले, कि—हे कृष्ण ! हे महायोगिन् आप आद्य और परम पुरुष हो । और स्थूल सूक्ष्म या विश्व कों ब्राह्मणजन आपहीको रूप ( शरीर ) जाने हैं ॥ २९ ॥

और आप सर्व भूत प्राणिओं के निवास स्थान रूप एक देह हो सब के आत्मा इन्द्रियन के ईश्वर हो । और आपही काल हो विष्णु भगवान हो अव्यय ईश्वर आप ही हो ॥ ३० ॥

महद्रूप और रज आदि त्रिगुण मयी प्रकृति भी साक्षात् आपही हो । और आपही अध्यक्ष पुरुष और सर्व क्षेत्रन के विकार को जानवे वारे आप ही हो ॥ ३१ ॥

ग्रहण किये जाय जो प्रकृति के गुणरूप विकार तिन सों आप अग्राह्य हो । या जगत् में गुणन सों आवृत कौन पुरुष ऐसो है जो पूर्व सिद्ध आपको जान सके ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतो दुर्ज्ञेयत्वात्केवलं प्रणमतः-तस्मै तुभ्यमिति । आत्मनः स्वस्मात् द्योतः प्रकाशो येषां तैर्गुणैश्छन्नो महिमा यस्य अभ्रैरिव रवेस्तस्मै ॥ ३३ ॥

नन्वहो अहमीश्वर इति कुतो ज्ञातं ? तत्राहतुः-यस्येति ॥ ३४ ॥

भवायोद्भवाय विभवाय विगतो भवो यस्मात्तस्मै कैवल्यायेत्यर्थः ॥ ३५—३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मै कृष्णस्तु भगवान् स्वयमित्यादौ प्रसिद्धाय तुभ्यं नमः पुनर्भगवते महावैकुण्ठनाथाय नारायणाख्याय च पुनस्तत्तद्व्यूहाग्रगाय वासुदेवाय च पुनर्वेधसे सृष्टिकर्त्रे सङ्कर्षणादि-

(१) तिर्यग्योनिष्वसंगतैः । विज०　(२) ते विश्वमङ्गल इति विज० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रूपाय पुरुषाय च पुरुषायैव स ते आत्मद्योतेत्यादिरूपिणो च ब्रह्मणो क्वचिदधिकारिणि निर्विशेषाकारेण स्फुरते च तस्मात्तत्सर्वात्मकत्वात् परमबृहत्तमायेत्युपसंहारो वा लीलानुरूपेणायमर्थः । तस्मै श्रीनन्दगोकुले प्रागपि सिद्धाय तुभ्यं श्रीनन्दात्मजाय भगवते नमः क्वचिद्वसुदेवापत्याय च वेधसं अद्भुतलीलासम्पादयित्रे अत एवात्मद्योतैः स्वरूपप्रकाशविशेषैरेव गुणैर्वाल्यलीलेत्यादिभिराच्छन्नैश्वर्याय यद्वा आत्मना त्वया त्वत्प्रभया द्योतन्ते त्वद्वदाभान्ति ये गुणा दामानि नैवंद्धत्वेनाच्छन्नविभुत्वाय सर्वमपि त्वयि सम्भवतीत्याहतुः ब्रह्मणा इति ॥ ३३ ॥

विवक्षितमाहतुः—यस्येति युग्मकेन । शरीरिषु मत्स्यादिजातिषु मध्ये अशरीरिणः प्राकृतशरीररहितस्य तव किं वा शरीरिषु वर्तमाना अप्यशरीरिणः तद्धर्मरहिताः शरीरेष्विति पाठे स एवार्थः । अतस्तैस्तैरनिर्वचनीयैः अत एवातुल्यातिशयैर्वीर्यैः प्रभावैरद्भुतचरितैर्वा देहिषु जीवेषु असङ्गतैरघटमानैरित्यर्थः । अवतारा अपि ज्ञायन्ते किं पुनस्त्वमवतारीत्यर्थः । अन्यत्तैः यद्वा एवं स्वप्रेमविवृद्धये विचित्रलीलया ऽऽत्मानमाच्छादयन्नपि त्वं नितरां प्राकट्यमेव यासीत्याहतुः—यस्येति । अर्थः स एव ॥ ३४ ॥

अहो भाग्यमित्याहतुः—स इति । भवाय विभवाय चेति ऐहिकामुष्मिकाशेषसम्पत्यर्थमित्यर्थः । साम्प्रतमवतीर्णः यतः आशिषां भक्तकामितानां सर्वेषामेव पतिः पालकः परिपूरक इत्यर्थः । साम्प्रतमित्यस्य यथा स्थितमत्रैव वा ऽन्वयः गोकुलक्रीडासमये अस्मिन्नित्यर्थः ॥ ३५ ॥

एवमवतारप्रयोजनेन स्वमङ्गलकारितौचितीमुपपाद्य तादृशं च तद्रूपं तादृशतन्नामकीर्तनद्वारेणानुमोदमानौ तदुचितसेवायामप्यक्षमं मन्यौ केवलं भक्त्या मुहुः प्रणमतः—नम इति । हे स्वतःपरमकल्याणस्वरूप ! किञ्च विश्वस्य मङ्गलं ऐहिकामुष्मिकसुखं यस्मादिति सकामनिष्कामभेदेन सम्बोधनद्वयं परममङ्गलेति क्वचित्पाठे परमाणां श्रीशिवादीनामपि मङ्गलेति व्याख्येयं "यच्छौचनिःसृतसरित्प्रवरोदकेन" इत्यादौ "शिवः शिवोऽभूत्" इत्युक्तेः तत् कुतः वासुदेवाय सर्वहितार्थमेव वसुदेवद्वारा प्रकटाय अतः शान्ताय निर्दोषाय सुखस्वरूपाय वा नित्यमेव तु यदूनां क्षत्रियाणां गोपानां च तेषां पतये कुलपतिरूपाय श्रीगोपानां च यादवत्वं स्कान्दमथुरामाहात्म्ये व्यक्तं "रक्षिता यादवाः सर्वे इन्द्रवृष्टिनिवारणात्" इति तथा "यत्राभिषिक्तो भगवान् मघोना यदुवैरिणा" इत्यादिना ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मद्योतगुणैः स्वस्य प्रकाशमानैर्गुणैः सञ्छन्नमहिम्ने जीवानां दुरवबोधमहिम्ने आत्मज्योतिर्गुणच्छन्नमहिम्न इति पाठे आत्मज्योतिस्स्वप्रकाशश्च गुणच्छन्नमहिमा चेत्यर्थः । श्रीभगवज्ज्योतिषः सूक्ष्मत्वात् सौशील्यादिगुणच्छन्नपरत्वाच्च दुरवबोधत्वं चोक्तं भवति ॥ ३३ ॥

शरीरिषु शरीरिणां मध्ये अशरीरिणः प्राकृतशरीररहितस्य कृतावतारा असङ्गतैः असम्भावितैः ॥ ३४ ॥

विभवः सम्भवः आशिषः अभ्युदयानि ॥ ३५ ॥

शान्ताय ऊर्मिषट्करहिताय ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तविधस्य भगवतः सर्वज्ञत्वं जीवैर्दुर्ज्ञेयत्वं चानुसन्दधतौ नमस्कुरुतः—तस्मा इति । तस्मै कृष्णकृष्णेत्यादिनोक्तगुणविशिष्टाय भगवते षाड्गुण्यपूर्णाय साधुपरित्राणार्थं वसुदेवात्मजत्वेनावतीर्णाय सर्वकर्त्रे आत्मद्योतैर्गुणैः स्वस्य प्रकाशकैर्गुणैश्छन्नमहिम्ने जीवानां दुरवबोधमहिम्ने आत्मज्योतिर्गुणच्छन्नमहिम्ने इति पाठे आत्मज्योतिः स्वयंप्रकाशः गुणच्छन्नमहिमा चेत्यर्थः । स्वरूपेण गुणैश्च निरतिशय... तुभ्यं नमः ॥ ३३ ॥

वासुदेवायेत्यनेनाभिप्रेतं विवक्षुस्तावत्सर्वावतारयाथा... माहतुः—यस्येति । शरीरेषु मत्स्यादिशरीरिणां मध्ये अशरीरिणः कर्मकृतशरीररहितस्य यस्य तवावतारा: सर्वे निस्समाभ्यधि... कर्मकृतदेहिष्वसङ्गतैरसम्भावितैस्तैस्तैस्तदवतारप्रतिनियतैर्वीर्यैः ... यन्ते कर्मकृतदेहिभ्यो विलक्षणत्वेन ज्ञायन्त इत्यर्थः ॥ ३४ ॥

स भवानिति सर्वस्य साधुलोकस्याशिषां समाहितस्य ... पवर्गादिपुरुषार्थानां भवायोत्पादनाय विभवाय उत्तरोत्तर... वृद्धये च पतिस्तासां पालकश्च भवितुमित्यर्थः । अंशमं... बलरामेण सह यद्वा सङ्कल्परूपज्ञानेन न तु करणेनि ... सांप्रतमधुनाऽवतीर्णः यद्वा सांप्रतमिति युज्यते इत्येतदर्थं... निपातः यतो भवानाशिषां पतिः प्रभुर्दाता अतो भवार्थं वि... वार्थश्चांशेनावतीर्ण इति युक्तमेवेत्यर्थः ॥ ३५ ॥

प्रकृतावतारासाधारणगुणाननुसन्दधतौ नमस्कुरुतः विश्व... मङ्गलावहत्वममङ्गलतरुजन्मविमोचनेनापरोक्षमेव प्रदर्शि... मिति तथा सम्बोधनाभिप्रायः स्वयममङ्गलस्यान्येषां मङ्गलावह... मनुपपन्नमिति तदपि सिद्धमेवेत्यभिप्रायेण परमकल्याणे... सम्बोधनं शान्तायोर्मिषट्करहिताय अशनायापिपासाशोकमो... जरामृत्यवः षडूर्मयः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु तद्विषयज्ञानाभावे तदुपासनाभावेन मोक्षाशावर्त... क एव ब्रह्म जानाति "स्त्रियः सतीस्ताम उमे पुंस आहुः" इत्या... श्रुतिः । इदमपि दर्शनं तत्प्रसादेनाङ्गीकर्तव्यं "यमेवैष वृणुते ... लभ्यः" इति श्रुतेः । यद्वा उत्पत्तेः प्राक् सिद्धं निरञ्जन... स्थितं कोनु विज्ञातुमर्हति लिङ्गाभावात् कथं गुणानां ... कानां लिङ्गानां संस्थितेः विनाशनात् जगतो न पृथक्त्वात्... नत इत्येव कार्ये तस्यापि तत्प्रीतिजनकत्वप्रतीतेरिति भाव... तस्मा इति किं निमित्तमेतद्विज्ञापनमिति तत्राह आत्मेति आत्म... त्वया द्योतन्ते कार्ये शक्तिमत्तया प्रकाशन्त इत्यात्मद्यो... तैर्गुणैः सत्त्वादिभिः छन्नो गूहितः महिमा यस्य स तथा ... "तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्" इति ... श्रुतेः । पिहितत्वमितरापेक्षया न स्वस्य अपरिच्छिन्नत्वे नाना...

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इत्यादिति भावेनाह, ब्रह्मण इति तदुक्तं "छन्नोऽन्येषां न तु स्वस्य भगवान् पुरुषोत्तमः" इति वेधसे कर्त्रे ॥ ३३ ॥

इदानीं कृष्णोनाम साक्षान्नारायणावतार एव न देवदत्तवत्कश्चिच्छरीरीति ज्ञापयितुं हरेर्द्विविधावतारा देहस्था अदेहस्था इति तत्र देहस्था अन्तर्याम्यादयो मत्स्याद्याः अदेहस्था इति भावेनाह,यस्येति.यस्य हरेरवतारा: शरीरेष्वन्तर्यामित्वेन ज्ञायन्ते अशरीरेषु शरीरव्यतिरिक्तबाह्यस्थलेषु अशरीरिणः मत्स्यादिरूपत्वेन ज्ञायन्ते कैः साधनैरित्यत्राह—तैस्तैरिति। ये ये मनसो नियमादयः शास्त्रविहिताः तैस्तैरतुल्यैः अन्यातिशयैरधिकैर्मनोनियमादिभिः अतुल्यातिशयत्वं कथमत्राह तिर्यग्योनिष्विति तिर्यग्योनिषु वराहादिसम्बन्धिनीषु प्रसङ्गैः असम्भाव्यैः तदुक्तं "यस्यावतारा देहस्था इति द्विधा" इत्यादि यद्वा तैस्तैरतुल्यातिशयैः माहात्म्यविशेषैः भूम्युद्धरणमन्दरधारणगोवर्द्धनोद्धारणलक्षणैरिति ॥ ३४ ॥

स त्वादृशो भवान् जनस्य भवाय पुण्यलक्षणभद्राय प्रभवाय महत्त्ववर्धनाय साम्प्रतं यदुकुलेऽवतीर्णोसीत्यन्वयः आशिषां शुभानां पतिः पालयिता दाता च भागेनांशेन ॥ ३५ ॥

इदमेव रूपं मूलरूपादन्यूनमहिमेति भावेनाह—नम इति ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विश्वं सर्वम् एवं प्राकृतसर्वात्मकत्वमुक्त्वा तदतीततदात्मकत्वमप्याहतुः—तस्मै स्वयं भगवते महानारायणाय वासुदेवाय तच्चतुर्व्यूहप्रथमाय वेधसे प्राकृतसृष्टिकर्त्रे सङ्कर्षणादिरूपाय कीदृशाय पुरुषाय आत्मेति अत एव तत्तत्सर्वात्मकत्वात् ब्रह्मणे परमबृहते ॥ ३३ ॥

तदेवं महिमानं निरूप्य तथाभूतस्य तस्यावतारेष्वपि महिमातिशयममर्यादं दर्शयित्वा तत्र तस्य कैमुत्यमापादयन्तौ साक्षात्तदवतारे सर्वलोकभागधेयान्तःपतितस्वभागधेयं श्लाघेते- यस्येति द्वाभ्याम्। भगवति देहदेहित्वयोर्भेदाभावात् जीववदसौ शरीरी न भवतीत्यशरीरिणः ॥ ३४—३५ ॥

तदेवानूद्य नमस्कुरुतः—नम इति। परमाणां शिवादीनामपि मङ्गलरूपवासुदेवाय वसुदेवद्वारा प्रकटाय शान्ताय सर्वस्य परमसुखरूपाय यदूनां क्षत्रियविशेषाणां गोपविशेषाणाञ्च ॥ ३६ ॥ ३७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तर्हि कथं निस्तारयति चेत्तत्राह—तस्मै तुभ्यमिति। कथं तस्मै सर्वबुद्धेयाय तुभ्यं नानाविनोदयुक्ताय नमः ननु "तमेव विदित्वातिमृत्युमेति"इति श्रुतेः कथं भगवत ज्ञाने निस्तार इति चेत्तत्राह-भगवन इति। भगवद्ज्ञानगुणेन भगवद्ज्ञानम् अज्ञातोपि प्रमेयबलेन निस्तारयतीति भक्तिस्तत्र प्रयोजिका यस्या मतं तस्यमतं मतं यस्य न वेद सः अविज्ञा तं विजानतां विज्ञातमविजानतामिति श्रुत्या अज्ञात एव ज्ञातो भवति अतो भगवानीश्वरः केन ज्ञातुं शक्यः किञ्च प्रमाणबलेनाज्ञातोपि स्वतो ज्ञातुं शक्यः यतोयं वासुदेवः वसुदेवे शुद्धसत्त्वे आविर्भवतीति आविर्भूतस्तु सर्वैरेव ज्ञातुं शक्यः नन्वेतदेव सर्वं कुतो भवेत् साधनपरता साधनोत्पत्तिः सत्त्वशुद्धेराविर्भाव इति तत्राह—वेधस इति। सहि सर्वं विदधाति अन्यथा तेन कृतः सन्मार्गो व्यर्थः स्यात् नमो धीमहीति वा हृदये प्रत्यक्षे भगवति तत्पादयोः शिरःस्थापयित्वा मनसा यन्नमनं तत्सोपस्करं धीमहीत्यर्थः। अतोन्तःकरणप्रत्यक्ष एव भगवान् न बहिः प्रत्यक्षविषयः तर्हि बहिर्नास्तीत्येव मन्तव्यं तत्राह—आत्मद्योतेगुंणैश्छन्नमहिम्न इति। आत्मना स्वेनैव द्योतो येषां गुणा अपि भगवतैव प्रकाश्यन्ते यथा सूर्येण मेघास्त एव तस्य वरका भवन्ति न हि गाढान्धकारे निशायां मेघा दृश्यन्ते एवं सर्वैरेव विपर्यैरात्मनैव प्रकाशितैश्छन्नो महिमा यस्य अतो न प्रकाशते वस्तुतस्तु वर्तत एव सर्वत्र अन्तर्बहिः स्थितौ हेतुमाह—ब्रह्मण इति। बृहत्वाबृंहणत्वाद्ब्रह्म अतः सर्वत्रैव वर्तसे परमन्तरेव प्रकाशसे न बहिरिति ॥ ३३ ॥

तर्हि कथमवतारा बहिः प्रकाशरूपा भगवान् भवतीति तत्राह "यस्यावतारा इति। मत्स्यादिषु शरीरेषु कश्चिदेव मत्स्यविशेषे अलौकिकभावो दृश्यते स च न जीवधर्मो भवतीत्यशरीरिणस्तत्र तेष्ववतारा इति ज्ञायन्ते अशरीरिण इति वचनात् शरीराकृतिरेव तत्र प्रकाशते न तु तच्छरीरम् अन्यथा बुद्धिर्नोपपद्येत सामर्थ्यं परमाधिकं भवेत् तस्माच्छरीराकारेण भासमानं भगवद्रूपमेवेति न तुल्यमतिशयो वा यस्य यस्मादन्यत्र तदतुल्यातिशयं कालापेक्षया नान्यस्य वीर्यमस्ति कालमर्यादां चोल्लङ्घति तदा भगवद्वीर्यमतुल्यातिशयमिति ज्ञायते सोपि नैकविधः पराक्रमः क्षणेन विश्वरूपो भवति क्षणेन वामनो दृश्यश्चादृश्यश्च बहिरन्तः परिच्छेदो व्यापकश्च अतो ज्ञायते सर्वेष्वेव देहिष्वसङ्गैः कदाप्यसम्बन्धे भगवानेवायमिति न तु प्रत्यक्षतया भगवानिति निश्चेतुं शक्यत इत्यर्थः तत्रापि कदाचिच्छेदलौकिकं भवति कल्प्येतापि कथञ्चिज्ज्ञातमिति सर्वदा चेद्वाङ्मनोगोचरा अनुभावास्तदा कथं न ज्ञायेत तदाह-तैस्तैरिति ॥ ३४ ॥

एवमवतारेषु भगवद्ज्ञानमानुमानिकं न प्रत्यक्षमित्युक्तं प्रकृते तु शब्दादेव नारदकृपया वा भगवानित्यर्थमागत इति ज्ञायत इत्याहतुः—स भवानिति। यः पूर्वोक्तः सर्वप्रमाणैर्यो लौकिकैरवेद्योन्तःकरणप्रत्यक्षोऽवतारी स चतूरूपो भवान् अत एव सर्वस्यैव लोकस्य भवायोद्भवाय ऐश्वर्याय च अंशेन भागेन च साम्प्रतमवतीर्णः यतो भवानाशिषां पतिः स्वरूपतो भवांश्चतूरूपः विकृतप्रकारेण ततोप्यधिकाश्च गुणाः सर्वएव लोका उत्पादनीयाः ततस्तेभ्यः स्वसमानैश्वर्यादिकं च देयं भगवत्यंशतः समागते सर्वे भगवदीयाः शुद्धसत्त्वांशेनैवाविर्भवन्ति भगवत्सर्वोपयिकदासरूपांशेन वा सर्वलोकाः स्वदासभावेनाविर्भवन्त्विवतीच्छया भगवानेकदेशभावं प्रकाशितवान् समुदाये भदयाभजनाद्यनुपपत्तेः न हि प्रलयाग्निः सेवितुं शक्यते किञ्च भागाः कलाः कलयावतीर्णः सर्वेषां सर्वकला

**अनुजानीहि नौ भूमंस्तवानुचरकिङ्करौ ।**
**दर्शनं नौ भगवत ऋषेरासीदनुग्रहात् ॥ ३७ ॥**

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कौशलाय सर्वाः कलास्तदैव प्रादुर्भवन्ति यदि मूलभूतः कला रूपेणाविर्भवति तदैव च सर्वाः कलाः पूर्णा भवन्ति इदं स्वोपयोगायोक्तं स्वस्यापि वैष्णवरूपेणोद्भवा भक्तिफलाश्च पूर्णा भविष्यतीति एता एवाशिषः अग्रे प्रार्थ्यमानत्वात् मानुषभावेन नानाविधाः क्रीडा भक्तानुत्पाद्य तेषु भक्तिस्थापनार्थाः इत्यर्थः ॥ ३५ ॥

किञ्चित् प्रार्थयितुं नमस्कारं कुरुतः—नम इति । आदिमध्यावसानेषु नमनं मन आदिभिः आदौ कायिकं नमनं तत्र फलं परमकल्याणेति कल्याणानां निधानरूपो भगवान् कल्याणानि शुभफलानि पुत्रजन्मादीनि लोके प्रसिद्धानि परमानन्दः परम कल्याणः कायेन नमस्कृतः शरीरोपभोगाय परमकल्याणः प्रादुर्भवति नमस्त इति वाचनिकं ते तुभ्यमिति कीर्तनात् तस्य फलं विश्वमङ्गल इति वेदादिनिर्माणात् विश्वस्मै तत्साध्य फलरूपो मङ्गलं भवति अन्ते नमनं मानसं तदर्थं मनस्या विर्भावाय वासुदेवायेति शान्तायेति ज्ञानरूपाय केवलमाविर्भूते नारदवद्ज्ञाते तथा पुरुषार्थो न भवतीति शान्तं लयविक्षेपशून्यं रूपम् आविर्भावो ज्ञानं चोक्तं फलमाह—यदूनां पतय इति भगवान् स्वामीफलं यथा यदूनाम् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतो दुर्ज्ञेयत्वात् केवलं प्रणमतः—तस्मा इति । वेधसे विश्वकर्त्रे दुर्ज्ञेयत्वस्य कारणं गुणसंवृत इति संवृतत्वमुक्तमेव पुनरपि स्पष्टयतः आत्मना स्वयैव द्योतन्ते इति स्वप्रकाशैर्गुणैश्छन्नो महिमा मेघैरिव रवेर्यस्य तस्मै ॥ ३३ ॥

सत्यं परमेश्वर एवंभूतो भवत्येव युवां तु मामेव परमेश्वरं केन लक्षणेन ब्रूथो तत्राहतुः यस्य अवतारा मत्स्यादयः शरीरिषु मत्स्यादिजातिषु मध्ये ज्ञायन्ते अनुमीयन्ते अशरीरिणः प्राकृतशरीररहितस्य तव कैः देहिषु जीवेष्वसङ्गतैरघटमानैर्वीर्य्यैः प्रभावैः स भगवानवतारी खल्वेव भवसि हस्तिसहस्रेणापि दुरुत्पाटनयोरावयोरर्जुनयोरर्जुनसमौजसो बाल्यलीलोदितबलवेनाप्युत्पाटनात् रज्जूलूखलयोरपि तादृशशक्त्यार्पणादिति भावः । भवाय भूत्यै विगतो भवो यस्मात्तस्मै मोक्षाय अंशभागेन अंशांशेन ब्रह्मरुद्रादिना आशिषां सर्वकामनानां पविदाता यः स एवेत्यर्थः ॥ ३४ ॥ ३५ ॥

परमकल्याणं यस्मात्तस्मै हे स्वयं च परममङ्गलस्वरूप ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतस्तस्मै उक्तप्रकाराय तुभ्यं नमः, कथंभूताय ? भगवते स्वाभाविकषाड्गुण्यनिधये वासुदेवाय वासयतीति वासुः ... भारः स एव दीव्यति बालरूपेण क्रीडतीति देवस्तस्मै ... वेधसे स्वशरणाहिताभिधानकृते आत्मनि जीवे द्योतः ... येषां तैर्जीवज्ञानाच्छादकैर्गुणैर्यथा चक्षुः पिधानेन सं... तेजश्छन्नो भवति तद्वच्छन्नो जीवानां दुरवबोधो महिमा ... तस्मै ब्रह्मणे बृहत्स्वरूपगुणाय ॥ ३३ ॥

नन्वहं भवद्भ्यां कुतो ज्ञातस्तत्राहतुः—यस्येति ... देहिषु असङ्गतैर्वीर्यैः अशरीरिणः प्राकृतशरीरीजीवस्... णस्य परमात्मनः यस्यावतारिणस्तव शरीरिषु देवतिर्यग... अवताराः अविज्ञायन्ते स भवान् अवतीर्णः सुतरां ज्ञायते... द्वयोरन्वयः ॥ ३४ ॥

अंशाः जीवास्तेषां भागः बुभुक्षूणां भोगरूपः मुमु... मोक्षरूपः यस्मात्तेन रूपेण एतदेवाहतुः भवाय भोगाय ... भवो यस्मिन् तस्मै विभवाय मोक्षाय अवतीर्णः ... ज्ञायते इति शेषः ॥ ३५ ॥

वासुदेवाय वसुदेवापत्याय ॥ ३६ ॥

---

भाषा टीका ।

तिनवेधा वासुदेव भगवान् आपको नमस्कार होय। ... के प्रकाशक गुणन सों ढंप रह्यो महिमा जाको, ऐसे ... आप को नमः हो ॥ ३३ ॥

प्राकृत देहसों रहित ऐसे आपके अवतार देव मनु... तिर्यक् आदि शरीरन में भी तिन तिन अधिकसाम्य ... पराक्रमन सों जाने जांय हैं। परं च वास्तव में देहधारि... असङ्गत आपके वीर्य है ॥ ३४ ॥

सोई भगवान् सर्व लोक के ऐश्वर्य और मोक्षके ... या समैं सर्व मनोरथनके पूर्ण करन वारे आप अंशभाग... अवतार लेकें प्रकटे हो ॥ ३५ ॥

हे परम कल्याण ! हे परम मंगल ! आपकों नमस्कार ... वासुदेव शान्त और यदून के पति ऐसे आपको नम... होय ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नौ आवाम् अनुचरः कुवेरो नारदो वा तस्य किं... भगवतस्तव दर्शनम् ॥ ३७ ॥

---

वाणी गुणाऽनुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव(१) निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥ ३८ ॥

श्रीशुक उवाच ।

इत्थं सङ्कीर्तितस्ताभ्यां भगवान् गोकुलेश्वरः ।
दाम्ना चोलूखले बद्धः प्रहसन्नाह गुह्यकौ ॥ ३९ ॥

श्रीभगवान् उवाच ।

ज्ञातं मम पुरैवैतदृषिणा करुणात्मना ।
यच्छ्रीमदान्धयोर्वाग्भिर्विभ्रंशोऽनुग्रहः कृतः ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र गतयोरावयोः पूर्वस्वभावो माभूत् किं तु वाणी गुणानुकथन इत्यादि नः अस्मदोद्वयोश्चेति द्विवचनस्थाने बहुवचनम् । अस्मत्साङ्गिनां सर्वेषामपीति बहुवचनं वा तव निवासभूतं यज्जगत्तस्य प्रणामे त्वन्निवासभूतमिति बहुमानेन जगतः प्रणामे शिरोऽस्त्वित्यर्थः । भवत्तनूनां भवतो मूर्तीनाम् ॥ ३८ ॥

सङ्कीर्त्तितः संस्तुतः ॥ ३९ ॥

वाग्भिः "न ह्यन्यो जुषतो जोष्यान्" इत्यादिभिः श्रीविभ्रंशरूपोऽनुग्रहः कृत इति ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं स्तुत्वा देवत्वेनानवसरे तत्रावस्थितिमयुक्तां मत्वा तादृशं स्थावरत्वमेवानुशोचन्तावाहतुः—अनुजानीहीति । गन्तुमेवेति भावः भूमन् ! हे परमेश्वर ! अन्यत्तैः । यद्वा, अनुजानीहि आवांप्रति किञ्चिदाज्ञां विधेहीत्यर्थः । भूमन् हे सर्वतः परिपूर्णेति यद्यपि तव काप्यपेक्षा नास्ति तथापीति भावः । तच्च भक्तवात्सल्यादेवेत्याहतुः अनुचरस्य भक्तस्य श्रीशङ्करस्य किङ्करौ रुद्रस्यानुचरावित्युक्तेः । यद्वा श्रीनारदकिङ्करौ तत्प्रसादेनैवैतादृशफलप्राप्तेस्तदनुगतिस्मरणस्यैव प्रस्तुतत्वात् युक्तत्वाच्च । यद्वा, अनुचराणां किङ्कराविति निरन्तरम् अनुजानीहि यद्वा, तवानुचराणां गोपबालकानां किङ्करौ अनुजानीहि एषां किङ्करौ कृत्वा अत्रैव रक्षेत्यर्थः । नन्वतिदुर्लभमिदं तत्राहतुः—अनुग्रहादिति । नौ आवाभ्यां तव दर्शनं भगवतः परमदयालोः अचिन्त्यप्रभावस्य वा प्रभोः ऋषेः श्रीनारदस्य महापराधिनोरप्यलभ्यलाभसिद्धेरेतदप्याशास्महे इति भावः ॥ ३७ ॥

श्रीनारदानुग्रहेण मद्भक्ताविव युवां वृत्तौ ततस्तत्रैव गच्छतमिति चेत्तर्हि सर्वभक्तिप्रकारं देहीति भक्तिस्वभावेनैव प्रार्थयेते वाणीति । तव पादयोर्गुणानां भक्तवात्सल्यादीनां सौन्दर्यादीनां च अनु निरन्तरं कथन एव न तु योगयागादिनिरूपणे नः अस्माकं वाणी वागिन्द्रियमस्तु पादयोरिति भक्त्या न तु तन्मात्रविवक्षया श्रवणाविति द्विवचनेन श्रवणेन्द्रियस्य साकल्येन प्रवृत्तिरभिप्रेता एवमग्रेऽपि कथायां कथामात्रे अद्भुतत्वसृष्ट्यादिहेतुत्वकथनेऽपीत्यर्थः । श्रवणे स्वातन्त्र्याभावात् स्वयं कथनं तु भगवन्माधुर्यस्यैव रस्यत्वात् गुणानुकथायामित्यत्रापि गुणकथायामित्येव पूर्वस्मारस्यात् ज्ञेयं कर्मसु पूजापरिचर्यालक्षणेषु चशब्दः सर्वेरेवान्वेति शिर इति तत्र प्राधान्यादर्थाशक्त्याच तत्तु तव निवासो वसतिस्थानं जगद्यस्य तस्य संबोधनं तर्हि न पुनरुक्तिः जगन्निवासतया जगत्प्रणामेन त्वत्प्रणामे सिद्धेऽपि तदेकदृष्ट्यपेक्षया तव निवासभूता ये जगतो जङ्गमरूपाः श्रीवैष्णवरूपास्तेषां प्रणामे शिरश्च तस्योभयलिङ्गमानेतत् इत्युक्तेः यद्वा तव निवासोऽयं यो व्रजस्तत्रस्थस्य जगतः सर्वस्य दूरतोऽपि प्रणामे दृष्टिः चक्षुरिन्द्रियं भवत्तनूनां विशेषाणां सतां श्रीनारदादीनां यद्वा सतां श्रीवैष्णवानां भक्ततनूनाञ्च अर्चारूपाणाञ्च दर्शने साक्षात्त्वद्दर्शनेऽस्त्विति तु गृहेष्वसम्भवं भयादिना न प्रार्थितम् एवं स्पर्शादिकमुपलक्ष्यम् ॥ ३८ ॥

गोकुलेश्वरः प्रहसन् गुह्यकावाह—गुह्यकाविति । तयोस्तादृशपूर्वावस्थत्वं सूचयित्वा भाग्यातिशयं दर्शयति । प्रहासे हेतुः स्वयं भगवान् ताभ्यामपीत्थं भगवत्त्वेनैव कीर्तितः "दाम्ना चोलूखले बद्धः" इति प्रथमतस्तावद्बद्धस्तत्रापि दाम्ना तत्राप्युलूखल इत्यर्थः अतो भयेनैवैतौ न हसत इत्यभिप्रेत्य स्वयमेव हसति स्मेति भावः गोकुलेश्वरो भगवानिति गोकुलेशनशीलत्वाद्गोकुलेश्वरनामायमस्माकं भगवानेवं प्रियजनप्रेमवश्यतया गोकुले नित्यकौतुकशील इति गोकुलं चेदं परमविलक्षणं जानीहीति च व्यञ्जयति ॥ ३९ ॥

एतन्मम ज्ञातमेवेति अन्यथा महदपराधिषु मन्मनःकृपानुपयोगात् । यद्वा, श्रुतेरासीदनुग्रहादिति तयोरुक्त्या प्रीतः सन् तामेव दृढयन् तयोः प्रहर्षार्थमन्यमोदनेति करुणात्मना दयाशीलेन करुणात्मनामेवाह श्रीमदान्धयोरप्यनुग्रहः कृत इत्यन्वयः यद्वा, स्यातां नैवं यथा पुनरित्यादिवहुलवरप्रदानमयीभिर्वाग्भिः कथम्भूतः विगतो भ्रंशोऽधःपातो महापराधकृतो महानरकादिरूपो यस्मात् ॥ ४० ॥

(१) "सुरवरप्रवर इति विज०।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तवाऽनुचरकिङ्करौ अनुचरौ वैश्रवणस्तस्य किङ्करौ ॥ ३७ ॥ निवासस्तव धाम । यद्वा, निवासभूतं व्याप्यं जगद्यस्य स निवासजगत् ॥ ३८—४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं संस्तुत्यात्मनोः कृतार्थत्वाय तद्दासपर्यन्तदास्यं प्रार्थयमानौ विज्ञापयतः—अनुजानीहीति । हे भूमन् ! निरवधिकानन्दशालिन् ! तवानुचरकिङ्करौ यथा भवावस्तथाऽनुशाधीत्यर्थः । किमिदं प्रार्थयेथे इत्यत्रोचतुः ऋषेस्तवानुचरस्यानुग्रहादेव भगवतः षाड्गुण्यपूर्णस्य पुरुषार्थनिधेस्तव दर्शनं नौ आवयोरासीत् महाफलत्वात्त्वद्दासदास्यमेवानुग्राह्यमिति भावः ॥ ३७ ॥

किञ्चावयोर्वाग्यादयः त्वद्गुणानुकथनादिप्रवणाः यथा स्युस्तथानुगृहाणेत्यूचतुः—वाणीति । तव गुणानुवादे श्रवणं श्रोत्रे कर्मसु पूजारूपेषु हस्तौ तव पादयोः स्मृत्यां स्मरणं मनोऽस्तु निवासो जगद्यस्य तस्य सम्बुद्धिः जगतो निवासेति वा आर्षः परनिपातः तव प्रणामे शिरः भवत्तनूनां त्वन्मूर्तीनां सतां च दर्शने दृष्टिरस्तु यद्वा तव सतां तावकानां सतां च प्रणामे शिरोऽस्तु भवत्तनूनां दर्शने दृष्टिरस्तु ॥ ३८ ॥

इत्थमित्यादिश्लोकः स्पष्टार्थः ॥ ३९ ॥

तदेवाह—ज्ञातमिति । वाग्भिः "न ह्यन्यो जुषतो जोष्यान्" इत्यादिभिः श्रीमद्यान्ययोर्युवयोः श्रीविभ्रंशरूपोऽनुग्रहः कृत इति यदेतत् पुरैव मम मया ज्ञातम् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भूमन् ! अनवच्छिन्नज्ञानानन्दस्वभाव ! सदानुचरावनुगतावुक्तकारिणौ च तौ अनुजानीहि अनुज्ञां कुरु यदृच्छया प्राप्तमहत्सङ्गमो भवद्दर्शनसाधनमभूत् किंपुनर्बुद्धिपूर्वकमिति भावेनाह दर्शनमिति ॥ ३७ ॥

इतः परं श्रीमदादिकमावयोर्न भवितव्यं यत इन्द्रियाणां विषयव्यापारः स्यात् स न स्यात् किन्तु तव गुणादावेव वागादीन्द्रियव्यापारः स्यादिति प्रार्थयते वाणीति ॥ ३८ ॥ ३९ ॥

सानुग्रहः शापः मोक्षलक्षणानुग्रहसहितः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तव निवासोऽयं यो व्रजस्तत्रस्थस्य जगतः सर्वस्य दूरतोऽपि प्रणामे ॥ ३८ ॥

इत्थमिति दाम्नेत्यादि प्रहासे कारणं गोकुलेश्वर इति लीलार्थप्रत्ययेन तन्नाम्ना च नित्यतादृशलीलत्वं दर्शयति ॥ ३९ ॥

विगतो भ्रंशो यस्मात् ॥ ४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं नमस्कृत्य गमनार्थं प्रार्थयेते—अनुजानीहीति । नौ आवाम् अनुजानीहि अनुज्ञां प्रयच्छ भूमन्निति सम्बोधनं स्वस्य तत्र स्थातुमयोग्यतार्थं तदेवाह—तवानुचरकिङ्कराविति । तवानुचरस्य नारदस्य किङ्करौ दासौ सेवकसेवकत्वमेवोचितं न त्वत्सेवकत्वमावयोः यतस्त्वं भूमा महान् न ह्यल्पेन महतः सेवा कर्तुं शक्यते ननु दर्शनयोग्यता यदा तदा सेवायोग्यतापि सिद्धैव ततः कथमयोग्याविति चेत्तत्राहतुः दर्शनं नौ भगवत ऋषेरासीदनुग्रहादिति महाराजसेवकः स्वभृत्यं कदाचिन्महाराजस्थानं नयति नैतावता तस्य महाराजसेवायोग्यता भवति अतो दर्शनान्यथानुपपत्त्या न सेवायोग्यता भगवतो दर्शनं ऋषेरनुग्रहादिति ऋषेर्भगवत इति गुरुदेवतयोरैक्यार्थं । सह निर्देशः ॥ ३७ ॥

एवं गमनं प्रार्थयित्वा तत्र गतयोर्भक्तिं प्रार्थयेते—वाणीति । षडङ्गानि पुरुषे प्रधानानि ।

> वाक् श्रोत्रे च करौ चित्तं शिरः चक्षुस्तथैव च ।
> षडेते भगवत्कार्ये यदि सक्ताः कृतार्थता ॥
> कीर्तने श्रवणे चैव गुणानां रूपदास्यके ।
> स्वरूपस्मरणे नत्यामवतीर्णस्य दर्शने ॥

गुणानामुत्कर्षाधायकधर्माणां कीर्तने वागस्तु तत्रैव सा [illegible] युक्ता भवतु यथा वराय दत्ता कन्या नान्यगामिनी [illegible] नाप्यन्यः प्रार्थयते नापि पतिभयात्साऽन्यसम्बन्धिनी कदाचित् भवति तथा वाणी भवतु एवमेव श्रवणौ कथायां हस्तावुभावपि भगवतः सर्वकर्मसु आष्टयामिकेषु चकारात्पादावपि मन्दिरगमनादिषु तद्व्यतिरेकेण हस्तसेवा नोपपद्यत इत्युभयं रूपं तव पादयोः स्मृत्यां नौ मनोऽस्तु स्मरणे सर्वांनेव भक्तानेकीकृत्याहतुः—पादयोरिति । द्विवचनं रूपान्तरे तथाऽऽवयोः शिरस्तु प्रणामे चतुरङ्गया भक्त्या भगवतः सर्वस्थितिः [illegible]न्तरत्वं च स्फुरिष्यति अतः सम्बोधयतः हे निवासजगत् निवासभूतं जगद्यस्येति दृष्टिस्तु सतां दर्शनेऽस्तु भगवद्दर्शनं चाष्टयाम प्रार्थितं ननु तेषां दर्शने किं स्यात्तत्राह—भवत्तनूनामिति भगवत्स्वरूपास्ते तत्र भगवान् वर्तत इति यथा [illegible] गोलके वह्निः यथा वा गङ्गायां जलम् ॥ ३८ ॥

एवं गमनभक्त्योः प्रार्थनायां कृतायां सर्वथा भक्ती [illegible]मेव जयो भविष्यतीति किञ्चिन्मोहयित्वा किञ्चिद्वक्तव्यमिति इत्थमिति । एवंप्रकारेण सम्यक् कीर्तितः तोषपर्यन्तं [illegible] प्रहसन् गुह्यकावाह—सर्वकरणादानयोः समर्थः इति [illegible] भगवानिति शीघ्रं तयोर्मुक्तौ गोकुले स्वस्य क्रीडायाम [illegible] प्रवेशो भविष्यतीति ज्ञापयति गोकुलेश्वर इति गोकुलवासिनामेव साम्प्रतं तद्युक्तं नत्वन्येषाम् अतो गोकुलक्रीडासम[illegible] पर्यन्तं तयोर्मोहनमुचितमेव किञ्च दाम्ना उलूखले च [illegible] यस्तु गोकुलरमभोगार्थं तत्र गौणभावं प्राप्तः तेषु [illegible] विश्वासिद्ध्यर्थं तदधीनो जातः देवयोर्गोकुले स्थितयोः [illegible] कापि न जातेति शङ्कापि न कर्तव्या यतः गोकुलेश्वरः [illegible] यद्यः वस्तुतस्त्वीश्वर एव लोकदृष्ट्यापि नन्दस्यापीश्वर इतीश्वर एव सन्दाम्ना यन्त्रितः तदा कस्य गोकुले [illegible] स्यात् उचितं चैतद्द्वयोरत्र वृत्तान्तम् एवं गोकुलवासि वृत्तान्तं स्मृत्वा प्रहसन् वक्ष्यमाणमब्रवीत् ॥ ३९ ॥

यत् युवाभ्यां प्रार्थ्यते तत्किमपि नावशिष्टं मदधिक[illegible]

**साधूनां समचित्तानां सुतरां मत्कृतात्मनाम् ।**
**दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥ ४१ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्सम्पादनात् द्वयं हि पुरुषार्थः मुक्तिर्मयि प्रेम च निरोधस्यो भयरूपत्वात् भयश्च विस्मृतिर्मुक्तिः सा पूर्वमेव जातेत्याह—ज्ञातमिति । ममैतत् पूर्वमेव ज्ञातमासीत् ऋषिणा करुणात्मना श्रीमदान्धयोर्विभ्रंशः कृतः सेवकाः कदाचित् स्वेच्छयापि कुर्वन्तीति तद्व्यावृत्त्यर्थं ज्ञानमुच्यते न केवलं ज्ञानं किन्त्वभिमतमिति ऋषिप्रशंसा ततो मयैवैतावत्कृतमित्यर्थात् ज्ञापितम् अतो न प्रार्थनीयं किञ्चिदवशिष्यत इति भावः शापो ह्यपकारे भवति स शापदातुः समानाधिकरणो भवति परदुःखमपि दृष्ट्वा कारुणिको दुःखितो भवति,तदाह—करुणात्मनेति । करुणायुक्त आत्मा अन्तःकरणं यस्येति भाव्यर्थाद्द्वयं भावज्ञानाद्धपित्वं युवयोस्त्वतिक्लिष्टत्वमाह श्रीमदान्धयोरिति अन्धनमस्य उद्धारोऽवश्यं कर्तव्यः वाग्भिरिति वचनमात्रं तेनोक्तं ज्ञापनार्थः कृतिस्तु मयैव कृता अत एव वाग्भिर्यो विभ्रंशः ज्ञानरूपः सत्वनुग्रह एव ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनुचरस्य नारदस्य किङ्करौ ॥ ३७ ॥

त्वदनुचरकिङ्करत्वादेवावयोस्त्वद्दर्शनातिशयमालक्ष्यान्यैर्दुर्लभमपीदं प्रार्थयितुमुत्सहावहे इत्यभिव्यञ्जतावाहतुः वाणीति । अत्रैक एव चकार एवार्थकः प्रतिसप्तम्यन्तं योज्यः तेन तव गुणानुकथन एव वाणी भवतु नत्वन्यकथायामित्येवं सर्वत्र व्याख्येयं नः आवयोर्मनस्त्वदीयपादयोः स्मृत्यां निवासभूतानां जगतां जङ्गमानां नारदादिभक्तानां प्रणामे शिरोऽस्तु हे निवासजगदिति सम्बोधनपदं वा भवत्तनूनां त्वन्मूर्तिरूपाणाम् ॥ ३८ ॥

सङ्कीर्तितः संस्तुतः दाम्ना चकारात् प्रेम्णा च बद्धः प्रहसन्निति प्रहासोयमेते उपदेवाद्यो मन्मायया बद्धाः स्वमोचनार्थं यं मां स्तुवन्ति सोऽहं यशोदादिगोपीभिर्दाम्ना प्रेम्णा च यद्धोऽभीक्ष्णं भर्त्सितश्चेह गोकुले तिष्ठामि अत्रत्यानां तासां भर्त्सनेनाहं यथा प्रीये न तथाऽनयोः स्तुत्येति व्यञ्जयति ॥३९॥

वाग्भिः "नह्यन्यो जुषतो जोष्यान्" इत्यादिभिः श्रीविभ्रंशरूपः अनुग्रहः एव कृत इति ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतो नौ आवयोः भगवतः दर्शनम् ऋषेरनुग्रहादासीत् अतः नौ आवां तवानुचरस्य हंससनत्कुमारद्वारा तव शिष्यस्य देवर्षेः अनुचरौ वासुदेवस्य सान्निध्यं लब्धेति भवद्धाममन्त्रमर्मवाक्यौपदेशतः शिष्यौ सनकादीनां हंसरूपिणो भगवतः शिष्यत्वमिहैवैकादशे स्कन्धे प्रसिद्धं सनकादिशिष्यत्वं देवर्षेः छान्दोग्येऽप्युक्तम् एवं भवदीयौ एनावाम् अनुजानीहि आज्ञापय इहैव परिचर्यायामित्यभिप्रायः ॥ ३७ ॥

यद्यन्यत्र प्रेषितव्यौ तत्रापि नः अस्माकं परिजनाभिप्रायं बहुवचनम् वाणी तव गुणानुकथने अस्तु तव पादयोः स्मृत्यां मनोऽस्तु भवत्तनूनां भवतो मूर्तिभूतानां सतां साधूनां दर्शने दृष्टिरस्तु किंबहुना तव निवासभूतं यज्जगत्तस्य प्रणामे नः शिरोऽस्तु ॥ ३८—३९ ॥

करुणः कारुणिकः आत्मा मनो यस्य तेन " न ह्यन्यो जुषतो जोष्यान् " इत्यादिभिर्वाग्भिर्यत् श्रीमदान्धयोर्युवयोः श्रीविभ्रंशरूपोऽनुग्रहः कृत इत्येतत् मम पुरैव ज्ञातम् ॥ ४० ॥

---

### भाषा टीका

हे भूमन् ! आपके अनुचर किंकर ऐसे हम दोऊन को आज्ञा देव हम दोउन कों भगवान् श्रीनारदजी के अनुग्रह सों आप के दर्शन भये हैं ॥ ३७ ॥

हे भगवन् ! हमारी वाणी आप के गुणानुवाद में रत रहै आप की कथा में श्रवण लगें, आप के कैंकर्य में हाथ लगे रहें, और मन हमारो आप के श्रीचरणारविन्दन को स्मरण करे, हमारो माथो आपके निवास रूप जगत के प्रणाम में लग्यो रहै ॥ ३८ ॥

शुक उवाच ॥

श्रीशुकदेवजी बोले, कि जब उन दोनों गुह्यकन नें भगवानें की ऐसें स्तुति कीनी, तब यशोदा की बांधी भई रसरी में बंधे भये भगवान श्रीगोकुलेश्वर गुह्यकनसों हंस कर कें यों बोलत भये ॥ ३९ ॥

श्रीभगवानुवाच ॥

श्रीभगवान् बोले, कि–परम कृपालु श्रीनारदजीने श्रीमदान्ध ऐसे तुम दोऊन पै कृपा करिकें तुमरो या देवतान की श्रीसों भ्रंश करिदीनों सो ये ही बडो अनुग्रह कीनों या बात कूं मैंने पहिलेई जान लीनी ही ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

युक्तमेवैतदित्याह—साधूनां स्वधर्मवर्तिनां समचित्तानामात्मविदां सुतरां मत्कृतात्मनां मय्यर्पितचित्तानां तेषां कृपातिरेकात्सुतरामित्युक्तं सवितुर्दर्शनादक्ष्णोर्यथा बन्धो न भवेत्तद्वत् ॥ ४१ ॥

तद्गच्छतं मत्परमौ नलकूवर ! सादनम् ।
सञ्जातो मयि भावो वामीप्सितः परमोऽभवः ॥ ४२ ॥

श्रीशुक उवाच ।

इत्युक्तौ तौ परिक्रम्य प्रणम्य च पुनः पुनः ।
बद्धोलूखलमामन्त्र्य जग्मतुर्दिशमुत्तराम् ॥ ४३ ॥

इतिश्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे यमलार्जुनभञ्जनं नाम
दशमोऽध्यायः ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रधान्यादेकस्य सम्बोधनम्, हे नलकूवर ! युवां तत्तस्मात् स्वादनं स्वनिकेतं मत्परमौ सन्तौ गच्छतं वां युवयोरपेक्षितो मयि प्रेमा जात एव अभवः न भवो यस्मिन् सः ॥ ४२ ॥

बद्धोलूखलं बद्धमुलूखलं यस्मिंस्तम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

साधूनामिति तैर्व्याख्यातमेव तत्र पूर्वयोर्यथा यथं यत्किञ्चित् बन्धनहारित्वं सुतरामित्यनेन व्यञ्जितं यद्वा साधूनामिति कृपालुतायां समचित्तानामित्यपराधाग्रहणे मत्कृतात्मनामित्यस्य स्वाभाविकगुणव्यञ्जकं विशेषणद्वयं तेषां दर्शनादपि पुंसो जीवमात्रस्य सुतरां संसारबन्धो न भवेत् किं पुनस्तादृशयद्दुबयालक प्रयोगानुग्रहात् भवतोरवद्यात्त्वादेव तदपेक्षा जातेति भावः सुतरामिति श्रवणकीर्तनादिना ऽपि न भवेत् दर्शनात्तु सुतरामिति ज्ञापकम् अक्ष्णोर्यन्धस्तमः कृतः अत्र च दर्शनादिति सुतरामित्यपेक्षया तत्पूर्वतो ऽपि तन्नाशात् ॥ ४१ ॥

मत्परमौ मदेकान्तिनौ सन्तौ यतः सञ्जात इति अन्यत्रैः यद्वा युवयोर्मयि भावः प्रेमा नारदानुग्रहात् सम्यग्जात एव सतः परमो भवः अभ्युदयः मदेकभक्तिलक्षणः "वाणी गुणानुकथने" इत्यादिना युवाभ्यामीप्सितः एवं श्रीनारदानुग्रहसम्बन्धेन निजसन्तोषातिशयव्यञ्जनात् तदतिशयो ऽपि स्यादिति व्यञ्जितं सहजविनयादिगुणामृतपयोनिधित्वात् साक्षात्तु नोक्तमिति ज्ञेयम् ॥ ४२ ॥

पुनर्बद्धोलूखलमिति श्रीशुकदेवस्य कौतुकोक्तिः यस्तया बद्धस्सन् देवा अपि स्तुवन्ति वदन्त इति तथा तादृशभक्तवश्यतामयमधुरलीलादिदृक्षया मुहुः परिक्रमादिहेतुश्च अत्र बहुव्रीहिणा निर्देश उलूखलस्य तदनुगतिविवक्षया सा च बन्धनीयबन्धनाश्रयवैपरीत्यमयलीलाकौतुकव्यञ्जिकेति उलूखलमात्रविशेषणं न तूपलक्षणं ततस्तस्मा अपि प्रणामादिकं कृतमिति ज्ञेयं अग्रे पाद्मे "नमस्ते ऽस्तु दाम्ने स्फुरद्दीप्तिधाम्ने" इति आमन्त्र्य भक्त्येति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
दशमोऽध्यायः ॥ १० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सन्दर्शनमक्ष्णोः नः कैवल्यनिरसनेनाऽनुग्राहकम् एवं सा[...] दर्शनमज्ञानापहमित्यर्थः ॥ ४१ ॥

सादनं सदनम् ॥ ४२ ॥ ४३ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृते शुकपक्षीये
दशमोऽध्यायः ॥ १० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

युक्तमेवैतदित्याह—साधूनामिति । मत्कृतात्मनां मय[...] चित्तानां साधूनां दर्शनमन्तो यस्य सः दर्शनावधिकः पुंसां [...] भवेत् यथा सवितुः दर्शनान्तोऽक्ष्णोर्बन्धः तमोरूपस्तद्वत् ॥

हे नलकूवर ! युवां तत्तस्मात्सादनं सदनं सन्निकेतनं स्वा[...] प्रति गच्छतं, कथम्भूतौ ? अहमेव परो मा यस्मात्स यर्योस्तौ [...] विद्यते भवः संसारो यस्मात्सोऽभवः मयि भावोभिप्रायवि[...] प्रीत्यात्मकः वां युवयोः सञ्जात एव ॥ ४२ ॥

इत्थमुक्तौ तौ बद्धमुलूखलं यस्मिंस्तं कृष्णं परिक्रम्य पुनः प्रणम्य चामन्त्र्य पृष्ट्वा उत्तरां दिशं जग्मतुः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
दशमोऽध्यायः ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मत्कृतात्मनां मय्येव सन्निहितमनसाम् ॥ ४१ ॥
नरवाहो वैश्रवणः तस्य निकेतनं गृहम् ॥ ४२ ॥
बद्धोलूखलम् उलूखलबद्धं श्रीकृष्णम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
दशमोऽध्यायः ॥ १० ॥
( विजयध्वजतीर्थपाठेन एकादशः )

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

समचित्तानामिति अपराधाग्रहणे साधूनामित्यनुग्रहे विशेषणम् ॥ ४१—४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नन्ववश्यं भावि चेत्तथा त्वं किमिति नारदेनोक्तं वचनात् तूष्णींभाव एवोचित इति चेत् तत्राह—साधूनामिति। ये हि साधवस्तेषां दर्शने पुनर्बन्धो न भवति ते हि ज्ञानव्याप्ताः वह्निना अयःपिण्ड इव यथा तत्सम्बन्धे अग्नेरप्यधिको दाहो भवति एवमेव ब्रह्मज्ञानापेक्षयापि सद्दर्शने बन्धनिवृत्तिर्भवति—साधवः सदाचाराः समचित्तज्ञानिनोऽनेनाज्ञानकर्मणोः सद्भावात् एते मुक्ता एते अमुक्ता इति वैलक्षण्यज्ञानं न समदर्शित्वबाधकं नापि तैस्तथा सम्पाद्यते किन्तु तेषां दर्शनमेव मुक्तिसाधकं किञ्च नितरां मत्कृतात्मनामिति मयि कृत आत्मा यैः समर्पितात्मानो मत्कृते वा आत्मा येषां कर्मज्ञानभक्तीनां तेषु सिद्धत्वात् बन्धः सर्वथा न भवति तमोनिवर्त्तितं कर्मणा रजोज्ञानेन सत्त्वं भक्त्येत्यतो न केनाप्यंशेनावशिष्यते। अत एव पूर्णकर्माणो वस्त्रादिभावं प्राप्नुवन्ति ततोपि ज्ञानिनः ब्रह्मविदः सनकादय इव गच्छन्ति ततोपि भक्ता मद्भावं प्राप्नुवन्तीति तदाह "दर्शनान्नो भवेद्बन्धः" इति पुंस इति मर्यादा अधिकारिणस्तु ततो बन्धो निवर्तते अहं त्वनधिकारिणोपि निवर्तक इति विशेषः तथाप्यप्रार्थितं कथं दत्तवन्त इत्याशङ्क्य दृष्टान्तेन निराकरोति, अक्ष्णोः सवितुर्यथेति। अक्ष्णोर्बन्धनमन्धकारः स सवितृदर्शने निवर्तत एव न हि वस्तुशक्तिः प्रार्थनादिकमपेक्षते ॥ ४१ ॥

तस्मान्मोक्षस्तु पूर्वमेव सिद्धः भक्तिरपि सिद्धेति वदन् प्रार्थितमाह—तद्गच्छतमिति। भक्तेः कारणमाह महाभागाविति। अनन्तकोटिजन्मपुण्यपापयोरुपार्जितयोर्मध्ये दिव्यशतवर्षपर्यन्तं मत्पर्यालोचनाभावनात् सर्वमेव पापं नष्टं पुण्यं त्ववशिष्यते तदुक्तं महाभागाविति नलकूवरेत्येकस्यैव सम्बोधनमुभयोरेकभावत्वज्ञापनार्थं ततः सर्वथा समानत्वादेकशेषः। वामित्यग्रे वचनात् नैकस्यैव प्रसादः आदरं गृहं यत्रावमादं प्राप्तौ अनेन तत्राशङ्कितं भविष्यतीति सूचितं मयि तु मद्विषयको भावः। प्रेमलक्षणः सञ्जात एव तेनैव श्रवणादिकं स्वत एव भविष्यतीति अप्रार्थितत्वादनभिमतमित्याशङ्क्याह, ईप्सित इति। तत्र हेतुः परमो भव इति भावप्राप्तिमज्जन्मरूपो न तस्मादप्यन्यज्जन्म भवतीति परमत्वम् अतो जन्मभिः क्लिष्टानां सर्वेषामेव मयि भावः। प्रार्थनीयो भवति अतो वां युवयोरपि ईप्सितत्वात् सम्यक् जातः ॥ ४२ ॥

एवमुक्तौ तत्रोचितं कृत्वा गतवन्तावित्याह—इत्युक्तौ ताविति। बालकव्युदासः बहुवारं प्रदक्षिणां कृत्वा प्रतिप्रदक्षिणं नमस्कृत्य चकारात् स्वदीनतां चाविष्कृत्य लीलाभावादिभिरप्यमोहितौ सन्तौ बद्धम् उलूखलं यस्मिन्निति आमन्त्र्य गच्छाव इत्युक्त्वा उत्तरां दिशं स्वस्थानं जग्मतुः एवं गोकुलवासिनो वृक्षयोरपि निरोध उक्तः ॥ ४३ ॥

इति श्रीभागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
दशमाध्यायविवरणम् ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, तं दृष्ट्वाप्यसंमानयतोरावयोस्तदनुग्रहः कथं सम्भवेत्तत्राह—साधूनामिति। समचित्तानां स्वमानापमानाभ्यामक्षुभ्यतां सुतरामतिशयेन मय्येव कृत आत्मा मनो यैस्तेषां दर्शनान्नः दर्शनपर्यन्त एव। यद्वा, दर्शनेनान्तो नाशो यस्य स सवितुर्दर्शनादक्ष्णोर्बन्धस्तमः कृतो यथा नश्यति तथेति तेनान्धानां सवितुर्दर्शनादपि यथा तमो न नश्यति तथैव नानापराधमलीमसमानसानामसुराणां श्रीनारदादिदर्शनादपि न बन्धक्षय इति ज्ञापितम् ॥ ४१ ॥

प्राधान्यादेकं सम्बोध्याह—हे नलकूवर! अहमेव परमः सेव्यो ययोस्तथाभूतौ सन्तौ सादनं सदनं न भवः संसारो यतः सः ॥ ४२ ॥
उलूखले बद्धं बद्धोलूखलम् आहिताग्न्यादिः ॥ ४३ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम्।
दशमे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीनारदप्रसादाल्लब्धभक्ती तौ दृष्ट्वा स्वयं हरिः साधुदर्शनमाहात्म्यमाह—साधूनामिति। सुतरां मत्कृतात्मनां साधूनां दर्शनात् बन्धो न भवेत् किं पुनस्तेषामुपासनादिभ्य इत्यर्थः। सवितुर्दर्शनादक्ष्णोर्बन्धो यथा न भवति तद्वत् ॥ ४१ ॥

प्राधान्यादेकं सम्बोधयन् आज्ञापयति—तदिति। हे नलकूवर यः ईप्सितोऽन्येषां वाञ्छितः केवलं न तु प्राप्तः सः अभवः नास्ति भवो यस्मिन् सः अभवः वां युवयोः सञ्जातः तत्तस्मात् युवां मत्परमौ सन्तौ सादनं स्वस्थानं गच्छतम् ॥ ४२ ॥

इत्येवं भगवतोक्तौ बद्धोलूखलं बद्धमुलूखलं यस्मिन् तं भग-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तन्नं पुनः पुनः परिक्रम्य प्रणम्य च आमन्त्र्य पृष्ट्वा उत्तरां दिशं जग्मतुः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
दशमाध्यायार्थप्रकाशः ॥ १० ॥

———

भाषा टीका ।

निरन्तर मोमें जिनको चित्त लग्यो ऐसे समचित्त साधुजनके दर्शन सों पुरुष को बन्धन छूट जाय है, जैसे सूर्य के उदय होयवे ते आंखनको अन्धकार दूर होयजाय है ॥ ४१॥

तस्मात् हे नलकूवर ! हे मणिग्रीव ! अब तुम लोग मत्परायण भये काहेसों, कि-तुमारो भाव मेरे विषै उत्पन्न भयो, अब तुम अपने सदन को जाओ, अब ये तुमारो अन्तिम [ पीछलो ] जन्म है ॥ ४२ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—श्रीभगवान् ने जब ऐसें क
तब वे दोनों गुह्यक उलूखल में बंधे भये श्रीकृष्ण को प
क्रमा देकर कें बारम्बार प्रणाम करकें बन्धे भये
आज्ञा लेकें उत्तर दिशाको जात भये, चलते समय
उन नल कूबर और मणिग्रीव दोऊननें विचारी कि भगव
जो आज्ञा देवें तो हम इन के बन्धन कों छुडाय
तब भगवान् ने कही, कि मैं तो सब जगत् कें बन्धन छु
ऊं हूं परन्तु मेरे खोलिवे की सामर्थ्य तो वाई कूं है ज
मोकूं बांध्यो है। तासों तुम गुप चुप चलेजाओ, तब वि
अपने प्रभु कों बन्धे भये छोड कें चले गये ॥ ४३ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें दसमें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ १० ॥

———

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे दशमोऽध्यायः ॥ १० ॥



## ॥ एकादशोऽध्यायः ॥

श्रीशुक उवाच ।

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ।
तत्राजग्मुः कुरुश्रेष्ठ ! निर्घातभयशङ्किताः ॥ १ ॥
भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ।
बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ २ ॥
उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् ।
कस्येदं कुत आश्चर्यमुत्पात इति कातराः ॥ ३ ॥
बाला ऊचुरनेनेति तिर्यग्गतमुलूखलम् ।
विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकादशे समागत्य वृन्दावनमथार्भकैः ।
वत्सान् पालयताऽनेन हतौ वत्सबकासुरौ ॥

निर्घातो वज्रपात इति भयेन शङ्किताः ॥ १ ॥

तल्लक्ष्यं प्रत्यक्षतः पुरतो दृश्यमपि पतनकारणमविज्ञाय बभ्रमुः ॥ २ ॥

लक्ष्यं कारणं दर्शयति—उलूखलमिति । भ्रमकारणमाह—कस्येदं ज्ञानमात्रैः कर्म कुतो वा कारणादहो आश्चर्यमुत्पात इति कातरा भीताः सन्तो बभ्रमुरित्यर्थः ॥ ३ ॥

मध्यगेन वृक्षयोर्मध्यगतेन न केवलमेतावत् वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावप्यचक्ष्महि दृष्टवन्तो वयमिति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्राजग्मुरिति । तत्र गमनाय द्रुतं प्रतस्थुरित्यर्थः । निर्घातो निरभ्रगर्जितमुत्पातविशेषः भयं दैत्यादिभ्यः ताभ्यां सन्दिग्धाः ततो मूर्च्छितत्वादेव निकटस्थानां व्रजेश्वर्यादीनां प्रथमतः आगमनं न जातमिति ज्ञेयं हे कुरुश्रेष्ठेति श्रीनन्दादिव्रासावेशेन सम्बोधनं ततो रक्षणार्थमिव ॥ १ ॥

भूम्यामित्यर्द्धकम् । नितराम् उन्मूलनादिना पतितौ ददृशुरादिति शेषः । बभ्रमुरिति सार्द्धकम् । उलूखलमित्यादिलक्षणं पतनकारणं लक्ष्यं लक्षयितुं शक्यमपि तदविज्ञाय दूरस्थत्वात् सम्भ्रान्तत्वात् पतितवृक्षशाखादिव्यवहितत्वाच्च तत्र स्थितमनुभूय बभ्रमुः सन्दिदिहुः तदनुभवे सति प्रथमं तदानीं शङ्कायाः विषाः स्युः न तु तदुत्पातहेतुजिज्ञासयेति तथा तस्य तद्धेतुत्वे ज्ञाते सति जिज्ञासापरा न स्युरिति च भावः ॥ २ ॥

पुनश्च निकटे समागत्यापि शाखाव्यवहितं तमदृष्ट्वा कस्येदमित्याद्युक्त्वा कातरा बभूवुः इदमाश्चर्यं कस्य केन कृतमित्यर्थः । तथा च विवृतं तद्वाक्यं श्रीहरिवंशे "केनेमौ पातितौ वृक्षौ घोषस्यायतनोपमौ ॥ विना वातं विना वर्षं विद्युत्प्रपतनं विना । विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ" इति ॥ ३ ॥

ततश्च व्यवहितं तं दर्शयित्वा बालाः स्वयमूचुः, किमूचुः ? तत्राहुः । अनेनेति । सम्भ्रान्तत्वेन पूर्ववचनात्स्वकेनोत्पादितमिति तु नोचुः । कीदृशेन स्तोत्पाटितमित्यपेक्षायामूचुः । तिर्यग्गतमुलूखलमित्यादि एषामव्यामोहस्तु श्रीदामोदरमाधुर्यावेशेनेति गम्यते ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निर्घातो मेघध्वनिः ॥ १ ॥

लक्ष्यं निरूपकैर्ज्ञातुं योग्यम् ॥ २ ॥

कस्येति कस्य चेष्टितमिदमाश्चर्यमित्यर्थः । कस्येति कर्तृसन्देहः कुत इति निमित्तसन्देहः उत्पातः अनिष्टाय ॥ ३—५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोपा इति पततोर्द्रुमयोरर्जुनयोः रवं ध्वनिं श्रुत्वा हे कुरुश्रेष्ठ ! किं वज्रपातोऽभवदित्येवं भयेन वितर्कयन्तो नन्दादयो गोपाः तत्राजग्मुः ॥ १ ॥

तल्लक्ष्यं प्रत्यक्षतः पुरतो दृश्यमपि पतनकारणमविज्ञाय बभ्रमुः भ्रान्ता बभूवुः ॥ २ ॥

किं तल्लक्ष्यं पतनकारणं यदज्ञानाद्बभ्रमुः तत्राह—उलूखलमिति । एवंविधं बालकमेव पतनकारणं लक्ष्यगमविज्ञाय बभ्रमुरित्यन्वयः । भ्रममेव दर्शयति—कस्येति । इदं तरुनिपातनरूपं कर्म कस्य सम्बन्धि इदं कुतः कारणादहो आश्चर्यं नः उत्पाता इति एवं भयेन कातरा भीताः सन्तो बभ्रमुरित्यर्थः । कस्येति कर्तृसन्देहः कुत इति निमित्तसन्देहः उत्पात इति निश्चयः ॥ ३ ॥

एवं बंभ्रम्यमाणान् प्रति तत्रत्या बाला ऊचुः, किमिति ? तिरश्चीनमुलूखलं विकर्षता वृक्षयोर्मध्यगतेनानेन बालेनेदं कर्म कृतम् न केवलमेतावदन्यदपि किञ्चिद्दृष्टमित्याहुः, वृक्षाभ्यां निर्गतौ दिव्यपुरुषावप्यचक्ष्महि दृष्टवन्तो वयमित्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेर्बालक्रीडाचरितचारुतरनिरवद्यमाहिमश्रवणमननोपासनानि मुक्तिसाधनानि ज्ञानसाधनत्वेन भवन्तीति भावेन तन्माहात्म्यमस्मिन्नध्याये निरूप्यते, तत्रादौ पूर्वाध्यायोक्तयमलार्जुनभञ्जनलक्षणमहिमाशेषं वक्ति—गोपा इत्यादिना । निर्घातरवशङ्किताः मेघनिर्घोषशङ्किनः ॥ १ ॥

कस्यागामिफलसूचकं कुत आश्चर्यं सहसा दृश्यमानं यदद्भुतं भविष्यदनिष्टसूचकम् अदृष्टमात्रप्रयुक्तम् उत्पातस्तन्निमित्तभयेन कातराः व्याकुलचित्ताः उत्पात इतिकातरा इति केचित् पठन्ति ॥ २—३ ॥

द्वौ पुरुषौ अचक्ष्महि दृष्टवन्तः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥१॥

ऊचुरित्यादिलक्षणं पतनकारणं लक्ष्यं लक्षयितुं शक्यमपि तदविज्ञाय दूरस्थत्वात् सम्भ्रान्तत्वात् पतितवृक्षशाखाव्यवहितत्वाच्च तत्रस्थितममनुभूय बभ्रमुः सन्दिदिहुः ॥ २ ॥

पुनश्च निकटे समागत्यापि शाखादिव्यवहितं तमदृष्ट्वा कस्येदमित्याद्युक्त्वा कातरा बभूवुः इदमाश्चर्यं कस्य केन कृतमित्यर्थः ॥ ३ ॥

ततश्च व्यवहितं तं दर्शयित्वा बालाः स्वयमूचुः किमूचुः ? तत्राहुः—अनेनेति । सम्भ्रान्तत्वेन पूर्ववचनाशक्त्युत्पादितामिति तु नोचुः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निरोधः सर्वभावेन वर्णनीयो हि गोकुले ।
स्त्रीणां स चोक्तः पुंसां च नन्दप्राधान्यभावतः ॥
एकादशे ततोऽध्याये पूर्वावस्थामशेषतः ।
त्याजयित्वा तु नन्दस्य कृष्णभावो निरूप्यते ॥
मोचनं मुग्धलीला च स्थानान्तरपरिग्रहः ।
तत्र लीलावत्सबकौ ज्ञानं चेति निरूप्यते ॥
षड्भिस्त्रिभिः षोडशभिः चतुर्भिः षड्भिरेव च ।
नवभिः पञ्चभिश्चेति सप्तार्थाः सगुणो हरिः ॥
स्वार्थं तु भगवान् कार्यस्तथा त्वं ज्ञाप्यते पुनः ।
सर्वस्वं हरिरेवेति तदर्थं त्याग ईर्यते ते ॥
वृन्दावनस्थितौ हेतुर्भगवत्तोषतः परम् ।
नास्तीति ज्ञापनायोक्ता प्रीतिर्लीलोपयोगिषु ॥
वत्सचारणदोषस्य निवृत्तिर्वत्समारणम् ।
गोपालदोषवृद्ध्यै बकस्यापि विनाशनम् ॥
स्थानत्यागे हरेरिच्छैव कारणं न तु दुष्टता ।
तद्ज्ञापयितुमत्रापि बकवत्सौ विनाशितौ ॥
अतो विमर्शो गोपानामानन्दश्च निरूपितः ।
तदर्थमेव च हरेर्बालभावो न चान्यथा ॥
सरूपेण तु ततस्तस्य परित्यागोऽपि वर्ण्यते ।

तत्र प्रथमं प्रपञ्चविस्मरणपूर्वकं भगवदासक्तिं वक्तुं विमोकावाह—गोपा नन्दादय इति पड्भिः । नन्दार्थमेवैतत् ज्ञापयितुं नन्दादय इति गोपा इति स्वतः सामर्थ्याभाव-वतोऽद्भुतलीलामाह—श्रुत्वा द्रुमयोः पततो रवमिति । पततोरिदानीं रवः श्रुतः यदा तौ स्तुत्वा निर्गतौ इदं शक्यं ततस्तत्राजग्मुः कुरुश्रेष्ठेति विश्वासार्थं सर्वेषां तत्र हेतुः निर्घातभयशङ्किता इति निर्घातो निरभ्रविद्युत्पातः [illegible] भयं कस्यचिदुपद्रवो भाव्यनिष्टसूचनं च ॥ १ ॥

आगतानां ज्ञानमाह—भूम्यामिति । भूमौ निपतितौ [illegible] दृष्टवन्तः ततोऽन्यत्र तौ चेत्पतितौ भवतः तदा कालान्तर-दोषायेति तद्व्यावृत्त्यर्थमाह—तत्रेति । यत्रैव स्थितौ तत्रैव [illegible] आर्द्रता च तेषां दृष्टिगम्या न भवति बहिर्मुखत्वात् [illegible] मपि तत्राप्याकर्षणस्यापेक्षितत्वात् तस्य पतनस्य कारणम-ज्ञाय बभ्रमुः । ननु, प्रत्यक्षस्याभावेऽप्यनुमानेन कथं न [illegible] तत्राह—लक्ष्यमिति । लक्ष्यमप्यविज्ञाय ते ह्यनिर्दयाधिकाः [illegible] बाधितं प्रमाणं किमपि न मन्यन्ते अतो व्याप्तस्यानुमानेन पतनकारणाज्ञानम् ॥ २ ॥

ननु, भगवानस्त्येव प्रत्यक्षसिद्धः कोऽत्र सन्देहः इति तत्राह—उलूखलमिति । उलूखलाकर्षणं कुर्वन्तं तदा [illegible] ऽप्यग्रे गच्छन्तं वृक्षयोर्मध्येऽपि स्थितम् अन्यत्र गमनाभावे दाम्ना बद्धमिति चकारादुलूखलेन [illegible] वृक्षयोः पातं [illegible] चेति वा बालकत्वादेव न स्वतो मोचनं गमनं [illegible] प्रत्यक्षसिद्धमप्यन्यथा सिद्धं [illegible] इत्याह—[illegible] इदं बन्धनलक्षणं कस्य कर्म कर्मणि वचनं [illegible] किञ्च, कुतो वा हेतोरिदं बन्धनमिति आश्चर्यमिति [illegible] बन्धनं तेन पातनं त्वसम्भावितमेवान्तः आश्चर्यमेवेतु[illegible]

न ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् ।
बालस्योत्पाटनं तर्व्वोः केचित्सन्दिग्धचेतसः ॥ ५ ॥
उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजम् ।
विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ ६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पातनमेव वा नन्वकारणकार्योत्पत्तिः कथं;तत्राह–उत्पात इति । अयमुत्पातः देवदैत्यादिकृतो भाव्यनिष्टसूचकः न तु सर्वथा युक्तिबाधितः भगवता कृत इति कार्यकारणभावे प्रत्यक्षसिद्धेऽपि तथात्वमङ्गीकर्तुं शक्यते अत एव भ्रान्तो नैय्यायिकस्तर्कविरुद्धं न मन्यते "अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्" इति वाक्याच्च तर्हि किं जातं तादृशज्ञानस्य फलमित्याकाङ्क्षायामाह—उत्पात इति । कातराः पातस्तूत्पातरूपः अग्रे च भयं भविष्यतीति कातराः भयव्याकुला जाताः इत्यर्थः ॥ ३ ॥

अत एव बालकैरुच्यमानमपि वाक्यं नाङ्गीकृतवन्त इत्याह–बालाः प्रोचुरिति द्वाभ्याम् । सर्व एव बालाः यथादृष्टार्थवादिनः कल्पनाऽसमर्थाः, कारणं प्रोचुः तेषां वाक्यमाह–अनेनेति । अनेन वृक्षौ पातितौ प्रकाराकाङ्क्षायामाहुः तिरश्चीनमुलूखलं विकर्षतेति तिर्यक् पतितमुलूखलं तं विशेषेण कर्षता, कर्षणेऽपि प्रयोजनमाहुः—मध्यगेनेति । मध्ये स्थितः किं कुर्यात् न चैतज्ज्ञानं भ्रान्तमित्याशङ्कायामाहुः–पुरुषावप्यचक्ष्महीति । वृक्षात् द्वौ पुरुषौ निर्गतौ तावप्यस्माभिर्दृष्टाविति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकादशे हरेर्मोक्षः फलक्रेयकथादिकम् ।
वृन्दावनागमोत्साह वनं वत्सबकार्दनम् ॥

॥ १—२ ॥

तत्र तयोः पतनकारणं बालकं चक्षुर्भ्यां लक्षयितुं शक्यमपि अविज्ञाय प्रेम्णा तादृशयोग्यताकत्वेनासम्भाव्या बभ्रमुः, भ्रममेवाह–कस्येदं कर्म कुतो हेतोस्तस्मादाश्चर्यमेतदुत्पात इति निश्चित्य कातरा भाग्येन विधात्रा बालः कृष्णो रक्षित इति व्याकुला बभूवुः ॥ ३ ॥

अनेन कृष्णेन वृक्षयोर्मध्यगतेन तिर्यग्गतमुलूखलं विकर्षतेत्येतन्मात्रं बाला ऊचुः सम्भ्रान्तत्वेन पूर्णवचनाशक्तेरेतावुत्पाटिताविति तु नोचुः अविश्वसतस्तान् पुनरूचुः वृक्षाभ्यां निर्गतौ द्वौ पुरुषावप्यचक्ष्महि दृष्टवन्तो वयमिति ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथैकादशेऽध्याये वृक्षद्वयाद्वहूत्पातदर्शनेनोत्थाय नन्दादीनां प्रचलनं श्रीवृन्दावने वासः श्रीकृष्णवत्सपत्वं वत्सबकयोर्वधश्च निरूप्यते–एवं ध्वानिं श्रुत्वा निर्घातभयशङ्किनः निर्घाते वज्रपाते यत्प्रसिद्धं भयं तेन जातशङ्काः गृहे किं विनष्टं किंनेति जातसंशया इत्यर्थः ॥ १ ॥



तल्लक्ष्यमपि प्रत्यक्षतया दृश्यमपि पतनकारणम् अविज्ञाना बुध्वा बभ्रमुः भ्रमं प्रापुः ॥ २ ॥

उलूखलमिति । तत्र लक्ष्यं प्रपञ्चयति "उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम्" इति भ्रमं प्रपञ्चयति "कस्येदं कुत आश्चर्यम्" इति कस्य राक्षसादेरिदं कर्म कुतः कारणाच्च अत आश्चर्यमिदम् अथ तेषां निश्चयं दर्शयति—उत्पात इति । सर्वथा उत्पात एवायमिति विनिश्चित्य कातरा आसन् ॥ ३ ॥

अनेन वृक्षौ पातितौ इति वृक्षाभ्यां विनिर्गतौ पुरुषावपि अचक्ष्महि दृष्टवन्तो वयमिति च बाला ऊचुः ॥ ४ ॥

---

### भाषा टीका ।

ॐश्रीकृष्णाय नमः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि हे कुरुश्रेष्ठ ! नंदादिक गोप पतन होयवे वारे वृक्षन को शब्द सुनके वज्र ( बीजुरी ) गिरवे की शङ्कासों जा जगे वृक्ष गिरेहे तहां आवत भये ॥ १ ॥

और तहां भूमि में उखरि कें गिरे यमलार्जुन वृक्षन कों देखत भये। और लखिवे योग्य गिरवे के कारण कों नहीं जानकें बडे भ्रमको प्राप्त होत भये ॥ २ ॥

रसरी तें बंधे भये उलूखल कूं खींचन वारे बालक कों देखकें सगरे गोप लोग बोले, कि—ये आश्चर्य कर्म कोई राक्षस को है, अथवा कौन को है, और कहांतें ये उत्पात भयो ऐसें कातर होत भये ॥ ३ ॥

इन बडे २ लोगन की बातन कूं सुनके देखनें वारे नेक नेक से बालक बोले, कि—याई कृष्ण के वृक्षन बीच सों तिरछे उलूखलके खींचवे सूं ये दोनोंई वृक्ष गिर परे और इन वृक्षन में सों दो पुरुष निकसे वे या के आगें हाथ जोरिके कछु गुनर गुनर से कहते हे ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

केवलं तार्किका न जगृहुरेव अन्ये तु सन्देहयुक्तचित्ता बभूवुरिति ॥ ५ ॥

भगवन्मायाविमोहितस्य नन्दस्याऽचरितमाह——उलूखलमिति ॥ ६ ॥

गोपीभिः स्तोभितोऽनृत्यद्भगवान् बालवत् क्वचित् ।
उद्गायति क्वचिन्मुग्धस्तद्वशो दारुयन्त्रवत् ॥ ७ ॥
बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकम् ।
बाहुक्षेपं च कुरुते स्वानां च प्रीतिमावहन् ॥ ८ ॥
दर्शयंस्तद्विदां लोक आत्मनो भृत्यवश्यताम् ।
व्रजस्योवाह वै हर्षं भगवान् बालचेष्टितैः ॥ ९ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हास्यन्ते मामिति शङ्कमानोऽतीव बाल्यमनुकरोति स्म, तदाह-गोपीभिरिति । स्तोभितः करतालादिना प्रोत्साहितः ॥ ७ ॥

इदमानयेत्याज्ञप्त आनेतुमसमर्थ इव बिभर्ति केवलं पीठादि बाहुक्षेपं करचालनं च तद्विदाश्चेति चकारान्वयः ॥ ८ ॥

तदैश्वर्यं विदन्ति ये तेषां एवं व्रजस्य हर्षमुवाहेति ॥ ९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न जगृहुः श्रीनन्दादयः ममतार्द्रचित्तत्वात् । केचित्पूतनादिनाशाल्लब्धव्याप्तिना तर्केण किञ्चित् कर्कशायमानचित्ता विप्रा अपि स्वाभाविकममतार्द्रत्वेन सन्दिग्धचेतस एव बभूवुः । ततश्चागन्तुकेनाश्चर्यकरेण तत्प्रभावज्ञानेन तेषामपि स्वाभाविकस्नेहवृद्धिरेव जाता लवणाकरस्य रसान्तरेणापि लवणरसवृद्धिवदिति भावः । तद्वृत्तं च स्नेहभरेणातिबालत्वस्यैव मननात् सन्देहनिरासार्थं साक्षात्तमेव ते किल न पप्रच्छुरिति बोद्धव्यं किं वा स्नेहभराकुलतया प्रश्नेऽप्यशक्तेः ॥ ५ ॥

श्रीनन्दस्य वात्सल्यप्राबल्यमाह-उलूखलमिति । उलूखलमित्यादेः पुनरुक्तिर्विशेषतः श्रीनन्दस्य तादृशलीलादर्शनाय तथोलूखलाकर्षणेन पुत्रस्यास्पष्टतद्व्यथाधिक्याद्यनुमानात् प्रहर्षबोधनार्थं तथापि विलोकयतीति साङ्गप्रत्यङ्गविशेषेण दृष्ट्वेत्यर्थः । बद्धस्य भीतस्य बालस्योल्लासनार्थं प्रहसद्वदनः सन् पुत्रस्य बन्धनदृष्ट्या महावृक्षपातादनिष्टशङ्कया च श्रीयशोदां प्रत्यन्तः क्रोधाद्वदनेत्युक्तिः प्रहसद्वदनमिति द्वितीयान्तपाठो वा तथा च श्रीविष्णुपुराणे "नवोद्गताल्पदन्तांशुसितहासं च बालकम्" इति तस्य प्रकटहासश्च पितुर्नोऽपि शङ्कमानस्य तत्प्रसाददर्शनेन स पुनः पितृसन्तोषार्थं निजभयदुःखाभावबोधनाय च जातः विशेषत उलूखलाद्दाम्नश्च मुमोच द्वितीयबन्धनस्योलूखलगतस्य प्रथममोचनीयत्वात् ह हर्षे एवं श्रीयशोदाया बन्धनक्षमतावन्मोचनक्षमतया श्रीनन्दस्यापि तादृशत्वं दर्शितम् अत्र च बन्धनदाम्नां बाहुल्यं तैः प्रेमावेशेनैव न सम्भावितमिति ज्ञेयम् ॥ ६ ॥

न केवलमसौ परमस्निग्धाया मातुः पितुश्चैवं प्रेमवशतामापन्नः अपि त्वन्यासां गोपीनाम् अपीति दर्शयन्नतिप्राकृतबाल्यचरितमाह-गोपीभिरिति द्वाभ्याम् । प्रायो जरतीभिः भगवान् अखिलैश्वर्यसम्पूर्णोऽपि बालवत् अन्यो बालो यथा तद्वदिति तत्प्रेमरसवशबाल्यलीलाभिनिवेशेन निजैश्वर्यविस्मृतिः मुं
बालक इति पाठे बाल्यलीलानुरूपमेव तदिति भावः । दि
दित्यस्य मुग्ध इत्यनेनाप्यन्वयः अतिबालत्वेन नृत्यादिकं दि
दजानन् कश्चिन्मुग्धभावमपि दर्शयतीत्यर्थः । यद्वा, नृत्यादौ
सर्वथा मनोरम इत्यर्थः । तथा नृत्यादौ हेतुः दारुयन्त्रं सूत्रप्र
दिशिल्पनो नृत्यादिपरा पुत्रिका तद्वत्तासां वशः अधीन इति

बाहुक्षेपं भुजौ मुहुरुत्थाप्य पराक्रमदर्शनं न केवलं
तासामेव सुखं जातम् अपि तु गोपमात्राणामित्याह-स्
ज्ञातीनाम् अविशेषेण तासां गोपजातीनामित्यर्थः । स्वानां
प्रीतिमावहन्निति पाठस्तेषां सम्मतः तद्विदां चेति चकारस्या
इति व्याख्यानात् ॥ ८ ॥

आनुषङ्गिकं प्रयोजनमाह-दर्शयन्निति । तदैश्वर्यमेव वि
न तु भृत्यवश्यतां ये तान् साक्षात् बोधयन्नित्यर्थः । अत्र
शब्दस्तदैश्वर्यमात्रदर्शिनां मतानुवादेन स्वानामिति तु श्री
वत् अन्याभिरपीदृशीभिर्बाल्यलीलाभिर्व्रजजनानां सर्वथा
नन्दं सदाऽकरोत् इत्याह व्रजस्येति वै प्रसिद्धम् ॥ ९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विमुमोच दामबन्धादमोचयत् ॥ ६ ॥

स्तोभित उपच्छन्देन उद्योगं प्रापितः दारुयन्त्रवत्
इत्यन्वयः ॥ ७ ॥

उन्मानं प्रस्थादि ॥ ८ ॥

उवाह आवहत् ॥ ९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तानां तेषां मध्ये केचित् केवलतार्किका इदं
इति वदन्तः तद्बालकैर्भाषितं न जगृहुर्न विश्वसितवन्तः
तु बालस्य बालकर्तृके तर्वोरुत्पाटने सन्दिग्धं संशययुक्तं
येषां तथा बभूवुः ॥ ५ ॥

अथ भगवन्मायामोहितस्य नन्दस्याचरितमाह-उलूखलं
प्रहसद्वदनं यस्य स नन्दो विलोक्य तं दामबन्धादमोचयत् ।

अथ भगवतः कांश्चिद्बाल्यानुकारप्रकारान् दर्शयति-गोपी
रिति । क्वचित् स्तोभितः उपच्छन्दनेनोद्योगं प्रापितः कर
दिना प्रोत्साहितो वा उद्गायति सति गोपीजनः इति शेषः इ

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्दारुनिर्मितपाञ्चालिकावत्तद्वशगः गोपीवश्यः मुग्ध इवानृत्यत् नृत्यतीति पाठे तद्वशः गोपीजनवशगस्सन् नृत्यन्नुद्गायति ॥ ७ ॥

कचिदाशप्त आनयेति नियुक्तः पीठकादिकमानेतुमसमर्थ इव बिभर्त्ति उताह पीठकं विष्टरम् उन्मानं प्रस्थादि, पीठभाजनपादुकमिति पाठे भाजनं कांस्यादिपात्रं तथा बाहुक्षेपं भुजचलनं कुरुते, किङ्कुर्वन् ? गोपीनां प्रीतिमावहन् ॥ ८ ॥

तदिदं भगवद्भक्तवेदिनां भक्तवश्यतां च दर्शयन्नेवं बालचेष्टितैः व्रजस्य व्रजस्थजनस्य हर्षमुवाहावहत् ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नतु तद्वाक्योक्तम् ॥ ५—७ ॥

उन्मानं प्रस्थं पादुकं पादपीठं पादरक्षणं वा ॥ ८ ॥

तदिदं भगवानेवायमवतीर्ण इति जानतां नारदादीनां ॥ ९ ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तेषु परमवात्सल्यस्वभावा न जगृहुः ॥ ५ ॥

श्रीव्रजेश्वरस्य परमवात्सल्यचेष्टामाह— उलूखलमिति । विलोक्येति साङ्गप्रत्यङ्गविशेषेण दृष्ट्वेत्यर्थः । प्रहसद्वदन इति बालस्य भीतस्य भयहानार्थं प्रहसद्वदनमेव यस्य सः अन्तस्तु स्वयमप्युद्विग्न इत्यर्थः । द्वितीयान्तः पाठो वा तस्य तेजस्वित्वस्वभावादेव ॥ ६ ॥

अन्यासामपि गोपीनां तस्मिन् प्रेमवश्यतां दर्शयन् प्राचीन बाल्यलीलामाह—गोपीभिरिति द्वाभ्याम् ॥ ७ ॥

बाहुक्षेपं भुजौ मुहुरुत्थाप्य पराक्रमदर्शनं तत्र सर्वेषां गोपानामप्यानन्दमुदाहरति स्वानां ज्ञातीनां गोपजातीनामित्यर्थः । अतएव ये केचिद्भृत्या आसन् तेषामपि वश्यत्वेऽर्थः ॥ ८ ॥

आनुषङ्गिकं प्रयोजनमाह—दर्शयन्निति । केवलं गोपजातीनामेव प्रीतिमुदावहदित्याह व्रजस्येति तद्वासिनः सर्वस्यैव ॥ ९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः स्वदृष्टं लौकिकमलौकिकं चोक्तवन्तः तदुभयमपि नैनाङ्गीकृतमित्याह– न ते तदुक्तं जगृहुरिति । ते गोपा बालकानां न सत्यमिति गृहीतवन्तः तत्र हेतुः न घटेतेति, तस्य बालकस्य तत्सर्वोत्पादनं सर्वथा युक्तिबाधितं केचन पुनरार्द्रनैयायिकाः सन्दिग्धचेतसो जाताः शकटतृणावर्तयोर्भङ्गदर्शनात् न तु तेषामपि कश्चन निर्द्धारः ॥ ५ ॥

नन्दस्तु सन्दिग्धोऽपि तं विचारं दूरीकृत्य मोचितवानित्याह, उलूखलमिति । तदानीमपि विकर्षन्तमिति शीघ्रमोचने हेतुः दाम्ना बद्धमिति मोचने निमित्तं स्वमात्मजमिति स्वस्यैवावश्यकत्वं स्वामिनि व्याकुलतापरिज्ञानार्थं प्रहसद्वदन इति धैर्यस्मरणात् तस्यापि ज्ञानाभावस्त्वनेनोक्तः । विशेषेण मोचनं सर्वासामेव रज्जूनां पृथक्करणं हेत्वाश्चर्यं स्वबन्धनं तेन मोचितमिति भगवल्लक्षणो बन्धः भगवतैव मोचयितुं शक्यते नान्येनेति अतः इदम् आश्चर्यमेव. स्वपदप्रयोगात् भगवज्ज्ञानं प्राप्त इति युक्तिरपि तेषामज्ञानं न तेषां बुद्धिदोषेण किन्तु भगवतैव कार्यत इति ॥ ६ ॥

गोपीनां वशभावं प्राप्तस्य भगवतो लीलामाह— गोपीभिरिति त्रिभिः ।

> विद्योपजीविनां सेवां येनैव च सुखं भवेत् ।
> राजसीं तामसीं लीलां सात्त्विकीञ्च चकार ह ॥

तत्र प्रथमं राजसीं लीलामाह—गोपिकाः प्रत्येकं स्वस्वगृहं नीत्वा नृत्यं कुरु भगवन् ! लड्डुकानि दास्यामि इत्युक्तो नृत्यति तत्रापि प्रस्तोभिताः कृष्ण एव सम्यक् नृत्यं जानाति कर्तुं न राम इत्युक्तः स्तोभा शून्यप्रशंसा यथा स्तोभाक्षराणि भवन्ति तथा गोपीभिः यथा कथञ्चित् स्तुतोऽनृत्यत् नृत्यं करोति लडवं लड् तत्रापि नृत्ये न प्राकृतवन्नृत्यति किन्तु यथा तण्डुः यथा वा पार्वती ततोपि सहस्रगुणं अत्यन्तं नृत्यति तदनुचितं किं पामराणां स्थाने तथा नृत्येनेति तदाह–भगवानिति, षड्गुणैश्वर्यसम्पन्नोऽन्यस्थानपा नृत्यं कर्तुमर्हति तर्हि तासामप्यग्रेनार्हस्येवेति चेत् तत्राह—बालकः कचिदिति । गोकुले स्वस्य बालभावं प्रदर्शितवानिति, बालवदिति पाठे कचिद्भगवान् शास्त्रानुसारेण नृत्यति कचिद्बालवत् केवलं देहपादचालनमात्रं करोति मुग्धभावख्यापनाय ततोपि कदाचित् कृष्ण ! गायेत्युक्त उदुगायति. उच्चैस्तूष्णीं गानं करोति यथा सर्वासां हास्यं भवति. अथवा कचिदूर्ध्वं गायति यथाशास्त्रं कचित् मुग्धः अशास्त्रमपि बालवत् । किञ्च, नृत्यगानयोरपि एवमुत्थाय एवमुपविष्टः एवं सुप्तो गानं कुर्वित्युक्तः तथैव गायतीत्याह—तद्वशो दारुयन्त्रवदिति । गोपिकावशो भूत्वा दारुपुत्रिकावत् नृत्यति गायति च ॥ ७ ॥

लीलान्तरमाह—बिभर्त्तीति । सर्वत्र कचिदिति पदेन कचित् करोति कचिन्न करोतीति ज्ञातव्यम् अन्यथा तथास्वभावे आश्चर्यं न स्यात् बहुधा प्रार्थनं च कचिदाज्ञप्तः पीठमानय उन्मानं तण्डुलादिमानपात्रमानय पादुके दारुमये आनयेत्युक्तः केवलं बिभर्त्ति नतूत्थापयितुं शक्नोति. अशक्तिभावनां च करोति यथा प्राकृताः बालाः कुर्वन्ति एकवक्ष्यावः स्थूले सूक्ष्मे प्रशस्ते निन्दिते च तुल्यत्वज्ञापनार्थः । किञ्च, बाहुक्षेपं च कुरुते यथा सह मल्लयुद्धं कुर्वित्युक्तः बाहुविस्फोटनं करोति चकारादनुपर्यपि पतति बलाभिनिवेशेन तं चालयतीव । ननु, किमित्येवं करोति तत्राह–स्वानामिति । येन कारणेन तेषु स्वत्वं सम्पादितं तेनैव प्रीतिरपि संपादयति सम्यक्त्वं च तेषामिच्छाप्रकाराद्यनुल्लङ्घ्य अथवा न केवलं बाहुक्षेपादिकं करोति किन्तु प्रीतिमुद्वहन् यावन्तैव तेषां प्रीतिर्भवति तत्त्वधिकं करोतीत्यर्थः ॥ ८ ॥

लीलाद्वयं विशेषतो निर्दिश्य सामान्यतः सर्वामेव लीलां सङ्क्षेपेणाह–दर्शयन्निति । बालचेष्टितैर्भगवान् व्रजं हर्षयामास व्रजे यावन्तः प्राणिनः तेषामपि यथा यथा हर्षो भवति स च हर्षस्तेष्वेव तिष्ठति सोऽपि स्थितः पुष्टो भाररूपो भवति तदा

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां बहुनाशकौ तेषां हर्षं भगवानुवाह तदपि न विषयत्वेन किन्तु करणत्वेनेत्याह-बालचेष्टितैरिति बालचेष्टितैः ननु बालचेष्टाः फलपर्यवसायिन्यो न भवन्ति स्वरूपत एव परं मोहे सुखजनिकाः तत्कथं तादृशे हर्षे करणता तत्राह भगवानिति यावता नुपपत्तिः परिहृता भवति तावान् धर्मो भगवच्छब्दात् आह्मः ननु किमेवं प्राकृतानां वैकुण्ठमनीत्वा स्वयमागत्य विपरीतभावेन तथा करणे प्रयोजनमित्याशङ्कयाह तद्विदां भगवत्स्वरूपविदामात्मनो भृत्यवश्यतां दर्शयन्निति यतस्ते भृत्या भरणीयाः स्वेनैव केवलं प्रदर्शनमात्रपरत्वं तथा सति कापट्यनापि स्यादित्याह वै निश्चयेनेति आत्मन इत्यनेन वश्यतादोषः परिहृतः येत्वज्ञाः ते व्यामोहिता एव ये जानन्ति तेषां ज्ञानस्य भक्त्युपयोगः तत्तदनुसारिणोपि तत्त्वेनैव ग्रहा इति न किञ्चिदनुपपन्नम् ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ते नन्दादयः तस्मिन्ममतार्द्रचित्तत्वात् तत्प्रभावाननुसन्धानात् तदुक्तं बालोक्तं न जगृहुः केचिदन्ये तु नारायणसमो गुणैरिति गर्गोक्तिस्मृत्या स्वाभाविकप्रेमोदयेन च सन्दिग्धचेतस एव बभूवुः ॥ ५ ॥

विलोक्य विशेषेणाङ्गप्रत्यङ्गनिर्बन्धं दृष्ट्वा प्रहसद्वदन इति मत्क्रोडादपि यस्याः क्रोडं त्वमतिप्रियं मन्यसे सा त्वज्जननी त्वामल्पापराधेनैव बध्नाति स्म तत्त्वामहं कथं मोचयामीत्युपालम्भनद्योतकः प्रहासः त्वं माययैव जीवानां बन्धमोचौ यथा व्यधाः तथा स्वपितरौ तौ ते प्रभो प्रेम्णैव चक्रतुः ॥ ६ ॥

पित्रोस्तयोः सौभाग्यमहिमा केन वक्तुं शक्यस्तदीयव्रजवासिमात्रस्याप्यतिमात्रवश्यो ब्रह्मादिवशीकर्त्तापि कृष्ण इत्याह-सार्द्धत्रयोदशभिः । स्तोभितः यदि नृत्यसि तदा तुभ्यं खण्डलड्डुकं दास्यामीति प्रोत्साहितः बालवत् यथान्यः प्राकृतो बालस्तद्वदेवेत्यर्थः । मुग्धस्तासां प्रेम्णैव निजैश्वर्याननुसंधानात् दारुयन्त्रं सूत्रप्रोतपुत्तलिका ॥ ७ ॥

पीठकेति कियदस्य बलमभूदिति जिज्ञासुभिः प्रथमं हे कृष्ण ! पादुकामानयेति ततस्ततोऽधिकभारमुन्मानमानयेति ततस्ततोऽप्यधिकभारं पीठकमानयेत्याज्ञप्त आदिष्टस्तत्तदानयन् बिभर्त्ति स्वमृदुलजठरोपरीत्यर्थः । बाहुक्षेपं तत्र तत्र कर्मणि भुजौ मुहुरुत्थाप्य स्वपराक्रमदर्शिनां स्वानां ज्ञातीनाम् ॥ ८ ॥

न केवलं ज्ञातीनामेव अपि तु सर्वेषामेव व्रजवासिनां प्रीतिप्रदो बद्धयत्वादित्याह-दर्शयन्निति । तद्विदां तदैश्वर्यविज्ञान् ब्रह्मादीनिति नैतदनुकरणत्वेन व्याख्येयम् ॥ ९ ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदुक्तं बालैरुक्तं न जगृहुः केचित्तु सन्दिग्धचेतसः शकटपरिवर्तनेऽपि बालैरयमेव हेतुरुक्तोऽतोऽस्यैवेदं कर्म न चेत्यादिसंशययुक्तं सन्दिग्धं चेतो येषां ते आसन् ॥ ५ ॥

श्रीनन्दस्तु " अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ " इति गर्गवाक्यं संस्मृत्य प्रहसद्वदनः स्वबालकं विमुमोच ह दाम्नो बन्धादमोचयत् ॥ ६ ॥

स्तोभितः प्रोत्साहितः ॥ ७ ॥

क्वचिदिदमानयेत्याज्ञप्तः पीठकादिकं बिभर्त्ति केवलं आनेतुं शक्नोति तत्र पीठकं विष्टरम् उन्मानं धान्यादिपरिमाणनिश्चायकं प्रस्थादि बाहुक्षेपं करचरणविक्षेपं चकारादपरान् मुखादिरुचिरचेष्टाविशेषांश्च कुरुते ॥ ८ ॥

इत्थं बालचेष्टितैः व्रजस्य व्रजस्थजनसमूहस्य हर्षमुदं अवहत् किकुर्वन् भक्तिवश्यः पुरुष इति वेदे आत्मनो भक्तवश्यता विदां लोकेऽपि तामात्मनो भृत्यवश्यतां दर्शयन् ॥ ९ ॥

---

### भाषा टीका ।

सब गोपन ने बालकन के वचन कों नहीं मान्यों और कहन लगे, कि—या छोटे से बालक सों इतने बडे वृक्षन को उखारिबो कहूं घट सके है ? इतनेई में कितनेई गोप सन्देह युक्त होयके बोले, कि—भैया ये बालक कछु औरई ढंग को है, कौन जानें कहूँ याईने उखारे होय ॥ ५ ॥

इतनेई में बाबा नन्दने आयके कमरि में रसरी तें बंधे और उलूखल कूं खींचबे बारे अपने बेटा कों देखिकें हँसि के वा बाबा कृष्ण कूं छोर देत भये ॥ ६ ॥

ताके पीछे गोपीन ने गोद में उठाय लिये और आंगन में लेजाय के तारी दे दे कें नचामन लगीं, तब भगवान् बालक की नाईं नाचिबे लगे । और भोरे से उनके वश होयकें कबहूं गायबे लगें हैं, वे गोपी जैसो नाच नचावें काठ की पूतरी के नाईं भगवान् कों भी वैसोई नाचनों परे ॥ ७ ॥

काई समें श्रीयशोदाजी कहें, कि—लाला ! पीढा बैठबे को नेक पौसेरी तौ उठाय लाओ । इतनी मैया की आज्ञा सों जैसे तैसे पीढा, बांट लामन लगे । काई समें बाबा नन्द पूजा में बैठे होंय और बाहर आयबे को काम परे तौ कृष्ण सों कहैं, अरे कन्हुआ ! नेक खडाऊं लैयो तब भगवान् बाबा की खडाऊन कों अपने छोटी २ सी हथुलियान सों उठाय अपने माथे पै धारिकें जैसें तैसे अपने बाबा के आगे लाय धरें । कबहूं बडी चीज कोऊ मगावे और अपने सों नही उठै तब हाथ हलायबे लगजांय या तरियां अपनेन सों नितनई प्रीत बढावत भये ॥ ८ ॥

या लोक में भगवान् ज्ञानिजनों कों अपनी भृत्यवश्यता कों दिखावत अपनी बाललीला की चेष्टान सों सबरे व्रज कों हर्ष प्राप्त करत भये ॥ ९ ॥

---

क्रीणीहि भोः ! फलानीति श्रुत्वा सत्वरमच्युतः ।
फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥ ( क )
फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् ।
फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥ ( ख )
सरित्तीरगतं कृष्णं भग्नार्ज्जुनमथाह्वयत् । ( ग )
नोपेयातां यदाऽऽहूतौ क्रीडासङ्गेन पुत्रकौ ।
यशोदां प्रेषयामास रोहिणी पुत्रवत्सला ॥ ( घ )
क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम् ।
यशोदाऽजोहवीत् कृष्णं पुत्रस्नेहस्नुतस्तनी ॥ ( ङ )
कृष्णकृष्णारविन्दाक्ष ! तात ! एहि स्तनं पिब ।
अलं विहारैः क्षुत्क्षान्तः तद्भवान् भोक्तुमर्हति ॥ ( च )
हे रामागच्छ ताताशु सानुजः कुलनन्दन ! ।
प्रातरेव कृताहारः क्रीडाश्रान्तोऽसि पुत्रक ! ॥ ( छ )
प्रतीक्षते त्वां दाशार्ह ! भोक्ष्यमाणो व्रजाधिपः ।
एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः ! ॥ ( ज )
धूलिधूसरिताङ्गस्त्वं पुत्र मज्जनमावह ।
जन्मर्क्षमद्य भवतो विप्रेभ्यो देहि गाः शुचिः ॥ ( झ )
पश्य पश्य वयस्यांस्ते मातृमृष्टान् स्वलङ्कृतान् ।
त्वं च स्नातः कृताहारो विहरस्व स्वलङ्कृतः ॥ ( ञ )
इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ! ।
हस्ते गृहीत्वा सहराममच्युतं नीत्वा स्ववाटं कृतवत्यथोदयम् ॥ ( ट )

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

( न दृश्यते व्याख्यानमेतेषां श्लोकानाम् )

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनरौत्सुक्यातिशयेन तासां किञ्चिदाह–क्रीणीहीति सार्द्ध-द्वयभिः । यद्यप्येते श्लोकास्तैर्नादृतास्तथाऽपि पुस्तकेषु दृश्यमानत्वाद्विचक्षुलेन तु किञ्चिद्व्याख्यातत्वात्तत्त्ववादिभिश्च धृतत्वात् सम्मतत्वाच्च व्याख्यास्यन्ते; अत्र बहुत्र नानापाठत्वे नानाक्रमत्वे सत्यपि गौडादिदेशीयसत्सम्प्रदाय दृष्ट्या क्रमपाठविशेषौ ध्रियेते तत्र स्वानां प्रीतिदातृत्वं किं वर्णनीयम् ? अहो तद्दूरवाससम्बन्धेन पुलिन्दजातीनामपीत्याह द्वाभ्याम्–"क्रीणीहि भोः ! फलानीति श्रुत्वा सत्वरमच्युतः । फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥ अच्युतः परिपूर्णसर्वार्थोऽपि फलमात्रार्थी सर्वफलप्रदः सर्वपुरुषार्थानां च प्रकृष्टदाताऽपि धान्यदाय धान्यमेवादाय तत्रापि यथावत न तु स्वल्पहस्तधृतं स्वल्पमेवेदमिति विचारितवान् इति बाल्यलीलाविशेषो दर्शितः तत्र धान्यादानं पुरतस्तन्मात्रप्राप्तेः इति त्वरातिशयो दर्शितः । ततः किं वृत्तमिति सकौतुकं राजानं प्रत्याह– "फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् । फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥ सत्वरयाऽनेन पथ्येव च्युतानि धान्यान्यपि यस्मात् तादृशमपि तत्करद्वयं फलविक्रयिण्यपि उद्धृतमहास्नेहा फलैः रत्नाकारैर्पीत्वादिभिरपूरयत् तत्र च सर्वैरित्यपि द्वयं तस्य तत्र जातलोभत्वेन वैभवशक्तेः माहात्म्यात् च्युतधान्यकरत्वेऽपि तदीयस्वाभाविकसर्वफलप्रदत्वशक्त्या तत्सम्पत्तिरपि कृतेत्याह रत्नैरिति । स्वयमाविर्भूतत्वात् तैरेव कर्तृभिः ततश्च तन्माधुर्याधेशविवशेन्द्रियतया तद्बातवती यावत्तद्गृहप्रवेशं स्थित्वा जाता-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्षाभादिकं विस्मृत्य गृहमेव जगामेति ज्ञेयं सर्वफलप्रद इत्यनेनोत्तरकालेपि तदा वेशलक्षणा परमफलप्राप्तिरपि तस्याः सूचिता ( क ) ( ख )

अथ श्रीयशोदायाः श्रीरोहिणीतोऽपि श्रीरामेपि वशीकारि वात्सल्यातिशयं दर्शयितुं श्रीयशोदया परमवात्सल्येन नित्यं क्रियमाणं पुत्रलालनादिकमुद्दिश्यन् दामोदरलीलायाः क्रमप्राप्तं दिनैककृत्यमाह–सरिदित्यादिना उदयमित्यन्तेन । "सरित्तीरगतं कृष्णं भग्नार्जुनमथाह्वयत्" सरित्तीरगतमिति भग्नौ अर्जुनौ येन तमाह्वयदिति वात्सल्येन तदनुसन्धानादनिष्टा शङ्का दर्शिता कृष्णं क्रीडाविष्टचित्तम् अथेति कात्स्न्यें सर्वैरेव नामभिरित्यर्थः । रोहिणी तद्भोजनसाधनाभ्यासक्तया श्रीयशोदयैव प्रेषितेति ज्ञेयं तथा च श्रीकृष्णाह्वानेन रामाह्वानमप्यूह्यम् उत्तरानुरोधेन ( ग )

ततश्च "नोपेयातां यदाहूतौ क्रीडासङ्गेन पुत्रकौ । यशोदां प्रेषयामास रोहिणी पुत्रवत्सला ॥ एवमाहूतावपि यशोदां प्रेषयामासेति उभयत्रापि तस्या एव वात्सल्याधिक्यानुभवेन शीघ्रतदाकर्षणसामर्थ्यनिर्णयात्, किमर्थं ? तत्राह, पुत्रयोर्वत्सला सरित्तीरे नानोपद्रवशङ्कया तयोः स्नपनभोजनेच्छया चेति भावः ( घ )

ततश्च "क्रीडन्तं सा सुतं बालैरतिवेलं सहाग्रजम् । यशोदाऽजोहवीत्कृष्णं पुत्रस्नेहस्नुतस्तनी ॥ अजोहवीत् पुनः पुनराजुहाव निकटगमने पलायनशङ्कया ( ङ )

कृष्णकृष्णारविन्दाक्ष तात एहि स्तनं पिब । अलं विहारैः क्षुत्क्षान्तस्तद्भयान् भोक्तुमर्हति ॥ कृष्ण कृष्णेति वीप्सा दूरतःश्रवणाय निजाग्रहव्यक्तये च हे अरविन्दाक्ष ! हे तातेति लालनं सम्बोधनं शीघ्रागमनाय असन्धिः प्लुतप्रकृतिस्थत्वात् असंहिततया पाठात् भयेऽपि कारणे सति यत् क्षुत् श्रान्त इत्येवोक्तं तत्तस्यामङ्गलत्वेन वक्तुमनिष्टत्वात् ( च )

तथाऽप्यनायान्तमग्रजो मद्वाक्यप्रतिपालको बलादानेष्यतीत्याशयेन श्रीराममाह्वयति–हे रामागच्छ ताताशु सानुजः कुलनन्दन । प्रातरेव कृताहारः क्रीडाश्रान्तोऽसि पुत्रक ॥ यतः कुलनन्दनस्त्वमित्यादिना कृष्णस्य शीघ्रागमनार्थमीर्ष्यां जनयति सम्बोधनपाठेऽपि स एवार्थः । हे पुत्रकेति तस्मिन्नपि पुत्रवत् स्नेहात् अनुकम्पायां कन् ( छ )

किञ्च,"प्रतीक्षते त्वां दाशार्हंभोक्ष्यमाणो व्रजाधिपः । एह्यावयोः प्रियं धेहि स्वगृहान् यात बालकाः" हे दाशार्हेति मित्रपुत्रत्वेन परमापेक्ष्यं त्वां विना तस्य भोजनमेव न स्यादिति भावः । आवयोः मदीयोर्दम्पत्योर्वां क्रीडासक्तस्य श्रीकृष्णस्य प्रेमासक्त्या तमपि क्रीडाभिनिविष्टं वीक्ष्य क्रीडनात् बालकान्निवारयति—स्वस्वेति वीप्साया अभावः त्वरावाक्यत्वात् ( ज )

श्रीकृष्णस्य भीत्या बालकानपि विहारादनुपरमतो वीक्ष्य स्पृशैव प्रयोजनविशेषं च दर्शयन्ती श्रीकृष्णमाह्वयति—

धूलीधूसरिताङ्गस्त्वं तात मज्जनमावह ।
जन्मर्क्षं तेऽद्य भवति विप्रेभ्यो देहि गाः शुचिः ॥

मज्जनं स्नानमावह विधिवत् कुर्वित्यर्थः । विप्रेभ्य इति उत्पत्स्यै तत्सम्प्रदानकदानोत्साहवन्तं तमुल्लासयति यतस्तव जन्मर्क्षमद्य भवति भवत इति पाठे सदा वर्द्धमानस्येत्यर्थः ( झ )

तथाऽप्यनागच्छतस्तस्य तदैवागताजन्मान् बालान् दर्शयित्वा मात्सर्यं जनयति–

पश्य पश्य वयस्यांस्ते मातृमृष्टस्वलङ्कृतान् ।
त्वं च स्नातः कृताहारो विहरस्व स्वलंकृतः ॥

वीप्सा प्रेम्णा तज्जन कोपेन खेदेन वा मातृभिर्मृष्टाः स्नानादिना निर्मलीकृताश्च ते पश्चात् सुत अलंकृताश्चेति तान् ॥ ञ ॥

उपसंहरति—

इत्थं यशोदा तमशेषशेखरं मत्वा सुतं स्नेहनिबद्धधीर्नृप ।
हस्तेगृहीत्वासहराममच्युतन्नीत्वा स्ववाटं कृतवत्यथोदय
इत्थं सलालनोक्तिपूर्वकशनैर्गमनप्रकारेण अशेषस्य चूडामणिमिव शिरोधार्यमपि सुतं मत्वा मत्सुतोयमिति भूय अत एव स्नेहेन नितरां बद्धा वशीकृता धी सा अत एव क्रीडन्तमपि हस्ते गृहीत्वा अच्युतमिति यनाद्यभिप्रायेण स्ववाटं निजगृहस्थानम् उदयं स्नपनभोजनालङ्कारादिमङ्गलं स्वप्रतिज्ञाततया तदाग्रहाज्जन्मर्क्षयोगयाभ्युदयं वा अथानन्तरं सद्य एवेत्यर्थः । कात्स्न्येन वा हे नृपेति तत्र स्नेहोदयदर्शनात्त्वमेव नृन् पालयसीति सलालनसम्बोधनम् ( ञ )

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

( क—म )

मातृमृष्टान् "मृजूष्शुद्धौ" मातृभिः स्नापितान् ( ञ )

उदयमभ्युदयं मङ्गलमकरोदित्यर्थः ( ट )

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्र क्वचित्पुस्तकेषु—

क्रीणीहि भोः फलानीति श्रुत्वा मातरमच्युतः ।
फलार्थी धान्यमादाय ययौ सर्वफलप्रदः ॥
फलविक्रयिणी तस्य च्युतधान्यं करद्वयम् ।
फलैरपूरयद्रत्नैः फलभाण्डमपूरि च ॥

इत्यादिश्लोका आधिका दृश्यन्ते तत्र भोः कृष्ण फलानि विक्रीणीहीति यन्धं मोचितवता नन्देनोक्तोऽच्युतः स्वयं स्वर्गापवर्गदोपि केवलं प्राकृतबाल इव फलार्थी सन् मातरं पृष्ट्वा धान्यं खिनाऽऽदाय ययौ ( क )

तथा फलविक्रयिणी स्त्री तस्याच्युतस्य च्युतं धान्यं तत्करयोर्द्वयं फलैरपूरयत् फलविक्रयिण्याः यत्फलभाण्डं रत्नैरपूरि पूरितमभूत् तत्करद्वयाच्च्युतेन धान्येन रत्नात्मापन्नेन फलभाण्डं पूरितमभूदित्यर्थः ( ख )

अथ तन्मायामोहितयोर्यशोदारोहिण्योः काञ्चिद्वार्ताम् न्याह–सरिदित्यादिना । भग्नावर्जुनौ येन तं सरितो यमुनायाः गतं कृष्णमाह्वयत् एहीत्याहूतवती ( ग )

यदा आहूतावपि क्रीडासङ्गेन नागच्छेतां तदा पुत्र रोहिणी यशोदां प्रेषयामास ( घ )

सा रोहिण्या प्रेषिता यशोदा अतिवेलं वेलां भोजनादिकालम् क्रान्तं बालकैस्सह क्रीडन्तं सरामं सुतं श्रीकृष्णम् स्नेहेन स्नुतौ स्तनौ यस्यास्तथाभूता आजुहाव ( ङ )

आह्वानप्रकारमेव दर्शयति–कृष्णेति सार्द्धश्चतुर्भिः ( च

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे दाशार्ह व्रजाधिपो नन्दो मोक्ष्यमाणो वां भवन्तौ प्रतीक्षते युवयोरागमनं प्रतीक्षमाणा आस्ते मावयोः रोहिण्याः अस्याश्च प्रियं देहि हे बालकाः रामकृष्णानुचराः स्वगृहान् प्रति गच्छत (ज)

अद्य मज्जनं स्नानमाचद्कुरुअद्यास्मिन्नहनि भवतो जन्मनक्षत्रम् अतः शुचिः स्नातो विप्रेभ्यो गाः देहि (झ)

मातृभिः स्नापितान् स्वलङ्कृतांश्च वयस्यान् स्वसमानवयस्कान् पश्य स्वमपि स्नातः स्वलङ्कृतः कृत आहारो येन तथाभूतः-विहरस्व (ञ)

इत्थम् अशेषाणां बालानां शेखरं श्रेष्ठं ब्रह्मादिभ्योपि श्रेष्ठामिति वा तथाभूतमपि तं केवलं सुतं मत्वा स्नेहेन निबद्धा धीर्यस्यास्तथाभूता हे नृप सराममच्युतं हस्ते गृहीत्वा स्ववाटं स्वगृहं नीत्वा अथ उदयं माङ्गलिकं कर्म कृतवती चकार (ट)

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

(क—ग)

* गोपेयातां समीपं नागतौ (घ)

मजोहवीत् आह्वयामास (ङ)—छ)

व्रजाधिपः नन्दगोपः धेहि देहि बालकाः (ज)

धूलिधूसरिताङ्गः धूलिधूसरितसर्वशरीरः (झ—ञ)

स्ववाटं स्वव्रजम (ट)

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अत्र फलविक्रयिण्यादयः श्लोका बहुविधा वर्त्तन्ते व्याख्यातास्त्र चिरसुखेन (क—ट)

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेष्वतिनीचानां पुलिन्दजातीनामपि प्रीतिप्रद इत्याह—फलविक्रयिणीति। अच्युतः परिपूर्णोऽपि फलमात्रार्थी सर्वफलप्रदोपि त्वरया पुरतः स्थितधान्यमात्रप्राप्तेर्धान्याञ्जलिमादाय ययौ (क)

तच तावन्मात्रमपि धान्यं तया प्राप्तमित्याह—च्युतेति। अञ्जलिस्थस्यत्वरया बहिर्निर्गमे वर्त्मन्येव सर्वधान्यानि पतितानि ततश्च द्वित्रिमात्रधान्ययुक्ते केवलाञ्जलावेव नीयतामित्युक्त्वा फलपात्रे न्यस्ते फलविक्रयिण्यप्युद्भूतस्नेहफलैः धीलबादिभिस्तैर्वापूरयत् फलेषु तस्य जातलोभस्थेन स्तोकेपि करतलद्वये तदीयवैभवशक्तेः साहाय्यात् ततश्च रत्नैरिति तदीयसर्वफलप्रदत्वशक्त्या तत्प्रेमपर्य्यन्ता सर्वत्र सम्पत्तिरभूदिति ज्ञेयम (ख)

रोहिण्याः सकाशादपि श्रीयशोदायामतिवात्सल्यवत्त्वं रामकृष्णयोरतिस्नेहवशाविति दर्शयन् यमलार्जुनभञ्जदिन एव बालान्तरमाह-सरित्तीरे खेलनार्थं गतं कृष्णं रामं च उत्तरवाच्यानुरोधात् तद्भोजनसाधनासक्तया श्रीयशोदया प्रेषिता रोहिणीति कर्त्तृपदं ज्ञेयम (ग)

यशोदां प्रेषयामासेति तस्या पद्माधिकवात्सल्यवत्त्वात्स्तदुद्भावकपंचासामर्थ्यनिर्णयात् (घ)

अजोहवीत् पुनः पुनराजुहाव निकटगमने पलायनशङ्कयेति दूरत एवेति भावः (ङ)

कृष्णकृष्णेति वीप्सा दूरतः श्रवणाय (च—छ)॥

मोक्ष्यमाणा इति युवां विना भोक्तुमशक्नुवन्तं तं क्षपितरं किं क्षुधया पीडयसीति भावः। स्वगृहान् यातेति युष्मन्मातापितरोपि वयमिव क्लिश्यन्ति तान् सुखयतेति भावः वस्तुतस्तु क्रीडाविच्छेद एव तात्पर्य्यम् (ज)

तदप्यनायान्तं क्रीडोत्साहाद्विरमयितुं दानोत्साहमुत्पादयति विप्रेभ्य इति (झ)

तदैवागतानन्यान् बालान् दर्शयित्वा मात्सर्यं जनयति पश्येति (ञ)

तम् अशेषस्य शेखरं चूडामणिं सुतं मत्वा न त्वशेषशेखरं मत्वेत्यर्थः। सत्वशेषशेखरः सुतश्च भवतीत्यर्थः। यद्वा, तं सुतं अशेषस्य स्वकुलस्य शेखरं मत्वा स्ववाटं निजस्थानं उदयं स्नपनभोजनालङ्कारादिमङ्गलम् (ट)

---

भाषा टीका।

एक दिन की बात है, कि—फलन कूं बेंचिवे वारी मालिन नन्द पौर पै आय के। "फल ले औरी !!! कोई फल लेव!" या तरियां बोली तब सर्व फलन के देन वारे श्रीकृष्ण सुनकें फलन की चाहना सों बड़ी जल्दी हाथन में फलूक अनाज ले करकें बाहर गये॥ (क)

फल बेचन वारी ने हूं यो झांकी करकें जा बालक के छोटे २ दोनों हाथन में सूं अनाज गिरतो जाय है ऐसें देखिकें वाके हाथन सो अनाज लेकें दोनों हाथन कूं फलन सूं भर दिये इतमें अपनी टुकाई की ओर जो देखे है तो रत्नन सो भर गई (ख)

एक समें यमलार्जुन के भंग करन वारे श्रीकृष्णचन्द्र आनन्द कन्द, और बलराम सुख धाम, कूं श्रीयमुनाजी के तीर पै बालकन के साथ खेलत देखकें श्रीरोहणी देवी बुलावत भई (ग)॥

जा विरियां खेल में लगे भये छोटे २ दोऊ पुत्र नहीं आये, तब श्रीरोहिणी जू, पुत्रन पै परमवात्सल्यवारी श्रीयशोदाजी कूं दोऊ भैयन के बुलायवे कूं पहुंचावत भई (घ)

पुत्र के स्नेह सों स्तन जाके चुचावते जांय हैं, ऐसी यशोदाजी बालकन के साथ खेल में तत्पर और भोजन की बेला जिनकी निकस गई ऐसे श्रीबलराम सहित श्रीकृष्ण चन्द्र कूं बुलावती भई (ङ)

श्रीयशोदाजी बोली, कि-हे कृष्ण! हे कृष्ण! हे कमलदल लोचन! हेतात! नाओ एकवार स्तन (दूध) तौ पीजा-

* इदमतेथेयं स्वयाऽद्वादशश्लोकादर्ध्वं विजयध्वजतीर्थीयं।

श्रीशुक उवाच ।

गोपवृद्धा महोत्पातानननुभूय वृहद्वने ।
नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ १० ॥
तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः ।
देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः ॥ ११ ॥
उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ।
आयान्त्यत्र महोत्पाता बालानां नाशहेतवः ॥ १२ ॥
मुक्तः कथञ्चिद्राक्षस्या बालघ्न्या बालकोह्यसौ ।
हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ १३ ॥
चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ।
शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥ १४ ॥
यन्न म्रियेत द्रुमयोरन्तरं प्राप्य बालकः ।
असावन्यतमो वाऽपि तदप्यच्युतरक्षणम् ॥ १५ ॥
यावदौत्पातिकोऽरिष्टो व्रजं नाभिभवेदितः ।
तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ १६ ॥

भाषा टीका ।

ओ । अरे लाला ! भौत खेल चुके अब भूख लगी होयगी । अरे मोरे छोटे से लाला ! खेलत २ थाक गये होवोगे (च)

हे राम ! हेकुलनन्दन ! हेतात ! तुम छोटे भैया सहित जल्दी सों आय जाओ । देखो तौ सही तुम सवेरेई के कलेऊ करें हौ, ता सों भैया ! अब दोऊ भैया भोजन कर लेओ ( छ )

अरे लाला ! या समें व्रजराज भोजन करवे कूं बैठे है तेरीवाट देख रहे हैं । अब तूं आय जा हम सयन कों प्रसन्न कर, इतनी सुनकें कृष्ण आवन लगे तब बालक बोले कि जैसें तैसें तौ खेल जम्यो है अब कन्हैया जाय है या कूं हम कभऊं न खिलावेंगे, ऐसे सुनके कृष्ण फिर खलवे लगे, तब श्रीयशोदाजी नैंक भ्रुकुटि मरोरि कें बोली, क्योंरे छोरा हो ! तुमारें कछु घरबार नहीं है जाओ अपने घरन कुं (ज)

हे पुत्र ! तुम्हारो अंग धूर भरचो होय रह्यो है ता सों तुम स्नान कर लेओ, और आज या बिरियां तुमारो जन्म को नक्षत्र ( रोहिणी ) है, तासों फिर ब्राह्मणन कों गायन के दान करौ (झ) ॥

देख देख तेरे सांथ खेलनवारे छोरान कूं उनकी मैयान ने कैसे उबटन लगाय कें नहवाय दीने हैं, और कैसे सुन्दर अलंकार करदीने हैं, तासों लाला तुम भी सुन्दर स्नान करिके भोजन करकें अच्छे २ गहने वसन कूं पहिर कें फिर पीछें खेलो करियो ॥ (ञ) ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि–हे नृप ! स्नेह में बन्धी बुद्धि ऐसी यशोदा ब्रह्मादिक अशेष देवन के मुकुट श्रीकृष्ण कूं या प्रकार अपनो पुत्र मानिके श्रीबलदेव सहित कृष्ण को हाथ पकरिकें घर में लाइके उबटन कराय के गौअन को दान कराय के भोजन कराय श्रीकृष्ण के जन्म नक्षत्र को उत्सव करत भई ( ट ) ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रन्तुं वृन्दावनं गन्तुमन्तः कृष्णेन यन्त्रिताः ।
स्वतन्त्रा इव नन्दाद्या मन्त्रमेतममन्त्रयन् ॥
व्रजकार्यं गोकुलस्य हितकृत्यम् ॥ १०—१३ ॥
विपदं वीनां पक्षिणां पदं विहारस्थानम् वियत्प्रसिद्धं वा ॥ १४ ॥
अन्यतमो वा कश्चिद्बालः अच्युतेनैव रक्षणमासीत् ॥
अरिष्टोऽनर्थः इतः स्थानात् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"स्वाभाविकेन तत्प्रेम्णा प्रेरिता गोपपुङ्गवाः ।
हर्षैकमङ्गलाहार्यं व्रजकार्यममन्त्रयन्" ॥
यमलार्जुनभङ्गेन्द्रयागसमापनानन्तरम् समागम्य

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मिलित्वा व्रजकार्यं व्रजप्राणस्य श्रीकृष्णस्य हितानुसन्धानात्॥ १०॥

तत्र तेषु मर्थः प्रयोजनं देशादीनां ज्ञयाणामेकैकेषां मिलितानां च वस्तुत्वमुत्तममध्यमादित्वं तज्ज्ञः इति ज्ञानाधिक्यं विशेषितं वय आधिक्यान्नामसाम्याच्च श्रीनन्दराजस्यासौ मन्त्री ज्येष्ठभ्राता चेति गम्यते। एवं तादृशोक्तौ योग्यतोक्ता किञ्च श्रीरामकृष्णयोः प्रियकृत् प्रकृत्यैव प्रेम्णा हितकर्त्ता अतो महोत्पातानुभवेन तयोरनिष्टशङ्कयैवाहेत्यर्थः। अत्र ज्येष्ठकनिष्ठतया नामवैपरीत्यसम्भवेऽपि स्वरसत एव पूर्वं ज्येष्ठस्योपनन्देति नाम कृतम् उप समीपे नन्दयतीति पश्चात्तद्गुणमुकत्वेन कनिष्ठस्य नन्देति कृतं तत्पितृचरणैः तच्च तत्तारतम्यसंवादित्वाद्दैवघटितमेव तथा सर्वलक्षणसम्पन्नत्वाद्देव तस्मै कनिष्ठायापि परमगाढेन तेन ज्येष्ठेनैव स्वेच्छया गोकुलराज्यं समर्पितमिति विवेचनीयम्॥ ११॥

उत्थातव्यमन्यत्र गन्तव्यमित्यर्थः। कुतः? गोकुलस्य तत्रत्यानां सर्वेषां हितैषिभिरिति बालानामिति च सामान्योक्तिः श्रीनन्दस्यासङ्कोचार्थं प्रजानामिति पाठेऽपि स एवार्थः। व्रजानामिति च पाठः क्वचित् वस्तुतस्तु तद्धितादिनैव सर्वहितादिसिद्धेः तत्तदुक्तिः॥ १२॥

मतस्तानाधिकस्यैव महोत्पातानुतापं सूचयन् कौतुकेन स्वयमेव तत्रागतं श्रीकृष्णमङ्के कृत्वा सस्नेहं दृष्टान्तयति-मुक्त इति, त्रिभिः। राक्षस्यादिशब्देन स्वगणेनाप्रतिकार्यत्वं दर्शितं बालक इत्यनेन तेन तु सुतराम् अतः कथञ्चिदिति साक्षात्कारणादर्शनात् केनाप्यनिर्वचनीयेनैव कारणेनेत्यर्थः। हि प्रसिद्धौ सर्वेषामेवानुभवात् कथञ्चित्तेनोक्तमेव निर्द्धारयति-हरेरिति। नूनं निश्चये॥ १३॥

दैत्येन नीतः अत्र च वियदाकाशं नीतः तत्रापि विपदम् अन्यत्तैः तत्र विगतप्रतिष्ठमिति अत्यूर्द्ध्वमित्यर्थः। सुरेश्वरैः अच्युतप्रेरितैः तत्पापैदरूपैरेवेत्यर्थः। तदप्यच्युतरक्षणमित्यपिशब्दात्॥ १४॥

सास्त्रगद्गदमाह-यन्नम्रियेतेति। दुःखैरेवाश्लीलमपि प्रयुक्तमिदमिति तत्रापीति तदपीति वा पाठः॥ १५॥

एवमसकृत्परमेश्वरेण रक्षा कृता तादृशं च कुतोऽस्माकं भजनं येन सदा तेन सा कार्या तस्मात्तदाविष्टनीतिशास्त्रानुसारादौत्पातस्थानमेतदाशु परित्यक्तमेव युज्यत इत्याह-यावदिति। औत्पातिकः उत्पातजः व्रजमित्यायिकं पूर्ववच्छ्रीकृष्णाभिप्रायेणैव॥ १६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पक्षिणां पदं स्थानं विपद्रूपं वियदिति वा॥ १०—१४॥
अर्थक प्रस्थानयोग्यान् कुरुत॥ ११—१८॥

---



श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं स्थिते कदाचिद्गोपवृद्धाः पूतनाशकटादिकृतान् महोत्पातानुभूय समागम्य समेत्य व्रजकार्यं गोकुलस्य हितकृत्यममन्त्रयन्नालोचितवन्तः वृन्दावनं गन्तुमिच्छता श्रीकृष्णेन अन्तरात्मना प्रेरिताः अमन्त्रयन्निति भावः॥ १०॥

तत्रोपनन्दनामा कश्चिद्गोपः स च गोपानां मध्ये ज्ञानेन वयसा चाधिकः देशकालानुगुणकर्त्तव्यप्रयोजनाभिज्ञः रामकृष्णयोः प्रियकृत्तावन्नन्दादीनाह॥ ११॥

उक्तमेवाह--उत्थातव्यमित्यादिना तच्छृणुत्वेत्यतः प्राक्तनेन। गोकुलस्य हितमिच्छद्भिरस्माभिरितो व्रजादुत्थातव्यं निर्गन्तव्यं प्रजानामत्रत्यानां नः नाशहेतवो बहवः उत्पाता आयान्त्यावाहयन्ति॥ १२॥

अतीतास्त्वपरोक्षदृष्टा एवेत्याह-मुक्त इति। कथञ्चिद्दैववशान्मुक्तः तथा भगवदनुग्रहादनः शकटमपि बालस्योपरि नापतत्॥ १३॥

तथा चक्रवातेन वीनां पक्षिणां पदं विहारस्थानं वियदाकाशं प्रत्ययं बालो दैत्येन नीतः वियदाकाशं ततो विपदमापन्नश्च नीत इति वा सुरेश्वरैरस्मदिष्टदैवतैः परित्रातः॥ १४॥

कुतः यद्यस्मादुभयोरर्जुनयोः पततोरन्तरं मध्यं प्राप्यासौ बालकोऽन्यतमो वापि कश्चिन्न मृतः तदप्यच्युतेनास्मदिष्टदैवतेनैव रक्षणमासीत्॥ १५॥

यावदुत्पातप्रयुक्तोऽरिष्टोऽनर्थो व्रजं नाभिभवेत् न पीडयेत् तावदेव बालानादायान्यत्र यास्यामः॥ १६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तत्र नन्दादिषु॥ ११॥
इत उत्थातव्यम्॥ १२॥
अनश्च शकटश्च॥ १३॥ १४॥

असौ कृष्णो बालकः कृष्णादन्यतमो बालको न म्रियेतेति यत् तदप्यच्युतरक्षणम् अन्यबालकस्य मरणाभावः॥ १५॥

औत्पातिकः उत्पातसम्बन्धी अनर्थकरः इतो गृहगमनात् तावत्ततःपूर्वमेव॥ १६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वाभाविकेन तत्प्रेम्णा प्रेरिता गोपपुङ्गवाः।
हर्यैकमङ्गलाहार्थं व्रजकार्यममन्त्रयन्॥

इत्याह—गोपेति। व्रजकार्यं व्रजप्राणस्य श्रीकृष्णस्य हितानुसन्धानात् प्रियकृदिति शीले क्विप्॥ १०॥ ११॥

बालानां व्रजानामिति पाठद्वयेऽपि समूहनिर्देशो व्रजेश्वरसङ्कोचन एवाग्रे श्रीकृष्णोकनिष्ठत्वेनानीतभयोद्देशात् कथञ्चित्तेन निर्दिष्टं निर्द्धारयति हरेरिति॥ १२॥ १३॥

सुरेश्वरैरच्युतप्रेरितैस्तत्पार्षदैस्तत्राप्यच्युतरक्षणमित्यपिशब्दात्॥ १४—१५॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्रजं बालानिति पूर्ववत् श्रीकृष्णाभिप्रायेण ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं बृहद्वनक्रीडामुक्त्वा सर्वदेवाधिष्ठितवृन्दावने क्रीडां वक्तुं भगवत्प्रेरितानां तेषां निर्गमार्थं मन्त्रमाह—

"उद्यमो मुख्यसंपत्तिः मन्त्रो हेतुस्त्रिभिस्ततः ।
निर्द्धारितपरित्यागः स्थानान्तरगुणास्ततः ॥
कृष्णाश्रयेति कालस्य नापेक्षाऽतोऽनिवारणम् ।
पञ्चभिर्गमनं चैव रतिस्तत्र हरेः परा ॥
एवं कलाभिर्भगवान् पूर्णो वृन्दावने बभौ" ॥

प्रथमं मन्त्रार्थमुद्यममाह—गोपवृद्धा इति । गोपेषु ये वृद्धाः पूर्वापरानुसन्धानसहिताः बृहद्वनमन्वर्थनामपूर्वं कदाचिदपि तत्रोत्पत्त्यभाव उत्पातानाम् इदानीन्तु महोत्पाताः पूतनामरणादयः । नन्दोऽपि वृद्धप्रायः प्रधानव्यतिरेकेण विचारो न निर्वहतीति समागम्य सम्यगेकत्रोपविश्य व्रजसम्बन्ध्यवश्यकर्त्तव्यममन्त्रयन् ॥ १० ॥

सर्वेषां वक्तृत्वं न सम्भवतीति प्रधानं व्यपदिशति, तत्रेति । उपनन्दनामा नन्दसम्बन्धी गोप इति धर्मप्रधानः ज्ञानवयोभ्यां च परिणतः देशकालार्थानामपि कस्मिन् देशे कस्मिन् काले कोऽर्थः कर्त्तव्य इति तत्त्वज्ञः तादृशोऽप्यभक्तश्चेत् सर्वं व्यर्थं स्यादिति रामकृष्णयोः प्रियकृदाहेति सम्बन्धः नाम्ना नन्दस्य स एव मन्त्रद इति ज्ञापितम्. गोप इति तन्मध्यपाती तुल्येष्वानिष्टस्तादृश एव मन्त्राहः ज्ञानं तु वयसा प्रतिष्ठितं भवतीत्युभयाधिक्यम् इदं मन्त्रे मुख्यमङ्गं लोकानभिज्ञोपि न शास्त्रार्थज्ञानमात्रात् मन्त्री भवतीति देशादिज्ञानमुक्तम् इदं गमनं स्वार्थं चेत् निरोधेन विरुध्यत इति भगवत्प्रीतिरुक्ता प्राधान्यप्रतिपत्त्यर्थं द्वयोर्निर्देशः साधारणनिरोधत्वात् असाधारणो निरोधो भगवतैव क्रियते साधारणस्तु भाभ्यामिति ॥ ११ ॥

मन्त्रमाह—उत्थातव्यमिति । इदं स्थानं परित्यक्तव्यं परितो यद्यपि व्रजाः सन्ति, ते तिष्ठन्तु मा वा अस्माभिस्तूत्थातव्यं ननु, कर्माधीनत्वात् जगतः सर्वत्रैव यद्भाव्यं तद्भविष्यतीति किं गमनेन ? इति चेत्तत्राह—गोकुलस्य हितैषिभिरिति । गोकुलस्य ये हितं वाञ्छन्ति कालकर्मपक्षौ परित्यज्य लौकिकन्यायेन ये हितचिन्तकाः तैरवश्यमेतत्कर्त्तव्यं यत्साधनानि भगवता दत्तानि ध्यानकरणादीनि तान्यन्यथा व्यर्थानि स्युः अतो विरोध एव तयोर्भिन्नं प्रामाण्यं यावच्च विरोधस्तावत्करणानामेव मुख्यं प्रामाण्यम् उत्थाने हेतुमाह—आयान्त्यत्र महोत्पाता इति—

"अलौकिकोऽनिष्टहेतुरुत्पातः सर्वनाशकः ।
महोत्पातो बुधैर्ज्ञेयो यत्र तत्यागमर्हति" ॥

महोत्पाताः पूतनादयः तेषां सोढव्यतां निराकरोति—प्रजानां नाशहेतव इति । हेतौ कार्यमावश्यकं महतां देवाद्युपासकानामनिष्टाभावेऽपि प्रजोपद्रवोऽपि नारणीयस्तैः "प्रक्षालनाद्धि पङ्कस्य" इति न्यायेन प्रतीकारापेक्षया त्यागः श्रेष्ठः । उत्पातानेव गणयति, तामसराजससात्विकान् उत्पाताः प्रतीकारसहिता ... अन्यथा तन्निवृत्तिरेव न स्यात् उत्पातत्वं वा ॥ १२ ॥

अत एव राक्षस्या पूतनया ग्रस्तापेव बालको मुक्तः तत्र ... हेतुपरिज्ञानाभावात् कथञ्चिदित्यदृष्टं साधनं कल्पितं ... कारणावश्यकत्वात् राक्षस्या बालघ्न्या इति जातिक्रिया... मुक्तत्वं निस्सन्दिग्धमित्यसावपीति प्रदर्शितः अलौकिक... माह—हरेरनुग्रहादिति । एतदेव हेतुद्वयं शकटभङ्गोऽप्या... अनश्चोपरि नापतदिति चकारेण नूनमिति स्वदर्शनात् ॥ ...

तृणावर्त्तेऽलौकिकानि बहूनि साधनान्याह—चक्रवातेन... चक्रवातः प्रसिद्धः तृणावर्त्तः कंसभृत्य इति अतो दैत्य ... वियदाकाशं नीतः तदपि नाल्पदूरं किन्तु विपदं यावद्दूरे ... वयः परिभ्रमन्ति वयःपक्षिणस्तेषां पदमिति यत् वियच्छी... तद्विपदमेव नीतवानिति वा सरस्वती तु तस्यायमेव ... द्रूपः वियत् व्ययं प्राप्नुवद्यथा भवति तथा प्रतीक्षणं ... मार्गेण नीतः तत्रोभयोर्गतयोर्मध्ये एकः शिलायां पतितः ... प्रदेशे अपर उपर्येव सुरेश्वरैः परित्रातः न देवमात्रकृत्यं ... रुद्रास्तु घातकाः तदुपमर्दस्तु सुरेश्वरैरेव कर्त्तुं शक्यः ... पतिः पुनस्तेषामनुकूल इति बहवोऽत्र पुनस्तादृशाः ... उक्ताः बहूनामनुग्रहोऽन्यान्य इति परितस्त्रायां केनाप... बाधाभावार्थम् ॥ १४ ॥

प्रस्तुतमाह—यश्चेति । अनयोर्द्रुमयोरन्तरं प्राप्य बहवो ... अत्र स्थिताः कोऽपि नोपद्रुतः असौ भगवानन्यत्तमः ... वा कश्चित् भगवान् देवैः सर्वदा रक्षित इत्यन्यस्य ... ग्रहणं तमप्प्रत्ययेन. हीनोपि कश्चिन्नोपद्रुत इति अमङ्गल... चारणं स्नेहात् प्राकृतानां सहजं प्राकृतत्वमन्यथा, न ... ज्ञायेत येषां वाङ्मनसयोरव्यवस्थातेऽत्यन्तं प्राकृताः येषां ... सोपि नाव्यवस्था तेऽत्यन्तं सन्तः अत्र अच्युतो भगवानेव रक्षक... हि सर्वत्र च्युतिरहितः अन्तर्यामी ततो बालकान् पातस्थानाद... नीतवान् अतो भगवतो वारत्रयं देवानां च रक्षणं जाता... परं य उत्पातः समायास्यति तस्य न प्रतीकार इति ॥ १५ ॥

ततः पूर्वमेव गमनमुचितमित्याह—यावदिति । उत्पातेन जातोऽ... मरणादि रूप इति यावत् व्रजं नाभिभवेत् तावदितो बाला... सानुगाः सपरिकराः अन्यत्रैव यास्यामः निर्द्धारित... वनं बालानां कर्मता उत्पातास्तत्सम्बन्धिन एव ... इति ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

महावने विहृत्यैवं विजिहीर्षो यदाऽजनि ।
वृन्दावने हरेस्तर्ह्यौपनन्दी रराज गीः ॥

उपनन्दो नन्दराजस्य ज्येष्ठो मन्त्रीति प्राञ्चः ॥ ११ ॥

गोकुलस्य गोकुलवासिमात्रस्य ॥ १२ ॥ १३ ॥

चक्रवातेन तृणावर्त्तेन वियदाकाशं विपत्प्रापकत्वा... सुरेश्वरैः सुरेश्वरेण विष्णुना बहुत्वं गौरवेण तत्रापीशु... वाक्येऽपिकारात् ॥ १४ ॥

असौ कृष्णः ॥ १५ ॥

वनं वृन्दावनं नाम पशव्यं नवकाननम् ।
गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ १७ ॥
तत्तत्राद्यैव यास्यामः शकटान्युङ्क्त माचिरम् ।
गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ १८ ॥
* ( तच्छ्रुत्वैकधियो गोपास्सर्वे नन्दपुरोगमाः ।
उपनन्दवचो राजन् प्रतिनन्द्य गृहान् ययुः ॥
अथ नन्दस्समाहूय गोपानिदमभाषत ।
श्वोऽतो वृन्दावनं यामो यत्ता भवथ माचिरम् ) ॥ ० ॥
तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ।
व्रजान् स्वान् स्वान् समायुज्य ययूरूढपरिच्छदाः ॥ १९ ॥
वृद्धान् बालान् स्त्रियो राजन् ! सर्वोपकरणानि च ।
अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्वमस्मिन्नगरे विष्णुकथाकीर्त्तनदर्शनपरिचर्यादिकं बहुतरमासीत् यावन्नन्दस्य बालको अयमभूत्तावदास्थान्यादिषु सर्वत्रास्यैव कथाकीर्त्तनदर्शनादिकं प्रतिचर्यां भवत्यतस्तादृशं च कुतोऽस्माकं सम्प्रति तद्भजनं येन सदा विष्णुनैव रक्षा स्यादतस्तदादिष्टनीतिशास्त्रमेवानुसरणीयमित्याह—यावदिति ॥ १६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजकार्यं व्रजस्थजनस्य हितकृत्यम् ॥ १० ॥

स रामकृष्णयोः प्रियकृत् अतस्ताभ्यामेव प्रेरित इति गम्यते ॥ ११—१३ ॥

विपदं विगतप्रतिष्ठं वीनां गृध्रादीनां पदं सञ्चारस्थानं वा वियदाकाशं नीतः ॥ १४ ॥

असौ कृष्णः अन्यतमो वा बालः न मृतस्तत्राप्यच्युतेन परमेश्वरेणैव रक्षणमासीत् ॥ १५ ॥

अरिष्टोऽनर्थो व्रजं नाभिभवेन्न पीडयेत्तावदितः बृहद्वनात् अन्यत्र यास्यामः ॥ १६ ॥

———

भाषा टीका ।

श्रीशुकदेवजी कहैं हैं, कि—नन्दादिक गोप वृद्धन ने महावन में बड़े उत्पातन कों देखकें सगरे इकट्ठे मिल करके व्रज के कारज की सलाह करत भये ॥ १० ॥

तहां श्रीराम कृष्ण को हित करन वारो देशकाल के लक्षन कूं जानिबे वारो ज्ञान में और अवस्था में सबन सों अधिक उपनन्द नाम वारो गोप बोल्यो ॥ ११ ॥

कहा बोल्यो, कि—व्रज के हित चाहन वारे हम सबन कूं अब इहां सों चलनो चाहिये, काहे सों कि—अब या महावन में बालकन के नाश करन वारे बड़े बड़े उत्पात आयबे लगे हैं ॥१२॥

देखो तो सही ये बालक ( कृष्ण ) बालघातिनी वा राक्षसी पूतना सों जैसें तैसें छूटपायौ । और देखो कि—श्रीहरि की कृपा सों याके ऊपर वो गाड़ा नहीं गिर्यो ॥ १३ ॥

और जब वो तृणावर्त्त बघूरो या कूं उड़ाय के आकाश में बड़ी विपद् में लेगयो फिर आकाश तें शिलाके ऊपर गिर्यो वा जगे भी श्रीहरिनेंई या की रक्षा कीनी ॥ १४ ॥

और अबहीं की बात है देखो ये बालक दोनों वृक्षन के मध्य में प्राप्त होय के भी जो मर्यो नहीं । ये बालक अथवा और भी कोई बालक जो उन वृक्षन के नीचे आय जातो तब कैसें होती । तासों या बड़े भारी विघ्न से हूं अपने लोगों कों अच्युत भगवान ने रक्षा करी ॥ १५ ॥

जब ताईं कोई उत्पात सों आयबे वारो अरिष्ट हम सबन को कछू नुकसान नहीं करे तबताईं हम सब यहां सूं अपने बाल बच्चान कों साथ में लेकर कें और जगे चले जायेंगे तो ठीक होयगो ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

पशव्यं पशुभ्यो हितम् नवानि काननान्यवान्तराणि विद्यन्ते यस्मिंस्तत् ॥ १७—१८ ॥

एकधियो विप्रतिपत्तिरहिताः व्रजान् शकटव्यूहान् रूढाः शकटादिष्वारोपिताः परिच्छदा येस्ते ॥ १९ ॥

यत्ताः कृतप्रयत्नाः ॥ २०—२१ ॥

* इसमधिकपाठो दृश्यते विजयध्वजतीर्थीये ।

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ।
तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ २१ ॥
गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः ।
कृष्णलीला जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥ २२ ॥
तथा यशोदारोहिण्यावेकं शकटमास्थिते ।
रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ २३ ॥
वृन्दावनं सम्प्रविश्य सर्वकालसुखावहम् ।
तत्र चक्रुर्व्रजावासं शकटैरर्द्धचन्द्रवत् ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नूत्नैः कुचगतैः कुङ्कुमैः कान्तिर्यासां ताः नूत्नेषु कुचेषु यत्कुङ्कुमं तेन कान्तिर्यासामिति वा ॥ २२—२३ ॥

व्रजावासं गोकुलवसतिस्थानम् ॥ २४—२५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, "नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत्" इति नीतिः । तत्राह वनमिति । अस्तीति शेषः वृन्दायाः पाद्मकार्तिकमाहात्म्योक्तरीत्या श्रीभगवत्प्रेयसीत्वं प्राप्ताया वनमिति सर्वोपद्रवराहित्यं सकलसद्गुणमयत्वं सूचितम्. तदेवाभिव्यञ्जयति— पशव्यमित्यादिना । आरोग्यादिप्रदजलतृणादित्वात् पशुभ्यो हितं नवकाननमिति वृहद्वनस्य जीर्णकाननत्वं च सूचयति तत्र चिरकालं गवादिसम्मर्द्दाच्छिद्यमाननवाङ्कुरादित्वात् तथा वृन्दावनस्य पूर्वव्रजवासत्वं सूचयति द्वयोरनादिकालत्वेऽपि तस्मिन्नधस्यगिर्देशेन तदुच्छिन्नचरत्वावगमात् गोपादीनां सेव्यमिति तत्र दुष्टजन्त्वाद्यभयं दर्शितं पुण्या पवाद्रयस्तृणानि वीरुधश्च यत्र अदन्तत्वमार्षं हलन्ताद्वेति टापा वीरुधाशब्द एव वा सर्वमपि यत्र पुण्यमित्यर्थः । पुण्यत्वेन प्रसिद्धानामेव तत्र स्थितेः कारस्कराद्यपुण्यद्रुमादीनां कचित् स्थितत्वे वा तज्जन्मत्वेन पुण्यत्वसिद्धेः अत्र विशेषः श्रीहरिवंशे श्रीरामं प्रति श्रीकृष्णवाक्यं

"श्रूयते हि वनं रम्यं पर्याप्ततृणसंस्तरम् ।
नाम्ना वृन्दावनं नाम स्वादुवृक्षफलोदकम् ॥
अझिल्लिकण्टकवनं सर्वैर्गुणगणैर्युतम् ।
कदम्बपादपप्रायं यमुनातीरसंस्थितम् ॥
स्निग्धशीतानिलवनं सर्वर्तुनिलयं शुभम् ।
गोपीनां सुखसञ्चारं चारुचित्रवनान्तरम् ॥
तत्र गोवर्द्धनो नाम नातिदूरे गिरिर्महान् ।
भ्राजते दीर्घशिखरो नन्दनस्येव मन्दरः ॥
मध्ये चास्य महाशाखो न्यग्रोधो योजनोच्छ्रितः ॥
भाण्डीरो नाम शुशुभे नीलमेघ इवाम्बरे ।
तत्र गोवर्द्धनं चैव भाण्डीरं च वनस्पतिम् ॥
कालिन्दीं च नदीं रम्यां द्रक्ष्यावश्च यतः सुखम्" ।

इति ॥ १७ ॥

अत्र नातिदूर इति नातिप्रान्ते न च मध्ये किन्तु
देश एवेत्यर्थः "अहो वृन्दावनं रम्यं यत्र गोवर्द्धनो गिरिः
स्कान्दात् । अत्रैव तत्रेति द्विरुक्तत्वात् पुरतस्तस्यैव
त्वाच्च यत्तु भाण्डीरस्य मध्यस्थितत्वमुक्तं तत्रेदं प्रति
खलु वृन्दावनसीमस्थाङ्कक्रीडनकुट्टिमात्तुत्तरस्यां योजन
यमुनादक्षिणतीरे सम्प्रति च भाण्डीरतया लोकप्रसिद्धां देश
मपि शाखया प्रसाधयिष्यमाणस्तथा योजनविस्तारत
पयिष्यमाणश्च प्रसिद्ध्यतीति योजनत्रये लब्धे तत्परस्य
द्वयस्य मिश्रणतया वृन्दावनस्य पञ्चयोजनप्रमितत्वमेव मि
तथाचोक्तं वृन्दावनमुद्दिश्य वृहद्गौतमीये स्वयं भगवता-

"पञ्चयोजनमेवास्ति वनं मे देहरूपकम् ।
कालिन्दीयं सुषुम्णाख्या परमामृतवाहिनी" ॥

अत्र यत्खलु सुषुम्णारूपकेण यमुनाया वृन्दाव
वाहित्वं दर्शितं तच्छ्रीहरिवंशे चान्यत्र व्यज्यते सीमान्त
न्तीति तस्याविशेषणेन तदेवं स्थिते भाण्डीरस्य
र्वोच्छ्राये च योजनप्रमितत्वेन यमुनातीरस्थत्वेन च प
तीरेऽपि दीर्घाभिः शाखाभिर्व्याप्तिर्लभ्यते ततः परतो
वनस्येति यत्तु पुण्याद्रितृणवीरुधमिति "नद्योद्रयः खगमृ
यावल्लोकौरिति च योजनपञ्चकादप्याधिक्यं लभ्यते तत्
तीरस्य गङ्गात्ववत् तद्बहिः स्थितकतिपयगोचारणभूमे
न्तःपातविवक्षयागम्यं यत एव पूर्वरीत्या गोवर्द्धनादि
नामारभ्य वृन्दावनस्य सार्द्धद्वययोजनमात्र व्याप्त्या गोव
तत्पार्श्वस्थिततायामपि यन्नन्दनन्दनस्येव मन्दरः इति प्रो
सङ्गच्छते यद्वा आदिवाराहादौ कालियह्रदादिकतिपयती
वनकरणोपादेयतया वर्णितत्वात् संक्षिप्तमिव तत्प्रतीय
तदधिदैवत श्रीगोविन्ददेवाधिष्ठानत्वेन मुख्यत्वविवक्षया
धिष्ठानत्वेन मथुरापुर्यां इवेति तदेतन्मत एव खादिरका
दीनां पृथक्त्वं स्यात् न तु प्राङ्मते इति ज्ञेयं तत
यस्यामः यामेत्यर्थः । स्थानस्यास्य सोपद्रवत्वात् काल
शोभनत्वादिति भावः । व्यतिरेकेण द्रढयति गाचिरम
मित्यर्थः । यदि भवतां मद्वचो रोचत इति विनयेन
एकस्मिन् श्रीकृष्ण एव धीर्येषां अत एव विप्रतिप

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

धीरत्वात् साध्वित्यादि इतस्ततः स्थितानेक व्रजवर्त्तिगवादीनेवात्र मेलयित्वा रूढाः शाकटान्यारूढाः परिच्छदा एयान्ते ॥ १९ ॥

रूढपरिच्छदत्वमेव विवृण्वन् यानप्रकारमाह—वृद्धानिति युग्मकेन । हे राजन्निति तेषां श्रीकृष्णप्रेमार्त्तिं निगमयति ॥ २०—२१ ॥

अत्रैव विशेषमाह—गोप्य इति द्वाभ्याम् । रूढा आरूढाः रथाः तत्प्रायाः शकटभेदा याभिस्ताः निष्कायां स्त्रीभूषगोपु मुख्यत्वात्तैरन्यान्यपि ज्ञेयानि नूत्नेत्यत्र तेषां प्रथमार्थस्तु समीचीनः सर्वैरेव व्रजजनैस्तद्गुणगानस्य प्रसिद्धत्वात् कृष्णरामाभ्यां सह तयोर्जनकर्तृकायाः कथायाः श्रवणोत्सुके तयोरेव कर्त्तृभूतयोर्वा ॥ २२—२३ ॥

समिति सम्यक् सुखेन "मार्गं ददौ सिन्धुरिव श्रियःपतेः" इतिवत् किं वा मिथो वद्धपङ्क्तीकृतमहाशकटवृन्दैर्यमुनोत्तरणादिपूर्वकं प्रविश्य उत्तरणस्थानं तु योजनपरिमितत्वात्कालियह्रदादुत्तरतो ज्ञेयं दक्षिणतो मथुरा नैकट्येन सङ्कटत्वापातात् अथवा कालियह्रदद्दक्षिणस्यां दिशि वक्ष्यमाणाद्भूजवासान्मथुरावृन्दवनं सन्धिर्वंसक्रीडनभक्तक्रीडनयोर्मध्यप्रदेश एव तत्स्यात् महाकाननत्वेन निर्जनत्वात् अर्द्धचन्द्रवदिति पश्चाद्भागे द्रव्यादिस्थानापेक्षया पुरतश्च गवादीनां सुखनिर्गमाय विस्तीर्णद्वारापेक्षया सदा सर्वत्र तथैवावाससन्निवेशोपपत्तेः तथा श्रीविष्णुपुराणे—

"स समावासितः सर्वो व्रजो वृन्दावने ततः ।
शकटीवाटपर्यन्तश्चन्द्रार्द्धाकारसंस्थितिः" ॥ इति

श्रीहरिवंशे—

"निवेशं विपुलं चक्रे गवां चैव हिताय च ।
शकटावर्त्तपर्यन्तश्चन्द्रार्द्धाकारसंस्थितम्" ॥ इति.

एवं तद्दिने शकटैरेव चक्रुः दिनान्तरे च. यथा श्रीहरिवंशे—

"कण्टकीभिः प्रवृद्धाभिस्तथा कण्टकिभिर्द्रुमैः ।
निखातोच्छ्रितशाखाभिरभिगुप्तं समन्ततः" ॥ इति

अत्र कण्टकीभिः कण्टयुक्ताभिर्वल्लीभिरित्यर्थः । आसां द्रुमाणां च जीवितमेव रोपणं ज्ञेयं शाखानां तु छिन्नानां तथाऽन्यो विशेषस्तत्रैव "मध्ये योजनविस्तारं तावद्विगुणमायतम्" इति तथा कालियहृदवर्णने "व्रजस्योत्तरतस्तस्य क्रोशमात्रे निगमये" इत्यादि उत्तरशब्दोऽत्र प्राय ईशानकोणवाची तस्य दक्षिणस्यां दिशि महापुण्यां मथुराया निवेशात् ईशानकोणस्य चोत्तरानुगतत्वात् अत एवादिवाराहेऽपि तत्स्थानमाहात्म्यम्—

"उत्तरे हरिदेवस्य दक्षिणे कालियस्य तु ।
अनयोर्द्वयोर्मध्ये मृतास्ते चापुनर्भवाः" ॥ इति

अत्र हरिदेवो गोवर्द्धनाधिष्ठाता कालियः कालियदमन इति ज्ञेयं मथुराया नातिदूरत्वेपीदं स्थानं निर्जनमेव पुर्याः पश्चाद्दिग्गतत्वात् महाघनवनत्वाच्च एवं कालियहृदस्य नैर्ऋतकोणे क्रोशान्तरे सट्टीकराख्यं प्रदेशमन्तर्भाव्यपदैर्घ्यं योजनद्वयं व्रजः स्यात् किं तु गोवर्द्धनमग्रे विधायेति ज्ञेयम् अन्यत्र हि द्वारायोग्यत्वं दक्षिणस्यां मथुराख्यमहानगरवासेन आग्नेय्यान्तेन यमुना च पूर्वस्यां यमुनायाम् ऐशान्यां कालियहृदेन गवादिप्रचारस्य मर्द्दीयत्वात् उत्तरस्यां वायव्यां पश्चिमस्यां च शीतवातानाद्यागमेन दुःखहेतुत्वात् अद्यापि मथुरादिदेशे ऐशान्यादिदिक्चतुष्टयादन्यत्रैव गोष्ठद्वारनिर्माणदर्शनाच्च—अतः—

"न नः पुरोजनपदा न ग्रामा न गृहा वयम् ।
वनौकसस्तात नित्यं वनशैलनिवासिनः" ॥

इत्युक्त्वा पुरोद्वाराग्रदेशस्थत्वात् श्रीगोवर्द्धनस्यैव पूजाविधानं वक्ष्यते तदेवं श्रीनन्दराजस्य मुख्यावासो नन्दीश्वरगिरिमभितो यः प्रसिद्धः स तु कालान्तरे जात इति ज्ञेयम् अत एव इतस्ततो व्रजतीति व्रजो निरुच्यते अत एव गोष्ठनन्दनिलयो वा गोरे इति लोकविख्यात्यागोष्ठनन्दनिलयगोकुलाख्यानि स्थानान्तराणि चात्रैव वृन्दावने दृश्यन्त इति दिक् तच्च वृन्दावनं भेदत्रयात्मकमेव श्रीकृष्णस्यापि परममनोहरमित्याह—वृन्देति । वृन्दावनमिति केवलवनस्य सौष्ठवं गोवर्द्धनमित्यादिना तत्रत्यविशेषाणाम् उत्तमेति वैकुण्ठाद्यपेक्षया ."अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी" इति प्राप्ततादृशमाहात्म्यमधुवनमहावनाद्यपेक्षया च अत एव माधव शब्दप्रयोगः सर्वलोकरमणहेतोरपि रामस्येत्यत्र किं वक्तव्यं तस्याप्यालम्बनरूपस्य सर्वसम्पत्तिदेव्याः पत्युरपीत्यर्थः । एवमाश्चर्येण प्रहर्षेण चाह हे नृपेति ॥ २४—२५ ॥

— —

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परिच्छदः क्रीडोपकरणम् ॥ १९ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क यास्यामः? इत्यत्राह—वनमिति । यत् वृन्दावनाख्यं वनं तत्रैव यास्यामः, कथम्भूतम् ? पशव्यं पशुभ्यो हितं नवानि काननानि पर्यन्तवनानि यस्मिन् गोपादीनां सेव्यं वासयोग्यं पुण्याः रमणीया अद्र्यादयो यस्मिन् ॥ १७ ॥

शकटान् युक्तप्रस्थानयोग्यान् कुरुत गोधनानि चाग्रतो यान्तु यदि मदुक्तं भवतां रोचते तर्हि त्वात्तदेवमिति शेषः ॥ १८ ॥

तर्हि गोधनानि यास्यन्ति तावदुपनन्दवचः श्रुत्वा गोपाः एकधियः विप्रतिपत्तिरहिताः व्रजान् शकटव्यूहान् समानीय रूढाः शकटेष्वारोपिताः परिच्छदाः उपकरणानि यैस्ते ययुः जग्मुः ॥ १९ ॥

तदेव प्रपञ्चयति—वृद्धानिति । हे राजन् ! वृद्धादीन् अनःसु शकटेषु आरोप्य सन्नद्धाः अस्त्राणि गृहीतानि शरासनानि धनूंषि यैस्तथाभूताः गोपाः गृहीतधनुष्काः शृङ्गाणि विषाणान्यापूर्य मुखमारुतैर्ध्वनयित्वा महता तूर्यघोषेण सह ययुः सहपुरोहिताः सगुरवः जग्मुरित्यर्थः ॥ २० ॥ २१ ॥

रूढा आरूढाः रथा याभिर्नूत्नैः कुचगतैः कुङ्कुमैः कान्तिर्यासां नूत्नेषु कुचेषु कुङ्कुमं तेन. कान्तिर्यासां वा निष्काः पदकाख्याः कण्ठेषु यासां स्निग्धकण्ठ्य इति पाठे मधुरस्वनाः प्रीताः कृष्णस्य लीला जगुः ॥ २२ ॥

एवं शकटमास्थिते आरुह्य स्थिते रामकृष्णाभ्यां सह रेजतुः ताभ्यां सहैकं शकटमास्थिते रेजतुरिति वान्वयः कर्णभूते तस्य श्रीकृष्णस्य कथायाः श्रवणे उत्सवः औत्सुक्यं ययोस्ते ॥ २३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अर्द्धचन्द्रवदर्द्धचन्द्रतुल्यसन्निवेशं व्रजावासं गोकुलस्थानं चक्रुः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पशव्यं पशुभ्यो हितं पुण्याद्रयः पुण्यवृक्षाः तृणानि वीरुधगुल्मानि यत्र तत्तथा तद्वीरुधशब्दोऽकारान्तोऽप्यस्ति "पर्वताद्रीनगावर्गौ" इति च ॥ १७ ॥

युङ्ध्वं योगं कुरुध्वम् ॥ १८ ॥

तदुपनन्दस्य वचनं एकधियः एकस्मिन्नर्थे नतबुद्धयः । रूढ-परिच्छदाः शकटाधिष्ठितभाण्डादिसाधनाः ॥ १९ ॥

अनस्सु शकटेषु ॥ २० ॥ २१ ॥

नृम्यस्तु कुचेषु कुङ्कुमादिकान्तिर्यासां तास्तथा । स्निग्धकण्ठयाः कण्ठगुणोपेताः ॥ २२ ॥ २३ ॥

अर्द्धचन्द्रवत् अर्धचन्द्राकारवत् ॥ २४—२६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुण्याद्रीति वृन्दावनस्य महाविस्तीर्णत्वं बोधयति ॥ १७-२३ ॥

नवेति श्रीहरिवंशरीत्या कालियह्रदाद्दक्षिणप्रायायां दिशि अष्टक्रोशी दीर्घः चतुष्क्रोशी विस्तीर्णो व्रजावास इति ध्येयम् ॥ २४—२५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्थलान्तरमन्विष्यास्य परित्याग उचित इति स्थलान्तरं सगुणं निर्दिशति—वनं वृन्दावनमिति । वृन्दा मधोः पुत्री तन्नाम्ना नूनं वनं वृन्दावनं स्त्रीप्राधान्यात् तत्र न दैत्य-सम्बन्धः भगवता पुनर्जालन्धरवधार्थं सा परिगृहीता अतो देवताधिष्ठानात् देवदैत्यानामनुरोध्यन्तस्स्थानम् अतस्तत्रोत्पात-शङ्काभावः तदाह-वृन्दावनं नामेति प्रसिद्धं तथा तत् नव-काननमिति न शीर्णवृक्षास्तत्र सन्ति नापि शृगालसर्पादीनां तत्र स्थितिः अतः सर्वेऽत्र गुणाः सर्वदोषाभावाश्चोक्ताः । किञ्च अलौकिकोऽपि तत्रत्यो गुणः समीचीन इति ज्ञायते यतः पशव्यां भवति पशूनां हितः ते ह्यरण्योपजीविनः अरण्य-पात्राः तेषां वर्द्धनम् अलौकिकप्रकारेणापि समीचीनमिति किञ्च तस्मिन् वने त्रिविधा भूमिरस्ति अतिगुप्ता अतिप्रकटा तृणादिगह्वरा च तदाह—गोपीनां गोपानां गवां च सेव्यमिति । अन्येषामपि नन्दपुरोहितप्रामाणिकानां गम्यमित्याह—पुण्याद्रि-तृणावीरुधमिति । पुण्योऽद्रिर्गोवर्द्धनः तृणानि वर्हिः वीरुधः सोमः करीराणि वा अतः तामसानां राजसानां सात्विकानां च हितकारि तत्स्थानमित्युक्तम् ॥ १७ ॥

एवं स्थानप्रशंसायां सर्वे गोपाला आहुः—तत्रत्रायैव यास्याम इति तस्मात् कारणात् यदि वृन्दावनं तादृशं ततो-द्यैव तत्र यास्यामः एवं सर्वेषां सङ्कल्पे प्रधानभूता उपनन्द इय आहुः, शकटान् युंक्त चिरं मेति शकटानां बलीवर्दैः योजनं साधनं विलम्बनिषेध उत्पातभयशङ्कया ॥ १८ ॥

एवं भयसाधनयोर्निर्देशे यत्कृतवन्तस्तदाह—तच्छ्रुत्वेति । तेषां न वैमत्यं यतो गोपालस्तुल्याः तादृशोऽर्थः स्वस्याप्यभीष्ट इति मन्त्रवाक्यप्रशंसा गच्छन्त एव वदन्तीति ते सर्वे अवान्तरभिन्नभिन्नप्रजाधिपतयः स्वस्य यत्र यत्र तथा गावः स्थितास्तान् समुदायेनैव वत्सगोविभाग सम्यगायुज्य योजयित्वा अग्रे प्रस्थाप्य शकटेष्वारोपितोपकर सर्व एव ततो ययुः ॥ १९ ॥

गताश्चतुर्विधा इति ज्ञापयितुं तमोरजःसत्त्वनिर्गुणा पृथक् पृथक् चतुर्भिः श्लोकैराह—तत्र प्रथममाह; वृद्धान् बालान् स्त्रिय इति अत्यन्तं प्राकृताः वृद्धा बालाः स्त्रि राजन्निति सम्बोधनं कदाचित् तीर्थयात्राद्यर्थं सकुटुम्ब प्रस्थाने त्वदीयानामपि तथा प्रस्थितिस्तवानुभवसिद्धेति नाय देशान्तरनिवासार्थमाज्ञप्तानां त्वदीयानां यथा सर्वोपकरणानि च शकटेष्वारोप्य गोपाः सर्वे पदातयः बद्धकवचाः आत्तशरासनाः गृहीतधनुषः तामसत्वा स्वेव सम्बन्धः ॥ २० ॥

गोधनानि गावः पुरस्कृत्य अग्रे नीत्वा निर्भयाः शृङ्ग पूर्वं ते तु शृङ्गवादिन एव सर्वत इति सकृदेव महान् प्रभूणां निर्गमनमाह—तूर्यघोषेणेति । पुरोहिता ब्राह्मणा याजकाः ॥ २१ ॥

गोपिकास्तु भगवद्भोग्याः सात्त्विक्यो भिन्नतयैव गोप्य इति रथास्तूत्तमाः अश्वयोजिताः वृषभयोजिताः वा कुचकुङ्कुमकान्तयो यासां वयःसाधनशोभा भोग्या उक्ता वत एवेति ज्ञापयितुं तद्गुणानेव गायन्त्यो निर्गता कृष्णलीलामिति । एकवचनेन स्वोपयोगिन्येव लीला कृष्णपदेन च न केवलं निरोधपरा किन्त्वानन्दमयीति इति मनस्तोषः निष्ककण्ठ्य इति साभरणाः सुवास देहपरिष्कार उक्तः गुणगानादेव वाक्परिष्कारोऽपि मेव रथाः भगवांस्तु तास्वेव प्रतिष्ठितो गच्छति ॥ २२ ॥

यशोदा रोहिण्योर्भगवत्सम्बन्धात् गुणातीतयोः गमनमाह—तथेति । शकटो मध्यस्थितः अनो निकृष्टं रथ तथेति सौन्दर्यं गुणगानं चातिदिष्टं स्थानं यशोदायाः यांश्च प्रधानभूत इति सार्द्धद्वयवार्षिको भगवान् अनो क्रोडे स्थितः तथा रामोऽपि कृष्णरामाभ्यां सहिते कृत्वा विरेजतुः गोपिकानां निकटे तयोर्गमनमाह, तत्क णोत्सुके इति नानालीलानुरक्तस्तयोः सूचिता ॥ २३ ॥

न केवलं तत्र गताः किन्तु तत्र प्रतिष्ठिता इत्याह— वनमिति । वृन्दावनभूमिस्तस्मिन् कल्पे यमुनोत्तरभागे श्च अक्रूरस्थाने तदुत्तरणमल्पप्रवाहा च यमुना तत्रागाधाः नन्दस्थानं च तत्रैव अस्मिन् कल्पेतु ते स्तत्तदधिष्ठातृदेवताधिष्ठिताः चिरकालिततया पतिता काप्यनुपपत्तिः उत्तरणपक्षेऽप्यल्पप्रवाहेति नोत्तरणं

**वृन्दावनं गोवर्द्धनं यमुनापुलिनानि च ।**
**वीक्ष्यासीदुत्तमा प्रीति राममाधवयोर्नृप ! ॥ २५ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वर्षाकाल एव यमुनाया महत्त्वमिति एते बृहद्वनं परित्यज्य वृन्दावनं सम्यक् प्रविश्य शकटैरर्द्धचन्द्रवत् व्रजावासं चक्रुः वेष्टनस्थानीया गृहाः मध्ये गवां स्थानं प्रथममेवैतत् पश्चा-दपा सुखमेव स्थितः अर्द्धचन्द्राकारे बहिर्द्वारं सर्वग्राह्यं भवति गृहाणां निर्माणाः तत्र नापेक्ष्यन्ते यतो वनमेव सर्वकालं सुखमावहति शकटैरिति रथानां क्रीडार्थं स्थापनं अनांसि काष्ठाद्यानयनार्थानि महादेवो हि पशुपतिस्तच्चिह्नमर्द्धचन्द्रोतः प्रतिष्ठितो भवतीति ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

न चास्मत्प्राचीनराजधानीं नन्दीश्वरो गन्तुं शक्यः यन्द्र-यान्नन्दीश्वरात्पलाय्यात्र महावने वयमवसाम तस्यारिष्टस्य सम्प्रत्यपि तत्रैव स्थितेः नच व्रजभूमेरन्यत्र ह्यासा सम्भ-वेदरोचकत्वादेव तस्मान्नन्दीश्वरमहावनयोर्मध्यवर्तिस्थानमेवा-वासार्थं युज्यत इति विचार्याह—वनमिति । पश्यव्यं पशुभ्यो हितं नवानि काननान्यवान्तराणि यत्र तत् ॥ १७ ॥

तत्तस्मात्तत्र वृन्दावने भवतां भवद्भ्यः शस्ताः ॥ १८ ॥

व्रजान् व्रजवर्तिगवादीन् एकत्र मेलयित्वा रूढाः शकटा-न्यारूढाः परिच्छदा येषां ते ॥ १९ ॥

यत्ताः प्रयत्नवन्तः ॥ २०—२२ ॥

एकं शकटमिति द्वयोरेव पुत्रद्वयविरहसहनाशक्तेः ॥ २३ ॥

अर्द्धचन्द्रवादिति पश्चाद्भागं प्रति स्वद्रव्यस्थापनार्थम् अग्रभागे विस्तीर्णो गवादीनां सुखनिर्गमार्थं च "शकटीवाटपर्यन्तश्चन्द्रा-र्धाकारसंस्थितः" इति श्रीविष्णुपुराणे च एवं तद्दिने शकटैरेव चक्रुः दिगन्तरे तु यथा श्रीहरिवंशे—

"कण्टकीभिः प्रवृद्धाभिस्तथा कण्टकिभिर्द्रुमैः ।
निर्यातोच्छिन्नशाखाभिरभिगुप्तं समन्ततः" ॥

इति ॥ २४–२५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थानमपि रामकृष्णयोः गोपादीनां च प्रियमाह—वनमिति । पशव्यं पशुभ्यो हितम् नवानि वृक्षतृणादियुक्तानि काननानि अवान्तरवनानि विद्यन्ते यस्मिन् तत् ॥ १७ ॥

शकटान् युङ्क्त गमनार्हान् कुरुत ॥ १८ ॥

व्रजान् शकटव्यूहान् रूढाः शकटारोपिताः परिच्छदा येषां ते ॥ १९–२१ ॥

तदा गोप्यः रूढा आरूढा रथा याभिस्ताः नूत्नैः कुच-कुङ्कुमैः कान्तिर्यासां ताः कृष्णलीलां जगुः अनेन तासां श्रीकृष्णे स्नेहातिशयं सूचितः ॥ २२—२३ ॥

व्रजावासं गोकुलवसतिं स्थानं चक्रुः ॥ २४—२५ ॥

---

### भाषा टीका ।

तौ अब तौ यही विचार होयबो ठीक है, कि—पशुन को हितकारी और नये जामे बाग बगीचा लग रहे ऐसो वृन्दा-वन नामवारो एक बन है, सो बन गोप गोपी और गऊन के रहबे योग्य है, काहे सों, कि—वा जगे पुण्यपर्वत श्रीगोवर्द्धन है सुन्दर घास पात और लतावितान हैं ॥ १७ ॥

तासों वा जगै याई समैं अब हम सब चलेंगे सो अब देर करबे को कछु काम नहीं है जल्दी सों गाढा जोड देओ । और जो तुम सबन को रुचै तौ अब विलंब नहीं करकें गायन कूं अगारी चलने देओ ॥ १८ ॥

बस इतनी बात गोपन नें सुनी और एका एकी मगरे बोले "भले जू भले भौतई अच्छी बात है" ऐसें कहकें अपने २ खिरकन संजायकें अपने २ वासन कूसन गाढान पै धर धरय कें चलत भये ॥ १९ ॥

हे राजन् ! वृद्धन कों बालकन कूं स्त्रीन कों और सब घर की चीज वसतुन कों गाढान पै चढायकें सब गोप लोग अपने २ हाथन में धनुष बाण लेले करकें ॥ २० ॥

गायन कों बैल बछरान कों आगें करकें चारों ओर सों अपने २ भैंस के सींगन कों और तुरही को बजाय २ अपने अपने पुरोहितन कों साथ में ले करकें बडो घोष करत जात भये ॥ २१ ॥

और गोपी लोगन को कहा बर्णन करें सुंदर रथन में बैठी हैं, नवीन केशर कुचन पै लेप लीनी हैं, सुन्दर वस्त्रन कों पहिरे कंठ में धुक धुकी और प्रसन्न होय कर श्रीकृष्ण की लीलान कों गावती जांय हैं ॥ २२ ॥

ताई रीति सों श्रीयशोदा और श्रीरोहिणीजी एक गाढा पै बैठी हैं और अपनी २ गोद में कृष्ण और बलदेव कों लेलीने हैं और उन दोऊन की बातन के सुनबे की चाहना वारी दोनोंई बडी शोभा कूं प्राप्त होत भई हैं ॥ २३ ॥

सब गोप लोग सर्व काल सुखदाई वृन्दावन में जायकें अर्द्धचन्द्राकार सगरे गाढान कों लगायकें अपने व्रजको निवास बनावत भये ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुकालेन तद्योग्यकालेन ॥ २६ ॥

एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ।
कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः ॥ २६ ॥
अविदूरे व्रजभुवः सह गोपालदारकैः ।
चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥ २७ ॥
क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ।
क्वचित्पादैः किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः ॥ २८ ॥
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ।
अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥ २९ ॥
कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ।
वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥ ३० ॥
तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ।
दर्शयन् बलदेवाय शनैर्मुग्ध इवासदत् ॥ ३१ ॥
गृहीत्वाऽपरपादाभ्यां सह लाङ्गूलमच्युतः ।
भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ।
सकपित्थैर्महाकायः पात्यमानैः पपात ह ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कौमारलीलां निरूपयति—अविदूर इत्यादिना ॥ २७ ॥

क्षेपणैर्बिल्वामलकादिभिः क्षिपतो दूरे चालयतः किङ्किणीयुक्तैः पादैः क्षिपतस्ताडयतः वत्सपाला एव छिन्नाः कम्बलादिपिहिताः वृषरूपमनुकुर्वन्ति, तैः सह स्वयमपि तथैव वृषायमाणौ नर्दन्तौ तदनुकारिशब्दान्कुर्वन्तौ युयुधाते इत्यर्थः ॥ २८ ॥

रुतैः शब्दैः जन्तून् हंसमयूरादीन् ॥ २९—३० ॥

मुग्ध इवाजानन्निवाऽसदत्समीपमागमत् ॥ ३१ ॥

अपरपादाभ्यां सह लाङ्गूलं यथा भवति तथा गृहीत्वा ॥ ३२—३३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत्र श्रीवृहद्वनलीलायां प्रसिद्ध्या वयोयोग्यतादिना च क्रमोऽयं लक्ष्यते पूतनावधः शकटभञ्जनं नामकरणं रिङ्गणम् अघृष्टजानुरिङ्गणं तृणावर्तवधः प्रथमविश्वदर्शनं गोपीभिः स्तोभित इत्यादि क्रीणीहि भो इत्यादिवत्सपुच्छग्रहणं मृत्तिकाभक्षणं द्वितीयविश्वदर्शनं दधिपयश्चौर्यम् उलूखलबन्धः सरित्तीरगतमित्यादिवृन्दावनप्रवेश इति. अथ श्रीवृन्दावनलीलामुपक्रमते; एवं पूर्वोक्तप्रकारेण कलवाक्यैर्मनोहरभाषितैश्च प्रीतिमानन्दं यच्छन्तौ कलवाक्याविति पाठे स एवार्थः। स्वकालेनेति। कौमारमध्य एवेत्यर्थः। "कालेनाल्पेन राजर्षे रामः कृष्णश्च गोकुले । अघृष्टजानुभिः पद्भिर्विचक्रमतुरोजसा।" इत्युक्त्वाच्चतुर्थस्यापि वर्षस्य पि वर्षस्यान्ते ऽवश्यं कौमारपरित्यागो लभ्यते पञ्चमस्य तु साधारण्याद्वृन्दावने च कौमारलीलावत्सहरणमस्यन्धिवर्षस्यान्तर्भावात्प्रायः सार्द्धमेकवर्षं भवेत् "एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे" इति तदनन्तरमुक्त्वा ततश्च पौगण्डवयःश्रितौ व्रज इति हि वक्ष्यते तस्मात् तत्रैवमूह्यं वृहद्वने मासत्रयाधिकवर्षद्वयं स्थित्वा तृतीये वृन्दावनमागत्य बाल्यलीलया मासान् कतिचिन्नीत्वा तदनन्तरं वत्सपालौ बभूवतुरिति अतो यत्तु श्रीहरिवंशे वृहद्वनक्रीडायामेवोक्तं

एवं तौ बाल्यमुत्तीर्णौ कृष्णसङ्कर्षणावुभौ ।
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ॥ इति

तच्च प्रौढत्वापेक्षया सप्तवर्षाविवेति मन्तव्यं विरोधान्तरकल्पभेदाविवक्षयेति केचित् ॥ २६ ॥

अविदूर इति नातिदूरे बाल्यात् न चातिनिकटे स्वच्छन्दविहारासिद्धेश्च किं तु व्रजस्थानादाह्वाना... प्रदेश इत्यर्थः। नानाविधावेणुवेत्रशृङ्गवीणाकन्दुकादयः क्रीडापरिच्छदाः साधनानि ययोस्तौ ॥ २७ ॥

तानेव दर्शयन् बाल्यक्रीडामाह द्वाभ्याम्। तत्र क्वाचिदिति सार्द्धं कस्मिंश्चित्काले देशे वा तत्तद्योग्ये वेणुवादनश्च वयोदेशयोर्बोधितः तत्प्रभृत्येव प्रवृत्तमिति ज्ञेयं क्षेपणैर्यन्त्रादिभिः बिल्वामलकादीन् दूरे प्रक्षिपतः किङ्किणीयुक्तैः पादैः नृत्यतः इति शेषः। स्वस्वपरिभाषादिभिः कृत्रिमगोवृषैः सह ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अविदूरेत्यर्द्धकम् । प्राकृतौ लौकिकबालकौ यथा तथैवेति निर्द्धारणविशेषेण बाल्यलीलानिष्ठोक्ता एवं वेणुवादनादिक्रीडया परिभ्रमणमेव मुख्यं प्रयोजनं वत्सचारणं तु तदुपकरणत्वेनेति बोधयति-तत्र वेषविलासविशेषाश्चोक्ताः श्रीविष्णुपुराणे—

बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ ।
गोपवेणुकृतातोद्यौ पत्रवाद्यकृतस्वनौ ॥
काकपक्षधरौ बालौ कुमाराविव पावकी ।
हसन्तौ च रमन्तौ च चेरतुस्तन्महद्वनम् ॥
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ तथा परैः ।
गोपबालैः समं वत्सांश्चारयन्तौ विचेरतुः ॥ इति

श्रीहरिवंशे च—

पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ।
शुशुभाते वनगतौ त्रिशीर्षाविव पन्नगौ ॥
मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ।
वनमालाकुलोरस्कौ द्रुमपोताविवोद्गतौ ॥
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ।
सशिक्यतुम्बकरकौ गोपवेणुप्रवादकौ ॥
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचित् क्वचित् ।
पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ ॥
एवं वत्सान् पालयन्तौ शोभमानौ महावनम् ।
चञ्चूर्यन्तौ रमन्तौ स्म किशोराविव चञ्चलौ ॥ इति

अत्र त्रिशीर्षाविवेति वेणीत्रययुतशिरस्कत्वात् एवं वत्सपालने प्रथमेऽहनि बालक्रीडा दृष्टा अन्यस्मिन्नपि प्रायस्तादृश्येवोह्या तत्रैव कदाचिद्विशेषमाह—कदाचिदित्यादिना यमुनातीर इति प्रायो वत्सक्रीडनकभक्तक्रीडनकयोः समीपे वर्त्तमानत्वात्पदैः प्रियतमैरित्यर्थः । तैः सहेति तादृशलीलासुखविघातकत्वेनातिद्वेष्यत्वं व्यञ्जितम् ॥ २९—३० ॥

वत्समध्ये वत्सरूपेण गमनं च भयं बलात् कंसप्रहितत्वं च बोधयति पूतनादिहननात् हरिः दुष्टानां प्राणहरणात् शिष्टानां च मनोहरणात् मुक्तिप्रदानेन तस्यापि सर्वदुःखहरणात् बलदेवाय दर्शयन् सङ्केतेन ज्ञापयन् इति कौतुकार्थम् ॥ ३१ ॥

गृहीत्वेति तैर्व्याख्यातं तत्र सहलाङ्गूलं यथा स्यात् तथा गृहीत्वा केन द्वारभूतेनेत्यपेक्षायामाह-अपरेति योज्यम । यद्वा, अपराभ्यां पादाभ्यां सहितं लाङ्गूलं तस्य गृहीत्वा भ्रामयित्वा तमिति पूर्वेणान्वयः । तदानीन्तनक्षेपणक्रीडनोपयोगिकपित्थफलपातनार्थं कपित्थाग्रे चिक्षेप अच्युत इति तं महाकायं भ्रमयतोऽपि निजस्थानाच्यवनात. स इति सार्द्धकं स दैत्यः महाकाय इति मरणे मायापगमाद्विजमहानरमदैत्यरूपाभिव्यक्तेः षड्विंशाध्याये कपित्थानि च लीलयेति वक्ष्यमाणत्वात् कपित्थफलैःसह इ निक्षेपे तादृशमहाकायस्यापि बालरूपनयैव महाकपित्थाग्रप्रक्षेपात् निरिमितस्य महाकायत्वाद्विना हेलया वधेन च आश्चर्यमिति सहसा दुर्भिनकंसज्ञानात् दुर्द्धर्षमारणाच्च तत्र विस्मयादर्शनं वीक्ष्य तद्वधेनामराणां च परमाह्लादमभूदित्याह—देवाश्चेति ॥ ३२—३३ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ २०—२७ ॥

क्षेपणैः ताडनसाधनैः ॥ २८—३८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नृप ! वीक्ष्य सञ्चरतोरस्थितयोर्वेति शेषः ॥ २५ ॥

कलान्यव्यक्तमधुराणि वाक्यानि ययोस्तौ रामकृष्णौ बालचेष्टितैर्व्रजौकसां प्रीतिमावहन्तौ स्वकालेन कौमारप्राप्तयोग्यकालेन वत्सपालौ बभूवतुः ॥ २६ ॥

अथ कौमारलीलां वर्णयति—अविदूर इत्यादिना यावत्समाप्ति । व्रजभुवः वृन्दावनस्थव्रजभूमेरविदूरे समीपे नानाविधाः क्रीडापरिच्छदाः क्रीडोपकरणानि ययोस्तौ वत्सान् चारयामासतुः ॥ २७ ॥

तदेव प्रपञ्चयति—वादयतः क्षिपतः इति चलटोर्द्विवचनम् क्षेपणैः बिल्वामलकादिभिः ताडनसाधनैर्गोपबालकान् क्षिपतः ताडयतः क्वचिच्च किङ्किणीयुक्तैः पदैश्च क्षिपतः क्वचित्कृत्रिमगोवृषैः जानुभ्यां हस्ताभ्यां च भुवि सञ्चरद्भिः कृष्णकम्बलादिना पिहिताङ्गैर्वृषानुकारिभिस्तथैव नर्दद्भिर्गोपैः सह स्वयमपि वृषायमाणौ तदनुकारिशब्दान् कुर्वाणौ मिथो युयुधाते युद्धं कुर्वाते इत्यर्थः ।तथा जन्तोः शब्दैर्जन्तून् हंसमयूरादीननुकृत्य यथा प्राकृतौ बालौ तद्वच्चेरतुः ॥ २८ ॥ २९ ॥

अथ वत्सासुरवधात्मकं चेष्टितमनुवर्णयति—कदाचिदित्यादिना । स्वकैर्वयस्यैः सह कृष्णबलयोः वत्सान् चारयतोस्तयोस्तौ हन्तुमिच्छुर्दैत्य आजगाम ॥ ३० ॥

तं दैत्यं वत्सरूपधरं वत्ससमूहान्तः प्रविष्टं वीक्ष्य ज्ञात्वा बलदेवाय दर्शयन् स्वयं शनैर्मुग्ध इव अनभिज्ञवत्तत्समीपं जगाम ॥ ३१ ॥

अपरपादाभ्यां सह लाङ्गूलं पुच्छं गृहीत्वा तत एव गतं जीवितं जीवनं यस्य तं कपित्थस्य वृक्षस्याग्रे प्राहिणोदुदक्षिपत् ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविदूरे समीपे ॥ २७ ॥

क्षेपणैः अश्मयन्त्रैः पदैः पादैः कृत्रिमगोवृषैः मृदारुकृतगोवृषः ॥ २८ ॥

वृषायमाणौ वृषवद्धर्षमाणौ नर्दन्तौ वृषभशब्दं कुर्वन्तौ अनुकृत्य विडम्ब्य ॥ २९—३१ ॥

अपरपादाभ्यां प्राहिणोत् कपित्थैः कपित्थशाखायुक्तफलैः ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कलवाक्यैर्मनोहरभाषिभिश्च ॥ २६—२७ ॥

क्षेपणैर्यन्त्रविशेषैः लाष्ट्रादिकं क्षिपतः किङ्किणीयुक्तैः पादैः नृत्यत इति शेषः । कृत्रिमगोवृषैः स्वस्वयुथीकृतैः ॥२८-३७॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्र भगवतश्चरित्रमाह—सामान्यतः वृन्दावनमिति । वृन्दावनं राजसं गोवर्द्धनः सात्त्विकः यमुनापुलिनानि च दृष्ट्वा भगवत उत्तमा प्रीतिरासीत् अतः प्रीतः पूर्वोक्तप्रकारेण लीलां कृतवानित्युक्तं भवति नृपेति सम्बोधनं दर्शनेन प्रीतिः राजलीलेति ज्ञापयितुम् ॥ २५ ॥

एवं सामान्यलीलामुक्त्वा लौकिकनैरपेक्ष्येण विशेषतो बाललीलां वक्तुं वत्सचारणलीलामुपक्रमते—एवमिति यावदध्यायसमाप्ति । पूर्वप्रकारेण व्रजौकसां व्रजमध्यस्थितानां प्रीतिं यच्छन्तावेव स्वकालेनाधिदैविकेन सेवार्थमागतेन कृत्वा वत्सपालनयोग्यौ वर्षत्रयाधिकौ जातौ देशकालाद्युपद्रवाभावाय बालचेष्टितौ कलवाक्याविति पदद्वयं मनसा तु प्रीतिं भावयत्येव कायेन वाचा च भावयतीति बालयोरिव चेष्टितानि ययोः कलमव्यक्तमधुरं वाक्यं ययोः व्रजौकसां प्रीतेरनुवृत्तिः पूर्वकृतनिरोधनिवृत्त्यभावाय भगवति योग्यताफलयोः पृथङ्निरूपणाभावात् वत्सपालकावेव सञ्जाताविस्युक्तम् ॥ २६ ॥

तयोर्वत्सपालने क्रीडामाह—त्रिभिः । अत्रापि क्रीडा त्रिरूपा तत्र प्रथमं व्रजभुवः अविदूरे यत्र स्थितैर्व्रजो दृश्यते व्रजस्थाश्च पश्यन्ति व्रजभूम्यपेक्षया साधनतृणयुक्ता विलक्षणेति ज्ञापयितुं व्रजभुव इत्युक्तं गोपालानां दारकाः समानवयस्त्वात् कृतार्थीकर्तुं बहुभिः सह क्रीडोत्तमा भवतीति क्रीडासाधनसहितावेव वत्सान् चारयामासतुः भ्रमरचक्रसूक्ष्मदण्डकाष्ठखड्गकृत्रिमरथवादित्राकर्षणादीनि क्रीडापरिच्छदानि तानि गृहीत्वैवायान्ति यान्ति गच्छन्ति च अनेन सामान्यतः क्रीडा निरूपिता वत्सपालनं तु मुख्यं सूक्ष्मगोपालानां महभावश्च उभयोरत्र निरोधो वक्तव्यः नन्दसहचरितानां निरोधरूपणाय ॥ २७ ॥

साधनैश्च क्रीडां प्रथमतः आह—प्रथमं क्वचिद्वेणून् वादयतः वेणुर्बहुच्छिद्रवंशस्तेषामवान्तरभेदा बहव इति । बहुवचनं शिरोव्यापारा अनेनोपलक्षिताः क्षेपणाः रज्ज्वादिनिर्मिताः मध्ये लोष्टादिस्थापयित्वा भ्रामयित्वा लोष्टादिकं दूरे क्षिपन्ति तज्जातीया अपि बहुविधा एवमुभावपि क्षिपतः लोष्टादीनि दूरे प्रक्षिपतो मत्प्रक्षिप्तमेतावत् दूरे गच्छतीति ज्ञापनार्थं क्वचिदिति यत्रान्योपद्रवशङ्का न भवति हस्तयोः क्रीडा निरूपिता क्वचित्पादैः किङ्किणीभिः सहितैर्नृत्यतः क्षिपतो वा लोष्टादीनि कदाचिन्मृदादिनिर्मिता योगो वृषाः उभयतश्चक्रयुक्ताः तानारुह्य व्रजतः गोपाला वा कृत्रिमवृषा भवन्ति तैः सह युद्धादिकं वा कुरुतस्तैर्वा अन्यान् क्षिपन्ति तमारोपयित्वा क्वचित्पातयन्ति एवं शिरोबाहुपादमध्यस्थानैश्चतुर्विधा लीला निरूपिता ॥ २८ ॥

सम्पूर्णेन लीलामाह—वृषायमाणाविति । स्वयमेव वृषरूपौ भवतः कृत्रिमप्रकारेण तथैव च नर्दन्तौ शब्दं कुरुतः परस्परमन्योन्यं च युयुधाते कायवाङ्मनोलीलाः प्रदर्शिताः युद्धं कायिकमपि मनोधर्मप्राधान्यात् मानसम् एवं स्वतोलीलां निरूप्यानुकारेणापि स्वतो लीलामाह—अनुकृत्येति । जन्तून् मण्डूकादीन् मयूरादींश्च अनुकृत्य तत्तद्रूपौ भूत्वा तैस्तैः सह अनुकारेण तेषामपि भ्रममुत्पाद्य सर्वा एव लीलाः कृतवन्तौ तत्र स्वैश्वर्यभावनया तथा कृतवन्ताविति शङ्कां वारयति प्राकृतौ यथेति । यथा प्राकृतौ लौकिकसाधनैरेव तत्तदनुकारं कुरुतः तथा भगवान् सर्वविधबालकानां मनोनुरञ्जनार्थं ते… दोषदूरीकरणार्थं निरोधार्थं च तथा लीलां कृतवान् लीला… द्विविधा इत्युभयोस्तथा करणम् ॥ २९ ॥

एवं भगवतो लीलामुक्त्वा पाल्यानां वत्सानां दोष… वत्सासुरं मारितवानित्युपाख्यानमारभते—कदाचिदिति पञ्चभिः । यदा वत्सानां निरोधो भगवता विचारितः स एव काल… यमुनातीरे वत्सांश्चारयतोस्तयोः सतोः दैत्यः आगमदिति सम्बन्ध… प्राकृता एव हि सदोषांश्चारयन्ति निरोधार्थं प्रवृत्तस्तु निर्दो… षानेव पालयतीति ज्ञापनार्थं तेषां वत्सानां मिलितानां यो… मासुरो भावः स एकीभूतो वत्सासुर इति तद्वधो निरूप्यते… यमुनातीरे इति तेषां शुद्धत्वे जलं हेतुः दैत्यागमने तु … भगिनीत्वं हेतुरिति स्वकैर्वयस्यैः सहेति येऽन्तः स्थिता बाला… निष्कासिता इति अत एव भगवद्भावमापन्नाः ते हि सर्वे… समानवयसो भवन्ति । अतो भक्तकालकोडीकृताः सवयसो… भवन्तीति कृष्णबलयोश्चारयतोः सतोरिति पूर्वमेव सम्बन्ध… जिघांसुर्घातकः क्रूरो दैत्यः पाल्यमानदोषरूपत्वादनामा आग… मत् क्रीडास्थाने समागतः ॥ ३० ॥

तस्य ग्रहणमाह—तं वत्सरूपिणमिति । स प्रसिद्धो दोषात्मा वत्सस्यैव रूपमस्यास्तीति वत्सरूपी तादृशोऽपि यदि पृथक् तिष्ठेत्तदा केनचित् ज्ञायेतापि परं वत्सयूथगतः वत्स… समूहं वत्ससमानाकृतिरूपो भूत्वा प्रविष्टः मारणं तु तेषां… मुद्धारार्थं यतोऽयं सर्वदुःखहर्ता बलभद्रादेरप्यन्यधर्मसम्बन्ध… द्वाच्यतानिराकरणाय बलदेवाय प्रदर्शितवान् अयमसुरो वत्स… इति प्रदर्शितत्वादेव दैत्यस्वरूपमाविश्चकार नो चेद्वाच्यतां… वा सम्पादयेत् तथाभावे बलभद्रेणाङ्गीकृते शनैर्यथा भगव… त्कृत्या दैत्यत्वोद्बोधो न भवति तथा मुग्ध इव अजानन्निव… वत्सान्तरं गृह्णन् क्रीडार्थमयमपि गृहीतस्तदाह—मुग्ध इवासन्न… विति । अवसादं प्रापितवानित्यर्थः । ग्रहणमात्रेणैव निष्पीडित… एवावसन्नो जातः विशीर्णो वा गतिसाम्यात् धृतो वा सम्यग्… ग्रहणपर्यन्तमज्ञानाय मुग्धभावः ॥ ३१ ॥

ततो गृहीत्वा मारितवानित्याह—गृहीत्वेति । महादैत्यस्य… पुच्छभ्रामणादिनापराधकरणाभावाय लाङ्गूलमपरपादाभ्यां च… गृहीत्वा स्वस्य मारणादिशङ्का तु नास्त्येव यतोयमच्युतः वृक्ष… स्याग्रे भ्रामयित्वा कपित्थफलपातनार्थं प्राहिणोत् एका क्रिया… भगवतो नैकक्रियां सम्पादयतीति कपित्थपातनार्थं वृक्षोपरि… पातनमसुक्त्यर्थं च न प्राणापगमो भगवद्धस्तसम्बन्धेनापि भूमौ… नापि वृक्षे अन्तरिक्ष एव प्राणापगमः अत एव गत जीवितमन्तरिक्ष… एव गतप्राणं प्राहिणोत् बालकैस्तु भ्रामणे प्रहरणे च तच्छरीरं… दृष्टमेव पश्चात्सफलं दर्शयत्याह—कपित्थैरिति । कपित्थैः फलैः… सह तेनैव पात्यमानैः स महाकायः पपात ह बालकैर्यातं दृष्ट… कपित्थफलं शाखा वा पततीति ॥ ३२ ॥

तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ।
देवाश्च परिसन्तुष्टा बभूवुः पुष्पवर्षिणः ॥ ३३ ॥
तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ।
सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालेन स्वोचितसमयेन ॥ २६—२७ ॥

क्षेपणीडोरीयन्त्रैर्बिल्वामलकादिकं क्षिपतः दूरे चालयतः किङ्किणीयुक्तैः पादैः क्षिपतस्ताडयन्तः कृत्रिमगोवृषैः कम्बलादिविहितबालकैर्वृषाकारैः सह स्वयमपि तथैव वृषायमाणौ नर्दन्तौ तदनुकारिशब्दान् कुर्वाणौ युयुधाते जन्तून् हंसमयूरादीन् ॥ २८ ॥ २९ ॥

कृष्णबलयोरिति षष्ठी आर्षी ॥ ३० ॥

दर्शयन् भ्रूसंज्ञया बलदेवं ज्ञापयन् मुग्ध इव अजानन्निव आसाद्य निकटं प्राप ॥ ३१ ॥

अपराभ्यां पादाभ्यां सहितं लाङ्गूलं तस्य गृहीत्वा अच्युतः संसारसिन्धौ च्युतिं तस्य दूरीकुर्वन् कपित्थाग्रे इति तद्देहेनैव क्रीडोपयोगिकपित्थफलपातनार्थमिति भावः । गतं जीवितं यतस्तद्यथास्यात्तथा प्राहिणोत् स वत्सासुरः ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालेन कुमारलीलाकालेन ॥ २६ ॥

कौमारलीलामाह—क्वचिद्दूर इत्यादिना । नानाविधाः क्रीडायाः परिच्छदाः उपकरणानि यथोक्तौ ॥ २७ ॥

क्वचित् राममाधवौ वेणुं वादयतः क्वचित् क्षेपणैर्बिल्वादिभिः क्षिपतः ताडयतः वयस्यानिति शेषः । क्वचित् किङ्किणीभिरुपलक्षितैः पादैः क्षिपतः क्वचित् कृत्रिमगोवृषैः वृषानुकारिभिर्वयस्यैः सह ॥ २८ ॥

वृषायमाणौ नर्दन्तौ वृषवत् शब्दान् कुर्वन्तौ युयुधाते पुनः रुतैः शब्दैः जन्तून् हंसमयूरादीन् अनुकृत्य चेरतुः ॥ २९—३० ॥

आसदत् तत्समीपमागमत् ॥ ३१ ॥

अच्युतः स्वरूपतस्तु वत्सासुरोपि अच्युत एवातो नित्यशरीर इत्यर्थः । अपरपादाभ्यां सह लाङ्गूलं पुच्छं गृहीत्वा तदनन्तरं भ्रामयित्वा भ्रमणादेव गतं जीवितं जीवनं यस्य तं कपित्थाग्रे प्राहिणोत् उपर्यक्षिपदित्यर्थः । तदा मरणानन्तरं कपटापगमात् महाकायः सन् महता भारेण पात्यमानैः कपित्थैः सह पपात ॥ ३२ ॥

---

भाषाटीका ।

हे राजन् ! तहां जायकें वृन्दावन, गोवर्द्धन, और यमुना के पुलिन कों देखकें श्रीकृष्ण और बलदेवजी की बड़ी प्रीति होत भई ॥ २५ ॥

या प्रकार अपनी बाल चेष्टान सों और मधुर वाक्यन सों ब्रजवासीन कों प्रीति देत कछु काल पीछे बछरा चरायवे लायक दोऊ भैया होत भये ॥ २६ ॥

ॐ वत्सवाट चराय नमः ।

तब तौ ब्रज भूमि के समीप में नेक नेक से ग्वाल बालन कों साथ लेकें और नाना प्रकार की क्रीडान की सामग्री कों लेकें बछरान को दोऊ भैया चरावत भये ॥ २७ ॥

और बछरान् के चरावते समय में वाई समें दोऊ भैया वेणु बजावे हैं कभऊ गोफन सों आदलेके फलन कों फेंकें हैं कभऊ अपने श्रीचरणनमें नूपुरबांधके नाचिवे लगे हैं और कोईसमें ब्रजवासीन के छोरानकूं गौ बैल बनाय के उनके साथ आप भी वाईरीतसों खेले हैं ॥ २८ ॥

कबहुं आप दोऊ भैया बैल बनिके डांक देते हैं और परस्पर में युद्धकरवे लगे हैं और कभऊ मोर पपीहा सों आदिलेकें जन्तून के नाईं शब्द करे हैं और प्राकृत बालकन की नाईं विचरे हैं ॥ २९ ॥

ओं वत्सासुरभञ्जनाय नमः ।

कोई समें जमुनाजीके तीर पै बालकन सहित बछरान् कों चरावत भये इतने में कृष्णबलदेव के मारवे की इच्छासों एक दैत्य आवत भयो ॥ ३० ॥

और बछरा को रूपधरि के बछरान के समूह में चलो गयो तब श्रीकृष्ण चन्द्रने वाई समे श्रीबलदेवजी कूं दिखाय होले २ वाके पास में गये ॥ ३१ ॥

जायके वा दैत्य के पुच्छ सहित पिछिला पांव पकरि के खूब घुमाय कैथके वृक्षन के ऊपर फेंक देतभये, वाई समें वा दैत्य के प्राण निकस गयो और कैथके वृक्षन के संगही धरती में जाय गिरयो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वेषां लोकानामेकौ मुख्यौ पालकौ प्रातराशः प्रातर्भोज्यमन्नं तत्सहितौ ॥ ३४ ॥

स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ।
गत्वा जलाशयाभ्याशं पाययित्वा पपुर्जलम् ॥ ३५ ॥
ते तत्र ददृशुर्बाला महासत्त्वमवस्थितम् ।
तत्रसुर्वज्रनिर्भिन्नं गिरेः शृङ्गमिव च्युतम् ॥ ३६ ॥
स वै बको नाम महानसुरो बकरूपधृक् ।
आगत्य सहसा कृष्णं तीक्ष्णतुण्डोऽग्रसद्बली ॥ ३७ ॥
कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयोऽर्भकाः ।
बभूवुरिन्द्रियाणीव विना प्राणं विचेतसः ॥ ३८ ॥
तं तालुमूलं प्रदहन्तमग्निवद्गोपालसूनुं पितरं जगद्गुरोः ।
चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुण्डेन हन्तुं पुनरभ्यपद्यत ॥ ३९ ॥
तमापतन्तं स निगृह्य तुण्डयोर्दोर्भ्यां बकं कंससखं सतां(१) पतिः ।
पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसाम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभ्याशं समीपम् ॥ ३५—३७ ॥

राम आदिर्येषां ते न तु रामः ॥ ३८—३९ ॥

तुण्डयोश्चञ्च्वोः वीरणवदग्रन्थितृणविशेषवत् ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वलोकानां मुख्यपालकावपि वत्सपालकौ भूत्वेति भक्तवात्सल्यादिविशेष उक्तः । यद्वा, वत्सपालकौ भूत्वा सर्वलोकैकपालकौ सन्तौ वत्सासुरादिवधेन देवलोकादिपालनात् समान्तराशौ अशनमाशः प्रातर्भोजनकारिणौ सन्तावित्यर्थः । विशेषेण पूर्वतः किञ्चित् वयोबलाधिक्यप्रकटनेन किञ्चिद्दूरप्रदेशप्रयाणाद्विना समग्रदिनमेव चेरतुः यतः गवां वत्सान् चारयन्तौ सायं व्रजे समागतानामेव तासां वत्सापेक्षणात् ॥ ३४ ॥

बकासुरवधं वक्ष्यन् सर्वेषां बालानां युगपद्बकदर्शनाश्चर्यमाह—स्वमिति । सर्वे श्रीकृष्णादयः जलाशयो महासरः नन्दीश्वरगिरेः पूर्वतो 'बकस्थल'मिति प्रसिद्धं तस्यान्तिकं महासत्त्वम् अतिस्थूलप्राणिविशेषम् अवस्थितं बकवद्ध्यानेनैकत्रस्थिरतया वर्तमानम् अतस्तस्माद्गिरेश्च्युतं शृङ्गमिव तस्य श्वेतशिखत्वात् बृहदाकारस्यापि तत्र दूरं च्युतत्वे हेतुः वज्रेति वै प्रसिद्धो महान् दुष्टतमत्वादिना वपुषा च बकरूपधृक् नित्यमेव किं वा तद्दुष्टचेष्टार्थं तीक्ष्णतुण्डोऽपि बलवानपि अग्रसदेव नत्वभ्यांशिकाश्चदनिष्टं कर्तुमशक्नोदित्यर्थः । ग्रसनमपि केवलं श्रीभगवदिच्छयैवेत्याह—कृष्णं दुर्धितर्कविचित्रलीलामहार्णवत्वेन प्रसिद्धमित्यर्थः ॥ ३५—३७ ॥

विचेतसो बभूवुः मुमुहुः श्रीभगवन्माहात्म्यवेदिनोऽपि दुष्टं बकं सद्यो हन्तुं शक्ता अपि श्रीबलदेवादयः परमस्नेहाकुलतया सद्यः सर्वज्ञानक्रियाशक्तिरहिता बभूवुरित्यर्थः । अत्र दृष्टान्तः प्राणं विना इन्द्रियाणीवेति श्रीबलदेवस्यापि तादृशत्वं रुक्मिणीहरणाय गते श्रीकृष्णे दृश्यते "श्रुत्वैतद्भगवान् रामो वि[...]"
क्षीयन्नृपोद्यमम्" इत्यादौ ॥ ३८ ॥

तालुमूलमग्निवत्प्रदहन्तं युद्धवैचित्रीकौतुकेन मुखान्तः प्रविष्टस्य गलं नेतुमशक्यस्य तालुमूल एव लग्नत्वात् गोपालसूनुमपि केनचिदंशेन जगद्गुरोर्ब्रह्मणः पितरमिति महाकौतुकित्वात्तस्य बकेन ग्रसनं महानुभावत्वाच्च सम्यग्ग्रसनाशक्यत्वं सम[...] वेदेवेति भावः । अतिरुषा तं हन्तुम् अभ्यपद्यत उद्यतोऽभूत् [...] अक्षतं क्षतरहितम् । यद्वा, स्वबलेन किञ्चित् सच्चतीकर्तुमशक्तो [...] अभ्यपद्यत तत्र हेतुः अतीति महाक्रोधेन विचारापगमा[...]दित्यर्थः ॥ ३९ ॥

निगृह्य ग्रहणेन पीडयित्वा कंससखमिति महादुष्टत्वाधि[...]त्वादिकं सूचितम् । सतां गतिरिति तेन तद्वधो युक्त इति भा[...] एवं पदद्वयेन दुष्टनिग्रहशिष्टानुग्रहलक्षणं दारणप्रयोजनमु[...] यद्वा कंससखमिति तद्वारणेन कंसोऽपि दारित इवेति स[...] गतिरिति च श्रीरामादीनां प्राणा रक्षिता इत्यर्थः । अतस्ते तदे[...] जीवनस्वभावत्वात्तन्निर्गमे स्वत एव मोहतोऽव्युत्थिता इति [...] उशीरं यस्य मूलं तद्वीरणं तस्येवेपीकामिवेत्यर्थः । एवमग्रेऽद्य त[...] मुग्धवन्मयापेत्य गृहीतो वत्सासुरो ऽत्रविहितत्वादेव किञ्चि[...] कर्तुमशक्तो ऽप्रयासेन सहत इति न मन्तव्यं किं तु जानता [...] तेनापि निजाशेषशक्ति दर्शयताऽपि न किञ्चिन्मम केनापि क[...] शक्यत इति बोधयित्वा सुहृद्वर्गान् प्रहर्षयितुं भगवानेव त[...] प्रविष्ट इति तद्वधेन देवानामपि हितमकरोदित्याह—दिवौक[...] सर्वेषामेव मुदावह इति एवं बकासुरस्य महासुरत्वादिक[...] दर्शनम् ॥ ४० ॥

(१) गतिः इति तोषणी । वीर० सुबोधिनी

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जगद्गुरोः चतुर्मुखस्य अच्युतमिति पदम् ॥ ३९—४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महाकायत्वेन दुर्भरत्वाद्वोढुमशक्तैः पात्यमानैः कपित्थाग्रैः फलैः सह तौ भुवि पातितं पतितमवलोक्य साधुसाध्विति शशंसुः ॥ ३३ ॥

अथ बकासुरवधात्मकं चरित्रमाह—तावित्यादिना । सर्वलोकैकपालकावपि वत्सपालौ भूत्वा एकदा प्रातर्भोक्तव्यपर्युषितान्नसहितौ गवां वत्सांश्चारयन्तौ विचेरतुः ॥ ३४ ॥

सर्वे रामकृष्णप्रधाना गोपालाः स्वं स्वं वत्ससमूहं पालयन्तस्तावज्जलाशयस्याभ्याशं समीपं गत्वा वत्सान् जलं पाययित्वा स्वयमपि पपुरपिबन् ॥ ३५ ॥

तत्रावस्थितं सत्त्वं जन्तुं ददृशुस्तत्रसुः अभिभयुश्च, कथम्भूतम्? वज्रेण निर्भिन्नमत एव च्युतं गिरेः शृङ्गमिव स्थितम् ॥ ३६ ॥

स वै महान् बकाख्यः महानसुरो बकरूपधरः सहसैत्य आकस्मिकाविमर्शयोर्द्योतकमव्ययम् तीक्ष्णतुण्डो निशितचञ्चुः बली श्रीकृष्णमग्रसत ॥ ३७ ॥

प्राणं चितेन्द्रियाणीव कृष्णं विना विचेतसः अचेतनप्राया बभूवुः रामादय इत्यतद्गुणसंविज्ञानो बहुव्रीहिः न तु राम इत्यर्थः ॥ ३८ ॥

जगद्गुरोर्ब्रह्मणः पितरमपि लीलया गोपालसूनुमग्निवत् तालुमूलं प्रदहन्तं श्रीकृष्णं सद्य एव चक्षुर्द उदगिरत् तमक्षतं कृष्णं तुण्डेन हन्तुं रुषा पुनरभ्यपद्यताभिमुखमापद्यत ॥ ३९ ॥

स कृष्णस्तमापतन्तं कंससखं कंसहितकरं बकं निगृह्य हुङ्कारेण निवार्य बालेषु पश्यत्सु सत्सु दोर्भ्यां लीलया तुण्डयोः चञ्च्वोर्ददार विदारितवान् चञ्च्वोर्नितरां गृहीत्वा ददारेति अन्वयः कथं वीरणवद्ग्रन्थिराहिततृणविशेषवत् कथम्भूतः सतां भक्तानां गतिः स्वप्राप्त्युपायः दिवौकसां मुदमावहतीति तथा तद्धेन देवान् मुदमुत्पादयामासेत्यर्थः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णोपरि ॥ ३३ ॥

समातराशौ प्रातर्भोजनसहितौ ॥ ३४ ॥

जलाशयाभ्याशं जलस्थानं महासर इत्यर्थः "स्यानेऽभिप्राय आशये" इति ॥ ३५ ॥

महासत्त्वं महान् सत्त्वः पराक्रमो व्यवसायो वा यस्य स तथा तं—

सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे ।
आत्मभावे पिशाचे च द्रव्ये सत्त्वाख्यभावयोः ॥

इति यादवः ॥ ३६ ॥

स महासत्त्वो महासुरो वै एव "स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः" इत्यमरः ॥ ३७ ॥

विचेतसः ज्ञानहीनाः पाषाणकल्पाः ॥ ३८ ॥

जगद्गुरोर्हिरण्यगर्भस्य पितरम् अक्षतं पुनः अतिरुषा तुण्डद्वयेन कृष्णं हन्तुम् अभ्यपद्यत ॥ ३९ ॥

कटस्योपादानं तृणं वीरणं शीतृणं विदुरिति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रामादय इति तद्गुणसंविज्ञानतापि घटते तत्र षष्ठसन्दर्भस्य शततमवाक्यत्वात् पूर्वत्र द्रष्टव्यम् ॥ ३८—४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य पातः स्थूलताचात्याश्चर्यमिति । हेत्याह—पतितं तं वीक्ष्य बालाश्च विस्मिता जाताः कुतोऽयं दैत्यः कथं पतित इति भगवत्पातितं ज्ञात्वा साधुसाध्विति शशंसुः ज्ञानं धारणं प्रक्षेपो मारणं चेति प्रत्येकं प्रशंसेति ज्ञापयितुं वीप्सा आश्चर्यभावज्ञापकं वा अनेन लोके अवाच्यता परिहृता लोकान्तरेऽप्यवाच्यता परिहाराय देवानामभिनन्दनमाह—देवाश्चेति । देवाश्च साधुसाध्विति शशंसुः परिसन्तुष्टाः परितः सन्तुष्टाश्च जाताः दैत्यवधात् वत्सेषु देवानां दैत्यानां च भोगः इदानीं देवानामेवेति परितस्तोषः पुष्पवर्षिणश्च बभूवुः तेषां वाङ्मनःकायव्यापारा निरूपिताः अर्द्धमत्र पतितं "वत्सासुरं हतं श्रुत्वा व्रजे गोप्यश्च विस्मिताः इत्येवमर्द्धम् ॥ ३३ ॥

एवं वत्सासुरे हते पुनर्वत्सान्तरशङ्कया वत्सचारणं बालाः भगवान् कृतवन्त इत्याशङ्कापरिहारार्थमाह—तौ वत्सपालकौ भूत्वेति । सर्वलोकैकपालकावपि वत्सपालकौ भूत्वा विचेरतुरिति सम्बन्धः । कदाचिन्न वत्सचारणं किन्तु तद्वृत्तिमानिव निरन्तरं चारयति अतो वत्सपालक इत्येव लोके प्रसिद्धिः सर्वलोकैकपालकावपीति च एकपदमप्राधान्यपालकव्यावृत्यर्थं भूत्वेति मध्ये निवेशः उभयप्रसिद्धिव्यापकः सेवालोकप्रसिद्धिर्ध्रुवैवेति वत्सपालकत्वं भाक्तं भविष्यतीत्याशङ्क्य प्रथमं निर्दिष्टं सन्ध्यापर्यन्तं वत्सचारणं कर्तव्यम् अतो वत्सानां स्तनपानसमय एव प्रातरशनं कृत्वा स प्रातराशौ गवां वत्सान् धर्मोपयोगिनश्चारयन्तौ स्वगगपि विचेरतुः ॥ ३४ ॥

एवं वत्सानां दोषं परिहृत्य पालानामपि दोषं परिहर्तुं दम्भात्मकं बकं मारितवानित्युपाख्यानमारभते—स्वं स्वमिति नवभिः ।

यमुनाजलपानेन दोषः सर्वो विनिर्गतः ।
एकीभूतो बकः प्रोक्तो जलपानात्स दृश्यते ॥
अतः पानं दर्शनं च तेनोपद्रव एव च ।
ततः सर्वापराधश्च तद्वधोपाय एव च ॥
तद्वधश्च स्तुतिर्देवैर्गोपानां तोष एव च ।
तथैव गोकुलस्थानां नव प्राणा हि शोभिताः

[ ४९ ]

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमं बकदर्शनार्थं यमुनायां चारितान् वत्सान् जलं पाययित्वा स्वयमपि जलं पीतवन्त इत्याह—स्वंस्वमिति । वत्सकुलं वत्ससमूहं सर्वेषामेव बहवो वत्सा इति सर्वेषां गमनम् अन्यथा सर्वेषां दर्शनं न स्यात् तुल्योऽयं बकः सर्वेषामिति सर्वेषां समानक्रिया एकदेति यदा बालकाः दोषान् मोचनीया इति भगवदिच्छा तदा जलसमीपं गत्वा वत्सकुलं जलं पाययित्वा स्वयं जलं पपुः ॥ ३५ ॥

ततो दोषात्मकं बकं दृष्टवन्त इत्याह—ते तत्रेति । ते सर्व एव तत्र जलनिकटे बालाः भीरवः महासत्त्वं भयानकम् अवस्थितं निकटे मारकत्वेन स्थितं प्रथमतो ददृशुः पश्चात्तत्रसुः तथापि भगवत्कृपया ते तं हतमेव ज्ञातवन्तः अन्यथा महाभयेन प्राणवियोगो भवेत् तदाह, वज्रेण निर्भिन्नस्य गिरेः शृङ्गं च्युतमिव तं ददृशुः कंसो हि जगदुपद्रवकर्ता भगवता वज्रेण हत एव तस्यायं शृङ्गस्थानीयः सोऽप्यत्र च्युतः नास्य व्याघुट्यगमनशङ्केति अतः क्रीडार्थमेव विनियोगो न तु पीडार्थं केवलं बालानां दर्शनमात्रेणैव भयमिति ॥ ३६ ॥

ते सर्वे बाला भगवता निष्प्रपञ्चीकृता इति तेषां बोधोऽयं भगवन्तमपकृतवानित्याह—स वै बक इति। नामप्रसिद्धैव तस्य दोषः स्पष्टः महानसुर इति वत्सापेक्षयापि महान् भगवदीयानां दोषत्वात् बकरूपमेव च बिभर्ति तस्योपास्या देवता सैवेति स्वरूपतः प्रसिद्धा च देवानुग्रहाच्च महान् अत एव तरसा शीघ्रमागत्य कृष्णं सदानन्दं लोभानृतरूपौ तुण्डौ यस्य तादृशो बली क्रियाशक्तिप्रधानः ग्रासं कृतवान् "आनन्दो हि लोभेन सत्यानृतेन ग्रस्यत एव तं यथायथोपासते" इति श्रुतेः भगवतैव भगवान् वशीकृतः ॥ ३७ ॥

गोपानां भगवत् प्रेमज्ञापनार्थमेव तथा कृत इति ततस्तेषां प्रेमाणमाह—कृष्णमिति । महाबकः उपास्यः तेन कवलीकृतं दृष्ट्वा रामादयोऽपि विचेतसो जाताः तत्प्राणत्वात्तेषां क्रियायां ज्ञाने वा सर्वथा सामर्थ्यं गतमिति ज्ञापनार्थं दृष्टान्तमाह—विना प्राणैरिन्द्रियाणीवेति एकस्तु न लोके दृष्टान्त इति ज्ञापयितुं प्राणैरिति बहुवचनम् ॥ ३८ ॥

लोभानृताभ्यामेव सदानन्दतिरोभाव इति तुण्डदेशादधो गतः सरस्वतीस्थाने वेदानां प्रामाण्यार्थं तालुमूलं ज्वालितवान् तीक्ष्णद्रव्याणामपि मरिचादीनां दाहकत्वमस्तीति तद्व्यावृत्त्यर्थम् अग्निवत् ज्वालनमुक्तं तथा दहन्तं त्यक्तवानित्याह—त मिति। तालुमूलं कण्ठस्थानं प्रकर्षो गिलनासामर्थ्यसम्पादकः नन्वपहतपाप्मा कथं तालुमूलसम्बद्धो जात इत्याह—गोपाल सूनुमिति । तथा भावसम्पादयन्नेतदपि कृतवानित्यर्थः । ननु भयमपि किमिति प्रदर्शितवानित्याशङ्क्याह—पितरं जगद्गुरोरिति ब्रह्मणोऽपि पिता स हि सर्वानुपदिशति. "तत्त्वमसि" इति तत्रासम्भावनया न कोपि तथात्वं मन्यते तस्यैतन्निदर्शनार्थं भगवता कृतम् अनेनैव महत्त्वमपि सूचितं कथं मारयिष्यतीति शङ्का च परिहृता । किञ्च, साधारणोऽपि ब्राह्मणो गरुडेन भक्ष्यमाणो गरुडस्यापि तालुं ददाह—किं पुनर्ब्रह्मणोऽपि पिता परं ब्रह्म, अतश्छर्द बहिर्निष्कासितवान् अन्यथा ज्वलित ए[…] स्यात् यदि तावदेव कृत्वा गच्छेत् तदा जीवन्ना पुनरपि र[…] केनाप्यंशेनाक्षतं भगवन्तं तुण्डेन सम्पुटितेन पीडि[…] मभ्यपद्यत ॥ ३९ ॥

अतिरोषाद्देवतातिरोहिता स्वसामर्थ्येन चेन्मारयितुं […] स्तदा दूरादेव भगवान्मारितवानित्याह—तमापतन्तमिति । […] बकमासमन्तात्पतन्तं स कृष्णो दुःखदूरीकर्ता निगृह्य […] निग्रहं कृत्वा तुण्डद्वयं पृथक् धृत्वा ददार विपाटितवान् […] मारणे को हेतुस्तत्राह—कंससखमिति । अन्यथा कंसो न मारि[…] स्यादिति कंसोऽपि किमिति मारणीय इति चेत्तत्राह—सतां […] रिति । सतां स एव रक्षकः अन्यथा सद्वृत्ता न स्यादिति […] बालानामेव दोष इति पश्यत्सु बालेषु ददार केचित्पुनः […] हन्ता बकान्निर्गतो न भवतीति महादेवादिवरसत्यकरणा[…] तुण्डं प्रविष्ट इत्याहुः, तत्सत्यश्चेत्कल्पान्तरीयं तस्य विदा[…] हस्तयोः प्रयासमाशङ्क्याह—लीलयेति । ननूपासकवधे उपा[…] देवानां दुःखं स्यादित्याशङ्क्याह—दिवौकसां मुदावह इति […] तेन सन्तोष एव । अत एव समागतानां दिवौकसां […] द्युत्तमे स्थितियुक्तानां तच्छकलद्वयमधोमुखतया स्थापितं […] कोमलमासनमिव जातमित्याह—वीरणवदिति । वीरणं तृणविशे[…] येनासनं निर्मीयते अतस्तद्वधे देवानां हितमेव लोभानृता[…] सह दम्भे गते भूमौ देवा हविर्भोजो भवन्तीति ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकपालकौ मुख्यपालकौ . प्रातराशः प्रातर्भोज[…] ॥ ३४—३५ ॥

वज्रेण निर्भिन्नं गिरिशृङ्गमिव ॥ ३६—३७ ॥

रामादय इति रामस्य सर्वज्ञस्यापि तद्वधसमर्थस्यापि […] भ्रातृस्नेह एव हेतुर्द्रष्टव्यः रुक्मिणीहरणेऽपि "अयं तद्भगवान् […] विपक्षीयनृपोद्यमम्" इत्यादौ तस्य तादृशत्वस्य द्रष्टव्य[…] त्वात् ॥ ३८ ॥

तं कृष्णं प्रदहन्तमिति तस्य नीलोत्पलसुकुमारशरी[…] स्यापि स्पर्शो वह्निरिव वज्रस्येव तत्तद्दोषादेव जातो […] दोषात् सिताया अपि तिक्तत्वमिवेति ज्ञेयम् । अक्षतं क्षतरहि[…] मिति नत्र श्रीकृष्णगात्रस्य वज्रायितत्वं ध्वनितम् ॥ ३९ ॥

तुण्डयोश्चञ्च्वोर्निगृह्य नितरां गृहीत्वा मुदावहः […] मापकः उशीरं यस्य मूलं तद्वीरणं तद्वत् ॥ ४० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तौ राममाधवौ सर्वेषां लोकानामेकौ मुख्यौ पाल[…] वपि वत्सपालकौ भूत्वा प्रातराशः प्रातर्भोज्यमन्नं तत्सा[…] स्वयमकृतभोजनावपि गोवत्सान् चारयन्तौ चेरतुः महां[…] त्सानां भाग्यमिति भावः ॥ ३३ ॥

तदा बकारिं सुरलोकवासिनः समाकिरन्नन्दनमल्लिकादिभिः ।
समीडिरे चानकशङ्खसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ॥ ४१ ॥
मुक्तं बकास्यादुपलभ्य बालका रामादयः प्राणमिवेन्द्रियो गणः ।
स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान् व्रजमेत्य तज्जगुः ॥ ४२ ॥
श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः ।
प्रेत्यागतमिवौत्सुक्यादैक्षन्त तृषितेक्षणाः ॥ ४३ ॥
अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् ।
अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयम् ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जलाशयस्य अभ्याशं निकटम् ॥ ३४—३७ ॥

राम आदिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः दृष्टसागरमानयेतिवत् ॥ ३८ ॥

जगद्गुरोर्ब्रह्मणः ॥ ३९ ॥

स श्रीकृष्णः तुण्डयोश्चञ्च्वोर्दोर्भ्यां निगृह्य नितरां गृहीत्वा दुद्राव विददार वीरणवत् अग्रन्थितृणविशेषवत् ॥ ४० ॥

भाषा टीका ।

वाको मरो देखिके आश्चर्य मानिके सब बालक भली-करी भली करी इस भांति श्रीनन्दनन्दन की बडाई करत भये देवगण भी तई संतुष्ट होकर पुष्पन की वरषा करन लगे ॥ ३३ ॥

ॐ श्रीबकासुर खण्डनाय नमः ॥

सब लोकन के पालन करनवारे वे दोऊ भैया बछरान के चरावन वारे ग्वाल होय के प्रातःकाल को कलेऊ लेकर बछरान को चरावत वन में सुख पूर्वक विहार करन लगे ॥ ३४ ॥

एक समय सब बालक श्रीयमुनाजी के तट पे अपने २ बछरान को जल पिवायवे के निमित्त गये बछरान को जल पिवाय आपभी सब बालक जल पीवत भये ॥ ३५ ॥

वा जगे वैठो भयो एक बडो भारी जंतू को सब बालक देखत भये पर्वत के शिखर सों ऊंचो और वज्र सदृश कठिन वाको शरीर देखकर सब डरप गये ॥ ३६ ॥

बकासुर नाम वारो बडो भारी बली तीक्ष्णजाकी चोंच ऐसो बगला का रूप धरिके श्रीकृष्णचन्द्र को आपके शीघ्र ही निगलि गया ॥ ३७ ॥

जब श्रीकृष्णचन्द्र कूं बकासुर निगल गयो ता समे श्री बलदेवजी आदि लेके सब बालक विना प्राण के जैसे सब इन्द्रियगण अचेत होवे हैं तैसे अचेत होजात भये ॥ ३८ ॥

अग्नि के अङ्गार के सदृश श्रीकृष्णचन्द्र के तेज से जब वा बकासुर को तालु जरन लग्यो तब श्रीब्रह्माजी के पिता नन्द नन्दन को तुरत ही उगिल देत भयो परन्तु श्रीहरि को नेक भी खुरसट नहीं आई, फिर बडो भारी क्रोधित होकर वा बकासुर ने अपने चोंच से मारिवे कूं आवत भयो ॥ ३९ ॥

देवतान कूं आनंद देन वारे साधुन कूं पालन पोषण करन वारे श्रीयशोदा नंदन सब बालकन के देखत देखत ही जैसे तृण को चीर डारे ता प्रकार वा कंस को सखा बकासुर का दोनों हाथों से दोऊ चोंच पकरिके खेल सोंई फाड डारत भये ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

समीडिरे तुष्टुवुः आनकैः शङ्खैरन्यैश्च संस्तवैः सह ॥ ४१ ॥

स्वस्थानमागतं प्राणमिव कृष्णं प्रणीय एकीकृत्य ॥ ४२ ॥

अतिप्रियेण प्रीत्या आदृताः सादराः प्रेत्यागतमिव लोकान्तरादागतमिव तृषितान्यतृप्तान्यमृतं पिबन्तीवेक्षणानि येषां ते ॥ ४३ ॥

अहो बतेत्यादिश्लोकत्रयस्य इति । नन्दादय इत्यनेनान्वयः अपि एवमपि तेषामेवानिष्टमासीत् यतस्तैः पूर्वं मन्येषां भयं कृतम् ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मुदावहत्वे लक्षणमेवाह—तदेति । सम्यक् अवाकिरन् तैर्व्याप्तं चक्रुः नन्दनस्य मल्लिकादिभिः पुष्पैरिति तेषां परमप्रियैरित्यर्थः । आनकशङ्खवाद्यसहितैः संस्तवैरुत्तमस्तोत्रैः सम्यक् ईडिरे तुष्टुवुः बकवधकर्मणा प्रशशंसुः संस्तवैः पुरुषसूक्तादिभिरित्यर्थः । विसिस्मिरे मित्राभ्युदयजपरमानन्दमयं विस्मयं प्रापुरित्यर्थः । यतो गोपालानां तेषां यत्किञ्चित्तदेकाभ्युदयैकजीवनानां तत्स्नेहविशेषावृतैश्वर्यज्ञानानां सुताः ॥ ४१ ॥

स्नेहविशेषमेव दर्शयति—तं बकारिं स्वस्थानमागतं सन्तम् उपलभ्य समीपे प्राप्य पश्चात् परिरभ्य निर्वृताः सन्तः बकास्यान्मुक्तमिति स्नेहोद्रेकेण निर्भरालिङ्गितं तेन च परमनिर्वृतिभरं सूचयति । तेषामादौ श्रीभगवत्प्रकटं स्वयमागमनं तदानीमपि सम्यक् स्वास्थ्यास्फुरणेनाशङ्कितं [illegible]तं तच्च प्राणादिदृष्टान्तेनैव

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

व्यञ्जितं स्थानागतमिति प्रायोऽप्यन्वितं वत्सान् प्रणीय दिनान्तरवत् कालमनपेक्ष्य सर्वान् परावर्त्य यद्वा, पालकानां दुर्दशां दृष्ट्वा दुःखेनतस्ततो गतान् मेलयित्वा तद्वकवधादिकं जगुः सम्भ्रमभिया प्रहर्षेण गीतवदुच्चैः सुस्वरेण कथयामासुः एवं वत्सवधध्यानदूभुततमत्वेनासुरत्वाप्रतीतिशङ्कया च तद्दिनेनुक्त्वा संप्रत्येव कथित इति ज्ञेयं षड्विंशाध्याये श्रीगोपैः तस्याप्यनुवादात् श्रीशुकस्य प्रेमजाविस्मृतिर्वा ॥ ४२ ॥

गोपा गोप्यश्च विस्मिता अहो वतेत्यादिवक्ष्यमाणरीत्या जातविस्मयाः अतोऽतिशयेन प्रियं प्रेमयुक्तं यथा स्यात्तथा आदृताः तद्रक्षणादिषु जातात्यन्तमनःप्रयत्नाः अत एवौत्सुक्यात् आसक्त्या ऐक्षन्त तं चिरं तद्दर्शनाच्च निवृत्ता बभूवुरित्यर्थः । यतस्तृषितेक्षणाः अतृप्तनेत्राः परमप्रीत्यौत्सुक्यादीक्षणे हेतुः प्रेत्येति इव उत्प्रेक्षायां स्नेहभरेण तेषां तथा मननात् । यद्वा, प्रेत्यागतं कश्चित् कश्चिद्बन्धुरिव यद्वा दिवा तद्विरहेण स्वतस्तद्दर्शनतृष्णायुक्तेक्षणा एव विशेषतो बकवधादिश्रवणेनौत्सुक्यादैक्षन्त अन्यत् समानम् ॥ ४३ ॥

अहो इति चतुष्कम् इतीति चतुर्भेनान्वयात् व्याख्या तु पृथक् क्रियते तत्र गोपालानामन्योन्यं यथा युक्तं विस्मयोक्तिमाह– अहो इति त्रिभिः । अहो आश्चर्ये बत खेदे अस्यैव मृत्यवः तद्धेतवः बालस्येति स्नेहभरेण अन्यत्तैः । यद्वा, यतः पूर्वं प्रथममागत्य तस्य भयं कृतम् ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियो गणाः इन्द्रियाणां गणाः ॥ ४२—४३ ॥
कृतं पूर्वं पूर्वजन्मनि किं कृतम् इदानीं भयमुत्पद्यते ॥४४–४५॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा नन्दनवनजाभिर्मल्लिकाभर्यकारिं श्रीकृष्णं समाकिरन् भेरीशङ्खरवसहितैः स्तोत्रैस्तुष्टुवुश्च गोपालसुतास्तु तद्बकवधं वीक्ष्य नितरां विस्मिता बभूवुः ॥ ४१ ॥

स्वस्थानं प्रत्यागतं प्राणमिन्द्रियाणां गणा इव बकस्य मुखान्मुक्तं श्रीकृष्णं प्राप्यालिङ्ग्य च सुखिताः वत्सान् प्रणीयैकीकृत्य व्रजमागत्य तद्बकासुरवधात्मकं कर्म गोपेभ्यः जगदुः ॥ ४२ ॥

तद्गोपालगदितं श्रुत्वा विस्मिता अतिप्रियेणादरयुक्ता आगत्य प्रेत्यागतमिव लोकान्तरादागतमिव तृषितान्यतृप्तान्यमृतं पिबन्तीवेक्षणानि येषां तथाभूताः औत्सुक्यादैक्षन्त अपश्यन् ॥ ४३ ॥

अहो इत्यादि श्लोकत्रयस्य इति नन्दादय इत्युत्तरत्रान्वयः अहो इत्याश्चर्ये बतेति खेदे तत्र खेदहेतुं विशदयन्ति अस्य बालस्य मृत्युहेतवो बहवोऽभवन् अपि तथापि तेषामेव विप्रियं दुःखमासीत् शुक्रमेवेतदित्याहुः पूर्वजन्मान्तरे यतो येभ्यः भयं कृतं तेभ्य एव तेषां भयमुत्थितमित्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विसिस्मिरे विस्मिताः ॥ ४१ ॥

पूर्वस्थितमाश्रमस्थानं प्रणीय नीत्वा तद्बकासुरहिंसनलक्षणं कृष्णचरितम् ॥ ४२ ॥

कृष्णे अतिशयेन प्रियेण आदरेण युताः तृषितेक्षणाः अलंबुद्धिरहितनेत्राः ॥ ४३ ॥

बत खेदे यतः येभ्यो भयं तेषां विप्रियं कृतमासीदिति [illegible]त् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

समीडिरे प्रशशंसुः आनकशङ्खसहितैः संस्तवैर्वीर[illegible] तान्त्रिकैश्च समीडिरे तुष्टुवुः ॥ ४१–४८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तदधिष्ठातृदेवानां सन्तोषमुक्त्वा स्वर्गवासिनां सर्वेषामेव तद्वधे सन्तोषमाह—तदेति । बकारिं बकहन्तारं सर्वेषां ब्राह्मणपक्षपातिनं सुरलोकनिवासिनः सर्वं एव नन्दनवनोद्भवमल्लिकादिपुष्पैः समाकिरन् पुष्पवृष्टिं कृतवन्तः गोपालानां महत्त्वज्ञापनार्थमेतद्वर्ण्यते केवलं पुष्पवृष्टिर्बालानां ज्ञापिका न भवतीति स्तोत्रं वादित्राणि चाह–समीडिरे इति । आनकशङ्खाभ्यां सहितैः संस्तवैः सम्यगीडिरे सम्यक् स्तुतवन्तः [illegible] द्वयं राजसतामसयोरपि स्तोत्राश्चर्ययोः संग्रहार्थम् एतत्सर्वं दृष्ट्वा गोपालसुताः अतिमुग्धाः कृष्णं स्वसमानं ज्ञातवन्तो विसिस्मिरे परमं विस्मयं प्राप्तवन्तः पूर्वं महत्त्वमात्रं ज्ञातमधुना त्वाश्चर्यं जातम् ॥ ४१ ॥

ततो भगवता सह व्रजमागत्य तन्माहात्म्यमुक्तवन्तः इत्याहुमुक्तमिति । वचनं हि हृदये प्ररूढं भवति भगवत्प्राप्तिरह[illegible] गोविन्देति ज्ञापयितुं दुर्निमित्तापगमे तथा भवतीति बकास्यान्मुक्तमुपलभ्येत्युक्तं स्नेह एव तेषां स्फुरितो न तु माहात्म्यज्ञयमिति ज्ञापयितुमाह—बालका इति । रामस्यापि तदा गो[illegible] भावाद्बालकतुल्यतेत्याह—रामादय इति । भगवदागमनात्पूर्वं न ते रामादयः किन्तु नामान्तरमेव प्राप्ताः यथा प्राणं वि[illegible] इन्द्रियो गणाः गोलकमात्रपर्यवसिताः प्रत्यागमं पुनरागतं भगवन्तं परिरभ्य निर्वृताः सुखिनो जाताः बकमारणानन्तरमपि न बालका भगवत्समीपं गताः मूर्च्छिता इवातिखेदेन पतिताः न पुनरुद्गताः भगवानेव परं प्रत्यागतः स [illegible] सदानन्द आलिङ्गनः सर्वतः सम्बन्धोऽभूत् तदा निर्वृ[illegible] तदा वत्सान् प्रणीयेतस्ततो गतान् समानीय [illegible] तद्बकवधादिकं जगुः उक्तवन्तः ॥ ४२ ॥

अथाप्यभिभवन्त्येनं नैव ते घोरदर्शनाः ।
जिघांसयैनमासाद्य नश्यन्त्यग्नौ पतङ्गवत् ॥ ४५ ॥
अहो ब्रह्मविदां वाचो नासत्याः सन्ति कर्हिचित् ।
गर्गो यदाह भगवानन्वभावि तथैव तत् ॥ ४६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—श्रुत्वेति । तद्बकवधं श्रुत्वा गोपा गोप्यश्च विस्मिताः गोपीनां विशेषमाह—अति प्रियादृत इति । अतिप्रियेण भगवता आदृताः प्रासादरांश्च जाताः ततः परमानन्देन हृष्टवत्स्य इत्याह—औत्सुक्यात् प्रेमाधिक्यात् अवितृप्तेषणाः अतृप्तनयनाः ऐक्षन्तेति पामराणां बुद्धिमनुसृत्याश्लीलत्वमाह शुकः— सा हि प्रीतौ परमकाष्ठा उत्सुक्यं प्रेमातिशयतयाऽमर्यादं भवति तेन सर्वपरित्यागेन भर्त्रादिशङ्कामपि परित्यज्य दृष्टवत्यः इयं बुद्धिस्तेषां नारोपिता किन्तु सहजेति ज्ञापयितुं नेत्रयोरतृप्तिमाह ॥ ४३ ॥

तच्छ्रुत्वा विमर्शकानां नन्दादीनां यज्जातं तदग्रे वक्तुं तेषां विचारमाह त्रिभिः—अहो इति । तामसा आहुः अहो इति अहो इत्याश्चर्ये एकस्यैव बहव उपद्रवा इति वतेति खेदे अस्य मारणं दुरन्तमिति अस्यैव बालस्य बहवः क्लेशहेतवो जाता इति एवमपि सति तेषामेव पूतनादिबकान्तानां विप्रियमासीत् नत्वस्य बालस्य न किमपि तत्र हेतुं कल्पयन्ति कृतपूर्वं यतो भयमिति "यो हन्ति स हन्यते" इति न्यायात् भयं तु कृतपूर्वं भवति स्वयं चेदन्यस्मै करोति तदा प्राप्नोति भगवांस्तु न करोति ते तु कुर्वन्तीति तेषामेव भयमुचितम् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

समाकिरन् सम्यगाकीर्णं व्याप्तं चक्रुरित्यर्थः । संस्तवैः प्राचीनैः ॥ ४१ ॥

स्वस्थानमागतं प्राणमिव कृष्णं प्रकर्षेणोतस्ततः सकाशादानीय तद्वत्सबकवधचरित्रं जगुरुच्चैस्स्वरेणोचुः । यद्वा, स्वरतालादिना गीतं जग्रन्थुर्दिनान्तरेऽपि गानार्थमिति भावः ॥ ४२ ॥

अतिप्रियेण श्रीकृष्णेन स्वदर्शनदानेनैवादृताः तृषितान्यमृतं पिबन्तीवेक्षणानि येषां ते ऐक्षन्त क्षतादिशङ्कया सर्वाङ्गेषु अवलोकयन्तः ॥ ४३ ॥

तत्र गोपानामन्योन्यं विस्मयोक्तिमाह—त्रिभिः । मृत्यवः मृत्युहेतवः भयं कृतं निरपराधानामस्माकं बालकस्यास्य च यस्मादपकारः प्रथमं कृतस्तस्मात् ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदा बकारिं बकासुरघ्नं श्रीकृष्णम् नन्दनोद्यानजमल्लिकादिभिः समाकिरन् आनकशङ्खसहितैः स्तोत्रैः समीडिरे तुष्टुवुः विसिस्मिरे विस्मिता आसन् ॥ ४१ ॥

प्राणीय एकीकृत्य व्रजमेत्य तद्वकवधं जगुः ॥ ४२ ॥

तद्बकवधं श्रुत्वा विस्मिता बभूवुः तदानीमतिप्रियेण श्रीकृष्णेन यथा यथमादृताः अङ्कप्रवेशकराद्यावलम्बनरुचिरवचनादिभिः सत्कृताः प्रेत्यागतमिव पुनर्जातमिव उदैक्षन्त अपश्यन् तत्रापि तृषितेक्षणा एव बभूवुः ॥ ४३ ॥

अहो वतेत्यादि श्लोकानामिति नन्दादय इत्यनेनान्वयः मृत्यवो मृत्युहेतवः तेषामेवाप्रियमहितमासीत् नत्वस्माकम् यतः पूर्वमस्माभिरन्येषामभयं कृतम् ॥ ४४ ॥

---

भाषा टीका ।

ता समय बकासुर को मारन वारे श्रीकृष्णचंद्र के ऊपर स्वर्गवासी देवगण अति हर्षित होकर चंबेली आदि पुष्पन की वर्षा करन लगे और शंख नगाडे बजाय के स्तुति करन भये श्रीहरि की स्तुति और पुष्पन की वृष्टि देखकर सब ग्वाल वाल औतई आश्चर्य करन लगे ॥ ४१ ॥

श्रीरामादिक बालक बगलाके मुख से छूटे भये श्रीकृष्णचन्द्रकूं देखकर प्राण के लौट आवने से जैसे सब इन्द्रिये सचेत होजांय या प्रकार सब सुखी होजात भये श्रीनन्दनन्दन कूं अपने पास गे आवत देखके सब अपने २ छाती सूं लगावन लगे और बछरानकूं इकठौरो करिके व्रज में आय सब सों या चरित्र कूं कहत भये ॥ ४२ ॥

बालकन की सबरी बातें सुनके अति प्रिय श्रीकृष्ण में प्रेम वाले सबरे गोप गोपी आश्चर्य मानि के जैसे मौत के मुख सूं कोई बगदि आवे या प्रकार बडी भारी उत्कंठा सूं श्रीकृष्णचन्द्र के मुख कमल को अपने अतृप्त नेत्रों से देखन लगे ॥ ४३ ॥

और सबेरे कहन लगे कि बडी आश्चर्य है या बालक के मृत्यु को बडी २ उपाय देखने में आयो परन्तु जिन जिनने भय दिखायो तिन २ कोहीं बुरो भयो ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथ घोरदर्शना अपि नाभिभवन्ति न धर्षयन्ति ॥ ४५ ॥

गर्गो यदाह "तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः" इत्यादि ॥ ४६—४८ ॥

इति नन्दादयो गोपाः कृष्णरामकथां मुदा ।
कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ॥ ४७ ॥
एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ।
निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे वत्सबकवधो नाम
एकादशोऽध्यायः ॥ ११ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वत्सयूथगतं हत्वा वत्सदम्भासुरं हरिः ।
मुनियूथगतं चाहत्स्मरणं दम्भिनां बकम् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तेषामेव विप्रियत्वं निरूपयति—यथापीति । यथ पूर्वहेतोरेव घोरदर्शना अपीत्यन्वयः । अथवा तत्र हेतुस्तर्कयन्ति तेषां बकादीनां "पुरानेन व्रजपते ! साधवो दस्युपीडिताः" इत्यादिगर्गोक्तरीत्या विप्रियमनिष्टमनेन पूर्वं कृतमासीत् यतः तेभ्यो भयमस्य भवति अथापि यद्यपि पूर्वविप्रियाचरणाज्जन्तुमायान्ति तथापीत्यर्थः । घोरं दर्शनमपि किमुत कर्म येषां तेपि एते बकादयः इति तेषां पापिष्ठत्वमुक्तं नैवं ते घोरदर्शना इति क्वचित्पाठः नाभिभवन्ति धर्षयितुं न शक्नुवन्तीत्यर्थः । एवेति कदाचित् कथञ्चिदपीत्यर्थः । न केवलमेनाबाधन्त किन्तु स्वयं सद्य एव म्रियन्ते अपीत्याहुः जिघांसयेति कुतो ऽप्यागतानां बहूनामप्येकस्मादेव स्वयं सद्यो मरणे दृष्टान्तः अग्नौ पतङ्गवदिति अनेनास्य पुण्यप्रभावत्वमप्युक्तम् अतो हिंस्रःस्वपापेनेत्यादिवदेवोत्प्रेक्षितम् ॥ ४५ ॥

तत्र प्रमाणं दर्शयन्तो ऽपि वात्सल्यस्वभावेन साश्चर्यमाहुः अहो इति । ब्रह्मविदां वेदार्थतत्त्वज्ञानां भक्तिनिष्ठानामित्यर्थः । असत्या न सन्ति न सम्भवन्ति अन्वभावि अनुभूतम् इति श्रीबलदेवचन्द्रकृष्ण सरलस्वभावत्वाद्धुनातत्सत्याद्य रहस्यपि गर्गेणोक्तं तन्माहात्म्यं तेषु किञ्चिदभिव्यक्तमभूदिति गम्यते इति अनेन प्रकारेण गता आगमिष्यमाणाश्च कृष्णरामकथाः कथामिति क्वचित्पाठः कुर्वन्तः कथयन्तः न केवलमेतावदेव अपि तु रममाणाः श्रीभगवता सह क्रीडन्तश्च भववेदनां भवे संसारे संसारिकायां यद्दुःखं तेष्ववनीयां अपि नाविदन् न ज्ञातवन्तोऽपि अतः क्षुधार्ता इदमञ्जुलमित्यादौ यत्तेषां क्षुधादिकं दृश्यते तत्तु न भवसम्बन्धि किं तु लीलापोषकत्वाल्लीलामयमेवेति भावः । अत्रैवं विहारैरित्यादिपद्यमपि पठन्ति यत्र पुरतः पुनः कौमारलीलावर्णनं स्मृति-

विशेषचमत्काराभिनयेन अतोऽत्रेऽपि नस्य पुनरुक्तिरिति सम्बन्धोक्तावुभयत्र व्याख्यातत्वात् ॥ ४६—४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकादशोऽध्यायः ॥ ११ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्वभावि अनुभूयते स्म ॥ ४६-४८ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकादशोऽध्यायः ॥ ११ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एते घोरदर्शना अप्येनं बालं कृष्णं नाभिभवन्ति किन्तु हन्तुमिच्छयैनं बालमासाद्य स्वयमेव नश्यन्ति यथाऽग्नौ पतङ्गशलभास्तद्वत् ॥ ४५ ॥

अहो ब्रह्मविदां वाचः कदाचिदप्यसत्या न सन्ति न भवन्ति तथा हि भगवान् गर्गो यदाह "नारायणसमो गुणैः" इति तदेवास्माभिरन्वभावि अन्वभूयत ॥ ४६ ॥

भववेदनां सांसारिकक्लेशं नाविन्दन्न प्रापुः ॥ ४७ ॥

एवंविधैः कौमारैः कौमारचेष्टितैः तान्येव कानिचिद्दर्शयन् निलायनैः निलयकरणानुकारिभिः एवमुत्तरत्रापि व्रजे कौमारावस्थां जहतुरनुक्रान्तवन्तौ ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकादशोऽध्यायः ॥ ११ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथापि तथापि एते एनं नाभिभवन्ति प्रत्युत जिघांसया हननेच्छया एनमासाद्याग्नौ पतङ्ग इव शलभ इव नश्यन्ति ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुरुषेण ब्रह्मज्ञानमेवापाद्यमिति भावेनाह—अहो इति । असत्या नाभूवन्निति कुतो ज्ञायत इति तत्राह गर्ग इति ॥ ४६ ॥

भववेदनां संसारदुःखम् ॥ ४७ ॥

कौमारैः कुमारावस्थासम्बन्धिभिः विहारैः क्रीडाविशेषैः कौमारं जहौ कृष्णः तत्रापञ्चमाब्दाद्बाल्यम् आनवमवर्षात्पौगण्डम् आषोडशवर्षात्कैशोरं कश्चित्स्तम्भमूले निलीय तिष्ठति अन्यस्तु अन्विष्यन्तं दृष्ट्वा गृह्णातीति या क्रीडा तन्निलायनं हस्तेन स्वशरीरेण वा मृत्तिकया वा जलनिवारणं सेतुबन्धः यथा मर्कटो वानरो विटपाद्विटपान्तरम् उत्प्लवति उत्पतति तथाऽऽकाशे उत्तुङ्गमृत्तिकान्तं शिशुमाराकारोपरि शिरसि पदं निधाय पतन मुत्प्लवनं पांशुभिस्तौ मणिं निधाय तदुपरि हस्तं निदधाति एकः एकस्तन्निविष्य गृह्णातीत्यादि शब्दगृहीतम् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकादशोऽध्यायः ॥ ११ ॥
( विजयध्वजतीर्थपाठे द्वादशः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

राक्षसास्तु तेषामपकारो न तत्कर्मणा केवलेन किन्तु भगवन्माहात्म्यादित्याहुः—अथार्णीति । यद्यपि कृतपूर्वं भयं भवति तथापि प्रयुक्ते कृतप्रयत्ना नश्यन्ति अन्यथा पूर्वमेव ते कथं तथा न भवेयुः तस्मादवध्येनं भगवन्तं नैवाभिभवन्ति अभिभवार्थमप्यागता नाभिभवं कर्तुं शक्नुवन्ति न चाप्रयोजकाः यतस्ते पूतनादयः प्रसिद्धाः अस्तु तेषां वधं दूरे घोरमेव दर्शनं येषां दृष्टा एव भयजनका भवन्तीत्यर्थः । तत्र दृष्टान्तमाह जिघांसया एनमासाद्य स्वयमेव नश्यन्ति अभिप्रायप्रयत्नविरुद्धं फलं प्राप्नुवन्ति तदसङ्गतमिति मत्वा दृष्टान्त उच्यते अग्नौ पतङ्गवदिति ते हि पतङ्गाः सूक्ष्माः कीटाः आत्मानं महान्तं मन्यमाना नरा मूढाः अग्निं तेजस्विनं मत्वा किमित्युपासते वयं त्वग्निं दूरीकरिष्याम इति महतोपमानं कृत्वा निर्वापणार्थं प्रवृत्ताः स्वयमेव नश्यन्ति दग्धा भवन्ति तत्सङ्गः कश्चित्क्षतिः एवमयं भगवानतितेजस्वी तान् मारयतीति युक्तम् ॥ ४५ ॥

अथ पुनर्नन्दादयः प्रमाणबलसिद्धमिममर्थं मन्यमाना-स्तद्वचनमिति प्रमाणमेव स्तुवन्त इत्याह—अहो इति । अहो आश्चर्यं कथं वा ब्रह्मविदोऽस्मद्वृत्तान्तं जानन्तीति तत्रोपपत्ति-मनुवदन्तीति यस्मिन्नर्थे उदिते सर्वमिदं विदितं भवतीति अत एव तेषां वाचः कदाचिदप्यसत्या न भवन्ति तादृशी वाक् नोत्पद्यत एवेति वक्तुं मन्तीत्युक्तम् । ननु, का ब्रह्मविदां वाच इत्याकाङ्क्षायामाह—गर्गो यदाहेति । तत्र हेतुर्भगवानिति ब्रह्मविदो हि ब्रह्मैव भवन्तीति अतस्तेषां वाक्यप्रामाण्यात् तथैव तदन्यथापि वेदवादिनो हि शब्दस्य नानुवादकत्वं मन्यन्ते किन्तु विधायकत्वमत ईश्वरो वेद एव तद्वाक्या-देव फलसिद्धिः न तु फलसाधकत्वेनेश्वरापेक्षेति "अनेन सर्व-दुर्गाणि यूयमञ्जस्तरिष्यथ" इति "नारायणसमो गुणैः" इति अत-स्तद्वाक्यादस्य बालस्य तादृग्गुणा जायन्त इति भावः ॥ ४६ ॥

एवं नन्दादीनां त्रिविधं ज्ञानं निरूप्य फलितं वदन् भगवत्कृतं नन्दनिरोधमनूद्योपसंहरति—इतीति । इति भावेन नन्दादयो गोपाः कृष्णरामकथां स्वतन्त्रतया फलत्वेन कुर्वन्तस्तयैव कथया जातया परमनिर्वृत्या रममाणाः चकारात् विस्मृतदेहाः जातब्रह्मात्मानुभवा भववेदनां संसारतापं नाविन्दन् न ज्ञातवन्तः प्रपञ्चविस्मृतिः सर्वा तदासक्तिश्च निरोध इति भगवत्कृतं कार्यं नन्दादिषु फलितम् ॥ ४७ ॥

एवं बाल्यभावेन कृते नन्दनिरोधे प्रतिष्ठिते सति येन भक्तेन कालेन क्रीडीकृतास्ते निरुद्धाः तं कालमपि सिद्धे प्रयोजने त्यक्तवानित्याह—एवं विहारैरिति । एवं पूर्वोक्तप्रकारैः ये: कालस्य हारैर्लीलारूपैः करणैः सह वा कौमारं जहतुः, ननु विजातीयानां कथं कौमारनिवर्तकत्वम् ? तत्राह, कौमारैरिति । कुमारावस्थोद्भवैः अरण्योत्पन्नैरेव बालिनाऽग्निः शाम्यतीति तानि चरितानि त्रिविधानीति गणयति—निलायनैरिति । सर्वैरेव विहारैः व्रज एव कौमारं जहतुः अतो व्रज एव कुमारो जातः कुमारी च भगोग्रे भक्तवशाः कुमार्यः कृष्णचेतस इति करिष्यन्ति च लीलां लतागृहादिषु लीनाः भगवद्दर्शनकरणप्रयत्ना गृहस्थमर्यादोल्लङ्घनकष्टेष्वा भगवान् कुमारावस्थायां निलायन क्रीडां करोति स हि परमानन्दो भूत्वा स्वाज्ञानाग्नि मायया ज्ञानशक्तिं रुणद्धि तथात्रापि गोपादीनां चक्षुषी पिधत्त पश्चान्निलीय तिष्ठति तथाऽन्येऽपि गोपाद्याः किञ्च जले प्रवहति सेतुबन्धनं करोति रामावतारे एक एव बन्धः कृतः एकैव सीतेति अत्र यमुनादिषु बहूनेव बन्धान् करोति यतः पुलिनादिषु गत्वा रमणं सिद्ध्यति किञ्च मर्कटोत्प्लवनादिकमपि करोति वृक्षाद्वृक्षान्तरं गच्छति सर्वशाखाफलभोगार्थम् एकस्यामप्यारूढः सर्वफलं भुङ्क्ते ननु तस्य विषः प्रक्रमोऽपेक्षते आदिशब्देन मण्डूकप्लुत्यादिकमपि ब्राह्मणोऽपि भवति क्षत्रियोऽपि भवति सर्वमेव रसमेकत्र स्थित एव गृह्णाति न तु तस्य मर्यादमानवाधिकेति, एवं बाल्यविनोदैरधमान् गोकुलवासिनोऽनुगृहीतुं शक्यास्तान् सर्वानेव विहारान् कृतवान् रूपलीला जगद्रूपलीला वेदरूपलीलेति लीलात्रयं परिचायकत्वेनोक्तम् अतःपरं कौमारकार्यं नास्तीति तादृशैर्लीलाभिः सह कौमारावस्थां जहतुः ॥ ४८ ॥

इति श्रीभागवते महापुराणे श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
एकादशाध्यायविवरणम् ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वनेन बालकेन पूर्वजन्मनि तेषां विप्रियं प्रथमं कृतमत एवास्मिन् जन्मनि हन्तुमेनम् एते एवायान्तीति कथं न सम्भाव्यते ? तत्राहुः—अथापि । यद्येवमपि स्यात्तर्हि तैरयमाभिभूयेतैवेत्यर्थः । किन्तु ते न अभिभवन्ति अभिभवितुं न शक्नुवन्ति प्रत्युत जिघांसयेत्यादि ॥ ४५ ॥

तत्र हेतुरस्य नारायणसमत्वमेवेत्याहुः- अहो इति । गर्गो यदाह "नारायणसमो गुणैः"इत्यादि ॥ ४६ ॥

कथां कुर्वन्तः आख्यान्यामुपविश्य बाल्यचापल्यकथां वत्सवकादिवधकथां च पुनः पुनः संलपन्तः गीतपद्यादिभिरुपनिबध्नन्तो वा भवस्य संसारस्य वेदनां ज्ञापनं भो व्रजराज ! वयं तावद्भवतामर्द्धं व्यतीतमेव अधुनापि कथं पुत्रकलत्रकुटुम्बादिकथासु निमज्ज्य घोरः संसारोऽयं वर्तते अस्मादुद्धारार्थं ज्ञानवैराग्यतपोनारायणाराधनादिषु कथं न यतध्वे ? इति देशान्तरागतवृद्धगोपाद्यादिभिर्ज्ञापितं नाविदन् नैवावदधुः व्याख्यान्तरं त्याज्यं "न पुनः कल्पते राजन् ! संसारोऽज्ञानसम्भवः" इति पूर्वोक्तेस्तेषां संसारस्यैव निषेधात् कुतस्तदीयपीडाशङ्केति इति अनेन प्रकारेण गता आगमिष्यमाणा किन्तु लीलोपोद्बलकत्वाल्लीलामयमेवेति भावश्च कृष्णारामकथामिति क्वचित्पाठः कुर्वन्तः कथयन्त न केवलमेतावदेव अपितु रममाणा श्रीभगवता सह क्रीडन्तश्च भववेदनां भवे संसारे सांसारिकाणां यद्दुःखं तत्तेष्ववतीर्णा अपि नाविन्दन् न ज्ञातवन्तोपि अतः क्षुधार्ता इदमब्रुवन्नित्यादौ यत्तेषां क्षुधादिकं दृश्यते तत्तु न भवसम्बन्धि ॥ ४७—४८ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
एकादशोऽयं दशमे सङ्गतः सङ्गतः सताम् ॥ ११ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथोशब्दो हेतुवाचकः यतो वयं भूतामयदाः अतो हेतोः घोरदर्शना अपि एनं बहिश्चरमस्माकं प्राणं श्रीकृष्णं नैवाभिभवन्ति अर्दयन्ति ॥ ४५—४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकादशाध्यायार्थप्रकाशः ॥ ११ ॥

———

भाषा टीका ।

बडे २ भयानक रूपवारे असुर राक्षस या श्रीकृष्ण से बुरो करनो चाहो परन्तु कछु न बिगार सके जैसे पतंग आगि में आप जाय मरे है तैसे वे सब भी अपने आपही मर भये ॥ ४५ ॥

अहो वेद विद्या जानन वारे ब्राह्मणों की वाणी कभऊ असत्य नहीं होय है, देखो जो बातें श्रीगर्गाचार्य कहि गये सो सबरे वैसेही दीख परे हैं ॥ ४६ ॥

या प्रकार श्रीनंदजी सूं आदि लेके सबरे ब्रजवासी श्रीकृष्ण बलदेवजी की चरित्र बडे प्रसन्न होकर कहते सुनते या ही कथा में रमण करिके सांसारिक ताप कूं विसरि जात भये ॥ ४७ ॥

या प्रकार आंख मिचोनी पुल बांधनो बंदरान की नाई कूदनो यह सब कौमार अवस्था की लीलान को करिकैं के श्रीकृष्ण बलदेव ने अपनो कौमार अवस्था को व्यतीत करि ॥ ४८ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें ग्यारह अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ ११ ॥

———

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

## ॥ द्वादशोऽध्यायः ॥

—:o:✻:o:—

श्रीशुक उवाच ।

क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् ।
प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः ॥ १ ॥
तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः ।
स्वान् स्वान् सहस्रोपरिसङ्ख्ययाऽन्वितान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा ॥ २ ॥
कृष्णवत्सैरसङ्ख्यातैर्यूथीकृत्य स्ववत्सकान् ।
चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ॥ ३ ॥
फलप्रवालस्तबकसुमनःपिच्छधातुभिः ।
काचगुञ्जामणिस्वर्णभूषिता अप्यभूषयन् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वादशे तु महासर्पवपुर्धरमघासुरम् ।
वत्सपालगिलं कृष्णो गलेऽहन्निति वर्ण्यते ॥
महावकगलक्रीडा केवलस्य न कौतुकम् ।
इति वाघासुरमुखे ससखः प्राविशद्धरिः ॥

क्वचित्कदाचिद्वनाशाय वने एव प्रथमं भोजनं कर्तुम् ॥ १ ॥ तेनैव शृङ्गरवेण श्रीकृष्णेन वा सह पृथुका बालाः स्निग्धाः स्नेहयुक्ताः शिक् शिक्यं रम्याः शिग्वेत्रादयो येषां ते सहस्राधिकसङ्ख्यायुक्तान् वत्सान् ॥ २—३ ॥ काचादिभिः पूर्वं मातृभिर्भूषिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भाति रूपगुणक्रीडानामभिर्नित्यनूतनः ।
आश्चर्यैश्च सदाश्चर्यः प्रभुः स प्रसीदतु ॥

पूर्वं पाकममध्यायत्रयेण कौमारीमेव लीलां वदन् तत्राघासुरवधमाह—क्वचिदित्यादिना । यदेतद्ध्याये पूतना लोकबालघ्नीत्यादिश्लोकषट्कं यः पुनः पूतनामोक्षणादिश्लोकं च कश्चिन्न मन्यते तत्र कारणं न पश्यामः सर्वैरपि दृश्यमान त्वात् वासनाभाष्यसम्बन्धोक्तिविलक्षणमनुकमनोहरापरमहंसप्रियादिषु प्राचीनाधुनिकटीकासु व्याख्यातत्वात् नदीयस्वसम्प्रदायानङ्गीकारप्रामाण्येन तस्याभावं चेत् अन्यसम्प्रदायाङ्गीकारप्रामाण्येन विपरीतं कथं न स्यात् ? न च मुरभिदादिनामवदघभिदादिनाम्नां तत्र प्रयोगो न दृश्यतेति वाच्यं "यत्र प्रजल्पघभिदोरचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथामतिघ्नीः" इति तृतीयात् पापभिदादिनाम्नां तत्र प्रयोगात् न च तत्र तत्र लीलानुवादे सा लीला नास्ति स्वामिपादैस्तत्र तत्र तस्या अपि दर्शितत्वात् अत एव द्वात्रिंशद्विशतञ्च यस्य विलसच्छाखा इति तदीयपद्ये क्वचित्तमध्यायत्रयं यत्तदिदमेवेति न तन्मतं न च तत्र यमन्यत्र कुत्रापि खण्डयितव्यं सर्वत्राध्यायसङ्ख्याश्लोकसहिततटीकासद्भावात् ततो द्वात्रिंशच्च त्रयश्च शतानि चेति द्वन्द्वैक्यमेव तद्विवक्षितम् अनिर्णीतबहुत्वस्यानवस्थाभिया त्रित्व एव पर्यवसानात् कपिञ्जलालम्भनन्यायेन अन्यथा त्रिशतीत्येव स्यात् न चासुरमुक्तेः सिद्धान्तविरुद्धत्वात्तदर्थं श्रीकृष्णगारिष्वपि सर्वेषु तेषु दृष्टत्वात्—

"आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम्" ॥

इत्यादिष्वपि मां श्रीकृष्णलक्षणमप्राप्यैव न तु प्राप्येत्यङ्गीकारात् तथा चोक्तं "ये च प्रलम्बखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः । अन्ये च साल्वकपिबल्वलदन्तवक्त्रसप्तोक्षशम्बरविदूरथरुक्मिमुख्याः ॥ ये वा मृधे समितिशालिन आत्तचापाः काम्बोजमत्स्यकुरुकैकयसृञ्जयाद्याः । यास्यन्त्यदर्शनमलं बलपार्थभीमव्याजाह्वयेन हरिणा निलयं तदीयम्" इति न च पुराणान्तराप्रसिद्धत्वेन सा लीला न सम्भावनीया पाद्मोत्तरखण्डब्रह्माण्डपुराणयोः स्पष्टत्वात् श्रीवृन्दावने तल्लीलास्थानानि च प्रसिद्धानि न च भक्तानां तत्साहचर्येन तेषां तत्प्राप्तिरसमञ्जसा शुद्धभक्तैस्तादृशप्राप्तेरनुपादेयत्वात् "नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्" इत्यादि-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वचनशतेभ्यः न च पूतनाया जननीसाम्यं जननीमाहात्म्यविच्छित्त्वैर्ष्यं सद्वेषादिव पूतनापीति वाक्येन जननीवेषमात्रतः तत्प्राप्त्या तस्या एव महिमाधिक्यव्यञ्जनात् तत्र तत्र तेनापि द्विजीवतासिद्धान्तेन दोषः परिह्रियते किं त्वत्रापि "तत्संसर्गी च पञ्चमः" इति न्यायेन दोषस्तद्वस्य एव तस्मान्न कश्चिद्विरोधः प्रत्युत भगवत्तद्भक्ततद्भक्तीनां परममाहात्म्यमेवात्र सेत्स्यति अतस्तदनुभवः श्रीभगवदनुग्रहविशेषेणैव सम्पद्यत इति तत्सुगोप्यमेवेत्येवं तस्य तादृशं वचनमप्युपपद्यते, अलमतिविस्तरेण । प्रकृतं व्याख्यास्यामः, मनो दधत् दृढेच्छां कुर्वन् इति छकृतसम्मन्त्रणैर्वयस्यैः गृहे प्रातर्भोज्यानां वन एव नयनं बोधयति तन्नयनेच्छा चेयं प्राथमिकेव लभ्यते सप्रातराशाविमुक्ता कचिद्वनाशायेत्युक्तत्वात् सम्यक् रात्रिवस्त्रपरित्यागश्रीमुखादिप्रक्षालनचारुवस्त्रभूषणधारणादिपूर्वकं त्वरयोत्थाय निष्क्रम्य प्रबोधयन्निति सखिभिः सह सुखजिगमिषया व्रजाच्छनैर्निर्गमनं बोधयति अत एव वयस्येति विशेषणं चारुणेति स्वरूपनिर्देशो निद्रितानां सुखेनैव निद्राभङ्गं बोधयति वत्साः पुरस्सराः यस्य सः तेन तेनैव तेषां चित्ताहरणाद्धरिः स एव स्वयं व्रजात् विशेषेण निर्गतः न त्वन्यदिनवत् श्रीरामेण सहितः तत्र कारणं तच्छृङ्गरवेण चलितुमुद्यतस्य श्रीकृष्णेनापि कृतवचननिर्णयस्य नूनं जनन्या दैवज्ञानुपदेशेनारब्धशान्तिकादिकर्मत्वमेव मुख्यं भवेत् तत्रैव लीलाशक्तिघटिततद्गोचरताहेतुकवक्ष्यमाणलीलासम्पादनार्थत्वं तु गौणं कचिद्वनाशाय मनोदधदित्यनेन वनभोजनस्यैवोद्दिष्टत्वात् अघासुरवधादीनां त्वागन्तुकत्वात् अत्र प्रतिपदं प्रतिवाक्यं प्रतिश्लोकं प्रतिप्रकरणं च पूर्वपूर्वस्मादुत्तरोत्तरमुत्तरोत्तरस्मात् पूर्वपूर्वमाश्चर्यमूह्यं तच्च भक्तजनहृदयैकवेद्यमतिविस्तरभिया न विव्रियते ॥ १ ॥

तेनैव साकमिति महावेगेन धावनात् यतः स्निग्धाः अतः सर्वेषामेव युगपन्निर्गमोऽपि सूचितः सहस्रस्य उपरिसङ्ख्या—

"एकं दशशतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिर्न्यर्बुदमेव च" ॥

इत्यादिवचनादयुतादिस्तयान्वितान् एवं वत्सानां बालानां चासङ्ख्येयत्वमुक्तम् इत्थं वने बालैः पाल्यमानानामपि वत्सानां यदीयत्ता नाभूत् तर्हि व्रजरुद्धानां तर्णकानां तथा गोसङ्गतानां भुक्तस्तन्यानां वत्सानां तथा तन्मातॄणामन्यासां च गवां तथा वत्सतरीणां वत्सतराणां वृषाणां च श्रीगोपालदेवप्रभावेन नित्यमेव विवर्द्धमानानामियत्ता कथमस्तु महिष्यादयश्च केन वा गण्याः पशवस्तदनुसारेण गोपगोप्यादयश्चानन्ता ज्ञेयाः तथा चाऽऽगमे रासध्यानं पमदाशतकोटिभिराकुलित इति तत्तत्समावेशादिकं चाचिन्त्यैश्वर्यादेवेति मुदेति स्वयं श्रीकृष्णेन प्रबोधनात् अत एव विशेषेण अन्यदिनतो ऽसाधारणतया निर्ययुः श्रीकृष्णस्य तु वत्सैरपि नावदसङ्ख्यातैः असङ्ख्यसंख्यसङ्ख्यैरित्यर्थः । तत्संज्ञा च दर्शिता श्रीस्वामिना "एकं दशशतसहस्रायुतं प्रयुतासंख्यलक्षमथ नियुतम् । अर्बुदकोटिन्यर्बुदपद्मं खर्वं निखर्वमिति दशभिः । गणनान् महाब्ज शङ्कसमुद्र मध्यान्तमथ परार्द्धं च । खहतं परार्द्धममितं तत्स्वहतं भूर्यनोपमितं(?)मिति ॥ प्रयुतसंज्ञं लक्षम् अर्बुदसंज्ञा कोटिरित्यर्थः । परार्द्धपर्यन्तमेकादशमङ्ख्यादशगुणिता ज्ञेयाः तत्र च द्वन्द्वैक्यान्महाम्बुजादिकं सङ्ख्यापञ्चकं ज्ञेयं खहतमिति खेन गुणितमित्यर्थं ... ज्ञेयं स्वकान् स्वकान् स्वस्ववत्सानित्यर्थः । स्ववत्सकानिति पा... स्पष्टः तत्र तत्र वत्सप्रचारदेशे ह हर्षे ॥ २—३ ॥

अर्भलीलामेवाह—फलेति सप्तभिः । स्तवकाः पुष्पगुच्छाः ... नसः पुष्पाणि काचा महारत्नेभ्यो विवेक्तुमशक्यरूपत्वात् कौतु... विशेषकारिणः गुञ्जा अपि वृन्दावनीयत्वेन तथाभूता... बलैरेव कौतुकेनाहृत्य मातृभिः साग्रहं हारादौ ग्रथिताः मुक्ताः(?) पाठः कचित् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीरामानुजपादाब्जकृपामनुरञ्जितैः ।
पूर्वैः प्रक्षिप्तमध्यायत्रयमन्वर्थमुच्यते ॥

वनाशाय वने प्रातर्भोजनाय ॥ १ ॥

शिक् भोज्यवस्त्वाधारभूतं शिक्यं वेत्रं गोवेषयितृविष... वेणुवाद्ये ॥ २ ॥

तत्र तत्र वृन्दावनप्रदेशेषु ॥ ३ ॥

काचानां हाराः गुञ्जानां च मणिस्वर्णादीनामाभरणैर्भूषि... अपि पिच्छं मायूरं फलादिभिरभूषयन् ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत आरभ्य अध्यायत्रयं प्रक्षिप्तमिति व्यासाचार्यैरुपेक्षि... अथापि प्रायशो व्यवहृयमाणत्वात् कैश्चिद्व्याख्यातत्वा... व्याख्यायते अत्राघेनाघासुरवधात्मकं चरित्रमनुवर्णयते—क्वचि... त्यादिना । कदाचिद्भगवान् प्रातरुत्थाय समानवयस्कान् वत्स... प्रबोधयन् वन एव प्रथमभोजनाय मनःकुर्वन् वत्साः पुरस्स... यस्मात् तथाभूतः चारुणा विषाणानां रवेण व्रजान्निर्जगाम ।

तथा शिक् शिक्यं भोजनाः शिक्यादयो येषां ते स्नि... परस्परानुरागयुक्ताः पृथुकाः बालकाः सहस्रशस्तेनैव कृष्णे... सह सहस्रादुपरिसंख्यया अन्वितान् परिच्छन्नान् स्वस्व... पुरस्कृत्य मुदा विनिर्ययुः ॥ २ ॥

ततः स्वस्ववत्सानसङ्ख्यातैः कृष्णस्य वत्सैः सह सं... कृत्य चारयन्तः तत्रतत्रार्भकलीलाभिर्विहृतवन्तः ॥ ३ ॥

तदेव प्रपञ्चयति—फलेति सप्तभिः । पूर्वं मातृभिः क... दिभिर्भूषणैर्भूषिता अपि फलादिभिरात्मानमभूषयत्... प्रवालाः पल्लवास्तेषां स्तवकैः पुष्पस्तवकैश्च गुच्छैः... मालाभिः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।
( इत आरभ्याध्यायत्रयं न दृश्यते )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अध्यायत्रयमिदं केनचिदसम्मतमपि वासनाभाष्यादि... टीकाकारैर्बहुभिः सम्मतत्वात् सर्वदेशपुस्तकप्रसिद्ध... लिख्यते[१-७] विच्छायाभिरिति विशब्दस्य जात्यैकत्वेन ... अफलीवत्वम् ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कथामात्रं हरेर्वाच्यं सर्वत्रेत्यत्र केचन।
कथां वक्तुं भागवतीं कश्चित्सिद्धामलौकिकीम् ॥
योजयित्वात्माधुनिका अध्यायत्रितयञ्जगुः।
द्वादशार्थसङ्गतीनां हि स्पष्टा तत्र विरुद्धता ॥
लोकप्रसिद्धेस्तत्रापि कथं चिद्रूप्यते स्फुटम्।

पूर्वाध्यायान्ते कौमारञ्जहतुरित्युक्तम् ततश्च पौगण्डवयः प्रविष्टौ व्रजे बभूवतुस्तौ पशुपालसम्मताविलेव सन्दर्भः। तथापि भगवच्चरितमिव वत्साहरणं पद्मपुराणे प्रसिद्धमिति तां कथामभिप्रायाघासुरवधं ब्रह्मस्तुतिञ्च पूर्वापरयोर्निवेश्य कौतुकलीला भगवतः प्रदर्शिता लोका हि लौकिके कौतुकिनो भवन्ति—

तत्र तु प्रथमेऽध्याये लीलामाह सुविस्तराम्।
अघासुरस्य च वधो मुक्तिश्चापि स्वयुक्तितः॥

प्रथमं भगवतो दशभिः श्लोकैर्लीलामाह—कचित् कदाचित् वनाशाय समागमाशः वने अशनं कर्तुं मनः दधत् विभुत प्रातः काले प्रबुद्धोत्थाय विनिर्गत इति सम्बन्धः वयस्याश्च ते वत्सपाश्च शृङ्गरवेणैव तेषामुत्थापनं कृष्णस्यैवायं रव इति ज्ञापनार्थं चाद्ययेति दोहानन्तरं वत्सान् गृहीत्वा निर्गतः॥१॥

तदा सर्वेऽपि निर्गता इत्याह—तेनैवेति। तेनैव भगवता सार्द्धं पृथुका बालाः सहस्रशो निर्गताः स्निग्धाः प्रेमलाः भगवति शोभना शिक् शिक्यमोदनसहितं वेत्रं वत्सचारणार्थं विषाणं वादनार्थं वेणुश्च ते तेषां सन्ति स्वकान् स्वकीयान् वत्सान् पुरस्कृत्य तेपि मुदा गृहेभ्यो ययुः॥२॥

एकैकस्य सहस्रसङ्ख्यात् उपरिसङ्ख्या अयुतमित्यादि तया सङ्ख्यया अन्वितान् तान् सर्वानेव स्ववत्सान् कृष्णवत्सेषु योजितवन्त इत्याह—कृष्णवत्सैरिति। भगवद्वत्सैः सह स्ववत्सान् यूथीकृत्य अन्यथा स्वच्छन्दलीला न भवति ततोपि पृथग्भूतान् कदाचिन्निर्गच्छन्तः अर्भलीलाभिरेव गाश्चारयन्तः विजह्रुः तत्र तत्र क्रीडितवन्तः॥३॥

फलादिभिश्च स्वशरीरं भूषितवन्त इत्याह—फलेति। पूर्वं काचादिभिर्भूषिता अपि पुनर्वन्यैरभूषयन् स्तवकाः पुष्पगुच्छानि सुमनसः केवलपुष्पाणि पिच्छानि मयूरपिच्छानि गैरिकादिधातवः गुञ्जाफलानि वन्यान्यपि नित्यं तिष्ठन्तीति काचादिषु मध्यितानि॥४॥

———

श्रीविश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

द्वादशे सखिभिः केलिस्तन्मध्येऽघस्य वर्णनम्।
वक्त्रेऽविशंस्ते कृष्णोनु प्रविश्याहंस्तमेधितः॥

क्वचिद्दिवसे वनाशाय वन एव प्रातर्भोजनं कर्तुं हरिरिति बलदेवस्तु मात्रा जन्मर्क्षशान्तिकस्नानाद्यर्थं गृह एव रक्षादृचित इति ज्ञेयम्॥१॥

पृथुका बालाः शिक् शिक्यं सहस्रस्योपरिसंख्या अयुतादिस्तयाऽन्वितान्॥२॥

कृष्णस्य तु वत्सैरसङ्ख्यातैः असङ्ख्यसंज्ञसंख्यैरित्यर्थः। असंख्यसंज्ञा च क्षीरस्वामिटीकया ज्ञेया यथा "एकं दशशतसहस्रायुतं प्रयुतमथलक्षमथ नियुतम्। अर्बुदकोटिन्यर्बुदपद्मं खर्वं निखर्वमिति दशभिः। गणनाम्महाम्बुजशङ्खसमुद्रमध्यान्तमथ परपरार्द्धम्। स्वहतं परार्द्धमितं तत्स्वहतं मूर्ध्यतोऽसङ्ख्यम् इति" प्रयुतसंज्ञं लक्षम् अर्बुदसंज्ञा कोटिरित्यर्थः। परार्द्धपर्यन्ताद्यदशसङ्ख्यादशशतगुणिता ज्ञेयाः ततश्च वृन्दैक्यान्महाम्बुजादिकं सङ्ख्यापञ्चकं ज्ञेयं स्वहतमिति स्वेन गुणितमित्यर्थः इति ज्ञेयं। ततश्च कृष्णवत्सैर्महायूथैः सह स्वकान् स्वकान् परार्द्धादिसङ्ख्यान् वत्सान् प्रथक् पृथक् यूथीकृत्येत्यर्थः। न च षोडशक्रोशीमात्रस्य वृन्दावनस्य प्रदेशे तावन्तो वत्साः नैव भान्तीति वाच्यं भगवद्विग्रहस्येव धाम्नश्चास्य तथापरिमितत्वेप्यचिन्त्यशक्त्या विभुत्वात् तत्प्रदेशैकदेशेपि पञ्चाशत्कोटियोजनप्रमाणब्रह्माण्डार्बुदानां भगवतेव ब्रह्मणो एतदुत्तराध्याये दर्शितत्वमायात्वादत एवोक्तं भागवतामृते "एवं प्रभोः प्रियाणां च धाम्नश्च समयस्य च। अविचिन्त्यप्रभावत्वादत्र किञ्चिन्न दुर्घटम्" इति॥३॥

काचादिभिः पूर्वं मातृभिर्भूषिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः। तत्र काचगुञ्जे बालानामाग्रहात् मणिस्वर्णौ मातृणामाग्रहाद्भूषणे ज्ञेये॥४॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्वादशेऽध्याये व्रजौकसां भाग्यातिशयम् अघासुरमोक्षञ्च वर्णयति—क्वचिदिति। क्वचिद्धरिः स्वभक्तक्लेशहरः वनाशाय वने एव प्रथमं भोजनं कर्तुं मनो दधत् वयस्याः समानवयस्का ये वत्सपास्तान्॥१॥

तेनैव शृङ्गरवेण सत्यसङ्कल्पवता कृतेन साकं प्रबुद्धा इति शेषः। सहस्रशः स्निग्धाः स्नेहयुक्ताः शोभनाः शिक्येत्रादयो येषां ते शिक् शिक्ये पृथुकाः बालकाः सहस्राधिकसङ्ख्यायुतान् स्वकान् वत्सान् पुरस्कृत्य मुदा विनिर्ययुः॥२-३॥

पूर्वं काचादिभिर्भूषिता अपि फलादिभिरभूषयन् आत्मानमिति शेषः॥४॥

———

भाषा टीका।

ॐ श्रीकृष्णाय नमः॥

श्रीशुक उवाच।

श्री शुकदेवजी कहैं हैं कि-हे राजन्! कभऊं वन में कलेवा के विचार करके श्रीकृष्णचन्द्र प्रातःकाल उठिकर सुन्दर सींगी बजाय के अपने संगवारे बराबर के ग्वाल बालन कूं जगावत भये और सवेरे बछरान कूं आगे करके सब बालकन के साथ कलेऊ बांधकर व्रज ते वन में गये॥१॥

तिन मनमोहन श्रीकृष्णचन्द्र के संग हजारन स्नेही बालक अपनी २ छींके और बेत की छड़ी सींगी या वेणु लेके और अपने २ हजारहों बछरान कों आगे करिके बड़े हर्षित होकर वन को गये॥२॥

मुष्णन्तोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपुः ।
तत्रत्याश्च पुनर्दूराद्धसन्तश्च पुनर्ददुः ॥ ५ ॥
यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम् ।
अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥ ६ ॥
केचिद्वेणून् वादयन्तो ध्मान्तः शृङ्गाणि केचन ।
केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे ॥ ७ ॥
विच्छायाभिः प्रधावन्तो गच्छन्तः साधु हंसकैः ।
बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः ॥ ८ ॥

भाषा टीका ।

और श्रीहरि के असंख्यात बछरानके संग अपने २ बछरान को इकट्ठा करके चरावते २ बाललीला करि के जहां तहां वनमें विहार करन लगे ॥ ३ ॥

नाना प्रकार के मणियों से जटित सुवर्ण के गहने भी पहिर रखे हैं तो भी वन के चित्र विचित्र के फल कोमल २ पत्तान के और कलियों की गुच्छा पुष्प मयूर पुच्छ खरिया गेरु आदि वस्तुओं से अपने शरीर को शृंगार करे हैं अथवा बनाय २ पहिरें हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुष्णन्तश्चोरयन्तः ॥ ५ ॥

यदि दूरं गतः कृष्णो भवति तर्हीति ॥ ६ ॥

ध्मान्तो वादयन्तः भृङ्गैः सह ॥ ७ ॥

विच्छायाभिः पक्षिच्छायाभिः कलापिभिर्मयूरैः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शिक्यान्यादिर्येषां यष्ट्यादीनां तान् न तु शिक्यानि तेषाम् अनाधारत्वेनाक्षनाशे सति हसन्त इत्यादेरयुक्तत्वात् ज्ञातान् सतः केषु चातिमुग्धेषु दत्तसु सत्सु हसन्त इत्यादि ॥ ५ ॥

ईदृशबाल्यक्रीडास्वपि तदेकपरतां प्रणयविशेषं च दर्शयति—यदीति पद्यकेन । कृष्णोऽपि तान् विहाय दूरं न यात्येव यदि कदाचित् श्रिभिः सखिभिर्दूरं गतो भवतीत्यर्थः । किमर्थं वनशोभाया ईक्षणाय अनेन श्रीवृन्दावनस्य परममनोहरत्वं सूचितं । सम्यक् परिरम्भणादिना स्पृष्ट्वा रमिरे सुखं प्रापुः ॥ ६ ॥

कदेत्यपेक्षायामाह–केचिदिति चतुर्भिः । वेणून् वादयंतः वेणुवादनस्य मध्ये मध्ये इत्यर्थः । वेणुमिति क्वचित् पाठः एवं ध्मान्त इत्यादि तदावेशात् तत्सङ्गमनासिद्धेर्कंटिति पुनरनुसन्धानार्थंति भावः । यद्वा, संस्पर्शानन्तरं परमानन्देन तदानन्दनेच्छया च पृथक् पृथक् क्रीडां चक्रुरित्यर्थः । तामेवाह—केचिदित्याभिः ॥ ७ ॥

वीनां जात्येकवचनविवक्षया छायायाः क्लीबत्वाभावः साधयति क्रियाविशेषणं पूर्वत्र परत्र च सर्वत्र योज्यं ततस्ततोऽप्युत्तमं यथा स्यात् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आराद् दूरे चिक्षिपुः ॥ ५—७ ॥

वीनां पक्षिणां छायाभिः यत्र पक्षिणा उड्डीय गच्छन्ति तत्तच्छायाभिः स्वयमपि धावन्त इत्यर्थः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अन्योऽन्येषां शिक्यादीन् आदिशब्देन वेत्रविषाणवेणूनां संग्रहः मुष्णान्तः चोरयन्तः ज्ञातान् शिक्यादीनाराद्दूरे चिक्षिपुः तत्रत्यान् तान् पुनः तत आरात् क्षिपन्तः हसन्तः सन्तः पुनराददुः ॥ ५ ॥

वनशोभादर्शनार्थं यर्हि कृष्णो दूरं गतो भवति तदा तं श्रीकृष्णमहमेव पूर्वं स्पृशामीत्येवं वदन्तः तं संस्पृश्य रेमिरे ॥ ६ ॥

केचिच्छृङ्गाणि ध्मान्तः मुखवायुभिः पूरयन्तः भृङ्गैः सह प्रगायन्तः कोकिलैः सह कूजन्तः ॥ ७ ॥

विच्छायाभिः सह प्रधावन्तः कलापिभिर्बर्हिभिः सह नृत्यन्तः साधु यथा तथा गच्छन्तः ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बालकानामन्योन्यं क्रीडामाह—मुष्णान्त इति । अन्योऽन्यस्य शिक्यादीन् मुष्णन्ति ततो तेन मदीयं नीतमिति ज्ञाते आराद् दूरादेव चिक्षिपुः प्राक्षिप्तवन्तः ततोऽपि येषु ते शिक्यादयः पतितास्तेऽपि तान् शिक्यादीन् अन्यांश्च दूराच्चिक्षिपुः ततो हसन्तश्च पुनर्ददुः तेष्व एव ॥ ५ ॥

विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान् ।
विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥ ९ ॥
साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसम्प्लुताः ।
विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान् ॥ १० ॥
इत्थं सतां ब्रह्मसुखानुभूत्या दास्यङ्गतानां परदैवतेन ।
मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः ॥ ११ ॥
यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः ।
स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमतो व्रजौकसाम् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदि दूरं गतः कृष्णो भवति तदा तस्मिन् दूरं गते वनशोभायाः प्रदर्शनार्थमहं पुर्वं स्प्रक्ष्यामीत्यहमहमिकया गगच्छन्तं संस्पृश्य रेमिरे ॥ ६ ॥

तत्र केचिद्बालाः वेणून् वादयन्तो जाताः केचन शृङ्गाणि ध्मान्तः वादयन्तो जाताः केचित्पुनर्भृङ्गैः सह तथैव गायन्तः तथैव कोकिलैः सह कूजन्तः ॥ ७ ॥

केचित्पुनरुपरि गच्छतां वयसां छायाभिः मण्डलाद्याकृतिभिः प्रकर्षेण धावन्तो जाताः हंसैः सह साधु गच्छन्तश्च बकैः सह तथैवोपविशन्तः कलापिभिर्मयूरैः सह नृत्यन्तश्च जाताः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मुष्णन्तः चोरयन्तः शिक्यादीनिति शिक्येभ्य उत्तार्य्य प्रथममेवाश्मादिपात्राणि मुद्रितमुखत्वात् पिपीलिकादिदुष्प्रवेशानि क्वचित्तरुतले कण्टकादिभिरावृत्य स्थापितानीति ज्ञेयं तानेव ज्ञातान् सतः आराद्दूरे चिक्षिपुः तत्रैव विद्रुत्य नेतुं प्रस्थिते सति तत्रत्या बालास्ततोऽपि दूराच्चिक्षिपुः एवमनवस्थया स्वस्वद्रव्यमप्राप्नुवतो बालान् रुदन्मुखानवलोक्य ते एव हसन्तो ददुः ॥ ५ ॥

तं कृष्णं संस्पृश्येति अयमहमितिविद्रुत्य प्रथमं कृष्णमस्पृशं न त्वं न त्वमिति कोलाहलं कुर्वन्तः ॥ ६ ॥

ध्मान्तः वादयन्तः ॥ ७ ॥

वीनां पक्षिणां छायाभिः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शिक्यादीन् शिक्यवेणुविषाणादीन् मुष्णन्तश्चोरयन्तः तान् शिक्यादीन् आरात् दूरे चिक्षिपुस्तत्रत्या दूरस्थाः पुनश्चिक्षिपुः पुनस्तत्रत्या हसन्तः दूराद्ददुः ॥ ५ ॥

वनशोभेक्षणाय वृन्दावनसौन्दर्यदर्शनार्थं दूरङ्गतो भवति तदा तं कृष्णम् ॥ ६ ॥

ध्मान्तः वादयन्तः भृङ्गैः सह प्रगायन्तः ॥ ७ ॥

विच्छायाभिः पक्षिच्छायाभिः सह प्रधावन्तः कलापिभिर्मयूरैः सह नृत्यन्तः ॥ ८ ॥

---

भाषा टीका।

फिर परस्पर में वाको छींका वो चोरे है वाको दूसरों चोर लेहैं जब जानि लेत हैं तब कछु दूर दूसरे दूसरे बालकन के पास फेंकि देत हैं दूसरो भी हंसकर तीसरे के पास फेंकि देवे है ॥ ५ ॥

जौं श्रीकृष्णचन्द्र वन को शोभा देखिवे को दूर चले जांय हैं तब परस्पर में सब बालक आपुस में होड बद के पहिले मैं छूऊंगो, अजी नहीं पहिले मैं छूऊंगो या प्रकार श्रीकृष्ण भगवान् को छूयवे के तांई दौड २ कर खेलत भये ॥ ६ ॥

कभऊं कोऊ तो वेणु बजाय के गावे हैं कोऊ सींग बजावें हैं कोई २ बालक भौंरान के संग डोलत फिरें हैं और गावें हैं कोई कोकिलान के संग वाई के अनुकरण करिके बोले हैं ॥ ७ ॥

और कोई २ आकाश में डोलनवारी पक्षीन के छायाके संग भजे हैं कोई हंसन के पीछे मंद २ गति सों चले हैं कोई बगलान के संग चुपके से आय बैठे हैं और कोई बालक मोरन के साथ नाचन लगे हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कीशबालान् वृक्षशाखासु लम्बमानानि वानरलाङ्गूलानि आकर्षन्तः लाङ्गूलममुञ्चन्तस्तैः सह द्रुमानारोहन्तः विकुर्वन्तो दन्तदर्शनभ्रूविजृम्भादिभिस्तैः सह विकारान् कुर्वन्तः फलाशिषु वृक्षेषु प्लवन्तः शाखायाः शाखान्तरमुद्गच्छन्तः ॥ ९ ॥

प्रतिच्छायाः प्रतिबिम्बानि ॥ १० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नानाविधिस्मिनः श्लोकद्वयेनाभिनन्दति–इत्थमिति । सतां विदुषां ब्रह्म च तत्सुखं चानुभूतिश्च तया स्वप्रकाशपरमसुखेनेत्यर्थः । भक्तानां परदैवतेनात्मप्रवेन नाथेन मायाश्रितानां तु नरदारकतया प्रतीयमानेन सह विजन्हुः कृतानां पुण्यानां पुञ्जा राशयो येषां ते ब्रह्मविदां तदनुभव एव भक्तानामतिगौरवेणैव भजनम् एते तु तेन सह सख्येन विजन्हुः अहो भाग्यमिति भावः ॥ ११ ॥

यद्बहुजन्मभिः कृच्छ्रेण धृत आत्मा मनो यैस्तैरपि ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तैः कीशैः अन्वक्तैः यद्वा कीशात्मजान् वानरशिशून् वृक्षशाखास्वम्बमान लाङ्गूलग्रहणेनाकर्षन्तः सममन्यत ॥ ९ ॥

स्ववेण गिर्यादिनिर्झरेण सम्प्लुताः पूरिताः इति तासां क्षुद्रत्वमुक्तं विहसन्तः उपहसन्तः प्रातस्तासु महादैर्घ्यदर्शनात् किंवा विशेषेण हसन्तः भुजाद्युत्क्षेपणादिना विविधत्वप्राप्तेः । यद्वा, प्रतिबिम्बानि मुखवैकृत्यादिपूर्वकम् अनुकुर्वन्तः ॥ १० ॥

सतां परमस्वरूपसत्ताविर्भाववतां यद्वा ब्रह्मपदसान्निध्यात् तद्विशेषाणाम् उभयथा ज्ञानिनामित्येव अनुभूतिः जडप्रतियोगिस्वप्रकाशवस्तु सैव सुखम् आत्मत्वेन पर्यवसिततया निरुपाधिपरमप्रेमास्पदत्वात् सैव वृहत्तमपर्यायब्रह्माख्या सर्वेषां परमस्वरूपत्वात् तेषां केवलतद्रूपेण स्फुरता दास्यं गतानां दास्यभक्तिमतां ऐश्वर्यादिपूर्णतया ततोऽपि परेण दैवतेन सर्वाराध्येन रूपेण स्फुरता महिमदर्शनार्थं तत्स्फूर्तिद्वयस्य विरलतामाह, मायाधिकारपतितानां तु यत्किञ्चित् नरदारकरूपेण ज्ञानभक्त्योरभावात्र तु तद्रूपेणापि तेन सार्द्धं विजह्रुः सहार्थतृतीयया स्वप्रेम्णा वशीकृत्याऽऽत्मसङ्गितामापादितेन तेन विहारमपि कृतवन्त इत्यर्थः । अतस्तेभ्यः सर्वेभ्यः कृतपुण्यपुञ्जा इति लोकोक्तिः वस्तुतस्तु कृतानां चरितानां भगवतः परमप्रसादहेतुत्वेन पुण्याश्चारवः पुञ्जा येषां त इत्यर्थः "पुण्यं तु चार्वपि" इत्यमरः । अत्र श्रीमन्मुनीन्द्रचरणानामिदं विवक्षितं भगवांस्तावदसाधारणस्वरूपैश्वर्यमाधुर्यस्तत्त्वविशेषः तत्र स्वरूपं परमानन्दः ऐश्वर्यमसमोर्द्धानन्तस्वाभाविकप्रभुता माधुर्यमसमोर्द्धतया सर्वमनोहरं स्वाभाविकरूपगुणलीलादिसौष्ठवं तत्तदनुभवसाधनं च क्रमेण ज्ञानं ज्ञेयं भक्त्याश्रयगौरवमिश्रा प्रीतिः शुद्धप्रीतिश्च एतत्त्रिविधसाध्यसाधनाभावेन मायाश्रितानां स्फूर्त्याभास एव केनाप्यंशेन वस्तुस्पर्शात् "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति न्यायेन "तं ब्रह्म परमं साक्षात् भगवन्तमधोक्षजम् । मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे" इत्यादिवत् अत्र ब्रह्मादित्रयक्रमश्च पूर्ववदेव तत्र भक्त्यैश्वर्यतया स्फूर्तिस्तु तत्पूर्वतः पूर्णा "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः" इति "भक्त्या माम भिजानाति" इत्यन्तर्भूतसर्वज्ञानवृत्तित्वात् शुद्धप्रीतिस्तु ततोऽपि श्लाघिष्यते "अहो भाग्यमहो भाग्यम्" इत्यादिना ततश्च निर्विशेषज्ञानेन स्वरूपानुभवः गौरवमयज्ञानेन ऐश्वर्यानुभवः प्रीतिमयज्ञानेन माधुर्यानुभव इति शुद्धपरममधुरतास्फूर्तिस्तु निर्विशेषज्ञानिषु न विद्यत एव दासेष्वपि गौरवेण सङ्कुचितचित्तत्वा यथेष्टग्रहणाशक्तेर्नातीवोत्पद्यते वस्तुविचारे तु सैव सर्वतः श्लाघ्या "आत्मारामश्च मनुयः" इत्यादिपरिनिष्ठितोऽपि नैर्गुण्य इत्यादिभ्य तथा "ब्रह्मा भवो ऽहमपि यस्य कलाः कलया" इत्याद्यैश्वर्यज्ञानवद्भिरपि श्रीमदुद्धवाक्य भ्रातृस्नेहपरिप्लुत इत्यादि "वृन्दावनमासाद्य नर्दन्तौ युयुधाते परस्परम्" इत्यादिभावेभ्यः तदन्ते स्थिते मां चेतसो गौरवासङ्कुचिततया तत्प्रीतेश्च तदङ्गाङ्गित्वेन पूर्णत्व स्वभावविशेषेण च प्रतिक्षणमपि विकासितया तेन तथा पि पुनस्तादृशतया श्रीकृष्णाचेत आदरोऽपि तद्वदेव तथाविध सखीनामेव रूपगुणसमुद्भूतलीलामाधुर्याणामसाधारणस्फू रित्येव किं वक्तव्यं वारिभाविव तत्र निर्मथ्यमाधुर्या मृतसमुद्भवकर्तृत्वं च स्वप्रीति माधुर्यकृततद्दर्शाभावत्व च दृश्य तत्तच्च न तत्र तत्र दृश्यत इति सर्वेभ्यः कृतपुण्यपुञ्जत्वमस्मा मत्कारयतीति, अन्वक्तैः । यद्वा, पूर्वार्द्धं पूर्ववद्व्याख्याय तदानीं वतारे मायाश्रितानां प्रापञ्चिकानामपि कृपयाश्रितानां मधु नराकारेण स्फुरता स्वयं भगवतेत्यादिव्याख्येयं यद्वा माया श्रितानां तत्कृपाविशेषमवलम्बमानानामिति परममधुरतया स्फुरता तु सार्द्धं विजह्रुरित्यादि योज्यम् ॥ ११ ॥

अहो दूरे तावदान्नामेषां तेन सह निरन्तरविचित्रविहारसौ भाग्यगर्हिमाव्रजवासिमात्राणामपि तद्दर्शनमात्र सौभाग्यमपि प ममहद्भिरप्यन्यैरलभ्यमित्याह–यदिति । यस्य पादसम्बन्धी कुत्रा पतितः पांसुरेकोऽपि साक्षात् स एव किं वा पादपांसुर्यैः कथञ्चित् कश्चिदपि सम्बन्धोऽपीत्यर्थः । किं वा यस्य पाद श्रीवृन्दावनकदम्बादिवृक्षः यद्वा यस्य पादौ पिबन्ति सप्रेम निर्वि क्ष्यन्त इति भक्तविशेषास्तेषां अंशुः दूरतः किरणच्छटापि बहुभि र्जन्मभिस्तत्र यमनियमप्रत्याहारादिक्लेशैर्धृतः स्थिरीकृत आत्मा मनो यैः अतो योगिभिः समाधियुक्तैरपि अलभ्यः लब्धुमशक्य स एव स्वयं भगवान् श्रीकृष्णः येषां दृशोर्विषयः चक्षु साक्षात् दृष्टः स्वयं स्वभावतः स्वरूपतो वा स्थितः स्थित नित्यमस्ति "यच्च किञ्चिज्जगत्सर्वं व्याप्य नारायणः स्थित इतिवत् अहो आश्चर्यं तेषां दिष्टं भाग्यं यद्वा दिष्ट महः प्रभाव इत्यर्थः । यद्वा, दिष्टेन महः गिरिचित्रोत्सवः किं वर्ण वर्णयिष्यते अपि तु वर्णयितुं न शक्यत इत्यर्थः ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कीशा वानराः तेषां बालान् तोकान् तद्विकर्षणेन युद्धादिकौतुकं सम्पादयन्तः बालान् पुच्छान्वा विकुर्वन्तः भ्रूकुट्याद्यारोपणेन गुह्यन्तः ॥ ९ ॥

भेकैर्मण्डूकैः प्रतिच्छायाः प्रतिबिम्बान् प्रतिस्वनान् नद्यादिनिष्ठ ध्वनीन् ॥ १० ॥

दास्यङ्गतानां सतां प्रपन्नानां ब्रह्मसुखानुभूत्या कर परदैवतेन भासमानेन अन्येषां मायाश्रितानां दुर्गा यांश्रितानां नरबालकत्वेन प्रतीयमानेन सह विजह्रुः ॥ ११ ॥

श्रीकृष्णे योगिध्यानविषये श्रीनारायणस्वरू

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रियविषयत्वेन प्रत्यक्षत्वं वदतां निरासोऽनेन विधीयते यत्पादपांसुरिति वशीकृतमनस्कैः यत्पादपांसुरपि अप्राप्यः योगिभिः निरन्तरध्यानपूर्वकमसङ्गकर्मफलभूतास्थितप्रज्ञतालक्षणयोगनिष्ठैः स एव भक्तियोगविरूपैः शुभाश्रयविग्रहो नारायणः न त्वन्यः न शिवब्रह्मादिबन्धमायाधृतरूपः स्वयं श्रीमन्नारायणः परब्रह्म परमात्मादिशब्दवाच्यः अहो महदिदमाश्चर्यं व्रजौकसाम् इति स्वीयदर्शनार्थमात्रं दर्शनहेतुरित्युच्यते दिष्टं दैवं श्रीभगवदानुकूल्यम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कीदृशबालान् वृक्षशाखास्वधो लम्बमानानि वानराणां लाङ्गूलानि आकर्षन्तः तैर्वानरैः सह पुनर्द्रुमानारोहन्तः तैर्वानरैः सह दन्तवदनभ्रूविजृम्भादिभिर्विकारान् कुर्वन्तः पलाशिषु वृक्षेषु वल्गन्तः प्लवन्तः शाखायाः शाखान्तरं गच्छन्त इति यावत् ॥ ९ ॥

भेकैर्मण्डूकैः सह विलङ्घन्तः लङ्घमानाः सरितो यमुनायाः स्रोतेन परिप्लुताः आर्द्रास्सन्तो अन्योन्यप्रतिबिम्बानि हसन्तः प्रतिस्वनान् शपन्तः दूषयन्तश्च ॥ १० ॥

तद्विहारमभिनन्दन्नाह—इत्थमिति द्वयेन । ब्रह्मानन्दानुभवेन महदास्यं गतानां ब्रह्मानन्दानुभवसम्भूतप्रीतिकारितदास्यं गताना-मित्यर्थः। सतां साधूनां परदैवतेनापि मायाश्रितानां प्रकृति-बद्धानां मनुजबालभूतेन श्रीकृष्णेन सहेत्थं विजहुर्विहृतवन्तः तत्र हेतुं वदन् गोपान् विशिनष्टि— कृताः पुण्यानां पुञ्जा राशयो यैस्तथाभूताः पूर्वजन्मनीति शेषः ॥ ११ ॥

कृतपुण्यपुञ्जत्वमेव प्रपञ्चयन् विस्मयते—यत्पादेति । बहुषु जन्मसु कृच्छ्रं कायशोषणात्मकं येषां धौतः विशुद्धः आत्मा मनो येषां तैश्च योगिभिरपि यस्य पादपांसुरप्यलभ्यः स एव भगवान् स्वयमेव येषां व्रजौकसां दृग्विषये स्थितः दृग्विषयतां प्राप्तस्तेषां दिष्टमदृष्टं किं कियदिति वर्ण्यते अहो आश्चर्य-मेतत् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कीदृशबालान् तच्छिशून् ॥ ९ ॥

अथवा निर्झराः प्रतिच्छायाः प्रतिबिम्बानि मुखवैकृत्यादि-पूर्वकमनुकुर्वन्तः ॥ १० ॥

इत्थमिति द्वयम् ॥ ११—२६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कीशा लम्बपुच्छा वानराः तेषां बालान् पुच्छान् विशेषेण कर्षन्तः बालानेव च धृत्वा तैः सह द्रुमानारोहन्तः मुख-विकारांश्च कुर्वन्तो मर्कटवदेव पलाशिषु वृक्षेषु प्लवन्तः उत्प्लुत्य गच्छन्तः ॥ ९ ॥

भूमौ च भेकैर्मण्डूकैः सह सरितः नद्यः प्रस्रवणाः झरणाः सम्प्लुताः तैरेव गता वा स्त्रीलिङ्गपाठश्छिन्त्यः प्रतिच्छाया दर्पणादिप्रतिबिम्बानि प्रतिस्वनान् तटादिषु निर्गतान् प्रतिशब्दान् स्वशब्दानुरूपान् शपन्तश्च भवन्ति ॥ १० ॥

तेषां भाग्यमभिनन्दति—इत्थमिति द्वाभ्याम्। लोकाः त्रिविधाः ज्ञानिनो भक्ताः प्राकृताश्च. तत्र भगवान् सर्वेषां तत्तद्बुद्ध्यनुसारेण स्फुरति "तं यथा यथोपासते तथैव भवति" इति श्रुतेः तत्र सतां ज्ञानिनां ब्रह्मरूपः सद्रूपः सुखरूपः आनन्दरूपः अनुभूतिरूपो ज्ञानरूपः तादृशेन सह ते विजहुरिति बालकानां भाग्यं दास्यङ्गतानां भक्तानां परो नियन्ता स्वामी दैवत-माराध्यः मायाश्रितानां प्राकृतानां केवलं नरबालकः एवं सर्वैः सर्वप्रकारेणापि विभाव्येन सार्द्धं कृतः पुण्यपुञ्जो यैः ते विजह्रुः ॥ ११ ॥

महच्च तेषां भाग्यं यत्तेषां दृष्टयग्रे भगवांस्तिष्ठतीत्याह— यत्पादपांसुरिति । बहुजन्मतपसा जितेन्द्रियैर्योगिभिरपि शरी-रेन्द्रियान्तःकरणशुद्धियुक्तैरपि यत्पादपांसुरलभ्यः स एव एष श्रीकृष्णः येषां बालकानां सर्वेषामेव व्रजस्थितानां वा स्वय-मेव स्थितः न तु तैः प्रार्थितोऽपि अतो व्रजौकसां भाग्यं वाङ्मनोऽगोचरं किं वर्ण्यते ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

कीदृशान् बालान्? वृक्षशाखासु लम्बमानानि वानरलाङ्गू-लानि तैरमुच्यमानैश्च लाङ्गूलैर्दृढं धृतैर्द्रुमानारोहन्तः विकुर्वन्तः भ्रूविजृम्भादिमुखविकारान् कुर्वन्तः तथा तैस्सह पलाशिषु वृक्षेषु प्लवन्त :शाखायाः शाखान्तरं गच्छन्तः ॥ ९ ॥

स्रवेण नद्यादितटेभ्यः परिस्रुतजलेन सम्प्लुता :पूरिताः सरितः सरित् क्षुद्रधाराः प्रतिच्छायाः स्वप्रतिबिम्बान् भुजोत्क्षेपादिभिर्विहसन्तः प्रतिस्वनान् प्रतिध्वनीन् शपन्तः रे रे कस्त्वं ब्रूषे इति . स्वप्रतिध्वनिं श्रुत्वा कुपिताः किमरे मामेव रेरेकारेणाक्षिपसि तस्त्वमद्यैव शीघ्रं म्रिय-स्वेति पुनःपुनरनवस्थया आक्रोशन्तः ॥ १० ॥

एवं तेषां क्रीडां निर्वर्ण्य व्रजौकसामित्युत्तरश्लोकोक्त्या तद्वादिव्रजवासिमात्राणामेव सौभाग्यं सर्वेभ्यः एव सका-शादधिकत्वेन स्तौति—इत्थमिति। अत्र जगति प्रायस्त्रिविधा एव जना गण्यन्ते; ज्ञानिनो भक्ताः कर्मिणश्च. तत्र सतां भक्तिमत्त्वेन सच्छब्देनोच्यमानानां ज्ञानिनां ब्रह्म च तत् सुखं च अनुभूतिश्च तया सहेति कृष्णशरीरस्यैव ब्रह्मसुखानुभू-तित्वं तेनैव सह तेषां विहारात् तस्मात्तदाकारस्य प्राकृतत्व-मात्रवाधाः ज्ञानिमानिनोऽन्ये सच्छब्देन नैवोच्यन्ते इति भेयं दास्यङ्गतानां केवलभक्तिमतां सतां परदैवतेनेष्टदेवेनेति तदानीं-तना व्रजस्थजनभिन्नाः प्रायो दासभक्ता एवेति त एव निर्दिष्टाः मायां वैषयिकं सुखमाश्रितानां कर्मिणां नरदारकेण प्राकृतमनुष्यबालतया प्रतीयमानेन कृष्णेन सहैते विजह्रुरिति

अथाघनामाभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः ।
नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते ॥ १३ ॥
दृष्ट्वाऽर्भकान् कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः ।
अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ज्ञानिनां तदनुभव एव नतु तेन सह विहारः सम्भवेत् भक्तानां गौरवेण तद्भजनमेव नतु विहारयोग्यता कर्मिणां तु न तदनुभवः प्रीत्यभावाच्च तद्भजनमपि कुतस्तेन सह विहार इत्येते तु विजह्नुः विहारैस्तं स्वानन्दपरिपूर्णमपि प्रेमविलासमयमानन्दविशेषं प्रापय्यैव स्वयमपि सर्वतो विलक्षणमानन्दमनुभूवुरित्यर्थः। अतः सर्वेभ्यः सकाशादेते एव कृतपुण्या इति किं वक्तव्यं कृतपुण्यपुञ्जा एवेति लोकप्रतीत्यैवोक्तिर्न तु नित्यसिद्धानां तेषां निखिलेभ्यो ज्ञानिभ्यो भक्तेभ्यश्चोत्कृष्टतमानां तत्र न प्राचीनपुण्यवत्त्वं वस्तुतो हेतुरिति ज्ञेयं पुण्यशब्देन भगवत्प्रियाचरणं वा वक्तव्यमीयं तद्वशीकारातिशयरूपप्रयोजनलाभाय ॥ ११ ॥

तेन सार्द्धं विहारवार्त्ता दूरे तावदास्तां तत्सम्बन्धिवस्तुमात्रमपि दुर्लभमित्याह—यदिति। पांसुरेणोऽपि धूलिकणाः यद्वा यस्य पादपानां विहारास्पदं वृन्दावनीयवृक्षाणाम् अंशुरेणः किरणोऽपि धृतात्मभिरेकाग्रीकृतचित्तैर्लब्धुमनर्हः "नायं सुखापो भगवान्" इति पूर्वोक्तेः स्वयं स्थित इति स्वदर्शनसाधनमनपेक्ष्यैवेत्यर्थः।। दिष्टं भाग्यं यद्वा दिष्टमहः दिष्टस्य तेज उत्सवो वा ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्रीशापाशान् वृक्षस्थवानरलाङ्गूलानि विकर्षन्तः तैः गृहीतलाङ्गूलैः सह द्रुमानारोहन्तः तैरेव सार्कं विकुर्वन्तः तद्वर्णनार्थं वाग्वदनादिविकारान् कुर्वन्तः पलाशिषु वृक्षेषु प्लवन्तः वानरवत् शाखायाः शाखान्तरमुद्गच्छन्तः ॥ ९ ॥

भेकैर्मण्डूकैः प्रतिच्छायाः प्रतिबिम्बानि प्रतिस्वनान् गम्भीरस्वनप्रदेशाद्युद्भवानि तद्वचनानां प्रतिवचनानि ॥ १० ॥

तानभिनन्दति। इत्थमिति द्वाभ्याम्। सतां परभक्तिसाधनभूतज्ञानेच्छूनां ब्रह्मसुखानुभूत्या ब्रह्म बृहत्स्वरूपगुणशक्तिवस्तु च तत्सुखं च अनुभूतिज्ञानस्वरूपं च तया ज्ञेयेनेत्यर्थः। दास्यं गतानां ज्ञानभक्तिसंपन्नानां भगवत्प्राप्त्यर्थं यतमानानां परदैवतेन भजनीयेनेत्यर्थः। मायाश्रितानां मायामोहितानां नरदारकेन सार्द्धं सह कृतः पुण्यपुञ्जो यैस्ते विजह्नुः विहृतवन्तः अत्याश्चर्यरूपं तेषां भगवत्कृपापात्रत्वमिति भावः ॥ ११ ॥

बहुजन्मभिः कृच्छ्रेण धृतः आत्मा मनो यैस्तैर्योगिभिः भगवद्भावर्जितकर्मादिपरैर्यत्पादपांसुरन्वेभ्यः ज्ञानभक्तिसिद्धये कर्मादिपरैस्तु स लभ्य एवेत्यपिशब्दाद्बोध्यम्—

"जन्मान्तरसहस्रेषु तपोदानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
इति वचनात् ॥ १२ ॥

---

भाषा टीका ।

और कोई बालक बँदरान की पूंछ पकरि २ के खैंचे [...] जब वह वृक्षन पर भजके चढ जाय है तब वाके पीछे दौर कर आप भी चढि जाय हैं, कोई बालक कान [...] करिके आंखें घुमाय घुडकें हैं कोई बँदरान के संग कूंदे हैं ॥ ९ ॥

कोई बालक मेडुकान के संग फुदकें हैं जब वे यमुना जी में डूब जाय हैं तब आप भी वाके संग गोता मारें हैं कोई अपनी परिछाहीं के संग खेले हैं और हांसी करे [...] कोई बालक बावडी कुआं में जाकर बडे जोर से [...] बोले हैं जब उसमें से प्रतिध्वनि आवे है तब वाको सुन कर गाली देवे हैं ॥ १० ॥

श्रीशुकदेवजी कहैं हैं कि—हे राजन् ! या प्रकार [...] तिन कूं ब्रह्मानुभव सों सुख देत भये और दास भाव [...] प्राप्त, भक्तन कूं स्वामीपने सों प्राकृत, मनुष्यन कूं [...] मनोहर नरबालकपने सों, नंदव्रजचंद आनंदकंद [...] के अनुगुण सब को सुख देत भये जिन जिनने पुण्य [...] समूह कमाये तिनने ही श्रीकृष्णचन्द्र के संग नानाप्र[...] के सुख विलास करे हैं और खेले हैं ॥ ११ ॥

जिन श्रीकृष्णचन्द्र के चरण कमल की रज अति [...] तपश्चर्यादि करके मनको जीत कर योगिन कूं भी [...] नहीं होय है सोई श्रीहरि सब के दृष्टि के गोचर होत [...] सन्मुख ठाडे रहे हैं अहो ऐसो व्रजवासिन के भाग्य [...] कौन वर्णन कर सके है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सखक्रीडनवीक्षणे न क्षमा यस्य सः, कथम्भूतः ? यस्मा[...] छिद्रं पीतामृतैरपि ततो मृत्युभीतैरमरैः प्रतीक्ष्यते कथं [...] ष्यति कदा वेति। यद्वा, कथम्भूतम् ? सुखक्रीडनं यदन्त[...] निजजीवितेप्सुभिः अमरैः प्रतीक्ष्यते चिचिन्त्यते पीतामृतैरपि पुनर्निजजीवितेप्सु[...] अयं भावः नामृतपानमात्रेण जीवनं सफलं भवति [...] भगवल्लीलानुस्मरणेनेति तदेव नित्यमन्तश्चिन्त्यत इति ॥ [...]

एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः ।
प्राणे गते वर्ष्मसु का नु चिन्ता प्रजासवः प्राणभृतो हि ये ते ॥ १५ ॥
इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम् ।
धृत्वाऽद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णप्रमुखानर्भकान् दृष्ट्वा स इति व्यवस्य निश्चित्याजगरं वपुर्धृत्वा तेषां ग्रसनाशया पथि व्यशेतेति तृतीयेनान्वयः कंसेनानुशिष्टः प्रहितः बकी पूतना, कथं व्यवस्य? तदाह–अयं त्विति सार्द्धेन । मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं ससैन्यं वत्सवत्पालसहितं हनिष्यामि ॥ १४ ॥

ननु, तथापि व्रजस्यास्त्यवशिष्टैरत्वस्याह–एत इति । तिलापः कृतास्तिलोदकतया कल्पिताः वर्ष्मसु देहेषु प्रजा एवासवो येषां ते तथा ॥ १५ ॥

स योजनायामं योजनप्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिवत्पीवरं च व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिंस्तत् ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अघेति भिन्नोपक्रमे प्रस्तुतरसोपघातकत्वात् अभ्यपतत्सहसाभिमुखमाजगाम ततश्च तेषां सुखक्रीडनवीक्षणाक्षमो ऽभूदिति शेषः । अमृतपैः यद्वा पीतं सुखेनात्मसात्कृतम अमृतं मोक्षो यैः मुक्तैरपीत्यर्थः । कथम्भूतैः श्रीभगवल्लीलादर्शनार्थं निजजीवितप्सुभिरं जिजीविषुभिः अत एवाऽमरैः स्थूलसूक्ष्मदेहद्वयनाशरहितैः लीलाविग्रहतया मृत्युशून्यैरिति वा मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते प्रतीक्ष्यते अन्यत्समानम् ॥ १३ ॥

दृष्ट्वेति त्रिकम् । अथास्मत्सोदरनाशाद्धेतोः अत्र ममेति पाठः सर्वसम्मतः चित्सुखसम्मतश्च तेषां वाक्यभेदादपौनरुक्त्यम् ॥ १४ ॥

यद्वा तयोर्द्वयोर्निमित्तयोः तद्वैरग्रहणार्थमित्यर्थः नष्टसमाः मृतप्रायाः ॥ १५ ॥

हि यतः व्यवस्य व्यवसायविशेषेण अस्पन्दत्वादिना शयनेन यतः खलः वञ्चनापूर्वकहिंसकः तादृशबालानां ग्रसने ... ॥ १६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तेषां गोपानां भगवता सह सुखेन क्रीडनस्य वीक्षणे अक्षमः क्षमारहितः यदन्तं यस्याघासुरस्यान्तः मरणं अन्तःकरणेन ॥ १३ ॥

मम तयोर्द्वयोर्बकीबकयोः अर्थे इति शेषः । सबलं वत्सबालसहितं बलदेवस्य तद्दिने वनमध्ये अगमनात् ॥ १४—१६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं विहरत्सु अघाख्यो महानसुरस्तेषां सुखेन यत् क्रीडनं तस्य वीक्षणे न विद्यते क्षमा यस्य तथाभूतोऽभ्यपतत् अभिमुखमाजगाम; तदेव प्रपञ्चयन्नघासुरस्य देवानामपि मृत्युशङ्कावहत्वमभिसन्धिविशेषञ्चाह–नित्यमिति सार्द्धद्वयेन । पीतमसृतं यैस्तैरमरणभयरहितैरपीति भावः । अमरैर्निजजीवितकांक्षिभिः मृत्युभयरहितानप्यस्मान् हन्तुं समर्थमघासुरं हत्वा अस्मज्जीवितं कदा सुप्रतिष्ठितं कुर्यादित्येवं स्वजीवितमिच्छद्भिर्नित्यं यदन्तः यस्याघासुरस्यान्तो नाशः कदा वा स्यादिति प्रतीक्ष्यते ॥ १३ ॥

स बकीबकयोरनुजोऽघासुरः कंसेन अनुशिष्टः आदिष्टः कृष्णो मुखं प्रधानो येषां तानर्भकान् दृष्ट्वेति व्यवस्य निश्चित्य आजगरं बृहद्वपुर्धृत्वा तेषां ग्रसनाय पथि व्यशेत इति तृतीयेनान्वयः कथं व्यवस्य? इत्यत आह–अयन्त्विति सार्द्धेन । द्वयोस्तयोः रामकृष्णयोर्मध्येऽयं कृष्णस्तु मम सोदरयोः पूतनाबकयोर्नाशं कृतवानिति तथाऽत्र एनं बलरामेण सहितं हनिष्यामि बलशब्दोऽन्येतरगोपबालानामप्युपलक्षणार्थः । एते इत्युत्तरानुगुणयात् ॥ १४ ॥

यदैते कृष्णादयः मत्सुहृदोर्मत्सोदरयोस्तिलापः कृताः तिलोदकवत्तृप्तिहेतुत्वेन एतेषां हननमेव मत्सुहृदोस्तिलाप इति भावः । तदा सर्वे व्रजौकसो नष्टप्रायाः तथा हि प्राणे गते निर्गते सति वर्ष्मसु शरीरेषु का वानुचिन्ता न हि प्राणे गते शरीरं क्षणमपि स्थातुं शक्नोति किन्तु नश्यत्येव प्राणभृतः प्रजाः पुत्रा एवासवः प्राणा येषां तथाभूता हि प्राणस्थानीयेषु पुत्रेषु मया हतेषु व्रजौकसः सर्वे स्वयमेव नंक्ष्यन्तीति तदर्थं न मया यत्नः कार्य इति भावः ॥ १५ ॥

इतीत्थं निश्चित्य स दुरात्मा अघासुरः रामकृष्णादीन् ग्रसितुमिच्छया आजगरं वपुर्धृत्वा पथि व्यशेत शयितवान् वपुः कथम्भूतम्? बृहद्विपुलम्, तदेवाह–योजनप्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिवत्स्थूलं च व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिन् ॥ १६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं क्रीडायां मध्ये अघासुर: समागत इत्याह—अथेति एक त्रिंशतिभिः । तस्य मुक्तान्ता कथा निरूप्यते अघोऽन्वर्थनामा तेषां बालकानां सुखक्रीडनस्य वीक्षणेऽपि अक्षमो यस्य नित्यं सर्वदा यदन्तः अघासुरनाशः अमरैः प्रतीक्ष्यते, तत्र हेतुर्निज-जीवितेप्सुभिरिति यद्यपि ते पीतामृताः अतोऽत्यन्तं दुष्टः अमृतादीनामपि वस्तुसामर्थ्यनाशकः ॥ १३ ॥

अर्भकान् बालकान् कृष्ण एव प्रमुखो येषां कंसेन प्रेषितः स प्रसिद्धः बकी पूतना बकश्च तयोरनुजः तस्य सङ्कल्प-माह—अयमिति । तु इति पक्षान्तराणि व्यावर्तयति अयं तु भगवान् मे सोदरयोर्भ्रात्रोर्नाशकर्ता न कर्मकालादि अतस्त-योर्द्वयोरर्थे उपद्रवं करिष्यामीति ॥ १४ ॥

ततो बालकानामप्युपद्रवो भविष्यतीत्याह—एते इति । मत्सु-हृदोः मद्भ्रात्रोः तिलापःकृताः तिलोदकप्रायाः मृतानां तृप्ति-हेतवः तदा व्रजौकसः गावः स्त्रीपुरुषाश्च नष्टसमाः नष्टप्राया यथा प्राणे गते वर्ष्मसु देहेषु गमनार्थे का चिन्ता बाल-काश्च व्रजवासिनां प्राणरूपाः यतः प्राणभूतः प्रजासवः प्रजैव असवः प्राणा येषामित्यध्यवसायं कृत्वा ॥ १५ ॥

आजगरम् अजगरवत् स्थूलं वपुर्भूत्वा पथि व्यशेत योजन-मात्रमायामः विस्तारो यस्य वपुषः महाद्रिवत् पर्वतवत् स्थूलं ग्रासार्थमत्यद्भुतं व्यात्तं गुहावदाननं यत्र ग्रसनार्थमेव शयनं कृतवान् दया तु नास्ति यतः खलः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं तद्विहारस्य प्रतिक्षणपरमानन्दवर्द्धकत्वात् स्वतः समाप्त्यसम्भवमाकलय्य समाप्तिश्च विना भोजनपानादिकं न सिद्ध्येदिति प्रात्यहिकभोजनसमयाख्यं वाचयार्यं लीलाशक्त्यैव तद्विच्छेदार्थं दुष्टसंहारस्याप्यवश्यकर्तव्यतया तदानीमेवान्तर्यामि प्रेरणावशात् कश्चिदघासुरो नाम तेषामभिमुखमानिन्य इत्याह अथेति । सुखक्रीडनस्य वीक्षणमपि न क्षमत इति सर्वसुख-दमपि तेषां क्रीडनं तस्य दुःखदमभूदिति भावः । यदन्तः यस्याघासुरस्यान्तरं मरणसाधकच्छिद्रं पीतामृतैरपि ततो मृत्यु-भीतैरमरैः कथं मरिष्यतीति प्रतीक्ष्यते । यद्वा, यत्सुखक्रीडनम् अन्तर्हृदये प्रतीक्ष्यते प्रतिक्षणमीक्ष्यते चिन्त्यते इत्यर्थः । पीता-मृतैरपि कृष्णलीलामृतपानं विना जीवितं वस्तुतो जीवितं न भवति यतस्तस्मान्निजजीवितेप्सुभिरित्यर्थः ॥ १३ ॥

कृष्णमुखान् कृष्णादीन् दृष्ट्वा सः अघासुरः इति व्यवस्य निश्चित्य तेषां ग्रसनाशया पथि व्यशेतेति तृतीयेनान्वयः बकीपूतना व्यवसायमाह—अयमित्यर्धेन सार्द्धेन । अयं कृष्णः मम सोदरयोर्नाशकृत् अथ मम एव तयोर्द्वयोः पिण्डदानार्थमिति शेषः । उत्तरश्लोकार्थदृष्ट्या कल्प्यः सबलं ससैन्यं हनिष्यामि ॥ १४ ॥

एते कृष्णादयो बाला मत्सुहृदोर्बकीबकयोर्यदि तिलापः प्रेततर्पणार्थकतिलोदकरूपाः तदा व्रजौकसो नन्दादयः वर्ष्मसु देहेषु अनष्टेष्वपि का चिन्ता न कापीत्यर्थः । ये प्राणिसमाः प्रजा अपत्यान्येव असवः प्राणा येषां ते अतः स्वत एव मरिष्यन्तीत्यर्थः ॥ १५ ॥

योजनायामं योजनप्रमाणेन दैर्घ्येण युक्तं महाद्रिवत् पीवरं व्यात्तं प्रसारितं गुहातुल्यमाननं यस्मिन् तत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ पीतामृतैरपि निजजीवितेप्सुभिर्निजजीवितसाफल्ये-प्सुभिः अमरैः यदन्तर्हृदि नित्यं प्रतीक्ष्यते तस्य तेषां सुख-क्रीडनस्य वीक्षणे नास्ति क्षमा यस्य सः अघनामा असुरः अभ्यपतत् अभिमुखमपतत् ॥ १३ ॥

तस्य तत्सुखक्रीडनवीक्षणाक्षमत्वे हेतुमभिमुखपतने प्रयो-जनं चाह—दृष्ट्वेति त्रिभिः । अथानन्तरं स अघासुरो बालान् दृष्ट्वा अयं मे सोदरनाशकृदेनं हनिष्ये इत्यादि व्यवस्य बृहद्वपुः कृत्वा पथि व्यशेतेति त्रयाणामन्वयः । कंसानुशिष्टः कंसेन प्रयोजितः बकीबकयोः पूतनाबकयोः अनुजः अयं कृष्णः मे सोदर-नाशकृत् अतो द्वयोस्तयोः सोदरयोः स्थाने एनं हनिष्ये नन्वन्य-बलिष्ठेभ्यो रामादिभ्यो भयं भविष्यतीत्यत आह, स बलं सह सैन्यमिति ॥ १४ ॥

ननु, तथापि व्रजौकसोऽवशिष्येरन्नित्याह—एते इति । यदा एते कृष्णप्रभृतयो बाला मत्सुहृदोस्तिलापः कृतास्तदा व्रजौकसो नन्दाद्याः नष्टसमाः मृततुल्याः अथवा नष्टा समा संवत्सरा येषां ते मृता एव भविष्यन्तीत्यर्थः । प्राणे गते वर्ष्मसु नष्टत्वे का नु चिन्ता हि यतो प्राणभूतस्ते प्रजासवः प्रजा एव असवो येषां ते तथाभूताः अतः तेपि मत्सुहृदोर्मम भगिनीभ्रात्रोस्तिलापःकृताः तिलोदकत्वेन कल्पिताः ॥ १५ ॥

स अघासुरः इति व्यवस्य निश्चित्य योजनायामं योजन-प्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिरिव पीवरं स्थूलं च व्यात्तं प्रसारितं गुहावदाननं यस्मिन् तत् बृहद्विपुलं वपुः कृत्वा सबलकृष्णग्रहणाशया पथि व्यशेत शयितवान् ॥ १६ ॥

---

भाषा टीका ।

या प्रकार सबरे बालक नित्य वन में खेले हैं इतने में एक दिन अघासुर नाम दैत्य इन ग्वाल बालों को सुख विहार देखिकर कुढ मरयो और सब कूं मारबे की इच्छा सों आय पौंचो जाके भय सों अमृत पीवनवारे अमर सबरे देवगणन भी अपने जीवने की इच्छा सों दिन रात वाके मरबे की बाट देख्यो करते हैं ॥ १३ ॥

कंस को पठायो पूतना और बकासुर को छोटो भैया अघासुर दैत्य श्रीकृष्णादि बालकन कूं देखकर विचारने लगो कि येही कृष्ण हमारे सोदर को नाश करन वारो है तासों बालकन सहित याकूं अवश्य मैं मारूंगो ॥ १४ ॥

धराधरोष्ठो जलदोत्तरोष्ठो दर्याननान्तो गिरिशृङ्गदंष्ट्रः।
ध्वान्तान्तरास्यो विततध्वजिह्वः परुषानिलश्वास दवेक्षणोष्णः॥ १७॥

दृष्ट्वा तं तादृशं सर्वे मत्वा वृन्दावनश्रियम्।
व्यात्ताजगरतुण्डेन ह्युत्प्रेक्षन्ते स्म लीलया॥ १८॥
(१)अहो मित्राणि! गदत सत्त्वकूटं पुरः स्थितम्।
अस्मत्संग्रसनव्यात्तव्यालतुण्डायते न वा॥ १९॥
सत्यमर्ककरारक्तमुत्तराहनुवद्घनम्।
अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम्॥ २०॥
प्रतिस्पर्द्धेते सृक्किभ्यां सव्यासव्ये नगोदरे।
तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत॥ २१॥
आस्तृतायाममार्गोऽयं रसनां प्रतिगर्जति।
एषामन्तर्गतध्वान्तमेतदप्यन्तराननम्॥ २२॥
दावोष्णखरवातोऽयं श्वासवद्भाति पश्यत।
तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत्॥ २३॥

(२)अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति।
क्षणादनेनेति बकार्युशन्मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः॥ २४॥

### भाषा टीका।

और अघासुर अपने मनमें विचारन लग्यौ, कि कृष्ण सहित इन सबन कूं मारकर जब में अपने भैया बहिन कूं निलांजली दूंगो तब ये सबरे बृजवासी अपने आप मरि जांयगे जैसे प्राण के निकसि जायवे पै देह तौ आप नष्ट होजावे है। या प्रकार प्राणधारी पुरुषन के पुत्र ही प्राण है॥ १५॥

ऐसो निश्चय करिकें बडे पर्वत की नाईं मोटो एक योजन को लंबो अजगर सर्प को अद्भुत शरीर बनाय गुफा सदृश मुख फैलाय वह दुष्ट सबकूं निगलिवे की इच्छा सूं गैल में ही आय बैठ्यौ॥ १६॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

अद्भुतमिति यदुक्तं तद्दर्शयितुं विशिनष्टि—धरायामधरोष्ठो यस्य सः जलदेपूत्तरोष्ठो यस्य सः दर्याविवाननस्यान्तौ सृक्किणी यस्य सः गिरेः शृङ्गाणीव दंष्ट्रा यस्य सः ध्वान्तवदन्तरास्यं यस्य सः विततध्वजिह्वा यस्य सः परुषानिलवच्छ्वासो यस्य सः दववदीक्षणयोरुष्णः दाववद्दृष्टिरित्यर्थः परुषानिलश्वासश्चासौ दवेक्षणोष्णश्च तथा॥ १७॥

वस्तुतोऽजगरमेव व्यात्ततुण्डं दृष्ट्वा वृन्दावनस्य श्रीः सम्पदेवेति भ्रान्त्या मत्वा विपरीतं व्यात्ताजगरतुण्डसादृश्येनोत्प्रेक्षितवन्तः॥ १८॥

उत्प्रेक्षामेव प्रश्नोत्तराभ्यामाह—अहो इति। सत्त्वकूटं सत्त्वाभासमिदं वा न वा तत्राप्यस्मत्सङ्ग्रसनाय व्यात्तं यद्व्यालतुण्डं तद्वदाचरति वा न वा॥ १९॥

निश्चितं तथैवेत्याहुः—सत्यमिति। अर्ककरैरारक्तं घनमुत्तरोष्ठवत्पश्यत तस्य घनस्य प्रतिच्छाययाऽरुणं रोधः स्थलमधरोष्ठवत्पश्यतपश्यतेति सर्वत्रान्वेति॥ २०॥

सृक्किभ्यामोष्ठप्रान्ताभ्यां प्रतिस्पर्द्धेते तुल्यतया वर्तेते नगोदरे गिरिदर्यौ एतास्तुङ्गशृङ्गालयस्तस्य दंष्ट्राभिः स्पर्धमानाः॥२१॥

आस्तृतायाममार्गो विस्तृतो दैर्घ्यवान्मार्गः प्रतिगर्जति प्रतिस्पर्द्धते एषां शृङ्गाणामन्तर्गतं मध्यगतं ध्वान्तमेतत् अन्तराननम् आननस्य मध्यं प्रतिगर्जति॥ २२॥

दावेनोष्णः खरो वातोयं तेन दावाग्निना दग्धानां सत्त्वानां यो दुर्गन्धः स एव सर्पान्तर्गतामिषगन्धवद्भाति॥ २३॥

एवं सन्तमेवाजगरमन्यथोत्प्रेक्ष्य निर्भया ययुः किं ग्रसिता ग्रसिष्यति अनेन श्रीकृष्णेन हन्त्रा बकारेरुशत्कमनीयं मुखम्॥ २४॥

(१) अहो विचित्रं मित्राणि। (२) विशन्तु सर्वे ग्रसिताः किमस्माद् इति च वीर०।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पर्वेति पुरुषेति वा पाठः परुषानिलवत् श्वसाभ्यां दववह्नीक्षणाभ्यां च तेषु वा उष्णः ॥ १७ ॥

हि निश्चितं लीलयैवेति तयोत्प्रेक्षणमपि तेषामेका क्रीडेत्यर्थः ॥ १८ ॥

गदितऽपमेवाहुः-सत्यैत्यादिना । अस्मदित्यादौ यदग्रभाग इति शेषः ॥ १९ ॥

गदतेति केषाञ्चित्प्रश्नं केचिदनुमोदमाना आहुः—सत्यमिति युग्मकेन । यथार्थं यदर्थेत्यर्थः । तदेवाहुः–अर्केत्यादिना गन्धवदित्यन्तेन । अर्ककरा रक्तामिति एषां पश्चिमाभिमुखा गतिस्तस्य पूर्वाभिमुखा स्थितिरिति गम्यते प्रातस्त्यत्वात् उत्तरेत्यत्र पुंवद्भाव आर्षः ॥ २० ॥

एताः साक्षाद्वर्तमानाः एतमग्रेऽपि तस्य व्यालतुण्डस्य दंष्ट्राभिस्तु स्पर्द्धन्ते इति लेख्ये टीकायां स्पर्द्धमान इति लेखकभ्रमात् ॥ २१ ॥

आयामयुक्तो मार्गः आयाममार्गः स चास्तृत इति ध्वान्तं छायात्मकं ध्वान्ताननमध्ययोः कालवर्णत्वात् साम्यम् ॥ २२ ॥

भातीति पश्यत इति मध्ये मध्ये विस्मयाय ॥ २३ ॥

इति एतद्वदन्तः उद्धसन्तः तस्य खलत्वारोपणेन किं वा स्वयं हसत एव विशेषतश्च श्रीकृष्णमुखं निरीक्ष्योच्चैर्हसन्त इत्यर्थः। किं वा भवतात्रावहितेन भाव्यमिति नर्मणा विज्ञापनार्थमिव करताडनैरिति करतालीः कृत्वेत्यर्थः । तच्च लोकरीत्या सर्पापसारणार्थमिव निर्भयत्वेन निजवीरदर्पप्रकटनार्थमिव च ययुः अग्रतो ऽधावन्नित्यर्थः ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रुषा क्रोधेन अनिल इव श्वासः दवौ इव ईक्षणौ चोष्णौ यस्य सः ॥ १७ ॥

वृन्दावनशोभां तद्विशिष्टं कुञ्जं मत्वा इत्यपह्नुतिः व्यात्ताजगरतुण्डेन दृष्टान्तेन उत्प्रेक्षन्ते उत्प्रेक्षीकुर्वन्ति लीलया कौतुकेनेत्यर्थः ॥ १८ ॥

सत्त्वकूटम् अस्मत्सङ्ग्रसनाय व्यात्तं प्रसारितं यद्व्यालतुण्डं तद्वदाचरति नवेति गदत कथयत उपमासंशयश्च ॥१९॥

अर्ककरैः आरक्तं घनं मेघं उत्तराहनुवत् उत्तरोष्ठवत् तत्प्रतिच्छायया उत्तरोष्ठायमानघनप्रतिबिम्बेनारुणं रोधः अधराहनुवत् अधरोष्ठवत् वर्त्तते तद्द्वयं सत्यं वा नवेति गदत इत्यन्वयः। हनुशब्दस्य स्त्रीत्वमार्षम् उपमा हेतुसंसृष्टिः ॥ २० ॥

वामदक्षिणे पर्वतमध्ये सृक्किभ्याम् ओष्ठप्रान्ताभ्यां प्रतिस्पर्द्धेते इति पश्यत तुङ्गा उच्चा शृङ्गपङ्क्तयः तद्दंष्ट्राभिः सर्पदंष्ट्राभिः प्रतिस्पर्द्धन्त इति पश्यत ॥ २१ ॥

मार्गोऽयं रसनां प्रतिगर्जति रसनां व्यपदिशति अन्तर्गत ध्वान्तम् एवामिति मुखरसनादीनाम् एतत्पुरोवर्त्ति अपहुत्युपमे ॥ २२ ॥

दावोष्णेति अत्रोपमैवापह्नुत्युत्तरा स्पष्टम् अहो मित्राणीत्यादि पञ्चसु अपह्नुतिप्राणिते उत्प्रेक्षोपमे श्रेये सत्यं विश्वादिभिः ॥ २३ ॥

वकारैः श्रीकृष्णस्य उशत् कमनीयम् ॥ २४—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अद्भुतत्वमेव दर्शयितुमसुरं विशिनष्टि- धरायामधरोष्ठो यस्य जलदेषूत्तरोष्ठो यस्य दर्यौ गिरिकन्दराविव आननस्यान्तौ सृक्किणी यस्य गिरेः शृङ्गाणीव दंष्ट्रा यस्य ध्वान्तोऽन्धकारो यस्मिन् अस्तीति ध्वान्तवत्तदन्तरास्यं यस्य दीर्घीभूतमहाध्वना ...स्य परुषानिलवच्छ्वासो यस्य सः दावाग्निरिवेक्षणे यस्य दाहकहार्ष्टिरित्यर्थः । परुषानिलश्वासशब्दोत्तरस्य सोरुत्वे "हशि च"इति यत्वे तस्य "लोपः शाकल्यस्य"इति लोपः दवेक्षणोष्णं कर्मधारयो वा ॥ १७ ॥

वस्तुतोऽजगरमेव व्यात्ततुण्डं वृन्दावनस्य श्रीः सम्पदेषेति भ्रान्त्या मत्वा विपरीतं व्यात्ताजगरतुण्डसादृश्येन उत्प्रेक्षितवन्तः ॥ १८ ॥

तेषामुत्प्रेक्षामेव प्रश्नोत्तराभ्यामाह–अहो इति पञ्चभिः। अहो मित्राणि सुहृदः पुरः स्थितमिदं वस्तु सत्त्वकूटं सत्त्वसद्भासमानं वा तत्राप्यस्मान् संग्रसितुं व्यात्तव्यालतुण्डवदाचरति न वा ॥१९॥

एवमुक्ताः केचित्तथैवेत्याहुः–सत्यमिति । अर्ककरैरारक्तं घनं मेघमन्तरोष्ठवत्पश्यत, तस्य घनस्य प्रतिच्छायया अरुणं रोधः कूलमधरोष्ठवत्पश्यतेति सर्वत्रान्वेति ॥ २० ॥

सव्यासव्यनगयोर्वामदक्षिणगिर्योर्गह्वरे दर्यौ सृक्किभ्यामोष्ठप्रान्ताभ्यां प्रतिस्पर्द्धेते तुल्यतया वर्त्तेते सव्यासव्यगिर्योस्तुङ्गशृङ्गाणामालयः पंक्तयस्तस्य दंष्ट्राभिः स्पर्द्धन्ते इति वचनविपरिणामे वान्वयः ॥ २१ ॥

आस्तृतो विस्तृतश्चासावायाममार्गो दैर्घ्यवान्मार्गः स तस्य रसानां जिह्वां प्रतिगर्जति प्रतिस्पर्द्धते एषां शृङ्गाणामन्तर्गतमेव ध्वान्तमप्यन्तराननमास्यमध्यं प्रतिगर्जति ॥ २२ ॥

दावाग्निनोष्णः खरः कठिनश्च वातः श्वासवत् भाति तेन दावाग्निना दग्धानां सत्वानां जन्तूनां दुर्गन्धः सत्त्वान्तर्गतामिषगन्धवत् भाति ॥ २३ ॥

एवं सत्यमेवाजगरसत्त्वमेवोत्प्रेक्ष्य निर्भया ययुरित्याह नुनं विशन्तीति । सर्वं वत्सा वत्सपाश्चात्र विशन्त्वस्मान् ग्रसिता किं ग्रसिष्यति किम् ? तथा चेद्ग्रसिष्यति बकवत् बकासुरवदयमनेन श्रीकृष्णेन क्षणाच्छिनत्क्ष्यति नाशं गमिष्यति इतीत्थं बकारुशत्कमनीयं मुखं विलोक्य उच्चैर्हसन्तः करताडनैरुपलक्षिता ययुः करताडनानि कुर्वन्तो ययुरित्यर्थः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य रूपमनुवर्णयति–धरेति । धरायां भूमौ अधरोष्ठं यस्य जलदेषु मेघेषु उत्तरोष्ठं यस्य दरीवत् कन्दरवत् आननान्तौ

श्रीमद्वल्लभाचार्य्यकृत सुबोधिनी।

मुखमध्यं यस्य गिरिश्रृङ्गवत् दंष्ट्रा यस्य ध्वान्तयुक्तम् अन्तरास्यं यस्य विनता अध्ववन्मार्गवत् जिह्वा यस्य परुषः स्पर्शो दुःसहः योऽनिलस्तद्वत् श्वासः ववयत् दवानलवत् ईक्षणयोः उष्णस्पर्शो यस्य श्वासेन सहितः ईक्षणे उष्णो वा तादृशमपि दृष्ट्वा बालका न भीताः किन्तु स्नेहत्वेनैव कल्पितवन्तः॥ १७॥

अत एव तेषां न भयं जातम् अनङ्गाधाभावात् इत्याशयेनाह इत्थंति। तं तादृशं दृष्ट्वा वृन्दावनश्रीरेवैषेति मत्वा चर्णं ध्यात्वा भवति न वेति अजगरतुण्डतुल्यत्वेन श्रियमेवोत्प्रेक्षितवन्तः भीरेषा परमजगरतुण्डवत् दृश्यत इति स्मेति प्रमिद्धिः तस्य भयाभावात् लीलया यत्किञ्चित्कल्पयन्ति स्म॥ १८॥

कल्पनामेवाह—पञ्चभिः। अहो मत्याश्चर्यं मित्राणि सर्वाणि गदत सम्बोधनं वा सत्त्वकूटं कपटमत्वं पुरःस्थितमग्रे वर्त्तमानमस्मत्सङ्ग्रसनार्थमेव व्यात्तं प्रसारितं व्यालतुण्डमिवाचरति न वेति निर्णयो वक्तव्य इत्यर्थः॥ १९॥

तत्र न वा पक्षं दूरीकृत्य उत्प्रेक्षार्थं व्यालतुण्डत्वमेव सम्पादयन्ति—सत्यमिति। अर्ककरैरारक्तमुत्तराहनुवत् घनं पश्यत अधराहनुवद्रोधश्च तस्यैवारक्तमेघस्य प्रतिच्छायया अरुणवर्णम्॥ २०॥

सृक्किण्यौ कृत्वा सव्यासव्ये पर्वतकन्दरे प्रतिस्पर्द्धेते वस्तुतः कन्दरैव सृक्किणीव दृश्यते तुङ्गानां श्रृङ्गाणामालयः पङ्क्तयोपि तद्दंष्ट्राभिः प्रतिस्पर्द्धन्ते नात्र सन्देहः पश्यत॥२१॥

आस्तृतः आ समन्तात् यामसार्गः योजनपरिमितो रसनां प्रति गर्जति रसनावद्भासते गर्जनादिकं तुल्यत्वाय एषां श्रृङ्गाणाम् दंष्ट्राणामन्तर्गतमपि ध्वान्तमन्तराननं प्रति गर्जति॥ २२॥

दाववत् दवानलवत् उष्णः खरश्च वातोऽयं दावानलेन वा उष्णः श्वासवद्भाति पश्यत विचारयत तत्र दावानले दग्धानां सत्त्वानां दुर्गन्धः अन्तरा उदरे यदामिषमपक्वमांसं येन भक्षितं तस्य गन्धवत् भाति॥ २३॥

तर्ह्येवं सति किं कर्तव्यमित्याशङ्क्य गन्तव्यमेवेति निर्धार्य बाधकं दूरीकुर्वन्ति—अस्मानिति। अत्र प्रविष्टानस्मान् किमयं ग्रसिष्यति तथा चेद्बकवत् क्षणादेव नाशं यास्यति, अनेनैव कृष्णेनैव एष अघ इति निश्चित्य बकारेर्भगवतः उशत् कमनीयं मुखं वीक्ष्य ऊर्ध्वं हसन्तः करताडनैः सहिताः प्रवेष्टुं ययुः। भगवान् पुनः मा प्रविशन्तु सर्पोऽयं भक्षणार्थं स्थित इति यावद्वदति तदर्थं च यावन्मनसि विचारयति तावदेव प्रविष्टा इति श्लोकद्वयसम्बन्धः॥ २४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

धरायामधरोष्ठो यस्य सः जलदे उत्तरोष्ठो यस्य सः दर्य्यौ कन्दराविवाननस्यान्तौ सृक्किणी यस्य सः ध्वान्तमन्तरास्ये मुखमध्ये यस्य सः विस्तृतः पन्था इव जिह्वा यस्य सः परुषानिलवत् श्वासो यस्य सः दवाग्निवदीक्षणयोरुष्णो यस्य स च स च सः॥ १७॥

तमघासुरं दृष्ट्वा महासर्पबुद्ध्या कांश्चित् पलायमानानाश्वासयन्तः सर्वेऽन्ये मत्वेति। ननु, रे मूढाः! एतावत्प्रमाणः सर्पो न सम्भवतीत्यतो वृन्दावनशोभाविशेषाधायको जन्तुविशेषो विधात्रैव रचितः किन्तु महासर्पप्रसारिततुण्डाकार इति निश्चित्य व्यात्तं प्रसृतं यदाजगरतुण्डं तेन सह उत्प्रेक्षन्ते उपमिमते लीलयेति भयाभावः सूचितः॥ १८॥

कांश्चिन्मुख्यान् सखीन् सम्बोध्य स्वनिश्चयस्य प्रामाण्यार्थं पृच्छन्ति—अहो इति। सत्त्वकूटं निश्चलः प्राणिविशेषः "कूटोऽस्त्रीनिश्चलं राशौ" इति। मेदिनी पूर्वनिपाताभाव आर्षः। यद्वा गिरिश्रृङ्गवाचककूटशब्देनोपमितं व्याघ्रादिभिरित्यनेन समासः अस्माकं सङ्ग्रसनार्थमिव व्यात्तसर्पतुण्डवदाचरति न वा॥ १९॥

सत्यमिति यथा यूयं मन्यध्वे तथैवेति ते प्रत्याहुः—अर्ककरैरारक्तं घनमेतस्योत्तरोष्ठवत्पश्यत तस्य घनस्य प्रतिच्छायया अरुणं रोधःस्थलमधरोष्ठवत् पश्यत हन्वोरुत्तराधरत्वासम्भवत्वादत्र हनुशब्देनोष्ठद्वयं लक्ष्यते॥॥ २०॥

सृक्किभ्यामस्य ओष्ठप्रान्ताभ्यां प्रतिस्पर्द्धेते तुल्यतया वर्तेते नगोदरे गिरिदर्य्यौ एता इति तर्जन्या दर्शयन्ति तस्य सर्पतुण्डस्य दंष्ट्राभिः स्पर्द्धन्ते॥ २१॥

आस्तृतायामः विस्तृतदैर्घ्यः मार्गः पन्थाः रसनां जिह्वां प्रति-रसनया सह गर्जति स्पर्द्धते एषां श्रृङ्गाणां मध्यगतमन्धकारं कर्तृ एतदपि अन्तरानन एतस्य आननमध्यं प्रतिगर्जति स्पर्द्धते॥ २२॥

तेन दावाग्निना दग्धानां सत्त्वानां यो दुर्गन्धः स एव सर्पान्तर्गत दुर्गन्धवद्भाति॥ २३॥

मिलिताः सर्वे किञ्चित्सभयमाहुः—अस्मानिति। अयं यदि सत्य एव सर्पः स्यादिति भावः तन्मध्य एव केचिदाश्वासयन्त आहुः तथा चेत् क्षणमात्रादेव अनेन कृष्णेन हन्त्रा बक इव नाशं प्राप्स्यति इत्युक्त्वा बकारेर्दूरस्थितस्य कृष्णस्य मुखं वीक्ष्येति अस्मद्दृष्टिगोचर एव कृष्ण आस्ते का चिन्तेति लब्धविश्वासाः उद्धसन्त इति एतद्बिलमध्ये किमप्यस्ति भोः सखायः! तदवश्यं पश्याम इति वाक्यचापल्यतः कौतुकोल्लासात् करताडनैरिति निजनिर्भयत्वधीरत्वद्योतनाय सर्पापसारणार्थं वा ययुरधावन् वत्सा अपि पुच्छानुद्यम्य तानन्वधावन्निति ज्ञेयम्॥ २४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अद्भुतत्वं दर्शयितुं विशिनष्टि—धरेति। धरायामधरोष्ठो यस्य सः जलदेपूत्तरोष्ठो यस्य सः दर्य्यावद्रिकन्दरे इवाननान्तौ सृक्किणी यस्य सः गिरिश्रृङ्गाणीव दंष्ट्रा यस्य सः ध्वान्तयुक्तमन्तरास्यं यस्य सः विततावध्ववज्जिह्वा यस्य सः परुषानिलवत् श्वासो यस्य सः दवपदीक्षणयोरुष्णः दाहकदृष्टिरित्यर्थः। परुषानिलश्वासेन सह कर्मधारयः॥ १७॥

तादृशं गिरिसदृशाजगररूपिणं तमघासुरं दृष्ट्वापि वृन्दावनस्य श्रियं निर्व्याजिकां सम्पदं मत्वा विपरीतमजगरतुण्डेन महाव्यालास्यमादृश्येनोत्प्रेक्षयन्ते स्म उत्प्रेक्षन्तः लीलया अन्योऽन्यभयाभावसूचिन्या चेष्टया॥ १८॥

इत्थं मिथोऽतथ्यमतज्ज्ञभाषितं श्रुत्वा विचिन्त्येत्यमृषा मृषायते ।
रक्षो विदित्वाऽखिलभूतहृत्स्थितः स्वानां निरोद्धुं भगवान् मनो दधे ॥ २५ ॥
तावत्प्रविष्टास्त्वसुरोदरान्तरं परन्न गीर्णाः शिशवः सवत्साः ।
प्रतीक्षमाणेन बकारिवेशनं हतस्वकान्तस्मरणेन रक्षसा ॥ २६ ॥
तान् वीक्ष्य कृष्णः सकलाभयप्रदो ह्यनन्यनाथान् स्वकरादवच्युतान् ।
दीनांश्च मृत्योर्जठराग्निघासान् घृणार्दितो दिष्टकृतेन विस्मितः ॥ २७ ॥
कृत्यं किमत्रास्य खलस्य जीवनं न वा अमीषां च सतां विहिंसनम् ।
द्वयं कथं स्यादिति संविचिन्त्य तज्ज्ञात्वाऽविशत्तुण्डमशेषदृग्घरिः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेषामुत्प्रेक्षां तत्प्रश्नोत्तराभ्यामाह–अहो इति पञ्चभिः । तत्र केचिदाहुः अहो इत्याश्चर्ये हे मित्राणि ! पुरःस्थितं सत्त्वकूटम् असत्त्वमपि सत्त्वमिव न वा इति गदत ब्रूत तदपि अस्मत्सङ्ग्रसनाय व्यात्तं प्रसारितं यद्व्याघ्रतुण्डं दुष्टसर्पास्यं तद्वदाचरति न वा ॥ १९ ॥

अन्ये आहुः–सत्यमिति । अर्ककरैः सूर्यरश्मिभिः आरक्तं घनमुत्तराहनुवत् अधराहनुश्च तस्य घनस्य प्रतिच्छाययाऽरुणा रोधः भूसंलग्नं गिरिस्थलं पश्यतेति उत्तरेणान्वयः ॥ २० ॥

सव्यासव्ये नगोदरे गिरिदर्यौ सृक्किभ्यामोष्ठप्रान्ताभ्यां प्रतिस्पर्द्धेते तत्साहश्यं प्रपद्येते तुङ्गशृङ्गाणामुच्चशृङ्गाणामालयः पङ्क्तयस्तद्दंष्ट्राभिश्च प्रतिस्पर्द्धन्ते इति च पश्यत ॥ २१ ॥

आस्तृतो विस्तृतश्चासौ आयाममार्गो दैर्घ्यवान्मार्गः रसनां जिह्वां प्रतिगर्जति प्रतिस्पर्द्धते एषामुच्चशृङ्गाणामन्तर्गतं मध्यगतं ध्वान्तमन्धकारम् अन्तराननमाननस्य मध्यं प्रतिगर्जति ॥ २२ ॥

दावेन वनाग्निना उष्णश्चासौ खरवातो दुःसहपवनः तद्वदेवमस्य दुर्गन्धः वनाग्निना दग्धप्राणिदुर्गन्धः अन्तरामिषगन्धवत् अजगरान्तर्गतामिषगन्धवत् भाति ॥ २३ ॥

अत्र गिरेरजगराकारत्वसंभाव्यमाने मुखं निविष्टान् अयमजगराकारो गिरिः किं ग्रसिता ग्रसिष्यति तथा चेत् अनेन बकारिणा बकाद्यकर्षादिनङ्क्ष्यति इत्येवं बकारेः उशदतिकमनीयं मुखं वीक्ष्य उद्धसन्तः परस्परं प्रोत्साहनार्थं करतालैर्ययुः ॥ २४ ॥

---

भाषा टीका ।

निचलो ओष्ठ धरतीमें और ऊपरलों ओष्ठ बादल में लगा यो और अंधेरो पर्वत की गुफा की नाईं जाको अन्त नहीं ऐसो मुख फैलाय पर्वत के शिखर तुल्य दाढ़ें हैं चौड़ोरास्ता कीसी जाकी जीभ, कठोर पवन की नाईं श्वास, और प्रज्वलित अग्नि के सदृश जाकी दृष्टि है ॥ १७ ॥

ऐसो एक विचित्र वस्तु देखकर सबरे ग्वाल बाल वृन्दावन की शोभा मानि के अजगर कोसो फैल्यो मुख जानिकर कछु लीला पूर्वक सन्देह करन लगे ॥ १८ ॥

परस्पर में सब कहन लगे कि अहो मित्र ! कहो ए यह बड़ो भारी कोई जानवर हम सबन कूं खायवे के अर्थ बैठो है, क्या यह मुख फैलाय बैठो सर्प तो नहीं है ? ॥ १९ ॥

सत्य है दीखने में भी आवे है कि सूर्य की किरणन सूं लाल बादर को सो सर्प को ऊपरलो ओष्ठ है और सूर्य की परिछाईं ते लाल धरती को सो नीचलो ओष्ठ है ॥ २० ॥

हे मित्र हो ! देखो बांम दाहिने पर्वत की गुफा ऐसी दीखे है मानों या सर्प की मुख को अंत है ऊंचे ऊंचे पर्वत के शिखर ऐसो लगे है मानों सर्प का डाढ है ॥ २१ ॥

और ये जो चौड़ो लंबो रास्ता ऐसो दीखे है मानों जीभ है और शिखर के भीतर जो अंधकार है सो मानों सर्प के मुख को अंधकार है ॥ २२ ॥

तीक्ष्ण दाव सों गरम गरम पवन जो चले है सो ऐसो लगे है मानो सर्प के मुख को श्वास होय बांगें जरे भये जंतुन की दुर्गंध जो निकले है सो मानों या सर्प के मांस का गंध है ॥ २३ ॥

हम सबरे याके मुख में धसेंगे तो क्या यह सबन कूं निगलि जायगो ? और जों यह निगलेगो तो छिन भर में हो श्रीकृष्ण बगला की नाईं याको भी मार डारेगो या प्रकार कहि के अतिमनोहर श्रीकृष्णचन्द्र के मुख कमल को देखकर ताली बजाय हंसि के सबरे आगे कूं जात भये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमृषा वस्तुतः सर्पमपुरसुर एव मृषायते स्वानां सर्पसादृश्यगोचरत्वेन प्रतीयते इति तन्निरोद्धुं वारयितुं दधे मनो दधे तावत्प्रविष्टा इत्युत्तरेणान्वयः ॥ २५ ॥

तावत्प्रविष्टा एव केवलं न तु तेन गीर्णा निगीर्णाः इति पाठेपि स एवार्थः कथम्भूतेन हतयोः स्वकयोरन्तं भ्रातृस्वसारौ अनुध्यायतीति तथा तेन अत एव बकारेः श्रीकृष्णस्य प्रवेशं प्रतीक्षमाणेन ॥ २६ ॥

तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः ।
जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः ॥ २९ ॥
तच्छ्रुत्वा भगवान् कृष्णस्त्वव्ययः सार्भवत्सकम् ।
चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले ॥ ३० ॥
ततोतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः ।
पूर्णोन्तरङ्गे पवनो निरुद्धो मूर्द्धन्विनिष्पाट्य विनिर्गतो वहिः ॥ ३१ ॥
तेनैव सर्वेषु वहिर्गतेषु प्राणेषु वत्सान् सुहृदः परेतान् ।
दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान् विनिर्ययौ ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वकरादवच्युतान्विनिस्सृतान् विस्मितः सन् कृत्यं किमत्रे-त्यादि विचिन्त्य तत्रोपायं ज्ञात्वा स्वयमप्यविशदित्य-न्वयः ॥ २७ ॥

कथं विचिन्त्य अस्य जीवनममीषां च विहिंसनमिति द्वयं वै निश्चितं कथं न स्यादिति ॥ २८ ॥

घनच्छदा मेघान्तरिताः कौणपाः कुणपाशिनो राक्षसाः कोणपो निर्ऋतिस्तदीया इति वा ॥ २९ ॥

चूर्णीकर्तुमिच्छोस्तस्य गले आदावेव तरसा ववृधे अवर्धत ॥ ३० ॥

निरुद्धो मुखादीनां मार्गभूतः कण्ठो यस्यास्ति तस्योद्गीर्णे-दृष्टेर्बहिर्निर्गतलोचनस्यान्तरङ्गे देहमध्ये पूर्णः परिभृतो मूर्द्धन् मूर्द्धनि ब्रह्मरन्ध्रं निर्भिद्य वहिर्विनिर्गतः ॥ ३१ ॥

प्राणेष्विन्द्रियेषु स्वयाऽमृतवर्षिण्या दृष्ट्यैव ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्थमुक्तप्रकारं स्वानां स्वीयानामपि मिथो अतज्ज्ञानामिव भाषितम् अत एवातथ्यम् अयथार्थं श्रुत्वा यतः अमृषा सत्यं तथाजगरतुण्डमपि मृषायते वृन्दावनश्रीत्वेन भासते अहो आश्चर्यमिति किं च नत्वयं केवलमजगरोपि किं तु अघनामराक्षस इति विदित्वा कुतः अखिलभूतहृदि स्थितः परमात्मत्वात् एवं सर्वप्रपञ्चकोऽपि भगवान् सर्वैश्वर्ययुक्तोऽपि तान् निरोद्धुं मनो-ऽपि इच्छामकरोत् ॥ २५ ॥

यावन्मनोदधे तावत् सवत्साः शिशवः प्रविष्टा इत्यादिकं तस्य बाह्यलीलावद्व्यान्तरलीला सा च प्रियजनप्रेमरसावेशमयीति ज्ञेया सिद्धान्तपद्धतिः अन्यथा सत्यसङ्कल्पस्य ज्ञानघन-मूर्त्तस्य तत्सदसम्भवात् वत्सानां प्रवेशश्चात्र पश्चात् स्थितानां बालानां करताडनेन धावनेन च विद्रवणात् अत एव तत्प्र-वेशेन बालानां तद्रूयानकनमो दावाग्निमयत्वेन अत्यन्तप्रवेश-शङ्कितानामपि मनुदरमध्यपर्यन्तगमनं तेषामसङ्कुचानां तत्र समावे-शस्तु लीलाशक्तिमावादेव ज्ञेयः न गीर्णा मुखसङ्कोचनादिना न निरुद्धा इत्यर्थः । न जीर्णा इति पाठे जारयितुं नेष्टा इत्यर्थः अन्यत्तैः तत्र स एवार्थं इति मुखसङ्कोचनाक्रमांदनादेर्जारणेच्छा-मयत्वात् ॥ २६ ॥

स्वान् एव विश्वस्याभयप्रदाता विशेषतश्च तान् अनन्यना-थान् स्वकरादवच्युतान् निजाभयहस्ततो दूरगतान् अत एव दीनान् मरणेन निर्जीवच्छेदशङ्कयाऽऽर्त्तान् किञ्च मृत्युतुल्यस्याघा-सुरस्य जठराग्नेर्ग्रासान् बाह्याग्नेस्तृणवदत्यन्तदाह्यतामिव गतान् वीक्ष्य दिष्टस्य प्रारब्धस्य कृतेन फलेनेत्यर्थः । एतच्च लोकवल्लीला-रसमयश्रीभगवद्भावनानुसारेणैव वस्तुतस्तु दिष्टः स्वावतारे नियतलीलावसरशक्तिः, यद्वा । दिष्टं तैस्स्वयमुद्दिष्टम् अस्माक-मित्यादिलक्षणं तदेव कृतं जातं यद्वा दिष्टं प्रमाणानुगा मतिः "अस्ति नास्ति दिष्टं मतिः ( ४ । ४ । ६० ) इति पाणिनिसूत्रे तथा व्याख्या-तत्वात् तच्चास्मन् किमत्र प्रसिसेत्यादिलक्षणमेव तेन यत्कृतं तेन विस्मितः अहो बत मदग्रे मदीयानां निरुध्यमानानामेषामप्येवं फलतीति विस्मयं प्राप्तः अथवा "सदा स्मेरमुखाब्जो ऽपि दुःखेन विगतस्मितः" विषण्णमुखो बभूवेत्यर्थः । ननु, तत्र सति कथं तेषां दिष्टवशत्वं तत्राह, घृणार्दित इति । स्नेहपरवशतया विचारान्त-ज्ञानादित्यर्थः । यतः कृष्णः कृपाकृष्टस्वभाव इत्यर्थः । अथवा तरन्तो ऽतथाभूतानपि घृणार्दितत्वेन स्वकरात् दूरे निपतितान् दुःखितान् मृतप्रायांश्च वीक्ष्य मत्वा अनन्यनाथानिति घृणार्दितत्वे हेतुः अन्यत्समानम् ॥ २७ ॥

तुण्डं खलस्यैव तस्य अशेषं खलमरणमद्भक्षणयोग्यतया तन्मुक्तेर्निर्जीवहारादेश्च प्रकारं पश्यतीति तथा सः यद्वा अशे-षान् वत्सबालकान् पश्यन् सन् तेषां तादृगवस्थया स्नेहाकुल-त्वादविशदित्यर्थः । एवं तेषां दुःखहरणात् मनोहरणाच्च हरिः ॥ २८ ॥

घनच्छदाः कंसादयाश्च भयात् चकारादन्ये च दुष्टाः कंसस्य दैत्यत्वेपि कौणपत्वम् अतिदुष्टत्वेनाभेदविवक्षया यद्वा ये कंसा-दयो दैत्यास्ते च तेषां सर्वेषां हर्षः भगवद्विद्वेषिस्वभावेनैव दुर्मा-नसोल्लासोत्पत्तेः किं वा तत्रैव तेषामागमनात् कंसस्य च सद्य एव चरमुखेन श्रवणादिति ज्ञेयम् ॥ २९ ॥

तत् हा हेत्याक्रोशनं चूर्णीचिकीर्षोर्मुखसंवरणगात्रमोटना-दिनेति शेषः । ववृधे तस्य मुखासम्वरणाय वधोपायाय च गल-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विवरमावृण्वन् कौतुकतया महास्थूलो बभूवेत्यर्थः । यतो भगवान् सर्वैश्वर्यपूर्णः अतः कथमपि न व्येति हीयत इति अनिष्टशङ्कापि सर्वा निरस्ता । यद्वा, किमर्थं ववृधे ? तत्राह, न व्ययः कोऽप्यपचयो भक्तानां यस्मात् बालकादीनां रक्षार्थमित्यर्थः । तत्र हेतुः कृष्णः भक्ताकृष्टचित्त इत्यर्थः ॥ ३० ॥

छि एव ततस्तस्माद्वर्द्धनादेव तु च इतस्ततो भ्रमतश्च भ्रमरिकावत् वर्त्तमानस्य किं वा कुत्र यास्यामि यास्यामि चेति व्यग्रं विचारयतश्चेत्यर्थः । पूर्णत्वे हेतुः निरुद्ध इति । पवनः प्राणवायुः अतिकायत्वेऽपि पवनस्य वृहत्तरत्वं तेन मूर्द्धभेदस्यापि तदभिप्रेतत्वम् अत एव विप्लुद्भवं मूर्द्धन् मूर्द्धनि स्थितं ब्रह्मरन्ध्रमित्यर्थः ॥ ३१ ॥

तेन पवनेनैव सह ब्रह्मरन्ध्रद्वारेण वा भगवन्नरलीलानुकरणेन परेतानिव स्वयं तदृष्ट्या मृततुल्यान् वा निजमधुरस्निग्धदृष्ट्या उत्थाप्य चेष्टयित्वा मकुन्दः अघासुरस्य संसारात् मुक्तिं सुहृदाञ्चाघान्मुक्तिं ददाविबर्थः । यतो भगवान् जगांद्धतार्थं स्वयमवतीर्णः परमेश्वरः तदनु ताननु तत्पश्चादितो वक्त्रात् विनोदेन निर्ययौ ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीकृष्णप्रवेशं प्रतीक्षमाणेन तत्र हेतुः हतानां स्वकानां पूतनादीनाम् अन्तः अन्तःकरणे स्मरणं यस्येति ॥ २६ ॥

दिष्ट्या दैवं वत्सबालाद्यानां परस्परं मार्यमारकत्वप्रयोजकेन स्वसङ्कल्परूपेण दैवेन तत्कर्मणा यत्कृतं तेन विस्मितम् अनेन पूर्वकर्मानुगुणजातभगवत्सङ्कल्पानां साम्प्रतिकतत्तत्कर्मानुगुणसङ्कल्पानाञ्च श्रीभगवदेकात्वमुक्तम् ॥ २७ ॥ २८ ॥

कंस आदिर्येषां ते अतद्गुणसंविज्ञानः । ननु कंस इति कौणपा दैत्याः ॥ २९ ॥

गले ववृधे इत्यनेन पापमारणार्थं श्रीकृष्णवृद्धा स्वमूर्तिभूतश्रीप्रणवादिनाममन्त्रोच्चारणेनाघमरणं व्यज्यते ॥ ३० ॥ ३१ ॥

स्वकृपा कटाक्षेण स्वभक्तानां जीवयितृत्वं श्रीभगवतो गुण माह—तेनैवेति । अघासुरस्यापि मुक्तिदानेन मुकुन्दः अतो विचित्रैश्वर्यवानिति भगवत्पदव्यङ्ग्यम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मिथोऽन्योन्यमतज्ज्ञानां यथार्थाजगरमजानतां भाषितमतथ्यमसत्यं श्रुत्वा भगवानमृषापि सत्यमप्येतैर्मृषापि तमयथार्थीकृतमित्येवं विचिन्त्याखिलभूतहृत्स्थितः हेतुगर्भमिदं तस्य द्रष्टो विदित्वा राक्षस इति ज्ञात्वा स्वानां स्वान् वत्सान् वत्सपांश्च निरोद्धुं निवारयितुं यावन्मनो दधे चकार ॥ २५ ॥

तावत्ततःपूर्वमेव शिशवो वत्सपा वत्सैः सहिता असुरस्यान्तरोदरमुदरमध्यं प्रविष्टा एव केवलं न तु रक्षसा जीर्णा जीर्णतां प्रापिताः, तत्र हेतुं वदन् रक्षां विशिनष्टि—याबन्न... कान्तः सुहृत् भ्राता तस्य स्मरणेन हेतुना वकारः श्रीकृष्ण... वेशनं प्रवेशं प्रतीक्षमाणेन ॥ २६ ॥

सर्वेषामभयप्रदो भगवान् श्रीकृष्णस्तान् प्रविष्टान्वत्स... विस्मितः करुणार्दितो व्याप्तश्चास्य खलस्य विनाश... अमीषां सतां साधूनां जीवनं चेत्येतद्द्वयं युगपत् कथं स्यात् ...

अत्रोभयनिमित्ते कृत्यं किमिति विचिन्त्याथेदृक् हेतुग... मिदं तत्त्वात्तत्कृत्यं ज्ञात्वा हरिराश्रितार्तिहरः स्वयमप्यस्य मुखं... मविशदित्यन्वयः । कथम्भूतांस्तान् विद्यते स्वव्यतिरिक्तो र... रक्षिता येषां स्वकरात्स्वभुजाभयाच्च्युतान् दिष्टबलेन प्रारब्ध... हेतुना मृत्योर्जठराग्नेर्ग्रासस्थानीयान् ॥ २८ ॥

तदा मेघच्छन्ना देवा भयाद्धा हेति चुक्रुशुः अघासुर... बान्धवाः कंसादयः कौणपाः कुणपं शरीरं तदशिनो राक्षसा... स्तु हृष्यन्तः ॥ ॥ २९ ॥

तद्देवानां हाहेत्याक्रोशनं श्रुत्वा भगवान् श्रीकृष्ण... स्वयमव्ययोऽक्षत एव सवत्सानात्मानं चूर्णीकर्तुमिच्छोरसुर... गले तरसा आशु ववृधे प्रवाम्बभूव ॥ ३० ॥

ततस्तस्याघासुरस्यान्तरङ्गे देहाभ्यन्तरे पूरितो विव... पवनः प्राणवायुरत एव पूर्णोऽत एव मूर्द्धनि ब्रह्मरन्ध्रं भि... बहिर्निर्गतः, कथम्भूतस्य ? विपुलकायस्य निरुद्धौ मार्गौ नास... रन्ध्राद्यस्य स्त इति तथाभूतस्यात एव उद्वृत्ते दृष्टी लोचने य... इतस्ततो भ्रमतश्च ॥ ३१ ॥

तेन बहिर्गतेन पवनेन सहैव सर्वेषु प्राणेषु बहिर्... सत्सु परेतं परलोकगतप्रायान् वत्सान् सुहृदो बाला... स्वयाऽमृतवर्षिण्या दृष्ट्योत्थाप्य तैरन्वितो भगवान् मुकुन्दः ... वक्त्रात्पुनर्विनिर्गतोऽभूत् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दिष्ट्येति मानुषलीलानुसारोक्तिः ॥ २७—३१ ॥

परेतानिति नरलीलानुसारेण वस्तुतस्तु श्रीकृष्णवि... दुःखेनैव मूर्च्छितान् चिच्छक्त्याश्लिष्टत्वात् ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इत्थं पूर्वोक्तप्रकारेण मियो बालकैस्तथैव ... वत् भाषितं तेषां वाक्यं श्रुत्वा विचिन्त्य सत्यम... एवेति निश्चित्य अमृषैव राक्षसः मृषायते अजगर... श्रीरिव वा बुद्धिमुत्पादयति अतोऽयं राक्षस एवेति ... स्वानां निषेधार्थं स्वान् निषेद्धुं सर्वज्ञो भगवान् मनो ... विचारितवान् ॥ २५ ॥

तावदेव बालकाः असुरोदरान्तरं प्रविष्टाः ... प्राणा अपि तदुदराग्निना न जीर्णाः जरणं तेषामुप... म तु न जात इत्याह—बकारिप्रवेशं प्रतीक्षमाणेन ... बकीबकयोरन्तस्मरणं मृत्युस्मरणं यस्य तेन रक्षसा ... वैरानुबन्धेन जातिदुष्टेनापि भगवत्प्रतीक्षया न जीर्णाः ...

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतो विचारमाह—तान्वीक्ष्येति । कृष्णः सर्वेषामभयदाता तेषां गोकुलवासिनां च सर्व एवानन्यनाथाः न विद्यते अन्यो नाथो येषामिदानीं च स्वकराद्यवच्युताः अकस्मात् तन्मुखे पतिताः नाप्युपेक्षणीयाः दीनाः मृत्योरघस्यैव जठराग्नेर्ग्रासाः कवलरूपाः दिष्टकृतेन यथाभूतांस्तान् दृष्ट्वा भगवान् विस्मितो जातः ॥ २७ ॥

विचारयति—कृत्यं किमत्रेति । यद्ययं मार्यते बालका अपि मरिष्यन्ति अन्यान् कृत्वा गृहनयने कृतेऽपि एते नष्टा एव अतो बालका रक्षणीयाः अयं च मारणीयः एतदुभयम् मत्प्रवेशेनैव भवतीति तुण्डमविशत् यतो यमशोऽपदृक् हरिश्च सर्वदुःखहर्ता अस्य खलस्य जीवितं यथा न स्यात् अमीषां वा सतां विनाशनं न स्यात् एतद्द्वयं कथं स्यादिति फलद्वयमेकसाधनं सञ्चिन्त्य तादृशमुपायं ज्ञात्वा प्रविष्टः ॥ २८ ॥

तदा देवाः कंसादयश्च आकाशमार्गेण द्रष्टुमागताः तत्र देवा घनच्छदाः मेघान्तरिताः पश्यन्ति तदा हाहेति चुक्रुशुः कंसाद्या जहृषुः हर्षं प्राप्तवन्तः कंसाद्याः सर्व एव ये केचन अघस्य बान्धवाः कौणपाः राक्षसाः ॥ २९ ॥

उभयेषां हर्षविषादौ श्रुत्वा भगवान् कृष्णो ऽव्ययः स्वनो भयरहितः साभेवत्सकं बालकवत्ससहितमात्मानं चूर्णीचिकीर्षोरस्य गले वधृधे स्थूलो जातः ॥ ३० ॥

ततः अतिकायस्य स्थूलस्य सर्पस्य निरुद्धमुखमार्गवतः चक्षुषी निर्गते दृष्टी चक्षुषी यस्य इतस्ततश्च भ्रमतः देहं विक्षिपतः अन्तरङ्गे शरीरमध्ये पूर्णः पवनः निरुद्धः सन् मूर्धानं विनिष्पाट्य बहिर्निर्गतः मुख्यः प्राणः ब्रह्मरन्ध्रेण विनिर्गतः ॥ ३१ ॥

तेनैव च मार्गेण सर्व एव प्राणाः इन्द्रियाणि आत्मा च बहिर्निर्गतः तदा परेतान् वत्सान् सुहृदो बालकान् स्वया अमृतदृष्ट्या उत्थाप्य सजीवान् कृत्वा तैः सह मुकुन्दो भगवान् वक्त्राद्विनिर्ययौ मुखमार्गेणैव निर्गतः प्राणगमनानन्तरं सूक्ष्मो भूत्वा तथा कृतवान् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मिथः परस्परम् अतज्ज्ञानां भाषितमतथ्यमयथार्थं श्रुत्वा अमृषा सत्यमेव सर्पतुण्डं हन्त हन्तैतां मृषायते नेदं सर्पतुण्डं किन्तु वृन्दावनश्रीरिति प्रतीतिर्भवतीति विचिन्त्य किञ्च न केवलं सर्वोऽपि किन्त्वघनामकं रक्ष इति विदित्वा कुतः अखिलभूतहृदि स्थितः परमात्मत्वेन सर्वज्ञत्वात् स्वानां स्वांस्तान् निरोद्धुं वारयितुं मनो दधे ॥ २५ ॥

यावन्मनो दधे तावत् असुरस्योदरमध्यं प्रविष्टाः किन्तु न गीर्णा रक्षसा न गिलिता जीर्णा इति पाठेऽपि स एवार्थः इति स्वामिचरणाः कीदृशेन हतौ स्वस्रौ बकीबकौ अन्तरन्तः करणेन स्मरतीति तथा तेन अत एव बकारेः कृष्णस्य अवेक्षं प्रतीक्षमाणेन न चात्र भगवतः सत्यसङ्कल्पताव्यभिचरति कथमेवाशङ्कनीयम् अस्मात् किमत्र ग्रसिता निविष्टानयं तथा चेद्भक्षयिष्यति इति भक्तसङ्कल्पस्याप्यत्र वर्तमानत्वात् मत्सङ्कल्पमद्भक्तसङ्कल्पयोर्मध्ये मद्भक्तसङ्कल्पस्यैव गरीयस्त्वमिति भक्तवश्येन भगवतैव प्राक् कृताया मर्यादायास्तथा लीलाशक्तेश्च सर्वोपमर्दिन्याः सर्वदा जागरूकत्वात् ॥ २६ ॥

स्वकरादिव महामणीनिव अपच्युतान् मृत्योरघासुरस्य जठराग्नौ ग्रासान् तृणवत्पतनोन्मुखान् वीक्ष्य घृणाया कृपया अर्दितः पीडितः दिष्टकृतेन लीलाशक्त्यनुकूलकालकृतेन तत्प्रवेशकर्मणा विस्मितः "कालो दिष्टोऽप्यनेहापि" इत्यमरः । अहो न तावदेषां प्रारब्धकर्म न सम्भवति न च तद्भिन्नाप्यत्र कर्मण्यन्तर्यामी प्रवर्तयेत् तस्य मत्स्वरूपत्वेन मत्प्रातिकूल्यानर्हत्वाच्च तस्मात् मत्सहचरानप्येतादृशीं दुरवस्थां दर्शयन्त्या मत्प्रातिकूल्येऽप्यशङ्कमानायाः प्रेमपूर्णां मां करुणारसनिमग्नीकर्तुकामाया मदीयलीलाशक्तेरेवेदं कर्ममयी लीला पुरुषोत्तमं रसमयमूर्त्तीं तस्या एवैनावप्रभुष्णुत्वमिति बन्धुविच्छेदशोकातुरोऽपि विस्मयेनैव स्तिमितो ऽभूदित्यर्थः ॥ २७ ॥

अत्र सङ्कटे किं कृत्यम् ? अस्य खलस्य जीवनं न स्यात् वै निश्चितम् अमीषां विहिंसनं च न स्यात् इति द्वयं कथं स्यादिति विचिन्त्य तत्र सहसैवोपायं ज्ञात्वा तुण्डमविशत् यतो ऽशेषदृक् एवं कृते सत्येवं भविष्यतीति भावि सर्वं पश्यतीति सः स्वभक्तविपदः खलजीवनसंसारयोश्च हरणाद्धरिः ॥ २८ ॥

घनच्छदा मेघान्तरिताः कंसस्याघस्य च भयात् हाहेति भगवत्यनिष्टाशङ्कया देवानामैश्वर्यज्ञानेऽपि भक्तत्वात् भक्तेश्च प्रीत्यात्मकत्वात् प्रीतेश्च विवेकहरस्वभावत्वात् कंसाद्या जहृषुरिति चरद्वारा सद्य एव वार्ताज्ञानात् कौणपाः राक्षसाः अघासुरभ्रातुः पुत्रादयः ॥ २९ ॥

तत् साधूनां शोकजल्पनमसाधूनां हर्षजल्पनं च श्रुत्वा अर्भवत्सैश्च सहितमात्मानं श्यामसुन्दरस्वरूपम् उदरस्थीकृत्य चूर्णीचिकीर्षोरस्य गले ववृधे तावेव शोकहर्षौ वैपरीत्येन भोतुरिति भावः । ननु, शकटतृणावर्तवत्सदामबन्धनादिलीलायां स्तोकेनैव बालवपुषा किञ्चिदप्यवर्द्धमानेन तत्तद्व्यापिचक्रौः स्वयं भगवतो किशोरस्य किमघासुरकण्ठरन्ध्रव्यापनेऽशक्त्या यतो ववृधे इत्युच्यते सत्यं तत्र तत्र नरबाललीलत्वलक्षणमाधुर्यस्य विस्मयरसाधायकस्य भक्तजनलोचनास्वाद्यत्वादलौकिकं तादृशत्वमेव समुचितम् अत्र तु तादृशमाधुर्यग्राहकद्रष्टृजनाभावात् स्वयं भगवतापि तेन लौकिक्ये रीतिरालम्ब्येति जानीमः ॥ ३० ॥

निरुद्धो मुखादीनां मार्गभूतः कण्ठे यस्यास्ति तस्य उद्गीर्णयां दृष्टेर्बहिर्निर्गतलोचनस्य अन्तरङ्गे देहमध्ये निरुद्धः पवनः प्राणवायुः निर्गमनाभावात् पूर्णः मूर्धन् मूर्ध्निस्थितं ब्रह्मरन्ध्रं निर्भिद्य बहिर्गतः ॥ ३१ ॥

परेतान् स्वविरहतज्जाठरानलयोर्ज्वालया मूर्च्छितान् दृष्ट्या अमृतवर्षिण्या ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतथ्यमसत्यं श्रुत्वा अतथ्यत्वे कारणमित्थं मिथोऽनज्ञानां भाषितमिति अतज्ज्ञत्वे कारणं च अमृषा सर्परूप्यपि मृषायते

पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश ।
प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन् मिषतां दिवौकसाम् ॥ ३३ ॥
ततोऽतिहृष्टाः स्वकृतो ऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्त्तनैः ।
गीतैः सुगा वाद्यधराश्च वाद्यकैःस्तवैश्च विप्रा जयनिस्वनैर्गणाः ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्पाभाववदाचरतीति विचिन्त्य तत्रापि रक्षो विदित्वा तान् निरोद्धुं वारयितुं यावन्मनो दधे ॥ २५ ॥

तावदसुरोदरस्यान्तरं मध्यं प्रविष्टा एव परं केवलं न तु असुरेण गीर्णा गिलिताः तत्र हेतुगर्भमसुरविशेषणं बकारि-वेशनं प्रतीक्ष्यमाणेन तत्प्रवेशप्रतीक्षायां हेतुं बकादिशब्देनोक्तं विवृण्वन् दर्शयति हतयोः स्वकयोर्बकीबकयोरन्तः स्मरतीति तथा तेन ॥ २६ ॥

दिष्टकृतेन स्वसमीपेऽपि प्रवृत्तेन तत्कर्मफलहेतुना विस्मितः तान् दीनांश्च वीक्ष्य घृणार्दितोऽभूदित्यन्वयः । ननु, "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इति शास्त्रादावश्यके कर्मफले प्राप्ते तत्र घृणा न युक्तेत्यत आह, अनन्यनाथानिति ॥ २७ ॥

अस्य खलस्य जीवनममीषां सतां च विहिंसनमिति द्वयं वै निश्चितं कथं न स्यादत्र कृत्यं किमिति सञ्चिन्त्य तत् कृत्यं ज्ञात्वा तुण्डमघासुरास्यमविशदित्यन्वयः ॥ २८ ॥

तदा श्रीकृष्णे अघमुखे प्रविष्टे घनच्छदाः मेघान्तरिताः भयादज्ञानजात् अथवा अदितेर्गर्भे प्रविश्येन्द्रो यथा तत्पुत्रोऽभूदेवमस्य पुत्रो भूत्वा वधं न करिष्यतीति भयात् कौणपाः कुणपाशिनः ॥ २९ ॥

चूर्णीकर्तुमिच्छांगलो ततः प्राणेष वत्से अवर्धत भगवानित्यनेन बहिः स्थितोपि कार्यद्वयं कर्तुं तं च दृष्टमात्रोपि संसाराद्विमोचयितुं शक्त इति अव्यय इत्यनेन तन्मुखे प्रविष्टस्यापि मयाभायाह्लीलाविशेषार्थे तन्मुखे प्रविष्ट इति च गम्यते ॥ ३० ॥

ततः मुखे प्रवृद्धात् श्रीकृष्णात् हेतुभूतात् निरुद्धमार्गिणः निरुद्धो मार्गः पवनमार्गः कण्ठो यस्यास्ति तस्य अतिकायस्य अजगररूपिणः पवनः प्राणवायुर्निरुद्धः अत एवान्तरङ्गे शरीरमध्ये पूर्णः परिभूतः अत एव मूर्धन् मूर्धानं ब्रह्मरन्ध्रं विनिष्पाट्य बहिर्गतो ऽभूत् ॥ ३१ ॥

तेन पवनेन सह प्राणेषु इन्द्रियेषु बहिर्गतेषु परेतान् मृतान् यतः भगवान् अतः दृष्ट्यैवोत्थाप्य तद्वक्त्रात् विनिर्ययौ विनिर्गतो ऽभूत् । ननु, पूतना बलात् गृहे प्रविश्य कालकूटं स्तनं दत्वा मातृगतिं गता तस्य दुरस्यस्य मुखे प्रविश्य तस्मै किं दत्तवानित्यत आह-मुकुन्द इति । मोक्षं दत्तवानित्यर्थः ॥ ३२ ॥

---

भाषा टीका ।

या प्रकार सब बालकन की झूंठ बातें सुनकर अजगर देह बनाय बैठो भयो दैत्य को जानकर सब प्राणिन के अंत र्यामी श्रीकृष्ण भगवान् स्वकीय अपने संग खेलने रहने वारे बालकन कूं वाके मुख में धसतो देख कर मना करनो चाहे [illegible]

तब तांई सबरे बालक बछरान कूं लेके वा सर्प के मुख में चले गये परंतु बकासुर को मारन वारे श्रीकृष्ण नहीं गये याही ते सबन कूं न निगल्यो दैत्य विचारन लगो कि हमारे भैया बहिन कूं मारनवारो तो अभी आयो [illegible] नहीं ॥ २६ ॥

सब कूं अभय देन वारे श्रीकृष्णचंद्र अपने हाथ से निकसे भये अपने अनन्य दीन सब बालकन कूं दैव के वश तें मृत्यु के पेट में पडे भये देखकर कृपा ते पीडित भये और आश्चर्य मानत भये ॥ २७ ॥

श्रीकृष्ण भगवान् मन में विचार करन लगे कि या अघासुर दुष्ट को जीवनो न होय और हमारे प्यारे ग्वाल बालन को वध भी न होय ये दोनों बातें कैसे बने या प्रकार विचार करके उपाय जानकर सबरे बातन कूँ जाननवारे श्रीहरि वा दैत्य अघासुर के मुख में धसगये ॥ २८ ॥

तब बादरन में छिप के रहन वारे सबरे देवतागण मारेडर के हाय हाय करन लगे और अघासुर के जिते सुहृदबन्धु कंसादिकन कूं मांस रुधिर पीवन वारे दैत्यगणन कूं बडो आनन्द भयो ॥ २९ ॥

देवतान को हाहाकार शब्द सुन कर अविनाशी श्रीकृष्णभगवान् बालक बछरा सहित अपनपे कूं चूर्ण करिबे की इच्छा करनवारो अघासुर के गले में बढन लगे ॥ ३० ॥

इतनो बडो देहधारो दैत्य को कंठ जब रुकि गयो तब इत उतकूं वाकी आंखें नाचन लगीं और निकसि आई जब श्वास सब देह में घुटि गयो बाहिर निकसिबे को गैल न पायो तब ब्रह्मरंध्र को फोडिकर बाहिर निकरयो ॥ ३१ ॥

जब सबरे प्राण अघासुर के ब्रह्मरंध्र होकर निकसि गये तब श्रीमुकुन्द भगवान् मरे भये सब ग्वाल बालन कूं अपनी अमृत वर्षिणी कृपा दृष्टि सों उठाकर सबके संग वाके मुख के राह सों निकस आये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहिदेहे स्थितं शुद्धसत्त्वमयं ज्योतिर्निर्गत्य खेऽवस्थितं तस्मिन्नीशे विवेश ॥ ३३ ॥

स्वकृतः स्वकार्यकृतः श्रीकृष्णस्यार्हणमकृत अकुर्वत पूजां कुर्वन् सुगाः सुष्ठु गायन्तीति गन्धर्वादयः ॥ ३४ ॥

तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमङ्गलस्वनान् ।
श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयम् ॥ ३५ ॥
राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतम् ।
व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥ ३६ ॥
*एतत्कौमारजं कर्म हरेरात्माहिमोक्षणम् ।
मृत्योः पौगण्डके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥ ३७ ॥
नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः ।
अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥ ३८ ॥
सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी भागवतीं ददौ गतिम् ।
स एव नित्यात्मसुखानुभूत्यभिव्युदस्त (१) मायोन्तर्गतो हि किं पुनः ॥ ३९ ॥
सूत उवाच ।
इत्थं द्विजा ! यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम् ।
पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च तेषां यान्यद्भुतस्तोत्रादीनि तेषां नैकोत्सवा ये मङ्गलस्वनास्तान् स्वधाम्नोऽन्ति समीपे श्रुत्वा अजो ब्रह्मा चिरादागतः ईशस्य श्रीकृष्णस्य महि महिमानं दृष्ट्वा विस्मयं प्रापेति ॥ ३५ ॥

बहुतिथं बहुकालम् आक्रीडगह्वरं क्रीडार्थं महाबिलम् ॥ ३६ ॥

अन्यच्चातिचित्रं वृत्तमित्याह—एतदिति। "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशाद्यौवनं तु ततः परम्" हरेः कौमारजं पञ्चमाब्दकृतं कर्म तदैव दृष्ट्वा पौगण्डके षष्ठेऽब्दे बाला अद्यैतद्वृत्तमित्यूचुः किं तत्कर्म? मृत्योः सकाशादात्मनामहेश्च मोक्षणम् आत्मनां प्रसिद्धान्मृत्योरहेस्तु संसारलक्षणात् अघासुरस्य ज्योतिषः श्रीकृष्णे प्रवेशमपि तदा दृष्टं कथितवन्त इत्यर्थः ॥ ३७ ॥

नैतद्विचित्रमिति किं तदित्यपेक्षायामाह—अघोऽपीति। आत्मसाम्यं स्वसमानरूपताम् ॥ ३८ ॥

यस्याङ्गं मूर्तिस्तस्य प्रतिमा प्रतिकृतिस्तत्रापि केवलं मनोमयी सापि बलादन्तराहिता सती भागवतीं गतिं ददौ ब्रह्मादिभ्यः स एव साक्षात्स्वयमन्तर्गतः किं पुनः नित्या चासावात्मसुखानुभूतिश्च तयाऽभितो व्युदस्ता माया येन सः ॥ ३९ ॥

येन श्रवणेन निगृहीतं वशीकृतं चेतो यस्य सः ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पीनाहि भोगोत्थितमिति तु पाठो मूलेषु दृश्यते भोगस्थितमिति तु टीकायामेव अद्भुतमनिर्वचनीयं महत्प्रकाशबाहुल्यात् दिक्षु सामित्यत्रादरे षष्ठी। यद्वा, परमाश्चर्येण तेषु पश्यत्सु सत्सु इत्यर्थः। तादृशादुष्टस्यापि मुक्तेः अतीन्द्रियाया मुक्तिप्राप्तेर्दर्शनाद्य तथा तद्दर्शनं च ब्रह्मादीनामसन्देहाय स च विस्मयार्थं तच्च ज्योतिस्तत्कालप्राप्तभगवच्छक्तिमयमेव ज्ञेयं जीवस्य निराकारत्वात् ॥ ३३ ॥

ततः सपरिकरेशनिर्गमात् वाद्यधराः विद्याधरादयः वारिधरा इति वा पाठः। विप्राः श्रीनारदादयः गणाः श्रीगरुडादयः ॥ ३४ ॥

अद्भुतश्रोत्रादीन् श्रुत्वा स्वधाम्नः सकाशादन्ति कृष्णस्य समीपे अचिरात् शीघ्रमागतोऽज ईशस्य महि माहात्म्यं तन्मुक्तिप्रदानलक्षणं कृपाद्यन्यच्च तादृशस्यादृष्टं दृष्ट्वेत्यादियोज्यम् ॥ ३५ ॥

श्रीभगवत्स्पर्शप्रभावेन स कृतार्थोऽभूदिति किं वक्तव्यं तस्य पाञ्चभौतिकत्वन्देहोऽपि पूतनावत्सौरभ्यादिप्राप्त्या सर्वमनोरमतां प्रापेत्याह—राजन्निति। परमाश्चर्येण ॥ ३६ ॥

अस्य हरेः पौगण्डे तस्यारम्भमात्रत्वेनाल्पत्वात् कन् प्रत्ययः चशब्दात् देवादिकृतमहोत्सवश्च, अन्यत्तैः। यद्वा, प्रश्नबीजत्वाय प्रहेलिकावदाह—कौमारजं कर्म पौगण्डके च दृष्ट्वोचुरिति किं तत्? अहेर्मृत्योर्हेतोः आत्मनामहेः सकाशान्मोक्षणं मर्गियो दर्शयन्त इत्यादावैश्वर्यज्ञानाच्छादनाद्ययेन तद्वैलक्षण्यमात्रात् ॥ ३७ ॥

महादुष्टस्यापि तादृश्या मुक्त्या केषांचिदद्भुतबुद्धिं दृष्ट्वा श्रीभगवत्प्रभावमाह—नेति द्वाभ्याम्। परावराणां सर्वेषामंशानामंशानां च परमस्य श्रेष्ठस्य यतस्तेषां वेधसः प्रादुर्भावकर्तुश्च

* "सकृद्यदङ्ग" इत्यनन्तरं श्लोकमेतं पठित्वाऽध्यायस्समाप्यते. वीरराघवीये०। (१) मायः परमोऽङ्ग इति वैष्णवतोषिणी। वीर०।

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति परमस्वातन्त्र्यमुक्तं तत्र च मनुजार्भः श्रीनन्दकुमारश्चासौ मायी च दयावान् गमर्यादलीलत्वेन तादृशदयालुत्वेन च यः प्रसिद्धस्तस्य परमविलक्षणस्वभावस्येत्यर्थः । अतो विचित्रम् अद्भुतं न भवति सात्म्यं साम्यमिति पाठद्वयेऽपि समानस्वरूपत्वमेवार्थः । अतद्रूपस्य समानस्वरूपस्य तत्र प्रवेशासंभवात् असतां दुष्टानां परमदुर्लभमपि प्राप । ननु, श्रीगोकुलबालकादिषु महत्सु महापराधिनस्तस्यासुरस्य तदपि कथं संभवेत् ? तत्राह—यदिति, यस्य तत्पर्यन्तदुर्गतजीवेषु तमःकृतदुर्गतिमात्रसमवधानमात्रजातया सदसद्विचारशून्यत्वेन स्वतन्त्रया कृपयाऽवतीर्णस्य सर्वविलक्षणस्य स्पर्शविशेषप्रभावेणैव सोयमघमयोपि धूतपातकः खण्डिताघमयभाव इत्यर्थः । आत्मा नासुरः किन्तूपाधिरेव स च नाशित एव निर्दोषां निजांशस्त्वनुगृहीत इति नात्र दोषश्च प्रत्युत तस्यासुरभावापगमनं परमकृपा सूचकत्वादुपादेयमेवेति भावः ॥ ३८ ॥

नित्यात्मेति तैर्व्याख्यातम् । यद्वा, नित्यम् आत्मनां सर्वजीवानां सुखानुभूतिर्यस्मात् यतोऽभितो विशेषेणोदस्तमायः तथा च वक्ष्यति श्रीब्रह्मा 'मय्येव मायाधमनावतारे' इति. स चासौ स च यतः परमः सर्वतः श्रेष्ठः निजाशेषभगवत्ताप्रकटनात् यत् यस्य अङ्गेति सन्यायहर्षसम्बोधने ॥ ३९ ॥

अत्राकस्मात् सूत उवाचेति तत्प्रसङ्गे परमानन्दस्य वैशिष्ट्यात् सोपि तत्र तौ तुष्टावेत्यर्थः । येन चरितेन निगृहीतं तद्वियोगमयप्रेमाविर्भावेन पीडितं चेतो यस्य सः तथापि प्रश्ने हेतुः पुण्यं शुभावहमिति तत्पीडायास्तदेकौषधत्वादिति भावः ॥ ४० ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अत्र देवसाक्षिको ऽघस्य तस्मिन् प्रवेश उक्तः अनेन न तत्स्नेविनाम् अघप्राप्तिशङ्केति व्यज्यते तथापि न निःशङ्कैः भगवद्भक्तैर्भाव्यम् ॥ ३३ ॥

स्वाहितमिति शेषः । स्वहितकृत इत्यर्थः । अकृत अकुर्वत इत्यन्वयः ॥ ३४ ॥

स्वधाम्नः अन्ति निकटे ईशस्य महि माहात्म्यम् अजो ब्रह्मा ॥ ३५ ॥

शुष्कं सम्वत्सरानन्तरम् आक्रीडगह्वरं बभूव अचिनिर्मीलना त्वर्भानामयक्रीडागह्वरं दर्शयंश्चमाजगरम् इति सम्वत्सरानन्तरं स्ववचनात् ॥ ३६ ॥

मृत्योः मायाः वियोगात् संसाराच्च आत्मनां महेरघस्य मोचणाम् अस्य हरेः कर्म कौमारजम् एतद्दृष्ट्वा ते च गोपाः विस्मिताः सन्तो ऽस्य पौगण्डके सम्वत्सरानन्तरम् ऊचुः इत्यन्वयः ॥ ३७ ॥

परावराणां बद्धमुक्तजीवानां परमस्य वेधसः असहायस्य प्रभुः "बन्धको भवपाशेन भवपाशाच्च मोचकः" इत्यादि वाक्यात् मनुजार्भमायिनः मनुष्यबालकत्वेच्छावतः यत्स्पर्शनेन धूतपातकः आत्मसात्म्यं सायुज्यम् आत्मना परमात्मना समानात्मतत्त्वम् एतद्विगर्तचित्रं न किन्त्वाश्चर्यमेवेति ॥ ३८ ॥

तदेवाह—अङ्ग ! प्रतिमाऽर्चामूर्त्तिः "मनोमयी तां ध्यायेत्" इत्यादि प्रामाण्यात् भागवतीं गतिं ददातीत्यर्थः । स एव यस्य मूर्त्तिः स कृष्ण एव साक्षाद्यदन्तः प्रविष्टस्तर्हि किं पुनर्वक्तव्यम् इति तात्पर्यम् सरोमाञ्चमुक्तम् ॥ ३९ ॥

यादवदेवदत्तः श्रीकृष्णेन दत्तजीवितः विष्णुरातः [illegible] सम्बन्धः येनैव गृहीतं निष्ठं कृतं "यमेवैष वृणुते" इत्यादेः ॥ ४० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोसुरो मुक्तः श्रीकृष्णमेव विवेशेत्याह—पीनेति । पीनात्मर्पेहादुत्थितमद्भुतं महद्धर्मभूतज्ञानेन बृहज्ज्योतिः स्वयं प्रकाशं श्रीस्वरूपं स्वधाम्ना दश दिशो ज्वलयित्वा तावत् खे अन्तरिक्षे अवस्थितं सर्वेशस्य श्रीकृष्णस्य भगवतो निर्गमं प्रतीक्ष्य तदा आश्चर्यं देवानां पश्यतां सतां ततस्तस्मिन्निर्गते कृष्णे प्रविवेश ॥ ३३ ॥

ततोऽतीव हृष्टाः देवाः स्वकृतः स्वकार्यकर्तुः श्रीकृष्णस्य ईदृशं पूजां पुष्पैरकृताकुर्वन् व्यत्ययेनैकवचनं सुष्ठु गायन्तीति सुगाः गन्धर्वादयः गीतैः पूजयामासुः विप्रास्तु स्तवैः स्तोत्रैः पार्षद भृत्यगणा जयशब्दैः ॥ ३४ ॥

किञ्च अजो ब्रह्मा स्वधाम्नः स्वस्थानस्यान्ति समीपे तेषां गन्धर्वादीनामद्भुतानि स्तोत्राणि सुवाद्यानि वाद्यानि गीतिकाः गीतानि च जयशब्दा आदिर्येषां ताननेकानुत्सवरूपान् मङ्गलाशासनध्वनींश्च श्रुत्वा अचिरादागतः ईशस्य कृष्णस्य महिम महिमानं दृष्ट्वा विस्मयं जगाम ॥ ३५ ॥

हे राजन् ! आजगरं चर्म शुष्कं सत् बहुकालं वृन्दावने स्थितानां व्रजौकसां क्रीडास्थानां बभूव क्रीडार्थं महाविलमार्गादित्यर्थः ॥ ३६ ॥

* अन्यदप्यतिचित्रं वृत्तमित्याह—एतदिति ।

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशाद्यौवनं तु ततःपरम् ॥

इति तदभिज्ञवचनं हरेरेतत्कौमारजं पञ्चमाब्दकृतं कर्म तदैव दृष्ट्वा बालाः पौगण्डके षष्ठेऽब्दे व्रजे ऊचुरद्यैव तदिदमित्यूचुरित्यर्थः । अयमहो भगवन्महिमातिशयः यदन्यकालिककर्मणस्तादात्विकानुसन्धानं गोपानामिति भावः ॥ ३७ ॥

अन्यदप्यतिचित्रं वृत्तमित्याह—नेति । एतदेव न चित्रम् अपितु परं देवकृष्णाद्योऽपरे अपकृष्टाः येषां ब्रह्मरुद्रादीनां तेषामपि परमस्य वेधसः सर्वस्रष्टुरपि लीलया कपटमनुजबालकस्य स्पर्शनमात्रेण विधूतं पातकं यस्य तथाभूतः अघासुरोऽप्यसतां दुष्प्रापमात्मसाम्यं भगवत्साम्यं प्राप लेभे इति यत् तदेवातिचित्रमित्यर्थः ॥ ३८ ॥

एतदेव किंपुनर्न्यायेन द्रढयति—सकृदिति । यस्य भगवतः अङ्गप्रतिमा अङ्गप्रतिकृतिरर्चा मूर्तिर्मनोमयी मनःप्रचुरा तत् प्रादुर्भावात्र तन्निभावितभगवच्छक्तिकत्वम् अन्तराहिता ध्यानेनान्तः हृदये निधापिता सती भागवतीं गतिं मुक्तिं ददौ अङ्ग हे राजन् ! नित्यनिरतिशयानन्दज्ञानरूपः प्राकृतगुणरहितो निरस्तमायिकः स एव भगवान् साक्षादन्तराहितो भागवतीं गतिं मुक्तिं ददातीति किं पुनर्वक्तव्यमित्यर्थः ॥ ३९ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

* कौमारकं कर्म पौगण्डके प्रोचुरित्युक्तं तत्र कारणबुभुत्सयाऽपृच्छद्राजेत्याह सूतः—इत्थमिति । हे द्विजाः ! यादवदेवः श्रीकृष्णस्तेन दत्तः परीक्षिदित्थं विचित्रं स्वभर्तुश्चरित्रं श्रुत्वा पुनः पुण्यावहं तदेव पौगण्डके कौमारजं प्रोचुरित्येतदेव वैयासकिं शुकं पप्रच्छ, प्रश्नहेतुं वदन् राजानं विशिनष्टि, येन भगवता नितरां गृहीतं चेतो यस्य तथाभूतः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ज्योतीरूपं तथा दर्शनञ्च स्वमहिमव्यक्त्यर्थम् ॥ ३३—३५ ॥

पूतनावद्देहस्यापि सौगन्ध्यादिमयपुण्यरूपत्वप्राप्तिमाह राजन्निति । आक्रीडगह्वरत्वं वत्सरान्तरे ज्ञेयम् ॥ ३६—३७ ॥

अघानेन इत्यादि वक्ष्यमाणात् अत एव तावत्कालं मायावृतत्वात् ॥ परावराणामंशिनामंशानाञ्च सर्वेषां परमस्य स्वयं भगवतः वेधसस्तत्तदाविर्भावकर्त्तुर्मनुजाभस्य मनुष्यलीलस्य श्रीनन्दस्यार्भस्तल्लीलश्च स मायी परमदयालुश्च सः तस्येति परमशक्तित्वं सर्वकारणत्वं स्वतन्त्रलीलत्वं तादृशपतितोद्धारित्वञ्च दर्शितम् आत्मसात्म्यं आत्मसाम्यमित्यनेन प्रवेशवचनेन च तत्सायुज्यमुक्तम् ॥ ३८—४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवति बहिर्निर्गते अघस्य सायुज्यमाह—पीनो योऽयमहिः सर्पः तस्य भोगाच्छरीरात् उत्थितमद्भुतं महः तेजोरूपं ज्योतिः प्रकाशमानं स्वधाम्ना स्वतेजसा दश दिशः उज्ज्वलयत् बहिः स्थितं सत् भगवन्निर्गमनं प्रतीक्ष्य निर्गते तस्मिन् विवेश पश्यतां दिवौकसां सतां तेजोरूपं लिङ्गशरीरं प्रविष्टमिति मायावादिनः ॥ ३३ ॥

ततो देवानां सुखं जातमित्याह—ततोऽतिहृष्टा इति । स्वार्थे देवार्थमेव करोतीति स्वकृत् तस्य भगवतः अर्हणां पूजामकृत कृतवन्तः पुष्पैः अप्सरसश्च नर्तनैः पूजामकृतेति सर्वत्र सम्बन्धः सुष्ठु गायन्तीति सुगाः ते गीतैः वाद्यं घनो येषां ते वाद्यधराः विप्रास्तु स्तवैः वैष्णवगणाः जयनिस्वनैः अर्हणामकृत ॥ ३४ ॥

तदा ब्रह्मणोऽप्याश्चर्यं जातमित्याह—तदद्भुतेति । तेषामद्भुतं स्तोत्रादिकं श्रुत्वा स्वधाम्नोऽन्ति स्वगृहसमीपे अजो ब्रह्मा तत्र आगतः अचिरात् शीघ्रमेव दृष्ट्वा भगवन्तं महेशस्य भगवतः सामर्थ्यं च विस्मयं जगाम स्तोत्रं सुवाद्यं गीतजयशब्दाश्च नैकोत्सवमनेकोत्सवः तत्सहितान् मङ्गलस्वनान् ते शब्दाः ब्रह्मलोकपर्यन्तं गताः तच्छ्रुत्वा ब्रह्मा समागतो विस्मयमाप ॥ ३५ ॥

मुक्तस्य देहः भगवद्भक्तानां क्रीडार्थं जात इत्याह—राजन्निति । वृन्दावने शुष्कं गन्धरहितं व्रजौकसां बहुकालमाक्रीडार्थं गह्वरं गुप्तस्थानं बभूव ॥ ३६ ॥

आश्चर्यान्तरमाह—एतदिति । भगवतः कौमारावस्थायां जातमेतत्कर्म आत्मनः अहेः सकाशात् मोक्षणरूपं मृत्योरेव मोचनरूपं हरेः पौगण्डके पौगण्डावस्थायां तस्य शरीरं शुष्कं दृष्ट्वा विस्मिताः सन्तः व्रजे समागत्य ऊचुः । अघानेन महाव्याल इति वक्ष्यते ॥ ३७ ॥

अघासुरस्य मुक्तिं युक्त्या समर्थयति—नैतद्विचित्रमिति द्वाभ्याम् । मनुजार्भो मनुष्यबालकः स एव माया तद्वतो भगवतः एतत् बालमोक्षमहासुरमोक्षो वा न विचित्रं यस्तु सोऽयं परावराणां ! परमः ब्रह्मादीनामस्मदादीनां च नियन्ता कर्त्ता च अतः अघोऽपि पापरूपो यत्स्पर्शनेन धूतपातकः प्रक्षालितपापः आत्मसाम्यं च भगवत्समानतां दुष्टानां दुर्लभं प्रापेति यत् ॥ ३८ ॥

तत्र हेतुः यस्य भगवतः अङ्गप्रतिमाशरीरसमाना मानसी मूर्तिः अन्तराहिता हृदये स्थितापि भागवतीं गतिं ददौ ददाति तत्र स एव नित्यात्मसुखानुभूतिः सच्चिदानन्दरूप आत्मा व्युदस्तमायः पूर्णज्ञानेनैव गतमायः परमकाष्ठां प्राप्तः अन्तराहितस्सन् मुक्तिं ददातीति किम्पुनर्वक्तव्यम् ॥ ३९ ॥

एतावदुक्त्वा शुकः परमनिर्वृतः तूष्णीमास तदा राजा पृच्छतीत्याह सूतः—हे द्विजाः शौनकादयः! यादवदेवेन कृष्णेन दत्तः विष्णुरातः स्वरातुः स्वरक्षितुः चरित्रं श्रुत्वा भूयोऽपि तदेव पप्रच्छ यतो विचित्रं पुण्यं च वैयासकिं शुकं येन चरित्रेण निगृहीतं चेतो यस्य ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ज्योतिरहिदेहस्थितं शुद्धसत्त्वमयमिति श्रीस्वामिचरणाः तादृशदुष्टस्यापि तस्य मुक्तेः सर्वलोकप्रत्यायनार्थं जीवस्य निराकारत्वेऽपि तत्कालप्राप्तभगवच्छक्त्यालिङ्गितत्वात्तथा दृश्यत्वमिति वैष्णवतोषिण्यादयः परब्रह्मणो व्यापकमहाज्योतिः स्वरूपमिव जीवस्यापि ज्योतिस्स्वरूपं मायिकलोचनागम्यमपि तदानीं भगवता स्वेच्छयैव स्वस्वरूपमिव स्वस्यासुरमुक्तिप्रदायकत्वलक्षणगुणस्य सर्वलोकप्रत्यक्षीकरणार्थं दर्शितमित्येके प्रत्यात्मसाम्यमिति भागवतीङ्गतिमित्युपरिष्टादुक्तेरघासुरः सारूप्यमुक्तिं प्राप । ननु सायुज्यमित्यतस्तल्लक्षणप्राप्ततदीयचिन्मयदेहज्योतिरेव तत् देहस्तु ज्योतिर्भूयस्त्वात् द्रष्टुं शक्यो नाभूत् भगवति प्रवेशस्तु सायुज्यप्रथावतोः शिशुपालदन्तवक्रयोरिव ज्ञेय इत्यपरे मिषतां मिषत्सु सत्स्वपि अनादरे वा षष्ठी ॥ ३३ ॥

स्वकृतः स्वस्रष्टुः श्रीकृष्णस्य अर्हणां पूजाम् अकृत अकुर्वत सुष्ठु गायन्तीति सुगाः गन्धर्वादयः वाद्यधरा विद्याधरादयः विप्रा वसिष्ठादयः गणाः गरुडादयः ॥ ३४ ॥

अद्भुतस्तोत्राणि च सुवाद्यानि च गीतिकाः सुकुमारा गीतयश्च जयशब्दादयश्च नैकोत्सवा अनेकोत्सवा मङ्गलस्वनाश्च तान् स्वधाम्नः सत्यलोकस्य अन्ति निकट एव श्रुत्वेति महर्जनतपोलोकस्था अपि परम्परयैव श्रुत्वा गीतादिकं चक्रुरिति ज्ञेयं श्रुत्वा अजो ब्रह्मैव अचिरात् सद्य एव अघासुरस्य ज्योतिर्वैकुण्ठं प्राप्ति गच्छदेव ईशस्य महि महिमानं दृष्ट्वा आगतोऽन्यैरलक्ष्यमाणो वृन्दावनमेव तत्र च ईशस्य महिमानं दृष्ट्वा विस्मयं प्राप ॥ ३५ ॥

* इत आरभ्य त्रयोदशोऽध्यायः ।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बहुतिथं बहुकालं आ सम्यक् क्रीडार्थकगह्वरं बभूव ॥ ३६ ॥
अन्यदप्याश्चर्यमेकं श्रावयिष्यन्नाह—एतत् हरेः कौमारजं पञ्चमाब्दकृतं कर्म दृष्ट्वा अस्य हरेः पौगण्डके वयसि षष्ठेऽब्दे बाला अद्यैतद्वृत्तमित्यूचुः किं नतु, आत्मनाम् अहेः सकाशान्मोचणं कुतः मृत्योः अहिमरणाद्वेत्यर्थः ॥ ३७ ॥

मनुजाभे एव माया तदीयस्वरूपं तद्वत् श्रुतिप्रसिद्धान्मायाशब्दस्य स्वरूपवाचकत्वात् परावराणां सर्वेषामंशानामंशिनामपि परमस्य वेधसः स्वेच्छाभिमतमेव कर्त्तुः एतत् विचित्रं न, किं तर्हित्यत आह—अघोऽपीति । धूनपातक इति पातकमिथ्यूपलक्षणं शरीरदौर्गन्ध्यादेरप्यपगम इति किं वक्तव्यं पुनरादृष्ट्या शरीरसौगन्ध्यमेव व्याख्येयं सप्रियसखस्य कृष्णस्य क्रीडास्पदीभावित्वात् आत्मसाम्यं स्वसमानरूपत्वम् अमतामसुराणां सायुज्यं दुर्लभं सारूप्यं तु भक्तसम्प्रदानीयत्वात्सुदुर्लभम् ॥ ३८ ॥

तस्मासौ कारणमाह—यस्य अङ्ग मूर्त्तिस्तस्य च प्रतिमा प्रतिकृतिर्जगन्नाथमदनगोपालगोविन्दादिरूपा सापि मनोमयी मनसैव ध्याता तत्रापि सकृदेव अन्तराहिता सती भागवतीं गतिं ददौ खट्वाङ्गादिभ्यः स एव साक्षात् नित्यात्मा नित्यशरीरश्चासौ सुखानुभूतिरूपश्च अभिव्युदस्तमायश्चेति सः परमः स्वयमवतारी स्वयमेवान्तर्गतः किं पुनः वक्तव्यमित्यर्थः । ननु, खट्वाङ्गादीनां तत्प्राप्तौ भक्तिरेव कारणम् अघादीनां तु प्रातिकूल्यात् भक्त्यभाव एव तत्प्राप्तिप्रतिबन्धी "भक्त्याहमेकया ग्राह्यः" इति भगवत्कृतनियमात् सत्यं स च नियमोऽन्यस्मिन्नेव समये कृष्णस्यावतारसमये तु पूर्णाया एव कृपाशक्तेः कदर्थोद्रेकात् तत्सम्बन्धमात्रेणैव तत्प्राप्तिर्यदुच्यते—

"कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥
न चैवं विस्मयः कार्यो भवता भगवत्यजे ।
योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते" ॥

इति कृष्णस्य पूर्णत्वे लक्षणमिदमसाधारणं यद्वैरिभ्योपि मोक्षं ददातीति तेषामपि मध्ये "व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम्" इत्युक्तेरघासुरदेहस्य स्वक्रीडासुखप्रदीणाविरभावात् तात्कालिकतत्प्रातिकूल्यस्यानुकूल्यमयभक्तित्वमननात् तस्मै सारूप्यमोक्षं वैकुण्ठं एव ददौ न तु स्वधाम्नि वृन्दावने तद्भक्तेस्तात्पर्यवैशिष्ट्याभावात् इति ज्ञेयम् ॥ ३९ ॥

हे द्विजाः ! यादवदेवेन उत्तरायै युधिष्ठिराय वा दत्तः पर्यावृत् स्वस्य राता गृहीता यः श्रीकृष्णस्तस्य येन श्रवणेन निवरां गृहीतं वशीकृतं चेतो यस्य सः ॥ ४० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेवाह—पीनाहिभोगोत्थितमिति । पीनादहिभोगादजगरदेहादुत्थितम् अद्भुतमाश्चर्यरूपं महद्बृहज्ज्ञानगुणं ज्योतिः ज्ञानरूपं जीवतत्त्वं स्वधाम्ना एता दिशो ज्वलयत् ईशस्य श्रीकृष्णस्य निर्गमं प्रतीक्ष्य खे अवस्थितं सत्तस्मिन् निर्गते ईशे दिवौकसां कर्मफलाशक्तानां देवानां मिषतामनादरे षष्ठी कर्मफलभो... स्थानं तदाशक्तांश्चानादृत्य विवेश ॥ ३३ ॥

ततस्तदनन्तरम् सुराः देवाः स्वकृतः यत्र तत्रापि तं ... कर्मवशगं जीवं केनापि भक्तिलेशेन स्वं स्वकीयं करोति ... स्वकृत्तस्य भक्तपक्षपातिनो भगवतः पुष्पैः अर्हणमकृन पू... मकुर्वन् सुष्ठु गायन्तीति सुगाः गन्धाः उक्ता अनुक्ताश्च ... जयनिस्वनैः ॥ ३४ ॥

किं बहुना अजो ब्रह्मापि स्वधाम्नोऽन्ति समीपे तेषां वाद्य... श्रुतानि स्तोत्रादीनि नैकोत्सवा अनेकोत्सवा ये मङ्गलशब्दा... स्तान् श्रुत्वा अचिरादागतः ईशस्य श्रीकृष्णस्य महि महि... मानं दृष्ट्वा विस्मयं जगाम ॥ ३५ ॥

बहुतिथं बहुकालम् आक्रीडगह्वरं क्रीडार्थं गर्भ... स्थानम् ॥ ३६ ॥

हरेः कौमराजम् पञ्चमाब्दकृतम् आत्मनां बालादीनां अंह... मृत्योर्मोचणं तत्र बालादीनां प्रसिद्धात् अहेश्च हरेः संसा... रूपान्मृत्योर्मोचणम् एतत्कर्म तदानीमेव दृष्ट्वा पौगण्डके षष्ठ... बाला अद्यैतद्वृत्तमित्यूचुः—

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशाद्यौवनं च ततः परम् ॥

इति ॥ ३७ ॥

मनुजाभे मनुष्यतया वर्तमानस्य वसुदेवस्य वा पुत्रस्य ... मायासङ्कल्पोऽस्यास्तीति स तथा तस्य अघोऽपि यदात्मसाम्यं ... स्वसमानरूपतां प्राप तां प्राप तत्र विचित्रम् ॥ ३८ ॥

अङ्ग हे राजन् ! यत् यस्य मनोमयी प्रतिमा अन्तर्हृत्पद्मे मह... ध्यानेनाहिता भागवतीं गतिं मुक्तिं ददौ तदा स स्वयं ... यंमायः निरस्तकपटः परमः अन्तर्गतः आत्मसाम्यं ददौ ... किं पुनर्वक्तव्यम् ॥ ३९ ॥

यत् येन श्रवणेन ॥ ४० ॥

———

भाषा टीका ।

जब ताँई भगवान् अघासुर के मुखसों बाहर नहीं निक... तब लग वा दुष्ट सर्प के शरीरसों अद्भुत और बडी ... जोत निकसकें दशों दिशाओं को प्रकाश करती भगवान् ... निकासिवे की प्रतीक्षा करकें आकाशमें स्थित रही ... पीछें वो जोत सब देवतनके देखतेर भगवान् में समा... गई ॥ ३३ ॥

तवतो सगरे देवता बडे हर्ष कों प्राप्त होयकें ... कार्य करवे वारे श्रीकृष्णको पुष्पनसों पूजन करन लगे, ... नाचन लगी सुन्दर गायवे वारे गन्धर्व गावन लगे, ... वारे बाजे बजावन लगे, ब्राह्मण स्तुति करन लगे, और ... आपके पचवारे जयर शब्द करन लगे ॥ ३४ ॥

वासमें वो अद्भुत स्तोत्र सुन्दर बाजे गीत जयसों ... लेकें वा उत्सव में भयेजो अनेक मङ्गल शब्द तिनहूं सुनि... ब्रह्मा बडी जल्दीसों वाई ठोर आय गयो, श्रीकृष्णकी महि... कों देखिकें बडे विस्मयकों प्राप्त होतो गयो ॥ ३५ ॥

राजोवाच ।

ब्रह्मन् ! कालान्तरकृतं तत्कालीनं कथं भवेत् ।
यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ॥ ४१ ॥
तद्ब्रूहि मे महायोगिन् ! परं कौतूहलं गुरो ! ।
नूनमेतद्धरेरेव माया भवति नान्यथा ॥ ४२ ॥
वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः ।
यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतम् ॥ ४३ ॥

श्रीसूत उवाच ।

इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेन्द्रियः ।
कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ! ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे अघासुरवधो नाम
द्वादशोऽध्यायः ॥ १२ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले, कि—हेराजन् ! वृन्दावनमें वो अजगर को सूखो चर्म बहुत दिन ताईं व्रजवासी बालकनके खेलवेकूं एक बड़ी गुफासी होत भई ॥ ३६ ॥

ऐसें श्रीकृष्णनें कुमार अवस्था अर्थात् पांच वर्षकी अवस्था में कियो जो कर्म और अपनकों सर्पके मृत्युसें छुडाये सो व्रजके बालकन नें एक वर्ष पीछें पोगण्ड अवस्थामें बडे विस्मयको प्राप्त होयकें व्रजमें जायकें कह्यो ॥ ३७ ॥

हे राजन् ! कृपा करकें मनुष्य बालक होयवे वारे ब्रह्मादिकन सों बडे श्रीकृष्णके ये चरित्र कछु विचित्र नहीं समनों चाहिये । कौनसों ? जो, कि—अघासुर सरीको दुराचारहु जिनके स्पर्शकूं पायके अपने पापनकों छुडायकें आपकी समताकूं प्राप्त भयो जोकि आपकी समता असत् जनों कों बहुतही दुर्लभ है ॥ ३८ ॥

भलो जिनके श्री अङ्ग की प्रतिमा सो भी मनोमयी-अर्थात् मनसूं ध्यानमें जाई प्रह्लादादिकन कों भागवत गति कूं देत भई सोई साक्षात् अपनी नित्यसुखानुभूतिसों माया निरास करन वारो श्री कृष्ण जब अन्तर गत भयो अर्थात् वाके भीतर चलो गयो वाकी गति होयवे में फिर कौन सो सन्देह है ॥ ३९ ॥

सूत उवाच ।

सूतजीबोले कि—हे शौनकादिक हो ! या प्रकार यदुकुलोत्तंस श्रीकृष्णको दियो भयो राजा परीक्षित् अपने रक्षक श्रीकृष्ण के विचित्र चरित्रन कूं सुन करिकें फिर भी श्रीशुकदेवजी सों वाई पुण्य चरित्र कूं पूछतो भयो जा चरित्र सों अपने चित्त को ग्रहण भयो हो ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कालान्तरे कौमारे कृतं पौगण्डके कथं ज्ञात्वोचुरित्यर्थः ॥ ४१—४३ ॥

तेन यः स्मारितोऽनन्तस्तेन हृतान्यखिलेन्द्रियाणि यस्य सः तथाभूतोऽपि कथञ्चिल्लब्धबहिर्दृष्टिः हे भागवतोत्तमोत्तम ! हे शौनक ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कालान्तरकृतं पूर्वकालीनं कर्म तत्कालीनं सद्यः कालदृष्टं कथं सम्भवेत् ? तदेवाह—यदिति । यत्कौमारके हरिणा कृतं तत्पौगण्डकृतमिति कथमूचुः ? टीकायां च पौगण्डके कृतमिति कथं ज्ञात्वोचुरित्यन्वयः ॥ ४१ ॥

तदिति कथं सम्भवेत् तत्प्रकारमित्यर्थः । कौतूहलं कौतुकजनकम् इत्यर्थः । महायोगिन् ! परमभक्तियुक्तेति श्रीभगवद्वृत्तं तवाज्ञातं न किञ्चिदस्तीति भावः । ननु, परमगुह्यमेतत्तत्राह—हे गुरो !

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपदेष्टुः किञ्चिद्दोष्यं शिष्ये नास्तीति भावः स्वयमेव सिद्धान्तं तर्कयति एतत्तेषां तादृशं दर्शनमात्रं मायादुर्घटघटनी शक्तिः हरेरिति मायया सर्वविचारहरणाभिप्रायेण एतेनान्यमाया निरस्ता, तदेव द्रढयति–नान्यथा तन्मायां विना न सम्भवेदित्यर्थः । गोपकुमाराणां तेषामन्यतो भ्रमाद्यसम्भवात् ॥ ४२ ॥

श्रवणार्थमस्यौत्सुक्येन गुरुं प्रोत्साहयति—वयमिति बहुत्वं बन्धुवर्गापेक्षया अपि किं वा तच्छिष्यादिनात्मनो बहुत्वमानात् क्षत्रबन्धवः क्षत्रियाधमा अपि एतच्चात्यन्तविनयात् पुण्यं मनोज्ञं तत्र गुणविशेषं बोधयति—त्वत्त इति । हे गुरो ! त्वच्छिष्यत्वेनैव धन्याः कृतार्थाः विशेषतश्च त्वत्तः श्रीकृष्णकथामृत पानेन धन्यतराः मुहुः पानेन च धन्यतमा इत्यर्थः ॥ ४३ ॥

बादरायणिरिति पितृनाम्नोल्लेखात् तस्यापि नन्दनत्वेन माहात्म्यविशेषः सूचितः । अत एव तेन तदीयप्रश्नविशेषेण स्मारितस्तत्तद्विशेषेण हृदयं प्रापितोऽनन्तः शाद्वजेमनादिब्रह्मस्तूयमानतापर्यन्तानन्तैश्वर्यमाधुरीकः कृष्णः तेन हृताखिलेन्द्रियः प्रेमभरेण तदेकपरिस्फूर्त्या लीनसर्वेन्द्रियवृत्तिरित्यर्थः अयं प्रमोदमोहानुभावः प्रलयाख्यः कम्पपुलकादिवत् प्रेमविकारविशेषो ज्ञेयः संस्मारित इति क्वचित्पाठः तथापि स एवार्थः स च स्वाम्यसम्मतः चित्सुखस्य तु सम्मतः कृच्छ्रात् उच्चैः करतालशङ्खभेरीदुन्दुभिनिःस्वनादिवाद्ययुक्तकीर्तनोद्घोषणैर्बहुलप्रयासेन लब्धबहिर्दृष्टिः जातेन्द्रियबहिर्वृत्तिरित्यर्थः पुनरित्यनेन पूर्वमपि वारम्वारमीदृशो जातो ऽस्तीति बोध्यते तत्र तत्रैव तातेति वारं वारं सम्बोधनमित्यभिज्ञाः आहुः तदर्थं श्रीपरीक्षिता महाव्यग्रेण सता निजान्तिके तत्तद्वाद्यादि श्री कृष्णकीर्तनसामग्री श्रीजनमेजयतो रक्षिता ऽस्तीत्याख्यायिका प्रसिद्धा शनैरिति तदानीमप्यनुवर्तमानेन प्रेमभरेणाक्रान्तत्वात् हे भागवतोत्तमोत्तमेति तत्परमगुह्यमपि श्रोतुमर्हसीति भावः क्वचित्स्वाम्यसम्मतो द्वितीयान्तपाठश्चित्सुखसमन्तः ततश्च प्रतिवचनं हेतुर्ज्ञेयः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कौमारे हरिकृतं कालान्तरकृतं कथं तत्कालीनं भवेत्तच्च अर्भकाः पौगण्डके तत्कालीनमिव कथं जगुरित्यन्वयः ॥४१॥

श्रीहरेः माया सङ्कल्परूपं ज्ञानं क्रीडेच्छेति यावत् अन्यथा नेति मम भासते इति प्रश्नः ॥ ४२ ॥

पिबाम सादरं शृणुमः ॥ ४३ ॥

तत्स्मारितः परीक्षित्प्रश्नेन स्मारितो योऽनन्तगुणविशिष्टोऽनन्तः कृष्णः तेन हृतमखिलेन्द्रियं मनो यस्य सः ततः मनसो लये सति पुनः कृच्छ्र लब्धबहिर्ज्ञानः सन् शनैः तं प्रत्याह—भागवताः कीर्तनादि निष्ठाः तेषूत्तमाः श्रवणनिष्ठत्वात् श्रवणे ऽक्षतया प्रश्नादि करणेऽहन्तानिवृत्तिः श्रीभगवच्छ्रवणस्यैव ममता विषयतया आत्मीये ममतानिवृत्तिः ए... विरोधिनिवृत्तौ सति अनन्तराङ्गानाम् अपि श्रवणे ... भावः सुधीभिरनुभाव्यः स्मृतिसन्ततेरेव भाष्यकारैर्भ... त्वप्रख्यापनात् इतिभावः ॥ ४४ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वादशोऽध्यायः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नप्रकारमेवाह–ब्रह्मन्निति । हे ब्रह्मन्! कालान्तरे कौमारकाले ... कर्म तत्कालीनं पौगण्डकालीनं कथं भवेत्पौगण्डे कथं ब्रातेऽनु... रित्यर्थः । तदाह–यदिति । यद्वा, तत्कालीनं पौगण्डकाले वाच्यं ... भवेत् यत्कालावच्छेदेन कृतं तत्तत्काले विस्मृतं सत् कालान्त... च स्मृतं सद्वाच्यं स्यादेवेत्यत्राह–यदिति । यद्यस्मात्कारणात्कौमार कृतं पौगण्डके विदुः सन्निकृष्टकाले स्मरणाभावः काला... न्तरे स्मरणं च न विना कारणेन भवतीति तत्कारणं वक्त... प्रश्नार्थः ॥ ४१ ॥

तदेतत्कारणं ब्रूहि हे महायोगिन् ! मे ममैतत्कारणं श्रो... परमधिकं कौतूहलं वर्त्तते मम त्वेवं प्रतिभातीत्यभिप्रा... याह—एतत्कारणं हरेर्माया आश्चर्यशक्तिरेव नूनं ध्रुव... अन्यथा त्वेवं न घटते ॥ ४२ ॥

आत्मनः कृतार्थतामाविष्कुर्वन् भगवत्कथां स्तौति–वय... मिति । हे गुरो ! क्षत्रबन्धवोऽपि वयं लोके धन्यतमाः कृतार्थाः ... कुतः ? यतः श्रीकृष्णस्य कथामृतं मुहुर्मुहुस्त्वत्तः पिबामः ... न्यानां नैवं घटेतेति भावः ॥ ४३ ॥

इत्थमापृष्टो भगवान् बादरायणिस्तदाहेत्याह सूतः—इतीति स तु बादरायणिरित्थं पृष्टोऽत एव तावत् संस्मारितेनापरिच्छिन्न... वैभवेन भगवता हृतान्यखिलानीन्द्रियाणि यस्य तथाभूतोऽपि पुनः शनैः कृच्छ्रात्कथञ्चिल्लब्धा बहिर्दृष्टिर्येन तथाभूतः ... भागवतोत्तमोत्तमं राजानं प्रत्याह भागवतोत्तमोत्तमेतिपाठे ... शौनक ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वादशोऽध्यायः ॥ १२ ॥
( न समाप्यतेऽत्राध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कालान्तरकृतं कौमारकृतं पौगण्डकाले कथं स्यात् ? तत्र हे... यत्कर्म कौमारं हरिणा कृतमपि पौगण्डे कृतमित्यूचुरित्यर्थः ॥ ... हरेरेव माया दुर्घटघटना शक्तिः नान्यस्य तत्र तदशक्तेः ... शाद्वलजेमानादिकमारभ्य ब्रह्मणस्तु यमानतात्पर्य प्रका... अनन्तैश्वर्यमाधुरीकः ॥ ४२–४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रश्नमेवाह—त्रिभिः । ब्रह्मन्निति सम्बोधनं ज्ञानार्थं यदुक्तं कौमारे हरिकृतं पौगण्डे कीर्तितमिति तत्र शङ्का कालान्तरकृतं तत्कालीनं कथं भवेदिति तदेवाह—यत्कौमारे हरिकृतं बालकाः पौगण्डके विदुरिति ॥ ४१ ॥

यद्यपि भविष्यति किञ्चित्कारणं तथापि तन्मे मह्यं ब्रूहि मज्ज्ञानं तु तव नास्तीत्याह—हे महायोगिन्निति । किञ्च एतत् परं कौतूहलम् एतावत्तु ज्ञायते । नूनमेतच्छ्रीहरेरेव माया भवति अन्यथा तेषां भ्रमो न स्यात् ॥ ४२ ॥

अतो भगवच्चरित्रमिति वक्तव्यं कथनार्थं स्वश्लाघां करोति वयं धन्यतमा इति क्षत्रियाधमा अपि वयं धन्यतमाः यतो भगवान् गुरुः किञ्च त्वत्तः कृष्णकथामृतं यतो मुहुः पिबाम एवं पृष्टः जातसमाधिरपि शुकः पुनराहेत्याह सूतः—इत्थं पृष्टो बादरायणिः सम्यक् स्मारितो योऽयमनन्तः तेन हृतान्यखिलेन्द्रियाणि यस्य तादृशोऽपि कृच्छ्रात् पुनर्लब्धबहिर्दृष्टिः शनैः प्रत्याह—समाधेर्विरतस्य उच्चैर्भाषणं न सम्भवतीति । भागवतोत्तमानां मध्ये उत्तमं प्रतीति कथने हेतुः ॥ ४३—४४ ॥

इति श्रीभागवते महापुराणे श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे प्रक्षिप्ता-
ध्यायत्रये प्रथमाध्यायविवरणम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालान्तरकृतं पूर्वकालनिष्पादितं कर्म तत्कालीनं सद्यः कालदृष्टं कथं भवेत् ? तदेवाह–यदिति । पौगण्डके अद्यैव हरिकृतमिदं कर्मेति कथमूचुरित्यर्थः ॥ ४१ ॥

माया दुर्घटघटनापटीयसी शक्तिः हरेरित्यन्यमायानिरस्ता योगमायेत्यर्थः । तयैव भगवन्नित्यपरिजनानां मोहनसम्भवात् ॥ ४२ ॥

हे गुरो इति मम त्वच्छिष्यत्वात् "ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत" इति विधेरवश्यवक्तव्यत्वं व्यञ्जितं पिबाम इति लालसिव्यञ्जनया स्वस्य स्निग्धत्वं च ॥ ४३ ॥

कृच्छ्रात् उच्चैर्भगवन्नामकीर्तनोद्घोषैः तत्रत्य नारदव्यासादि मुनिकृतै रतियत्नभरादित्यर्थः । हे भागवतोत्तमोत्तम ! शौनक ॥४४॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥१२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालान्तरकृतं कौमारे कृतम् तत्कालीनं पौगण्डकालिकं कथं केन कारणेन भवेत् ? यस्मात्कारणात् अर्भकाः हरिणा कौमारे कृतं पौगण्डके जगुः ॥ ४१ ॥

माया विचित्रा शक्तिः ॥ ४२–४३ ॥

तेन राज्ञा यः स्मारितोऽनन्तो हरिस्तेन हृतान्यखिलानीन्द्रियाणि यस्य सः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषा टीका ।

राजोवाच ॥

राजा परीक्षित पूछन लगे, कि–हे ब्रह्मन् ! कुमार अवस्था में जो आपने चरित कियो सो पौगण्ड अवस्थाको कैसे होयगयो काहे सो, कि–कुमार अवस्था में जो हरिने कियो वाको बालकन नें पौगण्ड अवस्था में गायो ऐसें आपने कही ॥ ४१ ॥

तासों हे महायोगिन् ! हे गुरो ! मोकूं ये बडो कुतूहल है वा चरित्र कूं फिर भी आप कहबे कूं योग्य हो और मोकूं ऐसे मालुम परे है, कि–ये हरि की ही माया होयगी और तरियां नही बन सके है ॥ ४२ ॥

हम अधर होयके गयेबीते क्षत्रिय होय के भी अति धन्य है जो आपके मुखारविन्दसों बारम्बार पुण्य कृष्ण कथामृत कों पिये हैं ॥ ४३ ॥

सूत उवाच ।

सुतजी बोले, कि हे भागवतोत्तमोत्तम ! हे शौनक ! जब राजापरीक्षित ने श्रीशुकदेवजी सों ऐसें पूछी तब व्यासदेव के बदरिकाश्रमकी तपस्या के फलरूप श्रीशुकदेवजी कों श्रीहरि के स्वरूप रूप गुण विभूति ऐश्वर्य को स्मरण होय आयो, तासों सम्पूर्ण इन्द्रियन की वृत्ति बाई ओर को जायलगी फिर बडे धीरेसों राजा के प्रति बोलत भये ॥ ४४ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें द्वादश अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## ॥ त्रयोदशोऽध्यायः ॥

—:o:*:o:—

श्रीशुक उवाच ।

साधु पृष्टं महाभाग ! त्वया भागवतोत्तम ! ।
यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥ १ ॥
सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि ।
प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधुवार्त्ता ॥ २ ॥
शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ३ ॥
तथाऽघवदनान्मृत्यो रक्षित्वा वत्सपालकान् ।
सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोदशे हृतब्रह्मा वत्सान्पालांश्च मायया ।
तदा तत्सर्वरूपोऽभूत् कृष्णः पूर्ववदाचरत् ॥ १ ॥

नूतनयसि नव्यवत्करोषि ॥ १ ॥

तथा हि सारभृतां सारग्राहिणामयं निसर्गः स्वभावः कोऽसौ अच्युतस्य वार्त्ता प्रतिक्षणं साधु नव्यवद्भवतीति यस्सः विटानां स्त्रैणानां स्त्रियाः कामिन्या वार्तेव कथंभूतानामपि सताम् या अच्युतवार्तैवार्थो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि ॥ २—४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे महाभागेति गर्भेऽपि तेन श्रीभगवतो दर्शनात् हे भागवतोत्तमेति तत्कथैकरसिकत्वात् तथा द्विः सम्बोधनं च श्रीकृष्णाविष्टचित्तत्वात् प्रेम्णैव यद्यस्मात् ईशस्य स्वप्रभोः ॥ १ ॥

अश्रुतं च नूतनयसीति किं वक्तव्यं यतो मुहुर्मुहुः शृण्वन्नपि नूतनयसीत्यं तदत्युचितमेवेत्याह—सतामिति । कदाचित् कथञ्चित् कस्माच्चिदपि च रसान्न च्यवत इति अच्युतः तस्येति तद्वार्तया अपि तादृशत्वमभिप्रेतम् अत एव साधु यथा स्यात्तथा प्रतिक्षणं नव्यवद्भवति स्वादुत्वैशिष्ट्येनापूर्ववज्जायते तदेकवाक्यपद्यांशे दृष्टान्तः स्त्रिया इति तदेवं परमघृणास्पदस्यापि स्त्रीपदार्थस्य नवनवमधुरतास्फूर्तौ अनुराग एव कारणं चेन्नित्यनूतनायमानपरमानन्दैकरसस्य श्रीभगवतः किमुतेति भावः ॥ २ ॥

अवहितः सन्निति वक्ष्यमाणस्य परमदुरवगाहत्वात् राजन् हे वुद्ध्यादिना प्रकाशमानेत्यर्थः । उतेति वितर्के वयमिदं विचारयाम इत्यर्थः । अत्र श्रीभगवति ब्रह्मणि च यदसमं बहुविधमेवाश्चर्यमायास्यति तत् खलु न सर्वेषां सुबोधमिति गुह्यमित्युक्तम् ॥ ३ ॥

तथा तेन प्रकारेण अघासुरवदनरूपान् मृत्योर्वत्सान् पालकांश्च भगवानपि ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हे भागवतोत्तम ! ईशस्य कथानूतनतां मत्वा पृष्टमितीत्यर्थः ॥ १ ॥

इयन्तु पुरातननित्यसिद्धैव क्षणे क्षणे यन्नवतां याति तदेव सुन्दरमिति कविवचनात् सारभृतां सारं श्रीभगवत्पादारविन्दध्यानं ये बिभ्रति तेषां सताम् अच्युतस्य साधुवार्त्ता शोभनवार्त्ता नव्यवत् भासेत अयं निसर्गः स्वभावः विटानां विषयिणां स्त्रिया असाधुवार्तेव इति ॥ २ ॥

गुह्यत्वम् अन्यमुनीनाम् अस्यार्थस्याज्ञानात् ब्रूयुरित्यादि ॥ ३—४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नस्योत्तरं विवक्षुस्तावत्प्रश्नमभिनन्दति—साध्विति । त्वया साधु यथा तथा पृष्टं कुतो यत् यस्मात् कथामृतं शृण्वन्नपि नूतनयसि नवीनं करोषि ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

युक्तमेवैतदित्याह—सतामिति । सारग्राहिणां साधूनामयं निसर्गः स्वभाव एव, कोसौ ? अच्युतस्य वार्त्ता प्रतिक्षणं साधु नव्यवद्भवतीति यदेषः कथं स्त्रैणानां स्त्रियाः कामिन्याः वार्त्तेव कथम्भूतानामपि सतां यः अच्युत एवार्थो विषयो येषां तानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि ॥ २ ॥

शृणुष्वेत्यभिमुखीकरणम् अवहित इति अवधानोपयुक्तचित्तसमाधान गुह्यं गोप्यमपीति ॥ ३ ॥

विवक्षितं वृत्तं सङ्गमयति—अथेति । मृत्युतुल्यादघासुरस्य मुखात्स्वांस्तत्पालकांश्च रक्षित्वा इदं वक्ष्यमाणमुवाच ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥१॥

सतामित्यत्र नव्यवदिति प्रत्ययेनानुरागतुल्यत्वमेव दर्शितं भावानुरागे तु नव्यमेव भातीत्यर्थः । तथापि तस्याङ्घ्रियुगं नवं नवमितिवर्त्तते भावः उत वितर्के इदं विचारयाम इत्यर्थः ॥ २—७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वितीये वत्सहरणं बालैर्ब्रह्मभ्रमस्ततः ।
कौमारस्योपक्रमश्चैव भोजनादि निरूप्यते ॥

साभिनन्दति द्वाभ्याम् साधुपृष्टमिति । भगवच्चरित्र एव स्थिरा बुद्धिरिति महाभागवत्वं भागवतोत्तमेति सहजोत्तमता सर्वदैव ईशकथां शृण्वन्नपि यन्नूतनमिव करोषीति ॥ १ ॥

किञ्चोचितमेव यतः सतां सारभृतां भक्तिगतां निसर्गः स्वभावोऽयं तमेव स्वभावमाह—अर्थवाणीश्रुतिचेतसामपि यस्मा एवं स्वभावः अर्थो धनं वाणी वाक् श्रुतिः श्रोत्रं चेतोन्तःकरणं एतान्यपि स्वभावत एव भगवत्प्रवणानि तदाह—प्रतिक्षणं नव्यवत् नूतनवत् अच्युतस्य वार्त्तेति यत् रसे आविष्टे स्वभाव एव तथा भवतीति दृष्टान्तमाह यथा स्त्रियाः वार्ता विटानां श्रुता कीर्तिता भाविता वा सुखदा परमसाधुवार्ता वा भवति ॥ २ ॥

एवं तु साधुवार्त्तेति विशेषः महदद्भुतमस्ति सावधानतया श्रोतव्यमित्याह—शृणुष्वेति । अवहितः सावधानः गुह्यमप्येतत्तुभ्यं वदामि यतः स्निग्धस्य प्रेमवतः शिष्यस्य गुरवो गुह्यमपि वदन्ति ॥ ३ ॥

वत्साहरणारम्भमघमुखान्मोचितानां बालकानामुत्तरवृत्तान्तमाह अघस्य वक्त्रान्मृत्योरेव रक्षित्वा वत्सपालकान् सरित्पुलिनं यमुनापुलिनमानीय भगवानिदं वक्ष्यमाणमब्रवीत् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जेमनं वत्सतत्पालहरणं ब्रह्ममोहनम् ।
स्वभूनत्सवित्तयादिप्रादुर्भावस्त्रयोदशे ॥
विश्वस्य सृष्ट्यादिविमोहनाद्यैश्वर्यं यदंशांशभवं स कृष्णः ।
विश्वादिसृष्टिं बलदेवमोहं स्वैश्वर्यमैश्वर्यतात्मयोनिम् ॥

हे भागवतोत्तम ! कथं मे भागवतोत्तमत्वम् ? तत्राह—यदिति । नूतनयसि नूतनीकरोषि श्रुतां मुहुरास्वादितामपि कथामश्रुतचरीमिव करोषीति कथायामनुरागो व्यञ्जितः ॥ १ ॥

सारभृतां सारग्राहिणामयं निसर्गः यद्यतः अच्युतस्य वार्त्तां प्रतिक्षणं क्षणे क्षणे साधु यथास्यात्तथा नव्यवद्भवति तृष्णाधिक्यादपूर्ववज्ज्ञायते यदर्थानि अच्युतवार्त्ताप्रयोजनानि वाणीश्रुतिचेतांसि येषां तथाभूतानामपि तदेकनिष्ठानां दृष्टान्तः विटानां कामुकानां स्त्रियाः वार्त्तेव कामिनीकथेव ॥ २ ॥ ३ ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोदशेऽस्मिन्नध्याये यस्मात्कारणात्कौमारे हरिकृतं पौगण्डकेऽर्भका व्रजे जगुस्तत्कारणं बालवत्सहरणादिकं वक्तुं राजप्रश्नमभिनन्दति—साध्विति । यद्यतः ईशस्य भगवतः कथां मुहुः शृण्वन्नपि नूतनयसि नव्यवत्करोषि अतः साधुपृष्टम् ॥ १ ॥

भवद्विधानामेवंविधः स्वभाव एवेत्याह—सतामिति । सारभृतां सारग्राहिणाम् यत् यः अच्युतः एवार्थो विषयो येषां तानि वाणिश्रुतिचेतांसि येषां तेषां सताम् अयमेव निसर्गः स्वभावः, कः ? अच्युतस्य वार्ता अपि निश्चयं प्रतिक्षणं साधु नव्यवद्भवतीति यस्य सः विटानां स्त्रैणानां स्त्रियाः वार्तेव ॥ २ ॥

प्रस्तुतमाह—शृणुष्वेत्यादिना ॥ ३ ॥

तथोक्तप्रकारेण ॥ ४ ॥

---

भाषा टीका ।

तुलसीदाम भूषणाय नमः ।

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले कि हे महाभाग ! हे भागवतोत्तम आपने बहुत ही सुन्दर प्रश्नकियो, क्योंकि ! जो तुम श्री कृष्णचन्द्र की कथा कों सुन सुन कें हु फिर२ पूछकें वारम्बार नवीन करो हौ ॥ १ ॥

सार ग्राही साधुजनोंको यही स्वभाव है कि सदा भगवत् कथा में अपनी वाणी कर्ण और चित्त लगाये रहें और अच्युत जो श्री कृष्ण हैं तिन की कथा कों क्षण २ में नवीन सी करते रहे हैं । जैसें जार पुरुषन कों स्त्रियनकी वार्त्ता बड़ी प्रिय लगे है । और वे वाकूं पूछ २ के नवीन सी करो करें हैं ॥ २ ॥

हे राजन् ! अब तुम सावधान होय कें सुनों गुप्तचरित्र भी मैं तुम सों कहू हूं काहे सों कि—गुरुजन स्नेही शिष्य कों गुप्तवात भी कहो करें हैं ॥ ३ ॥

अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसम्पन्मृदुलाच्छवालुकम् ।
स्फुटत्सरोगन्धहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥ ५ ॥
अत्र भोक्तव्यमस्माभिर्दिवा रूढं क्षुधार्दिताः ।
वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥ ६ ॥
तथेति पाययित्वाऽम्भो वत्सानारुद्ध्य शाद्वले ।
मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ ७ ॥
कृष्णस्य विष्वक्पुरुराजिमण्डलै रम्याननाः फुल्लदृशो व्रजार्भकाः ।
सहोपविष्टा विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः ॥ ८ ॥

भाषा टीका ।

राजन् ! वाई रीति सों अघासुर के मुखरूप मृत्यु से वछरान् की बालकन की रक्षा करके फिर यमुनाजीके पुलिन में जाय के भगवान अपने सखान सों कहन-लगे ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भोजनविधानाय पुलिनं स्तौति–अहो इति–स्वीयानां केलीनां सम्पदो विद्यन्ते यस्मिंस्तत् मृदुला अच्छा वालुका यस्मिंस्तत् किं च स्फुटद्विकसत्सरः सरोजयाहुल्येनोपचारतः सर एव विकसदित्युक्तम् तस्य गन्धस्तेन हृता आकृष्टा अलयः पत्रिणश्च ये तेषां के उदके ध्वनयस्तेषां प्रतिध्वानास्तैर्लसन्तो द्रुमास्तैराकुलं व्याप्तम् ॥ ५ ॥

दिवारूढं वेलातीतेत्यर्थः ॥ ६ ॥

आरुध्य संरुध्य शाद्वले हरिततृणे देशे ॥ ७ ॥

तदा ते विरेजुः कृष्णस्य विष्वक् परितः पुरुराजिमण्डलैः बहुभिः पङ्क्तिमण्डलैः सहनैरग्रतर्यथोपविष्टाः श्रीकृष्णाभिमुखान्याननानि येषां ते फुल्लदृशो विकसितनयनाः कमलकर्णिकायाः परितः पत्राणि यथेति ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे वयस्या इति मम सखीनां भवतामेव भोजनयोग्यमेतदिति भावः । तदेव दर्शयति स्वेषां केलेः पङ्क्तिभोजननियुद्धादिक्रीडायाः सम्पत् सम्पत्तिर्यास्यस्तथाभूता मृदुलाच्छवालुका यस्मिंस्तदिति उपवेशसुखं स्फुटत्सरोजगन्धेति भोजनापेक्ष्यं धूपवत्सौगन्ध्यम् एतेन शरत्कालो लक्ष्यते तथा गीतमिव भ्रमरादिध्वनिविलासः भोजनपात्रं च पद्मपत्रादिकं सुवासितशीतलाच्छजलं च शरत्तापनिवारणार्थंघनवृक्षच्छाया चेति सुखभोजनसामग्री दर्शिता तत्र प्रतिध्वानेति पर्यन्तः ससम्पन्यपदार्थो बहुव्रीहिः लसद्द्रुमाकुलमिति तत्पुरुषः तयोः कर्मधारयो ज्ञेयः ॥ ५ ॥

हे क्षुधार्दिताः यद्वा यतः क्षुधार्दिता वयं तत्र हे दिवारूढं अघतुण्डान्तःप्रवेशादिना विलम्बापत्तेः यद्वा क्षुधं वत्सानां विशेषणम् अतो न निजभोजनसुखार्थमत्र निरक्ष्याः किं तु चरन्त्वित्यर्थः । शनकैरिति जलपानेनाप्यार्त्त्वात् यद्वा अस्मत्सुखभोजनसिद्ध्यर्थमधुना समीपे शनकैश्च पश्चाद्यथेष्टं चरिष्यन्त्येव अतोऽत्रैवान्तिके निरुध्यन्ता भावः ॥ ६ ॥

तथा एवमेवेति तदुक्तं संश्लाध्य इत्यर्थः । शाद्वल इत्यनुवर्त्तनीयं शाद्वलजेमनं चेति वक्ष्यमाणत्वात् शाद्वलं च सूक्ष्मदूर्वामयत्वमेव ज्ञेयं शिक्यानि स्वस्वगृहात् प्रातरानीतानि मुक्त्वेति अघोदरान्तःप्रवेशतः पुरस्तादेव तानि सौकर्याय वृक्षाग्रे धृतानीति ज्ञेयं किम्वा अघोदरान्तः प्रवेशे श्रीभगवत्प्रभावेन बालकानामिव तेषामवैकल्यं ज्ञेयम् ॥ ७ ॥

रम्याननाः अभि श्रीकृष्णस्य संमुख आननं येषां ते अत फुल्लदृशः तच्च तत्प्रीत्यर्थमचिन्त्यशक्त्यैव विपिने श्रीवृन्दावने विशेषशोभा योग्यतोक्ता ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वसङ्कल्पे सम्पद्यस्येति पृथक् पदम् एकपद्येति स्वं सम्पत्त्यर्थं मृदुला अच्छा वालुका यस्य तत्स्फुटन्ति सरांसि कमलानि तेषां गन्धेन हृता येऽलयः पत्रिकाः ध्वनिना लसन्तो ये द्रुमाः तैर्व्याप्तं द्रुमाकुलम् इति पृथक् पुलिनविशेषणं द्वयं ज्ञेयम् ॥ ५ ॥

दिवा इत्यव्ययम् दिनमारूढमित्यर्थः ॥ ६ ॥

आरुध्यैकीकृत्य ॥ ७ ॥

कृष्णस्य विष्वक् सर्वतः पुरुराजीनि मण्डलानि तैः उपविष्टाः व्रजार्भकाः विपिने विरेजुः छदाः पात्राणि चेति ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुलिन एवाशिशिषामुत्पादयितुं तत्स्तौति–अहो इति । हे वयस्याः स्वीयानां केलीनां सम्पदो यस्मिन् मृदुला अच्छा वालुका यस्मिं स्वकेलिसमृद्ध्यर्थं मृदुला वालुका यस्मिंस्तदिति वा स्फुटद्विकस

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सरोरुहबाहुल्यादुपचारात्सर एव विकसदित्युक्तं तस्य गन्धेन हृता आकृष्टा अलयः पत्रिणश्च तेषां के उदके ध्वनयः तेषां प्रतिध्वानास्तैर्लसन्तो द्रुमास्तैराकुलं व्याप्तम् ॥ ५ ॥

अत्र अत्रैव दिवा दिनं रूढं प्रवृद्धं भोजनवेलातीतेत्यर्थः । क्षुधार्दिता वत्सा अपः पीत्वा अत्र समीप एव शनकैस्तृणं चरन्तु अदन्तु ॥ ६ ॥

तथैवास्त्वित्युक्त्वा अर्भा बालाः वत्सानपः पाययित्वा शाद्वले तृणहरितदेशे वत्सान् संरुध्य भगवता सह शिक्यानि पर्युषितान्नप्रन्थीन् मुक्त्वा बुभुजुः ॥ ७ ॥

तदा ते रेजुः, कथम्भूताः ? कृष्णस्य विष्वक् परितः बहुभिः पङ्क्तिमण्डलैः सह नैरन्तर्येण उपविष्टाः कृष्णाभिमुखान्याननानि येषां ते फुल्लदृशो विकसितनयना यथा कमलकर्णिकायाः परितः स्थितानि दलानि तद्वत् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अभ्याननाः श्रीकृष्णसम्मुखमुखा इत्यर्थः । अन्यथा फुल्लदृक्त्वं न स्यात् अचिन्त्या शक्तिश्चेयम् ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अहोतिरम्यमिदं पुलिनमतोऽत्रास्माभिर्भोक्तव्यमिति वयस्या इति स्नेहेन सम्बोधनं स्वस्य केलिः क्रीडा तत्र या सम्पत्तिः मृदुलाऽच्छवालुकारूपता सा वर्तते यत्र तस्मादत्र क्रीडाऽपि कर्तुं शक्यते भोक्तुं च अन्येऽप्यस्मिन् पुलिने गुणाः सन्तीत्याह स्फुटन्ति यानि सरोरुहाणि अत्यन्तं निबिडतया स्थितानि सरःशब्देनोच्यन्ते । अतः स्फुटत्सरः तस्य गन्धेन हृताः वशीकृता अलयो भ्रमराः पत्रिणः पक्षिणश्च तेषां ध्वनिः तस्य यत्प्रतिध्वानं प्रतिशब्दः तेन लसन्तो ये द्रुमाः तैराकुलं व्याप्तं तत्रत्यानि पुष्पाणि फलानि च पुलिने पतन्तीति ॥ ५ ॥

अत्रैव भोजने हेतुः दिवा आरूढमिति महत् दिनं जातं क्षुधा च सर्वे पीडिताः अत एव वत्साः समीपे अपः पीत्वा शनकैः तृणं चरन्तु ॥ ६ ॥

एवं भगवतोक्ता बालास्तथैव कृतवन्त इत्याह—तथेति । अर्भा वत्सान् पाययित्वा शाद्वले उत्तमतृणवति देशे आरुद्धच आरोहं कारयित्वा स्वयं शिक्यानि मुक्त्वा भगवता समं बुभुजुः ॥ ७ ॥

तेषां भोजनार्थमुपविष्टानां प्रकारमाह—कृष्णस्येति । विष्वक् परितः आवरणवत् स्थिताः पुरूणि पङ्क्तिमण्डलानि मण्डलाकारेण पौर्वापर्येणोपविष्टाः सर्वे एव भगवत्सम्मुखाः अत एव फुल्लदृशः प्रजबालकाः सह एकदैवोपविष्टाः विपिनेऽरण्ये तत्रान्यो लौकिको न पश्यतीति विशेषेण रेजुः यथा छदा पत्राण्यम्भोरुहकर्णिकायाः परितो राजन्ते ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भोजनार्थं तदुचितं स्थलं स्तौति—अहो इति । स्वकेलीनां बहुपंक्तिमद्भोजनक्रीडानां सम्पदो यत्र तदिति स्थानविस्तीर्णत्वं मृदुला अच्छा वालुका यत्र तदित्युपवेशसुखं प्रफुल्लबहुलसरोजवत्त्वात् स्फुटतः सरसः एव गन्धेन हृता आकृष्टा अलयः पत्रिणश्च येषां के उदके ध्वनयस्तेषां प्रतिध्वानास्तैर्लसन्तो द्रुमास्तैराकुलं व्याप्तमिति भोजनापेक्षणीयधूपादिसौरभ्यवीणादिवाद्यसुवासितशीतलजलस्निग्धच्छायादिसामग्री दर्शिता ॥ ५ ॥

दिवारूढं दिवाकर ऊर्ध्वाकाशमारूढ इत्यर्थः ॥ ६ ॥

शाद्वले हरिततृणबहुलदेशे आरुद्धचेति तेषां तत्तृणलोभादेवान्यत्र गमनासाध्यमननात् ॥ ७ ॥

तेषां भोजनोपवेशपरिपाटीमाह—कृष्णस्य विष्वक् परितः पुरुराजमण्डलैः "सुपांसुप" इति तृतीया बहुषु पङ्क्तिमण्डलेष्वित्यर्थः । अभ्याननाः प्रेम्णा सर्वेसाम्मुख्यस्पृहावतो भगवतः सत्यसङ्कल्पता शक्तेयनोद्भाविनेन अचिन्त्यवैभवेन निष्पादिता मुख्याङ्गानां सर्वदिक्षु प्रकाशात् कृष्णस्याभिमुखे सन्निहितपङ्क्तौ वयमेव वर्त्तामहे अन्ये तु व्यवहितपङ्क्तिषु पार्श्वतः पृष्ठतश्चोपविष्टा इति सर्वं एवाभिमानवन्त इत्यर्थः । तेन च "सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्" इत्यर्थो दर्शितः सह नैरन्तर्येणोपविष्टाः छदाः पत्राणि यथा कमलकर्णिकायाः परितो मिलतीभूय बहुपङ्क्तिषु तिष्ठन्ति तथेत्यर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ससखः भोजनं कर्त्तुं पुलिनं स्तौति—अहो इति । भो वयस्याः ! स्वीयानां बालयोग्यानां केलीनां सम्पदो विद्यन्ते यस्मिन् तत् मृदुला अच्छा वालुका यस्मिन् तत् स्फुटत् स्वगतसरोरुहद्वारा विकसत् यत् सरस्तद्गन्धेन हृतानामलीनां भ्रमराणां पत्रिणां पक्षिणां च के उदके ध्वनयस्तेषां प्रतिध्वानस्तैर्लसन्तो ये द्रुमास्तैराकुलम् व्याप्तम् ॥ ५ ॥

भोजनवेलातिक्रममालक्ष्याह—दिवारूढमिति । अहो दिवारूढं वेलातीताऽतस्तस्मादस्माभिरत्रोक्तगुणयुक्ते पुलिने भोक्तव्यम् वत्सा अपि क्षुधार्दिताः इति योज्यम् ॥ ६ ॥

अर्भाः बालाः तथेति श्रीकृष्णाज्ञां स्वीकृत्य शाद्वले हरिततृणदेशे आरुध्य संरुध्य भगवता समं सह बुभुजुः ॥ ७ ॥

तदा विपिने वने मातृपित्रादिनिरपेक्षस्वेच्छाबालविहारस्थाने कृष्णस्य विष्वक् परितः पुरुराजिमण्डलैः पङ्क्तिमण्डलैः सह नैरन्तर्येणोपविष्टाः अभ्याननाः श्रीकृष्णाभिमुखाः फुल्लदृशः विकसितनेत्राः विरेजुः यथाम्भोरुहकर्णिकायाः परितश्छदाः दलानि तद्वत् ॥ ८ ॥

---

[ १०४ ]

केचित्पुष्पैर्दलैः केचित्पल्लवैरङ्कुरैः फलैः ।
शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ ९ ॥
सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक् ।
हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ १० ॥
बिभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः ॥ ११ ॥
भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु ।
वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥ १२ ॥
तान् दृष्ट्वा भयसन्त्रस्तानूचे कृष्णोऽस्य भीभयम् ।
मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् ॥ १३ ॥
इत्युक्त्वाद्रिदरीकुञ्जगह्वरेष्वात्मवत्सकान् ।
विचिन्वन् भगवान् कृष्णः सपाणिकवलो ययौ ॥ १४ ॥
अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितु--
र्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ।
नीत्वाऽन्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा-
दृष्ट्वाऽघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥ १५ ॥
ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ।
उभावपि वने कृष्णो विचिकाय समन्ततः ॥ १६ ॥

भाषा टीका ।

श्री भगवान बोले कि—हे मित्र हो ! देखो तो सही ये यमुनाजी को पुलिन कैसो रमणीय है, हम सबन के खेलिबे के योग्य मृदुल स्वच्छ बालू जामें बिछ रही है, और सरोवरन में कमल जो खिले हैं तिन की गन्ध सों आये जो भौंरा और पक्षी तिन के शब्द की प्रतिध्वनि सों शोभायमान वृक्षावलि में चारों ओर मोर चकोर शोर कर क्रीडा कर रहे हैं ॥ ५ ॥

अब याही जगे अपन कों भोजन करनो चाहिये, दिन भी बहोत चढ आयो और भूख भी हम सबन कों लगी हैं, तासों बछरा तो जल पीकें अपने समीप मे धीरे२ यहांई घास चरें, और अपन सब भोजन करें ॥ ६ ॥

इतनी बात सुन के सब सखा बोले, कि—भैया भौत ठीक है, ऐसें कह कें बछरन कों जल पिवाय कें हरी घास में बछरान कों चरिबे कूं छोडि कें कोमल२ दूब के ऊपर बैठि कें अपने२ छींके खोल कें भगवान् के साथ आनन्द सों भोजन करन लगे ॥ ७ ॥

तहाँ बीच में तो श्रीकृष्ण कों बैठार लीने और चारो ओर भगवान् के सामने मुख करकें मण्डल बांध कें कितनीक पंक्ति लगाय कें वा विपिन बन में सब छोरा बैठगये भगवान् के दर्शन करते जांय हैं, ताई सों प्रफुल्ल हैं नेत्र जिन के, ऐसे वे व्रज बालक चारों तरफ से ऐसी शोभा कों प्राप्त होत भए जैसें कमल की कर्णिका में छोटे बडे दल क्रम सों शोभा देवे हैं ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुष्पैस्तद्दलैः अन्यैश्च पत्रैः कृतानि भाजनानि यैस्ते ॥ स्व रुचिं स्वादुविशेषम् अभ्यवजन्हुः बुभुजिरे सहेश्वराः श्रीकृष्णसहिताः ॥ १० ॥

यज्ञभुगपि तेषु बुभुजे बालानामिव केलिर्यस्य सः तदा उदरवस्त्रयोर्मध्ये वेणुं बिभ्रद्दधदिति । सर्वत्र सम्बध्यते, इति । कक्षपाण्योर्विशेषणम् मसृणं स्निग्धं दध्योदनकवलं तदुचितानि बिल्वादिफलान्यङ्गुलिसन्धिषु कर्णिकेव मध्ये मुखो मध्ये तिष्ठन् स्वस्य परित उपविष्टान् सुहृदः स्वैर्नर्मभिः

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिहासवाक्यैः स्वर्गे लोके स्वर्गवासिनि जने नितरामाश्चर्येण पश्यति सति लोके जनानां मध्ये बुभुजे ॥ ११—१२ ॥

भीभयं भयहेतुभ्यो भयमप्यपास्य यद्वा अस्य विश्वस्य भियोऽपि भयं यः श्रीकृष्णः आशाद्भोजनात् अस्मिन् पादे अक्षराधिक्यमार्षम् ॥ १३ ॥

अद्रिषु तद्दरीषु कुञ्जेषु लतादिपिहितोदरविवरेषु गह्वरेषु सङ्कटस्थानेषु ॥ १४ ॥

अम्भोजन्मनः पद्माज्जनिर्यस्य स ब्रह्मा तदन्तरे तस्मिन् अवसरे गत आगतस्तच्छिद्रं प्राप्तो वा मञ्जु मनोहरमन्यदपि महित्वं महिमानं द्रष्टुं तस्य वत्सानितः स्थानाद्वत्सपांश्चान्यत्र नीत्वा स्वयं तिरोबभूव प्रभवतः श्रीकृष्णस्य ॥ १५ ॥

उभावपि वत्सान्वत्सपांश्च विचिकायान्वी चितवान् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

केचिदिति पुनरुक्त्या पुष्पैरित्यादिभिः प्रत्येकमन्वयं बोधयति अन्यथा समुच्चयोऽपि बुध्येत पुष्पादिभोजनपात्राणां वैचित्री-बालकानां प्रत्येकापूर्वरचनाकौतुकेच्छया स्वस्वरोटिकोदनादियोग-वैचित्र्यापेक्षया वा ॥ ९ ॥

पृथक् भोज्यभेदेन रसगन्धादिभेदेन च नानाप्रकारिकां स्वस्वभोज्यस्य रुचिं स्वादुताविशेषं दर्शयन्तः मुखभङ्ग्यादिना साक्षात् कारयन्त इव अतः स्वयं हसन्तः अन्यांश्च हासयन्तः यद्यपि स्वस्वगृहादानीतानि भोज्यादि परीक्षार्थं सर्वेषां सर्वेष्वेव परिवेषितानि तथाऽपि स्वस्वगृहानीतभोज्यानामेव स्वाद्वतिरिक्तं पृथक् पृथक् ज्ञापयामासुर्यद्यर्थमेव पूर्वदिने मिलित्वा वन्यभोजनाय सङ्कल्पितवन्त इति भावः । रुचिदर्शनं च प्रायः श्रीभगवत्स्वीकारार्थ-मेव अत एव सहेश्वरा इति श्रीभगवानपि तैरेवमिष्टमिष्टं परीक्ष्य किञ्चित् किञ्चित् क्रमशो युगपद्वा समर्प्यमाणं बुभुज इत्यर्थः ॥ १० ॥

अथ बालकैः सह श्रीभगवतो भोजनक्रीडामुक्त्वा तेभ्यो विशेषेण तस्य तामाह—बिभ्रदिति । तत्फलानि मसृणकवलोचित-तोपकरणानि निम्बुसन्धितलवलीकरीरफलप्रभृतीनि स्वैः असा-धारणैः स्वर्गे लोके सर्वेषु स्वर्लोकवासिषु यज्ञभुक् उद्देश-मात्रेण समर्पितस्य हविषः कथञ्चित् स्वीकारमात्रेण तद्भुक्तेनो-पचर्यमाणोऽपि लौकिकबालवत्केलियंस्येति परमाश्चर्येण मिषति पश्यति सति यद्वा अयज्ञभुक् विविधप्रयत्नतो यज्ञभागमपि यो न भुङ्क्ते स बालेषु केलिभोजनमध्ये एव तैरेकैकशः सहसैव वा परीक्ष्यमाणस्य भोज्यस्य स नर्मग्रहणश्लाघननिन्दनभोजन-मुखभङ्गीहासनादिक्रीडा यस्य स एवं भोजने सर्वाभिमुख-त्वैश्वर्यविशेषेण तथा वेणवादिधारणपरिपाटीसहितोर्द्ध्वस्थानानि बाल्यलीलाविशेषेण च भगवता विशेषप्रकटनं पूर्ववदूह्यम् ॥ ११ ॥

एवमुक्तप्रकारेण अच्युते भगवति आत्मा मनो येषां तेषु तृणैर्लोभिताः । यद्वा, ब्रह्मणा तृणैर्लोभिताः सन्तः श्रीभगवत्साक्षा-द्वनान्तस्थैः हे भारतेति दुःखेन सम्बोधनम् ॥ १२ ॥

तान् वत्सपान् भयेन वत्सादर्शनजया शङ्कया सन्त्रस्तानु-द्विग्नान् अस्य विश्वस्यापि या भीस्तस्या अपि भयं स्वभावत एव सर्वाभयप्रद इत्यर्थः । अतस्तद्वाक्येनैव तेषां भयमपगतमिति भावः । अहमेवैकाकी वत्सान् सर्वानेवेहानेष्ये हे मित्राणीति स्नेहं व्यञ्जयन्नाश्वासयति, तस्माद्युष्माकं भोजनादुपरत्या मम महादुःखं स्यादिति बोधयति । अत एव वत्सानां निकट-स्थितिभावनाच्च न कोपि तत्सङ्गे गत इति ज्ञेयम् ॥ १३ ॥

आत्मनो वत्सकानिति गोपराजकुमारत्वेन स्नेहविशेषेण चान्यवत्सानामपि तदीयत्वात् विचिन्वन् अन्वेष्टुमित्यर्थः । यद्वा अद्र्यादिषु विचिन्वन् सन् ययौ तत्र तत्र बभ्रामेत्यर्थः । तत्रापि सपाणिकवल एव स्वयं कथम्भूतोपि भगवान् कृष्णः स्वयं भगवानपीत्यर्थः । अहो पश्यत निजजनदयालुतामिति भावः ॥ १४ ॥

प्रभवत इति कर्त्तरि षष्ठी प्रभुणेत्यर्थः । अम्भोजन्मजनिः महापुरुषनाभिकमलाज्जातत्वेन स्वतः सर्वज्ञोपि प्रभुणा तादृशा-नन्तशक्तियुक्तेन कृष्णेन अघासुरस्यापि मोक्षणं दृष्ट्वा यः परं विस्मयं प्राप्तः सोपि ईशितुस्तच्छद्मप्रथमव्यपदेशास्पदस्यापि अन्यदपि तत् तादृशं मञ्जु महित्वं द्रष्टुम् अन्विष्टतच्छिद्रः सन्नितः स्थानाद्वत्सान् वत्सपांश्चान्यत्र नीत्वा श्रीभगवदन्वेषणा-पर्यन्तश्रीवृन्दावनप्रदेशान्तरे स्थापयित्वा स्वयमन्तरधात् चौर इव वत्सान् पुलिनमानिन्ये यथा पूर्वसत्वं स्वकर्मिति माया-शये शयाना मे इत्यादिवक्ष्यमाणोऽभ्यस्तु पुनस्तत्र तत्रैवानीय रक्षितवानिति ज्ञेयं तेषां श्रीकृष्णतुल्यगुणानामपि ब्रह्ममाया-परिभवप्रायत्वं भगवन्नरलीलात्वेनैव सम्भवतीति ज्ञेयम् अन्यथा नरलीलत्वासिद्धेः । ननु, यद्येवं प्रकटमाहात्म्यो भगवान् ब्रह्मा च सर्वज्ञः नर्हि कथं विस्मयं प्राप्तः कथं वा पुनः कदर्थन-प्रायां परीक्षामिव कृतवान् तत्राह मायामोहनता तद्युक्तस्या-र्भकस्य सर्वमोहनार्भकलीलस्येत्यर्थः । तन्मोहनतया मुहुरैश्वर्य-ज्ञानाच्छादनादिति भावः । प्राक्तनतत्तद्बाल्यलीलामोहनताव-दधुनापि वन्यभोजनलीलामोहनतयैव विगतसाध्वसीकृत्य यद्वा विस्मितीकृत्य च तादृशतदैश्वर्यान्तरान्वेषणाय तथा प्रवर्तितोऽ-साविति विवक्षितं कुरूद्वहेति पद्यैतादृशी तद्बाल्यलीला-मोहनताया परमज्ञानदृढचित्तं ब्रह्माणमपीत्थं मोहयतीति व्यज्यते ॥ १५ ॥

ततस्तत्पश्चात् चकाराच्छिक्यादीनि च उभावपीति कांश्चित् मम विलम्बेनातिदुःखिताः सन्तो मदन्वेषणार्थमेव स्वीय स्ते भोजनसामग्रीसहिताः कुत्रापि गता इति वत्सपान् अन्यत्रैव गता इति वत्सकानपि मदर्शनमात्रेणैव स्नेहभरा-क्रान्त्या पूर्णज्ञानात्मनोऽपि विचारतिरोधानादेवमुक्तम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुष्पैः फलैरङ्कुरैरिति भक्षणपात्रत्वमसम्भावितमपि श्री-भगवल्लीलानुकूल्येन सर्वं सम्भाव्यत एवेति ॥ ९ ॥

अभ्यवजह्रुरभुञ्जन् ॥ १० ॥

मसृणं स्निग्धं स्वस्य परितो वर्तमानान् सुहृदः नर्मभिः परिहासवाक्यैः स्वर्गे लोके इति स्वर्गस्य देवेषु लक्षणा देवेषु पश्यत्स्विति ॥ ११ ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्य विश्वस्य या भीः संसारभयं तस्या अपि भयं कृष्ण इति भीसम्बन्धि भयं वत्सानां सिंहादिसम्बन्धि भयं अस्य अपास्येति वा ॥ १३ ॥ १४ ॥

अम्भोजन्मजनिः अम्भः जलं तज्जं पद्मं तज्ज इत्यनेन प्रकृतिसम्बन्धस्य शावल्यमुक्तं कमलजः ब्रह्मा मायार्भकस्य लौकिकगोपालवेषस्य मञ्जु सुन्दर महित्वम् अन्यदपि अघमोक्षं दृष्ट्वा परं विस्मयं प्राप्तः तस्मादन्यदप्यैश्वर्यं द्रष्टुं चौर्यमारब्धवान् तद्वत्सान् हरिततृणं चरानन्यतः इतः पुलिनस्थवत्सपान् अन्यत्र नीत्वा अन्तरदधात् अन्तर्धानं प्राप्तानकरोत् तत्रैवान्तर्धानकरणेऽस्य कृष्णस्य भ्रमो न स्यादिति भावः इदं तस्य कर्मजाड्यपर्यवसायीति कमलभूपद व्यङ्ग्यम् ॥ १५ ॥

अदृष्ट्वा एत्य उभावपि वने समन्ततः विचिकाय अन्तर्विपिने क्वापि अदृष्ट्वा इत्येभिः पदैः बहुकालसाध्यं क्रियागणमानन्तर्यं लीलानुकरणं बोध्यम् अन्यथा विभोरपि सर्वज्ञस्यापि कृष्णस्याकर्षकस्याविज्ञतयमपीदं न सम्भवेदेव ॥ १६—१७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुष्पैर्दलैः पुष्पदलादिभिः कृतानि भाजनानि पात्राणि यैस्तथाभूताः बुभुजुः यद्वा पुष्पैः सङ्घटितपुष्पदलैः पत्रैः पद्मिनीदलैः अन्यैर्वा पत्रैः पल्लवैः प्रवृद्धारुणकोमलपत्रैरङ्कुरैस्ततोपि पूर्वावस्थाविशिष्टैरुभयत्रापि भूमौ नीरन्ध्रमास्तीर्णैः फलैरपि तथाभूतैस्त्वग्भिर्भूर्जादित्वग्भिः ॥ ९ ॥

मिथ इति । सहेश्वराः श्रीकृष्णसहिताः अभ्यवजन्हुः बुभुजुः ॥ १० ॥

यज्ञभुगपि भगवान् लीलया बाल्यस्येव केलिर्यस्य सः स्वर्गे स्वर्गस्थे लोके देवजने मिषति पश्यति सति बुभुजे, कथम्भूतः ? उदरवस्त्रयोर्मध्ये वेणुं बिभ्राणः इदमुत्तरत्राप्यन्वेति वाम इति काकाक्षिन्यायात्कक्षपाणयोर्विशेषणम् वामे कक्षे शृङ्गवेत्रे बिभ्रत् पाणौ मसृणकवलं स्निग्धदध्यन्नकवलं तदुचितानि विदलाम्रादिफलान्यङ्गुलिसन्धिषु बिभ्रत् बालानां मध्ये तिष्ठन् स्वस्य परित उपविष्टान् सुहृदो मित्राणि नर्मभिः परिहासवाक्यैः हासयन् ॥ ११ ॥

हे भारत ! अच्युते श्रीकृष्णे एवात्मा चित्तं येषां तेषु भुञ्जानेषु सत्सु वत्सास्तृणलोभिताः दूरमन्तर्वने वनमध्ये प्रविविशुः ॥ १२ ॥

तान् वत्सानदृष्ट्वा अत एव भयत्रस्तानि मित्राणि सखीन् हे मित्राणि इति संबोधनं वा भी भयं भयहेतुभ्यो भयमस्य निरस्य ऊचे तदेवाह भाशात् भोजनात्मा विरमत विरामं न कुरुत हि यस्मादहं वत्सकानानेष्ये ॥ १३ ॥

इत्थमुक्त्वा पाणौ कवलेन युक्तः अद्रिषु तद्दरीषु कुञ्जेषु च गह्वरेषु सङ्कटस्थानेषु वत्सान्विचिन्वन् ययौ ॥ १४ ॥

ततोऽम्भोजन्मनः पद्माज्जनिर्जननं यस्य सः चतुर्मुखस्तस्मिन्नन्तरे अवसरे आगतः तदेव छिद्रं प्राप्तो वा यो ब्रह्मा पुरा भगवतो ऽघासुरस्य मोक्षणरूपं कर्म खेऽन्तरिक्षे स्थितो दृष्ट्वा विस्मयं प्राप्तः सोऽस्येशितुरन्यदपि रमणीयं महित्वं महत्त्वं द्रष्टुं तद्वत्सान् वत्सपांश्च इतो ऽन्यत्र नीत्वा अन्तरधाच्च तिरोहितो बभूव ॥ १५ ॥

ततो वत्सानदृष्ट्वा भगवतः पुलिने वत्सपांश्चादृष्ट्वा पुनरुभावपि वत्सवत्सपसमुदायौ विचिकाय अन्वेषितवान् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

केचिद्द्वयं सर्वत्र पृथगन्वयार्थम् ॥ ९ ॥ १० ॥

तत्र तदुचितानि फलानि मन्धितलवलोपाप्रीणि... तीनि स्वर्गे लोक इति समस्ततत्स्थजनापेक्षया अन्यत्र यज्ञभुक्त्वे दृष्ट्या तदनुमोदिना अत्र तु बालकेलिः सन् बुभुजे इति महान् विशेषः ॥ ११—१२ ॥

भयसन्त्रस्तान् भयेनोद्विग्नान् अत्र तदाग्रहेणैव न कोऽपि तत्सङ्गे गत इति ज्ञेयम् ॥ १३ ॥

आत्मवत्सकानिति सर्वत्र स्वीयताबुद्ध्या भगवानपि तत्र ययौ ॥ १४ ॥

मायामोहवता तद्युक्तार्भकस्य सर्वमोहनार्भकलीलस्येत्थं पुनः पुनः ब्रह्मणोऽपि मोहे निष्क्रान्तोऽयम् ॥ १५—१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां भोजनपात्राण्याह—केचिदिति । पुष्पादीनि प्रसार्य तैः कृतभाजनाः सन्तः तदुपरि ओदनं स्थापयित्वा बुभुजुः ॥ ९ ॥

बालकानां लौकिकत्वात् भोजने प्रकारमाह—सर्व इति । स्वस्वभोज्यस्य ओदनादेः रुचिमन्यकौ प्रदर्शयन्तः पृथक् भोज्यप्रकारविशेषाणां लड्डुकादीनां ततः स्तोत्रनिन्दाभ्यां हसन्तो हासयन्तश्च ईश्वरसहिताः अभ्यवजह्रुः भोजनं कृतवन्तः एवमानन्दभोजने ईश्वरसाहित्यमेव हेतुः सर्वैरानीतान्यन्यैकीकृत्याग्रभागं भगवतो दत्त्वा भगवत्कृपयाऽवशिष्टं बुभुजुः ॥ १० ॥

भगवानपि भुक्तवानिति वदन् ध्यानार्थं तादृशं रूपं वर्णयति—बिभ्रद्वेणुमिति । मल्लवत् कटितटे पीताम्बरमलि... हस्ते स्थितानां वेत्रादीनां मध्ये वेणुं जठरपटयोर्मध्ये स्थापितवान् शृङ्गं वेत्रं च कक्षयोः वामे पाणौ मसृणं कवलं घृतदध्यादिविमिश्रितं कवलमोदनं सर्वत्र बिभ्रदिति सर्वत्र दध्योदने उचितानि जम्बीराद्रकादीनि अङ्गुलीषु... बालकानां मध्ये तिष्ठन् स्वस्य परितो वर्तमानान् ... बालकान् स्वैरसाधारणैर्नर्मभिः स्वर्गे लोके तत्रस्थितेषु मिषत्सु सत्सु सर्वयज्ञभोक्ता बुभुजे बालस्येव केलिर्यस्य ॥ ११ ॥

एवं सर्वेषां भोजने जायमाने किञ्चिदद्भुतमिव तदाह—भारतेति । वत्सपेषु भुञ्जानेष्वच्युतात्मसु ... वत्साः स्वयमेव अन्तर्वने वनमध्ये तृणेन लोभिता दूरं गताः ॥ १२ ॥

ततो बालका भयसंत्रस्ता जातास्तान् तथाविधान् कृष्णो भगवानूचे यतोऽयं निर्भयः तत्र हेतुः अस्य ...

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अस्य जगतो या भीः मृत्युः तस्यापि भयरूपः "भीषास्माद्वातः पवते" इति श्रुतेः। भगवतो वाक्यमाह—मित्राणीति। हे मित्राणि! आशात् भोजनात् मा विरमत अहमिहैव वत्सकानानेष्ये ॥ १३ ॥

इत्युक्त्वा भगवांस्ततो गतः आदौ स्वयमेकान् विचिन्वन् पाणिकवलसहित एव अद्रिदरीकुञ्जगह्वरेषु ययौ आदौ कियद्दूरे गतः तत्र वत्सानदृष्ट्वा ऽद्रेः पर्वतस्य गोवर्धनादेः दरीषु कन्दरासु कुञ्जेषु द्रोणीषु गह्वरेषु भयानकस्थानेषु सर्वत्रैव गतः ॥ १४ ॥

ननु, निकट एव वत्साः संभवन्ति किमिति दूरे गत इत्याशंक्य मध्ये ब्रह्मणा वत्सा हृता इत्याह—अम्भोजन्मजनिरिति। अम्भोजन्म कमलं तत्र जनिर्जन्म यस्य नाभिकमल एवोत्पन्नः तदन्तरे तन्मध्य एवागतः सन् मायार्भकस्य मायाबालकस्य ईशितुर्भगवतः मञ्जु महित्वं दृष्ट्वा अघसायुज्यलक्षणम् अन्यदपि द्रष्टुमरण्याद्वत्सान् पुलिनाद्वत्सपांश्च नीत्वाऽन्यत्र स्थापयित्वा हे कुरूद्वहेति विश्वासार्थं स्वयमन्तर्द्धानं कृतवान् नीत्वेत्युभयत्र सम्बन्धः। ननु, किमित्येवं कृतवान्? इत्याशंक्याह, यः पुरा खे आकाशे ऽवस्थितः सन् अघासुरमोक्षणं दृष्ट्वा परं विस्मयं प्राप्तः। ननु, किमाश्चर्यं भगवतः सकाशान्मुच्यत एवेति तत्राह—प्रभवत इति। प्रकर्षेण भवत्यस्माज्जगदिति प्रभवो भगवान् तत्तस्मादुत्पत्तिरेवोचिता स्वदृष्टान्तेन न तु मुक्तिरिति विस्मयः अन्यथा स्वस्यापि मुक्तिः स्यात् ॥ १५ ॥

ततो भगवान् वनात् अदृष्ट्वैव पुलिनेऽपि वत्सपान् अदृष्ट्वा प्रायेणैते वत्सपाः स्वयमपि वत्सानन्वेष्टुं गता इति उभावपि उभयविधानपि वने भगवान् समन्ततो विचिकाय ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

केचिदिति पुष्पादिभिः स्वस्वभाजननिर्माणं बालकानां प्रत्येकापूर्वरचनाकौतुकेच्छयैवेति ज्ञेयम् ॥ ९ ॥

सहेश्वराः सकृष्णा एव सर्वे स्वस्वभोज्यस्य स्वस्वगृहानीतस्य भक्ष्यस्याम्लव्यञ्जनादेः रुचिं रोचकतां दर्शयन्तः स्वीयवटकशाकरसालादिकं स्वयं किञ्चिद्भक्त्वा आस्वादविशेषमनुभूय भोः सखे, भो कृष्ण, भो श्रीदामन्, भो सुबल! पश्यत पश्यत मदीयवटकादिकं कीदृशं स्वाद्विति स्वभक्ष्यपात्रात्तदुद्धृत्य कृष्णादीनां हस्तेषु ददानास्तांस्तदास्वादमनुभावयन्त इत्यर्थः। हसन्त इति जातीमालत्यादिपुष्पाणां वटकान्तरे वा अलक्षितगर्भविन्यासाः भोः सखायः! एतानतिस्वादुतमान् वटकानास्वादयतेत्युक्तिविश्वासात् सस्पृहं गृहीत्वा तान् भुञ्जानान् कटूकृतमुखान् दृष्ट्वा हसन्तो हासयन्तश्च करतालैः सहर्षकौतुकं ताड्यमानाः पलायमानाश्च ॥ १० ॥

तेष्वपि मध्ये कृष्णस्य भोजनलीलां सर्वविलक्षणामाह—बिभ्रदिति। जठरपटयोरुदरवस्त्रयोर्मध्ये वेणुं बिभ्रत् दधत् दक्षिणकुक्षावेवेति वामोत्थित्वादिति ज्ञेयं वामकक्षे शृङ्गवेत्रे बिभ्रत् वामे पाणौ मसृणं स्निग्धं बृहत् दध्योदनकवलं बिभ्रच्चरफलानि तदुचितानि मान्धातकरीरवदराणि अङ्गुलीषु वामपाण्यङ्गुलिसन्धिषु पाणौ विस्तारार्थमिति भावः। यद्वा, तरफलानि तत्प्रयोजनीभूतान् क्षुद्रग्रासान् दक्षिणपाण्यङ्गुलीषु बिभ्रत् मुखप्रवेशयोग्यान् बहुतरग्रासान् ततः पृथक्कृत्य गृहीतुमेव वामे पाणौ बृहत् कवलग्रहणं ज्ञेयम् ॥ ११ ॥

कर्णिकेव सर्वाभिमुखो मध्ये तिष्ठन् स्वैर्नर्मभिरिति भो भृङ्गाः! किं मन्मुखाभिमुखं धावत सुकुमारं मधुमङ्गलम् पुरः स्थितं पिवत भो वयस्य! ब्राह्मणकुमारं मां किं भृङ्गैः खादयसि मन्ये ब्रह्महत्यायामपि नेन भयमिति भो एतद्वनस्था वानरा! युष्मासु बुभुक्षुषु जाग्रत्स्वपि मत्प्रियसखाः निर्विघ्नं भुञ्जते तदवाचितमागच्छतेति तस्य नर्म सत्यसङ्कल्पताशक्तिलीलाशक्तिभ्यामपि स्वामिन्, प्रभो! कौतुकार्थं यदि भोजने विघ्नमीहसे तर्ह्याचाभ्यां तदर्थं ब्रह्मा सम्प्रत्येवाभीयत इत्यलक्षितमनुमोदितमिति ज्ञेयं स्वर्गे लोके तद्वासिजनवृन्दे मिषति आश्चर्येण पश्यति सति यज्ञभुक् यज्ञेपूद्दिशमात्रेण समर्पितमनुपहतं मन्त्रपूतमेव हविःस्वीकारमात्रेणैव भुञ्जानोऽपि बालैः सह केलिमिथो भुक्तास्वादानप्रदानभोजनश्लाघननिन्दनादिमयी यस्य सः ॥ १२ ॥

अस्य विश्वस्य या भीस्तस्या अपि भयं भयप्रद इत्यर्थः। हे मित्राणीति स्नेहं सूचयति—आशात् भोजनात् अत्रोकाऽरं नवाक्षरैकपादोऽनुष्टुब्भेद इति प्राञ्चः ॥ १३ ॥

सपाणिकवल इति वत्सान्वेषणसमयेऽपि किञ्चिद्भोक्तुमिति भावः ॥ १४ ॥

अम्भोजन्मनः कमलाज्जनिर्यस्येति जडवंशत्वात् स चेतनोऽपि ब्रह्मा जड एव यदयं भगवन्तं परीक्षितुं महामायाविन्यपि तस्मिन्मायां वितताने त्याक्षेपो ध्वनितः अत्र वत्सान् पुलिनमानिन्ये यथापूर्वसखं स्वकमित्युत्तरग्रन्थविरोधात् नित्यविज्ञानानन्दस्वरूपस्य भगवतस्तत्प्रियसखानां बालकानां च चतुर्मुखमायया मोहनमनौचित्याच्च व्याख्येयं यत्तु पूतनादीनामपि मायया भगवन्मात्रादीनामपि मोहनं तत्खलु विस्मयरसाधायकतत्तल्लीलासिद्ध्यर्थं लीलाशक्त्याऽनुमोदनादेव नतु स्वतः अत्र तु ब्रह्ममायया कृष्णसखानां केवलस्वापनेन का लीलासिद्धिरत एषां योगमाययैव मोहनं कृष्णमायाहृतात्मनामित्यग्रिमवाक्याच्च ज्ञेयं नच कृष्णमायामोहितानामेव तेषां ब्रह्मकर्तृकमन्यत्र नयनं व्याख्येयम् उपरिष्टादिन एनेऽत्र कुत्रत्या मन्मायामोहितेतरे इति ब्रह्मवाक्यानन्तरं सत्याः के कतरेनेति ज्ञातुं नेष्टे कथञ्चनेति श्रीशुकोक्तेः नहि कृष्णसखानामसत्यत्वं तेन चक्रमुच्चितमनो मायिकानामेव बालवत्सानां हरणं ब्रह्मणा कृतमित्येवमत्र व्याख्येयं ब्रह्मा तदन्तरे तस्मिन्नवसरे गत आगतस्सन् अन्यदपि महित्वं महिमानं द्रष्टुम् अर्भकस्य ईशितुः श्रीकृष्णस्य वत्सान् इतः पुलिनात् वत्सपांश्च अन्यत्र नीत्वा अन्तरधात् तिरोबभूव यत् तन्मायाभगवन्मायाकारणकमेव तत्सर्वं मायया मोहित एव ब्रह्मा महित्वं द्रष्टुं मायाकल्पितानेव वत्सान् वत्सपानन्यत्रानयदित्यर्थः। अद्य मया मायया मोहयित्वाऽपहृतेषु वत्सवत्सपेषु किमयमैश्वर्यं किमद्भुतं करोति ज्ञास्या किं स्वयं तानेवानेष्यति मह्यं प्रार्थयिष्यते वा न किमपि ज्ञास्यतीति चेति विचारो मायया मोहनं विना तस्य न सम्भवेत्

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतस्तस्मिन् चोरयितुमुद्यते सति योगमायैव सत्यान् वत्सपालकान् आच्छाद्य बहिरङ्गमायाद्वारा सद्यः कल्पितानेव तांस्तमदर्शयदिति ज्ञेयं प्रभवतः प्रभोः कृष्णात् अघासुरस्य मोक्षणं दृष्ट्वा यो विस्मयं प्राप्तः ॥ १५ ॥

अदृष्ट्वेत्य नतु अप्राप्येत्युक्तम् अतस्तत्र स्थितान् ज्ञातानपि अदृष्ट्वा अदर्शनमभिनीयेत्यर्थः । मन्मायया मोहित एवायमिति ब्रह्माणं मिथ्याभिमानं ग्राहयितुमिति भावः । ततश्चोभावपि वत्सान् बालांश्च विचिकाय विस्मयविषादाद्यभिनयपूर्वकं नटवत्तदन्वेषणमभिनिनायेत्यर्थः । "ततोऽब्रहत् पशुपवंशशिशुत्वनाट्यम्" इत्यग्रेतनोक्तेः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुष्पादिभिः कृतानि भाजनानि यैस्ते बुभुजुः त्वग्भिर्भूर्जकदल्यादिवल्कलैः ॥ ९ ॥

सहेश्वराः श्रीकृष्णसहिताः भोज्यरुचिं दध्योदनादिस्वादुविशेषं मिथोऽन्योन्यं दर्शयन्तोऽव्रजवजहुः बुभुजिरे ॥ १० ॥

यज्ञभुगपि बालेषु केलिर्यस्य स हरिः तेषां छदस्थानीयानां मध्ये कर्णिकास्थानीयः सर्वाभिमुखस्तिष्ठन् उपरि स्वस्य परितः स्थितान् सुहृदो मित्राणि नर्मभिः परिहासवाक्यैः हासयन् स्वर्गे लोके स्वर्गवासिनि जने मिषति बुभुजे कथम्भूतः ? जठरपटयोः उदरवस्त्रयोर्मध्ये वेणुं मुरलिकां वामे कक्षे शृङ्गवेत्रे च वामे पाणौ मसृणं स्निग्धं दध्योदनकवलं च अङ्गुलीषु तत्फलानि मसृणकवलोचितानि फलमयानि व्यञ्जनानि च बिभ्रत् दधत् ॥ ११ ॥

अच्युते श्रीकृष्णे आत्मा चित्तं येषां तेषु सत्सु ॥ १२ ॥

तदा अस्य विश्वस्य भियो भयहेतोरपि भयं भयहेतुः कृष्णः "बः कालकालः" इति श्रुतेः । आशात् भोजनात् अचराधिक्यमापेम् ॥ १३ ॥

वत्सकान् इहानेष्ये इत्युक्त्वा अद्रिषु तद्दरीषु कुञ्जेषु लतादिपिहितोदरविवरेषु दुर्गमस्थानेषु वत्सान्विचिन्वत् कृष्णः सपाणिकवल एव ययौ ॥ १४ ॥

यः पुरा खेऽवस्थितो ऽघासुरमोक्षणं दृष्ट्वा विस्मितोऽभूत् स ब्रह्मा अम्भोजन्मनः पद्माज्जनिरुत्पत्तिर्यस्य सः तदन्तर्गतस्तच्छिद्रं प्राप्तः प्रभवतः श्रीकृष्णस्य मायार्भकस्य स्वसङ्कल्पतोऽर्भकस्य अन्यदपि मञ्जु रमणीयं महित्वं महिमानं द्रष्टुं तत्तस्य वत्सानितः स्थानात् वत्सपांश्चान्यत्र नीत्वा अन्तर्दधात् तिरोबभूव ॥ १५ ॥

ततस्तदनन्तरं कृष्णो वत्सान् अदृष्ट्वा एत्य पुलिने वत्सपानपि अदृष्ट्वा पुरुकमाणपि वत्सान् वत्सपांश्च वने समन्ततः विचिकाय अन्वीक्षितवान् ॥ १६ ॥

---

भाषा टीका ।

कितनेई बालकन नें पुष्पन में कितनेकने दलन में कितनेकने पल्लवन में काई ने अंकुरन पै कितनेऊ ने फलन पै कितनेकने छींकेन पैई कोई ने वृक्षन की छाल पै कोई ने पत्थरन पै अपनें २ भोजन कों धरि कें सब एक साथ भोजन करन लगे ॥ ९ ॥

वा समें सब ब्रज वासिन के वे सब बालक अपने २ भोजन की रुचि परस्पर में अलग २ दिखावत आप हंसत औरन कू हसावत श्रीकृष्ण के साथ भोजन करत भये ॥ १० ॥

श्रीशुकदेवजी एक श्लोक में वा समय को ध्यान करें हैं, कि–श्रीकृष्ण चन्द्र नें अपनी फेंट में बांसुरी खुरश लीनी हैं, और बजायबे कों सींग और बेत की छरी कांख में दबाय लीनी हैं, बायें हाथ में नवनीत मिश्रित दध्योदन को स्निग्ध कवल लिये हैं, और अंगुरीन में तीन २ फल के अचार दाबि राखे हैं, चारों तरफ सुहृद बैठे हैं, बीच में आप विराजे हैं, अपनी विचित्र २ हसीन सों सुहृदन कों हसावते जांय हैं स्वर्ग वासी सबरे देवता देखते जांय हैं, या रीति सों यज्ञ भोक्ता जो परम पुरुष सो बालकन के साथ क्रीडा पूर्वक ऐसें भोजन करत भये ॥ ११ ॥

हे भारत ! अच्युत में मन धारे ग्वाल बालन कों ऐसें भोजन करने में लगजायबे पै जितने बछरा हे ते सगरे तृण के लोभ तें भीतर वन में दूर चले गये ॥ १२ ॥

तब बालक डर सों घबराये तब ये जगत् के भय को भी भयदेन वारे श्रीकृष्ण, बालकन सों बोले, कि–हे मित्रो ! तुम सब भोजन सों मत उठो मण्डली सों जमे भये बैठे रहो इतनेई में मैं याई जगे सब बछरान कूं ढूंढ के लाऊं हूं ॥ १३ ॥

या प्रकार ग्वाल बालन कूं समुझाय के पर्वत की गुफा, कुञ्ज, गह्वर वन, इन में अपने बछरान कूं ढूंढबे कों भगवान् श्रीकृष्ण हाथ में दध्योदन को कवल (कौर) लियेई जात भये ॥ १४ ॥

हे कुरूद्वह ! हे राजन् ! जो ब्रह्मा पहिले आकाश में स्थित होय कें प्रभुन अघासुर को मोच देखिके बड़े विस्मय कों प्राप्त भयो हो वोही जल सों जन्म लेन वारो जो कमल तासों जन्म लेन वारो ब्रह्मा, वाई बीच में माया सों मनुज बालक होय वे वारे सर्व नियन्ता श्रीकृष्ण की और भी मनोहर महिमा कों देखबे के ताईं बछरान कों और बालकन कों अन्यत्र ले जाय कें अन्तरधान होय गयो, या श्लोक में अम्भो जन्म जनि कहबे सों ये बात जनाई कि जल (अचेतन) सों भयो कमल सो भी जड तासों भयो जो ब्रह्मा सो भी जड ही भयो तब तौ वा ने भोजन के समय पै विघ्न कीनो ॥ १५ ॥

तब भगवान् सब जगे ढूंढ कें बछरान को नहीं देखि फिर पुलिन में आय के देखें तौ बालकन को भी नहीं

क्राप्यदृष्ट्वान्तर्विपिने वत्सान्पालांश्च विश्ववित्।
सर्वं विधिकृतं कृष्णः सहसाऽवजगाम ह ॥ १७ ॥
ततः कृष्णो मुदं कर्त्तुं तन्मातॄणां च कस्य च।
उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ १८ ॥
यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकम्—
गावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम्।
यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकम्—
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥ १९ ॥
स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः।
क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम् ॥ २० ॥
तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः।
तत्तदात्माऽभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥ २१ ॥
तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरम्।
स्नेहस्नुतस्तन्यपयः सुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥
ततो नृपोन्मर्दनमज्जलेपनालङ्काररक्षातिलकाशनादिभिः।
संलालितः स्वाचरितैः प्रहर्षयन्सायङ्गतो यामयमेन माधवः ॥ २३ ॥
गावस्ततो गोष्ठमुपेत्य सत्वरं हुङ्कारघोषैः परिहूतसङ्गतान्।
स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥ २४ ॥

भाषा टीका।

देखे तब श्रीकृष्ण भगवान् दोनोन कों [ बछरा-बालकन ] को चारों ओर ढूढत भये ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

विधिकृतं ब्रह्मणा कृतम् ॥ १७ ॥

उभयायितं वत्सतत्पालरूपेण वर्तमानमित्यर्थः। अयम्भावः यदि तूष्णीमासे नहिं तन्मातॄणां विषादः स्याद्यदि च तानेवानयिष्यामि तर्हि ब्रह्मणो मोहो न स्यादिति तदुभयप्रीतये तथा चक्रे इति ॥ १८ ॥

तदेव दर्शयति—यावदिति। वत्सपानां वत्सकानां चाल्पकं वपुः प्रमाणमनतिक्रम्य एवमुपर्यपि योज्यम्। यद्वा, यावद्वत्सपादिवपुस्तावत्सर्वं स्वरूपोऽजः कृष्णो बभावित्यर्थः। उत्तरत्राप्येवं सर्वं विष्णुमयं जगदिति प्रसिद्धा या गीस्तस्या अङ्गवत्साक्षीरैवार्थस्वरूपेण प्रत्यक्षा यथा तथा बभूवेत्यर्थः ॥ १९ ॥

एवं सर्वात्मा सन् व्रजं प्राविशत् कथं स्वयमात्मैव प्रयोजकः आत्मरूपान् गोवत्सानिति कर्मापि स्वयमेवेत्युक्तम् आत्मरूपैर्वत्सपैः प्रतिवार्य प्रयोज्यकर्त्रापि स्वयमेव आत्मविहारैः क्रीडन्निति क्रियापि कारकाण्यपि स्वयमेवेत्यर्थः ॥ २० ॥

तत्तदात्मा तत्तद्गोपबालरूपोऽभवत् ततस्तत्तत्सद्म प्रविष्टः ॥ २१ ॥

गोपिकामोहमाह—तन्मातर इति। तन्मातरो वेणुरवेण त्वरयोत्थिताः सत्यः सुतान्मत्वा परम्ब्रह्मैव दोर्भिरुत्थाप्योद्धृत्य पयः सुधासवं पय एव सुधावत्स्वादु आसववन्मादकं पाययामासुरित्यर्थः ॥ २२ ॥

एवं यामयमेन तत्तत्कालक्रीडानियमेन सायं गतः प्राप्तः स्वाचरितैः स्वस्याचरितैः शोभनैराचरितैर्वा मातॄः प्रहर्षयंस्ताभिरुन्मर्दनादिभिरुपलालित इति ॥ २३ ॥

गवां मोहनमाह—गाव इति। परिहूता आहूताश्च ते सङ्गताश्च तान् ॥ २४ ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्तर्विपिने वनमध्य एवेति मध्याह्ने तेषामात्मानं विना व्रजगमनाऽसम्भवात् सर्वबालकादीनां मोहनात्तद्गोपने तदन्तर्द्धानं निजमञ्जुमहिमदर्शनाभिलाषादिकं चाशेषं सद्य एव ज्ञातवान् इ स्फुटं यतो विश्ववित् सर्वज्ञः ? स्फुटः यतः कृष्णः स्वयं भगवान् एतावन्तं कालं तस्य बहिरन्वेषणलीलाद्यभिनिवेशं दृष्ट्वैव ज्ञानशक्तिस्तटस्थाऽऽसीत् सम्प्रति तु मनस्येव तदनुसन्धित्सायान्तु जातायां स्वस्यैवावसरे समुपस्थितेति भावः । ईशितुरिच्छाशक्तिपराधीनत्वात् सर्वशक्तेः ॥ १७ ॥

तस्मात्तृणां सर्वदा स्वं पुष्णीयन्तीनां मुदं कर्त्तुं चकारात् विना स्वसङ्गं क्षणमपि स्थातुमपारयतां मित्राणामन्यजगद्गोदरप्रवेशवद्वात्मनो लीलावेशादन्योत्पातशङ्कया तान् कतिचिद्दिनान्येकान्ते रक्षितुश्च द्वारकायां यादवानिवेति ज्ञेयम् । एवं तेषां मायाशये शयानत्वात् न तद्विरहदुःखं भगवतश्च तद्दर्शनेन तैः सहातिविच्छेद इति नासमञ्जसं च. आनुषङ्गिकं प्रयोजनमाह— कस्य चेति । तस्याष्टादशाक्षरतदीयमहामन्त्रोपासकत्वात् एवं कृष्णेच्छयैव तेषां मोहो न ब्रह्ममायासामर्थ्येनेति लभ्यते तत्तदात्मलीला च साधारणहष्ट्या न सिद्ध्यतीति आत्मानमेवोभयायितम् उभयं वत्सबालाश्लेषं किं वा स्वयं भगवान् वत्सवत्सपाश्लेषं द्वयं तद्दाचरन्तं चक्रे नातीव भेदावुभयमिव चक्र इत्यर्थः । शीघ्रतत्तदवतारसामर्थ्यं द्योतयति—विश्वकृतां महापुरुषादीनामपीश्वरः स्वयमवतारीति ॥ १८ ॥

तदेव प्रपञ्चयति–यावदिति । यावच्छब्देनात्र यथा स्थानमङ्ख्याप्रमाणादिकं वाचनीयं ततश्च यावत्संख्यानि वत्सपानां वत्सकानां च तथा तेष्वल्पकानां वत्सपानुचरबालानां वत्सकानुचरक्रीडनमेषां वपूंषि तावदित्यर्थः । एवं यावन्ति यत्प्रमाणानि कराङ्घ्र्यादीनि तावदित्यर्थः । यावद्यष्टीत्यत्र यत्प्रकाराणीति ज्ञेयम् यावच्छीलगुणेत्यत्र यावन्ति यादृशानीत्यर्थः । तत्र शीलं सुस्वभावः गुणास्तूत्कर्षहेतवः शिक्षाविशेषा अभिधा वाणी तत्तन्नामाभिनिवेशो वा आकृतिराकारः द्वितीयादिशब्दात् पितृमात्रादिषु व्यवहरणं पूर्वाचरितस्मरणादिकं च तावत्तत्तत्सर्वम् अज एव बभौ यतः सर्वं तथान्यच्च प्राकृताप्राकृतं वस्तु स्वरूपं एवात्मकं यस्य सः तत्तु सर्वं कीदृशं विष्णुमयं श्रीभगवदात्मकं न तु जीवात्मकम् "आत्मा ज्ञानमयः शुद्धः" इत्यत्र स्वरूपेऽपि मयट्दर्शनात् व्यापकत्वापेक्षया विष्णुशब्दः अतो "यद्भूतं भवच्च भविष्यच्च" इत्यादिश्रुतेश्चानन्तेत्याख्यानाच्च सर्वं तत्र प्रवर्तत एव व्यक्त्यपेक्षयैव तत्तज्जन्मादिव्यपदेश इति भावः । तदेवाह–अज इति । एवमेकस्यैव वत्सवत्सपादिरूपत्वेन ततः पृथक्त्वेन चाचिन्त्यशक्त्याऽभिन्नत्वमप्युक्तं तत्रोपयुक्तो दृष्टान्तः गिरो वाक्यस्य तिङ्सुबन्तचयलक्षणस्य अङ्गं कर्तृकर्मादिपदं यथा तद्वदिति तिङ्सुबन्तचयस्य तदभिन्नत्वे श्रीभगवतस्तु तद्भिन्नत्वेनापि स्थितत्वे दृष्टान्तोऽयमुपचारात् ॥ १९ ॥

गोवत्सानीति स्वभावतोऽतियत्नलालानां गवां वत्सेषु परमापेक्षत्वं सूचितम् अत एव प्रतिवार्यं वयाभिवत्यं सर्वत्रात्मशब्दप्रयोगेन पूर्वंवत्सादिभ्यो भेदो दर्शितः तेन च भगवत्स्नेहपात्रत्वे तेषां न्यूनमेषामभिप्रेतं तच्च "नाहमात्मानमाशासे" इत्यादि भगवद्वाक्यमेव ॥ २० ॥

तत्तदात्मा तत्तत्स्वरूपः प्रविष्टवानभवत्प्रविश्यासीदित्यर्थः यद्वा, अर्थात्तत्तद्रूपेण स्वस्वगेहं प्रविष्टवान् सन् तत्तदात्मा तत्प्रयत्नवानभवत् वत्सद्वारनिरोधगोपाह्वानमङ्क्वनिन वेणुवादनादिकं च कृतवान् इत्यर्थः । "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म" इत्यमरः ॥ २१ ॥

तस्मात्तृणां चमत्कारं प्रपञ्चयन् पूर्वतः स्नेहविशेषं तल्लक्षणं दर्शयति–तन्मातर इति । उत्थाप्य अङ्के गृहीत्वेत्यर्थः यद्वा प्रणामादुत्थाप्य उदूह्येति क्वचित्पाठः । किं त्वत्र उदूह्य उत्थाप्येति टीकावैपरीत्यं ज्ञेयम् अत्रैव टीकायाः मायां स्यादिति च परं ब्रह्मोति श्रीशुकस्तत्पारमैश्वर्यस्फूर्त्या भाग्यं श्लाघते अहो भाग्यमित्यादिवत् स्वरेति निर्भरतां सुधासवमित्यादिकं च पूर्वतो विशेषद्योतनाय ॥ २२ ॥

तत्तद्बालकरूपोऽसौ तत्तद्गृहेषु सर्वेष्वेव सुखमत्साविन्यायतत इति । यामो दिनान्त्यप्रहरः तस्मिन् यमः गृहागमनानन्तरं सर्वदा वर्णत्तुवत्तृणसम्पत्त्या तृप्तानां गवां तदानीमागमनं पूर्वमेव वत्सानामागमनावश्यकत्वात् तेन गृहं गतः सायं दिनान्त्यदण्डषट्कं व्याप्य उन्मर्दनादिभिः सम्यक् लालितो मातृभिः नृपेति पूर्वपूर्ववत् सर्वत्र ज्ञेयम् उन्मर्दनं तैलादिना मज्जः स्नानं लेपनं चन्दनादिना आदिशब्दाद्भन्यवार्ता शयनादीनि माधवः श्रीकान्तः इति तद्गृहसम्पत्तिवृद्धिरपि सूचिता ॥ २३ ॥

गवां च तथैव स्नेहविशेषमाह—गाव इति । स्वकान् स्वनिति स्वेषामेव निकटप्राप्तत्वात् ममतासम्बन्धनातिशयवत्सतरान् वृद्धिं गतानपि वत्सान् औधसमा ऽऽपीनभर्समिंतदीयमर्वपयः श्रवणारम्भाभिप्रायेण तत्रापि सत्वरमिति हुरिति स्रवदित्यादिकं पूर्वतो विशेषज्ञापकम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मानं सङ्कल्पं उभयायितम् उभयोर्वत्सबालयोः तत्साक्षिकाङ्क्षिकपर्यायकादिषु सन्निवेशेषु वायः गमनं सञ्जातं तथा चक्रे यतः ईश्वरः सः विश्वकृत् स्वासाधारणवर्त्मिषुः तथाच स्वस्य विभुस्वरूपं ब्रह्मातिरोहितवत्सवाल जीवसाक्षिकाङ्क्षिक वैषिक सन्निवेशविशिष्टस्वसङ्कल्पविशिष्टं चक्रे इति भावः । कृष्णरूपाणयसङ्ख्यानीत्युक्तेः "सत्यज्ञानानन्दमात्रैकरसमूर्त्तयः" इति प्रदश्यमानत्वात् स्वसङ्कल्पविलास एवायमिति भावः ॥ १८ ॥

वत्सबालसूक्ष्मवपुः यावत्सङ्ख्याकं वपुः आत्मेत्सङ्कोचेत्युपलक्षणं परिमाणविशेषविशिष्टं यत्कराङ्घ्र्यादि यावत् ज्ञानकर्मेन्द्रियोपलक्षणं यष्टिविषाणवेणुदलादि यावत् इति तत्तत्पुरादेरुपलक्षणं विभूषाम्बरं यावत् तादिदीनामुपलक्षणं शीलगुणाभिधाकृति यावदिति एतदादिपलक्षणं विहारादिकं वयश्च यावत् आदिपदेनस्वरवदादि

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैविध्यं सर्वं विष्णुमयं जगत् इति गिर अङ्गवत् मूर्त्तिवत् अज अपरिणत एव स्वरूपेण श्रीकृष्णः स्वसङ्कल्पेन सर्वस्वरूपः स्वावतारवद्बभौ ॥ १९ ॥

स्वयमात्मा बालकरूप आत्मरूपान् गोवत्सान् आत्मरूपैर्वत्स-वैरात्मरूपैर्विहारैश्च क्रीडन् एवं सर्वात्मा स्वसङ्कल्पेन सर्वरूपः व्रजं प्रविवेश ॥ २० ॥

तत्तदात्मा तेषां तेषां सर्वपदार्थानां रज्ज्वादिपर्यन्तानामपि आत्मा सङ्कल्पेन सर्वस्य सर्वसामग्रीसम्पादक इति यावत् ॥ २१ ॥

गोपीनां विमोहनसङ्कल्पकार्यमाह—ताभ्यां तन्मातर इति। परं ब्रह्म श्रीमन्नारायणं श्रीकृष्णं जगदुपकृतिपरतया श्रीकृष्णावर्णावभूतं सुतरूपं मत्वा स्नेहस्नुतं यत्स्तन्यं पयः तदेव सुधातुल्यम् आसवतुल्यं च ताभिः स्नेहार्पितत्वात् अपाययन् इति ॥ २२ ॥

यामयमेन प्रहरे प्रहरे या याः क्रीडाः तासां नियमेन वर्त्तमानैः स्वाचरितैः गोपगोपीः प्रीणयन् सायं प्रातरागतो गतसंवत्सरं वर्षं क्रीडां चकारेति अनेन गोपीनां रोहिणीयशोदावत् सर्वविधकैङ्कर्यकरणभावना प्रत्यनुसारिणी श्रीभगवत्क्रीडा सञ्जातेति व्यक्तं रहस्यम् "इच्छागृहीताभिमतोरुदेह" इति वाक्यात् ॥ २३ ॥

वैफल्यं चाह—वत्सवत्सोऽप्यपाययन् इति । वक्ष्यमाणत्वात् चकारात् पूर्वं क्षीयानित्यनेन एवमेव स्नेहो व्यञ्जितः न त्वद्यतनेषु इति तेषां परब्रह्मरूपत्वञ्च व्यज्यते ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अन्तर्व्यवहिते वनमध्ये क्वाप्यदृष्ट्वा विश्वदृक् हेतुगर्भमिदं तस्मात् सर्वं वत्सवत्सपाहरणरूपं कर्म चतुर्मुखकृतमाशु अवगतवान् ॥ १७ ॥

तेषां वत्सानां वत्सपानां च मातॄणां कस्य च ब्रह्मणश्च प्रीतिं कर्तुं विश्वदृगीश्वरश्चेति हेतुगर्भमिदं विश्वदृक्त्वाद्यथेष्टपरिणामोपयुक्तसार्वज्ञादिगुणयुक्तत्वादीश्वरत्वात्प्रभुत्वात् सर्वशक्तित्वाच्च आत्मानमेव उभयायितं वत्सवत्सपायितं तदुभयवदाचरन्तम् चक्रे ॥ १८ ॥

तदेव प्रपञ्चयति—यावदिति । यावच्छब्दः साकल्यार्थः अजः श्रीकृष्णः यावद्वत्सानां वत्सपानां चाल्पवपुरादिकं तावत्स्वरूपो बभौ कथम् "सर्वं विष्णुमयं जगत्" इति या प्रसिद्धा वाणी तस्या अङ्गवद्गपमूर्तिवत् सा गीर्यथार्थस्वरूपेण प्रत्यक्षः यथा भवति तथा इत्यर्थः । दलानि भूषार्थं शिरस्सु निहितानि किसलयदलानि भङ्क्षिकयानि शीलानि स्वभावाः अभिधा नामानि आकृतिरवयवसंस्थानं गिरोऽर्थवदिति पाठे प्रत्यक्षस्तदर्थं इत्यर्थः ॥ १९ ॥



एवं स्वयमेव सर्वात्मा सन्नात्माभिन्नैर्वत्सैरात्माभिन्नान् गवां वत्सान् स्वयमात्मैव प्रयोजकः परिपालयात्मविहारैः क्रीडन् व्रजं प्राविशत् ॥ २० ॥

पृथङ्नीत्वा पृथक्कृत्य तत्तद्गोष्ठे प्रवेश्य तत्तदात्मा तत्तद्बालप्रतिरूपो भूत्वा तत्तद्बालगृहं प्रविष्टवान् ॥ २१ ॥

अथ गोपिकामोहनप्रकारमाह—तन्मातर इति। वेणुरवेण वेणुलिङ्गेन स्वरयोत्थितास्तत्तद्वत्सपमातरः सुतान् मत्वा परं ब्रह्मैव दोर्भ्यां निर्भयं पूर्णानन्दं यथा तथोत्थाप्य उपगुह्य स्नेहस्नुतः स्नेहेन स्नुतपयोधराः । यद्वा स्नेहेन स्नुतं स्तन्यं पय एव सुधावत्स्वादु आसववन्मादकं पाययामासुः ॥ २२ ॥

एवं माधवः यामयमेन तत्तत्कालनियमेन सायं गतः प्राप्तः ततः शोभनैराचरितैश्चेष्टितैः प्रहर्षयन् हे नृप ! उन्मर्दनादिभिः संस्कारितो बभूव ॥ २३ ॥

अथ गवां मोहनप्रकारमाह—गाव इति । हुङ्कारघोषैः परिहूतांश्च सङ्गतांश्च तान् वत्सान्मुहुर्लिहन्त्यः स्रवदौधसमापीनोऽन्नं पयः क्षीरमपाययन् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लीलावेशं दर्शयति—क्वापीत्यनेन । ज्ञानाद्याः शक्तयः स्वानवसरे सभयमिव तटस्थास्तिष्ठन्ति स्वावसरं स्वसेवार्थं तमुपातिष्ठन्तीति ज्ञापितम् ॥ १७—२० ॥

एवं पुत्रीयन्तीनां तन्मातॄणां चकारात् विना स्वसङ्गमतिष्ठतां तेषां स्वीयेन लीलावेशेनाघोदरप्रवेशवदुत्पातान्तरशङ्कया कतिचिद्दिनानि च एकान्ते तान् रक्षितुञ्च द्वारकायां यदूनिवेति ज्ञेयं तत्तदात्मेति बहुधीदृशा तत्तद्यत्नवान् भवेदित्यर्थः । "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरनानार्थवर्गात् । प्रासङ्गिकं प्रयोजनमाह—कस्य चेति । एक स्वरूपत्वादुभयायितमेव ननूभयं विश्वकृतां पुरुषाद्यवतारिणामीश्वरोऽवतारी विष्णुमयमित्यौपचारिकनिकारार्थं मयट् ॥ २१–२४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततोऽन्तर्धिपिते क्वापि वत्सान् वत्सपांश्चादृष्ट्वा विचारं क्रियमाणो विश्ववित् सर्वज्ञः विधिकृतं सर्वमिति सहसा शीघ्रमेव अवजगाम ज्ञातवान् इत्याश्चर्यं ॥ १७ ॥

ततो भगवान् ब्रह्मणो मुदं कर्तुं बालकाना ऽऽनीतवान् तथा सति तस्य स्वप्रयासवैयर्थ्यात् खेद एव भवेत् तूष्णींगृहगमने तु तन्मातॄणां खेदो भवेत् अत उभयेषां मुदं कर्तुं आत्मानमुभयायितं चक्रे यतोऽयं विश्वकृत् कोऽयं प्रयासः । ननु, तज्जनकानां कालकर्मस्वभावानामभावात् कथं कृतवानित्याशङ्क्याह—ईश्वर इति ॥ १८ ॥

इयं सृष्टिरात्मसृष्टिरेव आतेत्याह—यावदिति । यावन्तो वत्सा वत्सपाश्च सङ्ख्यया तावान् भगवानेव जातः अल्पकानि

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वपूंषि जातः यावदिति पदार्थानतिवृत्तौ वत्सपवत्सकाल्पकवपुर्यावत् तावद्रूपो जात इत्यवधारणे वा कराङ्घ्र्यादिकं यावत् तावदपि जातः यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरं च यावत्तावदपि जातः शीलगुणाभिधाकृतिवयो यावत् विहारादिकं च यावत् तावद्रूपः सन् बभाविति सम्बन्धः । ननु, कथमेवं जातः ? इत्याशङ्क्याह—सर्वस्वरूप इति । नन्वेकस्य कथं सर्वभावस्तत्राह—सर्वं विष्णुमयं जगदित्यत्र वाक्ये सर्वं विष्णुमयमिति प्रतीकग्रहणं सर्वं विष्णुमयमित्येवंरूपा या गीः तस्याः अङ्गवदर्थवत् सर्वं विष्णुमयञ्जगदिति वाक्यार्थो यथा श्रुतो यथोपपद्यते आत्मसृष्ट्या आधिदैविकसृष्ट्या वा यथैवोपपद्यते तथैवैतदपि जातमिति ज्ञातव्यम् एवं सर्वरूपो भूत्वा रूपाणां विनियोगमाह-स्वयमिति । स्वयमेव भगवान् आत्मना स्वेनैव आत्मरूपान् गोवत्सान् परिवार्य आत्मरूपैरेव वत्सपैस्तत्तद्वत्सान्परिवार्य सह वा आत्मरूपैरेव विहारैः क्रीडन् स्वयमेव धर्मधर्मिभावं प्राप्तः सर्वात्मा व्रजं प्राविशत् ॥२०॥

ततस्तत्तद्वत्सान् पूर्ववदेव यावता मार्गेण यत्र गम्यते तावत् दूर एव ततस्ततः पृथक् नीत्वा तत्तद्गोष्ठे निवेश्य स्थापयित्वा स एव भगवान् तत्तदात्मा अभवत् तत्र स्थित्यर्थं तत्तद्भावं प्राप्तवान् यन्धनादिभावं वत्सरूपेण तत्तत्सद्म गृहं तेन तेन प्रकारेण प्रविष्टवान् ॥ २१ ॥

एवं तेषां कार्यमुक्त्वा गोपिकानां पूर्ववदेव तेषु वृत्तिमाह, तन्मातर इति द्वाभ्याम् । वेणुरवे श्रुते त्वरया उत्थिता जाताः उपधिष्ठानपि बालकान् दोर्भिरुत्थाप्य परिरभ्य च निवृत्ता जाताः देहस्वभावेऽपि तदधिष्ठातृकृतः तथैव जात इत्यत्यन्तस्नेहेन स्नुतं तनूद्भवं यत् पयः तदेव सुधारूपमासवं मादकं च जातं तादृशं पयः परंब्रह्म सुतान् मत्वा अपाययन् वस्तुतस्त्वेते मुक्तस्तना भवन्ति ॥ २२ ॥

ततो बहिरपि तेषां क्रमवत्य इत्याह—हे नृप ! प्रथममुन्मर्दनं तैलपिष्टेनोद्वर्त्तनं ततो मज्जो मज्जनं स्नानमिति यावत् ततो लेपनं गन्धादिना ततोऽलङ्कारः ततस्तिलकादि ततः अशनं भोजनं ततो लालनं सुखशयनादिभिः सर्वैरेव संलालितः सन् स्वाचारितैः यथा पूर्वं बालका आचरन्ति तादृशाचरित्रैः प्रकर्षेण हर्षयन् जातः नन्वेतावता भूयान् कालो लगति तत्संसारव्यापृतानां प्रत्यहं कथं सम्भवतीत्याशङ्क्याह—सायन्तन इति । सायं कालेऽपि गतः तावन्मात्रं प्राप्नोति तत्र हेतुः यामयमेनेति, यामस्य कालस्य प्रहरात्मकस्य यमेन नियमेन यावता तावान् कालो भवति तावत्सूर्यगतिः कुण्ठिता भवतीत्यर्थः । कथमेवमत आह—माधव इति । लक्ष्मीपतिरयम् अतः सर्वसम्पत्तिः कालस्य च नियन्ता अतो न कालकृतानुपपत्तिरिति ॥ २३ ॥

एवं मातॄणां बालेषु वृत्तिमुक्त्वा गवां वत्सेषु वृत्तिमाह—गाव इति । ततो वत्सपप्रीत्यनन्तरं गावोऽपि गोष्ठमुपेत्य सत्वरं त्वरया हुङ्कारघोषैः स्वकृतैः हुङ्कारशब्दैः परिहूता आहूताश्च तं मङ्गलाश्च ततस्तादृशान् स्वकान् स्वकान् वत्सतरान् स्थूलवत्सानप्यपाययन् स्नेहात् मुहुर्लिहन्त्यः न चात्र दोहः कथं भविष्यतीत्याशङ्कनीयं यतः स्रवदौधसम् ऊधःसम्बन्धि पय न त्वन्तः स्थितम् ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुनः किं कृत्वा विचिकायेत्यत आह—क्वेति । विश्वविरिञ्चः क्वापि शाद्वलादन्यत्रापि वत्सान् पुलिनादन्यत्रापि पात्र अदृष्ट्वा विचिकायेति पूर्वेणैवान्वयः । ननु, कृष्णः किं वत्सान् चौर्यक्षण एव विवेद तत्क्षणानन्तरं वा किञ्चिद्विलम्ब्य विवेदेत्यत आह, सर्वमिति । सहसा चौर्यक्षण एव अकस्मात् अतर्कितमेवेत्यर्थः "अतर्किते तु सहसा" इत्यमरः ॥ १७ ॥

ततश्च भगवन्मायया मोहिते ब्रह्मणि गोहरणमन्ये स्व भवनं गते सति स्वस्य ब्रह्ममायामोहनाभावनात्रव्यग्र: पूर्ववत्स्वीयैर्वत्सबालकैः सह भोजनादिलीलाभिर्विहारो नातिविच मित्यतो मायातीतान् बलदेवपर्यन्तानपि स्वपरीवारान् मोहयित्वा लोके स्वमायाबलं दर्शयितुं परमवत्सलानां गोगोपीनां स्व स्मिन्पुत्रभावमभिलषन्तीनां मनोरथं पूरयितुं ब्रह्माणं मोहयित्वा पुनर्महाविस्मयसमुद्रे प्रक्षेप्तुम् एकस्मिन्नेव स्वाभीष्टदेवे श्रीम वनोपदेष्टरि वासुदेवे भक्तिमन्तं खलु तं च परःसहस्रान् वासु देवान् दर्शयितुं स्वयमेव वत्सबालकाद्याकारो बभूवेत्याह, उभ इति । कस्य ब्रह्मणः आत्मानं स्वयमेव उभयायितं उभयं वत्सत्वं बालकत्वं च अयितं प्राप्तं वत्सबालरूपिणमित्यर्थः विश्वकृत् महत् स्रष्टादीनामपीश्वर इति तत्र सामर्थ्यं द्योतितम् ॥ १८ ॥

तदेव प्रपञ्चयति——यावत् वत्सपरिमाणकं वत्स पानां वत्सकानां च अल्पकं वपुः जात्यपेक्षया एक वचनम् अत्यल्पानि कोमलानि वपूंषीत्यर्थः । एवमुत्तरत्रापि विहा रादिकमित्यत्रादिशब्दात् पितृमात्रादिषु व्यवहरणं पूर्वाचरित कमरणादिकं च अजः अजन्यतयैव भीत एव कृष्णः सर्वस्व नावद्गुणादिरूपः सन् बभौ सर्वं विष्णुमयं जगदिति प्रसिद्धा गीस्तस्या अङ्गवत् सा गीरेव मूर्ता प्रत्यक्षा यथा बभूवेत्यर्थः ॥ १९ ॥

ततश्च मध्याह्नापराह्णयोः पूर्ववदेव क्रीडितवतस्तस्य सायं गोष्ठप्रवेशमाह—स्वयमिति पञ्चभिः । एवं सर्वात्मा सन् व्रजं प्राविशत् कथं स्वयमात्मैव प्रयोजक आत्मरूपान् गोवत्सान् कर्मापि स्वयमेव आत्मरूपैर्वत्सपैः प्रतिवार्य्येति प्रयोज्यकर्ता स्वयमेव आत्मविहारैः आत्मभिरात्मभूतैर्बालकैः सह ये विहा वेणुवादनादयस्तैः क्रीडन्निति क्रियाकारकाण्यपि स्वयमेव इत्य अत्र पुलिने वत्सपाला उपविश्य भुञ्जत एव शाद्वलेषु वत्स स्तृणं चरन्त्येव तानन्वेष्टुं कृष्णो विपिने पर्यटत्येव श्रममाय यमाणं वर्ष व्याप्यैतावद्भिकं सर्वैर्दृष्टं तत्तत्स्थलेषु प्रतिदिनं प्र ज्ञैर्यैर्लीलापरिकरैः कृष्णस्वरूपवत्सबालैर्बलदेवेनापि सर्वद तपादैरप्यदृष्टमेवाचिन्त्यशक्त्या योगमायया व्यराजीदेव वर्ष एव कृष्णो ब्रह्मणा कवलवेत्रादिलक्षणलक्षितो मोहान्ते दृष्ट्वा चेति ज्ञेयम् ॥ २० ॥

तत्तदात्मा श्रीदामसुदामसुबलादिबालकस्वरूपः कृष्णस्तत्तत प्राविष्टवानित्यन्वयः ॥ २१ ॥

हन्त हन्त यशोदाया इवास्माकमपि कृष्णः किं पुत्रो भवेत्

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति गोपीनां मनोरथस्य सिद्धिं बहिरलक्षितां वदन्नेव तासां मोहनमाह—तन्मातरस्तत्तन्मातरः सुतान्मत्वा परं ब्रह्मैव दोर्भिरुत्थाप्य अङ्के कृत्वा स्तन्यं पयोऽपाययन् उदूह्येति क्वाचित्कः पाठश्च निर्भरं परिरभ्येति निर्भरं स्नुतेति पूर्वतः स्नेहाधिक्यसूचकं परं ब्रह्मापि सुधासवं मत्वा तासां स्तन्यं पयोऽपिबदित्याह—सुधासवमिति । स्नेहस्नुतत्वेन स्नेहमयं तत् प्रेमास्वादमहारसिकः कृष्णः सुधामिव स्वादु आसवमिव मादकं पिबन् पिबन्ननुबभूवेति नह्युमाभिरिव तस्यापि तत्स्पृहाभावबासनाप्रागासीत्सापि ब्रह्ममोहनप्रसङ्गे एव सिद्धेत्यत एव स्वस्य सखीनपि वर्षपर्यन्तं योगमायया मोहयामासेति ज्ञेयम् "स्तन्यामृतं पीतमतीव ते मुदा" इति ब्रह्मणापि वक्ष्यमाणत्वात् ॥ २२ ॥

यामानां यमेन उपरमेण "यमु उपरमे" तस्मिन् सतीत्यर्थः माधवः कृष्णस्तत्स्वरूपभूतबालकगणश्च गतः स्वस्वगृहमिति शेषः ततश्च उन्मर्दनं सुगन्धतैलाभ्यञ्जनं तदनन्तरं मज्जः स्नपनं मातृभिः सायं संलालितः ॥ २३ ॥

गोपीनामिव ततो गवामपि मोहनमाह—गाव इति । परिहूता आह्वानाहूतास्ततः सङ्कृताश्च तान् अत्रापि सत्वरमिति मुहुर्लिहन्त्य इति मुहुः स्रवदिति स्नेहाधिक्यसूचकम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वं वत्सवत्सपहरणं विधिकृतं ब्रह्मणा कृतं महमा आशु ह स्फुटमजगाम अवगतवान् यतो विश्ववित् सर्ववित् ॥ १७ ॥

तन्मातृणां मुदं कर्तुं पुत्ररूपेणापूर्वमानन्दं दातुं कस्य च मञ्जु महित्वप्रकाशनेन मुदं कर्तुं चकारात्तं विमोहितं कर्तुम् आत्मानमुभयायितं वत्सवत्सपरूपेण वर्तमानं चक्रे न तु तानानीतवान् यतो विश्वकृत् ईश्वरः ॥ १८

तत्पश्यति—यावदिति । अजः श्रीकृष्णः यावत् वत्सपानां वत्सकानां चावरकवपुरादिकं तावत्सर्वस्वरूपो बभौ सर्वं विष्णुमयं जगदिति या गीस्तस्या अङ्गवत् अर्थवत् यथा अस्याः अर्थः प्रतीयते तथा बभौ इत्यर्थः ॥ १९ ॥

स्वयमात्मा प्रयोजकः आत्मरूपात् गोवत्सात् कर्मभूतात् आत्मरूपैः वत्सैः प्रयोज्यकर्तृभिः प्रतिवार्य इत्थं सर्वात्मा सर्वरूपः आत्मविहारैः क्रीडन्निति सर्वक्रियारूपश्च व्रजं प्राविशदित्यन्वयः ॥ २० ॥

स श्रीकृष्णः तत्तदात्मा तत्तत्प्रतिरूपो व्रजं प्राप्तोऽभूत तत्र च तत्तद्वत्सान् पृथक् नीत्वा तत्तद्गोष्ठे निवेश्य तत्तत्सद्म प्रविष्टवानित्यन्वयः ॥ २१ ॥

गोपिकानां पुत्ररूपेण प्राप्तात्परमपुरुषात्सुखमाह—तन्मातर इति, सार्धत्रयम् । वेणुरवैस्त्वरयोत्थिताः सत्यः सुतान्मत्वा निर्भरं आनन्दपूर्णं परं ब्रह्म दोर्भिरुत्थाप्य उदूह्य परिरभ्य आलिङ्ग्य परमानन्दमूर्तिस्पर्शसुखं प्राप्य सुधासवं सुधावत्स्वादु आसववन्मादकं स्नेहस्नुतस्तन्यपयः अपाययन् पाययामासुः ॥ २२ ॥

हे नृप ! इत्थं माधवः श्रीपतिः यामयमेन तत्तत् प्रहरबालचरितनियमेन बाललीलानामतिरुचिरत्वात्प्रहरनिर्धार्यत्वमुक्तं सायंगतः प्राप्तः स्वाचरितैः स्वस्यासाधारणैरन्येषां दुरनुष्ठेयैराचरितैरित्यर्थः । मातॄः प्रहर्षयन् परमानन्दं प्रापयन् ततो मातृभिरुन्मर्दनादिभिर्लालितोऽभूदित्यर्थः ॥ २३ ॥

गवां वत्सरूपिभगवतः सकाशात्सुखमाह—गाव इति । हुङ्कारघोषैः परिहूताः आहूताश्च ते सङ्कृताश्च तान् ॥ २४ ॥

---

भाषा टीका ।

भीतर विपिन के बछरा और बालकन को कहूं नहीं देखिकें विश्ववित् ( सर्वज्ञ ) श्रीकृष्ण तत्कालही या सर्व कार्यकों ब्रह्माजी को कियो गयो जानिगये ॥ १७ ॥

ताके पीछें श्रीकृष्णचन्द्र उन बालकन की मैयाँन के और ब्रह्मा जी के आनन्द करबे के ताँई आप अपने आत्मा कूं ही उभयात्मक करत भये अर्थात् आप ही बछरा और बालक होय गये क्योंकि ? आप विश्वकर्त्ता और ईश्वर हैं॥१८॥

जैसे छोटे बड़े शरीर वारे, जैसे हाथ पांव वारे, जैसे लठिया सींगी बंशी पुंगी छीके वारे, जितने जैसे भूषण वस्त्र वारे, जितने शील गुण नाम आकृति अवस्था वारे, जैसे२ आहार विहार रुचिवारे जितने बालक और बछरा रहे सो श्रीकृष्ण, ( सर्वं विष्णुमयं जगत् । सब जगत् विष्णु मय है ) या वाणी के अनुगुण आप ही सर्व स्वरूप होय के शोभा कूं प्राप्त होत भये ॥ १९ ॥

वा विरियाँ आप स्वयं श्रीकृष्ण आप रूप बछरान को आप रूप बालकन सों घिरवायके अपने बिहारन सों खेलतेर सर्वात्मा प्रभु ब्रज में प्रवेश करत भये ॥ २० ॥

ब्रज में आय के तीनर बछरान कों पृथक्२ ले जाय के तीनर खिरक में वाहेर ठौर प्रवेश करके हे राजन् ! तिनर के स्वरूप धारण करके तीन २ घरन में प्रवेश करत भये ॥२१॥

तिन बालकन की माता नै पहिलेई बाँसुरी के शब्द को सुन के बाहर आय पौंची ही अपने२ बालकन को उठाय के बाहुन सों भली भांत आलिंगन करकें स्नेह तें चुचावते स्तनन के दूध रूप सुधामय कों साक्षात् परं ब्रह्म कूं अपने सुत मानि के पियावत भई ॥ २२ ॥

हे नृप ! ऐसी तीनर काल की क्रीडा के नियम सों श्रीकृष्ण सायंकाल को प्राप्त भये अर्थात् भगवान् के वा दिन सांझ भई । तब भगवान् अपने सुन्दर आचरणन सों सबन को हर्ष बढ़ावते भये । माता सब उबटनों, स्नान, चन्दन, अलंकार, डिठूनो, लगाय के भोजन कराय के नाना प्रकार लाड़न करत भई ॥ २३ ॥

ताके पीछें बनसों चर के आई जो गाँय, सोई खिरकन में जाय कें अपने हुंकार कों सुन के आये भये अपने२ छोटे२ बछरान को चाट चाट कें स्तनन में सों चुचावतो दूध को पियावन लगीं ॥ २४ ॥

---

गोगोपीनां मातृतास्मिन्सर्वा स्नेहर्द्धिकां विना ।
पुरोवदास्वपि हरेस्तोकता मायया विना ॥ २५ ॥
व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम् ।
शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥ २६ ॥
इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः ।
पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥ २७ ॥
एकदा चारयन्वत्सान्स रामो वनमाविशत् ।
पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥ २८ ॥
ततो विदूराच्चरतो गावो वत्सानुपव्रजम् ।
गोवर्द्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम् ॥ २९ ॥
दृष्ट्वाथ तत्स्नेहवशोऽस्मृतात्मा स गोव्रजोऽत्यात्मपदुर्गमार्गः ।
द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुङ्कृतैरास्नुपया जवेन ॥ ३० ॥
समेत्य गावोऽधो वत्सान् वत्सवत्योऽप्यपाययन् ।
गिलन्त्य इव चाङ्गानि लिहन्त्यः स्वौधसं पयः ॥ ३१ ॥
गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना ।
दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतावत्तु वैषम्यं कृष्णस्यापि दुर्निवारमासीदित्याह—गोगोपीनामिति गवां गोपीनां चास्मिन्कृष्णे मातृता उपलालनादिरूपा पुरोवदेवासीत्किं तु स्नेहर्द्धिकां विना स्नेहाधिक्यं त्विदानीं विशेष इत्यर्थः । आसु गोगोपीषु हरेस्तोकता च बालभावनादि पूर्ववदेवासीत्किं तु मायया विना ममेयं माताऽहमस्याः पुत्र इति मोहं विनेत्यर्थः ॥ २५ ॥

स्नेहर्द्धिमेव दर्शयति—व्रजौकसामिति । यथा कृष्णे यशोदानन्दने स्वपुत्रेभ्योऽपि स्नेहाधिक्यं पूर्वमासीत् इदानीं स्वतोकेष्वपि तथैवावर्धतेत्यर्थः । आ अब्दं यावत्सम्वत्सरम् निःसीम यथा भवति ॥ २६ ॥

एवमात्मा श्रीकृष्णो वत्सपो भूत्वा तत्रापि वत्सानां पालानां च मिषेणात्मना पालयन् क्रीडितवानित्यर्थः ॥ २७ ॥

एतावत्पर्यन्तं रामस्यापि मोह एवासीत्संवत्सरान्ते तु कथञ्चिज्ज्ञातवानिति दर्शयन्नाह—एकदेति । पञ्चषासु पञ्चसु वा षट्सु वा रात्रिषु हायनस्यापूरणीषु पूरकतयावशिष्टास्वित्यर्थः ॥ २८ ॥

ततो दूरत एव गोवर्द्धनशिखरे चरन्त्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः ॥ २९ ॥

तदैव स गोव्रजो गवां कलापस्तत्स्नेहवशस्तेषां वत्सानां स्नेहेनाकृष्टोऽत एव न स्मृत आत्मा येन स जवेनोपव्रजमगात् कथम्भूतः ? अत्यात्मपदुर्गमार्गः अतिक्रान्त आत्मपान् गोपालान् सोऽत्यात्मपः तथा दुर्गो दुर्गमो मार्गो यस्य सः स च स च तथा युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः ककुदा कुञ्चिता ग्रीवा यस्य सः उदास्यपुच्छः उन्नमितान्यास्यानि पुच्छानि च येन सः आस्नुपयाः सर्वतः स्रवन्ति पयांसि यस्य सः आस्नुपया इत्यपि पाठे स एवार्थः गोव्रज इत्यनेन वृषभादयोऽप्यगुरित्युक्तम् ॥ ३० ॥

तत्र विशेषतो धेनूनां चेष्टितमाह—समेत्येति । गोवर्द्धनस्था वत्सवत्यः पुनः प्रसूता अपि ॥ ३१ ॥

रामेण दृष्टं वत्सेषु गवां स्नेहातिशयमुक्त्वा गोपानामपि दर्शयितुमाह—गोपा इति । तासां गवां रोधने य आयासस्तस्य मौघ्येन मोघत्वेन लज्जया सह उरुमन्युना दुर्गमार्गजनितकृच्छ्रेण चाभ्येत्य गोवत्सैः सह सुतान् ददृशुः ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं पूर्वेभ्यो वत्सपालेभ्यस्तदंशानां वैलक्षण्यं दर्शयंस्तद्भागेन श्लाघ्यमानाभ्योऽपि तत्तद्रूपमातृभ्योऽपि तन्निजरूपमातृवैलक्षण्यमाह—गोगोपीनामिति । पुरोवदित्युभयत्राप्यन्वयः । पूर्वं पुरोवत्प्राक्तनबालकेष्विव अस्मिन् बालवत्सरूपे श्रीकृष्णे मातृमातृभावमासीत् किं तु स्नेहर्द्धिकां विना पूर्वेषु स्नेह एव अस्मिन्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्समृद्धिवृद्धिरित्यर्थः। प्राच्छन्नेऽपि रूपे वस्तुस्वभावस्थानाच्छाद्यत्वात् प्रभिवत् उत्तरत्र पुरोवत् श्रीयशोदायामिवास्वपि शुद्धमातृभावासु हरेस्तोकता बालभाव एवासीन्नान्यभाव इत्यर्थः किं तु मायया विना तस्यां श्रीकृष्णोऽहमिति सत्यप्रतिपादनं तदुचितसाक्षात्कृष्णरूपप्रकाशनं च आसु तु स श्रीदामाहं सुबलाहमिति छद्मप्रतिपादनं तदुचितरूपान्तरप्रकाशनं चेत्यथः। वक्ष्यते च वत्सपालमिषेण स इति। सर्वविलक्षणस्य प्राप्तेऽपि साम्ये सर्वविलक्षणताहेतुस्वभावविशेषप्राप्त्यसम्भवात् ईश्वरवत् अत्रोभयत्रापि समान एव विना शब्दः तत्रार्थोऽपि समान एव युज्यते मायाशब्दस्य च स्वार्थ एव स्थितिः स्यात् "माया दम्भे कृपायां च" इति विश्वप्रकाशात्। मोहनाचिरं तु वक्ष्यायैवेति आस्वपीति तत्रापिशब्देन समानकोटिनिविष्टायाः श्रीयशोदायाः प्राप्तिः समञ्जसा स्यात् अन्यथा हरेरपीत्यवक्ष्यदिति विवेचनीयम् ॥ २५ ॥

तद्वच्छ्रीयशोदानन्दनेऽपि वैलक्षण्यमाह—व्रजौकसामिति। स्वशब्देन स्वापत्यत्वेनैव ज्ञातेष्वपि न तु श्रीकृष्णत्वेनेत्यर्थः। स्नेह एव वल्ली शनैर्वर्द्धमानत्वादिना शनैरिति संचालनक्रमापेक्षया तदंशत्वात्तेषां कृष्ण इत्युभयत्राप्यन्वेति यथा कृष्णे तथा तेषु ववृधे कृष्णे तु अपूर्ववत् पूर्वं यथा नासीत् तथा ववृध इत्यर्थः। यद्वा यथा यथावत् तेषु कृष्णस्य तत्तदंशेषु बालादिशिक्यपर्यन्तेषु तत्तदाश्चर्यं ववृधे कृष्णे त्वपूर्ववदाश्चर्ययुक्तं ववृध इत्यर्थः। पूर्वमपि "यावच्छीलगुणाभिधाकृतिवयः" इत्यनेन सहजश्रीदामादिवदेव शीलाद्याविर्भावस्तेषूक्तः, न तु श्रीकृष्णवदपि ततः स्वरूपाधिक्यमेव तत्र प्रेमाधिक्ये कारणं जातं न तु शीलाद्याधिक्यमपीत्युत्तरेण श्रीकृष्णे प्रेमाधिक्यं तु दुर्निवारमिति भावः ॥ २६ ॥

स वत्सवत्सपरूपधरः वनगोष्ठयोरिति तत्र कुत्रापि केनचिदपि तद्रहितं नाभूदिति भावः, अन्यत्तैः। यद्वा स श्रीकृष्ण आत्मा द्वितीय एव चिक्रीडे ॥ २७ ॥

पञ्चषाश्चित्यनिश्चितोक्तिः प्रेममोहेन रमयति—श्रीकृष्णादीनिति रामः अतः प्रायो यद्यपि तेन सहैव प्रवेशस्तथाप्येकदा स राम इति वृत्तान्तविशेषोद्देशाय निर्देशः तच्च तं प्रति तल्लीलानुसन्धानं स्नेहविशेषेण अन्यथा अब्दान्ते श्रीब्रह्मगमने सति तत्संवत्सरेण तस्य तत्कौतुकानुभवसिद्धेः अतः पूर्वमबोधने कारणं तु वक्ष्यते—अज इति, यो विनापि जन्म तत्तत्पुत्रतां प्राप्तः स इत्यर्थः। तत्त्वधुना व्यक्तीभविष्यतीति भावः ॥ २८ ॥

ततस्तदनन्तरम् उपव्रजमिति गोवर्द्धनेशानकोणकोटिस्थारिष्टमर्दनकुण्डसमीपप्रायप्रदेशे तदन्तिके व्रजस्य व्याप्तेः नन्दीश्वराख्यप्रदेशादृजुमार्गेण चतुःक्रोशमयत्वात् अथ "तह्यांशो गोष्ठमरिष्टोवृषमासुर" इति वक्ष्यमाणाच्च तृणामिति तत्रात्यन्तविवक्षया तदावेशेऽपि सतीत्यर्थः। अधुना श्रीकृष्णेन भक्षणरायां चारणं किञ्चिद्वयोवृद्धायां गपत्वादिति ज्ञेयम् ॥ २९ ॥

तदेवाभिव्यञ्जयति—दृष्ट्वेति द्वाभ्याम्। स्वयं चकारः पूर्वतो द्वैगुणाय स चाकाण्डे प्रियसन्दर्शनस्वभावतः अयेति पाठेऽपि स एवार्थः। स्नेहविशेषत्वमेव दर्शयति—अस्मृतात्मेत्यादिभिः। आत्मपान् दुर्गमार्गे चातिक्रान्तो अस्यात्मपदुर्गमार्गः अस्थिचत्वापादद्वयमपि किवन्तं तुगभाव आर्षः ॥ ३० ॥

स्वीयं माधुर्यादिभिरसाधारणं सुशोभनं वा मोघसम् ऊधोऽभ्यः स्रवदित्यर्थः ॥ ३१ ॥

अभ्येत्य आभिमुख्यमेत्य अन्वेत्य इति क्वचित्पाठः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

श्रीकृष्णो स्नेहर्द्धिकाम् अल्पामपि स्नेहर्द्धिं विनैवासीत् अनेन स्नेह एवासीत् पूर्वं नत्त्वल्पापि स्नेहवृद्धिरिति. पूर्वमासु गोगोपीष्वस्य हरेस्तोकता मायया सङ्कल्पं विनैवासीत् तासु मातृता मननं भगवतः तासां वा स्वपुत्रत्वभावना कृष्णे एतद्द्वयं श्रीभगवत्सङ्कल्पकृतमेव ततः कृष्णो मुरं कर्त्तुं तन्मातॄणां चेति प्रक्रमात् ॥ २५ ॥

एतदेवाह—आ अब्दम् अन्वहं दिने स्नेहवल्ली शनैरवक्षिता निःसीम यथा भवति तथा अपूर्ववत् ववृधे वत्प्रत्ययेन वृद्धावेवापूर्वत्वं तत्सङ्कल्पकृतम् ॥ २६ ॥

आत्मा श्रीकृष्णः आत्मना स्वसङ्कल्पेन आत्मानं विभुरूपमात्मानं स्वरूपं वत्सपालमिषेण इत्युपलक्षणं सर्वेषाम् ॥ २७ ॥

पञ्चषासु हायनापूरणीषु त्रियामासु अवशिष्टासु स रामोऽज्जः कृष्णः व्रजमाविशत् ॥ २८ ॥

उपव्रजं व्रजसमीपं चरतः वत्सान् ददृशुरित्यन्वयः ॥ २९ ॥

गोव्रजः समूहः उद्धास्यपुच्छः ऊर्द्धमुखः ऊर्द्धपुच्छः आस्रुपयाः आस्रवत्पयो यस्य सः ॥ ३० ॥

गावः वत्सान्समेत्याधः पतदिति शेषः। स्वौधसं पयः अपाययन् ॥ ३१ ॥

गोपास्तद्रोधनायासे मौढ्यं वैफल्यं तेन लज्जा उरुमन्युश्च ताभ्यामुपलक्षिता गोवत्सैः सहितान्सुतान् ददृशुः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एतावत्तु वैषम्यं कृष्णस्यापि दुर्निवार्यमासीदित्याह—गोगोपीनामिति। गवां गोपीनां च तस्मिन्वत्सवत्सपात्मकतामापन्ने श्रीकृष्णे स्नेहर्द्धिकां स्नेहसमृद्धिं स्नेहाधिक्यं विनैव यावत् मातृता उपलालनादिरूपा सर्वा पूर्ववदेवासीत् तथा आसु गोपीषु हरेस्तोकता बालभावः पूर्ववदेवासीत् किन्तु मायया विना ममेयं माता अहमस्याः पुत्र इति मोहं विनेत्यर्थः ॥ २५ ॥

स्नेहर्द्धिकामेव दर्शयति—व्रजौकसामिति। व्रजौकसां श्रीकृष्णे यशोदानन्दने स्वपुत्रेभ्योऽपि स्नेहवल्ली स्नेहसन्ततिः पूर्ववदेव ववृधे इदानीं स्वतोकेषु स्वापत्येष्वप्याऽऽब्दं सम्वत्सरपर्यन्तमन्वहं निःसीम निरवधिकं यथा तथैवावर्द्धतेत्यर्थः ॥ २६ ॥

इत्थं वत्सतत्पालव्याजेनात्मनैवात्मानं पालयन्वनगोष्ठयोरब्दं संवत्सरं चिक्रीडे विहृतवान् ॥ २७ ॥

तावत्पर्यन्तं रामस्यापि मोह एवासीत् सम्वत्सरान्ते तु कथंचिज् ज्ञातवानिति दर्शयन् आह—एकदेति। पञ्चसु षट्सु वा त्रियामासु रात्रिषु हायनापूरणीषु सम्वत्सरपूरकतयाऽवशिष्टास्वित्यर्थः। वत्सांश्चारयन् स रामो वनमाविशत् ॥ २८ ॥

तदा गोवर्द्धनाद्रेः शिखरे विदूरमेव तृणं चरन्त्यो गावोऽनुव्रजं व्रजस्योपान्ते चरतो वत्सान् ददृशुः ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स दृष्टवान् गवां व्रजः सङ्घस्तेषां वत्सानां स्नेहेनाकृष्टः अत एव विस्मृत आत्मा येन स व्रजसमीपमगात् कथम्भूतः अतिक्रान्ता आत्मपा गोपा येन तथा दुर्गो मार्गो यस्य स च तथा द्विपाद्दस्यन्तधावनेन पाश्चात्यपादयोः पूर्वपादाभ्यां सङ्घट्टनात्तथा प्रतीयमान इत्यर्थः । ककुदि ग्रीवा यस्य स उदञ्चितग्रीव इत्यर्थः । उन्नमितान्यास्यानि पुच्छानि च येन स आस्नु सर्वतः स्रवत्पयो यस्य स हुङ्कृतैरुपलक्षितः गोव्रज इत्यनेन वृषभादयोऽप्यगुरिति सूचितम् ॥ ३० ॥

तत्र विशेषतो धेनूनां चेष्टितमाह–समेत्येति । वत्सतरयोऽपि पुनः प्रसूता अपि गावः पूर्ववत्सान् स्वौधसं स्वापीनोद्भवं पयोऽपाययन् कथम्भूताः ? वत्सानामङ्गानि गिलन्त्य इव लिहन्त्यः ॥ ३१ ॥

एवं रामेण दृष्टं वत्सेषु गवां स्नेहातिशयमुक्त्वाऽथ गोपानामपि दर्शयितुमाह–गोपा इति । तासां गवां रोधनेन यश्चायासस्तस्य मौघ्येन वैयर्थ्येन या लज्जा तत्सहितेनोरुणा मन्युना दुर्गमार्गजनितक्लेशेन चाऽप्येत्यागत्य गोवत्सैः सहितान् सुतान् ददृशुः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं पूर्वेभ्यो वत्सबालेभ्यस्तदंशानां वैलक्षण्यं दर्शयन् तत्तद्भावेन श्लाघ्यमानाभ्योऽपि तत्तद्रूपमातृभ्यः स्वरूपमातुर्वैलक्षण्यमाह–गोगोपीनामिति । पुरोवदित्युभयत्राप्यन्वेति पूर्वत्र पूर्वबालकेष्वपि उत्तरत्र श्रीयशोदायामिवेत्यर्थः । तस्यामिवास्वपि शुद्धमातृभावाभावात्तु हरेस्तोकता तोकभाव एवासीत् नान्यभावः इत्यर्थः । किन्तु मायया विना तस्यां श्रीकृष्ण एवाहम् इति सत्यप्रतिपादनं तदुचितसाक्षात्कृष्णरूपप्रकाशनञ्च आसु तु स श्रीदामाहं सुदामाहमिति छद्मप्रतिपादनं तदुचितरूपान्तरप्रकाशनञ्चेत्यर्थः । वक्ष्यते च वत्सपालमिषेण स इति ॥ २५ ॥

तद्वत् श्रीयशोदानन्दनेऽपि वैलक्षण्यमाह—व्रजौकसामिति कृष्णे इत्युभयत्राप्यन्वेति यथा कृष्णे तथा तेषु ववृधे कृष्णे तु अपूर्ववत् पूर्वं यथा नासीत्तथा इत्यर्थः । यद्वा यथा यथावत् तेषु कृष्णस्य तत्तदंशेषु बाल्यादिशिक्यपर्यन्तेषु तत्तद्योग्यं ववृधे कृष्णे त्वपूर्ववदाश्चर्ययुक्तं ववृध इत्यर्थः ॥ २६—३१ ॥

मन्युर्गोः प्रत्येव ज्ञेयं न तु बालान् प्रति गवामिव तेषां सर्वांशेषु दर्शनसम्भवाददर्शनेऽपि वत्सचारिणां तेषां माधुर्यस्फूर्तेश्च कोपासम्भवात् ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुभयविधानां पूर्ववत् स्थितिमुक्त्वा विशेषमाह—गोगोपीनामिति । गवां गोपीनां च मातृता मातृभावः सेवाविरूपः सर्वोऽप्यस्मिन् नूतनपुत्रेऽपि पूर्ववदेवासीत् परं स्नेहर्द्धिकां विना स्नेहर्द्धिस्तु मायका जाता आस्वपि गोगोपीषु हरेस्तोकता पूर्ववदेव आसीत् तोकेषु यादृशो भावः सा तोकता मातृविषयिणी तोकनिष्ठा हरेरप्यासीत् यथा पूर्वं तोकाना परमिदानीं भगवति स धर्मो मायया जातः अतो मायया विना मायां परित्यज्य स्वरूपतः पूर्ववदेवासीदित्यर्थः ॥ २५ ॥

एवमारम्भ एव स्नेहाधिक्यमुक्त्वा तस्य वृद्धिमाह–व्रजौकसामिति । स्वतोकेषु स्वस्वबालकेषु स्नेहवल्ली शीघ्रमेव वर्द्धमानान्वहं ववृधे शनैः शनैरिति वैलक्षण्यज्ञानार्थं ततो निःसीम ववृधे यथा पूर्वं कृष्णे तु पूर्ववदेव कृष्णाशयः सम्पद्यन्तो नारब्धयमावर्त्तते ॥ २६ ॥

एवं भगवच्चरित्रं नूतनमुक्त्वोपसंहरति—इत्थमिति । आत्मा कृष्णः आत्मना वत्सपरूपेण आत्मानं वत्सरूपं वस्तुतः स्वमेव वत्सः वत्सपाल इति मिषमात्रं व्याजमात्रं तेन स एव वत्सपो भूत्वा आत्मानं पालयन् वनगोष्ठयोः वने गोष्ठे च चिक्रीडे क्रीडां कृतवान् ॥ २७ ॥

इदानीं गोकुलवासिनां सर्वेषां मध्ये बलभद्रस्य भगवत एवं लीलाया ज्ञानं जातमिति वक्तुमुपाख्यानमारभते एकदेति । यदा भगवत इच्छा वत्सान् पालयन् बलभद्ररहितो वनमाविशत् यत्र गह्वरे वनं गावश्चरन्ति तत्र गत्वा पञ्चषासु रात्रिषु हायनापूरणीषु सतीषु वत्सापहरणं तन्मात्रं जातं पञ्च वा षड्वा रात्रयो न्यूनाः त्रियामाः इत्यल्पमिदं व्रज इति वत्सपालरूपेण तन्मातृभ्यो न जातः केवलं ज्ञानमेव तथा वर्त्तत इति ज्ञापनार्थमुक्तम् ॥ २८ ॥

ततो यदासीत् तदाह—विदूरेण दूरात् दूरे चरतो वत्सान् उपव्रजं व्रजसमीप एव स्थितान् व्रजसमीपारण्ये स्थिता-नित्यर्थः । गोवर्द्धनाद्रिशिरसि चरन्त्यो गावः ददृशुः ॥ २९ ॥

यद्यपि गवां तृणमत्यभीष्टं तथापि तत्परित्यज्य वत्सस्नेहाद्वत्ससमीपमागता इत्याह–दृष्ट्वेति । पूर्वमपि पश्यन्ति पदार्थं तद्व्यावृत्त्यर्थं भिन्नप्रक्रममाह, अथेति । तत्स्नेहेन वत्सस्नेहेन वशीकृतस्तत्स्नेहेन वशीकृतस्तत्स्नेहवशः अत एवाऽस्मृत आत्मा येन स प्रसिद्धोऽपि गोव्रजः सर्वा एव गावः अत्यात्मपदुर्गमार्गो अतिक्रान्ता आत्मपा गोपाला दुर्गश्च मार्गो येन रक्षकानां क्रम्य कण्टकादिभूयिष्ठमपि प्रवेशं मार्गव्यतिरेकेणाप्यतिक्रम्य गतः इत्यर्थः । किञ्च, द्विपाज्जातो योजितपादद्वयेनैवोत्प्लुत्य नैव धावति ककुदि ग्रीवा यस्य उत ऊर्ध्वमास्ये पुच्छे च एतादृशः सन् अगात् वत्ससमीपे समागतः हुङ्कृतैः सह समन्तात् स्रवन्त्यास्नु आस्नु पयो यस्य स अस्नुपयाः आगतः ॥ ३० ॥

ततः समेत्य वत्सतर्योऽपि अधो वत्सान् त्यक्त्वा अपाययन् तत्रापि अङ्गानि गिलन्त्य इव लिहन्त्य स्वौधस्यः तथा कुर्वन्ति नात्र तासां कश्चन दोषः । यतः स्वकीयेषोधसि स्थितं पयः ॥ ३१ ॥

एवं गवां स्नेहाधिक्यमुक्त्वा गोपानां स्नेहाधिक्यमाह–इति त्रिभिः । प्रथमतः तस्य गोव्रजस्य रोधनार्थं योऽयमायासः तस्मिन् विफले जाते यन्मौढ्यम् इतिकर्त्तव्यताज्ञानं जातः तस्मिन् जाते पश्चाल्लज्जा जाता एवं तेषामुरुमन्युर्जातः तेन मन्युना अविचारितक्लेशा एव दुर्गे यत् कृच्छ्रं क्लेशः ततोऽपि समेत्य क्लेशं प्राप्याऽपि गोवत्सैः सह मिलितान् सुतान् ददृशुः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च गवां गोपीनां अस्मिन् श्रीयशोदानन्दने कृष्णे मातृता सर्वा उपलालनादिमयः सर्व एव मातृभाव इत्यर्थः । पुरा एव पूर्ववदेवासीत् किन्तु स्नेहर्द्धिकां स्नेहाधिक्यं विना पूर्वं श्रीदामसुदामादिभ्यः स्वपुत्रेभ्योऽपि सकाशात् यशोदापुत्रे श्रीकृष्णे स्नेहर्द्धिरासीत् तस्यैव स्वपुत्रीभूतत्वे जाते सति तदा स्वपुत्रेष्वपि तथैव स्नेहर्द्धिरिति यशोदापुत्रे स्वपुत्रे च तुल्य एव स्नेहोऽभूदित्यर्थः । आसु गोगोपीषु हरेरपि तोकता बालभावः पूर्ववदेवासीत् किन्तु मायया उपचारेणैव पुत्रतुल्यत्वात् पुत्रत्वमासीत् ब्रह्ममोहनादनमारभ्य तु कृष्ण एव श्रीदामसुदामादिरूपस्तासां पुत्रोऽभूदिति कृष्णस्य पुत्रभावो यथार्थ एवेत्यर्थः । ननु, श्रीदामादिषु तन्मातृणां यावान् स्नेहस्तावानेव पुत्रीभूते कृष्णेऽपि भवितुमर्हति "यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकम्" इति पूर्वोक्तेः उच्यते कृष्णो हि महामहेश्वरत्वात् स्वाधीनीकृतब्रह्मादिसर्वेश्वरपर्यन्तोऽपि प्रेम्णः खल्वधीन एव प्रेमा तु न तस्याधीनः इति प्रेम्णि तस्य प्रभुत्वाभावात् तेन प्रेमा संकुचितीकर्त्तुमशक्यः अत एव स्वामिचरणैरप्युक्तं एतावत्तु वैभवं कृष्णेनापि दुर्निवारामिति स च प्रेमा वात्सल्यादिरूपस्तन्मात्रादिषु विराजते इति कृष्णः स्वमात्रादिसमीपे स्वैश्वर्यमननुसन्धानोऽधीनीभूत एव सदा तिष्ठति यथा महाराजचक्रवर्त्तिनः समीपे मण्डलेश्वर इति न च महामहेश्वरस्य तस्यैवं पारतन्त्र्यं दूषणमिति वाच्यं प्रत्युत भूषणमेव यथा जीवस्य मायापारतन्त्र्यं दुःखार्थकं तथैवेश्वरस्यानन्दरसमयस्यापि प्रेमपारतन्त्र्यं प्रतिक्षणमखण्डमाननिरतिशयानन्दार्थकमेवेति महानुभावैरनुभूतम् ॥ २५ ।

तदेवं यशोदानन्दनकृष्णपुत्रीभूतकृष्णयोः स्वरूपत ऐक्यात् स्नेहाधिक्यं तुल्यमुक्तमपि पुनः स्पष्टीकुर्वन् यशोदानन्दनकृष्णे तु गुणोत्कर्षहेतुकं स्नेहाधिक्यमाह—व्रजौकसामिति । आब्दं वर्षं व्याप्य अन्वहं स्नेहवल्लीति वल्ली यथा प्रतिदिनमेव वर्द्धते तथैवेत्यर्थः । यथा कृष्णे यशोदानन्दने पूर्वं स्वपुत्रेभ्योऽपि वर्द्धमाना सा आसीत् इदानीं स्वतोकेष्वपि तथैव ववृधे इति स्वतोकानामपि कृष्णत्वात् स्नेहर्द्धिरुभयत्र तुल्यैवेत्यर्थः किञ्च तुशब्दबलात् कृष्णे इत्यस्यावृत्त्या स्नेहर्द्धेस्तुल्यत्वेऽपि कृष्णे यशोदानन्दने तु तथापि अपूर्ववत् नित्यनवायमानैव तस्य सर्वशक्तिसौन्दर्यवैदग्ध्यादिगुणावत्त्वादंशित्वाच्च तासां पुत्रीभूतकृष्णस्वरूपाणां तु श्रीदामाद्युचितसौन्दर्यादिमत्त्वादंशत्वाच्चेति भावः । यद्वा, यथेति यथावदेव स्नेहवल्ली ववृधे कृष्णे तु अपूर्ववदेव ववृधे इत्यावृत्त्या विनैव व्याख्येयम् ॥ २६ ॥

एवमात्मा कृष्णो वत्सपो भूत्वा वत्सानां पालानां च मिषेण आत्मानमात्मना पालयन् क्रीडितवानित्यर्थः ॥ २७ ॥

ब्रह्ममोहनप्रसङ्ग एव बलदेवमोहनमपि व्यक्तीकर्त्तुं कथामाह—एकदेति । पञ्चसु षट्सु वा रात्रिषु हायनस्य वर्षस्य अपूर्णेषु पूरकतया अवशिष्टास्वित्यर्थः ॥ २८ ॥

गोवर्द्धनशृङ्गे तृणं चरन्त्यो गावः तस्मादविदूरात् व्रजस्य निकटे चरतो वत्सान् ददृशुः ॥ २९ ॥

अस्मृतात्मा आत्मानमपि विस्मृत्य स गोसमूहः अगात्, अतिक्रान्ता आत्मपा गोपा दुर्गो मार्गश्च येन सः, परस्परं युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः उन्मुखत्वात् ककुदि ग्रीवा यस्य स उद्धृतान्याकाशानि पुच्छानि च यस्य स आ सम्यगेव चरन्ति अक्षीणि पयांसि च यस्य सः ॥ ३० ॥

गोवर्द्धनस्याधः समेत्य द्व्याहिकद्व्यादिदादिवत्सवत्योऽपि औधसं ऊधोभवं स्वयमेव स्रवत् पयः अपाययन् गिलन्त्य इवेति गवां बहुनाधिक्यं स्नेहाधिक्यसूचकम् ॥ ३१ ॥

तासां गवां रोधने य आयासो लकुटोत्क्षेपादिभिस्तस्य मोघत्वेन वैयर्थ्येन हेतुना लज्जा च मन्युश्च तल्लज्जामन्यु तेन दुर्गमार्गजनितक्लेशेन चाभ्येत्य गोवत्सैः सह ॥ ३२ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अस्मिन् श्रीकृष्णे गवां गोपीनां च मातृता मातृभावः पुरोवदेवासीत् किन्तु स्नेहर्द्धिकां स्नेहाधिक्यं विना परमानन्दस्वरूपत्वात् आसु गोषु गोपीषु च हरेस्तोकता बालभावोऽपि पुरो वदेवासीत्, किन्तु मायया प्राकृतवत्सादिदेहोपादानरूपया प्रकृत्या विना अप्राकृतशरीरित्वात् ॥ २५ ॥

आ अब्दं यावत्संवत्सरम् अन्वहमनुदिनम् स्वतोकेषु निःसीमं निरवधिकं यथा भवति तथा व्रजौकसां स्नेहवल्लीप्रेमलता ववृधे यथा पूर्वं कृष्णे तद्वत् देहलीदीपन्यायेन कृष्णे इत्युभयान्वयिपदम् । ननु, श्रीकृष्णे तदानीं स्वतोकेषु यथा तथैव स्नेहवल्ली आसीदधिका वेत्यत्राह—कृष्णे त्वपूर्ववदिति । कृष्णे तु श्रीयशोदानन्दने तु तदानीमप्यपूर्ववत् स्वतोकेभ्यः अधिकैवेत्यर्थः तत्तोकानामंशत्वाद्यशोदानन्दनस्यांशित्वादिति भावः ॥ २६ ॥

आत्मा 'एष ते आत्मान्तर्यामी' "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादि श्रुतिप्रसिद्धः सर्ववेदैकवेद्यो वत्सपो भूत्वा तथापि इत्युक्तप्रकारेण वत्सपालमिषेण आत्मानं वत्समिषेण स्वयम् आत्मना वत्सपमिषेण सता पालयन् वने गोष्ठे च विक्रीडे क्रीडितवान् ॥ २७ ॥

अन्यस्य तु का कथैतावत्पर्यन्तं वत्सवत्सपालमिषेण श्रीकृष्ण एव विहरतीति रामेणाऽपि न ज्ञातं संवत्सरान्ते तु कथञ्चित् ज्ञातमिति दर्शयन्नाह—एकदेति । अजः "अजायमानो बहुधा व्यजायते" इति श्रुतिप्रसिद्धः परमावतारी स्वेच्छयाविर्भूतः श्रीकृष्णः एकदा पञ्चपासु पञ्चसु षट्सु वा रात्रिषु हायनापूर्णासु हायनस्य संवत्सरस्यापूरकतया अवशिष्टासु सरामो वनमाविशत् ॥ २८ ॥

तदा गोवर्द्धनाग्रे शिरसि शिखरे चरन्त्यो गावः तत एव विदूरात् उपव्रजं व्रजसमीपे चरतो वत्सान् ददृशुः ॥२९॥

अविदूरतो वत्सं दृष्ट्वा गौर्धावन्तीव तत्र तु विदूरात् दृष्ट्वा तत्राऽपि स गोवर्द्धनाख्यस्थितो गोव्रजः धेनुवृन्दमवत्सतरादिगवां कलापः तत्स्नेहवशः वत्सस्नेहवशः अत एव अस्मृतात्मा न स्मृत आत्मा येन सः अत्यात्मपदुर्गमार्गः अतिक्रान्तः आत्मपान् अत्यात्मपः दुर्गो मार्गो यस्य स दुर्गमार्गः

तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान्।
उदुह्य दोर्भिः परिरभ्य मूर्द्धनि घ्राणैरवापुः परमां मुदं ते ॥ ३३ ॥
ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः।
कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ॥ ३४ ॥
व्रजस्य रामः प्रेमर्द्धेर्वीक्ष्यौत्कण्ठ्यमनुक्षणम्।
मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिन्तयत् ॥ ३५ ॥
किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि।
व्रजस्य सात्मनस्तोकेष्वपूर्वं प्रेमवर्द्धते ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्वौ चासौ सच द्वौपादौ यस्य स द्विपात् द्वौ पादौ संयोज्य धावमानो द्विपादिव प्रतीयते इत्यर्थः। ककुदि आकुञ्चिता ग्रीवा यस्य स तथा उन्नमितान्यास्यानि पुच्छानि च येन स तथा आस्नुपयाः आसवंतः स्रवन्ति पयांसि यस्य स तथा हुंकृतैरुपलक्षितो जवेनाप्यव्रजमगात् ॥ ३० ॥

तत्र धेनूनां श्रीकृष्णरूपेषु वत्सेषु रामेण दृष्टं प्रीत्यतिशयं दर्शयति—समेत्येति। वत्सवत्योऽपि पुनः प्रसूता अपि वत्सान् श्रीकृष्णरूपान् गिलन्त्य इव लिहन्त्यः स्नौधसं पयः अपाययन् ॥ ३१ ॥

अथ गोपानां कृष्णरूपेषु वत्सपेषु रामेण दृष्टं प्रीत्यतिशयं दर्शयति—गोपा इति त्रिभिः। तस्य गोव्रजस्य रोधने य आयासस्तस्य मौघ्येन वैयर्थ्येन यो लज्जोरुमन्युः लज्जया सह बहुक्रोधस्तेन दुर्गाध्वकृच्छ्रतो दुर्गममार्गक्लेशेन च ऊऽयस्य गोवत्सैः सह सुतान् ददृशुः ॥ ३२ ॥

भाषा टीका।

गायें और गोपीन को मैयापनो या कृष्ण के विषै ठीक भयो, परंच एक स्नेह की वृद्धि के विना अर्थात् और सब पूर्ववत् भयो पै स्नेह अधिक वढ गयो, और इन गापान क विषै श्रीकृष्ण को पुत्रपनो भी पहिलेई सो रह्यो परंच एक माया के विना अर्थात् ये मेरी माता मैं या को वेटा हूं ऐसे मोह के विना ॥ २५ ॥

अवतो व्रजवासीन की अपनेर वालकनमें स्नेह की वेल नित नई एक वर्ष तांई निःसीम वढती भई, जैसे पहिले सब की प्रीति श्रीकृष्णमें रही ॥ २६ ॥

या प्रकार सबके आत्मा श्रीकृष्णचन्द्र वछरा और ग्वालवालन के मिष करिकें आपरूप वछरानकों आपरूप बालकन द्वारा चरायकें वन और व्रजम वर्ष दिनताई क्रीडा करत भये ॥ २७ ॥

जब एक वर्ष में चार पांच रात कम रहीं तब एक दिन श्रीवलदेवजी सहित वछरा चरायवे कूं वनमें प्रवेश करत भये ॥ २८ ॥

ताके पीछें गोवर्द्धन पर्वत पै गायें घास चरती हीं तिनन ने दूरतेई व्रजके समीप में वछरा चरते देखे ॥ २९ ॥

वस देखिवेई की देर कि—इतने में वे सगरी गायें देवौं स्नेह में भूलिकें दोर पांयनतें होयकें चौकरी भर भरकें … को मुख छुवायर कें वडे वेगसों वछरानकी ओर कों … चलवे के समय दूध जिनको चुचाय रह्यो और अवेर … यानने रोकीं पर न रुकीं ॥ ३० ॥

गिरराज श्रीगोवर्द्धन तें नीचे आयके सगरी गायें … वछरान वारी हीं, तौ भी वडे वछरान को अपनो दूध … वावन लगीं, और ऐसे चाटन लगीं, कि—मानों मारे प्रेम … निगल जायगीं ॥ ३१ ॥

पीछे सों आये जो गोप तिनने वहुतेरी रोकी हीं … नहीं जब रुकीं तब अपने परिश्रम के विफल होय वे … भई जो लज्जा और क्रोध ताके मारे वडे कष्ट सों दूर … चल कें वछरन के समीप आये तब वछरन सहित … पुत्रन को देखत भये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ततश्च तेषामीक्षणेनोद्भूतो यः प्रेमरसस्तस्मिन्नाप्लुता … आशया येषां ते लज्जामन्युकृच्छ्रैस्तानपि ताडयितुमाग… सन्तोऽपि गतमन्यवः। प्रत्युत जातोऽनुरागो येषां ते मूर्… घ्राणैरवघ्राणैः परमां मुदमवापुः ॥ ३३ ॥

कृच्छ्रात्ततोऽपगता निवृत्ताः तेषां सुतानामनुस्मृत्योद्गच्छन्… श्रूणि येषां ते ॥ ३४ ॥

प्रेमर्द्धेरौत्कण्ठ्यमतिशयं मुक्तस्तनेष्वपत्येषु वीक्ष्य हेतुमजा… नचिन्तयत् ॥ ३५ ॥

चिन्तामेवाह-किमेतदिति द्वाभ्याम्। वासुदेवे यथा पुरा … तथा स्वतोकेष्वपि व्रजस्य प्रेम वर्धते किमेतदद्भुतमिति …

केयं वा कुत आयाता दैवी वा नार्युतासुरी।
प्रायो मायास्तु मे भर्त्तुर्नान्या मेऽपि विमोहिनी ॥ ३७ ॥
इति सञ्चिन्त्य दाशार्हो वत्सान्सवयसानपि।
सर्वानाचष्ट वैकुण्ठं चक्षुषा वयुनेन सः ॥ ३८ ॥
नैते सुरेशा ऋषयो नचैते त्वमेव भासीश ! भिदाश्रयेऽपि।
सर्वं पृथक्त्वं निगमात्कथम्वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ॥ ३९ ॥
(१)( ब्रह्मापि स्वासनस्थेन चतुरास्येन शौरिणा।
मोहितैः द्वारपालैश्च परिभूतोन्यवर्त्तत ) ॥ ० ॥
तावदेत्यात्मभूरात्ममानेन त्रुटयनेहसा।
पुरोवदब्दं क्रीडन्तं ददृशे सकलं हरिम् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सात्मनो मत्सहितस्य व्रजस्य मम तेषु प्रेमकारणं किमिति भावः ॥ ३६ ॥

केयं माया देवानां वा नराणां वा असुराणां वा कुतो वा कस्मात्प्रयुक्ता तत्रान्यमाया न सम्भवति। यतो ममापि मोहो वर्ततेऽतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव मायेयमस्त्विति सम्भावयति ॥ ३७ ॥

सवयसान्सखीनपि वयुनेन ज्ञानमयेन चक्षुषा वैकुण्ठं श्रीकृष्णमेवापश्यत् ॥ ३८ ॥

एवं कृष्णरूपान्सामान्यतो ज्ञात्वा कृष्णं पृष्ट्वा कृष्णोपदेशेन विशेषतो ज्ञातवानित्याह—नैत इति। अयमर्थः पाल्यमानास्तावत्सा ऋषीणामंशाः पालाश्च देवानामंशा इति तावदहं वेद्मि, इदानीं तु न तथा किन्त्वस्मिन् भिदाश्रयेऽपि त्वमेव भासि अतस्त्वं सर्वं पृथक् विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा वक्त्रा निगमात्संक्षेपत एवोक्तं वृत्तं बलोऽवैद्विदितवानित्यर्थः ॥ ३९ ॥

ततः किं वृत्तमित्यपेक्षायामाह—तावदिति। वर्षे जाते आत्मनो मानेन त्रुट्यनेहसा त्रुटिमात्रेण कालेन सकलं सानुचरं हरिं ददर्श ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यद्यपि आवासादयः प्रेमरसोदयान्तराया उक्ताः तथा गवां वत्सैः सहितानिति वत्ससङ्के स्थितैरपि स्वस्वसुतैः परमवत्सलानां तासां दृष्टिपथे वत्सानामानयनादनपसारणाच्च तेषामपराधः सूचितः। तथाऽपि तेषां सुतानामीक्षणेन य उत्कृष्टः प्रेमरसस्तस्मिन् आप्लुतात्मया उद्धृत्य उत्सङ्गे गृहीत्वा उदूह्येति यावत् दीर्घस्वमार्षम्। अर्थः स एव प्रेमरसानुरागयोः सुखातिशयकृष्णानिशयाभ्यां विशेषणाभ्यां भेदः कल्प्यः। यदि च गवामिव तेषामपि दूरतोऽपि स्वसुतदर्शनसम्भवात् कथञ्चिद्दर्शनाभावेऽपि वत्ससङ्गिनां स्वसुतानां स्फुरणात् तेषु क्रोधोत्पत्तिर्न सम्भवतीति शङ्क्यते, तत्तदाख्यानातिक्रामन्तीगोः प्रत्येव तेषां मन्युर्गन्तव्यः स्वसुतानामतिसन्निहिततया सुष्ठु माधुर्यानुभवेषु तच्छान्तिपूर्वकप्रेमोदयश्चेति ॥ ३३ ॥

प्रवयसो वृद्धाः इति तेषां प्रायो विवेकित्वादिना तादृगल्पवियोगेन मोहो न सम्भवति तथापीत्यर्थः। एवं पूर्वं वृद्धा एव गोपाला आसन्निति बोधयति तच्च गोपजातेस्तत्स्वधर्मत्वात् श्रीव्रजेशस्य च बालपुत्रत्वेन स्वप्रतिनिधेरभावेन स्वयमेव गाः पालयतः सङ्कोचित्वात् अनुस्मृतिः निरन्तरस्मरणम् ॥ ३४ ॥

प्रेमवर्द्धहेतोरौत्कण्ठ्यमुत्कण्ठेत्युपचारात् तत्रातिशय एव पर्यवस्यति टीकायामौत्कण्ठ्यमिति क्वचित्पाठः ॥ ३५ ॥

अद्भुतं युक्ततमम् अखिलस्य आत्मनि परमात्मनि अतो वासुदेवे सर्वाश्रये किं वा तत्रापि श्रीवसुदेवापत्ये पूर्णभगवत्तया प्रकट इत्यर्थः। एवं सर्वथा तस्मिन्नेव तदुचिततादृशप्रेमवृद्धेर्योग्यतोक्ता तथापि तस्मिन्निव व्रजस्य गोगोपात्मकस्य तोकेषु स्वापत्येषु ॥ ३६ ॥

अथात्र कापि कस्यापि मायैव हेतुर्भवेदिति तर्कयति—केयमिति। इयं तेषु प्रेमवर्द्धिनी माया दुर्घटघटनी शक्तिः का किंलक्षणा वाशब्दः समुच्चये कुत आयाता कस्मात् समुद्भूता केन च कृतेत्यर्थः। कुत इत्येव विचारयति वाशब्दो वितर्के तत्तत्प्रद्यान्नपासितैर्देवैः कैरपि महाप्रभावैः कृता किं? तेभ्यो ऽपि मुनीनां प्रभावं पर्यालोच्य तथैव पक्षान्तरं कल्पयति—नारीति। अत्रापि वा शब्दो योज्यः। नन्वेवं श्रीकृष्णार्चिव्रजपुत्रादिषु व्रजजनानां प्रेमवर्द्धनस्पर्द्धा च न सम्भवति इत्याशङ्क्य पुनर्विकल्पयति। उत पक्षान्तरे—आसुरी स्वस्वापत्येष्वपि श्रीकृष्ण सदृशस्नेहविवर्द्धनेन व्रजस्य श्रीकृष्णविषयकभावविशेषहान्या तन्माहात्म्यसङ्कोचार्थं कंसादिभिः कृता किं? पूतनादीनां तन्मोहनता दर्शनात्। यद्वा, मायेयं देवानां मुनीनां च तल्लीलालोभेन प्राचीनानन्तर्धाय स्वयमाविर्भावमयी

(१) वीरराघवीयेऽधिकं पठ्यतेऽयं श्लोकः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सा तु तेषां साधूनां न सम्भवतीति तर्कान्तरे असुराणां तु पूतनावत्सासुरादिवद्दुष्प्रभावमयीति ज्ञेयम्। तथा तु श्रीकृष्ण इव तेषु मम स्नेहवृद्धिर्न सम्भवतीत्याह-प्राय इति। तस्य स्वाविषयकत्वज्ञानासम्भावनाया हेत्वनालोचनया तादृशप्रेम्णस्तत्स्वरूपैकानुबन्ध्यतालोचनया च प्राय इत्युक्तम्। अस्तु स्यात् अनिर्द्धारणा सम्भावना। यद्वा, अस्तु अवान्तरेति प्रार्थना अन्यथा मायया सम्मोहनेन मल्लज्जाद्युत्पत्तेः विमोहिनी निरन्तमन्धानप्रेमवर्द्धिनी विशब्दो दीर्घकालत्वाद्यपेक्षया इति लक्षणमप्यस्याः दर्शितम् ॥ ३७ ॥

सचयमानिति समासान्त आर्षः। वैकुण्ठं स्वार्थेऽण् सर्वथा कुण्ठता रहितमिति तद्रूपत्वे लिङ्गं वयुनेनानुसन्धानात्मकज्ञानमयेन तस्य वयुनस्य प्रेमविशेषमयत्वेन सामर्थ्यविशेषं द्योतयति, दाशार्हः श्रीयदुकुलोद्भवःभ्रातृत्वं गत इत्यर्थः ॥ ३८ ॥

सुरेशा देवश्रेष्ठाः श्रीगरुडादयः ऋषयः श्रीनारदाद्याः भिदाश्रयेऽपि वालवत्सादिसमूहोऽयं यद्यपि विविधभेदस्याश्रयस्तथापि तस्मिन्नित्यर्थः। त्वमेवभासीति स्वरूपानन्दादिनैक्यानुभवात् अन्यत्तैः। यद्वा, दैवी वा नाच्युतासुरीतिवह्निनक्यं परिहरति-नैत इति। एते वत्सादयो न सुरेशा न च ऋषयः ते तत्तत्क्रीडालोभेन तानन्तर्धाप्य वत्सादिरूपाः सन्तीति नेत्यर्थः। तेषामीदृशप्रेमास्पदत्वाभावात् "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादिरीत्या तादृक् कृतपुण्यपुञ्जत्वाभावाच्च आसुरीत्यस्योत्तरपक्षे तदुक्तेः स्वस्तु सङ्कोचाच्च कुतः अत एकोऽपत्थं पृथग्विविधभेदेन वर्त्तमानं सर्वमिदं वत्सादिरूपं कुतो ऽभूदिति निगमाद्वद इति स्नेहेन वाक्श्रमोनिरस्तः प्रभुणा मादृशान्तस्यैव चेश्वरेण हेतुना वृत्तं तदज्ञासीत् यतो बलः सर्वसामर्थ्याधिक्यवान् बलाधिक्याद्वलं विदुरित्युक्तेः। एवं श्रीकृष्णस्यानुग्रहेणैव तद्विज्ञानम् बोधितं अन्यत्समानम् एतावन्तं कालं तस्य तत्तत्त्वाज्ञानं तल्लीलानिर्वाहाय श्रीभगवदिच्छयैव. सा च दयालुसरलस्वभावस्य मदग्रजस्य तेषां तादृशावस्थासहनं न स्यादित्याशङ्कयैव ॥ ३९ ॥

अथ ब्रह्मापि तत्तत्त्वं श्रीभगवत्कृपयैव ज्ञातवान् इति तत्प्रसङ्ग आरभ्यते-तावदित्यादिना। तावदिति गतेऽपि वर्षे इत्यर्थः अतिशीघ्रागमनं महाभयादितिज्ञेयम् यत आत्मनो हरेरेव भवतीति तथा सः आब्दमेकाब्दपर्यन्तं सकलमिति कलाः बाला वत्साश्च न तु श्रीबलदेवः तद्विनक्रीडानिर्वाहाय रहस्यं कथयित्वा वनेतदनयनात् ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

परमानन्दस्वरूपकृष्णस्य दर्शनालिङ्गनादेः परममोदावहत्वमुच्यते, तदीक्षणेनेति ॥ ३३ ॥

प्रवयसो वृद्धास्तोकानां श्रीकृष्णस्वरूपरूपाणामेवाश्लेषेण सुतरां निर्वृताः अनन्तरं कृच्छ्रात् शनैरुपक्रम्य गता इत्यनेन श्रीभगवत्संयोगवियोगैकसुखदुःखित्वं तेषां गोपानामुक्तम् ॥ ३४ ॥

औत्कण्ठ्यमुत्कर्षम ॥ ३५ ॥

वासुदेवे परवासुदेवे श्रीमन्नारायणे श्रीकृष्णोऽखिलात्मा सर्वचिदचिन्नियन्तरि मत्सहितस्य व्रजस्य गोगोपादिकस्य तोकेष्विति उपलक्षणं वत्सबालकपरिकरपरिच्छदादिषु अपूर्वं पूर्वमननुभूतं प्रेम स्नेहो वर्द्धते इति किमेतत् ३६ ॥

त्रिविधा माययमिति वितर्कः तन्निरासायाह—मे भर्तुः मत्स्वामिनः श्रीमन्नारायणस्य स्वस्य शेषत्वात् श्रीरामस्य इदं श्रीकृष्णस्यैवेति अन्या मे मोहिनी न स्यात् इति स्वस्य पूर्वतन लक्ष्मणत्वं शेषत्वं चाऽभिप्रेति तस्य च परवासुदेवत्वं चेति भावः ॥ ३७ ॥

वैकुण्ठं श्रीमन्तं पूर्णपुरुषोत्तमं वैकुण्ठं वयुनेन ज्ञानेन "माया वयुनं ज्ञानम्" इति निघण्टुपाठात् सवत्सान् सखीन् ॥ ३८ ॥

हे ईश ! तव भिदाश्रये चिदचिद्भेदाश्रये स्वरूपेऽपि विद्यमाने वयवेऽखण्डे सर्वं बालवत्सपरिच्छदादिरूपात् पृथक्त्वं इति वदेत्युक्तेन प्रभुणा पूर्वोक्तभावेन श्रीकृष्णेन निगमात् गिरित्युक्तः बलदेवोऽवैत्। अत्रायमभिप्रायः स्वरूपभेदः कथमिति निगमात् वेदप्रमाणकात् मत्सङ्कल्पाज्जात इत्युक्तो बलोऽज्ञासीत् तथाच श्रुतिः "विज्ञानं चाविज्ञानं च सत्यञ्चानृतञ्च सत्यमभवत्" इति तत्र चात्र चेयान् भेदः तत्र चिदचितोः स्वरूपमतोः मा स्वरूपप्रवेशः अत्र तु विभुस्वरूपे स्वस्मिन् सङ्कल्पेनावतारणात् सर्वस्वरूपभवनं "अजायमानो बहुधा विजायते" इति श्रुतेः कृष्णरूपाणयस्तुच्यानीत्युक्तञ्च ॥ ३९ ॥

त्रुट्यनेहसा त्रुटिकालरूपेणात्मप्रमाणेन एव त्रसरेणुः परिमिता त्रुटिरित्यर्थः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ततश्च तेषामीक्षणेन उद्गतो यः प्रेमरसस्तस्मिन् निमग्न आशयो येषां ते लज्जामन्युकृच्छ्रैस्तावपि ताडयितुम् सन्तः ततो गतमन्यवः प्रत्युत जातोऽनुरागो येषां ते दोर्भिरुद्धृ परिरभ्य च मूर्द्धन्यवघ्राणेः परमामदृष्पूर्वां प्रापुः ॥ ३३ ॥

एवं पशुभिः गोभिः सहिताः गोपास्तोकानां नामालिङ्गनेन सुखितास्तेषां तोकानामनुस्मृत्या उद्गतः अश्रुणि येषां तथाभूताः सन्तः कृच्छ्रात्कथंचिच्छनैस्ततो विश्लिष्य वनं प्रति गता इत्यर्थः ॥ ३४ ॥

रामः व्रजस्य गोपसमूहस्य प्रेमर्द्धेः प्रेमाधिक्यस्य अतिशयं मुक्तं स्तन्यं येस्तेष्वपत्येष्वनुघृणां दृष्ट्वा तथा स्यादृष्टपूर्वस्य स्नेहस्य कारणं चिन्तितवान् ३५ ॥

चिन्तामेवाह, द्वाभ्याम् किमेतदिति। वासुदेवे यथा प्रेम तथा व्रजस्य स्वतोकेष्वप्यपूर्वं प्रेम वर्द्धत इत्येतद् इवशब्दोऽनतिरिक्तार्थकः किं ? किमत्र कारणमित्यर्थः। सात्मन आत्मसहितस्य व्रजस्य मम तेषु प्रेमकारणं विशिनष्टि— भावः वासुदेवे तु युक्तमेवत्यभिप्रायेण तं विशिनष्टि—

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनि, आत्मा हि निरतिशयप्रीतिविषयः तस्मात्तद्युक्तमिति भावः ॥ ३६ ॥

केयं माया ? दैवी देवप्रयुक्ता अथवा नारी नरप्रयुक्ता । यद्वा, आसुरी मम त्वेवं भातीत्याह—प्रायशो मद्भर्तुः श्रीकृष्णस्यैव तु माया अन्या तु सकलजनविमोहिनी न स्यादिति मायाशब्दोऽत्राश्चर्य शक्तिपरः ॥ ३७ ॥

एवं सञ्चिन्त्य दाशार्हो रामः वयुनेन दिव्यज्ञानमयेन चक्षुषा सर्वान्वत्सान्वत्सपांश्च वैकुण्ठं ददर्श कृष्णमेवापश्यदित्यर्थः ॥ ३८ ॥

एवं श्रीकृष्णरूपेण सामान्यतो ज्ञात्वा कृष्णं दृष्ट्वा तदुपदेशेन विशेषतो ज्ञातवान् इत्याह—नैतदिति नेदस्यन्तं रामस्य प्रश्नप्रकारपरम्, अयमर्थः पाल्यमाना वत्सा ऋषीणामंशा वत्सपाश्च देवानामंशा इति तावदहं वेद्मीदानीं तु न तथा किन्त्वस्मिन्भिदाश्रये वत्सवत्सपादिभेदविषयके ज्ञानेऽपि त्वमेव विषयतयाऽवभासि अतस्त्वं सर्वं पृथग्विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा श्रीकृष्णेन वक्त्रा निगमात्सङ्क्षेपतः एवोक्तं यतो रामोऽवैत् विदितवान् ॥ ३९ ॥

ततः किं ? वृत्तमित्यपेक्षायामाह—ब्रह्मापीति । वत्सान् वत्सपांश्च तिरोधापयित्वा ब्रह्मापि स्वस्थानं गतः तत्र स्वस्यासने स्थितेन चतुर्मुखरूपेण चोरिणा मोहितैर्द्वारपालैः परिभूतः परमेष्ठी स्वासनमधितिष्ठत्येव कस्त्वमागतोऽसीत्येवं परिभवं प्रापितस्ततो न्यवर्त्तत ॥ ० ॥

तावत् वर्षं जाते सतीत्यर्थः । आत्मभूर्ब्रह्मा स्वमानेन त्रुट्यनेहसा त्रुटिकालेनागत्य पूर्ववदब्दपर्यन्तं क्रीडन्तं सरामं कृष्णं ददर्श ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदीक्षणेति प्रेमानुरागयोरुल्लासातिशयतृष्णातिशयाभ्यां विशेषणाभ्यां भेदः ॥ ३३ ॥

प्रवयसो विवेकिनोऽपि ॥ ३४ ॥

व्रजस्य गोव्रजस्य अपत्येषु वत्सेषु तदुपलक्षणत्वेन गोपानां बालकेष्वपि ज्ञेयम् । एषु मुक्तस्तन्यत्वविशेषणानुपयोगात् प्रेमर्द्धिहेतोरौत्कण्ठ्यम् ॥ ३५ ॥

अखिलस्यात्मनि परमात्मनि अतो वासुदेवे सर्वाश्रय इति तत्रैव तादृशप्रेमयोग्यतोक्ता ॥ ३६ ॥

केयमिति अस्त्विति सम्भावना प्राय इति तादृशप्रेम्णा-तत्स्वरूपैकानुबन्धित्वात्तन्मायाया अप्यसम्भावना ॥ ३७ ॥

सवयसानिति समासान्त आर्षः दैवीत्यादिवत् स्वयं सम्भाव्य निरस्यति ॥ ३८ ॥

नैते इति इत्थं सतामित्यादिरीत्या तेषां तादृशकृतपुण्यपुञ्जत्वाभावात् भिदाश्रयेऽपि यद्यपि भिदाश्रयोऽयं वत्सादिसमूहस्तथापीत्यर्थः ॥ ३९ ॥

सकलं कलाभिर्वत्सादिभिः सहितम् ॥ ४०-४१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्लेशः कोपो लज्जा गौरव्यमायासश्चेति पञ्चदोषयुता अपि वस्तुनाशमपि दृष्ट्वा पश्चात् पुत्रदर्शने सर्वं विस्मृतवन्त इत्याह—तद्वीक्षणेति । तेषां पुत्राणां वीक्षणेन यत्प्रेम जातं तस्य रसेन आप्लुताशयाः व्याप्तान्तःकरणाः प्रथमतोऽपि जातानुरागाः अतो गतमन्यवो जाताः ततः अर्भकान् बालकान् उदूह्य ऊर्ध्वमुत्थाप्य दोर्भिः परिरभ्य बहुवचनं समुदायाभिप्रायं मूर्ध्नि घ्राणैराघ्राणं कृत्वा ते परमां मुदमवापुः ॥ ३३ ॥

ततो निर्गमनेऽप्यशक्ता जाता इत्याह—तत इति । प्रवयसो वृद्धा अपि गोपास्तोकानां बालकानामाश्लेषेण सुष्ठु निर्वृता जाताः कृच्छ्रादेव शनैस्ततः अपगताः तेषां बालकानामनुस्मृत्या उदस्रवोऽपि जाताः ॥ ३४ ॥

एवं दृष्ट्वा रामस्य शङ्का जातेत्याह—व्रजस्येति । रामः व्रजस्य प्रेमर्द्धिं दृष्ट्वा मुक्तस्तनेष्वपत्येष्वौत्कण्ठ्यमनुक्षणं बालसतां दृष्ट्वा अहेतुवित् सन् हेतुमज्ञात्वा अचिन्तयत् ॥ ३५ ॥

चिन्तामेवाह—किमेतदिति । एतद्व्रजौकसां गोपालानां च स्वतोकेषु भावलक्षणं किमेतत् यल्लोकयुक्तिप्रमाणैर्विरुद्धत्वेन अतएवाद्भुतं भवितुमर्हति तदपि न भवति वासुदेवे अखिलात्मनि सति किं भगवत्सान्निध्याद्देवमाद्यैर्वा मायाऽऽगताऽस्तीति सन्देहः? किञ्च, व्रजस्य सात्मन इति स्वसहितस्य सर्वस्यैव व्रजस्य तोकेषु बालकेषु अपूर्वमभूतपूर्वं प्रेम वर्द्धत इति यत् एतदद्भुतमिवेति सम्बन्धः ॥ ३६ ॥

तर्हि काचिन्माया भविष्यतीत्याशङ्क्याह—केयं वेति । इयं का वा माया कुतो वा आयाता तत्र स्वरूपे सम्बन्धिभेदेन भेदान् निर्दिशति, दैवी देवसम्बन्धिनी नारी नरसम्बन्धिनी आसुरी असुरसम्बन्धिनी वा एते पूर्वपक्षाः, प्रायेण मम भर्तुरेव माया अस्तु सिद्धान्तोऽयं भविष्यति. तत्र हेतुः यतो मे ममापि विमोहिनी अतो नान्या ॥ ३७ ॥

एवं सञ्चिन्त्य दाशार्हो बलभद्रः निदिध्यासनेन वत्सान् वयस्यसहितान् सर्वानपि स्वव्यतिरिक्तान् वैकुण्ठमपश्यत् अयं सर्वोऽपि गणः केवलं भगवानिति तत्र प्रमाणं वयुनेन चक्षुषा ज्ञानचक्षुषा ॥ ३८ ॥

एवं दृष्ट्वा सन्दिहानो भगवन्तं पृच्छति—नैते सुरेशा इति । हे भगवन्! पूर्वमस्माभिर्ज्ञायते एते वत्सपाः सुरेशाः इन्द्रादयः एते च वत्सा ऋषय इति वेदार्थद्रष्टारः स्तन्यपातारः इदानीं तु पुनः नैते सुरेशाः न वा एते ऋषयः किन्तु त्वमेव तत्तद्रूपेण भासि ननु, सत्यमेव ब्रह्मवादस्तथैवेति चेत् तत्राह—भिदाश्रयेऽपीति । अभेदाश्रये सर्वं भगवानेव नात्र सन्देहः भेदाश्रयेऽपि स एवेत्याश्चर्यम् अतोऽत्र वेदानामभावात् सर्वं पृथक्त्वं कथं तन्निगमाद्वद वेदवाक्याद्बोधय भेदपक्षे श्रुतिः कथं सर्वब्रह्मतां वदतीति तदा भगवता उक्तः अर्थात् पूर्ववृत्तान्तं बलः बलभद्रः अवैत् ॥ ३९ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं बलभद्रं ज्ञापयित्वा ब्रह्माणमपि ज्ञापितवानिति वक्तुं ब्रह्मणः समागमनमाह—तावदेत्येति । आत्मभूरयं ब्रह्मा अन्यथा साऽपराधो गतो भवेदेव तावदेव शीघ्रमेव पश्चागत्य पुरोवर्षपर्यन्तं क्रीडन्तं सकलं पालकवत्ससहितं हरिं ददर्श ननु, ब्रह्मा कथमेतावद्विलम्बं कृतवान् तत्राह—आत्ममानेन त्रुट्यनेहसेति । अनेहाः कालः आत्मनो ब्रह्मणो मानेन त्रुटिरत्राङ्गुलिस्फोटनमात्रं विवक्षितं न तु तृतीयस्कन्धगणितत्रुटिकालः अतः शीघ्रमेवागतोऽपि स्वकालवशाद्वर्षानन्तरमागतः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गतमन्यव इति अरे अनभिज्ञाः ! अत्र परमवत्सलगवां गवादृष्टिपथे कथं वत्सा आनीताः ? इति तांस्ताडयितुमनसोऽपि तेषां बालानामीक्षणोद्भूतेन प्रेमरसेन आप्लुताशयास्ततश्च जातानुरागाः प्रेम्णामेव पश्चाद्भाविकत्वामनुरागाख्यां तृष्णातिशयमर्थी प्राप्ताः गतमन्यवः विस्मृतक्रोधाः ॥ ३३ ॥

प्रवयसो वृद्धाः कृच्छ्रादेव शनैरेव गोचारणानुरोधादेव अपगता तस्मादाश्लेषाद्वियुज्य गतास्ततश्च विच्छेदोत्थया तेषामनुस्मृत्या उद्गताश्रवः ॥ ३४ ॥

प्रेमर्द्धेर्हेतोरौत्कण्ठ्यं मुक्तस्तनेष्वपि वत्सेषु नवप्रसूतवत्सतरीणामपि गवाम् अहेतुवित् हेतुमजानन् अचिन्तयदिति एतावत्कालेषु प्रतिदिनमेव गोदोहनादिसमयेषु नवप्रसूतानपि वत्सान् विहाय प्राचीनानेव वत्सान् स्तनं पाययन्तीः सर्वा एव गाः पश्यतोऽपि तस्य तस्मिन्नेव दिने यच्चिन्ता प्रादुरभूत् तस्मिन्नपि दिने यदन्येषां प्रवयसां विवेकिनामपि गोपानां तथा चिन्तनं नाभूत् तत्र कारणं योगमायैव ब्रह्ममोहनदिनमारभ्यैव गोगोपीगोपानां बलदेवसहितानां सर्वेषामेव भगवता स्वयोगमायया मोहितत्वात् प्रतिदिनविरोधदर्शनेऽपि विरोधानुसन्धानं न कस्याप्यभूत् किं तु सर्वजगत्कारणस्य कारणांशवशायिनोऽपि परमांशित्वेन स्वाग्रजत्वेन स्वप्रियसखत्वेन च वञ्चनानौचित्यादेतल्लीलाजिज्ञापयिषा श्रीबलदेवे समुचितापि पूर्वं नाभूत् वर्षपर्यन्तं तत्तच्छ्रीदामादिप्रियसखविच्छेददुःखस्य तस्मै दातुमनौचित्यात् स्वस्य तु तद्दुःखं नास्त्येव वत्सकुलान्वेषकैर्थो रूपकावेन तन्निकट एव स्थितत्वात् गतो वर्षावसान एव भगवतः सा तत्र यदाभूत् तदा मायापि शनैः शनैरंशेनांशेनैव तस्मादुपरराम न तु युगपत्सामस्त्येन भगवदैश्वर्यसिद्धौ तमपि भक्ताभिमानास्पदीकृत्य निमज्जयितुमित्यवसीयते ॥३५॥

प्रथमं मायांशोपरमे सति विरोधदर्शनोत्थं तस्य चिन्तनमाह—किमेतदिति । वासुदेव इवेति वासुदेवे यथा पुरा प्रेम तथा स्वतोकेष्वपि व्रजस्य प्रेम वर्द्धते किमेतदद्भुतं किं च स्वात्मनः स्वसहितस्य ममापि तेषु कृष्णवत् प्रेम किमित्यर्थः ॥ ३६ ॥

भवतु सर्वज्ञतयैव कारणमस्य ज्ञास्यामीति स्वयं परामृश्य द्वितीयमायांशोपरमे सति मायेयमिति निश्चित्य सा कीदृशी कुतस्त्या किं सम्बन्धिनीति पुनर्वितर्कयति केयं माया कुतो हेतोः कुतो देशाद्वा देवीति देवा ब्रह्माद्या एव किमैश्वर्यपरीक्षार्थं वत्सबालका भूत्वा अस्माकं चित्तं स्वेषु स्नेहयन्ति नैतं श्रीदामाद्याः नारीति नरा ऋष्यादय एव किं ज्ञानपरीक्षार्थमेते वत्साद्या अभूवन् आसुरीति असुराः कंसादय एव किं वञ्चनापारयन्तश्छलेनास्माकं हिंसार्थमेतेऽभूवन्निति बहुधा वितर्क्य तृतीयमायांशोपरमे सति पुनः सम्भावयति, प्राय इति । मे भर्तुः श्रीकृष्णस्यैव माया इयं महायोगमायाख्या शक्तिरसाधारणी यस्याः खलु मायानियन्तृष्वस्मासु विशुद्धघनचित्स्वरूपांशकः अस्त्विति सम्भावनायां वोढ्रं नान्येति का नाम सा माया ममापि मोहिनी यतो मदंशस्य महत्स्रष्टुः पुरुषस्यापि मायया ब्रह्मादिकं सर्वजगन्मोहितमिति भावः ॥ ३७ ॥

भवतु समाधाय ज्ञानदृष्ट्या पुनरप्येतान् निभालयामीति विचारे सति चतुर्थमायांशस्यापि श्रीकृष्णस्येच्छयैवोपरमे सति तान् यथार्थान् कृष्णस्वरूपानेतान् अपश्यदित्याह—सवयसांतेति समासान्त आर्षः वयुनेन समाहितज्ञानमयेन चक्षुषा वैकुण्ठं श्रीकृष्णमेवाऽपश्यत् ॥ ३८ ॥

ततश्च कृष्णस्यैवं वत्सबालकीभावे किं कारणं ? किं प्रयोजनं ? ते वत्सबालका वा क्व स्थापिता इति बहुतरप्रश्नैर्बिनापि यत् स्वयं ज्ञातुं नेष्टे तत्र मायां न कारणं किं तु भगवतः कृष्णस्य स्वलैश्वर्यमसाधारणमित्थं स्वरूपमेव सर्वं सर्वज्ञा अपि नारायणादयः परमेश्वराः स्वांशा अपि यत्किञ्चित्कमल्पज्ञत्वमेव बिभ्रति न तु सर्वज्ञत्वं स्वत इत्यत्र प्रमाणं कावासिविप्रबालकहर्त्ता भूमा महापुरुषोऽप्यग्रत आख्यास्यते तस्मात् श्रीबलदेवः कृष्णं दृष्ट्वैव सर्वं तत्त्वमवगतवानित्याह नैते इति । सुरेशा ब्रह्माद्या एव मायया वत्सबालकाकारा एते न भवन्ति नापि ऋषयः चकाराज्जाप्यसुराः किं तु भिदाभवे विविधभेदास्पदेपि वत्सबालादिसमूहे त्वमेवैको भासि एकस्यापि तव पृथक्त्वं वत्सपालादिरूपत्वं सर्वं कथं तद् विमात् सङ्क्षेपात् वदेत्युक्तेन पृष्टेन प्रभुणा श्रीकृष्णेन हेतुबलः सर्वं ब्रह्ममोहनादिवृत्तं ज्ञातवान् ॥ ३९ ॥

ब्रह्ममोहनप्रसङ्ग एव गोप्यादीनां मोहनादिकं विवृत्य पुनर्ब्रह्मणोऽपि विशेषतो मोहनादिकं विवरीतुमारभते—तावदेत्येति । वर्षे यातेऽपि आत्मनो मानेन त्रुट्यनेहसा त्रुटिमात्रकालं प्रति शीघ्रागमनं महाभयेनैव यत आत्मनो हरेः सकाशादेव भवतीति सः आब्दमेकाब्दपर्यन्तं सकलं वत्सबालादि हरिं कृष्णं च वस्तुतस्तु कलास्तत्स्वरूपभूता वत्सबालास्तत्सहितं ददर्श ददर्श बलदेवस्तु पूर्ववर्षवत्सालिकं जन्मर्क्षदिने शान्तिकस्नानाद्यर्थं मात्रा रक्षित इति पूर्वं ज्ञेयम् ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्दीक्षणेनोद्गतप्रेमरसे आप्लुताशयाः मग्नान्तः करणाः अत एव गतमन्यवः जातः अनुरागो येषां ते दोर्भिरुद्वह्य आरोप्य परिरभ्य मूर्द्धिघ्राणैः अवघ्राणैः परमां मुदं मुक्ताः बत्सत्प्राप्तौ यां प्राप्नुवन्ति तामवापुः ॥ ३३ ॥

यावन्तो गोकुले बालाः सवत्साः सर्व एव हि।
मायाशये शयाना मे नाद्यापि पुनरुत्थिताः ॥ ४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तोकानामाश्लेषेण निर्वृताः सुखिनाः कृच्छ्रात्ततोऽपगताः निर्वृताः तदनुस्मृत्या तोकानुस्मरणेन उद्गच्छन्त्यश्रूणि येषां ते तथाभूता बभूवुः ॥ ३४ ॥

व्रजस्य गोपादिसमूहस्य प्रेमर्द्धरौत्कण्ठ्यं मुक्तानि मातृणां पुनः प्रसूतत्वात्स्तनानि यैस्तेषु अपत्येष्वपि वीक्ष्य अहेतुवित् तत्र हेतुमजानन् अचिन्तयत् ॥ ३५ ॥

चिन्तामेव प्रपञ्चयति–किमेतदिति द्वाभ्याम्। सात्मनो मत्-सहितस्य व्रजस्य अखिलस्य विश्वस्य आत्मान मूले वासुदेवे इव तोकेष्वपि अपूर्वं प्रेम वर्द्धते किमेतदद्भुतम् अहेतुविदित्यनेन भगवदवताराणां सर्वत्र सर्वज्ञत्वं भगवद्विषये तु भगवदिच्छानुसारेणैवेति गम्यते ॥ ३६ ॥

एतदेवाह–केयमिति। केयं माया नराणां वासुराणां वोत-देवानां कुत आयाता? प्रायो मे भर्तुः श्रीकृष्णस्यैवेयं माया-सङ्कल्परूपा यतो मे ममापि विमोहिनी अतो नान्येत्यन्वयः ॥ ३७ ॥

सवयसान् ससखीन् वयुनेन ज्ञानरूपेण चक्षुषा वैकुण्ठं श्रीकृष्णमेवाचष्टापश्यत् ॥ ३८ ॥

इत्थं स्वयं तोकेषु स्नेहवृद्धिकारणं बुद्ध्वापि निःसन्दिग्धं तु श्रीकृष्णाज्ज्ञातवानित्याह–हे ईश, कृष्ण! ये सुरेशाः वत्सपाः मदभिप्रायं व्रजे आसन् ते एते न ये ऋषयो वत्साः आसन् ते चैते न किन्तु अस्मिन् भिदाश्रये किञ्चित्प्रयोजनार्थं वत्सतत्पालभेदविषयेऽपि त्वमेव भासि तत्सर्वं कथं वृत्तमिति पृथक् विविच्य त्वं वदेत्युक्तेन प्रभुणा श्रीकृष्णेन निगमात्संक्षेपादेव वर्णितं वचोऽवैत् विदितवान् ॥ ३९ ॥

अथ स्वाधिकारेण द्वितीयस्कन्धोक्तेन भगवद्दत्तेन वरेण निर्मोहस्यापि चतुराननस्य भगवल्लीलाविषये तु भगवदिच्छां विना कस्यापि निर्मोहत्वासंभवान्मोहप्रकारमाह–तावदित्यादिना। इह वर्षे समाप्तेऽपि आत्मनो मानेन तु त्रुट्यनेहसा त्रुटिमात्रेणैव कालेन आगत्य सकलं वत्सवत्सपसमूहसहितं हरिं ददर्श ॥ ४० ॥

——

भाषा टीका।

उनके देखिवे सौं बढ्यौ जो प्रेम रस ता में गोपन को अन्तःकरणः डूबगयो ताई तें क्रोध दूर होयगयो अनुराग बढ आयो तब सब ग्वारिया अपने २ बालकन कों उठाय बाहुन सों भरी तरियां आलिङ्गन करक माथो सूंघिकें परम मोद को प्राप्त होत भये ॥ ३३ ॥

तब वे सब बडी अवस्था वारे गोप अपने बालकन के आलिङ्गन सों हर्ष पायकें जैसे तैसे बडे कष्ट सों फिर गऊन के चरायबे कूं गये, परन्तु फिर भी जब अपने २ छोरान की याद आय जावै तब २ मारे प्रेम के आंसु भर२ आवते है ॥३४॥

स्तनपान करबो जिन को छूटि गयो ऐसे सयाने बालकन हूं के विषै व्रज के नर नारीन के नितनई प्रेम की बढवार को हेतु नहीं जानि के श्रीबलदेव जी विचारिबे लगे ॥ ३५ ॥

कि–अद्भुत सी ये कहा बात है? कि जैसो अखिलात्मा श्रीवासुदेव में सब व्रज वासिन को प्रेम हो वैसो अब अपने २ बालकन में क्यों अपूर्व प्रेम बढे है ॥ ३६ ॥

ये कहा है? कहां ते आई कोई देवतन की माया है कि नरन की है, कि–असुरन की है। बस प्रायकारके तौ ये माया मेरे स्वामी ही की है, और काई की नहीं है क्योंकि मोकूं भी मोहित करन वारी है ॥ ३७ ॥

श्रीबलदेवजी ऐसें विचार के सवेर बछरा और बालकन कों ज्ञान रूप चक्षु से देखे तौ सब वैकुण्ठ (श्रीकृष्ण) स्वरूप देखे ॥ ३८ ॥

तब श्रीबलदेवजी बोले, कि—हे ईश! ये बछरा और बालक वे जो प्रथम देवता और ऋषि रूप हे सो अब नहीं हैं, तासों भेद के आश्रय होयबे पै भी जब आप ही दीखपरो हो तब सब पृथक् कर के आप बताओ कि-ये कैसे बात भई? ऐसे जब बलदेवजीनें पूछी तब प्रभुने संक्षेप से सब कथा सुनाई तब श्रीबलदेवजी सब चरित कों जानत भये ॥ ३९ ॥

यहां ब्रह्मा हू बालक और बछरान कों अपनी माया में सुवाय कें अपने ब्रह्मलोक कूं गयो, परन्तु तहां पर ब्रह्माके जायबे सों पहिलेंई श्रीकृष्ण भगवान् ब्रह्मा को रूप धारण करकें चले गये और भीतर जायबे के समय द्वारपालनसों कह गये, कि—आज एक कोई हमारो सौ रूप धरकें दूसरो ब्रह्मा आयबे वारो है, सो वाकूं भीतर मत आवन दीजो, ऐसें कहकें आपनो भीतर चले गये, ता पीछे ब्रह्मा गयो और भीतर जायबे लग्यो, सोई द्वारपालननें रोकदियो कि—तुमको ब्रह्माजी महाराजने रोक दियो है भीतर नहीं जाने पाओगे, ब्रह्माजीनें बहुतेरी बातें कही सुनी परन्तु उन द्वारपालननें नहींयें जाने दिये ब्रह्मा जबरई जायबे लग्यो तब द्वारपालनकौं तौ पहिलेंई शिक्षा ही सो उनने ब्रह्मा को पराभव कियो तब तहां से ब्रह्माजी लौट आये ॥०॥

श्रीशुकदेव जी कहैं, कि इतने में ब्रह्मा अपने मानसों एक त्रुटि (क्षण) भर काल बिताय कें आय कें देखै तौ वर्ष भर तांई पहिले के नाई सब बाल वत्सन सहित ब्रह्मानें श्रीहरि को खेलतेई देखे ॥ ४० ॥

——

श्रीधरस्वामिकृतभावार्थदीपिका।

दृष्ट्वा च व्यतर्कयदित्याह–यावन्त इति द्वाभ्याम्। मे मायाशये मायातल्पे ॥ ४१ ॥

इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे ।
तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समम् ॥ ४२ ॥
एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः ।
सत्याः के कतरे नेति ज्ञातुं नेष्टे कथञ्चन ॥ ४३ ॥
एवं सम्मोहयन् विष्णुं विमोहं विश्वमोहनम् ।
स्वयैव माययाऽजोऽपि स्वयमेव विमोहितः ॥ ४४ ॥
तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि ।
महतीतरमायैश्यं निहन्त्यात्मनि युञ्जतः ॥ ४५ ॥
तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् ।
व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ॥ ४६ ॥
चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः ।
किरीटिनः कुण्डलिनो हारिणो वनमालिनः ॥ ४७ ॥
श्रीवत्साङ्गददोरत्नकम्बुकङ्कणपाणयः ।
( श्रीवत्साङ्कितवक्षस्काः कौस्तुभामुक्तकन्धराः ) ॥१॥
नूपुरैः कटकैर्भाताः कटिसूत्राङ्गुलीयकैः ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मन्मायामोहितेभ्य इतरे कुत्रत्याः ॥ ४२ ॥

इति वितर्कपक्षमुक्त्वाह—एवमिति द्वाभ्याम् । एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूरिति पाठः ॥ ४३—४४ ॥

ननु, मायाश्रयस्य तस्य कुतो मोह इत्यत आह—तम्यामिति महामायाविनि भगवत्यन्यमायाया आवरणविक्षेपकत्वाभावे दृष्टान्तद्वयं तम्यां तमिस्रायां राज्यां नैहारं हिमकणप्रभवं तम इव तद्धितार्थोपसर्जनस्यापि तमसो नैहारमिति विशेषणं छान्दसं तत्समो यथा पृथगावरणं न करोति किं तु तत्रैव लीयते यथा च खद्योतार्चिरहनि प्रथक्प्रकाशं न करोति एवं महति पुरुषे युञ्जतः पुंस इतरा नीचा माया तत्र न किञ्चित्करोति किन्त्वात्मनि स्वस्मिन्नेव ऐश्यं सामर्थ्यं निहन्तीति ॥ ४५ ॥

अन्यदप्याश्चर्यमाह—तावदिति । वत्सपालाः वत्साः पालाश्च सर्वे यष्टिविषाणाद्यश्च ॥ ४६—४७ ॥

श्रीवत्सप्रभायुक्तान्यङ्गदानि दोष्षु येषां रत्नमयानि कम्बुवच्छ्रिरांसि कङ्कणानि पाणिषु येषां ते च ते च ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोकुले यावन्तो बाला वत्सपालरूपा आसन् तावन्तः सर्वं एव वत्ससहिताः सन्तो मायेत्यादियोज्यम् ॥ ४१ ॥

इतो हेतोः यद्वा एते मायाशय्ये शयाना इतो वर्त्तन्ते मन्मायामोहितेतरे चात्र कुत्रत्या इति योज्यं विष्णुनेत्यब्दं व्याप्य तथैव क्रीडनाभिप्रायेण ॥ ४२ ॥

एवमुक्तप्रकारेण भेदेषु मोहितानुसन्धानं अमोहितानुसन्धानं तयोर्विपर्ययस्तेषु एतेषु मध्ये के सत्याः अनारोपितपूर्ववत्सत्वभावाः कतरे च न सत्याः किं नाम मन्मोहितान् भगवता तत्परिवर्त्तनान्ये तादृशा मायया निर्मायात्राप्यमी स्थापिताः किं वा भगवता सह क्रीडन्त एते मायानिर्मिताः किं वा भ्रान्त्यैव ते दृश्यन्त एते वेति चिरं ध्यात्वाऽपि निजविचारादिप्रयासेन निश्चेतुं नेष्टे न शक्त इत्यर्थः । स मायाविस्तारकोऽपि आत्मभूः स्वतः सिद्धज्ञानोऽपि भगवन्माययैव ज्ञातुं नेष्टे इत्यर्थः ॥ ४३ ॥

सम्मोहयन् स्वमायया वत्साद्याच्छादनात् सम्मोहयितुमिच्छन्नित्यर्थः । एवं तदभिप्रायानुसारेणैव संशब्दः विष्णुमिति व्यापकत्वान्मायया तस्य दृष्ट्याच्छादनं न घटेतेति भावः । अतो विमोहं मोहयितुमशक्यमपीत्यर्थः । किं च विश्वमोहनमपि स्वयम्भूरिति पूर्ववत् एवशब्दाभ्यां न तु भगवन्मायया भगवान्वेति बोध्यते ॥ ४४ ॥

तच्चोचितमेवेत्याह—तम्यामिति । यदत्र टीकायामावरणविक्षेपक्रमः सम्मतः तदनुसृत्य व्याख्यायते तम्यां नैहारं तमः

---

(१) वीर० दा० अधिकोऽयं पाठः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमी नावृणोति किञ्च तत्स्वयमेव लीनं सत् तमी तमः सात्कृत्य नीहारमेवावृणोति यथा चाहन्यहः स्थितस्य पूर्णस्य चन्द्रस्यार्चिरपि सूर्यार्चिः स्वतया प्रत्याययति तथा खद्योतार्चिः कर्तृसूर्यार्चिरपि स्वतया प्रत्याययितुं न शक्नोति किं तु खद्योतमेव प्रतिहतप्रभावत्वेन ज्ञापयति । तद्वत् महति मायां प्रयुञ्जानस्येतरस्य मायामहच्छक्तिमावरीतुं भाषान्तरं च विक्षेप्तुमसमर्था सती स्वाश्रयतयात्मत्वेन व्यपदिश्य तस्मिन् इतरत्र यदैश्यन्तदेव निहन्तीत्यर्थः । अव्ययमपि वच्छब्दोऽस्ति "यद्वा यथा तथैवैवं साम्य" इत्यमरः ॥ ४५ ॥

एवं मोहेन दीनतां गते ब्रह्मणि श्रीभगवानप्यचिरात् द्रष्टुं मञ्जुमहित्वमन्यदपि यद्दाति तदभिप्रायानुसारेणैव कृपां व्यतनोदित्याह–तावदित्यादिनवकेन । अङ्गास्तु पृथक् पृथक् क्रियन्ते पश्यन्तमजमनादृत्य तद्दृष्टिशक्तिमनपेक्ष्य अदृश्यन्त स्वयमेव तद्दृष्टौ व्यक्तीभूताः स्वशक्तिमात्रेणाभिव्यक्तेः कर्मकर्तृत्वम् ॥ ४६ ॥

चतुर्भुजा इति अत्र चतुर्भुजत्वादिना विष्णुत्वमवगम्यते मायाद्यधिष्ठातृत्वेन तु प्रथमद्वितीयपुरुषत्वमवगंस्यते तस्मात्

"सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् " ॥

इति ब्रह्मवाक्यात् ब्रह्माणं प्रति च तत्तत्कार्याय सर्वशक्तिव्यञ्जकतया प्रायो विष्णोरेवाविर्भावश्रवणात् त्रयाणामभेदज्ञापनार्थमेव व्यामिश्रत्वेनाविर्भावोऽयं ज्ञेयः ॥ ४७ ॥

श्रीवत्सो नाम दक्षिणस्तनोर्द्ध्वं सूक्ष्मरोम्णां दक्षिणावर्त्तः श्रीभगवतोऽसाधारणलक्षणम् । यद्वा, श्रीयुक्तं वत्सं वक्षः तत्प्रायुक्तमित्यादि । यद्वा श्रीयुक्तं वत्सं वक्षो येषाम् इत्यादि योज्यम् "उरो वत्सं च वक्षश्च" इत्यमरः कटकैः पादवलयैः पारिशेष्यात् अन्यत्तैः तत्र कम्बोर्मुखाग्रभागे त्रिधारत्वात्तथोक्तम् । यद्वा कम्बवो वलयाः कङ्कणानि मणिबन्धबन्धनानि हस्तसूत्राणि "कम्बुःस्याद्वलये शङ्खे" इत्यमरस्य नानार्थात् "कङ्कणं करभूषणम्" इति नृवर्गात् तत्र तत्र क्षीरस्वामिना तथा तथा व्याख्यानात् ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

माया चित्रकार्यकरमच्छक्तिरूपतया शयनं मायाशय इत्यर्थः । यया तेषां त्रुटिकालज्ञानमेव जात इत्याशयः ॥ ४१ ॥ ४२ ॥

तेषु वत्सबालभेदेषु सत्याः के कतरे न सत्याः इति ज्ञातुं नेष्टे न समर्थः ॥ ४३ ॥

स्वमायया स्वमोहः कथमित्यत्र विष्णुं सम्मोहयन्निति हेतुर्वेपः ॥ ४४ ॥

वत् इवार्थे नैहारं तम इव ऐश्यं सामर्थ्यं इतरमाया अनीशस्य माया महत्यात्मनि उत्कृष्टपुरुषे ॥ ४५ ॥

पश्यत इत्यनादरे षष्ठी ॥ ४६ ॥ ४७ ॥

श्रीयुक्तानि वत्सानि वक्षांसि येषां अङ्गदयुक्ता दोषो येषां रत्नशब्देन कौस्तुभयुक्ता कम्बुत्रिरेखा ग्रीवा येषां कङ्कणयुक्ता पाणयश्च येषां ते च ते च कटकैः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दृष्ट्वा च व्यतर्कयदित्याह–द्वाभ्याम् यावन्त इति । गोकुले यावन्तो वत्सा वत्सपाश्च ते सर्वे मम मायाशये मायातल्पे शयानाः सन्तोऽद्यापि नोत्थिता एव ॥ ४१ ॥

एते तु मन्मायामोहितेभ्य इतरेऽत्र दृश्यमानाः कुतस्त्याः तावन्तः मयापहृता यावन्तस्तावन्तस्तदा एव यावदद्याब्दमतीतात् तदारभ्याद्यप्रविष्टाब्दपर्यन्तं कृष्णेन समं सह क्रीडन्तो दृश्यन्ते ॥४२॥

इत्येवं वितर्कयन्मुमोहेत्याह—द्वाभ्यां एवमिति । एवमेतेषु वत्सवत्सपादिरूपभेदेषूभयेषु चिरं ध्यात्वा किं त एवैते उत भिन्नास्तथा चेत्कुतस्त्याः कुतः समागताः इत्येवं ध्यात्वाप्यात्मभूर्ब्रह्मा सदाभयाः मच्छब्दवाच्यपरब्रह्मभूतकृष्णात्मका इति ज्ञातुं कथञ्चन नेशे न प्रबभूव मायाश्रया एत इति पाठे भगवतः आश्चर्यशक्त्याविर्भाविता इति ज्ञातुं न प्रबभूवेत्यर्थः ॥ ४३ ॥

किं त्वेवं विष्णुं विमोहयन् विमोहयितुमुद्युक्तश्चतुर्मुखः स्वमायया स्वयमेव विमोहितः न तु कृष्णः तत्र हेतुं वदन्निदर्शितादि–विमोहं विगतमोहं विश्वं मोहयतीति तथा तं स्वयैव माययेत्यनेन स्वशरीरकपरमात्ममाययेति निवर्त्तितम् ॥ ४४ ॥

विश्वमोहने भगवति मायान्तरस्याकिञ्चित्करत्वे दृष्टान्तद्वयमाह–तस्यामिति । तस्यां तमिस्रायां रात्रौ नैहारं नीहारकणप्रभवं तम इव तद्यथा न पृथगाकारकं किं तु तत्रैव लीयते यथा च खद्योतार्चिरहनि न पृथक् प्रकाशं करोति एवं महति पुरुषे युञ्जतः मायां कर्तुमुपयुञ्जानस्य पुंसः इतरा नीचा माया तत्र न किञ्चित्करोति किं स्वात्मनि स्वस्मिन्नेव ऐश्यमैश्वर्यं सामर्थ्यं निहन्ति ॥ ४५ ॥

अन्यदत्याश्चर्यमाह—तावदिति । अजस्य ब्रह्मणः पश्यतः सतः तावत्सर्वे वत्सा वत्सपाश्च तत्क्षणा एव व्यदृश्यन्त कथम्भूता नीलघन इव श्यामाः ॥ ४६ ॥

चत्वारो भुजा येषां शङ्खादयः पाणिषु येषां राजीवं किरीटान्येषां सन्तीति तथा ॥ ४७ ॥

श्रीवत्सप्रभायुक्तान्यङ्गदानि दोष्षु भुजेषु येषां रत्नमयानि कम्बुवच्छङ्खवद्वर्तुलानि कङ्कणानि पाणिषु येषां ते च ते तथोक्ताश्च श्रीवत्सैरङ्कितानि वक्षांसि येषां कौस्तुभैरामुक्ताः संयुक्ताः कन्धरा ग्रीवा येषां ते बहुजन्मार्जितपुण्यवद्भिरपि तैर्नूपुराद्याभरणादमस्तकं सर्वगात्रेष्वापूर्णाः ॥४८॥ ४९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इतो हेतोः न केवलमत्रैव स्थाने किं तर्हि अन्द्रे स्थाने तत्र गोकुलेऽपि क्रीडन्तः ॥ ४२—४३ ॥

मोहितानुसन्धानं अमोहितानुसन्धाने तयोर्विपर्यय एवं प्रकारेष्वेतेषु भेदेषु अनारोपितपूर्ववत्सबालभावाः मायाहृतानां वा कथं गहनाय भगवन्मायाकल्पितत्वमिति भावयित्वा इति भावः ॥ ४४ ॥

इतरस्य क्षुद्रस्य माया स्वप्रभावदर्शना तां युञ्जतः पुंसः आत्मनि ऐश्यं हन्ति ॥ ४५—४७ ॥

कटकैः पादवलयैः ॥ ४८—४९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

आगतस्य दृष्टवतो विचारमाह—यावन्त इति द्वाभ्याम् । गोकुले यावन्तो बाला वत्साश्च ते सर्वे इतो मया नीता मायामये लोके मया स्थापिताः शयाना एव तिष्ठन्ति अद्यापि पुनर्नोत्थिताः एते चात्र पुनर्दृश्यन्ते इत एव एते उत्पन्ना उद्भूता वा भवितुमर्हन्ति न तु तत आगन्तुम् अन्यथा अत्र कुत्रत्याः वैलक्षण्यं च दृश्यत इत्याह—मन्मायामोहितेभ्यः इतरे एते आश्चर्यं च तावन्त एव तत्रैव स्थाने तद्रूपा एव विष्णुना समं आब्दं क्रीडन्तः एते कुत्रत्या इति सम्बन्धः ॥ ४१ ॥ ४२ ॥

अत्र ब्रह्मणा उभयथा बुद्धिः किं भगवन्मायया तदानीमेव निर्मिता बाला मया नीता आहोस्वित् सत्या एवेति एते वा सत्या निर्मिता वेति युक्तिभिरनुचिन्तने क्रियमाणे निर्धारो न जात इत्याह—एवमिति । एतेषु बालेषूभयविधेषु चिरं ध्यात्वापि आत्मभूरपि के सत्याः कतरे नेति ज्ञातुं नेष्टे न समर्थो जातः कथञ्चन युक्त्यापि तर्हि किं जातमित्याकाङ्क्षायामाह—एवमिति । विष्णुं विमोहयन् विष्णुविमोहनार्थं प्रवृत्तः स्वयमेव विमोहितो जातः । तत्र हेतुः विमोहं विश्वमोहनमिति । भगवान् स्वयं मोहरहितोऽन्यांश्च विमोहयति अतो भगवता अमोहितोऽपि स्वयैव मायया अजोऽपि सन् स्वयमेव विमोहितः ॥ ४३ ॥ ४४ ॥

तदुक्तमेवेत्याह—तम्यामिति । तमिस्रा रात्रिस्तमी तस्यां नैहारतमोवत् लोकव्यामोहार्थं नीहारादप्यन्धकारो जायते स चेद्रात्रौ भवेत् सोऽपि न दृश्येत लोकानामदर्शनं त्वन्यथैव सिद्धम् अतो महामायायुक्ते भगवति अन्या माया स्वपदमेव न प्राप्नोति किम्पुनः कार्यं प्राप्स्यति एवं मोहकसाधर्म्येण ब्रह्ममायाया अप्रयोजकत्वमुक्त्वा भगवदग्रे ब्रह्मणोऽप्यप्रयोजकत्वमाह, खद्योतार्चिरिवाहनीति । अहनि खद्योतार्चिः स्वयमपि न प्रकाशते कुतो घटादीन् प्रकाशयिष्यति दूरे सूर्यप्रकाशनाशा अत एव महति इतरस्य मायां वा ऐश्वर्यमीश्वरत्वं वा युञ्जतः पुरुषस्य महतो माया ऐश्वर्यं प्रयुञ्जतो मायामैश्वर्यं च निहन्तीत्यर्थः ॥ ४५ ॥

एवं चिन्ताकुलिते ब्रह्मणि भगवान् स्वरूपं प्रदर्शितवानित्याह—तावदिति । यावदयं विचारयति तावत्पश्यत एवाजस्य सतः तत्क्षणादेव सर्वे वत्साः वत्सपालाश्च घनश्यामा व्यदृश्यन्त नीलमेघश्यामा भाताः ब्रह्मणा वा दृष्टाः सर्वे च पीतपट्टाम्बरधारिणः ॥ ४६ ॥

चतुर्भुजाः यस्य यस्य धर्मस्य प्राकट्यार्थं यादृशो वैकुण्ठमूर्तिः तादृशा एत इति भुजादयो निरूप्यन्ते चत्वारो भुजाः प्रत्येकं येषां शङ्खचक्रगदाराजीवानि प्रत्येकं पाणिषु येषां राजीवं कमलं सर्वे किरीटिनः किरीटाभरणयुक्ताः कुण्डलाभरणयुक्ताः मुक्ताहारयुक्ता वनमालायुक्ताश्च ॥ ४७ ॥

सारूप्यं गतानामप्येतद्व्यतीत्यसाधारणान् श्रीवत्सादिधर्मानाह—श्रीवत्सो दक्षिणवक्षे रोमरेखा अङ्गदं बाहुवलयं दोरत्नानि दोष्णां बाहूनां रत्नानि बाहव एव वा रत्नानि कम्बुसदृशानि कङ्कणानि एतत्सहिताः प्रत्येकं पादयो येषां नूपुरैः चरणाभरणैः कटकैः हस्ताभरणैश्च भाताः कटिसूत्रेणाङ्गुलीयकैश्च भाताः ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दृष्ट्वा चैवं व्यतर्कयदित्याह—द्वाभ्याम् । मायाशये मन्मायातल्पे ॥ ४१ ॥

मन्मायामोहितास्त एव कृष्णेनात्रानीता वेति विभाव्य मायिकानां नातिनिकटे गत्वा तर्जन्या साभिनयमाह—इतः प्रदेशादत्र किञ्चिद्दूरे एते वत्सबाला वर्त्तन्त एव तत्र विष्णुना समं क्रीडन्तः कुत्रत्यास्ते कीदृशा मन्मायामोहितेभ्य एभ्य इतरे ॥ ४२ ॥

एतेषु भेदेष्विति किमेत इह प्रकृतास्तत्राह—कृष्णसृष्टाः किं वा एत एव कृष्णसृष्टास्तत्र ते प्रकृताः किम्वा उभये एव कृष्णसृष्टाः प्रकृतास्तु कृष्णेनैव क्वापि ब्रह्माण्डान्तरे चालिताः किं वा कृष्णेन वत्सबालानां प्रकाशद्वयीकरणात् उभये एव किं वा मयि तत्र गत्वा पश्यति सति एत एव कृष्णेन तत्र नीयन्ते पुनरत्रागच्छति मयि त एवात्र नीयन्ते भवतु तर्हि युगपदेवोभयत्र दृष्टीर्निक्षिपामीति तथा कृत्वापि तानुभयत्र दृष्ट्वा चिरं ध्यात्वेति भवतु स्वीयसर्वज्ञतयैवाहमवैष्यं ज्ञास्यामीति बहुसमाधिनापि ज्ञातुं नैवाशकदित्याह—सत्या इति । एतेषु भेदेषु मध्ये सत्या भगवत्स्वरूपभूता न सत्या बहिरङ्गमायासृष्टा इतीमं भेदं तु कथञ्चन ज्ञातुं संशयज्ञानविपर्यीकर्तुमपि नेष्टे न शशाक ॥ ४३ ॥

ततश्च ब्रह्मा मोहसमुद्रावर्त्ते निपपातेत्याह—एवमिति । संमोहयन् वत्सबालस्तेयेन मोहयितुमुपक्रममाणः अजो ब्रह्मापि स्वयैव मायया स्वयमेव विष्णौ प्रयुक्तया हेतुना विमोहितः भगवन्मायया विशेषेणैव मोहितः मोहितस्यापि ब्रह्मण एवं विह्वलीकरणरूपे विमोहने भगवति मायाप्रयोगापराधोऽपराध एव कारणमित्यर्थः । न तु स्वमाययैव ब्रह्मा विमोहित इति स्वाश्रयव्यामोहकत्वासम्भवात् उत्तरश्लोके दृष्टान्तविरोधाच्च ॥ ४४ ॥

महामायाविनि भगवत्यन्यमाया आवरणविक्षेपौ कर्तुमशक्नुवती स्वाश्रयमेव तिरस्करोतीति दृष्टान्ताभ्यामाह—तम्यामिति । तम्यां रात्रौ नैहारं तमोवत् नीहारसम्बन्धि तम इव इवार्थे वच्छब्दः "इव वद्वा च सादृश्ये" इत्यभिधानात् नैहारं तमो यथा तमीमावरीतुमसमर्थं तमी तमः सान्द्रीकृत्य तेन स्वमेवावृणोति नीहारं च तिरस्करोति तथैव ब्रह्ममाया भगवन्तं मोहयितुमसमर्था भगवदैश्वर्यमेव विपुलीकृत्य स्वाश्रयवतीं ब्रह्माणमेव तिरश्चकारेति दृष्टान्तेऽस्मिन्नंशेन ब्रह्ममायाया निःस्वहेतुत्वमस्तीत्यपरितुष्यन् दृष्टान्तान्तरमाह—खद्योतेति । रात्रौ यथा खद्योतेन प्रद्योतते तथा दिवसेऽपि मत्प्रभा प्रद्योततामिति खद्योतेन स्वकीयापि प्रभा दिवसे उद्भावितुमेव न शक्नोति प्रत्युत तमेव सूर्यस्तैजसं सर्वान् ज्ञापयति तथैवात्रैश्वर्यवानपि ब्रह्मा भगवन्मायया निजैश्वर्यं प्रकटयितुकामो भ्रष्टतेजा एवाभूदित्यर्थः

**आङ्घ्रिमस्तकमापूर्णास्तुलसीनवदामभिः ।**
**कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥ ४९ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महति पुरुषे इतरमायाकर्त्री आत्मनि आत्मानं युञ्जतः स्वं प्रयुञ्जानस्य पुंसः ऐश्वर्यमैश्वर्य्यं निहन्ति ॥ ४५ ॥

तावदिति यावदेवं ब्रह्मा मीमांसमानो व्यामुह्यति स्मेत्यर्थः । वत्साः पालाश्चः पश्यतोऽजस्य पश्यन्तमप्यजमनादृत्येति भोः सत्यलोक वासिन् ! अज ! सत्यं त्वमज एवासि ईश्वरैव बुद्ध्या विश्वं सृजसि अस्मान् मायया मोहयितुमिच्छसि कथञ्चिज्ज्ञातुमपि तावन्न शक्नोषि पश्येति व्यदृश्यन्त वयम् वृन्दावनीयास्तृणं चरन्तो वत्सा अपि वत्सांश्चारयन्तो गोपबाला अपि एवं भवामेति ज्ञापयन्त इव तद्दृष्टिगोचराः स्वयमेवाऽभूवन् स्वप्रकाशत्वादिति भावः ॥ ४६—४७ ॥

श्रीलक्ष्मीरेषा तद्युक्तानि वत्सानि वक्षांसि येषां ते च अङ्गदयुक्ता दोषो बाहवो येषां ते च रत्नं कौस्तुभस्तद्युक्ताः कम्बवः अतिशयोक्त्या त्रिरेखाङ्किताः कण्ठाः येषां ते च कङ्कणयुक्ताः पाणयो येषां ते च ते कटकैः पादवलयैः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वत्सवत्सपसहितं हरिं दृष्ट्वा शङ्कां कृतवानित्याह—यावन्त इति द्वाभ्याम् । मे मायाशये मदीययोगवैभवनिर्मितशयनस्थाने इत्यर्थः ॥ ४१ ॥

इतो वृन्दावनात् तत्र तस्मिन्मायाशयेऽब्दं सम्वत्सरं यावन्तः स्थापिता इति शेषः । तावन्त एव अत्र वृन्दावने मन्मायामोहितेभ्य इतरे अब्दं वर्षपर्यन्तं विष्णुना समं सह क्रीडन्तः एते कुतस्त्या इत्यन्वयः ॥ ४२ ॥

एवं शङ्कितो मुह्यादित्याह—एवमिति द्वाभ्याम् । एतेषु मायाशये शयानेषु वृन्दावने क्रीडमानेषु च भेदेषु परस्परं भिन्नेषु के सत्याः लौकिकाः कतरे नेति चिरं ध्यात्वापि कथञ्चनापि ज्ञातुं नेष्ट इत्यन्वयः ॥ ४३ ॥

स्वमायया स्वकीयया श्रीकृष्णं मोहयितुं प्रवर्तितया वञ्चनात्मिकया चेष्टया ॥ ४४ ॥

भगवन्तं मोहयन् स्वयं मोहितोऽभूदत्र किं चित्रं महात्मानं जनमपि मोहयन्मोहितो जनो भवतीत्याह—तम्यामिति । तम्यां नमिस्रायां राज्यां नैहारं हिमकणमवं तमो वत्तम इव यथा नमस्यामकिञ्चित्करं भवति प्रत्युत तत्रैव विलीयते तमोवाचित्वार्थे पदम् "पदार्थः पदार्थेनाऽन्वेति नतु पदार्थैकदेशे न" इति वचनात् नैहारपदार्थस्य पदार्थैकदेशेन तद्धितार्थोपसर्जनेन तमसाऽन्वयासम्भवात् खद्योतार्चिः अहनीव अहनि खद्योतार्चिर्यथ अकिञ्चित्करं भवति प्रत्युत तत्रैव विलीयते, तथा महति आत्मनि महात्मनि इतरा तदितरकृता माया अकिञ्चित्करी भवति प्रत्युत युञ्जतः एवैश्वर्यं यहुधर्तां हन्ति तमेव विमोहयतीत्यर्थः ॥ ४५ ॥

अन्यदप्याश्चर्यमाह—तावदिति नवभिः । तावदेव अजस्य चतुराननस्य पश्यतः वत्साः पालाश्च सर्वे यष्टिविषाणादयश्च घनश्यामाः व्यदृश्यन्त ॥ ४६–४७ ॥

श्रीवत्सकान्तियुक्तान्यङ्गदानि दोःषु येषां रत्नमयानि कम्बुवत्त्रिधाराणि कङ्कणानि पाणिषु येषां ते च तथा ॥ ४८ ॥

---

भाषा टीका ।

तब ब्रह्मा विचारबे लग्यो, कि—जितने या ब्रजमें बालक हैं वेतो बछरान समेत सगरे मेरी माया की शय्या पैं सोय रहे हैं, और अबताईं भी फिर नहीं उठे हैं ॥ ४१ ॥

तो फिर या जगे ये कहां के हैं जो मेरी मायामें मोहित नहीं भये, और उतनेई विष्णु (श्रीकृष्ण) के साथ साल भर ताईं खेलते रहे ॥ ४२ ॥

या तरियां इन भेदनमें परके ब्रह्माने अपनें मनमें भौत विचार कियो सांचे कौन हैं ? और कौन नहीं हैं ऐसें जानवेकूं ब्रह्मा कोई तरियां समर्थ न भयो ॥ ४३ ॥

आप विना मोहकेऔर विश्वकों मोह करायवे वारे ऐसे विष्णु को मोह करावत ही करावत ब्रह्मा अपनी माया सों आप ही आप मोहि गयो ॥ ४४ ॥

जैसे भादों सरीकी अंधेरी रात में कुहर, और दिन में खद्योतकी जोत, अपने अंधेरेपनेकूं और चमककूं गमाय बैठे हैं । याई प्रकार महान् आत्मा अर्थात् बड़ेनके विषें छोटो अपनी माया कूं चलावे तो आपकेई ऐश्वर्य कों नाश करे है ॥ ४५ ॥

इतनेईमें ब्रह्माजी के देखतेई देखते वाई क्षण में ब्रह्माकों सबरे बछरा और बालक मेघसरीके श्याम और पीताम्बरधारी देख परन लगे ॥ ४६ ॥

और सब बछरा बालक कैसे देख परे, कि—चार भुजा वारे हाथन में शंख चक्र गदा पद्म लिये हैं । किरीट कुंडल हार और वनमाला कों धारण किये हैं ॥ ४७ ॥

वक्षस्थल में श्रीवत्स को चिन्ह, भुजन में बाजूबन्द, शंख कीसी तीन रेखाके बनावट वारे हाथन में अमेठमा कंकण, पामन में नूपर और कड़ा, कमर में कोंधनी, अंगुरिन में मुद्रिका जिनके शोभा देरहे हैं ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथा भूरि बहुजन्मार्जितं पुण्यं तद्युक्तैर्जनैरर्पितैः ॥ ४९ ॥

---

चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः ।
स्वकार्थानामिव रजःसत्त्वाभ्यां स्रष्टृपालकाः ॥ ५० ॥
आत्मादिस्तम्बपर्यन्तैर्मूर्त्तिमद्भिश्चराचरैः ।
नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ॥ ५१ ॥
अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः ।
चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः ॥ ५२ ॥
कालस्वभावसंस्कारकामकर्मगुणादिभिः ।
स्वमहिध्वस्तमहिभिर्मूर्त्तिमद्भिरुपासिताः ॥ ५३ ॥
सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः ।
अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥ ५४ ॥
एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् ।
यस्य भासा सर्वमिदं विभाति सचराचरम् ॥ ५५ ॥
ततोऽतिकुतुकोद्वृत्यस्तिमितैकादशेन्द्रियः ।
तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्रिका ॥ ५६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चन्द्रिकाविशदस्मितयुक्तैः सहारुणगुणेन च वर्त्तमानाः येऽपाङ्गास्तैर्वीक्षितैः स्वकार्थानां स्वभक्तमनोरथानां रजःसत्त्वाभ्यां स्रष्टृपालका इव व्यदृश्यन्त सत्त्ववद्विशदस्मितेन पालका इव रजोवदरुणगुणेन च स्रष्टार इव तादृक्कटाक्षैर्द्योतमाना इत्यर्थः ॥ ५० ॥

आत्मा ब्रह्मा तदादिस्तम्बपर्यन्तैः अनेकार्हैरनेकार्हणैः ॥ ५१ ॥

अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिः शक्तिभिः महदादिभिरिति महत्सूत्रयोः पृथक्त्वविवक्षया चतुर्विंशतितत्त्वैर्जगत्कारणैः ॥ ५२ ॥

कालादिभिश्च तत्सहकारिभिः तत्र कालः क्षोभकः स्वभावः परिणामहेतुः संस्कारो वासनाया उद्बोधकः स्वमहिध्वस्तमहिभिर्भगवन्महिम्ना तिरस्कृतस्वातन्त्र्यैरुक्तैः सर्वैरागमाद्यैः ॥ ५३ ॥

सर्वेषां मूर्त्तिमत्त्वेऽपि विशेषमाह—सत्यज्ञानेति । सत्याश्च ज्ञानरूपाश्चानन्ताश्चानन्दरूपाश्च तत्रापि तदेकमात्रा विजातीयसम्भेदरहितास्तत्रापि चैकरसाः सदैकरूपाः मूर्त्तयो येषां ते यद्वा, सत्यज्ञानादिमात्रैकरसं यद्ब्रह्म तदेव मूर्त्तयो येषामिति । अत एवोपनिषदात्मज्ञानं सैव दृक् चक्षुर्येषां तेषामपि हि निःश्रेयसमस्पृष्टभूरिमाहात्म्या न स्पृष्टं स्पर्शयोग्यं भूरि माहात्म्यं येषां ते तथाभूताः सन्तो व्यदृश्यन्तेति ॥ ५४ ॥

एवं सकृदेकदैव ददर्श परब्रह्मणो विशेषणं यस्येति ॥ ५५ ॥

अतिकुतुकेनाश्चर्येणोद्वृत्य दृष्टीः परावृत्य हंसपृष्ठे निपत्येति वा कुतुकशब्दे तृतीयायाश्छान्दसो लुक् । यद्वा, उद्वृत्यः इति च्छेदः अतिकुतुकेन उद्वृत्यो विलोड्यो विपर्यस्तः स्वस्मिन्नि... यावत् पाठान्तरे स्वातिकुतुकेनोद्वृत्तः क्षुभितः तेषां धाम्ना तेजसा स्तब्धसर्वेन्द्रियो ब्रह्मा तूष्णीं निश्चलोऽभूत् अत्र दृष्टा... पूर्देवी व्रजाधिष्ठात्री काचिद्देवता तस्या अन्ति समीपे पुत्रि... चतुर्मुखी कृतकप्रतिमेव ॥ ५६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूरिपुण्यवाद्भिः साधकैस्तत्तत्प्रतिमादिषु मनसा कर्मणा च... तैरिति प्रीत्या तेषां धारणं बहुकरणं च सूचितम् ॥ ४९ ॥

स्मेरैः अन्तःस्मितबाहुल्येन स्वयमेव चन्द्रिकानिभविशदी... भूतैश्च तैरित्यर्थः । टीकायां तु स्मित एव विशदता विशेष... तात्पर्यवशादुक्तमिति ज्ञेयम् । यद्वा, चन्द्रिकावद्विशदं यथा स्यात्त... स्मेरैः स्मयमानैः मृदुपाचक इति वत् क्रियाविशेषणेन समा... स्वकार्थानां स्रष्टृपालका इति तादृक्कटाक्षैरेव तदेकसाध्य... स्वकशब्दोक्तानामेकान्तिभक्तानां मादृशाभीष्टसिद्धेः तत्रास्य... कटाक्षैः स्रष्टार इति तत्रस्थस्यारुणगुणस्य स्वकाचित्तमा... स्थापनेनैव तद्विषयकाचिच्चमत्कारानुत्पादनात् स्मितयुक्त... पालका इति निजायोग्यस्वादिविचारेण क्षीयमाणानामपि तेषां तेनैव रक्षणात् पोषणाच्च इत्येषुत्प्रेक्षायाम् अरुणविशदगु... स्थानीयाभ्यां रजःसत्त्वाभ्यामिवेति ॥ ५० ॥

चराचरैः तत्तल्लक्षणयुक्तैः तत्तदधिष्ठातृभिः नृत्यगीताद्यानेक... कार्हाः अनेकार्हणोपकरणानि तैः पृथक् पृथगिति ...

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधिकारानुसारेणोपासनासामग्रीभेदात् इत्थं वात्सकादीनां तेषां प्रत्येकमेकैकब्रह्माण्डेश्वरत्वमुक्तं तथाचाग्रे श्रीब्रह्मस्तुतौ "तावन्त्येव जगन्त्यभूः" इति ॥ ५१ ॥

महिमभिरैश्वर्यरूपैः नजायत इत्यजा नित्यसिद्धा भगवती लक्ष्मी योगमायाख्या शक्तिर्वा आद्यशब्देन मायाविद्याविद्यादयः ॥ ५२ ॥

गुणाः सत्त्वादयः आदिशब्देन जातिनामादयः स्वमहिम्ना स्वतो ऽन्येषां महिमायैस्तैरणिमाद्यादिभिः अणिमादीनां तत्रा-समोद्भूतत्वात् अन्याणिमादिकरणत्वाच्च तत्त्वादीनां च जगत्कारणत्वात् ॥ ५३ ॥

एवं मूर्त्तत्वेऽपि विविधत्वेऽपि परब्रह्मैकरूपत्वेन वैशिष्ट्यमेकत्वमप्याह–सत्येति । तत्र सत्या एकरसाश्च कालस्यापि कारणत्वेनाश्रयत्वेन चाऽकल्पत्वात् तदुक्तं कालस्वभावेत्यादि "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इति श्रुतेः । विशेषेण त्रिविधं वा द्योतते दीप्तिं करोतीति विद्युत् निमेषास्तन्निमेषोन्मेषप्रभवाः कालावयवा इत्यर्थः । "यो यं कालस्तस्य तेऽव्यक्तबन्धो ! चेष्टामाहुः" इत्याद्युक्तत्वात् ज्ञानरूपाः स्वप्रकाशत्वेनाजडत्वात् तदुक्तं "पश्यतोऽस्य तत्त्वाण्यपश्यन्त" इति न चक्षुषा पश्यति रूपमस्य" यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्, आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतेः । नित्याव्यक्तोऽपि भगवानीक्षते निजशक्तित इति नारायणाध्यात्म्याच्च अनन्ताः परिच्छिन्नप्रायत्वेऽप्यचिन्त्यशक्त्या विभुत्वात् "यस्त्वेतमेवमादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति श्रुतेः । "न चान्तर्न बहिर्यस्य" इत्युक्तत्वाच्च आनन्दमात्राः निरुपधिपरमप्रेमास्पदसर्वांशत्वात् तदुक्तं "किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि" इत्यादि "आनन्दं ब्रह्मणो रूपम्" इति श्रुतेः । विदितोऽसि भवान् साक्षादित्याद्युक्तत्वाच्च बहुत्वं चैकस्यैवाविर्भावाभेदविवक्षया "आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम्" इति श्रुतेः । युगपदनन्तगुणरूपस्यैव सततस्वेच्छानुसारेण विशेषदर्शनात् अतो वत्सवत्सादिरूपं च तत्र नागन्तुकं तदुक्तं "मणिर्यथा विभागेन" इत्यादि अत एवैकत्वविवक्षया टीकायामाह, यद्वेति वक्ष्यते च श्रीमताऽक्रूरेण "बहुमूर्त्त्येकमूर्त्तिकम्" इति एवं श्रुतिप्रमाणकत्वादस्य च सत्येत्यादिवाक्यस्य पञ्चमवेदत्वात् "सर्ववेदान्तसारं हि" इति "सर्ववेदेतिहासानां सारं सारं समुद्धृतम्" इति न्यायेन तत्सारकरूपत्वाच्च तैरप्युपनिषच्छब्देन वेदान्तो न व्याख्यातः वक्ष्यते च "अतन्निरसनमुखब्रह्मक मितौ" इति सदेगत्यर्थत्वाज्ज्ञानार्थकत्वं तच्चेश्वरज्ञानादपरमात्मज्ञानमेवेति "यतो वाचो निवर्त्तन्ते" इत्यादिरीत्या वा तथोक्तमानन्त्यानादित्वात् भूरिमाहात्म्यशब्देन निर्विशेषत्वप्रतिपादनं च निरस्तं मात्रपदेन च ज्योतिरादिधर्माणां शुक्लादिगुणानामिव तद्धर्माणां तत्स्वरूपान्तःपातित्वं विवक्षितं प्राकृतागन्तुकत्वं च निषिद्धं यथा—

"न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते, ।
परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च"

इति श्रुतेः । अत एव प्रकृतिक्षोभात् पूर्वं स ऐक्षत स आसीदित्यादि ॥ ५४ ॥

सकृद्युगपदित्यर्थः । परं ब्रह्म सत्यज्ञानादिरूपं तदेकरूपात् तर्हि कथं दर्शनविषयत्वं ? तत्राह–यस्येति । अतः स्वयंप्रकाशत्वात् सर्वप्रकाशकत्वाच्च तदिन्द्रियाणि स्वशक्त्या प्रकाश्य स्वयमिति प्रकाशते इति भावः । अत एव व्यदृश्यन्त इति कर्त्तारं विनैवोक्तमिति दिक् किं त्वनेन प्रकारेण पूर्ववत्सवत्सपालकानां महिमैव दर्शितेस्म मम लीलयैतादृशेरेव सिद्ध्यति अन्यथा मायिकसृष्टिरेवाकरिष्यत इति ज्ञापनार्थेति गम्यते ॥ ५५ ॥

अथ तस्य मोहमाह–तत इति । तद्धाम्ना तेषां प्रभावेण अन्ते तेषामन्तिके स्तिमितैकादशेन्द्रियो निश्चेष्टः सन् तूष्णीमभूत् किञ्चिदुक्तमपि नशक्नोत्नित्यर्थः । तत्र किरीटादिशोभस्य स्तब्धस्य च तस्योपमा पूर्वंवी नानापरिच्छदैः पुरजनाराध्या प्रतिमेवान्त अन्यत्तैः तत्र दृष्टीः परावर्त्य तदृष्टीनां चतुर्दिक्षु स्थितत्वात्ताभिः पर्यायेण दृष्टेत्यर्थः । तस्मिन्निति हंसपृष्ठ इत्यर्थः । सपरत्वाद्विसर्गलोपः ॥ ५६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दामभिः मालाभिः भूरिपुण्यं भगवदानुकूल्यप्रयोजित तत्सम्भोगरूपं नद्युक्तैरित्यर्थः ॥ ४९ ॥

स्वकानां भक्तानां येऽर्थाः सांसारिकपदार्थभिन्नाः तान्नित्यकैङ्कर्याद्यभिलाषरूपाः ॥ ५० ॥

आत्मा ब्रह्मा मूर्त्तिमद्भिश्चराचरैरिति चिदचितोरज्जुभुजङ्गवदध्यस्तत्वनिरासः　　अणिमाद्यैश्वर्यैजातैर्महिमभिर्माहात्म्यैः परीताः अजाद्याभिर्नवशक्तिभिः श्रिया पुष्टेत्यादिभिः द्वादशभिर्वा चतुर्विंशतितत्त्वैश्च परीताः ॥ ५१ ॥ ५२ ॥

कालादिभिः षड्भिः जीवधर्मज्ञानावरकैः मूर्त्तिमद्भिरित्यनेन नामप्रपञ्चनिरासः ॥ ५३ ॥

सत्यत्वज्ञानत्वानन्तत्वानन्दत्वानि मात्राः परिकरः सामग्री यासां अत एव एकरसाः विकारादिरहिताः मूर्त्तयो येषां ते तथाभूताः ॥ ५४ ॥

यस्य भासा सङ्कल्परूपेण ज्ञानेन इदं सचराचरं चेतनाचेतनात्मकं जगद्विभाति तादृक् परब्रह्मात्मनः परब्रह्मसङ्कल्पसिद्धान्सर्वान् सकृद्ददर्श ॥ ५५ ॥

अतिकौतुकेन प्रथमोद्भूतानि प्रसृतानि दर्शनश्रवणादिप्रवृत्तानि पश्चात् स्तिमितानि अविषयत्वेन निश्चलानीन्द्रियाणि यस्य सः पूर्दैव्यन्ती पूर्दैवीत्वमाचरन्ती पुत्रिका इव चतुर्मुखो ब्रह्ममूर्तिः तूष्णीं स्थिता अभूदिति ॥ ५६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चन्द्रिकाषड्विंशदधिकतयुक्तैरारुणसहितापाङ्गवीक्षितैः स्वकार्थानां स्वभक्तमनोरथानां स्रष्टारः पालकाश्चेति रजःसत्त्वाभ्यां स्रष्टृपालकाः सत्त्वषड्विंशदधिकतेन पालका इव रजोगदृशगुणेन स्रष्टार इव तादृक्कटाक्षैर्द्योतमाना इत्यर्थः ॥ ५० ॥

आत्मा चतुर्मुखस्तत्प्रभृतिभिस्तम्बपर्यन्तैर्मूर्त्तिमद्भिश्चराचरैः कर्तृभिर्नृत्याद्यनेकार्हणैः साधनैरुपासिताः अत्राचराणामपि तदुपासनोचितमूर्त्तिमत्त्वं तत्तदभिमानिदेवताद्वारेणाचि बोध्यम् ॥ ५१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अजाद्याभिर्विभूतिभिः कार्योपयोगिनीभिः शक्तिभिर्महदादिभिश्चतुर्विंशतिभिस्तत्त्वैरजाद्याभिरिति प्रकृतेः पृथगुक्तेस्तत्त्वादीनां जीवात्मना सह चतुर्विंशतित्वम् ॥ ५२ ॥

कालो निमेषादिवत्सरान्तः गुणक्षोभहेतुः स्वभावः परिणामहेतुः संस्कारश्चोद्बोधहेतुः कामः कर्महेतुः कर्म च सद्देहोपलब्धिहेतुः गुणाः सत्त्वादयो ज्ञानविक्षेपमोहहेतवः एतैरुपासिताः कथम्भूतैः स्वस्य भगवतो महिम्ना ध्वस्तमहिमभिस्तिरस्कृतस्वातन्त्र्यैर्मूर्तिमद्भिश्च ॥ ५३ ॥

सत्येति । नित्यनिर्विकारज्ञानानन्दापरिच्छिन्नमात्रस्य परब्रह्मण एकमूर्त्तय असाधारणमूर्त्तयः मात्रशब्देन विकारजाड्यदुःखपरिच्छेदानां व्यावृत्तिः उपनिषदां दृशां मनोवृत्तीनामप्यस्पृष्टमविषयभूतमियत्तापरिच्छेत्तुमशक्यमनवधिकं माहात्म्यं येषाम् ५४॥

मखिलान्वत्सान्वत्सपांश्च परब्रह्माभिन्नानेवमजश्चतुर्मुखः सकृद्ददर्श । ब्रह्म विशिनष्टि, सचराचरमिदं जगद्यस्य भासा भाति तत्परब्रह्मात्मन इत्यन्वयः तद्धाम्ना तूष्णीमभूदित्युत्तरेण वा ॥५५॥

अतिकौतुकेनात्याश्चर्येणोद्वृत्त्य दृष्टिं परावृत्त्य हंसपृष्ठे निपत्य कौतुकशब्दोत्तरतृतीया याश्छान्दसो लुक् अतिकौतुकाद्रिक्तास्तिमितेति पाठे अति कौतुकेन उद्रिक्तान्युत्कटान्यत एव स्तिमितानि दीनप्रायाणि पारवश्यं प्राप्तानीति यावत्तान्येकादशेन्द्रियाणि यस्य स इत्यर्थः । तेषां धाम्नाऽभिभूत इति शेषः । अजो ब्रह्मा तूष्णीं बभूव निश्चलोऽभवत् यथा पूर्देवी व्रजाधिष्ठात्री काचिद्देवता तस्या अन्ति समीपे पुत्रिका चतुर्मुखी कनकप्रतिमा तद्वदित्यर्थः ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अरुणविशदस्थानीयाभ्यां रजःसत्त्वाभ्यामिवेत्युत्प्रेक्षा ॥ ५० ॥
चराचरैस्तत्तदधिष्ठातृदेवतैः ॥ ५१—५३ ॥

सत्येति । किञ्च, सत्याः सर्वकारणत्वेन ज्ञानरूपाः स्वप्रकाशत्वेन अनन्ता विभुत्वेन आनन्दा निरुपाधिपरमास्पदत्वेन एकरसाः कालकारणत्वेन अत एवैकत्वं पृथक्प्रकाशत्वेन च पृथक्त्व मपीति ज्ञेयम् ॥ ५४ ॥

एवं चेत् कथं ददर्श ? तत्राह—यस्येति । तस्य सर्वप्रकाशकत्वात् स्वप्रकाशकत्वाच्चेत्यर्थः ॥ ५५ ॥

तेषां धाम्ना प्रभावेण अन्ति तेषामेव समीपे काचित् पूर्देवी पुरजनाराध्यमाना यथा सशोभा निश्चेष्टा च सव ॥ ५६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तुलसीनूतनमालाभिः आऽऽङ्घ्रिमस्तकं नखशिखाप्रपर्यन्तम् आ समन्तात्पूर्णाः तानि च दामानि कोमलतुलसीनिर्मितानि सर्वगात्रेषु च पृथक् समर्पितानि समर्पकाश्च भूरि पुण्यवन्तः ॥ ४९ ॥

असाधारणं भगवद्भावं तत्र वर्णयति—चन्द्रिकेति । चन्द्रि काचन्द्रिकाविशदाः स्मेरा मन्दहासाः अरुणानि अपाङ्गवीक्षितानि वीक्षितैश्च स्वकार्याणां भक्तपुरुषार्थानां स्रष्टृपालका वीक्षितैः पुरुषार्थानामुत्पत्तिः स्मेरैः पालनं तत्रोपपत्ति दृष्टान्तमाह—रजःसत्त्वाभ्यामिवेति अरुणवर्णत्वाद्वीक्षितं र स्तुल्यं शुभ्रत्वात् स्मेरं सत्त्वतुल्यं रजसोत्पाद्यते सत्त्वेन पाल्यते ॥ ५० ॥

किञ्च आत्मा ब्रह्मा स्तम्बः तृणस्तम्यः ब्रह्मादितृणस्तम्बपर्य आधिदैविकैर्मूर्त्तिमद्भिः विग्रहवद्भिः चराचरैः स्थावरैः जङ्गमैः पृथक् पृथक् उपासिता इति सम्बन्धः । पृथगुपासने हेतुः नृत्यगीताद्यनेकार्हैः यथाधिकारं स्वस्य धर्मा भगवत्सेवोपायि पृथक् पृथक् सन्तीति सर्वेषां पृथगुपासनम् ॥ ५१ ॥

अणिमाद्यैश्वर्यैः सेविता अणिमादीनां महत्त्वं माहात्म्यरूपत्वं अजाद्या विभूतयः उत्पत्तिव्यतिरेकेणैव स्वस्योत्पत्तिभावमन्येषां चोत्पत्तिं सम्पादयति या शक्तिः सा अजा आदिर्यासां लक्ष्म्यादीनां ताभिरपि प्रत्येकमुपासिताः चतुर्विंशतितत्त्वाभिमानिन्यो देवताः ॥ ५२ ॥

कालादयोऽप्यभिमानिदेवाः गुणाः सत्त्वरजस्तमांसि महच्छब्देन नामस्रष्टिवर्गः सर्वोऽपि आसन्यादयश्च तेषां माह माह—स्वमहिध्वस्तमहिमभिरिति । स्वमहिम्नैव ध्वस्तः मान्यस्य अन्येषां यैः भगवन्महिम्ना वा ध्वस्तमहिमानः ते च मूर्त्तिमन्तः तैरपि पृथक् पृथक् उपासिताः ॥ ५३ ॥

धर्मानुक्त्वा स्वरूपमाह—सत्येति । सत्यं ज्ञानम् अनन्तत्वं दोषाभावः इतरान्यत्वमानन्दश्च स्वरूपे दोषाभावोऽप्यवश्यं व्यः तन्मात्रा एकरसा मूर्त्तयो येषां रसभेदस्तु विजातीयसं पाद्भवति उत्कर्षमाह—अस्पृष्टभूरीति । उपनिषद्भिरपि न भूरि माहात्म्यं येषाम् ॥ ५४ ॥

एवं सर्वमेव भगवत्स्वरूपं वर्णयित्वा उपसंहरन् दर्शनमाह—अजो ब्रह्माऽप्येवं सकृदेव ददर्श सर्वानेव परमात्मनः परब्रह्मरूपान् एकं हि परब्रह्म प्रसिद्धं दृश्यते त्वनेक रूपमिति । नन्वेकेन ब्रह्मणा कथमेतावन्तो दृष्टाः ? तत्राह—यस्य यस्य भगवतो भासा इदं सर्वमेव सचराचरं विभाति भगवदिच्छयैव भगवद्भासार्थं सर्वं ज्ञातम् ॥ ५५ ॥

ततोऽतिकुतकेन अति सन्तोषेण स्तिमितान्येकादशेन्द्रियाणि यस्य तादृशो जातः तेन हर्षादपि स्तोत्रे न समर्थो अशक्यं च स्तोत्रं प्रदर्शितस्य मनसाप्याकलयितुमशक्यत्व हेत्वन्तरमप्याह—तद्धाम्नाभूदिति ॥ भगवत्तेजसा निष्प्रभो ब्रह्मा तूष्णीमासीत् तत्र दृष्टान्तो लौकिकः पूर्देव्यन्ति पुत्रिकेव पूर्देवी सर्वैरेवपुरवासिभिः पूज्यते न तु तत्रिकटस्था पुत्रिका न हि समानदेशस्थितिमात्रेण पूजार्हता भवति स्तदानीं दृष्टैः सर्वैरेवायमुपेक्षित इति निष्प्रतिभत्वमेव ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भूरिपुण्यानि श्रवणकीर्त्तनादिभजनानि तद्वता भक्तश्रेणाऽर्पितैः ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चन्द्रिकावत् विशदं यथा स्यात्तथा स्मेरयन्त इति चन्द्रिकाविशदस्मेराणि मृदुपाङ्ग इति वत्समासः अरुणापाङ्गेन सह वर्त्तमानानि यानि सम्मुखवीक्षितानि तैः स्वकार्याणाम् अनुरूपणीयस्वभक्तमनोरथानां · रजःसत्त्वाभ्यां स्रष्टृपालका इव व्यदृश्यन्त । रजसेवारुणगुणेन स्रष्टार इव सत्त्वेनेव विशदस्मितेन पालका इव ॥ ५० ॥

आत्मात्र ब्रह्मा नैकार्हैः अनेकार्हणैः ॥ ५१ ॥

महिमभिरैश्वर्यैः अजा माया तदाद्याभिः शक्तिभिः चतुर्विंशतिभिरिति महत्तत्त्वसूत्रतत्त्वयोः पार्थक्यविवक्षया तत्त्वैर्जगत्कारणैः ॥ ५२ ॥

कालादिभिश्च तत्सहकारिभिः तत्र स्वभावः परिणामहेतुः संस्कार उद्बोधकः स्वमहिध्वस्तमहिमभिर्भगवन्महिम्ना तिरस्कृतस्वातन्त्र्यैः ॥ ५३ ॥

न चैतत् सर्वं भगवता मायया दर्शितमिति मन्तव्यमित्याह—सत्येति । सत्याश्च ज्ञानरूपाश्च अनन्ताश्च आनन्दरूपाश्च तत्रापि तदेकमात्राविजातीयसम्भेदरहिताः तत्राप्येकरसाः कालपरिच्छेदकाभावात् सदैकरूपा मूर्त्तयो वपूंषि येषां ते । यद्वा "सत्यं विज्ञानमानन्दं ब्रह्मेति, सत्यं विज्ञानमनन्तं ब्रह्मेति, आनन्दं ब्रह्मणो रूपम्" इत्यादि श्रुत्युक्तं सत्यादिरूपं यद्ब्रह्म तदेव मूर्त्तयो येषां ते । ननु, दृश्यत्वबहुत्वविविधत्वादिकं ब्रह्मणो नैव ब्रुवते वेदान्तदर्शिनस्तत्राह—अस्पृष्टेति । उपनिषदः पश्यन्ति भक्त्यभावात्तु तदर्थं जानन्तीत्युपनिषद्दृशो दार्शनिकास्तेषां तैर्न स्पृष्टमपि भूरिमाहात्म्यं येषां ते "भक्त्याहमेकया ग्राह्यः" इति "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इति "न चक्षुषा पश्यति रूपमस्य, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति आदित्यवर्णं तमसः परस्तात्" इति आनन्दमात्रमजरं पुराणम् एकं सन्तं बहुधा दृश्यमानम्" इति "बहुमूर्त्त्येकमूर्त्तिकम्" इति—

"सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः ।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ।
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः" ॥

इत्यादि श्रुतिस्मृतिप्रसिद्धं ब्रह्मणोऽप्यप्राकृतरूपगुणादिमत्त्वं तदिच्छया भक्तिमच्चक्षुर्गम्यमस्तीति ज्ञेयम् ॥ ५४ ॥

यस्य परब्रह्मणः ॥ ५५ ॥

अतिकौतुकेन उद्वृत्तानि विक्षोभ्याणि स्तिमितान्यानन्दस्तब्धानि एकादशेन्द्रियाणि यस्य सः उद्वृत्त इति पाठे अतिकुतुकेन क्षुभितः तेषां धाम्ना तेजसा तूष्णीं किमपि वक्तुं चेष्टितुं चाशक्तोऽभूत् । अत्र दृष्टान्तः पूर्वैर्वा बहुलोकैः पूज्यमाना ग्रामदेवता तस्या अन्ति निकटे पुत्रिका बालकेन खेल्यमाना अपूजिता मुद्रा मृण्मयी पञ्चालिकेव ॥ ५६ ॥

सहितापाङ्गवीक्षितैः स्वकार्याणां स्वभक्तपुरुषार्थानाम् रजःसत्त्वाभ्यां स्रष्टृपालका इव विशदस्मितेन पालकाः इव व्यदृश्यन्त यथा केचित्सत्त्वेन स्वभक्तमनोरथपालकाः अरुणगुणेन स्रष्टार इव व्यदृश्यन्त यथा केचित् रजसा स्वभक्तमनोरथस्रष्टार इत्यर्थः ॥ ५० ॥

चरैरचरैश्च आत्मादिस्तम्बपर्यन्तैः स्वप्रभृतिभिरनन्यात्मैः नामरूपैस्तम्बेन जगत्त्रयभूरिति वक्ष्यमाणात्मस्वब्रह्माण्डयुक्तैः कर्तृभिः नृत्यं च गीतं च आदिना वाद्यं च तैः अनेकैरर्हैः अर्हणैश्च पृथक् पृथगुपासिताः तत्राचरकृता तदुपासना "ता आप अब्रुवन्" इति वद्वेदनाभिप्रायेण युज्यते ॥ ५१ ॥

अणिमाद्यैरैश्वर्यैः न जायन्ते कर्मकालादिपारवश्यतया यास्ताः अजाः श्रीदेवीलीलादेव्याद्याः आदिना पार्षदसङ्ग्रहः ताभिः, विभूतिशब्देन परमधामादिसंग्रहः परमवैकुण्ठरमावैकुण्ठश्वेतद्वीपादिभिः महतः आदिर्महदादिः प्रकृतिस्तदादिभिः प्रकृतिमहदहङ्कारादिभिरित्यर्थः ॥ ५२ ॥

कालो गुणक्षोभादिहेतुः भगवच्छक्तिविशेषः स्वभावः परिणामहेतुः परिणामिपदार्थस्य प्रकृत्यादेर्धर्मविशेषः संस्कारः उद्बोधकः कामः कर्महेतुः कर्माणि चतुर्वर्गसाधनानि गुणाः तत्तत्पदार्थधर्मभूताः आदिना सर्वपदार्थप्रतिपादका वेदेतिहासपुराणादिसङ्ग्रहस्तैः स्वमहिध्वस्तमहिमभिर्भगवन्महिम्ना तिरस्कृतमहिमभिः सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां विशेषणमिदम् ॥ ५३ ॥

यतस्ते वेदान्तैकवेद्यस्य परब्रह्मपुरुषोत्तमवासुदेवनारायणादिसंज्ञस्यानन्ताचिन्त्यस्वाभाविकगुणशक्तिसिन्धोः स्वभावतोपास्तसमस्तदोषस्य श्रीकृष्णस्य मूर्त्तयोऽत एवम्भूता व्यदृश्यन्तेत्याह—सत्येति । सत्यज्ञानाऽनन्ताऽऽनन्दमात्रैकरसस्य श्रीकृष्णस्य मूर्त्तयः मात्रच्प्रत्ययः विकारित्वजडत्वपरिच्छिन्नत्वनिरानन्दत्वादिदोषैरसंस्पृष्टत्वं भगवतो द्योतयति, इयत्तानवच्छिन्नत्वं तेषां द्योतयन्नाह—अस्पृष्टेति । उपनिषच्छब्देन तदभ्यासजन्यं ज्ञानं सैव दृक् चक्षुर्येषां तेषामपि न स्पृष्टं परिच्छेत्तुं शक्यं भूरिमाहात्म्यं येषां ते तथाभूताः व्यदृश्यन्तेति ॥ ५४ ॥

उक्तार्थं निगमयति—एवमिति । अजो ब्रह्मा एवं सकृत् युगपत् परब्रह्म श्रीकृष्णः तदात्मनस्तद्रूपान् अखिलान् वत्सादीन् ददर्श यस्य परब्रह्मणः श्रीकृष्णस्य ॥ ५५ ॥

ततस्तदाश्चर्यदर्शनादेव कुतुकानि सर्वाणि आश्चर्याणि अतिक्रान्तः अतिकुतुकः तेनैवाश्चर्यदर्शनेन तुच्छीकृतेतराश्चर्य इत्यर्थः । "अत्यादयः क्रान्ताद्यर्थे द्वितीया" इति समासः । तद्धाम्ना तेषां तेजसा स्तिमितैकादशेन्द्रियः स्तब्धसकलेन्द्रियः अत एव उद्वृत्य सकलेन्द्रियवृत्तीः परावृत्य तूष्णीं निश्चलोऽभूदित्यन्वयः । तूष्णीं भावे दृष्टान्तः पूर्वैर्वा व्रजाधिष्ठात्री काचिद्देवता तस्या अन्ति समीपे पुत्रिका चतुर्मुखी कनकप्रतिमेव ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूरि पुण्यवदर्पितैः बहुजन्मार्जितपुण्यवद्भिर्निवेदितैः ॥४९॥ चन्द्रिकावत् चन्द्रज्योत्स्नावत् विशदस्मितयुक्तैः अरुणपाङ्ग-

---

भाषा टीका ।

वह गाभीन की पहराई श्रीचरणनसों लेकें मस्तक ताईं लंबी नवीन कोमल तुलसी के दलन की मालान सों सर्व गात्र में शोभा जिन के होय रही है ॥ ४९ ॥

इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके ।
परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ ॥
अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति—
चच्छादाऽजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥ ५७ ॥
ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः ।
कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं सहात्मना ॥ ५८ ॥
सपद्येवाभितः पश्यन् दिशोऽपश्यत्पुरःस्थितम् ।
वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥ ५९ ॥
यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः ।
मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम् ॥ ६० ॥

भाषा टीका ।

चांदनीसी विशद मंद मुसक्यांन सहित अरुण कटाक्षन के देखिवेतें अपने जनन के अर्थन को मानो रजोगुण सत्त्वगुण सों सर्जन पालन करन वारे ॥ ५० ॥

और एक २ पृथक् २ ब्रह्मा सों आदि ले कें स्तम्ब ( शर कंडा तृण ) पर्यन्त मूर्त्तिमान् चर अचरन सों नृत्य गीत वाद्यादिक अनेक उपचारन सों उपासित होय रहे ॥ ५१ ॥

अणिमादिक महिमा और अजादिकविभूति तथा महदादि चौवीश तत्त्व इन सबन सों ॥ ५२ ॥

और आपकी महिमासों ध्वस्त होय रही महिमा जिन की ऐसे मूर्त्तिमत् पूर्वोक्त अणिमादिक और कालस्वभाव संस्कार काम कर्म तथा गुणआदिकों स उपासित होयरहे हैं ॥५३॥

और सबरे सत्य ज्ञान अनन्तानन्द मात्र एक रस मूर्त्ति वारे, और उपनिषदन के देखवे वारेन से हूं नहीं स्पृष्ट भयो भारी माहात्म्य जिन को ऐसे सब दीखपरे ॥ ५४ ॥

या रीति सों ब्रह्मा एक वार सबन कों परब्रह्म स्वरूप देखि तौ भयौ । जाकी कांति ( तेज ) सों चराचर ये सब जगत् भास होय रह्यो है ॥ ५५ ॥

ताके पीछें बडे कौतुक में स्थित होयकें निश्चल भई एकादश इन्द्रियें जाकी एसो ब्रह्मा उनके तेज सों एसो फीको पर गयो कि—जैसें मानो ब्रज की अधिष्ठात्री देवी के आगे एक चार मुखकी पूतरी जैसें खडी होय ता रीतिसों खडो होत भयो ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं मोहमप्रमजमुज्झहारेत्याह—इतीति । इरेशे इरा सरस्वती तस्या ईशे ब्रह्माण किमिदमिति मुह्यति सति पश्चात्तद्दृश्यमनीशे सति परमोऽजः श्रीकृष्णः सपद्यजाजवनिकां मायारूपां तिरस्करणीं यमाऽद्भुतं दर्शितं तां चच्छाद तिरोधापसारितवानित्यर्थः । अथवा अयं लोकाभिमानी ममैश्वर्यं द्रष्टुमयोग्य इति तस्योपरि मायां प्रसारितवानिति क मुह्यति सति अतर्क्ये तर्कागोचरे निजोऽसाधारणो महिमा यस्य तस्मिन्निति मोहे हेतुरुक्तः, दर्शनायोग्यत्वाय श्रीणि विशेषणानि स्वप्रमितिके स्वप्रमिति स्वप्रकाशं च तत्कं सुखं च यस्मिन् अत एवाजातः प्रकृतेः परत्र परस्मिन् अतन्निरसनमुखेन ब्रह्मश्रुतिशिरोभिर्मितिर्ज्ञानं यस्मिंस्तस्मिन् स्वरूपे ॥ ५७ ॥

अर्वाग् बहिः प्रतिलब्धान्यक्षीणि येन सः, परेतवन्मृतो यः कथञ्चित्पुनरुत्तिष्ठति तथा दृष्टीर्नेत्राणि ॥ ५८ ॥

जनानामाजीव्यैर्द्रुमैराकीर्णं समाप्रियं सन्ततान्यासमन्तात्प्रियाणि यस्मिंस्तत् ॥ ५९ ॥

तदाह—यत्रेति । नैसर्गदुर्वैराः स्वाभाविकाप्रतिकार्यवैरवन्तो नराः सिंहादयश्च मित्राणीव यत्र सहैवासन् अजितस्यावासे द्रुताः पलायिता रुट्तर्षादयः क्रोधलोभादयो यस्मात्तथा वृन्दावनमपश्यदिति ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति पूर्वरीत्या वालवत्सादिरूपमेकमद्भुतं दृष्टं इदं किमिति वाशब्दार्थः ज्ञात्वा तन्मोहादिकमवधाय मन्यते, प्रथमपक्षे मायया अविद्याविद्यावृत्तिकत्वात् अविद्यारूपया तिरस्करिणी ब्रह्मणो दृष्टिं प्रति श्रीकृष्णरूपस्य व्यवधायिकां यया अविद्यारूपयाऽनक्त्वं इत्यादिपद्यविक्षेपणाकारत्वं इदयं तदद्भुतं दर्शितं तद्रूपेण प्रकाशिकामपि तामपतथानीति तमेतं पञ्चमवर्णावगयुक्तं चाशङ्क्य पक्षान्तरं अथवेति । अत्र तस्य स्वप्रकाशत्वात् स्वप्रकाशताशक्तिरेव ने हेतुः माया त्वविद्यावृत्त्यावरणधर्मैव विद्यावृत्त्या च तस्या अपि प्रकाशकस्य, तस्य प्रकाशनसमर्थेत्युक्तं तदेवाह—

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अजात इति । अतस्तादृशवैभवं प्रति ब्रह्मदृष्टितो मायापसारणेन तद्दर्शितं तदप्रसारणेन स्वाच्छादितमिति प्रसारितमपि प्रसारितवानिति छदेरन्तर्भूतण्यर्थत्वात् मायायाश्चाण्यन्तकर्मत्वात् इतिशब्द अथवेति पक्षसमाप्त्यर्थः उत्तरग्रन्थस्य उभयत्रान्वितत्वात् क मुह्यतीति कुत्र तस्य मोह इत्यर्थः । स्वरूपे घनश्यामादिरूपे निजमहिमनीति बहुव्रीहिः । यद्वा, निजमहिमनीत्येव विशेष्यं कर्मधारयात् तादृशचतुर्भुजवृन्दे तैद्भव इत्यर्थः । अन्यत्समानम् ॥ ५७ ॥

उत्थित इति मोहेन हंसपृष्ठे पतनं बोधयति इदं ममतास्पदं विश्वम् आत्मना देहेनाहन्तास्पदेन सहितं तस्यापि विस्मृतत्वात् ॥ ५८ ॥

ततश्च परमकृपया श्रीकृष्णस्तस्मै स्वान्तरङ्गवैभवं प्रकाशितवानित्याह—सपदीति त्रिभिः । यद्वा, पूर्वं वृन्दावनाधिष्ठानकश्रीकृष्णाख्यं परमस्वरूपं यया मायाजवनिकयाच्छाद्य स्वशक्तिविशेषेण स्वरूपवैभवान्तरं दर्शितवान् तामपसारितवानिति प्राचीनतृतीयश्लोकार्थः । ततश्च स्वतेजोभिः सर्वाच्छादकेन अप्राकृतेन परमस्वरूपेणैव प्रकाशते इत्याह—तत इति चतुर्भिः । अर्वाचि सम्प्रत्यवतीर्णे श्रीकृष्णाख्यपरमस्वरूपे पुनर्लब्धदृष्टिः सन् इदं श्रीवृन्दावनमात्मना सह व्यचष्ट तदेव वर्णयति—सपदीति । अभितो दिशः पश्यन् सपद्येव वृन्दावनमपश्यत् स ब्रह्मा मायालक्ष्म्याः श्रीराधारूपायाः प्रियं "राधावृन्दावने वन" इति मात्स्यपाद्यादिभ्यः । यद्वा, मया तयैव लक्ष्म्या सह वर्त्तत इति समः श्रीकृष्णः तस्य आसम्यक् प्रियं वृन्दावनं गोवर्द्धनम् इत्याद्युक्तम् । यद्वा, मायास्तस्या एव प्रियः श्रीकृष्णस्तेन सह वर्त्तमानमिति एवं चेत् समानामारमारामाणामपि आप्रियमिति कियत् ॥ ५९ ॥

तल्लक्षणमाह—यत्रेति । तैर्व्यञ्जितमेव । यद्वा निसर्गदुर्वैरा अहिनकुलादयः सहैवासन् ततः सुतरां नृमृगादयश्च मित्राणीवासन्नित्यर्थः । तत्र हेतुः, अजितस्य योगादिना महाप्रयासेन ह्यपि वशीकर्त्तुमशक्यस्य श्रीभगवत आवासः सदावस्थितिः तेन तद्रूपेण निजमहिम्ना द्रुतं रुट्तर्षादिकं यस्मात्तत् ॥ ६० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इरेति इडेति इरेति च देवीत्रयम् "इडा भू वाक् सुराप्सु स्यात्" इति कोशात् देवीत्रयनियामके ब्रह्मणि स्वमहिमनि मुह्यति सति परमः अजः श्रीकृष्णः अजाजवनिका तस्मिन्नच्छाद च्छादयामास स्वेनैव प्रमितिर्यस्य तादृक् कं सुखं यस्मिन् मायातः परस्मिन् अतन्निरसनेन ब्रह्मणो वैलक्षण्यप्रतिपादकेन मुखेन द्वारभूतेन अद्भुतैः वेदशिरोभिः मितिर्यस्य तस्मिन्महिम्नि ॥ ५७ ॥

मत्वोत्थितेन तत आकृष्टे प्रतिलब्धे अक्षिणी येन सः आत्मना स्वेन सह श्रीकृष्णेन वा सह इदं सन्निकृष्टं श्रीवृन्दावनादिकम् ॥ ५८ ॥

सम्यक् आसमन्तात्प्रियं स ब्रह्मा माप्रियं लक्ष्मीप्रियं श्रीनारायणं कृष्णं चापश्यदिति लक्ष्मीप्रियं वृन्दावनं वा रमाक्रीडमभूदिति वाक्यात् ॥ ५९ ॥

स्वाभाविकं दुष्टं वैरं येषां ते मनुष्यसिंहसर्पनकुलादयः मित्राणीव सह आसन् सहैव सञ्चारादिकर्त्तार आसन् न चैतेषां तपोबलेनापि सम्भवो दृश्यते इत्यत्राह—अजितस्य कृष्णस्यावासः आभिमुख्येन वासस्तेन श्रीभगवत्कृपाकटाक्षेणैव पलायितक्रोधलोभतृष्णामोहादिके वृन्दावने अनेन "कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्" इति आसुरसम्पद्बीजरहिते इति स्वलपरमैश्वर्यम् उक्तम् ऋषीणां कामक्रोधादिराहित्याभावाच्च तादृशवैभवमिति भावः ॥ ६० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मुह्यते चतुर्मुखाय पूर्ववदात्मनस्सवत्सपालीन् दर्शयितुमसाधारणस्वमूर्तिदर्शनाच्छादिकां मायामाच्छादितवानित्याह—इतीति परो मा यस्मात् स परमः सर्वोऽभ्यधिको यः अजः कर्मायत्तोत्पत्तिरहितः श्रीकृष्णः सपदि ज्ञात्वा चतुर्मुखस्यावस्थां ज्ञात्वा अजा यवनिकामजारूपां यवनिकां तिरस्कारिणीं चच्छाद आवृतवान् कस्मिन् सति स्वासाधारणो महिमा यस्मिंस्तस्मिन् स्वरूपे विषयभूते इत्थम् इरायाः सरस्वत्या ईशे ब्रह्मणि द्रष्टुमप्यनीशेऽसमर्थे प्रत्युतेदं किमिति मुह्यति सति निजमहिम्नो दर्शनाशक्यत्वं दर्शयितुं विशिनष्टि, अतर्क्यं इदम् इत्थन्तया केवलतर्कागोचरे तत्र हेतुरजातः परत्र अजातः अजायाः प्रकृतेः परत्र विलक्षणं प्राकृतमेव कथञ्चित्तर्कगोचरमिति भावः । स्वप्रमिति स्वयंप्रकाशं ज्ञानं कं सुखं सुखात्मकं यस्मिन् कशब्देनात्र सङ्कोचकाभावादपरिच्छिन्नसुखवाचिना परिमिति सुखस्वरूपजीवव्यावृत्तिः इतोऽप्यतर्क्यत्वमवगन्तव्यम् अतर्क्यं इत्यनेन तन्मूलप्रत्यक्षागोचरत्वमपि विवक्षितं प्रत्यक्षानुमानाभ्यां प्रमाणाभ्यामनवगम्य इति फलितोऽर्थः । तर्हि किं शशविषाणवत्तुच्छं नेत्याह—अतन्निरसनमुखब्रह्मकमितौ अतद्परमात्मवस्तु प्रकृतिपुरुषादिकं तस्य निरसनमुखेन परमात्मस्वरूपत्वानिरसनद्वारा ब्रह्मणो वेदस्य केन सूक्ष्मोपायेन पद्मगेनेति यावत् मितिरवगतिर्यस्य तस्मिन् प्रत्यक्षादिमानान्तरानवगम्यस्वरूपस्वभावस्य परमात्मनः केवलवेदान्तैकवेद्यस्य प्राकृतचक्षुषा द्रष्टुमयोग्यत्वात्तद्दर्शनाशक्ते सति ब्रह्मणि तज्ज्ञात्वा यथावस्थितवत्सवत्सपालदर्शनार्थं प्रदर्शितस्वासाधारणरूपाच्छादनार्थं चाजां चच्छादेत्यर्थः ॥ ५७ ॥

ततोऽजायवनिकाच्छादनानन्तरमर्वाग्बहिः प्रतिलब्धान्यक्षाणीन्द्रियाणि येन सः, कः परेतवत्मृतो यथा पुनः कश्चिदुत्तिष्ठति तद्वदुत्थितः संज्ञां प्राप्तः कृच्छ्रात्कथञ्चिद्दृशौ नेत्रे उन्मीलितानि मीलितानि कृत्वा दृष्टिरिति पाठे मीलितं उन्मीलिते दृष्टी यस्य सः, आत्मना चतुर्मुखेन सहेदं जगदपश्यत् पूर्वं भगवद्रूपेभ्योऽन्यदपश्यदिदानीं जगज्जगद्वत्मानमात्मानमेवाचष्टेत्यर्थः ॥ ५८ ॥

ततः पूर्वस्थितं वृन्दावनं चापश्यत् कथम्भूतं ? जनानामाजीव्यैरुपजीव्यैर्द्रुमैराकुलं व्याप्तं समाप्रियं सम्यगत्याऽऽनन्दप्रियाणि यस्मिन् तत् ॥ ५९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—यत्रेति । यत्र वने नैसर्गदुर्वैराः नैसर्गिकं स्वाभाविकं दुर्वारमनिवार्यं वैरं येषां ते नरगोपादयो मृगाः सिंहादयश्च मित्राणि सुहृद इव वसन्तः सहैवासन् तत्र हेतुं वदन्वनं विशिनष्टि–अजितस्य भगवतः आवासेन द्रुताः पलायिताः रुट्तर्षो वयः क्रोध लोभादयः यस्मात्तस्मिन् ॥ ६० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति अनेन प्रकारेण तां तदुपरि चच्छाद छादयामासेत्यन्तभूतपर्यवसानत्वात् कुत्र मोहस्तत्राह–निजमहिमनि व्यहश्यन्त घनश्यामा इत्यादि स्ववैभवे तद्विशेषणानि स्वप्रमितिक इत्यादीनि मा लक्ष्मीस्तया श्रीराधादेव्या सहितः समः श्रीकृष्णः तस्य आलम्बकः प्रियं राधा वृन्दावने वन इति ॥ ५७—५८ ॥

वृन्दावनं गोवर्द्धनमिति प्रसिद्धेः ॥ ५९ ॥

अजितावासरूपञ्च तत् द्रुतरुट्तर्षादिकञ्च तत् तस्मिन् ॥ ६० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवम् अप्रयोजके ब्रह्मणि जाते भगवांस्तद्रूपमुपसंहृतवानित्याह—इतीरेश इति । इत्यमुना प्रकारेण इरेशे वाक्पतौ ब्रह्मणि द्रष्टुमप्यनीशे मुह्यति च सति तस्य मोहादिक्लेशं ज्ञात्वा अजाजवनिकां मायारूपतिरस्करिणीं चच्छाद्‌ऽऽच्छादितवान् तदुपरि प्रसारितवान् यथा ब्रह्मणो दर्शनं न भवति उद्घाटितमाययैव तेषां दर्शनं न तु निर्माणम् अत आच्छादने अदर्शनं युक्तमेव । ननु, ब्रह्मणो मोहे अदर्शने च को हेतुः तत्राह–निजमहिमनि अतर्क्ये सति भगवतोऽसाधारणमहिमा अन्येषां तर्कविषयोऽपि न भवति अतः कथं द्रष्टुं शक्यते ? ज्ञातुं वा तदेव कुतस्तत्राह—स्वप्रमितिक इति । स्वस्यैव भगवत एव प्रमितिर्यस्य केवलं स्वसम्वेद्यमेव तत्सत्वन्यसम्वेद्यं तत्रापि हेतुः अजातः परत्रेति प्रकृतेः परः स प्रकृतौ चान्य अतो यत्र भगवान् तत्रान्यो नास्तीति भगवत्संवेद्यमेव भगवन्माहात्म्यम् । ननु, श्रुत्या कथं न ज्ञायते ? तत्राह—अतन्निरसनमुखब्रह्मकमिताधिति । ब्रह्मव्यतिरिक्तस्य निरसनद्वारैवोपनिषदो ब्रह्म स्वरूपं बोधयन्ति, न तु साक्षादाहत्य सङ्केतग्रहाभावात् वैदिकव्यवहारेऽपि यावदयं बहिर्मुखस्तत्र प्रविशति तावद्बहिर्निरसनेनैव प्रवेशनीयः प्रविष्टस्तु तदभावमेव प्राप्स्यतीति स्वसंवेद्य एव भविष्यति अतः प्रथमाधिकारे श्रुतिस्तथैवाह, "अथात आदेशो नेति नेति"इति अतः श्रुतयोऽप्याहत्य न वदन्तीति युक्तमेव तस्य द्रष्टुमशक्तिः मोहश्च ततो दुःखं चेति भगवता एवं कृते मूर्च्छित एव ब्रह्मा पतितः ॥ ५७ ॥

ततः कियत्कालानन्तरमुत्थितः अर्वागेव प्रतिलब्धमक्षं ज्ञानं येन लोकदर्शनार्थमेवोत्थितो न तु भगवद्दर्शनार्थमिति–व्यर्थमस्योत्थानमिति दृष्टान्तमाह–परेतवदिति । यथा मृत उत्थि इति केनचिन्निमित्तेन तथाऽयमप्युत्थितः पूर्वं मृतो मूर्च्छितः पश्चादुत्थितः इति वा कृच्छ्रादतिकष्टेनैव दृष्टीः उन्मील्य इदं जगदेव दृष्टवान् ॥ ५८ ॥

ततः सपद्येव अभितः पश्यन् दिशः अपश्यत् तत् पुरःस्थितं वृन्दावनं चाऽपश्यत् ततस्तस्मिन् वने जीवनार्थमागतान् लोकानप्यपश्यत् तदाह, जनाजीव्यमिति द्रुमाकीर्णमिति । द्रुमैर्व्याप्तं न तु शून्यारण्यं समं च तदा समन्तात् प्रियं च ॥ ५९ ॥

ततस्तत्रत्यान् मृगानपि दृष्टवानित्याह—तत्र नैसर्गदुर्वैर इति । स्वभावत एव दुष्टवैरा अप्यश्वमहिषादयः सहैवासन् नरा मृगाश्च । किञ्च, मित्राणीव तत्र हेतुः अजितस्य भगवत आवासेन गता रुट् तर्षः तृष्णा अन्येऽपि कामादयो दोषा गतरुट्तर्षादिकं यथा भवति तथा सहासन्निति सम्बन्धः ॥ ६० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तावन्मात्र एव मञ्जुमहिमनि निमज्जन्तमनुभवासमर्थं ब्रह्माणमालोक्य ततः परस्सहस्रेषु दर्शयितव्येष्वसाधारणेषु महामञ्जुमहिमसु तमनधिकारिणमभिमृश्य मञ्जुमहिमदर्शं समापयामासेत्याह—इतीति । इरेशे ब्रह्मणि इरा सरस्वती तस्या ईशे महाबुद्धिमत्यपीत्यर्थः । किमिदमिति मुह्यति सति पश्चाद्द्रष्टुमप्यनीशे सति परमोऽजः श्रीकृष्णः ज्ञात्वा स्वैश्वर्यानुभवे तद्योग्यतां वीक्ष्य सपदि अजाजवनिकां योगमायारूपां तिरस्करिणीं चच्छाद यया पुलिने भुञ्जानान् श्रीदामादीन् बालकान् तृणं चरतो अरसान् वत्सान्वेषकं स्वं चाच्छादयन् स्वरूपभूतान् वत्सबालकादीन् पुनस्तानेव चतुर्भुजादित्वेन दर्शयामास तामन्तरधापयदित्यर्थः । या वास्तवं वस्त्वावृण्वती अवास्तववस्त्वेव दर्शयति सा माया यातुवास्तववस्तूनामपि किमप्यावृणोति किमपि दर्शयति सा योगमायेति मायायोगमाययोर्भेदादजाशब्देनात्र बहिरङ्गा माया न व्याख्येया, कुत्र निजमहिमनि दर्शितचतुर्भुजादिरूपस्वमहैश्वर्ये कीदृशे अतर्क्ये यतः स्वप्रमिति स्वप्रकाशं च तत् कं सुखरूपं च तस्मिन् अत एव अजातः प्रकृतेः परत्र परस्मिन् अतन्निरसनमुखब्रह्मकैः "अस्थूलमनणु अह्रस्वम्"इत्यादिकैः श्रुतिशिरोभिर्ब्रह्मव्यञ्जकैर्मिति ज्ञानं यत्र तस्मिन् स्वरूपे ॥ ५७ ॥

अर्वाक्‌ः बहिः प्रतिलब्धानि अक्षाणि येन सः, परेत मृतो यदि कथञ्चित् पुनरुत्तिष्ठति तथेत्यर्थः । विस्मयरसमहाभारमर्दितत्वादिति भावः । इदं जगत् ममतास्पदं आत्मनोऽहन्तास्पदेन सह अपश्यत् तयोरपि विस्मृतपूर्वत्वात् ॥ ५८ ॥

ततश्च परमकृपया कृष्णस्तस्मै स्वमाधुर्यवैभवं प्रकाशितवानित्याह—सपद्येवेति । सम्यगासमन्तात् परस्परं प्रियाणि यत्र तत् ॥ ५९ ॥

तदेवाह–नैसर्गं निसर्गोत्थं मिथो दुर्वैरं येषां तेऽपि नराजन्याघ्रादयः मित्राणीव सहैवासन् अजितस्यावासेन द्रुताः पलायिता रुट्तर्षादयः क्रोधलोभादयो यस्मात्तस्मिन् ॥ ६० ॥

---

तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम् ।
वत्सान् सखीनिव पुरा पुरतो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥ ६१ ॥
दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदण्डमिवाभिपात्य ।
स्पृष्ट्वा चतुर्मुकुटकोटिभिरङ्घ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥ ६२ ॥
उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ।
आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ६३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्येवम् इरेशे सरस्वतीशे किमिदमिति मुह्यति सति पश्चाद् द्रष्टुमनीशे सति परमोऽजः श्रीकृष्णः तथा ज्ञात्वा अजाजवनिकां अजारूपां तिरस्करिणीं तदोपरि चच्छाद प्रसारितवान् मूर्त्तिव्यूहदर्शनानर्हं मूर्त्तिव्यूहप्रकाशकसाक्षात्स्वरूपदर्शनार्हं चकारेति फलितोऽर्थः । वक्ष्यमाणम्तोत्रोपपत्तेः कुत्र मुह्यति सति ? अतर्क्यं तर्कागोचरं अनुमानादिभिः प्रतिपादयितुमशक्ये "नेन्द्रियाणि नानुमानम्" इति श्रुतेः । तर्हि कथं तज्ज्ञानं स्यादत आह, अतन्निरसनमुखब्रह्मकमितावित्ति अतद्भगवत्स्वरूपभिन्नं चिदचिदात्मकं जगत् तन्निरसनमुखेन तत्तत्पदार्थानां भगवत्स्वरूपत्वनिषेधद्वारा ब्रह्मकैर्वेदान्तैर्मितिर्ज्ञानं यस्मिन् तत्रापि स्वप्रमितिके स्वकीयभक्तप्रमितेः प्रतीतेः क आत्माश्रयो विषय इत्यर्थः । "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे" इति मेदिनीकरकोशात् तस्मिन् स्वभक्तज्ञानविषये यतः अजातः परत्र मायातः परस्मिन् अभक्तैर्मायामोहितैर्वेदान्ताभ्यासेनापि ज्ञातुमशक्ये इत्यर्थः । किं बहुना निजमहिमनि निजः असाधारणः महिमा यस्य तस्मिन् अत्यद्भुतमूर्त्तिव्यूहप्रकाशके श्रीकृष्णे कथं तेन किमाकारो मूर्त्तिव्यूहः प्रकाशितः तत्रापि स कतमः इत्येवं मुह्यति सति तं च विशेषतो द्रष्टुमनीशे सति तां चच्छादेत्यर्थः ॥ ५७ ॥

ततस्तदनन्तरं को ब्रह्मा अर्वाग् बहिः प्रतिलब्धान्यक्षीणीन्द्रियाणि येन सः परेतवदुत्थितः शवो यथा कथञ्चिदुत्तिष्ठति तद्वदुत्थितः इषीः नेत्राण्युन्मील्य सहात्मना स्वेन सह इदं विश्वम् आचष्ट समन्ततोऽपश्यत् पूर्वमनेकानि ब्रह्माण्डानि तदभिमानिनोऽनेकान् चतुर्मुखान् तत्तन्मूर्त्त्युपासकान् दृष्ट्वा पश्चादेकमात्मानं चतुर्मुखमेकमेव ब्रह्माण्डमपश्यदित्यर्थः ॥ ५८ ॥

पुरः स्थितं वृन्दावनं चापश्यत् कथम्भूतं समाप्रियं सन्तानि आसमन्ततः प्रियाणि यस्मिन् तत् ॥ ५९ ॥

यत्र वृन्दावने नैसर्गं नैसर्गिकं स्वाभाविकं दुर्वैरं येषां ते नृसिंहादयः मित्राणीव सहैवासन् आजितस्य श्रीकृष्णस्य आवासेन द्रुताः पलायिताः रुट्तर्षादयः क्रोधलोभादयो यस्मात्तस्मिन् तत्राद्वयं ब्रह्मपरमेष्ठ्यचष्टेत्युत्तरेणान्वयः ॥ ६० ॥

———

भाषा टीका ।

इरा जो सरस्वती ताके ईश स्वामी जो ब्रह्मा तिन कों, या प्रकार, स्वयं प्रकाश ज्ञान सों सुख जामें माया ते पर अपरमात्मकवस्तु के निरास द्वारा ब्रह्म [ वेद ] के शिरोभाग मों मिति नाम ज्ञान है जाकों, उपनिषदेकवेद्य ऐसो जो श्रीकृष्ण की महिमा तामें मोह होयवे पै, और ये कहा है ? या तरियां देखवे को भी असमर्थ होय वे पै, परम अज श्रीकृष्ण ब्रह्मा की दुरवस्थाकूं जान कें तत्कालमाया रूप परदा को डार देत भये ॥ ५७ ॥

तब ब्रह्मा बाहर की दृष्टि को पाय कें मृतक के नाईं उठ बैठ्यो और बड़े कठिन सों आंख खोल के अपने सहित या जगत् कों देखतो भयो ॥ ५८ ॥

और तत्काल ही चारों तरफ कों देखवे लग्यो तब सन्मुख में वृन्दावन कों देखतो भयो, कैसो वृन्दावन है, कि जनन कों जिवावन वारे वृक्षनसों व्याप्त और सदा सबके प्रिय पदार्थन सों पूरित है ॥ ५९ ॥

हे नृप ! जा वृन्दावन में स्वाभाविक वैर वारे मनुष्य सिंह मृग आदिक जीव मित्रन के तरियां हिल मिल कें रहे हैं, क्योंकि ? अजित [ श्रीकृष्ण ] के निवास सों रोष और तृष्णा सो आदि लेकें जो दुर्गुण हैं ते दूर होयगये हैं ॥ ६० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र च परमेष्ठी ब्रह्मा इव पुरा पूर्ववदेव ब्रह्म अचष्टाऽपश्यत् कथम्भूतम् ? पशुपवंशशिशुत्वं नाट्यमुद्वहत् नाट्यस्थित्यत्र हेतुः, अद्वयमित्यादि अद्वयं च वत्सान्विचिन्वत् एवं च सखीन् अगाधबोधं च विचिन्वत् अनन्तं च परितो विचिन्वत् परं च शिशुत्वमुद्वहद् ब्रह्म च सपाणिकवलमिति नाट्यमेवोद्वहदित्यर्थः ॥ ६१ ॥

निजधोरणात् स्ववाहनात्त्वरेण वेगेनाऽवतीर्य दण्डवत्पतित्वा चतुर्णां मुकुटानामग्रैरङ्घ्रियुग्मं स्पृष्ट्वा मुदश्रुजलैरानन्दाश्रुकणैः सुजलैरभिषेकमकरोदिति ॥ ६२ ॥

चिरस्य चिरं पादयोः पतन्नास्ते ॥ ६३ ॥

शनैरथोत्थाय विमृज्य लोचने मुकुन्दमुद्वीक्ष्य विनम्रकन्धरः ।
कृताञ्जलिः प्रश्रयवान् समाहितः सवेपथुर्गद्गदयैलतेलया ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे अघासुरवधो नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सवेपथुः सकम्पः अत एव गद्गदया अनुकरणमेतत् ईलया वाचा ऐलतास्तौत् ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च तत्सर्वफलं साक्षात्कारेत्याह—तत्रेति ब्रह्मेति । प्रापञ्चिकानां तेषां तत्रैवाविर्भावादिदर्शनेन तदाद्यन्तयोरेकस्वरूपोदयेन च तत्तल्लक्षणाक्रान्तत्वात् । ननु, सम्प्रति दृश्यमानप्रपञ्चस्यान्यत् कारणमस्तु तत्राह, अद्वयं "एकमेवाद्वितीयं ब्रह्म" इति श्रुतेः । सजातीयभेदरहितं ततो दृष्टं परित्यज्य किमर्थमदृष्टं कल्प्येत—तत्रेदमप्येकं तत्र तत्र स्वशक्त्येकमात्रसहायं पूर्वयुक्त्या बहुमूर्त्तित्वेऽपि सत्यज्ञानादिस्वरूपैकमूर्त्तिकमित्यर्थः । अनेन विजातीयसम्भेदश्च निषिद्धः केषाञ्चित् स्वगतभेदनिषेधश्च शक्तिशक्तिमतोरभेदविवक्षया एवं सर्वकारणत्वेन सर्वपरत्वमनन्तत्वं तथा सर्वज्ञत्वमत्यसङ्कल्पत्वसर्वात्मकत्वस्वरूपतच्छक्त्यादिभिरगाधबोधत्वं च प्रसिद्धम् । महापुरुषादिकारणनराकृतित्वेनैव सर्वबृहत्तमत्वात् ब्रह्मत्वं साधयित्वा परं ब्रह्मपदगदित्युक्तं वक्ष्यते च "अद्यैव त्वदृते" इत्यादि तदेवमनुभूतपारमैश्वर्यस्य "लोकवत्तु लीलाकैवल्यम्" । २ । १ । ३३ ॥ इति न्यायेन सर्वलीलानिधानस्य तादृशनराकृतित्वोचितपरमलीलामाधुर्यमप्यनुभूतवानित्याह, तत्र तादृशे श्रीवृन्दावने पशुपवंशशिशुत्वं श्रीगोपराजकुमारलीलत्वमेव नाट्यं वैचित्रीभिरनुकुर्वत् परमचमत्कारकारकम् उत्सर्वोत्कृष्टतया वहत् वर्तमानं विभ्रदिति तत्र च तादृशब्रह्मत्वादिधर्माणामप्युपसर्जनताजननीं ब्रह्मादिब्रह्माण्डपर्यन्तजनमनोहरां निजजनप्रेमवशतामयीं कामपि लीलामनुभूतवानित्याह—वत्सानिति । "सर्वं विधिकृतं कृष्णः सहमानोऽजगाम ह" इति तेषां ज्ञातत्वात् पुरेव विचिन्वद्दित्यर्थः । अत्यन्तहर्षाकरणानन्तरं एवं वत्सरं यावत्तेनैव रूपेण नरनबालपालकतया तत्परोक्षमवस्थितिस्तस्य गत्वेन व्रजे गमनं च स्वस्वरूपप्रकाशनेन जनकश्रुतदेवगृहगमनवत् तत्प्रकाशे कालगमनं च सर्वेषां तथापि सङ्क्षेपणैव ज्ञातं कवलादीनां तथैव स्थितेरिति ज्ञेयम् ॥ ६१ ॥

कथं तर्हि तत्राह—पृष्ठ्वामिति पादद्वयेन । तेन देवाभिमानापगममपि बोधयति, अन्यथा न हि देवा भुवं स्पृशन्तीति न सिद्ध्येत् कियद्वेदं "तद्भूरि भाग्यमिह जन्म" इत्यादिवक्ष्यमाण... कनकंति तद्वपुष ईषद्रक्तपीतवर्णत्वात् चतुर्मुकुटाग्रैः स्पृष्ट्वा... चतुर्दिक्षु स्थितानां चतुर्णामपि कृतार्थतार्थं क्रमेण परिवृत्त्या मूर्द्ध... ललाटपातनात् पश्चादानन्दोदयेन सुवर्णाभिषाङ्घ्रिस्पर्शेन मूर्द्धभि... रपि कृतवानिति ज्ञेयम्, अकृताभिषेकमित्युपपत्तौ अनेनाश्रुणामत्य... बाहुल्यं बोध्यते ॥ ६२ ॥

उत्थायोत्थाय पतन् पुनः पुनश्चिरमास्ते आसीत् लक्षणा... त्ययश्छान्दसः साक्षात्पश्यत इवोक्तिरौपचारिका वा तत्र एवं... हेतुः माहित्वमिति उत्थाने हेतुस्तु तच्छ्रीमुखदिदृक्षैव ज्ञेयः ॥ ६३ ॥

शनैरिति भक्त्युद्रेकेण प्रणामपरित्यागाशक्तेः किं वा ... भराक्रान्त्या स्वभावत एव जाड्यापत्तेः लोचने विमृज्येति ग... दश्रुधारया सम्यग्दर्शनाशक्तेः अष्टलोचनत्वेऽपि लोचनद्वयेति... श्रीभगवदभिमुखवर्त्यपेक्षया मुकुन्दमिति मुक्तिदातृत्वार्थतो... मुक्तिशब्दस्य भक्तावपि सम्मतत्वात् यथा पञ्चमे यथा ... विधानमपवर्गश्च भवतीत्यारभ्य अनन्यशक्तियोगलक्षण ... उद्वीक्ष्य उच्चैर्विलोक्य पश्चाद्विशेषतो नम्रकन्धरः सन् प्रणा... भयलज्जादिना इति श्रीब्रह्मणो भक्तिविशेषेण वत्सादि... गणनायार्थं भ्रमणं विहाय स्थिरीभूतोऽस्तावीति गम्यते । ... हित इत्यनेन सवेपथुर्गद्गदयेति प्रेमसम्पल्लक्षणेन च स्तोत्र... परमसम्यक्त्वं सूचितम्, ऐलतं ऐड् वकारोच्चारणं गद्गदभावानु... गेनैव अन्योऽन्यं पूर्वपूर्वं चोत्तरोत्तरमपि स्फुटं सर्वमतन्महा... विलोकयति सन्मतः ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पशुपवंशे गोपवंशे शिशुत्वस्य बालत्वस्य नाट्यमुद्वहत् महद्... नारायणं श्रीकृष्णाख्यं ब्रह्म अद्वयमिति निःसमाभ्यधिक... सपाणिकवलं करधृतस्निग्धकवलम् अचष्टापश्यत् ॥ ६१ ॥

निजवाहनहंसात् अवनीयं पृथिव्यां वपुरभिपात्य कनक... कोटिभिः अङ्घ्रियुगं स्पृष्ट्वा नत्वा च मुदश्रुसुजलैरभिषि... कृत ब्रह्मेत्यध्याहारः परमेष्ठीति पूर्वपदस्यान्वयो वा ॥ ६२ ॥

उत्थायोत्थाय श्रीकृष्णपदयोः पतन् चिरमास्ते ॥ ६३ ॥

अथ तन्महित्वं शनैः स्मरन्नुत्थायाश्रुपिच्छिले ...

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विमृज्य मुकुन्दं स्वस्य दमनोपयोग्युपायमहावदान्यं तं मोक्षदमुदूवीक्ष्य तदानीं तस्य स्वाभाविककृष्णास्य प्रागदृष्टं महिम्नं पुनः पुनः स्मृत्वा कृपाऽनुरञ्जितं लोचनयुगलं विचर्चियोदूवीक्ष्य स्वस्य तत्कृपाविस्मरणेन कृतघ्नत्वमिवालोक्य विनम्रकन्धरः तादृशापराधनिवृत्त्यर्थं कृताञ्जलिः उत्तरत्रापराधस्यानुवृत्तिनिराकरिष्णुरिव प्रश्रयवान् समाहितः श्रीमन्नारायणस्य तस्य ध्यानानन्दमग्नोऽत एव सवेपथुः उपर्यपि गद्गदया इलया वाचया तं साक्षात्कृतस्वरूपरूपगुणविभूतिकं ऐलताऽस्तौत् ॥ ६४ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र च परमेष्ठी ब्रह्मा पुरेव पूर्ववत्तथैवापश्यत् कथम्भूतं गोपालशिशुत्वनटनमुद्वहत् श्रीकृष्णात्मकं परंब्रह्माद्वयं स्वतुल्यवस्त्वन्तररहितं स्वतुल्यगोपबालकान्तररहितं वा अपरिच्छिन्नज्ञानस्वरूपम् अनन्तं त्रिविधपरिच्छेदरहितं एकमसहायं पाणौ कवलेन सहितं सखीन् वत्सांश्च विचिन्वत् एवम्भूतं कृष्णात्मकं ब्रह्माऽपश्यदित्यर्थः ॥ ६१ ॥

इत्थं दृष्ट्वा त्वरया निजधौरेयात्स्ववाहनादवतीर्य पृथिव्यां कनकदण्डमिव स्वशरीरं पातयित्वा चतुर्णां मुकुटानां किरीटानां कोटिभिरग्रैरङ्घ्रियुग्मं स्पृष्ट्वा आनन्दाश्रुरूपैः सलिलैः आभिषेकमकृताकरोत् ॥ ६२ ॥

चिरस्य चिरं पदयोः पतन् उत्थायोत्थायेत्यनेन पुनः पुनः पतनानि सूचितम् । प्रागदृष्टं श्रीकृष्णस्य माहात्म्यं पुनः पुनः स्मृत्वाऽऽस्त इत्यर्थः ॥ ६३ ॥

अथ शनैरुत्थाय नेत्रे निमृज्य मुकुन्दम् उदूवीक्ष्य विनम्रा कन्धरा ग्रीवा यस्य सः अत एव बद्धाञ्जलिः विनयवानेकाग्रचित्तः सवेपथुः सकम्पः अत एव गद्गदया वाचया ऐलत तुष्टाव ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रेति । ब्रह्म "अद्वैत त्वदतेऽस्य" इत्यादिन्यायेन नराकृतितयैव परब्रह्म तदपश्यत् अत एवाद्वयमित्यादि एवमपि "लोकवत्तु लीलाकैवल्यम्" २।१।३३। इति न्यायेन सर्वलीलाविधानस्यापि तस्य तादृशाभिप्रायाभीष्टलीला सद्यानुभूतवानित्याह—तत्रेति । श्रीगोपराजकुलनित्यकलीलत्वमेन नाट्यं तद्ब्रह्मत्वकारकं तदुरूपतया वहत् यत्नेन बिभ्रत् तत्राप्युपसर्जनीकृतं परब्रह्मस्वभावां निजजनप्रेमवशतामयीं काञ्चित् तदन्तरीयां लीलामनुभूतवानित्याह—वत्सानिति । अन्यत् टीकादृष्टम् ॥ ६१—६२ ॥

पुनः पुनश्चिरमास्ते ऐलत ऐट्ट ॥ ६३ ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्मिन् वने भगवन्तमपि पूर्ववद्दृष्टवानित्याह—तत्रोद्वहदिति । तत्र वृन्दावने उद्वहत् पशुपवंशशिशुत्वनाट्यं येन वस्तुतस्त्वद्वैतं ब्रह्मैव परं कालादिनियन्तृ अनन्तमत एवापरिच्छिन्नम् अगाधो बोधो यस्य उद्वहदिति भिन्नपदं वा विचिन्वदित्यनेन सत्यध्यते सखीन् वत्सांश्च परितो विचिन्वन्तं विचिन्वन् यो वर्तते तस्मिन् योजना एकमेव यतोत् पूर्वमेव गृहीतं कवलं हस्ते यस्य पाणौ कवलं तेन सहितः अचष्ट दृष्टवान् ॥ ६१ ॥

ततो भगवन्तं दृष्ट्वा त्वरया निजधौरेयात् विमानात् अवतीर्य विमानं परित्यज्य भूमौ समागत्य पृथिव्यां स्वस्य वपुः कनकदण्डमिवाऽऽसमन्तात् पातयित्वा परिवर्तनेन चतुर्मुकुटकोटिभिरङ्घ्रियुगं स्पृष्ट्वा पुनर्भोचापि नत्वा अश्रुजलैः प्रमाश्रुभिः पादयुगस्यैवाभिषेकमकृत ॥ ६२ ॥

ततोऽपि पुनः पुनरुत्थाय कृष्णस्य पादयोः पतन् कतध इवास्ते तत्र हेतुः, प्रागदृष्टं महत्त्वं पुनः पुनः स्मृत्वा ततः पुनर्मूर्च्छां परित्यज्य शनैरुत्थाय नेत्रे विमृज्य ततो निर्मलचक्षुषा मुकुन्दमुद्वीक्ष्य विशेषेण नम्रा कन्धरा यस्य तादृशो जातः ततः कृताञ्जलिः प्रश्रयवान् विनयसहितः समाहितः सावधानः सवेपथुः कम्पमानः गद्गदया इलया सरस्वत्या ऐलत स्तोत्रं कृतवान् ॥ ६३ ॥ ६४ ॥

इति श्रीभागवते महापुराणे श्रीमद्वल्लभदीक्षितविरचितायां
श्रीसुबोधिन्यां दशमस्कन्धविवरणे प्रथमा-
ऽध्यायत्रये द्वितीयाध्यायविवरणम् ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च स्वप्नरूपभूतानि चतुर्भुजत्वादीनि योगमाययैवाच्छाद्य "एकमेवाद्वयं ब्रह्म" इति श्रुत्युक्तं स्वदर्शिनमवेक्ष्य रूपमूलभूतं स्वरूपं तं दर्शयामासेत्याह—तत्र वृन्दावने परमेष्ठी ब्रह्मा ब्रह्म अचष्ट अपश्यत् कीदृशं पशुपवंशशिशुत्वेऽपि प्रौढतरचतुराचितम् नाट्यं सम्प्रभुर्यया मोहिता एवति ब्रह्मायां शिक्षयामास ग्राहयितुं शाद्वले यस्मात् दृष्ट्वापि पुलिनेऽपि सखीन् कदृष्टापि दर्शनाभिनयं नटानां कर्म उद्वहत् दर्शितानां ब्रह्मादिस्तम्बपर्यन्तानां योगमाययाच्छादनादद्वयं सर्वमूलभूतस्वरूपत्वात् परं दर्शितैश्वर्यैश्चतुर्भुजैरप्यनपेक्ष्यं अल्पपर्वां चिदानन्दमयपरमसहस्रमहावैभवानां विद्यमानत्वादनन्तं परमप्रभुत्वो घराकस्य का गणना श्रीबलदेवाद्यैरन्तरङ्गैरपि दुरवगाह्यत्वादगाधबोधं उक्तलक्षणात् नाट्यात् तस्मात् सखींश्च पुरेव परित इतस्ततो विचिन्वदिति वत्सपालानेषां पूर्ववद् ब्रह्मणा मायामोहितत्वात् यथार्थमानगमम् अधुना तु मायानिर्मुक्तत्वात् शाद्वले तृणं चरतो तस्मात् पुलिने च भुञ्जानान् बालान् पश्यता स्वापह्नात्मायिकवत्सबालकांश्च अपश्यता तेन सम्मोहनार्थमानयमात्रमिदम्

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इत्यवगतम् अत एव नौमीड्य ! ते इत्यग्रिमस्तुतिवाक्येन वत्सपालान्विचिन्वते इति विशेषणं नोपन्यस्तं स्वरूपभूतानां वासुदेवमूर्तीनां स्वभेदानां योगमाययैवाच्छादनादेकं भक्तमनोहरमहामधुरलीलामयत्वात्सपाणिकवलम् अत्र कश्चिदधिकारिणि निकृष्टे धर्मधर्मिभावरहितं निराकारं ज्ञानमात्रं यत् ब्रह्मेति प्रसिद्धं तदपि योगमाययैव तद्दृष्टेः प्रति चिदानन्दमयानामपि रूपगुणनामलीलापरिकरधामादीनामाच्छादनाज्ज्ञानमात्रस्यैव प्रकाशनात् सङ्गतमित्येवमेव मिथो विरुद्धार्थो अपि श्रुतयो निर्विरोधमेव सङ्गमयितव्या इति दिक् । अत्र पशुपवंशशिशुत्वं नाट्यमेवोद्वहन्न तु स्वरूपमिति व्याख्यानं श्रीभागवतस्य मोहिनीत्वप्रतिपादकमेव "नौमीड्यतेऽभ्रवपुषे "इत्यत्र नौमीत्युक्त्वा प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते प्रयोजनापेक्षायामेवंभूतो भगवानेव प्रयोजनमिति व्याचक्षाणानां स्वामिचरणानामपि नाभिमतमित्यवसीयते न ह्यवास्तवीभूतं वस्तु स्तुतिप्रयोजनीक्रियते इत्यवधेयम् ॥ ६१ ॥

दृष्ट्वेति इदमेव नराकृति परं ब्रह्म सर्वमूलभूतमित्यवगम्य त्वरया त्वरया निजधोरणात् स्ववाहनात् पृथ्व्यां वपुरभिपात्येति न हि देवा भुवं स्पृशन्तीति नियमोल्लङ्घनाद्ब्रह्मणोऽस्य देवत्वाभिमानापगमो ज्ञेयः चतुर्णां मुकुटानामग्रैरङ्घ्रियुग्मं स्पृष्ट्वेति चतुर्दिक्स्थितानां चतुर्णामपि मुखानां बलेन कृष्णाभिमुखीकरणात् अभिषेकमर्थादङ्घ्रियुग्मस्याकरोदित्युत्थायोत्थाय भूमौ द्रुतपतने अश्रूणां बाहुल्येन पुरा वेगाच्चरणयोर्निपातो ज्ञेयः अश्रूणां भक्त्यनुभावरूपत्वेन पावित्र्यात् सुपदः प्रयोगः ॥६२॥

पतन्नास्ते इति बहुतरप्रणामान्ते आनन्दजाड्योदयात् वर्तमानप्रयोगो मुनेस्तदानीं तत्साक्षात्कारानुभवात् ॥ ६३ ॥

लोचने इति द्विवं पाणिद्वयेन लोचनद्वयस्यैव युगपन्मार्जनोपपत्तेः गद्गदया गद्गदभाववत्या इलया वाचा ऐलत ऐड्ड अस्तौत् ॥ ६४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोदशोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥१३॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र वृन्दावने स परमेष्ठी ब्रह्मा ब्रह्म मुमुक्षुभिर्जिज्ञास्यं यत् पूर्णब्रह्मांकमद्वस्तु तदेव अपश्यत् । ननु, दृश्यस्य ब्रह्मत्वं नेति चेन्न "आत्मा वा अरे द्रष्टव्यः" सदा पश्यन्ति सूरयः" इत्यादिश्रुतेः । कथम्भूतं ? परं पूर्णम् अद्वयं निःसमानातिशयम् अनन्तमियत्तानवच्छिन्नम् अगाधबोधमनवच्छिन्नज्ञानगुणं पुरेव पाणिकवलं पाणौ कवलं यस्य तत् एकं वत्सपालविरहितम् अत एव सर्वतो वत्सान्सखींश्च विचिन्वत् । नन्विदं बृहद्‌शक्तिमतः पूर्णस्य पाणिकवलत्वं अद्वयस्यागाधबोधस्य वत्सबालान्वेषणपरत्वं किमभिप्रायमित्यत आह । पशुपवंशशिशुत्वनाट्यमुद्वहादिति । भक्तवात्सल्येन श्रीनन्दपुत्रत्वलीलामुद्वहदित्यर्थः ॥ ६१ ॥

तत्परंब्रह्म दृष्ट्वा त्वरेण त्वरितं निजधोरणात: स्वकीयवाहनात् अवतीर्य कनकदण्डमिव पृथ्व्यां वपुः शरीरं निपात्य चतुर्णां मुकुटानामग्रैरङ्घ्रियुग्मं स्पृष्ट्वा मुदश्रुसुजलैरानन्दाश्रुभिः शोभनैर्जलैरभिषेकमकृताऽकरोत् ॥ ६२ ॥

चिरस्य चिरं पदयोः पतन्नास्ते ॥ ६३ ॥

इलया वाचा ऐलताऽस्तौत् ॥ ६४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोदशाध्यायार्थप्रकाशः ॥ १३ ॥

---

### भाषा टीका ।

या वृन्दावन में पशुपालन के वंश के शिशुपने के नाट्य को धारण करन वारे परब्रह्म अद्वय अर्थात् एकही अगाध बोध पहिले के नाईं बछरा और बालकन कों चारों ओर ढूंढत और हाथ में दध्योदन को कवल लिये या प्रकार के प्रभु को एक ब्रह्मा ने देखे ॥ ६१ ॥

देखकें बड़े वेग सों हंस पैसों उतर कें पृथिवी में सोने की छड़ी के नाईं अपने शरीर कों गिरायकें एक संग ब्रह्माने एसी लगाई, कि—चारों मुकुटन की अनीन सों आपके चरण कमल को स्पर्श होय गयो, या प्रकार नमस्कार करकें श्रीचरणों में आंखन सों आनन्द जलको अभिषेक करत भयो ॥ ६२ ॥

वार वार उठ २ कें बड़ी देर ताईं चरणन में गिरतो भयो पहिले देखी भई भगवान् की महिमा कों वार २ स्मरण कर २ कें खड़ो होतो भयो ॥ ६३ ॥

फिर धीरे सों उठकें नेत्रन कों पोंछकें श्रीमुकुन्द कों देखकें नम्र होयकें हाथ जोरकें विनय पूर्वक सावधानी सों कांपतो भयो गद्गदवाणी सों स्तुति करन लग्यो ॥ ६४ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें तेरहवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषा टीका समाप्ता ॥ १३ ॥
श्रीरुक्मिणीरमणो जयति ।

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

# ॥ श्रीब्रह्मस्तुतिः ॥

## ॥ चतुर्दशोऽध्यायः ॥

—:○:*:○:—

ब्रह्मोवाच ।

नौमीड्य ! तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय ।
वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपाङ्गजाय ॥ १ ॥
अस्यापि देव ! वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ।
नेशे महि त्ववसितुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीलक्ष्मीनृसिंहाय नमः ।

चतुर्दशेऽद्भुतं दृष्ट्वा पूर्वागन्तुकनिश्चयम् ।
मनीशः कर्त्तुमस्तौषीत् कृष्णं ब्रह्मा विमोहितः ॥

स्वकृतापराधेन भिया सकम्पतया भगवन्महिमानमनवगाहमानो यथादृष्टस्वरूपमेव कीर्तयन्नाह—नौमीति । हे ईड्य ! स्तुत्य ! ते तुभ्यं नौमि द्वितीयार्थे चतुर्थी । अथवा नौमीत्युक्त्या प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते प्रयोजनापेक्षायामेवंभूतो भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी । यद्वा, तुभ्यं त्वामेव प्रसादयितुं त्वामेव स्तौमीत्यर्थः । अभ्रवद्वपुर्यस्य तस्मै तडिद्वदम्बरं यस्य तस्मै गुञ्जाभिरवतंसौ कर्णभूषणे परिपिच्छं च बर्हापीडं तैर्लसन्मुखं यस्य तस्मै वन्याः स्रजो यस्य तस्मै कवलादिभिर्लक्ष्मभिः श्रीः शोभा यस्य तस्मै मृदू पादौ यस्य तस्मै पशुपस्याङ्गजाय ॥ १ ॥

ननु, नौमीति प्रतिज्ञाय किं स्वरूपानुवादमात्रं क्रियते अत आह—अस्यापीति । भो देव ! अस्यापि सुलभत्वेन प्रकाशितस्यापि तव वपुषोऽवतारस्य महि महिमानमवसितुं ज्ञातुं कोऽपि को ब्रह्मा अहमपि नेशे न शक्नोमि । यद्वा, कश्चिदपि नेशे न समर्थ आसीत् सुलभत्वाय विशेषणद्वयं मदनुग्रहस्य ममानुग्रहो यस्मात्तन्मदनुग्रहं तस्य किं च स्वेच्छामयस्य श्रीयानां भक्तानां यथा यथेच्छा तथा तथा भवतः तर्हि महिमानं ज्ञातुं न शक्यतेऽत आह, न तु भूतमयस्याचिन्त्यशुद्धसत्त्वात्मकस्य यदाऽस्यैवं तदा कथं पुनः साक्षात्तव केवलस्यात्मसुखानुभूतेरेव स्वसुखानुभवमात्रस्यावतारिणो गुणातीतस्य महिमानमान्तरेण निरुद्धेनापि मनसा को वा ज्ञातुं समर्थो भवेत् । अथवा भूतमयस्याऽपि तु विराड्रूपस्य तव स्वनियम्यस्य वपुषो महिमानमेवावसितुं कोऽपि नेशे तदा साक्षात्तवैवासाधारणस्य नियम्यनियन्तृभेदरहितस्योक्तलक्षणस्यास्य महिमानमवसितुं कोऽपि नेश इति किमु वक्तव्यमित्यर्थः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीवृन्दावनचन्द्राय नमः ।

एवं यस्य रूपस्य ज्ञातपरमैश्वर्यमाधुर्यस्तद्रूपमेव निजपरमपुरुषार्थत्वेन स्तोतुमुपक्रमते—नौमीति । हे ईड्य ! इति त्वमेव स्तुतियोग्य इत्यर्थः । परब्रह्मणस्तदैश्वर्यमाधुर्ययोरेनाद्यसर्वप्रापञ्चिकाप्रापञ्चिकनिर्गमप्रवेशदर्शनात् अतः स्तौमि त्वां किमर्थं ते तुभ्यं त्वां प्राप्तुं "क्रियार्थोपपदस्य च कर्मणि स्थानिनः"(२।३।१४)इति पयोभ्यो व्रजतीतिवच्चतुर्थी । ननु, ब्रह्मरूपेण रूपान्तरेण वा मत्साम्यं स्यात् तत्राह अपो विमर्शोत्थभ्रं नवीनश्याममेघः तद्वत् स्निग्धं कृष्णकान्ति वपुर्यस्य तडिद्वत्पीतमम्बरं यस्य तस्मै । ननु, ईदृशाः श्रीवैकुण्ठेश्वरादयोऽपि सम्भवन्तीत्याशङ्क्याह—गुञ्जेत्यादि । परितः पिच्छानि यस्य तत्परिपिच्छं बर्हापीडं वन्या वनोद्भवा नानावर्णपत्रपुष्पादिमय्यः स्रजो यस्य तस्मै तत्र च विशेषतो वादयलीलयाकृष्टचित्तस्तान्येवोद्दिशति—कवलेति । अत्र कवलं दध्योदनग्रासो वामहस्ते, वामकक्षे वेत्रविषाणे जठरपटसन्धौ वेणुरिति पूर्वोक्तानुसारेण बोद्धव्यं तान्येव लक्ष्माणि असाधारणलक्षणानि अत एव तैः श्रीः शोभा यस्य तस्मै मृदुपद इति वाक्यमेवाभिप्रेतं साक्षात्तदुक्तिः पितृत्वगुरुत्वप्रभुत्वादिना परमगौरवात् अनुक्तमन्यद्वृन्दावनविहारित्वं वनधातुर्विचित्रताङ्कत्वादिकं च सङ्गृह्णन् सर्वान्ते सर्वविशेषणाश्रयमभीष्टं विशेषणमाह—पशुपस्य श्रीनन्दराजस्य अङ्गजाय पुत्राय तत्कुमारत्वेन ख्यात एव नित्यम्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नत्तत्समवेतत्वादित्येतच्छ्रीवाक्यगोपाबरूपं त्वामत्र प्राप्तुं त्वामेव नौमीति परमलालसया प्रागेव प्रयोजनमुद्दिष्टम् ॥ १ ॥

अस्यापीति, तेऽव्याख्यातं तत्र नन्वित्याद्यन्ते उत्कर्षवर्णनमेव हि स्तुतिर्नामेति हेतुरध्याहार्यः तव वपुष इति चतुर्थचरणादत्रापि तवेति योजनया साधितं तव यद्वपुः कश्चिदप्यवतारस्तस्येत्यर्थः । कीदृशस्यापि तस्य तत्राह—अस्यापीति । जगति सुलभत्वेन प्रकाशितत्वात्तत्रेदन्तानिर्देशं प्राप्तस्येत्यर्थः । मदनुग्रहस्येति मदीयसृष्टिपालकत्वादिति भावः । तदेतन्मते तु । ननु भूतमयस्येति तवर्गपञ्चमत्वयादिभागमय एव पाठः न तु तत्पञ्चमप्रथमादिभागमयः न तु वा तत्प्रथमपञ्चमादिभागमयः उत्तरव्याख्यायां तयोर्न तु तन्वोरस्पर्शात् तस्माद्यत्तु प्रथमव्याख्यायां नन्विति व्याख्यातं तत्खलु नु कारस्यैव तुकारार्थतया स्वीकाराज्ज्ञेयं नेशे महित्ववसितुं इत्यस्याप्रश्नायोजनया वा अत्र नस्तु वितर्कार्थो ज्ञेयः द्वितीयार्थे ननु निश्चयार्थो ज्ञेयः । नन्विति तवर्गपञ्चमान्तपाठस्तु टीकायां मूले च प्रायः सर्वत्र दृश्यते तस्मादथवेत्यस्य पाठान्तर इत्येवार्थो ज्ञेयः । साक्षात्तवेति स्वयं भगवतस्तवेत्यर्थः । केवलस्येत्येवकारव्याख्या तत्तदवतारानतीत्य विराजमानस्येत्यर्थः । गुणातीतस्येति, तत्र च पुरुषत्रिदेवीवत्तु त्रैगुण्यतत्तद्गुणपरिच्छिन्नाधिकारस्येत्यर्थः । स्वसुखानुभूतिमात्रस्यापि तत्तदवतारित्वं महिमवत्त्वं च "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति "को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिप्रामाण्याद्गम्यते । न च निर्विशेषतया तदाविर्भावविशेषस्य" ब्रह्मण एव दुर्ज्ञेयताधिक्यमत्र प्रतिपाद्यते तथापि "भूमन् महिमागुणस्य ते" इत्याद्युत्तरवाक्यद्वये सविशेषस्यैव तदाधिक्यं व्याख्यास्यते अथवात्र निराकृतरूपस्यापि दुर्ज्ञेयत्वोल्लेखः स्वयं भगवति तस्मिन् परमकैमुत्यं प्रतिपादयति स्म अस्मिन्नेव पक्षे तनुभूतमयस्येति चित्सुखपाठः । सङ्कल्पे तनुभिः सूक्ष्मैराब्रह्मस्तम्बपर्यन्तैर्व्याप्तत्वादिति हितदूव्याख्या पूर्वस्मिन् पक्षे तु तनुसूक्ष्ममचिन्त्यं यद्भूतं शुद्धसत्त्वात्मकं भगवत्तत्त्वं तत्स्वरूपस्येत्यर्थः । "अस्य महतो भूतस्य" इति श्रुतेः । "लोकनाथो महद्भूतम्" इति सहस्रनामस्तोत्राच्च नियन्तृनियम्यभेदरहितस्येति विराड्रूपस्य त्वाश्रयस्येत्युक्तत्वात् न तस्य कश्चिन्नियन्ता न च स कस्यचिन्नियम्य इति विवक्षया उत्तलक्षणस्येति अस्मद्वपुरादिविशेषणैर्दर्शितस्येत्यर्थः । अथ स्वव्याख्या । ननु, ममैतादृशं स्वरूपमनूद्य किं स्तौषीत्याशङ्क्या सम्भ्रमं तत्र निजासामर्थ्यमाह—अस्यापीति । अस्य जगतो यद्वैराजपुराधिदैविकरूपं नारायणाख्यं तव वपुरधुना दर्शितेषु चतुर्भुजरूपेष्वेकमपि वपुस्तस्यापीति योज्यम् । "नारायणोऽङ्गं नरभूजलायनात्" इति हि वक्ष्यते वपुषो विशेषणानि मदनुग्रहस्येत्यादीनि साक्षात्तवैवेति पूर्ववत् आत्मना स्वयमेव कर्त्रा सुखानुभूतिर्यस्य तस्यानन्दस्येत्यर्थः । यद्वा अस्य तव यद्वपुरधुनादर्शितेषु चतुर्भुजरूपेष्वेकमपि वपुस्तस्यापीति योज्यम् । अत्र मदनुग्रहस्येति तद्दर्शनादेव हि त्वन्महिमा ज्ञात इति भावः ॥ २ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ॥

चत्वारिंशत्सङ्ख्यपद्यैर्ब्रह्मा कृष्णं स्तुवन्प्रभुम् ॥
स्वरूपोपायसाध्यानि विविच्याह चतुर्दशे ॥ १ ॥

तत्र तावद्ब्रह्माऽष्टाभिः स्वरूपरूपगुणविभूतिविवे... कर्मज्ञानभक्तिप्रपत्तिविवेकं च स्पष्टयति—तत्तद्वादिभि... सञ्चार्यप्राप्त एवेति तत्र प्रयत्यते, तत्र प्र... स्वरूपादपि रूपस्याऽऽश्रयार्हितत्वमाह—नौमीति । हे ईड्य स्तुत्य ! अहं ते त्वदर्थं त्वां नौमि स्तौमि प्रणमामि ... अनेन माधवस्यैवोपायोपेयत्वं व्यञ्जितम् । श्रीभगवद्रूपस्य ... घनस्वनत्वात् तस्य स्वरूपादपि परमभोग्यत्वमाह, अभ्र... अभ्रवत् श्यामसुन्दराय तडिदम्बराय तडिद्वत्पीताम्बरयुक्तं गु... मालिकयाऽवतंसः कर्णावतंसः परिपिच्छं परितः सर्वतः ब... पिच्छं जात्यैकत्वं बहुमयूरचन्द्रिकारचितं मुकुटं तेन लसत् ... मानं मुखं यस्य तस्मै. वन्या वनेभवा वनमाला आपादल... स्रग्यस्य तस्मै एतेषां पदानां ( शैष्यत्वंस्थै ) सत्त्वतमोमयरा... मोमयान्तःकरणस्याऽपि स्वदर्शनकर्तुः स्वकर्णप्रान्तता... "उदाराः सर्व एवैते" इति न्यायेन अहृदयपूर्वकं स्वा... कर्तृनेत्राणां चन्द्रिकारूपतया शिरोधारणम् अक्षाद्यर्पितपत्रपुष्प... भाजादीनामपि चरणधार्यत्वादिकमत्र व्यङ्ग्यं ज्ञेयम् । ... मीति वर्त्तमाननिर्देशसार्थक्यायैव कवलं केवलकर्मजडानां ... ताडनाय वेत्रम्, तेषामेव स्वज्ञापनाय उच्चशब्दकारि वि... स्वसङ्केतितार्थज्ञानिष्णातमभूतप्रियनित्यवर्गेषु स्वाभिप्रायज्ञा... शब्दं वेणुं तेषां नित्यसंश्लेषव्यञ्जकं श्रीवत्सलक्ष्म तत्स्म... स्मारकत्वन्यायेन श्रीश्च एतैः श्रीः शोभा यस्य तस्मै कोमल... कस्वधामश्रीवृन्दावनशैत्यकारिणी मृदुनी पदे यस्य ... नौमीति शरणागतस्य मेऽञ्जलिबन्धमात्रेणाऽऽराध्य ... पशवः पाशाश्च स्वसङ्कल्पजाता यस्य तस्मै पशुपः ... अङ्गजः शरीरभूतब्रह्मणः जातो यस्य तस्मै इति वा ... प्रथमपद्यव्यञ्जितं सुधीभिरनुभाव्यं नन्दस्याङ्गजः मानसः ... तुल्यसुखदायितया पुत्र इव "अङ्गभूर्मानसः पुत्र." ... कोशात् ॥ १ ॥

रूपविवेकमनुवदन्स्वरूपविवेकमाह—हे देव ! क्रीडाप्र... मय्यनुग्रहो यस्मात्तन्मदनुग्रहं तस्य स्वेच्छामयस्य स्वभू... प्रचुरस्य स्वसङ्कल्पस्यैव सर्वरूपाविर्भावकारणत्वात् ... पाञ्चभौतिकस्य कः ब्रह्मा अहमपि जीव इति वा नेशे न ... महि माहात्म्यञ्च: अस्य शुद्धसत्त्वस्य वपुषोऽपीत्येवं ... तारविग्रहाणां सर्वेषां गुणविभूतीनाञ्च महानमितुं न ... मिति भावः । भगवत्स्वरूपज्ञानदौर्लभ्येऽपि तत्प्राप्त्युपाय ... त्येनाह, आत्मसुखानुभूतेः स्वस्वरूपानन्दानुभवकर्तुः साक्षा... च्चिदानन्दस्वरूपगुणविभूतिकस्य अत एव तवैव मनसा स... मन्तरेण विना साक्षान्महि अवसितुमहं कोऽपि नेशे ... मुत वक्तव्यं स्वतस्वरूपज्ञानन्तु त्वदिच्छयैवेति भावः ॥ २ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रीमते रामानुजाय नमः ।

वात्सल्यसौशील्यगुणाविष्कारपूर्वकं स्वापराधं क्षमापयितुकामः तावत् स्वस्मायातितरोत्वत्प्रपत्तिरेवोपायो नान्योऽस्तीत्यभिप्रायेण प्रस्तुतरूपयुक्तं भगवन्तं शरणं व्रजति—नौमीति । हे ईड्य ! ते तुभ्यं केवलं नौमि "णु स्तुतौ" स्तुतिरत्रापराधसहनमायातरयातद्र्यंशरणत्वाद्युपयुक्तवात्सल्यक्षमादिगुणाविष्कारपूर्वकोपायत्वाध्यवसायरूपा विवक्षिता स्तुतेर्गुणनिष्ठगुणाभिधानरूपत्वात्तस्याश्चोपायत्वाध्यवसायार्थत्वाद्धातोर्लक्षणया तत्र वृत्तिसम्भवात् इति कर्मण एव सम्प्रदानत्वविवक्षया चतुर्थी तदतिरेकेण पृथक् स्तुतेः सानपत्वनिरासाय तथाविवक्षा कृता उपायत्वाध्यवसायात्मकप्रपदनेऽपि तस्यैव प्रयोजककर्तृत्वेन तस्या अपि तदधीनत्वेन तस्याः स्वतः साधनत्वाभावादिति भावः । तावन्नौम्यदियाद्य नन्तकल्याणगुणनिलयस्य भगवतः कृष्णस्य सौशील्यमाविष्कुर्वन्विशिनष्टि—पशुपाङ्गजाय नन्दसुनाय निःसीममहिम्नः सौशील्यमन्तरेण पशुपाङ्गजत्वासम्भवेन सौशील्यमाविष्कृतं तथ महतो मन्दैः सह संश्लेषस्वभावत्वं मृदू पादौ यस्य कवलादिभिर्वक्ष्यमाणैः चिन्हैः शोभा यस्य वनजानां पुष्पाणां स्रग्यस्य गुञ्जाभिरवतंसौ कर्णभूषणौ परितः पिच्छं बर्हापीडं तैर्लसन्मुखं तडिद्विभास्वरं यस्याभ्रवद्वपुर्यस्य तस्मै ते नौमीत्यन्वयः ॥ १ ॥

निःसीममहिमत्वमेव कैमुत्यन्यायेन दर्शयन् स्तौति—अस्यापीति । अस्य मह्यं प्रदर्शितस्य पशुपाङ्गजरूपस्यापि वपुषो महित्वं महि महिमानमन्तरेण मनसाऽऽन्तरिन्द्रियेण मनसा व्यवसितुमध्यवसितुं कोऽपि ब्रह्मापि अहमपि सन् नेशे न प्रभवामि किन्तु पुनरात्मनः परमात्मनः सुखानुभूतेरनुकूलज्ञानस्वरूपस्य तव महिमानमवसितुं नेश इत्यन्वयः । किन्तद्वपुषो महित्वं यदवसितुं न प्रभवतीत्यपेक्षायां तद्वाचामगोचरमित्यभिप्रायेणास्मदादिवपुषो वैलक्षण्यमात्रं वक्तीति तद्वपुर्विशिनष्टि—मदनुग्रहस्य मय्यनुग्रहो यस्य मत्प्रार्थनां सफलीकर्तुमुपात्तस्येत्यर्थः स्वेच्छामयस्य स्वेच्छात आगतः स्वेच्छामयः "तत आगत" ४ । ३ । ७४ । इत्यधिकारे "मयट्च" ४ । ३ । ८२ इति मयट् स्वेच्छामात्रपरिगृहीतस्य नत्वस्मदादिजीववपुर्वत्कर्मोपात्तस्येत्यर्थः । किञ्च ननु, भूतमयस्याभूतमयसङ्घसंस्थानरूपस्य "न भूतसंघसंस्थानो देहोऽस्य परमात्मन" इति वचनार्थोऽत्रानुसन्धेयः शुद्धसत्त्वमयस्येति भावः ॥ २ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

श्रीमते रामानुजाय नमः ॥

श्रीनिवासाङ्घ्रिदासेन नत्वा श्रीयतिशेखरम् ।
मत्या ब्रह्मस्तुतेर्व्याख्या क्रियते तत्त्वदीपिका ॥ १ ॥

अथ स्वस्य सर्वोत्पादकत्वागतपितामहत्वाभिमानरूपस्वातन्त्र्येण विस्मृतपरशेषत्वैकस्वरूपतया भगवति प्रकटितस्वमायत्वेन पूर्वं स्वकृतापराधतया सभयः कम्पमानो ज्ञातभगवच्छेषत्वैकरूपपारतन्त्र्यस्तन्महिम्न इयत्तां वक्तुमशक्यतया स्वस्यानभिज्ञत्वं ख्यापयन् स्वापराधं क्षमापयंश्चेदानीं यथादृष्टस्वरूपं श्रीकृष्णं स्तौति, नौमीति । हे ईड्य ! स्तुत्य ! ते तुभ्यं नौमि कारकाणां शेषविवक्षितत्वाद्द्वितीयार्थे चतुर्थी त्वामित्यर्थः । यद्वा, इतः पूर्वं सर्वेश्वरोऽहमेवेत्येवं रूपस्वातन्त्र्यात् निरस्तत्वच्छेषत्वैकस्वरूपोऽभवमिति कृतापराधो जातः, इदानीं तु त्वत्कृपया सञ्जातत्वच्छेषत्वज्ञानस्त्वामनुकूलयितुं नौमीत्युच्यत इत्यर्थः । अथवा नौमीत्यत्रायमाशयः ममेयं नमस्क्रिया तुभ्यमेवास्तु तत्कृतस्तवैव निरूपाधिकनन्तव्यत्वात् अस्मदादीनां सर्वेषां निरूपाधिकनन्तृत्वात् तथाच हारीतः "नन्तव्यः परमः शेषी शेषा नन्तार ईरिताः" इति । अन्यत्रापि—

"दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ।
नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ॥
स्वात्मन्यात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम् ।
स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर" ॥

इति. तथा च प्रह्लादवाक्यं श्रीनृसिंहंप्रति "अहं त्वकामस्त्वद्भक्तस्त्वञ्च स्वाम्यनपाश्रयः" इति अनपाश्रयो निरूपाधिक इत्यर्थः । अत्रापि अग्रे वक्ष्यति स्वयम्—

"तदस्तु मे नाथ स भूरिभागो ।
भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ॥
येनाऽहमेकोऽपि भवज्जनानाम् ।
भूत्वा निषेवे तव पादपल्लवम्" ॥

इति, अतो ब्रह्मणा ईश्वरजीवयोः पारमार्थिकं भेदज्ञानं सञ्जातमिति तं स्तौतीति, ये पुनर्जीवेश्वरयोरौपाधिकभेदं स्वीकृत्य तन्निवृत्त्यै पारमार्थिकाभेदज्ञानमेवेति वदन्ति. ते प्रष्टव्याः, अयं चतुर्मुखः सञ्जातपारमार्थिकाभेदज्ञानो न वा ? नाद्यः पक्षः पारमार्थिकाभेदज्ञानिनो भेदपूर्वकस्तुत्यभावात् न च नष्टस्य भेदज्ञानस्यानुवृत्तिर्वक्तुं शक्यते ज्ञानोत्तरकाले तस्या अनुदयात् द्विचन्द्रज्ञानादौ तु पारमार्थिकदोषस्य विद्यमानत्वादनुवृत्तिर्युक्ता सा च पारमार्थिकचन्द्रैकत्वज्ञानादकिञ्चित्करा इह तु सकारणस्य सकार्यस्य चाज्ञानस्य पारमार्थिकाभेदज्ञानविनष्टत्वान्न कथञ्चिदनुवृत्तिरिति । नापि द्वितीयः तस्य पारमार्थिकाभेदज्ञानशून्यतया तत्पूर्वकस्वकृतस्तुतिवाक्यानां श्रीमद्भिरपि पारमार्थिकाभेदज्ञानत्वेन व्याख्यातानां । "नारायणस्त्वं नहि सर्वदेहिनाम्" "एकस्त्वमात्मा पुरुषः पुराणः" "सत्यः स्वयं ज्योतिरनन्त आद्यः" "नित्योऽक्षरोऽजस्रसुखो निरञ्जनः" "पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः" इत्यादीनां प्रलापापत्तेरविश्वसनीयत्वाच्च कुतः ? अङ्गीकारात् अतो जीवेश्वरयोर्निरुपाधिकस्वरूपभेदज्ञानमेवास्य जातमिति मत्वा स्तौतीति. स्वस्य परमात्मात्मकत्व नारदाय स्वेनैवोक्तं द्वितीये "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्" इति. नच भेदस्य प्रत्यक्षसिद्धत्वेनानुवादमात्रमिदमिति वक्तुमुचितं स्वानिष्टत्वेन प्रतीयमानेऽपि ईश्वरोऽहं ब्रह्मणोऽहमस्मीत्यादिभेदे नाज्ञातार्थत्वानुपपाद्यत्वतत्पादकत्वादीनां श्रुत्येकगोचरत्वेनाननुवादत्वात् । तथाच श्रुतयः "ज्ञाज्ञौ द्वावजावीशनीशौ, "द्वा सुपर्णा"

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

"पृथगात्मानं प्रेरितारञ्च मत्वा, जुष्टस्ततस्तेनामृतत्वमेति" "अन्नान्तरं ब्रह्मविदो विदित्वा" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादयः तथा च सूत्रकारः "भेदव्यपदेशाच्चान्यः" (१।१।२२) "अधिकन्तु भेदनिर्देशात्" (२।१।२२) "स्थित्यदनाभ्याञ्च" (१।३।७) "अधिकोपदेशात्तु बादरायणस्यैवन्तद्दर्शनात्" (३।४।८) "भोगमात्रसाम्यलिङ्गाच्च" (४।४।२१) इत्यादिसूत्रैर्निरुपाधिकस्वरूपभेदमेव निश्चिनोतीति । स्मृतयोऽपि "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इत्यादयो भेदमेव प्रतिपादयन्तीति. अभेदवादास्तु सर्वस्य ब्रह्मनिष्ठत्वेन तच्छरीरत्वेनोपपन्नाः "सर्वं खल्विदं ब्रह्म, तत्त्वमस्ययमात्मा ब्रह्म" इत्यादिभिरिति. अत एव सामानाधिकरण्यमपि मुख्यत्वेनैवोपपन्नमतोऽस्य स्वाभाविकं नन्तृनन्तव्यसम्बन्धज्ञानमुत्पन्नम् अतः स्वकृतापराधभीतः संस्तं क्षमापयति—नौमीति । अतो यथोक्त एवार्थः समीचीनः कथम्भूताय तुभ्यम् ? अभ्रवपुषे स्निग्धनीलघनवद्वपुर्यस्य तस्मै तडिदम्बराय नीलघनोपरिविद्यमानतडिद्वदम्बरं यस्य तस्मै. गुञ्जावतंसपरिपिच्छलसन्मुखाय गुञ्जावतंसाभ्यां कर्णभूषणाभ्याम् परिपिच्छेन शिरोभूषणेन च लसन्मुखं यस्य तस्मै. वन्यस्रजे वन्याः स्रजो विद्यन्ते यस्य तस्मै. कवलवेत्रविषाणवेणुलक्ष्मश्रिये कवलवेत्रविषाणवेणव एव लक्ष्माणि चिह्नानि तैः श्रीः शोभा यस्य तस्मै. मृदुपदे मृदू पादौ यस्य तस्मै. पशुपाङ्गजाय पशून् पान्ति वृत्त्यादिना इति पशुपा देवास्ते अङ्गाज्जाता यस्य तस्मै । यद्वा, अयं मम स्वामी श्रीकृष्णः स्वावतारैश्वर्यं कंसादिभ्यो गोपयितुं नन्दगोपकुले प्रच्छन्न इति ज्ञात्वा वसुदेवात्मजत्वज्ञानवानपि असुरा एनं मा जानन्त्विति मनसि विचिन्त्य पशुपाङ्गजाय नन्दात्मजायेति प्रयुक्तवानिति तथा च श्रुतिः "अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिम्" इति । धीरा उपासकास्तस्य योनिं जन्मकारणं जानन्तीत्यर्थः । तथा च द्वितीये स्वनैवोक्तं नारदं प्रति—

> वेदाहमङ्ग परमस्य हि योगमायाम् ।
> यूयं भवश्च भगवानथ दैत्यवर्यः ।
> पत्नी मनोः स च मनुश्च तदात्मजाश्च ॥

इत्यादि ।

> ते वै विदन्त्यतितरन्ति च देवमायाम् ।
> स्त्रीशूद्रहूणशबरा अपि पापजीवाः ॥
> यद्यद्भुतक्रमपरायणशीलशिक्षाः ।
> स्तिर्यग्जना अपि किमु श्रुतधारणा ये ॥

इत्यन्तमिति ॥ १ ॥

अथ पूर्वाध्यायोक्तम्—

> ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ।
> उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥

"यावद्वत्सकवत्सपालकवपुर्यावत्कराङ्घ्र्यादिकम्" इत्यादि "सर्वस्वरूपो बभौ" इत्यन्तं श्रीकृष्णस्यावतारूपपरिच्छिन्नदिव्यमङ्गलविग्रहस्य महिमानमनवगाहमानोऽपरिच्छिन्नसर्वव्यापकसर्व—कल्याणगुणनिलयदिव्यविग्रहविशिष्टस्य महिमानं कैमुत्यन्यायेन ... सन्निस्मयेन स्तौति—अस्यापीति । हे देव ! अस्य सौशील्यसौलभ्यादिगुणविशिष्टस्य परिच्छिन्नदिव्यविग्रहस्याऽपरिच्छिन्न... महि तु महिमानमवसितुं निश्चेतुं कोऽपि चतुराननोऽप्यहं नैव समर्थो भवामि । यद्वा, कोऽपि मत्सदृशः कश्चिदन्योऽपि नैव समर्थो बभूव किं विशिष्टस्य वपुषः ? मदनुग्रहस्येत्यपि ... ममानुग्रहो यस्मात्तस्य स्वाश्रितानुग्रहार्थं गृहीतस्येत्यर्थः । तथा च गीतोपनिषदि—

> "परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
> धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" ॥

इति । स्वेच्छामयस्य स्वस्येच्छा स्वेच्छा सा प्रधाना यस्मिन्... तथा च भगवद्वाक्यम्—

> अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
> प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" ॥

इति । प्रकृतिं स्वभावं अजत्वादि स्वस्वभावमेवाधिष्ठाय स्वीय... मायया स्वसङ्कल्पेनेत्यर्थः । "माया वयुनं ज्ञानम्" इत्यनुशासनात् ... सम्भवामि आविर्भवामि । यद्वा, स्वीयानामिच्छा स्वेच्छा प्र... यस्य तथा च वाल्मीकिनोक्तम्—

> "स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
> अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः" ॥

इति । तत्र हेतुमाह—नतु भूतमयस्य न पुनर्भूतमयस्य तत्त... मयत्वाभावात् तत्कुतः अप्राकृतदिव्यात्मकस्य तस्यालौकि... त्वात् "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतेः उपबृंह... मपि—

> "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" ।

इति. ननु, मन्महिमा यदि सर्वथा दुर्ज्ञेया तर्हि ... ज्ञास्यन्ति ? केचिदपय इत्यत्राह—मनसान्तरेणेति । गुरुं... विना ज्ञातुं न शक्यते त्वत्कृपया निर्मलमनसा तु जानन्ति... "मनसा तु विशुद्धेन" ।

> "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" ।

इत्यादिश्रुतेः शुद्धमनोग्राह्यत्वात्—

> "तथापि भूमन् ! महिमागुणस्य ते ।
> विबोद्धुमर्हत्यमलान्तरात्मभिः" ॥

इति वक्ष्यमाणत्वाच्च । किमुत साक्षात्तवैवात्मसुखानुभूतेः ... नानन्दानुभववतः अन्तर्यामितया सर्वव्यापित्वेन चिदचिद्... रिणः नद्विलक्षणस्य सर्वाश्रयस्य दिव्यस्वरूपात्मकस्य ... महिमानमियत्तया निश्चेतुं न शक्नोमीति किं वक्तव्यं ... तथा च श्रुतिः "वेदाहमेतं पुरुषं महान्तम्" इति सर्वाश्रय... विग्रह उक्तः तथा च भगवद्वाक्यमर्जुनं प्रति—

> "मया प्रसन्नेन तवाऽर्जुनेदम् ।
> रूपं परं दर्शितमात्मयोगात् ॥
> तेजोमयं विश्वमनन्तमाद्यम् ।
> यन्मे त्वदन्येन न दृष्टपूर्वम् ॥

इति ॥ २ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीवृन्दावनचन्द्राय नमः ।

एवं श्रीमन्नन्दनन्दनचरणारविन्दमेव परमपुरुषार्थतया निश्चित्य तद्रूपमेव स्तोतुमुपचक्रमे—नौमीति ॥ १ ॥

पूर्वमहित्वं दृष्ट्वा विमूढस्तत्स्तुतिमुपेत्तगाणा इव ससम्भ्रममाह, अस्येति ॥ २ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

श्रीगोपीजनवल्लभाय नमः ।

स्तुतिर्ब्रह्मप्रसादश्च परमानां पुनरागतिः ।
स्नेहोपपत्तिः भवगो फलं चेति निरूप्यते ॥ १ ॥

प्रथमं व्याकुलो ब्रह्मा इदं रूपं वर्णयन् नमस्यति—नौमीति । "पुष्णुनो" स्तौमि भगवन्तं तत्र हेतुं सम्बोधनेनाह—हे ईड्येति । सर्वैरेव स्तूयते अतो मयापीति । ननु, प्रयोजनमनुद्दिश्य कोऽपि न प्रवर्त्तते इति किमर्थं स्तोत्रमित्याशङ्क्याह—त इति । ते तुभ्यमेव त्वमेव फलं नन्वहं ब्रह्म ब्रह्मप्राप्तिश्च तपोज्ञानादिभिः किं स्तोत्रेणेति चेत् ? तत्राह—अभ्रवपुष इति । नास्माकं फलं शब्दविषयकं ब्रह्म किन्त्वेतदेव प्रत्यक्षतो दृश्यं तदपि प्राकृतवत्तुरैव तत्रापि सर्वाभरणभूषितं तत्रापि प्राकृतालङ्कारसहितं तथाप्येतद्वयस्यापन्नमितिवक्तुं तथा विशेषणान्याह, अभ्रवन्मेघवत् वपुर्यस्य नीलमेघश्यामाय तडिद्वत् पीतमम्बरं यस्य गुञ्जाफलानामवतंसः परितः मयूरपिच्छानि तैः लसन्मुखं यस्य वनोद्भवानां पुष्पाणां स्रक् यस्य कवलं दध्योदनः हस्ते वेत्रविषाणो कक्षयोः वेणुर्जठरपट्योः एतान्येव यानि लक्ष्माणि चिह्नानि तैः श्रीः शोभा यस्य मृदू पादौ यस्य पशुपस्य नन्दस्याङ्गजातो नन्दसूनुः अनेन यथैव व्यवहारो लौकिकस्तद्विषय एव भगवान् अस्माकं फलरूपोऽस्त्वित्यर्थः

"लौकिके प्राकृते भावे यस्य भावः स भक्तिमान् ।
हीनभावं तं विदित्वा योऽन्यथा वेद सोऽधमः ॥
यद्गृह्णाति यथैवायं बोधयत्यत्र लौकिके ।
तत्प्रमाणमिहास्माकं नान्यत्किञ्चिदधिकारतः" ॥ १ ॥

नन्वेतदेव फलत्वेन किमिति प्रार्थ्यते प्रदर्शनार्थमेवैतत् ततः श्रुतिसिद्धमेव फलत्वेन प्रार्थ्यतामित्याशङ्क्याह—अस्यापीति, एतदस्माकं महत् फलं यस्य हि स्वरूपानुभावो ज्ञायेत तत्फलमिदं भवति अस्माकं त्वेतस्यापि स्वरूपानुभावो न बुद्धिगोचरो अत इदमेव फलत्वेन धारणार्थमेव प्रार्थ्यते, देवेति। सम्बोधनमुपास्यत्वाय अस्यापि वपुषो महि महिमानं अन्तरेणापि मनसा अन्तर्मुखेन विचारयुक्तेनापि मनसा व्यवसितुं ज्ञातुमहमपि नेशो "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुः" इति पक्षव्यावर्त्तयति यद्यपीदं वपुः मदनुग्रहं मय्यनुग्रहो यस्य ब्रह्मकार्येणावतारो ब्रह्मवचनाच्च गोकुले समागमनं ब्रह्मादि कृपयैवास्य प्रादुर्भाव इति अत इदं रूपं ब्रह्मार्थमेव तर्हि कथं न माहात्म्यं ज्ञायत इत्याशङ्क्य ह, स्वेच्छामयस्येति। स्वस्य या इच्छा तन्मयोऽयं इच्छाव्यवधानेऽन्यथा भवतीति न नियमो मय्यनुग्रहमेव करिष्यतीति न च कालकर्मस्वभावानां नियामकत्वं तथा सति ब्रह्मणस्तेऽनुकूला इत्यनुग्रहमेव कल्पयितुं शक्यते अतः कालाद्यधीनत्वाभावे हेतुमाह—न तु भूतमयस्येति। कोऽपीदृगपि यत्रास्य रूपस्यैव महिमा न ज्ञायते तत्र साक्षात् तवैव श्रेयैकमनोऽधिगम्यस्यात्मसुखानुभूतेः स्वत एव शोभमानाशेषपुरुषार्थस्वरूपस्य सच्चिदानन्दरूपस्य वा यद्यप्येतदेव तत् तथाप्यप्रतीयमानमपि फलत्वेन भिन्नतया निर्दिष्टम् ॥ २ ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

श्रीगोपीजनवल्लभाय नमः ।

सज्ञानैश्वर्यज्ञानेन ब्रह्मणा हरिसंस्तुतिः ।
कृष्णस्नेहोपपत्तिश्च चतुर्दशे निरूप्यते ॥ १ ॥

तत्र भगवत्प्रभावं दृष्ट्वा नष्टगर्वो ब्रह्मा दृष्टस्वरूप एव भगवति लब्धभक्तिस्तत्प्राप्त्यर्थमेव स्तौति, नौमीति । नौमीत्युक्त्वा प्रकरणागतस्य भगवतः कर्मत्वं त्वां नौमि स्तौमीत्यर्थः । ननु, प्रयोजनं विना न कोऽपि कुत्रापि प्रवर्तते ततश्च स्तुतौ प्रवृत्तौ किंप्रयोजनमित्यपेक्षायामाह—त इति । ते तुभ्यमिति तादर्थ्ये चतुर्थी, त्वत्प्राप्त्यर्थं त्वां स्तौमीत्यर्थः । नन्वन्यसर्वप्राप्तिं विहाय मत्प्राप्तिरेव तत्कुत इष्टा तत्राह—हे ईड्येति । यतोऽस्मदादिभिः सर्वैरपि त्वमेव ईड्यः स्तुत्यः परमानन्दरूपत्वात् अतः प्राप्तियोग्यत्वात् तवैव प्राप्तिरिष्टेति भावः । ममाप्यनन्तरूपत्वात् कथम्भूतं मां प्राप्तुमिच्छसि ? इत्यपेक्षायां श्रीकृष्णमूर्त्तिमेव त्वां प्राप्तुमिच्छ इत्यभिप्रेत्य तद्विशेषणान्याह—अभ्रवपुष इत्यादिना । अभ्रवत् श्यामं वपुर्यस्य तस्मै । तडिद्वत् पीते देदीप्यमाने अम्बरे यस्य तस्मै गुञ्जाभिः गुञ्जाफलैः रचितौ अवतंसौ कर्णभूषणे परिपिच्छं बर्हापीडं तैर्लसत् शोभमानं मुखं यस्य तस्मै । वन्याः वनपुष्पपत्रमय्यः स्रजो यस्य तस्मै । पूर्वोक्तरीत्या वामे पाणौ दध्योदनकवलः वामे कक्षे वेत्रविषाणौ जठरपट्योः मध्ये वेणुः एतान्येव यानि लक्ष्माणि चिह्नानि तैः श्रीः शोभा यस्य तस्मै । मृदू पादौ यस्य तस्मै पशुपस्य श्रीनन्दस्य अङ्गजः पुत्रः तस्मै ॥ १ ॥

एवं स्तुतिकरणं प्रतिज्ञाय स्तुतिर्हि महिमवर्णनरूपा भवति भगवतस्तु दुर्ज्ञेय महिमत्वेन तत्करणमशक्यं मत्वा दुर्ज्ञेयमहिमत्वेनैव स्तौति अस्यापीति । दुर्ज्ञेयमहिमत्वे हेतुं सूचयन् सम्बोधयति, हे देव ! अस्यापि भूतमयस्य विराड्रूपस्य स्वेच्छामयस्य "क्रीडार्थमात्मन इदं त्रिजगत्कृतम्" इति वाक्यात् स्वक्रीडार्थं स्वेच्छया प्रकटितस्य मदनुग्रहस्य मम ब्रह्माण्डविग्रहस्य जीवकथानुग्रहो भोगसम्पत्तिः येन तस्य तव वपुषः कोऽपि को ब्रह्माहमपि आन्तरेण अन्तर्मुखीकृतेनापि मनसा महि महिमानमवसितुं ज्ञातुं नेशो न समर्थः तदा तु साक्षात् आत्मसुखानुभूतेः आत्मपदेन सत्तामभिधानन्दात्मकस्यैव तव महिमानमवसितुं नेशो इति तु किमुत किमु वक्तव्यमित्यर्थः ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रीवृन्दावनचन्द्राय नमः ।

भक्तिज्ञानमहैश्वर्यमाधुर्याब्धौ पतन्विधिः ।
अस्तौत् प्रीतिनिधौ प्रदनोत्तरं चोक्तं चतुर्दशे ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मम रत्नवणिग्भावं रत्नान्यपरिचिन्वतः ।
हसन्तु सन्तो जिह्वेमि न स्वस्वान्तविनोदकृत् ॥
श्रीमद्गुरुपदाम्भोजध्यानमात्रैकसाहसं ।
विधिस्तवाम्बुधेः पारं यियासति मनो मम ॥

निखिलसच्चिदानन्दस्वरूपमूलभूतं श्रीगोपेन्द्रनन्दनं साक्षादनुभूय तत्रैवोद्भूतभक्तिनिष्ठस्तमेव विधिर्वर्णयति–नौमीति । हे ईड्य ! अधुनैव दृष्टब्रह्मादिस्तम्बपर्यन्तसर्वस्तुत!धामुख्य! सहस्रांशिरत्वेन परमस्तव्य ! ते तुभ्यं नौमि स्तुत्या त्वामभिनौमि पश्य चेत इति वदेतां स्तुतिं तुभ्यं ददामीत्यर्थः। यद्वा, त्वामेव प्राप्तुं प्रसादयितुं वा त्वां नौमि अभ्रतुल्यवपुषे तडिद्वदम्बरायेति भूतलसन्तापहारित्वं भक्तचातकजीवत्वं च, गुञ्जा चूडावर्त्तिनी अवतंसः पोत्पः चूडावर्त्ती अग्रवर्ती च परिपिच्छमुत्कृष्टवर्हं चूडाग्रवर्ति तैर्लसन्मुखं यस्येत्यसाधरणलक्षणवत्त्वम् वैकुण्ठीयाऽनर्घरत्नालङ्कारेभ्योऽपि वृन्दावनीयगुञ्जादीनामुत्कर्षश्च वन्या वृन्दावनीया एव पत्रपुष्पमय्यः स्रजो यस्येति नैश्रेयसवनस्थपारिजातादीनां निकर्षः कवलादिभिर्लक्ष्मभिरेव श्रीः शोभा यस्येति गोपबालोचिताऽऽचरणस्यैव तवायसवाचरणेभ्यः श्रैष्ठ्यं मृदु अतिसुकुमारौ पादौ यस्येति ताभ्यां वनभ्रमणादर्शिनां कारुण्यप्रेममूर्च्छोत्पादकत्वं पशुपाङ्गजायेति श्रीवसुदेवादिभ्योऽपि श्रीमन्नन्दस्य सौभाग्याधिक्यं व्यञ्जितम् ॥ १ ॥

ननु, भो ब्रह्मंस्त्वं जगदैश्वर्याधिपतिरहं तु वन्यगोपालपुत्रस्त्वं पुरातनोऽहं तु बालस्त्वं वेदार्थतात्पर्यविज्ञत्वात् परमविद्वान् सदाचारपरायणः अहं तु वत्सचारकत्वादध्ययनशून्यः स्मार्त्ताचारगन्धमप्यजानंस्तिष्ठन् ग्राम्यवत्स्योदनकवलं भुञ्जानस्त्वं मायी परमसुखी साक्षात्परमेश्वर एव अहं तु त्वन्मायामोहितो मनोदुःखेन वने पर्यटंस्तव स्तवं कर्त्तुं नार्हामीति वक्रोक्तिमाश्रङ्क्य सत्यमज्ञानान्महापराधमकरवमिति व्यञ्जयन्नाह,अस्येति। हे देव ! अस्यापि बाल्यचेष्टामयस्य प्रकटितमौग्ध्यस्य तव वपुषो महि महिमानमवसितुं ज्ञातुं नेशे न शक्नोमि किमुत कैशोरलीलस्य प्रकटितमहाचातुर्यस्य वपुषः वपुषोऽपि महि ज्ञातुं नेशे किमुत तव आत्मनो मनसो या सुखानुभूतिस्तस्याः निरतिशयस्वानन्दमयोऽपि वत्सचारणादिना यादृशं सुखमनुभवसि तस्येत्यर्थः । तथा त्वत्सहचराणामपि मनः सुखानुभूतंमहि ज्ञातुं नेशे किमुत साक्षात्तवैव अन्तरेण प्रत्याहृत्यान्तर्वशीकृतेनापि मनसा किमुतास्थिरेण तथा को ब्रह्माप्यहं नेशे किमुतान्य इति कैमुत्यपक्षकमज्ञानातिशयप्रतिपादकं ममापि ज्ञानसम्भावनायां न शास्त्राभ्यासतपोयोगादिकं हेतुः । किं तु कृपाकटाक्षकणा एवेति ब्रुवन् वपुर्विशिनष्टि—मय्यपराधिन्यप्यनुग्रहो महैश्वर्यदर्शनोत्थमोहोत्तरकालदर्शनदानानुमितो यस्य तस्य अनुग्रहे हेतुः स्वेच्छामयस्य स्वीयानां प्रेमभक्तिमतां यथा यथा या या इच्छा दिदृक्षा सिसेविषादिस्तन्मयस्य भक्तवत्सलत्वात् तत्तत्सम्पादकस्येत्यर्थः । अतो मय्यपि भक्त्याभासवत्त्वादपराधित्वेऽप्यनुग्रहलेशप्राप्त्याधिकार इति भावः । न न्विच्छानुग्रहो नरवपुर्धर्मोऽस्ति आह—न तु भूतमयस्य भूतमयं हि वपुर्जडं न तु चिन्मयम् अत एव ब्रह्मसंहितायामुक्तम्

"अङ्गानि यस्य सकलेन्द्रियवृत्तिमन्ति" इति एतच्च सर्वेन्द्रियतदेतस्य गोविन्दस्याङ्गानां यथा कालमन्यान् भव... प्रत्येव ( तदङ्गानां यथा कालमन्यान्प्रत्येव ) न तु मा... प्रति स तु स्वचक्षुर्भ्यामेव पश्यति स्वश्रोत्राभ्यामेव शृणोति स्वमनसैव विचारयति न तु स्वपाणिभ्यामपि पश्यति... विवेचनीयम् अथवा अस्यापि देववपुषो देवाकारस्य अधुनैव दर्शितस्य वासुदेवमूर्तेर्मदनुग्रहस्य चतुःश्लोकीभागवतोपदेश... मय्यनुग्रहवतः स्वीयस्यांशिनस्तवेच्छा सम्पादकस्य त्वं... सम्पादकत्वेऽपि न वयमिव भौतिका इत्याह–न तु भूतमयस्य... महिमानं को ब्रह्माऽपि स्वव्यञ्जकान् वेदान् वेदफलं श्रीम... चाध्यापितोऽप्यहं ज्ञातुं नेशे किमुत साक्षात्तवैव ना... सर्वांशिनः स्वयं भगवतः कथम्भूतस्य आत्मनः ! ... सुखेषुदधिचौर्यगोपिकास्तन्यपानवत्सचारणबाल्यचापल्य... स्वावतारान्तरासाधारणेषु अनुभूतिर्यस्य तस्य ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीश्रीभगवन्निम्बार्काय नमः ।

एवं मञ्जुमाहित्वं दृष्ट्वा तद्दर्शनार्थं कृतवत्सादिहरणा... पराधं क्षमापयितुं भगवन्तं स्तौति–नौमीति । हे ईड्य ! ... ते तुभ्यं नौमि स्तौमि "णुस्तुतौ" द्वितीयार्थे चतुर्थी ... घनश्यामाय तडिदम्बराय पीताम्बराय गुञ्जाभिरवतंसैः ... भरणा परिपिच्छं वर्हापीडं तैर्लसन्मुखं यस्य तस्मै ... वन्याः वनपुष्पभवाः स्रजो यस्य तस्मै कवलादिभिर्लक्ष्मभिः... श्रीः शोभा यस्य तस्मै पशुपाङ्गजाय श्रीनन्दात्मजाय ... सम्बोधनेन सर्वेश्वरत्वम् अभ्रेत्यादिपदद्वयेन स्वर्णि... गुञ्जेत्यादिपदत्रय्या पशुपाङ्गजायेत्यनेन च भक्तेच्छानुसारि... मृदुपदे इत्यनेनोपलक्षणतया मार्दवादिगुणगणाश्च ... द्योत्यते ॥ १ ॥

अभ्रवपुष इत्युपमेयत्वेन भगवद्विग्रहस्य परिच्छिन्नत्व... तत्स्वरूपस्य विग्रहवत्त्वेन परिच्छिन्नत्वप्रतीतिं च प्राप्तां ... कर्त्तुं । "हिरण्यश्मश्रुः हिरण्यकेशः सत्पुण्डरीकं नयनं ... वैद्युताम्बरं द्विभुजम्"इत्यादिप्रसिद्धमप्राकृतं विग्रहं "सत्यं ... अनन्तम्"इत्यादिश्रुतिप्रसिद्धं स्वरूपं चेयत्तानवच्छिन्नतया ... अस्यापीति । हे देव ! परमेश्वर ! अस्य तव वपुषः अपि ... महि माहित्वं महिमानमियत्तामिति यावत् अवसितुं ज्ञातुं ... ईशे न समर्थ आसीत् । नन्वस्येति त्वदुक्त्यैव परिच्छिन्नत्व... तत्त्वं मद्वपुष आगतमतः कथं घटेत कोऽप्यवसितुं नेशे ! ... आह–मदनुग्रहस्येति । मद्वचनं सत्यं कर्तुं गोपबालतया ... ननु, त्वद्वचनसत्यत्वसिद्धये वत्सांस्त्वं तस्य त्वामिन... सुज्ञेयत्वे कथं दुर्ज्ञेयत्वं यत्र च बालतरुणत्वादिधर्म... कथं परमेश्वरः स्यादत्राह–स्वेच्छामयस्येति । स्वेच्छयैव भक्तेच्छानुरोधेन बालत्वादिना द्विभुजत्वचतुर्भुजत्वादिना ... शतधा सहस्रधा अनन्तधा वर्त्तितुं शक्तस्येत्यर्थः । किंच ... स्य प्राकृतस्य विराड्रूपस्य "इदाण्डिवधाऽविगणिताण्ड"... तथा वक्ष्यमाणस्य तव वपुषः महिमानं ज्ञातुं न तु न ...

ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्त्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित! जितोऽप्यसि तैस्त्रिलोक्याम् ॥३॥
श्रेयःसृतिं भक्तिमुदस्य ते विभो ! क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव(१) शिष्यते नान्यद्यथा स्थूलतुषाऽवघातिनाम् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इंशे यदा तदा किमुत वक्तव्यमप्राकृतस्य वपुषो दुर्ज्ञेयत्वमित्यर्थः। एवं सति किमुततरां साक्षात्सुखानुभूतरूभयशरीरिणोऽन्तरेण निरुद्धेनाऽपि मनसा कोऽपि ज्ञातुं नेश इति वक्तव्यम्। द्वितीयस्तुशब्दः विग्रहगुणानां स्वरूपगुणानां च दुर्ज्ञेयत्वं सूचयति "को वेद ब्रह्मणो रूपम्" "यस्याऽमतं तस्य मतं मतं यस्य न वेद सः" इत्यादिश्रुतेः भक्तैः सुज्ञेयत्वं स्वेच्छाशब्देन दर्शितमेवेति दिक् ॥ २ ॥

भाषा टीका ।

ॐचतुर्मुखस्तुतपशुपाङ्गजाय नमः

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि—हे स्तुति करवे योग्य ! हे प्रभो ! आपको प्रसन्न करिवे कों मैं तुमारी स्तुति करूं हूं। सजल मेघ सो श्याम जिनकों वपु, बीजुरी से चटकीले पीताम्बर कों पहिरें, गुंजन ( चिरमिठीन ) के कर्णां भूषण, और मयूर पिच्छ वारे मुकटसों शोह रह्यो मुख जिनको, वन माला धारण करें दध्योदन को ग्रास, वेत्र, माहिष शृंग, वंशी, इन चिन्हन सों शोभा जाकी, मृदु चरण जाके, ऐसे नन्द राज कुमार कों वारंवार नमूं हूं ॥ १ ॥

हे देव ! मोकूं जासों अनुग्रह भयो ऐसा अपनी इच्छा सों गृहीत जो गोपाल बालक रूप अवतार वपु ( शरीर ) ताकी महिमा कों जानवे कों भीतर मन सों भी कोई भी अथवा मैं ब्रह्मा भी जानिवे कूं समर्थ नहीं होय सकूं तब सबको आत्मरूप ऐसे और सुख रूप ज्ञान जाको ऐसे साक्षात् अवतारी रूप आपके दिव्यमंगल विग्रह के महिमा कों तो कोन जानि सके ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तर्ह्यज्ञाः कथं संसारं तरेयुरत आह—ज्ञान इति। उदपास्य ईषदप्यकृत्वा सद्भिर्मुखरितां स्वत एव नित्यं प्रकटितां भवदीयवार्त्तां स्वस्थान एव स्थितास्तत्सन्निधिमात्रेण स्वत एव श्रुतिगतां श्रवणं प्राप्तां तनुवाङ्मनोभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति केवलं यद्यपि नान्यत्कुर्वन्ति तैः प्रायशस्त्रिलोक्याम् न्यैरजितोऽपि त्वं जितः प्राप्तोऽसीति किं ज्ञानश्रमेणेत्यर्थः ॥ ३ ॥

भक्तिं विना ज्ञानं तु नैव सिद्ध्येदित्याह—श्रेयःसृतिमिति। श्रेयसामभ्युदयापवर्गलक्षणानां सृतिः सरणं यस्याः सरस इव निर्झराणां तां ते तव भक्तिमुदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति वा तेषां क्लेशलः क्लेश एवाऽवशिष्यते अयम्भावः। यथा अल्पप्रमाणं धान्यं परित्यज्यान्तःकणहीनान् स्थूलधान्याभासांस्तुषानेवावघ्नन्ति तेषां न किञ्चित्फलमेवं भक्तिं तुच्छीकृत्य ये केवलबोधाय प्रयतन्ते तेषामपीति ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव भक्तास्तदन्वेषणश्रमं परित्यज्य भक्तिविशेषरूपतया त्वदीयरूपगुणलीलावार्त्तामेव शृण्वन्ति तेन वशीकुर्वन्ति च तादृशमपि त्वामित्याह, ज्ञान इति। ज्ञाने त्वदीयस्वरूपैश्वर्यमहिमविचारे स्थानं सतां निवास एवाऽव्यग्रतया स्थिता न तु तीर्थाटनादिक्लेशान् कुर्वन्तः तन्वादिभिर्नमन्तः सत्कुर्वन्तः तत्र तन्वा सत्कारः श्रवणसमये अञ्जलिबन्धनादिः वाचानुमोदनादिः मनसा चाभिलषणादिः सन्मुखरितां सन्तः अनुक्तोक्तिसर्वेन्द्रियक्षोभपरिहारार्थं प्रायो मौनशीला अपि मुखरिणा मुखरीकृता यया ताम् "वाहिताग्न्यादिषु" ( २।२।३७ ) इति निष्ठायाः परनिपातोऽपि भवदीयां भवदीयानां श्रीमद्व्रज राजादीनां वा वार्त्ताम् अन्यत्तैः। यद्वा भवदीयवार्त्ता जीवन्ति उपजीवन्ति तदेकजीवनत्वेन सद्भ्यः श्रुत्या स्वादयन्तीत्यर्थः । हे तन्वादिभिस्तत्तच्चेष्टया अजित ! अप्राप्य ! स्वप्रकाशत्वेनेन्द्रियाद्यगोचरत्वात् । यद्वा, तन्वादिभिः कृत्वा तैरपि जितोऽसि वशीकृतोऽसि तत्तद्वृत्तौ सदा परिस्फुरसीत्यर्थः। यद्वा, तन्वादिभिरेव साक्षात्प्राप्तो भवसि अत्र तन्वा प्राप्तिः हस्तादिना श्रीपादाब्जस्पर्शनादिः वाचा आह्वानादिना समागमनादिः मनसा च सङ्कल्पेनैव दर्शनादिः। यद्वा, सहार्थे तृतीया तन्वादिभिः सहितो जितः तव तन्वादीन्यपि तैर्वशीकृतानीत्यर्थः। तत्र तनोर्वशीकरणं तदङ्कपार्श्वे सदावस्थित्यादिः वाचः तद्गुणकथनादिः मनसश्च तच्चिन्तनादिः अभ्यस्तमानम् ॥ ३ ॥

ननु, तद्विधां भक्तिं त्यक्त्वा त्वन्महिमपर्यवस्थानदर्शनाय तदुचितश्रवणमननादिभिः केचिज्ज्ञानाभ्यासिनोऽपि दृश्यन्ते तत्राह, श्रेय इति। श्रेयसां सर्वेषाम् एव सृतिमिति अवान्तरफलत्वेन ज्ञानमपि भवितैवेति सूचितम्। तथाभूतामपि मधुररूपादिवार्त्तामयीं भक्तिमुदस्य उच्चैः अवहेलया दूरे क्षिप्त्वाऽत्यन्तमनादृत्येत्यर्थः। केवलस्य तद्विधभक्तिशून्यतया सर्वविज्ञानामात्रतात्पर्यस्य बोधस्य लब्धये क्लिश्यन्ति तदुचितश्रवणमननाद्यर्थमितस्ततो गमनादिभिर्यमनियमादिभिश्च श्रमं कुर्वन्ति तेषां

(१) क्लेशलवोऽवशिष्यत इति वी० पा०।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्लेशल एव शिष्यते तेषु तवानुग्रहानुदयादिति भावः । एवकारेण चित्तशुद्ध्यादिकं फलं च निरस्तम् । ननु, योगाभासादिभ्रमेण सिद्धिलाभस्तु भविता तत्राह—नान्यदिति । "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इति न्यायेन मत एव वक्ष्यते स्वयं श्रीभगवता

"यस्यां न मे पावनमङ्ग ! कर्म स्थित्युद्भवप्राणनिरोधमस्य ।
लीलावतारेप्सितजन्म वा स्याद् वन्ध्यां गिरन्तां बिभृयान्न धीरः"

इति तत्रोपयुक्तो दृष्टान्तः यथा स्थूलतुषावघातिनो लोकैर्मूर्खा इत्युपहस्यन्ते तुषा तुषानि तेषामत्यतिचूर्णितानां नाशः केवलं हस्तादिवेदनैव च स्यात् तद्वदित्यर्थः । विभो ! हे प्रभो ! इत्यवश्यभजनीयतोक्ता ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्मणां विवेकमाह—ज्ञान इति । पूर्वोक्तभगवत्स्वरूपज्ञाने प्रयासं श्रमम् उदपास्य त्यक्त्वा नमन्त एव भक्तिपूर्वकं नमनं कुर्वन्त एव ये जीवन्ति तनुवाङ्मनोभिः स्थानस्थिताः वर्णाश्रमधर्मस्थाः श्रुतिगतां वेदप्रोक्तां सद्भिर्मुखरितां भवदीयवार्त्तां त्वद्वार्त्तां त्वदीयवार्त्तां च शृण्वन्तीत्यध्याहारः । तैरपि त्रिलोक्याम् अजितस्त्वं जितोऽसि एवं स्वरूपज्ञानस्य दुर्ज्ञेयत्वं वर्णाश्रमकर्मणां भक्त्युत्पादकत्वं भक्तेरेव भगवद्वशीकारित्वं गुणभवणस्य भक्त्युपायत्वं चोक्तम् ॥ ३ ॥

इदानीं भक्तेरुत्तमोपायत्वं केवलात्मज्ञानस्य "क्लेशोऽधिकतरस्तेषाम्" इत्युक्तश्रमावहत्वं चाह—श्रेयःसृतिमिति । भुक्तिमुक्तिरूपं श्रेयः भक्तिं परस्नेहरूपामुदस्य ये केवलस्यात्मनः बोधलब्धये केवलात्मज्ञानार्थं क्लिश्यन्ति न तु श्रीभगवज्ज्ञानार्थं तेषामसौ देवतिर्यङ्मनुष्यस्थावरशरीरविलक्षणात्मबोधः क्लेश एव क्लेशलः क्लेशदायी एव शिष्यते यथा स्थूलतुषावघातः क्लेशदायी अन्यत्सुखं नेति तद्वत् अनेन ज्ञानविवेक उक्तः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, मां मोहयितुं प्रवृत्तः पराजितश्च त्वं मच्छरणागतिमात्रेण कथं मामजितं जेतुं मुमुक्षसे । किञ्च, जीवस्वरूपमपि सुखानुभूतिरूपमेवातः प्रकृतिवियुक्ततत्स्वरूपावस्थितिरूपकैवल्याय तदुपासनमेव कुरु किम्मच्छरणवरणेनेत्यत आह—ज्ञान इति । ज्ञाने ज्ञानयोगे प्रकृतिविविक्तप्रत्यगात्मोपासनयोगे प्रयासं त्यक्त्वा नमन्त एव शरणागता एव त्वामेव त्वन्मायातरणसाधनत्वेनाध्यवस्यन्ति इति यावत् उपायवाचिशरणादिपदस्थाने नमःशब्दप्रयोगो दृष्टचरः "द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम्" इति स्थाने स्वस्ववर्णाश्रमानुरूपधर्मानुष्ठानरूपे त्वदाज्ञारूपत्वेन प्रपन्नैरप्यनतिलङ्घ्ये स्थाने स्थिताः तन्वादिकरणत्रयेण सद्भिः प्रकटितां भवदीयवार्तां त्वत्कथां श्रुतिगतां श्रवणपथं प्राप्तां ये जीवन्त्युपजीवन्ति भवदीयवार्तामेव धारकीकुर्वन्तीत्यर्थः । हे अजित ! कैरप्यजितोऽपि त्वमिति सम्बोधनाभिप्रायः तैरुक्तविधैस्त्रिलोक्यन्तर्भूतैर्द्विकासुप्तिकविपर्ययध्वांसकैः "पिङ्गलान्वये" प्रतासक्तैः प्रायशः त्वं जित एव त्वच्छरणागतिरेव त्वद्वशीकारोपाय इति भावः । ज्ञाने प्रयासमुदपास्येत्यनेन ज्ञानयोगः केवलं प्रयासमात्रफलो न तु पुरुषार्थपर्यवसायीति सूचितम् "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" इति केवलिनोऽपि च्यवनधर्मत्वाभिधानादिति भावः ॥ ३ ॥

ननु, तर्हि ज्ञानयोगः शास्त्रैः कर्तव्यतया किमर्थमुच्यत इत्यपेक्षायां कैवल्यार्थज्ञानयोगस्य पुरुषार्थापर्यवसायित्वेऽपि भक्तियोगानुग्राहकतया अनुष्ठितस्य तत्पर्यवसायित्वमस्त्येवेति सूचयन् प्रपत्तियोगवद्भक्तियोगस्य तद्वशीकरणोपायत्वमस्तीत्याह—श्रेयःस्रुतिमिति । हे विभो ! श्रेयस्स्रुतिं श्रेयसः स्रुतिः स्रवो यस्याः त्वन्मायातरणद्वारा निरतिशयापरिच्छिन्नानन्दरूपत्वत्प्राप्तिरूपश्रेयसो दोग्ध्रीं ते तव भक्तिमुदस्य त्यक्त्वा केवलप्रत्यगात्मानुभूतिलब्धये कैवल्याय ये क्लिश्यन्ति साक्षान्मुक्तिसाधनभूतां त्वद्भक्तिं तदनुग्राहकं ज्ञानयोगं च विहाय केवलकैवल्यार्थतया ज्ञाने क्लिश्यन्तीत्यर्थः । तेषामसौ क्लेशलवोऽवशिष्यते न त्वन्यत्फलं क्लेशल एवेति पाठे क्लेशं लात्याददत्त इति क्लेशलः क्लेशावहो व्यापार इत्यर्थः । अन्तःसारभूततण्डुलकणरहितान् स्थूलधान्याभासान् तुषानवघ्नन्ति इति तथा तेषां यथा नान्यत्तद्वदित्यर्थः ॥ ४ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अतो ये केवलप्रत्यगात्मस्वरूपज्ञाने परिश्रममकृत्वा मद्वाभिसम्बन्धज्ञानपूर्वकत्वच्चरित्रमेवात्यादरेण इदमेवास्मत्प्राणधारणमिति मत्वा शृण्वन्ति तैस्त्वं वशीकृत इत्याह—ज्ञाने प्रयासमिति । हे अजित ! स्ववशीकृताखिललोक ! ये त्वच्छेषत्वैकरसज्ञानवन्तः केवलप्रत्यगात्मस्वरूपज्ञाने प्रयासम् उदपास्य दूरे त्यक्त्वा सद्भिर्मुखरितां त्वमेव निरुपाधिकसर्वशेषीति ज्ञानवद्भिः शब्दितां भवदीयवार्तां त्वदीयचरित्ररूपकथां स्वस्थाने स्वाश्रमे स्थिता एव श्रुतिगतां श्रवणप्राप्ताम् । यद्वा, श्रुतिगतां वेदप्रतिपाद्यां तनुवाङ्मनोभिर्नमन्त एव साष्टाङ्गप्रणामं कुर्वन्त एव तथा च प्रणामलक्षणमुक्तं श्रीभाष्यकारैः—

"मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम्" ॥

इति । प्रणामपूर्वकमेव त्वद्वार्तां जीवन्ति उपजीवन्ति स्वप्राणधारकतया शृण्वन्तीत्यर्थः । अत्र ज्ञानशब्देनाक्षरशब्दवाच्यप्रत्यगात्मस्वरूपज्ञानं विवक्षितं तथाक्षरशब्दवाच्यः प्रत्यगात्मा "क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः" इति श्रुत्युक्तः । तथा च भगवद्वाक्यमर्जुनं प्रति—

"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेता ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्" ॥

इत्युक्त्वा ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।

इति । क्लेश एव उक्तः इति । तथाक्षरशब्दवाच्याज्जीवाद्विलक्षणत्वेनोक्तः परमात्मा "कूटस्थोऽक्षर उच्यते, उत्तमः पुरुषस्त्वन्यः" इति तैस्त्वं प्रायशस्त्रिलोक्यामजितोऽपि जितोऽसि स्ववशीकृतोऽसि तथा च भगवद्वचनं दुर्वाससं प्रति—

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

"अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ! ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि" ॥

इति ॥ ३ ॥

अथ त्वदुपासनरूपं भक्तियोगमनादृत्य केवलाक्षरज्ञाने प्रयत्नं कुर्वन्ति तेषां परिश्रममेव फलं नत्वन्यदित्याह—श्रेयःस्रुतिमिति। हे विभो ! स्वामिन् ! श्रेयः स्रुतिं परमनिःश्रेयसरूपमोक्षप्रापिकां ते भक्तिम्।

"प्रीतिरूपमनुध्यानं भक्तिरित्युच्यते बुधैः" ।

इत्युक्तप्रकारेण प्रीतिरूपां भक्तिमुदस्यानादृत्य केवलबोधलब्धये केवलप्रत्यगात्मज्ञानप्राप्त्यै क्लिश्यन्ति परिश्रमं कुर्वन्ति तेषां क्लेश एव शिष्यते अवशिष्यते नान्यत्किञ्चिदपि, तत्र दृष्टान्तः यथा स्थूलतुषावघातिनां यथा सूक्ष्मपरिमाणान् बहुफलान् व्रीहीन् हित्वा अन्तःकणहीनान् व्रीह्याभासान् स्थूलतुषानेवावघ्नन्ति खण्डयन्ति तेषां क्लेश एव भवति तद्वदिति अत्र "क्लेशोऽधिकतरस्तेषाम्" इति पूर्वोक्त एवेति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मादेवं तस्माज्ज्ञान इति ॥ ३ ॥

ननु, केचिद्भक्तिमपि परित्यज्य ज्ञाने प्रयतमाना दृश्यन्ते तत्राह-श्रेयःसृतिमिति ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेवं सति कथं ज्ञानार्थं यतन्ते तत्राह-ज्ञाने प्रयासमिति. ज्ञानं द्विविधं भगवतः स्वस्य च तत्र स्वज्ञानमपि भक्त्यैव भवतीति च वक्तव्यं, भगवज्ज्ञानं तु न कस्यापि भवति नह्याध्यात्ततो दृष्टो भगवान् ज्ञातो भवति नापि श्रुतः भक्त्यापि तत्त्वतो ज्ञानमिति प्रवेशोपयोग्येव तावदेवापेक्ष्यत इति अतो ज्ञाने प्रयासमुत ऊर्द्धमेवापास्य दूरीकृत्य द्वारकादिषु तव स्थानेषु स्थिता देहदोषाभावाय यत्र क्वाप्युपविष्टा वा सद्भिर्मुखरितां भवदीयवार्त्तां स्वस्य श्रुतिगतां कर्णगतां तनुवाङ्मनोभिर्नमन्तो ये जीवन्ति ते प्रथमतः प्रसिद्धा भवन्ति। किं बहुना तैराजितोऽपि भवान् जितः अयमेको मार्गः सर्वेषां पुरुषार्थसिद्ध्यर्थं प्रसिद्धः सुगमः आदौ स्थानस्थितानां जीविकोपद्रवाभावादिः स्वतः सिद्धः सन्तश्च सर्वत्र भगवदाज्ञया परिभ्रमन्ति, तेषां चैतदेव कृत्यं भवद्गुणगाने ते मुखरा एव भवन्ति तत्रापि कथायां ज्ञात्वा कर्त्तव्यमिति न नियमः केवलं भवदीया भवत्सम्बन्धिनी वार्त्ता भवतु नतूपपन्ना अनुपपन्ना वेति तत्राप्यनायासेन स्वकर्णौ समागता भवति परं कायवाङ्मनोभिर्नमस्या सा तदनुगुणतया कायवाङ्मनांसि स्थापनीयानि न तु तत्र विरोध आचरणीयः एतावदेव कृत्यमत्र साधनं जीवनमेव न तु कर्मकरणादिकमपि आवश्यकमिति तेचेज्ज्ञानान्तरं न कुर्युः कालादयश्च प्रतिबन्धकाः स्याद्वा, अतोऽनेनैव प्रकारेणाज्ञेननानां निस्तारः मम त्वेतेनैव स्वरूपेणेति स्वतन्त्रः पक्षो निरूपितः ॥ ३ ॥

ये तु पुनः स्वज्ञानार्थं यतन्ते ते न च पुरुषार्थं साधयितुं न भ्रान्ता एवेत्याह-श्रेय स्रुतिमिति। श्रेयसः स्रुतिः प्रस्रवः सृतिर्गतिर्वा यथा भक्तिर्हि चिन्तामणिरूपा प्रार्थ्यमाना चेदन्यदिवात्मज्ञानमपि प्रयच्छति तादृशीमपि परित्यज्य केवलं स्वरूपज्ञानमेवास्त्विति ये यतन्ते तेषामसौ यत्नः क्लेशल एव शिष्यते क्लेशयुक्तः क्लेशलः न तु फलयुक्तोऽपि तेन प्रयत्नेन गौणमपि फलं साधितं भविष्यतीति शङ्कां वारयति, नान्यदिति। अन्यत् फलं प्रासङ्गिकमपि न भवतीत्यर्थः। ननु, तपस्यादिना यत्ने कथं नान्यफलसिद्धिः अन्तःकरणशुद्धिर्वा भवेदित्याशङ्क्य दृष्टान्तमाह—स्थूलतुषावघातिनामिति। महता कष्टेनाप्युत्पादिताः स्थूलतुषा अवहता अपि स्वरूपत एव परं नश्यन्ति न तु कश्चन तेषु सारांशोऽस्ति अतः सत्त्वमूर्त्तेरङ्गीकारे सत्त्वाभावात् शुद्धिज्ञानादिकं न भवत्येव मौढ्यात् प्रवृत्ताः क्लिष्टा एव भवन्तीत्यविवादम् ॥ ४ ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

ननु, यदि त्वमेव न जानासि तदान्येऽपि नैव जानन्तीत्यर्थादागतं तर्हि "तमेव विदित्वा तिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेरज्ञानां कथं संसारान्मोक्ष इत्यत आह—ज्ञान इति। ज्ञाने ज्ञाननिमित्तं प्रयासं श्रममुदपास्य दूरतस्त्यक्त्वा स्थाने सतां निवासस्थाने स्थिताः सद्भिर्भगवद्भक्तैः मुखरितां स्वभावत एव नित्यं प्रकटितां श्रुतिगतां श्रवणं प्राप्तां भवदीयां वार्त्तां कथां ये तनुवाङ्मनोभिर्नमन्तः सत्कुर्वन्त एव जीवन्ति हे अजित ! कालकर्मादिभिरजितोऽपि प्रायशस्त्रिलोक्यां तैस्त्वं जितोऽसि वशीकृतोऽसि धर्मादिचतुर्विधपुरुषार्थप्रदो भवान्‍ येषां प्रसन्नस्तेषां ज्ञानादिकं किं दुर्लभं कथं वा संसार इति भावः। नत्र तन्वा सत्कारस्सावधानतया कथायामुपवेशनं वा प्रश्नस्तुत्यादिमनसावधारणं मननादि ॥ ३ ॥

श्रवणादिभक्तिं विना तु ज्ञानं दुर्लभमेवेत्याह—श्रेयः स्रुतिमिति। श्रेयसां धर्मार्थकाममोक्षाणां स्रुतिः सरसो निर्झराणामिव स्रवणं यस्यास्तां ते तव भक्तिमुदस्य त्यक्त्वा ये केवलं बोधलब्धये ज्ञानप्राप्त्यर्थं क्लिश्यन्ति शास्त्राभ्यासादिक्लेशं कुर्वन्ति तेषामसौ शास्त्राभ्यासादिजनितः क्लेशलः क्लेश एवावशिष्यते नान्यत् ज्ञानन्तु नैव भवति। तत्र दृष्टान्तमाह—यथेति। यथाल्पप्रमाणं धान्यं परित्यज्यान्तःकणहीनान् स्थूलधान्याभासान् तुषानवघ्नतां तदन्तस्तण्डुलाभावादवहननजनितहस्तक्लेश एव भवति न तण्डुललाभ एवं श्रवणादिभक्तिं तुच्छीकृत्य केवलं ज्ञानार्थं प्रयततामपि भक्तिं विना चित्तशुद्ध्यभावाच्छास्त्राभ्यासादि क्लेश एव भवति न ज्ञानमित्यर्थः। युक्तं चैतेषां निष्फलत्वं महतस्त्वत्तोऽभिमुख्याभावादित्याशयेन सम्बोधयति-विभो! इति। लोके वैदिके च सर्वत्र ये साधनं परिहृत्य परित्यज्य फलार्थं यतन्ते ते केवलं क्लेशभागिन एव भवन्ति न फलभागिन इति प्रसिद्धत्वात् भक्तेश्च ज्ञानजनकत्वस्य।

"भक्त्यामामभिजानाति यावान् यश्चास्मि तत्त्वतः" ।
"वासुदेवे भगवति भक्तियोगः प्रयोजितः" ॥

पुरेह भूमन् ! बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ! ते गतिं पराम् ॥ ५ ॥

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्"इत्यादिवचनैः प्रसिद्धतरत्वात्तद्धीनानां ज्ञानं कथं स्यात् इत्याशयः ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, तर्हि "तमेव विदित्वा अतिमृत्युमेति"इति श्रुतेरज्ञानाल्लोकाः कथं संसारं तरेयुस्तत्राह—ज्ञान इति । उदपास्य ईषदप्यकृत्वा सन्मुखरितां सन्तो मौनशालिनोऽपि स्वमाधुर्येण मुखरिता मुखरीकृता यया तां भवदीयां भवदीयानां वा वार्तां स्थाने सतां निवास एव स्थिताः न तु तीर्थान्यपटन्तः सन्तः श्रुतिगतां तत्सन्निधिमात्रेण स्वत एव श्रुतिगतां श्रवणप्राप्तां तनुवाङ्मनोभिरारम्भपरिसमाप्त्योर्नमन्तः तत्र तन्वा पाणिभ्यां सह शीर्ष्णा भूमिस्पर्शेन वाचा कृष्णकथायै तदास्वादकेभ्यः वैष्णवेभ्यश्च नम इति वचनेन मनसा श्रुतायाः कथायाः अवधारिकया बुद्ध्या प्रणमन्तो ये जीवन्ति केवलं यद्यपि नान्यत् कुर्वन्ति तदपि तैः प्रायशस्त्रिलोक्यामन्यैरजितोऽपि त्वं जितोऽपि वशीकृतोऽपि भवसि । ज्ञानाल्लब्धमुक्तिभिस्तु न वशीकृतो भवस्यतः संसारतरणं कथाश्रोतृणां किं चित्रमिति भावः । अतस्त्वत्कथैकदेशज्ञानमेव त्वज्ज्ञानं तेन संसारमपि तरन्तीति श्रुत्यर्थो ज्ञेय इति भावः ॥ ३ ॥

श्रवणकीर्तनादीनामेकतरयाऽपि भक्त्या कृतार्थीभवन्ति यदुक्तं नृसिंहपुराणे—

"पत्रेषु पुष्पेषु फलेषु तोये—
ष्वक्रीतलभ्येषु सदैव सत्सु ॥
भक्त्या सुलभ्ये पुरुषे पुराणे ।
मुक्त्यै किमर्थं क्रियते प्रयत्नः" ॥

इति । तदपि ये तां परिहाय ज्ञाने प्रयासवन्तस्तेषां दुःखमेव फलमित्याह—श्रेयसामभ्युदयापवर्गलक्षणानां स्रुतिः सरणं यस्याः सरस इव निर्झरणायां तां तव भक्तिं उदस्येति श्रीस्वामिचरणानां व्याख्या । श्रेयांसि ज्ञानकर्मादिनानासाधनसाध्यानि फलानि यस्यैव स्युस्तां भक्तिं त्यक्त्वेत्यर्थः । तेषां असौ बोधः क्लेशलः क्लेशं लाति ददातीति सः शिष्यते पर्यवसितो भवति तत्र दृष्टान्तः स्थूलतुषावघातिनाम् अल्पप्रमाणं तण्डुलं परित्यज्य यत्नतः परिश्रम्यानीय पर्वतप्रमाणं स्थूलतुषपुञ्जं मांश्रित्य तन्धान्तकणहीनधान्याभासस्यावघातं कुर्वतां जनानां यथा स स्थूलतुषः क्लेशलः केवलं हस्तादिवेदनामात्रफलप्रदः ॥ ४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं विभवतः स्वरूपतश्च तव इयत्तानवच्छिन्नत्वात्साकल्यज्ञानाग्रहं विहाय भक्तिप्रधानैः कर्मज्ञानवैराग्याख्यैः साधनैः "तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ब्रह्मविद्याप्नोति परं, किं कर्मणा किं धनेन त्यागेनैकेनामृतत्वमानशुः" भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषः भक्तिरेव भूयसी" इत्यादि प्रसिद्धैर्मुमुक्षुस्त्वां प्राप्नोत्येवेत्याह—ज्ञान इति त्रिभिः । ... त्वत्स्वरूपविग्रहादिसाकल्यज्ञाने प्रयासमुदपास्येषदप्यकृत्वा ... न्मुखरितां साद्भिः प्रकटितां भवदीयवार्तां भवदीयां भवद्... श्रेण भगवज्ज्ञानभक्तिजननीं वार्तां कीर्तिं स्थाने स्वं ... स्वकीये वर्णे आश्रमे च स्थिताः तत्सन्निकर्षेण श्रुतिगतां ... णप्राप्तां तनुवाङ्मनोभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति केवलं तैः प्रायशस्त्रिलोक्यामन्यैरजितोऽपि त्वं जितोऽसि प्राप्य एवासि ॥ ३ ॥

हे विभो ! इयत्तानवच्छिन्नश्रेयसां श्रेयः साधनानां ज्ञान... न्यपरभक्तीनां सृतिं मार्गभूतां भवदीयवार्ताश्रवणादिरूपां ... मुदस्य त्यक्त्वा केवले निःसमानातिशये यो बोधः इयत्ताज्ञान... लब्धये क्लिश्यन्ति ये तेषां क्लेशलः क्लेश एव शिष्यते । अन्यत् इयत्ता... ज्ञानप्राप्तिलक्षणं फलं न इयत्ताज्ञानासम्भवात् यथा स्थूलतुष... घातिनां धान्याभासघातिनां क्लेश एवावशिष्यते नाल्पधान्य... द्रष्टव्यर्थः ॥ ४ ॥

———

भाषा टीका ।

जो जन ज्ञान सम्पादन के प्रयास कूं छोडकें एक ... स्थान में स्थित होय कें सज्जन महात्मान के मुखसों ... भई अपने कानन में परी ऐसी आपकी अथवा आपके भक्त... की कथा कूं देह वाणी और मनसों नमते भये सुनें ... हे अजित ! आप अजित हो तो भी उनने त्रिलोकी में आप... जीत लिये हैं ॥ ३ ॥

हे विभो ! जो पुरुष अनेक श्रेयन की प्राप्त करन... भक्ति को त्यागकर के केवल सूखे बोध ( ज्ञान ) की प्राप्ति... के नांई क्लेश करें हैं उनको ये साधनन को क्लेश ही ... शिष्ट रहे है, और फल नहीं प्राप्त होवे है । जैसे थोथे ... ( धान की छीकलान ) कों कूटवे वारे के कछु हाथ ... परें है ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्त्यैव ज्ञानं नान्यथेत्यत्र सदाचारं प्रमाणयति—पुरे... हे भूमन् ! अपरिच्छिन्न ! इह लोके पूर्वं योगिनोऽपि सन्तो ... ज्ञानमप्राप्य पश्चात्त्वदर्पितेहास्त्वय्यर्पिता लौकिक्यपीहा चेष्टा... निजकर्मलब्धया त्वदर्पितैर्निजैः कर्मभिर्लब्धया त्वत्... ईहा निजानि कर्माणि च तैर्लब्धयेत्यर्थः एवं वा कथा... तया कथया त्वत्समीपं प्रापितया भक्त्यैव विबुध्यात्मानं ... अञ्जः सुखेनैव ते परां गतिं प्राप्ताः ॥ ५ ॥

**तथापि भूमन्! महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः ।**
**अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ॥ ६ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वच्चरणभजनादिनैव त्वत्प्राप्तिर्नान्यथेत्युक्तम्, इदानीं यद्यप्युभयोरविशेषेण दुर्ज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथञ्चिद्भवेन्न तु सगुणस्य तवाचिन्त्यानन्तगुणत्वादिति श्लोकद्वयेन स्तौति—तथापीति । हे भूमन्! अपरिच्छिन्नगुणस्य ते महिमा अमलैरन्तरात्मभिः प्रत्याहृतेन्द्रियैर्विबोद्धुं बोधगोचरीभवितुमर्हति योग्यो भवति अथवा विबोद्धुं ज्ञातुमर्हति अर्हाते शक्यत इत्यर्थः । यद्वा, महिमेति महिमानं कश्चिद्बोद्धुमर्हतीत्यर्थः । कथम्? स्वानुभवादात्माकारान्तःकरणसाक्षात्कारात् नन्वन्तःकरणमपि सविकारमेव विषयीकरोतीति कथमात्माकारता तस्येत्यत आह—अविक्रियादिति । विक्रिया विशेषाकारस्तद्रहितात् विशेषपरित्याग पूर्वात्माकारतेत्यर्थः । नन्वन्तःकरणसाक्षात्कारविषयत्वेऽनात्मत्वप्रसङ्गः स्यादत आह—अरूपत इति । रूपं विषयः अविषयात् वृत्तिविषयत्वमेवात्मनो न फलविषयत्वमतो नायं दोष इति भावः । कथं तर्हि स्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव न त्वन्यथा इदं नांदातविषयत्वेनेत्यर्थः । अथवा, मा सर्वतोऽन्तरङ्गा लक्ष्मीस्तद्गुणस्य ते महि महिमानममलैरन्तर्मुखैरिन्द्रियैरपि तथा याद्दग्वस्तुतस्तेन रूपेण विबोद्धुं किमर्हति नार्हति नार्हत्येवेत्यर्थः । कथं नार्हति तदाह—स्वानुभवादित्यादिना उक्तार्थमेवैतत् ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ मुनिरेवं च न केवलं वाङ्मात्रेण किं तु पूर्वं बहुशोऽनुभूतमेवास्तीत्याह—पुरेति । नैर्व्याञ्जितमेव तत्र बहुधा—

"धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्" ॥

इतिन्यायेन कथारुचिरूपया त्वत्समर्पितं प्रापितया सतां प्रसङ्गादित्यादौ "तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिः" इत्यनुसारेण कथनीयरुचिरूपया आत्मानं परमात्मानं त्वां विज्ञाय "भक्तिर्विरक्तिर्भगवत्प्रबोधः" इति न्यायेन प्रेमवृद्धिक्रमतोऽनुभूय पराम् अन्तरङ्गां तव गतिं सामीप्यं प्रपेदिरे प्रपत्तिसहितं प्रापुरित्यर्थः भूमन्! हे अपरिच्छिन्नमाहात्म्येति त्वद्भक्तेरेतद्युक्तमेवेति भावः । हे अच्युत! इति, यतस्तव भक्त्या कथञ्चिदपीपृमिद्धदच्युतितेनास्त्येवेति भावः यथोक्तं काशीखण्डे—

"न च्यवन्तेऽपि यद्भक्ता महत्यां प्रलयापदि ।
अतोऽच्युतः स्मृतो लोके त्वमेको विष्णुरव्ययः" ॥

इति ॥ ५ ॥

तदेवं यद्यपि ज्ञाने प्रयासमित्यादिना ज्ञानमात्रस्यासूनत्वमुक्तं तथाप्यस्ति विशेष इत्याह—तथापीति द्वाभ्याम् । अगुणस्य कचिदधिकारिणा अप्रकाशितगुणस्य सतः विबोद्धुं बुद्धौ प्रकाशितुं पचेर्णिक्रतिविक्लेदनावत् कर्मनिष्ठो विकारादिः कर्तृनिष्ठश्च तस्य हेतुस्तल्लक्षणो भावः । सर्वसकर्मकधातोर्गौणमुख्यभावेन वाच्यो भवति अन्तर्भूतण्यर्थत्वात् अतो बुधधातोरपि प्रकाशमात्रत्वम् इन्द्रियकरणकप्रकाशहेतुत्वं च विधत्ते तदेवं कर्मनिष्ठप्रकाशमात्रविवक्षया ओदनः पचतीति वत् विबोद्धुमर्हतीत्यपि स्यात् अर्हति अर्हते इति अनेन बोधगोचरीकर्तुं शक्यत इत्यर्थः । अन्यकर्तृकगोचरीकरणाय योग्यो भवतीत्युक्तेस्तथैव तात्पर्यात् यदि महिमानमिति "सुपांसुलुग्" इत्यादिना सुभावात अनन्यबोध्यात्मतया चिदेकाकारांशेन जीवेशयोरभेदभावनया अन्यत्तैः, तत्र वृत्तिनिर्विषयं चित्तमेव फलं च विषयाकारचिदाभासयुक्तं तदेवेति ज्ञेयम् । यद्वा, यद्यपि भक्त्यैव विशुद्धचेत्युक्तं तथाऽप्यनन्तकल्याणगुणमहोदधेस्तव सम्यग् ज्ञानं न स्यादेव किं तु कस्यचिदेकस्य त्वद्गुणस्य साक्षात्स्यज्ञानं कस्यापि जनस्य यत्किञ्चिदेव भवेदित्याह—तथापीति । ते गुणाः करुणादिलक्षणास्तेषाम् एकोऽपि तस्य महि महिमा तस्य मा लक्ष्म्यः सम्पद इत्यर्थः । ताः कश्चिद्विबोद्धुमर्हति तच्च स्वानुभवात् स्वानुभवं स्वकीयानुशीलनमनुसृत्य यथा स्वानुभवस्तथा न तु सर्वमित्यर्थः । कथम्भूतात् अविक्रियात् अभिलाषान्तरशून्यात् स कीदृशोऽनुभव इत्यपेक्षायामाह—अनन्यबोध्यात्मतया आत्मैकवेद्यस्वरूपत्वेन, अरूपतः रूपत इति रूपः अनिरूप्यादित्यर्थः । न चान्यथेति न स्वानुभवव्यतिरेकेण न च स्वानुभवातिरेकेण विबोद्धुमर्हतीत्यर्थः । एवं श्रीभगवद्गुणस्यापि ब्रह्मरूपत्वमभिप्रेतम् ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुरेह इति । फलनिगमनेन पूर्वोक्तमेव ज्ञानं सर्वं स्फुटीकृतं यौगिनः कर्मयोगिनः निजवर्णाश्रमधर्मप्रापनया भक्त्या विशुद्ध विशेषेण त्वज्ज्ञानं प्राप्य ते परां गतिं त्वत्सम्बन्धिनीमर्चिरादिमार्गेण परमपदगतिं प्रकर्षेण प्रापुरिति, कीदृशाः त्वदर्पितेहाः स्वस्येवार्पितसकलचिन्तितनिर्मापितादिकर्माणः "यत्करोषि" इत्यादिप्रामाण्यात् ॥ ५ ॥

इदानीं तव स्वरूपलीलाविभूतिसंश्चिदचिद्व्यापकपरमात्मरूपतयावर्तमानस्य ज्ञानं सुशकमित्याह—तथेति । अगुणस्य त्रिगुणविलक्षणस्य ते परमात्मनः महिमा सर्वस्थूलावस्थचेतनाचेतनव्यापकत्वं विबोद्धुं ज्ञातुमर्हति योग्यो भवति । कैः अमलान्तरात्मभिः निर्मलैरन्तःकरणैः मनोबुद्धिचित्तैः कुतो हेतोः विक्रियारहितात् स्वानुभवात् आत्मनो जीवस्यानुभवात् देहेन्द्रियादिविलक्षणस्वैलक्षण्यानुसन्धानेन परमात्मनोऽपि वैलक्षण्यानुसन्धानं भवति, एतदेव हेतुभिरुक्तं त । ननु, स्वानुभवस्तु देहसम्बन्धेनैव स्थूलोऽहमित्यादिकः कथम्? तत्र परमात्मवैलक्षण्यानुसन्धानम् इत्यत्राह, अरूपतः आत्मनोऽप्यणुपरिमाणान्यरूपाभावात् । ननु, रूपं देहादिकं विनात्मन इव

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कथं तद्ज्ञानं ? तत्राह—अनन्यबोध्यात्मतया इति । अन्येन श्रीभगवदन्येन भगवद्बहिर्मुखेनेति यावत् न अन्येन बोध्यश्चासौ आत्मा अनन्यबोध्यात्मा तस्य भावस्तत्ता तया असौ परमात्मा स्वबहिर्मुखेन न बोध्य इत्यर्थः । अथवा अनन्यैः देवतान्तरकर्मान्तरप्रयोजनान्तरशून्यैर्बोध्यस्वरूपतया तद्ज्ञानं नान्यथाति चकारः सर्वथाऽसिद्धिमेव वदति । अथवा न अन्यत्वेन बोध्य आत्मा स्वरूपं यस्य सः तस्य भावस्तत्ता तया स्वात्मशरीरितया स्वशेषित्वेन स्वाधारतया च बोध्यस्वरूपतः न चान्यथा तज्ज्ञानम् इति पर्यवसन्नोऽर्थः ॥ ६ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, भक्त्या युक्तः कश्चित् किं इष्टचर इत्यपेक्षायां न केवलं कश्चिदेवापि तु बहव इत्याह—पुरेति । हे भूमन् ! विपुलानन्दरूप ! इह लोके बहवः पुरुषा योगिनः भक्तियोगानुग्राहकात्मयाथात्म्ययोगयुक्ताः त्वय्यर्पिता ईहा चेष्टा वर्णाश्रमानुगुणधर्मानुष्ठानरूपा चेष्टा यैस्तथाभूता निजकर्मभिर्वर्णाश्रमानुगुणैः सत्कर्मभिर्लब्धया निष्पन्नया । यद्वा, त्वदर्पितेहा ईहा फललिप्सा फलाभिसन्धिरहिता इत्यर्थः । निजकर्मभिर्लब्धयाऽनेन फलाभिसन्धिरहितवर्णाश्रमानुगृहीतत्वमुक्तं कथोपनीतया नित्यं त्वत्कथाश्रवणादिभिः प्रत्यक्षरूपतां प्रापितया भक्त्यैव विबुध्य यथावस्थितस्वरूपस्वभावं त्वां ज्ञात्वा इष्टेति यावत्—

> "भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ! ।
> ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परं तप ! " ॥

इति भगवदुक्तेः हे अच्युत ! भक्तान् च्यावयतीत्यच्युतेति सम्बोधनाभिप्रायः पराङ्गतिं मुक्तिं प्रपेदिरे ॥ ५ ॥

ननु, "नेशे महित्ववसितुम्" इति मन्महिमा मदनुग्रहपूर्णपात्रभूतेनापि त्वया दुरवबोध्यत्वादितरैर्दुरवबोध्यः कैमुत्यन्यायेनोक्तः अत्र तु विबुध्य भक्त्येति सुखावबोध्य उक्तः । कथमेतद् विरुद्धं वदसीत्यत्राह—तथापीति । हे भूमन् ! यद्यप्यगुणस्य प्राकृतगुणरहितस्य तव महि महत्त्वमप्रख्यान्तरात्मभिः सनकादिभिर्मत्प्रभृतिभिः कर्तृभिः विबोद्धुं तेषां बोधगोचरीभवितुं मार्हति नार्हति तथाप्यविक्रियत्वादिरूपेण बोद्धुमर्हत्येवेत्यनुषज्यते न चान्यथा परिच्छिन्नत्वादिरूपेण नार्हति अविक्रियाद्विकाराभावादरूपतः कर्मायत्तशरीरसंयोगवियोगरहितत्वात्स्वयाथात्म्यानुभवादनन्यबोध्यात्मतया स्वेतराबोध्यस्वरूपतया स्वसंवेद्यैकस्वरूपतयेति यावत् अविक्रियात्स्वानुभवादरूपत इति निर्देशा भावप्रधानाः तृतीयार्थे पञ्चम्यापत्त्याद् अविक्रियत्वादिरूपेण बोद्धुमर्हति स्वरूपतः स्वभावतश्च विकाररहितत्वेन प्रकृतिपुरुषविलक्षणत्वेन स्वरूपेण ज्ञायत इत्यर्थः । प्रकृतेः स्वरूपतो विकारात्पुरुषस्य स्वरूपतस्तदभावेऽपि स्वभावतस्तत्सम्भवात् एवं च जीववत्स्वभावतो विकारं वारयितुमरूपत इत्युक्तं कर्मायत्त शरीरसंयोगवियोगप्रयुक्तो हि जीवस्य धर्मभूतज्ञानसङ्कोचविकासात्मको विकारः । अतो रूपाभावादविक्रियत्वेन ज्ञायते इत्यर्थः । जीवस्य रूपवत्त्वं च स्वयाथात्म्यानुभवप्रयुक्तमिति तदननुभवो वार्यते स्वानुभवादित्यनेन स्वरूपस्यैवं विधत्वात्तन्महिमाऽप्यविज्ञाऽसाधारण्यात्त्ववेषेण ज्ञायत इत्यर्थः । यद्वा, विक्रियादित्यनन्यबोध्यात्मतायां हेतुरविक्रियादित्यत्रहेतुररूप इति तत्र हेतुः स्वानुभवादिति अयमर्थः, नित्यं प्रत्यचितस्वयाथात्म्याभवाद्धेतोः पराभिध्यानमूलकर्मायत्त शरीराभावात्तत्संयोगवियोगप्रयुक्तस्वभावविकाराभावादचेतनवत्स्वरूपविकाराभावाच्च [...]पतः स्वभावतो वा विकृतस्यैवान्यबोध्यस्वरूपत्वात्तदनुभवान्नानन्यबोध्यात्मतया ज्ञायत इत्यनन्यबोध्यात्मस्वरूपोयमेको मह्य[...] अमलान्तरात्मभिर्ज्ञायते । न तु स्वरूपस्वभावयोरियत्ता ज्ञायत इ[...] समुदायार्थः । अमलान्तरात्मभिः सनकादिभिः सह मा ब्रह्म[...]रपि महत्त्वं विबोद्धुं नार्हतीति केचिद्योजयन्ति तत्र तथा[...]स्यानन्वयापत्तिः तेनाक्षेपपरिहारयोः प्रतीतेर्नञाध्याहा[...] प्रसङ्गश्च ॥ ६ ॥

---

## श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ त्वच्छेषत्वज्ञानपूर्वकत्वद्भक्तियोगरसिकास्तु तेनैव भ[...] योगेन त्वां बहव एव प्राप्ता इत्याह—हे भूमन् ! बहुगुणां[...] "यः सर्वज्ञः सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, स्वा[...]विकी ज्ञानबलक्रिया च" इत्यादिश्रुतिषु तस्य निरुपाधिकक[...] गुणाकरत्व प्रसिद्धमिति इह लोके श्रुतिस्मृतिभिराचार्योप[...] त्वच्छेषत्वरूपमात्मानं विबुध्य ज्ञात्वा पश्चाद्भक्त्यैव भक्तः सा[...]ते परामुत्कृष्टां गतिं संसारनिवृत्तिपूर्वकत्वत्साम्यरूपां गतिं [...]दिरे प्राप्तवन्तः तथा च श्रुतिः "तथा विद्वान् पुण्यपापे वि[...] निरञ्जनः परमं साम्यमुपैति" इति । स्मृतिरपि "मम साधर्म्यमाग[...] इत्यादि तथा च भगवद्वाक्यम्—

> भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ।
> ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥

इति । किंविशिष्टया भक्त्या कथोपनीतया त्वत्कथाश्रव[...] प्राप्तया पुनः कीदृश्या निजकर्मलब्धया त्वदाराधनरूपैः व[...] वर्णाश्रमकर्मभिः प्राप्तया कीदृशास्ते योगिनः त्वदर्पितेहाः

> "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्" ।

इत्याद्युक्तप्रकारेण त्वय्यर्पितानि लौकिकवैदिककर्मफला[...]येस्ते ॥ ५ ॥

अथ यद्यपि "अस्याऽपि देववपुषो मदनुग्रहस्य । स्वेच्छामय[...] न तु भूतमयस्य कोऽपि । नेशे महित्ववसितुं मनसाऽन्तरेण" इ[...] विषयकलुषितैर्मनःप्रभृतीन्द्रियैस्तव महिमा ज्ञातुं न श[...] तथापि त्वद्दिव्यमङ्गलविग्रहप्रसादैरत एवाकलुषितैस्तैरेव सा[...]त्कर्तुमर्हतीत्याह—हे भूमन् ! अनन्ताप्राकृतगुणविशिष्ट ! गु[...]कम् ।

> "न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।
> वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" ॥

इति । अगुणस्य ते प्राकृतगुणरहितस्य ते महि महि[...] द्वितीयार्थे प्रथमा विबोद्धुं ज्ञातुम् अमलान्तरात्मभिर्वशीकृत[...] आदिभिरिन्द्रियैरर्हति—

> "दृश्यते त्वग्रयया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।
> मनसा तु विशुद्धेन" ॥

इत्यादिश्रुतेः तथा च ब्रह्मा नारदं प्रति—

> "ऋषे ! विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः" ।

इति । नान्यथा चस्त्वर्थे न तु केनाप्युपायेनेत्यर्थः । तत्र इ[...]

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

अविक्रियात् विषयात्मकानीन्द्रियाणि विकारात्मकानेव पदार्थान् गृह्णन्ति तव त्वविकारात्मकत्वात् तथा च पराशरः—

"अविकाराय शुद्धाय नित्याय परमात्मने।
सदैकरूपरूपाय विष्णवे प्रभविष्णवे" ॥

इति। तत्कुतः ? स्वानुभवात् स्वीयज्ञानानन्दानुभवात् मलिनेन्द्रियाणि शब्दादीन्येव विषयीकुर्वन्ति न तु नित्यज्ञानानन्दानुभवस्वरूपं त्वामित्यर्थः। तदपि कुतः ? यतोऽरूपतः प्राकृतरूपरहितत्वात् "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतेः। तदुक्तं मोक्षधर्मे—

"न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः"।

इति। अनन्यबोध्यात्मतयेति स्वप्रकाशत्वेन नान्यैर्बोध्य आत्मा दिव्यविग्रहः स्वरूपं वा यस्य तस्य भावः तत्ता तया तथा च भगवद्वाक्यम्।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया"।
"भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन !" ॥

इति ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

किञ्च, पुरेहेति। निजकर्मलब्धया कथारुचिरूपकथोपनीतया रुचि रूपया आत्मतत्त्वमारभ्य श्रीभगवत्तत्त्वपर्यन्तमनुभूय ते तव परमान्तरङ्गां गतिं सामीप्यं प्रपेदिरे सम्प्रति पार्षदकं प्रापुरित्यर्थः ॥ ५ ॥

तथापि भूमन्! यद्यपि विबुध्येत्युक्तं तथापि तव कथञ्चिन्निर्विशेषज्ञानं स्यादपि विशेषगुणज्ञानन्तु सम्यक् (न)स्यादित्याह ॥ ६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अस्मिन्नेव मार्गे फलसिद्धिर्बहूनां जातेत्याह, पुरेति। हे भूमन्! व्यापक! पूर्वमपि विद्यमान! इहाऽस्मिन्मार्गे बहवोऽपि सङ्घशो योगिनो योगेनाऽवधूतभक्तिसामर्थ्याः अत एव त्वयि अर्पिता ईहा चेष्टा यैः तेनैव समर्पणलक्षणेन कर्मणा त्वत्सेवालक्षणकर्मणा वा लब्धया प्राप्तया भक्त्यैव विबुध्य स्वरूपं ज्ञात्वा हे अच्युत! केनापि प्रकारेण च्युतिरहित, ते गतिं मार्गं येन प्रकारेण त्वं गच्छसि तां प्रपेदिरे पश्चात्त्वदनुगानां न कापि चिन्ता अञ्जः अनायासेनैव परां लोकातीतां गतिं प्रपेदिरे प्राप्तवन्तः अत आत्मज्ञानापेक्षायामप्ययमेवमार्ग उचितः ॥ ५ ॥

एवं लौकिकप्रकारं समर्थयित्वा वैदिकं च व्यवस्थया निरूप्य पौराणिकप्रकारेणापीदमेवोपास्यं नत्वन्तर्यामिरूपमिति उक्तं तदपेक्षयाऽस्य माहात्म्यं वदिष्यन्नन्तर्यामिरूपं सुकरत्वेन निरूपयति—तथापीति। हे भूमन्! अगुणस्य गुणातीतस्य तव महिमा अमलान्तःकरणैः बोद्धुं बोधगोचरीभवितुमर्हति योग्यो भवति हेतौ तृतीया बोधविषयो महिमा भवति यथा बोधकानां योग्यो भवति। एवं कर्मापि ग्रामो गन्तुमर्हतीतिवत् अन्तःकरणनैर्मल्ये अगुणस्य महिमा चित्ते प्रकाशते दर्पणे इव प्रयासाभावात् चित्तं हि सत्त्वाकारं तद्गृह्णाति अग्रहणे हेत्वभावात् तत्र विकारं हेतुत्वे नाशङ्क्य परिहरति—अविक्रियादिति। (अविक्रियत्वादित्यर्थः) न विक्रिया यस्मिन् विकारे हि सति शुद्धचित्तेन न गृह्यते। किञ्च, शुद्धं चित्तं आत्मगाम्यात्मस्थितमेव पदार्थं गृह्णाति महिमा पुनरात्मनिष्ठ एव अतोऽपि ग्रहणयोग्यो भवतीत्याह, स्वानुभवादिति। स्वस्यानुभव एवानुभवो यस्य आत्मग्रहणेनैव गृह्यत इति स्वशब्देनात्मा महिम्न एव स्वशब्दवाच्यत्वे महिम्न एवाऽनु पश्चात् भवः उद्भवो यस्मान्महिमसम्बन्धानुभवोऽन्तःकरणे भवति गुणातीतस्य चेत्तथा महिमा न भवति तदान्तःकरणे ज्ञानं न भवेदेव अत एवात्मानमपि गृह्णन् स्वजनकं ज्ञापयत्येव स्वस्यायं महिमा अनुभवरूप एव वा स्वयमेव वा अनुभवः तथा सति स्वप्रकाश एव। किञ्च, शुद्धे ह्यन्तःकरणे ब्रह्माकारेण परिणत रूपवत् पदार्था एव न गृह्यन्ते महिमा तु ब्रह्मभूत एवेति भिन्नरूपत्वाभावात् बोद्धुमर्हति तदाह—अनन्यबोध्यात्मतयेति। अन्येन बोध्य आत्मा स्वस्वरूपं यस्य तादृशाभिन्नोऽयमात्मत्वेनैव भासमानत्वात् अन्तःकरणधर्मा वा एते निर्दिष्टाः सर्वविकारं परित्यज्य ज्ञानरूपेण परिणतं सत् प्रापञ्चिकविषयग्रहणहेतुभूतवासनारहितं सत् स्वत एव स्फुरत् ज्ञानरूपमन्तःकरणं भगवन्महिमानं गृह्णातीति ॥ ६ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी।

भक्त्यैव ज्ञानं भवति नान्यथेत्यत्र न केवलं शास्त्रमेव प्रमाणमपि त्वन्वयव्यतिरेकाभ्यां सदाचारोऽपि प्रमाणमित्याह—पुरेति। तत्राग्रे मया किं बहु वक्तव्यं महत्त्वेन सर्वज्ञत्वादित्याशयेन सम्बोधयति—भूमन्निति। इह लोके बहवोपि पुरा प्रथमं योगिनो भक्तिव्यतिरिक्तानेकोपायवन्तोऽपि सन्तस्तैर्ज्ञानमप्राप्य पश्चात्त्वदर्पितेहाः त्वदर्पिताः लौकिकवैदिकीचेष्टा कर्माणि यैस्ते निजकर्मलब्धया तैस्त्वदर्पितैर्निजकर्मभिर्लब्धया चित्तशुद्धिद्वारा कथाश्रवणादरादिरूपया ततश्च कथोपनीतया कथाश्रवणजनितप्रेमलक्षणया च भक्त्यैव हे अच्युत! अञ्जः सुखेनैव ते तव पराङ्गतिं परं तत्त्वं विबुध्य प्रपेदिरे प्राप्ता इत्यन्वयः। त्वद्भक्तानां संसारे पतनं नैव भवति इति सम्बोधनेन सूचितम्। यथोक्तं काशीखण्डे—

"न च्यवन्तेऽथमद्भक्ता महति प्रलये यदि।
अतोऽच्युतः स्मृतो लोकेऽहमेको विष्णुरव्ययः" ॥

इति ॥ ५ ॥

एवं सगुणनिर्गुणविभागमन्तरेणैव सामान्यतो भगवतो दुर्ज्ञेयत्वमुक्तं तत्र गुणातीतस्य ज्ञानं कथं चिद्भवेदपि सकलगुणविशिष्टस्य ज्ञानं तु सर्वथा दुर्घटमेवेत्याह—तथापीति द्वयेन, विषयवासनादूषितान्तःकरणानां दुर्ज्ञेयमपि अगुणस्य गुणातीतस्य ते महिमा तत्त्वममलैस्तपःप्रवचनादिभिः निरस्तनिखिलवासनादोषैः अन्तरात्मभिः अन्तःकरणवृत्तिभिः अनन्यबोध्यात्मतया अन्यैरिन्द्रियादिभिर्न बोध्यः आत्मा स्वरूपं यस्य स अनन्यबोध्यात्मा तस्य भावस्तत्ता तया बोद्धुं बोधगोचरो भवितुमर्हति योग्यो भवतीत्यन्वयः। ग्रामो गन्तुमर्हतीतिवत्प्रयोगः। नचान्यथेति घटपटादिवदिदमेवंभूतमित्येवं बोधगोचरो भवितु नैवार्हतीत्यर्थः। तत्र हेतुत्रयमाह—अविक्रियादित्यादिपदत्रयेण

श्रीमच्छ्रीधरकृतबालप्रबोधिनी ।

तत्र भावप्रधानो निर्देशः । यो हि जन्मादि विक्रियावान् स इदमित्थमिति बोधगोचरीभवितुमर्हति ब्रह्मणस्त्वविक्रियत्वात्तत्कथं तथा स्यात् इत्यर्थः । यो हि परप्रकाश्यस्तस्यैवेदमित्थन्तया बोधो भवति ब्रह्मणस्तु स्वानुभवात् स्वप्रकाशत्वात् स कथं स्यात् यो ह्याकारविशेषवांस्तस्य तथाबोधो भवति अक्षरब्रह्मणः अरूपत आकारविशेषरहितत्वात् स कथं स्यादित्याशयः एतत्सर्वं वेदान्तशास्त्रे प्रसिद्धमिति सूचयन्नाह–हीति ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं श्लोकद्वयेनान्वयव्यतिरेकाभ्यां भगवत्प्राप्तौ भक्तिमेव स्थिरीकृत्य तत्र सदाचारं प्रमाणयति–पुरेति हे भूमन् ! प्रभो ! इह जगति योगिनो भक्तियोगवन्तः एवं त्वय्येवार्पिता ईहा चेष्टा यैस्त्वदङ्गत्वार्थमेव सर्वेन्द्रियव्यापारं कुर्वाणा इत्यर्थः । भक्तियोगश्रद्धावतां वर्णाश्रमकर्मानधिकारान्निजकर्मश्रवणकीर्तनाद्येव. तेन लब्धया विशेषतस्तु कथया श्रुतकीर्तितस्मृतया उप आधिक्येन नीतया प्रापितया भक्त्या प्रेमलक्षणयैव विबुध्य विज्ञाय त्वद्रूपगुणलीलादिकमनुभूयेत्यर्थः । परां प्रेमवत्पार्षदत्वलक्षणां गतिं प्राप्ताः । यद्वा, यथा केवलबोधो विफलस्तथा केवलयोगश्चेत्यत्र सदाचारं प्रमाणयति–पुरेति । बहुकालं योगिनो भूत्वाऽपि योगं निष्फलं ज्ञात्वा त्वयि अर्पिता ईहा चेष्टा च निजकर्म च ताभ्यां लब्धया भक्त्या ज्ञानमिश्रयैव विबुध्य त्वां ज्ञात्वा ॥ ५

एवं यद्यपि केवलया प्रेमभक्त्यैव तव साक्षादेतत्स्वरूपानुभवो भवति तथाऽपि केवलज्ञानस्य विगीतत्वाद्भक्तिमिश्रज्ञानमपि तव निर्विशेषब्रह्मस्वरूपानुभवे कारणं भवति किन्तु ज्ञानञ्च मयि संन्यसेदिति तदुक्तेर्ज्ञान संन्यासानन्तरमेवेत्याह, तथाऽपीति । यद्यपि केवला भक्तिर्न स्यात्तदपीत्यर्थः । हे भूमन् ! भूः प्रादुर्भावस्तद्युक्तमधुरैतद्रूपप्रादुर्भाववन् ! अगुणस्य प्राकृतगुणरहितस्य तव महिमा महत्त्वं बृहत्स्वरूप एको धर्मः—

"मदीयं महिमानं च परब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि" ॥

इति त्वदुक्तेः "सा ब्रह्मणि स्वमहिमन्यपि नाथ" इति ध्रुवोक्तेश्च महिमशब्देन प्रसिद्धं परब्रह्म विबोद्धुं स्वयमेव विबोध्यो भवितुमर्हति पच्यते ओदनः स्वयमेवेतिवत् कर्मणः कर्तृत्वं यथा कुठारः स्वयमेव वृक्षं छिनत्तीत्यत्र करणस्य कर्तृत्वं विवक्षितं कस्मान्निमित्तात् ? अमलैः शुद्धैरन्तरात्मभिः स्वानुभवात् स्वकर्मकादनुभवात् । नन्वनुभवः खल्वन्तःकरणवृत्तिः सा च सूक्ष्मदेहविकारमयी निर्विकारं ब्रह्म कथं विषयीकुर्यादित्यतो विशिनष्टि–अविक्रियात् न विद्यते विक्रिया विकारो यत्र तथाभूतात् विकारो हि मायाधर्मः स च मायोपरमे कुतः स्यादिति लिङ्गदेहाभाव एव व्यञ्जितः । ननु, तदपि ब्रह्मणोऽविषयत्वेनानुभवविषयत्वानौचित्यादित्यतः पुनर्विशिनष्टि, अरूपतः रूपं विषयस्तदितरात् विषयाकारत्वरहितात् ब्रह्माकारादित्यर्थः । ब्रह्मणो ब्रह्माकारानुभवविषयत्वं न दोष इति । नन्वस्ति किं तद्बोधे प्रकारान्तरं ? तत्राह—अनन्यबोध्य आत्मा स्वरूपं यस्य तत्तया नैवान्यथा स विबोध्यो भवितुमर्हतीत्यन्वयः । यथा विषयाकारानुभव एव शब्दस्पर्शादीन् विषयीकरोति न ब्रह्म तथैव ब्रह्माकारानुभव एव ब्रह्मविषयीकरोति न शब्दादीनित्यर्थः ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भवदीयवार्ताश्रवणादिरूपया भक्त्या तु भवद्विषयकं ज्ञानमन्यत्र वैराग्यं परा भक्तिस्तया त्वत्प्राप्तिश्च भवत्येवेति सदाचारेणोपपादयति–पुरेति । हे भूमन् ! साकल्यतो ज्ञातुमशक्य ! पुरा ये योगिनः"परो हि योगो मनसः समाधिः" इति वचनाद्युक्तमनस्काः भक्त्यैव विबुध्य त्वां ज्ञात्वा भक्त्यैव त्वदर्पितेहाः त्वयि समर्पिता ईहा फललिप्सा यैस्ते त्वदितरेषु ऐहिकामुष्मिकपदार्थेषु विरक्ताः सन्तः भक्त्यैव अञ्जः सुखेन ते परां गतिं प्रपेदिरे प्राप्ताः कथम्भूतया ? साधनभूतैः स्ववर्णाश्रमकर्मभिर्ज्ञानद्वारा लब्धया प्राप्तया पुनः कथम्भूतया ? कथोपनीतया त्वत्कथाश्रवणादिभिरात्मन्युपनीतया प्रवेशितया एवं भूतया नानाकारयेत्यर्थः । क्रमस्तु प्रथमं यथाऽधिकारं कर्म ततो हरिकथाश्रवणादिसाधनभक्तिद्वारा ज्ञानं ततोऽनुपादेये पदार्थे वैराग्यं भगवति परा भक्तिस्तथा मुक्तिरिति दिक् ॥ ५ ॥

भगवतः प्राकृतगुणवर्जितत्वान्निर्गुणत्वं स्वाभाविकगुणयोगात्सगुणत्वं दर्शयन् पूर्वोक्तं दुर्ज्ञेयत्वं हेतुभिः कैमुत्यन्यायेन च दृढीकरोति–तथापीति द्वाभ्याम् । यद्यप्युक्तप्रकारेण ज्ञानविषयोऽसि तथाऽपि अगुणस्य प्राकृतगुणशून्यस्य ते भूमन् महित्वं इयत्ताम् अमलैः शुद्धैरप्यन्तरात्मभिरन्तःकरणैः कोऽपि बोद्धुं नार्हति न योग्यो भवति "न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमं तमाप" इति श्रुतेः । तत्र हेतुं सम्बोधनं करोति, हे भूमन् ! इयत्ताशून्य ! हेत्वन्तरमप्याह, अविक्रियात् विकारवर्जितापरिमितस्वरूपत्वात् स्वानुभवात्स्वप्रकाशत्वात् रूपं कार्यं तद्विलक्षणत्वात् भावप्रधानो निर्देशः अनन्यबोध्यात्मतया अन्यनिरपेक्ष्यविशेषस्वरूपत्वेन उक्तसिद्धान्तं द्रढयति, न चान्यथेति । उक्तार्थोऽन्यथा न भवति ॥ ६ ॥

---

भाषा टीका ।

हे भूमन् ! पहिले समय में बहुत से योगि जन, अपनी चेष्टा और कर्म कों आपके विषै समर्पण करवेसों ... होय वे वारी, और कथाश्रवण सों प्राप्त होयवे वारी, ... की भक्ति मात्र सों आप की गति कूं जानि के, आप की ... गति को प्राप्त होय गये ॥ ५ ॥

हे भूमन् ! यद्यपि प्राकृत गुणों से रहित ऐसे ... महिमा निर्मल अन्तःकरण वाले योगी जनों के ज्ञान ... नहीं होय सके हैं । तौ भी स्वरूप और स्वभाव सों ... रहित होयवे तें प्रकृति पुरुष से विलक्षण रूप सें ... महिमा जानी जाय है, प्रकृति स्वरूप सें विकार वारी ... पुरुष स्वभाव से विकार वान् है आप दोऊन सों ... तरह के हैं । सो विकाररहित काहे सें हो ? कि, अरूप ... प्राकृत रूप रहित होयवेतें हैं, जीव विचार कूं ... शरीर संयोग वियोग होयवेते धर्मभूत ज्ञान को ...

गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ।
कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥ ७ ॥
तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥

भाषा टीका।

विकास होवे है। आप को स्वानुभव सों अर्थात् सदा स्वयं प्रकाश ज्ञानवान् होयवे सों कर्मायत्त शरीरादिक हैं नहीं है। या भेद सों भी आपकी महिमा को ज्ञान होवे है। और अनन्य बोध्य स्वरूप होयवेतें हू आपकी महिमा जानी जावे है अन्यथा नहीं अर्थात् परिच्छिन्नत्वादिरूप सों आपकी महिमा नहीं जानी जाय। अथवा अनन्यों से बोध्य है आत्मा स्वरूप जाको, आपको ऐसे होयवेतें आप के स्वरूपादिकों को आपके अनन्य जन जानि सकें हैं पूर्वाचार्यों ने कह्यो भी है, कि- "पश्यन्ति के चिदनिशं त्वदनन्यभावाः" ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गुणात्मनो गुणानामात्मनो गुणाधिष्ठातुस्ते तव पुनर्गुणान्विमातुमेतावन्त इति गणयितुमपि क ईशिरे समर्था बभूवुर्दूरतस्तद्विशेषवार्त्ता कथम्भूतस्य तव अस्य विश्वस्य हिताय पालनाय बहुगुणाविष्कारेणावतीर्णस्य। ननु, कालेन निपुणैः किमशक्यमत आह-कालेनेति। वाशब्दो वितर्के सुकल्पैरतिनिपुणैर्बहुजन्मना कालेन भूपरमाणवो विमिता विशेषेण गणिता भवेयुः तथा खे मिहिका हिमकणा अपि तथा द्युभासो दिवि नक्षत्रादिकिरणपरमाणवोऽपि ॥ ७ ॥

तस्माद्भक्तिरेव सङ्गच्छत इत्याह-तत्तेऽनुकम्पामिति। सुसमीक्षमाणस्तव कृपा कदा भविष्यतीति बहुमन्यमानः स्वार्जितं च कर्मफलमनासक्तः सन् भुञ्जान एव नातीव तप आदिना क्लिश्यन्नेवं यो जीवेत स मुक्तौ दायभाग्भवति भक्तस्य जीवनव्यतिरेकेण दायप्राप्ताविव मुक्तौ नान्यदुपयुज्यत इतिभावः ॥८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गुणात्मन इति। तत्र पूर्वस्मिन्नर्थे पूर्वरावतारिका उत्तरस्मिंस्त्वियं यथा विशेषतः स्वयमवतीर्णस्याऽस्य तव गुणानां माहात्म्यविषयत्वमपि न केनचिदपि ज्ञातुं शक्यमित्युपक्रमवत् श्रीकृष्ण एवावान्तरप्रकरणस्याप्यर्थं पर्यवसाययति- गुणेति। यद्वा, गुणानामात्मनश्चेतयितुः पूर्वमवतारान्तरेऽजगत्यप्रकटनेन प्रसुप्तानामपि गुणानामधुना प्रकटनेन प्रबोधनात् । गुणान् प्रकटयत इत्यर्थः। यद्वा, गुणा आत्मानः स्वरूपभूता यस्येति नित्यत्वमप्राकृतत्वं चोक्तम्. तथा च ब्रह्मतर्के—

"गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरुच्यते ।
न विष्णोर्न च मुक्तानां क्वापि भिन्नो गुणो मतः" ॥

इति। तथा श्रीविष्णुपुराणे—

"सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु" ॥
"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥

पाद्मोत्तरखण्डे—

"योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः ।
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते" ॥

इति। एकादशे च—

"मां भजन्त्यगुणाः सर्वे निर्गुणं निरपेक्षकम् ।
सुहृदं सर्वभूतानां साम्यासङ्गादयो गुणाः" ॥

इति। व्याख्यातं च तैरेव; अगुणा गुणपरिणामा न भवन्ति किं तु नित्या इत्यर्थः । विशेषेण एतावन्माहात्म्या इयत्संख्यावन्तश्चेति मातुं गणयितुं के ईशिरे अपि तु न कोऽपीत्यर्थः तत्र कैमुत्यम् अस्य जगतः सर्वेषामेव जीवानां हितायावतीर्णस्य तदर्थं प्रकटितगुणस्यापि अयमर्थः, यस्य जीवस्य येन यथा हितं स्यात् तथाऽसौ गुणस्तदर्थं प्रकटयितुमपेक्ष्यते तत्र जीवानामानन्त्यं तत्र च स्वभावानामानन्त्यं तत्राप्यवस्थादिभेदनानन्त्यं अतस्तदर्थं गुणानामप्यानन्त्यं तत्तद्विविधभेदेन परमानन्त्यं स्यादेवेति तद्गणना न सम्भवेत् किमुत कालदेशाद्यपरिच्छिन्ने स्वलोके विहरत इति यैर्विमितास्तेऽपि न ईशिरे इति पूर्वेणान्वयः यद्यपि भूपांस्वादीनामपि यथोत्तरं सूक्ष्मतयाऽऽनन्त्यं तथापि श्रीसङ्कर्षणादिज्ञानेन तद्गणनमपि सम्भाव्यते ब्रह्माण्डेन परिच्छिन्नत्वात् अनन्तकोटिब्रह्माण्डपरमाणुप्रमाणाश्रय रोमकूपविवरगवाक्षस्य महापुरुषस्याप्यंशिनस्तव तत्कथं स्यादिति भावः। श्लोकद्वयेऽस्मिन् सगुणस्य श्रीकृष्णस्यैव महिम्नि दुर्बोधतातिशयो दर्शितः तस्माद्यनेन कृतविवृतावस्यापि देवपुष इत्यत्र निर्गुणस्य ब्रह्मणो नासावङ्गीकृतः एतद्द्वयानुसारेण विराट्प्रस्तावस्तु स्वतो बहिर्भूत एवेति सोऽपि नादृतः तस्मात्तेरस्यस्यापीत्यादिश्लोकद्वयव्याख्याद्वयमिति पूर्वपक्षतया दर्शयित्वा श्लोकद्वये त्वस्मिन्नुत्तरपक्षः कृत इति नासामञ्जस्यं मन्तव्यम् ॥७॥

तत्त इति। एवशब्दो यथाऽपेक्ष्यमग्रेऽप्यनुवर्तनीयः आत्मना कृतमर्जितमित्यवश्यभोग्यतोक्ता अतस्तत्र सुखदुःखादिकमगणयमान इत्यर्थः। विपाकं विविधकर्मफलं पुरेह भूमन्नित्यादिरीत्या तद्विधकथाभिरुचितोद्धताय तुभ्यं हृद्वाग्वपुर्भिर्नमो विदधदिति तत्र त्वाशक्तिं कुर्वन्निति भावः। उपलक्षणं चैतद्दैन्यात्मकस्य भक्त्यन्तरस्य मुक्तिनामकं पदं चरणारविन्दं "येनापवर्गाख्यमदभ्रबुद्धिर्भेजे खगेन्द्रध्वजपादमूलम्" इति प्रथमे। यद्वा, अत्र सर्गो विसर्गश्चेत्यादौ नवमपदार्थरूपाया मुक्तेरपि पदे आश्रये दशमपदार्थरूपे "दशमे दशमं लक्ष्यम्" इत्यादिनिर्णीते स्थेयि स दायभाक् भवति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भ्रातृवयटन इव त्वमेव तस्य दायत्वेन वर्त्तसे अतो वराकया मुक्त्या का वार्त्तेत्यर्थः । अत्र तद्वर्चाख्यायां नान्यादिति बुद्धिपौरुषादिकं निषिद्धं तद्विनाऽपि जीवतः पुत्रस्य दायप्राप्तेः अत्रापि जीवत्वं भक्तिमार्गस्थितत्वं ज्ञेयम् "हतयः एव श्वसन्ति" इत्याद्युक्तेः ॥ ८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणविभूत्योर्विवेकं तन्त्रेणाह—गुणात्मनः गुणपरिणामरूपस्याऽस्य प्रपञ्चस्य हितायाऽवतीर्णस्य सर्वज्ञत्वकारणत्वादिविशिष्टस्य ते विभूतिर्विशिष्टस्य च गुणान्विमातुं ये ईशिरे ते के सुकवयः येरेते भूपांसवः खे मिहिका हिमकणाः द्युभासः नक्षत्राणि च कालेन विमिताः गणिता इति ॥ ७ ॥

इदानीमष्टमेनांशकानां प्रपत्तिं विविच्याह—तत्तेऽनुकम्पामिति । तत्ततः कारणात् ते पूर्वोक्तानन्तवैभवस्यानुकम्पां जन्मकालिककटाक्षदानरूपां सुतराम् अतिशयितां सम्यगीक्षमाणः प्राप्तिकतृप्तिरित्यर्थः । आत्मना कृतं विपाकं प्रारब्धं विपच्यते इति तथा तं भुञ्जानः न तु तत्रोद्विग्न इत्येवकारार्थः हृद्वाग्वपुर्भिः ते नमः विदधत् इत्यनेनानुकूल्यादि पञ्चपरिकरोक्तिः एवंप्रकारेण यो जीवेत इति हृत्तत्वोक्तिः । मुक्तिपदेऽचिरादिना दायभाग्भवतीति जीवतः पुत्रादेः पितृदायभाक्त्वमिवेति भावः ॥ ८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न चान्यथेत्यनेनाभिप्रेतमेव विवृणोति—गुणात्मनः इति । गुणानां कल्याणगुणानामात्मनः आश्रयस्य तव गुणान् अपिशब्दात्स्वरूपमपि विमातुम् इयत्तया परिच्छेत्तुं क ईशिरे के प्रभवन्ति न केपीत्यर्थः । सत्यं परत्वेनावस्थितस्य मम गुणानपि मातुं नेशिरे न तु विभवावस्थितस्येति शङ्कां वारयन् विशिनष्टि—अस्य जगतो हितायावतीर्णस्य विभवावस्थितस्यापि विमातुं नेशिर इति भावः । क इत्यनेन बुद्धिकुशला विवक्षितास्तदेव दर्शयितुं क इत्यनेन विवक्षितान्विशिनष्टि—कालेनेति । यैर्महता कालेनापि भुवः पांसवः तथा खे मिहिका हिमकणाः तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवो विमिताः विशेषेण गणिताः भवेयुस्तेऽपि क ईशिरे इत्यन्वयः ॥ ७ ॥

एवं भक्तिप्रपत्त्योर्भगवद्वशीकारसाधनत्वमुक्त्वेदानीं प्रपत्तेर्विशेषमाह—तदिति । तत्तस्माद्दुरवबोधानिस्समिमाहिमत्वाद्वत्प्राप्तिमन्तरेण त्वन्मायाया दुस्तरत्वाच्च केवलं तन्वादिभिस्त्रिभिः करणैस्तुभ्यं नमो विदधत्करणं कुर्वन् तवानुकम्पामपराधानवेक्षणेन केवलमनुजिघृक्षारूपां कृपां सुसमीक्षमाणः कृतापराधानामपि प्रपन्नानामुत्तारिकां मन्वानः आत्मकृतं स्वकर्मसम्पादितं विपाकं सुखदुःखादि फलं भुञ्जान एव अनेन प्रपन्नानां प्रारब्धानुभवमात्रमेव कार्यं न तु भगवत्प्राप्तये यत्नान्तरमिति सूचितं यः पुमान् जीवेत स मुक्तिपदे दायभागंशभाग्भवति "अविज्ञाताः कुमाराः" इति श्रुत्युक्तरीत्या त्वत्कुमारप्रायैर्जीवैर्नित्यमुक्तैः सह त्वदनुभवात्मकं दायं रिक्थं विभज्यानुभवतीत्यर्थः ॥ ८ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

गुणात्मनस्ते अनन्तकल्याणगुणाकरस्य तदुक्तम् विष्णुपुराणे-

"समस्तकल्याणगुणात्मकोऽसौ ।
स्वशक्तिलेशोद्धृतभूतसर्गः ॥
इच्छागृहीताभिमतोरुदेहः ।
संसाधिताशेषजगद्धितोऽसौ" ॥

इति । अस्य विश्वस्य हितावतीर्णस्य हितार्थमवतीर्णस्य तदुक्तं चोक्तं शुकेन परीक्षितं प्रति—

"कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया" ॥

इति । ते गुणान् विमातुं इयत्तया प्रमातुं क ईशिरे न केऽपि समर्था आसन्नित्यर्थः । ननु, बहुकालेन चिरजीविभिः कैश्चिन्मातुं शक्यमेवेत्यत्राह—कालेनेति । वा शब्दः सम्भावनायां सुरैरपि तिसमर्थबहुकालजीविभिर्भूपरिमाणवो विमिता विमातुं सङ्ख्यातुं शक्या भवेयुः तथा खे मिहिका हिमकणाः द्युभासः दिवि तारागणकिरणपरमाणवोऽपि गणयितुं शक्या भवेयुः न तु तव गुणा इत्यर्थः । तथा च श्रुतिः "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादि तथा वैकाइं ऋषिवाक्यं विदेहं प्रति—

"यो वा अनन्तस्य गुणाननन्ता—
ननुक्रमिष्यन् सतु बालबुद्धिः ।
रजांसि भूमेर्गणयेत्कथञ्चित् ।
कालेन नैवाखिलशक्तिधाम्नः" ॥

इति ॥ ७ ॥

तस्मात्त्वद्भक्तिरेव संसारनिवर्तिकेत्याह—तत्तेऽनुकम्पामिति । तस्मात्कारणात्तेऽनुकम्पां कृपां समीक्षमाणः भक्तानुकम्पी भगवान् ममोपरि कृपाकटाक्षं करिष्यत्येवेत्यालोचयन् आत्मकृतं विपाकं स्वप्रारब्धफलं सुखदुःखात्मकं भुञ्जान अनुभवं कुर्वाण एव हृद्वाग्वपुर्भिस्ते तुभ्यं नमो विदधत् कुर्वन् यो मुमुक्षुर्जीवेत स मुक्तिपदे दायभाग् भवतीत्यन्वयः । यथा नित्यमुक्तानां दायादस्तथायमपि भवतीत्यर्थः । तथा च श्रुतिः "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति तेह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः, यथा पादोदरस्त्वचा विमुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः सामभिरुन्नीयते ब्रह्मलोकं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्यादि ॥ ८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गुणात्मन इति हितावतीर्णस्य कृपया प्रकटितगुणस्यापि ॥ ७ ॥ तत्त इति ॥ ८ ॥

(१) श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।
श्रीकृष्णचैतन्यचन्द्राय नमः

अथ ब्रह्मणस्तुतिमाह–नौमीत्यादि । त्वामित्यध्याहार्य्यं भीतत्वोक्तौ न्यूनपदतागुणः त्वां नौमीत्यर्थः । ननु, स्तुत्य एव स्तूयते ब्रह्मणस्ते गोपबालकोऽहं किं स्तुत्यः ? इत्याशङ्क्याह, हे ईड्य ! भवानेव ईड्यो नान्यः कोऽपीत्यर्थः । अन्यत्र स्तवनमर्थवादः त्वयि तु सर्वं यथार्थमेव किमर्थं नौषीत्यत आह, ते तुभ्यं त्वदर्थं त्वत्प्राप्तय इत्यर्थः । ननु, मत्स्वरूपमेव किं यत् प्राप्त्यर्थं स्तौषीत्याह–अभ्रवपुषे मेघश्यामविग्रहाय एवमेव ते स्वरूपं तर्हि नारायण एव नूयतां सोऽपि तथा नेत्याह–गुञ्जावतंसपरिपिच्छलसन्मुखायेत्यादि विशेषणान्यासमाप्तेः । सत्त्वेवं न भवति द्विभुजश्च न भवति नराकृतिरिति । यद्वा, हे ईड्य ! वपुषे ते वपुरूपाय तुभ्यं पूर्ववत्तादर्थ्ये चतुर्थी त्वां नौमि । ननु, नारायणाज्जातोसि तं त्यक्त्वा कथं परं नौषि ? तत्राह–हे अभ्र ! अं नारायणं बिभर्त्तीति तथा तस्य सम्बोधने नारायणस्याऽपि भर्त्तरित्यर्थः नारायणोऽङ्गमित्यत्रैव वक्ष्यमाणत्वात् वपुष इत्यस्यैव सर्वाणि विशेषणानि ते कीदृशाय पशुपाङ्गजाय नन्दपुत्राय तडिदिव गौरमम्बरं यस्य अथवा यदा पवनस्पन्दो भवति तदा दृश्यते अन्यदा न लक्ष्यत अतिसूक्ष्मत्वात् गौरत्वाच्च तडिदुपमानम् अथवा वपुषे वपुर्निमित्तमित्युपस्थिते वपुषो महनीयत्वे तदेव कथमित्याशङ्क्याह–तडिदम इदं वपुस्तत् उच्छ्रायवत् उच्छ्रायः सर्वोत्कर्षः । ननूच्चैः इति वाक्यान्तरं हेतुत्वेनोत्थापनीयं "तटउच्छ्राये" इत्यतः क्विपि सिद्धं सर्वोच्छ्रितं परात्परमित्यर्थः । ते कीदृशाय सर्वश्रेष्ठाय । अथवा वराय अभिमतफलदानाय इदं तटउच्छ्रितमित्येकमेव वाक्यान्तरं "वृवरणे" वादिः पवर्गीयः तेनानुस्वारस्य पञ्चमः हे गुञ्जावतंस ! "गुजि अव्यक्ते शब्दे" गुञ्जोऽव्यक्तशब्दः शब्दब्रह्म अव्यक्तत्वादपौरुषेय इत्यर्थः । तस्यापि अवतंसश्रुतिशिरोवतंसः प्रत्ययस्यावतंस स्वयं न दृश्यत इति शब्दब्रह्मागोचरेत्यर्थः । हे परिपिच्छल ! परि परितः पिः ध्यानं वृद्धिर्यस्य तत् परिपि नपुंसकत्वात् ह्रस्वः परिपि सर्वतो वृद्धं छलं माया यस्य स सम्प्रत्येवानुभूतत्वात् ध्याप्योरिति क्विपि प्यैङ्धातोः सम्प्रसारणे पिः सन्मुखाय सत्सु भक्तेषु मुखाय अभिमुखायेति ते इत्यस्य विशेषणं वपुषे इत्यस्य वा अथवा ते तव मृदुपदे नौमि किमर्थं वपुषे वपुरर्थं एतदेव वपुर्निरन्तरं स्फुरत्विति काक्वा सर्वाण्येव वपुर्विशेषणानि ॥ १ ॥

अथ यो यज्जानाति स तत्स्तोतुमर्हति नाज्ञातस्य स्तवः कर्तुं शक्यत इति नौमीति यदुक्तं तदसंभाव्यमित्याशङ्क्याह, अस्यापीति । हे देव ! सर्वविजिगीषापर ! अस्यापि वत्सपालरूपस्य वपुषश्चिदेकरसत्वाज्जातावेकवचनं अपि महिमानम् अवसितुं ज्ञातुं कोपि ब्रह्माप्यहं नेशो न समर्थोऽस्मि यतः सर्व एव चतुर्भुजाः सर्व एव सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः सर्व एव महदादिभिः सेव्यमाना अतस्तथाविधस्य अस्येति सन्निकृष्टस्य सर्वनाम्नो बुद्धिस्थवृत्तित्वादिदं शब्दः खलु वत्सवत्सपादिपरः कीदृशस्य मदनुग्रहस्य मम दर्पहा निरूपोऽनुग्रहो यत्र पुनः कीदृशस्य स्वेच्छामयस्य स्वस्य तव इच्छा तन्मयस्य तया प्रकटितस्य अतो ननु भूतमयस्य तुरेवार्थः । अव्ययानामनेकार्थत्वात् मान्तरेणापि समाधिनिश्चलेनापि मनसा साक्षात् अपरोक्षस्य आत्मसुखानुभूतेः विग्रहरूपपरमानन्दावबोधस्य तव तु श्रीकृष्णस्य महि अवसितुं यत्र ईशे तत् किमुत "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" अत्र वर्ष्मपरः तेऽपि सत्यज्ञानादिरूपमूर्त्तयः अयं चात्मसुखानुभूतिरिति तुल्यत्वादविशेषे साक्षाच्छब्दः वस्तुतस्तु तदिच्छामयत्वादेच्छिकस्याः प्रकाशिकाख्याया मायाया एव विलासः अयं तु साक्षात् तथाविधमाय इति विशेषः ॥ २ ॥

ननु, भो ब्रह्मन् ! ज्ञानयोगेनैव महि ज्ञातुं शक्यते स ते नास्ति कथं ज्ञातव्यो भवता ? इति चेत् मम तु ज्ञानोपदेष्टा श्रीनारायण एव तथापि तव महिमा न ज्ञातः, अतो भगवदनुग्रहं विना ज्ञानयोगेपि तत्तव तत्त्वज्ञानकारणं न भवतीत्याह–ज्ञाने प्रयासमित्यादि । स्थाने त्वयि स्थिता त्वयि भावं कुर्वन्त इत्यर्थः "स्थानभ्रष्टा पतन्त्यधः" इत्युक्तेः । ज्ञाने प्रयासं उदपास्य उत्कर्षेण त्यक्त्वा सम्यक् त्यक्त्वेत्यर्थः तनुवाङ्मनोभिः तन्वा प्रणामादिना वाचा कीर्त्तनेन मनसा स्मरणादिना भवदीयवार्तां नमन्तः सम्मानयन्त एव ये केचित् जीवन्ति तैस्त्रिलोक्यां अजितोऽपि त्वं जितोसि, प्रायशो बाहुल्येन यत्र भवद्वार्त्ता भवति तं देशमेव अध्यमेदिति तन्वेति तृतीयाविभक्तेर्व्यञ्जकता, अथवा तनुवाङ्मनोभिर्जितोऽसीत्यन्वयः । वार्त्ता कीदृशीं सद्भिर्मुखरितां श्रुतिगतामिति श्रवणपथप्राप्तमात्र एव तदर्थावधारणमप्यनपेक्ष्येत्यर्थः ॥ ३ ॥

ननु, तर्हि किं ज्ञानं स्वतः साधनं न भवति अथ किं न भवत्येवेत्याह–श्रेयःस्रुतिमित्यादि । हे विभो ! ते तव भक्तिमुदस्य केवलबोधलब्धये ये क्लिश्यन्ति तेषां क्लेशलः क्लेश एव शिष्यते अवशिष्टो भवति श्यामादित्वात् स्वार्थे लप्रत्ययः नान्यत् कैवल्यादिभक्तिसनाथेनैव ज्ञानेन कैवल्यं जन्यत इति नियमात् । भक्तिं कीदृशीं श्रेयःसृतिं श्रेयसः सरणिं ज्ञानं तु न तथा तत्र दृष्टान्तः यथा स्थूलतुषावघातिनां स्थूलतुषावघाते हि क्लेश एव केवलं परेषामपि कर्णोत्कटत्वम् ॥ ४ ॥

अत्र प्रमाणं दर्शयन्नाह—पुरेह भूमन्नित्यादि । हे भूमन् ! सर्वोपरि विराजमान इह निःश्रेयसाविष्टायां योगिनः चिरं योगकृताभ्यासा अपि योगैरकृतार्थाः सन्त इत्यपेरर्थः । पश्चात् त्वय्यर्पितेहास्त्वयि अर्पितम् ईहामात्रं यैस्तथा सन्तः निजकर्मलब्धया त्वयीहार्पणरूपं यन्निजं कर्म तेन लब्धया प्राप्तया भक्त्यैव विबुध्य जाग्रद्दशां लब्ध्वा हे अच्युत ! ते तव परां गतिं तव निजं धाम प्रपेदिरे भक्त्यैवेत्येवकारोऽन्ययोगव्यवच्छेदपरः न ज्ञानादिनेत्यर्थः । भक्त्या कीदृश्या ? कथोपनीतया तव कथामात्रेणैव प्रस्तुतयेत्यनायाससाध्यत्वं एतेन तेषामसौ क्लेशल एव शिष्यत इति यदुक्तं तत् स प्रमाणमेव ॥ ५ ॥

एवम्भूतास्तव गुणाः येषां कथयैव भक्तिरुत्पद्यते उत्पन्नया च तया सुखेन त्वत्पदप्राप्तिस्तथापि किं तव गुणमहिमा ध्यानेनेति वक्तुं न शक्य एवेत्याह—तथापीत्यादि । हे भूमन् ! अपरिच्छिन्नवैभव ! ते गुणास्य ऐश्वर्य्यादिगुणषट्कस्य महिमानं विबोद्धुमर्हति न समर्थो भवति कश्चिदिति शेषः । अमलानि निर्मलानि अन्तः अन्तःकरणानि आत्मा च येषां तैर्विशिष्टोऽपि विशेषणे तृतीया अथवा आत्मानश्चेति बहुवचनमेव आत्मा च आत्मा च आत्मा च आत्मान इत्येक शेषः । धृतिर्बुद्धि-

(१) पश्चाल्लुब्धत्वात्पश्चादारब्धोऽयम् ।

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

स्वभावा आत्मानः "आत्मा यत्नो धृतिर्बुद्धिः स्वभावः" इत्याद्युक्तेः पूर्ववत्तृतीया महि कीदृशं अविक्रियात् विक्रिया विकारः तामु अनतीति विक्रियात् न तथा अविक्रियात् विकारशून्यमित्यर्थः । तर्हि किं बोध्यमेव न भवति तत्राह—स्वानुभावात् अनन्यबोध्यात्मतयैव बोद्धुमर्हति कथं भक्तास्तेषामनुभवः स्वानुभवो भक्ताऽनुभवः तस्मादनन्यबोध्यात्मतया तस्मान्नबोध्यात्मकत्वेन बोद्धुमर्हति न चाऽन्यथा नान्यप्रकारेण कुतः अरूपतः अनिरूपणात् हेतोः रूपनिरूपणे (न) रूपणं रूपः न रूपः अरूपस्तस्मात् । यद्वा, अमलान्तरात्मभिः सात्त्वतैः अगुणस्य प्राकृतगुणरहितस्य तव महिमा तथा तेनैव प्रकारेण अपि प्रायनः कस्मिन् काले अर्हति योग्ये काले भक्तिसम्पन्नतायां सत्याम् "अर्हप्रशंसायाम्" इत्यतः शतृप्रत्यये रूपम् । कोऽसौ प्रकार इत्याह-अविक्रियात् अविकारात् स्वानुभावात् अरूपतश्चेत्यस्य पूर्ववन्निरुक्तिः अनन्यबोध्यात्मतया च भक्तैर्विना नान्येषां बोध्यस्तस्य भावस्तत्ता तया च एत एव प्रकाराः न चान्यथेत्युपसंहारः । अथवा तव महिमा ब्रह्म अमलान्तरात्मभिः पुरुषैस्तथा अर्हति योग्ये काले बोद्धुमपि न तु भवान् दृश्यमानश्रीविग्रहः तथा बोद्धुमपीति, तमेव प्रकारमाह—अविक्रियादित्यादि पूर्ववत् । अथवा आत्मभिरात्मभूतैर्योगिभिस्तथा तेनैव प्रकारेणापि कुत्रविमलान्तः विमलेऽन्तःकरणे कीदृशि अर्हति योग्ये अन्यत् पूर्ववत् । अथवा तव महि महिमानं मा लक्ष्मीरर्हति नाऽन्यः कीदृशी आत्मभिः यत्नधृतिबुद्धिवर्ष्मभिः अन्तर्विमला अन्तःशुद्धिमती कुतः स्वानुभावात् कीदृशात् विक्रियात् अखण्डात् अरूपात् रूप्यत इति रूपम् अनिरूप्यादित्यर्थः । सैवार्हति नान्य इति को नियमस्तत्राह—अनन्यबोध्यात्मतया तां विना अन्येषामबोध्यस्वरूपतया न चान्यथा नान्येन प्रकारेण सैवार्हति नान्यः कोऽपीत्येवं रूपेण प्रकारेणेति यावत् ॥ ६ ॥

यद्यपि अविक्रियादित्यादिप्रकारेण तव महिमा ब्रह्म च ज्ञातुं शक्यते तथापि न तवाऽवतारस्य मत्स्यादिरूपस्यापि गुणान् विमातुं क ईशिरे न केऽपीत्यर्थः । भवतस्तु यन्नेशिरन् तत् किमुतेत्यर्थः । तव कीदृशस्य हितावतीर्णस्य हितं स्वशक्तिप्राकट्यं कं इत्यस्य किंशब्दस्य यच्छब्देन पुनः प्रतिनिर्देशं करोति कालेन यैर्धिषणादि सुकल्पैर्योग्यैः सर्वज्ञैरिति यावत् अन्यत् सुगमम् ॥ ७ ॥

अतः केऽपि ते तत्त्वं न जानन्त्येव बहिरङ्गत्वात् भक्तास्तु यत् किञ्चिज्जानन्ति अन्तरङ्गत्वात् न यावदिति तत्प्रशंसामाह, तत्तेऽनुकम्पामित्यादि । तत् तस्मात् ते तवानुकम्पामनुग्रहं सुष्ठु-सम्यक्प्रकारेण ईक्षमाणः अनुभवन् सर्वं दर्शनार्थं ज्ञानार्थं हृद्वाग्वपुर्भिस्ते तुभ्यं नमो विदधत् कायवाङ्मनोभिर्भजन् यो जीवेत जीवति स मुक्तिपदे मुक्तिलक्षणे नित्यपार्षदरूपं दायभाक् अथवा अमुक्ति अपेक्ष्यम् यथास्यात् तथा पदे चरणारविन्दे दायभाक् ममोपास्यमिदमेवेति ममकारपरस्परं दायभाक् भवति अथवा मुक्तिपदे मुक्तिरूपे पदे स दायभाक् खण्डनकृत् भवति "दो अवखण्डने" इति धञि रूपम् इतः परं मुक्तिसुखमन्यन्नास्तीति निश्चिनोति । ननु, कथमेवं पूर्वकर्मभोगे दुर्निवारे सति तेन बाध्यमानो हृद्वाग्वपुर्भिर्जनो मां भजतां इत्याह-आत्मकृतं विपाकम् अभुञ्जान एव तवानुकम्पानुभवेन तस्य प्रारब्धत्वयाचद्भोगः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गुणात्मनस्तु महिमा ज्ञातुं न शक्यत इत्याह—गुणात्मनः इति सर्वगुणरूपो भगवानेव जातस्ते च गुणा अनन्तास्तेषां विमानेऽपि कश्चिन्न शक्तः यतः सर्वजगद्धितार्थमवतीर्णाः बहवोऽपि मिलित्वा नेशिरे महताधि कालेन सुकल्पैरपि समर्थैर्भूपांसवो विमिता भवन्ति पञ्चाशत्कोटिघनस्य गणनायां घनान्तरस्य तदपि गणितुं शक्येत खे आकाशे मिहिकाः हिमकणाः द्युभासः ज्योतिश्चक्रतेजोंशाः एते तामसा राजसाः सात्त्विकाः सर्वहितार्थं प्रवृत्ताः परिमितत्वात् गणितुं शक्या अपरिमितास्तु भगवद्गुणा गणितुं न शक्याः ॥ ७ ॥

अतो ये सगुणोपासकाः ते गुणज्ञानाग्रहं परित्यज्यानुकम्पानुसारेण चेत् प्रवृत्तास्तदा कृतार्था भवन्तीत्याशयेनाह-तत्तस्मात् कारणात् ते अनुकम्पां कृपामेव प्रकर्षेण समीक्षमाणः कदा कृपां करिष्यतीति तावत्पर्यन्तमात्मकृतमेव विपाकं स्वं विपाकं भुञ्जानः हृदयमेव मनः वाङ्मनोवपुर्भिः ते नमो विदधत् यो जीवेत् स मुक्तिपदे दायभाक् भवति यथा पितृद्रव्ये जीवन् पुत्र एव भागी एव ॥ ८ ॥

---

श्रीमद्विश्वरकृतबालप्रबोधिनी ।

गुणात्मनः गुणाधिष्ठातुस्ते तव गुणान् विमातुमेतावन्त इति गणयितुमपि के ईशिरे समर्था बभूवुः । तदधिष्ठानन्तु दूर इति सूचयितुमपिशब्दः । गणनाशक्यत्वे हेतुमाह—अस्य विश्वहिताय पालनाय बहुधागुणाविष्कारेणावतीर्णस्येति । सुकालेन निपुणैः किमशक्यमत आह-कालेनेति । वाशब्दो विकल्पे यैः सुकल्पैरतिनिपुणैः जनैर्बहुजन्मना कालेन भूपरमाणवो वा खे आकाशे मिहिका हिमकणास्तथा द्युभासः दिवि नक्षत्रकिरणपरमाणवश्च विमिताः विशेषेण गणिता भवेयुस्तथापि अपि क ईशिरे इत्यन्वयः ॥ ७ ॥

तस्माद्भजनमेव सङ्गच्छते न तु ज्ञानाग्रह इति कथितमाह तत्तेऽनुकम्पामिति । यस्माज्ज्ञानं सुदुर्घटं तत्तस्मात् हे भगवन् ऐश्वर्यादिगुणपरिपूर्ण ! यः प्राणी ते तवानुकम्पां कृपां सुसमीक्षमाणः कदा भगवत्कृपा भविष्यतीति प्रतीक्षमाणस्तावदात्मकृतं विपाकं स्वार्जितं कर्मफलमनासक्तः सन् भुञ्जानो हृद्वाग्वपुर्भिस्ते तुभ्यं नमो विदधत् । नम इत्युपलक्षणमन्यासामपि अष्टविधभक्तीनां तासां मध्ये यथासम्भवं भक्तिं कुर्वन्नेव जीवेत् स मुक्तिपदे मुक्तिरूपे फले दायभाग्भवतीत्यन्वयः । दायभागित्वकथनेन यथा पितृदायप्राप्तौ पुत्रस्य पितृभजनपूर्वकजीवनव्यतिरिक्तमन्यन्नापेक्षितं तथा भक्तस्यापि मुक्तिप्राप्तौ भगवद्भजनपूर्वकजीवनव्यतिरिक्तमन्यन्न किञ्चिदपेक्षितमिति सूचितम् ॥ ८ ॥

**पश्येश ! मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि ।**
**मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चिरग्नौ ॥ ९ ॥**

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अप्राकृतकल्याणगुणमयं तवेदं भगवत्स्वरूपन्तु प्रेमभक्त्या विना विज्ञातुं केऽपि मायासिन्धूत्तीर्णा अपि विद्यावन्तोऽपि न शक्नुवन्ति यदिमे जगज्जना अस्मदादयस्त्वां पश्यन्तोऽपि न जानन्तीति किं वक्तव्यं तव महामधुरान् गुणानपि सङ्ख्यातुमपि न शक्नुवन्ति तन्माधुर्य्यानुभववार्त्ता दूरे वर्त्ततामित्याह—गुणात्मानः स्वरूपभूता यस्येति गुणानां नित्यत्वमप्राकृतत्वं चोक्तं तथा च ब्रह्मतर्के "गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः" इति अपिस्त्वर्थे गुणात्मनस्तु तव गुणान् विमातुम् एतावन्त इति गणयितुं के ईशिरे शक्नुवन्ति अपि तु नैव आममाव आर्यः अस्य विश्वस्य हिताय संसाररोगनिवृत्तये अवतीर्णस्य वेति वितर्के यैः सुकल्पैरतिनिपुणैः सङ्कर्षणादिभिर्भूपरमाणवो रेणवोऽपि विमिता गणितास्तथा ततोऽप्यधिकाः खे मिहिका हिमकणा अपि तथा ततोऽप्यधिका द्युभासः दिवि सूर्य्यादीनां किरणपरमाणवस्तथाऽपि ते सङ्कर्षणाद्या यान् अद्यापि गायन्तो गायन्तः सीमानं नैवाप्नुवन्तीत्यर्थः। यद्वा, गुणे त्रिगुणमये जगति आत्मा पालनार्थं मनो यस्य तथाभूतस्यापि तव गुणान् विमातुं न ईश्वरे किं पुनर्गुणातीतमहाचमत्कारिवृधिं चौर्य्यादिक्रीडात्मन इति ॥ ७ ॥

तदेवमन्यत् सर्वसाधनं परित्यज्य भक्तिमेव कुर्वंस्त्वां लभेत इति प्रकरणार्थो ऽवगतस्तत्र कीदृशः सन् कुर्य्यादित्यपेक्षायामाह—तत्ते इति यस्मादेवं तत्तस्मादात्मकृतं विपाकं "धर्मस्य ह्यापवर्ग्यस्य नार्थो ऽर्थायोपकल्पते" इत्यत्र प्रतिपादितं भक्तेरप्यननुसंहितं फलं सुखं तदपराधफलं दुःखं च भुञ्जान एव तं तवानुकम्पां सुष्ठु सम्यगीक्षमाणः समये प्राप्तं सुखं दुःखं च भगवदनुकम्पाफलमेवेदमिति जानन् पिता यथा स्वपुत्रं समये समये दुग्धं निम्बरसं च कृपयैव पाययति आश्लिष्य चुम्बति पाणितलेन प्रहरति चेत्येवं मम हिताऽहितं पुत्रस्य पितेव मत्प्रभुरेव जानाति न त्वहम् मयि तत्कर्त्ते नास्ति कालकर्मादीनां केषामप्यधिकार इति स एव कृपया सुखदुःखे भोजयति च खं सेवयति चेति विमृश्य "यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितम्" इति पृथुरिव प्रत्यहं भगवन्तं विज्ञापयन् हृदादिभिर्नमस्कुर्वन् नातीव क्लिश्यन् यो जीवेत स मुक्तिश्च पदञ्च तयोर्द्वन्द्वैक्यं तस्मिन् संसारान्मुक्तौ त्वच्चरणसेवायां चेत्यानुषङ्गिकमुख्यफलयोर्दायभाग्भवति यथा पुत्रस्य दायप्राप्तौ जीवनमेव कारणं तथा भक्तस्य जीवनं तथेह भक्तिमार्गे स्थितिरेव "इतय इव श्वसन्त्यसुभृतो यदि ते नुविधा" इत्याद्युक्तेरिति भावः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणिनस्तु का कथा गुणानामप्यन्तं कोऽपि न जानातीत्याह-गुणात्मन इति। गुणानां स्वाभाविकानामात्मन आश्रयस्य अस्य विश्वस्य हितायावतीर्णस्य ते गुणान् विमातुम् एतावन्त इति गणयितुमपि के ईशिरे समर्था बभूवुः न केऽपीत्यर्थः। वेति वितर्के यैः सुकल्पैरपि कालेन यथेष्टेन भूपांसवः तथा खे मिहिका हिमकणा अपि तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवोऽपि विमिताः गणिताः भवेयुस्तेऽपि ॥ ७ ॥

यया त्वां ज्ञात्वा तव परां गतिं पूर्वे प्रपेदिरे सा भक्तिस्तु तव कृपां सुसमीक्षमाणस्य दैन्यादियुक्तस्य त्वत्कृपया जायमाना भविष्यतीत्याशयेनाह-तत्ते इति। आत्मकृतं स्वार्जितं कर्मफलं सुखं वा दुःखं वा भुञ्जान एवेत्यनेन दैन्यादियुक्त इति सूचितम् भगवान् कर्मव्यालगृहीते मयि कदा कृपां करिष्यतीत्येवं ते तवानुकम्पां सुसमीक्षमाणः तदर्थं हृदादिभिस्ते तुभ्यं नमो विदधत् साधनरूपिकां भक्तिं कुर्वन् यो जीवेत स मुक्तिदायभाग्भवेत् तव कृपां प्राप्य परमभक्तो भूत्वा विमुक्तो भवेदित्यर्थः। तथा हि भगवत्पूर्वाचार्य्यैः—

"कृपाऽस्य दैन्यादियुजि प्रजायते ।
यया भवेत्प्रेमविशेषलक्षणा ।
भक्तिर्ह्यनन्याधिगतेर्महात्मनः ।
सा चोत्तमा साधनरूपिकापरा" ॥

इति ॥ ८ ॥

---

भाषा टीका ।

या जगत् के हित के ताईं अवतार लेन वारे अनन्त कल्याण गुणों के आश्रय जो आप हैं, तिनके गुणन को विशेष करके प्रमाण करवे को कोन समर्थ होयसके हैं?। यदि निपुण पुरुष कोई काल में पृथिवी के रेणुकों आकाश में हिमकणों कों और अन्तरिक्ष में तारागणन कों भलेई गिनलेवें पर आपके गुण नहीं गिने जांय ॥ ७ ॥

तासों केवल आपकी कृपाकों भली भांत देखतो भयो, अपने करे परिपक्व कर्मनके फलनकों भोगतो भयो, मन वाणी और वपु ( देह ) सों आपके ताईं नमस्कार करतो भयो, जो जीवे है, सोई मुक्ति पदमें हिस्सा बटावन वारो होयहै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं स्तुत्वा भगवन्तं क्षमापयितुं स्वापराधं निवेदयति—पश्येति । हे ईश ! मेऽनार्यं दौर्जन्यं पश्य यदहं मायिनामपि मायिनि विमोहके त्वय्यपि स्वमायां प्रसार्यात्मैश्वर्यमीक्षितुमैच्छमभिलषितवान् अहो एवं कर्त्तुं त्वय्यहं कियान् किञ्चिद् यथाऽग्नेरुद्भूता ज्वाला अग्नौ न किञ्चित्तद्वदिति ॥ ९ ॥

अतः क्षमस्वाच्युत! मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः ।
अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति ॥ १० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

रजोऽभुवो रजसो जातस्यातोऽजानतोऽत एवाजावलेपान्धतमोऽन्धचक्षुषः अजो जगत्कर्त्ताऽहमिति मदेन गाढतमोरूपेणान्धीभूते नेत्रे यस्याऽतस्त्वत्तः पृथगीशमानिनः अन्यत्र प्रभुत्वेन वर्त्तमानोऽपि मयि नाथे सति नाथवान्मद्भृत्य एवात एषोऽनुकम्प्य इति मत्वा क्षमस्वेत्यर्थः ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र ज्ञानस्याप्रयोजकत्वे स्वमेव दृष्टान्तीकुर्वंस्तत्रैव स्वापराधमपि क्षमापयितुमुपक्रमते—पश्येति । आर्यः सुजनः तस्य भाव आर्यं तत्तु विज्ञत्वमपि क्रोडीकरोति अतस्तद्विपरीतं दौर्जन्यं मूढत्वं चानार्य्यं पश्येति तस्य प्राकट्यादिकं बोधितं तत्र ईशे स्वप्रभौ तत्र चाद्ये पितरि स्वयंभपीति दौर्जन्यम् अनन्ते अपरिच्छिन्नमहिमनि परमात्मनि आत्मनोऽप्यात्मनीति मूढत्वं तत्तद्ज्ञानत्वेऽपि मायिमायिनि मायां वितत्येति परममूढत्वं किं तव आत्मनस्तत्र वैभवं 'माहात्म्यमीक्षितुमैच्छं यत् द्रष्टुं मञ्जुमहित्वमन्यदपीत्युक्तेः, हि निश्चये । ननु, मम माहात्म्यं द्रष्टुं चेत्तर्हि को दोषः तत्राह—स्वन्माहात्म्यं द्रष्टुं तत्रापि मायां वितत्य द्रष्टुं कियान् को वराकोऽहमित्यर्थः । कियत्त्वे दृष्टान्तः अग्नौ अर्चिरिवेति । यद्वा, आत्मनः स्वस्य वैभवं द्रष्टुमिति दैन्येन पूर्वार्थमाच्छाद्य प्रोक्तम् ॥ ९ ॥

अत इत्यस्य टीकायां प्रभुत्वेनेति प्रभुंमन्यत्वेनेत्यर्थः । यद्वा, अतो ममातितुच्छत्वात् तवातिमहत्त्वाच्च क्षमस्व अतितुच्छत्वमेव दर्शयति—रजो भुव इत्यादिभिः । अजानत इति तमोऽप्यत्र व्यञ्जितः, पश्यतामपि मच्चक्षुषां च ताभ्यामेव सगर्वत्वमान्ध्यं च जातमित्याह—अजेति । हि प्रसिद्धौ त्वमपि जानासीति भावः । हे अच्युतेति त्वमेवाच्युतनामा अतः "सकृदेव प्रपन्नो यः" इत्यादिरूपव्रतादपि तवाच्युतिर्योग्यैव अस्माकं च तथामतानर्हत्वादेव तादृशच्युतिरपि न सम्भवतीति भावः । एषोऽहमनुकम्प्यः कथं नाथवानिति दास इत्येवम् । ननु, परमेष्ठिनस्तव दास्ये किमर्थं तत्राह—मयि भगवति निमित्ते मदेकप्राप्त्यर्थमिति ॥ १० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ द्वाभ्यां स्वापराधं क्षमापयति । हे ईश ! मेऽनार्य्यं दौर्जन्यं क्षमस्व तदेवाह—अनन्ते आद्ये परमात्मनीत्यादि सर्वदेशसर्वकालसर्वावस्थास्ववस्थितया व्यापके जगत्कारणत्वाद्यसाधारणलक्षणोऽन्तर्यामिणि विभवरूपतया सुलभेऽपि इत्यपिशब्दार्थः । कुतः ? मायाविनामपि मोहकेऽर्चारूपे मायामन्तर्धानादिकरणरूपां वितत्यात्मवैभवमीक्षितुं द्रष्टुम् ऐच्छम् अर्चिः स्फुलिङ्गकणः अग्नाविवेति दृष्टान्तेन स्वाल्पशक्तिः ॥ ९ ॥

हे अच्युत ! अतः कारणात् मे क्षमस्व राजस... अजस्य त्वत्तः पृथक्कर्येश्वरत्वाभिमानिनः स्वस्य ब्रह्म... नान्धकारेणान्धस्य मे क्षमस्वेति तव क्षमैवोचिता एषः ... नाथवानिति स्वस्वामिभावरूपसाधारणादनुकम्प्य इत्ये... ग्येति ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमभिष्टूय स्वापराधं क्षमापयितुं तावन्निरूपयति... पश्येति । हे ईश ! ममानार्य्यं दौर्जन्यं पश्य किं तदहं मा... माश्चर्यशक्तियुक्तानामपि मायिन्यत्याश्चर्यशक्तियुक्तेऽनन्ते... च्छेद्यस्वरूपस्वभावे जगत्कारणभूते परमात्मनि मायां वि... च्छाद्यात्मैश्वर्यमीक्षितुमैच्छमभिलषितवानित्येतदहम् एवं... कुर्वन्महाक्रियाश्च किञ्चिदतितुच्छ इत्यर्थः । यथाऽग्नावुत्थितार्चिः... स्वास्फुलिङ्गस्तद्वत् ॥ ९ ॥

मम युक्तमेवैतदिति वदन्नपराधं क्षमापयति—अत इ... हे अच्युत ! रजोभुवः रजसा जातस्यात एवाजानतस्त्व... मिति शेषः । त्वत्तः पृथगीशमात्मानं मां मन्वानस्याऽज्ञो... योऽवलेपो गर्वः स एव अन्धं तमस्तेनान्धीभूते चक्षुषी... एवम्विधस्य दौर्जन्यं युक्तमेवेति भावः । अतः दौर्जन्यं... क्षमाप्रकारमाह, मयि नाथवान्मद्भृत्य एवात एषोऽप्यनुकम्प्य... मत्वा क्षमस्वेत्यन्वयः ॥ १० ॥

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

एवं तावत्स्तुतिवाक्यैर्भगवन्तं स्तुत्वा अथ तस्मिन्... णाकरे भगवति शरणागतदोषभोग्यत्वं दोषादर्शित्वं वा... दयामिति लक्षणलक्षितं वात्सल्यगुणमाकलय्य तदग्रे स्वापरा... दोषमाविष्करोति, पश्येश ! मेऽनार्य्यमिति । हे ईश ! सर्वज्ञ... मे अनार्य्यं दाष्टर्यं आर्ष्यमिति यावत् पश्य आश्चर्यत्वेना... कय तदेवाह—योऽहं अनन्ते अपरिच्छिन्नमहिम्नि आद्ये सर्व... परात्मनि चिदचिच्छरीरके मायिमायिनि मायिनामपि... त्वयि मायां स्वमायां वितत्य प्रसार्य आत्मवैभवम् अहो... ब्रह्माण्डनायकं भगवन्तमपि मोहितवानित्येवंरूपं देवानां... रूपमैश्वर्यमीक्षितुं द्रष्टुम् ऐच्छम् इच्छामकार्षं सोऽहं त्वन्मायाभि... मायो कियान् कियत्परिमाणः न किमपीत्यर्थः । कमिव... अर्चिरिव यथा अग्नेरुत्पन्नोऽर्चिस्तत्प्रकाशयस्तत्प्रकाशने... किमपि समर्थस्तद्वदित्यर्थः ॥ ९ ॥

एवं स्वापराधं निवेद्य तं क्षमापयति—अत इति । अत... राधस्य कृतत्वात् त्वच्छेपभूतस्य मे क्षमस्व ममोपरि... मोचय—

"मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात्" ॥

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

इति त्वयैवोक्तं हे अच्युत ! शरणागता यस्मान्न च्यवन्ति सोऽच्युत इति नामनिर्वचनम् अतः क्षमस्व । किञ्च, मदुत्पत्तिस्थानं दृष्ट्वा क्षमस्वेत्याह-हि यतः रजोभुवः रजोगुणोत्पन्नस्य तथा च वाराहे अगस्त्यम्प्रति रुद्रः "नारायणः परो देवः" इत्यारभ्य—

"रजस्तमोभ्यां युक्तोऽभूत् रजःसत्त्वाधिकं विभुम् ।
ससर्ज नाभिकमले ब्रह्माणं कमलासनम् ॥
रजसा तमसा युक्तं सोऽपि मां ससृजे प्रभुः" ।

इति । अजानतस्त्वामिति शेषः । सर्वज्ञोऽपि त्वामजानत इत्यर्थः । अत एव त्वत्पृथगीशमानिनः "प्रजापतिः प्रजा असृजत" इत्यादिश्रुतेः । प्रजापतित्वाभिमानवतः अजाऽवलेपान्धतमोऽन्धचक्षुषः अजायास्तव शक्तिरूपाया मायाया अवलेपेन संश्लेषेणान्धतमो गाढतमस्तेनान्धीभूते चक्षुषी नेत्रे यस्य तस्य कथं क्षान्तिः कार्येति चेदत आह-मयि नाथवानिति । सर्वस्य पितामहत्वेन प्रसिद्धोऽपि मयि सति नाथवानयं मन्नाथ इति यावत् इति मनसि विचिन्त्य मयाऽनुकम्प्यः मम कृपापात्रभूत इति मत्वा क्षमस्वेति भावः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पश्येति, आर्यः सुजनस्तस्य भावः आर्यं तेन विज्ञत्वमपि गम्यते तद्विपरीतमनार्यं दौर्जन्यं मूढत्वञ्च तत्तद्दौर्जन्यमाह—आद्ये त्वय्यपीति । मूढत्वम् अनन्ते परात्मनीति परममूढत्वं मायिनामपि मायिनि मायां वितत्येति यद्यपि द्रष्टुं मञ्जुमहित्वमित्युक्तं तथापि स्वगर्वः पर्यवस्यतीत्याह—आत्मेति । कियत्त्वे दृष्टान्तः अग्नावर्चिरिवेति "विष्णोस्तु त्रीणि रूपाणि" इत्याद्यनुसारेण प्रथमपुरुषतया स्तौति ॥ ९ ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु, त्वमपि मद्भक्तत्वाद्दासभागेवासि मैवं यदि भक्त एवाभविष्यं तदा कथमेवमतिमौग्ध्यं मेऽभविष्यादिति स्वमौग्ध्यं प्रदर्शयति—पश्येश ! मे इत्यादि । हे ईश ! मे ममानार्यं मौढ्यं पश्य किं तदित्याह, त्वय्यपीति । त्वय्यपि अनन्ते आद्ये परमात्मनि मायां वितत्य आत्मवैभवमीक्षितुमैच्छं मायिनामपि मायिनि मायिनोऽपि मोहयितुं समर्थे । ननु, अहमिव त्वमप्येकोऽसि नेत्याह—हीत्यादि । हि निश्चितम् अहं कियान् क्षुद्र एव तत्र दृष्टान्तः अग्नौ सति अर्चिरिव अन्याद्यपेक्षया आर्चिः क्षुद्रेव ॥ ९ ॥

तस्मादयं मेऽपराधः क्षन्तव्य एवेत्याह-अतः क्षमस्वेत्यादि अतः क्षुद्रत्वात् क्षुद्रस्यापराधो महद्भिः क्षम्यत एव हे अच्युत ! रजोभुवो मे मम अजावलेपान्धतमः क्षमस्व अजाऽविद्या तत्कृतोऽयोऽवलेपो गर्वः स एवान्धतमः गाढं तमः समासान्तविधेरनित्यत्वादजभावः । अत एव अन्धचक्षुषः अत एव अजानतस्त्वन्महिमानमित्यर्थः । कुतः ? त्वत्पृथगीशमानिनः त्वत्तः पृथगहमेक ईश इति मन्यमानस्य । यद्वा त्वत् त्वामजानतः पृथगीशमानित्वात् अजावलेपान्धतमोऽन्धचक्षुष इत्येकं वा पदं तदा क्षमस्वेत्यस्य कर्माध्याहार्य्यं क्षमायां युक्तिं वक्ति मयि नाथवानिति मदीय एवायमिति कृत्वा स्वामिना हि भृत्यापराधः क्षम्यते ॥ १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवंरूपस्यैव भगवतः सर्वोपास्यत्वमुक्त्वा स्वापराधं क्षमापयितुमनुवदति-पश्येति । हे ईश ! मे मनार्य्यं दुष्टत्वं पश्य अनार्यमेवाह, अनन्ते उत्तरावधिरहिते आद्ये पूर्वावधिरहिते परमात्मनि नियामकात्मरूपेऽन्तर्बहिःस्थिते एतादृशे त्वय्यपि मायिनि मोहके प्रकृतोपयोगिविशेषणमेतत् तादृशे मायां वितत्य आत्मवैभवमीक्षितुमैच्छम्, अनेन प्रदर्शनार्थमेवैतदित्यपराधाभावोऽपि सूचितः । परमेतदप्यनुचितं तत्र हेतुमाह, कियानहमिति । कोवा अहं वराकः तत्र दृष्टान्तः अग्नावर्चिरिवेति न ह्यग्नेर्ज्वाला विशेषोऽग्निमेवं कर्त्तुमर्हति ॥ ९ ॥

अतोऽनुचितं यद्यपि तथापि क्षमस्व यतस्त्वमच्युतः तव न कदाचित् च्युतिः मम चायं सहजो दोषः यतोऽहं रजोभूः तत्रापि अजानतः अर्थात्तव माहात्म्यं तत्र हेतुः त्वत्तः पृथगेवाहं ईश इत्यभिमानयुक्तः हेत्वन्तरमप्याह-अजोऽहं न कस्मादुत्पन्न इति योऽयमवलेपो गर्वः वस्तुतस्त्वज एव तेनाऽवलेपेनान्धं चक्षुर्यस्य क्षमायां हेतुमाह, एषोऽनुकम्प्यो मयि नाथवानिति एष ब्रह्मा अनुकम्प्यः कुतः ? मय्येव सत्ययं नाथवानिति अन्यथात्वनाथ एव स्यात् अतो ब्रह्मणा एतावत्वं मत्त एवेति क्षमोचिता ॥ १० ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

तदेवं भगवन्तं स्तुत्वा क्षमापयितुं स्वापराधं निवेदयति-पश्येति । हे ईश ! स्वामिन्नीमे मम अनार्यं दौर्जन्यं मूढत्वं पश्य किन्तादित्यपेक्षायामाह—त्वय्यपि स्वमायां वितत्य प्रमाणगम्यवैभवं स्वप्रभावमीक्षितुं द्रष्टुमैच्छमभिलषितवानिति एवं कर्तुं त्वदग्रेऽहं कियान् न किञ्चित् तत्र हेतून् सूचयन्विशिनष्टि—परात्मनीति । सर्वनियन्तरीत्यर्थः । तत्र हेतुमाह—मायिनामपि मायिनि मोहक इति । तत्रापि आद्यन्तशून्यत्वहेतुमाह—आद्ये सर्वकारणभूते पूर्वावधिरहिते इति । अनन्ते विनाशरहिते एतत् सर्वं प्रसिद्धमेवेत्याशयं सूचयन्नाह-हीति । असामर्थ्ये दृष्टान्तमाह-अग्नावर्चिरिति । यथा अग्नेरुद्भूता अर्चिः ज्वाला अग्नौ न कमपि स्वप्रभावं कर्तुं शक्नोति तथा त्वत्त उद्भूतोऽहमपि त्वयि न कमपि स्वप्रभावं कर्तुं शक्त इत्यर्थः ॥ ९ ॥

यद्यप्यहं सर्वथाऽनुचितमेव कृतवांस्तथापि मयि निकृष्टे सर्वोत्तमस्य तव क्षमैव युक्ताऽतो ममापराधं क्षमस्व तत्र भगवतः सर्वोत्तमत्वं द्योतयन्सम्बोधयति—अच्युतेति । त्वद्विमुखा एव सर्वे देशतः कालतोऽवस्थातो गुणत ऐश्वर्यादिभ्यश्च च्युता भवन्ति तव भक्तानां तु कुतोऽपि त्वत्कृपया च्युतिर्न भवति तव च्युतिस्तु दूरापास्ताऽतस्त्वं सर्वोत्तम इति भावः । तर्हि कुत एवं ममापराधं कृतवांस्तत्राह-त्वत्पृथगिति । त्वत्तः पृथगहमेवेश इति अभिमानवतः तत्र हेतुमाह—हि यस्मात्त्वत्प्रभावमजानतः तत्रापि हेतुमाह-अजेति । अजा त्वन्माया तस्याः योऽवलेपः सम्बन्धस्तेन यत्

क्वाहं तमो महदहङ्खचराग्निवार्भूसंवेष्टिताऽण्डघटसप्तवितस्तिकायः ।
क्वेदृग्विधाऽविगणिताऽण्डपराणुचर्या वाताध्वरोमविवरस्य च ते महित्वम् ॥ ११ ॥
उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे ।
किमस्ति नास्ति व्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः ॥ १२ ॥

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

अन्धं तमः गाढमज्ञानन्तेन अन्धं चक्षुः विवेकहेतुरन्तःकरणं यस्य तस्य तत्रापि हेतुमाह-रजोभुव इति । रजोगुणादुत्पन्नस्येत्यर्थः । तथापि केन विचारेण क्षमा कर्तव्येत्यपेक्षायामाह—एष इति । मयि नाथे स्वामिनि सत्येवायं नाथवान् ममोपेक्षितश्चेत्तस्यान्यकोऽप्यन्यो रक्षकः कुत्रापि स्थानञ्च नास्ति इति हेतोरेष मम भृत्यो मयाऽनुकम्प्यः मत्कृपायोग्य इति मत्वा इत्यर्थः ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहन्तु भक्तिलेशमपि न कुर्वे प्रत्युतापराधपुञ्जमेवेति सानुतापमाह, पश्येति । हे ईश ! मे अनार्यम् आर्यः सुजनो विज्ञश्च तस्य भाव आर्यं तद्विपरीतमनार्यं दौर्जन्यं मौढ्यं च पश्येत्यवधाय समुचितं दण्डं क्षमां वा कुरु्वान्यथा मादृशानां दौर्जन्यमौढ्ये एव वर्द्धिष्येते इति भावः । किन्तद्दौर्जन्यं मौढ्यं चेत्यत आह, आद्ये अकारणस्वारिपतरि तत्रापि त्वयि सुखेन सहचरैः सह भुञ्जान एवेति दौर्जन्यम् अनन्ते अपरिच्छिन्नैश्वर्ये परात्मनि आत्मनोऽप्यात्मनीति मूढत्वं मायिमायिनीति परममूढत्वम् एवम्भूतेऽपि त्वयि मायां प्रसार्य आत्मैश्वर्यमीक्षितुमहमैच्छं हि अहो अहं त्वयि कियान् किम्परिमाणकः आर्चिज्वाला यथा महाग्नेरुद्भूय तमेव दग्धुमिच्छेत् ॥ ९ ॥

दौर्जन्योचितस्य दण्डस्य मौढ्योचितायाः क्षमायाश्च सम्भवेऽपि महाकृपालोस्तव क्षमैवोचितेत्याह-अत इति । हे अच्युत ! यतस्त्वं महाकृपालुत्वादिगुणेभ्यश्च्युतिरहितः अहं च महानीचः । अतो ममापराधं क्षमस्व नीचे दयाधिक्यं स्पर्द्धेति नीतेरिति भावः महानीचत्वमाह, रजोभुवः अंशेन रजसो धूलेः पुत्रस्य अत एव अज्ञत्वात् एव त्वत्तः पृथगेव ईदृशोऽहमित्यभिमानवतः ईशमानित्वं विवृणोति-अज्ञावलेपः अज्ञत्वमद एवान्धतमः समासान्ताभाव आर्षः । तेनान्धानि चक्षूंषि यस्य तेन मयि त्वत्कारुण्यचन्द्रोदयेनैव मद्ध्वान्तमस्यपहृते सति त्वं दृश्यो भविष्यसि नान्यथेति भावः । केन विचारेण क्षमे इति चेत्तत्राह, एष ब्रह्मा अनुकम्प्यः मदनुकम्पार्हः यतोऽन्यत्र नाथस्वाभिमानवानपि मयि तु नाथवान् दास एव । यद्वा, मौढ्यान्मय्यपि स्वातन्त्र्यं कुर्वन्नपि वस्तुतो मन्मायाधीनत्वात् अधीन एवेति मत्वा "परतन्त्रः पराधीनः परवान्नाथवानपि" इत्यमरः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमियत्तानवच्छिन्नतया भगवत्कृपामूलकभक्तिप्रधानसाधनप्राप्य तया च भगवन्तं स्तुत्वा तं क्षमापयितुं निजापराधं निवेदयति-

पश्येति मायिनामाश्चर्यशक्तिमतामपि मायिनि अत्याश्चर्यशक्ति- अनन्तेऽपरिच्छिन्ने आद्ये विश्वहेतौ परात्मनि परमात्मनि प्रमा- वितस्य प्रसार्य आत्मनः स्वात्मनस्तवैश्वर्यमीक्षितुमैच्छ- मभिलषितवान् इति मे अनार्यं दौर्जन्यम्, हे ईश ! पश्य यत- कर्तुं त्वपि अहं कियान् किञ्चिदपि अग्नावर्चिस्तदुद्भूता विस्फु- यथा न किञ्चित्तद्वत् ॥ ९ ॥

हे अच्युत ! नित्यमूर्ते ! रजोभुवः त्वच्छक्तिलेशाद्रजोगुणा- तस्य अत एवाज्ञावलेपान्धतमोऽन्धचक्षुषः अजो जगत्स्रष्टाऽहमिति मदेन गाढतमोरूपेणाऽन्धीभूतनेत्रस्य अत एवाजानतः अत एव त्व- पृथगीशमानिनः मयि नाथे सति एव नाथवानतोऽनुक- इति मत्वा क्षमस्व ॥ १० ॥

---

### भाषा टीका ।

हे ईश ! आप मेरे अनाड़ीपने कूं तौ देखो ? कि अन- आद्य परमात्मा बड़े २ मायावारों के भी मायावारे ऐसे आप तिन के विषे माया कों फैलाय के मैंने अपने ऐश्- क देखबे की इच्छा करी । अहो ! बड़े खेद की बात भलां ऐसो साहस करबे कूं आपके विषै मैं कितनो सो जैसे अग्नि के बीच में पतंगा ऐसें आपके आगें मैं हूं ।"

हे अच्युत ! ( अपने भक्तन के काजसों न चूकन वारे ! ) रजोगुण सों उत्पन्न होयबे वारो अज्ञानी और अपन कूं सों पृथक् ईश्वर माननवारो अज्ञापने के गर्व सों आंधरो रह्यो ऐसें सबी तरियां सों मैं खोटोई हूं परंच तौ " ये मेरे पराधीन है " इतनी बात विचार के मेरे ऊ- कृपा करबे योग्य हो ॥ १० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, ब्रह्माण्डविग्रहत्वमपीश्वर एवेति चेत्तत्राह-क्वाहमिति तमः प्रकृतिर्महान् महत्तत्त्वमहमहङ्कारः खमाकाशश्चरो वायु- रग्निर्वाजलं भूश्च प्रकृत्यादिपृथिव्यन्तैरेतैः संवेष्टितो योऽण्ड- स एव तस्मिन्वा स्वमानेन सप्तवितस्तिः कायो यस्य सो- क्व क्व च ते महित्वम्, कथंभूतस्य ? ईदृग्विधानि यान्यविग- तान्यण्डानि त एव परमाणवस्तेषां चर्या परिभ्रमणं तदर्थं वाताध्वानां गवाक्षा इव रोमविवराणि यस्य तस्य तव अ- ऽतितुच्छत्वात्स्वयाऽनुकम्प्योऽहमिति ॥ ११ ॥

अपि च गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किं परांभाय भवति लोके अस्ति-नास्ति-व्यपदेशाभ्यां भावाभा-

श्रीधरस्वामिकृतभावार्थदीपिका।

शब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूपितमभिहितम् एतेषां शब्दानां भुवि विषये उषितं स्थितमिति वा सर्वं चरित्यर्थः। हे अधोक्षज! तव कुक्षेरनन्तर्बहिः कियदपि किञ्चिन्मात्रमपि किमस्ति? न किञ्चिदस्तीत्यर्थः। अतः सर्वस्य तव कुक्षिगतत्वेन ममापि तथात्वान्मातृवदपराधः सोढव्य इति भावः॥ १२॥

———

(१) श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।
श्रीगौराङ्गाय नमः।

श्रीभगवतैव नितरामनुकम्पितः श्रीचतुर्मुखः परममनोहररूपगुणलीलावैभवं तमालोक्य परमप्रेमरसनिमग्नः साक्षाद्दृश्यमानं तद्रूपमेवादौ वर्णयन् स्तौति—नौमीति। हे ईड्येति त्वमेव स्तुतियोग्यः न तथा ब्रह्म न च श्रीवैकुण्ठनाथो नापि त्वदवतारादयोऽन्ये केचिदित्यर्थः। परब्रह्मणि त्वय्येवावतारादेश्चावदृष्टत्वात् अतस्तौमि त्वां किमर्थं ते तुभ्यं त्वत्प्राप्त्यर्थमेवेत्यर्थः। ननु, ब्रह्मरूपत्वेनान्तर्यामिरूपत्वेन च मम स्वतः प्राप्तिरस्त्येव तत्राह, अपो विभर्त्तीत्यभ्रं नवाब्दश्याममेघः तद्वत् स्निग्धकृष्णकान्तिवपुर्यस्य तडिद्वत्पीतमम्बरं यस्य ननु, ईदृशः श्रीवैकुण्ठेश्वरः श्रीरघुनाथश्चेत्याशङ्क्य तद्विलक्षणतामाह—गुञ्जेत्यादि। परितः पिच्छानि यस्मिन् तत्परिपिच्छं बर्हापीडं वन्या वनोद्भवा नानावर्णपुष्पपत्रादिमय्यः स्रजो यस्य तस्मै तत्र च विशेषतो बाल्यलीलया कृष्टचित्तस्तामेवोद्दिशति, कवलेति। तत्र कवलं दध्योदनग्रासो वामहस्ते वामकक्षे वेत्रविषाणे जठरपटसन्धौ वेणुरिति पूर्वोक्तानुसारेण बोद्धव्यं तान्येव लक्ष्माणि असाधारणलक्षणानि अत एव तैः श्रीः शोभा यस्य तस्मै मृदुपद इति बाल्यमेवाभिप्रेतं साक्षात्तदनुक्तिः पितृत्वगुरुत्वप्रभुत्वादिना परमगौरवात् अनुक्रमन्यत् श्रीवृन्दावनविहारित्वं वनमालावैचित्र्याङ्कुरवादिकञ्च सङ्गृह्णन्नाह—पशुपस्य श्रीनन्दस्य अङ्गजाय पुत्राय तत्कुमारत्वेन स्वत एव नित्यं तत्तत्समवेतत्वात् इत्येतच्छ्रीबालगोपालरूपं त्वामत्र प्राप्तुं त्वां नौमीति परमलालसया प्रागेव प्रयोजनमुद्दिष्टं स्तवनं चेदमेवाभिप्रेतम् एवमत्रापि विशेषणानामेषामुत्तरोत्तरमुत्कर्षेण प्रतिपदादिक्रमाश्चर्यमूह्यम्॥ १॥

ननु, नौमीति प्रतिज्ञान्तम् उत्कर्षवर्णनमेव स्तुतिर्नाम तत्किं स्वरूपमात्रं वर्ण्यते? तत्राह—अस्यापीति। वपुषः अवतारस्यापि एकत्वमवतारान्तरापेक्षया यद्वा यस्य कस्याप्येकस्येत्यर्थः। मदनुग्रहस्येति अधर्मनाशनधर्मप्रवर्त्तनद्वारा ब्रह्मसृष्टेः पालनात् ननु भूतमयस्य ज्योतिर्मयदेवतान्तरदेहवत्पाञ्चभौतिकत्वरहितस्येत्यर्थः। तर्हि कीदृशमित्यपेक्षायामाह, आत्मसुखानुभूतेः परब्रह्मात्मकस्येत्यर्थः। यद्वा, आत्मनः सुखेन अनुभूतिः साक्षाज्ज्ञानं तस्या हेतोर्यत् आन्तरं बाह्यविषयादिपरित्यागे नान्तर्मुखीभूतं मनस्तेनापि किमुत साक्षाद्वाचनादिना: अन्यस्तैर्व्यञ्जितम् अतस्तव यथा दृष्टरूपवर्णनमेव स्तुतिरिति भावः। यद्वा, तव देववपुषः श्रीवैकुण्ठाधिष्ठातृदिव्यरूपादपि अस्य वपुषः श्रीबालगोपालरूपस्य। यद्वा अस्य श्रीबालगोपालरूपिणस्तव महि कोऽप्यवसितुं नेशे किमुतात्मसुखानुभूतेर्ब्रह्मणः सकाशात् सच्चिदानन्दघनदिव्यचतुर्भुजरूपादात्मसुखानुभूतिस्वरूपस्यात्मनस्तस्य ब्रह्मणः तत्त्वस्य न्यूनत्वेन किमुतेति न्यायोक्तिः। दिव्यरूपताऽस्यस्य महिमाधिक्येन तस्याः सकाशात् स्वत एवमहिमाधिकतासिद्धेः तत्रैव हेतुत्वेन विशेषणत्रयं मयि महापराधिन्यपि अनुग्रहो यस्य स्वेच्छामयस्येति श्रीदामोदरत्वाद्यभिप्रायेण न केवलमेवं भक्तेष्वेवानुकम्पा किन्तु सर्वेष्वपि जीवेष्वित्याह—नतु भूतमयस्य किं कार्का अपि तु भूतमयस्य जगदेकाश्रयस्यापीत्यर्थः। जगद्धितार्थमेवावतीर्णत्वात् नान्विति पाठे तु व्याख्या सुकरैव स च तेषामपि सम्मतो लक्ष्यते अथवेति पक्षान्तरे नन्विति तस्यायोजनात् तत्रश्चाद्यपक्षे नकारद्वयेन नन्विति व्याख्या तुशब्दस्तु निश्चये ज्ञेयः। अन्यत् समानम् अतो "रूपं यत्तत्प्राहुः" इत्यादिना "सत्यव्रतं सत्यपरम्" इत्यादिना च तद्वर्णितावद्येतद्रूपवर्णनमेव परमा स्तुतिरिति भावः॥ २॥

अतो यथाकथञ्चित्तव भजनेन त्वं वशीक्रियस इत्याह—ज्ञान इति। त्वत्तत्त्ववेदने उत् उच्चैरपास्य तन्वादिभिर्नमन्तः सत्कुर्वन्तः तत्र तन्वा सत्कारः श्रवणसमये अञ्जलिबन्धनादिः वाचा अनुमोदनादिः मनसा चाभिलषणादिः सन्तः अनूर्णोक्तसर्वेन्द्रियक्षोभपरिहाराद्यर्थं प्रायो मौनशीला अपि मुखरिता मुखरीकृता यथा तां भवदीयां भवदीयानां वा वार्तां परस्तैर्व्यञ्जितम्। यद्वा, वार्तां जीवन्ति जीविकार्थमेव सद्भ्यः शृण्वन्तीत्यर्थः हे तन्वादिभिस्तत्तच्चेष्टयाऽजित! अप्राप्य! स्वप्रकाशत्वेनेन्द्रियाद्यगोचरत्वात्। यद्वा तन्वादिभिः कृत्वा तैरपि जितोऽसि वशीकृतो भवसि तत्कृतौ सदा परिस्फुरसीत्यर्थः। यद्वा, तन्वादिभिः साक्षादेव प्राप्तो भवसि तत्र तन्वा प्राप्तिः हस्तादिना श्रीपादाब्जस्पर्शनादिना समागमनादिः मनसा च सङ्कल्पेनैव दर्शनादिः। यद्वा, सहार्थे तृतीया तन्वादिभिः सहितो जितः तव तन्वादीन्यपि तैर्वशीकृतानीत्यर्थः। तत्र तन्वा वशीकरणं तद्भक्तपार्श्वे सदावस्थित्यादि वाचः तद्गुणकथनादि मनसश्च तच्चिन्तनादि अन्यत् समानम्॥ ३॥

एवं यथा कथञ्चिद्भजनेनापि परमफलमुक्तं सम्प्रत्यावश्यकभक्तेर्माहात्म्यं केन वर्णयतां तथाऽप्येतादृशभक्तिपरित्यागेनात्मतत्त्वज्ञानार्थयत्नपरा महादुःखिन एवेत्याह—श्रेय इति। श्रेयसां सर्वेषामेव सृतिमिति अवान्तरफलत्वेन स्वत एवात्मज्ञानमपि भवितैवेति सूचितं तथाभूतामपि उदस्य उच्चैः अवहेलया दूरे क्षिप्त्वा अत्यन्तमनादृत्येत्यर्थः क्लिश्यन्ति यमनियमादिभिः श्रमं कुर्वन्ति केवलस्य शुद्धात्मतत्त्वस्य बोधलब्धये यद्वा, कथञ्चिदपि भक्त्यमिश्रितस्य बोधस्य आत्मतत्त्वज्ञानस्य लब्धये एवकारेण स्वर्गादिकं चित्तशुद्ध्यादिकं च फलं निरस्तम्। ननु, योगाभ्यासादिश्रमेण प्रतिष्ठाया धनस्य वाऽवश्यंलाभो भविता तत्राह—नान्यदिति अन्यत् किञ्चिदपि न स्यात् तत्रोपयुक्तो दृष्टान्तः यथा स्थूलतुषावघातेन लोकैर्मूर्खैः इत्युपलक्ष्यते तुषा तुषानि तेषामभ्यन्तरपूर्णतया नाशः केवलहस्तादिखेदनैव स्यात्तद्वदित्यर्थः। विभो! हे प्रभो! इत्यवश्यभजनीयतोक्ता अतस्तेषां नरकपातोऽपि स्यादिति भावः। तथा चैकादशस्कन्धे—

"य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः"॥

(१) वत्सादस्याऽतः पश्चादारभ्या।

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

इति ॥ ४ ॥

श्रेयःसृतिरेवं च न केवलं वाङ्मात्रेण किं तु पूर्वं बहुशोऽनुभूतमेवास्तीत्याह—पुरेति । हे भूमन् ! हे अपरिच्छिन्नमाहात्म्येति त्वन्नकैरेतदुक्तमेवेति भावः । योगिनो मुक्ता अपि ते तव कथोपनीतया त्वत्कथाश्रवणकीर्तनादिरूपयेत्यर्थः । तत्र साधनमाह, त्वार्दिति । यद्वा ननु, तथापि परमगतिप्रापिका भक्तिर्दुर्घटां तत्राह, कर्थेति । त्वल्लीलाकथनेन उपनीतया संस्कृतया यद्वा ते कथयाकीर्त्यां उपनीतया त्वन्माहात्म्येन प्रवर्त्तितयेत्यर्थः । परां उत्कृष्टां हे अच्युतेति यतस्तव भक्त्या कथंचिदपीष्टसिद्धेश्च्युतिर्नास्त्येवेति भावः । अथवा भक्त्यैव योगिनः त्वत्सङ्गिनः सन्तः ते तव परामुत्कृष्टां गतिं पदं श्रीवैकुण्ठलोकादिलक्षणां वा गतिं विबुध्य परमफलत्वेनावधार्य्यं तामेव प्राप्ताः अन्यत् समानम् ॥ ५ ॥

ईदृशं तव भक्तिमाहात्म्यं भजनीयस्य च तव महिमा केन वक्तुं शक्यताम् । अहो अस्तु तावद्गुणिनस्तव त्वदेकगुणस्यापि माहात्म्यं तत्त्वतो ज्ञातुमपि न शक्यत इत्याह, यद्वा ईदृशो भक्तिमाहात्म्ये सत्यपि ज्ञाने परमाग्रहश्चेत्तथाप्यनन्तकल्याणगुणमहोदधेस्तव ज्ञानं न स्यादेव कर्थाञ्चत् कस्यचिदेकस्य तद्गुणस्य माहात्म्यज्ञानं कस्यापि जनस्य भवेदित्याह—नथापीति । ते गुणाः कल्याणलक्षणाः तस्यापि महि महिमा तस्य मा लक्ष्म्यः सम्पद् इत्यर्थः । ताः कश्चिद्विबोद्धुमर्हति । यद्वा, मा लक्ष्मीरेव श्रीराधारूपा बाल्येऽपि नित्यलीलापेक्षयोक्तमिदं तथा तत्त्वतः यद्वा, तेन प्रकारेण महि माहात्म्यं विशेषेण बोद्धुमर्हति तत्प्रकारमेवाह—स्वानुभवात् स्वस्य तदनुभवतः परमदयालोर्भगवतः स्वस्मिन् कारुण्यविशेषसम्पत्तेः कथम्भूतात् ? निर्विकारात् सम्पूर्णादित्यर्थः । स कीदृशोऽनुभव इत्यपेक्षयामाह—अनन्यबोध्यात्मतया आत्मैकवेद्यस्वरूपत्वेन अरूपतः रूपत इति रूपम् अनिरूप्यादित्यर्थः । न त्वन्यथा स्वानुभवस्य व्यतिरेकेण न विबोद्धुमर्हतीत्यर्थः । एवं श्रीभगवद्गुणस्यापि ब्रह्मरूपत्वमभिप्रेतम् यद्वा तदनुभवः कदा स्यादित्यपेक्षायामाह—स्वप्रकाशतयाऽनिरूप्यादिति तद्वक्तुं न शक्यत इत्यर्थः । अथवा त्वद्गुणस्याप्येकस्य माहात्म्यं कथमपि ज्ञातुं न शक्यत इत्याह—मा लक्ष्मीरपि अविक्रियात् स्वानुभवादपि विबोद्धुमर्हति किं काका अपि तु नैवेत्यर्थः । तत्र हेतुत्वेन सम्बोधनं भूमन् ! हे सर्वतोऽपरिच्छिन्नमाहात्म्येति किं च अनन्यबोध्यात्मतया आकराख्यस्य विष्णोः रूपतः तत्स्वरूपत्वादित्यर्थः । गुणगुणिनोरभेदात् न त्वन्यथा अत्र च मिथ्यात्वं नास्तीत्यर्थः । अत एवोक्तं श्रीयामुनाचार्य्यपादैः "उपर्य्युपर्य्यब्जभुवोऽपि पूरुषान्" इति ॥ ६ ॥

विशेषतः स्वयमवतीर्णस्यास्य तव गुणानां माहात्म्यमित्थमपि केनचिदपि ज्ञातं स्यादित्याह—गुणात्मन इति । गुणानामात्मनश्चेतयितुः पूर्वमप्रकटनेन प्रसुप्तानामिव गुणानामधुना प्रकटनेन प्रबोधनात् गुणान् प्रकटयत इत्यर्थः । तथाभूतस्यापीति गुणानां व्यक्ततया विमानयोग्यतोक्ता विशेषेण एतावन्माहात्म्या इयत्सङ्ख्यावन्तश्चेति मातुं गणयितुं क ईशिरे अपि तु न केऽपीत्यर्थः । तत्र हेतुः अस्य जगतः सर्वेषामेव जीवानां हितायावतीर्णस्य अयमर्थः यस्य जीवस्य येन यथा हितं स्यात्तथाऽसौ गुणस्तदर्थं प्रकटयितुमपेक्ष्यते तत्र जीवानामानन्त्यम् ... च तत्स्वभावानामानन्त्यं तत्राप्यवस्थाविभेदेनानन्त्यम् अतस्तद्गुणानामप्यानन्त्यम् तत्र द्विविधभेदेन च परमानन्त्यं स्यात् ... तद्गणो न सम्भवेदिति यैर्विमितास्तेऽपि नेशिर इति पूर्वं ... भूपांस्वादीनां यथोत्तरं सूक्ष्मतयानन्त्यमूह्यम् ॥ ७ ॥

सुसमीक्षमाणः सुष्ठु अपेक्षमाणः एवशब्दो यथापेक्षमं ... नुवर्तनीयः आत्मना कृतमर्जितमित्यवश्यभोग्यतोक्ता ... सुखदुःखादिकं न मन्तव्यमिति भावः । विपाकं विविधकर्म ... हृद्वाग्वपुर्भिर्नमो विदधदिति तत्रैवासक्तिः कार्य्या ... भावः । मुक्तिपदं मोक्षो महाकालपुरं वा । यद्वा, मुक्तिरूपं श्रीवैकुण्ठाख्यं स्थानं पादाब्जं वा यद्वा अकारप्रश्लेषेण न मुक्तिर्भवति यस्मात् यन्माहात्म्यामृतार्णवनिमज्जनेन मुक्तिः खण्डयास्युकवत् ... क्रियते तस्मिन् पदे पादाब्जे तत्प्रेमलक्षणो वा दायो दानं ... तद्दाता भवतीत्यर्थः । हृद्वाग्वपुर्भिरित्यस्यात्रैव वान्वयः ततश्च ... दायभाक् सङ्कल्पमात्रेणैवान्येभ्यो मुक्तिपदं ददाति तथा ... मात्रेण देहस्पर्शनादिना चेत्यूह्यम् ॥ ८ ॥

पश्येति अनार्य्यस्य प्राकट्यादिकं बोधितं हे ईशेति स्वप्रभौ ... च अनन्ते अपरिच्छिन्नमाहात्म्ये तत्रापि आद्ये पितरि तत्रापि परा... परमगुरौ हृदि सर्ववेदप्रकाशनात् तत्रापि मायिनामपि मायि... तत्रापि त्वयि कृष्णे ऽपीति मायाविस्तारणस्यायोग्यता ... यथोत्तरमाधिक्येनोक्ता आत्मनस्तव वैभवं महात्म्यमित्... "द्रष्टुं मञ्जुमहित्वमन्यदपि" इत्युक्तेः हि निश्चये खेदे वा ... निति यद्यप्येवं तत्त्वतोऽपराधो न स्यात् तथाप्येवमपि कर्तु... श्च वराकोऽहमित्यर्थः ॥ ९ ॥

अतो मदतितुच्छत्वान्निजात्यन्तमाहात्म्याच्च अतितुच्छत्वं दर्शयति—रजइत्यादिविशेषणैः । अत्यर्थं विज्ञप्तः सर्वैरेवा... हे अच्युतेति यथाकथं चिदपि प्रपन्नस्य सर्वेऽपराधाः ... इत्यादिमाहात्म्यतः कथमपि कुतोऽपि कदापि च्युतिर्नास्ति यस्येत्यर्थः । एषोऽहमनुकम्प्यः कथं नाथवानिति दास इत्येव ... परमेष्ठिनस्तव दास्यं किमर्थं तत्राहमपि भगवति ... त्वदेकप्राप्त्यर्थमित्यर्थः । अन्यत्तैर्व्याख्यातम् । यद्वा, तत्र तत्र ... अजया माययाऽवलेपो व्याप्तिः स एव वाम्धतमस्तेनान्ध... क्षुपः ॥ १० ॥

अहो अतितुच्छतमत्वादहं परममहत्तमे त्वय्यपराधं वमयितुं नाहामीत्याह—काहमिति । ब्रह्माण्डस्य घटरूपकत्वं श्रीमदा... हात्म्यापेक्षयाऽति तुच्छत्वाभिप्रायेण महित्वं माहात्म्यम् ... स्वयमेवानुकम्पां कर्त्तुमर्हसीति भावः ॥ ११ ॥

किञ्च, मादृशैः क्रियमाणोऽप्यपराधस्त्वयि न घटते ... उत्क्षेपणमिति । अधोक्षज ! हे शकटस्याधस्तदीयेऽक्षं पुनरु... पम ! तथा च हरिवंशे श्रीवासुदेवमाहात्म्ये श्रीनारदवाक्यम्

"अधोऽनेन शयानेन शकटान्तरचारिणा ।
राक्षसी निहता रौद्रा शकुनीवेषधारिणी ।
पूतना नाम घोरा सा महाकाया महाबला ॥
विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्दने ॥
ददृशुर्निहतां तत्र राक्षसीं वनगोचराः ।
पुनर्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षजः" इति ।

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

व्याख्यातञ्च तदीयटीकाकारैः अधः शकटस्याक्षे पुनर्जात इवेत्यधोक्षजः, इत्यनेन व्रजराजकुमारताप्रतिपादनेन महालीलस्थ-सूचनाद्रागसोऽकल्पने इत्यन्तरगर्भं सम्बोधनं लोके हि लीला-वन्तः कृतमहाऽपराधस्यापि चौरादेरपराधं क्षान्त्वा प्रत्युत-प्रसादं कुर्वाणा दृश्यन्ते अतो ममाऽपराधो भवता सोढव्य इति तात्पर्यम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो अतितुच्छतमोऽहं परममहत्तमं त्वां क्षमयितुमपि नार्होऽस्मि यत आस्तां तावत्सर्वप्रपञ्चाप्रपञ्चव्यापकत्वाद्दुर्देवत्वं सर्व-प्रपञ्चनायत्वेऽपि त्वत्तो मम बहुन्तरमिति वक्तुं सङ्कर्षणात्मिशेषम-हत्स्रष्टृप्रथमपुरुषत्वेन स्तौति—क्वाऽहमिति। ब्रह्माण्डस्य घट-रूपकत्वं स्वल्पकालत एव नश्वरताऽभिप्रायेण कायस्य सप्तवित-स्तित्वं निकृष्टपुरुषत्वविवक्षया महापुरुषस्य तु नवमितास्तित्व-भवान मुहुः सृष्टिप्रलययोर्निष्क्रमप्रवेशाभ्याम् ईदृग्विधेत्याद्युक्तं रोमविवरत्वं सूक्ष्मतमैकदेशत्वं तदुक्तं श्रीविष्णुपुराणे "यस्यायुता-युतांशांशे विष्णुशक्तिरियं स्थिता" इति महित्वं माहात्म्यम् अतः स्वयमेवानुकम्पां कर्त्तुमर्हसीति भावः ॥ ११ ॥

किञ्च, मादृशैः क्रियमाणोऽप्यपराधस्त्वयि न घटेतैव यतस्तादृ-शाऽनन्तकोटिब्रह्माण्डनाथोऽपि त्वमस्मत्कृपयैवैकब्रह्माण्डमपि मातेवोदरे विधाय विराजस इति द्वितीयपुरुषभेदहिरण्यगर्भा-न्तर्यामिप्रद्युम्नविशेषपुरुषत्वेन स्तौति—उत्क्षेपणमिति। अधोक्ष-जेति, अनियम्यत्वेन अधः कृतं अक्षजम् इन्द्रियं सामर्थ्यं येन हे तादृशेति ममेन्द्रियस्यापि त्वद्वशत्वान्न मयि मूढे दीनेऽपराधो गृहीतव्य इति भावः। कुक्षिशब्देनात्र समष्टिजीवस्य सूक्ष्मदेह-रूपहिरण्यगर्भस्थूलदेहरूपविराजोर्व्यापकोऽचिन्त्यशक्तिमयस्तद्देह एवोच्यते। यद्वा, गर्भगतस्य गर्भप्रविष्टस्येति अतिगूढतया योनिना यथा तस्य तथैव गर्भेत्यर्थः। तस्य पादयोरुत्क्षेपणं ताभ्यां ताडनं यथा मातुर्जठरे मातुरागसेऽपराधायेति किं कल्पते किं तु न कल्पते न मन्यते अपि तु हर्षाय भवति मम गर्भोऽस्तीति जीवन्त्येवेत्यर्थः। तथा त्वयाऽपि माननीयं मेऽपराधायेति भावः। ननु, स तदुदरस्थो वर्त्तते त्वं किं ममोदरे तिष्ठसीति चेत्तत्राह—किमस्तीति। अस्तीदमिति मीमां-सकाः वदन्ति। नास्तीति साङ्ख्या वदन्ति, विशेषेण अपदेश-मात्रभूषितं वन्ध्यापुत्रवत् इति अनीश्वरसाङ्ख्या वदन्ति, एतैः शास्त्रवादैः प्रत्यक्षतश्च यद्भूषितं प्रकाशितं तत्किंयदपि तव हिरण्यगर्भान्तर्यामिणः पुरुषस्य कुक्षेरुदरस्य अनन्तर्बहिर्वा-स्ति किं यद् नास्त्येव बहिः सर्वाधिष्ठानत्वात् अहमपि तद्बहिर्वा-स्मीति अपराधः क्षन्तव्य इति भावः। यद्वा, अस्ति—नास्ति-व्यपदेशेन कथनेन भूषितं अलमत्या शोभितं तदन्यदपि कियत जन्मनाशादिकं सर्वमपि तव कुक्षेर्बहिर्नास्त्येवेत्यर्थः। अस्ति जन्म नास्ति नाशो व्ययो नास्त्येवेत्यर्थः। भूषितमिति ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इदमेव विवृणोति—क्वाऽहमित्यादिपद्भिः। अहं क्व ते महित्वं च क्व क्वौ कशब्दौ तव च मम च महदन्तरं सूचयतः, कीदृगहं तमो-महदहमित्यादिरूपः स्पष्टं तव च कीदृशस्य ईदृग्विधेत्यादि स्पष्ट-मेव बृहत्त्वाणुत्वरूपस्वरूपोक्त्या व्याप्यव्यापकभाव उक्तः॥ ११ ॥

अथ द्वाभ्यां सर्वजगत्कारणस्य श्रीमन्नारायणस्य श्रीकृष्णस्य स्तोत्रादकत्वतदुदरवर्त्तित्वेन च स्वस्य क्षम्यापराधत्वं तस्य चास्य चावनार्थवतारत्वेनाभेदमपि व्यञ्जयति—उत्-क्षेपणमिति। हे अधोक्षज। अधः लीलाविभूतौ अक्षेभ्यो जायत इति अधोक्षजः तत्तदक्षेन्द्रियगोचरत्वेन तत्तल्लीलावतार-त्वेन च जायत इव "अजायमानो बहुधा विजायत" इति श्रुतेः गर्भगतस्य देहिनो जीवस्य पादयोरुत्क्षेपणं किं तत्तन्मातु-रागसेऽपराधाय कल्पते, भवति वेति काकुः अतः कारणा-दस्तिनास्तिव्यपदेशाभ्यां भूषितमलङ्कृतं चिदचिद्वस्तु अविनाशस्वभावः सत्त्वं विनाशस्वभावो ह्यसत्त्वं सत्त्वासत्त्वं द्रव्यधर्मौ धर्मौ विशेषणं "स्वबुद्ध्या रज्यते येन विशेष्यं तद्वि-शेषणम्" इति लक्षणात् एवमुभयविधं चिदचिद्वस्तु तव कुक्षे-रनन्तः किं वर्त्तते कियदपि कियदल्पम् अपिशब्दादनन्तमपि अनन्तर्वर्तते किमिति सर्वस्य त्वदाधेयत्वादिना त्वच्छेषत्व-मेवेति अनेन कार्यकारणभाव आधाराधेयभावः। पारार्थ्येन लीलारसनिष्पादकत्वेन शेषशेषिभावश्च सम्बन्ध उक्तः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्त्वण्डादिपतिस्त्वमीश्वर एव न तु पृथगीशमानी अतो न ममानुकम्प्यस्तत्राह—केति। तमः प्रधानमहमहङ्कारो भूतादिः खमाकाशस्तच्चरो वायुश्च वार्जलं तमआदिभिर्वेष्टितोऽण्डघटे स्वमानेन सप्तवितस्तिपरिमितः कायो यस्य सोऽहं क्व, एवंभूतस्य मम महित्वं कियत् न किञ्चिदप्यतितुच्छमिति भावः। क्व च तव महित्वं कथंभूतस्येदृग्विधानि यान्यविगणितान्यसंख्याता-न्यण्डानि तान्येव परमाणवस्तेषां चर्या भ्रमणं तदर्थं वाता-ध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव अत्र तम-आदिषु पूर्वपूर्वापेक्षयोत्तरोत्तरावयन्तरावरणानि विशेयाणि वार्भिस्त्वत्र भिन्नानि वारां विशेषणम्, वारि च तानि भूति च वार्भूणि अग्नेरुत्पन्नानि वारि चेत्यर्थः। बहुव्रीहणाद्विशेषणस्यापि पूर्वनिपातः तमस्तमआदीनां द्वन्द्वः न तु वार्भिः भुना पृथक्त्वा च सम्बेष्टित इत्यर्थः। वैष्णवे पुराणे भुवः आवरणस्यानुक्ता-वरणानां सप्तत्वोक्तेश्च तथा हि।

> दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम्।
> सर्वोऽम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः।
> वह्निश्च वायुना वायुर्मैत्रेय! नभसावृतः।
> भूतादिना नभः सोऽपि महता परिवेष्टितः।
> दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै।
> महान्तं च समावृत्य प्रधानं समवस्थितम्।
> अनन्तस्य न तस्यान्तं संख्यानं चापि विद्यते।
> तदनन्तमसंख्यातप्रमाणं चापि वै यतः।
> हेतुभूतमशेषस्य प्रकृतिः सा परा मुने!।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इति दशोत्तरायुत्तरोत्तरं दशगुणाधिकानीत्यर्थः । न च खचरो वायुरेकमावरणं तेन सह तमआदीनि सप्तैवेतिनिर्वाहः आकाशस्यावरणत्वाभावप्रसङ्गेन "वायुर्मैत्रेय ! नभसाऽऽवृतः" इत्युदाहृतवचनविरोधापत्तेः तस्माद्यथोक्त एवार्थः । अतोऽति तुच्छत्वात्त्वयाऽनुकम्प्योऽहमिति भावः ॥ ११ ॥

अपि च हे अधोक्षज ! गर्भगतस्य शिशोः पादयोरुत्क्षेपणमाघातः किं मातुरागसेऽपराधाय भवति न भवत्येवेत्यर्थः । विषमोऽयं दृष्टान्तः तव मम गर्भस्थत्वाभावादित्यत्राह—किमिति । तव कुक्षेरन्तर्बहिः कियदपि किञ्चिन्मात्रमपि अस्तिनास्तिव्यपदेशभूषितमस्तिनास्तीतिव्यवहारचिन्हितं तद्व्यवहारविषयभूतमिति यावत् चिदचिदात्मकं जगत्किमस्ति न किञ्चिदित्यर्थः । चिद्वस्तुनः सततमेकरूपत्वात्सदास्तीत्येव व्यवहारभूषितत्वम् अचिद्वस्तुनस्तु सततपरिणामित्वात्पूर्वपूर्वावस्थां विहायोत्तरोत्तरावस्थापत्तौ सत्यां पूर्वपूर्वावस्था नास्तीति व्यपदेशभूषितत्वात्तत्त्वमवगन्तव्यमतः सर्वस्य त्वत्कुक्षिगतत्वेन ममापि तथात्वान्मातृवन्मदपराधः सोढव्य इति भावः ॥ १२ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

ननु, त्वमपि विराडभिमानी सर्वेश्वरत्वेन प्रसिद्ध एव किमिति क्षमापयसीत्यत आह—काहमिति । हे भगवन् ! तमोमहदहंखचराग्निवार्भूभिः तमःशब्दवाच्या प्रकृतिः महानहङ्कारः खमाकाशं खचरो वायुः वार्जलं तैः संवेष्टितं यदण्डं तदेव घटस्तस्मिन् स्वमानेन सप्तवितस्तिः कायो यस्य इत्थंभूतोऽहं क ईदृग्विधाऽविगणितान्यसङ्ख्यातान्यण्डान्येव परमाणवस्तेषां चर्य्यार्थं परिभ्रमणार्थं वाताध्वानो गवाक्षा इव रोमविवराणि रोमकूपा यस्य तस्य तव महित्वं केत्यालोचय द्वौ कशब्दौ महदन्तरं सूचयतः तदुक्तम्—

"भाण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तरः ।
दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् ॥
लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः" ।

इति ॥ ११ ॥

किञ्च मम शिशुत्वात् शिशोरपराधो मात्रेव ममापराधस्त्वया क्षन्तव्य इत्याह—उत्क्षेपणमिति हे अधोक्षज ! अध अक्षजं इन्द्रियजन्यं ज्ञानं यस्मात्स तत्संबुद्धौ अधोक्षज ! गर्भगतस्य गर्भस्य पादयोरुत्क्षेपणं चालनं किं मातुरागसे अपराधाय कल्पते योग्यो भवति न भवतीत्यर्थः । ननु, गर्भगतस्य पादयोरुत्क्षेपणं मातुरागसे मास्तु मम तु त्वं न गर्भगत इत्यत आह, किमस्ति नास्तीति । अस्तिनास्तिव्यपदेशभूषितं सदेकस्वरूपतया अनाशित्वादानन्दस्वरूपं चिद्वस्तु अस्तिशब्दवाच्यं प्रतिक्षणपरिणामित्वेनावस्थान्तरापत्त्या नाशित्वादचिद्वस्तु यत्तन्नास्तिशब्दवाच्यमिति तच्च परब्रह्मशरीरभूतं तदुक्तं भगवता पराशरेण—

"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतं तद्वस्तु नृप ! तच्च किम्" ॥

इति । कियदपि किञ्चिदपि तव कुक्षेस्तवोदरात् अनन्तर्बहि[र्]व्यतिरेकेण किमस्ति नास्त्येवेत्यर्थः । सर्वस्य चिदचिदात्मक[स्य] जगतस्त्वदुत्पन्नत्वात्त्वय्यवस्थितत्वात्त्वयि लीनत्वाच्चेति भावः । [तथा] च श्रुतिः "सर्वं खल्विदं ब्रह्म तज्जलानिति" इत्यादि [...] सर्वस्य त्वदात्मकत्वादहमपि त्वदात्मक एवेति [...] क्षेति ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काऽहमिति द्वितीयपुरुषतया स्तौति ॥ ११ ॥

उत्क्षेपणमिति तत्र स्वस्य विशेषतः पुत्रत्वमेव स्था[प]यति ॥ १२ ॥

---

### श्रीजीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

ननु, त्वं ब्रह्माण्डाधिकारी जगत्स्रष्टा अहं गोपबाल[क] कथं मयि नाथवानासि ? मैवं कोऽहं क्षुद्रतमः तथाहि य[...] ब्रह्माण्डं तत्र पेट्यारूपक्षिपोत इवाहं सप्तवितस्तिमात्र[...] विधानन्तकोटिब्रह्माण्डानि पराणुरूपेण यद्रोमकूपेषु तथा[...] स्त्वमसीत्याह—काहन्तमोमहदित्यादि । अहं क तव [...] त्वञ्च क अहं कीदृशः तमःशब्दो गुणत्रयपरः तेन प्र[कृति]र्वोच्यते तम आदिभिः खादिभिश्च सम्वेष्टितो योऽण्ड[...] ब्रह्माण्डभाण्डं तत्र सप्तवितस्तिमात्रः कायो यस्य स [...] ते कथम्भूतस्य ? ईदृग्विधानि उक्तप्रकाराणि अविगणित[...] असङ्ख्यानि यानि अण्डानि ब्रह्माण्डानि तान्येव पराणवः [...] माणवः तेषां चर्य्या सञ्चरणं तस्य वाताध्ववत् गवाक्ष[...] रोमविवरा यस्य एतेन परिच्छिन्नवद्दृश्यमानोऽपि परिमाण[...] विलक्षणः परिच्छिन्नोऽपि व्यापकश्चेति तव महित्वं क अहं [...] केत्यसम्भावनाधिक्ये कद्वयं तस्मान्ममायमपराधः क्षम्यताम् ॥ [११ ॥]

ननु, कथमेतावानपराधः क्षन्तव्यः ? सत्यं यद्यपि महानेवा[य]मपराधस्तथापि त्वयि करुणामये नापराधाय कल्पत [...] सदृष्टान्तमाह—उत्क्षेपणमित्यादि । त्वदुदरवर्त्तित्वात् त्वं सर्व[...] मातेत्याह—किमस्तीत्यादि । अस्तिनास्तिव्यपदेशभूषितम् अस्ति[...]स्तीति यो व्यपदेशस्तस्य भूर्भूमिस्तत्र उषितं स्थितं [...] कियत् यत् किञ्चित्तत्तव कुक्षेरनन्तर्बहिरिति यावत् [...] किमस्ति नैवेत्यर्थः । भावाभावरूपं यत् किञ्चित्तत्सर्वं त्वत्कु[क्षौ] वर्त्तत इति यावत् अतो मातृगर्भस्थशिशोः पादोत्क्षेपो मातुर[...] आगसे न कल्पते तथा ममापीति क्षन्तुमुचित एवाऽयम[प]राधः ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमाधिभौतिकब्रह्माणमात्मानं तिरस्कृत्याधिदैविक[...] निरस्करोति—काहमिति । तमः प्रकृतिः महत् महत्तत्त्वं अहङ्का[रः] खमाकाशः चरो वायुः अग्निर्वार्जलम्भूमिश्चेत्यष्टावरणानि तैः [...]

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

संवेष्टितो योऽयमण्डरूपो घटस्तस्मिन् घटे सप्तवितस्तिपरिमितः कायो देहो यस्य वितस्तिमात्रं शिरः परित्यज्य कायः सप्तवितस्तिर्भवति ईदृग्विधानामविगणितानामण्डपरमाणूनां गतियंत्र तादृशो वाताध्वा गवाक्षः गवाक्षे हि सूर्यकिरणेषु त्रसरेणूनां गतिर्दृश्यत इति गवाक्षवद्रोमविवराणि यस्य तादृशस्य ते महत्वं क अहं च केति सर्वथा परीक्षायामयोग्यता ॥ ११ ॥

आध्यात्मिकस्यापि ब्रह्मणः स्वरूपमाभिख्यापराधक्षमापणमाह—उत्क्षेपणमिति । गर्भगतस्य पादयोरुत्क्षेपणं मातुरागसे किं भवति अपराधाय न कल्पते । ननु, विषमो दृष्टान्त इति चेत् अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां भूषितमलङ्कृतं जगत्तव कुक्षेः अनन्तर्बहिः किं सर्वं हि तव कुक्षौ अतो ममापि सर्वमध्यपातान्नापराध इत्यर्थः ॥ १२ ॥

———

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

ननु, ब्रह्माण्डविग्रहस्त्वमपीश्वर एवेति चेत्तत्राह—काहमिति । तमः प्रकृतिः महान् महत्तत्त्वम् अहमहङ्कारः खमाकाशम्, चरो वायुः अग्निः वार्जलं भूश्च एतैः प्रकृत्यादिपृथिव्यन्तैः संवेष्टितो योऽण्डघटः ब्रह्माण्डरूपो घटः नश्वरत्वज्ञापनाय घटपदप्रयोगः स एव तस्मिन्वा स्वमानेन सप्तवितस्तिकायो यस्य सोऽहं क, ईदृग्विधानि एवंप्रकारकाणि यानि अगणितान्यण्डानि तान्येव परमाणवस्तेषाञ्चर्या परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य ते तव महित्वञ्च क अतोऽतितुच्छत्वात्त्वयानुकम्प्योऽहमिति भावः ॥ ११ ॥

अपि च हे अधोक्षज ! गर्भगतस्यापि शिशोः पादयोरुत्क्षेपणं किं मातुरागसे कल्पते अपराधाय भवति ? न भवत्येवेत्यर्थः । तत्समपराधाय न भवति ततः किमत आह, अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां भूषितमभिहितं वस्तु तव कुक्षेरनन्तः बहिः कियदपि किञ्चिन्मात्रमपि किमस्ति न किञ्चिन्मात्रमपि बहिरस्ति किन्तु सर्वं तदन्तरेवास्तीत्यर्थः । अतः सर्वस्य त्वत्कुक्षिगत्वेन ममापि तथात्वान्मातृवन्ममापराधः सोढव्य एवेति भावः । एवंभूतस्य तव ज्ञानं संसारिणां नास्ति अतीन्द्रियत्वादिति सम्बोधनेन सूचितम् ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, विश्वस्रष्टाऽसि प्रसिद्ध एव न त्वमीशमानी मम तु किमैश्वर्यं तद्गृहीष्यत आह, केति । तमः प्रकृतिश्च महांश्च अहमहङ्कारश्च खमाकाशं च चरो वायुश्च अग्निश्च वार्जलं च भूश्चैतैरभिस्तत्त्वैः संवेष्टितो योऽण्डघटस्तस्मिन् पातालादिसत्यलोकान्तैः स्वमानेन सप्तवितस्तिनिकृष्टलक्षणः कायो यस्य सोऽहं क, ईदृग्विधानि यान्यविगणितान्यण्डानि तान्येव परमाणवस्तेषां चर्या निष्क्रमप्रवेशरूपं परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव महित्वमैश्वर्यं केति सृष्टस्रष्टा प्रथमपुरुषेण कृष्णस्यैश्वर्यविवक्षयोक्तं तेन ममैश्वर्यं विक्रमो वा त्वां प्रति शलभस्य गरुडं प्रतीव न गणनार्हमिति भावः ॥ ११ ॥

किं च ममापराधोऽवश्यं सोढव्यो यतस्त्वं मातेति द्वितीयपुरुषेण पद्मनाभेन सहैक्यं भावयन्नाह—उत्क्षेपणमिति । गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति नैव अस्तीति नास्तीति वा व्यपदेशेन भूषितं परमतं विखण्ड्य स्वमतस्थापनं समुचितोपपत्तिभिः सत्यत्वेन मिथ्यात्वेन वा सुस्थिरीकृतं वस्तु जगद्रूपं कियदपि एकत्वभुवनात्मकमपि किं तव कुक्षेरनन्तर्बहिरस्ति अपि त्वन्तरेव अतो ममापि त्वत्कुक्षिगतत्वात् पुत्रस्य मात्रा त्वया अपराधः सोढव्य एव "पिताऽहमस्य जगतो माता धाता पितामहः" इति त्वदुक्तेरित्यर्थः ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, प्रकृत्याद्यावरणसंयुक्तविराड्विग्रहस्त्वमपीश्वर एवातो न मयाऽनुकम्प्य इत्यत्राह—काहमिति । तमः प्रकृतिः खमाकाशश्चरो वायुः तमआदिभिरष्टभिरावरणैः सम्वेष्टितो योऽण्डघटस्तस्मिन्स्वमानेन सप्तवितस्तिकायो यस्य सोऽहं क ? ईदृग्विधानि यान्यविगणितान्यण्डानि त एव पराणवः परमाणवस्तेषां चर्याः परिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य ते महित्वं च क ? अतस्त्वयाऽनुकम्प्य एवाहम् ॥ ११ ॥

किञ्च, कार्यकारणवस्त्वाधारस्य ते गर्भस्थेन मयाऽपराधः कृतः स त्वया मातृवत्सोढव्य इत्याह—उत्क्षेपणमिति । हे अधोक्षज ! गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमागसेऽपराधाय कल्पते योग्यं भवति न भवतीत्यर्थः । तव कुक्षेरनन्तर्बहिः कियदपि किञ्चिदपि वस्तु अस्ति–नास्ति–व्यपदेशाभ्यां शब्दाभ्यां भूषितमभिहितं किमस्ति ? न किञ्चिदस्तीत्यर्थः । "यच्चेदास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्" इति श्रुतेः तस्मात्त्वद्गर्भगतस्य ममापराधो मातृवत्सोढव्यः ॥ १२ ॥

———

भाषा टीका ।

प्रकृति, महतत्त्व, अहंकार, आकाश, वायु, अग्नि, जल, पृथिवी, इन सप्त आवरणन सों वेष्टित लिपट्यो ये ब्रह्माण्ड घट रूप सात विलांद के शरीर वारो मैं गरीब तो कहां ? और या तरियां के अनगिनतिन ब्रह्माण्ड रूप परमाणु जिन के रोमन के छिद्रन में आवें जावें ऐसे आप की महिमा कहां हे प्रभो ! आप और मोमें बड़ोई बीच है ॥ ११ ॥

हे अधोक्षज ! गर्भ में रहवे वारे बालक को हाथ पाम चलावनो कहा माता को अपराध होवैहै ? तब भगवान् ब्रह्मा से बोले, कि–तो का मे तेरी मा थोरई हूं । तब ब्रह्मा बोल्यो, कि–हे महाराज ! जो कछु वस्तु अस्ति नास्ति शब्द सों बोलवे में आवे है । सो कहा ! कछु आप की कुक्षि ( कूख ) सों बाहर है ॥ १२ ॥

———

जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् ।
विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किंत्वीश्वर ! त्वन्न विनिर्गतोऽस्मि ॥ १३ ॥
नारायणस्त्वं न हि सर्वदेहिनामात्माऽस्यधीशाऽखिललोकसाक्षी ।
नारायणोऽङ्गं नरभूजलायनात्तच्चापि सत्यं न तवैव माया ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च विशेषतोऽपि त्वत्तो मम जन्मप्रसिद्धमित्याह—जगत्त्रयेत्यादि । जगत्त्रयस्यान्ते प्रलये य उदधीनां सम्प्लवः संश्लेषस्तस्मिन्नुदे, उदके नारायणस्योदरे नाभिस्तस्य नालादजो विनिर्गत इति या वाक्सा तावन्मृषा न भवति । वै निश्चितम् तथापि तु हे ईश्वर ! त्वत्तोऽहं किं न विनिर्गतो नोत्पन्नोऽस्मि ? अपि तु त्वत्त एवोत्पन्न इत्यर्थः ॥ १३ ॥

तर्हि नारायणस्य पुत्रः स्यास्त्वं मम किमायातं तत्राह—नारायणस्त्वमिति । नहीति काक्वा त्वमेव नारायण इत्युपपादयति कुतोऽहं नारायण इति चेदत आह, सर्वदेहिनामाऽऽत्माऽसीति । एवमपि किं नारायणो न भवसि नारं जीवसमूहोऽयनमाश्रयो यस्य स तथेति त्वमेव सर्वदेहिनामात्मत्वान्नारायण इति भावः हे अधीश ! त्वं नारायणो नहीति पुनः काकुः अधीशः प्रवर्तकः ततश्च नारस्यायनं प्रवृत्तिर्यस्मात्स तथेति पुनस्त्वमेवासाविति । किञ्च, त्वमखिललोकसाक्षी आखिलं लोकं साक्षात्पश्यसि, अतो नारमयसे जानासीति त्वमेव नारायण इत्यर्थः । नन्वेवं नारायणपदव्युत्पत्तौ भवेदेवं तत्त्वन्यथा प्रसिद्धमित्याशङ्क्याह—नारायणोऽङ्गमिति । नराद्भूता येऽर्थास्तथा नराज्जातं यज्जलं तदयनाद्यो नारायणः प्रसिद्धः सोऽपि तवैवाङ्गं मूर्तिः तथा च स्मर्यते—

"नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।
तस्य तान्ययनं पूर्वं तेन नारायणः स्मृतः" ॥

इति । तथा—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥

इति च । ननु, मन्मूर्तेरपरिच्छिन्नायाः कथं जलाश्रयत्वमत आह, तच्चापि सत्यं नेति ॥ १४ ॥

श्रीमत्सनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

विशेषतश्च साक्षात् पित्रा त्वया पुत्रस्य ममापराधः क्षन्तव्य एवेत्याह—जगदिति । नालं नालाकमलदण्डः तेन कमलं लक्ष्यते यद्वा "नलिने तु नलं मतम्" इति त्रिश्वोक्तेर्नलं कमलं स्वार्थे तद्धितः तस्मात् । यद्वा, तदीयमध्यभागादित्यर्थः । तुशब्देनाऽन्यतो विशेषं बोधयति—साक्षात्तस्मादेवोत्पन्नत्वात् अत एव विशब्दश्च तत्रापि निर्गत इति चिरमुदरान्तःस्थितिः सूचिता हे ईश्वरेति भगवति पितृदृष्टिमयोग्यां मन्वानो भक्त्या प्रभुत्वेन सम्बोधयति । यद्वा, हे ईश्वर ! नारायणाद्विनिर्गमेऽपि त्वत्त एव विनिर्गतोऽहं ईश्वरत्वान्नारायणेन सहाऽभेदादित्यर्थः ॥ १३ ॥

अङ्गं तवैव रूपमेकम्, ननु, नरभूजलायनादुपाधेर्नारायण इति चेत्तर्हि उपाधेरसत्यतया नारायणत्वस्याप्यसत्यता प्रसज्जेत तत्र तदपि जलं सत्यमेव न च तव मायया यथाङ्गं सत्यं तद्पीत्यपिशब्दार्थः । त्वल्लीलायाः सत्यतया यस्य तथा कारणत्वेन अत एव श्रीभगवदवतारान्तराज्जातत्वेन च जल सत्यतासिद्धेः अतो मायिकत्वाभावेन तस्यापरिच्छिन्नत्वान्नाराय स्याप्यपरिच्छिन्नत्वं स्वत एवाव्याहतम् । अथवा नारायणस्य कतमं श्रीकृष्णस्य महिमानमनुभूय तस्य नारायणत्वोक्त्या स ससम्भ्रममाह—नारायणस्त्वं नेति अधीश ! ब्रह्माण्डभाण्डाधीश त्वं नारायणो न भवसि हि यतः नरभूजलायनार्थो नाराय स च तव अङ्गम् अंशः—

"भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मि
स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः" ।

इत्युक्तत्वात् नारायणोऽत्रावतारी श्रीपुरुषोत्तमः पुरुषाभिधा वाप जलशायी नारायणो बभूवेत्यस्यार्थः "यन्मित्रं परमा पूर्णं ब्रह्म सनातनम्" इति वक्ष्यमाणत्वात् कृष्णस्तु पुरुषोत्तम एव अत एव त्वम् अखिललोकसाक्षी अखिलाः लो भुवनानि येषु तानि अखिललोकानि ब्रह्माण्डानि साक्षी विधा विगणितापडपराणुचर्य्यैत्याद्युक्तत्वात् तदैव वृन्दावना ब्रह्माण्डकोटीनां स्वयमेव दृष्टत्वाच्च नारायणस्त्वेकस्यैव ब्राह्माण्डस्य इत्यतः सर्वदेहिनां सर्वे देहिनो व्यष्टिजीवा ये सर्वदेहिनो वैराजाः तेषां अनन्तकोटिब्रह्माण्डवर्तिसर्व आत्माऽसि शेषं पूर्ववत् ननु—

"ब्रह्मा तदुपधार्य्याऽथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः" ॥

इति विराडन्तर्यामिणः क्षीराब्धिशायिनो नारायणाख्यस्य पु स्यैवोपस्थानात् तस्यैव कृष्णरूपेणावतरणात् कृष्ण एव ना यथाख्यः पुरुष इत्यवसीयते तत्कथं त्वं नारायणो स्युच्यते ? सत्यम्, बाढमत्रावधीयताम्—

"जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिहृदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम्" इति ॥

एषामर्थः भगवान् श्रीपुरुषोत्तमः आदौ सर्गादौ स्वांश सृष्टैः महदादिभिर्लोकसिसृक्षया पौरुषं रूपं जगृहे प्रादुर्भा कथम्भूतं ? सम्भूतं षोडशकलम्—

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

"अणिमा महिमा प्राप्तिः प्राकाम्यं लघिमेशिता ।
तथा कामावसायित्वं वशितेत्यष्टसिद्धयः" ॥

इत्युक्तेः—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना" ॥

इति षट्—

"लीलाकृपाभिधौ विष्णोः स्वपरार्थौ गुणावुभौ ।
लीला स्वस्यैव सौख्याय परेषां तु कृपा स्मृता" ॥

इति द्वौ । एताः षोडशकला गुणा यत्र तत् इदम् आद्यं तु महतः स्रष्टृ पुरुषरूपमुक्तं द्वितीयं त्वण्डसंस्थितं पुरुषरूपमाह—यस्येति । ब्रह्माण्डसृष्ट्या तदनुप्रवेशेन अम्भसि शयानस्य यस्य नाभिहृदाम्बुजाद्ब्रह्माऽऽसीत् कीदृशात् नाभिहृदाम्बुजस्य अवयवैः कर्णिकापत्रादिभिर्लोकविस्तरः कल्पितः तस्मात् तत्स्वरूपं नारायणरूपं तदाह, तद्वै इति । तद्गर्भःशायिनः सकाशात् क्षीराब्धिशायी सोऽन्यो ह्यवतारो मन्तव्यः यत्तस्यैव लोकपद्मप्रविष्टत्वात् "तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत् सर्वगुणावभासम्" इति तृतीयस्कन्धे हि कथितं पुरुषस्यास्य "स एव प्रथमं देवः कौमारं सर्गमास्थितः" इत्याद्याः कल्कयन्ता द्वाविंशत्यवताराः प्रोक्ताः ततः कृष्णस्यापि तदन्तःपातित्वेन पुरुषावतारत्वे प्राप्ते विशेषमाह— "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" पुंसः पुरुषस्य एते कुमाराद्या अंशकलाः तद्विवेकस्तैरेव कृतः कृष्णस्तु भगवान् तुशब्दो भिन्नोपक्रमे यो भगवान् पौरुषं रूपं जगृहे स एव कृष्णः तत्रापि स्वयं स्वातन्त्र्येण न तु दीपादुत्पन्नदीपवदिति न्यायेन न तस्यान्यतः प्रादुर्भूतत्वं किं तु मुख्यदीपस्थानीयत्वमेव कृष्णस्य तथा च ब्रह्मसंहितायाम्—

"यस्यैकनिश्वसितकालमथावलम्ब्य ।
तिष्ठन्ति रोमविलजा जगदण्डनाथाः ॥
विष्णुर्महान् स खलु यस्य तनूविशेषो ।
गोविन्दमादिपुरुषं तमहम्भजामि" ॥

तस्यावतारिवरस्याप्यवतारमध्ये गणनं नान्यलीलाद्यवतारमाधुरीविशेषापेक्षया । ननु, भवतु कृष्णस्य सर्वथा पूर्णत्वं क्षीराब्धिशायिनश्चतुर्थव्यूहानिरुद्धतत्त्वेन पद्मपुराणमोक्षधर्मादिषु कथितत्वात् कथमंशत्वम् ? सत्यं वासुदेवाद्यश्चत्वारो व्यूहा अस्यासमोर्द्ध्वमाहात्म्यभरस्य कृष्णस्यापेक्षया अंशविशेषा एव तत्राप्यनिरुद्धो नितरामेव यस्य महानारायणस्यामी व्यूहाः तस्याप्याविर्भावपदं कृष्ण इत्युक्तमेव यस्यैकनिश्वसितेत्यादिना यथोक्तं क्षीराब्धिशायिन उपस्थानात् स एव कृष्ण इति तत्र क्षीराब्धितीर एव तदनुग्रहस्य देवैः सुलभत्वात्तथोक्तं न तु तदवतारत्वविवक्षया अनुग्रहाय देवानां तत्र सन्निहितो हरिरिति पाद्मादिपूक्तत्वात् वस्तुतस्तु देवानां तत्रोपस्थानात् सर्वैः स्वरूपैः सम्भूय श्रीपुरुषोत्तम एवावतीर्ण इति निरूपितमेव एतच्च श्रीस्वामिपादानामपि सम्मतमेव तथा च अथाहमंशभागेनेत्यत्र तैर्व्याख्यातम् अंशेन पुरुषरूपेण भागो मायाया भजनमीक्षणं येन तेनेति ॥ १४ ॥



श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विशेषतश्च कृपया पितृनामपि प्राप्तेन त्वया चान्तर्ध्यमेवेति द्वितीयपुरुषभेदान्तराऽनिरुद्धविशेषविराडन्तर्यामिपुरुषत्वेनापि स्तौति—जगदिति । जगत्त्रयस्य सावरणब्रह्माण्डस्याऽन्ते प्राकृतप्रलये तदवसान इत्यर्थः । तत्र ब्राह्मकल्पादौ यदुदधिसम्प्लवस्योदमवाशिष्टमुदकं तत्रेत्यर्थः । इति तेषामभिप्रायः । यद्वा, जगत्त्रयस्य योऽन्तः सर्वोऽधोभागः तत्र तदुदधिसम्प्लवोदकं गर्भोदकाख्य एकार्णवस्तत्रेत्येवार्थः । व्याख्यान्तरं ब्रह्मणो जन्मकालं ब्राह्मकल्पादिकं न बोधयतीति उदरशब्दस्तदानीं तद्गतं सर्वं सूचयति, नालं कमलदण्डः तेन कमलं लक्ष्यते । यद्वा, "नलिने तु नलं मतम्" इति विश्वकोषान्नलं कमलं स्वार्थे तद्धितः तस्मात् तुशब्देनान्यतो विशेषं बोधयति । विनाऽपि मातृव्यवधानमुत्पन्नत्वात् अत एव चिशब्दश्च अत एव निर्गत इति चिरमुदरान्तःस्थितिः सूचिता । हे ईश्वरेति पुनर्भगवति पितृ- [ मातृ ] दृष्टिमयोग्यां मत्वा ॥ १३ ॥

अङ्गं तवैव रूपमेकम् अतो मुख्यस्य नारायणस्य तवाङ्गत्वादेव तस्य च नारायणत्वं नाराश्रयत्वे न तु गौणमित्याह—तवेति । अतोऽचिन्त्यशक्त्यैव तद्विग्रहस्य परिच्छिन्नापरिच्छिन्नत्वं न तु नाराश्रयत्वेन नारपरिच्छिन्नत्वमिति भावः । अन्यत्तैः तत्र तवेति जलाद्याश्रयत्वमित्यर्थः । यद्वा, पुनस्तत्प्रस्तावव्याजेन शाहशे श्रीकृष्ण एवावान्तरप्रकरणमिदं पर्यवसाययति—अधीश ईशो महत्स्रष्टा प्रथमः पुरुषः । हे स्वयं भगवत्त्वात्तस्याप्युपरि-विराजमान ! यथोक्तं द्वितीये "आद्योऽवतारः पुरुषः परस्य" इति तैर्व्याख्यातं च परस्य भूम्नः पुरुषः प्रकृतिप्रवर्तकः यस्य सहस्रशीर्षेत्याद्युक्तो लीलाविग्रहः स आद्योऽवतार इति । अतो नराणां तृतीयपुरुषभेदानां तत्तद्भूतस्थानां तथा तत्तदण्डसंस्थितानां द्वितीयपुरुषभेदानां च समूहो नारं तच्च तत्सर्वांशरूपो महत्स्रष्टैव ततस्तस्याप्ययनं प्रवृत्तिर्यस्मात् इति त्वमेव मुख्यो नारायण इत्यर्थः । अतः सर्वदेहिनामात्मा सर्वभूतस्थतृतीयपुरुषः तथाऽखिललोकसाक्षी अण्डस्थद्वितीयपुरुषः तथा नरभूजलायनात् "नराज्जातानि तत्त्वानि" इत्यनुसारेण ये नरभुवो महदादयस्तत्साहित्यपाठाज्जलं च नरप्रभवमेव ततो "आपो नाराः" इत्याद्यनुसारेण तद्रूपश्च यः कारणजलार्णवस्तदाश्रयत्वात् प्रथमपुरुषश्च यो नारायणः स त्वं हि निश्चितं नासि किंतु तत्तद्रूपो नारायणस्तवाङ्गं त्वं पुनरङ्गीत्यर्थः । यथोक्तम्

"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" ॥

इति । अतस्त्वदङ्गोत्पन्नत्वादपि तवैव पुत्रो भवेयमिति भावः । एवमेव द्वितीये "भूमेः सुरेतर" इत्यादौ "कलयासितकृष्णकेशो जात" इत्यत्र श्रीब्रह्मवाक्ये यः सितकृष्णकेशः यत्र नरत्वदर्शसूचकौ सितकृष्णौ केशौ दैवेदृष्टौ सोऽपि यस्यांशेन भ स्वयमेव जातः सन्नित्यर्थः । सितकृष्णकेशत्वं च मोक्षधर्मीयनारायणोपाख्यानदर्शितनानारश्मिच्छविमयत्वात् तथा च सहस्रनामभाष्यधृतं भारतीयं भगवद्वचनम्—

"अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः ।
सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तम !" ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति एवमेव प्रथमे—

"जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजाम्पतिः ॥
यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम्" ।

"पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्" इत्युक्त्वा "स एव प्रथमं देवः कौमारं सर्गमास्थितः" इत्यादिना द्वाविंशत्यवतारांश्च प्रोच्य कृष्णस्यापि तदन्तःपातित्वेन साधारण्ये प्राप्ते विशेषमाह—"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति एषामर्थः भगवान् परमपुरुषोत्तमः लोकानां ब्रह्माण्डानां सिसृक्षया हेतुना पौरुषं रूपं जगृहे प्रादुश्चकार कथम्भूतं ? महदादिभिः सम्भूतं मिलितं अन्तर्भूतमहदादितत्त्वं पञ्चपादौ "सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः" इति तृतीयस्कन्धात् षोडशकलं "श्रीभूः कीर्तिरिलालीलाकान्तिर्विद्येति सप्तकं विमलाद्या नवैत्येता मुख्याः षोडशशक्तयः" इति भक्तिविवेकोक्तेस्ताः षोडशकला यस्य तत् इदमाद्यं पुरुषरूपमुक्त्वा द्वितीयमाह—यस्याम्भसीति । ब्रह्माण्डसृष्ट्वा तदनुप्रवेशेन अम्भसि प्रलयकालीनगर्भोदके शयानस्य यस्य कीदृशान्नाभिह्रदाम्बुजादित्यत आह-यस्यावयवेति । यस्य नाभिह्रदाम्बुजस्य किं स्वरूपं पौरुषं रूपं तद्वै प्रसिद्धौ विशुद्धसत्त्वाख्यस्वरूपशक्तिविशेषाभिव्यक्तत्वात् तत्प्रचुरं स्वरूपमित्यर्थः । "नातः परं परम ! यद्भवतः स्वरूपम्" इति तृतीयोक्तेः तथोर्जितं बलवत् परमानन्दरूपत्वात् "को ह्येवान्यात्" इत्यादिश्रुतेः तस्याकारमाह—पश्यन्त्यद इति । तस्यावतारानाह-स एव गर्भोदशायिपुरुष एवेति अथात्रैव तस्य पुरुषस्यापयवतारिणं श्रीभगवन्तं परिचाययति—एत इति । पुंसः पुरुषस्य एते कौमारसर्गाद्याः अंशकलाः तद्विवेकस्तत्र तैरेव कृतः कृष्णस्तु भगवान् तुशब्दो भिन्नोपक्रमे यः पौरुषं रूपं जगृहे श्रीकृष्ण एव स इत्यर्थः । तत्रापि स्वयमात्मनैव न तु तत्प्रतिरूपत्वेन दीपाद्दीपवत् एवं च स्वयं श्रीस्वामिपादैरपि "अथाहमंशभागेन" इत्यत्र व्याख्यातम् । अंशेन पुरुषरूपेण भागो मायाया भजनमीक्षणं येन तेन सर्वथा परिपूर्णरूपेणेति विवर्तिनत् इति तथा च वक्ष्यते श्रीमच्छुकदेवेन "यस्यांशांशांशभागेन विश्वस्थित्युदयोद्भवाः" इति तैरेव व्याख्यास्यते च यस्यांशः पुरुषस्तस्यांशो मायेत्यादि यथा ब्रह्मसंहितायां श्रीकृष्णस्तवे—

"यस्यैकनिःश्वसितकालमथावलम्ब्य ।
जीवन्ति लोमविलजा जगदण्डनाथाः ॥
विष्णुर्महान् स इह यस्य कलाविशेषो ।
गोविन्दमादिपुरुषं तमहं भजामि" ॥

इति । तस्मात् साधूक्तं नारायणोऽङ्गमिति दृष्टं च तथैव, नावरमहं धम्मपाल इत्यादौ वक्ष्यते च "मयैव त्वदनेऽस्य" इत्यादौ अथ प्रकृतमनुसरामः । ननु, मायिकजलान्तःपातेन तदपि ममाङ्गं किन्तु जगदिव मायिकं न हि न इत्याह । तच्च तवाङ्गं सत्यमेव न तु माया मायिकमित्यर्थः । अपीति सम्भावितमेव [...]मित्यर्थः ॥ १४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ स्वस्य पितृपुत्रत्वरूपं सम्बन्धमपि निशिष्याह—[...]दिति । जगत्त्रयान्ते य उदधिसम्प्लवः समुद्रैकीभावः [...] सम्बन्ध्युदकशायिनः नारायणस्योदरे नाभिः तत्सम्बन्धि[...]लात् कमलात् अजः विनिर्गतः इति वाक् न मृषा [...]तुरत्यर्थे । हे ईश्वर ! त्वत् त्वत्तः किन्न विनिर्गतोऽहमिति ॥ १३ ॥

ननु, नारायणस्त्वन्य एव नाहमिति शङ्कायां [...] अवतारस्य नारायणादवतारिणोऽनन्यत्वमेव श्रुतिस्मृतिपुराणेतिहासाद्युद्घुष्टं स्फुटयति—नारायणस्त्वं नहीति । [...] सर्वदेहिनां नारपदवाच्यानां बद्धमुक्तनित्यरूपाणां [...] अयनं शरीरी यः नारायणः संज्ञायां णत्वविधानात् [...] णत्वंज्ञः स त्वं किं नहीति काकुः । अपि त्वमेव [...] शोऽसि प्रवर्तकः "अयनतो" इत्यतः "मत्तः सर्वं प्रवर्तते" [...] स्वमुखेनैव नारायणत्वस्फोरणात् चिदचित्प्रेरक [...] ज्ञानार्थत्वाद्धातोः अखिललोकसाक्षी चिदचिद्द्रष्टा यः [...] श्रीमन्नारायणत्वमेवोक्तम् अथ सच्चिदानन्दस्वरूपस्य [...] नन्दगुणकत्वेन रूपस्यापि तादृशत्वेन च नारायणत्वं [...] इति अङ्गं मूर्तिः तवेत्यत्रापि योज्यम् । पूर्वोक्तविशेषणविशिष्ट[...] तवाङ्गमपि नारायणः नरभूजलायनात् यत्प्रसिद्धं नारायणं [...] तच्चापि सत्यं किन्न ? अतः तन्न माया एव कापट्यमेव [...] अथवा तव जीवसमष्टिसंयुक्तं मायातत्त्वम् अङ्गं शरीरं [...] भवति वेति काकुः "योऽव्यक्तमन्तरे सञ्चरन्यस्याव्यक्तं शरीरम्" इत्यन्तर्यामिश्रुतेः "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इति पुरुषसमष्टिसंयोगस्य श्रीनारायणस्य [...] चिदचिच्छरीरकत्वात् तव नारायणत्वमिति । यद्वा, तवाङ्गं मूर्तिरपि माया नैवेति अद्वैतवाद्यभिमतमायाकार्यं न [...] इति अथवैवं सम्बन्धः नारायणः नरभूजलायनाद्यः प्रसिद्धस्तस्य त्वमङ्गं मूर्तिरवतारः किं नासीत् आनन्दस्वरूपस्य [...] तच्चाप्यङ्गत्वं सत्यं नेति काकुः किन्तु तव माया एव [...]च्छामयत्वमेव ॥ १४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, विशेषतस्त्वत्त एव मम जन्म प्रसिद्धमित्याह—जगदिति [...] जगत्त्रयस्यान्ते प्रलये य उदधीनां सम्प्लवः संश्लेषः तस्मिन् [...] उदके नारायणस्योदरे नाभिस्तस्य नालादजो विनिर्गत इति [...] जनवाक् सा तु मृषा मिथ्या न भवति, किं त्वमृषैव [...] तथाहि हे ईश्वर ! त्वत्तः विनिर्गत उत्पन्नो नाहम् [...] तूत्पन्न एवेत्यर्थः ॥ १३ ॥

नहींस्तु भवान्नारायणपुत्रस्तथापि मम किमायातं [...] नारायणस्त्वम् इति । नहीति काका त्वमेव नारायण इत्युपपादयति कुतोऽहं नारायण इति चेत्तत्राह—यतः सर्वदेहिनामात्मा [...] नारं जीवसमूहस्तस्यायनमाश्रयः स वाऽयनं यस्य सः त्वमेव [...]

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

देहिनामाश्रयत्वात्सर्वशरीरकत्वेन तदाश्रयत्वाच्च नारायण इति भावः। हे अधीश! त्वं नारायणो नहीति पुनः काकुः कुतः? यतोऽधीशः प्रवर्त्तकः नारस्यायनं प्रवृत्तिर्यस्मात्स तथेति। किञ्च त्वमखिललोकसाक्षी अखिलं लोकं साक्षात्पश्यतीति तथातो नारमपि जानासीति नारायणः "इण्गतौ" ये गत्यर्थास्ते बुद्ध्यर्थाः नन्द्यादित्वात्कर्त्तरि ल्युः। नन्विदं नारायणपदव्युत्पत्तौ गर्वेदृत्वं तदन्यथा प्रसिद्धं तथाहि—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृतः" ॥

इत्यत्राह—नारायणोऽङ्गमिति। नरः परमात्मा "जन्हुर्नारायणो नर" इति नरशब्दस्य श्रीभगवन्नामसु पाठात् "रीङ्क्षये" इति धातोः, न रीयते न क्षीयते न नश्यतीति नरः, इति व्युत्पन्ननरशब्दप्रवृत्तौ निमित्तस्य नित्यत्वस्य श्रीभगवत्यपि अनुगतत्वाच्च ततश्च नराज्जातानां जलानामयनाद्यो नारायणः प्रसिद्धः सोऽपि तवैवाङ्गम् मूर्त्तिः राहोः शिर इति वत् तवाङ्गमित्यभेदसम्बन्धे षष्ठी सोऽपि त्वमेवेत्यर्थः। नन्वहमेव नारायणश्चेत् "विश्वं नारायणं देवमक्षरं परमम्" इत्यादिभिर्वेदान्तैर्विश्वसमानाधिकृतत्वेन प्रतीयमानस्य विश्वव्यापकस्य कथं विश्वान्तर्भूतजलमात्रवर्त्तित्वमत आह—तच्चापि सत्यमिति। तत्र विभोरपि यज्जलाश्रयत्वं तत्सत्यमबाधितमेव व्यतिरेकमुखेनापि द्रढयति—न तु मायेति। तज्जलशायित्वं न माया न मृषा किं तु सत्यमेवेत्यर्थः। "अणोरणीयान्महतो महीयान् एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य उभे अस्मिन् द्यावा पृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" इत्यादिभिरवगतं स्वरूपतो रूपतश्चाणोरणीयस्त्वं महतो महत्तरत्वं चेत्युभयं जगन्निर्माणोपासनाद्युपयुक्ततया जीवहृदयगुहादिष्ववस्थितस्य सर्वशक्तेस्तत्वोपपन्नमिति जलशायित्वमबाधितमेवेत्यर्थः अवतारभेदेन तत्तदाकृतिभेदेऽपि तत्तत्कालकार्यकर्मादिचरित्रभेदेऽपि चान्तरिणस्तवाभेदः अवतारी सदा त्वमेक एव न तु नानेति दिक् ॥ १४ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

अपि च सर्वोऽपि प्रपञ्चः परम्परया त्वत्तो जातः अहं तु साक्षात् त्वत्त एव जात इत्याह—जगत्त्रयान्तोदधिसम्प्लवोदर्क इति। जगत्त्रयस्य प्रपञ्चस्यान्ते प्रलये च उदधीनां समुद्राणां सम्प्लव एकार्णवस्तस्मिन्नुदके भोगिभोगशयनस्य नारायणस्योदरे नाभिस्तस्य नालादजो ब्रह्मा विनिर्गत इति वाक् मृषा न भवतीति किन्त्विति हे ईश्वर! तथापि त्वत्त। विनिर्गतोऽस्मि? अपि तु त्वत्त एव विनिर्गत इत्यर्थः। तथा च मार्कण्डेयः—

"स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम्।
नाभेर्विनिःसृतं तस्य तत्रोत्पन्नः पितामहः" ॥

इति श्रीमद्रामायणे च ब्रह्मवाक्यं श्रीरामचन्द्रं प्रति—

"महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः"।

इति ॥१३॥

ननु, स त नारायणो जगत्कर्त्ता अन्यः अहं तु गोपबालक इत्यत आह—नारायणस्त्वं न हि किमिति काकुः किन्तु त्वमेवेत्यर्थः। कुतः? यतः सर्वदेहिनां जीवानां शरीरभूतानामात्माऽसि आधारोऽसि अधीशोऽसि सर्वदर्शयसि अखिललोकसाक्ष्यसि साक्षात् शुभाशुभकर्माणि सर्वफलप्रद इत्यर्थः। ननु, नारायणस्य जलशायित्वात्परिच्छिन्नत्वेन कथं सर्वात्मकत्वमित्यत आह—नारायणोऽङ्गमिति। नारायणोऽङ्गं परिच्छिन्नत्वेन मूर्त्तिरूपः स तु नरभूजलायनात् नराज्जातानि जलानि तेषामयनात् नारायणः नरशब्दवाच्यत्वमस्य "जह्नुर्नारायणो नरः" इत्यादौ प्रसिद्धं तदुक्तम्—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥

इति तच्चापि सत्यं न किमिति पुनः काकुः तव जलशायित्वेन दिव्यविग्रहवत्त्वमपि सत्यमेवेत्यर्थः। किन्तु तवैव माया तवैव सङ्कल्प इत्यर्थः "माया वयुनं ज्ञानम्" इत्यनुशासनादत्र मायाशब्दः सङ्कल्पवाची ता अपः सृष्ट्वा तासु दिव्यमङ्गलविग्रहविशिष्टः शङ्क्ते इत्ययं तवैव सङ्कल्प इत्यर्थः। तथैव स्वसङ्कल्पेन सर्वाश्मापि तत्रापि प्रमाणान्तरम्—

"नाराणामयनत्वाच्च नारायण इति स्मृतः।
नारशब्देन जीवानां समूहः प्रोच्यते बुधैः ॥
तेषामयनभूतत्वान्नारायण इति स्मृतः।
नारो नराणां सङ्घातस्तस्याहमयनं गतिः।
तेनाऽस्मि मुनिभिर्नित्यं नारायण इति स्मृतः ॥
चेतनाचेतनं सर्वं विष्णोर्यद्व्यतिरिच्यते।
नारं तदयनं चेदं यस्य नारायणस्तु सः" ॥

इति अतः सर्वस्यायनत्वादपि नारायणस्त्वमेवेत्यर्थः ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

जगत्त्रयेति। पुनः सम्भ्रमेण ताभ्यां वैशिष्ट्यं यद्यपि तत्पुत्रत्वमेव स्थापयति ॥ १३ ॥

नारायणस्त्वम्। यद्वा, अधीशप्रथमपुरुषस्याप्युपरि वर्त्तमानो नारायणस्त्वं नराणां द्वितीय-तृतीय-पुरुषभेदानां समूहो नारं तत्समष्टिरूपः प्रथमपुरुष एव तस्याप्ययनं प्रवृत्तिर्यस्मात् स अतः सर्वदेहिनामात्मा यस्तृतीयपुरुषो यश्चाखिललोकसाक्षी द्वितीयपुरुषो यश्च नरभूजलायनात् तृतीयपुरुषो नारायणः सोऽसि किन्तु स स तवाङ्गं त्वं पुनरङ्गीत्यर्थः ॥ १४ ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु, सर्वस्य कुक्षिगतत्वेन यथाऽहं माता तथा तथापि ततो यदा सर्वस्यैवापराधः क्षम्यते तदा तथापि क्षन्तव्य इति चेत् सर्वेषां तव कुक्षिगतत्वं परम्परया मम तु साक्षादेवेति विशेषं दर्शयन्नाह—जगत्त्रयान्त इत्यादि। जगत्त्रयान्ते महाप्रलये य उदधिसम्प्लवस्तस्योदक नारायणस्योदरनाभिनालाद्विनिर्गतोऽस्मि जातोऽस्मि। ननु, त्वत्त एव कथं जातोऽसमीत्युच्यते तेषामित्याह, अजोऽस्मीति

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

वाक् वै प्रसिद्धं न न मृषा ? अपितु मृषैव अजस्त्वमेव नाहं तु भो ईश्वर ! त्वत्तोऽविनिर्गतोऽस्मि त्वत्त एव जातोऽस्मि नाजः अतः सर्वजीवसाम्यं ममेति वाक्यार्थः ॥ १३ ॥

ननु, भो ब्रह्मन् ! तथापि नारायणादेव जातोऽसि कुतो मत्त इत्युच्यते सत्यं त्वं च नारायणः यस्मादहमभूवं स नवाद्याघनारेश नारायण इत्यभिप्रायादेवदुत्पन्न एवेति श्रीकृष्णस्यैव मूर्त्तिविशेषो नारायण एव यतस्त्वं सर्वदेहिनामात्मासि अखिललोकसाक्षी चासि । ननु, तर्हि यस्य नाभिनालादहमुत्पन्नोऽसि स नावतंक इत्याशङ्क्याह—नारायणोऽङ्गमित्यादि । स नारायणः खलु तवाङ्गं मूर्त्तिराद्यावतारत्वात् । ननु, उभयोरेव नारायणत्वे कथं त्वज्जनकस्य मदङ्गत्वमित्याह—नरभूजलायनात् नारायणशब्दस्य व्युत्पत्तिद्वयं नरभूः नरोत्पत्तिः जलञ्च तदयनात्तत् स्थानात् एकस्त्वं नरोत्पन्नायनात् नारायणः नरशब्दोऽत्र जीवपरः अन्यस्तवाङ्गं जलायनात् "आपो नारा इति प्रोक्ताः" तेन सर्वे जीवा नारं तदयनात् त्वं नारायणः जलशायित्वात्तवाङ्गं नारायण इत्येष विशेषः । ननु जलशायित्वे तस्य मायिकं नेत्याह, तच्चापि सत्यं तज्जलशायित्वं तस्य च सत्यं सत्यलीलात्वात्तवैव न तव माययैव अतः पूर्वोक्तं त्वत्पुत्रत्वं मम सिद्धमेव ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनेनापि प्रकारेणापराधत्वमापन्नम् अयं साधारणपक्ष इति विशेषप्रकारेण स्वस्य पुत्रत्वं भगवतः पितृत्वञ्चाह—जगत्त्रयेति । जगत्त्रयस्यान्ते प्रलये य उदधिसम्प्लवः उदधीनां संश्लेषस्तस्मिन् प्रलयोदके नारायणस्योदरनाभिनालात् कमलात् अजो विनिर्गत इति वाङ् न मृषा उपाख्यानानामपि सत्यार्थप्रतिपादकत्वात् अत एव हे ईश्वर ! किं त्वत्तः अहं न निर्गतः ? अपि तु निर्गत एवास्मि ॥ १३ ॥

ननु, नाहं नारायण इति चेत्तत्राह—नारायणस्त्वमिति त्वं किं नारायणो न हि ? यतो नारायणत्वसाधका हेतवः सन्ति तानाह, सर्वदेहिनामात्मेति । नारं जीवसमूहः तदयनं यस्येति आत्मा हि सर्वभूतेषु तिष्ठति—

"अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः" ।

इति वाक्यात् । किञ्च, नारमयते प्रेरयतीति नारायणः अस्मिन्नपि पक्षे अधीश्वरत्वाद्भवान् नारायणः

"नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।
तेषामधीश्वरः साक्षान्नारायण इति स्मृतः" ॥

इति वाक्यात् नारं जीवसमूहमयते जानातीति चेत्तथापि भवान्नारायणः यतोऽखिललोकसाक्षी । ननु, नैवं नारायणशब्दो व्युत्पन्नः किन्तु—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥

इति वाक्यात्तत्रोत्पन्नजलायनान्नारायण इति चेत्तत्राह—नारायणोऽङ्गमिति नरभूजलायनाद्यो नारायणः स तवाङ्गं पुरुषत्वात् "पुरुषो ह वै नारायणोऽकामयत" इति श्रुतेः—

"विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" ।

इति वाक्यात् नारायणस्तवाङ्गमवतार एव किञ्च नारायणशब्दं वस्तुतस्तथा न व्युत्पन्न एव यतो जलवासस्य प्रदर्शनमात्रपरत्वात् न ह्यवस्तुना शब्दो व्युत्पद्यते । अन्यथा रजतशब्दं शुक्तिकामपि दद्यात् अतो जलस्थितेः प्रदर्शनमात्रपरत्वात्तेन नारायणयोगार्थः सिद्ध्यति, तदाह—तच्चापि सत्यं नेति । जलाधिकरणत्वं न सत्यं किन्तु तव मायैव ॥ १४ ॥

---

श्रीमद्विश्वेश्वरकृतबालप्रबोधिनी ।

किञ्च, विशेषतोऽपि मम जन्म त्वत्त एव प्रसिद्धमित्याह—जगत्त्रयेति । जगत्त्रयस्यान्ते प्रलये य उदधीनां सम्प्लवः संश्लेषः तस्मिन्नुदरे उदके शयानस्य नारायणस्य या नाभिस्ततो जात यत्कमलं तस्मादजो ब्रह्मा विनिर्गत इति वाक् सा तु तावन्मृषा नैव भवति । वै इत्यवधारणे तथा हि हे ईश्वर ! त्वमेव वदासि त्वत्तोऽहं न विनिर्गतोऽस्मि ? नोत्पन्नोऽस्मि त्वत्त एवोत्पन्नोऽस्मीत्यर्थः ॥ १३ ॥

एवं चेत्तर्हि नारायणस्य पुत्रत्वं मम किमायातमित्याशङ्क्याह—नारायणस्त्वमिति । अत्र काकुः । त्वं किं नारायणो नहि ? अपि तु त्वमेव नारायण इत्यर्थः, कुतोऽहमेव नारायण इत्यपेक्षायां चतुर्भिर्हेतुभिर्नारायणत्वं साधयति । सर्वदेहिनामात्मासीति नारं जीवसमूहोऽयनमाश्रयो यस्येति व्युत्पत्तेस्त्वमेव सर्वजीवानामात्मत्वान्नारायण इत्यर्थः—

"नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।
तेषामधीश्वरः साक्षान्नारायण इति स्मृतः" ॥

इतिस्मृतेः नाराणि चतुर्विंशतितत्त्वानि अयति प्रेरयतीति व्युत्पत्त्या त्वमेव नारायण इति सूचयन् सम्बोधयति । अधीश ! हे प्रवर्तक इति विसर्गान्तपाठो वा नार जीवसमूहं जानाति साक्षात्पश्यतीति व्युत्पत्त्यापि त्वमेव नारायण इति आशयेनाह—अखिललोकसाक्षीति । ननु, यद्यप्येवं नारायणपदव्युत्पत्त्याहमपि नारायणस्तथापि तव जनकस्य नारायणस्य "आपो नारा इति प्रोक्ता आपो वै नरसूनवः । तस्य ता अयनं पूर्वं तेन नारायणः स्मृतः" इति स्मृतेर्भिन्नव्युत्पत्तिकत्वेन मत्तोभिन्नत्वादित्यत आह—नारायणोऽङ्गमिति । नरः परमात्मा तस्मात् भूतं यज्जलं तदयनात् प्रसिद्धो नारायणः सोपि तवैवाङ्गं मूर्त्तिर्न त्वत्तोभिन्न इत्यर्थः एवं जलाधिष्ठानत्वोक्त्या परिच्छिन्नत्वमायातिं तथा च "यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति मन्त्रवर्णविरोधमाशङ्क्य निराकरोति तच्चापि सत्यं नेति, तथा परिच्छिन्नत्वमपि सत्यं यद्यपि न भवति, किन्तु तव माया लीलेव तृष्णादिलीलावत् तथा स्वरूपं प्रदर्शितम् वस्तुतो व्यापक एवेत्यर्थः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, पुत्रो हि मातुः कुक्षेरुद्गच्छति न तु सदा कुक्षिं

तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव ।
किं वा सुदृष्टं हृदि मे तदैव किन्नो सपद्येव पुनर्व्यदर्शि ॥ १५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिभुवीति चेद्‌त आह-जगत्त्रयस्यान्ते प्रलये य उदधीनां सम्प्लवः एकीभावस्तदुदके अजस्त्विवति अन्यो निर्गतोऽस्तु न वाऽहमित्यर्थः । तु मोऽस्त्विति त्वत्तोऽहं न विनिर्गतः अपि तु निर्गत एवेत्यर्थः ॥ १३ ॥

तर्हि त्वं नारायणस्य पुत्रः स्यास्तेन मम किं तत्राह, नारायणस्त्वं नहीति काका नारायणो भवस्येवेत्यर्थः । हे अधीश! ईशानामप्यधिपते !"विष्टभ्याऽहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति त्वदुक्तेः सर्वदेहिनामात्माऽसि आत्मत्वादेवाखिललोकसाक्षी च म च नारायणो जीवमात्रान्तर्यामित्वादात्मा साक्षी चेतनत्वदंशांश एव सोऽवगम्यते इति त्वमेव स इत्यर्थः । ननु, प्रत्यहं कृष्णवर्णत्वात् कृष्णनामा वृन्दावनस्थः स तु नारशब्दाकजलस्थत्वान्नारायणनामेत्यतः कथमहमेव स इति तत्राह-नरभूजलायनात्—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥

इति निरुक्तेर्नरोद्भूतजलवर्त्तित्वात् यो नारायणः स तवाङ्गं त्वदंशत्वादिति भावः । अतस्तत्कुक्षिगतोऽप्यहं त्वत्कुक्षिगत एव । किञ्च, स्वेच्छामयस्य न तु भूतमयस्येत्युक्त्या तव बालवपुर्वासुदेववपुश्च सच्चिदानन्दमयत्वेनैव वर्णितं तथा तवाप्यङ्गं नारायणाख्यं सत्यं सर्वकालदेशवर्त्तिशुद्धसत्त्वात्मकमेव न तु वैराजस्वरूपमिव मायया मायिकमित्यर्थः । चकारादन्यदपि मत्स्यकूर्माद्यङ्गं सत्यम ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सामान्यतः सर्वं त्वत्कुक्षिस्थमित्युक्तमहं तु विशेषतस्त्वत्पुत्र एव "नारायणाद् ब्रह्मा जायते" इत्यादिश्रुतिप्रामाण्यादित्याह-जगदित्यादिना । जगत्त्रयस्यान्ते प्रलये यः उदधीनां सम्प्लवः संप्लवस्तस्मिन्नुदके उदके नारायणस्योदरनाभिनालाब्जो ब्रह्मा विनिर्गत इति या वाक् सा मृषा न भवति किन्त्वमृषैव वै निश्चितं तथापि तु हे ईश्वर! त्वत्त विनिर्गतोऽस्मि किम्? त्वत्तो नोत्पन्नोऽस्मि किम्? अपि तूत्पन्न एवाऽस्मीत्यर्थः ॥ १३ ॥

ननु, नारायणपुत्रो भवतु भवान् तत्र मम किमायातमित्यत आह-नारायणस्त्वमिति । हे अधीश! नरसमूहशास्तः! नरसमूहो नारः अयनं प्रवेशस्थानं यस्य सः त्वं नारायणो न हि अपि तु त्वमेव नारायणः"अन्तः प्रविष्टः शास्ता जनानाम्"इति श्रुतेः। किञ्च, सर्वदेहिनामात्माऽसि नराः देहिनो जीवास्तेषां समूहो नारस्तस्यांशभूतस्य अयनमाश्रय आत्मा अंशी "ममैवांशो जीवलोके जीवभूतः सनातनः" इति निजवचनात् अतोऽपि नारायणोऽसि किञ्च अखिललोकसाक्षी अखिलान्साङ्गोपाङ्गान् लोकान्साक्षात्पश्यसि अतो नारमयसे जानासीति त्वमेव नारायणः यस्तु नरभूजलायनात् नयति स्वपादमूले स्वानन्यशरणामिति नरो भगवानेव ततो जाता नारा आपः तासु यदयनं तस्मात्प्रसिद्धो नारायणः स तु तवैवाङ्गं वपुर्भवति अतः सर्वथा परमनारायणस्त्वमेवासीति फलितोऽर्थः "नयतीति नरः प्रोक्तः परमात्मा सनातनः" इति—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥

इति च स्मृतेः । ननु, व्यापकस्य मम तेन रूपेणाल्पदेशस्थत्वं वचनयैव भवत्यत्राह-तच्चेति । तच्च जलाश्रयत्वं त्वन्मूर्त्तेः सत्यमेव न तु माया काचिद्वचनेत्यर्थः । सर्वगतस्यैव भगवतोऽल्पदेशस्थत्वमचिन्त्यशक्तिमत्त्वात्तच्च भाष्यकारेण श्रीश्रीनिवासाचार्येण प्रथमाध्याये सुदृढं स्थापितमतोऽत्रोपरम्यते ॥ १४ ॥

---

भाषा टीका ।

भूलोक आदिक तीनों लोकन के नाश होयवेपै उदधीन के बीचमें सब जगत् जब डूब गये तब वा प्रलय कालके जलमें सोवन वारे नारायण के उदरसों ब्रह्मा निकस्यो है ये बात कहा मिथ्या है? और हे ईश्वर! कहा मैं आपसों नहीं निकस्यो हूं ॥ १३ ॥

हे प्रभो! आप नारायण नहीं हैं कहा ? किंतु आप नारायणही हो क्यों, कि ? आप सब देह धारिन के आत्मा हो अर्थात् आश्रय हो, काहूतें कि-नार नाम जीव समूह कोंहै ताके आप अयन हो अर्थात् निवास स्थान हो, अथवा योंही जीव समुदाय निवास स्थान जा को अन्तर्यामि रूपसों आप उनमें रहौ हो तासों नारायण कहाये। और काहेसों नारायण हो, कि-सर्व देहिन के अधीश हो, नार नाम जीव समूहन की अयन नाम प्रवृत्ति जासों सो नारायण । और नारायण क्यों हो, कि—अखिल लोक के साक्षी हो, साक्षात् देखन वारेहो । नार नाम जीव समूहन को अयन नाम ज्ञान जाको होय सोई नारायण कहावे, । और हे स्वामिन्! नरजो परमात्मा तासों होयवे वारे जल के अयन सो जो नारायण प्रसिद्ध हैं अर्थात् जलशायिनारायण जो प्रसिद्ध हैं वे भी आपही की श्रीमूर्त्ति हैं। अर्थात् आपही हैं या जगे जैसे "राहु को शिर" ये भेद व्यवहार शिर रूप राहु में अभेद होयवे पै भी होय है, तैसे जाननों चाहिये । और वो नारायण रूप श्रीदिव्य मंगल विग्रह आपको सत्य है माया नहीं है अर्थात् मिथ्या नहीं है ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपरिच्छेदमेवोपपादयति-तच्चेदिति । जगदाश्रयभूतं तव तद्वपुर्जलस्थमित्येवं यदि सत्सत्यं स्यात्तर्हि तदैव कमलनाल-

**अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य ।**
**कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥ १६ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

मार्गेणान्तः प्रविश्य सम्वत्सरशतं विचिन्वतापि मया हे भगवन्नचिन्त्यैश्वर्य ! तत्र किमसि न दृष्टम्, हृद्यपि किमिति नो व्यदर्शि न दृष्टम् तदैवं तपःकरणानन्तरं सपद्येव सुदृष्टमतो मायैव अतस्त्वन्मूर्त्तेर्देशविशेषपरिच्छेदः सत्यो न भवतीत्यर्थः ॥ १५ ॥

अपि च यदि जलादिप्रपञ्चः सत्यः स्यात्तर्हि तेन तव परिच्छेदो भवेत् स तु मायाविलसित इति त्वयैव दर्शित-मित्याह-श्लोकत्रयेण । हे मायाधमन ! मायोपशमन ! अत्रैवावतारे बहिःस्फुटस्यापि स्वजठरमध्ये जनन्याः प्रदर्शनेन ॥ १६ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सत्यत्वमेवोपपादयति-तदिति । प्राकृतजलस्थं अहो बहिर्दृष्टचापि नैव दृष्टमित्याह, किं वेति । सुशब्देन तप तपेत्याज्ञाश्रवणरूप-मात्रदर्शनं तदैवेत्यनेन च महाप्रयासतश्चिरकालेनैव दृष्टमिति सूच्यते न च प्रयाससाध्यमपीत्याह, किं नो इति । हृद्यपि किमिति न दृष्टं पुनरिति श्रीब्रह्मणे वरं दत्त्वा ध्याने वा सकृदात्मानं दर्शयित्वा श्रीभगवत्यन्तर्हिते सति तद्विरहाकुलो ब्रह्मा पूर्ववत्त-द्दर्शनार्थं पुनरपि तपश्चक्रे तथापि ह्यदि न ददर्शेति सूच-यति, सपद्येवेति । कालान्तरं स्वत एव हृदि दृष्टमिति बोध-यति । यद्वा, न च तत्र तत्रास्तीति वक्तव्यं पश्चात्तत्कृपया तत्रैव दृष्टत्वादित्याह-किमिति । पुनः पश्चाद्विशेषेण तत्तत्सौ-न्दर्यपरिच्छेदपरिवारसाहित्यादिनाऽदर्शि नो किं? अपि तु दृष्टमेव एवं श्रीभगवद्वपुष इव तत्क्रीडापरिच्छदजलादेरपि स्वप्रकाशत्वम-भिप्रेतं यद्यपि जलाद्युपाधेरसत्यत्वेऽपि सदा तत्सम्बन्धाभा-वेऽपि सदा सत्यं नारायणत्वं सुसिद्धमेवेदेव तथापि तल्लीलाया नित्यत्वादिना तत्परिकरादेरपि सत्यताद्यपेक्षया तथा व्याख्या-यते ॥ १५ ॥

ननु, तर्हि तज्जलादिसत्यत्ववत् जलादिमयस्यास्य प्रपञ्च-स्यापि सत्यता घटेत तथा सति च सच्छास्त्रेण सदनु-भवेन च विरुद्धचते सत्यं प्रपञ्चोऽयं मायिक एवेत्याह—अत्रै-वेति द्वाभ्याम् । मायाधमनो योऽवतारस्तस्मिन्निति एतदवतार-सम्बन्धिनां सर्वेषामप्यमायिकत्वं तथैतदवतारोपासकानामपि माया-पगमादिकमभिप्रेति । किञ्च, अव्ययं एवशब्दः मायाधमनावतारेऽपि हि निश्चितं मायात्वं प्रकटीकृतमिति परममायिकत्वं सूचयति-ते जनन्या यशोदया प्रकटीकृतमिति परमाप्तत्वेन तत्र प्रामा-ण्यञ्च अव्ययं चकारः कृत्स्नस्यापि किंवा उक्तसमुच्चये त्वदन्त-र्जठरे वर्त्तमानस्य चेति दृष्टान्तः सिद्धस्य साध्यान्तिके निर्देशात् अयमर्थः । सत्यतया साक्षादनुभूतस्यापि तस्य स्वप्नान्ते दर्शनाद्यथा स्वाप्निकेन्द्रजालिकादिवन्मायिकत्वं तथा तादृशस्य बहिःस्फुटत्वेन वर्त्तमानस्यापि मायिकत्वमेव सङ्गच्छेतेति तथा श्रीनन्दादिष्वभिव्यञ्जितमित्यर्थः । एतच्च स्तन्यपाने जृम्भया विश्व-दर्शनावसर इति बोद्धव्यम् । यद्वा, श्रीब्रह्मणः सर्वज्ञत्वात् म[...] श्रीभगवदनुग्रहविशेषाच्च तदुद्धारन्वयवृत्तज्ञानमेव वृत्तं [...] जनन्या तदुद्वारा तस्यां प्रदर्शनेन त्वया व्यक्तीकृतमित्यर्थः ॥ १[६] ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्भावनामेव दर्शयति-तच्चेदिति । तत्तच सत् पारमार्थि[क]सत्यमेव वपुर्जलस्थं चेत्तत एव जगदिति जगदात्मक[...] तत्तदा किं मया समष्टिजीवतया सर्वजगदात्मकेनापि न दृष्ट[...] किं वा हृदि तृतीयोक्तानुसारेणैव दृढसमाधियोगविरूढबोधन[...] सु सुष्ठु "नातः परं परम ! यद्भवतः स्वरूपम्" इत्यादि तत्रत्यमनुस[...] सारतः सच्चिदानन्दघनत्वेन दृष्टं वाशब्दस्यान्वयात् पु[...] किम्वा बहिर्वृत्तौ सत्यां नो व्यदर्शीति ॥ १५ ॥

*ननु, पूर्वरीत्या जगतस्तदन्तरपि स्थितत्वात्तद्वत्पारमार्थिक[स]त्यत्वं कथं न स्यात् तत्राह—अत्रैवेति । पूर्वोक्ते मायाध[मनाव]तारे नारायणदेहे समाधिमात्रानुभूते मया पूर्वं तदन्त[र्ज]गत्त्वमनुभूतं बहिर्दृष्टवदनुभूते जगति नेत्यास्ताम् अत्रैव मायाधम[नार]थमवतारे स्वयं भगवत्तया प्रकाशे हि निश्चितमस्य कृत्स्न[स्य] प्रपञ्चस्य जगतस्तवत्तो बहिःस्फुटस्य दृश्यमानस्य तथा [...] जठरेऽपि स्फुटस्य दृश्यमानस्य सर्वमनुभूतवत्या ते तव ज[नन्या]स्यापि कस्यां मायात्वं मायिकत्वमेव प्रकटीकृतं व्यञ्जितम् [...] ममासावित्यादौ तथाऽपि "यन्मायर्येत्थं कुमतिः स मे ग[तिः]" इत्यनेन यद्यप्यहं ममासावित्यादि तथाऽपि यन्मायर्येत्थं स्वनु[...]न्तर्जगद्दर्शनरूपा कुमतिर्मम जाता स एव मम गतिरित्यर्थ[ः] हि तत्तत्सम्बन्धः ॥

अतस्तदपि तवाङ्गं न जलाद्याश्रयं नापि जगदिति [...] तत्र त्वमेव दृष्टान्त इति व्याजेन पुनः श्रीकृष्णाविर्भा[...] परमतत्त्वरूपत्वेन साधयति-अत्रैवेति त्रिभिः । मायाधमनाव[तारे] इति तत्सम्बन्धमात्रं न सोढम् अघादीनामपि तत्सम्ब[न्ध]कारणादृष्टेरिति भावः । तच्च युक्तं स्वयं भगवत्त्वेन परात् [...]त्वात् तथा चैकादशे "नारायणो तुरीयाख्ये भगवच्छब्दशब्दि[ते]" इत्यत्र व्याख्यातं तैरेव "विराड् हिरण्यगर्भश्च कारणं चेत्यु[पा]धयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः" इति [...] बहिःस्फुटस्य प्रपञ्चस्य निजान्तर्जठरे जनन्यास्तां प्रति [द]र्शनेनेत्यर्थः । मायात्वं पूर्वोक्तं यत्तदीयजलादिप्रपञ्चाश्रयत्व[ं] मायिकत्वं तदेव व्यक्तीकृतम् । यद्वा, विशेषेण तात्पर्यं जग[तो] बहिरेव स्फुटं नान्तरित्यस्यार्थस्येति "अथोऽमुष्यैव ममार्भ[क]स्य यः कश्चनौत्पत्तिक आत्मयोग" इति तथैव स्वाभाविकाचिन्[त्य]शक्तिमयपरिच्छेदापरिच्छेदानिर्णयाद्देवमायात्वस्य परिहारे[ण] श्रीशुकेन "न चान्तर्न बहिर्यस्य" इत्यादिना तादृशत्वनिर्दे[शात्] जगतः स्वाभाविकमेव त्वदाश्रयकत्वं न सम्भवति इति भावः ॥[...]

*षोडशसङ्ख्याकपद्यतोषिणीपाठो नागरपुस्तके भिन्नरीत्या [...] स चोपरिन्यस्तः वङ्गाक्षरपुस्तके भिन्नरीत्या स चाधः इति [...]

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पूर्वप्रकृतस्वेच्छामयत्वमेवप्रकटीकरोति-द्वाभ्यां तवैवज्जलस्थमिति। हे भगवन् ! तव सज्जगद्वपुः सत्यं जगदेव वपुर्यस्य एतादृशान्तत्तव स्वरूपं नारायणस्य तवस्वरूपं जलस्थमेव चेत्तदा मे मया किं न दृष्टं नालमार्गेण विचये कृतेऽपि अदर्शनं त्वदिच्छाविलसितं पुनः हृदि मे मम तदेव किं वा सुदृष्टं अनन्तरं सपद्येव अवतारादिना पुनः किन्नो एव व्यदर्शि तदिदं सर्वं त्वदिच्छामन्तरेण कथं संभवेत् अनेन स्वरूपरूपयोर्विवेक उक्तः दुर्ज्ञेयत्वं स्वदयैकदृश्यत्वं चोक्तम् ॥ १५ ॥

किञ्च अत्रैवेति अवतारे प्रादुर्भावे हे मायाधमन ! दम्भस्य कपटस्य वा निवर्त्तक ! प्रपञ्चात्मत्वस्य वा निवर्त्तक ! सर्वपदार्थस्य तत्त्वयाथार्थ्याकाराद् बहिःस्फुटस्य स्थूलावस्थस्यास्य प्रपञ्चस्य कृत्स्नस्य सूक्ष्मस्य च अन्तर्जठरे वर्त्तमानस्य त्वया यथा जनन्या यशोदाया मायात्वमेव स्वसङ्कल्पायत्तत्वमेव प्रकटीकृतं तथा तदानीं सृष्ट्यवसरे ममापि त्वया स्वरूपरूपादिप्रकाशनं ज्ञानोपदेशद्वारा एव कृतं न तु साक्षात्त्वेन अचिन्त्यत्वान्मनोवचसोरगोचरत्वात् च इदानीं तु साक्षादिति विशेषः । एवं च मम मोहोऽप्युचित एव मदीयकल्पविकल्पेषु कल्पनं विविधकल्पनं च तेषु मम मोहाभावस्त्वयैवोक्तः "यथा पूर्वमकल्पयत्"इति श्रुतेः सृष्टावेव कर्त्तव्यायां मम मोहो न भवतीति वरो भवता दत्त इति ज्ञेयम् अन्यथा बहुविरोधः स्यात् । नत्र भवल्लीलाविकल्पेष्विति रहस्यम् अनेनाध्यायस्य प्रक्षिप्तवादः प्रक्षिप्तः ॥ १६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं चतुर्द्धा नारायणशब्दव्युत्पत्तिर्दर्शिता नराणामात्मत्वादधीशत्वाच्चाखिललोकसाक्षित्वाच्च जलायनत्वाच्च नारायण इति मत्स्त्वेवं न मय्येतानि प्रवृत्तिनिमित्तानि दृष्टानीति नाहं नारायण इत्यपेक्षायां तत्प्रवृत्तिनिमित्तचतुष्टयमपि तस्मिन्स्वानुभवेन दर्शयति, नर्येदित्यादिना, सन्ति विद्यमानानि जगन्ति यस्मिंस्तत्तव वपुः सृष्ट्यादौ जलस्थं चेत्त्वं नारायण एवेत्यर्थः । स जगदित्यनेन सर्वजगदात्मकत्वरूपतदात्मत्वमाद्यं प्रवृत्तिनिमित्तं तस्मिन्प्रदर्शितं जलस्थमित्यनेन तुरीयं तवेत्यनेन तथापि कुक्षिस्थाखिलचिदचिदात्मकलोकस्य सृज्यमानस्य सर्गोपयुक्तप्रवर्त्तकत्वं साक्षित्वं चेत्युभयं विवक्षितं तथाधीशत्वाखिललोकसाक्षित्वञ्चेत्यर्थः। चेदिति यदर्थकमव्ययं यदिशब्दश्च सम्भावनायां सा च क्रियासु योग्यताध्यवसायरूपा जलस्थं चेज्जलावस्थितिविषयकमदध्यवसायविषयं चेदित्यर्थः। तत्र स्वानुभवमेव काका विशदयति, हे भगवन् ! तदेव जलस्थमेव वपुः मे मया न दृष्टं किं दृष्टमेवेत्यर्थः । यज्जलस्थं तदेव मे हृदि नेत्यनुषङ्गः न सुदृष्टं किं सुदृष्टमेवेत्यर्थः । पुनः सपद्येव तदेव नो व्यदर्शि तिरोधापितं न किं त्वयेति शेषः । नो व्यदर्शीत्यनेन तत्र प्रत्यभिज्ञाप्रमाणत्वेनोपन्यस्ता ॥ १५ ॥

ननु, यज्जलस्थं यच्च भवता जले हृदि च दृष्टं यच्च तिरोभूतं तद्वपुरनिरुद्धमूर्त्तेर्जगत्कारणभूतस्यैव न तु ममाऽतो नाहं नारायण इत्यपेक्षायामेतदवतारदशायामपि तच्चतुष्टयं त्वन्मात्रापि दृष्टमेवेत्याह—अत्रैवेति । हे मायादमन ! अस्मदादिकर्तृकमायां मोहनात्मिकां दमयति निरस्यतीति तथाभूतप्रपन्नानां प्रकृतिसम्बन्धनिवर्तकेति वा बहिः स्फुटस्यास्य चिदचिदात्मकस्य प्रपञ्चस्यास्मिन्नेवावतारेऽन्तर्जठरे जनन्या प्रदर्शनेनेति शेषः । ते त्वया मायात्वं विचित्रशक्तित्वं प्रकटीकृतमेव "विपुलं जगदल्पीयसि मत्कुक्षौ जनन्या दृष्टम्"इत्येतद्वचस्त्वदीयमग्निना सिञ्चेदितिवदयोग्यार्थप्रतिपादनमितीयमाशङ्का मायात्वं प्रकटीकृतमित्यनेन व्युदस्ता विचित्रशक्तियुक्तत्वात्तद्दर्शयितुं प्रभुरेव त्वमिति भावः ॥ १६ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

तदेवोपपादयति तर्ह्येदिति हे भगवन् ! निरुपाधिकज्ञानादिषड्गुणसम्पन्न ! तथाचोक्तम्—

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥

इति । तदेव जन्मकाल एव तत्सज्जगद्वपुः सज्जगच्छरीरकं जलस्थं तव वपुः किं मे न दृष्टमिति पुनः काकुः किन्तु अन्तःकरणमालिन्यात्साक्षाद्दर्शनाभावेऽपि अनुमानेन दृष्टमेव तथा तृतीये स्वेनैवोक्तम्—

"क एष योऽसावहमब्जपृष्ठे एतत्कुतो वाब्जमनन्यदप्सु ।
अस्ति ह्यधस्तादिह किञ्चनैतदधिष्ठितं यत्र सता नु भाव्यम्" ॥

इति । पश्चात्तपसा शुद्धान्तःकरणे सति साक्षादपि दृष्टमित्याह—किं वा सुदृष्टमिति किम्वाशब्दौ पक्षान्तरे पुनस्तदेव समाधिरूपतपःकरणानन्तरं भगवत्प्रसादात् शुद्धेन मनसा सुदृष्टं तद्रूपं हृदि सपद्येव किं मे न व्यदर्शि ? दृष्टमेवेति अतस्तव दिव्यविग्रहं मलिनसत्त्वानां दृष्टिगोचरं न भवति अप्राकृतत्वात्तस्य तथा च "श्रुतिः न मांसचक्षुरभिवीक्षते तं न सन्दृशे तिष्ठति रूपमस्य आदित्यवर्णं तमसः परस्तात्"इत्यादि अतस्तव विग्रहस्य परिच्छिन्नत्वापरिच्छिन्नत्वरूपं स्वसङ्कल्पायत्तमेवेति भावः । तथा च भगवद्वाक्यमर्जुनं प्रति—

"इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश ! यच्चान्यद्द्रष्टुमिच्छसि ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्" ॥

इति । ॥१५॥

अथ ब्रह्मणः स्वस्य भगवत्प्रसादात् दिव्यं ज्ञानं जातमिति । जनन्यै दर्शितं विश्वरूपं करामलकवत् पश्यन् कथयति हे मायाधमन ! शरणागतमायाकार्यसंसारनिवर्त्तक ! तदुक्तं भगवता "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति अत्रैवावतारे बहिः स्फुटस्य प्रसिद्धस्य कृत्स्नस्याऽस्य प्रपञ्चस्य जठरे स्वोदरे जनन्याः प्रदर्शनेनेति शेषः । मायात्वं योगैश्वर्यमेव ते त्वया आदर्शितं प्रकटीकृतम् अतस्त्वमेव सर्वेश्वरीत्यर्थः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथेज्जलस्थमित्याद्यष्टकम ॥ १५-२२ ॥

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

जलस्थस्य नारायणरूपस्य सत्यत्वं पुनः प्रतिपादयन्नाह-तथेज्जलस्थमित्यादि । तत् प्रसिद्धं जलस्थं तव नारायणाख्यं वपुः सत् सत्यं कीदृशं चेतयति सर्वमिति चेत् पुनः कीदृशं सज्जगत् सन्ति जगन्ति यत्र तत्तथा तर्हि तन्नारायणाख्यं तथाङ्गं माययैव न अपि तु सत्यमेवेत्यर्थः । ननु, तस्य सत्यत्वे किं प्रमाणमित्याह-किं मे न दृष्टं मे मया किं न दृष्टं न ज्ञातम् ? अपि तु दृष्टं ज्ञातमेवेति मदनुभव एव प्रमाणं सत्यं चेन्नृपवना कथं न विलोकितं तत्राह-हे भगवन् ! तदैव मे मया हृदि किं वा न सुदृष्टं ? हृदये सुविलोकितमेव । ननु, भावनया किं न दृश्यते ? तेन तत्प्रामाण्यं नास्ति तत्राह-किं नो तदैव सपद्येव साक्षादेव पुनर्व्यदर्शि अपि त्वदाश्च अतः अनुभवेन प्रत्यक्षेण च सिद्धमेव तत् सत्यत्वम् ॥ १५ ॥

ननु, तस्य सज्जगत्त्वं त्वया कथमवगतं तस्य तन्मायिकमेव, मैवम् "यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः" इत्युक्तेस्तस्य सर्वबीजत्वादन्ते च सर्वाश्रयत्वात् स एव भुवनद्रुमः त्वदुदरे यज्जगत्तदेव न माया त्वन्तु केवलघनानन्द इत्याह-अत्रैव मायाधमनेत्यादि । हे मायाधमन ! अत्रैवावतारे बहिःस्फुटस्य कृत्स्नस्य प्रपञ्चस्य अन्तर्जठरे जठरस्यान्तर्जनन्यै मायात्वं दर्शितं बहिर्वर्त्तमानत्वेऽपि यदन्तर्वर्त्तित्वं प्रपञ्चस्य तन्मायैव जनन्याः चतुर्थ्यर्थे षष्ठी नारायणान्तर्वर्त्तित्वं तु तस्य सर्गादौ महाप्रलये चेति तव तस्यायमपि भेदोऽन्यः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्य मायिकत्वार्थं तर्कमाह-तथेज्जलस्थमिति । तद्वपुश्चेत् सत् जलोपरि च वर्त्तते तदा मे मया किं तदैव न दृष्टं यो हि स्थूलपदार्थपरिच्छिन्नो योग्ये वर्त्तते स दृश्यते यथा घटः अतस्तदा मया न दृष्टमिति न तज्जले तिष्ठति । नन्वयोग्यत्वान्न दृश्यते न त्वविद्यमानत्वादित्याशङ्क्याह-किं वा सुदृष्टं हृदि मे तदैवेति । न हि हृदये जलमस्ति अतो जलस्थितिः न नारायणशब्दप्रवृत्तिप्रयोजिका किं च सपद्येन पुनः किं नो व्यदर्शि अकस्मात् कथं न दर्शितवान् यद्यहं तस्य नारायणस्यैव पुत्रः लोके हि पिता पुत्रावन्योऽन्यं प्रत्यक्षसिद्धौ भवतः न हि तयोरन्यतरोऽयोग्यो भवितुमर्हति ॥ १५ ॥

किं च वस्तुतो भवानेव नारायणः न तु स नारं सर्वमेव अयते प्रविशति यमिति नारायणः सर्वजगदाधारः स भवानेव न तु सः तस्योदर एवाहं स्थितो जगत् कृतवान् यदि जगत्तत्र सहजं तिष्ठेत् मम कृतित्वमेव स्यात् अत्र तु तिष्ठतीत्याह-अत्रैवेति । हे मायाधमन ! मायानिवारक ! अनेन मायासम्बन्धो भगवति निराकृतः अस्य प्रपञ्चस्य बहिःस्फुटस्य कृत्स्नस्यापि अन्तर्जठरे ते जनन्या अमायात्वमेव प्रकटीकृतम् अयो अमुष्येतिवाक्यात् अतः सत्यप्रपञ्चाधारत्वात् भवानेव नारायणः ॥ १६ ॥

श्रीमद्वीरराघवकृतभागवतचन्द्रचन्द्रिका ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीमच्छ्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

उक्तमेव स्पष्टयति-तच्चेदिति । चेद्यदि सद्विद्यमानं जगत्सर्वं तत् वपुर्नारायणस्वरूपं जलस्थं परिच्छिन्नमेव तर्हि हे [illegible] यत् ! अचिन्त्यैश्वर्य ! मे मया तदा कमलनालमार्गेणान्तःप्रवेशान्तरं [illegible] वत्सरशतमेव किं न दृष्टम् तदा तपःकरणानन्तरं हृदि [illegible] दय एव किं वा सुदृष्टं सम्यग् दृष्टं पुनश्च सपदि [illegible] तत्रापि नो व्यदर्शि नैव दृष्टम् अतो व्यापकस्यैव तवेच्छया [illegible] दर्शनं न परिच्छिन्नत्वमिति भावः ॥ १५ ॥

हे मायाधमन ! भक्तजनमोहनिवारक ! अत्र [illegible] वतारे अस्य बहिः स्फुटस्य प्रत्यक्षसिद्धस्य कृत्स्नस्यापि प्रप[ञ्चस्य] स्वजठरमध्ये जनन्याः यशोदायाः प्रदर्शनेन मायात्वं स्वेच्छा[मात्र]लीलामात्रत्वमेव ते त्वया स्फुटीकृतं "सा वा ईशस्य सन्द्रष्टुः [शक्तिः] सदसदात्मिका । माया नाम महाभाग ! ययेदं निर्ममे विभुः" इति [तृतीय]स्कन्धे । लीलानुकूलेच्छाविशेषस्यैव मायाशब्देनोक्त[त्वात्] हिशब्दः प्रसिद्धयर्थकः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, नारायणस्वरूपं तत् यदि शुद्धसत्त्वात्मकं तर्हि [त]द्गर्भोद एव परिच्छिन्नं कुतः सदा दृश्यते न हि सर्वव्यापकस्य गर्भोदमात्रपरिच्छेदः सम्भवेत्तत्र तस्य तज्जलस्थत्वेन नियतमित्याह-तत् नारायणाख्यं वपुस्तव सज्जगत् सत् [सर्वं] जगत् यत्र तत् जलस्थमेव चेत् तर्हि तदैव कमलनाल[मार्]गेणान्तः प्रविश्य सम्वत्सरशतं विचिन्वतापि मया हे [अ]चिन्त्ययोगमायैश्वर्य ! किं न दृष्टम् । ननु, तत्तत्र [जल]स्थितं त्वया स्वज्ञानान्न दृष्टमिति चेत् तदा त्वं [ध्या]मया तदैव हृद्यपि सुष्ठु किं वा दृष्टं तदयत्न एव त[स्मात्] किं पुनर्न व्यदर्शीत्यतस्तद्वपुस्तव जलस्थत्वेन परिच्छि[न्नं] अचिन्त्यशक्त्या स्वकुक्षीकृतजगत्कत्वेनाऽपरिच्छिन्नं च [त]त्रैव देशे काले च वर्त्तमानमेवापि त्वदीययोगमायया [आव]रणप्रकाशाभ्यामेव दृश्यते न दृश्यते चेत्यवगतम् ॥ १५ ॥

ननु, यस्यैव जगतोऽन्तर्वर्त्तिनि जले तद्वपुः स्थितं तदेव [ज]तत्कुक्षौ तिष्ठतीत्यसङ्गतं न हि गृहस्थान्तर्वर्त्तिनि घटे [गृ]गृहं तिष्ठेदित्यतः शुद्धसत्त्वात्मकवपुषि तस्मिन्ननन्तत्व[मा]दन्यदमायिकमन्यदेव वा जगद्भवेदित्यवसीयते एवं च [त]न त्वं मत्कुक्षिगत इत्याशङ्क्य कुक्षिगतस्य जगतो बहिःस्थ[स्य च ऐ]क्यं वदन्नेव मायिकत्वं प्रतिपादयति—अत्रैवेति । मायाधमन, मायोपशमक ! अस्य बहिः स्फुटस्यैव प्रपञ्चस्य कृत्स्नस्यापि अन्तर्जठरे प्रदर्शनमेयेति शेषः । जनन्याः जनन्यै यशोदायै प्रतीत्यर्थः । मायात्वं मायिकत्वम् अतो दुर्घटकार्य[कारि]त्वद्वपुर्जगदन्तर्वर्त्यपि सर्वजगद्व्यापकं युगपदेवा[ब्]त्थवति साक्षात्तवापि कुक्षिगतोऽहमधुनापि वर्त्ते इति साक्षात् [त्वं] मन्मातेत्यनुध्वनिः ॥ १६ ॥

यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा ।
तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ॥ १७ ॥
अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शित—
मेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि ।
तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासिता—
स्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अवपदेशस्थस्यैव वपुषः व्यापकत्वं स्वानुभवेन प्रपञ्चयति, तर्ह्येदिति । तव तद्वपुः जलस्थं चेत्तदा सजगत् सन्ति सत्यरूपाणि जगन्ति यस्मिन् तत्तथाभूतं व्यापकं न किम् ? अपि त्वस्त्येव तदैव मे मया न दृष्टं किम् ? अपि तु दृष्टमेव । ननु, व्यापकं वपुर्जलस्थं कथं भवेदित्यत्राह—हे भगवन्निति । अचिन्त्यैश्वर्ये त्वयि सर्वं सूपपन्नमिति सम्बोधनाभिप्रायः । अचिन्त्यैश्वर्यमेव स्फुटत्वेन दर्शयति—किं वा तदैव नाभिजपद्मस्थेन मे मया जलस्थं बहिःस्थमपि हृदि नो सुदृष्टं किम् ? अपि तु सुदृष्टमेव आश्चर्यान्तरमाह—सपद्येव पुनर्नो व्यदर्शि तिरोहितं जातमित्यर्थः ॥ १५ ॥

सज्जगदिति पदेन विश्वस्य यत्सत्यत्वमुक्तं तदुपपादयति, अत्रैव अस्मिन् एवावतारे अस्य विश्वस्य मायात्वं स्वशक्त्यभिव्यक्तं सदुपादानकतया सत्यत्वम् अन्तर्जठरे परमकारणस्य तवोदरमध्ये प्रकटीकृतम् । ननूदरमध्ये वञ्चनापरपर्य्यायभूतया मायया कुतो न जननीं प्रति विश्वप्रकटीकरणमङ्गीक्रियते ? इत्यत्राह—हे मायाधमनेति । स्वानन्यशरणानामन्येषामपि मायां कापट्यं वञ्चनां निवारयति, यः तस्मिन् सत्यसङ्कल्पे सर्वेश्वरे स्वभावतोऽपास्तसमस्तदोषे त्वयि कापट्यगन्धलेशोऽपि नास्तीति सम्बोधनशब्दार्थः । अत्र यदि जलादिप्रपञ्चः सत्यः स्यात्तर्हि तेन तव परिच्छेदो भवेत्स तु मायाविलसित इत्यादिमायानाशुक्तिर्निर्मूलत्वात् "सन्मूलाः सौम्येमाः प्रजाः" इत्यादिश्रुतिविरुद्धत्वाच्चोपेक्षणीया ॥ १६ ॥

---

भाषा टीका ।

हे प्रभो ! वो सत्य जो आपको जगत् रूप वपु है सो यदि जल में रहतो होय तौ अवश्य आप नारायण हौ सो आप को श्रीविग्रह अवश्य जल में रहेहै है, का मैंने नहीं देख्यो रह्यो ? और हे भगवन् ! वाई समय मैंने आपकों हृदय में नहीं देख्यो है कहा ? और आपही कहो वा समय आपने फिर अपने दर्शन नहीं दिये कहा ? तासों आप अवश्य नारायण हो ॥ १५ ॥

हे माया के दमन करन वारे ! याई अवतार में आप ने बाहर जो प्रपञ्च स्फुट प्रकाश होय रह्यो है ताई को अपने जठर में अपनी विचित्र शक्ति सों आपने अपनी जननी कूं नहीं दिखायो हां कहा ? किन्तु आपने विचित्र आश्चर्य करन वारे शक्ति रूपत्व कों प्रकट कियोई हौ तस्मात् आप अवश्य नारायण ही हौ ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, बहिः सत एवान्तर्जठरे प्रतिबिम्बोऽस्तु कुतः सर्वथा मायात्वं तत्राह—यस्येति । यस्य तव कुक्षौ सर्वमिदं यथा भाति तत्सर्वमिहापि बहिरपि तथैव भाति । किञ्च, सात्मं त्वत्सहितं तदिदं सर्वं त्वयि मायया विना किं घटते । अयं भावः त्वयि प्रतिबिम्बश्चेद्बाह्याद्विलोमतया प्रतीयेत न तु तदस्ति तव चादर्शस्थानीयस्य त्वयि प्रतीतिर्न स्यात् अतः सर्वथा मिथ्यात्वमेवेति ॥ १७ ॥

अपि च न केवलं जनन्या ममापि तथैव दर्शितमित्याह—अद्यैवेति । त्वदृते त्वां विना अस्य विश्वस्य मायात्वं त्वया ममैव च तदद्यैव किं न दर्शितम् ? किन्तु दर्शितमेव तथा हि एकोऽसीत्यादि ततो मया सहाखिलैस्तत्त्वादिभिरुपासितास्तावन्तश्चतुर्भुजा असि जगन्ति ब्रह्माण्डानीति प्रागनुक्तमपि द्रष्टमिति ज्ञातव्यम् ॥ १८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, अस्यैव प्रतिबिम्बत्वेन तस्य मिथ्यात्वमास्ताम अयं त्वदा साक्षादनुभूयमानः सत्य एवेति चेत्तत्राह—यस्येति । सात्मं सात्मकं अन्यत्तैर्व्यञ्जितम । यद्वा, अयमपि सत्यः सोऽपि सत्य इति द्वयोरेव सत्यमस्तु तत्राह—यस्येति । सर्वथा द्वयोरेकरूपत्वेन बिम्बच्छायापत्या एकस्य मिथ्यात्वमेव सेत्स्यतीति भावः । यद्वा सर्वैकरूपस्य प्रपञ्चत्रयस्याश्चर्याप्रसिद्धेरेको मिथ्यैव कल्पते यदि वा वक्तव्यं केदुविभाविगणितानाण्डेत्यादिवचनतः प्रपञ्चस्य बाहुल्यं मन्तव्यमिति तथापि सर्वेषामेव सत्यतया भगवदीयानामन्येषां च प्राकृतानां विभूतेः साम्यमेवापद्येत तच्चायुक्तम किञ्च, मतां स्वप्नमनोरथादिवन्मिथ्यात्वानुभवेन बहुतरश्रुतिस्मृत्यादिवचनैश्च विरोधः स्यादिति सर्वथास्य मायिकत्वं युक्तमेव अत एवोक्तम् "तत सर्वम्" इति ॥ १७ ॥

ननु, सर्वं तत्तन्मायिकं चेतर्हि तत्रात्र च वर्त्तमानस्य ममापि मायिकत्वेप प्रसज्येत न प्रपञ्चान्तर्गतत्वेऽपि तव तावकानां च

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सत्यताऽधुना साक्षान्मयैवानुभूतेति पुनर्मायिकपक्षमेवानुसृत्य साहङ्कारमाह—अद्यैवेति । यदस्य प्रपञ्चस्य मायात्वं तच्च त्वत्तः कन्दनमनोरथादौ मायामये प्रपञ्चे वर्त्तमानादपि तथा विचित्रबहुरूपतया दृश्यमानादपि विनैवेति अद्यैव किन्ते त्वया मम नादर्शितं न सम्यग्दर्शितं अपि तु दर्शितमेवेत्यर्थः । कथं तदाह—एकोऽसीत्यादिना । सुहृदः सखायो बालाः न च तत्तन्मायिकमित्याह, तत्तद्भूतं तत् सर्वम् अमितं बालकवत्सादिभेदेन परिच्छिन्नत्वेऽप्यपरिच्छिन्नमेव अद्वयं तत्तन्नानाविधत्वेऽप्येकमेवातो ब्रह्मैव शिष्यते स्वयं पर्यवस्यति सत्यज्ञानानन्तानन्दैकरसमूर्त्त्यादिस्वरूपतया दर्शनात् ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवोपपादयति—यस्येति । यस्य सावरणस्य ब्रह्माण्डस्य कुक्षाविदं सर्वं सात्मं त्वत्सहितं भाति तद्ब्रह्माण्डमिह एतद्रूपे त्वय्यपि भाति तत्तस्मात् दुस्तर्कत्वान्मायया विना तदिदं किं सम्भवति येन स्वसंबन्धाभावान्न सम्भवत्येवेत्यर्थः । तस्माच्च नेदं त्वामिव पारमार्थिकं सदिति भावः ॥ १७ ॥

जनन्यनुभवोऽस्यास्तामित्याह—मयैवेति । त्वत्पदेनात्र साक्षाद्रूपं बालवत्सचतुर्भुजादिलक्षणं साक्षात्तद्रूपमप्युच्यते "पुरोवदाब्दं क्रीडन्तं ददृशे सकलं हरिम्" इति "तावत् सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् । व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः" इति "सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः" इति चोक्तत्वात् मयेत्यनेन चात्र तदन्यदुच्यते "आत्मादिस्तम्बपर्यन्तैर्मूर्त्तिमद्भिश्चराचरैः । नृत्यगीताद्यनेकार्हैः पृथक् पृथगुपासिताः" इत्यादौ "स्वमहिमध्वस्तमहिभिः" इत्युक्तत्वात् साकं मयेत्यनेन स्वाधिष्ठानब्रह्माण्डस्यापि तदन्तःपातो विवक्षितः ततश्च त्वदृते त्वां त्वत्साक्षाद्रूपवालवत्सचतुर्भुजाद्यं च विना यदखिलं दर्शितमस्य जगतस्त्वन्महिमध्वस्तमहिमतया दर्शितस्य किं मायिकत्वं न सम्यग् दर्शितं किं तु दर्शितमेवेत्यर्थः । अथ सर्वमेव तद्दर्शितं विवृणोति—एकोऽसीत्यादिना । तत्र मायिकामायिकसर्वदर्शनान्तःस्थितं तदेतद्रूपमेव पूर्णं ब्रह्मेत्यपि दर्शितं ब्रह्मलक्षणाक्रान्तत्वादित्याह—ब्रह्माद्वयं शिष्यत इति अद्वयपदेन शास्त्रान्तरप्रसिद्धं यद्ब्रह्म तदप्येतदेवेति द्योतितं "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" ( ३ । २ । ११ ) इति न्यायात् वक्ष्यते च स्वयमेव अहो भाग्यमहो भाग्यम् इत्यादिना ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीभगवतः सृष्टिप्रवेशनियमनकर्त्तुर्नारायणस्य श्रीमद्ब्रह्मणः श्रीकृष्णस्य निरङ्कुशैश्वर्यमेवं निरूप्य पुनरपि तत्सङ्कल्पायत्तत्वमेव विश्वस्य द्रढयति—यस्य तव नारायणस्य कुक्षाविदं सर्वं सचेतनम् आत्मभिः बद्धैः जीवात्मभिः सहितं यथा भाति तथा त्वय्यपि अवतारविग्रहेऽपि तत्सर्वं चिदचिद्रूपं तत् इदं विश्वं इह मायया विना त्वत्सङ्कल्पाधीनत्वं किं नादर्शितम् इति काकुः अपि तु तवावतारावस्थापन्नस्य श्रीनारायणस्य स्वेच्छामयत्वमेवेति भावः । तत्पदद्वितीकः सूक्ष्मस्थूलावस्थयोर्जगतोऽप्यैक्यत्वेनैकरूप्यं व्यनक्ति ॥ १७ ॥

अद्यैवेति, अद्यैवेदानीमेव त्वयास्य स्वस्य स्वसृष्टस्य चिद्रूपस्य च मायात्वमेव स्वेच्छामयत्वं मम किं नादर्शितं सत्यस्वरूपरूपगुणके त्वत् त्वयि दर्शितमेवेति तदेवाह, प्रथममेकोऽसि ततो व्रजसुहृद्वत्साः समस्तास्त्वमेवाऽसि अथ तावन्तः वत्सपालाश्चतुर्भुजाः ते त्वमेवासि तत्तदनन्तरम् अखिलैः ब्रह्माण्डैः साकं वर्त्तमानैः मया मद्रूपैर्ब्रह्माभिः तैः सर्वैः उपासितः मया दृष्टा इति वा तावन्ति जगन्ति ब्रह्माण्डानि त्वमेव तादृशः श्रीमान्नारायण एवाऽभूरिदानीं तु तत् श्रीनारायणाख्यम् अपि अनन्तं ब्रह्म अद्वयं समाभ्यधिकरहितं सर्वचिदचिद्विशिष्टं साक्षाद् भवानेवावशिष्यते इदानीं विनैव समाधिं प्रत्यक्षो मयाऽनुभूयसे अस्याश्चर्यास्तव सौलभ्यपरा काष्ठेति भावः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव काका विवृणोति—यस्येति । इदं परिदृश्यमानं चिदचिदात्मकं सात्ममात्मभ्यामावाभ्यां सहितं सर्वं यथा बहिः तथा तत्सर्वं त्वय्यपि त्वज्जठरे भातमिति शेषः । हेति तदाश्चर्यशक्तिविषयकविस्मयद्योतकमिदं त्वज्जठरे भानं मायया त्वदाश्चर्यशक्त्या विना किं ? तन्मूलकमेवेत्यर्थः ॥ १७ ॥

न केवलं जनन्या ममापि तथैव विचित्रशक्तिर्दर्शितेत्याह—अद्यैवेति । अद्य त्वदृते आधुनिकं त्वां विनाऽधुना गोपालकरूपेणावस्थितं त्वां विनेत्यर्थः । अस्य त्वत्पूर्वोत्तरावस्थाद्वयं पश्यतः मम ते त्वया मायात्वं विचित्रशक्तित्वं नादर्शितं किं? दर्शितमेवेत्यर्थः । विचित्रशक्तिमूलकं किं किं तव दर्शितमित्यत्राह—प्रथमं मया वत्सपापहरणदशायाम् एकोऽसि ततः समस्ता व्रजसुहृदो बाला वत्साश्चासि ततः तावन्तः यावन्तो व्रजसुहृद्वत्सास्तावन्तश्चतुर्भुजा असि कथम्भूता मया सहाखिलैश्चराचरैरुपासिताः ततस्तावन्ति यावन्तः चतुर्भुजाः तावन्ति जगन्ति भूस्तावन्ति विराड्रूपाणि आसीरित्यर्थः । इदं प्रागनुक्तमपि दृष्टमत्रोच्यते इति ज्ञेयम् । ततोऽमितमपरिच्छिन्नमद्वयं स्वतुल्यवस्त्वन्तररहितं कृष्णात्मकं ब्रह्म शिष्यसे अवशिष्यसे ॥ १८ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

किञ्च सर्वमिदं जगत्त्वदाधारमेवेत्याह—यस्य कुक्षाविति हे स्वामिन् ! यस्य तव कुक्षौ सर्वमिदं सात्मं विश्वं जीवात्मभिः चेतनाचेतनात्मकं यथा भाति आधेयतया प्रकाशते तथा तत्सर्वमपि इह बहिरपि त्वय्येव त्वदाधारमेव भाति तदिदं मायया विना किं तव ? योगैश्वर्यं विना किं ? किन्तु तव नित्या योगमाया तस्या विलास एव, तथा च श्रुतिः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । तथा परमात्मनो व्याप्तिं दर्शयति—

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ।

इति ॥ १७ ॥

तदेवोपपादयति—त्वां विना त्वां मायाविनं विना अस्य प्रपञ्चस्य मायात्वम् अचिन्त्ययोगैश्वर्यं त्वया ममापि तदप्यद्यैव अस्मिन्नेवावसरे किं न दर्शितं ? दर्शितमेव तदेव दर्शयति, प्रथमं त्वम् एकोऽसि कवलपाणिर्नन्दसूनुरेकोऽसि ततो व्रजसुहृद्वत्साः समस्ता अप्यसि पुनस्तावन्तश्चतुर्भुजा असि ते च तदखिलैर्ब्रह्मादितत्त्वैस्सह मया सहोपासिताः जगन्त्यसि अनेनासङ्ख्यातानि ब्रह्माण्डान्यपि दृष्टानीति ज्ञायते । तत्सर्वं दर्शयित्वा अद्वयं ब्रह्म समाभ्यधिकरहितं ब्रह्म त्वमेव शिष्यसे अत इदं कवलपाणिगोपात्मजत्वरूपयोगैश्वर्यं त्वद्बहिर्मुखजनविमोहनार्थमिति ज्ञातं मयेति भावः ॥ १८ ॥

———

श्रीजीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

त्वत्कुक्षिगतं यज्जगत्तन्मायेति यदुक्तं तत् प्रकारान्तरेण पुनः स्थापयति—यस्याः कुक्षावित्यादि । इदं बहिः स्थितं विश्वं सर्वं सात्मं सान्तर्यामि चिज्जडात्मकं यस्य कुक्षौ यथातथा याथातथ्येन भाति तन्नारायणाख्यं च वस्तु दृश्यमानं त्वयि भाति अत इहापि त्वयि तत्सर्वं जगत् सर्वांशपरिपूर्णा सर्वांशान्तर्भावात् सर्वांशान्तर्गतस्यान्तर्गोऽव इत्यपि तवैव प्रकाशिकाया मायायाः शक्तिविलास इत्याह—किमिदं मायया विना प्रकाशिका नाम माययैवैतत्सर्वं न कुहकमित्यर्थः ! यद्वा, यस्य तव कुक्षौ इदं विश्वं सा तव जननी आ आत्मम् आत्मानम् अभिव्याप्य अव्ययीभावे समानवक्षणादीर्घे अध्यात्मवत् यथा भाति अजं महात्मानामित्युक्तेः तथा तत् सर्वं जगज्जननी च बहिश्च भाति इहशब्दो बहिरर्थः तत्तु अयि हे श्रीकृष्ण ! मायया विना किमिदं ? मायावैभवमेवैतत् । यद्वा, किमिदं किमेतदिति सन्देहः पुनः मायया विना कोऽर्थः मायया विना यद्भवति तदेवेदमिति निश्चयः इदं मिथ्या न भवति किं तु स्वयोगशक्तिवैभवमेवैतत् । यद्वा, सात्मम् आत्मना सहितम् आत्मशब्दः सम्बोधनस्य नारायणाख्यमूर्त्तिपरः नारायणसहितमित्यर्थः । कुतः स हि सञ्जगद्वपुरित्युक्तः स त्वय्येव वर्त्तते तेन जगच्च त्वदुदर एव पूर्वं पदार्थः यथा भाति तथा इहापि बहिरपि तत् सर्वं किमिदं मायया विना मायाशब्दो न मिथ्यापरः अपि तु चिच्छक्ती प्रकाशिकाख्या मायेति या पूर्वमाख्याता तस्या एव विलसितमेतत् न मिथ्या न च बहिर्गतस्य विश्वस्य प्रतिबिम्बस्तथा सति प्रातिलोम्यमस्याद्दृश्यत् न हि प्रतिबिम्बः प्रातिलोम्यं जहाति नापि विधान्तरम् असम्भवात् तत उक्तप्रकारयोगशक्तिविलसितमेवेति ॥ १७ ॥

नन्वेवं कुत्रोपयुज्यते सत्यं किं नानाभवति न हि सत्यस्य नानात्वमिति न्यायात् नैवमित्याह—अद्यैव त्वदृते इत्यादि । अद्यैव इदानीमेव त्वदृते त्वां विना त्वद्बहिरङ्गस्य अस्यापराङ्मुखस्य मायात्वं किम् आदर्शितं न यद्दर्शितं तत् किं मायाकुहकं मित्यर्थः । कुतो न मायात्वं तत्राह—एकोऽसि प्रथमं तन्मायैव न एकत्वं सजातीयशून्यत्वं तव स्वरूपमेव ततो व्रजसुहृद्वत्साः इति यत् तदपि न कुहकं कुतस्तत्राह—एकोऽसि प्रथमन्तन्मायैव न एकत्वं सजातीयशून्यत्वं तव स्वरूपमेव ततो व्रजसुहृद्वत्सा इति यत्तदपि न कुहकं कुतस्तत्राह—तावन्तश्चतुर्भुजा असि त्वमेवेत्यर्थः । "सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः" इत्याद्युक्तेः कथं कुहकं तदित्यन्वयं तत् ते अखिलैर्ब्रह्मादिभिः सार्द्धं मयोपासिता इति यत् तदपि न कुहकं तेषां मम च तथा तथ भवितुमसामर्थ्यात् स्वयमेव भवता तथातथाभूतमिति न कुहकं तावन्त्येव जगन्त्यभूरिति चेत्तदपि न कुहकम् अभूरित्युक्तेस्तेषां त्वत्त्वात् तदपरं पश्चात् अद्वयं ब्रह्म भवानेक एव यत् तदपि न कुहकं ब्रह्मत्वात् अतः पूर्वं यदुक्तं किमिदं मायया विनेति यत्तदेवेति तत् सत्यमेवेति वाक्यार्थः ॥१८॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, विश्वाधारो नारायण एव पुरुषः तस्मिन् विश्वप्रतीतेः अतोऽहं प्रपञ्चमध्ये स्थितः सूक्ष्मः नारायणो न भवामीति चेत्तत्राह—यस्येति । यस्य नारायणस्य कुक्षौ इदं सर्वं सात्ममात्मसहितं भाति तथा त्वय्यपीह भाति अतो विशेषाभावात् भवानपि नारायणः अस्तु भेदः परिच्छेदोऽन्यथा प्रतीतिः एतत्सर्वं किं मायया विना ? अपि तु तव व्यामोहिकशक्त्या माययैव भासते भवान् परिच्छिन्न आधेयो नारायणाद्भिन्न इति अतः पुरुषस्य नारायणपक्षेऽपि भवान् नारायणः ॥ १७ ॥

किं च नारायणः पुरुषोत्तमः स एव सर्वं न त्वन्यो नारायणो भवतीति चेत् तत्राह—अद्यैवेति । अद्यैव ते त्वया त्वदृते अस्य प्रपञ्चस्य भिन्नतया सत्त्वं नास्तीति ज्ञापयितुं मायात्वमादर्शितं ये हि भिन्नतया जगद्भगवद्व्यतिरिक्तमस्तीत्याहुस्ते अद्यैव भ्रान्ताः कृताः यतः सर्वं त्वमेवेति तदुपपादयति, एकोऽसि प्रथमं यदा मया वत्सा अपहृता बालाश्च ततो व्रजस्य सर्वान्धिनः सुहृदो बाला वत्साश्च ततः समस्ता अपि सर्वब्रह्माण्डरूपः ततः क्षणानन्तरं तावन्तोऽपि भगवत्स्वरूपाः चतुर्भुजा दृष्टाः तत्राप्यखिलैर्ब्रह्माण्डैस्तत्रत्यैर्वा मया च उपासिताः तावन्त्येव जगन्ति त्वमेवाभूः अतः कारणात् ब्रह्माद्वयमेव शिष्यते न त्वन्यः पदार्थो विचार्यमाणः सिद्ध्यति तस्माद्भवानेव नारायण इति समर्थितम् ॥ १८ ॥

———

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

उक्तमेव स्पष्टयति—यस्येति । इह बहिः जगति इदं सर्वं यथा भाति तथैव यस्य तव कुक्षावपि तत्सर्वं भाति तदिदं भानं त्वयि मायया विना त्वदिच्छया विना किं कथं घटते ? इत्यन्वयः । ननु, तर्हि विद्यमानस्य विश्वस्य मुखे प्रतिबिम्ब एव कुतो न स्यादित्याशङ्क्याह—सात्ममिति । आत्मना त्वया सहितमित्यर्थः । त्वयि प्रतिबिम्बत्वे बाह्याद्विलोमतयैव प्रतीयेत न तु तद्स्थित तव चादर्शस्थानीयस्य त्वदन्तः प्रतीतिर्न स्यात् अतोऽचिन्त्यशक्त्या त्वदिच्छयैव तथा प्रतीतिरिति भावः ॥ १७ ॥

न केवलं जनन्याः प्रदर्शितमपि तु ममापीत्यत आह—अद्यैवेति ।

**अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायाम् ।**
**सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः ॥ १९ ॥**

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

त्वदृते त्वां विना अस्य विश्वस्य मायात्वं स्वेच्छाधीनत्वं ते त्वया अद्यैव किं मम नादर्शितमपि तु प्रदर्शितमेव तथा हि प्रथमं यदा मया वत्सादयो नापहृतास्तदा त्वमेकः श्रीकृष्णरूपोऽसि ततो वत्स-बालादिहरणानन्तरं व्रजसम्बन्धिनो सुहृदो बालाः वत्साः समस्ताः वेणुविषाणादयश्च सर्वेऽपि त्वमेवाभूः ततो मया सहाखिलै-स्तत्त्वादिभिरुपासिताः सेवितास्तावन्तस्तावत्सङ्ख्याकाश्चतुर्भुजाः त्वमसि अभूः ततश्च तावन्त्येव जगन्ति ब्रह्माण्डानि त्वमभूः तत्र तत्राप्येकैकमूर्तिरस्मदादिभिः सेवित इति ज्ञेयम् । एवमनन्त-रूपस्त्वमभूः तस्मात् अमितमपरिमितं ब्रह्मपरिपूर्णमद्वयमेव त्व-त्स्वरूपमवशिष्यते ब्रह्माण्डदर्शनं पूर्वमनुक्तमप्यत्रत्योक्त्यैव ज्ञेयम् ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कुक्षिस्थबहिःष्ठयोर्जगतोरनयोः सर्वथैवाभेदादैक्यमैक्यादेव कुक्षिस्थस्य मायिकत्वमवधारितमित्याह—यस्य तव कुक्षौ इदं विश्वं यथा भाति तथैव इह बहिरपि स्थितं विश्वं भाति ननु, बहिःस्थितस्य कुक्षौ प्रतिबिम्ब एवायं तत्राह—सात्मं त्वत्सहितमेव न हि दर्पणे दर्पणो दृश्यते इति भावः । तेन बहिःस्थितं मायिकमेव विश्वं त्वत्कुक्षौ दृष्टं त्वयीति यथा कुक्षिस्थं विश्वं त्वदधिकरणकं तथा बहिः-ष्ठमपि विश्वं त्वदधिकरणकमित्यर्थः । तत्तस्माद्वैलक्षण्यगन्धस्या-प्यभावात् इदं जठरगतं विश्वं किं मायया विना अपि तु मायिकमेव अत्र त्वज्जनन्यनुभवो मदनुभवश्च प्रमाणमतो मायिकजगन्मध्यवर्त्यहं त्वत्कुक्षिगत एव भवामीति मुहु-र्विज्ञाप्यसे "उत्क्षेपणं गर्भगतस्य" इत्याद्यतः क्षमस्वेति भावः ॥१७॥

किञ्च त्वत्कुक्षिगतं जगत् बहिःष्ठं तवादिपुरुषस्य रोमकूप-गतं च जगत् सहस्रं सर्वं मायोपादानकत्वान्मायिकमेवेत्ये-तावत्कालपर्यन्तं मया अवधारितमेव किन्तु अतर्क्यमहा-महैश्वर्यस्य तव त्वदीयस्वरूपशक्त्यात्मकं चिन्मयमपि जगत्-सहस्रमस्तीत्यद्यैवानुभूतमित्याह—अद्यैव अस्य मञ्जुमहिमनि महृदस्य जगत्सहस्रस्य किं त्वदृते जगत् सहस्रसम्बन्धि किं वस्तु त्वद्विनाभूतं अपि तु सर्वमेव त्वत्स्वरूपभूतमेवेत्यर्थः । अत एव मम मां प्रति ते त्वया अस्य न मायात्वम् आदर्शितं किन्तु चिन्मयत्वमेव दर्शितमिति भावः । कुत इत्यत आह—एकोऽसीति । प्रथममेकस्त्वमासि ततः स्वरूपशक्त्यैव व्रजसुहृदो बालाः वत्साः समस्ता अपि त्वमेवाभूः ततो योगमाययैव तानाच्छाद्य प्रकाशिताः स्वरूपशक्तिमयाश्चतुर्भुजास्त्वमभूः की-दृशाः अखिलैरात्मादिस्तम्बपर्यन्तैश्चिन्मयैरेव मया मादृशेन ब्रह्म-णापि चिन्मयेनैवोपासितास्ततश्च तावन्त्येव जगन्ति चिन्मय-ब्रह्माण्डान्यभूस्ततो योगमाययैव त्वदिच्छया तान् सर्वानाच्छाद्य अप्रकाशितममितमपरिमितसौन्दर्यमनुपमब्रह्म मद्वयमेकं शिष्यते सम्प्रत्यपि मद्भाग्याद् योगमायया प्र... प्रत्यनावृतमेव भवान् वर्तत इत्यर्थः । अत्र त्वमभूस्त्वमभूः ... निर्देशेन व्रजसुहृदादीनां जगदन्तानां भगवता मायाशक्ति ... विभावितत्वाच्चिन्मयत्वमवधारणीयम् मायायाभूरित्यनुक्तेश्च ... किमित्युक्तेश्च जगतां तु सुतरामेव ॥ १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जगतः भगवच्छक्तिपरिणामितया पुनः सत्यत्वमुपपा... कवलवेत्रादियुक्तस्य पुरःस्थितस्य भगवद्वपुषो विभुत्वं च ... यत् आश्चर्यं दर्शयति—यस्येति । सात्मं जीवात्मसहितम् ... मायाकार्यं वेदद्वारा भगवद्दत्तेन वयुनेन वा यस्य तव नाभ्... कुक्षौ यथा भाति तथा इह बहिरपि तत्सर्वं भाति ... कार्यजातं त्वयि मायया तव शक्त्या विना किमपि तु ... घटतेत्यर्थः । स्वरूपस्यापरिणामित्वात् निर्मूलकार्योदयास... चेति दिक् ॥ १७ ॥

स्वरूपस्यापरिणामित्वं जगतःशक्तिमयत्वं पुनर्दर्शयति ... वेति । त्वदृते त्वन्मूर्तिव्यूहं विना अस्य अस्मच्छरीरादि... पर्यन्तस्य ते त्वया मायात्वं शक्त्यभिन्नत्वं किं नादर्शि... तदेव दर्शयति—एकोऽसीत्यादिना । ततो यावन्तो व्रजसुहृ... तावन्तो मया सहाखिलैस्तत्त्वादिभिरुपासिताश्चतुर्भुजास्त्वमभूः तावन्त्येव जगन्ति ब्रह्माण्डानि तत्तन्मूर्तिनियम्यान्यभूः ए... गनुक्तमपि दृष्टमिति बोध्यम् । तदनन्तरं सर्वं स्वस्मिन् ... त्याऽद्वयं निःसमानातिशयं ब्रह्म भवान् शिष्यते ॥ १८ ॥

---

### भाषा टीका ।

जिन आपके भीतर कुक्षिमें ये जो बाहर देख ... प्रपञ्च सो सब आपके और मेरे सहित दीख परे हैं ... आपही कहौ ये बात माया के बिना अर्थात् आपकी ... शक्ति के बिना होय सके है कहा ? न कदापि ॥ १७ ॥

और हे दयालो ! पहिली कथा जायवे देओ पर यां ... आपने आपके बिना या सब प्रपञ्चकों मेरे तांई आश्चर्य... वारो नही बतायो कहा ? प्रथम आप एक हे तदनन्तर ... सब सुहृद बछरा और सिगरे वृतापस्तान सहित दीं... पीछे सगरे चतुर्भुज दीख परे और उन सब के साथ ... मैंने उपासना करी और आप उतनेई होय गये और या ... फिरभी इकले अद्वितीय ब्रह्म अवशिष्ट रहे ॥ १८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, ब्रह्मंस्तव मया दर्शितं शुद्धमेव चैतन्यं कथं ... मायेत्युच्यते सत्यम्, किन्त्वद्वितीये त्वयि नानात्वं गुणा...

सुरेष्वृषिष्वीश ! तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य ।
जन्मासतां दुर्मदनिग्रहाय प्रभो ! विधातः ! सदनुग्रहाय च ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मत्स्याद्यवतारेष्वपि कार्यवशेन स्वतन्त्रमायानिबन्धनमित्याह–श्लोकद्वयेन—अजानतामिति । त्वत्पदवीं तव स्वरूपमजानतामनात्मनि प्रकृतौ स्थित आत्मैव त्वमात्मनैव स्वातन्त्र्येण मायां वितत्य भासि कथम् ? जगतः सृष्ट्यादावहमिव ब्रह्मेव विधाने पालने च एष त्वमिव अन्ते त्रिनेत्र इवेति ॥ १९—२० ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषणी ।

ईदृशत्वन्माहात्म्यानभिज्ञेषु त्वमन्यथैव स्फुरसीत्याह–अजानतामिति । उक्तां तव पदवीं तत्त्वं भक्तिमार्गं वा अनात्मनि जडदेहे आत्मा स्वयमेव त्वमात्मना जीवरूपेण प्रकाशसे । ननु, जीवेश्वरयोः परमवैलक्षण्यं श्रुतिस्मृतिप्रतिपाद्यमानं ते कथं नावगच्छन्ति ? तत्राह, वितत्य मायामिति । अभक्तत्वेन त्वन्मायामोहितत्वादित्यर्थः । अत एव जगत्सृष्टिनिमित्तं योऽहं स इव भासि एवमग्रेऽपि एष त्वमिति मन्वन्तरपालकावतारश्रीविष्णुना सहाभेदाद्यभिप्रायेण अहमेव ब्रह्मा विष्णुः शिवश्चेति ते जानन्तीत्यर्थः । सृष्ट्यादिप्रयोजननिर्देशेन तेषामज्ञतैव दर्शिता सृष्ट्यादिकर्त्तृत्वेन जीवतः परमवैलक्षण्येऽपि तत्तदभिमानात् सृष्ट्यादिकर्मापेक्षया ब्रह्मादिक्रमेण निर्देशः । यद्वा, यथा सृष्ट्यादिनिमित्तं म[ह]दादिरूपेण मायां वितत्य भासि तथेत्यर्थः तत्त्वतस्तवैव सृष्ट्यादिकर्तृत्वात् "जन्माद्यस्य यतः" इत्याद्युक्तेः ॥१९॥

तेषामपि हिताय निरुपाधिककरुणया त्वं बहुधाऽवतरसीत्याह—सुरेष्विति । जननं जनः न विद्यते जनः जन्मलक्षणसंसारो भक्तानां यस्मात्तस्य दुर्मदः अहं शास्त्रार्थज्ञो योगाभ्यासतः सिद्ध इत्यादिरूपः तस्य निग्रहाय निरसनाय तत्तल्लीलाश्रवणेन भक्त्या स्वत एव तदपगमात् न केवलं तेषामेवाहितार्थं साधूनां सन्तोषणार्थमपीत्याह, सदिति । असद्दुर्मदनिग्रहेण सद्धर्मप्रवर्त्तनं तथा तत्तन्मधुरलीलादिप्रकाशनमेव सत्स्वनुग्रहस्तस्मै । ननु, असत्सु कथमीदृशी कृपा तत्राह, प्रभो ! हे परमस्वतन्त्रेत्यर्थः । यद्वा, तथापि तेषां सा दुर्वासना कथमपयातु तत्राह, प्रभो ! हे समर्थेति तवाशक्यं न किञ्चिदस्तीत्यर्थः । विधातः ! हे तत्तदवतारकर्त्तरिति भक्तोपयोगित्वादवतारित्वेन सम्बोधनम् अथवा मायामोहितत्वात्ते अवतारेषु जीवदृष्टिं च कुर्वन्ति जन्मादिश्रवणात् तत्त्वतस्तु सर्वमेव ते तव प्रादुर्भावरूपा एवेत्याह-सृष्ट्यादिसार्द्धेन । सृष्ट्यादिनिमित्तं यथा वयं त्रयः तथा तेऽपि तत्तदर्थमतो न जीवस्तेषाञ्च भासीत्यर्थः । ततश्च सुरेषु धर्मादिषु श्रीनरनारायणादयो ज्ञेयाः अथवा नहि भक्तेषु कथं भासीत्यपेक्षायां त्वदत इत्युक्तं तस्मात्त्वमेव सर्वेष्वित्याह–सृष्ट्यादीत्यादि । सृष्ट्यादिनिमित्तं ब्रह्मादिरूपेण तत्तदर्थं च श्रीनरनारायणादिरूपेण त्वमेव तेषु भासीत्यर्थः । तदर्थं प्रपञ्चान्तर्गतमपि त्वां ते सत्यमेवानेकमप्येकमेव जानन्तीति भावः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं गुणावतारलीलावतारेष्वपि त्वमेव मूलमित्याह, अजानतामिति द्वाभ्याम् । त्वमित्यस्य भासीत्यनेनान्वयः कर्त्तुः क्रियान्वयस्यैव मुख्यत्वात् विधाने पालने एष इव एतत्कार्यपरिच्छिन्न इव पालनमात्रकर्त्तैवेत्यर्थः । विष्णोस्तदैक्याच्च ब्रह्मादिवत् तत्रामोक्तिरिति ज्ञेयम् यथा द्वितीये श्रीब्रह्मणैवोक्तम्—

"सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्" ॥

इति ॥ १९ ॥

अजनस्य प्राकृतवज्जन्मरहितस्य स्वरूपशक्त्या स्वयमाविर्भावात् तच्च केवलं भक्तपरिपालनार्थेति मायाकार्यानासक्तिमाह, असतामिति । प्रभो, हे अविचिन्त्यशक्तियुक्त ! विधातः, हे अनन्तावतारकर्त्तः ! अत्राजानतामित्यादौ या टीकावतारिका ननु, ब्रह्मन्नित्याद्या तत्रायमभिप्रायः ईश्वरः खलु स्वाधीनया मायया प्रपञ्चविलक्षणं शुद्धसत्त्वात्मकं स्वविग्रहादिकं भजति ततस्तत्राविष्टश्च न भवति शुद्धसत्त्वस्य स्वच्छत्वेन शुद्धचैतन्यतादात्म्यापन्नत्वात्तद्रूपमेव तन्मतम् । जीवस्त्वीश्वराधीनया मायया ऽधीनीकृतः प्रपञ्चात्मकं रजस्तमोमयं विग्रहादिकं प्राप्नोति ततस्तत्राविष्टश्च भवति रजस्तमसोरस्वच्छत्वेन चिद्रूपत्वानाविष्कारात्तद्रूपमेव तत्सर्वमित्यतो भवेदेव वैलक्षण्यमिति किं तु मायाशब्दस्य स्वरूपशक्तिवाचित्वेनापि प्रतिपादयिष्यमाणत्वात्तन्मतस्त्वमनयोरेकत्वमेव दर्शयिष्यते ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं क्वाहमित्याद्यष्टाभिः परब्रह्मणः श्रीमन्नारायणस्य तदवतारस्य कृष्णस्य निरङ्कुशमहित्वं प्रतिपाद्य गुणावतारादिषु अवतारिणस्तस्यावतारहस्यं दुर्ज्ञेयमित्याह-त्रिभिः अजानतामिति । एवं त्वत्पदवीं त्वत्स्वरूपगुणविभूतितत्त्वरूपाम् अजानतां त्वमात्मा "आत्मा नारायणः" इति श्रुतेः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः" इति श्रुतेश्च तत्तज्जीवशरीरकः आत्मना स्वसङ्कल्पेन अनात्मनि तत्तद्देहे गुणकलांशादिरूपे मायां जीवेषु"अजायमानो बहुधा विजायते" इत्यज्ञानरूपां वितत्य विस्तार्य वर्त्तमानः भासि तव तत्त्वज्ञानां भासि सृष्ट्यादिवादि सन्निमग्नोऽहं ब्रह्मेव गुणावतारः जगतः विधाने पालने एव त्वमिवेति एषः प्रत्यक्षं दृश्यमानः एवं विष्णुकृष्णयोरेकत्वमुक्तं साक्षादेव ननु जीवान्तरितः तौ तु जीवान्तरितावेव ब्रह्मरुद्राविति भावः ॥ १९ ॥

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

शब्दवाच्याविद्याकार्यसंसारसागरं तथा च श्रुतिः "अनृतेन हि प्रत्यूढास्तेषां सत्यानामनृतमपिधानम्" इति तरन्त्येव । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति स्मृतेः । अत्र तरति-स्त्यागपरः त्यजन्तीत्यर्थः । तमुत्सृज्य त्वामेव सेवन्ते इति भावः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एकस्त्वम् ॥ २३—२४ ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

यद्यपि तवावताराः सर्वे नित्या यद्यपि वत्सवत्सपादिरूपेण सम्प्रत्येव सत्यज्ञानादिवपुर्भिर्नानाद्दष्टोऽसि तथाऽपि त्वमेक एव यत इदानीं तत्तत्सर्वमन्तर्धाप्यैक एव वर्त्तसे तेन सजातीय विजातीय द्वैतशून्यत्वादेक एवासीत्याह—एकस्त्वमात्मेत्यादि । त्वम् एकः यदिदं सर्वं दृष्टं तत्त्वमेव न तत्सजातीयं विजातीयं वा त्वत्तः पृथक् आत्मा न शरीरं तर्हि किं नीरूपः नेत्याह—पुरुषः दृश्यमानपुरुषाकारतया श्रीनन्दकिशोर एव. तर्हि किमहमर्वाचीनो नेत्याह—पुराणः तर्हि कथं नन्दपुत्रः तत्राह—सत्यः एवं रूपेणैव सत्यः एवं रूपेणैव नन्दादयोऽपि सत्या इत्यर्थः । कुत इयं सङ्गतिः ? तत्राह, स्वयंज्योतिः स्वप्रकाशः तव स्वयञ्ज्योतिष्ट्वेन स्वयमेव सङ्गच्छते अचिन्त्यपरमशक्तित्वात् तर्हि किमहं परिच्छिन्नः तत्राह, अनन्तः एवं रूपेणैव व्यापकत्वात् । ननु, पुराण इति यदुक्तं तत् किं प्राचीनः नेत्याह, आद्यः । ननु, तथापि आद्यो भवत्वात् आदिशब्दस्य च सावधित्वात् सृष्टेः प्राक् जातत्वमायातं तथा सति प्राचीनत्वमेवायाति न तु मे नित्यत्वमित्याशङ्क्याह, नित्यः तर्हि किमहमाकाशवन्नित्यः नेत्याह, अक्षरः स तु क्षर एव भूतविशेषत्वात् "क्षरः सर्वाणि भूतानि" इत्युक्तेः अत एवाजस्रसुखः निरन्तरानन्दः तर्हि कथं भवतापहृतेषु मे दुःखं तत्राह, निरञ्जनः अलिप्तः तेनापि लिप्तो न भवसि तर्हि निर्विशेषं ब्रह्मैव नेत्याह, पूर्णः परिपूर्णं ब्रह्म बृहद्ब्रह्मेत्यर्थः । अत एव अद्वयः द्वयमपूर्णता नास्ति यस्य यत उपाधितो मुक्तः अतः अमृतः अमृतमास्वाद्यं यत्किञ्चन तद्यस्यास्तीत्यर्शआदित्वादच् एतत्सर्वाण्येव विशेषणानि विशेष्यं तु त्वमिति त्वच्छब्दवाच्यं श्रीकृष्णरूपं तेन त्वद्रूपस्यानिर्वचनीयत्वे तात्पर्यम् ॥ २३ ॥

ये तु एवं विधे तव श्रीविग्रहे आत्मबुद्धिं कुर्वन्ति न पुनः शरीरबुद्धिं त एव निस्तरन्तीत्याह, एवंविधं त्वामित्यादि । एवंविधं एवम्प्रकारं त्वां श्रीविग्रहरूपं वे आत्मात्मनया आत्मनामपि आत्मतया विदन्ति परमात्मत्वेन जानन्ति किं वा आत्मा विग्रहः स एवात्मा चिद्रूपत्वतया ते भवानृताम्बुधिं तरन्तीव तरन्त्येव इव एवार्थः कीदृशं सकलात्मनामपि आत्मानं केन ? गुर्वर्कलब्धोपनिषत्सुचक्षुषा गुरुरेवार्कस्तेन लब्धा अभिगता या उपनिषत् तत्त्वं रहस्यमिति यावत् सैव सुष्ठु शोभनं चक्षुस्तेन, अथवा एवंविधं परमाश्चर्य-महैश्वर्यं त्वां ये आत्मनः स्वस्य आत्मतया स्वजीवनबुद्ध्या चक्षते ते तरन्तीव तरन्त्येवेति पूर्ववत् । यद्वा, एवंविधं प्रेमास्पदविग्रहं त्वां ये ज्ञानिन आत्मा आत्मत्वेन विज्ञ... ननु श्रीनन्दकिशोरोऽयं प्राणनाथ इत्यादिरूपेण ते ... नृताम्बुधिं तरन्तीव न तु तरन्ति इव शब्दोऽ... नार्थः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतस्तत्त्वमाह—एकस्त्वमात्मेति । त्वमादावेक एव स... यविजातीयस्वगतभेदशून्यः तत आत्मा त्रिविधः जीवरूपः ... र्यामिरूपः विभूतिरूपश्च जातः ततः पुराणः पुरुषः पुराणो... अथवा एको ब्रह्मवादे आत्मा योगे पुरुषः साङ्ख्ये पुराणो वे... सत्यः पाशुपते सत्त्वयत् इति भेदं सत्यो जगद्रूपेण एवं पञ्चवि... स्वयञ्ज्योतिः स्वप्रकाशः ननु जडः अनन्तः अन्तशून्यः ... वधिरहितः आद्यः पूर्वावधिरहितः नित्यः सदैकरूपः ननु ... क्षयवान् यथा समुद्रः चन्द्रो वा एवं प्रपञ्चरूपत्वे दोषचतु... वार्थं भगवतो रूपान्तरायाह—अक्षर इति । शब्दब्रह्माक्षर... कृतिपुरुषकारणरूपो वा तेन ज्ञानविषय उक्तः तस्या... रूपत्वमाह—अजस्रसुख इति । नित्यसुखरूपः तस्मिन्नपि सुखे... दोषान्निवारयति, निरन्तरसुखरूपमपि अज्ञानयुक्तं भवति ... सुषुप्तिः तद्व्यावृत्त्यर्थमाह—निरञ्जन इति । अञ्जनमविद्या त... परिच्छेदोऽपि भवति तद्व्यावृत्त्यर्थमाह—पूर्ण इति । तरतमरा... माह—अद्वय इति । केनचिदुपाधिनैव भोक्तव्यमिति शङ्कां वा... मुक्त उपाधित इति । यथा स्त्रीसुखं पुरुषेणैव भोक्तव्यं पुरु... स्त्रियैव तथा ब्रह्मानन्दानुभवे न कोऽप्युपाधिरपेक्षितः ... स्वरूपतोऽपि स अमृतः अलौकिकः श्रुत्येकसमधिगम्यः न तु ... कप्रमाणवेद्यः अन्यथा पूर्वोक्तरूपो न स्यात् एभिरेव ... विशेषणैर्देहाद्वैलक्षण्यमपि ज्ञातव्यं षोडशकलोऽयं पुरुषः ... बाल्यकौमारादिभेदेनानेकः नापि व्यापको नाप्यातेन... स्वयमूहाम एकादशेन्द्रियपञ्चमहाभूतेभ्यो वा वैलक्षण्यं ... षोडशकलो वा नारायण एभिरुक्तः ॥ २३ ॥

एवं भगवत्स्वरूपमुक्त्वा एवम्विधं ये वक्ष्यमाणप्रकारे... सते ते भ्रान्ता इत्याह—एवम्विधं मिति पञ्चभिः, एवं षोडश... सकलात्मनामपि सर्वजीवानामात्मानं देहरूपमात्मरूपं व... न एव स्वस्यैवात्मतया अहमेव भगवानिति ये वि... पश्यन्ति जानन्ति तत्र विषयप्रबोधको गुरुरर्कः ... सुपनिषदेव चक्षुः ये एवमहमेव परं ब्रह्मेति जानन्ति ते भव... म्बुधिं तरन्त्येव सर्वं ब्रह्मेति ज्ञाने सर्वतरणं केवलम् ... ब्रह्मत्वज्ञाने यः संसारः अनृतरूपः केवलं स्वगोदाव... अहं ममात्मा स एवाम्बुधिः तरणे अशक्यः ... तरन्तीव दोषाभारस्याऽनिवृत्तत्वात् अन्धदीप एव ... देहेन्द्रियविषयाणाम् अतो ऽनृताम्बुधिस्तीर्णो... इत्यर्थः ॥ २४ ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी।

नित्यसुखबोधतनावित्युक्तमेव सर्ववेद्यं भगवतस्तत्त्वं विशदयति-एक इति। (१) एकस्त्वं सत्यः परमार्थभूतः तत्र हेतुमाह—आत्मेति। किञ्च, यद्विकारवत्तदसत्यं तव च जन्मादयो विकाराः न सन्ति तत्र जन्माभावे हेतुमाह-आद्य इति। सर्वकारणमित्यर्थः। कारणत्वे हेतुमाह—पुराण इति। कार्यात् प्रपञ्चात्पूर्वमपि वर्त्तमान इत्यर्थः। तत्र हेतुमाह—पुरुष इति। "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति। श्रुतेः। जन्मानन्तरभाव्यस्तित्वविकारं वारयति-नित्य इति। सनातन इत्यर्थः। वृद्ध्यभावे हेतुमाह—अनन्त इति। देशपरिच्छेदरहित इत्यर्थः। विपरिणामाभावे हेतुमाह-अजस्रसुख इति। नित्यानन्दरूप इत्यर्थः। अपक्षयं वारयति-अक्षर इति। विनाशं वारयति-अमृत इति। तत्र हेतुमाह-निरञ्जन इति। निर्मल इत्यर्थः तत्र हेतुमाह-उपाधितो-मुक्त इत्यर्थः। कालकर्मगुणादिपारवश्यरहित इत्यर्थः। तत्रापि हेतुमाह-पूर्ण इत्यर्थः। अचिन्त्यानन्तशक्तिपरिपूर्ण इत्यर्थः। तथा च द्वैतापत्तिमाशङ्क्याह-अद्वय इति। एवम्भूते किम्प्रमाणमित्याकाङ्क्षायामाह-स्वयञ्ज्योतिरिति। "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः। स्वयं प्रकाश एव न तत्र प्रमाणान्तरमन्यथा जडत्वापत्तेः॥ २३॥

एवम्भूतस्य तव आत्माभिन्नज्ञानान्मुक्तिर्भवतीत्याह—एवमिति। गुरुरेवार्कः सूर्यवदज्ञानान्धकारनिरासेन परमार्थप्रकाशकस्तस्माल्लब्धा उपनिषत् उपनिषज्जन्यं ज्ञानमेव चक्षुस्तेन ये एवम्विधमुक्तप्रकारकं त्वामात्मात्मतया स्वाभेदेन पश्यन्ति ते भवानृताम्बुधिं भवतीति भवः देहेन्द्रियान्तःकरणादावात्माध्यासः स एव मिथ्यात्वादनृतस्तस्माद्भवानृताम्बुधिस्तं तरन्तीत्यन्वयः। भवाम्बुधेरनृतत्वात् तत्तरणमपि तथैवेत्याशयेनेवशब्दप्रयोगः न चायमभेदः पुत्रादिष्विव किन्तु यथार्थ एवेत्याह-स्वात्मानमिति। स्वरूपभूतं न केवलं स्वात्मानं किन्तु सकलात्मनां सर्वजीवानामप्यात्मानमिति "ममैवांशो जीवलोके जीवभूतः सनातनः" इति वचनात् अंशांशिनोरभेदाच्च॥ २४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किञ्च तवानन्तमूर्त्तित्वेऽपि त्वमचिन्त्यशक्त्या एकमूर्त्तिरेवेत्याह-एक इति। त्वम् एक आत्मा परमात्मेत्यर्थः। जीवात्मनां बहुत्वेनैकत्वाभावात्। ननु, परमात्मा निराकार एव न पुरुषः पुरुषशब्दस्याऽऽकृतिमत्येव पदार्थे रूढेः किमन्यः पुरुष इत्यर्वाचीनः न पुरातनः। ननु, नन्दपुत्रत्वादर्वाचीनोऽयमहं पुरातनो भवतः स्तुत्यैवाऽभूवं न तु यथार्थनयेति तत्राह, सत्यः त्वं नन्दपुत्रोऽपि सत्यः त्रैकालिकसत्तावान् पुराणपुरुष इत्यर्थः। नन्वस्य पुरुषस्य कालकर्मादिप्रकाश्यत्वादहमपि किन्तथैव न स्वयञ्ज्योतिः त्वन्तु स्वप्रकाशः किं सूर्यादिवत् परिच्छिन्नः न अनन्तः न विद्यतेऽन्तः कालतो देशतश्च यस्य सः नन्वन्येऽप्यवतारा एवम्भूता एव तेषामहं कतमस्तत्राह, आद्यः त्वं तेषामपि मूलभूतोऽवतारीत्यर्थः। नन्वहं द्विपरार्द्धान्ते किमेतत्स्वरूपेणैवावस्थास्यामि न वेत्यत आह, नित्यः जगदिदं पुरातनमपि सत्यमपि द्विपरार्द्धान्ते स्वरूपेणास्थायित्वादनित्यमुच्यते त्वं तु तदापि नन्दपुत्राकारेणापि स्थास्यसीति नित्य उच्यसे नराकारस्यपूर्णब्रह्मस्वरूपत्वात् "योऽसौ सौर्ये तिष्ठतीत्यादौ यः साक्षात् परब्रह्मेति गोविन्दं सच्चिदानन्दविग्रहं वृन्दावन-

(१) त्वमेव तु सत्य इत्याह—एकस्त्वं सत्यः कुतः आत्मा दृश्यमसत्यं दृष्टं न चात्मा दृश्योऽतः सत्यः किञ्च, यद्विकारवत्तदसत्यं न च त्वयि जन्मादयो विकाराः सन्तीत्याह—आद्यः कारणम् अतो न जन्म आद्यत्वे हेतुः पुराणः पुरापि नवः कार्यात् पूर्वमपि वर्त्तमान इत्यर्थः। अत्र हेतुः पुरुष इति तथा च श्रुतिः "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति जन्मानन्तरास्तित्वलक्षणं विकारं वारयति-नित्य इति। सनातन इत्यर्थः। पूर्णोऽजस्रसुखोऽक्षरोऽमृत इति चतुर्भिः पदैः क्रमेण वृद्धिविपरिणामापक्षयविनाशान्वारयति-पूर्णत्वे हेतुः अनन्तोऽद्वय इति च देशकालपरिच्छेदरहितो वस्तुपरिच्छेदरहितोऽपि अमृतत्वोपपादनाय चतुर्विधक्रियाफलत्वमवारयति-स्वयंज्योतिर्निरञ्जन उपाधितो मुक्त इति पदत्रयेण। अयं भावः तत्रोत्पत्तिराद्य इत्यनेनैव निराकृता प्राप्तिरपि क्रियया ज्ञानेन वा भवेत् क्रियया प्राप्तिरात्मपदेनैव निराकृता ज्ञानतः प्राप्तिं वारयति-स्वयञ्ज्योतिरिति। विकृतिरपि तुषापाकरणेनाऽवघातेन व्रीहीणामिवोपाध्यपाकरणेन भवेत्तत्त्वसङ्गत्वान्न संभवतीत्याह-मुक्त उपाधित इति। संस्कारोऽपि किमप्यतिशयाधानेन मलापाकरणेन वा तत्रातिशयाधानं पूर्णत्वेनैव निराकृतम्, मलापाकरणं निवारयति-निरञ्जन इति। निर्मल इत्यर्थः इति श्रीधरस्वामिभिर्व्याख्यातम्। श्रीवल्लभाचार्यैरित्थं व्याख्यातं सुबोधिन्याम् एकस्त्वमात्मेति स्वभावादेक एव सजातीयविजातीयस्वगतभेदशून्यः तत आत्मा त्रिविधः जीवरूपः अन्तर्यामिरूपः विभूतिरूपश्च जातः ततः पुराणः पुरुषः पुरुषोत्तमः अथवा एको ब्रह्मवादे आत्मा योगे पुरुषः साङ्ख्ये पुराणो वैष्णवे सत्यः पाशुपते सत्यत् इति भेदे सत्यो जगद्रूपो वा एवं पञ्चविधोऽपि स्वयञ्ज्योतिः स्वप्रकाशः न तु जडः अनन्तः अन्तशून्यः उत्तरावधिरहितः आद्यः पूर्वावधिरहितः नित्यः सर्वैकरूपः न तु वृद्धिक्षयवान् यथा समुद्रः चन्द्रो वा एवं प्रपञ्चरूपत्वे दोषचतुष्टयं निवार्य भगवतो रूपान्तरमप्याह-अक्षर इति। शब्दब्रह्माक्षररूपः प्रकृतिपुरुषकारणरूपो वा तेन ज्ञानविषय उक्तः। तत्साक्षान्मोक्षरूपत्वमाह-अजस्रसुख इति। नित्यसुखरूपः तस्मिन्नपि सुखं प्राप्तदोषान्निवारयति—निरन्तरसुखरूपमपि अज्ञानयुक्तं भवति तथा सुषुप्तिः तद्व्यावृत्त्यर्थमाह—निरञ्जन इति। अञ्जनम् अविद्या तद्रहितः परिच्छिन्नोऽपि भवति तद्व्यावृत्त्यर्थमाह-पूर्ण इति। तरतमराहित्यार्थमाह—अद्वय इति। केनचिदुपाधिनैव भोक्तव्यमिति शङ्कां वारयति मुक्त उपाधित इति। यथा स्त्रीसुखं पुरुषेणैव भोक्तव्यं पुरुषसुखं स्त्रियैव तथा, ब्रह्मानन्दानुभवे न कोऽप्युपाधिरपेक्षितः। किञ्च, स्वरूपतोऽपि अमृतः अलौकिकः श्रुत्यैकसमधिगम्यः न तु लौकिकप्रमाणवेद्यः अन्यथा पूर्वोक्तरूपो न स्यात् एभिरेव षोडशविशेषणैः देहाद्वैलक्षण्यमपि ज्ञातव्यं षोडशकलोऽयं पुरुषः देहस्तु बाल्यकौमारभेदेनानेकः नापि व्यापको नाप्यात्मेत्यादि स्वयमूह्यम् एकादशेन्द्रियपञ्चमहाभूतेभ्यो वा वैलक्षण्यं ज्ञातव्यं षोडशकलो वा नारायणपरिरूढ इति।

आत्मानमेवात्मतया विजानतां तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥ २५ ॥
अज्ञानसञ्ज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥ २६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सुरभूरुहतलासीनम्" इति तापनीश्रुतेः । "ब्रह्मणो हि प्रतिष्ठाऽहम्" इति स्वदुक्तेश्च । नन्वाकारवतः षड्विकारवत्त्वेन प्रतिक्षणक्षरत्वादहमपि किं तथैव न अक्षरः । नन्वाकारवन्तो ह्यवश्यमेव सुखदुःखधर्माणो भवन्ति तत्राह—अजस्रसुखः । ननु, मम बाल्ये गोपीस्तन्यदुग्धदधिघृतादिषु लोभः पौगण्डे कालियादिषु कोपः कैशोरे गोपिकासु काम इत्यहं कामादिमालिन्ययुक्त एव, न निरञ्जनः त्वत्कामादीनामपि चिन्मयत्वात् । ननु, तदपि गोपिकादिसापेक्षत्वादपूर्णस्तु भवाम्येवेति तत्राह, पूर्णः प्रेमिभक्तसापेक्षत्वं हि न पूर्णत्वं व्याहन्तीत्यर्थः । नन्वेवम्भूतो मद्विधः कोऽप्यन्यो वर्तते न वेति तत्राह, अद्वयः । ननु, सत्यमद्वयत्वात् पूर्णब्रह्मैवाहन्तदपि केचिन्मां विद्योपाधिं मन्यन्ते तत्राह-उपाधितो मुक्त इति । "विद्याविद्याभ्यां भिन्नः" इति गोपालतापनीश्रुतेः यतस्त्वममृत इति "अमृतं शाश्वतं ब्रह्म" इति श्रुत्युक्तममृतशब्दवाच्यं निरुपाधिब्रह्मैव श्लेषेण न विद्यते मृतं मृत्युर्यस्मात् स इति ॥ २३ ॥

किञ्च त्वदीयनिर्विशेषब्रह्मस्वरूपोपासका अपि त्वयि पुरुषाकारस्वरूपे परमात्मत्वेन भक्त्या भाग्यवशाद् यदि प्राप्तनिष्ठाः स्युस्तर्हि ते शान्तभक्ताः सञ्ज्ञायन्त इत्याह—एवम्विधमुक्तलक्षणं त्वां सकलात्मनां सर्वजीवात्मनां स्वात्मानं मूर्तत्वेन मनोनयनाह्लादकत्वात् शोभनमात्मानं पुरुषस्वरूपमेव आत्मात्मतया परमात्मत्वेन भक्त्या ये पश्यन्ति "परमात्मतया कृष्णे जाता शान्ती रतिर्मता" इति श्रीभक्तिरसामृतोक्तेः । केन, गुरुरेवार्कस्तस्माल्लब्धाऽध्ययनेन प्राप्ता या उपनिषत् सैव सुचक्षुस्तेन तदर्थावगाहनोत्थेन ज्ञानेन भव एव अनृताम्बुधिस्तं तरन्तीव ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतस्त्वमेवोपादेय इत्याह—एक इति । त्वं सत्यः किं स्वर्गादिर्न नित्यः ? किं प्रधानं न अक्षरः ? किं जीवो न अनन्तः ? किं शेषो न पुराणपुरुषः ? सर्वतो वैलक्षण्ये विशेषणानि स्वयञ्ज्योतिः अजस्रसुखः पूर्णः एकः समानाधिकशून्योऽनाऽद्वयोऽनुपमः आत्मा सर्वात्मा आद्यः हेतुः निरञ्जनो निखिलदोषवर्जितः यतः उपाधितः सर्वदा मुक्तः अत एव नास्ति मरणं यस्मात्सोऽमृतः ॥ २३ ॥

उपादेयमुक्त्वा तत्प्राप्तिकामस्य संसारतरणोपायमाह—एवमिति । आत्मनः स्वस्य आत्मतया भेदसहिष्णवभेदेन ये त्वां विचक्षते सम्यक् पश्यन्ति त्वद्ध्यानं कुर्वन्ति ते भव एव अनृतयुक्तः कपटमाद्युक्तोऽम्बुधिस्तं तरन्तीव तरणे संशयाभावं सूचयतीवशब्दः भेदसहिष्णवभेदचिन्तनमेव मुक्तिसाधनमुक्तं सूत्रकारेण "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" (४।१।३) इति सूत्रार्थो वेदान्तकौस्तुभे द्रष्टव्यः । ननु, "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादिश्रुतिभ्यः । अणुपरिमाणकस्य "नित्यो नित्यानाम्" इत्यादिश्रुतिभ्यः सर्वदैव स्वरूपतो भिन्नस्य केन हेतुना तादृशोऽप्यभेदः सङ्गच्छते ? इत्यतो हेतुगर्भं विशेषणमाह—सकलात्मनां स्वात्मानमिति " ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रीमुखवचनाद्भगवदंशभूतजीवस्वरूपाणां स्वात्मानं स्वाश्रयमंशिनमित्यर्थः । अंशस्यांशिनिरपेक्षस्वरूपस्थितिप्रवृत्त्याद्यभावात्स्वरूपतो भिन्नस्यैव तदभिन्नत्वं युक्तमेवेति भावः । तथाह भगवान्सूत्रकारः "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" (२।३।४२) इति केन ? गुरुरेव अर्कस्ततो लब्धा उपनिषत् अध्यात्मविद्या तदेव सुचक्षुस्तेन गुरूपदिष्टवेदान्तजन्येन स्वस्य ब्रह्मात्मकत्वज्ञानेनेत्यर्थः ॥ २४ ॥

---

### भाषा टीका ।

हे प्रभो ! आप सब जगत् के एक आत्मा हौ, पुराण पुरुष हौ, सत्य निर्विकार हौ, स्वयं प्रकाश हो, अनन्त अर्थात स्वरूप और स्वभाव सों त्रिविध परिच्छेद रहित, भव के आदि मे होय वे वारे, नित्य, अक्षर, निरंतर सुख वारे, दुःखादिक दोषन सूं रहित, पूर्ण, अद्वितीय, सर्व उपाधि सों सदा मुक्त, और जीवन के नाईं मरण धर्म सं रहित एसे आप हौ ॥ २३ ॥

या प्रकार के सकल आत्मान केऊ आत्मा जो आप हौ तिनकों गुरु रूप सूर्य सो प्राप्त भये जो उपनिषद्वाक्य ज्ञान रूप चक्षु तासों जो पुरुष आप को सकल जीवन के अन्तर्यामि रूपसों देखे हैं वेई पुरुष या संसार सागर को तर जाते हैं ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र च ज्ञानेन तरन्तीति तथा तरन्तीवेति तथात्मानमात्मतया ज्ञानेनेत्यर्थत्रयं प्रतिज्ञातं क्रमेणोपपाद्यते. तत्रात्मानमेवात्मतयेत्यनेन श्लोकेन ज्ञानेन तरन्तीत्युपपाद्यते, अज्ञानसंज्ञाविति नेन तरन्तीवेत्येतत, त्वामित्यादिश्लोकद्वयेन त्वामात्मतयेत्यनुपाद्यते । ननु, ज्ञानेन कथं भवं तरन्तीति ? तत्राह्यानमूलत्वाद्विशात्मानमेवेति. तेनैवाज्ञानेनैव प्रपञ्चितं प्रपञ्चः रज्ज्वामहेर्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

…मा भवौ सर्पशरीरस्याध्यासापवादौ यथेति ॥ २५ ॥

ननु ज्ञानेन तरन्त्येव किमिदमुच्यते तरन्तीवेति तत्राह, अज्ञानसंज्ञाविति । अज्ञानेन संज्ञा ययोस्तौ भवबन्धमोक्षौ भवेन बन्धस्तन्मोक्षश्च तौ द्वौ नाम प्रसिद्धौ ऋतज्ञभावात् ऋतश्चासौ ज्ञश्च यो भावस्तस्मादन्यौ न स्तः । ननु कथं महानपलापः क्रियते परमार्थविचारादित्याह—अजस्रेति । अखण्डानुभवरूपं परे शुद्धे आत्मन्यज्ञानं न न च बन्धः अत एव न ज्ञानं न च मोक्षः तरणौ सूर्ये रात्र्यहनी इवेति ॥ २६ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

…मायासासिद्धत्वमेवाह—आत्मानमिति । आत्मतया ब्रह्मत्वेन कर्तृत्वभोक्तृत्वादिरहितस्वरूपत्वेनात्मानमविजानतामेव तेन आत्मतत्त्वाज्ञानेनैव ज्ञातमिति तेनैव प्रपञ्चस्यात्मन्यध्यासेन भासमानत्वात् अथवा आत्मानं भगवन्तम् आत्मतया प्रियतया भगवत्तया वा अविजानतां प्रपञ्चितः संसारः । यद्वा अहमेवेश्वरो भगवांश्चाहमेवेत्यादिमायाविस्तारः तादृशज्ञानमात्रेणैव प्रकर्षेण लीयते नश्यति चकारान्मुमुक्षादिकश्च लीयते किं वक्तव्यं भवान्नृतास्त्वम्बुधिरिति भूयोऽपीति भूयिष्ठमपि प्रपञ्चितम् ॥ २५ ॥

संसारतरणस्यातितुच्छतामेवाभिव्यञ्जयन् मोक्षस्याकृपार्थतामाह—अज्ञानेति । ऋतज्ञभावात् सत्यज्ञानादन्यौ न स्तः तत्त्वतो मिथ्याभूतावेवेत्यर्थः । अजस्रचितीति नित्यज्ञानरूपे केवले शुद्धे परे प्रपञ्चातीते आत्मतत्त्वे विचार्यमाणे सति यथा बन्धो मिथ्यैव तथा सति विचारान्मोक्षोऽपि मिथ्यैवेत्यर्थः । तत्र दृष्टान्तः यथा रवौ न रात्रिः तदभावाद्दिनमपीत्यर्थः एवं संसाराभावमात्रत्वेन मोक्षस्य तुच्छतया न पुरुषार्थतासिद्धिरिति भावः । परे परमेश्वरे केवले एकस्मिन्नेव आत्मनि मनसि सत्त्वे विचार्यमाणे सत्येव । ननु तद्विचारमात्रेणैव कथं तौ मिथ्या भवतः तत्राह—अजस्रचितीति नित्यज्ञानघने तद्विचारपूर्वेण तयोस्तत्त्वज्ञानोदयादिति भावः । मिथ्यात्वे दृष्टान्तः सूर्ये रात्रिदिने इव रात्रेरभावेन तत्परिच्छेद्यदिवाभागस्याभावात् ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु आत्मा खलु शुद्धस्वरूपो जीव एव मूढं ततस्तदज्ञानेनैव …नः प्रपञ्चः तज्ज्ञानेनैव नश्येत् किं भगवज्ज्ञानेनेति विप्रतिपत्तिं निराकरोति—आत्मानमेवेति । आत्मानं स्वमेवात्मतया स्वस्वरूपत्वेन विजानतां जीवानां भवन्तं तु तद्रूपत्वेनाप्यविजानतामित्येवकारार्थः । तेनैव मूलेन भवदज्ञानेनैव हेतुना निखिलं प्रपञ्चितं जातं तं दोषमसहिष्णुवा भवद्भक्त्या मायया विस्तारितं देहादिकं तेषां जातं स्वरूपास्फूर्तिपूर्वकतदध्यासेन तदीयमात्मत्वं तस्माज्ज्ञानेन मूलेन भगवदज्ञानच्छेदकेन भगवज्ज्ञानेन स्वरूपज्ञानं तदध्यासहेतुरज्ञानमपि प्रलीयते तत्प्रलयमेव दृष्टान्तेन स्पष्टं बोधयति रज्ज्वामिति । अत्रैकदेशाद्विशेषो द्रष्टव्यः "भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः । तन्मायया ऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा" इति तैश्च व्याख्याने यतो भयं तन्मायया भवेत् ततो बुधो बुद्धिमान् तमेवाभजेत् उपासीत । ननु, भयं द्वितीयाद्यभिनिवेशतो भवति स च देहाहङ्कारतः स च स्वरूपास्फुरणात् किमत्र तस्य माया करोति अत आह, ईशादपेतस्येति । ईशविमुखस्य तन्मायया अस्मृतिः स्वरूपास्फूर्तिर्भवति ततो विपर्ययो देहोऽस्मीति ततो द्वितीयाभिनिवेशाद्भयं भवति एवं हि प्रसिद्धं लौकिकीष्वपि मायासु उक्तं च श्रीभगवता "दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादि यद्यप्येवं तथापीश्वरतत्त्वमात्रस्यापेक्षया तत्र च प्रतिपत्तिमात्रस्य न चांशिनः न चानुभवस्य श्रीरामनाम्नापि तच्छ्रवणात् तस्मात् तत्र जीवस्वरूपानुभव एव सम्यगपेक्षते परिपूर्णाविर्भावस्य स्वयं भगवतस्तज् ज्ञानं परमं महदेवेति तस्य च फलं स्वयि च परमप्रेमादय एवेति भावः ॥ २५ ॥

अनृतत्वं दर्शयति—अज्ञानेति । ऋतशब्देनात्राव्यभिचार्युच्यते ज्ञशब्देन ज्ञाता भावशब्देन पदार्थविशेषः ऋतश्चासौ ज्ञश्चेति ऋतज्ञः स चासौ भावश्चेति ऋतज्ञभावः एष एवाजस्रचित्यात्मनीत्यनुवादिष्यते तत्र ऋताजस्रपरिकरत्वं व्यक्तमेव अचितोरिकत्वं प्रकाशरूपस्य सूर्यादेः प्रकाशमानत्वव्याप्तितोऽपि चेतनरूपत्वात् यत् खलु स्वप्रकाशमज्ञानरहितश्च तज्ज्ञात् स्यादेव मात्मनोरेकत्वन्तु भावयति प्रकाशयति चेतयतीति निरुक्तेः आत्मनीत्यात्मानमित्याद्यर्थं जीवस्वरूपमेवात्र पूर्वत्र च पद्ये लभ्यते तत्रैवाज्ञानज्ञानबन्धमोक्षविचारार्हत्वात् प्रकरणेऽस्मिन्नाद्ययोरन्यत्र भगवद्वाचित्वात् युष्मदस्मच्छब्दयोः सर्वत्र प्रयुक्तत्वाच्च तस्मादयमर्थः यौ भवबन्धमोक्षावृतज्ञभावात् अन्यौ स्तः मायावृत्तित्वात् तौ तस्मिन्नजस्रचिदात्मरूपे ऋतज्ञभावे तु विचार्यमाणे न स्तः तत्रानयोः सम्बन्धोऽस्ति नास्ति चेति विचारे क्रियमाणे तु तत्र न सम्भवत इत्यर्थः । तर्हि कथं तौ स्फुरतः तत्राह—अज्ञानेनैव सञ्ज्ञा-प्रतीतिर्ययो स्तौ तथा दृष्टान्तेन दर्शयति, ये अहनी त्रिकमभवान्यायेन रात्र्यहनी तरणेरन्यौ स्तः कालवृत्तिरूपत्वात् ते तु तरणौ तथा विचार्यमाणे यथा न सम्भवत इत्यर्थः ॥ २६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तदेव तरणप्रकारं दर्शयति—आत्मानं स्वं जीवस्वरूपं आत्मतया "आत्मा नारायणः परः" इति श्रुतेः । श्रीनारायणशरीरत्वेनैव विजानतां शारीरकशास्त्रोक्तविशिष्टज्ञानेन युक्तानां सतां तथा तेनैव श्रीनारायणेनैव निखिलं प्रपञ्चितं नामरूपव्याकरणं जातमिति विजानतां च तेषां ज्ञानेन स्वस्वरूपज्ञानेन परमकारणश्रीमन्नारायणज्ञानेन च तन्नामरूपपरिष्वञ्जनरूपं बन्धनं भूयः प्रलीयतेऽपि स्वस्वरूपं शुद्धं भासते—

"बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः" ॥

इत्युक्तेः । तत्तत्कर्मानुगुणं जीवानां बन्धक इत्यर्थः । जीवे रज्जु-

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्थानीये अहेः भोगस्य शरीरस्य जन्मोत्पत्तिः इव नामरूपपरिष्वङ्गः तदभावश्चेति दृष्टान्तः स्पष्टतरः ॥ २५ ॥

जीवे नामरूपनिष्ठां भगवति सर्वजीवशरीरिण्यपि प्राकृतनामरूपभावं विज्ञानोपयोगित्वेनाह—द्वौ नाम प्रसिद्धौ भवबन्धमोक्षौ क्रमादज्ञानसंज्ञौ अज्ञानश्च सम्यग् ज्ञा ज्ञानञ्च ययोस्तौ अज्ञानसंज्ञौ तौ च ऋतज्ञभावात् अन्यौ न स्तः अज्ञानज्ञानरूपावेवेत्यर्थः । ऋतः सत्यः ज्ञः ज्ञानस्वरूपः भावः पदार्थः जीवः स्वभावो धर्मभूतज्ञानं वा तस्मादेव स्तः स्वपररूपाज्ञानज्ञानाद्भवतः अथवा ऋतश्चासौ ज्ञश्च जीवः तस्य भावात् स्वभावाद्धर्मभूतज्ञानादन्यौ न स्तः तदावरणरूपत्वादिति अजस्रचित्यात्मनीति त्वयि अजस्रचिति निरन्तरज्ञानस्वरूपरूपे व्यापके आत्मनि सर्वशरीरिणि केवले चिदचिद्विलक्षणे परेऽसङ्गे विचार्यमाणे तौ न स्तः इति किं वक्तव्यम् इत्यध्याहार्यं कस्मिन् काविव तरणौ सूर्ये अहनी दिनरात्री इवेति ॥ २६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ये विचक्षते ते तरन्तीत्युक्तमथ प्रसङ्गात्तद्विपरीतानां का गतिर्यदि संसृतिस्तर्हि कस्तन्निवृत्त्युपायस्तत्राह—आत्मानमिति । अविजानताम् इति छेदः आत्मानं परमात्मानं स्वामात्मतयैव सर्वान्तरात्मतयैवाविजानतां तेनैव तदविज्ञानेनैव निखिलं प्रपञ्चितं जातं प्रपञ्चो जातः संसारः प्राप्त इत्यर्थः । देहात्मभ्रमस्वतन्त्रात्मभ्रमतन्मूलकापरमात्मोपासनादिनैव संसारः प्राप्त इत्यर्थः तत्प्रपञ्चितं पुनर्ज्ञानेन देहात्माद्यनभिमानपूर्वकपरमात्मोपासनात्मकेन प्रलीयते नश्यति. निवर्त्तत इति यावत् परमात्मोपासनात्मकज्ञानाभावप्रयुक्तस्य संसारस्य ज्ञानसद्भावे सति निवृत्तौ दृष्टान्तमाह—यथा रज्ज्वामधिष्ठानभूतायामहेः सर्पस्य भोगिनः शरीरं तस्य भवाभवौ भोगविषयकज्ञानोदयतल्लयौ रज्जुयाथात्म्यज्ञानप्रयुक्तौ तद्वद्देहात्माद्यभिमानपूर्वकप्रत्यक्तत्वापत्तिपर्यन्तभगवदुपासनात्मकज्ञानाभावतत्सद्भावप्रयुक्तौ संसारतन्मोक्षावित्यर्थः । मृषावादिनस्त्वत्र रज्जुयाथात्म्यज्ञानप्रयुक्तः सर्पभ्रमस्तद्याथात्म्यज्ञानान्निवर्त्तते एवमपरमार्थभूतो बन्धो ब्रह्माभिन्ने जीवे तत्त्वमस्यादिवाक्यजन्यतद्याथात्म्याज्ञानमूलकस्तद्याथात्म्यज्ञानान्निवर्त्तते इति व्याचक्षते तत्र वाक्यार्थज्ञानस्य निवर्तकत्वानुपपत्तिस्तेन सत्यभूतस्यैव बन्धस्य निवृत्त्यनुपपत्तिश्च भाष्यादिषु च सप्तविधानुपपत्तिप्रतिपादनपरप्रकरणे द्रष्टव्या विस्तरभयास्त्वत्र न लिख्यते ॥ २५ ॥

उक्तदृष्टान्तेनाभिप्रेतमेव दार्ष्टान्तिके पुनर्दृष्टान्तान्तरेणानुगमयति—अज्ञानसंज्ञाविति । भवः संसारस्तद्रूपो बन्धः तस्मान्मोक्षश्चेत्येतौ द्वौ अज्ञानसंज्ञावज्ञानमुक्तविधपरमात्मोपासनात्मकज्ञानाभावः संज्ञा तदुपासनात्मकं ज्ञानं तेऽनयोः स्त इति तथाभूतौ अर्थमादित्वान्मत्वर्थीयोऽच् सम्बन्धोऽत्र हेतुहेतुमद्भावरूपः उपासनात्मकज्ञानाभावतत्सद्भावहेतुकौ भवबन्धमोक्षावित्यर्थः । नान्यौ स्तः अन्यमूलकौ न स्तः नामशब्दः ख्या-

ख्यातप्रसिद्धिद्योतकः एवं स्थिते यथाहनि तरणौ सूर्ये ... तम इवेति शेषः । तदा अज्ञभावादृते देहात्मभ्रमस्वतन्त्रा... भ्रमं विना अज्ञभावं विहायेत्यर्थः । अजस्रचिति नित्य... काकारं प्रत्यगात्मनि केवले परे परस्मिन्नात्मनि परमात्म... चार्यमाणे प्रत्यगात्मान्तरात्मत्वेन वेदान्तवाक्यार्थविचार... परमात्मन्युपास्यमान इत्यर्थः । तत्प्रलीयत इत्यनुषङ्गः । ... प्रलीयत इत्यर्थः ॥ २६ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ त्वदज्ञानात्संसारप्राप्तिस्त्वज्ज्ञानात्तन्नाश इत्याह—आत्मानमिति । स्वामात्मानमेवात्मतया स्वात्मतया अविजानतां ... त्वदज्ञानेनैव निखिलं प्रपञ्चितं जातं प्रकृतिवशात्संसारो ... इत्यर्थः । तथा च भगवद्वाक्यम्—

"नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम्।
अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप !।
अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि" ॥

इति "ज्ञानेन भूयोऽपि च तत्प्रलीयते" त्वज्ज्ञानेन स्वस्याभिन्न... ज्ञानेन भूयोऽपि तत् प्रलीयते स संसारो निवर्त्तते तत्र दृ... रज्ज्वामहेर्भोगभवाभवौ "यथा रज्जौ यथा अहेः सर्पस्य ... भवाभवौ भवतः रज्ज्वज्ञानात्सर्पभ्रमस्तज्ज्ञानात् पुनर... स्तद्वदित्यर्थः । यद्वा, आत्मानं स्वात्मानमेवात्मतया वि... ज्ञानानन्दादिगुणकं स्वच्छेषत्वस्वरूपमविजानतां तेनैव नि... धिकज्ञानानन्दादिगुणकज्ञानस्वरूपाज्ञानेनैव निखिलं प्र... जातं देवोऽहं मनुष्योऽहमिति देहात्मभ्रमो जात इत्यर्थः ।... आत्मयाथात्म्यस्वरूपज्ञानेन भूयोऽपि तत्सर्वं विलीयते शेषं ... वत् ॥ २५ ॥

अथ जीवानामेव स्वस्वरूपपरस्वरूपाज्ञानवशाद्भवबन्ध... तव तु तयोर्गन्धोऽपि नास्तीत्याह—अज्ञानसंज्ञाविति । अज्ञ... अज्ञानकारणौ भवबन्धमोक्षौ भवेन बन्धो भवान्मोक्ष ... द्वौ नाम प्रसिद्धौ नान्यौ नान्यकारणौ स्तः कुतस्तत्र ... शेष ऋतज्ञभावात् ऋतं सत्यं ज्ञो ज्ञाता "ज्ञः कालकालो ... सर्वविद्यः यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतेः क सति ... चिति नित्यानन्दे आत्मनि चिदचिच्छरीरिणि केवले नि... द्वन्द्वविकारशून्ये "निर्विकारं निरञ्जनम्" इत्यादिश्रुतेः परे पर... स्वरूपे त्वयि विचार्यमाणे सति तत्र दृष्टान्तः तरणौ ... अहनी इव रात्रिदिवसाविव नहि सदा प्रकाशमाने ... रात्रिदिवसव्यवहारः सम्भवति किन्तु जगत्येव एवं नित्य... कसदासर्वज्ञे त्वयि बन्धमोक्षौ न संभवतः किन्तु, स्वस्व... नभिज्ञानां जीवानामेवेति भावः । तदुक्तमेकादशे "बद्धो मुक्त... व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वा... मोक्षो न बन्धनम् । एकस्यैव ममांशस्य जीवस्यैव महामते ! ... स्याविद्यायाविद्यया च तथेतरः" इति ॥ २६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रात्मा खलु शुद्धावस्थो जीव एव मूलं ततस्तदज्ञानेनैव जातः प्रपञ्चस्तज्ज्ञानेनैव नश्येत् तत्र तादृशमतज्ज्ञानां किमति केषाञ्चिन्मतमित्याशङ्क्याह–आत्मानमिति आत्मानं शुद्धजीवमेवात्मतया मूलस्वरूपत्वेन विजानतां त्वां तु तद्रूपत्वेनाविजानतामित्येवकारार्थः । तेनैव मूलेन त्वदज्ञानेनैव हेतुना त्वच्छक्तिरूपया मायया निखिलं देहादिकं प्रपञ्चितं शुद्धे जीवे अहंममतयाऽध्यस्तं जातं तस्माज्ज्ञानेन मूलत्वदज्ञानच्छेदकेन त्वज्ज्ञानेनैव तदध्यासहेतुरज्ञानमपि प्रलीयते तत्प्रत्ययमेव दृष्टान्तेन बोधयति–रज्ज्वामिति । तथा चैकादशे वक्ष्यते "भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य" इत्यादि ॥ २५ ॥

अनृतत्वमेव दर्शयति–अज्ञानसञ्ज्ञाविति । आत्मशब्देनात्र पूर्वत्र च पद्ये शुद्धजीव एवोच्यते न तु श्रीभगवान् तत्रैवाज्ञानबन्धमोक्षविचारार्हत्वात् प्रकरणेऽस्मिन्नाभ्यामन्यत्र भगवद्वाचित्वाय युष्मदस्मच्छब्दयोः सर्वत्र युक्तत्वात् ॥ २६ ॥

---

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ हे भगवन् ! तवायं श्रीविग्रह एवात्मा अस्यानात्मत्वज्ञाने संसृतिः स्वरूपज्ञाने संसृतिनाशश्चेति दर्शयति–आत्मानमेवात्मतयेत्यादि । आत्मानं तव श्रीविग्रहं आत्मतया चिद्रूपतयाऽविजानतां जनानां निखिलं प्रपञ्चितं निखिलप्रपञ्चो जायते तेनैव ज्ञानेन आत्मताज्ञानेन भूयोऽपि तत्प्रपञ्चितनिखिलमेव प्रलीयते तत्र दृष्टान्तः, रज्ज्वामित्यादि । रज्ज्वौ यथा रज्जुज्ञानाभावे अहिभोगस्य भवः अहिरेवायमिति प्रतीतिः रज्जुज्ञाने सति तस्याऽभवः तथा शुद्धज्ञानानन्दघने तव श्रीविग्रहे नरविग्रहसादृश्यान्नरविग्रहोऽयमिति भ्रान्तिः उत्तरकालं भवदनुग्रहवशात् यदा शुद्धज्ञानानन्दघनोऽयमिति ज्ञाने सति भ्रमान्नाम्न्या संसृतिः प्रभवा तन्नाश इति वाक्यार्थः ॥ २५ ॥

अथ तवाऽयमिति श्रीविग्रहो नित्यसुखबोधस्वरूप एतस्यैवाविद्याज्ञानमूलको हि भवबन्धो मोक्षश्चेत्याह "अज्ञानसञ्ज्ञौ भवबन्धमोक्षौ" इत्यादि अजस्रचिति केवले परे परात्परे आत्मनि तव श्रीविग्रहे विचार्यमाणे सति ऋतस्वभावात् हेतोर्भवबन्धमोक्षौ अज्ञानसञ्ज्ञौ अज्ञानेन सञ्ज्ञा ययोः वस्तुतस्तु बन्धोऽपि अज्ञानजः मोक्षोऽपि बन्धस्य मिथ्यात्वात् तथा, असति बन्धे क्व मोक्षः द्वौ अन्यौ न स्तः ऋतस्वभाव एवास्ति न तौ ऋतस्वभावो हि पार्षदरूपलक्षणः तस्माद्धेतोर्न बन्धो न च मोक्षः । तत्र दृष्टान्तः तरणाविवाहनी तरणौ सूर्ये सत्येव अहनी रात्रिदिने तरणावस्ति न रात्रिर्न च दिनम् एतेन तव यथार्थाऽज्ञाने सति भवबन्धश्च मोक्षश्च यथार्थज्ञाने तु न बन्धो न मोक्षश्च केवलं भक्तत्वमेव ॥ २६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, सर्वस्यैव तेन ज्ञानेन कथं न विलयः, तत्राह–आत्मानमेवेति । ते हि आत्मानमेवात्मतया जानन्ति अतस्तेनैव भ्रमाद्यावज्जातं निखिलमपि प्रपञ्चितं प्रपञ्चाकारेणात्मात्मीयतया परिकल्पितं ज्ञानेन भूयोऽपि तदेव तावन्मात्रमेव लीयते न तु कृतिसाध्यम् । तत्र दृष्टान्तः रज्ज्वामहेः कल्पितस्यैव सर्पस्य भोगस्य कायस्य भवाभवावुत्पत्तिनाशौ सर्पोऽयं नायं सर्प इति स्वबुद्धिकल्पितस्यैव नाशो नान्यस्य जातो भगवत्कृतस्य नापि स्वकृतस्य भ्रमात्सर्पदाहे रज्जुर्न पुनरावर्त्तते नायं सर्प इति ज्ञानेऽपि अतोऽज्ञानकृतमेव निवर्त्तते नान्यदिति अहं ममाभिमान एव गच्छति नान्यत् ॥ २५ ॥

किञ्च, वस्तुतोऽस्य तदपि न निवर्त्तते मुक्तोऽहमिति ब्रह्माहमित्यनदप्यज्ञानकृतमेव आत्मा ज्ञानाद्वैयमपि जानाति बन्धस्य तज्जनितत्वेन तत्कार्यत्वाऽविशेषात् ज्ञानमोक्षावप्यज्ञानकार्यमेव न हि शयानः स्वप्ने उत्थाय भोजनादिकमपि कुर्वन् वस्तुत उत्थितो भवति स्वप्नस्याऽनिवृत्तेः तथा भगवच्छक्तेरज्ञानस्याप्यनिवृत्तेः न तेषां परमार्थतो मोक्षोऽपि सम्भवति तत्र हेतुमाह–ऋतस्वभावादिति । मोक्षस्तु ऋतज्ञानरूपः तत्त्वज्ञानजनितज्ञानरूपः भगवज्ज्ञानशक्त्यैव मोक्ष इत्येकादशे वक्ष्यति किञ्च मोक्षो हि भगवति सायुज्यं स चाजस्रचिदात्मा नित्यचिदानन्दरूपः तत्राज्ञानकृतप्रपञ्चज्ञानयोरभावात् जीवस्याऽज्ञानकृतज्ञानेन कथं प्रवेशः स्यात् तदाह—केवल इति । किञ्च स तु परो नियामकः न हि नियम्यैर्भगवदाज्ञाव्यतिरेकेण निकटे गन्तुं शक्यते अतो जीवब्रह्मज्ञानिनो न मोक्षस्तत्रोपपत्तिं वदन् दृष्टान्तमाह–विचार्यमाणे तरणाविवाहनी इति । सूर्ये विचार्यमाणे एव अहनी भवतः न तु स्वबुद्ध्या अन्यथा निमीलिताक्षः स्वयमेव रात्रिं कुर्यात् प्रसारिताक्षश्च दिनम् अतः सूर्य एवागते दिनमपगते रात्रिरिति केवलं स्वयडद्वैतवादिनो भ्रान्ता एव ॥ २६ ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

ननु, समुद्रस्य तरणं क्रियया प्रसिद्धं तत्कथं ज्ञानेन तरणं सम्भवतीत्याशङ्क्य अध्यासस्याज्ञानमूलकत्वाज्ज्ञानेन तत्र तरणं युक्तमिति सदृष्टान्तमाह–आत्मानमिति । आत्मानमात्मतया याथार्थ्येन अजानतामेव तेनैव तदज्ञानेन निखिलं प्रपञ्चितं देहादावहन्ताममतात्मकं जातमात्मज्ञानेन च भूयः पुनरपि तत्प्रलीयते तत्र दृष्टान्तमाह–रज्ज्वामिति । यथा रज्ज्वज्ञानात्तत्र जातोऽहेर्भोगः सर्पदेहः पुनः रज्जुतत्त्वज्ञानात्प्रलीयते तथेत्यर्थः ॥ २५ ॥

अहन्ताममतात्मकसंसारस्य कल्पितत्वादेव भवाम्बुधिं तरन्तीत्युक्तं तदुपपादयति–अज्ञानसञ्ज्ञाविति । नाम प्रसिद्धौ भवो अहन्ताममतात्मकोऽध्यासः स एव बन्धस्तन्मोक्षश्च तौ द्वावपि ऋतः अबाधितश्चासौ चिच्छक्तिरूपात्मकश्च यो भावः परमार्थभूतः आत्मा तस्मादन्यौ न स्तः तत्र हेतुमाह–अज्ञानसञ्ज्ञाविति । अज्ञानेनैव सञ्ज्ञामात्रमेव ययोस्तौ नावाधिताविवित्यर्थः । ननु, कथमेवं प्रसिद्धयोस्तयोरपलापः क्रियते इत्याशङ्क्याह–अजस्रेति । विचार्यमाणे सत्यात्मनि वास्तवबन्धमोक्षासम्भवादित्यर्थः । तत्र हेतुं सूचयन्नात्मानं विशिनष्टि–अजस्रमिति । नित्यज्ञानरूपे केवले अद्वितीये परे प्रकृतिविलक्षणे इति तत्र दृष्टान्तमाह—तरणाविति । यथा सूर्यस्वरूपे विचार्यमाणे तत्र न रात्रिर्न दिवसः किन्तु तदप्रकाशाद्रात्रिः तत्प्रकाशाच्च दिवस इति व्यवहारः तथात्मस्वरूपाप्रकाशादहन्ताममतात्मकबन्धः

## त्वामात्मानं परं मत्वा परमात्मानमेव च ।
## आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताऽज्ञता ॥ २७ ॥

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

तत्प्रकाशाच्च मोक्ष इत्यर्थः । बन्धस्याप्यज्ञानकृतत्वेनावास्तवत्वात्तत्प्रयुक्तमोक्षस्यापि तथात्वमुक्तम् ॥ २६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, तरङ्गस्येव ते किमिति तरङ्गीवेति ब्रूपे ? तथा भवस्य चानृतत्वं वा कुतस्तत्र तेषां ज्ञानिनामाश्रयणीये विवर्त्तवादमते जगदिदमनृतमेव तत्तरणमप्यनृतमेवेत्यतस्तरन्तीवेत्युच्यते इत्याह—द्वाभ्याम् । आत्मानञ्जीवम् आत्मतया ज्ञानानन्दमयात्मत्वेन अभिजानतां किन्तु अविद्यया आवरणात् ज्ञातुमशक्नुवतां नैव जानतान्तेषैवाऽज्ञानेन निखिलं प्रपञ्चितं सर्वः संसारोऽभूत् भूयः पुनश्च साङ्ख्ययोगवैराग्यतपोभक्तिभिरात्मनो देहव्यतिरिक्तत्वेन यज्ज्ञानन्तेन तत्सर्वं प्रपञ्चितं विलीयते, यथा रज्ज्वाम् अहेर्भोगस्य सर्पशरीरस्य अज्ञानज्ञानाभ्यां भवाभवौ अध्यासाऽपवादौ ॥ २५ ॥

अत एव भवस्यानृतत्वम् अनृतत्वादेव तत्तरणस्याप्यनृतत्वं स्पष्टयति—अज्ञानेति । अज्ञानेन सञ्ज्ञा ययोस्तौ भवबन्धमोक्षौ भवःसंसारस्तद्रूपो बन्धश्च तन्मोक्षश्च तौ द्वौ नाम अभावौ ज्ञातृत्वं ज्ञानमिति यावत् ऋतश्चासौ अभावश्च तस्मादन्यौ यौ स्तः तौ ऋतज्ञभावे तस्मिन्नजस्रचित्यात्मनि तत्स्वरूप जीवे केवले देहादिसङ्गरहिते । विचार्यमाणे सति न स्तः न सम्भवत इत्यन्वयः । दृष्टान्तेन दर्शयति, यं अहनी लिङ्गसमवायन्यायेन रात्र्यहनी तरणेरन्यौ स्तः ते तु तरणौ तथा विचार्यमाणे यथा न सम्भवत इत्यर्थः ॥ २६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तज्ञानाभावे जन्ममरणप्रवाहलक्षणः संसारस्तज्ज्ञानसद्भावे तन्निवृत्तिरित्याह—आत्मानमिति । आत्मानमात्मतया ब्रह्मात्मकतया अभिजानतां तेनैव भगवद्ध्यानविरोध्यज्ञानेन निखिलं प्रपञ्चितं जन्ममरणप्रवाहलक्षणं जगत् जातं प्राप्तं भवति ज्ञानेन स्वस्वब्रह्मात्मकत्वज्ञानेन भगवद्ध्यानसाधनभूतेन च तज्जन्ममरणप्रवाहलक्षणञ्जगत् विलीयते यथा रज्ज्वाम् अज्ञानेन अहेः भोगस्य भवोऽनुभवः ज्ञानेनाभवोऽननुभवस्तद्वत् ॥ २५ ॥

ननु, जन्ममरणप्रवाहलक्षणसंसारप्राप्तिनिवृत्तिलक्षणौ बन्धमोक्षौ जीववत् परमात्मनोऽपि कुतो न ? ज्ञानरूपत्वाद्यविशेषादित्याशङ्कां निराकरोति—अज्ञानसञ्ज्ञाविति । अज्ञानेन अल्पज्ञानेन जीवेन संज्ञा ययोस्तौ बद्धजीवविषयकावित्यर्थः । अनुदरीत्यादिवन्नञर्थोऽत्र बोध्यः· अल्पज्ञानत्वं जीवोऽल्पशक्तिः "अज्ञो जन्तुरनीशश्च" इत्यादिश्रुतिस्मृतिषु प्रसिद्धम् एवम्भूतो नाम प्रसिद्धौ भवेन बन्धश्च ततो मोक्षश्च तौ भवबन्धमोक्षौ अन्यौ परमात्मविषयकौ नस्तः "न मे मोक्षो न बन्धनम्" इति श्रीमुखवचनात् त्वं तु बन्धमोक्षप्रद एवासीत्याह—अजस्रेति । अजस्रचिति नित्यानु[illegible] केवले निःसमानाधिके परे परमेश्वरे त्वयि आत्मनि ब्रह्म[illegible] अविचार्यमाणे असन्निहिते ऋतश्चासौ ज्ञश्च परमात्मा [illegible] वस्तद्भक्तिस्तस्मात् सन्निहिते मोक्ष इति भावः । क्रमाद्दृष्टा[illegible] त्वयि अविचार्यमाणे सति बन्धः त्वद्भक्तेश्च त्वद्भावापत्ति[illegible] मोक्ष इत्यर्थः "बन्धको भवपाशेन भवबन्धाच्च मोचकः" इति [illegible] यथा तरणौ असन्निहिते सन्निहिते क्रमादहनी गतागते [illegible] तस्तद्वदित्यर्थः ॥ २६ ॥

---

### भाषा टीका ।

आपजो परमात्मा हैं तिन को सर्वान्तरयामी रूप [illegible] जो नहीं जाने हैं, तिनके अज्ञान सें उन ही पुरुषन को [illegible] संसार प्राप्त होय रह्यो है, सोई संसार ज्ञान सों [illegible] परमात्मा की उपासना रूप ज्ञान सों फिर नाश को [illegible] होय जाय है। जैसें रस्सी में सर्पको भान और वह [illegible] जाय है। तात्पर्य यही है, कि— जब परमात्मा को [illegible] ज्ञान होय जाय तब वा पुरुष कों संसार, बन्धक नहीं [illegible] सके, जब तक रस्सी मे रस्सीपने को ज्ञान नहीं [illegible] तबही तक सर्प को भान है ऐसेंई जब परमात्मा के [illegible] रूप को ज्ञान होय जाय है तब तद्व्यतिरिक्त में [illegible] बुद्धि होय जाय है, तब पहिलें जो संसार के [illegible] कों भोग्य समझतो रह्यो सो स्वरूप ज्ञान होयवे पै [illegible] समझन लगे हैं, तब रस्सी कों जाने पीछें जैसें वामें [illegible] सर्प कों भय नहीं रहे याई रीति सों प्रकृति के [illegible] जाने पीछें वामें भोग्यता बुद्धि नहीं रहे हैं, तब [illegible] आप ही अकिञ्चित्कर होय जावे हैं ॥ २५ ॥

अज्ञभाव जो देहात्मादिभ्रम ताकों छोड के नित्य ज्ञान [illegible] केवल परमात्मा के विचार करवे पै अर्थात् उपासना [illegible] वे पै देखो तो, बन्ध और मोक्ष ये दोनों पदार्थ जो हैं सो [illegible] सना को अभाव, और उपासना, उभय मूलक हैं, [illegible] उपासना के विना बन्ध और उपासना सो मोक्ष होवे [illegible] तासों ब्रह्म के उपासनात्मक विचार सों प्रपञ्च लीन [illegible] जावे है, जैसे दिन में सूर्य के प्रकाश होय वे पै [illegible] कार लीन होय जाय हैं, इतनी बात अवश्य जान वे [illegible] कि "ऋते ज्ञानान्न मुक्तिः" इत्यादि श्रुति में ज्ञान [illegible] उपासनात्मक ही ज्ञान लेनो क्योंकि "नरत्वमसि" इत्यादि [illegible] जन्य ज्ञान दिन में सौवार करवे पै भी काहू कों मोक्ष [illegible] नहीं दीखे है ॥ २६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, परमार्थज्ञानादज्ञानकृतो बन्धो निवर्त्ततामात्म[illegible] ज्ञानादिति कोऽयमाग्रह इत्याऽऽशङ्क्य यदभ्यासादात्मनः [illegible]

अन्तर्भवेऽनन्त ! भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः ॥
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं(१) किमु यन्ति सन्तः ॥२८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्फूर्तिस्तदपवादेन तत्रैव ज्ञानं युक्तमितीममर्थं विस्मयेनाक्रोशन्निवाह—त्वामिति। त्वामात्मानं परं देहादिं मत्वा आत्मनि देहादिमध्यस्य तथा परं देहादिमात्मानं मत्वा देहादावात्मानमध्यस्याऽत्र नष्ट आत्मा बहिर्मृग्य इति चित्रं न हि गृहे नष्टं वने मृग्यत इत्यर्थः ॥ २७ ॥

विवेकिनस्तु प्रत्यक्स्वरूपे एवं परमात्मानं विचिन्वन्तीत्याह—अन्तर्भव इति। भवतीति भवोऽस्मज्जडात्मकं शरीरं तन्मध्य एव त्वां मृगयन्ति अतज्जडं त्यजन्तोऽपवदन्तः। ननु, सतो ज्ञानेनासं किमसतोऽपवादेनेत्याशङ्क्याध्यस्तापवादं विनाधिष्ठानतत्त्वं न ज्ञायत इति सतां व्यवहारेणाह—असन्तमिति। अन्ति समीपे असन्तमप्यहिमन्तरेण तन्निषेधं विनेत्यर्थः। सन्तं गुणं रज्जुं सन्तः किमु यन्ति जानन्ति अन्ति सन्तमपि गुणमिति वा न जानन्तीत्यर्थः। तस्मादात्मात्मतयैव ज्ञानान्मुक्तिरिति भावः ॥२८॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एवं तत्त्वे आत्मतत्त्वे प्रपञ्चतत्त्वे च विचिन्तितेऽपि ये त्वामात्मानमेव मन्यन्ते न त्वात्मविलक्षणो भिन्नोऽप्यसीति ते परमाज्ञा एवेत्याह—त्वामिति। परमात्मानमेव त्वां परं केवलं आत्मानं चेतनमेव मत्वा अप्यर्थे चशब्दः अत एव आत्मा अन्तर्बहिश्च व्यापकोऽपि त्वम् अपुनर्बहिर्मृग्यतेऽसद्भिः किन्तु देहान्तरेवेत्यर्थः। अहो विस्मये इयमज्ञजनताया अज्ञता पूर्वोक्तविविधवैलक्षण्यस्य व्यापकत्वस्य च ह्यप्यननुसन्धानात् अकारलोपश्छन्दोऽनुरोधेन अज्ञजनाज्ञतेति क्वचित् पाठः ॥ २७ ॥

साधवस्तु बहिरन्तश्च व्यापकतया वर्त्तमानं त्वां मृगयन्तीत्याह—बहिरिति। अनन्त ! हे अपरिच्छिन्न ! अन्तर्बहिर्व्यापकेत्यर्थः सन्तः त्वद्भक्तास्तु अन्तर्भवे स्वदेहान्तरेव भगवन्तं मृगयन्ति किं काका नैव किन्तु बहिरपि मृगयन्तीत्यर्थः। कथम् अतत् अवस्तु मिथ्याभूतम् असद्भिस्त्वसत्तया ज्ञायमानमात्मतत्त्वं त्यजन्तः परिहरन्तः यतस्तत्त्यागं विना विशुद्धज्ञानं न भवतीत्याशयेनाह, असन्तमिति। अन्तरेण तन्निषेधं विनेत्यर्थः। नाहं स किन्तु नदीयोऽस्मीति बुद्ध्या पृथगात्मनो भिन्नेश्वरत्वज्ञानं निरस्यैव सतोऽपि त्वां प्राप्नुवन्तीति भावः। यद्वा अतत् असद्वस्तु निषेधामित्यर्थः। अवस्तुत्यागेन विना सद्वस्तु न प्राप्यत इत्याह, असन्तमिति। अथवा ननु, तर्हि कथमभिज्ञा मृगयन्ते तदाह—अन्तर्भवेऽनन्तमेवं हृदयकमलं तस्मिन् अतत् त्वन्मार्गणाव्यतिरिक्तं सर्वं त्यजन्तः। ननु, भगवत्स्मरणात् स्वयमेव तदपयास्यति किं तत्त्यागाग्रहेण ? तत्राह—असन्तमिति। विना विषयादिपरित्यागं विना च कर्मज्ञानादिपरित्यागं भगवत्स्मरणं न सिद्ध्यतीति भावः अन्यत् समानम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ये तु सकलात्मनामप्यात्मानं त्वाम् आत्ममात्रतया विचक्षते ते त्वतिमूर्खा एवेत्याह—त्वामिति। परमात्मानमेवं त्वां परं केवलमात्मानं शुद्धजीवस्वरूपं मत्वा अप्यर्थे चकारः आत्मा "आततत्वाच्च मातृत्वादात्मा हि परमो हरिः" इति स भवानपि अपुनर्बहिर्मृग्यः स्यात् "अभावे न ह्यनो ना च" इत्यमरः न पुनर्बहिः श्रीवृन्दावने मृग्यते, किन्तु शुद्धजीवस्वरूपभेदेन देहान्तरेव मृग्यत इत्यर्थः। अहो विस्मये इयमज्ञजनताया अज्ञता पूर्वोक्तस्य विविधवैलक्षण्यस्य ह्यप्यननुसन्धानात्। यद्वा, आत्मानं सर्वेषां मूलस्वरूपं त्वां परम् अनात्मानं मत्वा तथा परं त्वत्तोऽन्यमेव तादृशमात्मानं मत्वा यः कश्चिदन्यो भवेदिति कल्पयित्वा बहिस्त्वत्पदाब्जसदनादस्मादन्यत्र आत्मा मृग्यो भवति मृग्यत इत्यर्थः। इयमहो अज्ञजनताया अज्ञतेति। यद्वा, त्वां केवलम् आत्मानं जीवस्य शुद्धस्वरूपमेव मत्वा तत उत्कर्षावाप्तौ परमात्मानमन्तर्यामिमात्रं च त्वां मत्वा तथा तथा वा यदि मन्यते तदापीत्यर्थः। अज्ञजनताया अज्ञतैव परिशिष्यते "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति भगवद्वाक्याऽननुसन्धानात् यश्च आत्मा मुख्यवृत्तत्वच्छब्दवाच्यो बहिर्मृग्य एवेति तर्जनीयुगलेन चरणकमलयुगलं दर्शयति—यद्येवं न स्यात्तदाऽहमपि स्वसदन एव स्थित्वा गनासि समाधास्यं न पुनरत्र श्रीवृन्दावने समायास्यं न हि गृहे नष्टं वने मृग्यत इति भावः सन्धिश्छन्दोऽनुरोधेन अज्ञमन्यजनताया अज्ञतेति वा। यद्वा, ये जीवतत्त्वेश्वरतत्त्वविदोऽपि सर्वं परित्यज्य तादृशं श्रीकृष्णं संप्रति वृन्दावन एव मृगयन्ति, तान् स्तौति प्रथमं तावत् परं केवलम् अद्वैतोपासनया त्वाम् आत्मानं जीवस्वरूपानतिरिक्तमनुभूय ततः परमात्मानमेव चानुभूय पुनरधुना आत्मा तल्लक्षणं सर्वेषां मूलस्वरूपं बहिश्चक्षुरादिगोचरं मृग्यः संपाद्यते तस्मादहो विज्ञजनतायाः विज्ञतेति अहो अज्ञजनाज्ञतेति क्वचित्पाठः। तत्र चाज्ञशब्देनाऽनुत्तमशब्दवाच्चि इव एवात्र व्याख्येयः। अत्र मृग्य अहो इत्यत्र रोदनाभावाय: सदैन्यरोदनवचनत्वेन मृग्य इत्यकारस्य प्लुतत्वात् "अतो रोरप्लुतादप्लुते" (६।१।११३) इति सूत्रं न प्रवर्तते इति ॥ २७ ॥

पूर्वत्र हेतुमाह—हे अनन्त ! सर्वव्यापिन् ! हि यस्मात् अन्तर्भवे व्यष्टिसमष्टिरूपस्य भवस्य जगतो मध्ये सन्तो विवेकवन्तः भवन्तं श्रीकृष्णमेव मृगयन्ति सर्वदोषहीनं सर्वगुणपूर्णमेव प्राप्तुं तेषां मनोरथः स्वयं भगवान् भवानेव च तादृश इति। किं कुर्वन्तः ? अतत् त्वद्व्यतिरिक्तमन्यदन्यत्परित्यज्य त्यजन्तः। ननु, जगदेव ममावरणं तत्कथमत्र मत्प्राप्तिः स्यात् ? उच्यते भवेदेवमविवेकिनां विवेकिनान्तु गूढस्य कारणस्य तव तत्तद्गुणलेशाभासभावितं कार्यभूतं तदेव प्रत्यायकं तत्र चास्तु नाम सद्रूपम् असद्रूपमप्यन्विष्यन् तदाश्रयलाभो दृश्यत इत्याह—

(१) किमवन्तीति सुबोधिनी पा०

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसन्तमपीति । सन्त इति साधारणविवेकिनः पूर्वेषां तद्विशेषाणां दृष्टान्ताः अत्र च तदंशत्यागे व्यष्टिप्रक्रियेयं प्रथमतो देहादीनां जडमलिनादित्वात् क्रमशस्त्यागेन तच्चेतनादिहेतुः शुद्ध आत्मोपलभ्यते निर्विशेषब्रह्मदृष्टिस्तु "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ ! माभूत्" इत्यादि श्रीध्रुववाक्यादिभ्यो "ब्रह्मणो हि प्रतिष्ठाऽहम्" इत्यादि श्रीगीतादिभ्यश्च परिहृतैव. ततः शुद्धजीवस्यापि प्रकाशकः "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तं-चतुर्भुजम्" इति द्वितीयोक्तेस्तदन्तर्यामी तस्यापि तत्रात्पगुणोल्लासेन ततः पूर्णो गर्भोदशायी तृतीये वर्णितः समष्ट्यन्तर्यामी तदवताराश्च ततो ऽपि सर्वब्रह्माण्डसमष्ट्यन्तर्यामी "आद्योऽवतारः पुरुषः परस्य" इति सूचितः कारणार्णवशायी प्रथमपुरुषः ततो "विष्टभ्याहमिदं कृत्स्नम्" इत्यादि "यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता" इत्यादि दृष्ट्या साक्षात्त्वमेव । अथ समष्टावपि पूर्वमिन्द्रचन्द्रादिमयं विराड्रूपं मामेवेश्वरं मन्यन्ते पश्चात्तस्यापि नश्वरत्वादिना तदन्तर्यामीत्यादि पूर्ववत् तस्मादधुना केनापि भाग्योदयेन साक्षात्त्वयैव लाभे सति साधूक्तं त्वामात्मानमित्यादि । अत्रेयं श्रीवैष्णवप्रक्रिया यद्यैव यदेकं चिद्वस्तु मायाश्रयं विद्यामयं तद्यैव तन्मायाविषयमविद्यापरिभूतं चेत्युक्तमयुक्तमिति जीवात्मपरमात्मनोर्विभागोऽवगतः ततश्च स्वरूपसामर्थ्यवैलक्षण्येन तद्द्वितयं मिथोविलक्षणस्वरूपमेवेत्यागतं नच परिच्छेदप्रतिबिम्बत्वादिव्यवस्थया विभागः स्यात् तत्र यद्युपाधेरनादिविद्यकत्वेन वास्तवत्वं तर्ह्यविषयस्य तस्य कथमपि परिच्छेदविषयत्वाऽसम्भवः निर्धर्मकस्य व्यापकस्य निरवयवस्य प्रतिबिम्बत्वायोगोऽपि उपाधिसम्बन्धाभावात् प्रतिबिम्बभेदाभावात् दृश्यत्वाभावाच्च उपाधिपरिच्छिन्नाकाशस्य ज्योतिरंशस्यैव प्रतिबिम्बो दृश्यते नत्वाकाशस्य दृश्यत्वाभावादेव तथा वास्तवपरिच्छेदादौ सति सामानाधिकरण्यज्ञानमात्रेण न तत्त्यागश्च भवेत् शास्त्रे क्वचित् प्रतिबिम्बत्वाद्यङ्गीकारश्च तत्सादृश्येनैव "अम्बुवदग्रहणात्तु न तथात्वम्" (३।२।१९) "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" (३।२।२०) इति न्यायने उपाधेराविद्यकत्वेतु वास्तवपरिच्छेदाद्यभावात् प्राक्तनो मायाश्रयमित्याद्युभयात्मको विरोधः तदवस्थ एव स्यात् । तथा शुद्धायां चित्यविद्या तदविद्याकल्पितोपाधौ तस्यामीश्वराख्यायां चित्येत्यसमञ्जसाच्च कल्पना स्यादित्याद्यनुसन्धेयम् । तस्मादेकमेव तत्परमतत्त्वं स्वाभाविकाचिन्त्यशक्त्या सर्वदैव चतुर्द्धाऽवतिष्ठते सूर्यान्तर्मण्डलस्थतेज इव वह्निर्मण्डलतद्बहिर्गतरश्म्यादिरूपेण अचिन्त्यशक्तित्वं च मणिमन्त्र महौषध्यादीनांकारण गणकारणे तत्सिद्धमाश्चर्यम् "श्रुतेस्तु शब्दमूलत्वात्" (२।१।२७) "आत्मनि चैवं विचित्राश्चहि" (२।१।२८) इति च न्यायेन "आत्मेश्वरो ऽतर्क्यसहस्रशक्तिः" इति षष्ठे ऽप्येतद्दर्शितम् अतस्तत्तत्समावेशाद्यनुपपत्तिश्चाचिन्त्यशक्तित्वेनैव पराहता दुर्घटघटकत्वं ह्यचिन्त्यत्वं येन खलु सा शर्करपरिच्छिन्नमपि परिच्छिन्नत्वेन दर्शयति, यथैव दर्शयिष्य ते "एकदेशस्थितस्याग्नेः" इति शक्तिश्च सा त्रिधा अन्तरङ्गा तटस्था बहिरङ्गा चेति तत्रान्तरङ्गया स्वरूपशक्त्याख्यया पूर्णेनैव स्वरूपेण वैकुण्ठादिस्वरूपवैभवेन चाऽवतिष्ठते तटस्थया रश्मिस्थानीयचिदेकात्मशुद्धजीवरूपेण बहिरङ्गया ... ख्यया आभासगतवर्णशावल्यस्थानीयतदीयबहिरङ्गवैभव... त्मप्रधानरूपेण चेति चतुर्द्धात्वम् यथोक्तं श्रीवैष्णवे "एक... स्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः ... स्तथेदमखिलं जगत्" इति । श्रुतौ च "यस्य भासा सर्व... विभाति" इति । अत एव तदात्मत्वेन जीवस्यैव तटस्थ... प्रधानस्य च मायान्तर्भूतत्वमभिप्रेत्य शक्तित्रयं तत्रैव ... "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा । अविद्या ... सञ्ज्ञान्या तृतीयाशक्तिरिष्यते" इति । तत्र परा "या ऽतीता ... वाचाम्" इत्यनेनोक्ता क्षेत्रज्ञाख्या जीवभूता सेयमपरा प्रथमतृ... योर्मध्यवर्तिनी तृतीयापेक्षया सेयमपरेति वा तथा ... श्रीगीतासु भूम्यादितया भेदं प्राप्ता प्रकृतिरष्ट... प्राह "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूता ... "सर्वभूतेषु सर्वात्मन्" इत्यनेनोक्ता अविद्याकर्मकार्यं यस्याः ... रायाः सा तत्सञ्ज्ञा मायेत्यर्थः । अत एव जीवस्य रश्मिस्थ... यस्मात् मण्डलविलक्षणं मायाव्यवधानतिरोधापनीयत्वं ... युक्तं तदनन्तरं श्लोकम् "यया क्षेत्रज्ञशक्तिः सा तारतम्येन ... इति अत्रान्तरङ्गत्वतटस्थत्वबहिरङ्गत्वादिनैव तेषामेकात्म... तत्र साम्यं न तु सर्वात्मनेति तत्तत्स्थानीयत्वमेवोक्तं न तु ... द्रूपत्वं ततस्तत्तद्दोषा अपि नावकाशं लभन्ते अत्र विशेषविस्तर... श्रीभागवतसन्दर्भतट्टीकयोरवलोकनीया इति दिक् ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्येषान्तु जीवपरमात्मयाथात्म्यज्ञानमेव मोक्ष... स्येत्याह—त्वामात्मानमिति । परं चिदचिद्विलक्षणं ... श्रीमन्तं नारायणं परं ब्रह्म अज्ञानाध्यस्तमात्मानं जीव... मत्वा च पुनः अपरमर्वाचीनं संसारिणं जीवमात्मानं ... मन्तःकरणावच्छिन्नत्वेनौपाधिकत्वेन प्रतिबिम्बत्वेन वा ... आत्मा पुनः बहिः घटाद्यवच्छिन्नचैतन्यादिरूपेण मृग्य । एवमज्ञजनताया अज्ञता इत्याश्चर्यम् ॥ २७ ॥

एतां पुनस्तत्त्वविचारसामर्थ्यमाह—अन्तरिति । हे भगवन् सर्वदेशसर्वकालसर्वावस्थासु व्यापक ! भवे संसारमध्येऽन्तर्व... भवन्तमेव सर्वचिदन्तर्यामिणम् अत एव अतत् तच्छरीर... भवद्भिन्नत्वं भवे प्रपञ्चं त्यजन्तः सन्तः भवन्तं त्वामेव मृग... तच्छरीरत्वेन विचिन्वन्ति तदेव विचयमर्थ... न्यासेनाह–सन्तं कालत्रये सत्यं गुणम् अन्तरेण विना ... गुणाद्दविनाभूतं सन्तम् अपि अहिम् उ इति वितर्के ... अग्नि निकटे भ्रमात् विनाभूतमेव सत्यमेव रज्जुज्ञानात् ... जानन्ति पश्यन्ति वा इति काकुः तेषां भ्रमाभावात् एवं ... त्मानं विना पृथक् त्वेन स्थूलावस्थं सूक्ष्मावस्थं च जगत् ... अवर्त्तमानमपि भ्रान्ता जीवाः परमात्मा पृथग्भूतमेव ... यन्ति ? अपितु नैव, सन्तस्तु उभयावस्थं जगत्परमात्म... भूतमेव जानन्तीति भावः ॥ २८ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्रह्मभावादित्यनेन उक्तमज्ञत्वमेव विशदयन् विस्मयते—त्वामिति । देहात्मभ्रमोऽहमेवेश्वरः इत्येवं स्वतन्त्रात्मभ्रमश्चेति द्विविधोऽपि भ्रमोऽनर्थहेतुतया त्याज्यतया च तत्र तत्रोच्यते अत्राप्युभयविधभ्रमस्यात्मपरमात्मयाथात्म्यज्ञानमूलकत्वमुक्त्वा विस्मयते परं प्रकृतिपुरुषाभ्यां विलक्षणमात्मानं प्रकृतिपुरुषान्तःप्रवेशेन तद्गतदोषाऽसंस्पर्शेन प्रशासनेन च भर्तारं त्वाम्, इदमेव हि परमात्मशब्दप्रवृत्तिनिमित्तं यदचेतनचेतनान्तःप्रवेशनतद्गतदोषास्पर्शनप्रशासनैर्भर्तृत्वं यथोक्तं भगवता—

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" ॥

इत्येवमत्यन्तविलक्षणमपि त्वाम् इत्यर्थः । एवंविधं त्वामात्मानं प्रत्यगात्मानं मत्वा चरन्त्यर्थः । आत्मानं च प्रत्यगात्मानं तु परमन्यं देहमेव मत्वेत्यर्थः । आत्मा परमात्मा पुनर्बहिर्मृग्यः मृग्यत इत्यर्थः । अहोऽज्ञजनानाम् इयमज्ञता न हि गृहे नष्टं वने मृग्यत इति भावः । विवेकिनस्तु जीवान्तरात्मतयैव त्वामुपासत इति भावः ॥ २७ ॥

इदमेव दृष्टान्तमुखेन काक्वोपपादयति—अन्तर्भव इति । हे अनन्त ! सन्तो विवेकिनः अन्तर्भवे भवतीति भवः देहः तन्मध्ये अतत् तदन्यार्थकोऽत्र नञ् परमात्मनोऽन्यद्यज्जीवपर्यन्तं पञ्चविंशतितत्त्वजातं तत्त्यजन्तः तस्मिन्परमात्माभिमानं त्यजन्तस्तद्विलक्षणमेवमुक्तविधं भवन्तं त्वां मृगयन्ति विविच्योपासत इत्यर्थः । "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रुत्यनुसारात् सन्तः विवेकिनः रज्जुयाथात्म्यज्ञानवन्तः अन्ति समीपे सन्तं तत्त्वेनैव प्रतीयमानं गुणं रज्जुमसन्तमप्यहिं सर्पं किमु प्रतियन्ति सन्निहितस्यापि विभ्रमयो व्यवहिताध्यासे चायं दृष्टान्तः । यथा विवेकिनः सन्निहिते गुणे हि विलक्षणतया प्रतीयमाने न व्यवहितसर्पबुद्धिं कुर्वन्ति एवं जीवान्तरात्मतया सन्निहिते त्वयि जीवपर्यन्ततत्त्वविलक्षणतया प्रमितेन जडजीवबुद्धिं कुर्वन्ति किन्तु तां विहाय स्वरूपतः स्वभावतश्च तद्विलक्षणं त्वामध्यवस्यन्त उपासत इत्यर्थः ॥ २८ ॥

---

## श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ—

"एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयञ्ज्योतिरनन्त आद्यः एवम्विधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते" इत्याद्युक्तप्रकारेण श्रुतिस्मृत्यादिवाक्यैश्च त्वां समाभ्यधिकशून्यं परमकारणं सर्वाधारं सर्वशेषिणं निरुपाधिकानन्तज्ञानानन्दादिकल्याणगुणनिधिं स्वाश्रितसंसारनिवर्त्तकं सत्यप्रतिज्ञं चिदचिन्नियन्तारं ज्ञात्वाऽपि त्वत्तः परं किञ्चिदन्यत्तत्त्वं मन्यमाना अज्ञा इति तान् विस्मयेनाक्रोशं कुर्वन्निवाह—त्वामात्मानमिति । त्वामात्मानं निरुपाधिकसर्वात्मानं परमुत्कृष्टं मत्वा निश्चित्य "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" इत्यादिश्रुतेः । ननु, जीवात्मापि देहाद्यपेक्षया परः अतः स एव कथं न स्यादित्याह, परमात्मानमेव च चकारोऽप्यर्थः एवकारोऽन्ययोगव्यवच्छेदार्थः त्वामेव परमात्मानं मत्वापि मा परो यस्मादिति परमः परमश्चासावात्मा च परमात्मा तं त्वामेवेत्यर्थः । "मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय !" इत्यादिस्मृतेः "परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे, प्रधानक्षेत्रज्ञपतिर्गुणेशः, ज्ञाज्ञौ द्वावजावीशनीशौ, नित्यो नित्यानां चेतनश्चेतनानां, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादयः श्रुतयश्च इममेवार्थमुपपादयन्तीति भावः । एवम्भूतं त्वां ज्ञात्वाऽपि सर्वाधिभूते त्वय्येव परतत्त्वनिश्चयं कृत्वापि आत्मा पुनर्बहिर्मृग्यः त्वत्तोऽपि परिच्छिन्नद्गुणादरिद्रं सर्वविशेषशून्यत्वेन निर्विशेषं चिन्मात्रं वस्तु [illegible] श्रुतिस्मृत्यर्थमज्ञात्वा तत्रैव निश्चयं कुर्वन्तीति यदहोऽज्ञजनताज्ञता अहो इत्याश्चर्यं अज्ञजनताया अज्ञता तेषामज्ञाने त्वन्मायैव कारणमिति मया निश्चितमित्यर्थः । ननु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म' यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं' सत्यं ज्ञानमनन्तं ब्रह्म, तत्त्वमसि" इत्यादिश्रुतिभिर्निर्विशेषं चिन्मात्रं ब्रह्मैव परमार्थस्तद्व्यतिरेकि सर्वं मिथ्याभूतं तस्मिन्नेव कल्पितमिति कथं सर्वशेषी सर्वनियन्तृत्वादिगुणकः परमेश्वर एव परं तत्त्वमिति प्रतिपाद्यते इति चेत्, तदसत् कथमित्युक्ते शृणु, सदेवेत्यत्र सच्छब्दवाच्यः परमात्मा नारायण एवेत्यवधारय "एको ह वै नारायण आसीत्" इत्यादिश्रुत्यैकार्थ्यात् "एकमेवाद्वितीयम्" इति "न तत्समश्चाभ्यधिकश्च दृश्यते नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" इत्यादिश्रुतिस्मृत्युक्तसमाभ्यधिकशून्यत्वं प्रतिपाद्यते "यथा चोलनृपः सम्राडद्वितीयोऽद्य भूतले" इत्यत्र तत्समाभ्यधिक एव प्रतिषिध्यते न तु तत्पुत्रकलत्रादिकमपीति यत्तदद्रेश्यमित्याद्यपि हेयपदार्थनिषेधपरम्—

"सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः"

इत्याद्यनुसारात् अन्यथा "आदित्यवर्णं तमसः परस्तात्" इत्यादिभिर्विरोधः स्यात् "सत्यं ज्ञानमनन्तं ब्रह्म " इत्यत्रापि सत्यत्वादिगुणकमेव ब्रह्मेति पूर्वमेवावोचाम । अन्यथा बृहत्त्वाद्बृंहणत्वाच्च तस्मादुच्यते परं ब्रह्मेति ब्रह्मशब्दनिर्वचनविरोधः स्यात् तत्त्वमसीत्यत्रापि परब्रह्मात्मकत्वं जीवस्य प्रतिपाद्यते "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" इत्याद्यनुरोधात् अन्यथा "क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः" इत्यादिभिर्विरोधः स्यात् । अत एव श्रुतिस्मृतिभिः सिद्धेऽर्थे त्वदुक्तलक्षणाया अनवकाशः । मुख्यार्थबाधे सत्येव लक्षणा अत्र तु बाध एव नास्ति श्रुतिस्मृतिभिर्विरोधाभावात् ऋजुगत्या कार्ये सिद्धे वक्रगत्या साधयितुमन्याय्यत्वाच्च अतो यथोक्त एवार्थः समीचीनः । यद्वा, त्वामात्मानं परं जीवं मत्वा परमात्मानमेव च परं जीवमात्मानं त्वां मत्वा अयमाशयः आत्मा ब्रह्मैव स्वं स्वाविद्यया जीवरूपेणावस्थित इति मत्वा परं जीवमात्मानं त्वां मत्वा स्वाविद्यानिवृत्तौ पुनर्ब्रह्मस्वरूपेणैव तिष्ठतीति मत्वा आत्मा पुनर्बहिर्मृग्य ईश्वरजीवात्मव्यतिरिक्तं किञ्चिच्चिन्मात्रमस्तीति निश्चिन्वन्ति अहोऽज्ञजनताज्ञतेति अहो तेषां दुराग्रहः निर्विशेषस्वप्रकाशं ब्रह्म वदन्ति पुनस्तस्यैवाविद्यया आवृतिं वदन्तीति अहो बुद्धिवैपरीत्यं तेषामिति "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन शुद्धे ब्रह्मणि अविद्यासम्बन्धमङ्गीकृत्य पुनस्तन्निवर्त्तने शमदमादिसम्पदमङ्गीकृत्य तस्यैव मोक्षं वदन्तीत्यहो तेषामज्ञता इत्याक्रोशति ते शोच्या इत्यर्थः । अत्र त्वामात्मानं परं देहादिमता आत्मानं देहादिमध्यस्य तथा च परं देहादिमात्मानं मत्वा

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

देहादावात्माभ्यासयात्र नष्ट आत्मा बहिर्मृग्यते इति कैश्चिदुक्तं ते प्रष्टव्याः देहस्य परत्वं कस्मादुच्यते इति न तावज्जीवात्परत्वं वक्तुं शक्यं तस्य जडत्वेनातितुच्छत्वात् प्रत्युत जीवस्यैव देहादेः परत्वात् "परः परायाम्" इत्यादिश्रुतेः । नापि पृथिव्यादितत्त्वेभ्यः परत्वं तस्य तत्कार्यत्वात् अतः देहादेः परत्वं स्वमतिविजृम्भितं किञ्चाध्यासोऽपि देहात्मवादिनां देहादावात्माध्यासः शुक्तौ रजतादिवद्भवति देहोऽहं कृशोऽहं स्थूलोऽहमिति आत्मनि देहाध्यासस्तु कस्याऽपि न दृष्टचरः न हि रजते शुक्त्यध्यासः किन्तु शुक्तौ रजताध्यास एव अत इदमप्यसमञ्जसांमस्यस्वमतिपल्लवितेनेति ॥ २७ ॥

त्वत्स्वरूपज्ञास्तु त्वामेव सर्वावधिभूतं सर्वापद्विमोचकं निरुपाधिकानन्तकल्याणगुणाकरं सर्वसेव्यं स्वशरीरे एव विचिन्वन्तीत्याह–अन्तर्भवे इति । अन्तर्भवे भवतीति भवः शरीरं तस्मिन् भवन्तमेव सर्वस्वामिनं सन्तस्त्वत्सम्बन्धज्ञानवन्तो मृगयन्ति उपासते इत्यर्थः । किं कुर्वन्तः असत्त्यजन्तः न तत् असत् देवादिप्रपञ्चः तस्य नश्वरत्वात् तज्ज्ञानं विना तत्त्यागो न सम्भवतीत्याह, असन्तमपि अन्ति समीपे अहिं सन्तं गुणमन्तरेण विना रज्जुत्वज्ञानं विना तमसन्तमहिं किमु यन्ति जानन्ति ? तमसत्त्वेन जानन्ति किं ? रज्जौ रज्जुत्वज्ञानं विना सर्पोऽसत्त्वज्ञानं न सम्भवति तद्वत्तथ परमात्मत्वज्ञानं विना देवादिप्रपञ्चासत्त्वज्ञानं दुर्घटमित्यर्थः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ये तु सकलात्मनामप्यात्मानं त्वाम अन्यथा विचक्षते ते त्वतिमूर्खा एवेत्याह—त्वामिति । आत्मानं सर्वेषां मूलस्वरूपं त्वां परम् अनात्मानं मत्वा यः कश्चिदन्यो भवेदिति कल्पयित्वा बहिस्त्वत्पादाब्जसदनादस्मादन्यत्र आत्मा मृग्यो भवति मृग्यत इत्यर्थः । इयमहो भक्तजनताया अज्ञतेति । यद्वा, त्वां केवलं जीवस्य शुद्धस्वरूपमेव मत्वा तत उत्कर्षावाप्तौ परमात्मानमन्तर्यामिमात्रञ्च त्वां मत्वा तथा तथा वा यदि मन्यते तदापीत्यर्थः । भक्तजनताया भक्ततयैव परिशिष्यते "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"इति भगवद्वाक्यात् यतश्च आत्मा मुख्यवृत्ततच्छब्दवाच्यो बहिर्मृग्य एवेत्यञ्जलिना श्रीचरणौ दर्शयति–यद्येवं तर्ह्यहमपि स्वसदन एव स्थित्वा मनस्येव समाधास्यं न पुनरत्र वृन्दावने समायास्यं न हि गृहे नष्टं वने मृग्यत इति भावः । सन्धिश्छन्दोऽनुरोधेन भक्तजनताया अज्ञतेति वा । यद्वा, सर्वं परित्यज्य सम्प्रति श्रीकृष्णोत्कमुण्यान् स्तौति, एवं परं तावत् केवलम् अद्वैतोपासनया त्वाम् आत्मानं जीवस्वरूपानतिरिक्तमनुभूय ततः परमात्मानमव चानुभूय पुनरधुना आत्मा सर्वेषां मूलस्वरूपं बहिश्चक्षुरादिगोचरं मृग्यः सम्पाद्यते तस्मादहो विज्ञजनताशः श्रीरुद्रादिरूपाया विज्ञतेति भक्तजनाज्ञता इति क्वचित् पाठः ॥ २७ ॥

अत्र चानुत्तमशब्दवद्विवमुख्योऽपि व्याख्यातुं शक्यते

पूर्वत्र हेतुः भवन्तः श्रीकृष्णमेव अतस्त्वद्व्यतिरिक्तमन्यत्... रितोपेक्षा त्यजन्तः भवस्य त्वत् कार्यभूतत्वात् तदन्तः... स्ववस्थस्य तद्रूपस्य च त्वदंशत्वात्तत्र तव दर्शनञ्च दुः... यतः कार्यमात्रदृष्टीनामसत्यपि कार्ये तत्रैव तत्त्व... दृश्य(म्) इत्याह—असन्तमिति । सन्त इति साधारणविशे... पूर्वेषां सद्विशेषाणां दृष्टान्तः ॥ २८ ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतोऽज्ञा एवं त्वदतिरिक्तमात्मान्तरं बहिर्मृगयन्ति न तु विज्ञ... इत्याह–त्वामात्मानमित्यादि । परमात्मानं परमात्मस्वरूपं... आत्मानं त्वमितियो विग्रहस्तं परं मत्वा अनात्मत्वेन... आत्मा नाम कोऽप्यन्योऽस्तीति बहिर्मृग्यो बहिरनुसन्धे... साक्षाद्भूतमात्मानं त्वां विहाय ध्यानादौ बहिर्मार्गं आत्मानुसन्धा... कार्यमिति यत् तदहो अज्ञजनानान्तेषाम् अज्ञतैवेति वाक्यार्थः ॥

अज्ञानां रीतिरुक्ता विज्ञास्तु भवन्तमेव हृदये विचार... न तु सम्यक् पश्यन्तीत्याह–अन्तर्भवेऽनन्तेत्यादि । हे अनन्त !... रिच्छिन्न ! सन्तो विज्ञा असत् अवस्तु त्यजन्तः सन्तः अन्तः... हृदयान्तरे भवन्तमेव मृगयन्ति । न तु लभन्ते, स्वरूपेण... तत्त्वं न विदन्ति तत्र दृष्टान्तः असन्तमपीत्यादि । असन्तं मिथ्या... रूपम् अहिम् अन्तरेण विना सन्तं सत्यं गुणं किं सन्तम्... अहिं यन्ति जानन्ति ? न जानन्त्येव उ सम्बोधने तेन सद्गुण... मेव ते असत् अज्ञानकृतं अवस्तु त्यक्त्वा वस्तुभूतं त्वाम् भवन्... तया पुनर्जानन्ति यथा सन्तं गुणं गुणमेव जानन्ति न पुन... सन्तमहिम् ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

किञ्च,ये स्वात्मब्रह्मविचारकाः सर्वं संङ्गं परित्यज्य देशान्तरं... आत्मा प्राप्तव्य इति परित्यागं कुर्वन्ति तेऽतिभ्रान्ता इत्याह–त्वा... त्मानमिति । त्वं कृष्णःसर्वात्मा सर्वरूपः तादृशं त्वां भिन्नं... नाहं सर्वः किं तु विलक्षण इति परं च भगवद्रूपमेव... प्रकाश्य आत्मा भगवद्विभूतिरूपः भावनया स्फुरितो आत्म... त्वादिधर्मैः साङ्ख्यादिस्मृतिसिद्धः तमात्मानं मत्वा स... जीवरूपः कदाचिदपि न हि घटः पर्वतो भवति अतः... आत्मा पुनः बहिर्गत्वा संन्यासं गृहीत्वा मृग्य इति... अज्ञानां भ्रान्तजनानां भ्रमपरम्परा कथमेते प्रमाणमप्यविचार्य... भवन्तीत्याश्चर्यम् एवं खण्डभावयुक्तानां "यदा ह्येवैष एतस्मि... उदरमन्तरं कुरुते अथ तस्य भयं भवति" इति श्रुत्युक्तं तेषां... निरूप्य ये पुनरिहैवान्तःकरणे भगवच्चिन्तकाः अन्तर्यामि... मितरपरित्यागेन भावयन्ति ते कृतार्थाः ॥ २७ ॥

एकत्र लब्धपदं चित्तमन्यदपि प्राप्स्यतीत्याह... अन्तर्भव इति । अन्तर्भवतीत्यन्तर्भवो हृदयाकाशः तस्मिन्... हे अनन्त ! देशकालवस्तुपरिच्छेदरहित ! तत्रापि विद्यमानं भवन्त... मेव ये मृगयन्ति त एव सन्तो भवन्ति अन्वेषणे प्रकार...

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतत् त्यजन्त इति न तत्र येषु साधनेषु भगवच्चिन्तनं सम्यक् न भवति, तत्तत्त्यजन्तः विरुद्धसाधनपरित्यागेन निरन्तरं भगवच्चिन्तकाः सन्त इत्युक्तं भवति। किञ्च, भ्रमबुद्धिमपि त्यक्त्वा भगवच्चिन्तनं कर्त्तव्यमिति दृष्टान्तेनाह—असन्तमपीति अविद्यमानमप्यहिं सर्पम् अन्तरेण तद्व्यतिरेकेण अन्ति निकटे सन्तं गुणं रज्जुं किमयन्ति जानन्ति अन्तरशब्दो नानार्थः सोऽत्रापरित्यागवाची भ्रमप्रतिपक्षं विषमपरित्यज्य वस्तुस्वरूपं चिन्तनं न सम्भवति, अतो मूलभ्रमप्रतिपक्षं देहात्मभावं व्यामोहकत्वाद्भ्रमतिपक्षं च भावं परित्यज्य हृदये विद्यमानो भगवान् भावनीयः पुनः सन्त इति पदं तेन तथैव भावयन्तीति प्रमाणकथनार्थम् ॥ २८ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

ननु, परमात्मज्ञानात् बन्धो निवर्त्ततान्तद्याथात्म्येन ज्ञाने कोपमाग्रह इत्याशङ्क्य सर्वत्र यदज्ञानादेव भ्रमो जातस्तज्ज्ञानादेव भ्रमनिवृत्तिर्दृष्टा नत्वन्यज्ञानात्तथा ऽत्राप्यात्माऽज्ञानाज्जातस्य संसारबन्धस्य आत्मज्ञानादेव निवृत्तिर्युक्तेत्यभिप्रेत्येत्यज्ञानतो निन्दयाश्चर्यं करोति त्वामिति । स्वात्मानं त्वां परं स्वतो भिन्नं मत्वा परं स्वतो भिन्नं कार्यकारणसङ्घातरूपं देहादिं चात्मानं मत्वा आत्मा परमात्मा पुनः स्वस्माद्बहिरेव मृग्यः अन्वेषणीय इति अज्ञजनानां समूहः अज्ञजनता तस्या अज्ञता अहो आश्चर्यं न हि गृहे नष्टं वस्तु वने सुधीभिर्मृग्यते इति अत्र सन्धिश्छान्दसः नचैवमात्मज्ञानान्मुक्तिकथने भक्तिमार्गविरोध इति शङ्कनीयम् "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा" इति सिद्धान्त वचनानुसारेण मर्यादा मार्गे आत्मा भेदज्ञानमन्तरेण भगवति सर्वतोऽधिकस्नेहात्मकभक्तेरसम्भवात् "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुत्यात्मन्येव स्नेहाधिक्यप्रतिपादनात् ॥ २७ ॥

अत एव विवेकिनो ऽस्मिन्सङ्घात एव त्वदभिन्नत्वेनात्मानं मृगयन्तीत्याह—अन्तर्भव इति । हे अनन्त ! सर्वस्वरूप ! भवतीति भवः शरीरादिसङ्घातस्तन्मध्य एव अतद् त्वद्व्यतिरिक्तमात्मतयाऽध्यस्तं प्राकृतं देहादिकन्त्यजन्तः अपवदन्त एव सन्तो विवेकिनो भवन्तं भवदभिन्नमात्मानं मृगयन्ति अन्विष्य जानन्ति । ननु, तत्त्वज्ञानेनैवाहं किमतदपवादेनेत्याशङ्क्याध्यस्तापवादं विना ऽधिष्ठानतत्त्वं न ज्ञायत इत्यत्रापि सतां व्यवहारः । प्रमाणमाह, असन्तमिति । असन्तमप्यविद्यमानमप्यहिमन्तरेण तदपवादं विना अन्ति समीपे सन्तं विद्यमानमपि तं गुणं रज्जुं सन्तो विवेकिनोऽपि किमुयन्ति जानन्ति? नैव जानन्तीत्यर्थः । अतो विचारेण तदपवादोऽप्यावश्यक इति भावः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ये त्वात्मविन्मन्याः पुरुषाकारं त्वां नाद्रियन्ते त एव पूर्वोक्ताः स्थूलतुषावघातिन इत्याह—त्वामिति । यो ऽव्यये परमात्मानमेवापि त्वां पुरुषाकारं परं शुद्धं परमात्मनोऽन्यं मायाशबलम् आत्मानं मत्वा आत्मा परमात्मा पुनस्त्वत्तो बहिरेव मृग्यः अहो तस्या अज्ञजनताया अज्ञता अत्यद्भुतेत्यर्थः अयमर्थः विवर्तपरिणामाख्यो वादाः खलु चिद्भिन्ने मायिके जगत्येव प्रवर्तन्ते न तु पूर्णचिति ब्रह्मणि तथा शाब्दं ब्रह्मवपुर्दधदिति तृतीयात् "यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्विभुः । बभूव तेनैव स वामनः" इत्यष्टमात् "सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः" इति दशमात् "गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनम्" इति तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी हि" इति गोपालतापनीश्रुतेश्च पूर्णब्रह्मात्मके भगवद्वपुर्ण्यमादावपि ये तु श्रुतिस्मृतीत्यणाभावादन्धास्तत्र तत्रापि विवर्त्तमन्धपरम्परयैव प्रवर्त्तयन्तो भ्रमयन्ति ते त्वहो शब्देन ब्रह्मणा स्वसृष्टौ शोच्येषु मध्ये विस्मयरसविपर्याचक्रिरे इति अहो अज्ञजनाऽज्ञतेत्यपि पाठः ॥ २७ ॥

विज्ञास्तु त्वां मायोपाधित्वेन न मन्यन्ते किन्तु जीवात्मानमेवाऽसत्तमेव मायामाश्रिन्यतो विच्युतीकर्त्तुं तमेव केवलं शुद्धं मृगयन्तीत्याह—अन्तर्भवे स्वशरीरमध्य एव वर्त्तमानं अनन्तभवम् अनन्ता असङ्ख्या भवा नाना योनिषु जन्मानि यस्य तं प्रसिद्धमलपक्षं जीवात्मानं मृगयन्ति किं कुर्वन्तः? अतत् आत्मभिन्नं मायिकं मायां च त्यजन्तः अपवदन्तः । ननु, चिन्मयस्य जीवात्मनो ज्ञानेनाऽलं किञ्चिद्भिन्नस्यापवादेनेत्याशङ्क्य अध्यस्तस्यापवादं विना अधिष्ठानतत्त्वं न सम्यक् ज्ञायत इति सतां व्यवहारेणाह—असन्तमिति । अन्ति समीपे असन्तमप्यहिमन्तरेण नायमहिरिति तदपवादं विनेत्यर्थः । सन्तं गुणं रज्जुं सन्तः किमु यन्ति जानन्ति ? नैव जानन्ति, तथैव "असङ्गो ह्ययं पुरुषः" इति श्रुतेर्जीवात्मनः स्थूलसूक्ष्मदेहसम्बन्धो नैवास्ति तत्सम्बन्धाभावादेव देहो दैहिकाः शोकमोहादयश्च तस्य नैव सन्ति तदप्यविद्ययैव तस्मिन् जीवात्मनि देहोऽध्यस्तः ततश्च कदाचिदुद्भूतेन ज्ञानेन नायमात्मा देह इति तस्य देहस्याऽसतोऽप्यपवादं विना सन्तं शुद्धं जीवात्मानं किं जानन्ति ? नैव जानन्तीत्यर्थः ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमणुपरिमाणकः सनातनो ब्रह्मांशभूतो जीवः विभुपरिमाणकः सनातनः ब्रह्म नारायणादिपदवाच्योंऽशी श्रीकृष्णः तयोरंशांशिनोः प्रभाप्रभावतोरिव गुणगुणिनोरिव जातिव्यक्त्योरिव अवयवावयविनोरिव कार्यकारणयोरिव स्वरूपतो भिन्नयोरेवाभेदः "एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते" इत्यनेनोक्तः तस्य चांशभूतस्यानादिमायावृतज्ञानस्याज्ञस्य स्वांशयविचारेण बन्धस्तद्भजनेन तद्भावापत्तिलक्षणो मोक्षः पूर्वश्लोकेन वर्णितः अयमर्थमेव सर्ववेदार्थभूतं स्वसिद्धान्तं विशदयन् अत्यन्तभेदवादिमतं सर्वश्रुतिस्मृतिविरुद्धं निराकरोति, त्वामिति । त्वां सकलात्मनामात्मानं तेषां सत्यत्वमूलं परमं सत्यं अंशिनं "नित्यो नित्यानाम्" इत्यादिश्रुतिप्रोक्तम् परमत्यन्तभिन्नं मत्वा तथात्मानम्

अथापि ते देव ! पदाम्बुजद्वयप्रसादलेशाऽनुगृहीत एव हि ॥
जानाति तत्त्वं भगवन् ! महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥२९
तदस्तु मे नाथ ! स भूरिभागो भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् ॥
येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अंशभूतं परमात्मानं भिन्नम् ब्रह्मात्मकं मत्वा एवं स्वभावत एव भिन्नत्वेऽप्यभिन्नयोः जीवपरमात्मनोरन्योन्यतोऽत्यन्तं भेदं मत्वा पुनर्बहिः "तत्त्वमसि" इत्यादिश्रुतिसिद्धान्तात्पृथग्भूते स्वेच्छाविलसिते कुपथि ब्रह्मात्मकः जडस्वरूपः ज्ञानपरिणामवदादिरूपो वा आत्मा मृग्यः अहो इति अज्ञजनतायाः तार्किकादिजनसमूहस्य अज्ञता नहि जीवपरमात्मनोरत्यन्तभेदोऽस्ति तत्तादात्म्य—विधायकानान्तत्त्वमस्यादिवाक्यानां बाधप्रसङ्गात् न पुनरत्यन्ताभेदोऽप्यस्ति उपदेशवैयर्थ्यापत्तेः एकस्मिन्नद्वितीये भेदकल्पनायाः तदपवादस्य च वर्षसहस्रेणापि विद्वत्समायामुपपादयितुमशक्यत्वात् अतः स्वरूपतो हि भेद एव "सर्वं खल्विदं ब्रह्म,, इत्यत्र जडाजडयोः स्वरूपतोऽभेदासम्भवात् आत्मनो जडत्वस्वीकारः ज्ञानपरिणामवत्त्वादिस्वीकारश्च तुच्छ एव "चेतनश्चेतनानाम्" इत्यादिश्रुतिविरोधादित्यलं विस्तरेणाविस्तरस्तु वेदान्तकौस्तुभादिषु द्रष्टव्यः ॥ २७ ॥

ननु, यद्यहमेव बन्धमोक्षप्रदः सर्वभिन्नाभिन्नः परमपुरुषस्तर्हि केचिन्मयि मनुष्यबुद्धिं कुतः कुर्वन्तीत्यत्राह–अन्तर्भव इति । हे अनन्त ! त्रिविधपरिच्छेदशून्य ! भवे संसारे स्वमायाकार्यभूते ब्रह्माण्डे यदान्तर्मध्यन्तत्र भवन्तं स्वेच्छया प्रविष्टं त्वां स्वासाधारणेनैव रूपेण वर्तमानम् हि यत् भ्रान्त्या गृहीतमतद्ब्रह्मत्वं मनुष्यत्वम् तदपजन्तः सन्तः विवेकिनः मृगयन्ति तत्त्वतो निश्चिन्वन्ति यथेन्द्रेण "कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्मेऽवहेलनम्" इति । श्रीकृष्णो मर्त्यत्वं भ्रान्त्या प्रकल्पितम् पुनर्विविच्य बुद्ध्वा "विशुद्धसत्त्वं तव धाम शान्तम्" इत्यादिना परमपुरुषत्वेन श्रीकृष्णो वर्णितः तत्र दृष्टान्तमाह—यथा सन्तः रज्जुस्वरूपविदः असन्तं भ्रान्त्या गृहीतमहिमन्तरेण तन्निषेधं विना अन्ति समीपे सन्तं गुणं रज्जुं किमुयान्ति जानन्ति ? किं तु भ्रान्तिगृहीतमहिं निषेधयित्वैव रज्जुं जानन्तीत्यर्थः । तद्वत् अत एवोक्तम्—

"इत्थं सतां ब्रह्मसुखानुभूत्या दास्यङ्गतानां परदैवतेन ।
मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाः" ॥

इति ॥ २८ ॥

—— ——

भाषा टीका ।

आप जो पर हो अर्थात् सर्व लोक के भीतर प्रविष्ट होय करके भी वाके लोपन सों अछूते रह करकें उनके नियमन पूर्वक भरण पोषण करन वारे हो, एसे आपको तो जीवात्मा मानलीनो, और आत्माजो जीवात्मा है ताकों पर अर्थात् देह मानलीनो । और फिर परमात्माकों बाहर ढूंडबे लगे अहो ! येई तौ जनन की बडी अज्ञता ( भूल ) है ॥ २७ ॥

हे अनन्त ! सन्त जो विवेकिजन हैं, ते या देहमें जो परमात्मा सों भिन्नजीव पर्यन्त पञ्चविंशति तत्त्व हैं तिन्हें त्यागते भये आपही को ढूढते हैं जैसे विवेकिजन, घरमें वर्त्तमान जो रस्सी होय रही है, ता रस्सीको वाजगे अविद्यमान ऐसो सर्प थोरे जान सकें हैं, किन्तु रसरीकें और सर्प, भूदलन, अम्बुधारा, इत्यादि कछु भी जान सकें हैं, नही तौ फिर वे विवेकी ही क्यों होवेंगे, तैसे विवेकि जन, जीवान्तर्यामी जो आप हैं तिनकी उपासना करते हैं ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं ज्ञानैकसाध्ये मोक्षे किमिति भक्तिरुद्बोधिताऽत आह अथापीति । यद्यपि ह्स्तप्राप्यमिव ज्ञानमुक्तं तथापि हे देव ! पादाम्बुजद्वयमध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेनानुगृहीत एव भवतस्तव महिम्नस्तत्त्वं जानाति, हे भगवन्ते महिम्नस्तत्त्वमिति वा एकोपि कश्चिदपि चिरमपि विचिन्वन्नप्यनु शास्त्रादेन विचारयन्नपीत्यर्थः ॥ २९ ॥

तत्तस्मात् भूरिभागो महद्भाग्यम् अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन्वा येन भाग्येन भवदीयानां जनानामेकोऽपि यः कश्चिदपि भूत्वा निषेवे सेवेयेति ॥ ३० ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यद्यप्येवं त्वन्माहात्म्यं प्रस्फुटमेव तथापि स्वतत्त्वं नैवानुभूतं स्यात्तथेत्याह–अथापीति । देव, हे सर्वप्रकाशक ! प्रकाशमानेति वा । यद्वा, दीव्यति श्रीवृन्दावने सदा क्रीडति देवस्तस्य सम्बोधनम् यद्वा, देवेति तथैव पदाम्बुजविशेषणं प्रसन्नता कृपा वा तस्य लेशेनानुगृहीत इति । यद्वा, प्रसादः सम्बन्धितुलस्यादिमहाप्रसादः हि निश्चितं भगवन्, ! हे निखिलवगयादिगुणप्रकटनपरेत्यर्थः अयं प्रसादे हेतुरूह्यः अन्यः प्रसादं यद्वा, पूर्वं भक्तेः प्रकृतत्वात् तदन्तरापतितवितर्कुल सत्यपि निरन्तरश्लोके भक्तेरेव प्रार्थनात् भक्तिलक्षणस्य इति ज्ञेयम् तत्त्वं कीदृक् कियान् वेति एकः एकाकी सहपीत्यर्थः । अष्टो रुद्रादिरपीति वा विचिन्वन् शास्त्रादिविचारयन् योगाभ्यासेन च मृगयन्नपीत्यर्थः । यद्यपि प्रसादेनैव तत्तत्त्वज्ञानं स्यात् तथा लेशयुक्तिः तस्य दौर्लभ्याभिप्रायेण ॥ २९ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

त्वत्प्रसादस्तु त्वद्दास्ये सत्येव सिद्ध्यतीति दास्यं प्रार्थयते-तदिति । नाथ ! हे सर्वकामपरिपूरक ! पारमेष्ठ्यपदप्रापकं यन्मम भाग्यं तन्मद्भाग्यं न भवति किन्तु स एव भूरिभागः मद्भाग्यं त्वज्ज्येष्ठपुत्रस्य मम स एव श्रेष्ठो भाग इति शेषार्थः । भवज्जनानामेकोऽपीति सेवायाः सम्यक्त्वाद्यपेक्षया अत एव निःशब्दः तत्र च अत्र ब्रह्मजन्मनि अन्यत्र अन्यस्मिन् ब्रह्मजन्मनि वा । यद्वा, अन्यत्र तत्प्रतियोगिकीटादितिर्यग्योनौ वा न ममाग्रहः किन्तु त्वद्भक्तायेवेति वाशब्दाभ्यां सूच्यते अन्यत्तैर्व्याख्यातम् । यद्वा, त्वत्प्रसादस्तु तावकानां निषेवयैव सिद्ध्येदिति याचंत—तदिति, एक इति पूर्ववत् तव भवतो ये जनाः सद्यो भक्तौ प्रवृत्ता नूतनभक्ता इत्यर्थः । तेषामपि पादपल्लवम् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यद्यप्येवमपरिच्छिन्नं तन्माहात्म्यं प्रस्फुटमेव तथापि त्वत्प्रसादेनैव तद्विवेकस्य तत्पारिसरगमनं स्यान्न त्वन्यथेत्याह—अथापीति । योजनात्र स्पष्टा तत्र चाथापि तव महिम्नस्तत्त्वं जानातीत्यनेन पूर्वप्रकरणे विवर्तवादमयव्याख्यापनयनं च प्रस्फुटमेव पदार्थास्तु दर्श्यन्ते देव ! हे सर्वप्रकाशक ! सर्वत्र प्रकाशमानेति वा । यद्वा, दीव्यति श्रीवृन्दावने सदा क्रीडतीति देवस्तस्य सम्बोधनं प्रसादः कृपा तस्य लेशेनानुगृहीत एवेति "यमेवैष वृणुते" इत्यादिश्रुतिं सूचयति, भक्त्या तु पदाम्बुजशब्दप्रयोगः हि निश्चितं भगवन् ! हे निजकारुण्यादिगुणप्रकटनपरेत्यर्थः । अयं प्रसादे हेतुरुक्तः महिम्नः स्फुटमस्यापि देववपुष इत्यादिभिरपरिच्छेद्यतयोपक्रान्तस्य "को वेत्ति भूमन् ! इत्यादिना तथा ऽप्यस्तस्यापि तत्त्वं स्वरूपं यत्किञ्चिदनुभवति अन्यः प्रसादहीनः एकः एकाकी निःसङ्गः सन्नपीत्यर्थः । श्रेष्ठो रुद्रादिरपीति वा विचिन्वन् तत्त्वं कीदृक् कियद्वेति शास्त्राभ्यासेन विचारयन् योगाभ्यासेन च मृगयन्नपीत्यर्थः । लेशत्युक्तिः तस्य वर्द्धिष्णोः क्रमेण पूर्णप्राप्त्यभिप्रायेण ॥ २९ ॥

मम तु तादृशप्रसादस्य फलं यज्ज्ञानन्तस्यापि यत्फलम् उपासनं तस्यापि फलं यत् साक्षात्कारः स एव सहसा संवृत्तस्तस्मादेतदेव प्रार्थय इति नौमीत्यादि प्रतिज्ञामेव सङ्गमयन् सर्वं प्रकरणं तादृशं श्रीकृष्ण एव पर्यवसाययन्नाह—यावत्समाप्ति, तत्तस्मात् नाथ ! हे सर्वकामपरिपूरक ! पारमेष्ठ्यपदप्रापकं यन्मम भाग्यं तन्महन्न भवति किं तु स एव भूरिभागः महद्भाग्यं यत् भवज्जनानाम् एकोऽपीति सेवायाः सम्यक्त्वाद्यपेक्षया अत एव निःशब्दः तत्र च तत्र ब्रह्मजन्मनि अन्यत्र तत्प्रातियोगिहरिणादि तिर्यग्योनौ वा न ममाग्रहः किं तु त्वद्भक्तायेवेति वा शब्दाभ्यां सूच्यते हरिणादियोनौ सेवा च स्नेहेन रजआदिमार्जना याचद्देवादिरूपा गम्या सा च तद्विधानां इष्टैव किन्तु प्रार्थ्यते पदद्वयमिदमित्थं वा सङ्गमनीयं यद्यप्येवं तव महिमा तथापि त्वत्पदाम्बुजद्वयस्य यः प्रसादोऽनुग्रहः तस्य लेशोऽपि यत्र किमुत पूर्णः सः तेनानुगृहीत एवेति भवज्जनानामनुगतरूप एकोऽपि कश्चन सोऽपि भूत्वेति च ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं एतावता प्रघट्टकेन स्वरूपोपाय साध्यानि तत्त्वतः प्रतिपाद्य श्रीभगवन्नारायणस्य श्रीकृष्णस्य शरणागतिमेव गुरू करोति—अथापीति । हे देव ! लोकानुग्रहार्थं क्रीडनप्रवृत्त ! तव पदाम्बुजसम्बन्धिद्वयमन्त्रप्रसादलेशेनाऽनुगृहीत एव जीवः श्रीभगवतस्तव महिम्नस्तत्त्वं जानाति नान्यः अप्रपन्नो न जानातीति सर्वोत्तमात्तंप्रपत्स्यमानेऽपि इतरपरत्वापीत्यतः लेशेनेत्युक्तम् एकोऽपि मुख्योऽपि शास्त्रेषु व्यपदेश्योऽपीत्यर्थः । चिरं विचिन्वन्नपि अत्र "शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम्„ "मनुष्याणां सहस्रेषु कश्चिन्मां वेत्ति तत्त्वतः„ श्रीमन्नारायण—परब्रह्मत्वेनेत्यर्थः । षष्ठं परीक्षिता च जन्तवः रजोभिः समसङ्ख्या जीवाः तेषु श्रेयोविचेष्टाः ज्ञानिनः तेषु मुमुक्षवः तेषु कश्चिदविद्यानिवृत्तिमान् तेष्वपि सिद्धाः तेष्वपि सर्वेष्वपरिमितेषु कोटिष्वपीत्युक्तेः एकः षष्ठकक्षायां श्रीनारायणपरायणाः सुदुर्लभं इत्युक्तःप्रपन्न एव श्रीमन्नारायणस्य तत्त्वं जानातीति सुष्ठुक्तं यतः भक्तानाम् "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्„ इत्युक्त्वा प्रारब्धक्षयान्ते मुक्तिरुक्ता, प्रपन्नानां तु "सकृदेव प्रपन्नाय, अहं त्वां सर्वपापेभ्यः„ सकृत्कृतः शास्त्रार्थः" इत्यादिसूक्तिभिः "इमानामपि जन्तूनां जन्मान्तरनिवारिणी„ इत्युक्तेश्च एतद्देहपातानन्तरं मुक्तिरित्याचार्यैर्निर्णीतत्वाच्चेत्यलं पल्लवितेन प्रकृते तु चिरं विचिन्वन्नपि उपायं शास्त्रेषु न जानात्येवेति भावः ॥ २९ ॥

प्रपत्तिरूपमन्त्रलाभे भक्तिरूपंज्ञानं प्रपत्तिरूपञ्च ज्ञानं दुर्लभमुक्त्वा स्वस्य एतादृशज्ञानलाभमेवाशास्ते–तदस्तु मे नाथेति । हे स्वामिन् ! अनेन स्वामिसेवकभावसम्बन्ध उक्तः तत्तस्मात् मे स भूरिभागः भाग्यमंशो वा त्वद्वरणीयताहेतुर्गुणविशेषः प्रपत्तिरूपोऽस्तु अत्र भवे ब्रह्मजन्मनि अन्यत्र भवे वा मनुष्यादिजन्मनि तिरश्चां भवे वा अनेन प्रपत्तेः सर्वाधिकारित्वमुक्तं येन शरणागतिरूपोपायेन एकोऽपि असहायोऽपि अभक्तत्वात् कर्मज्ञानभक्तिसहायहीनोऽपि भवज्जनानां श्रीरामश्रीकृष्णभक्तानां मध्ये भूत्वा भवनं जन्म भक्ताख्यं लब्ध्वा दास्यसंवलितं नाम च लब्ध्वा तव पादपल्लवं निषेवे नितरां सेवे इति—

"पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्„ ।

इत्युक्तेः वैष्णवा भागवत आचार्यादिः शरणागतिमार्गो वा पश्वादीनां जन्मान्तरीयस्य तस्य कल्पनात् अविरोध इति सर्वथा प्रपत्त्यैव मोक्ष इति राद्धान्तः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, केचिदज्ञाः सन्तः संसरन्ति केचित्तु विवेकिनः सन्तो मामुपाश्य तरन्तीत्युक्तं कस्तर्हि विवेकाविवेकहेतुरित्यत्र भवदनुग्रहविशेषभावाभावावेवेत्यभिप्रायेणाह—तथापीति । यद्यपि केचिदज्ञाः संसरन्ति केचिद्विवेकिनः सन्तस्तरन्ति तथापि हे देव ! तव पदाम्बुजद्वयस्य प्रसादलेशेनानुगृहीत एव पुमान्प्रणतस्यावस्थानस्य पदाम्बुज द्वयस्य तत्प्रसादमूलत्वादेव मुक्तिः भगवतस्तव महिम्नस्तत्त्वं याथात्म्यं जानाति अन्योऽननुगृहीतस्तु एकोऽपि निर्जनदेशस्थोऽपि चिरमपि विचिन्वन्न च नैव जानाति हि ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्तर्हि मदनुग्रहहेतुरित्यत्र त्वद्भक्तजनसङ्गतिविशेष एवेत्यभिप्रयंस्तमेवात्मनः प्रार्थयते, तदस्त्विति । तत तस्मात्त्वदनुग्रहस्यैव विवेकहेतुत्वात् हे देव ! स भूरिभागः महाभाग्यं महांस्तु कोऽसौ येन भाग्येनाहमत्र भवे चतुर्मुखजन्मन्यन्यत्र तु वा मनुष्यजन्मनि किं बहुना तिरश्चां मध्ये वा भवज्जनानां केनापि प्रकारेण त्वदाभिमुख्यार्हाणां जनानां मध्ये एकोऽपि यः कश्चिदपि भूत्वा तव पादपल्लवं निषेवे नितरां सेवे तावन्मां भवज्जनान्तर्भूतत्वेनाऽनुगृहाणेति भावः ॥ ३० ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

मयैवमपि संसारनिवृत्तिरशक्या एव तथापि त्वत्प्रसादात्तत्त्वज्ञानेन सुशका तन्निवृत्तिरित्याह—अथापीति । हे देव, द्योतनशील ! अथापि तव महिमा ज्ञातुमशक्य इति एवमपि तथाऽपि ते पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि निश्चितं तव पदाम्बुजसेवया त्वत्प्रसादात् भगवतस्तव महिम्नस्तत्त्वं जानाति जानात्येव न चान्य एकोऽपि त्वच्चरणारविन्दसेवाविमुखश्चिरं विचिन्वन्नपि चिन्तयन्नपि न जानातीत्यर्थः । तदुक्तं प्रथमे—

"स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ।
यो मायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम्" ॥

इति । त्वदभक्ता न जानन्तीत्यत्र शुकवाक्यं द्वितीये—

"भूयो नमस्ते ऋषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः" ॥

इति ॥ २९ ॥

अथ तस्मात्त्वत्कृपाकटाक्ष एव त्वन्महिम्नस्तत्त्वयाथात्म्यज्ञाने कारणं नान्यत् तस्मात्कस्यामपि योनौ मम संसृतावपि तव पादपद्मसेवाऽस्त्विति प्रार्थयन्नुपसंहरति—तदस्त्विति । हे नाथ ! तस्मान्मे स एव भूरिभागः महद्भाग्यं मे अस्तु किं तदित्याह, अत्र भवे चतुर्मुखजन्मनि वा अथवा अन्यत्र मनुष्यादौ, अथवा तिरश्चां पशुपक्षिणां मध्ये जन्म स्यादिति शेषः । स भूरिभागः येन भाग्येनाहं भवज्जनानां तव पादभक्तानां एकोऽपि कश्चिदपि भूत्वा तव पादपल्लवं निषेवे नितरां सेवयामि समुद्रे गङ्गौघ इव निरन्तरं चिन्तयामीत्यर्थः । ननु, देवादौ जन्म भवतु नाम भगवत्सेवानुपयोगिनि तिर्यगादौ कथं जन्म प्रार्थयतीति चेन्न, भगवद्भक्तियोगिनां सहवासो तिरश्चामपि संसारनिवर्त्तकः तदुक्तम्—

"पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्" ॥

इति ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तथापि तद्विवेकस्य स्वपर्यन्तगमनं त्वत्प्रसादेनैव स्यादित्याह—अथापीति । भक्त्या पदाम्बुजशब्दप्रयोगः लेशेत्युक्तिकृतस्य वर्द्धिष्णोः क्रमेण पूर्णप्रासत्त्यभिप्रायेण महिम्नः ऐश्वर्यमाधुर्यादिरूपमाहात्म्यस्य मम तु तादृशप्रसादस्य फलं यज्ज्ञानं तस्यापि यत् फलमुपासनम् तस्यापि यत् फलं साक्षात्कारः स एव सहसा संवृत्तस्तस्मादेतदेव प्रार्थय इति ॥ २९ ॥

नौमीत्यादिप्रतिज्ञामेव सङ्गमयन् सर्वप्रकरणं श्रीप्रभु एव पर्यवसाययितुमाह—तदस्त्वित्यादिना । यावत्समाप्ति, अत्र हरिणादियोनौ वा सेवा चात्र स्नेहेन रज आदिमाङ्गेना अवलनादिरूपा सा च तद्विधानां दिष्ट्यैव किल प्रार्थ्यते ॥ ३० ॥

---

श्रीमज्जीवगोस्वामीकृतबृहत्क्रमसन्दर्भः ।

एवम् अज्ञविज्ञयोः पन्थानं दर्शयित्वा विज्ञस्य चाम्बरमात्रं न तु स्वरूपतो ज्ञानमिति यदुक्तं तत्तु व्यतिरेकमुखेन पुनर्निश्चाययति—अथापीत्यादि । अज्ञविज्ञयोर्वर्त्मदर्शनानन्तरं यदुच्यते तदवधीयतामित्यानन्तर्यार्थवचनोऽथशब्दः तन्महिमज्ञानयोग्यता त्वां विचिन्वतोऽपि नास्तीति स्वरूपज्ञातुरसम्भावनायां स्वरूपज्ञाता कोऽप्यस्तीति पुनः सम्भावनायामपि हे देव, सर्वजिगीषाशालिन् ! ते तव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि प्रसादस्य लेशेनाऽपि किमुत सम्यक् प्रसादेन एव हीति निर्धारणाधिक्यं भगवत्तत्त्वज्ञानं न लौकिकप्रमाणगम्यं तथा हि न तावत् प्रत्यक्षस्य साक्षात्कारि प्रमाकरणत्वे नाप्यनुमानगम्यं तस्य च प्रत्यक्षोपजीवित्वात् नाप्युपमानगम्यं सादृश्याभावात् नापि शब्दगम्यं तस्य शक्तिलक्षणाभ्यामविषयत्वात् तेनालौकिकं किमपि प्रमाणान्तरमन्वेषणीयं तच्च भवत्प्रसादजन्यानुभवः तथा चोक्तं स्वयमेव "यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्" इति सम्यगेवोक्तं न चान्य एकोऽपि चिरं विचिन्वन्नपि अन्यस्त्वदप्रसादाभाजनम् एकः प्रधानतमोऽपि सर्वशास्त्रतत्त्वज्ञोऽपीत्यर्थः ॥ २९ ॥

तस्मादवगतं हे नाथ ! भवदनुगृहीता एव भवत्तत्त्वविदः भवदनुगृहीतो भवितुं क्व मे तादृशी योग्यता भवज्जनानां मध्ये कश्चिदपि भूत्वा भजनं करोमीत्याह—तदस्तु मे नाथेत्यादि । तत्तस्मात् हे नाथ ! स भूरिभागो महद्भाग्यं मेऽस्तु कोऽसौ तत्राह, येन भूरिभागेन भवज्जनानां मध्ये एकोऽपि भूत्वा तव पादपल्लवं निषेवे अथवा तव विभूतिमध्ये एकोऽपि मुख्यतमोऽपि भूत्वा भवज्जनानां पादपल्लवं निषेवे नितरां सेवे ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्यप्येवं भावनान्तःकरणे उचिता तथापि भजनव्यतिरेकेण तच्छास्त्रव्यतिरेकेण च भगवन्माहात्म्यं न परिस्फुरति भवतीति केवलचिन्तनं तथा नोपयोगाय न भगवदाविर्भावं सम्पादयति नापि प्रपञ्चनिवृत्तिमित्याह—अथापीति । हे देव ! पदाम्बुजद्वयप्रसादलेशेनैव अनुगृहीतः भगवन्महिम्नस्तत्त्वं जानाति बहूनां मध्ये एकोऽपि चिरमपि विचिन्वन्नन्यो

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जानाति तस्मादावश्यकत्वाल्लाघवाच्च भगवन्मार्गेणैव भगवान् सेव्यो नान्य इति शास्त्रार्थात् ॥ २९ ॥

मम भगवद्भक्तेषु जन्मास्त्विति प्रार्थयते–तदस्तु मे नाथेति। हे नाथ ! भक्तिमार्गानुसारेण सम्बोधनं स भूरिभागो भवो मे अस्तु अत्र गोकुले अन्यत्र वा किं बहुना तिरश्चामपि मध्ये येन भवेन जन्मना अहमपि भवज्जनानां मध्ये एको भूत्वा तव पादपल्लवं निषेवे अन्यथा विजातीयैः सह न भक्ता भजनं कुर्वन्ति ॥ ३० ॥

---

### श्रीमद्वीरराघवकृतभागवतचन्द्रचन्द्रिका ।

एवम्विधज्ञानेनैव चेन्मोक्षो भवति तदा तत्र तत्र भक्तिः किमित्युद्घोषितेत्याशङ्कयाह—अथापीति । यद्यपि ज्ञानं सुखमभिवोक्तमथापि हे देव ! नानाविधसृष्ट्यादिक्रीडापरस्य ते तव पदाम्बुजद्वयस्य यः प्रसादलेशस्तेनानुगृहीत एव पुमान् भगवतस्तव महिम्नस्तत्त्वं जानाति अन्यस्त्वद्भक्तिहीनस्तु एकोऽपि निर्जने देशे एकाकी स्थितोऽपि चिरं बहुकालं विचिन्वन् अतद्व्यापवादेन शास्त्रबलेन विचारयन्नपि तन्नैव जानातीत्यन्वयः "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इति शास्त्रमत्र प्रमाणं सूचयति, हीति ॥ २९ ॥

स्वामिनस्तव दासे मय्यनुग्रह एव युक्त इत्याशयेन सम्बोधयति–नाथेति । यस्मात्त्वद्भक्तिहीनस्य न पुरुषार्थसिद्धिस्तस्मादत्र भवे अस्मिन् ब्रह्मजन्मनि कर्मवशात्तिरश्चामप्यादीनामपि मध्ये यज्जन्म तस्मिन्वापि जन्मनि स एव मे भूरि भागो महद्भाग्यमस्तु येन भाग्येनाहं भवज्जनानां मध्ये एको यः कश्चिदपि भूत्वा तव पादपल्लवं नितरां सेवे इति ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च, तस्य जीवात्मनो ब्रह्मसुखानुभवस्तु केवले न त्वद्भक्तिलेशेनापि भवति नान्यथेत्याह—अथापीति । यद्यपि मायामायिकसमस्तांशविच्युतः स्यात् तथा स जीवात्मा तदपि तवपदाब्जप्रसादलेशेनानुगृहीत एव भगवतस्तव यो महिमा महिमशब्दवाच्यं ब्रह्म तस्य तत्त्वं जानाति यदुक्तं स्वयैव मत्स्यरूपेण—

"मदीयं महिमानं च परब्रह्मेतिशब्दितम् ।
वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥"

इति । व्याख्या च तत्रत्या श्रीस्वामिपादानां मे मया अनुगृहीतं सम्यं प्रसादीकृतं परब्रह्म वेत्स्यसीति अत्र प्रसादलेशो गुणीभूतभक्तियोगो ज्ञानिनां पूर्वसिद्धो वर्तते एव तेन अनुगृहीत इति अविद्यायामुपरतायां विद्यायाश्चोपरमारम्भे "ज्ञानं च मयि संन्यसेत्" इति भगवदुक्तेर्ज्ञानमपि त्यक्त्वा तत्र उर्वरितां भक्तिमेव केवलां बहुमानयंस्तामेवाभ्यसेत यो ज्ञानी तमेव प्रसादलेशरूपो भक्तियोगोऽनुगृह्णातीत्यर्थः । यस्तु फलप्राप्तौ सत्यां न साधनोपयोग इति मत्वा ज्ञानं भक्तिं च त्यक्त्वा केवलब्रह्मानुभव एवोद्यतः स्यात् स एकोऽपि मुख्योऽपि ज्ञानिसहस्रगुरूभवन्नपीत्यर्थः । चिरं विचिन्वन् बहुशास्त्राभ्यासयोगाभ्यासाभ्यां विचारयन्नपि ॥ २९ ॥

भो ब्रह्मन् ! साध्यसाधनतत्त्वज्ञशिरोमणे ! स्तुत्यैव व्यञ्जितब्रह्मायोर्भक्तिज्ञानयोर्मध्ये तव कुत्रस्पृहेत्यत आह—तदस्त्विति हे नाथेति सम्बोधनेनैव व्यञ्जितायां सत्यामपि दास्यस्पृहायां भो ब्रह्मन् ! उत्कर्षनिकर्षौ सम्यक्तया विचार्यैव सर्वोत्कृष्टं वस्तु स्पष्टं प्रार्थयस्वेति चेत् स एव भूरिभागो महदेव भाग्यं मनसा निर्द्धारितमेव वर्त्तत इतिभावः । येन भूरिभागेन अत्र भवे ब्रह्मजन्मनि वा तिरश्चामपि मध्ये यज्जन्म तस्मिन् वेति ब्रह्मजन्मारभ्य तिर्यग्योनिपर्यन्तं यावन्ति जन्मानि सम्भवन्ति तेष्वपि क्वापि जन्मनीति भावः । गजो गृद्ध्रो वणिक्पथ इति वचनात्तिर्यग्योनावपि भक्तिश्रवणात् तिरश्चामपीति बहुवचनेनापि शङ्खेन च मोक्षाय जलाञ्जलिं दत्वा स्वस्य अत्रार्थे सहस्रजन्मप्रार्थनापि व्यञ्जिता भवदीयानां जनानां मध्ये एको यः कश्चिदपि नितरां साधकत्वसिद्धत्वयोर्दशयोः सेवे तदेवं गोमीड्य ! ते इत्येकेन माधुर्यम् अस्यापि देवेत्यादिभिस्तदस्तु मे नाथेत्यन्तैः पद्यैरैश्वर्यं विवृतवता ब्रह्मणा तन्मध्य एव ज्ञाने प्रयासमिति तत्तेऽनुकम्पामित्याभ्यां केवलायाः भक्तेरुत्कर्षः "त्वामात्मानं परं मत्वेति, अजानतां त्वत्पदवीम्"इत्याभ्यां केवलज्ञानस्याक्षेपः श्रेयःसृतिमिति पुरेह भूमन्नित्याभ्यां केवलयोर्ज्ञानभक्त्योः क्रमेण वैफल्यसाफल्ये अन्तर्भवे ऽनन्तेति अथापि ते देवेत्याभ्यां भक्तिमिश्रं ज्ञानम् एवम्विधं त्वां सकलात्मनामित्यनेन शान्तभक्तिः तदस्तु मे इत्यनेन दास्यभक्तिश्चाभिप्रायि अतः परन्तु माधुर्यसिन्धावेव निपतिष्यता ब्रह्मणा अहो ऽतिधन्या इत्यादिभी रागात्मकवात्सल्यादिरतिमन्त एव स्तोष्यन्ते इति स्तुत्यर्थतात्पर्यनिष्कर्षः ॥ ३० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यपि साक्षात्परमपुरुष एव सर्वदृग्गोचरतया स्थितोऽथापि भगवन्महिम्नस्तत्त्वं ते पदाम्बुजद्वयप्रसादलेशानुगृहीत एव जानाति अन्यस्तु एकोऽपि उपायदेषु मुख्योऽपि चिरं विचिन्वन्न जानाति अनेन भगवत्पदाम्बुजद्वयप्रसादलेशस्यैव भगवज्ज्ञाने मुख्यहेतुत्वमुक्तम् ॥ २९ ॥

हे नाथ, प्रार्थनीय ! तस्मात् अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये अन्यत्र मनुष्यादौ वा यज्जन्म तस्मिन् येन भूरिभागेन तत्रैषां ते पदाम्बुजद्वयप्रसादलेशानुगृहीतानां भवज्जनानां भागवतानां मध्ये एकोऽपि यः कश्चिदपि भूत्वा तव पादपल्लवं निषेवे नितरां सेवेयं स भूरिभागः महद्भाग्यं मे ममापि अस्तु ॥ ३० ॥

---

### भाषा टीका ।

या प्रकार के तत्त्व जानबे वारो विवेकी कौन होय सकें । तहां कहे हैं, कि—यद्यपि बहुत सज्जन संसार को प्राप्त होवें हैं

अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ।
यासां विभो ! वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥ ३१ ॥
अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥ ३२ ॥

### भाषा टीका ।

बहुतेरे विवेकी जन संसार को तरें हैं, तथापि हे देव ! आपके दोनों चरणकमल के प्रसाद लेश मात्र के अनुग्रहपात्र जो जन हैं, वोई आप की महिमा के तत्त्व को जान सकें हैं । और जो अनुग्रह पात्र नहीं भयो सो तो अकेले निर्जन देश में बहुत काल ताईं ढूंढतो २ भी नहीं जान सके है ॥ २९ ॥

तब भगवान् को अनुग्रह कौन तरियां होय सके, तहां कहें कि—आपके भक्तजनों के सत्संग सों होय सके, सोई भक्तजनन के सत्संग की प्रार्थना ब्रह्माजी करें हैं, कि—हे नाथ ! येई मेरो बडो भाग्य होय कि—मैं याई जन्म में अथवा और कोई ब्रह्मापने सें दूसरो जन्म लेके, अथवा तिर्यग् जंतुन में हू जन्म लेके याई ब्रज में अथवा और ठौर एक कोई भी होयके आपके अनुरक्त भक्तजनो में मिलके आपके श्रीचरणकमलन की सेवा करूं ॥ ३० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

देवादिजन्मनोऽपि यत्र कुत्रचित्त्वद्भक्तिमज्जन्मैव श्रेष्ठमित्यौत्सुक्येन सप्तभिः श्लोकैरभिनन्दति—अहो इति, धन्या इत्यादिभिः । व्रजगोरमण्यः व्रजस्था गावो रमण्यो गोप्यश्च, ते त्वया वत्सतरात्मजात्मनां वत्सानामात्मजानां च रूपेण यस्य तव तृप्तये सर्वेऽपि यज्ञा अद्यापि न शक्तास्तेन त्वया प्रतिक्षणं तृप्यता यासां स्तन्यममृतरूपं पीतमिति ॥ ३१ ॥

अहो इति, पुनरुक्त्या भाग्यस्य सर्वथाऽपरिच्छिन्नत्वमुक्तम् ॥ ३२ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तत्र च श्रीनन्दव्रजजनैः सदृशीं भक्तिं तेषां पादपल्लवनिषेवां वा प्रार्थये इत्याशयेन, तथा "मधुरेण समापयेत्" इति न्यायेन, तथा भगवतः प्रियजनानां माहात्म्यवर्णनमेव तस्य परमा स्तुतिरित्यभिप्रायेण च तानभिनन्दति—अहोऽतीति द्वाभ्याम् । अहो आश्चर्ये अयेति माङ्गल्ये अतिधन्याः कृतार्थतापरमकाष्ठाङ्गता इत्यर्थः । रमयन्ति स्तनदानेन त्वां तर्पयन्तीति रमण्यः यस्य तव तृप्तये तुष्ट्यै । विभो, हे सर्वथा परिपूर्ण ! तथापि पीतं तव अतीव अत्यन्तं तत्र च मुदा तत्रापि वत्सवत्सपरूपेण साक्षात्त्वया पीतमित्यतीतनिर्देशो भगवता तत्तन्निजरूपसम्वरणात्, अद्यापीति । पूर्वतोऽद्यपर्यन्तमित्यर्थः । यद्वा, सम्प्रति बाल्ये प्रकटितेऽपि ॥ ३१ ॥

न केवलं स्तन्यदायिन्यस्ता एव धन्याः किन्तु श्रीनन्दादयः सर्वेऽपि व्रजवासिनोऽतिधन्या इत्याह—अहो इति । श्रीम[...] परमहर्षेण भाग्यातिशयाभिप्रायेण वा नन्दगोपस्य व्रजे [...] निवासो येषाम् । यद्वा, नन्दश्च गोपाश्च अन्ये च व्रजौकसः [...] पक्ष्यादयः सर्वे तेषां किं वक्तव्यं नन्दस्य भाग्यम्, अहो [...] नामपि सर्वेषां परमभाग्यमित्येवमत्र कैमुतिकन्यायोऽभिप्रायः [...] येषां मित्रं बन्धुस्तं तत्र च परम आनन्दो यस्मादिति [...] चिच्छोकदुःखादिकं सुखाल्पत्वं च निरस्तं पूर्णमिति [...] कारापेक्षकत्वादिकं ब्रह्मव्यापकमिति कुत्रचिदल्पत्वं [...] तनं नित्यमिति कदाचिदप्यप्राप्यत्वम् । यद्वा, पूर्णं ब्रह्म त्वं [...] मित्रं सनातनं नित्यमित्रतयैव नित्यं वर्त्तमानमित्यर्थः । [...] केवलमापत्त्राणादिकरं किन्तु परमानन्दप्रदं चेत्याह, परमा[...] परमानन्दस्वरूपम् । यद्वा, आनन्दं परं केवलं मित्रं न तु [...] विरूपं प्रेमविशेषहान्यापत्तेः । यद्वा, पूर्णं ब्रह्मापि त्वं [...] गोपव्रजौकस एव मित्राणि यस्य तथाभूतमसि नपुंसक[...] ब्रह्मविशेषणत्वात् श्रीभगवत्प्रियतमानामपि श्रीराधादीनां [...] त्वं तदानीं बाल्ये तद्रक्षाप्रवृत्तेः किंवा पुत्रत्वादिना [...] परमगोप्यत्वाद्वा व्यक्तं न वर्णितम् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, भवेयं नाम सर्वपूर्णस्त्वयापि सेवितुमन्वेष[...] किं तु भवान् परमेष्ठी भज्जनाश्चात्र गोपा गोरक्षका एव [...] कथञ्चिद्यादवादिसङ्ग एव तत्प्राप्तुमर्हिष्यसीत्याशङ्क्य [...] महिमा सर्वतः पर इति तदेकदेशोदाहरणेन व्यञ्जयति, [...] च स्वाभिलाषं सूचयति । अहो इति । प्रथमत एव विस्मय[...] कप्रयोगोऽयमतीवविस्मयेन अतिधन्याः कृतार्थतापरम[...] प्राप्ताः के ते व्रजगोरमण्य इति रमणीशब्देन परमोत्कर्षं [...] स्तन्यदानेन भगवत्सुखहेतुत्वं च व्यञ्जितम् बहुत्वमन्यत्र[...] अपि तथाभाग्यं दुर्लभमिति बोधयति कथं धन्यास्त[...] हे विभो ! परिपूर्ण ! ते त्वयापि यासां स्तन्यामृतं पीतं [...] त्वमेव दर्शयति—अथ कार्त्स्न्ये सर्वेऽप्यध्वरा इत्यर्थः । ते यस्य [...] अद्यापि वेदस्यानादित्वात् तद्विहितानामध्वराणामप्यनादि[...] दनादिकालतोऽद्य पर्य्यन्तं तृप्तये सन्तोषमात्राय नालं न [...] परिपूर्णत्वादेवेति भावः । तथा भूतेनापि पीतमित्यनेन अन्यासु [...] नोपि यज्ञभागमात्रोपजीविनस्त्वं तु तत्र च तेषु च न [...] तस्मादहो किमिदममृतमिति भावः । तत्रापि [...] तादृशस्यापि तस्य तच्छरीरोद्भवरसविशेषास्वादनमिति [...] पीतमित्यर्थवैशिष्ट्येन स्वयं श्रीमुखे चूषितमिति तत्र [...] स्यनेनालन्तमिति तत्र च मुदेत्यनेन परमामोदपूर्वकमिति [...]

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वरूपेणास्यनेन परमलोभेन कोटिधाभूम्नेत्येवमुत्तरोत्तरचमत्कारवैशिष्ट्यं बोधयति ॥ ३१ ॥

किञ्च, न केवलमस्मिन् व्रजे नासामेव परमविशिष्टानां कादाचित्कमेवेदृशं भाग्यं न च कर्मकाण्डमात्रानुसारेण "यन्नृलोकेऽश्वमेध नाकमध्वरा इति यद्वत् भवन्माहात्म्यं मद्विधचमत्कारकरम् अपि तु तद्वासिमात्रेष्वेव नित्यमेव च किमपि तद्विराजते ब्रह्मकाण्डानुसारेण भवन्माहात्म्यमपि न तावन्मात्रतायोग्यमित्यस्यातिशयान्तरमपीति स्मरन्निव पुनरतीव सचमत्कारमाह-अहो इति । अहो आश्चर्यं भाग्यमनिर्वचनीयः तत्प्रमादः वीप्सा तदतिशयिताप्रागल्भ्येन पुनः पुनश्चमत्कारावेशात् ननु, कथं प्रथमतश्चमत्कारमात्रं व्यञ्जयसि येषां तत् तान् कथय ? तत्राह, श्रीमन्नन्दराजव्रजवासिमात्राणां पशुपक्षिपर्यन्तानां कथमाश्चर्यं कथं वा भाग्यं तत्राह, परमानन्दं यत् तदेव येषां मित्रं स्वाभाविकबन्धुजनोचितप्रेमकर्तृ तादृशप्रेमविषयश्चेत्यर्थः । तथा च वक्ष्यते श्रीगोपैः "दुरत्ययश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् । नन्द ! ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम्" इति आनन्दस्य फलीभूतत्वं छान्दसं तेन च "विज्ञानमानन्दं ब्रह्म" इति श्रुतिवाक्यं तत्सूचयति, यत्र क्वाप्यानन्द एव खलु सर्वं तादृशप्रेमकर्त्तारो दृश्यन्ते न त्वानन्दः कुत्रचित् एषु त्वानन्दोऽपितत्कर्त्ता तत्र च श्रुतिमात्रवेद्यत्वेन परमः खण्डामृततारतम्यवत् स्वरूपत एवालौकिकमाधुर्यः अत आश्चर्यं भाग्यं चेति भावः । अन्यदप्याश्चर्यमयमिदमित्याह—सनातनं तत्तादृशमपि नित्यं कस्यचित् क्षुद्रानन्दोऽपि न नित्यो दृश्यते एषां तु तादृशोऽपीति पुनः कथम्भूतम् "अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयति च" इति श्रुतेः । "बृहत्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदुः" इति विष्णुपुराणाच्च बृहत्तमत्वेन ब्रह्म सङ्ख्यमपि "अथानन्दस्य मीमांसा भवति" इत्यारभ्य "ते ये शतम्" इति वारं वारं मनुष्यानन्दान्तपर्यन्तानन्दं दशधा शतशतगुणाधिक्येन गणयित्वा ततोऽपि शतगुणमानन्दं परब्रह्मणोऽप्यपि सम्भ्रमेण "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्यनेनानन्त्यं स्मृत्वा वाङ्मनसातीतेन सर्वतो बृहत्तमत्वेन श्रुतिभिर्गीतमपीत्यर्थः । तत आनन्दस्यैतादृशत्वमेतादृशवृन्दोऽन्यनेन मित्रत्वं क्वचित् दृष्टमिति भावः । न चैतावदेव किं तर्हि पूर्णमपि अमृतं सौरभ्यादिभिरिव स्वाभाविकरूपगुणलीलैश्वर्यमाधुरीभिः सर्वाभिरेव पूरितं सत् एतदपि कुत्रापि न दृष्टं श्रुतं न च तादृशं मित्रमित्यर्थः अत्रापरोक्षेऽपि श्रीकृष्णे परोक्षवन्निर्देशः कौतुकविशेषाय । किञ्च, मित्रत्वमत्र विधेयं परमानन्दमनूद्यं ततश्चानूद्यधर्मविधेयवैशिष्ट्याय प्रयुज्यन्ते इति मित्रताया अपि तत्तद्भावो लभ्यते मनोरमं सुवर्णमिदं कुण्डलं जातमितिवत् युज्यते च अनूद्यस्य विधेय तादात्म्यापन्नत्वेन विवक्षितत्वात् तत्र परमानन्दत्वं पूर्णत्वं च तस्याः सिद्धमेव, तत्प्रेमरूपत्वात् सनातनत्वमपि तस्य सनातनत्वात् निरुपाधिकत्वेनोक्तत्वात् कालवैशिष्ट्यानिर्देशेन कालसामान्यलाभात् अन्यत्र श्रीरुक्मिण्यादौ दृष्टत्वात् एषामपि तथैव श्रुतितन्त्रादौ दृष्टत्वाच्च एवं पूर्ववत् श्रीकृष्णस्य एवं भगवत्त्वमपि दर्शितं तथा निजाभिलाषस्य युक्तता चेति ॥३२॥

---



श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं सर्वशास्त्रप्रमाणकं प्रपत्तिवैभवं प्रख्याप्य प्रपन्नानां भगवान् वशीकृतोऽतिसुलभो भवतीत्याह-अहो इति । अहो इत्याश्चर्ये अतिधन्या इति अत्यन्तं धन्याः द्वाभ्यां धन्याश्चर्योपाख्यानं हरिवंशकथं स्मारितं व्रजस्था गावः रमण्यः गोप्यः कुतो धन्या अत आह, हे विभो ! चिदचिद्व्यापक ! ते त्वया वत्सतराणां शरीरधारकेण गवां गोप्यात्मजशरीरेण च गोपीनां स्तन्यामृतं दुग्धरूपममृतं अतीव मुदा महताऽऽनन्देन पीतं यत्तृप्तये यस्य तव तृप्तये अध्वराः अग्निष्टोमादयोऽश्वमेधान्ताः अद्यापि अलं समर्था न भवन्ति श्रीभगवद्वशयितृत्वं प्रपत्तेरसाधारणं लक्षणम् ॥ ३१ ॥

अथ यत्तत्त्वं ममापि दुर्लभं दुर्ज्ञेयं तदेषां सुलभं सुज्ञेयं स्वरूपरूपगुणविभूत्यादिकमभूदिति सरोमाञ्चाश्रु प्राह-अहो भाग्यमहोभाग्यम् इति । पुनरुक्त्या भाग्यापरिच्छेद्यत्वम् उक्तं नन्दगोपसम्बन्धिव्रजवासिनाम् अथवा नन्दश्च गोपाश्च व्रजवासिनश्च वृक्षभूमिलतागिर्यादयः तेषामहो आश्चर्यं महद्भाग्यमिति यन्मित्रं शरणागतिवशीकृतमित्यर्थः । मित्रपदं श्रीरामायणे शरणागतिभावद्योतकम् उक्तं श्रीरामचन्द्रेण विभीषणं प्रति—

"मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्" ॥

इति । श्रीकृष्णचन्द्रोदयऽग्रे वक्ष्यति "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः" इति परिग्रहः भार्येति भार्या मित्रमिति न्यायात् अतः शरणागतिवशितः सः सुलभत्वेन येषां सर्वतो हितकारीति तत्र परमानन्दविषयप्रयोजनेन मैत्रीभङ्गरहितम् एतच्चान्तर्धानानन्तरम् इति रहस्यं यद्यपि गोचारणाविना श्रीकृष्णविश्लेषदुःखं गोपादीनाम् अस्ति, तथापि "वियोगे तन्मयं जगत्" इति न्यायेन तच्चिन्तनारसास्वाद्दर्शनादानन्दप्राप्त्या सुखमेव प्राकृतमित्रे तु न तथेति विभाव्यम्, एवं पूर्णत्वब्रह्मत्वव्यापकत्वज्ञानेन मथुराद्वारकावासिन्यपि तस्मिंस्तेषां विश्लेषदुःखं नाऽभूदेव एवश्च प्राकृतमित्रव्यवच्छेदः तत्र सनातनं परव्योमाधिपश्रीमतो नारायणभगवत एव स्वामिनः लीलाविभूतौ स्वेच्छयाविर्भावात् सनातनत्वमनादित्वम् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चतुर्मुखजन्मतोऽपि यत्र कश्चित्त्वज्जनसङ्गिजन्मैव श्रेय इत्यौत्सुक्येन नन्दगोपगोपिकादीनभिनन्दति—सप्तभिः अहो इति । व्रजस्य गावो रमण्यो गोप्यश्चातिधन्याः कुतः ? इत्यत्र ता विशिनष्टि, यासां व्रजगोरमणीनां स्तन्यामृतं वत्सरूपेणाऽऽत्मजरूपेण च त्वयातीव पीतं यस्य विभोस्तव तृप्तयेऽध्वराः सर्वे यज्ञाश्च नालं न पर्याप्ताः तेन त्वयेत्यन्वयः ॥ ३१ ॥

नन्दादीनां भाग्यमहो कुतः ? यतः निरतिशयानन्दं सर्वव्यापकं सनातनं ब्रह्म मित्रमभूत् ॥ ३२ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

तदेवोपपादयति—अहो इति । अहो इति हर्षे व्रजगोरमण्यः नन्दव्रजगावो गोपिकाश्चातिधन्याः अस्माभिरपि अतिशयेन श्लाघ्याः कथमित्युक्ते । हे विभो, निरुपाधिकस्वामिन् ! यासां स्तन्यामृतं दुग्धामृतं ते त्वया वत्सतरात्मजात्मना वत्सतररूपेणात्मजरूपेण चातीव मुदा अतिहर्षेण तृष्णापूर्वकमिति यावत् पीतम् उपयुक्तं यत्तृप्तये यस्य तव प्रीणनाय अद्यापि मन्त्रमारभ्य अद्य पर्यन्तम् अध्वरा यज्ञा मखमारभ्य सर्वैः कृता मखा न चालं न समर्था इत्यर्थः । ननु, देवादिभिर्भगवदाराधनरूपे यज्ञे आहूतो विष्णुरायात्येव स्वभागार्थमिति कथमुच्यते नालमिति चेत्सत्यम्, यद्यपि सर्वकर्मफलप्रदो विष्णुस्तत्तत्फलदानार्थमायाति स्वपूजां गृह्णाति तथापि तत्र अतितृप्तिरलंबुद्धिर्न जाता इति दृष्टञ्च लोके प्रसिद्धमिति भावः ॥ ३१॥

किञ्च, चतुर्मुखेन मयाऽप्येतेषां भाग्यमहिमा वर्णयितुमशक्य इत्यत्यादरेणाभिनन्दतीत्याह—अहो भाग्यमिति । नन्दगोपव्रजौकसाम् अहो भाग्यम् इत्यत्यादरे वीप्सा कथमित्युक्ते येषां मित्रं ब्रह्म आसीदिति शेषः । ननु, परस्परोपकारकत्वं मित्रत्वमिति तेषामुपकारापेक्षया मित्रं किमिति नहि नहीत्याह—परमानन्दमिति । परमानन्दसन्दोहं यद् ब्रह्म तदेव निरपेक्षमेवेत्यर्थः । ननु, परमानन्दसन्दोहो मुक्तोऽपि भवतीति स एव किमिति चेन्न, सनातनं पूर्णमिति सदापूर्णं मुक्तस्य बद्धावस्थायां न्यूनानन्दो जातः अस्य तु सदा स्वतः पूर्णत्वमिति भावः । तथाचोक्तं संविस्सिद्धौ—

"तथा सुरासुरनरब्रह्माण्डशतकोटयः ।
क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः ॥
ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः ।
विष्णोर्विभूतिमहिमसमुद्र इव विन्दवः" ॥

इति श्रीयामुनाचार्यचरणैः ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क ते भवत्साहित्ययोग्या मज्जनाः ? इत्याशङ्क्य तानेव व्यञ्जयितुमाह—अहो इति । यद्वा, अहो इति न केवलमत्र तासामेव(इयं) श्री भाग्यं तच्च तद्वत् कादाचित्कमेव नच यत्तृप्तये इति यदेव भवन्माहात्म्यम् अपि तु तद्वासिमात्रेष्वेव नित्यमेव च किमपि तद्विराजते ॥ ३१ ॥

भगवन्माहात्म्यमपि न तादृशतायोग्यमित्यस्ति अतिशयान्तरमपीति स्मरन्निव पुनरतीव चमत्कारमाह—अहो इति । अहो आश्चर्यं भाग्यमनिर्वचनीयस्तत्प्रसादः वीप्सा तदतिशयताप्रागल्भ्येन पुनः पुनश्चमत्कारावेशात् केषां तत्राह, नन्दगोपव्रजौकसां व्रजस्थमात्राणां पशुपक्षिपर्यन्तानां किं तत् येषां परमानन्दं मित्रं स्वाभाविकबन्धुजनोचितप्रेमकर्तृ फलीयस्थं छान्दसं तेन च "विज्ञानमानन्दं ब्रह्म" इति श्रुतिवाक्यं तत् सूचयति, यत्किञ्चिदानन्द एव खलु सर्वं तादृशप्रेमकर्त्तारो दृश्यन्ते तत्रानन्दः कुत्रचित् एषु त्वानन्द एव तत्कर्त्ता । तत्र च श्रुतिमात्रवेद्यत्वेन परमखण्डाऽमृततारतम्यवत् स्वरूपत एवालौकिक-

माधुर्यात् न चैतावदेव किं तत् पूर्णमपि अमृतं सौरस्या… स स्वरूपत गुणलीलैश्वर्य माधुरीभिः सर्वाभिरेवाभवां… सत् एतदपि कुत्रापि न दृष्टं श्रुतञ्च न च तादृशं मित्रमि… पुनः कथम्भूतमपि ब्रह्म आनन्दागन्त्येन सर्वतो … आनन्दस्य तादृशबृहत्त्वं तादृशबृहतोऽप्यन्येन मित्रत्वं … दृष्टमिति भावः । अन्यदप्याश्चर्यमिदमित्याह, सनातनं तथा… मपि नित्यं कस्यचित् क्षुद्रानन्दोऽपि न नित्यो दृश्यते … तादृशोऽपीति ॥ ३२ ॥

———

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु, त्वं ब्रह्माण्डाधिकारी जगत्कर्त्ता कथं मद्व्रज… मध्ये यः कश्चिदपि भवितुमभिलषति मैवं वादीः भवज्जनानां … सौभाग्यं तथा न केषामपीति सश्लाघ्यं तानभिनन्दति, अहो… धन्या इत्यादि । अहो अहो आश्चर्यं सन्धिरार्षः, व्रजगो… गोरमण्यो धेनवश्च अतिधन्याः कुतः ? यासामुभयीषां वत्स… त्मजात्मनेति यथायोगं योजनीयं गोरमणीनां वत्सतरा… व्रजरमणीनाम् आत्मजात्मना ते त्वया स्तन्यामृतं पीतं … मुदा अत्यन्तहर्षेण । ननु, मम यथा तथैव हर्षो भवति स्त… मृतपानात् यद्धविष्यमि तत् किं नैवं यत्तृप्तयेऽद्यापि … नालं न समर्थाः तस्मात्तासां भाग्यातिशयं किं ब्रूम इति ॥ ३१ ॥

नन्वस्तु तावत्तासां भाग्यं तथानेन किमायातं भवज्ज… मध्ये एकोऽपि भूत्वा तव पादलग्नं निषेवे इति … तत्रेदं नोपयुज्यते सत्यम्, अहन्तु व्रजौकसां … यः कश्चिदपि भूयासमिति व्रजौकोमात्रमेव स्तौमीत्या… "अहोभाग्यमहोभाग्यम्" इत्यादि, अतिशयविस्मये वीप्सा … येषां नन्दगोपव्रजौकसां पूर्णं ब्रह्म श्रीकृष्णाख्यं मित्रं सुहृ… प्रहतया पूर्णं घनम् अतः सनातनं परम आनन्दो यत्र … सनातनं मित्रं नहीदानीन्तनमेव अपि तु त्रैकालिकम् एतेषा… त्रिकालसिद्धत्वात् ॥ ३२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वप्रार्थनामुक्त्वा गोकुलवासिनां भाग्यमभिनन्दति… इति, व्रजे स्थिता गावो रमण्यश्च धन्याः यतस्ते त्वया स्तन्या… पीतमत्यर्थं सन्तोषपूर्वकञ्च तत्र प्रकारमाह—यासां गोरमणीनां व… तरात्मना आत्मजात्मना च विभो ! सर्वभवनसमर्थ ! कथमेता… भाग्यमित्याशङ्क्याह—यत्तृप्तय इति । यस्य भगवतः तृप्तये अद्य… अध्वराः यागाः नालं न समर्थाः ॥ ३१ ॥

किञ्च, न केवलमेतावन्मात्रमेव किन्त्वन्यदपि … त्याह—अहोभाग्यमिति । पूर्वकाण्डस्याऽप्रयोजकता स्वतः … पानेन कृता उत्तरकाण्डस्याप्यप्रयोजकतां कृतवानित्यु… यद्ब्रह्ममित्रमिति ब्रह्म हि सर्वसमं मित्रं हि विषमः … स्मरणाद्धितद्दूरीकरणाच्च भगवांस्तु ब्रह्मापि सन् तेषां … जातः तत्प्रतिपक्षान् हन्ति तांश्च सर्वतः परिपालयतीति … भाग्यमहो भाग्यमिति वीप्सया पुनः पुनर्भाग्यस्मरणं … नन्दगोपस्य व्रजे ये तिष्ठन्ति तेषां सर्वेषामेव, अथवा … नन्दस्य भाग्याभिनन्दनं ततो गोपानां ततो व्रजौकसां…

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

क्रमोपपत्तिः स्पष्टैव । किञ्च, नोपकारेणैव तेषां कृतार्थता किन्तु स्वयमानन्दरूपः फलात्मा स्वरूपानुभवं कारयति—तदाह, परमानन्दं पूर्णं सनातनमिति। अनन्तः परिच्छेदरहितो ह्यानन्दः फलमिति ॥ ३२ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी।

स्ततोऽपि व्रजभक्तानामुत्कर्षमालक्ष्य तानभिनन्दति—अहो इति सप्तभिः। व्रजस्था गावो रमण्यो गोप्यश्चातिधन्या अतिकृतार्थास्तत्राप्यहो इत्याश्चर्याभिधायकपदेन तासां कृतार्थताया वाङ्मनसागोचरत्वं सूचयति—कुत एवमित्यपेक्षायामाह—यतस्ते त्वया वत्सतरात्मजात्मना वत्सानामात्मजानां बालानां च स्वरूपेण यासां गोगोपीनां स्तन्यं दुग्धम् अमृतवत्स्वादु(मा वा)अतीव अत्यर्थं सन्तोषपूर्वकं मुदा हर्षेण स्वाग्रहेण पीतमिति। ननु, कथमेवं मत्कर्तृकदुग्धपानमात्रेण तासां कृतार्थतेत्यत आह—यदिति । यस्य परमपुरुषस्य तव तृप्तयेऽद्यापि अनादिकालतः प्रवृत्ता अध्वर्यन्तमपि सर्वेऽध्वरा यज्ञा नालं समर्था न जातास्तस्य तव यासां दुग्धपानेन तृप्तिर्जाता तासां कृतार्थतायां कः सन्देहः इत्यर्थः । यज्ञैस्तृप्त्यभावे महत्त्वं हेतुं सूचयन् सम्बोधयति—विभो इति ॥ ३१ ॥

एवं पूर्वकाण्डार्थसम्पत्त्या तेषां कृतार्थतोक्ता इदानीमुत्तरकाण्डार्थसम्पत्त्यापि तेषां कृतार्थतामाह—अहोभाग्यमिति। नन्दगोपस्य यो व्रजस्तद्वौकसां सर्वेषामहोभाग्यमहोभाग्यमिति पुनरुक्त्या तेषां भाग्यस्य सर्वथाऽपरिच्छिन्नत्वं सूचयति, तत्र हेतुमाह—यदिति। पूर्णं ब्रह्म येषां मित्रं मित्रतया वर्तते परमानन्दमिति फलरूपत्वमुक्तम्, फलीयत्वमार्यम्, पूर्णमित्यंशत्वव्यावृत्तिः, सनातनमिति जन्मादिविकाररहितत्वम्, अत्र परं ब्रह्म हि सर्वसमं भवति मित्रत्वं च हिताचरणादि तद्दूरीकरणादिरूपं वैषम्यं तथा च येषां प्रेमवशात् स्वभावमपि साम्यं परित्यज्य विषमतया वर्तते तेषां भाग्यमहिमा केन वक्तुं शक्यत इति भावः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किं च तत्र त्वद्भक्तेष्वतिनिकृष्टस्य——ममैतावत्येव प्रार्थना समुचिता त्वत्प्रसादात् फलवती भूयात् ये तु त्वद्भक्तेष्वतिप्रकृष्टास्तेषां त्वयि शुद्धवात्सल्यादिरतिभाजां पदवी प्रार्थयितुमयोग्या अस्मदादिभिरतिदुर्लभा केवलं स्तूयते एवेत्याह—अहो इति द्वाभ्याम्। व्रजस्था गावो रमण्यो गोप्यश्चातिधन्यास्तत्राप्यहो इत्याश्चर्याभिधायकपदेन वाङ्मनसाऽगोचरचमत्कारातिशयो व्यञ्जितः तमेवाह—ते त्वया सच्चिदानन्दस्वरूपेणापि यासां स्तन्यं देहैकावयवस्तनोद्भवम् अमृतं पीतं तत्रापि मुदा तत्राप्यतीवेति पुनः पुनः पानेऽपिमुदः प्रतिक्षणवर्धिष्णुत्वमेव तत्रापि गवां वत्सतरात्मनेति दोहनादिव्यवधानस्यासह्यत्वं गोपीनामात्मजात्मनेत्यन्यथा तत्राप्यभावः तत्रापि विभो! इत्यतिलोभात् स्वस्य बहुस्वरूपीकरणेनेति तासां मध्ये एकस्या अप्येकस्तनोत्थोरसोऽपि त्वया त्यक्तुमशक्य इत्यानन्दमात्रस्वरूपस्य तवाप्यानन्दकत्वात्तासां वपुषः सच्चिदानन्दत्वे को नाम संशेरते इति भावः। यस्य तव तृप्तये "तृपप्रीणने" यं त्वां प्रीणयितुमित्यर्थः अद्यापि। अनादिकालतः प्रवृत्ता अद्यपर्यन्ता अपि सर्वेऽपि यज्ञा अस्मदादिकृता मन्त्रा अनुष्ठानपाविध्याद्यधिकला अपि नालं न समर्थाः ॥ ३१ ॥

रागात्मकवात्सल्यप्रेमवतीः स्तुत्वा रागात्मकसख्यप्रेमवतः स्तुवन्नेव तन्नेयां वात्सल्यादिसर्वरतिमतोऽप्युपश्लोकयति—अहो भाग्यमहोभाग्यमिति। वीप्सा अत्यानन्दचमत्कारेण परमानन्दमिति फलत्वमार्यं तेन च "सत्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतिवाच्यं ब्रह्म सूचयति-परमपदेन श्रीकृष्णस्य तत्प्रतिष्ठाभूतत्वं पूर्णपदेन ब्रह्मस्वरूपाणामंशावताराणां व्यावृत्तिः एतादृशं ब्रह्म येषां श्रीदामादिबालकानां मित्रं सखा मित्रत्वस्य तत्कालमधरत्वं वारयन् विशिनष्टि, सनातनं सर्वकालिकमिति मित्रत्वस्य सार्वकालिकत्वे न श्रीदामादीनामपि सार्वकालिकत्वं ज्ञापितम् अयं तूत्तमो ब्राह्मण इत्युक्ते ब्राह्मणत्वस्यैवोत्तमत्वात्तद्विशिष्टोऽप्युत्तम इति वदत्रापि मित्रत्वस्यैव सनातनत्वं विवक्षितं तथा मित्रशब्दस्य बन्धुमात्रवाचकत्वादेवं च व्याख्येयं श्रीमन्नन्दराजव्रजवासिमात्राणां पशुपक्षिपर्यन्तानां सर्वेषामेवाहो भाग्यमहो भाग्यं किं पुनर्नन्दस्य तस्य तदीयगोपानां च किं तत् येषां वात्सल्यादिसर्वनिधिप्रेमवतां परमानन्दं ब्रह्म सनातनं मित्रं बन्धुः बन्धुत्वोचितप्रीतिकर्तृ यद्वक्ष्यते गोपैः "दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम्। नन्द! ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम्"इत्यत एषु व्रजवासिष्वौत्पत्तिकानुरागेणैव पूर्णं ब्रह्मेत्यर्थं भायात: तेन परमानन्दमप्यानन्दयन्ति व्रजवासिन इति । सच्चिदानन्दमया एवाऽथ च परमविस्मयरसविषयीभूता इति ध्वनितम् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्रापि भगवदनन्यभक्तगोगोप्यादिपादरेणुरञ्जिते व्रजे किमपि जन्म मे भवत्विति प्रार्थयितुमाह—अहो इत्यादि। ते त्वया यज्ञस्य ॥ ३१ ॥

यत् येषां पूर्णं ब्रह्म सनातनम् मित्रम् मिन्दयतीत्यर्थोनिति मित्रं मिन्देर्धातोरूपम् मिनुते मानं करोतीति मित्रम् मानार्थस्य मिनुतेर्वा मोदते ऽस्य सुखेनेत्यर्थस्य मोदतेर्वा ॥ ३२ ॥

---

### भाषा टीका।

अहो! व्रजकी गैया और गोपी तौ अति धन्य हैं, काहे सौं, कि—जिनको स्तन्यामृत ( जिनके स्तनन को दूध ) बछरा और बालक होयकें, हे विभो! आपने खूबही पियो सोभी बडे आनन्दसौं पियो, जिन आपकी तृप्ति करबे कूं अब ताई बडेर यज्ञ यागादिक समर्थ नहीं भये ॥ ३१ ॥

एषां तु भाग्यमहिमाच्युत ! तावदास्तामेकादशैव हि वयं बत भूरिभागाः ।
एतद्धृषीकचषकैरसकृत्पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥ ३३ ॥
तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ।
यज्जीवितं तु निखिलं भगवान्मुकुन्दस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ ३४ ॥

भाषा टीका ।

और हे प्रभो ! साचीं पूछो तौ नन्दगोपके व्रजमें वसवे वारे व्रजवासिनको मित्र होय रह्यौ है, अर्थात् आप जिनके मित्रहो उनके वडभागी पनेकूं कहांतक वर्णन करें ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च एषां भाग्यस्य तावन्महिमा आस्तां कस्तं वक्तुं शक्नोति शर्वादयः शर्वोऽहङ्काराधिष्ठाता आदिर्येषां चन्द्रादीनामेकादशानां ते तथा वयं च वयमित्यात्मानमेव बहुमन्यमान आह एवं मनोबुद्ध्यहङ्कारचक्षुराद्यधिष्ठातारस्त्रयोदश देवा एव तावद्बताहो भूरिभागाः यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पानपात्राणि तैस्ते चतुर्दशस्य चित्ताधिष्ठातुरङ्घ्री एव उदजे वारिजे तयोर्मधु मकरन्दस्तदेवामृतं स्वाद्वासवं मादकं पिबामः । एतदुक्तं भवति यदा प्रत्येकमिन्द्रियाभिमानिनो वयं कीर्तिसौन्दर्यसौगन्ध्याद्येकदेशसेविनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेविनामेतेषां किं वर्ण्यते भाग्यमिति ॥ ३३ ॥

अतो मया प्रार्थितं " तदस्तु मे नाथ स भूरिभागः" इति यत्तदेतदेवेत्याह, तद्भूरिभाग्यमिति । किं तत् इह मनुष्यलोके यत्किमपि जन्म तत्राप्यटव्यां यत्तत्रापि गोकुले यत् अहो सत्यलोकं विहायात्र जन्मनि जाते को लाभोऽत आह-अपि कतमाङ्घ्रिरजोऽभिषेकमिति । गोकुलवासिनां मध्येऽपि कतमस्य यस्य कस्याप्यङ्घ्रिरजसाभिषेको यस्मिंस्तत् । ननु, कुतो गोकुलवासिन एव धन्यास्तत्राह—यदिति येषां जीवितं निखिलं भगवान्मुकुन्दः मुकुन्दपरमेव जीवनमित्यर्थः । दुर्लभतामाह-अद्यापीति । श्रुतिमृग्यं वेदैरपि मृग्यत एव न तु दृश्यत इत्यर्थः ॥ ३४ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो एषां माहात्म्यं को नाम वर्णयितुं शक्नुयात् वयमप्येषां सम्बन्धेनैव परमकृतार्था जाता इत्याह-एषामिति । तुशब्दः कटाक्षे वाक्यालङ्कारे वा भाग्यमहिता पुनः हेअच्युतेति त्वद्भक्तानामपि भाग्यमहिमा सर्वतोऽच्युत एवेति भावः । अङ्घ्रयुदजमधुश्रीचरणारविन्दमकरन्दं श्रीभगवद्दास्यतदध्यवसायसङ्कल्परूपमित्यर्थः । यद्वा अमृता मृत्युहीना मुक्ताः तेषामप्यासवं परममादकमित्यर्थः । मोक्षसुखादप्याधिक्येन तद्विस्मारकत्वात् एवंभीदृशस्य मधुनोऽसकृत् पानविशेषादन्येभ्योऽपि भक्तेभ्यो व्रजौकसामाधिकं माहात्म्यं दर्शितम् एकादशेति "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इतीन्द्रियाधिष्ठातारो दश मनोऽधिष्ठाता चन्द्रश्चैक इत्येकादश वयमिति बुद्ध्यधिष्ठाता ब्रह्मा शर्वादय इति, तद्गुणसंविज्ञानबहुव्रीहिणाऽहङ्काराधिष्ठाता रुद्रश्च त्रयोदशेत्यर्थः । अन्यत्तैर्व्याख्यातमेव । यद्वा, पायूपस्थयोर्भेदे साक्षादुपयोगाभावात्तदधिष्ठात्रोर्मित्रप्रजापत्योः परित्यागेनैकादश । यद्वा, पुंसां वैष्णवपुत्रोत्पादनादिना योषितां च तत्रत्यानां प्रा... भगवत्साक्षाद्रञ्जनादिना कथञ्चित् प्रजापतेरुपयोगे सति पाद... धिष्ठातोपेन्द्रः श्रीवासुदेवस्य भगवतोऽवतारत्वेन तदभिन्न एवं तद्व्यतिरेकेण एकादशैव सिद्ध्यन्ति यद्यपि सच्चिदानन्द... विग्रहाणां व्रजजनानां तेषामिन्द्रियाद्यधिष्ठातृत्वयोग्याः प्रा... ताश्चन्द्राद्यो देवा न भवन्ति किन्तु सच्चिदानन्दविग्र... श्रीवैकुण्ठवर्त्तिन एव तथापि श्रीवैकुण्ठवासिनां छायारूपत्वेन ... सद्वैपरीत्येनाभेदविवक्षया बहिर्दृष्ट्या वा तथोक्तं तथा च पाद्मो... त्तरखण्डे नित्यवैकुण्ठकथने तत्रत्यदेवानां नित्यत्वम्—

"नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः ।
ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदशेश्वराः" ॥

यद्वा, सर्वातिशायिनीं कृष्णस्य विविधां माधुरीमनुभूय ... चित् केनापि तल्लाभेन स्वेषामेव भाग्यमभिनन्दति-एषामिति एतद्व्रजे प्रथमानं तवाङ्घ्र्युदजमधु हृषीकचषकैः स्वस्वेन्द्रिय... पानपात्रैः पिबामः कथम्भूतम् अमृतासवम् अमृतवन्मधुरम् आसवव... न्मादकं च वयं निर्वृतिवर्जिता लोकपाला नव चन्द्रसूर्यादि... चैकादशेति ॥ ३३ ॥

श्रीनन्दव्रजजनसदृशभक्तीच्छया तत्पादपल्लवनिषेवेच्छया ... तत्प्रतिकूलमुक्त्यादिपञ्चकं इहेत्यादिपदपञ्चकेन निरस्तं ... जन्मेति मुक्तिः इहेति स्वर्गादि किमपीति ब्राह्मणादि म... मिति पुरग्रामादि गोकुल इति तपोवनादि किमपीति क्षुद्र... तृणात्वमभिप्रेतं तत्रैवाङ्घ्रिरजसः सम्यगभिषेकसिद्धेः अभिषेक... शब्देन शिर आरभ्य सर्वाङ्गस्नपनमभिप्रेतं महालोभाद्ध ... ङ्गसाकल्यापेक्षया वा । यद्वा, रजसैकेनाप्यभिषेकं ततश्च रज... सर्वतीर्थमयत्वं सर्वपदस्थापकत्वं च व्यज्यते यस्य पद... श्रुतिभिरप्यद्यापि त्वयि साक्षादत्रावतीर्णोऽपि मृग्यत एव न ... प्राप्यत इत्यर्थः । यतो भगवत्प्राप्त्यर्थमेव "ब्रह्मपुच्छं प्रतिष्ठा" ... विष्णोः परमपदत्वेनैव ब्रह्म प्रशस्यते ज्ञानकर्मादि किं प्रयोज... अन्यथा प्राप्तौ सत्यां साध्यसिद्ध्या साधनत्यागन्यायेन तत्प्रयं... ज्ञानादिबोधनानुपपत्तिः समुकुन्दः मात्रशब्दुर्लभमुक्तिदाता विशेष... भगवान् निजाखिलैश्वर्यप्रकटनपरः यस्य गोकुलस्य सर्वेषां ... तत्रत्यानामित्यर्थः । निखिलं जीवितं चणमपि त्वां विना ... जीव्यत इत्यर्थः । इति परमप्रेमविशेष उक्तः अन्यस्यैर्योग्यता... यद्वा, ननु गोकुलवासिनां कस्यापि पादरजस्पर्शी किमपि जन्म ... न कथं साक्षाल्लोपादि तत्राह-यज्जीवितमिति । अयं सः ... परमप्राचीनमाहात्म्यसर्वज्ञानप्रदश्रुतिदुर्लभे त्वत्पादरजस्यपि प्रा...

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मेऽनुपयुक्ता कुतस्तु प्रेमभरवशीकृतत्वत्पादाब्जक—श्रीगोपादिजन्मप्रार्थनेति भावः ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो एषां माहात्म्यं को नाम वर्णयितुं शक्नुयात् यत्प्रत्येषां सम्बन्धेनैव परमकृतार्था जाता इत्याह—एषामिति । तुशब्दो भिन्नोपक्रमे अङ्घ्र्युदजमधु श्रीचरणारविन्दमाधुर्यं तत्पानं तु तदीयाभिमानाध्यवसायसङ्कल्पदर्शनश्रवणादिरूपं देवताश्च शर्वब्रह्मचन्द्रादिग्वाताऽर्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः । यद्वा, गुह्येन्द्रियद्वयस्यानुपयोगादश्लीलत्वाच्च तदधिष्ठात्रोरग्निप्रजापत्योस्त्यागेनैकादश पादाधिष्ठातोपेन्द्रस्तु तदीयधारणाशक्त्यावेशावतारो देवताविशेष एव कश्चित् चित्ताधिष्ठातारं श्रीवासुदेवं विना तेषां सर्वेषामप्यकर्तुं क्षमत्वेन तृतीयेऽभिधानात् तस्य तु तत्समीपगत्यनुभवसुखं श्रीगोपादीनां स्वयं भगवतो नित्याप्राकृतपरिकरत्वादेतेषां च प्राकृताधुनिकत्वात्तदसम्भवेऽपि तन्नित्यावरणस्थदेवगणाभेदविवक्षयेदमुक्तं तदावेशरूपत्वात्तेषां तथा च पाद्मोत्तरखण्डे—

"नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः ।
ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदशेश्वराः" ॥

इति उभयथापि तस्य च नित्यत्वादित्यत्र करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति शारीरकनिर्णयः श्रीगोपादीनामन्तरङ्गपरिकरत्वेन स्वतः सर्वशक्तित्वमिति श्रीकृष्णोपासनाशास्त्राभिप्रायः पूर्ववदश्लीलपरिहारः सूर्यादीनां नयनादि कोटिभिर्युगपद्दर्शनादिसुखाधिक्यसातत्यपरिहारश्च विरुद्धश्चेत् तत एवं वा व्याख्या श्रीमन्नन्दराजव्रजौकसां तादृशं भाग्यमेव कैमुत्येन स्तोतुं कादाचित्केनापि तन्माधुरीमात्रलाभेन स्वेषामपि भाग्यमभिनन्दति तेन च तादृशनिजाभिलाषमपि द्रढयति एषामिति । एका अद्वितीया अनुपमेत्यर्थः । एतत् व्रजे प्रथमानं तद्वदित्यर्थः । ते तवाङ्घ्र्युदजमधु हृषीकचषकैर्निजनिजचक्षुरादिभिरेव पानपात्रैः शक्त्या भक्त्या च प्राधान्याच्छर्वं आदिर्येषां ते दशदिक्पालदेवता वयमसकृत्पुनः पुनरिहागत्य पिबामः अस्यते च "वन्द्यमानचरणः पथि वृद्धैः" इति "शक्रशर्वपरमेष्ठिपुरोगाः" इति च कीदृशम् अमृतासवं परमस्वादुत्वादिना अमृतं परममादकत्वेन चासवः तयोर्द्वन्द्वैक्यं तद्रूपम् । यद्वा, एते च ते हृषीकचषकाश्च तैः एतच्छब्दप्रयोगश्चात्यन्तचमत्कारेण अमृतामृत्युहीना मुक्ताः तेषामप्यासवं मादकमित्यर्थः ॥ ३३ ॥

तदेवं तेषां महामाहात्म्यमनुवदन् जातदैन्यस्तच्छ्रनानन्तःपातितया स्वचरणसंसेवेच्छामपि धार्ष्ट्येनैवाकरवमिति व्यञ्जयन् यत्किञ्चित्तज्जनचरणरज एव बहुमन्यमानः प्रार्थयते, तदिति । तत्प्रतिकूलमुक्त्यादिपक्षकम् इहेत्यादिपदपञ्चकेन निरस्तं तत्र जन्मेति मुक्तिः इह मथुरामण्डल इति वैकुण्ठादिकमपीति सारूप्यादि अटव्यामिति मथुरादिगोकुल इति मधुवनादि तत्रापि किमपि दूर्वादिस्तृणत्वमित्यभिप्रायः तत्रैवाङ्घ्रिरजोभिः अभ्यगभिषेकसिद्धेः तच्चरणसेवायामन्तरीयाभिलापाच्च आभि-



षेक इति सर्वाङ्गसाफल्यलोभादुक्तम् अन्यत्तैः । यद्वा, ननु कथं साक्षाद्गोपादिजन्मैव न प्रार्थ्यतां तत्राह—यदिति । यस्य गोकुलस्य तद्वासिमात्रस्य निखिलं जीवितं भगवान् मुकुन्द एव तत्र यः स्वयम्भगवान् परात्परत्वात् साधयितुमशक्य इत्यर्थः । साधितोऽपि यो मुकुन्दः प्रायशो मुक्तिमेव दाता न तु भक्तियोगमात्रमपि तमेतं विना मज्जनः क्षणमपि न जीवितुं शक्नोतीत्यर्थः । इति परमप्रेमविशेषपरत्वमुक्तम् आस्तां तावदन्यैर्दुःसाध्यत्वं दुर्लभप्रेमपरत्वं च यस्य पादरजःश्रुतिभिरद्यापि त्वयि साक्षादत्राऽवतीर्णेऽपि एव कतमं रजः कियन्महिमेति ज्ञातुमिष्यत एव न तु तदन्तः प्राप्यत इत्यर्थः । "यतो वाचः" इत्यादिश्रुतेः अतः परमप्राचीनमादृशसर्वज्ञानप्रदश्रुतिदुर्लभे त्वत्पादरजस्यपि प्रार्थना मेऽनुपयुक्ता कुतः पुनः प्रेमभरवशीकृतत्वत्पादाब्जकश्रीगोपादिजन्मप्रार्थनेति भावः । एवम् अहोऽतिधन्या इत्यारभ्य श्रीव्रजवासिभेदानां यथापूर्वं माहात्म्यकैमुत्यं दर्शयित्वा श्रीव्रजेश्वरयोस्तु तदतीव बोधितं साक्षात्तत्प्रभावश्च तौ प्रशंसितुमपि कोऽहम् वराक इति विवक्षया सङ्कोचस्तु स्वापराधजभयलज्जाभ्यां न प्रस्तुता एव अतश्च तदाच्छादनाय लब्धानन्दविशेषात्सङ्गात्तर एव प्रथमत्र उपन्यस्ता इति ज्ञेयम् ॥ ३४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथैकादशेन्द्रियाधिष्ठातृदेवानां महदात्मकस्वस्वरूपत्वेन तद्भोग्यस्य भगवतः स्वभोग्यत्वमङ्गीकृत्य स्वाश्वासनं विधत्ते एषां त्विति । अङ्घ्र्युदजमधु अङ्घ्रिकमलयोर्मधुमादकम् अमृतं सेवामृतं कथामृतञ्चेति अन्यत्स्पष्टम् ॥ ३३ ॥

भवज्जनानां इत्युक्तप्रपन्नसङ्घस्य प्रपन्नशेषत्वज्ञानस्य च परमभोग्यत्वमाह—कैमुत्येन तद्भूरिभाग्यमिति । इहाटव्यां किमप्यनिर्वाच्यं कीटतृणादिजन्म यद्यपि गोकुले गवां कुले वत्सादिजन्म श्रीकृष्णहस्तकमलस्पृश्यदोहाभिनन्दनादानयोग्यतयाऽपहितं तदपि भूरिभाग्यम् उभयविधं जन्म मम स्यादपि पूर्वतनोक्तं कीटादिजन्म विशिनष्टि—कतमाङ्घ्रिरजोऽभिषेकं बहुष्वेकस्य व्रजवासिनोऽप्यङ्घ्रिसम्बन्धिरजसामभिषेको यस्य तत् उभयविधस्यापि श्रीभगवत्श्रीकृष्णसम्बन्धित्वमाह—यज्जीवितं त्विति । तुशब्दः जीवितभिन्नस्यास्यसारत्वं व्यनक्ति, तथापि निखिलम् इति च पतिपुत्रादिबन्धुविशिष्टम् इति भगवान् ज्ञानबलशक्तितेजऐश्वर्यवीर्याद्यनन्तगुणविशिष्टः सुलभतयाऽपवादिमुक्तिदातृत्वेन मुकुन्दः स भगवान् येषां गोगोपालवृन्दवृक्षादीनां जीवितमेव जीवितकालश्चायूरूपः प्राणरूप इति यावत् यस्य तव पदरजस्तु अद्यापि श्रुतिमृग्यम् एव वेदोपनिषद्भिः मृग्यम् अन्वेषणीयम् "यमेवैष वृणुते तेन लभ्यः कोऽद्धा वेद क इह प्रावोचत् मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्याद्याः श्रुतयो वदन्ति इति भावः ॥ ३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे अच्युत ! तेषां नन्दादीनां भाग्यस्य महिमा तावदास्तां कात्स्न्र्येन कस्तया वर्णयितुं शक्नुयादित्यर्थः । शर्वोऽहङ्काराधिष्ठाता आदिर्येषां ते मनोबुद्धिचित्ताधिष्ठातॄणां चन्द्रादीनां ते वयमेकादश च स्वस्य चित्ताधिष्ठातृत्वेऽपि मेढ्राधिष्ठातृत्वाच्च एकादशेत्युक्तम् एवं चतुर्दश वयं इति भावः । वयं मेढ्रादिकर्मज्ञानेन्द्रियोभयाधिष्ठातारश्च भूरिभागाः महाभाग्यवन्तः वयमित्यात्मानमेव बहुमन्यमानस्योक्तिः एवं मनोबुद्ध्यहङ्कारोभयेन्द्रियाधिष्ठातारः त्रयोदश देवाः विवक्षिताः । कुतः ? यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पात्राणि तैस्तवाङ्घ्रिसरोजं कमलं तस्य मधु मकरन्दस्तदेवामृतं स्वाद्वासवं मादकं पिबामः एतदुक्तं भवति । यथा प्रत्येकेन्द्रियाभिमानिनो वयं कीर्तिसौगन्ध्याद्येकैकदेशसेविनो ऽपि कृतार्थास्तथा सर्वेन्द्रियैः सर्वमेवानुभवतां तेषां किमु वर्ण्यते भाग्यमिति ॥ ३३ ॥

यन्मया प्रार्थनीयं तदेवेत्याह–तदिति । यन्मया प्रार्थनीयं भूरिभाग्यं तदेवेत्यर्थः, किं तदिह मनुष्यलोके यत् किमपि मनुष्यजन्म तत्राप्यटव्यां यत्तत्रापि गोकुले यदहो सत्यलोकं विहायात्र जननि मे को लाभः अत आह, गोकुलवासिनां मध्येऽपि कतमस्य यस्य कस्यापि अङ्घ्रिरजसाऽभिषेको यस्मिंस्तत् कतमं विशिनष्टि–यस्य गोकुलवासिनः कतमस्यापि जीवितं भगवान् मुकुन्द एव भगवान्मुकुन्दपरमेव जीवनमित्यर्थः । तस्य दुर्लभत्वमाह–अद्यापीति । यस्य तव पदरजः केवलं श्रुतिभिर्वेदान्तैर्मृग्यत एव न तु दृश्यत एवेत्यर्थः ॥ ३४ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अपि चैतेषां भाग्यमहिमाऽऽस्तां तावत् कृत्स्नं वक्तुं शक्नोति वयं सर्वे शर्वादय एतेषामिन्द्रियाणामधिष्ठातार एव महाभागा इत्याह–एषां त्विति । हे अच्युत ! एषां घोषनिवासिनां भाग्यमहिमा तावदास्तां तिष्ठतु शर्वादयः अहङ्काराधिष्ठाता शर्वः आदिर्येषां चन्द्रादीनां ते शर्वादय एकादश वयमिति स्वस्य भगवद्दर्शनेन बहुमन्यमानः पूज्यत्वं ख्यापयति, पृथक्त्वेनेति भावः । अतस्तत्साहित्येन द्वादशैव एते सर्वे तत्तदिन्द्रियाधिष्ठातारो यत इति इत्थं भूरिभागा धन्याः कुतः ? यस्मादेतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पानपात्राणि तैस्ते त्रयोदश चतुर्दशस्य विष्णुवासुदेवशब्दवाच्यस्य पादेन्द्रियचित्तेन्द्रियाधिष्ठातृस्तवाङ्घ्री एवोदजे पद्मे तयोर्मधु मकरन्दरूपामृतं स्वादु आसवं रसम् असकृद्वारं वारं वर्णं वर्णं पिबामः अनुभवामः अतो वयं भूरिभागा एते भूरिभाग्यवन्त इत्यत्र किं वक्तव्यमिति भावः । तत्रैतेषां ज्ञानेन्द्रियेषु श्रोत्रचक्षुर्घ्राणरसनात्वगभेदात्पञ्चसु दिगादित्याश्विवरुणवायवः पञ्चाधिष्ठाय भगवच्चारित्रश्रवणात्तद्दिव्यविग्रहदर्शनतत्पादतुलस्याघ्राणतत्प्रसादशेषास्वादनतत्पादस्पर्शनादिद्वारा अनुभवं कुर्वन्ति एतेषां कर्मेन्द्रियेषु वाक्पाणिपादपायूपस्थेषु अग्नीन्द्रोपेन्द्रयमप्रजापतयः पञ्चाधिष्ठाय तद्गुणकीर्तनतत्कर्मकूपाराधनतद्दर्शनार्थगमनतत्कैङ्कर्योपयोगितया पायूपस्थद्वाराशरीरशुद्ध्यादिभिरनुभवन्ति, त्वामिति । तत्र विष्णुवासुदेवशब्दवाच्ये त्वया एतेषां पादेन्द्रियचित्तयोरधिष्ठात्रा स्वेनैव स्वस्यानुभवः क्रियते इति विवेकः । अतो द्वादशैव वयं धन्या इत्यर्थः । एवं सर्वेन्द्रियाणि भगवत्प्रवणानीति स्वयमेव वक्ष्यति "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति ॥ ३३ ॥

अतो मया यत्पूर्वं प्रार्थितं तदेवाभिवत्याह–तद्भूरिभाग्यमिति । मम तदेव भूरिभाग्यं किंतत्तदाह–इहास्मिन् लोके यत्किमपि जन्म स्यादिति शेषः । तत्राप्यटव्यामपि यत् तत्रापि गोकुले यत् । ननु सर्वलोकोपरि वर्तमानसत्यलोकवासं निरस्यात्र जन्म किमिति प्रार्थयसीत्यत आह–कतमाङ्घ्रिरजोऽभिषेकमपीति अस्मदभावानां गोकुलवासिनां मध्ये कतमस्यापि अङ्घ्रिरजसाऽभिषेको यस्मिन् जन्मनि तत् । ननु, गोकुलवासिनामेवाङ्घ्रिरजः किमर्थं प्रार्थ्यमिति चेत्तेषां त्वदनन्यभक्तत्वादित्याह यज्जीवितं निखिलं मुकुन्द एव येषां सर्वं जीवितं प्राणपोषणादिरूपं जीवनं मुकुन्द एव अतस्तेषामङ्घ्रिरजः प्रार्थितमित्यर्थः । येषां त्वमतिदुर्लभोऽपि सुलभो जात इत्याह–यत इति तव पादरजोऽद्यापि श्रुतिमृग्यमेव न तु तासां गोचरं अतो गोकुले मम जन्म स्यात्तदेव भूरिभाग्यमिति भावः ॥ ३४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एषामित्यादिपञ्चकम् ॥ ३३—३७ ॥

———

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अत एषां भाग्यं वर्णनीयं न भवति तद्दूरेऽस्तु एषां सम्बन्धाद्वयमेव धन्या इत्याह–एषां त्वित्यादि । हे अच्युत ! एषां भाग्यमहिमा सौभाग्यमहिमा दूरादास्तां वयमेव भूरिभागा अतिधन्या वयमिति किम् अहमेवेत्यर्थे बहुवचनं किन्त्वाऽस्मदादीनां त्वाशङ्क्याह–एकादशैव कुतस्तत्राह–एतादित्यादि । गृहीतनरकृतीनामेषामप्राकृतत्वेऽपि नराकृतित्वादिन्द्रियाधिष्ठातार एवामी इव एषां हृषीकचषकैस्तव अङ्घ्र्युदजमध्वमृतासवं पिबाम के ते एकादश तत्राह–शर्वादयः शर्वादीनां त्रयोदशानां मध्ये एकादशैवेति पायूपस्थाधिष्ठात्रोस्तयोरनौचित्याद्वर्जनम् यद्वा, हे अच्युत ! एषां भाग्यमहिमा दूरादास्तां सा किं वर्णनीया ? भिन्नांपूर्णब्रह्मत्वात् कीदृशी एका मुख्या अदशा दशाऽवस्था तद्रहित एकरूपा एवकार उभयत्र योज्यः, किन्तु शर्वादयो वयमेव भूरिभागाः कुतः ? इत्यत आह–हृषीकचषकैः एषाम् एतत् अङ्घ्र्युदजमधु पिबामः कीदृशममृतासवम् अमृतस्य आसवः यस्मात् प्रसवो यस्मात् "सुप्रसवे" इत्यतः अत एव रसकृत् आनन्दप्रदं ते भांसद्धा दशदिगधीशाः शर्वादयो वयमित्यन्वयः । पूर्वोक्तेन "यन्मित्रं परमानन्दं पूर्णं ब्रह्म" इत्यादिना कृतदृष्टान्तत्वाद्व्रजौकसां चरणमधुपानं त्वच्चरणमधुपानादप्यभीष्टमिति ध्वनिः ॥ ३३ ॥

अतो भगवन् ! अनेन शरीरेणासकृदेषां चरणमधुपानं स्वाद्वास्ति तथा न सम्भवति भिन्नांशेव लब्धेन जन्मान्तरेण तेन भवति कार्यां यथाऽत्र यत्किञ्चिदपि जन्म

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

भाग्यमित्यादि तत् तस्मात् अटव्यां श्रीवृन्दावने व्रजे वा किमपि जन्म भूरिभाग्यम् अस्तु मे इति शेषः। किमपीति, यत् किञ्चिदपि जन्म तदेव भूरिभाग्यं कुतः? इत्याह–यदिति यज्जन्मगोकुले व्रजे अपि कतमस्य अस्य कस्यचिज्जनस्य अङ्घ्रिरजसामभिषेको यत्र गोकुलवासिनां यस्य कस्यापि पदधूलिसेको यत्रेति सापेक्षसमासः तेषां पादरजोऽभिषेकः कथमेव तवाभिषवणीयः? इत्याशङ्क्याह—यदिति। यद्येषां भगवान् मुकुन्दस्त्वं जीवितं प्राणाः निखिलं जातिधनादिसर्वमपरं च। ननु, मुकुन्द एवाहं किमेवं दुर्लभः अथ किं दुर्लभातिदुर्लभ एव इत्याह—"अद्यापि यत्पदरजः श्रुतिमृग्यमेव" यस्य तव भगवतो मुकुन्दस्य पदरजः श्रुतिभिर्मृग्यत एव न तु लभ्यते॥ ३४॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवमाधिभौतिकस्य जन्मप्रार्थनेन तेषां भाग्याभिनन्दनेन च भगवान् स्तुतः इदानीमाध्यात्मिकरूपस्य स्वस्यैवाभिनन्दनेन स्तौति–एषामिति। तुशब्दः पूर्वापेक्षयाप्याधिक्यकथनार्थः एषां भाग्यस्य महिता महिमा तावदास्तां ततः पूर्वमेतदेव निरूपयिष्यामः एतन्निरूपणे तु ततस्त्रयोदशगुणमेतेषां भाग्यमर्यादयोक्तं भविष्यति यथमेतेषां गोकुलवासिनामिन्द्रियाधिष्ठातृदेवाः एकादश दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाश्च रुद्रश्चेति। केचिदन्तःकरणचतुष्टयस्य भिन्नं भिन्नमाहुः तदा चतुर्दश त्रयोदश वा भवन्ति सर्वानात्मतया गृहीत्वा वदति, वयमिति। वतेति हर्षे भूरिभाग्यं येषां यद्येते गोकुलवासिनो नोत्पन्नाः भवेयुः तदास्माकमधिष्ठातृता निष्फलैव स्यात् भाग्ये निदानमाह, एतद्धृषीकचषकैरिन्द्रियपानपात्रैः असकृद्वारं वारम् अङ्घ्र्युदजमध्वमृतासवं शर्वादयो महादेवसहिता वयं पिबामः अङ्घ्रिरेवोदजं कमलं तत्र मध्वेव मकरन्द एव अमृतासवं मिष्टं देहादि विस्मारकं च रोमाञ्चः स्वेदश्च एवमकार्यमन्येषामुपयोगः स्पष्ट एवं पुंसामपि बालकन्योत्पादनादिद्वारा मित्रकौ परित्यज्य शर्वादय एकादशैव वा॥ ३३॥

एवं गोकुलवासिनां भाग्यमभिनन्द्य वृन्दावनवृहद्वनादिष्वपि ये वृक्षादयोऽपि जाता लता गुल्मादयश्च कीटादयो वा तेषामपि भाग्यमभिनन्दति—तद्भूरिभाग्यमिति। तदेव जन्म भूरिभाग्यमधिकभाग्ययुक्तम् इह वृन्दावने गोकुले वा किमपि अप्रयोजकमपि जन्म तत्र हेतुः कतमस्य परब्रह्मणः अङ्घ्रिरजसामभिषेको यत्र कतमस्य गोकुलवासिनो वा यस्य कस्यचित् येषामुत्पन्नानां गोकुलवासिनां वा निखिलमपि जीवितं स्वार्थं परार्थमैहिकपारलौकिकार्थं च सर्वमेव भगवाननन्तः अनन्तपदेन ब्रह्मवादप्रकारो व्यावर्तितः किन्तु विशेषप्रकारेण रजसां माहात्म्यमाह—अद्यापि यस्य भगवतः पदरजः श्रुतिमृग्यमेव, श्रुतयो हि भगवत्पादान्वेषणपराः ब्रह्मभगवत्पदं ज्ञात्वा "ब्रह्मपुच्छं प्रतिष्ठा" "तद्विष्णोः परमं पदम्" इत्यादिभिः ब्रह्म प्रशंसन्ति रजःप्राप्तौ तु कृतार्थाः सत्यो न पुनर्बोधयेयुः प्रयोजनाभावात्॥ ३४॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी।

किञ्च, हे अच्युत! एषां व्रजवासिनां भाग्यस्य महिता महिमा तावदास्तां कस्तं वक्तुं शक्नोति वतेति हर्षे शर्वो रुद्रः आदिर्येषां ते एकादशेन्द्रियाधिष्ठातृदेवता एव वयं भूरिभागाः महाभाग्यवन्तः नात्र सन्देह इत्याह–हीति। तत्र हेतुमाह, एतदिति। एतेषां व्रजवासिनां हृषीकाणि इन्द्रियाणि एव चषकाणि पानपात्राणि तैस्ते तवाङ्घ्री एव उदजे कमले तयोर्मधु मकरन्दस्तदेवामृतं तद्रस्वादु आसवमन्यविस्मृतिकारकं मादकमसकृत् पिबामः यदा प्रत्येकमिन्द्रियाभिमानिनो वयं रूपरसगन्धशब्दाद्यैकैकविषयसेविनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेवितामेतेषां भाग्यं वक्तुं केन शक्यत इति भावः। तत्र शर्वः अहङ्कारस्याऽधिष्ठाता, ब्रह्मा बुद्धेः, चन्द्रो मनसः, दिशः श्रोत्रयोः, वातस्त्वचः, अर्कश्चक्षुषोः, वरुणः रसनायाः, अश्विनीकुमारौ नासिकयोर्द्वयोरेकत्वेन ग्रहणम, वह्निर्वाचः, इन्द्रो हस्तयोः, उपेन्द्रः पादयोः, मित्रः पायोः, ब्रह्मैव उपस्थस्यापि इत्येवं त्रयोदश। तत्र पायूपस्थयोः सेवायामुपयोगाभावात्तयोर्द्वयोर्विहायैकादशेत्युक्तम्॥ ३३॥

एवं भगवद्भक्तानां भाग्यमभिनन्द्य तेषु प्रवेशे स्वस्यानधिकारं मत्वा तेषां पादरजः सम्बन्धेनैव तदधिकारसिद्धिर्भविष्यतीति निश्चित्य पूर्वं यत्प्रार्थितं भवज्जनानां मध्ये कोऽपि भूत्वा तव पादपल्लवं निषेव इति तत्राप्यप्रहं त्यक्त्वा व्रजवासिजनपादरजोऽभिषेकयोग्यं जन्म प्रार्थयते तद्भूरिभाग्यमिति तादृशं भूरिभाग्यमस्तु येन इह मनुष्यलोके तत्रापि गोकुले तत्राप्यटव्यां वृन्दावने किमपि पशुपक्षिवृक्षलताकीटादीनां मध्ये जन्मास्तु। ननु, सत्यलोकं जगत्स्वामित्वं विहायाऽत्र जन्मनि को लाभस्तत्राह अपीति। गोकुलवासिनां मध्ये कतमस्य यस्य कस्यापि अङ्घ्रिरजसाऽभिषेको यस्मिन् तत् गोकुलवासिनां चरणरजःसम्बन्ध एव महांल्लाभः। एषामपि कुत एवं महत्त्वमित्यत आह—यदिति। येषां जीवितं निखिलं गृहवित्तपुत्रादि सर्वस्वञ्च भगवान्मुकुन्द एव सर्वथा त्वत्परत्वादेवैषामेवं महत्त्वमित्याशयः। ननु, ममैवं महत्त्वं कुतस्तत्राह–अद्यापीति। अनादिकालमारभ्याद्यपर्यन्तमपि यस्य तव भवतः पदरजः श्रुतिभिरपि मृग्यत एव न तु दृश्यते इत्यर्थः। अतस्त्वदनन्यभक्तानाम् एषाम् माहात्म्यं किं वर्णनीयम्? इत्याशयः॥ ३४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्चैभिर्व्रजवासिभिर्वयमपि भूरिभागा क्रियामहे इत्याह–एषां तु भाग्यस्य महिमा तावदास्तां कस्तां वक्तुं शक्नोति वयमेकादश एतेषामिन्द्रियाधिष्ठातारोऽपि भूरिभागाः अत एतेषां हृषीकाणीन्द्रियाण्येव चषकाणि पानपात्राणि तैस्तव अङ्घ्र्युदजयोश्चरणकमलयोर्मञ्जीररञ्जितयोर्मधु तत्रत्याऽभिमानाध्वनसायसङ्कुलपशब्दस्पर्शरूपरसगन्धकीर्तनसम्भाषनाशितकमास्मकं

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेव अमृतं स्वादु आसवं मादकं शर्वादयो रुद्रादय इत्यहङ्कारस्येन्द्रियपञ्चकस्याधिष्ठातृदेवताद्वयस्य त्यागात् चित्ताधिष्ठातुर्वासुदेवस्यापि तदभेददृष्ट्या त्यागादेकादशैव पिबामः अत्र यद्यप्यभिमन्तुरात्मन एव विषयभोगो न तु तत्कर्तॄणामिन्द्रियाधिष्ठातॄणामित्यध्यात्मसिद्धान्तस्तथापि बुद्धौ ब्रह्मा तिष्ठति चक्षुषि सूर्यस्तिष्ठति तं तमधिष्ठातारं विना तत्तदिन्द्रियं श्रीकृष्णनिष्ठानामपि रूपरसादीनां ग्राहकं न स्यादिति सामान्यदृष्ट्या अध्यात्मविदां प्रवादोऽपि श्रीकृष्णे रत्यौत्कण्ठ्यवतां ब्रह्मादीनामानन्दहेतुः कर्तृत्वमात्रेणैव भोक्तृत्वाभिमानस्वीकारात् तथैव स्वेषां प्राकृतत्वे ऽपि प्राकृतत्वेऽपि अप्राकृततत्तदिन्द्रियाधिष्ठातृत्वाभिमानाच्च प्रेम्णामेव विलक्षणेयं प्रक्रिया दृश्यते चान्यत्र पद्यावल्यादौ "मिथ्यापवादवचसाप्यभिमानसिद्धिः" इत्यादीति अन्यथा चिदानन्दमयवपुषां श्रीभगवत्परिवाराणामिन्द्रियादीनामपि भगवत इव तन्मयत्वमेव न तु प्राकृतत्वं सम्भवेत् कुतस्तत्र प्रपञ्चगतानां ब्रह्मादीनां प्रवेश इति ज्ञेयम् । यद्वा, कादाचित्केनापि तन्माधुरीलाभेन स्वेषामपि भाग्यमभिनन्दति, एषामिति । भाग्यमहिता एका अद्वितीया अनुपमेत्यर्थः । दशैव दशापि वयं दिक्पालदेवताः भूरिभागा भवामः कुत इत्यत आह, एतदिति एतज्जन्या स्वनेत्रश्रोत्राणि स्पृशति वत्सचारणाय व्रजान्निष्क्रान्तस्य तव चरणसौन्दर्यसौरभ्यामृतं नेत्रश्रोत्रैः पिबाम इति ॥ ३३ ॥

तस्माज्जगदैश्वर्याय प्राप्ताय प्राप्तव्याय मोक्षाय च मया जलाञ्जलिर्दत्तः केन प्रकारेणैषां व्रजवासिनां चरणधूलयो लभ्यन्त इति विभाव्य सनिश्चयमाह—तदेव मे भूरिभाग्यं भवत्विति शेषः । यदि श्रीमत्कृपाकटाक्षा उदारा भवन्तीति भावः किन्तत् इह अटव्यां वृन्दावने यत् किमपि कोमलतृणदूर्वादिजन्म यदुपरि त्वत्प्रियसखादिव्रजवासिजनचरणविन्याससौभाग्यं सम्भवेत् । नन्वतिमहातिदुर्लभे लोभं विहाय स्वयोग्यमन्यत्प्रार्थयस्वेति चेत्तर्हि गोकुलेऽपि त्वन्नगरप्रान्तादावपि कतमस्य त्वदीयसौचिककारुहडिपाद्येकतरस्याप्यङ्घ्रिरजसोऽभिषेको यत्र तथाभूतं शिलापीठपट्टकादिजन्म भवतु, नन्वेषां व्रजवासिनामेतावन्माहात्म्यवत्त्वे को हेतुः कथं वा जगत्पूज्यस्य जगत्स्रष्टुः परमेष्ठिनस्तवैषां नीचजातीनां पादधूलिलिप्सायां नास्ति लज्जेति तत्राह, येषां जीवितं भगवान् मगं श्रीकाममाहात्म्येत्यमरगन्धर्वगोत् सौन्दर्यसौरभ्यादिगुणविशिष्टो भगवान् मुकुन्दः मुखे कुन्दवद्धास्यं यस्य सः इति त्वत्सौन्दर्यादिगन्धहविरतादेव जीवनोपायः तेन विना सद्य एवामी म्रियन्त इत्येतेषामसाधारणत्वापि महाप्रेमैव सर्वोत्कर्षे हेतुरिति भावः । निखिलमिति किञ्चिदपि जीवितस्य भोजनपानादिहेतुकमित्यर्थः, अतोऽद्यापि येषां पदरजः श्रुतिभिर्मृग्यत एव न तु प्रायः प्राप्यत इत्यतोऽहं ब्रह्मापि किं वेदेभ्योऽप्यधिको यत एतत्प्रार्थने मम लज्जा स्यादिति भावः अतो मया तदस्तु मे नाथेति यत् पूर्वं प्रार्थितन्तत्स्वस्य वैधभक्तिमत्त्वे एव यदि व्रजजनानुगतिमत्त्वेन मां रागानुगामृताम्भोधौ निमज्जयति तदेवं प्रार्थितम् ॥ ३४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किंच, हे अच्युत, नित्यमूर्ते ! एषां नन्दगोपव्रजौकसां भाग्यमहिता महिमा तावद्दास्ताम्, कस्तद्वर्णने क्षम इत्यर्थः । बुद्ध्यधिष्ठातारो वयमेकादश अन्ये चाहङ्काराद्यधिष्ठातारः रुद्रयः ख्यः भूरिभागा महाभाग्यवन्तः यस्मादेतेषां हृषीकेन्द्रियाण्येव चषकाणि पात्राणि तैः अङ्घ्रीयवोवज्रे कमले मधु मकरन्दस्तदेवामृतं स्वादु आसवं मादकमसकृत्पुनः पुनः पिबामः यदा प्रत्येकं करणाधिष्ठातारो वयं कीर्तिसौन्दर्यसौगन्ध्यैकदेशसेविनोऽपि कृतार्थास्तदा सर्वेन्द्रियैः सर्वसेविनां वर्ण्यंते इति भावः ॥ ३३ ॥

तस्मात् यन्मया प्रार्थितं "तदस्तु मे नाथ ! स भूरिभाग" इति तद्भूरिभाग्यमिदमेवेत्याह—तद्भूरिभाग्यमिति । किं तदित्याकाङ्क्षायामाह—इह मनुष्यलोके तत्रापि अटव्यां तत्रापि गोकुले गोपीगोपानां गमनागमनादिव्यवहारभूमौ यत्किमपि जन्म ननु अहो ब्रह्माण्डाधिपतेरत्र तव जन्म प्रयोजनं किमत आह—कतमाङ्घ्रिरजोभिषेकमिति । गोकुलवासिनां मध्ये अपि कतमस्यापि अङ्घ्रिरजोऽभिषेको यस्मिन् तत् । नन्वत्रत्यानामेवाभिषेकमाहात्म्ये को हेतुरत्राह—यदिति । यत्र येषां जीवितं तु भगवान् मुकुन्दः स्वयं निखिलं साङ्गं सफलं करोति यत् यस्य तव पादरजः श्रुतिभिर्मृग्यमेव न तु दृश्यते प्रथमस्तुशब्दो भगवतस्तद्वन्यत्वे तस्य जीवितस्य तुच्छत्वं सूचयति, द्वितीयस्तुशब्दो भगवतैः सफलीकृतस्य जीवितस्य तुच्छत्वं सूचयति ॥ ३४ ॥

---

## भाषा टीका ।

हे अच्युत ! इन सबन के भाग्यकी महिमाको तो वर्णन करबके परंच श्रीशिवजी सों आदिले के ( इन्द्रिय के अधिष्ठाता ) हम एकादश देवता हू बड़े बड़भागी हैं इन इन्द्रिय रूप कटोरान मों भर भर के आपके श्रीचरणारविन्द को अमृतसरीको मधुर और आसवके तुल्य मादक मकरंदपान करें हैं, जब हम एक २ इन्द्रियनके अधिष्ठाता कीर्तिसौन्दर्य सौगन्ध्यादि की सेवा सों कृतार्थ होय रहे हैं, तब जो सब इन्द्रियन सों सर्व सेवा करबे वारे हैं तिनके भाग्य को कौन वर्णन कर सके ॥ ३३ ॥

तासों मैंने जो प्रार्थना करी ही कि—मोकूं भूरि भाग्य होय, सो अबको येई भूरिभाग्य है, कि—याई वृन्दावन ( वृन्दावन ) में वा व्रज में हू मेरो कोई भी जन्म होय कि, जासों कोई विश्वधया अधिकारिन की चरण रज अच्छी तरियां मेरो अभिषेक सदा करे, कौन के चरण रज अभिषेक अपेक्षित है, तहां कहें हैं, कि—जिनको सर्व जिन सफल जीवन भगवान् मुकुन्द हैं । और अद्यावधि जिनकी चरण रज को श्रुति ढूंढें हैं ॥ ३४ ॥

---

एषां घोषनिवासिनामुत भवान् किं देवरातेति न—
श्चेतो विश्वफलात्फलं त्वदपरं कुत्राऽप्ययन्मुह्यति ॥
सद्वेषादिव पूतनाऽपि सकुला त्वामेव देवापिता ।
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥ ३५ ॥
तावद्रागादयः स्तेनास्तावत्कारागृहं गृहम् ॥
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण ! न ते जनाः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च किं वयर्यते कृतार्थस्त्वमेतेषां येषां भक्त्या भवानपि ऋणीवास्ते । ननु, किं दातुमसमर्थोऽहं येन ऋणी स्यामत आह उत अपि भवानपि एषां कुत्रापि किं विश्वफलात्सर्वफलात्मकात्त्वत्तः परं फलं राता दास्यतीति नश्चेतः अयत्सर्वत्र गच्छद्विचारयद् मुह्यति । ननु, मामेव दत्त्वा नृणः स्यामिति चेन्न हि न हि सद्वेषादिव सतां भक्तानां यो वेषस्तदनुकरणमात्रेण पापिष्ठा पूतनाऽपि त्वामेवापिता प्रापिता तर्हि तत्सम्बन्धिनामपि दास्यामीति चेत्तत्राह—सकुलेति । बकाघासुरसहिता एषामपि तावदेव चेदपर्याप्तमित्याह, यदिति । येषां धामादयस्त्वत्कृते त्वदर्थमेवेत्यर्थः ॥ ३५ ॥

ननु, वीतरागादिदोषाणां संन्यासिनामपि न मत्तः परं किञ्चिदस्ति कथमेषामपर्याप्तमित्यत्र आह—तावदिति । हे कृष्ण ! रागादयस्तावदेव स्तेनाश्चोरा भवन्ति तथा तावद् गृहमपि कारागृहं बन्धनागारम्, मोहोऽपि तावदेवाङ्घ्रिनिगडः पादशृङ्खला यावत्ते त्वदीया जना न भवन्ति त्वदीयानां तु रागादयोऽपि त्वन्निष्ठा मोचका एवेति न यतिभ्यो विशेषो भजनं त्वधिकमिति भावः ॥ ३६ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मुह्यतीति निश्चयाशक्तेः । यद्वा ऋणित्वेनैषां वश्यतया मादृशान् विहायात्रैव स्थास्यतीति शोकाद्यतिशयेन मोहं प्राप्नोति सकुला बकाघासुरसहितेति तयोर्भगवत्प्राप्तिहेतुतत्स्पर्शादिप्राप्तौ तत्सम्बन्ध एव हेतुरिति ज्ञेयम् अन्यत्तैर्व्याख्यातम् विश्वफलादपीत्यपिशब्दान्वयः गत्यर्थादिधातोर्ज्ञानार्थत्वात् कथञ्चित्कदाचिदप्यजानदित्यर्थः ॥ ३५ ॥

आदिशब्दात् क्रोधादयः तदीयानां क्रोधोऽपि भक्तिः तत्तेनादिना दुर्बुद्धीनामन्येषामपि मोचकत्वे पर्यवस्यत्येव कृष्ण ! हे साक्षात्परमेश्वर ! अन्यत्तैर्व्याख्यातम् । यद्वा, यदि मदर्थमेवेषां धामादयः तर्हि कथं विषयभोगादौ रागादयः आतिथ्यपालनादिगार्हस्थ्ये वा अन्योऽन्यं स्नेहो वा दृश्यते तत्राह, कृष्णस्य तव न ते । यद्वा हे कृष्ण, सर्वथा परमानन्दप्रद ! अर्थात्तवैव नते नमने भक्तावित्यर्थः । स्तेनाः स्वभावतो लोकानां विवेकधैर्यादिगुणापहारका अपि विषयभोगादौ रागादयो भवन्ति आदिशब्दात्तदप्राप्त्यादौ क्रोधादयोऽपि ज्ञेयाः सङ्कीर्णत्वादिना कारागारवद्दुःखदमपि गृहं गृहस्थाचारः अङ्घ्रिनिगडवदस्वातन्त्र्यापादकोऽपि मोहः अन्योऽन्यं स्नेहगरश्च अयं भावः । भक्तानां भगवत्तदर्पितमहाप्रसादद्रव्यादावेव प्रवृत्त्या तत्र रागलोभादीनामपि भक्तिपरिपोषकत्वात् तथा तदन्यत्र प्रवृत्तजनेषु क्रोधस्य च भक्तिप्रवर्तकत्वात् तथा वैष्णवातिथिसेवादिना गार्हस्थ्ये सर्वहितसाधकत्वात्स्वद्वारत्वोपयुक्ताः तत्रैवेति तत्र च यावत्तावकं विना तत्र प्रवृत्त्यसम्भवादिति ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, भवद्विधायाऽपि मदेषां चरणरज एव परमफलत्वेन दास्ये तर्ह्येभ्यो वा किं दास्ये । किञ्च, पूर्वं भवता त्वां लब्धुमेव त्वां स्तौमीति प्रतिज्ञातम् अधुना पुनरेतच्चरणरज एव प्रार्थ्यते भद्रेयं निष्ठा भवद्विधानामिति सनर्मप्रश्नमाशङ्क्य तथैवाह, एषामिति । एषां पूर्वोक्तमाहात्म्यानाम् उत प्रश्ने विश्वफलादपीत्यपिशब्दान्वयः ततश्चास्याः श्रीव्रजभूमेरूर्ध्वं तव स्थानं नास्ति एतत्स्वरूपादूर्ध्वं च फलं नास्तीति कुत्र च किं दातेत्यर्थः । अयन्निति नञ् पूर्वमिणधातो रूपं त्वत्तः परं फलं कुत्राऽप्यजानन्नित्यर्थः । मुह्यतीति निश्चयाशक्तेः सतां सद्भावयुक्तानां व्रजवासिविशेषाणां धात्रीजनानां वेशात् "लेभे गतिं धात्र्युचितां ततोऽन्यम्" इति तृतीयोक्तेः इवेति तत्रापि हिंसामयत्वेनैव न तु भक्तत्वमित्यर्थः । अतः समानफलत्वं कथं स्यादिति भावः । पूतनाऽपीत्यन्यस्य का वार्तेत्यर्थः । अपिशब्दोऽयं यथा योग्यमन्यत्रापि योज्यः । सकुलेति, प्राक्तनाधुनिकतत्कुलोत्पन्नसहिता गोकुलप्रान्तकक्षत्वेन निर्देशात् बकाघयोस्तु स्वतन्त्र एव तत्स्पर्शोऽस्त्यन्येष्विव त्वामेवेति पूतनायाः साक्षात् अन्येषां तु भगवद्द्वेषिणां पूतनानुवर्तित्वेनैव बकाघयोस्तु विरोधित्वेनानुक्तिमात्रमिति ज्ञेयम्, आपिता स्वमेवासि शेषः । सुहृत् निरुपाधिहितकारी प्रियस्तादृशप्रीतिविषयः त्वत्कृत इति प्रत्येकं स्वाभाविकमेव तेषां त्वदेकार्थत्वं तव पुनस्तत्तदृ्वेदनानेकप्रियजनार्थत्वमित्यर्थः । तदेवं ते पूर्णा एव श्रीभगवच्चरणास्तु प्रत्युपकारासामर्थ्येनाऽपूर्णा इव ततस्तेभ्यः किमिव दास्यन्ति अतोऽहमपि भवतामृणित्वेन पारवश्यमाशङ्क्य तादृशनिजाभिलाषसिद्ध्यै तच्चरणरजःशरणा एव भवितुं युक्त इति भावः । तदेवमपि श्रीकृष्णतद्वासिनोरव्यभिचारित्वमेव दर्शितम्,

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा पूर्वपक्षभङ्ग्यैवाऽयं परमसिद्धान्तः सूचितः । तादृश-तद्वशीकारजप्रेम्ण एव परमफलत्वात् ॥ ३५ ॥

ननु, धामादीनां मदेकार्थतयैव यदि तेषां महिमा तर्हि मद्यानपि निजगृहं गत्वा तथैवाचरेति चेत्? आस्तां तावदेषा-मात्मनोऽपि त्वदेकार्थत्वेनात्मारामगणेभ्योऽपि महत्तरं भाव-माहात्म्यं मादृशां तु भवदुन्मुखत्वमपि दुर्घटमित्याह—ताव-दिति । अयमर्थः रागो विषयप्रीतिः तदादयस्तन्मयविषयलाभा-लाभहानिषु हर्षविषादशोकाद्याः गृहं विषयमात्रं मोहो रागा-दिहेतुरविवेकः ते च तच्छ्रीक्रियायां रागसुखनिरोधका एव सर्वे इति प्रथमं स एवोक्तः, तत्र निरुपाधिप्रेमास्पदस्यात्मनो-ऽप्यात्मत्वेन त्वमेव रागस्य स्वाभाविकपरमयोग्याश्रयः अत-स्त्वल्लक्षणनिजस्वामिनमनुपलभ्यैव भ्रमन्तो जनानां शुभवास-नारूपां त्वद्भजनसामग्रीं हरंश्चौर एव ततस्तदनुवर्तिनोऽपि तादृशाः । अथ गृहमयो विषयोऽप्यवशिष्टदण्डनायेव तेनैव कारागारीकृतः स्यात् त्वत्पदानुसरणविरोधिरोधसदनत्वात् मोहोऽप्यसौ तेन तेनावस्थानेशिष्य प्राप्तस्तत्र स्वयं निग-डायते नष्टेऽपि तादृशकारागृहे रागादिमयस्य तस्याऽत्रशेषे-णाऽपि त्वत्पदानुसरणोन्मुखत्वाशक्तेः तदेवं त्वदीयानुस्मृतौ ते तावत्तादृशा भवन्ति यावज्जनास्ते तव न भवन्ति त्वया न स्वीक्रियन्त इत्यर्थः । जाते तु तावकत्वे रागादीनामप्यात्मनो-ऽप्यात्मनस्तव प्राप्तौ सत्यां तैनोऽभ्माप्याश्रियत इति स्वयमेव ते दोषा अपगच्छन्तीत्यर्थः । तत्र रागस्य तत्प्राप्तिः—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु" ॥

इत्यनुसारेण गृहस्य तदर्पितत्वेन मोहस्य च तत्प्रेममयत्वेनेति अत एते तावत् तावकानां शिरोमणयः मादृशस्त्वेतच्चरण-रेणुस्पर्शिगणो यत्किञ्चित्त्वत्प्राप्ताभ्यभिलाषिण एव कथमे-तत्कक्षां प्राप्नुम इति भावः । यद्वा, ननु तेषां प्रत्युपकारा-समर्थमपि मां सदा सेवमानास्त एव दूषणीयाः तत्राह—हे कृष्ण ! सर्वेश्चित्ताकर्षक ! यावत्ते तव जना न भवन्ति ना-शात् त्वत्सेवां न प्राप्नुवन्तीत्यर्थः । अर्थात् त्वद्भक्ताः तावत् तेषां त्वत्स्मृतौ स्वाभाविकभावेनच्छ दयो निवासस्थानं कदा-चिच्छिद्रादिना त्वद्विस्मृतिलक्षणो मोहोऽपि तावत् परमदुःखदा एव भवन्ति । यद्वा, तव रागादयस्त्वल्लीलास्थानमपि त्वत्प्रेम-मूर्च्छापि तावत्परमदुःखदा भवन्ति यावत् साक्षात् त्वत्सेवां न प्राप्नुवन्तीति पूर्ववत्, तदेवं सति तव मोहनत्वमेषां व्रज-वासिनामपि तथानुभवणे कारणं तस्मादेषां को दोष इति भावः । किमर्थं तत्राह, प्रपन्नजनता निजव्रजजनरूपा मदा-दिरूपा च प्रीयितुं प्रमयितुं पृथ्वेलीलानोऽप्यरूपा क्रीडाया भक्तपरमानन्दप्रदत्वादित्यर्थः । नन्वुक्तं "नन्दः किमकरोद्ब्रह्मन् !" इत्यादौ "गायन्त्यद्यापि कवयो यल्लोकशमलापहम्" इति "येन वेतावतारेण" इत्यादि "यच्छृण्वतोऽपैत्यरतिः" इत्यादि ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ भवानेषां अपृच्छिमताम् स्वर्णा एव भविष्यतीति वदति एवामिति । घोषनिवासिनां व्रजवासिनाम् उत अप्यर्थे भवान् कैवल्यादिप्रदोऽपि हे देव, क्रीडाप्रवृत्त! विश्वफलात् सर्वफलरूपात् त्वत् त्वत्तः अपरं फलं कुत्रापि देशे काले वा अयत् न गच्छत् ... जानत् इति यावत् अतः किं राता किं दास्यतीति अथवा, "... गतौ" इत्यतः अयत् विचारयत् नः चेतः मुह्यति यद्यतः पू-ना सकुला अघबकादिसहिता हे देव, क्रीडनमवमुत्तिन ! सद्वेषात् सत्याः श्रेष्ठायाः प्रतिव्रतायाः यशोदाया मातुर्वेषस्य एवार्थे इव वेषमात्रादेव त्वामेव त्वया आपिता प्रापिता अन एवं गोगोपगोपीनन्दयशोदादीनां तु धामार्थसुहृत्प्रियात्मतनयप्राणाशयाः त्वत्कृते वर्त्तन्ते त्वदर्थं श्रीकृष्णस्य श्रीमतो नारायणस्य तत्र शेष-भूताः शेषत्वज्ञानपूर्वं समर्पिता वर्त्तन्ते धाम गृहम् अर्थाः सुव-र्णादयः अमूल्यरत्नादिपर्यन्ताः, सुहृदः प्रियाः स्त्रियः, आत्मा ... तनयाः प्राणाः चेष्टाविशिष्टशरीराणि, आशयो वासनाः ... मात्मात्मीयभरसमर्पणविशिष्टस्वाभरार्पणं कृते ... चतुर्थ्यर्थभूतशेषत्वव्यङ्ग्ये वर्त्तते, एवं चैषामपि सत्यानुकार्यं स्वात्मानमपि ददासि चेत्तवाशं लीलाभिनिवेशकारितं विवक्ष एवेति भावः ॥ ३५ ॥

इति श्रीभगवज्जनानां प्रपन्नानां च धैर्यमुक्त्या श्रीम... वत्स्नेहादिमतामपि गोपगोप्यादीनां रागादिगृहादिसम्बन्धं देहाभिमानित्वेन चाभ्यसंसारित्वपरत्वं निराकरोति—तावदिति । न हे कृष्ण ! स्वरूपरूपगुणविभूतिभिश्चित्ताकर्षक ! यावदेते राग-द्वेषादयः त्वत्सम्बन्धिनो न भवन्ति तावदेतेनाः विवेकहा-णो भवन्ति यावत् गृहं त्वन्मन्दिरं न भवति तावत्कारागृ-तत्तुल्यम् एवं मोहः देहात्मबुद्धिरूपः चिदचितोः स्वच्छन्द-ज्ञानेन त्वत्सेवोपयोगी न भवति तावत्संसारो निगडः ... ममताहन्तास्पदयोः भगवत्सेवोपयोगित्वेन एषां व्रज-वासिनाम् अन्येषां च प्रपन्नादीनां न संसारबन्ध इति भावः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इदमपि न प्रार्थनीयं किन्तु कमपि त्वत्सम्बन्धविशेषं त्वभिप्रयत् येन केनापि रागद्वेषाद्यन्यतमेन त्वत्सम्बन्धसमावेशं निरतिशयानन्दपुरुषार्थभूतत्वत्प्राप्तौ सत्यां ततोऽन्यत्किं ... दातुं व्रजवासिभ्योऽवशिष्टम इति मन्मनो नितरां मुह्यतीत्याह एषामिति । हे देव ! सकुला बकासुरादिसहिता पापिष्ठाऽपि पूतना सद्वेषादिव सतां साधूनां वेषादिव साधुवेषानुकारमात्रेणैव ... त्वत्प्राप्तिं गतेत्यर्थः । वस्तुतो जिघांसयाऽपीति भावः । यत्त्वामेव प्राप्ता सा अथ भवानेषां घोषनिवासिनां विश्वस्य पुरुषार्थभूतात्त्वत्तोऽन्य-त्परमुत्कृष्टं फलं राता दास्यतीति नोऽस्माकं चेतः कुत्र सर्वत्राऽप्ययत् गच्छन् विचारयन्मुह्यति विश्वफलभूतस्त्वं प्रदत्तः ... ऽवशिष्टम एव तत उत्कृष्टस्य फलस्याभावात्किं दास्यतीति मन्वानं तो मुह्यतीत्यर्थः । घोषनिवासिनो विशिनष्टि—ते-घोषनिवासिनां ये धामादयः ते त्वत्कृते त्वदर्थं एवं ... धाम गृहमर्थो धनं तनुर्देहः आशयो मनः ॥ ३५ ॥

ननु, मत्प्राप्तिप्रतिबन्धकरागद्वेषादिमतामपि तत्सम्बन्धाविशेषं मात्रेणैव कथं मत्प्राप्तिस्तत्राह—तावदिति । हे कृष्ण ! तावत् रागादयः स्तेनाश्चौरा भवन्ति त्वत्प्राप्तिप्रतिबन्धका भवन्ती-त्यर्थः । तथा तावद्गृहमपि कारागृहं बन्धनागारं मोहोऽपि ... देव पादशृङ्खलं यावत्ते तव जना येन केनाऽपि, प्रका...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वत्सम्बन्धिनो न भवन्ति त्वदीयानां तु रागादयोऽपि त्वन्निष्ठा-मोचका एवेति भावः ॥ ३६ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

किञ्च, तेषां भाग्यमहिमा किं वर्ण्यते यैस्त्वमपि भक्त्या वशीकृत इत्याह—एषामिति । हे देव ! उत अपि भगवानपि एषां विश्वफलात्सर्वफलस्वरूपात् किं त्वत्तः परं फलं राता दास्यतीति नश्चेतः भवन् विचारयन् मुह्यति मोहं प्राप्नोति अत एतेषां त्वं ऋणी एवेति मया ज्ञातं तत्कृतस्य त्वत्तोऽधिकफलाभावात् ननु, मत्सारूप्यं दत्त्वा अनृणी भविष्यामीति चेन्नहि नहीत्याह, सद्वेषादिभेति सद्वेषात् समीचीनमातृवेषात् तदनुकरणमात्रेण दुष्टा पूतनाऽपि त्वामेव त्वत्सारूप्यमोक्षमापिता प्रापिता त्वयेति शेषः । एतेषामनुयायिनां मोक्षं दत्त्वा अनृणी भविष्यामीति चेन्न, साऽपि सकुला बकादिसहिता त्वत्सारूप्यं प्रापिता अत एतदप्येतेषामपर्याप्तमिति भावः कथमपर्याप्तमित्यत आह—यद्धामार्थं इत्यादि येषां धाम गृहम् अर्थो धनं सुहृत्सुहृदः प्रियाश्च ते आत्मतनयाश्च प्राणा इन्द्रियाणि आशया अन्तःकरणानि त्वत्कृते त्वदर्थमेवेति अतस्त्वमेतेषाम् ऋणी एव सदेति निश्चितमित्यर्थः ॥ ३५ ॥

ननु, रागद्वेषादिशून्यानां परमात्मतत्त्वज्ञानिनां न मत्तः परं किञ्चिदप्यस्ति अतः कथमेतेषामपर्याप्तमित्यत आह—तावद्रागादय इति । हे कृष्ण ! कर्षति वात्सल्यादिगुणैर्वशीकरोति प्रपन्नानिति कृष्णस्तत्सम्बुद्धौ हे कृष्ण ! तावदेव रागादयः स्तेनाश्चोरास्तावदेव गृहं कारागृहं बन्धनागारं तावदेव मोहो निगडः पादबन्धनं यावत्ते जनास्त्वदनन्यभावा न भवन्ति त्वच्छरणापन्नानां तु त्वन्निष्ठत्वे विपरीता गुणा एव भवन्तीति भावः । एतावदन्तरं ते ज्ञानिनस्त्वां सर्वशेषिणं परमात्मानं ज्ञात्वा भजन्ति एते तु त्वां पुत्र इति सखा इति सुहृदिति ज्ञात्वा वात्सल्यादिविशेषेण भजन्तीति तथा च सप्तमे नारदः "कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः" इति अन्यत्रापि—

"मन्निमित्तं कृतं पापमपि धर्माय प्रकल्पते ॥
मामनादृत्य धर्मोऽपि पापः स्यान्मत्प्रभावतः" ॥

इति ॥ ३६ ॥

---

श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

किन्तु भगवन् ! एक एवास्ति मे महान् सन्देहस्तं स्वयमपि त्वं दूरीकर्तुं न शक्नोषीत्याह—एषामित्यादि । हे देव ! एषां घोषनिवासिनाम् उत विस्मये भवान् विश्वफलात् विश्वस्य फलभूतात् त्वत्तोऽपरं किं राता दाता इति कुत्रापि सन्देहसङ्कटे अपश्यत् नोऽस्माकं चेतो मुह्यति । ननु, कथन्ते चेतोमोहः ? आत्मानमेव दास्यामीति चेद्वैगुण्यापत्तेरिदमनुचितमित्याह—सद्वेषादिवेति सती माता तद्वेषादिव न तु तद्वेषात् स्तन्यदानाय मातृवपुः कृत्वा गतेति न भवति तु जिघांसयैवेति इवशब्दः तद्वेषाभासमात्रेणैव पूतना त्वामेव आत्मानमेवापिता प्रापिता तत्रापि सकुला बकाघादिसहिता एभ्योऽपि यदि स एवात्मैव दातव्यस्तदा योग्याऽयोग्यविचाराभावाद्वैगुण्यमेवापतति आत्मनोऽधिकं वस्तु तव नास्त्येव तत् किमपरं दास्यतीति योग्य एव सन्देहः । ननु, भो ब्रह्मन् ! मा सन्देहं कार्षीः एभ्यो यद्देयं तद्दत्तमेव । यद्वा, त्वत्कृते त्वत्कर्मणि धामादीनि सर्वाणीति ब्रह्मणो वाक्यशेष एवान्तर्यामिरूपेण सरस्वतीं देवीं प्रेरयता सिद्धान्तितं तेभ्यः पूतनादिभ्य आत्मानं सायुज्यं दत्तम् एभ्यस्तु एवम्भूतं सायुज्यादपि परमदुर्लभं प्रेम दत्तमिति न ममाऽवैगुण्यमिति सिद्धान्तः ॥ ३५ ॥

अथ हे ब्रह्मन् ! एषामेवर्णिधरत्वं कथं भवता लक्षितमित्याशङ्क्य व्यतिरेकमुखेन तत्प्रपञ्चयन्नाह—तावद्रागादय इत्यादि, स्तेनाश्चोरप्राया ज्ञाने मोषकत्वात् रागादयस्तावदेव कारागृहप्रायं विना प्रारब्धक्षयेण ततो बहिर्भवनमशक्यमिति कारागृहसदृशं गृहं तावदेव निगडप्रायः स्वयमभेद्यत्वाद्दुर्भिदो मोहश्च तावदेव यावत् हे कृष्ण ! जनास्ते न भवन्ति त्वदीया न भवन्ति तव चेद्भवन्तु स्तदा स्तेनादिप्राया रागादयस्तेषां न सन्ति इति सिद्धम् । सिद्धान्ते चैषां तथैवाकलितं तदेते त्वदर्पितधामादित्वेनोक्तप्रकारा एव ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां फलमेतदेव न भवति सेवायाः क्रियमाणत्वात् अनन्तफलं कथं नाभिनन्दत इत्याशङ्क्य तत्फलं न ज्ञायत एवेत्याह—एषामिति । एतेभ्यो घोषनिवासिभ्यः एतत्सेवासाध्यमेतत्सम्बन्धि हे देव ! त्वं किं राता किं दास्यतीति नोऽस्माकं चित्तं त्वत्तः अन्यत्फलं कुत्रापि ब्रह्माण्डे सकलेऽपि भवत् गच्छत् विमुह्यति यतस्त्वमेव विश्वस्यैव फलं परमानन्दः त्वत्तोऽन्यत् कथं फलं भविष्यति तर्ह्यात्मानमेव दास्यामीति चेत् तत्राह, सद्वेषादपीति । सतो यशोदाया वेषात् वेषं प्राप्य वेषाद्धेतोर्वा पूतना सकुला भ्रातृसहिताऽपि त्वामेवाऽऽपिता प्रापिता अर्थात् त्वयैव देवेति सम्बोधनं पूज्यार्थं येषां पुनः त्वदर्थमेव धाम गृहमर्थः धनं सुहृदो मित्राणि प्रियाः प्रीतिविषयाः पदार्थाः, आत्मा देहः तनयाः पुत्राः प्राणा इन्द्रियाणि च आशयः, अन्तःकरणं एतत्सर्वं केवलं त्वत्कृते त्वदर्थम् ॥ ३५ ॥

नन्वेतेषां संसारो जीवतामेव निवर्तनीयः पूतना तु मारितेति संसारनिवृत्तिं दास्यामीति चेत्तत्राह—तावदिति । गृहादिषु रागादयः तावदेव स्तेनाः विवेकधैर्यापहारकाः तावदेव गृहमपि कारागृहं बन्धनस्थानं तावदेव पुत्रादिषु मोहः अङ्घ्रिनिगडः पादशृङ्खला यावत् कृष्ण ! ते जनाः त्वत्सेवका न भवन्ति त्वत्सेवकानां त्वेतानि यद्यपि सात्त्विकादीनि सेवौपयिकानीति शास्त्रतोऽप्यभिलषितान्येव ॥ ३६ ॥

---

श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

अपि चैषां कृतार्थत्वं किं वर्ण्यते येषां भक्त्या भगवान् अपि ऋणीव दृश्यसे इत्याह—एषामिति । उत अपि हे देव !

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

बहुधाद्योतमान ! एषां घोषनिवासिनां भवान् सर्वप्रकारेण सर्वं कर्त्तुं सर्वं दातुं च समर्थोऽपि किं राता किं दास्यति ? एषां भक्त्यनुरूपं तवापि किञ्चिद्देयं नास्तीत्यर्थः । तर्ह्यात्मानमेव दत्त्वाऽनृणः स्यामिति चेत्तत्राह–विश्वफलादिति । सर्वफलात्मकात् त्वत्तोऽप्यपरमुत्कृष्टं फलमेषां योग्यमित्यर्थः कुतः ? एषां मत्तोऽप्युत्कृष्टफलयोग्यता तत्राह, सद्वेषादिति । इवशब्द एवकारार्थकः सत्याः जनन्या वेषमात्रादेव दुष्टा पूतनाऽपि हे देव ! त्वत्कृपया त्वामेवापिता प्रापिता अत एषां तत् उत्कृष्टं फलमपेक्षितमित्याशयः । तर्ह्येतत्सम्बन्धिनामपि आत्मानमेव दास्यामीति चेत्तत्राह–सकुलेति बकासुराघासुरसहिता एवमपि नैतेषां फले आधिक्यमिति भावः । फलाधिक्यावश्यकत्वे तेषां भक्त्याधिक्यं हेतुमाह, यद्धामेति । येषां धामादयस्त्वत्कृते त्वदर्थमेव येषामपि दुष्टपूतनाया दत्तमेव फलं चेद्दास्यसि तदा तदपर्याप्तमेवेति भावः । धाम गृहम् अर्थो धनम् सुहृदो मित्राणि प्रियाः प्रीतिविषयाः स्त्र्यपत्यादयो ये के च पदार्थाः आत्मा देहः तनयाः पुत्रा प्राणाः इन्द्रियाणि मुख्यप्राणाश्च तेन जीवितमाशयोऽन्तःकरणम् । ननु, त्वमपि सर्ववेदार्थतत्त्वज्ञोऽतस्त्वमेवैषां योग्यस्य फलस्य निश्चयं कुरु तद्दास्यामि इत्यत आह, इति नश्चेत इति इत्येतद्विमर्षे नोऽस्माकं मम रुद्रस्य सनकादीनां च सर्वेषां सर्वज्ञानामपत् विचारेण स्वशक्त्या सर्वत्र गच्छत् अपि चेतो मुह्यति निश्चयं प्राप्नोतीत्यर्थः ॥ ३५ ॥

नन्वेते गृहस्था अतो रागादिभिश्चोरैर्विवेकधैर्यादिधनं विलुण्ठद्भिर्मोहनिगडेन बद्ध्वा कारागृहरूपे गृहे निरुद्धा अतः कथमेषां ततो विमुच्य मम प्राप्तिरूपं फलमपर्याप्तं यतो निगतरागादिदोषाणां सन्न्यासिनामपि न मत्तः परं किञ्चित् प्राप्यं फलमस्तीति चेत्तत्राह–तावदिति, हे कृष्ण ! सदानन्दरूप ! यावज्जनाः जीवास्ते त्वदीया न भवन्ति त्वदेकशरणास्तया त्वया स्वकीयत्वेनाङ्गीकृता न भवन्ति तावदेव रागादयः आदिशब्देन द्वेषादयः स्तेनास्तथा तावदेव गृहं कारागृहं बन्धनागारं तावदेव मोहोऽप्यङ्घ्रिनिगडः पादबन्धनशृङ्खला भवति यथा राजपरिकरबहिर्भूतानामेव चोरादय उपद्रवं कुर्वन्ति राजानुगृहीतानां तु प्रत्युत सेवामेव कुर्वन्ति तथा त्वद्विमुखानामुपद्रवकारिणोऽपि रागादयस्त्वयाऽनुगृहीतानां तु रागमोहादीनामपि त्वज्जनपर्यवसायित्वेन द्वेषादीनां त्वज्जनविरोधिविषयत्वेन च संसारदुःखविमोचकत्वात् उपकारिण एव ते तथा च केवलविरागिभ्यस्त्वद्भक्तानां त्वज्जनस्याधिक्याद् न तत्सदृशं फलं पर्याप्तमिति भावः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किं च येषां पादरजो मया लोभात् प्रार्थ्यते तल्लभ्यतां न लभ्यतां वा ममेति स्पष्टं न ब्रूवे चेन्मा ब्रूहि किं त्वन्यदेकं यत्पृच्छ्यते तदुत्तरमवश्यमेव देहीत्याह–एषाम् एभ्यो भवान् किं दास्यतीति । एवं दास्यतीति उत प्रश्ने इत्थं पृच्छामीत्यर्थः । ननु, सर्वेश्वराधीनत्वेन त्वयैव चेतसा विचार्य स्वयमेव ज्ञायतां तत्राह–नोऽस्माकं चेत इति बहुवचनेन न केवलं ममैव अपि तु रुद्रस्य सनकादीनां नारदादीनां च सर्वेषामेव सर्वज्ञानां चेतो मुह्यति चेतः कीदृशं विश्वफलात् सर्वफलात्मकात्त्वत्तोऽपि अपरम् फलं कुत्राऽपि देशे काले वा अयत् बुद्ध्या बहुधा अन्विष्य अप्राप्नुवत् "इण गतौ" शत्रन्तः अयमर्थः सर्वफलरूपस्त्वं भिरनादित एव पुत्रादिरूपत्वेन प्राप्त वर्त्तसे अत एव मया एषां भक्तानिति यद्दीयते यदि तु त्वत्तोऽप्यधिकमन्यत् किञ्चन वस्तु प्रशस्तमस्याद् तदेवैतेभ्यो देयत्वेन योग्यमभविष्यत् तत्तु नास्तीत्यस्माकं चेतो मोहे हेतुरिति । ननु, ब्रह्मन् ! सत्यं त्वं तत्त्वानभिज्ञ एव मयैतेषां भविष्यतीमनुरागमयीमक्रूरतां भक्तिं जानतैव तस्मात् फलभूतः स्वात्मा पुत्रादिरूपः प्रथममेव दत्त इत्यन्ये कृतज्ञा भवन्ति अहं तु करिष्यमाणविज्ञ इति मयैव ऋणित्वमिति चेत् सत्यं प्रभो ! तदपि त्वं न्यायेन जीयस एवेत्याह सद्वेषादिव सद्वेषादेवेत्यर्थः । पूतना पापिष्ठाऽपि स्वकुलसहिता त्वामेवापिता त्वयैव त्वां स्वात्मानं प्रापिता तथा येषां धामादयो ममतास्पदाहन्तास्पदानि त्वत्कृते त्वदर्थमेव ते व्रजवासिनोऽपि त्वया त्वामेवापिता इति वाक्यशेषः नासां स्तुभ्रीवाभङ्ग्यैव ज्ञापितः य एव स्वात्मा अतिनिकृष्टायै पापिष्ठायै पूतनायै दत्तः स एव स्वात्मा अतिप्रकृष्टेभ्यः पुरवञ्छिरोमणिभ्यो व्रजवासिभ्यो दत्त इति प्रथमतो दत्तेऽप्यनुचितानुष्ठातिर्दुर्वारेत्येषां ऋणित्वस्वीकार एव तव निस्तार इति भावः ॥ ३५ ॥

नन्वेते गृहस्थाः पुत्रकलत्रादिसंसारजाले निपतिता ... सन्न्यासिभिरुच्यते सत्यं त्वल्लुब्धपुत्रत्वत्कलत्रगणकलत्रादिमन्त एते गृहस्था वर्त्तन्तां देशान्तरस्था ये त्वद्भक्ता गृहस्थास्तेऽपि संन्यासिभ्योऽप्यधिका इत्याह–तावदिति । रागादयो रागद्वेषादयोऽभिनिवेशास्ते च महाचौरा जीवनिष्ठज्ञानानन्दादिमहाधनान्यपहृत्य परमेश्वरे राजनि एते मा फूत्कुर्वन्त्विति बुद्ध्या कर्मविपाकमये गार्हस्थ्यकारागारे मोहनिगडेन निरुद्ध्य जीवाः स्थाप्यन्ते हे कृष्ण ! जना जीवा यावत्ते त्वद्भक्तानुग्रहभाजनत्वेन त्वदीया न भवन्ति तावदेव रागादयः स्तेनाश्चोराः त्वदीयत्वे सति तेषां त्वद्भक्तेष्वेव रागः भक्तिप्रतिकूले वस्तुन्येव द्वेषः त्वय्येवाभिनिवेश इति प्रत्युत त्वन्निष्ठज्ञानानन्दादिकमत्यानीय दधाना एव परमसाधवो भूत्वा नित्यमुपकुर्वते एवमेव गृहं यद्गार्हस्थ्यकर्मसाधनं यत्कारागृहमासीत्तदेव तेषां त्वत्परिचर्यादिकीर्त्तनादिसाधनं त्वदीयनित्यधामप्रापकं भवेत् एवं मोहविषयत्वादिस्वरूपत्वात् सोऽपि त्वत्प्रेमानुभावरूपमोहप्रापकः इति कथं तत् समकक्षतां संन्यासिनो लभन्तां ये "कृच्छ्रो महानिह भव... ...पङ्कवर्गेनक्रमसुखेन तितीर्षन्ति" इत्युक्तया मत्पुत्रेण ... त्कुमारेणापवर्गिताश्रेभ्यः संन्यासिभ्योऽपि भक्त्या परमाधिक्ये ये देशान्तरस्थगृहस्थभक्तास्तेभ्यः परः सहस्रगुणाधिकोऽपि प्रेम्णा अधिकतमा ये व्रजवासिनस्तैरेभिस्त्वं साक्षात् पूर्णब्रह्मस्वरूपोऽपि पुत्रादिरूपत्वेन स्वाधीनीकृत एव वर्त्तसे इति भावः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजस्थानां भाग्यातिशयमाह–एषामिति । सद्वेषादिव सतां ...

प्रपञ्चन्निष्प्रपञ्चोऽपि विडम्बयसि भूतले।
प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रभो ! ॥ ३७ ॥
जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो !।
मनसो वपुषो वाचो वैभवं तव गोचरः ॥ ३८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कानां गोपीजनानां यो वेशस्तदनुकरणमात्रेणैव सकुला बकादिसहिता पूतनाऽपि पापिष्ठा राक्षस्यपि त्वामेवापिता प्रापिता तथाऽपि विश्वफलात्सर्वफलात्मकात्त्वत्तोऽपरं फलं कुत्राऽप्यस्ति ? किन्तु न कुत्राऽप्यस्ति अतो येषां धामाद्यस्त्वत्कृते त्वदर्थमेव एवम्विधानामेषां हे देव ! किं दाता किं दास्यतीति नश्चेतः भवत् सर्वत्र गच्छत् धिचारयत् मुह्यति ॥ ३५ ॥

किं बहुना जनमात्रोऽपि त्वदीयो भूत्वा कृतार्थो भवतीत्याह-तावदिति। हे कृष्ण ! यावत् ते त्वदीयाः जना न भवन्ति त्वदितरसम्बन्धपरित्यागपूर्वकं त्वां शरणं न व्रजन्ति तावत् रागादयः ऐहिकामुष्मिकपदार्थतत्साधनादिषु रागस्तद्विरोधिषु द्वेषः उदासीनेषूपेक्षा एवमादयः स्तेनाश्चोरा पुरुषार्थहराः भवन्ति तावदेव गृहं कारागृहं बन्धनालयं भवति तावदेव मोहोऽपि अङ्घ्र्योर्निगडं शृङ्खला भवति ॥ ३६ ॥

---

भाषाटीका।

हे देव ! हे श्रीकृष्ण ! इन व्रज वासिन कों आप कहा देओगे मैं या बात कों जब विचारूं हूं तब मेरो चित्त विश्वफल जो आप हौ तिन सों और दूसरे अधिक फल कों नहीं पाय के बडे मोह कूं प्राप्त होय हैं, यदि आप कहौ, कि— मैं तौ सर्वाधिक फल रूप हूं सो मैंई अपनें कों उनके ताईं देऊगों तब तौ कछु चिन्ता नही है ? सो एसें भी आप नहीं कहसको हौ, क्योंकि ? जब माता को वेश सो करकें क्रूराभिप्राय धारी कुटुंब सहित पूतना भी आप कूं ही प्राप्त भई तब प्रभो ! जिन व्रजवासिन के धाम, धन, सुहृत्, प्रिय, आत्मा, पुत्र, प्राण, अंतःकरण ये सब आप ही के प्रयोजन के ताईं हैं, उन व्रजवासिन के ताईं भी जब आप, आप रूप फल कों देओगे तब आपके यहां भी कछु विवेक न ठहरो और जो विवेक करोगे तौ आपके समीप में इन व्रजवासिन के देवे लायक कछु पदार्थ नही ठहरेगो काहे सों कि— आपसों और कोई जगत् में अधिक फल नहीं, जाकों देके अनृण होजाओ तासों मेरी समझ में तौ आप इन व्रज वासिन के सदा ऋणिया ही रहोगे ॥ ३५ ॥

हे भगवन् ! रागादिक तब ताईं चोर हैं, और तब तक ही गृह कारागृह है और तबलग ही मोह पांव की बेड़ी है, कि–जब तक आपके जन नहीं भये, आपके जन भये पै तौ राग होयगो तौ आपही में, गृह होयगो तौ आप को मंदिर कहावे गो, मोह होय गो तौ आपही में, तासों आप के भये पै ये कोई प्रतिबन्धक नही होयसके हैं ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

नन्वत एवाहमेषां पुत्रादिरूपेण वर्ते इति चेत्तत्राह-प्रपञ्चमिति। प्रपन्ना या जनता जनसमूहस्तस्या आनन्दानां सन्दोहं समूहं प्रथयितुमिति न हि कपटपुत्रत्वादिना तादृग्भक्तेरानृण्यं सम्पद्यत इत्यर्थः ॥ ३७ ॥

तदेवमादित आरभ्याचिन्त्यानन्तगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्त्वा केचित्तु जानीम इति स्थितास्ताननुवदन्सन्निधाह—जानन्त इति। न तु मे मनआदीनां तव वैभवं विषय इति ॥ ३८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

प्रपञ्चं पुत्रत्वादिकं निष्प्रपञ्चः प्रपञ्चातीतोऽपि भूतले पृथिव्यां विडम्बयसि अनुकरोषि किमर्थं व्रजसम्बन्धिसलीलाकर्णनद्वारा निजभक्तानन्दविस्तारार्थम् अन्यत्तैर्व्यञ्जितम्, अथवा सदृद्धेषात् सतां द्वेषात् मारणोद्यमादपि सकुलाऽपि बालघातनादिमहादुष्टत्वेन प्रसिद्धा पूतनाऽपि त्वयाऽऽपिता त्वयैव प्रापणकारणं स्तन्यदानादिकं पूर्वं निर्दिष्टमेवास्ति इवेति सुखविशेषप्राप्त्या तत्त्वतः साक्षाद्भगवत्प्राप्तेः आपितेति च तत्सुखेन सह भगवद्भेदाच्चद्व्याप्त्या भगवदाद्यभिप्रायेण एते च त्वन्मित्राणीत्युक्तमेव अतः प्राप्येऽवश्यविशेषोऽपेक्षित एवेति भावः। ननु, तर्हि निजस्थानधनादिसहितमात्मानं साक्षादेभ्यो दास्यामि तत्राह—यद्धामेति। त्वत्कृते त्वत्सेवालक्षणकर्म्मणि निमित्ते तैर्यत्तुभ्यमर्पितमस्ति त्वयाऽपि त्वन्मात्र एव दत्ते प्रत्युपकारेण साम्यमेव न च तव प्रसिद्ध औदार्यादिविशेषः सम्पद्येतेति भावः। ननु तेषामभीष्टसिद्धिदानाऽसमर्थमपि मां सदा सेवमानास्त एव दूषणीयाः तत्राह, हे कृष्ण, सर्वचित्ताकर्षक! यावत् ते व्रजवासिनः जनाः त्वत्सेवनपरा न भवन्ति तावत्तव रागादयः नृत्यगीतादिविलासाः स्तेना इव परमोपद्रावका भवन्तीत्यर्थः। गृहमपि कारागारं परमदुःखदमित्यर्थः। मोहः सर्वगकविषयकोऽङ्घ्रिनिगडयन्त्रणाकारः परमास्वानन्त्यापादनात्। यद्वा श्रीवैकुण्ठादिविषयकारागारादयः तत्रत्यमेव गृहं मोहश्च महालक्ष्म्यादिविषयको ज्ञेयः, अन्यत् समानम्। त्वयैव बन्धनस्तथा क्रियते सर्वेऽपि लोका यथा त्वां भजन्तीति तेषां को दोष इति

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भावः । यद्वा नाथ तेषां स्वदेहादिषु पश्वादिषु कारागारादयः स्तेना भवन्ति गृहं तावत् कारागृहं स्वयान्धवेषु मोहस्ताव-दङ्घ्रिनिगडः यावत्ते व्रजस्थाः जनास्त्वत्सेवनपरा न स्युः तस्यत एव पुत्रादिरूपैरेभिः सह विहारविशेषं करोमि तत्राह—प्रप-ञ्चमिति । निर्गतः प्रपञ्चोऽन्येषामपि यस्मात्तथाभूतस्त्वं विडम्ब-यसि विडम्बयासि स्थिरीकरोषि प्रपन्नजनता व्रजवासितद्वा-राऽस्यैवानन्दविस्तारणाय ॥ ३७ ॥

तदेवं ज्ञाने प्रयासमुदपास्येत्यारभ्य प्रतिपादितं ज्ञानतुच्छत्वं भक्तिमाहात्म्यं चोपसंहरन्नाह—जानन्त इति । ये तव वैभवं त्वद्भक्ति-माहात्म्यं जानन्तो वर्तन्ते ते महापण्डितम्मन्या जानन्तु नाम मतो ज्ञाने वर्तमाना ज्ञानमपि किल साधयन्त्विति भावः । इति सोल्लु-ण्ठोक्तिः बहुया उक्त्या ज्ञानादितुच्छताया भक्तिमाहात्म्यस्य च वर्णनेनापरेण किं प्रभो ! हे विचित्रानन्तमहाप्रभाव ! तव वैभवं मम वपुषो लिखनादिशक्त्या वाचश्च वर्णनादिना मनसोऽपि चिन्तना-दिनाऽविषयः अपरिच्छिन्नत्वादवितर्क्यत्वाच्च एवं तद्व्यतिरिक्त-मन्यत् सर्वं गोचर इति सूचितम् । यद्वा, प्रथमं परमस्तुतितया प्रारब्धं श्रीभगवद्वपुषो वर्णनं तदन्तरापतितशङ्कापरम्परा तद्भक्तिभजनमाहात्म्यवर्णनेन च तदेव सुदृढीकृत्योपसंहारेऽपि तदेव तत्राह—प्रकर्षेण सुन्दरतराकारादिना भवति प्राकट्यं प्राप्नोतीति प्रभुस्तत्सम्बोधनं हे असाधारणप्रकृष्टतर ! इत्यर्थः । तव वपुषो वैभवं न मम गोचर इत्यन्वयः । यद्वा, तव मनआदे-र्वैभवं न मे गोचरः तत्र यथा समुद्रकोटिगम्भीराशयस्य तव मनसः तथा एकस्यैव परिच्छिन्नत्वाऽपरिच्छिन्नत्वादिना वपुषश्च तथा अनन्तागाधवेदरूपस्य । यद्वा, परिमितस्यापि सर्वथाश्र-यस्य साम्प्रतं सख्यादिपूर्णार्थमायास्य वचसश्च वैभवं तत्त-दभिप्रायादिकं न गोचरः । यद्वा, प्रस्तुतश्रीभगवन्महास्तुतिरूपं श्रीनन्दव्रजमाहात्म्यवर्णनमुपसंहरन् तज्ज्ञानाभिमानिनो मूढा-न्नुपहसन्निवाह, एषामित्यादेः । श्रीव्रजवासिनोऽनुवर्तन्त एव ततश्च एषां वैभवमित्यर्थवशाज्ज्ञेयम् प्रभो, हे श्रीगोकुलेश्वर ! व्रजवासिना-मेषां माहात्म्यं मम तथापि न कायवाङ्मनसां गोचरः तथापि तज्ज्ञानाभिमानं ये कुर्युः ते परमाज्ञा उपहास्या एवेति भावः । अन्यत् समानम् ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वहो भाग्यमित्यादौ मित्रत्वस्य काश्चिद्विशेषानिर्दिष्टत्वे परमानन्दादीनामनुवर्णनायां तस्मिन् विधेये सङ्क्रमणेन च श्लोकोभिः सार्धं मम लीलाया नित्यत्वमभिप्रेतम् एषां स्थित्या-द्यविवेकेनयनेन तदेव निर्दिष्टं तद्भूरीत्यादौ वैकुण्ठादिपरित्यागपूर्वक-मेषां चरणरजःसम्बन्धेन स्वजन्म प्रार्थ्य पुनर्यावज्जनादिश्रुतिमृग्य-मद्रूपपुरुषार्थप्रार्थितं च जीवनरूपं समर्थ्य तदेव द्रढीकृतम् एषां घोषेत्यादौ मम तद्गुणविगणनासमर्थेनानाविकल्पपरम्परायां पुत्रादिरूपेणानुगतत्वप्राप्त्या तदेवानीतं तावदित्यादौ तत्र विघा-तकासम्भवात्तदेव पर्यवसायितं तत्तद्व्याख्यातं भीमीडयेत्यादौ येषामेषां सम्बन्धि यदेतन्मम रूपं तदेव निजपुरुषार्थत्वेन प्रतिज्ञातं तत्र केचित् प्रपञ्चरीतिदृष्ट्या लीलेयमन्यथेत्याशङ्कन्ते तत्र किं वक्तव्यं तत्राह—प्रपञ्चमिति । नित्यमेवैतैः समं लीलायमानश्च निष्प्रपञ्चः प्रपञ्चात्पृथग्लीलोऽपि मध्ये मध्ये त्वेतैः समं भुवने-ऽवतीर्य प्रपञ्चं विडम्बयसि नरान्तरवज्जन्मादिलीलयाऽनुकुर्वन् महान्तम् एव तत उत्कर्षं दर्शयतीत्यर्थः । ननु, किमर्थमिदं तत्राह प्रपन्नेति । यद्यपि तस्यां नित्यायामभूतत्वाप्रकटलीलायां नित्यानां प्रपन्नजनसमूहानाम् एषाम् अनित्यानां चास्माकं यथास्वमंशेन श्रवणेन चानन्दो भवत्येव तथाऽप्यस्यां भूतले प्रकटायां जन्मा-दिलीलायां त्वानन्दानां सन्दोहः प्रथितो भवतीत्यतस्त-मित्यर्थः ॥ ३७ ॥

तदेवमस्यापि देववपुष इत्यादिभिः सामान्यतस्तस्य महिम्नो दुस्तर्कत्वं दर्शितं पुनश्च पश्येश ! मेऽनार्यमित्यादिभिः, स्वरूप-शक्तिमायाशक्त्योः स्वरूपस्य च विशेषतः । अथ अहोऽतिधन्या इत्यादिभिः, तन्निजजनप्रेम्णः एषां घोषनिवासिनामित्यादिना, तद्-रूपस्य प्रपञ्चमित्यादिना, लीलायाश्चेति तत्तन्निरूपणं परिसमाप्य उप-क्रमार्थमेव निजाभीष्टत्वेनाभिप्रयन्नुपसंहरति—जानन्त इति । प्रभो ! हे विचित्रानन्तमहाप्रभाव ! तव वैभवं वेदादिभिः श्रुतं मम मनसो न गोचरो न परिच्छेद्यं सामर्थ्येण रूपादिरूपं वपुषश्चक्षुरादिगोलकस्य न अत एव न वाचः तस्माद्गोपिकादि-यत्प्रार्थितं तदेव प्रार्थय इति भावः ॥ ३८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ननु, मम को वा संसारिभेदापादको गुणः ममताऽहन्ता-दर्शनाद्वैपरीत्येन घृणयमत्वादित्यत्राह—निष्प्रपञ्चोऽपि स्वरूपरूपगुण-सर्वचेतनाचेतनविलक्षणोऽपि प्रपञ्चं सूक्ष्मस्थूलरूपं विडम्बयसि तत्तच्छरीरकत्वेन स्वैच्छिकविग्रहेण च विडम्बयसि अनुकरोषि न तु तथाऽहन्ताममतास्पदतत्तत्पदार्थसङ्गेन वैषम्यनैर्घृण्ययोः प्रसक्तिः संसारो वा तर्हि विडम्बनेन किं प्रयोजनं तत्राह प्रपन्नेत्यादि । परमपदस्थलक्ष्मीशेषविष्वक्सेनादिप्रपन्नानन्दसन्दोह-विस्ताराय भोगविभूतिभरत्वमिह च अनन्तगतपङ्कजप्रपन्नमनोरथा-ऽनुगुणानन्दविस्ताराय तत्तद्रूपैः क्रीडनं तवेति भावः ॥ ३७ ॥

एवम्भूततत्त्वज्ञाने हि दुर्ज्ञेयत्वमेवापरिमेयस्वरूपरूपगुणविभूति-लीलामयस्य भगवतः प्रस्तावयन् स्तौति, एकेन जानन्त इति ये वदन्ति जानीमो वयं भगवत्तत्त्वम् इति ते जानन्तु "अवि-ज्ञातं विजानताम्" इति श्रुतेः ते न जानन्त्येवेति भावः । "विज्ञा-तमविजानताम्" इत्यादिश्रुतेरर्थमाह—किं बहूक्त्येति बहु-बहुकथनेन किम् ? "वाचो विग्लापनं हि तत्" इत्युक्तेः तव वैभवं स्वरूपरूपादिवैभवं मे परिमितमनोवृत्तिशरीरवाक्यैः गोचरो न भवति सङ्कल्पविकल्पाभ्यां मनोविषयो न भवति वपुषः परिच्छिन्नविषयतया ग्रहणविषयो न भवति वाचो विषयश्च वर्णनीयत्वेन न भवति ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं मोहितचित्तोऽपि पुनरेव मध्यवस्थामीश्वरमिप्रपन्न-प्रपञ्चमिति । निष्प्रपञ्चोऽपि "निष्क्रियं निष्कलम्" इति श्रुत्युक्ति-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्राकृतशरीरतद्व्यापाररूपप्रपञ्चरहितोऽपि मायया सङ्कल्पेन प्रपञ्चं विडम्बयसि अनुकरोषि किमर्थम् ? हे प्रभो ! प्रपन्नजनसमूहस्यानन्दसन्ततं प्रथितुमाविष्कर्तुं वर्द्धयितुम् इति यावत् ममत्वेवं निश्चय इति भावः ॥ ३७ ॥

ननु, मम प्रपञ्चविडम्बनहेतुं तत्त्वतस्त्वं न जानीष इत्याह—जानन्त इति । ये जनास्त्वत्स्वरूपस्वभावादिकं जानन्ति त एव विडम्बनहेतुं जानन्तु मम बहुभाषितेन किं न किञ्चिदपि साध्यमस्तीत्यर्थः । एवमात्मनोऽज्ञत्वमाविष्कृतं पुनः सार्वज्ञ्यमतीतमेतत्तु जानामीत्यभिप्रपन्नाह—मनस इति । तव वैभवं मनआदिकरणत्रयस्य गोचरो नेत्यनुवर्त्तते न गोचरो न विषय इत्यर्थः । वपुषः इति दृष्टान्तार्थं यथा वपुषो न गोचरः तथा वाङ्मनसयोरपीति अथवा तव वपुषोऽपि वैभवं वाङ्मनसागोचरमित्येतावत्तु जानामीत्यर्थः ॥ ३८ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

ननु, यथाहमेषां पुत्रादिरूपेण वर्त्ते न तथा तेषामिति वैरूप्यादानृण्यं कथमित्यत आह—प्रपञ्चमिति । हे प्रभो ! त्वं निष्प्रपञ्चोऽपि प्रपञ्चरहितोऽपि "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति प्रमाणात् भूतले प्रपञ्चं विडम्बयसि अनुकरोषि किमर्थमिति चेदत आह—प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रपन्नजनता प्रपन्नजनानां समूहस्तस्या आनन्दानां त्वत्स्वरूपरूपगुणानुभवरूपानन्दानां सन्दोहं समूहं प्रथितुं प्रथयितुं विस्तारयितुं तदुक्तं भगवता "परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति स्वदर्शनदानेन साधुपरित्राणमेव परमप्रयोजनं दुष्कृतनाशस्त्वानुषङ्गिक इति भावः । अतो ये त्वद्गुणश्रवणकीर्त्तनादि विना शरीरधारणमपि न बहुमन्यन्ते तान् दर्शनादिना सुखयसि अतस्तेषां ऋणी एव त्वमिति भावः ॥ ३७ ॥

अतो मयाऽप्येतदेव निश्चितमित्याह—जानन्त इति । हे प्रभो ! स्वामिन् ! किं बहूक्तेन बहूक्त्या किं ? ये केचिन्निर्विशेषं गुणरहितं चिन्मात्रं प्रमाणशून्यं यत्किञ्चित्तत्त्वं त्वत्तः परमस्तीति जानीम इति निश्चयं कृत्वा स्थितास्ते जानन्तु तेषां ममाऽऽग्रहो नास्ति अहोऽज्ञजनताऽज्ञता इति पूर्वमेवोक्तं कुतः ?—

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय, !" ।

"नारायणात्परो देवो न भूतो न भविष्यति" ॥

इत्यादिप्रमाणैर्निश्चयेन तादृशस्य प्रमाणः खपुष्पायमाणत्वात् अत एव मम तु मनसो वपुषो वाचस्तव वैभवं त्वन्महिमा गोचरो विषयो भवत्विति शेषः । इतः परं निरुपाधिकत्वद्वेषेषिसम्बन्धज्ञानं मम विस्मृतं माभूदित्यर्थः ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवमस्यापि देववपुष इत्यादिभिस्तत्त्वानेकधा दुस्तर्कत्वमेव प्रदर्श्य तत्तत् निरूपणं परित्यजन् उपक्रमार्थमेवाभीष्टत्वेनाभिप्रायं तूपसंहरति—जानन्त इति । हे कृष्ण ! सर्वेन्द्रियाकर्षकगुणरूप ! अनुजानीहीति गमनानुज्ञेयं नात्मेच्छया प्रार्थ्यते किन्तु त्वदस्थानानर्हतयैवेति भावः ॥ ३८ ॥

---

### श्रीजीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

नन्ववगतमेव भवतैषां तत्त्वं मत्तत्त्वं कीदृशं तदपि कथयेत्याह, प्रपञ्चं निष्प्रपञ्चोऽपीत्यादि । हे प्रभो ! तव तत्त्वं को वेत्तु प्रभुत्वात् प्रभुर्हि कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः तथापि यत्किञ्चिद्वदामीति प्रभो ! इति सम्बोधनार्थः किं वक्तव्यं तद्वदेत्याह—निष्प्रपञ्चोऽपि त्वं केवलसच्चिदानन्दलीलोऽपि भूतले प्रपञ्चं लौकिकव्यवहारं विडम्बयसि अनुकरोषि किं कर्त्तुं तत्राह, प्रपन्नजनतानन्दसन्दोहं प्रथितुं प्रथयितुं तव लौकिकलीलायां येषां प्रपन्नानामानन्दसन्दोहस्तं वर्द्धयितुम् ॥ ३७ ॥

इत्येवाहं जानामि अन्ये येऽन्यज्जानन्ति ते जानन्तु नामेति सकटाक्षमाह—जानन्त एवेत्यादि । जानन्त एव तव महिमानं जानीम इत्यभिमानवन्त एव जानन्तु किं बहूक्त्या तान् प्रति बहुना व्याहारेण अथवा किं बहूक्त्येति परवाक्येन सह सम्बध्यते ते जानन्त्वेव मम तु मनसो वपुषो वाचो गोचरस्तव वैभवं न भवति । अचिन्तनीयत्वात् न मनसो गोचरः अनन्तत्वात् न वाचो गोचरः वपुःशब्दोऽत्र चक्षुःश्रवणाद्यर्थः तेन तदगोचरत्वेन चक्षुरादेरप्यगोचरः ॥ ३८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेतत् सर्वं साक्षात् स्वरूपे युक्तं न तु कृत्रिम इत्याशङ्क्याह—प्रपञ्चमिति । निष्प्रपञ्चोऽपि त्वं प्रपञ्चं विडम्बयसि प्रापञ्चिकीमिव चेष्टां करोषि तत्र हेतुः प्रपन्ना या जनता तस्या आनन्दसन्दोहमानन्दसमूहं प्रथितुं स्थूलं कर्त्तुम् । ननु, विपरीतरूपेण कथं तदधिकं भविष्यतीत्याशङ्क्याह—प्रभो इति । सर्वप्रकारेणापि सर्वसमर्थः ॥ ३७ ॥

ननु, ज्ञानेनाऽप्यानन्दप्रथनसम्भवात् किमिति प्रपञ्चविडम्बयसीत्याशङ्क्याह—जानन्त इति । ये ज्ञानिनो भवन्ति त एव जानन्तु नन्तु तत्तु ज्ञानं स्वप्नप्रबोधकल्पम् अतो भ्रान्ता एव ते । ननु, तथा सति तन्मतं दूषणीयमिति चेत्तत्राह, किं बहूक्त्येति । बहूक्त्या किं प्रयोजनम् अल्पेनैव दूष्यते न हि मत्तः काश्चिन्महानास्ति वेदगर्भोऽहं मम तु मनसो वपुषो वाचोऽपि वैभवं न गोचरो न ज्ञातुं शक्यं न देहकृत्या परिच्छेत्तुं शक्यं स हि सर्वं करोति तथा भगवद्वैभवमपि कृत्वा प्रदर्शयिष्यतीति शङ्कयोक्तं चक्षुषां विषयो न भवत्येव तथा चेतसोऽपि ॥ ३८ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी ।

अत यथाहमेषां पुत्रादिरूपेणाऽपि स्थित इति चेदत्राह,

**अनुजानीहि मां कृष्ण ! सर्वं त्वं वेत्सि सर्वदृक् ॥**
**त्वमेव जगतां नाथो जगदेतत्तवार्पितम् ॥ ३९ ॥**

श्रीमद्धरिधरकृतबालप्रबोधिनी।

प्रपञ्चमिति। हे प्रभो!(१)सर्वकरणसमर्थ! त्वं निष्प्रपञ्चः प्रपञ्चातीतोऽपि प्रपन्ना शरणमागता या जनता जनसमूहस्तस्यानन्दानां सन्दोहं समूहं प्रथयितुं विस्तारयितुमिह भूतले प्रपञ्चं विडम्बयसि बहूनां पुत्रादिरूपेणानुकरोषि तथा च नैतेन विडम्बनमात्रेणैषामनिर्वचनीयप्रेमवतामानृण्यं सम्पद्यत इति भावः ॥ ३७ ॥

तदेवमादित आरभ्याचिन्त्यानन्तगुणत्वेन स्वयम्भगवतो दुर्ज्ञेयत्वमुक्त्वा ये तु वयं तत्त्वतो जानीम इत्यभिमन्यन्ते तानुपसंहरन्निवाह–जानन्त इति। ये जानन्ते जानीम इति वदन्ति त एव जानन्तु बहूक्त्या तेषां बहुनिन्दावचनेन किं प्रयोजनम् हे प्रभो! मम मन आदीनां तवाचिन्त्यानन्तगुणस्य वैभवं गोचरो विषयो न भवति, अहं हि वेदगर्भो न हि लोके मत्तोऽन्यः कश्चिदधिकज्ञानवानस्तीति यद्यहमेव न जानामि तदा ये वयं भगवत्तत्त्वज्ञा इति ये वदन्ति ते तु केवलमभिमानेन भ्रान्ता एवेति भावः वपुषश्चक्षुरादेः ॥ ३८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ननु, व्रजेऽस्मिन्नेतत्पुत्रादिभावं पूर्णब्रह्मणो मम न वस्तुत इति केचिन्मन्यन्ते सत्यं ते भ्रान्ता एवेत्याह–प्रपञ्चमिति। निष्प्रपञ्चोऽपि प्रपञ्चातीतोऽपि त्वं भूतले सदा स्थितः सन् प्रपञ्चं विडम्बयसि प्रपञ्चस्थं पुत्रादिभावमनुकरोषि प्रापञ्चिकेषु पित्रादिषु प्रापञ्चिकाः पुत्रादयो यथा चेष्टन्ते तथैव त्वमपि चेष्टसे इत्यर्थः। तेन जीवानां यथा पितृपुत्रादिभावो ह्यवास्तवस्तथा तव न तव तु सनिष्प्रपञ्चत्वाद्वास्तवो नित्य एवेति तव लीला नित्या प्रपञ्चातीताऽपि प्रपञ्चानुकरणमयीति सिद्धान्त उक्तः किमर्थं विडम्बयसि प्रपन्ना या जनता तस्या यस्तादृशीलीलास्वादनोत्थ आनन्दसन्दोहस्तं प्रथयितुं ब्रह्मानन्दाद्वैकुण्ठीयलीलानन्दादपि विस्तृतीकर्तुं भूतल इत्ययं भावः। प्रकाशे दीपो नातिशोभते यथान्धकार एव श्वेतराजतपात्रे हीरकरत्नं नातिशोभते यथा नीलकाचादिपात्रे, तथैव चिन्मयवैकुण्ठे चिन्मयी लीला नातिचमत्करोति यथा मायामये प्रपञ्चे इति यद्यपि व्रजमण्डलमपि चिन्मयमेव तदपि कृष्णस्य प्राकृतपुरुषसाधर्म्यमिव भूतलस्थव्रजमण्डलस्यापि प्राकृतभूतलसाधर्म्यमेव दृष्टमतोऽत्र लीला चमत्करोत्येवेति हे प्रभो! इति मामपि प्रपन्नमध्ये गणयेति भावः ॥ ३७ ॥

सत्यं तर्हि मत्स्वरूपस्य मद्व्रजवासिनां मदीयलीलाया मद्भक्तेश्च सर्वमेव तत्त्वं मदग्रेऽपि स प्रतिभमेवं व्याचक्षाणा मद्विधा अस्मिन् जगति कियन्तो वर्तन्ते तान् जिज्ञासे कथयेति वक्रोक्तिमाशङ्क्य सत्रपं संकरुणं सानुतापमाह—जानन्त एवेति। ये जानन्तस्ते जानन्तु अहं तु महामूर्ख एवास्मीति भावः। ननु, तर्हि कथमेतावत्स्तवपर्यन्तं ब्रूषे एव तत्राह, बहुक्त्येति। त्वदग्रे बहूक्तिरेव मूर्खत्वद्योतिनीत्यर्थः। ननु, ब्रह्मन्! निष्कपटं ब्रूहीति तत्राह, नेति तव वैभवमैश्वर्यं मम मनसो न गोचर इति ध्यानेनान्तप्राप्त्यभावात् वपुष इत्यधुनैव वपुषाऽपि वाच इति "गुणात्मनस्तेऽपि गुणान् विमातुम्" इति मया तावदुक्तमेव। यद्वा, तव मनसो वैभवं मम न गोचर इति त्वन्मनसि यत् किमप्यस्ति तत् किं मया ज्ञातुं शक्यते "साक्षात्तवैव किमुतात्मसुखानुभूतेः" इति पूर्वमेव मयुक्तेः एवं त्वद्वपुष इति त्वद्वपुषि किमस्तीति तव वाच इति तव वेदलक्षणायां वाचि किमस्तीति साक्षात्तव तु मयि मौनवत्त्वात् वचनगन्धस्याप्यप्राप्तेरेव तस्मात् के खलु त्वदग्रे मदादयो वराक इति भावः ॥ ३८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु, सर्वदा परच्छन्देन वर्तमानस्य कथं सर्वजनशरण्यत्वमित्यत्र भगवतः स्वातन्त्र्यं वदन् शरणागतेषु कृपालुतामाह–प्रपञ्चमिति। निष्प्रपञ्चोऽपि पारवश्यादिरूपप्रपञ्चरहितोऽपि प्रपञ्चं पारवश्यादिचेष्टितं विडम्बयसि अनुकरोषि तत्प्रयोजनमाह प्रपन्नेत्यादि। हे प्रभो, समर्थ! प्रपन्नजनतायाः शरणागतजनसमूहस्य आनन्दसन्दोहं स्वकृपानिमित्तसुखसमूहं प्रथयितुम् ॥ ३७ ॥

यथाशक्ति भगवन्तं स्तुत्वा पूर्वोक्तमियत्तानवच्छिन्नत्वमुपसंहरति। जानन्त इति ॥ ३८ ॥

भाषा टीका।

हे प्रभो ! आप निष्प्रञ्च हो, अर्थात् प्राकृत शरीर और वाके व्यापार सों रहित हो, तो भी आप के शरणागत जन समूह के आनन्द कों उनके आनन्द वढायवे कूं अपनी इच्छा सों या संसार को अनुकरण करो हो ॥ ३७ ॥

हे प्रभो ! जो आप के स्वरूप स्वभावादि कों जानें हैं वे जानते रहो मेरे बहुत कहवे सूं कछु प्रयोजन नहीं है परंच इतनी तो मैं कहूं हूं कि आपको वैभव मेरे वपु (देह) मन वाणी के विषय नहीं हैं अर्थात् आपके वैभव कूं मैं वाणी सों तो कैसे कहसकूं परंच मन में हू नहीं आय सके है ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

जगदीशत्वाद्यभिमानं परित्यज्याह–अनुजानीहीति। अस्मानस्मदादीनाञ्च ज्ञानबलादि सर्वं त्वमेव वेत्सि यतः सर्वदृक् जगतां नाथस्तु त्वमेवेत्यनेनावज्ञातमतो ममतास्पदं देहगृहादिकञ्च तवार्पितम् ॥ ३९ ॥

(१) सर्वकरणसमर्थोऽसि इति क० पुस्त० पा०।

श्रीकृष्ण ! वृष्णिकुलपुष्करजोषदायिन् ! क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ! ।
उद्धर्मशार्वरहर ! क्षितिराक्षसध्रुगाकल्पमार्कमर्हन् ! (१) भगवन्नमस्ते ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं किङ्करं प्रस्थापयेत्यत्यादरेण नमस्करोति—श्रीकृष्णेति । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन हे सूर्योपम ! क्ष्मा चामरनिर्जरा देवाश्च द्विजाश्च पशवश्च त एवोदधयस्तेषां वृद्धिकरित्वेन हे चन्द्रोपम ! उद्धर्मः पाषण्डधर्मस्तदेव शार्वरन्तमस्तद्धरतीति तथा अनेन ह्यग्न्युपम ! हे क्षितिराक्षसध्रुक् ! क्षितौ राक्षसाः कंसादयः उग्रत्वेन तेभ्यो द्रुह्यतीति पुनः सूर्योपम ! सूर्यांशुपमाऽपि न्यूनेति मत्वाह—आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, पूज्य! भगवन्नाकल्पं कल्पपर्यन्तन्ते तुभ्यन्नम इति ॥ ४० ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

इत्थं स्तुतिप्रभावजनितश्रीभगवत्प्रसादविशेषतोऽखिलाभिमानापगमेन परमदैन्यमाश्रितो नउज्ञानादितेव निजं स्थानं गन्तुमनुज्ञां प्रार्थयते—अनुजानीहीति । कृष्ण, हे निजाशेषभगवत्ताप्रकटनपर ! सर्वम् उक्तत्वद्वैभवं त्वमेव वेत्सि यतः सर्वदृक् सर्वज्ञः यद्वा, सर्वदृगपि त्वं वेत्सि किं कथा नैवेत्यर्थः । अनन्तत्वात् अतस्तत्स्तोतुमपि नाहमीति प्रस्थापयेत्यर्थः । किञ्च, त्वद्भक्तिसिद्ध्यं ऽभिमानत्यागेन निजं सर्वं त्वय्यर्पयामीत्याह—त्वमेवेति अन्यत्तैर्व्यञ्जितम् । अथवा भो ब्रह्मन् ! त्वयाऽत्र किमपि जन्माद्युनैव प्रार्थितं तत् किमन्यत्र गन्तुमिच्छसि तत्राह—सर्वमिति । चतुर्मुखेनानेन देवदेहेनाऽत्र स्थातुं नाहमीत्यादिकं मद्वृत्तं त्वं चैषां प्रेमवश्यो यथेष्टमेतान् रमयितुं व्यग्रोसीत्यादिकं च निवृत्तं हे कृष्ण ! व्रजजनैकप्रिय ! त्वं वेत्स्येव तत् कथमत्र स्थास्यामीति भावः । किन्तु निजतत्प्रार्थितसिद्धये सर्वं त्वय्यर्पयामीत्याह—जगतां नाथस्त्वमेवेति अर्थात्भिमानोऽपि न मम घटते अतोऽर्पयाम्यर्पितमिति भावः । भो परमेष्ठिन्, सृष्ट्यादिना तावज्जगदीशस्त्वं तत् कथमीदृग्दैन्यमालम्बसे तत्राह—जगतामेव नाथस्त्वमित्यहं दास एवेति भावः । ननु, पितामहस्य तव पुत्रपौत्रादिमयं जगत् साक्षात्पाऽपि किमयमायामेतदू दृश्यते तत्राह, तवैव एतज्जगत् अर्पितं मयि त्वयैव अतोऽत्र न मम नाथत्वं किन्तु तत्कर्तृकार्पणमहिम्नैव मदधिकृततया स्फुरतीति भावः ॥ ३९ ॥

हे श्रीकृष्णेति श्रीः सर्वविषयकविविधशोभा तदोक्तकृष्ण श्रीमच्छब्देन सर्वचित्ताकर्षकेति सर्वथा सर्वतो वैशिष्ट्यमभिप्रेतं तदेवाभिव्यनक्ति, वृष्णीत्यादिना तत्र तत्र हेतुः भगवन्निति सर्वैश्वर्यविस्तारकेत्यर्थः । अन्यत्तैर्व्याख्यातम् यद्वा, इत्थं सञ्जातपरमभक्त्यान्ते विचित्रनामसङ्कीर्तनरूपां स्तुतिं कुर्वन् सर्वमवतारप्रयोजनमेकश्लोकेन संक्षिप्य वर्णयन् सपदाब्जग्रहं प्रणमति—तत्र वृष्णिकुलेति सूर्योदयेन कमलानां तमोमुद्रानिरसनपूर्वकप्रकाशनमिवाविर्भावमात्रेण श्रीवसुदेवादियादववर्गाणां दुःखनाशनपूर्वकानन्दप्रदत्वं माधुर्यावर्णितम्, तथोक्तमेव "स बिभ्रत् पौरुषं धाम" इति दिष्ट्या हंऽस्या भवतः परोभुवः" इत्यादिना किञ्च पृथिव्याश्च देवानां च पशूदधेश्च गवादिपशुसमुद्रस्य श्रीनन्दव्रजस्य वृद्धिकारिन् ! अधर्मनिवर्त्तनधर्मप्रवर्त्तनादिना साक्षाद्दुःखहरणसुखसम्पादनादिना च वर्द्धनशील ! यद्यपि क्ष्मावर्द्धनेनैव तदन्तर्गतानां द्विजगवादीनां वृद्धिकारित्वं स्वत एवायाति तथाऽप्यवतारेऽस्मिन् तद्विशेषापेक्षया पृथग् निर्दिष्टम् । यद्वा, महर्लोकादिवर्त्तिनामृषीणां (गो)लोकादिवर्त्तिगोकुलानां च महत्वार्थं यद्वा, व्रजसम्बन्धिनो ये क्ष्मानिर्जराः विप्राः द्विजाश्च पक्षिणः पशवश्च गोमहिष्यादयः अतिप्राचुर्यात् एवोदधिस्तद्वृद्धिकारिन्निति प्राधान्याद् व्रजस्यैव सम्वर्द्धकत्वमुक्तम् अधुना प्रेमभक्तिविस्तारणं मुख्यप्रयोजनमन्ते वर्णयति, धर्मोऽत्र भक्तिलक्षणः तद्विरुद्धं ज्ञानादिकमेवोत्पथादिन्यायेनोद्धर्मः स एव सदा सर्वत्र प्रकाशमानस्यापि भक्तिमार्गस्याच्छादकत्वाच्छार्वरं तमस्तद्धरतीति तथा अत एव हे क्षितिराक्षसध्रुक् क्षिति राक्षसाः द्विविधाः एके तत्र तमसि ये चरन्ति रजनीचरसाम्यादखिललोकजीवनभक्तिमार्गविघातकत्वाच्च राक्षसाः अन्तर्निगूढासुरभावा असन्तः अन्ये च वृष्णिकुलविद्वेषिणःप्रकटदैत्याः कंसादयः तेभ्यो द्रुह्यतीति तथा तत्रासतां दुर्मदादिनिग्रहेण कंसादीनां च साक्षान्मारणेनैव तच्च तेषां हितार्थमेवेत्याह—भगवन् ! हे परमदयालो ! सतां भक्तौ प्रवर्त्तनात् एतच्चापूर्वकृत्यं त्वमेव कर्तुमर्हसि नाऽन्यः कोऽपीत्याह, अर्हतीत्यर्हन्, हे सर्वं कर्तुं योग्य ! समर्थेति वा अतः आकल्पं मज्जीवनकालमभिव्याप्य । यद्वा, आकल्पं त्वदीयगुञ्जावतंसबर्हापीडादिकं वामहस्तस्य कवलादिकं च भूषणमभिव्याप्य तथा आर्कम् अर्को नाम वृक्षो भगवदनर्हपुष्पो वैष्णवानामनादरणीयः तमप्यत्र त्वमभिव्याप्य त त्वत्सहिताय अशेषनिजैश्वर्यप्रकटनशोभायुक्तकृष्णपरमनन्दनन्दन ! नमस्ते "श्रीमच्चैतन्यदेवानुगृहीतानामनुग्रहात् तेषां मुदे स्तुतिर्ब्राह्मी व्याख्यातेयं यथारुचि" ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तत्तत्प्रकरणान्ते या दैन्यात्मिका भक्तिरेव तत्प्राप्तिकारणत्वेन दर्शिता, तामेवाविःकुर्वन् अनुज्ञां प्रार्थयते—हे कृष्ण ! सर्वेन्द्रियाकर्षकरूपगुण ! अनुजानीहि अनेन गमनानुज्ञेयं नात्मेच्छया प्रार्थ्यते किं त्वत्राऽवस्थानानर्हतयैवेति सा च प्रार्थितस्यापि तस्य मौनितयेति भावः । त्वयि च यन्मयोक्तं यद्वा वक्तव्यं तत्सर्वं पुनरुक्तमेवेत्याह—सर्वं स्ववैभवं मद्वैभवं च स्वमनोगतं मन्मनोगतं च स्वनिगूढलीलत्वं मदयोग्यत्वं चेत्यादिकं त्वमेव वेत्सि नाहमिति अतस्त्वदाज्ञां विना तृणादिरूपेणाप्येषां तृणादीनां सौभाग्यमासादयितुं न शक्नोमीति भावः । विषयमपि त्यक्तुं न शक्नोमीत्याह—त्वमेवेति । तव त्वयैव मह्यमर्पितं दासस्याऽऽज्ञाव्यापित्वमेव युक्तमिति भावः । यदि चैवं ब्रूषे अपहृतात्मनां बालवत्सानां दर्शनं विना कथमनुज्ञां याचसे तत्राप्येवं निवेदयामीत्याह—सर्वं त्वं वेत्सि सर्वदृगिति चात्र ज्ञापितम् ॥ ३९ ॥

(१) आर्कन्तु महाद्विति वी० पा० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीति सादरसर्वसम्पदनुभवपूर्वकं प्रणामाय प्रथमतः कृष्णेति स्वरूपनाम्ना सम्बोधनं पुनः क्रमेण ततो बहिर्बहिर्विशेष्यं व्यञ्जयन् जन्मकर्मनामभिरपि सम्बोधयति, वृष्णीत्यादिना । वृष्णिकुलं श्रीवसुदेवादिकं श्रीनन्दादिकं च पूर्वोक्तप्रामाण्यात् तत्र प्रस्तुतत्वेन श्रीनन्दादिकमेवाऽत्र मुख्यं ज्ञेयम् पशुपाङ्गजायेति प्रतिज्ञातत्वात् क्ष्मेत्यविशेषेण प्राप्तत्वेऽपि विशेषविवक्षया द्विजपश्वोरुपादानं गोब्राह्मणहिताऽवतारताप्रसिद्धेः उद्धर्मो भगवद्विमुखो धर्मः क्षितिराक्षसाः उद्धर्मप्रवर्त्तकाः कंसादयश्च चन्द्रसूर्यरूपोभयत्वेन रूपकव्यञ्जना सर्वशुभकरिताविवक्षया कीर्तिप्रतापप्रशंसाद्योतनेच्छया च हे भगवन् ! एवम्भूतश्रीकृष्णरूपत्वेन स्वयं भगवन्नित्यर्थः । तथार्कं स्वर्भुवर्भूर्लोकव्यापकप्रकाशमर्कमारभ्य महावैकुण्ठपर्यन्तमर्हन् पूज्य ! यद्वा, एतच्चापूर्वं हठं त्वमेव कर्त्तुमर्हसि नान्यः कोऽपीत्याह–अर्हतीत्यर्हन् हे सर्वं कर्तुं योग्य ! समर्थेति वा अत आकल्पं मज्जीवनकालरूपान् कल्पानभिव्याप्य यद्वा, आकल्पं त्वदीयगुञ्जावतंसबर्हापीडादिकं वामहस्तस्थ कवलादिकं च भूषणमभिव्याप्य तुभ्यं तथा आर्कम् अर्को नामवृक्षो भगवदनर्हपुष्पो वैष्णवानामनादरणीयः तमप्यन्तं समभिव्याप्य तत्तत्सहितायेत्यर्थः ।

“श्रीमच्चैतन्यदेवानुगृहीतानामनुग्रहात् ।
तेषां मुदेस्तुतिर्मोक्षी व्याख्यातेयं यथा मति”॥४०॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति स्तुत्वाऽनुज्ञां प्रार्थयते–मनुजानीहीति । अतो मामनुज्ञापय याहीत्याज्ञापय हे कृष्ण ! मयि सत्त्वसुखज्ञानप्रदत्वेन सच्चिदानन्दघनस्वरूपरूपे“अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः” इति श्रुतेः । वत्सबालादीन् सर्वान् त्वमेव वेत्सि यतः सर्वदृक् सर्वदर्शी जगतां समष्टिजीवानां नाथः त्वमेव नाहं एतज्जगत् चिदचिद्विशिष्टं ब्रह्माण्डं तव शरीरभूतं न मम तच्चार्पितं त्वयि समर्पितम् एवम् आत्मात्मीयभरसमर्पणं कृत्वा नमस्करोति ॥ ३९ ॥

श्रीकृष्णेति हे श्रीकृष्ण ! श्यामसुन्दरविग्रह ! सदानन्दस्वरूपरूप ! अयं परवासुदेवः विष्णुर्नारायणः श्रीकृष्णावतारश्रीरामावतारश्यामसुन्दरः सच्चिदानन्दस्वरूपरूप एव सर्वप्रानुसन्धेयो वैष्णवैरिति रहस्यं नन्वहो यादवकुले जातो यादव एवेत्यत्राह, वृष्णिकुलमेव पुष्करं तस्य जोषं प्रीतिः तां दातुं शीलं यस्य सः तत्सम्बोधनम् “यदोः प्रियस्याऽन्ववाये मलयस्येव चन्दनम्” इति कुन्तीवाक्येन यदुकुलस्य यशोदानायैव भगवत्प्रादुर्भाव इति भवतारहेतुत्वकथनम्, अनेन सूर्योपमत्वं च क्ष्मानिर्जरा विप्राः द्विजाः पक्षिणः पशवः गवादयः श्रीवृन्दावनस्थाः तेषाम् उदधिरिवोदधिश्च श्रीवृन्दावनं तस्य वृद्धिं करोतीति तत्सम्बोधनं चन्द्रोपमत्वं च उद्धर्मं पाखण्डमेव शार्वरं शर्वरीसम्बन्धि अन्धकारं हरतीति हरः तत्सम्बोधनं क्षितिराक्षसध्रुक्, क्षितौ ये राक्षसाः तान् द्रुह्यतीति कंसादिमारक ! मन्देहाश्च तेषामुदयसमय एव मारक ! सूर्योपम ! पुनः सम्बोधयति, आ अर्कम् अर्हन् ! अर्कं देवम् अभिव्याप्य सर्वदेवानां पूज्यतम ! आकल्पं कल्पपर्यन्तं ते नमः आकल्पं शृङ्गारम् अर्हन् ! योग्य ! इति वा ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ जिगमिषुरावयोस्तारतम्यं सर्वज्ञस्त्वमेव वेत्सीति वदन्ननुज्ञां पृच्छति–मनुजानीहीति । हे कृष्ण ! सर्वदृक् हेतुगर्भमिदं तत्त्वात्सर्वं वेत्सि जगतां नाथस्त्वं न त्वहमिति भावः । एतत्परिदृश्यमानं जगत्तव त्वयाऽर्पितम् उत्पाद्य त्वस्मिन्नेव निहितमित्यर्थः । न तु ममेति भावः अतो मामनुजानीह्याज्ञापयेत्यर्थः ॥ ३९ ॥

एवमापृच्छ्याक्षिसङ्कोचनेनैव तदनुज्ञातः पुनर्हर्षातिशयात्स्वकृतावतारासाधारणधर्मैः सम्बोधयन्परिक्रम्य प्रणम्य च जगामेत्याह–श्रीकृष्णेति द्वाभ्याम् । वृष्णिकुलपद्मस्य प्रीतिदातृत्वेन सूर्योपमा क्ष्मानिर्जरा भूदेवा ये द्विजास्तेषाम् । यद्वा, क्ष्मायाः निर्जराणां देवानां द्विजानां पशूनां च उदधिवद्विस्तारः तस्य वृद्धिं करोतीति तथाभूत ! तत्समुदायवृद्धिकारित्वेन चन्द्रोपमाद् उद्धर्मः पाषण्डधर्मः स एव शार्वरं तमः तद्धरतीति तथाऽनेन हि द्वयोपमा हे क्षितिराक्षसध्रुक् ! क्षितौ ये राक्षसाः कंसादयः उदयन् तेभ्यो द्रुह्यतीति पुनः सूर्योपमा सूर्याद्युपमाऽपि व्यङ्ग्येति मत्वाऽऽह–आर्कमर्कमभिव्याप्य सर्वेषां सुमहत्पूज्य ! हे भगवन् ! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमः ॥ ४० ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

किञ्चेदानीमहमस्मिन्नेवाधिकारे स्थास्यामीत्याग्रहो नास्ति मतस्त्वमेव यस्मिन् त्वदाराधनभूते कर्मणि माम् नियोजयितुमिच्छा तव वर्त्तते तस्मिन्नेव नियोजयेत्याह–मनुजानीहीति । कर्मणः शेषभूतान् ब्रह्मादीन्स्वस्वाधिकारे नियोजयतीति कृष्णस्तत्सम्बुद्धौ हे कृष्ण ! मां मनुजानीहि आज्ञां देहि मम तु त्वत्कैङ्कर्यमेव परमप्रयोजनमिति त्वमेव वेत्सि यतस्त्वं सर्वदृक् “यः सर्वज्ञः सर्ववित्”इत्यादि श्रुतेः नियोजने हेतुमाह, यतस्त्वमेव जगतां असङ्ख्यातब्रह्माण्डानां नाथः किञ्चैतज्जगत्त्वदर्पितं त्वच्छेषभूतं त्वदर्थमित्यर्थः तथाचोक्तं “कृष्णस्य हि कृते सर्वं जगदेतच्चराचरम्”इति ॥ ३९ ॥

तदेवं नौमीत्यारभ्य स्वाभाविकानन्तानन्तवैभव एवैतावत्पर्यन्तं कथापितः अतः पुनस्तमेव स्वशेषिणमत्यादरेण “कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः,, इति न्यायेन नमस्कुर्वन्नुपसंहरति–श्रीकृष्णेत्यादिभिर्विशेषणैः स्वज्ञानबलादिभिः शक्त्या स्वाश्रितविरोधिन आकर्षन्ति नाशयतीति कृष्णस्तत्सम्बुद्धौ हे श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् ! वृष्णीनां कुलमेव पद्मं तस्य जोषदायिन् प्रीतिदानेन सूर्यतुल्य ! क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् ! क्ष्माऽवनिर्निर्जरा देवा द्विजा भूदेवाः पशवश्च तदेव उदधयस्तेषां वृद्धिकारिन् चन्द्रतुल्य उद्धर्मशार्वरहर ! उद्धर्मः पाषण्ड तदेव शार्वरं गाढं तमस्तद्धरतीति पुनः सूर्यतुल्य ! आकल्प पर्य

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

क्षितिराक्षसध्रुक् क्षितौ राक्षसाः कंसादयस्तेभ्य आकल्पं ब्रह्मकल्पं मर्यादीकृत्य आर्कं सूर्यप्रलयं मर्यादीकृत्य "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः। उद्यन्नेव द्रुह्यतीति पुनः सूर्यतुल्य! यथा सूर्यं उद्यन्नेव राक्षसेभ्यो द्रुह्यति तथा त्वमपि आविर्भवन्नेव तान्नाशयसीत्यर्थः। हे अर्हन्! अस्मदादीनां सर्वेषां पूज्यतम! भगवन्, हेयनिषेधपूर्वकाप्राकृतज्ञानादिषडैश्वर्य! तद्वशमः अहं त्वच्छेषभूतस्त्वदर्थमेव स्यां न मम इति फलितार्थः। यद्वा, आकल्पमित्यत्र आ अकल्पमितिच्छेदः अकल्पो मोक्षस्तमभिव्याप्येत्यर्थः। तदुक्तं प्रथमस्कन्धे उपक्रमे "पिबत भागवतं रसमालयम्" इति आर्कमिति तु पूर्वोक्त एवार्थः॥ ४०॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

सर्वमिति तथाप्यत्रावस्थानाज्ञाया अभावात् कथं स्थास्यामीति भावः। विषयमपि न त्यक्तुं शक्नोमीत्याह—तवेति। तत्र त्वयैव मय्यर्पितं दासस्याज्ञाप्यायित्वमेव च युक्तमिति भावः॥ ३९॥ ४०॥

---

### श्रीजीवगोस्वामिकृतवृहत्क्रमसन्दर्भः।

उपसंहरति-अनुजानीहीत्यादि। हे कृष्ण! मां अनुजानीहि ननु, किमनुज्ञास्यामीत्याशङ्क्याह—सर्वं त्वं वेत्सि तत् किं कथनीयम्। ननु, कथमहं वेद्मि तत्राह-सर्वदृक् सर्वज्ञोऽसि ननु, ज्ञातं ज्ञातं तद्भूरिभाग्यमिहेति यदुक्तं तदेव तव तु जगन्नाथस्येदं न युज्यत इत्याशङ्क्याह-त्वमेवेति। जगतान्नाथस्त्वमेव नान्योऽस्मद्विधादिः कुत? इत्याह-जगच्चैतत्त्वयार्पितं त्वय्येवार्पितं त्वदर्पितस्य नाथस्त्वां विना कोऽन्यो भवतु तस्माद्यथाऽभिलषितमेव भूयादित्यनुजानीहि॥ ३९॥

तस्माद्भूयोऽपि ते नम इति सस्तवं प्रणमति—श्रीकृष्णेति हे भगवन्! नमस्ते वृष्णिकुलपुष्कराणां जोषः प्रीतिस्तां दातुं शीलं यस्येत्यनेन भानुत्वं व्यञ्जयं क्ष्मा पृथ्वी निर्जरा देवाः द्विजाः पशवश्च वृन्दावन सम्बन्धिनस्त एवोदधयः सुरवगाह्यत्वात् तेषां वृद्धिकारित्वेन चन्द्रत्वम् उद्धर्मा एव शार्वराणि तमांसि तेषां दरत्वेन महाज्योतिष्ट्वात् वह्नित्वम् "वह्नीन्द्वर्कास्तमोनुदः" इत्युक्तेः। अत एक एव त्वं भानुचन्द्रवह्नीनां मण्डलानि। अयमर्थः यथाऽमी तेजोमण्डलरूपेण बहिः प्रकाशन्ते अन्तस्तु ब्रह्माकारेण वर्तन्ते, तथा त्वमपि ब्रह्माकारेण विश्वव्यापी मनुष्यमानाकारेण परिच्छिन्न इति। क्षितिराक्षसध्रुक्! त्वम्, एतत्तत्तेजोव्यतिरिक्तनिजतेजोविशेषवत् त्वम् आर्कम् अर्कमभिव्याप्य नमः यावत् सूर्यो भास्यति तावत्कालपर्यन्तं नमोऽस्त्वित्यर्थः। किं बहुना आकल्पं कल्पो द्विपरार्द्धकालं यावज्जीवामि तावदेव नम इति भावः। हे अर्हन्! नमस्य! एवं नौमीत्युपक्रम्य नमस्त इत्युपसंहारः॥ ४०—५६॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं स्तुत्वा गमनं प्रार्थयते-बालकानामानयनार्थम् अनुजानीहीति। गन्तुमनुज्ञां प्रयच्छ कृष्णेति सम्बोधनं स्वस्य प्रेमस्थापनार्थं प्रेषणे अपराधाभावे वा न किञ्चिन्मया वक्तव्यं यतस्त्वमेव सर्वं वेत्सि यतः सर्ववित् तत्र गतस्य स्थातव्यशङ्का न कर्तव्या यतस्त्वमेव जगतां नाथः अतोऽधिकारस्थित्यर्थं प्रेषय यत एतज्जगत् तवैव त्वयैव चार्पितं मयि स्थापितम् अतः प्रेषणमुचितमेव॥ ३९॥

गच्छन् नमस्यति-हे कृष्णेति। वृष्णयो यादवाः तेषां कुलमेव पुष्करं तस्य जोषो विकासः तस्य दायिन्निति सूर्यरूपता क्ष्मा पृथिवी निर्जरा देवाः द्विजा ब्राह्मणाः पशवश्च त एवोदधिः तस्य वृद्धिकारिन्निति चन्द्ररूपता उद्धर्मः पाषण्डधर्मः तदेव शार्वरं तमः तस्य निवारकेत्यग्निरूपता क्षितिराक्षसध्रुगिति क्षितावुत्पन्ना ये राक्षसाः तान् द्रोग्धीति अवतारप्रयोजनम् आकल्पं नमस्त इति आर्कमर्हन्निति अर्कमभिव्याप्य सर्वपूज्येति स्वस्यापि नमस्कारे हेतुः॥ ४०॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधनी।

जगदीशत्वाभिमानं परित्यजयाह—अनुजानीहि। हे कृष्ण! जगतामनन्तकोटिब्रह्माण्डानां त्वमेव नाथश्च स्वामी तत्र हेतुमाह, एतत्सर्वमपि जगत् तवार्पितं त्वयैव विनिर्मितम्। यद्वा, एतत्पर्यन्तं ममतास्पदं जगत् अहन्तास्पदमेतच्छरीरं च तत्तवार्पितं स्वकीयत्वाभिमानं परित्यज्य तुभ्यं समर्पितमित्यर्थः। ननु, कथं तर्हि तत्र स्वकीयत्वाभिमानः तत्राह, सर्वमिति। स्वमहिमानमस्मदादीनां ज्ञानबलादिकञ्च सर्वं त्वं स्वयमेव वेत्सि जानासि तव मया को वा विशेषो वक्तव्य इत्यर्थः। तत्र हेतुमाह, सर्वदृगिति। सर्वसाक्षित्वादित्यर्थः। तथा चास्य ममोपरि सर्वस्य तव कृपैव युक्तेति भावः। ननु, तवाधिकारोऽधुना न परिसमाप्तः कथं वृन्दावने जन्म प्रार्थयस इत्यत आशङ्क्याह, अनुजानीहि मामिति। तर्ह्यधिकारस्थित्यर्थं मामनुजानीहि सत्यलोकं गन्तुमनुज्ञां देहीत्यर्थः॥ ३९॥

नेत्रकटाक्षेणैव गमनाज्ञां प्राप्य गच्छन् बहुधा सम्बोधयंश्च नमस्कारं प्रार्थयते। हे श्रीकृष्ण! सदानन्दरूप! वृष्णयो यादवास्तेषां कुलमेव पुष्करं कमलं तस्य जोषो विकासः तस्य दायिन्। "जुषप्रीतौ" इति प्रीतिदातृत्वेन सूर्योपमा सूचिता तथा क्ष्मा पृथ्वी च निर्जरा देवा द्विजा ब्राह्मणाश्च पशवो गावश्च त एव उदधयस्तेषां वृद्धिकारिन्निति चन्द्रोपमा तथा उद्धर्मः पाषण्डधर्मः तदेव शार्वरन्तमः तद्धरतीति तथा तत्सम्बोधनेन चन्द्रसूर्ययोर्द्वयोरुपमा अनेन ममापि मायाप्रसारणरूपपाषण्डकृतापराधं हरेत्यपि सूचितम्। क्षितौ ये राक्षसाः कंसादयस्तेभ्य उद्यन्नेव द्रुह्यतीति तथा तत्सम्बोधनेन पुनरपि सूर्योपमा सूर्यादुपमापि न्यूनेत्याशयेनाह—आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, हे पूज्य! पूज्यत्वे हेतुमाह, हे भगवन्! आकल्पं कल्पपर्यन्तं ते तुभ्यं नमोऽस्तु॥ ४०॥

---

## ॥ श्रीशुक उवाच ॥

**इत्यभिष्टूय भूमानं त्रिःपरिक्रम्य पादयोः ।**
**नत्वाभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत ॥ ४१ ॥**

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, मम वैभवं तव मास्तु गोचरस्तव वैभवमहं वेद्मि न वेनीति वक्रोक्तिमाशङ्क्य किमहमत्र प्रत्युत्तरं कुर्य्यामिति व्यञ्जयन् मलज्जं सनिर्वेदमाह-अनुजानीहीति । अन्तर्भावितण्यर्थम् अनुमनुज्ञापयेत्यर्थः । अत्र स्थले त्वयामपि स्थातुमयोग्यमतिनीचं मामाज्ञापय यादृशोऽहं तादृशं स्थलं सत्यलोकमेव गच्छेयमिति भावः । हे कृष्णेति चित्तं तु त्वमत्राकर्षस्येव किं तु तद्भूरिभाग्यमिह जन्मेति मत्प्रार्थनायां हगिङ्गितेनाऽप्यस्त्विति श्रीचरणैर्नोक्तमनः किं कुर्वे तस्मात्त्वत्पुलिनभोजनकेलावन्तरायं कुर्वन्नयमपराधी त्वल्लीलाप्रातिकूल्यादेव श्रीमुखोद्गतवचनसुधालेशमप्यनाप्नुवन्नहमितो झटित्येव दूरमपसरामि त्वं तस्मात् कालयित्वा पुलिने भुञ्जानैः प्रियसखैः सह सहासोक्तिप्रत्युक्तिकौतुकं भोजनलीलाशेषं समापयेति ध्वनयः । अथमहं स्वलितारल्यात् पुनः पुनः किं वा विज्ञापयामीत्याह, सर्वेमस्मदादीनां मनोवपुर्वाचां वैभवं त्वमेव वेत्सि किं च नाहमस्य जगतः सृष्टृत्वान्नाथः किं तु त्वमेव जगतामन्येषामपि बहूनां नाथः अत एतज्ज जगत् क्षुद्रतरं तव त्वदीयमेव त्वय्यर्पितं यमिच्छसि योग्यम् जानासि तमस्याधिकारिकं कुर्वीति भावः ॥ ३९ ॥

यद्यपि मामपराधिनं विज्ञाय न ब्रूषे तदपि स्वनेत्राभ्यां सानुग्रहाऽवलोकनाऽमृतं तु मह्यं देहि यथा तेनैवाहारेण नित्यं प्राणान् रक्षन् कल्पपर्य्यन्तं जीवितुं प्रभविष्यामीति व्यञ्जयन् प्रणमति-श्रीकृष्णेति । सूर्य्यस्वरूपं दक्षिणं नेत्रमालक्ष्याह, वृष्णिकुलपद्मस्य जोषः प्रफुल्लत्वं तत्प्रदायिन् मामपि पद्मसन्तानं कृपया प्रफुल्लयेति भावः । चन्द्रस्वरूपं वामनेत्रमालक्ष्याह क्ष्मा क्ष्मातलस्था मनुष्यादयः निर्जराः स्वर्गस्थाःदेवा द्विजाः पशवश्च वृन्दावनस्थाः पक्षिणो गावश्च त एवोदधयस्तेषां वृद्धिकारिन् ! मामपि देवाधमं कृपया वर्द्धयेति भावः, युगपदेव नेत्रे द्वे एव पुष्पवन्तावालक्ष्याह-उद्धर्मः पापण्डधर्मः स एव शार्वरमन्धतमसं "शार्वरं त्वन्धतमसम्" इत्यमरः तद्धरतीति तथा तेन त्वमभी त्वय्यपि मायाचिकीर्षालक्षणं मम पापण्डं कृपया हर यथा पुनरेवं न कुर्य्यामिति भावः । क्षितौ राक्षसा अघासुरादयस्तेभ्यो द्रुह्यसि द्रोहेणापि स्वगतिं ददासीत्यतस्त्वद्वत्सस्य वृन्दवत्सवृन्दापद्रोहित्वात् सत्यलोकब्रह्मराक्षसं मामपि दण्डप्रदानेनापि संस्कुरुष्वेति भावः । स्वप्रभोरनुग्रहं वा दृष्ट्वा दासो जीवितुमुत्सहते औदासीन्यं दृष्ट्वा न प्राणान् धर्त्तुमीष्टे इति भावः । हन्त हन्त महामहेश्वरोऽपि वेत्रगुञ्जागैरिकपिच्छादिरचिताकल्पो गोचारकबालकैः समं खेलन् दृष्यतीत्यनौचित्यं मत्प्रभोरिति पूर्वं विचारितवता तत्त्वानभिज्ञेन मया येऽपराद्धं तानपि प्रसादयामीति मनसि विभाव्याह-आ आकल्पं त्वदीयगुञ्जादिवेषमभिव्याप्य आर्कं अर्को नाम वृक्षो भगवदनर्हपुष्पस्तमपि व्रजस्थमभिव्याप्य हे अर्हन्, मत्पूज्य ! किं वा हे योग्य दृ-ष्टिकृपाभ्यां मद्भद्राभद्रं कर्त्तु समर्थ ! ते तत्तत्सहिताय तुभ्यं नमः-

"सर्वसंशयहृत् सर्वभक्तिसिद्धान्तसन्ततिः ।
अस्तु ब्रह्मस्तुतिश्चित्तभित्तौ मे चारु चित्रिता" ॥ ४० ।

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सर्वज्ञः सर्वेश्वरः सर्वाधारस्त्वमेवेति वदन् मा-देहीत्याह-अनुजानीहीति । इहैव परिचर्य्यां कर्त्तुं सत्यलोकं गन्तुं वा आज्ञापय मामित्यर्थः ॥ ३९ ॥

अक्षिसंकोचेनैव स्वलोकं व्रजेत्यनुज्ञातो नमस्करोति-श्रीकृष्णायेति । हे श्रीकृष्ण ! श्रीयुक्तसदानन्द ! वृष्णिकुलपुष्करजोषदातृत्वेन प्रीतिदातृत्वेन हे भास्करोपम ! क्ष्मादय एव उदधयस्तेषां वृद्धिकारित्वेन हे चन्द्रोपम ! उद्धर्माः नानापापधर्मास्त एव शार्वराः निशाचराः तान् हन्तीति हे देवेन्द्रोपम ! क्षितिराक्षसाः दुर्वृत्ताः जनाः तेभ्यो द्रुह्यतीति हे नरेन्द्रोपम ! निःसमानातिशयप्रीतिदातृत्वादिगुणनिधे ! भास्करादिभिः न्यूनेति मत्वाऽऽह, आर्कमर्कमभिव्याप्य सर्वेषामर्हन्, पूज्य ! भगवन् ! आकल्पं कल्पपर्य्यन्तं ते तुभ्यं नमः ॥ ४० ॥ ४१ ॥

---

### भाषा टीका ।

हे श्रीकृष्ण ! अब आप मोकूं आज्ञा देओ तब भगवान् बोले, कि—ब्रह्मा जी तुम बड़े पोथा पढ़े हौ हमारे बछड़ा और बालक [सखा] खोयगये सो तुम बतायें जाओ । तब ब्रह्मा बोल्यो, कि महाराज ! आप सब जानो हौ काहे तें कि आप मन के द्रष्टा हौ, और सब जगत के आप ही नाथ हौ ये जगत हू आप ही में अर्पित होय रह्यो है ॥ ३९ ॥

हे श्री कृष्ण ! [ दर्शन करन वारेन के चित्त कुं सन्तोष देन वारे ] हे यदुकुलकमल के विकास देन वारे ! हे भूमि देवता ब्राह्मण गौ और समुद्र के वृद्धि करन वारे ! हे पृथिवी में जन्म लेनवारे राक्षसन के नाश करन वारे ? हे भगवन् हे पूज्य ! कल्पपर्यन्त और जब तक सूर्य तपैं हैं तब पर्यन्त आप कों नमस्कार होय ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ससखिवत्सकमोक्षणकौतुक ! द्रुतविडम्बितपुत्रमुदेऽद्भुत निखिलरूपमतो दधदच्युताऽवतु स वः कलयन् व्रजमङ्गल पादयोर्नत्वा अभीष्टं सर्वतः पूजितमभिमतं वा ॥ ४१ ।

ततोऽनुज्ञाप्य भगवान् स्वभुवं प्रागवस्थितान् ॥
वत्सान् पुलिनमानिन्ये यथापूर्वसखं स्वकम् ॥ ४२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुज्ञाप्याऽनुज्ञां प्रदाप्य पृष्ट्वेत्यर्थः स्वभुवं ब्रह्माणम् यथापूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनम् ॥ ४२ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भूमानम् अपरिच्छिन्नमाहात्म्यम् इति अभिष्टूय एवमभिष्टुत्य अभितःस्तुत्वा । यद्वा, सर्वव्यापकमपि तथाऽवस्थितं भक्त्या त्रिः परिक्रम्य अभीष्टं प्रियतमं स्वधाम सत्यलोकवर्त्तिनिजगृहं गत इति प्रथमं वत्साहरणादिना व्रजवासिलोभेन वा पारमेष्ठ्यपदं परित्यज्य कुत्रापि निलीय स्थास्यामीति मनसि कृत्वा स्थितः इदानीं च श्रीभगवत्प्रसादमासाद्य निजप्रियपदमेवागच्छदित्यर्थः । यतो जगद्धाता अन्यथा तत्पदच्युत्या विश्वसृष्ट्यसिद्धिः अतः श्रीभगवानेव प्रस्थापयामास ॥ ४१ ॥

न च केवलं स्वेच्छया गत इत्याह—तत इति । अनुज्ञाप्य प्रस्थाप्येत्यर्थः । स्वभुवम् आत्मजम् इति सर्वापराधक्षमादिकं सूचितम् ततो ब्रह्मानुज्ञापनानन्तरमेव प्राक् पूर्वमेव यथापूर्वसखं स्वकं निजभोजनस्थानं वत्सानां पूर्वावस्थितिस्थानं वा सरःपुलिनं अवस्थितान् वनान्तर्वर्त्तमानान् वत्सान् आनिनाय इत्थं च श्रीब्रह्मणैव समर्पिता इति श्रीभगवतैव वा कुतोऽपि सवत्सा बालका आनीतास्ते वा स्वयं कुतोऽप्यागत्य पुनस्तत्रोपविष्टा इत्युक्त्यभावात् केवलं मायापगमेन पूर्ववत् पुलिने भोजनार्थमासीनेषु पूर्वमेव तानाश्वास्य वत्सानयनार्थं गतोऽसौ वत्सानेवाधुनानीतवानित्युक्तेश्च, मायामोहिताः सन्तोऽब्दं यत्र वर्त्तन्त तत्रावर्त्तन्तेति स्पष्टमेवावगम्यते. न च व्यक्तमिदम् अन्यैर्जनैर्गोपादिभिः कथ्यन्ते तत्र न दृष्टाः शीतवातादिना वा कथं न हि बाधिता इति मायायाः सर्वशक्तिमत्त्वात् यदि वा वक्तव्यमिदं श्रीभगवता दृष्ट्वापि तादृगवस्थास्ते कथमुपेक्षिताः स्युः । अतः श्रीब्रह्मणा सत्यलोकादौ श्रीभगवदहश्यस्थाने कुत्राऽपि नीत्वा मायया मोहयित्वा रक्षिता इति तन्न युक्तं यतो ब्रह्ममुदे न ते समानीता इत्याद्युक्तमेव मायाश्रयेत्युक्त्या श्रीभगवत्कृपया च तेषां दुःखाभाव एवं. अत्र कुत्रापि नीता अपि ज्ञानघनमूर्त्तेः श्रीभगवतो नैवादृश्याः स्युर्नाम पूर्वं तु यत्क्षणं न ते दृष्टाः इतस्ततो मार्गिताश्च तत्स्नेहपरवशतया किं वा श्रीब्रह्ममोहार्थमेवेत्यपि पूर्वमुक्तमेव इति सर्वथा ते तत्र तत्रैव तथा स्थिता इति सुसिद्धंचैव अत एव श्रीस्वामिपादैरपि लिखितम् । नन्वेतावन्तं कालं कथं ते तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमित्यादि यथापूर्वं सखायो यस्मिन्निति प्रागवस्थितानिति च बालकवत्सपुलिनभोजनभोजनार्थोपवेशादिकमपि सर्वं पूर्ववदेव वर्त्तमानं बोधयति-किन्तु आदिकवये सा कियत्याकारादिवृद्धिर्येषां तथा मात्रादिषु तत्तद्बालकाचरितादिकं श्रीभगवत्प्रभावेण तेषु निजतया परिस्फुरितमिति च बोद्धव्यम् अन्यथाब्दस्थितैरागन्तुकैस्तैः सहैकत्वयापत्तेरिति दिक् ॥ ४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूमानं सर्वथैवापरिच्छिन्नम् इति एवम् अभिष्टुय अभिष्टुत्य अभितः स्तुत्वा । यद्वा सर्वव्यापकमेव तथावस्थितं भक्त्या त्रिःपरिक्रम्य अभीष्टं सामीप्यप्रार्थायां कृतमौनेन श्रीकृष्णेनाभिप्रेतं धाम यतो जगद्धाता अन्यथा तत्पदत्यागे विश्वसृष्ट्यसिद्धेः एवं "यावदधिकारमवस्थितिराधिकारिणाम्" (३।३।३१) इति न्यायेन तदन्ते तदभीष्टसिद्धिर्भविष्यतीति ज्ञाप्यते ॥ ४१ ॥

स्वभुवम् आत्मजम् इति सर्वापराधक्षमादिकं सूचितम् अनुज्ञाप्य इदानीमप्यानयानीति सस्मितं पृष्ट्वा अनुज्ञापनं चेदं स्वसार्वज्ञ्यादिव्यञ्जनोपालम्भनोत्प्रासशिक्षात्वमानुग्रहविनयादिव्यञ्जकमपीदं व्यञ्जयति, तादृशस्वरूपैरपि बालवत्सैर्न मम लीलासुखं किन्तु तैरेवेति ततो ब्रह्मानुज्ञापनानन्तरं प्राक् प्राग्वदेवावस्थाचेष्टादिभिरवस्थितान् यथापूर्वं पूर्ववदवस्थाचेष्टाद्यनतिक्रमेण वर्त्तमानाः सखायो यत्र तत् स्वकं स्वभोजनस्थानं पुलिनमानिन्ये अत्र सकवलपाणेः कृष्णस्यागतस्य तैः पूर्ववदेव दृश्यमानस्यावस्थितिश्च पूर्ववदेव ज्ञेया एतत्सर्वसमाधानं च श्रीकृष्णेच्छासम्वलितमायावैभवमेव तथा मात्रादिभिर्व्यवहारोपायिकं स्तनादितत्तद्बालकाचरितं स्मृतमपि प्राचीनेषु स्मारयितुं नेष्टमित्यपि बोद्धव्यम् ॥ ४२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूमानमिति, सर्वतोऽल्पत्वरहितं स्वरूपरूपगुणविभूतिभिर्धैपुल्यविशिष्टसुखरूपम् अभीष्टं सुखमेव सर्वाभीष्टं भवत्यतोऽभीष्टं स्वस्य प्राप्यतयाऽभीष्टं प्रियं परब्रह्मनारायणावतारत्वात् तदभिष्टं त्रिःपरिक्रम्य परव्यूहविभवेषु त्रिसङ्ख्येषु तृतीयस्य विभवरूपस्य भगवतः त्रिः परिक्रमणं योग्यमेव पादयोर्नत्वा शरणागतस्य नमनमेव पुमर्थः जगद्धाताऽपि अर्थान् अहन्ताममतानिवृत्तिर्व्यज्यते नाहं न मम तवैवाहम् इति नमःशब्दार्थत्वात् इत्यवम् ॥ ४१ ॥

ततो भगवान् ज्ञानबलैश्वर्यादिषड्गुणः स्वभुवं स्वस्य नारायणत्वात्स्वपुत्रम् अनुज्ञाप्य आज्ञाप्य अपराधक्षमालक्षणं यथापूर्वं सखाय उपविष्टा यस्मिन् तत् पुलिनं स्वकं स्वीयं वत्सान् आनिन्ये द्विकर्मकस्य धातोरन्वयः । स्वस्य कं सुखं यस्मिन् तत्पुलिनमिति वा ॥ ४२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीत्थं सम्बोधनैः पूर्वोक्तैश्च धर्मैरभिष्टूय जगद्धाता ब्रह्मा भूमानमपि लीलया सङ्कुचितविग्रहं भगवन्तं परिक्रम्य पादयोर्नत्वा प्रणम्य स्वधाम सत्यलोकं प्रत्यपद्यत जगाम ॥ ४१ ॥

तत इति। ततः स्वस्मान्निर्गच्छन्तुर्मुखमाज्ञाप्याविसङ्कोचेनेति शेषः। यथापूर्वं सखायो यस्मिंस्तत्स्वकं पूर्वाधिष्ठितं पुलिनं प्रत्येव वत्सानानिन्ये ॥ ४२ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

भूमानं निरवधिकभूमगुणविशिष्टं पादयोर्नत्वा नमस्कृत्य द्वितीयार्थे षष्ठी पादौ नत्वेत्यर्थः। अभीष्टं सर्वतः पूजितं वा ॥४१॥

अनुज्ञाप्य अनुज्ञां प्रदाय स्वभवं स्वस्मान्निर्गच्छन्तुर्मुखं यस्य त चतुर्मुखं यथापूर्वं विद्यन्ते सखायो यस्मिन् तत् स्वकं पुलिनम् ॥४२॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अभीष्टस्थानमिप्यथाज्ञायां कृतमौनेन श्रीभगवताऽभिप्रेतं स्वधाम भूमानमेवाभीष्टम् ॥ ४१ ॥

अनुज्ञापनेन चैवं ज्ञापितं तादृशस्वरूपैरपि बालवत्सैर्न ममलीलासुखं किन्तु तैरेवेति स्वकं निजभोजनस्थानं यथापूर्वसखमिति प्राक् प्राग्वदेवावस्थितानिति ॥ ४२-४४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवं स्तुत्वा गत इत्याह-इतीति। भूमानं पूर्वमनन्तकोटिब्रह्माण्डरूपेण प्रदर्शितात्मानं त्रिःपरिक्रम्य पुनः पादयोर्नत्वा अभितः इष्टं भगवन्तं स्वाभिलषितं स्वधाम वा प्रत्यपद्यत प्रस्थितः गत इति यावत् ॥ ४१ ॥

ततो भगवत्कृत्यमाह-तत इति। यावद्गत्वा ब्रह्मा स्वगृहं बालकान् वत्सांश्चानयति तावद्भगवानेव ब्रह्माणमनुज्ञाप्य प्रागवस्थितान् वत्सान् पुलिनमानिन्ये पुलिनमपि स्वकीयमेव यत्र पूर्वं बालकाः स्थिताः तत्रापि यथापूर्वसखं पुलिनं यथापूर्वं सखायो यत्र पूर्वं पुलिने बालकान् पूर्ववदुपवेश्य पश्चाद्वत्सानयनार्थं गत इव वत्सान् पुलिनमानिन्ये ॥ ४२ ॥

---

### श्रीमद्गिरिधरकृतबालप्रबोधिनी।

जगद्धाता ब्रह्मा इत्थं भूमानं सर्वतो व्यापकमपि जगद्धितायाल्परूपेण विराजमानं श्रीकृष्णमभिष्टूय स्तुत्वा त्रिःपरिक्रम्य तत्पादयोर्नत्वा अभीष्टं सर्वतः वरकृष्टतया सर्वाभिप्रेतं स्वाभिप्रेतं वा स्वधाम सत्यलोकं प्रत्यपद्यत जगाम जगद्धातेत्यनेन सृष्ट्यधिकारस्थानत्वात् तत्र तस्य स्थितिरावश्यकीति सूचितम् ॥ ४१ ॥

भगवानेवं स्वभुवं स्वपुत्रं ब्रह्माणमनुज्ञाप्य स्वलोकगमनाऽनुज्ञां दत्त्वा ततस्तदनन्तरं यावत् ब्रह्मा स्वस्थानाद् बालकवत्सानयेत्तावत्स्वशक्त्यैव ततस्तानानीय प्रथमतो बालान्पुलिने पूर्ववदवस्थितान् कृत्वा पश्चाद्वत्सानयनार्थं गत एव वत्सान् यथापूर्वं सखायो यस्मिंस्तत्स्वकं स्वकेलिस्थलपरसरःपुलिनमानिन्ये ब्रह्मद्वारा तेषामानयने पुनरपि पूर्ववत् संवत्सरव्यतीतः स्यादिति ज्ञेयम् ॥ ४२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अभीष्टं भगवता प्रस्थापयितुमिति शेषः, यतो जगद्धाता अन्यथा सहसा तत्पदत्यागे विश्वसृष्ट्यसिद्धेः ततश्च "यावदधिकारमवस्थितिराधिकारिकाणाम्"[३।३।३१]इति न्यायेनाधिकारतदभीष्टं सेत्स्यतीति बुद्ध्यते ॥ ४१ ॥

स्वभुवं ब्रह्माणम् अनुज्ञाप्य आज्ञाप्येति मौनेनैव अनुज्ञामां कृष्णोत्याज्ञाप्रार्थने कृते "मौनं सम्मतिलक्षणम्" इति ब्रह्म सहसावगमात् मौनत्यागाभावस्तु पशुपवंशशिशुत्वदशायां कृतस्य ब्रह्ममोहनार्थं नाट्यस्यारम्भपरिसमाप्तिसिद्ध्यर्थं "ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान्। उभावपि वने कृष्णो विचिकाय समन्ततः" इति वत्सबालकान्वेषणनाट्यारम्भे नौशीत्यादिब्रह्मस्तुतौ प्रवृत्तायां कुतस्त्योऽयं चतुर्मुखः किञ्चिद्वते किं मुहुर्मुहुरिति स्ववत्सान्वेषणव्यग्रोऽहं गोपशिशुर्न बुद्धे इतिवज्ज्ञमौनेनैव तस्यैव नाट्यस्य परिसमाप्तिरिति स्वाधीनब्रह्मणोः कृष्णेन निजमहैश्वर्य्यस्याज्ञानमभिनीयतेस्मेति तन्नाट्यशब्देनोच्यते "तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यम्" इत्यादिना वात्सल्यादिरसपरिकरब्रजेश्वर्य्यादीनामग्रे तु तन्महाप्रेमाधीने स्वनिजमहैश्वर्य्यस्य तन्महाप्रेममाधुर्य्यरसाच्छादितस्याज्ञानं स्वप्रेमेवेति तत्र न तस्याभिनय इति न तन्नाट्यशब्दे वाच्यत्वं विवेचनीयं प्राक् प्राग्वदेव तृणचरणादिचेष्टाभिरवस्थितान् स्वकं स्वभोजनस्थानं पुलिनमानिन्ये कीदृशं यथापूर्वं पूर्वाशादिकमनतिक्रम्य अपरित्यज्य वर्तमानाः सखायो यत्र समासान्त आर्षः। यद्वा, यथा यथावदेव स्थिताः पूर्वस्वरूपभूतसखेभ्यः पूर्वं सखायो यत्र तत् ॥ ४२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं स्वभुवं ब्रह्माणमनुज्ञाप्य अविसङ्कोचेनैव ततः प्रत्याज्ञाप्य यथापूर्वं सखायो यस्मिंस्तत्स्वकं पुलिनं प्रति वत्सानानिन्ये ॥ ४२ ॥

---

### भाषा टीका।

॥ श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—ऐसे भूमा भगवान् श्रीकृष्ण की चालीस श्लोकन सों स्तुति करके तीन परिक्रमा देके चरणारविन्दों में ढोक देके अभीष्ट जो अपनो धाम है, तहाँ जगत् के धाता [विधान करनवारे] ब्रह्माजी प्राप्त होत भये।

एकस्मिन्नपि यातेऽब्दे प्राणेशञ्चान्तरात्मनः ॥
कृष्णमायाहृता राजन् ! क्षणार्द्धं मेनिरेऽर्भकाः ॥ ४३ ॥
किं किं न विस्मरन्तीह मायामोहितचेतसः ॥
यन्मोहितजगत्सर्वमभीक्ष्णं विस्मृतात्मकम् ॥ ४४ ॥
ऊचुश्च सुहृदः कृष्णं स्वागतन्तेऽतिरंहसा ॥
नैकोऽप्यभोजि कवल एहीतः साधु भुज्यताम् ॥ ४५ ॥
ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥
दर्शयंश्चर्माऽऽजगरं न्यवर्तत वनाद्व्रजम् ॥ ४६ ॥
बर्हप्रसूनवनधातुविचित्रिताङ्गः [१] प्रोद्दामवेणुदलशृङ्गरवोत्सवाढ्यः ॥
वत्सान् गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥ ४७
अद्याऽनेन महाव्यालो यशोदानन्दसूनुना ॥
हतोऽविता वयञ्चास्मादिति वाला व्रजे जगुः ॥ ४८ ॥

### भाषा टीका ।

ता पीछें भगवान् भी ब्रह्माकूं आज्ञा देके यमुनाजी के पुलिन में जैसे के तैसे जहां अपने सखा बैठे हे याहं जगे आगे में स्थित जो बछरा हे तिन कों लावत भये ॥ ४२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेतावन्तं कालं कथं तत्रैवोपविष्टाः कथं च क्षुत्पिपासादिविस्मरणमत आह—एकस्मिन्निति श्लोकद्वयेन । अब्देऽपि याते प्राणेशं कृष्णमन्तरा च विनाऽपि प्रियविरहे क्षणोऽपि वर्षोऽधिको भवति तथापि मायाहृताः क्षणार्द्धं मेनिरे ॥ ४३ ॥

यत् यया मायया मोहितञ्जगदभीक्ष्णं पुनःपुनर्विस्मृतात्मकं विस्मृत आत्मैव येन तत्तथा ॥ ४४ ॥

अत एवमूचुश्च ते त्वयाऽतिवेगेन स्वागतं सम्यगा गतम् एकोऽपि ग्रासस्त्वां विनाऽस्माभिर्नाभोजि न भुक्तः इत एहि साधु अविक्षेपेण भुज्यतामिति ॥ ४५ ॥

अभ्यवहृत्य भुक्त्वा ॥ ४६ ॥

प्रोद्दामो वेणवादिस्तस्य रवैरुत्सवस्तेनाढ्यः सम्पन्नः गृणन् आह्वानैराह्वयन् गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ॥ ४७ ॥

यशोदानन्दसूनुनेति बहूनामुक्तिः सहैव दर्शिता केचिदाहुः यशोदासूनुना अपरे नन्दसूनुनेति । यद्वा, यशोदां नन्दयतीति यशोदानन्दः स चासौ सूनुश्चेति तया तेन अस्मान्महाव्यालादविता रक्षिताः ॥ ४८ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

आत्मनः स्वस्य प्राणेशं आत्मनः श्रीकृष्णस्य मायाहृता इति वा माया यद्यपि ब्राह्म्येव तथापि श्रीभगवतानुमोदिता सती भागवत्येव संवृत्ता अतः प्राक् श्रीबलदेवचिन्तने "प्रायो मायास्तु मे भर्तुः" इति एवं सर्वमेव सङ्गच्छते तच्च पूर्वं लिखितमेव अतस्तया आहृताः व्याप्ताः प्राणेशत्वे हेतुः कृष्णं श्रीनन्देन्द्रकुमारम् किञ्च अर्भकाः श्रीनन्दव्रजबालकाः हे राजन्निति परमाद्भुतत्वात् ॥ ४३ ॥

इह जगति विस्मृत आत्मैव किंवा सर्वव्यापको भगवानपि येन तत् सर्वमितीन्द्रादिमोहापेक्षया अभीक्ष्णमिति कथञ्चित् कदाचित् स्मृतस्य स्मारितस्याऽपि वा मुहुर्विस्मरणात् इति मोहमहिमोक्तः ॥ ४४ ॥

स्वागतं सर्ववत्सवर्गानयनपूर्वकं सुखेनागतमित्यर्थः। अन्यत्तैर्व्याख्यातम् । यद्वा, अतिरंहसा स्वागतमित्यस्य वचनं नैकोऽपीति यद्वा, त्वयैकोऽपीति । यद्वा, त्वयैकोऽपि कवलो नाभोजि श्रीहस्ते पूर्वकवलवृत्तेः अतः इतः अस्मिन् सर्वेषामस्माकं मण्डलमध्यस्थाने एहि प्रविश्य साधुनिजोदरपरिपूरणादिप्रकारेण सम्यक् यथा स्यात्तथा भुज्यताम् ॥ ४५ ॥

हसन्निति तेषां मायामुग्धवाक्यश्रवणात् किंवा दुःखादिव्यञ्जकोक्तिश्रवणेन प्रहर्षोदयात् अर्भकैः सहाऽभ्यवहृत्येति तैर्विना स्वयं तेनैतावन्तं कालं किमपि नाभोजीति । सूचयति ननु, तर्हि श्रीयशोदादिभिस्तत् कथं सोढं तत्राह—हृषीकेशः सर्वेन्द्रियप्रवृत्तिप्रवर्त्तक इति भुज्यत इत्यनुकारादिचातुर्येण तेषां चित्तं मोहित मित्यर्थः। यथा श्रीलक्ष्मणेन श्रीरघुनाथादिषु तद्वृत्तं च पुराणेषु प्रसिद्धमेव । यद्वा, तदानीं स्वयं प्रीतिरहितोऽपि केवलं तेषां सन्तोषार्थमभुङ्क्त इदानीं च निजरसनेन्द्रियादिप्रवर्त्तनेन तद्रसगन्धादिग्रहणपूर्वकं परमप्रीत्या भुक्त्वेत्यर्थः । व्रजं प्रति न्यवर्त्तत

(१) प्रोद्दामनवेणु॰ इति पी॰ पा॰ ।

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

पाठान्तरेपि स एवार्थः आजगरं चर्म दर्शयन्निति अघासुरवधस्य व्रजे कथनाय तत्स्मरणार्थम् इति तथमोपि श्रीभगवता तावत् कालं माययाऽऽच्छाद्य रक्षितमासीदिति ज्ञेयम् ॥ ४६ ॥

इति निजप्रियसहचरबालकवत्ससङ्गतिजनितहर्षभरतो वन्यवेशादिविशेषेणाव्रजस्थस्त्रीजनानां नेत्रानन्दं सञ्जनयन् व्रजान्तर्जगामेत्याह—बर्हेति। वनधातुर्गैरिकादिः बर्हादिभिर्विशेषेण चित्राणि भूषितान्यङ्गानि येन किंवा सखिभिर्यस्य सः अतः प्रोद्दामः अत्युच्चः यो वेणुदलशृङ्गाणां रवः तेन स एव चोत्सवः किंवा उत्सवश्च नृत्यगीतादिरूपस्तेनाढ्यः अत एवानुगैस्तैरेव बालकैर्गीता हर्षभरेण गीतवत् सुस्वरं तालादिसहितमुच्चैः कीर्तिता पवित्रा निर्मला जगत्पावनी वा कीर्त्तिः अघासुरवधादि रूपा यस्य गोपीशब्देन श्रीयशोदादयः सर्वा एव व्रजस्त्रियः तासामपीदानीमेव श्रीकृष्णाद्धर्षभरेणाऽधिकनेत्रानन्दोत्पत्तेः । यद्वा, श्रीकृष्णैकप्रिया भगवत्यः श्रीराधादयः तन्नेत्राणामेव विशेषतस्तद्दर्शनोत्सवसिद्धेः । अन्यत्तैर्व्याख्यातम् । यद्वा, गोपीनां दृग्भिस्तत्कर्त्तृकसाक्षाद्दर्शनैरुत्सवो यस्यास्तथा भूता हर्शदर्शित्वेनैरन्योन्यं सन्दर्शनसुखमुक्तम् एतच्च व्रजान्तरेव बोद्धव्यम्, तदानीं वत्सपालने व्रजाद्दूरचरत्वेनातिविरहानुत्पत्त्या व्रजाद्बहिरग्रेऽनभिगमनात् तच्चाग्रे गोपाङ्गने रसविशेषाविर्भावसमये व्यक्तं वक्ष्यते ॥ ४७ ॥

यशोदाया आनन्दरूपसूनुनेति तस्य तत्कर्मणा तस्या एव विशेषतः सन्तोषोत्पत्तेः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा तेषां कालाज्ञानं च माययैवेत्याह—आत्मनः स्वस्य प्राणेशम् आत्मनः श्रीकृष्णस्य मायाहृता इति वा माया यद्यपि ब्राह्म्येव तथाऽपि श्रीभगवताऽनुमोदिता सती भागवत्येव संवृत्तेति अतः श्रीबलदेवचिन्तने"प्रायो मायाऽस्तु मे भर्तुः" इति तत्तथासम्भवमपि तदिच्छाशक्तेः सर्वशक्तितो बलवत्त्वात्यसम्भवम् अतस्तया हृताः प्रतिबद्धाः "मनोहृतः प्रतिहृतः प्रतिबद्धो हतश्च सः" इत्यमरः । प्राणेशत्वे हेतुः कृष्णं बल्लवेन्द्रकुमारम् । किञ्च, अर्भकाः श्रीनन्दव्रजबालकाः क्षणार्द्धं पलपञ्चकं मेनिरे तत्र तेषां प्रतीतौ मुहूर्त्तयामदिवसत्रुटत्वादिपरिवर्त्त विनैव तस्य कालस्य स्थितेः हे राजन्निति परमाद्भुतत्वात् ॥ ४३ ॥

तत्र दृष्टान्तमाह—किं किमिति । इह जगति अभीक्ष्णमिति सुषुप्तौ शास्त्रे वा ज्ञातस्याऽपि देहद्वयातिरिक्तस्य तस्य मुहुर्विस्मरणात् इति मायामहिमोक्तः अतो भगवदिच्छाबलाबाधितस्यास्ताहशेष्वपि मोहनत्वं घटेत इति भावः ॥ ४४ ॥

स्वागतं सर्ववत्सवर्गानयनपूर्वकं सुखेनागतमित्यर्थः । एवं वर्षेऽप्यतीते तथैव कवलादिदर्शनैः श्रीभगवदिच्छावैभवेन ज्ञेया अन्यत्तैः यद्वा, त्वयाऽप्येकोऽपि कवलो नाऽभोजि श्रीहस्त पूर्वकवलवृत्तेः अनः इतः अस्मिन् सर्वेषामस्माकं मण्डलमध्यस्थाने एहि प्रविश साधुवत्सान्वेषणे सम्प्रत्यपि तत्सम्भालने वा जातधैर्यं त्यक्त्वा सम्यक् यथा स्यात्तथा भुज्यताम् ॥ ४५ ॥

हसन्निति तेषां मायामुग्धानां वाक्यश्रवणात् दुःखाच्छन्नकौतुकश्रवणेन प्रहर्षोदयाच्च हृषीकेश इति तेषां परमप्रेष्ठत्वात् व्रजं प्रति व्यवर्तत, निरवर्त्तदिति पाठे स एवार्थः

परस्मैपदमार्षम् आजगरं चर्म दर्शयन्निति अघासुरवधस्य ... कथनाय इति तथमोऽपि श्रीभगवता तावत्कालं मायया ऽऽच्छाद्य तथैव रक्षितमासीदिति ज्ञेयम् ॥ ४६ ॥

इति निजप्रियसहचरबालकवत्ससङ्गतिजनितहर्षभ... वन्यवेशादिविशेषेण व्रजस्थस्त्रीजनानां नेत्रानन्दं सञ्ज... व्रजान्तर्जगामेत्याह—बर्हेति । वन धातुर्गैरिकादिः वनपदं गृह... सुवर्णादिव्यवच्छेदार्थं बर्हादिभिर्विशेषेण चित्रितानि भूषि... न्यङ्गानि येन किं वा सखिभिर्यस्य सः अतः प्रोद्दामोऽत्युच्चैः... वेणुदलशृङ्गाणां रवः तेन स एव चोत्सवः किं ... स च उत्सवश्च नृत्यक्रीडागीतादिरूपस्तेनाढ्यः परमसमृद्धि... मान् अत एवानुगैस्तैरेव बालकैः गीता हर्षभरेण गीत... सुस्वरं तालादिसहितमुच्चैः कीर्तिता पवित्रा निर्मला जगत्पाव... वा कीर्तिः अघासुरवधादिरूपा यस्य गोपीशब्देन यशोदा... दयः सर्वा एव व्रजस्त्रियः तासामपीदानीमेव श्रीकृष्णा... भरेणाधिकनेत्रानन्दोत्पत्तेः एवं सख्यांशेन श्रीकृष्णाविर्भू... भवस्तेभ्योऽप्येषामाधिक्यं दर्शितम् ॥ ४७ ॥

मातृकुलोत्पन्नैर्यशोदासूनुना अन्यैर्नन्दसूनुनेति प्रोक्तमिति ज्ञेयम् । यद्वा अतिसन्तोषेण द्वयस्यैवाविशेषतः प्रशंसा द्वाभ्यां ताभ्यां गोकुलकुलभाग्यद्योतनाय ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मनः प्रयोषं कृष्णमन्तरा विना एकस्मिन्नब्दे ... ब्रह्ममाया हृता अर्भकाः क्षणार्द्धं मेनिरे इत्यन्वयः । अथवा मा... हृता मायया कृष्णकृपया प्राप्ता व्याप्ताः "हृनाहिंसा गत्योः" इति धातोः । अन्यथा श्रीकृष्णस्य विरहे क्षणस्थापि ... तेषां सहनं स्यात् ? एवं राङ्वादावपि ज्ञेयम् ॥ ४३ ॥

कृपाव्याप्तत्वमेवाभिनयेनाह—माया श्रीभगवत्कृपा ... मोहितचेतसः किं किं विषयं न विस्मरन्ति यथाऽत्रैव श्रीयशोदा... कुन्त्याः वसुदेवदेवक्योः कंसवधानन्तरम् अक्रूरादेश्च श्रीभ... वदिच्छया तत्तत्त्वविस्मरणं श्रीकृष्णनाट्यानुसारिकमेव ... तमिति तदेवाह—यया मायया इच्छया चित्तिप्रशस्तया वा ... चिदचिद्रूपम् अभीक्ष्णं वारंवारं विस्मृतस्वस्वरूपरूपकं ... इति ॥ ४४ ॥

अत एव ते ऊचुरित्यादि, श्लोकः स्पष्टार्थः ॥ ४५ ॥

हृषीकाणामीशः देहेन्द्रियप्राणमनोधिष्ठात... नियन्ता परमात्मा तैः सहाभ्यवहृत्य भुक्त्वा व्रजं ... इत्यनेन तेषां सर्वक्रिया श्रीभगवत्कृतेनोक्ता ॥ ४६ ॥

बर्होद्दामैः विचित्रतानि अङ्गानि येन तत्र बर्हेण ... शोभा कृता प्रसूनैः मालारूपैः सर्वाङ्गावङ्कारः वनेन ... धातुभिस्तिलकादिरचनेति विभागः नवधातु इति ... पाठः वेणुरवेण शृङ्गरवेण प्रोद्दामः प्रबलः उत्सवः तेन ... वत्सान् तत्तन्नाम्नामुच्चारणेन नृणान् गोपीनामुत्... शाधि दर्शनं यस्य सः गोष्ठं प्रविवेश ॥ ४७ ॥

महाव्यालः अघासुरः अद्येति वर्षान्तरानुभवात् ... मोहितत्वेन तेषाम् एकदिवसलीलाज्ञानं बाला इति ... मेव उपोद्घलयति व्रजे व्रजस्य पुरुषस्त्रीषु जगुः ...

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्पृशः सन्त इति गम्यं योज्यं वा तेषु तस्यैव प्राधान्यात् नद्यस्तदेत्यादौ गृह्णन्ति पादयुगलमिति हन्तायमद्रिरित्यादौ यद्रामकृष्णचरणस्पर्शप्रमोद इति वक्ष्यमाणाच्च अथ गोपीपर्यायां श्यामसारिणां तर्हि कथञ्चित्तद्भावोऽलभ्यां दर्शयन् श्लेषेणाह, गोप्य इति । मद्पितृव्यावतीर्णस्य पुनर्मद्पितृधर्मतां प्राप्तस्य गोपकन्यापरिणयनमेव भविष्यतीति सूचयन्नस्य इति भावः । तदेवम्भावी यस्तस्य प्रियात्वं प्राप्स्यन्तीभिः काभिश्चिद्गोपीभिः सह विहारस्तस्य सूचना कृता यत्स्पृहेति श्रीवैकुण्ठनाथवक्षःस्थिता लक्ष्मीरपि यत्स्पृहेत्यर्थः । न केवलं स्पृहामात्रं किन्तु वक्ष्यते चान्यन्नागपत्नीभिः "यद्वाञ्छया श्रीर्ललनाचरत्तपः" इति एवमन्यत्र श्रीगोकुले तद्प्राप्तिः श्रीगोपीनामिव तदनन्यत्वाभावात् तासु तदधिकारिणीष्वननुगतत्वाच्चेति भावः । अत्र सर्वेषां सर्वेषु सत्स्वपि तस्य तस्य प्रभावस्य परमकाष्ठाप्राप्तत्वात् विशेषोक्तिरिति ज्ञेयम् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमी तरवः सुमनःफलार्हणां सुमनःफलानुरूपं पूजासाधनन्तमोऽपहत्यै "पाप्मापेत" इति श्रुतेः ॥ ५—६ ॥

निसर्गः स्वभावश्चरितमवलक्ष्यते ॥ ७—१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—अहो इत्यादिभिः चतुर्भिः स्वयमादिपुरुषोऽपि लोकमर्यादास्थापनार्थमवतीर्णत्वात्स्वशेषभूतमपि शेषमग्रतोऽवतीर्णत्वमात्रेण स्वतोऽधिकमिव सम्भावयन्नाह—अहो इति । हे देववर ! यद्वा, देववरैरमरैरर्चितं तव पादाम्बुजं पुष्पफलादिरूपं पूजासाधनमुपादाय शिखाभिर्नमन्ति तरवः किमर्थमात्मनस्तमसः पापस्याऽपहत्यै नाशाय येन तमसा तरुजन्म कृतं सम्पादितं तस्य तमसोऽपहत्यै इत्यन्वयः ॥ ५ ॥

हे आदिपुरुष ! एते भृङ्गास्तवानुपदमखिललोकपावनं यशो गायन्तः भजन्ते तिरश्चां कथमेवंविधं ज्ञानं तत्राह—अमी अलयः प्रायेण भवद्भक्तेषु मुख्या मुनिगणा एवात एवानघानामात्मनां दैवतं गूढं गोपवेषेणेति शेषः । त्वां न जहति न त्यजन्ति ॥ हे ईड्य ! अमी शिखिनो मयूरा नृत्यन्ति तथा हरिण्यो गोप्य इवेक्षणेन ते तुभ्यं प्रियं कुर्वन्ति तथा स्वगृहं प्रत्यागताय ते कोकिलानां गणाः सूक्तैः प्रियं कुर्वन्ति एते कोकिलादयो वनौकसोऽपि धन्या एव सतां निसर्गः स्वभाव इयान् हि सूक्त्यादिभिर्बहुमानमिषानेव हि ॥ इयं धरणी तृणानि वीरुधश्च धन्याः कुतः ? यतस्तव पादौ स्पृशन्तीति तथा तथा द्रुमलताश्च धन्याः कुतः करजैर्नखैरभिमृष्टाः तथा अद्रयादयोऽपि धन्याः कुतः ? सदयैरवलोकनैः त्वया वीक्षिता इति शेषः । तथा गोप्योऽपि धन्याः कुतः ? भुजयोरन्तरेण वक्षसा आलिङ्गिता इति शेषः । कथम्भूतेन यदाशिमन्स्पृहा स्पृहावती श्रीः तेन ॥ ६—९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इममेवार्थं विशदयति—अहो इति । देववर ! यद्वा, देववराः ब्रह्मादयः अमरा देवाः एतैरर्चितं सुमनःफलार्हणैः पुष्पफलोपायैः आत्मनः स्वस्य तमोपहत्यै अज्ञाननिमित्तपापनिरासाय तरुजन्म येन तमोनिमित्तपापेन ॥ ५ ॥

यतो यथा देवादयो मनुष्यलिङ्गमवाप्य भगवन्तं सेवन्ते तथा एते भ्रमरा अपि तेष्वेतेषु तस्मात्त्वच्चरणपद्मसेवानवरतं न ज्ञातव्या मुमुक्षुभिरिति भावेनाह—एत इति । अलिनो भ्रमराः "भ्रमराणां पद्ममुखमखमाहुर्मनीषिणः" इति अखिललोकतीर्थं समस्तजनस्य स्नानलक्षणं कीर्तनयोग्यं शुद्धिजननस्थानीयं "शाश्वेऽम्भसि पावने" इति च अखिलः अनल्पः लोकः प्रकाशः ज्ञानं येषां ते तथा तेषां सेवायोग्यशास्त्रस्थानीयं "लुक् प्रकाशे" इति धातुः अनुपथं "पथगतौ" इति धातुः यत्र गच्छसि त्वं तत्रानुगमनलक्षणासेवां कुर्वन्तीत्यर्थः । अनुपदं वा मुनिगणाः सर्वज्ञानां देवादीनां गणाः "वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृतः" इत्युत्पमाला त्वदीयेषु वैष्णवेषु मुख्या गूढं मनुष्यलिङ्गधरं ; न जहति त्यजन्ति "ओहाक् त्यागे" इति धातुः जहातीति पाठे वा "व्यत्ययो बहुलम्" (३।१।८५) इति सूत्रान्निर्णयः अमराणामात्मदैवं कुलदैवं अनघात्मदैवमिति पाठे अनघानां निर्दुःखानां मुक्तानाम् आत्मदैवम् "मुक्तानां परमागतिः" "दुःखेनोव्यसनेष्वघम्" इत्यमरः अनघेति पृथक् पदं वा ॥ ६ ॥

पूर्वोक्तमतिविशदयति—नृत्यन्तीति । शिखिनो मयूराः अन्यत्र केशशिखाधारिणः तापसाः हरिण्यः मृगस्त्रियः अन्यत्र हिरण्मयवत्तपस्तेजसा ज्वलन्त आसां भारोऽस्तीति हरिण्यः परोक्षदेशसम्बन्धेन हरिभक्तजनतापहारिण्य इत्युच्यन्ते "महेशाज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्" इति स्मृतेः "हरिणी सा हिरण्मयी" इत्याभिधानं ते तवेक्षणेन प्रियं कुर्वन्ति कोकिलगणाश्च सूक्तैः कर्णरम्यैः वचनैः प्रियं कुर्वन्तीति अन्यत्र कः ब्रह्मा उः शिवः तयोः किल वार्ता कीर्तनं सम्भावना च येषां ते कोकिलाः इन्द्रादयः परभृतः इतरप्राणिरक्षार्थं प्राणधारिणः न स्वार्थं परमभागवता इत्यर्थः । स्मार्त्तन्यायः गृहमिति गृहमागतायातिथये गृहिणाऽर्घ्यपाद्यादिकं दातव्यमिति यत्तस्मात् वनौकसो मृगादयो वा वानप्रस्थादयो वा धन्याः कृतार्थाः स्वं स्वं निवासमागतं त्वां समाजयन्ति, अयं सतां जातिस्वभाव इत्याह—सतां निसर्गः नितरां स्वभावः इयान् एतावान् हि यस्मात्तस्मादिदमुचितमिति भावः । "वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् आशां प्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे" इति "वार्ता सम्भावना किल" इति यादवः ईड्य ! सर्वकर ! ॥ ७—८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहो इति ॥ ५ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भवदीया भवतो नानारूपस्योपासका ये तेष्वपि पूर्णस्य व्रजरूपस्य भवत उपासकत्वात् मुख्या यं मुनयस्तत्पां यथा वनं श्रीवृन्दावने गूढमन्यरूपोपासकैरज्ञातमिति न जहाति हे अनघ ! अपराधग्राहिन् ॥ ६ ॥ ७ ॥

गोप्य इवेति नेत्रगुणेन तत्स्मरणात् अथ गोपीपर्यायां श्यामसारिकां तर्हि कथञ्चिद्वचोलग्नां वर्णयन् श्लेषेण गोप्य इति नेत्रगुणेन तत्स्मरणात् रामप्रियाभिः काचिद्रामस्य भाविविलाससूचनेयम् ॥ ८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमं वनस्पतीनां वैष्णवत्वात् स्वरूपमाह—अहो इति । अहो इत्याश्चर्ये तेषामवान्तरभेददर्शनं स्मृत्वा आश्चर्यमाह, हे देववर ! अमी वृक्षाः अमरार्चितं ते पदाम्बुजं शिखाभिर्नमन्तीति सम्बन्धः । प्रदर्शनेन तेषां चेतनत्वं सूचितम्, आधिदैविकत्वं च यद्यप्येतेऽपि देवाः तथापि भवान् देववरः तरतमभावेऽपि देवानां देवभजनं न युक्तमित्याशङ्क्याह, अमरार्चितमिति । अमरा ये मुख्या देवास्तैरप्यर्चितं स हि सङ्कर्षणो देवकार्यसाधकोऽतो भूभारहरणार्थं प्रार्थितःअतो यथा तेषां खेदं दूरीकरोत्येवं वनस्पतीनामपि तमो दूरीकर्त्तव्यम् दूरीकरणार्थं प्रवृत्तेः अतो नमन्ति तदाह, तमोऽपहत्या इति । येन तमसा तरुजन्मकृतं सजातीयेनैव सजातीयनिराकरणं भवतीति आधिदैविकतमो नियामकमेव नमस्यन्ति अत एव भगवता स्वनमस्कारो नोक्तः मूलभूतं च तमो न कर्मणा ज्ञानेन च गच्छति किन्तु देवतयैव तरुत्वदोषनिवृत्त्यर्थं च त्वां ज्ञापयितुं स्वरूपेणैव नमस्कारं कुर्वन्ति दयासिद्ध्यर्थं गुणाधिकारोऽस्मै दत्त इति मर्यादार्थं तन्निराकरणाय निवेदनं शिष्टं स्वयमेव करिष्यति तदर्थं लीला क्रियत एव । यद्वा, केनचिद्भगवत्स्थितिमज्ञात्वा तत्प्रश्ने कृते सुखत्वं प्रत्याह, तस्य कदम्बस्य प्रियालस्य पनसस्य वा तले क्रीडतीति तदा तदज्ञाननिवृत्तिः स्वस्माद्भवत्येव तच्च तरुत्व एव सम्भवति, नान्यथेति तादृक् तरुजन्म यत् कृतं येन भवता कृतं तमोऽपहत्यै करणीया सर्वेषां तमोऽज्ञानं तदपहत्यर्थमित्यर्थः । आत्मपदस्य शिखाभिरित्यनेन तरुजन्मेत्यनेन वा सम्बन्धः हरौ स्वतले क्रीडत्यन्यदेशीयतरुवन्न मौढ्यं किं तु तत्सर्वपरिज्ञानमानन्दश्च भवतीत्यात्मनस्तमोऽपहत्या इत्यन्वेव सम्बन्धः । अतस्तमुपकारं स्मृत्वा नमन्तीति वार्थः । यद्वा, यत् यस्माद्धेतोरात्मनः आत्मीयं स्वीयत्वेन परिगृहीतमिति यावत् तादृक्तरुजन्मकृतमर्थात् स्वयं भगवतो नमन्तीति सम्बन्धः । वृन्दावनभूमावुत्पत्तिमात्रेणैव हरिः स्वीयत्वं मनुत इति तथा यज्ञोत्पत्त्यादिरूपधर्माणामेतादृशत्वं तत्र धर्मिणां किं वाच्यमिति भावः । वक्ष्यति चाग्रे "न नः पुरो जनपदाः" इत्यारभ्य "नित्यं वनौकसः" इति "तस्मान्मच्छरणं गोष्ठम्" इत्यादि च तमःपदं गुणत्रयोपलक्षकं विशेषाकथनात्सम्बन्धश्चाग्रेऽपि सर्वेषां तथात्वायेति ज्ञेयम् "मन्निकेतं तु निर्गुणम्" इति वाक्यात् ॥ ५ ॥

एवं वृक्षाणां विज्ञापनमुक्त्वा भ्रमराणां विज्ञापनमाह—एतेऽलिन इति । लोकप्रतीत्या यद्यप्येते झङ्कारमिव कुर्वन्ति तथापि वस्तुतस्ते यश एव गायन्ति एतेऽपि तामसाः परं वृक्षापेक्षया किञ्चित्समीचीनाः ते तु फलपुष्पाढ्या इति सुमनांसि फलानि चार्हणरूपाणि पूजारूपाण्यग्रे स्थापयित्वा कायिकं नमनं कृतवन्तः एते तु राजसा इति फलाद्यभावाच्च वाचनिकीमेव सेवां कुर्वन्ति ते सङ्के सुखामोदार्थमायान्तीति न मन्तव्यं यतो यश एव गायन्तोऽनुपथं भजन्ति प्रार्थना त्वेतेषां नापेक्ष्यते यतोऽखिललोकतीर्थं यशो गायन्ति सर्वेषामेव यत् शोधकं तदात्मानं शोधयत्येवेत्यविवादम् प्रभूणां गायका अपि सेवका भवन्ति कदा वा कृपां करिष्यतीत्यनुपथं भजनम् । नन्वेते भ्रमरा हीनाः कथं यशो ज्ञास्यन्ति ? इत्याशङ्क्याह—प्राय इति । अमी सर्वे मुनिगणा एव भवदीयेषु भवत्सेवकेषु मुख्याः ननु, ब्रह्मविदो भक्ताः कथं नीचयोनिं प्राप्तवन्त ? इत्याशङ्क्याह, गूढं वनेऽपि न जहत्यनघात्मदैवमिति भवान् गूढः एतेऽपि गूढाः यथा भवान् मनुष्यभावं प्राप्त एवमेतेपि भ्रमरभावं भवदीयमुख्यत्वादनुपथं भजनं मुनिगणत्वाद्गानम् । ननु, किमिति गूढं भजन्ते प्रकटमेव देवान्तरं महादेवादिरूपं कथं न भजन्ति ? तत्राह—अनघात्मदैवमिति । अनघश्चासावात्मदैवं च निर्दोषो हि त्यक्तुं न शक्यः तत्राप्यात्मनः तत्रापि दैवं तामसा एव हि सेव्याः तत्र महादेवादयः स्वसम्बन्धिनोऽपि देवता अपि भूतगणावृता इति न सेवितुं शक्याः ब्रह्मादयस्तु स्वसम्बन्धिन एव न भवन्ति अन्ये तामसाः देवताः एव न अत एवानन्यगत्या गूढमपि भजन्ते वने वा गूढं यथा भवति तथा अन्यथा भगवान् रोषं वा कुर्यात् अत एतेष्वप्यनुग्रहः कर्तव्य इति ॥ ६ ॥

मृगपक्षिणां विज्ञापनामाह—नृत्यन्तीति । हे ईड्य ! अमी शिखिनस्त्वामागतं ज्ञात्वा नृत्यन्ति ईड्येति सम्बोधनात् अन्ये गायन्ति स्वयं नृत्यन्ति शिखिनां नृत्यमेव प्रशस्तम् आगमने यो नृत्यति स महान् भक्तः आगमनमेव तस्याभीष्टं यतः हरिणयोऽपि ते ईक्षणेन प्रियं कुर्वन्ति कथञ्चित्प्रीतिरुत्पादनीया ता अपि मुदा भवन्तं पश्यन्ति स्वस्य च चक्षूंषि भवते प्रदर्शयन्त्यो गोपिकादिस्मारकत्वेन सुखं जनयन्ति गोप्य इवेति गोप्यो यथा स्वरूपतः सुखजनिकाः एवं तत्स्मारिका अपि नाट्यकाव्येषु तथानिरूपणात् कोकिलगणास्तु सूक्तैः स्तोत्ररूपैः प्रियं कुर्वन्ति तासां शब्देन महानानन्दो भवति एते वनस्था गृहस्था इव धन्याः यतः इयानेव सतां निसर्गः स्वभावः—

"आगते परमस्तोषः प्रियार्थस्योपनायनं
वाक्यैः स्तुतिश्च परमा महत्येतावदेव हि ।
तृणानि भूमिरुदकं सामान्ये गृहमागते"

अत आह—इयानेव सतां निसर्ग इति ॥ ७ ॥

वृन्दावनभूम्यादीन् स्तौति—धन्येति । इयं धरणी भूमिर्धन्या तव पादस्पर्शात् तृणवीरुधोऽपि धन्याः त्वत्पादस्पृशः द्रुमलता अपि धन्याः करजैर्नखैरभिमृष्टाः नद्योऽद्रयः खगाः मृगाश्च धन्याः दयासहिततयावलोकनैः गोप्योऽपि धन्याः तव भुजयोरन्तरेण कृत्वा तवालिङ्गनं प्राप्य । ननु, कथमस्य दुर्लभत्वं तत्राह—यत्स्पृहा श्रीरिति भूम्यादीनां विज्ञापनं न किञ्चित्कर्तव्य

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यतस्त्वया यथा कथञ्चित् सर्वं एव तत्तत्प्रकारेण प्रीणिताः आवेशिनः सर्वभावेन निरूपणे भावेशाधिकरणभूतः सम्यक् भावयति ततः शीघ्रमेवाविष्टा सा देवता भवति अन्यथोभयं-वामन्यनिष्टं स्यात् वृन्दावनस्थानां सङ्कर्षणस्य च भजने अभजनेऽपि देवतान्तरभजनेन तेषां नाशः भगवद्भोग्यानां स्वीकारेणोत्तरस्य च अभजने तु सर्वदेवाभजनं अतिक्रमः स्यात् अन्यस्य च क्रोधः अतो नित्यस्थावेशासिध्यर्थं बलभद्रस्य प्रबोधनम् ॥ ८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वीयपुष्पफलादिभिः स्वप्रभोः श्रीकृष्णस्य चरणावर्चयाम इति मनोनुभावं युष्माकमहं जानामीति स्वविज्ञत्वं परमभक्तान् श्रीवृन्दावनीयवृक्षान् कटाक्षेण ज्ञापयन्नग्रजमाह—अहोइति । शिखाभिः स्वस्वशिरोभिरुपायनं तत्तदुपाय पदाम्बुजं नमन्तीति भक्त्या शिरोभिरेव चरणयोस्तत्तदर्पयन्तीत्यर्थः । किमर्थम् आत्मनस्तमसोऽपराधस्याऽपहत्यै येनापराधेन कृतमुत्पादितं तरुजन्म-इन्नास्माभिरपराध एव कश्चित्कृतः यत्कृष्णसन्निधिगमनासमर्थमस्माकं तरुजन्म विधात्रा कृतमिति तेषामनुरागोत्थं वचनमेवा स्वयोचद्भगवान् वस्तुतस्तु ब्रह्मादिभिरपि प्रार्थ्यमानत्वाद्वृन्दावनीयतरुजन्म नापराधफलमिति ज्ञेयम् ॥ ५ ॥

तत्रस्थान् जङ्गमान् स्तौति–द्वाभ्याम् एतेऽलिनो भ्रमराः अनुपथं त्वदङ्गसौरभानुसारित्वात् वने क्वचिद्रहस्यलीलार्थं गूढं सहचराद्यगम्यमपि त्वां न जहति न त्यजन्ति हे अनघेति तत्र गमनेऽप्येषां त्वघं त्वं न गृह्णासि तस्मादेते भवदीयमुख्या एव मुनिगणा रहस्यलीलामननशीला भ्रमरीभवन्ति तेन भो भ्रमराः ! मद्रतिरहस्यकुञ्जमपि प्रविश्याऽस्मत्सौरभ्यमास्वादयत मासङ्कुचतेतितान् प्रति प्रसादो ध्वनितः ॥ ६ ॥

ते गृहमागताय त्वां ग्रहमागतं सम्मानयितुं सूक्तैः प्रियं कुर्वन्तीति पूर्वेणैवान्वयः । इयान् सतां निसर्ग इति नृत्यसहर्षावलोकनप्रियवचनैर्गृहागतस्य साधोः सम्मानमिति सतां स्वाभाविको धर्म इत्यर्थः ॥ ७ ॥

एवं तत्तत्कर्त्तृकसेवया तान् स्तुत्वा श्रीरामकर्त्तृकप्रसादनापि तानेवानुरक्तैरन्यैश्च सहितान् स्तौति–धन्येयं धरणी अद्येत्यवतारगतस्थूलकालभालङ्योक्तिवाचकेन पदेन त्वत्स्वरूपवराहक्षेपस्पर्शादपि त्वत्स्पर्शोऽस्या अतिसुखद इति द्योतितम् कुतो धन्येयमिति चेत् धरणीस्थानां तृणादीनापि त्वत्सम्पर्कादेवेत्याह–तृणानि च वीरुधश्च तास्त्वत्पादाभ्यां स्पृक् स्पर्शो यासां तथाभूता यतः द्रुमालताश्च करजैः पुष्पत्रोटनार्थं नखैरभिमृष्टा स्पृष्टाः यतः नद्यादयश्च सकृपावलोकैः । यद्वा, सन् भयः शुभावहो विधिर्येभ्यस्तथाभूतैरवलोकैः सहिता यतः किञ्चित्स्तुगन्धशीतलां गोपीपत्नीनां चारिणां वल्लीं वक्षसि कौतुकेन धियमाणां विलोकयाह, गोप्यः श्यामवल्ल्योऽपि भुजयोरन्तरं वक्षस्तेन सहिता यतः श्रीःशोभापि यस्मै स्पृहयति सा या वल्ली शोभामपि शोभयतीत्यत एव वक्षसि त्वया धियत इति भावः पक्षे गोप्यो व्रजसुन्दर्यं यत्स्पृहा यस्मै भुजान्तरा वक्षस्थलं स्पृहयति तथा हि भागवतामृतीयाः कारिकाः—

"सदा वक्षःस्थलस्थापि वैकुण्ठेशितुरिन्दिरा ।
कृष्णोरःस्पृहयाऽस्यैव रूपं विवृणुते ऽधिकम् ॥
पौराणिकमुपाख्यानमत्र संक्षिप्य लिख्यते
श्रीः प्रेक्ष्य कृष्णसौन्दर्यं तत्र लुब्धा ततस्तपः ।
कुर्वन्ती प्राह तां कृष्णः किन्ते तपसि कारणं ।
विजिहीर्षे त्वया गोष्ठे गोपीरूपेति साऽब्रवीत् ।
तद्दुर्लभमिति प्रोक्ता लक्ष्मीस्तं पुनरब्रवीत् ॥
स्वर्णरेखेव ते नाथ ! वस्तुमिच्छामि वक्षसि ।
एवमस्त्विति सा तस्य तद्रूपा वक्षसि स्थिता" ।

इति ॥ ८ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहो इत्यतिकौतुके अव्ययम् हे देववर ! यत् येन स्वचरणासंस्पर्शयोग्यम् ब्रह्मादिभिरपि वाञ्छितं तरुजन्म इ तस्य ते पादाम्बुजं सुमनःफलार्हणमुपादाय नमन्ति । ननु, ब्र दिभिः प्रार्थितं वृन्दावने तरुजन्म प्राप्य पुनः किं वाञ्छ आह—तमोऽपहत्यै इति । तमः पुनर्भवलक्षणः संसारो निव भवत्पादपद्मसन्निकर्षप्रतिबन्धकस्तन्निवृत्तये इत्यर्थः ॥ ५ ॥

हे आदिपुरुष ! प्रायः अमी भवदीयेषु भागवतेषु मुख्याः अलिनः भृङ्गात्मना छिपताः यत एते वने गूढमपि आत्मा त्वां न जहति न त्यजन्ति अपि तु । हे अनघ ! अखिललोक तव यशोऽनुपदं गायन्तो भजन्ते त्वां भजन्तीत्यर्थः ॥ ६ ॥

हिहैतौ यतः सताम् इयान् निसर्गः साधूनामीदृशः स्व अतः केचित्सन्त एव मयूरादिरूपेणेह वसन्तीति भावः ॥ ७ ॥

अद्य इदं त्वयाक्रम्यमाणा धरणी धन्या त्वत्पादौ स्पृश त्वत्पादस्पृशस्तृणवीरुधश्च धन्याः करजैर्नखैरभिमृष्टाः द्रुमलताश्च धन्याः त्वदीये सदयावलोकैर्नद्यादयश्च धन्याः श्री यत्स्पृहा यत्र स्पृहावती भवति तेन भुजयोरन्तरेण व गोप्यो धन्याः ॥ ८ ॥

---

## भाषा टीका ।

॥ श्रीभगवानुवाच ॥

श्रीभगवान् बोले, कि–हे श्रीबलदेवजी, हे देवता श्रेष्ठ ! देवन सों पूजित एसे आपके चरणारविन्द कों सब व्रज के वृच्छ फूल फल, पूजा लेके अपने मस्तक प्रणाम करे हैं, काहे सों, कि–जासों ये तरु जन्म वा अज्ञान के दूर करवे कूं । अथवा और न के तम करवे कूं इन मुमुच्छून ने तरु जन्म धार्यो है, या प्रका में आप श्रीकृष्ण जो कछू बलदेवजी के तांई कहें है आपही ( कृष्ण ) को समुझनों चाहिये । आर्थात् ये वृच चरणों कूं नमैं है इत्यादि ॥ ५ ॥

हे आदिपुरुष ! और ये भ्रमर अखिल लोक के करनवारो जो आपको निर्मल यश है ताकों इस

॥ श्रीशुक उवाच ॥

एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥
रेमे सञ्चारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ ९ ॥
क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः ॥
उपगीयमानचरितः स्रग्वी सङ्कर्षणान्वितः ॥ १० ॥
(१) क्वचिच्च कलहंसानामनुकूजति कूजितम् ॥
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥ ११ ॥
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् ॥
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ १२ ॥

भाषा टीका ।

...वे है। प्राय करकें तो ये सब मुनिगण हैं आपके दासन में कोई मुख्य हैं, ताई सों वन में गुप्त होयवे पै हु अपनो जो दोष रहित स्वामी है ताको नाहीं छोडे हैं ॥ ६ ॥

हे स्तुति करवे योग्य! ये वृन्दावन के मोर आनन्द सें आपके आगे नृत्य करें हैं, और ये हरिणी गोपीन की नाई चितवन सों तुमपै प्यार करें हैं, और वन में रहवे वारे ये वृन्दावन के कोकिलानके समूह आपको अपने घर आये जानिके सुन्दर मधुर बोलीन सों सत्कार करें हैं, ये वृन्दावन वासी पशुपक्षी भी धन्य हैं, इतनोई तो साधुजन को स्वभाव है, कि—जो बडे पुरुष अपने घर आवें तो उनकों कछू यथा शक्ति सत्कार करनो ॥ ७ ॥

अब तो ये पृथिवी बडी धन्य हैं, जो आपके चरणकमल को स्पर्श करे है, ऐसेंई तृण छोटे २ बेल बूटी भी आपके चरणन के स्पर्श सों धन्य हैं, और ये लता वृक्ष भी धन्य है जिनको आप हाथनसों नखन सों स्पर्श करो हो, नदी पर्वत पशु पक्षी भी बडे धन्य हैं, जिनको आप दया पूर्वक देखो हो, और गोपी भी धन्य हैं कि, जिनको आप वक्षःस्थल सों आलिङ्गन करो हो, जा वक्षःस्थल की चाहना लक्ष्मीजी को रही है ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं श्रीमद्वृन्दावनं प्राति प्रीतः सन्नद्रेः समीपवर्तिसरित्सु पशून् सञ्चारयन् सानुगो गोपैः सह वर्तमानः प्रीतमना-...॥ ९ ॥

तामेव रतिमाह-क्वचिदित्यादिद्वयाभिः ॥ १० ॥

बर्हिणं नृत्यन्तमनु अभिनृत्यति बर्हिणमभिमुखो नृत्यतीति ... सखीन् हासयन् ॥ ११—१२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सनमेवर्णनादिप्रकारेण वृन्दावनं व्याप्य प्रीतः सन् "कालाध्वभावदेशानाम"इत्यादिना कर्मत्वम् अद्रेः श्रीगोवर्द्धनस्य प्रीतस्चप्रीतमनस्त्वयोः सामान्यविशेषाभ्यां भेदः ॥ ९ ॥

प्रीतमनसो रतिं दर्शयन् वर्त्तमानप्रयोगेण साधारणादिनगतामेवाह—क्वचिदित्यादिना । पूर्वं "केचिद्वेणून्वादयन्तः" इत्यादिना बालकानामेव प्राधान्येन तत्तत्क्रीडोक्ता, इदानीं तु प्रीतमनस्त्वेन साक्षात् श्रीकृष्णस्यैवेति विशेषः, क्वचित् कस्मिंश्चित् (पथिसङ्कर्षणान्वित इति वा पाठः)पथि स्रग्वीति पाठे कस्मिंश्चित् प्रदेशे कदाचिदिति वा एवमग्रेऽपि मदेन श्रीवृन्दावनपुष्परसपानजेन श्रीभगवत्सान्निध्यसौभाग्यजेन वा अन्धेषु महामत्तेषु तादृशेष्वलिष्विति गानमाधुर्यमभिप्रेतं सङ्कर्षणश्चन्द्रः श्रीभगवता सह तस्यापृथक्तया गानाभिप्रायेण अनुव्रतैः तदेकप्रीतिपरैर्गोपैः अत्र भ्रमराणां स्वजातीयस्य स्वरमात्रस्य गानं श्रीभगवतस्तदनुसारिस्वरस्य तदुचितरागस्य च अनुव्रतानां तु तयोर्गीतपद्धतचरितस्य चेति मिथोगानमेलनं ज्ञेयम् ॥ १० ॥

कलवाक्यैरिति शुकादप्युत्तमजल्पनं बोधयति, एवं बर्हिणति च चशब्दो बल्गिवति समुच्चिनोति अर्थस्तथैव बर्हिणम् अभिवशीकृत्य नृत्यति तदभिमुखः सन् नृत्यशीलत्वर्थः । तेषां व्याख्याने उत्तरत्राऽप्यनुराकर्षणीयः तज्जातिनृत्येनैव तन्निर्जयात् सखीन् हासयन् ॥ ११ ॥

पशूनिति श्लेषेण श्रीकृष्णपार्श्वतो दूरं गत्वा निर्बुद्धित्व-मुक्तं येन पूर्ववदात्मपश्चादेव तत्स्फुरणात् दूरगत्वज्ञानमपि न जातमिति भावः । मेघेति तद्गर्जितं लक्ष्यते तद्वद्गम्भीरयेति महापुरुषस्वभावत एव ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति-क्वचिदित्यादिना । श्रीदामेत्यतः प्राक्तनेन । मदेन मधुपानमदेनान्धेषु भृङ्गेषु गायत्सु तत्सु स्वयं सखीन् हासयन् क्वचिदनुगायति अनुगैः उपगीयमानं चरितं यस्य सखिभिःसङ्कर्षणेन-चान्वितो रेमे क्वचित् कलहंसानां कूजितमनुकृत्य कूजति चुकूज

(१) अनुजल्पति जल्पन्तं कलवाक्यैः शुकं क्वचित् । क्वचित्सवल्गु कूजन्तमनुकूजति कोकिलम् ॥ क्वचिदयमधिकः पठ्यते ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तया नृत्यन्तं बर्हिणमभिनृत्यति अनु अभिनयं करोतीत्यर्थः । कचिन्मेघस्वेव गम्भीरया वाचा सङ्केतितनामभिः सखीन् हासयन् दूरगान् पशूनाह्वयति आजुहाव कया गवां गोपानां च मनोज्ञया प्रीत्या तथोपलक्षितो वा ॥ १०–१२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्ण एवंविधमाहात्म्यं वृन्दावनमवाप्य रेमे इत्यन्वयः अद्रेः पादेषु चरितो नद्यः रोधःसु तीरेषु पशून् सञ्चारयन् ॥ ९ ॥

रतिप्रकारं दर्शयति–कचिदिति । अनुग्रैरनुचरैः सखिभिः सङ्कर्षणेन चान्वितः अनुगतः ॥ १० ॥

हासयन् हासं जनयन् ॥ ११ ॥

नामभिः प्रस्तुतिधारप्रयुक्तादिवचनैः गवां गोपालानां मनोऽन्तःकरणं ह्लादयन्त्या बोधयन्त्या मनोरमया वा ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं सनर्मवर्णनादिप्रकारेण वृन्दावनं व्याप्य प्रीतः सन् ॥ ९ ॥ १० ॥

एवं प्रथमगोचारणादिप्रसङ्गे साधारणदिनगतां लीलामाह–कचिदित्यादिना । बर्हिणमभिलक्षीकृत्य नृत्यति पशूनां दूरगात्म–पश्चादेव श्रीकृष्णागमनस्फूर्तेः सरत्नानां मध्ये यो व्याघ्रसिंहयोः भीतः तद्वचानुरोतिस्म तेषामपिद्वयदर्शनकौतुकार्थमिति भावः ॥ ११—१४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वृन्दावनस्वरूपं निरूप्य तत्रत्यानां च स्वरूपप्रयोद्बवलमद्बोधनं च कृत्वा तादृशे वृन्दावने भगवान् क्रीडां कृतवानित्याह–एवमिति दशभिः । पौगण्डवयसः पुरुषार्थचतुष्टयसाधककालरूपत्वादादौ पुरुषार्थचतुष्टयप्रतिपादनं क्रमेण ततो दशरसोद्भावनेन क्रीडापरमानन्दस्य दशधा रसो लोकेऽनु भूयत इति ब्रह्मानन्दापेक्षया भजनानन्दस्योत्तमत्वप्रतिपादनार्थं तत्र प्रथमं धर्ममाविष्कुर्वन् रतिं कृतवानित्याह–एवंरूपे वृन्दावने कृष्णः पशून् सञ्चारयन् रेमे इति सम्बन्धः, वृन्दावनगुणनिरूपणार्थमेव वचनानामुपयोगादेवमित्यनेनैव सम्बध्यते अतो निरूप्योपरवेत्यादिक्रिया नाध्याहर्तव्या शाब्दी च सङ्गतिरेवमित्यत्रैव योजनीया यत्र रन्तुं मनो दधे यत्र च उवाच तत्र रेमे अन्यानि च कृतवानिति महावाक्ये सर्वेषां सम्बन्धः, यदा पुनस्तत्तदभिमानिदेवताभिः सह रतिं कर्तुमारम्भं कृतवांस्तदा लक्ष्मीः स्वत एव समागता अतो रमणमनुक्तसिद्धमेवेति अनुभावा उद्दीपनविभावाः व्यभिचारिणश्च निरूप्यन्ते आलम्बनं तु लक्ष्मीरेव नायकोत्कर्षमाह–कृष्ण इति । सदानन्दोऽपि पुरुषोत्तमः मनश्च करणं तथापि दोषनिवृत्तिपूर्वकं गुणा वक्तव्याः तदाह—प्रीतमना इति प्रीतं निर्वृतं सन्तुष्टं मनो यस्य पशून् सञ्चारयन् इति धर्मः, सम्यक्चारणं देशविशेषे गह्वरादिवने एकव्ये स्वरसं बाध्येतेति उभयोरुपयोगार्थं देशविशेषान् निर्दिशति अद्रेः सरिद्रोधस्स्विति पर्वतसम्बन्धिन्यो याः न[...] सरितस्तासां रोधःसु कूलेषु तत्र हि हरिततृणानि भवन्ति [...]ढानि च पर्वते स्थितया वा अधस्तात् स्थितया वा तासाम[...] गमनशङ्काभावाभावारणस्यैव रमणं सम्भवति अत एव सम[...] चारणं धर्मरतो रक्षायां स्वाभिनिवेशे धर्मरमणयोर्हीनता स्या[...] दिति तद्व्यावृत्त्यर्थमाह–सानुग इति । अनुपश्चादूगच्छन्तीत्यनु[...] सेवकाः तैः सहितः ॥ ९ ॥

एवं धर्मोद्भावनेन क्रीडामुक्त्वा अर्थोद्भावनेनापि क्रीडामा[...] कचिदिति । मदान्धालिषु गायत्सु कचिद्भगवानपि गायति [...] अतैः निजभक्तैरुपगीयमानचरितश्च सखिसङ्कर्षणाभ्या[...] न्वितः " यदा खलु वै पुरुषः श्रियमश्नुते वीणाऽस्मै वाद्य[...] इति श्रुतेः । वीणाऽनुकरणस्थानीया भ्रमरा भवन्ति अर्थभोगे[...] गीतमपि गायति अन्यथा तद्रसोद्रेको न ज्ञापितः स्यात् स[...] तश्च स एव स्तूयमानोऽपि भवति परिकरयुक्तश्च परिकरो द्विवि[...] इति सखिसङ्कर्षणौ निरूपितौ स्वसम्बन्धिनः कुलसम्बन्धि[...] श्चेति बन्धुभिर्यो न भुज्यत इत्यर्थं तेषां सहभाव आवश्य[...] समीपे गानं स्तोत्रं चार्थभोग एव मुनीनां भ्रमरत्वनिरूपण[...] समीपे धाष्टर्योद्गानं न भविष्यतीति मदान्धा निरूपिताः म[...] भगवत्साक्षिध्यानन्दः भक्तिरसोन्मादौ वा वृन्दावने पु[...] मकरन्दक्षरणसमर्पितेषु भक्तिरूपा एवेति अनुव्रतं येषा[...] तेषामपि स्वसाम्यकरणं सर्वे सखायः सङ्कर्षणश्च सम्यगग[...] तेषामप्यर्थभोगः सम्यक् सम्पाद्यत इति एवं वृन्दावने श्रीम[...] कृष्णः प्रीतमना इति पञ्च पदानि सर्वत्रानुवर्तन्ते ॥ १० ॥

एवमर्थलीलामुक्त्वा कामलीलामाह–कचिद्वेति । कलहंस[...] कूजितमनुकूजति कामे हि द्वयं कर्तव्यं कूजितं रसोद्गम[...] वधाश्च रसार्थं तत्र मयूरस्य मयूर्या सह सम्बन्धस्यैव मत्तस्य [...] विक्षेपे सर्वगतो रसः एकीभूय नेत्राभ्यां निर्गतो मयूर्या [...] प्रविशत्यूर्ध्वचरो ( रेतो ) निर्गच्छति ज्ञानद्वारा च अन्ये सर्वे [...] प्राकृता एव रसाः अत एव विचित्रं तत्र कार्यमुत्पद्यते [...] मनःपूर्वक इति रसारसयोर्भेदकस्य हंसस्य मानसैक[...] यत्स्यं तादृशं भवति कूजितम् अत एव सर्ववि[...] यार्थं हंसे वक्तुं कलहंस उक्तः, स हि कलानां हंसः [...] कविधप्रतिपादकत्वे तदर्थनिष्पातत्वं भवति भगवांस्तु सर्व[...] मेव कूजितं रसावान्तरभेदाविर्भावार्थमनुकूजति अग्रितो नृत्य[...] बर्हिणं नृत्यति यदि मयूरो मयूर्या सह रसेन नृत्यति [...] मेघादिदर्शनेन स्वभावतो वा यदि नृत्यति तदापि भग[...] नृत्यति रसाभासभावाभासनिरूपणार्थम्, अन्यथा रसः पु[...] भवेत् तदाह–हासयन् कचिदिति । कदाचिद्बर्हिणं हास[...] नृत्यति बाला बर्हिणं हसन्ति नायं सम्यक् नृत्यतीति सर्वे[...] मिति निषेधार्थमाह—पुनः कचिदिति ॥ ११ ॥

मोक्षलीलामाह–मेघगम्भीरयेति वाचा दूरगान् पशून् ना[...] मभिर्भगवान् कचिदाह्वयतीति सम्बन्धः । भगवत्सायुज्यं मुक्ति[...] भगवद्द्वैव भवति सर्वशास्त्रनिरूपितानां साधनानां भगव[...] तत्तद्धर्मसम्बन्धजनकानां ततः प्रतिफलितानां भगवत्कृतानां [...] साधकत्वमिति सिद्धान्तः—

"यदनुस्मर्यते काले स्वबुद्ध्या मद्ररन्धन ! ।
यैर्गोपयान्तिभूतानाम्" ॥

चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च वर्हिणः ॥
अनुरौति स्म सत्वानां भीतवद्व्याघ्रसिंहयोः ॥ १३ ॥
क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपवर्हणम् ॥
स्वयं विश्रमयत्यार्यं पादसम्वाहनादिभिः ॥ १४ ॥
नृत्यतो गायतः क्वापि वल्गतो युद्ध्यतो मिथः ॥
गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ॥ १५ ॥
क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ॥
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपवर्हणः ॥ १६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अत्र विशेषतो निरूपणात् अतो भगवन्नामस्मरणं कीर्तनं च भगवता नामग्रहणार्थं तदपि ग्रहणं सर्वेषां तापनिवर्त्तकमेव तदपि कृपया अवसरे यदा ते दूरङ्गता भवन्ति यथा ते साक्षात्कृतस्य भगवतो नाम न गृह्णन्ति तथा भगवानपि दूरगानेवाह्वयति पशवः सर्वथा गत्यन्तररहिताः स्वतो बुद्धिरहिताश्च तदपि नामग्रहणं प्रीत्यैव अन्यथाऽन्यविषयनिवारकत्वं न सम्भवति प्रसत्त्यपेक्षया शब्दस्य दुर्बलत्वात् सापि चेद्व्यवहारलौकिकी न भवेत् तदाऽलौकिकं फलं न प्रयच्छेदिति ज्ञापयितुं गोगोपालमनोज्ञयेत्युक्तं गवां गोपालानां च मनोज्ञा भवति वाणी गोपाला गुरव इति गावोऽधिकारिणय इव उभयेषां मनोज्ञता पूर्वं ततः फलानुभवात् इमामेव लीलां भगवान् मुक्तौ करोति केवलं वाचा समाह्वाने स्वाधिकारो न भात इति न निवर्त्तेत अतो भिन्नभिन्नाधिकारनिरूपणार्थं नामभिरिति बहुवचनं तद्धारसाधनपरिग्रहार्थं च प्रभवत एव पशवस्ततोऽपि दूरगाः ते चेद्गवता ततो न मुच्यन्ते अमुक्ता एव तिष्ठेयुः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एवमिति स्पष्टम् । यद्वा, इत्थमग्रजं परितोष्य गोप्योऽन्तरेणभुजयोरिति निजोक्त्यंशोद्दीप्तकन्दर्पस्तत्सङ्ग एव गाः पश्वीक्ष नियुज्य भोः श्रीमदार्य ! त्वमहमत्र सुबलेन सार्द्धं गोवर्द्धनकन्दरारोधसि विश्रम्यागन्तास्मि त्वमग्रे कालिन्दीरोधस्सु तावद्विहरेत्युक्त्वा ततो वियुज्य पौगण्डेऽपि कैशोराचितांगत्वादसि व्रजवालाभिः सार्द्धं रेमे इत्याह—एवमग्रजं स्तुत्वा गृहादेव पशून् वृन्दावनं सञ्चारयन् अद्रेः सरितो मानसगङ्गाया रोधस्सु रेमे इत्यन्वयः । श्रीमती व्रजयोषिन्मुख्या सैव प्रीता प्रेमवती यस्मिन् सः कुण्डलकर्त्तृको घट इतिवत् प्रीतेस्तस्य विशेषणत्वविवक्षया परनिपातः अत एव प्रीतमनाः अनुगाभिः सखीभिः सहितः व्याख्यानस्यास्य रहस्यत्वादेतस्यापरकं तत्रस्य कनकसम्पुटमिव व्याख्यान्तरमवतारिकां चिन्त्यैवास्ति यथा श्रीमन्तो बलदेवाद्याः प्रीता यस्मिन् सः सानुगः अनुगैः सहितः अन्यत् समानम् ॥ ९—१० ॥

वर्हिणाम् अभिलक्षीकृत्य नृत्यति सखीन् हासयन् वर्हिणामेव रसोल्लासयन् ॥ ११ ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं श्रीमद्वृन्दावनं प्रति प्रीतः सन् अद्रेः समीपम् इति शेषः सरिद्रोधःसु यमुनातटेषु च पशून् सञ्चारयन् सानुगः प्रीतमनाः रेमे ॥ ९ ॥

तदेव प्रपञ्चयति—क्वचिदित्यादिभिः ॥ १० ॥

हासयन् वयस्यानिति शेषः ॥ ११—१२ ॥

---

### भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—या प्रकार शोभायमान वृन्दावन है जामे प्रसन्न मन वारे होयके श्रीकृष्णचन्द्र पर्वत के समीप यमुनाजी के तीरपै गऊन को चरावत ग्वालबालन सहित रमण करत भये ॥ ९ ॥

काई जगे जासमें मधान्ध भौरा गुञ्जार करैं हैं तब आप भी गायवे लगे हैं, और सब सखा आपको गावैं हैं, आप वनमाला पहिरें हैं बलदेवजी कों साथलियें हैं ॥ १० ॥

कोई समें राजहंसनको कूजनो सुनके पीछे आपभी कूजें हैं और मोरकूं नाचते देखके सखानके हंसायवे को आपभी कभूं वाईकी तांईयां नाचवे लगजाय हैं ॥ ११ ॥

और कभूं मेघ सदृश गम्भीर वाणीसों दूर चरबे वारी गायनकों उनके नाम लै लैके बड़ी प्रीतिसों बुलावें हैं, जा वाणी कूं सुनके गऊनको और ग्वालबालनको मन हर्यो जाय है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

चकोरादीननुकृत्य रौति कदाचिच्च सत्त्वानां मध्ये व्याघ्रसिंहयोरागतयोः भीतवज्जनेषु सत्त्वेषु पलायमानेषु पलायत इत्यर्थः । तयोः सत्त्वानां यद्वोद्विकायां भीतवज्जपतीति वा ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आर्यमग्रजम्, विश्रमयति विगतश्रमं करोति ॥ १४ ॥
मिथो नृत्यादीन् कुर्वतो गोपान् प्रशंसतुः ॥ १५—१६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्वचिदित्यनुवर्तत एव चकोरश्चन्द्रिकापायी क्रौञ्चश्चिञ्चाटकन्द-भक्षी चक्राह्वश्चक्रवाकः भरद्वाज एव भारद्वाजः स्वार्थेऽण् व्याघ्रचाटाख्यः पक्षी चकोरादीनां कश्चित् कश्चिदनुकृत्य रौति सर्वानेव युगपदनुकृत्य रौति सर्वशक्तिमत्त्वात् इत्यैश्वर्यं तत्रापि पूर्ववद्बोध्यं भीतवदिति क्रीडाकौतुकेन वतिप्रत्ययस्तयोर्हिंस्रत्वाभावेनापि वस्तुतस्ताभ्यां भयाभावात् ममेति प्रसिद्धमेवेदं नात्र संशयः कार्य इत्यर्थः। अत्र तेषामुत्तरपद्ये व्याघ्रादिवत्वातिशयानां सम्बन्धे भीतायत इत्यर्थः। यद्वा, सत्त्वानां मध्ये यो व्याघ्र-सिंहयोः सम्बन्धे भीतः तद्वच्चानुरौति तेषामीषद्भयदर्शनकौतु-कार्यमिति भावः ॥ १३ ॥

आदिशब्दाद्बीजनादीनि ॥ १४ ॥

नृत्यत इति क्वापि प्रशसंसतुः वल्गत उत्प्लुत्योत्प्लुत्य गति-विशेषं कुर्वतः मिथो अन्योन्यमासक्त्येत्यर्थः। अन्यत्तैः। यद्वा, तौ क्वापि नृत्यतः क्वापि गायत इत्येवं क्वापीति सर्वैरपि योज्यं किञ्च क्वापि मिथो गृहीतहस्तौ क्वापि हसन्तौ भवतः। यद्वा, पदद्वयमिदं विशेषणत्वेन सर्वत्रैव योज्यं क्वापि गोपालान् हसन्तौ अहो इमे गानेन गन्धर्वगणतिरस्कारिणो नृत्येन विद्याधरगणविडम्बका युद्धेन त्रिलोकीजित्वरा इत्यादिपरि-हासं कुर्वन्तौ प्रशशंसतुरेव तत्वतो माहात्म्यविशेषख्याप-नात् ॥ १५ ॥

उपसंहरिष्यन् विश्रामक्रीडां वदन् गोपानां सौभाग्यभरं वर्णयति, क्वचिदिति त्रिभिः। पल्लवैरुपलक्षणां कोमलनवदलको रकपुष्पाणां तल्पेषु बहुत्वं पृथक् पृथक् पञ्चषैर्मिलित्वा निर्मितत्वेन बाहुल्यात् ततश्च बहुतरेष्वपि तेषु तेषां प्रीत्यै तत्तद्वद्विलसत्तत्प्रेमोद्बोधितेन निजशक्तिविशेषेण बहुरूप-तयैव शेत इति विज्ञापयति–एषम् ईशचेष्टित इति वक्ष्यमाणमै-श्वर्यमत्रापि सङ्गतं स्यात्। नियुद्धं तैरेव सह बाहुयुद्धं तेन श्रमः श्रीगण्डादिविषयकमौक्तिकसुन्दरप्रस्वेदकणिकोदयादिकर: तेन कर्शितो दुर्बल इव अनेन सखीनामपि तादृशं बलवत्त्वं सूचितम्, तथा चागमे "गोपैः समानगुणशीलवयोविलासवेषैः" इति तदेवमपि तेषां स्वयमसुरमारणादौ यदप्रवृत्तिस्तत्रेदं पश्यामः सर्वस्य व्रजस्य तेनापि गुणेन श्रीकृष्णैकसुखतार्थं-लीलाशक्तिरेव तेषामुपमं स्तम्भयतीति गोपेति ते किञ्चिज्ज्येष्ठा ज्ञेयाः तत्रोपबर्हणरचनं च तत्सुखलाभायैव तेन तत्कृतं किं वा रचितस्यापि तेनैव तदर्थं त्यागो ज्ञेयः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपबर्हणम् उपधानम्। आर्यम् बलभद्रम् सम्वाहनं लालनम् ॥ १४–१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्चकोरादीननुसृत्य रौति रराव सत्त्वानां मृगाणां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति ॥ १३ ॥

क्वचिद्गोपानामुत्सङ्गोऽङ्क एवोपबर्हणमुपधानं यस्य तं क्रीडा-परिश्रान्तमार्यमग्रजं स्वयं पादपीडनादिभिर्विश्रमयति ॥ १४ ॥

वल्गतवल्गुवतः नृत्यादीन् कुर्वतो गोपान् गृहीतौ हस्तौ याभ्यां तथाभूतौ प्रशशंसतुः ॥ १५ ॥

क्वचिन्नियुद्धेन बाहुयुद्धेन यः श्रमस्तेन कर्शितः ग्लानः वृक्षमूलाश्रयः पल्लवतल्पेषु गोपानां उत्सङ्गमुपधानं यस्य तथाभूतः शेते शिश्ये ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्याघ्रशार्दूलसिंहयोः सकाशात् भीतवत् स्वयमपि भीतो भवति ॥ १३ ॥

गोपस्य उत्सङ्गोऽङ्क एव उपबर्हणं शिरःपीठं यस्य स तथा तम् आर्यं ज्येष्ठं पादसंवाहनादिभिः विश्रामयति, क्रीडा-प्रासङ्क्लेशं नाशयति ॥ १४ ॥

रामकृष्णौ नर्तनादिकुर्वाणान् गोपालान् नृत्यादिविशेष-विषयेषु प्रशशंसतुः स्खलनादिविषये हसन्तौ वल्गः उत्प्लवतः ॥ १५ ॥

नियुद्धं बाहुवल्लीग्रहणादिद्वन्द्वयुद्धम् ॥ १६—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तल्पेष्विति बहुत्वं तत्र तत्रानेकेन प्रकारेणेति शेषं महात्मनः महात्मानः परमभाग्यवन्तः "सुपां सुपो भवन्ति" इत्युपसङ्ख्यानेन ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पुरुषार्थचतुष्टयलीलामुपपाद्य दशरसप्रकारेण भगवतो लीलां वदन् प्रथमं षड्रसलीलामाह–चकोरेति। चकोरा हि चन्द्र-किरणभोक्तारोऽलौकिकभोगाः न ह्यन्येन चन्द्रकिरणा भूमि-स्थिता भोक्तुं शक्यन्तेऽत एव परं भोक्तारः सूर्यकिरणा इ-अन्यथा ततः शैत्यादिकं न स्यात् तथैव सर्वे पुरुषाः लीला-भुंज्यन्ते तद्रास्यं चानुभवन्ति तथैव लोकप्रतीतिः तद्वदयं भग-वान् रसानुभवं करोतीति ज्ञापयितुं शृङ्गाररसे चकोरवद्भगवतो वाग्व्यापारो निरूप्यते क्रौञ्चो वीरे, चक्रवाकः करुणायां स हि वियुक्तश्चक्रपदे आवर्तनेन भार्यामभिप्रेतमिति तेन आ-आह्वानं यस्येति तस्याऽवश्यं करुणा युक्तैव भारद्वाजोऽद्भुते क्रमस्य निष्कामकत्वात् भारद्वाज इत्याख्या यस्य स हि द्विजन्मा तथा-भसम्बन्धख्यापनमद्भुतरसेऽनुगुणं भवति बर्हो हास्ये तस्य तथा-पूर्वमेव निरूपितं एते पञ्चविधा नात्यन्तं विरुद्धा इत्येकीकृ-निरूपिताः भयानकरसस्तु सर्वोपमर्दक इति पृथक् निरूपयति

पादसम्वाहनं चक्रुः केचित्तस्य महात्मनः।
अपरे हतपाप्मानो व्यजनैः समवीजयन्॥ १७॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सत्वानां मध्ये व्याघ्रसिंहयोर्भीतवच्चानुरौतीति एवं रसाविर्भावे प्रमायां प्रसिद्धमिति स्फेलाह, भयं द्विविधं स्वरूपनाशात् अभिमानादिधर्मनाशाद्वा तत्र स्वरूपे व्याघ्रः अभिमानादिधर्मे सिंहः बहुप्रकारं च भयं प्रतीकारासमर्थानां सम्भावनायामप्यन्यथा अन्येषां चान्यथेति तत्र सत्वानि शशादीनि प्रतीकारसम्भावनारहितानि भये परमा काष्ठा सत्वसम्बन्धिन्यवस्था रसाभिमते वेदापेक्षया वचनमतिसुन्दरमिति तदेव निरूपितम्॥ १३॥

बीभत्सरसलीलामाह—क्वचित्क्रीडापरिश्रान्तमिति। मार्गे चलनं स्वयं क्वचिद्विश्रमयति विगतश्रमयुक्तं करोति पादसम्वाहनादिभिः पादे हि चलतः श्रमो भवति अङ्गमर्दनं च तदुकरणं च शय्यास्तरणादिकं चादिशब्देनोच्यते। लीलाशीलमाव उत्तमस्य बीभत्सो भवति भक्तिमतामेव स बीभत्स इति प्रतीतेः मत्यन्तानुचितप्रतीतिरनेषामेवेति यथाहिय(च्य)पुटगतमपि रूप्यमत्यप्रमर्त्तीति न पिशाचानां तादृशदर्शनेन बीभत्सरस उदेति किन्त्वस्मदादीनामेव तथेदमपि भक्तानाम् एते हि सर्वे रसा भगवद्भजने तत्तदधिकारनिरूपकाः सर्वरसाविष्टा अपि भगवति सायुज्यं प्राप्नुवन्तीति पादसम्वाहनादिकरणे हेतुः क्रीडापरिश्रान्तमिति क्रीडा मल्लक्रीडा भगवतैव सह बलिष्ठेन सह कृतश्रमो यथाधिकमजनको भवति परं प्रथमं पीडां प्राप्नोति तत्प्रतीकारं नान्यो जानाति भगवद्रूपत्वेनैवातिमात्रं व्यापृतत्वात् तदाह—परितः श्रान्तमिति अतिविह्वलतासूचनार्थं गोपस्यैव कस्यचिदुत्सङ्ग उपबर्हणं यस्य अत एव विफलत्वात् स्वामिकृतमुपचारमपि सहते मार्यत्वादेव भगवतस्तथा करणम्॥ १४॥

रौद्ररसमाह—नृत्यत इति। मल्लानामिव हि रसो रौद्रः स चाप्रत्योत्पन्नोऽपि भगवता उपनिबध्यत इति भगवता रसयुक्तलीला कायवाङ्मनोभिर्युक्तमयुक्तं पीडकं च तत्—चतुर्विधा मल्ललीला स्तूयते हरिणा मुदा साधारणत्वाद्रौभयोर्मेहयं उभाकुभौ मल्लयुद्धे अन्यत्र बहवः तत्र कायिकं नृत्यं गानं वाचिकं वल्गनम्मानसं स्वप्रौढित्वापकत्वात् मिथश्च युद्ध्यत इति पीडारूपा क्रिया कायिक्येव कांश्चित्प्रशान्तो कांश्चित्प्रशशंसतुः गृहीतहस्ताविति न पक्षपातेन कस्यचित्कियाभिनिवेशः केनचित्कर्त्तव्य इति ज्ञापनार्थः, साऽपि लीला लोकप्रसिद्धा मुखवत्वरूपापिका हसन्ताविति प्रथमं सन्तोषःपश्चात् प्रशशंसतुरिति वा॥ १५॥

शान्तरसलीलामाह—क्वचित्पल्लवतल्पेष्विति। शयानो हि शान्त एव भवति नियुद्धं बाहुयुद्धं तत्र यः श्रमः स कर्षितो येन जितश्रम इत्यर्थः। शान्तरसः प्रत्येकपर्यवसायीति निरूपयन् भगवानेकरूपः सर्वत्र मूलवृक्षेषु सर्वैरेव गोपालैरहमहमिकतयास्तृता एव तल्पास्तेषां सर्वेषामेव युगपत्सौख्यसिद्ध्यर्थं सर्वेष्वेव तल्पेषु भगवान् शयानो जातः तदाह बहुवचनम्। ननु, तथापि भगवान् किमिति तत्र शयनं कृतवानित्याह—वृक्षमूलाश्रय इति। वृक्षस्य मूलमेवाश्रत्वेन येषां ते वृक्षमूलाः परमहंसाः नानाभवन अनन्तत्र तत्रातीन्द्रियत्वेन स्थितान् परमर्षीन् कृतार्थीकर्त्तुं तथा करोतीत्यर्थः। लोकानामेव प्रतीतिस्तल्पे शेत इति वस्तुतस्तान् योगिनामन्तःकरणान्यतस्तेषु शेते गोपालानामुत्सङ्ग एवोपबर्हणं यस्येति तेषु भगवतः प्राधान्यस्थापनम् ऋषिस्वप्राधान्यस्थापनामीति ज्ञापयति, ते हि वैश्याः अतः स्वधर्म(स्था)स्थापकमुत्सङ्गपदम् उपबर्हणं शिरस उपधानम्॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किन्तु सत्वानां प्राणिनां मध्ये व्याघ्रसिंहयोः शब्देन भीतवद् भवति सखिषु पलायमानेषु स्वयमपि पलायते वस्तुतस्तु स्वस्य स्वाभाविकशौर्येण भयाभावो यतिप्रत्ययेनोक्तः॥ १३॥

उपबर्हणं शीर्षोपधानम्॥ १४॥

हसन्तौ कृष्णरामौ नृत्यादीन् कुर्वतो गोपालान् प्रशशंसतुः॥ १५—१८

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कांश्चिच्चकोरादीन् अनुरौति तदनुकरणशब्दान् करोति कश्चिच्च सत्वानां मृगादीनां मध्ये व्याघ्रसिंहयोस्ताभ्यांभीतवद्भवति॥ १३॥

विश्रमयति विगतश्रमं करोति॥ १४—१६॥

---

भाषाटीका

चकई चकोर चकवा मडरिया और मोर इन कीसी बोली बोले हैं, कमऊ व्याघ्र सिंह ते डर के जब और जन्तु भाजे हैं तब आपहूं डरप के भाजवे लगें हैं॥ १३॥

काऊ समें जब खेलत २ हार जाय हैं, तब काई गोप की गोदमें अपनो माथो धरके बलदेवजी पौढें हैं तब स्वयं आप श्रीकृष्ण दाऊके पांय दाविकें पङ्खा करकें श्रमदूर करें हैं॥ १४॥

कमऊ ग्वाल बाल नाचें हैं गावें हैं कूदें हैं कुस्ती करें हैं तब दोऊ भैया उनके हाथ पकरि कें हँसते २ उनकी प्रशंसा करें हैं॥ १५॥

काई समें परस्पर ग्वालनसों भयो जो युद्ध वा कुस्ती की थकाई सो काई वृक्ष की जड को आश्रय लेकें काई गोपकी गोद को तकिया कर श्रीकृष्ण सोवें हैं॥ १६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

व्यजनैः पल्लवादिनिर्मितैः॥ १७—१८॥

अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ।
गायन्ति स्म महाराज ! स्नेहक्लिन्नधियः शनैः ॥ १८ ॥
एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडम्बयन् ।
रेमे रमालालितपादपल्लवो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः ॥ १९ ॥
श्रीदामा नाम गोपालो रामकेशवयोः सखा ।
(१)सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईशचेष्टित इति निगूढस्वभावत्वेऽप्यन्तरान्तरा ईशस्यैव चेष्टितानि दृश्यन्तेऽस्मिन्नसः ॥ १९ ॥

ईशचेष्टितत्वमेव दर्शयितुमाह—श्रीदामेति । स्तोककृष्णः कश्चित् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

केचिदिति, बहुत्वं क्रमेण परिवृत्त्या श्रीमत्पादाब्जयोर्बहुभिः सम्वाहनात् किं वा बहुलशय्यासु प्रत्येकं त्रिचतुरतया तत्र प्रवृत्तेरभिप्रायेण महात्मन इति छान्दसं महात्मानः परमभाग्यवन्त इत्यर्थः । यद्वा, तस्य महागुणगणाश्चर्यरूपस्य हतः ततस्तादृशतत्सेवान्तरायरूपः पाप्मा यैः इत्यात्मानमधिक्षिपति तेषां नित्यतादृशत्वेऽपि अथमात्माऽपहतपाप्मेति तत्सरूपयोगः एवमिदं पदं पूर्वेण परेणाऽपि योज्यं सम्यक् मन्दमधुरचालनादिमुद्रया वीजयन् ॥१७॥

तस्याऽवसरस्य योग्यानि तस्य श्रीभगवतोऽपि सख्यानि वा गीतानीति शेषः । विशेषणद्वयाद, मनोज्ञानि चित्ताकर्षणानि विचित्राद्भुतस्वरतालादिमयत्वात् शनैरिति विश्रामावसरयोग्यत्वादुत्तमगानमुक्त्वा स्नेहक्लिन्नधीत्वस्यात्रैवोक्तिर्गानस्वभावनस्तत्प्राकट्यविशेषाभिप्रायेण यद्वा, पदद्वयस्यास्य सर्वान्ते निर्देशात् पूर्वश्लोके वाक्यद्वयेनापि सम्बन्धो द्रष्टव्यः ॥ १८ ॥

अनुक्तामप्यन्यां गोपलीलामुद्दिशन् तादृशलीलायाश्च तदनिप्रियत्वं प्रतिपादयन्नुपसंहरति—एवमिति । स्वाविर्भावान्तरे रमालालितपादपल्लवोऽपि एवं वृन्दावनविहारप्रकारेण रेमे रतिं प्राप तदेवमत्र सुखं तादृशसुखस्याप्यनादरः सूचितः किं कुर्वन् चरितैर्नन्दस्यात्मज उत्पन्न इत्यादिरूपैरलौकिकैर्लौकिकं गोपात्मजत्वं विडम्बयन् हीनोपमारूपं कुर्वन् अलौकिकं गोपात्मजत्वमात्मानि दर्शयन्नित्यर्थः । ननु, श्रीभगवतः कथमात्मजत्वं तत्राह, स्वे ये श्रीनन्दयशोदादयः पित्रादिरूपास्तेषां मायया कृपया वात्सल्यवशतयेत्यर्थः । अत एव नितरां गूढा सर्वेषामप्यगम्या आत्मगतिर्महाप्रणयमयनिजमाधुरीविशेषो यस्य अत एव कैश्चिद्ग्रामदेवैर्ग्राभिः सतो कश्चिद् ग्राम्यो बन्धुरिवेति आत्मजवत् सख्येऽपि तादृशोपमत्वमिति भावः । ननु, तर्हि सर्वप्रोच्यमानं श्रीभगवत्प्राकट्यं तत्र कथं भवत्वित्यत्राह, ईशं सर्वैश्वर्ययुक्तं चेष्टितं यस्य तल्लीलाशक्तिरेव तादृशी सती श्रीभगवदनुसंहितापि सर्वं सम्पादयतीत्यर्थः ॥ १९ ॥

एवं प्रथमदिनक्रीडयाऽन्यदिनक्रीडामप्युपलक्ष्याऽधुना कदाचिन्निजप्रियजनप्रीत्यै गोपालने किञ्चिदैश्वर्यमपि साक्षात् प्रकटितमिति प्रसङ्गादाह—श्रीदामेत्यादिना । तत्र श्रीरामस्य सर्वा[...] निर्देशलघुत्वे तस्यैव प्राधान्यात् सुबलाद्याश्च महा[...] श्रीदाम्नः प्राङ्निर्देशः सखिषु मुख्यत्वेन व्रजे तदिमस्य[...] केवलकृष्णनाम्ना प्रचारणायामन्याव्यत्वात् स्तोककृष्ण इ[...] चतुरक्षरमेव नाम ज्ञेयं तत्र चेदृशमेव लभ्यते बालस्याप्य[...] कृष्णमनुगच्छन्नेव वर्तते तस्मान्नाम च तमनुगमिष्यत्[...] विशेषाय सम्पश्यत इति विचार्य सम्पगुल्लसता तत्पित्रा ना[...] शनामप्रकाशितमिति प्रेम्णेति न तु तालफललोभेन न च गु[...] वधार्थं किं तु प्रियजनप्रीतिविशेषार्थं किञ्चिद्विदूरव्यप्रार्थनवत्[...] प्रेमस्वभावेनैव । यद्वा, स्वव्याजेन श्रीकृष्णरामयोरेव तादृशमो[...] नसम्पादनेच्छामयेनेत्यर्थः । अत्र च सख्यमयप्रेम्णेति लभ्यते य[...] च साजात्येनैव भवतीति मिथः प्रभावादिज्ञानमयमेव यथोक्तं [...] "अस्मात् किमत्र ग्रसिता निविष्टानयं तथा चतुष्कर्णबिलङ्घ[...]" इति वक्ष्यते चानन्तरं रामरामेति ततोऽर्जुनेन तद्युद्धमाहात्म्य[...] र्णनावत् वीररसस्वाभाविकसख्यमयप्रेमैवेदमिति ज्ञेयम् ॥ २०[...]

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निगूढा आत्मगतिः स्वविषयज्ञानं सर्वेषाम् ॥ १९—४२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा तस्य महात्मनः कृष्णस्य पादसम्वाहनं का[...] अपरेऽपहतपाप्मानः तत्सेवाख्यामादिशि भावः । तरुपल्लवा[...] व्यजनैः समवगवीजयन् ॥ १७ ॥

अन्ये तु हे महाराज ! प्रेमार्द्रचित्ताः हृदयङ्गमानि त[...] रूपाणि चरितानि जगुः ॥ १८ ॥

इत्थं निगूढा आत्मगतिः स्वात्मानुभूतिर्येन त[...] स्वसङ्कल्पेन चरितैश्चेष्टितैः गोपात्मजत्वमनुकुर्वन् रमया [...] लितौ पादौ एव पल्लवौ यस्य तथाभूतोऽपि ग्राम्यैः प्रा[...] सह तद्वद्रेमे कथम्भूतः मध्ये मध्ये ईश्वरासाधारणानि चेष्टि[...] यस्य तथाभूतः ॥ १९ ॥

तदेव दर्शयति—श्रीदामेत्यादिना । श्रीदामा सुबलादय[...] वक्ष्यमाणमब्रुवन् ॥ २० ॥

(१) सुबलास्तोककृष्णाद्याद् गोपाग्प्रेम्णेदमब्रवीद् । इति विज० पा० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

महात्मनः कृष्णस्य मनोहराणि स्नेहेन क्लिन्ना आर्द्रा धियो येषां ते तथा ॥ १८ ॥

बाललीलामुपसंहरति—एवमिति। स्वमायया स्वेच्छयैव निगूढात्मगतिः प्रच्छन्नस्वरूपानुभवः अन्याऽवेक्षयेति शेषः। प्राकृतैः मूर्खजनैः किमर्थमेवं कृतमत्राह, प्राकृतवादिति धर्म इति शेषः ॥ १९ ॥

* शुकः परीक्षितमाह—धन्येयमिति। कस्माद्धन्येत्यत्राह, तृणवीरुध इति। तस्य कृष्णस्य पादौ स्पृशन्तीति तत्पादस्पृशः करजैर्नखैः अभिमृष्टा अभितः श्रिताः लूना इत्यर्थः। नद्यादयो दयासहितैरवलोकैरवलोकिताः गोप्यः श्रीमद्भुजयोरन्तरं वक्षः स्थलं स्पृहयतीति यत्स्पृहा तस्मिन् भुजयोरन्तरेण मध्यम् आलिङ्गिता इति यत्तस्मादियं पृथिवी तद्गताः पदार्थाश्च धन्या इत्यर्थः ॥ ० ॥

यद्वेवकार्यार्थमवतीर्णो हरिणा तद्रूपं वक्तुमुपक्रमते, श्रीदामेति। सुबलश्चाद्योकश्च कृष्णश्चाद्या येषां ते तथा तान् ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तस्य महागुणगणस्येति हतः तादृशतत्सखान्तराय-रूपः पाप्मा यैरित्यात्मागमम् अधिक्षिपति तेषां नित्यताहशत्वे-ऽप्ययमात्माऽपहतपाप्मेतिवत्प्रयोगः ॥ १७ ॥

तदनुरूपाणि तदवसरार्हाणि ॥ १८—१९ ॥

एवं गोचारणलीलासामान्यप्रसङ्गे कादाचित्कमप्याह—श्रीदामेति। स्तोककृष्ण इत्येव नाम न तु स्तोकेति विशेषणं तदग्रे तन्नामकरणानर्हत्वात् प्रेम्णा प्रियजनोचितप्रार्थनामयेन व्याजेन तयोरेव तादृशभोजनेच्छामयेन च ॥ २०—२४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भक्तिरसमाह—पादसम्वाहनं चक्रुरिति। केचिदिति दुर्लभाः प्रदर्शिता शान्तरसाभिनयकर्तुः सर्वरसास्वादकस्य वा महात्मन इति ततोऽप्यधिकस्य रसान्तरमप्युत्पादयितुं समर्थस्य पादसम्वाहनमत्र वाच्यम् अन्ये पुनः कर्ममार्गानुसारेणापि भक्तिं कुर्वाणा हतपाप्मानो निष्कल्मषाः कर्मिणां पापसम्भावना वर्तत इति तन्निराकरणार्थमुक्तं हतपाप्मान इति ते व्यासम्बोपासका पूर्वेणैव तथा कृताः ततो धार्योः साम्यात्तदभिव्यक्तिहेतुभिर्व्यञ्जनैः अवनवीजयन् एवमुभयविधा अपि भगवत्सेवालक्षणं भक्तिरसं भगवत्सान्निध्यागादुःमन्त इति भक्तिरससहिता भगवत एव लीला ॥ १७ ॥

एवंरूपप्रश्नानुसारेण लीलामुक्त्वा नामप्रश्नानुसारेणापि तां लीलामाह—अन्य इति। भगवतोऽनुरूपाणि योग्यानि न स्वननुरूपाणि निरोधार्थं केवलं कृतानि मनोज्ञानि मनोहराणि भगवतो भक्तानां च यद्भगवता गोप्यं तत्प्राकट्यं भगवतः अमनोहरं भवति भक्तानां तु भक्तिमार्गविरुद्धं महात्मन इति भगवति सर्वं सम्भवति अतो भगवन्माहात्म्यं ज्ञात्वा भगवान् कीर्तनीय इति ज्ञापनार्थं महात्मन इत्युक्तं गानं रागानुसारेण भगवद्गुणोपनिबन्धयुक्तानां कीर्तनं स्मेति प्रसिद्धिः प्रमायां महाराजेति सम्बोधनं राजलीलाख्यज्ञापनाय तेषामपि प्रेमोद्गमो न भगवत्सान्निध्यादभीष्टगुणाच्च जात इति सर्वलीलान्ते तेषां प्रेमोदयने स्नेहाक्लिन्नधियः शनैरिति स्नेहेन क्लिन्ना धीर्येषाम् आर्द्रवाससा स्पृष्टं सर्वमार्द्रमिव भवतीति ज्ञापयितुं तेषां गानमपि तथा जातमित्याह—शनैरिति। एतदन्तैव भगवल्लीला ॥ १८ ॥

अतः परं जीवाः सायुज्यमेव प्राप्स्यन्तीति कैः सह लीला कर्तव्या स्यादत उपसंहरति—एवमिति। एता एव दशविधलीला यत्र क्वचिद्भगवत उच्यन्ते अग्रे भगवतो राजसीं सात्त्विकीश्च लीलां वक्ष्यन् तामसीयं गोकुले प्राकृतैः सह कृतेत्याह, ननु, ज्ञानरूपे भगवति कथमिवं लीला सम्भवति ज्ञानस्य तमोविरोधित्वात् तत्राह—निगूढात्मगतिरिति। नितरां गूढा आत्मनो गतिर्ज्ञानलीला यस्य स्वमाययैवाभवत्र सम्पद्यते स्वाधीनमायया गोपात्मजत्वमपि चरितैः कृत्वा विडम्बयति अनुकरोति उपहसति वा न हि गोपा एतादृशा भवन्ति अतो महानलपस्य नाम स्वस्मिन् स्थापयन् तानुपहसन्नेव चरितान्यलौकिकानि विडम्बनं चालौकिकचरित्रैर्न भवतीति मांया तेषु सहकारिणी क्रियते बहूनामेव चरित्राणां बहुधा प्रदर्शितानां विडम्बनं सिध्यति अतः स्वरूपं गोपवत् गोपानुकरणं चोपहसन् रेमे लीलादाबुक्ताया लक्ष्म्या उपसंहारे विनियोगमाह—रमालालितपादपल्लव इति। क्रीडान्ते पादसम्वाहनं पतिव्रताया धर्मः अन्यथा समतया गता भक्तिं पुनरागच्छेत् अतः प्रत्यागत्यर्थमन्तेऽवश्यं पादसम्वाहनं कर्तव्यम् एतादृशोऽपि प्राकृतैः समं प्राकृतरसानुभवार्थं ग्राम्यवद्रेमे अन्यथा विजातीये रसो भोक्तव्यने ईश्वरेच्छेति इति भगवतोऽप्यन्ते प्रत्यापत्तिः ईश्वरस्येव चेष्टितं यस्येति "लोकवत्तु लीलाकैवल्यम्" ( २।१।३३ ) इति न्याय उपदर्शितः ईश्वरा अप्यासक्तकारिरूपां व्याधवल्लीलां कुर्वन्ति तथैवैतदपि भगवता कृतमिति ॥ १९ ॥

एवं गोपानां संस्कारार्थं लीलां प्रदर्श्य तेषां दोषनिराकरणार्थं धेनुकवधलीलां प्रस्तावयति—श्रीदामानामेति विख्यात। श्रीदाम यस्य लक्ष्म्याः सम्बन्धी कश्चित्तद्धामेव सोऽपि गोपालः नन्दवंशोद्भवः रामकेशवयोः सखा साधारणः सख्यपर्यन्तमागतः श्रीसम्बन्धी लीलासम्बन्धी भक्तिसम्बन्धी च तादृशानन्यानपि गणयति सुबलेति स्तोको भिन्नः कृष्णो भिन्नः स्तोककृष्णश्चापरः सुबलो बलभद्रानुसारी सुबलस्तोककृष्णाद्येवाद्यो येषां ते सर्वे सम्भूय प्रेम्णा स्वाभिलषितं किञ्चित् प्रार्थयन्ति तदाहुः सुबलः प्रथमं निरूपित इति ॥ २० ॥

———

* विजयध्वजरीत्याऽत्र मूले ॥ श्रीशुक उवाच ॥ ततः धन्येयमित्यादि पद्यम् वर्तते ॥

राम राम ! महाबाहो ! कृष्ण ! दुष्टनिबर्हण ! ।
इतोऽविदूरे सुमहद्वनं तालालिसङ्कुलम् ॥ २१ ॥
फलानि तत्र भूरीणि पतितानि पतन्ति च ।
सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना ॥ २२ ॥
(१)सोऽतिवीर्योऽसुरो राम ! हे कृष्ण ! खररूपधृक् ।
(२)आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः ॥ २३ ॥
तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ! ।
न सेव्यते पशुगणैः पक्षिसङ्घैर्विवर्जितम् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्वयोगमायया आवृतात्मैश्वर्य्यः स्वयं गोपात्मजोऽपि चरितैर्गोपात्मजत्वं भूपालपुत्रत्वं विडम्बयन् तिरस्कुर्वन् सोऽप्येवं लीलां कर्त्तुं न जानातीति भावः । "गोपां गोपालके गोष्ठाध्यक्षे पृथ्वीपनायपि" इति मेदिनी ऐश्वर्यदृष्ट्या रमालालितपादपल्लवोऽपि तदाचर्यात् कैश्चिद्ग्राम्यैः बन्धुभिः सह कश्चिद्ग्राम्यो प्रद्युरिव रेमे न केवलमावृतमेव तदैश्वर्यमित्याह-मधुरमारयादिमस्ताभे ईशमैश्वर्य्यमयं चेष्टितं यस्य सः ॥ १९ ॥

ईशचेष्टितस्यमेव दर्शयितुमाह-श्रीदामेति । प्रेम्णेति कृष्णरामाभ्याम् स्वव्याजेन तालफलानि भोजयितुमित्यर्थः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यजनैः तालवृन्तादिरूपैः ॥ १७ ॥

स्नेहेन क्लिन्ना आर्द्रीकृता धीर्येषां ते ॥ १८ ॥

निगूढा स्वाभाविकीर्ज्ञेषु तुल्यया आत्मगतिर्यस्य सः कृपामात्रापेक्षया तु ईशस्य स्वस्यैव चेष्टितं यस्मिन् सः स्वमायया स्वसङ्कल्पेन गोपात्मजत्वं चरितैस्तदनुरूपैश्चेष्टितैर्विडम्बयन् अनुकुर्वन् रमालालितपादपल्लवोऽपि ग्राम्यैः ग्रामोत्पन्नैः स्वकृपापात्रभूतैर्गोपबालकादिभिः समं सह ग्राम्यवद् आसक्त इव रेमे इत्यन्वयः ॥ १९ ॥

श्रीदामा सुबलाद्याश्चेदं वक्ष्यमाणमब्रुवन् सुबलश्च स्तोककृष्णश्च सुबलस्तोककृष्णौ तावादी येषां ते ॥ २० ॥

---

भाषा टीका ।

तब या समै कितने एक सखा उन महात्मा जी (श्रीकृष्ण) की चरण सेवा करबे लगे हैं । और कितने एक अनघ स्वांग बाल पत्तोमान के बीजनान सों श्रीकृष्ण की बियार करें हैं १७ ॥

हे महाराज ! और कोरें चतुर गोप बालक स्नेह सों आर्द्र बुद्धि होय के भगवान् के अनुरूप मधुर सुरीले स्वर सूं गावें है जो परमात्मा कूं मनोहर लगें ॥ १८ ॥

या प्रकार अपनी माया सों अपने ईश्वरपने कूं छिपायकें अपने मधुर चरितन से गोप बालकपने को अनुकरण करते श्रीलक्ष्मी जिनके कोमल श्रीचरणन को लालन करें ऐसे श्रीकृष्ण भोरे ब्रज बासीन के साथ आप उनकी नाईं खेलत भये परंच जब तक चेष्टा आपकी ईश्वरपनेई की रहती ॥ १९ ॥

अब या ईश्वरपने की चेष्टा दिखायबे के नाईं कहें हैं कि—एक बार राम कृष्ण को प्रेमी सखा श्रीदामा नाम बारो ग्वारिया तैसेई सुबल, स्तोक, कृष्ण, सूं आदिलेंके और हू सगरे गोप प्रेम सों दोऊ भैयन तें यों बोलत भये ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तालालिसङ्कुलं तालपङ्क्तिभिर्व्याप्तम् ॥ २१-२२—२३-२४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे रामेति रमसे क्रीडसीति तन्नामनिरुक्तेरेतामप्येकां क्रीडां कुरु किं वा रमयसि क्रीडयसि सुखयसि चेति तथास्मान् रमयेति भावः । वीप्सा आदरे प्रोत्साहनार्थम् अत एव त्वामेवाद्य सम्बोधयाम इति भावः । हे महासत्त्वेति तव किमप्यशक्यं नास्तीति भावः । हे कृष्णेति परमानन्दप्रदस्वभावत्वेन सर्वाकर्षकत्वादस्माकमपि सुखं कर्त्तुमर्हसीति भावः । हे दुष्टनिबर्हणेति वत्सासुरादीनां तस्मात्साक्षाद्दृष्टेः अतस्तालवनरोधकधेनुकवधार्थमपि तालपातनादिकं युक्तमेवेति भावः । एवं दुर्वान्तं इंयेति श्रीकृष्णवलस्य सार्थकत्वं वदन्तो महासत्त्वेति तद्बलविफलत्वं दर्शयन्तस्तमुत्तेजयन्ति इतः श्रीगोवर्द्धनाद्रिस्थयोः अत्रैव तदा गोचारणात् तथा च श्रीहरिवंशे तत्प्रसङ्गे

"आजग्मतुस्तौ सहितौ गोधनैः सह गामिनौ ।
गिरिं गोवर्द्धनं रम्यं वसुदेवसुतावुभौ" ॥

इति । अविदूरे अनतिदूरे श्रीगोवर्द्धनपूर्वतः क्रोशचतुष्टयान्तर्वृत्तेः तथा च वाराहे—

(१) सोऽतिवीर्य इति (२) आत्मसाम्यबलैरिति विज० पा० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

"अस्ति गोवर्द्धनं नाम क्षेत्रं परमदुर्लभम्।
मथुरापश्चिमे भागे अदूराद्योजनद्वयम्" ॥

इति। तथा—

"अस्ति तालवनं नाम धेनुकासुररक्षितम्।
मथुरापश्चिमे भागे अदूरादेकयोजनम्" ॥

इति। अत्र तु नैर्ऋतपश्चिमयोरभेदः यत्तु श्रीहरिवंशे "गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितम्। ददृशातेऽथ तौ वीरौ रम्यं तालवनं महत्" इति। तत्र गोवर्द्धनस्योत्तरभागे नैर्ऋतमैशानकोणो स्थित्वा ददृशाते इति ज्ञेयमपि पश्चात्। यमुनातीरमाश्रितमिति मधुवनस्यापि स्थितत्वात् मधुपुर्यां मधुवनसीम्नः परस्तादीशानकोणाद्यमुनामागामारभ्य रेखारूपतया स्थितस्य तस्य वनस्यैकः प्रान्तभागः तालवनाख्यस्तु ग्रामो मथुराग्रामपुर्यां नैर्ऋतकोणस्थः तदन्त च पश्चिमस्यां तारपुरनामाऽप्यस्तप्रान्त इति तद्विशेषश्च हरिवंशे—

"स तु देशः समः स्निग्धः सुमहान् कृष्णमृत्तिकः।
दर्भप्रायः स्थलीभूतो लोष्टपाषाणवर्जितः" ॥

इति ॥ २१ ॥

ततः किमित्याशङ्क्य साभिलाषमनुवदन्ति—फलानीति। पतन्ति पतितानि चेति निर्भरस्वयमुत्पक्वत्वेनातिमधुरत्वं वृथा नश्वरत्वं च व्यञ्जितं तथा पातनप्रयासोऽपि निरस्तः इति। प्रायो भाद्रमासे क्रीडेयं तदिदानीं सर्वेषां तालानां पाकात् एवमियं लीला श्रीविष्णुपुराणानुक्रमानुसारेण श्रीमद्भागवतमनानन्तरं ज्ञेयं तत्र विष्णुपुराणे क्रमप्राप्तत्वमेव कारणं हरिवंशे तु "वसिते वर्षरात्रे तु कृष्णेन यमुनाह्रदे" इत्यारभ्य सा लीला वर्णितेति स्पष्टमेव तदिति। ननु, तर्हि युष्माभिर्गत्वा तानि यथेष्टेन साधारणानि स्वयमानीयन्तां तत्राहुः अवरुद्धानि ननु तस्य किं तैः प्रार्थनीयमस्तां तत्राहुः—दुरात्मनेति। अतस्तं हत्वा तानि गृहीतुं युज्यन्त एवेति भावः ॥ २२ ॥

तल्लीला न च कैश्चिदपि तत्फलानि भुक्तानि सन्तीत्युत्तेजयन्ति, स इति द्वाभ्याम्। अतिवीर्यः महाबल इति रामे प्रयुक्तिर्वीरसंजननाय खररूपधृगिति कृष्णे प्रयुक्तः प्रियसखस्य पशुविरोमणेस्तस्य हासाय(यद्वा,द्वौ मध्ये स्वयं खररूपधृगप्यतिवीर्यं इत्यतोऽवश्यतान योद्धव्यमिति भावः) विशेषणद्वयसमाहारस्य तु खररूपधृगप्यतिवीर्यं इत्यतः स तु तापनीयः एव इति भावः। किञ्च, स निविरिति तेषामपि तत्राप्यन्तमाहात्म्यं दर्शितम् ॥ २३ ॥

तस्मादिति सार्द्धकम् दुरात्मनामेवाभिलषन्ति—कृतनराहारादिति। अत्र न सेवत इत्यर्थं पद्यमनेकम्, किं त्वनीप्सितं पकारात्स्वादूनि च अभुक्तपूर्वाण्यपि गौरवेणैव साक्षात्तिर्यक्तावेदयन्ति, एव इति। वै निश्चये गन्धोऽनुगृह्यते उपलभ्यत इति प्रायोऽस्मिन् देशे माद्रमासं वृष्टयनुकूलपौरस्त्यवातात् एवं सर्वानामनुमत्य निकटवर्त्तित्वं च सूचितं तदनन्तरं श्रीकृष्णरामयोरवानामेव मत्वा तैर्नेङ्गापितं तत्तु नाम्नां मध्ये तस्यानवस्थेव क्रमशः पृथक्त्वादिति ज्ञेयम् ॥ २४ ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

महासत्त्वमहाबलेति रामविशेषणं दुष्टनिबर्हणं कृष्णेति श्रीकृष्णस्य अविदूरे समीपे तालानां पङ्क्तिभिर्व्याप्तं महद्वनमास्ते ॥ २१ ॥

कानिचित्फलानि पतन्ति पतितमुन्मुक्तानि कानिचित्पतितानि च सन्ति किन्तु तानि दुरात्मना धेनुकासुरेणावरुद्धानि ॥ २२ ॥

स चासुरोऽत्यन्तं वीर्यं यस्य तथाभूतः खररूपं बिभ्राणश्च स्वसमानरूपैः बहुभिर्ज्ञातिभिः परिवृतश्च ॥ २३ ॥

कृतः नरा एव आहारो येन तस्मादसुराज्ज्ञातिभिरभुक्तपूर्वाणि कदाप्यननुभूतानि सुरभीणि च फलानि सन्ति एव अत्रापि सर्वतो व्याप्तस्तत्फलसुरभिगन्धो ऽनुगृह्यतेऽस्माभिः ॥ २४ ॥ २५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दुष्टनिबर्हण ! दुष्टजनोन्मूलन ! अविदूरे निकटे तालानाम् आवल्या पङ्क्त्या सङ्कुलं निचितम् ॥ २१ ॥

तत्र खरतालवनं फलान्यपरिपाकं प्राप्तानीति नेत्याह–पतितानीति। सन्तु तान्यानीय भुज्यन्तामिति तत्राह–किन्त्विति ॥२२॥

तीव्रः क्रूरः खररूपं गर्दभदेहं धारयतीति खररूपधृक् असहायश्चेदिशक्यासमीप इति नेत्याह, आत्मेति ॥ २३ ॥

कृतः नराणामाहारो येन स तथा तस्मात् ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

रामरामेति सम्बोधनम्, प्रथमं कायिकत्वाद् दोषस्तेनैव दूरीकर्त्तव्यः महासत्त्वेति तस्य स्तुतिः प्रकृतोपयोगिनी मल्लयुद्धादिना च महाबलत्वं ज्ञातं भगवांस्तु तद्रूपं माहात्म्यजनकं न भवतीति धेनुकवधस्याऽवश्यकत्वात् दुष्टनिबर्हणेति प्रवृत्तिः इतः क्रीडास्थानादविदूर एव निकट एव सुमहद्वनादपि महत्तालालितालपङ्क्तिभिर्व्याप्तमस्ति ॥ २१ ॥

ततः किमत आहु–फलानीति। पातनप्रयासोऽपि नास्ति पतितानि सन्ति चिरपतितानां तथा रसो न भवतीति पतन्ति चेत्युक्तं न च तानि पतितानि केनचिन्नीयन्ते किन्तु सन्त्येव तत्र हेतुः धेनुकेनाऽवरुद्धानि तर्हि प्रार्थनायां दास्यतीत्याशङ्क्याहुः दुरात्मनेति। स हि दुष्टः प्रार्थितोऽपि न प्रयच्छति ॥ २२ ॥

किञ्च, न तं कोऽपि प्रार्थयत इत्याहुः—सोऽतिवीर्य इति अतिवीर्यत्वात् न कमपि गणयति दीनभावाश्रयं तु भक्षयत्येव यतोऽयमसुरः तर्हि कस्मात्कस्यचिच्छक्य इति शङ्कां वारयितुं पुनर्नाम गृह्णन्ति रामकृष्णेति स कथं परिज्ञातव्य इत्याशङ्क्याहु, खररूपधृगिति। न चैकः सः बहवश्च भवन्तः अतः सम्भूय मारणीय इति शङ्कां वारयन्ति–आत्मतुल्यबलैरिति। बहूनां तादृशबलत्वे एकमेव हेतुरिति ज्ञापयितुमाहु,—ज्ञातिभिरिति अन्यैरपि बहुभिर्वृतः तेऽप्यन्ये सङ्घशो बहव एव सजातीया ॥ २३ ॥

विद्यन्तेऽभुक्तपूर्वाणि फलानि सुरभीणि च ।
एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते ॥ २५ ॥
प्रयच्छ तानि नः कृष्ण ! गन्धलोभितचेतसाम् ।
(१)वाञ्छाऽस्ति महती राम ! गम्यतां यदि रोचते ॥ २६ ॥
एवं सुहृद्वचः श्रुत्वा सुहृत्प्रियचिकीर्षया ।
प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू ॥ २७ ॥
बलः प्रविश्य बाहुभ्यां तालान्सम्परिकम्पयन् ।
फलानि पातयामास मतङ्गज इवौजसा ॥ २८ ॥
फलानां पततां शब्दं निशम्याऽसुररासभः ।
अभ्यधावत् क्षितितलं सनगं परिकम्पयन् ॥ २९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं तस्य वीर्यं प्रशस्तं यदर्थन्तदाह—तस्मादिति । कुतः नर.एवाहारो येन स हि मनुष्यानेव विशेषतो भक्षयति अत एव तस्माद् भीतैर्नृभिर्न सेव्यते तद्वनं तर्ह्यस्माभिरपि न गन्तव्यमित्याशङ्क्याहुः, अमित्रहन् ! इति । हे कृष्ण ! भवानमित्रहन्ता सोऽप्यमित्र इति अतस्तद्धननं तव शक्यं कर्त्तव्यं च अयं धर्मो भगवन्निष्ठो जागरूक एतेषां हृदि स्फुरतीत्युक्तदोषवतोऽपि स्थाने गमनं प्रार्थयन्ति अन्यथैवं प्रेरणाख्य प्रेमाविरुद्धत्वेन प्रेम्णोदमनुचितमिति वचनं विरुद्धं स्यात्प्रियस्यामित्रश्च न स्थापयितुमुचितम् इति च किञ्च तद्वनं सर्वेषामेवासेव्यं ये भूचराः ये वान्तरिक्षचराः अतः पशुगणैः पक्षिसङ्घैश्चविशेषेण वर्जितम् अतो ये पशुपालकाः ये वा देयपालकाः तैः सोऽवश्यं वध्यः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इतो गोवर्द्धनादविदूरे क्रोशचतुष्टयान्तरे तारफरा इति तालसीति ख्यातप्रदेशगतं वनम्—

"अस्ति तालवनं नाम धेनुकासुररक्षितम् ॥
मथुरापश्चिमे भागे अदूरादेकयोजनम्" ॥

इति वाराहोक्तेः । पश्चिमे पश्चाद्भवे भागे इति नैरृतकोणे इति व्याख्येयं तत्रैव तद्दर्शनात् तालानामालिभिर्व्याप्तं श्लेषेण तालानामलिवर्गत्वेनातिस्वादुजातीयत्वं ध्वनितम् । किन्तु धेनुकेन अवरुद्धानि वशीकृतानीत्यत एव हे राम ! तव महासत्त्वपरीक्षा हे कृष्ण ! तवापि दुष्टनिबर्हणसत्त्वपरीक्षाद्य कर्त्तव्येति भावोऽयं तयोः सख्यभावेन वलिष्ठत्वज्ञानाग्न्य प्रेम्णा विरुध्यते प्रत्युत वीररसोत्साहोद्दीपनत्वेन संपद्यत एवेति ज्ञेयम् ॥ २१—२२ ॥

सोऽतिवीर्य्य इत्यादि तयोः पराक्रमोत्तेजनम् ॥ २३ ॥

आवयोरग्रे तस्य तदीयानां चातिवीर्य्यं खपुष्पायमाणं भविष्यतीति चेत्तर्हि वचनं तत्रत्याश्चरात्रिभयान् तान् तालभोजिनश्च दत्तयुष्मदाशिषः कुरुतमित्याहुः—तस्मादिति । ननु, कस्यादिशि तद्वनं तदूचुरत्यत आहुः, एष वै गन्धः भाद्रमासीयप्राच्यसमीरणेनानीत इति भावः ॥ २४—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तालानामालिभिः पङ्क्तिभिः सङ्कुलं व्याप्तम् ॥ २१—२४ ॥

---

भाषा टीका ।

हेराम ! हे भैया दाऊ ! हे बडी भुजान वारे ! हे दुष्टन के मारवे वारे, भैया कन्हैया ! या जगे सों थोरी दूर पै तालवन है ॥ २१ ॥

वा जगे बहुत से तालन के फल गिरे परे हैं और गिर रहे हैं, परन्तु दुरात्मा धेनुकासुर के डर सें उन फलन कों कोई छू भी नहीं सके हैं, ताई सों रुक रहे हैं ॥ २२ ॥

हे दाऊ ! हे भैया कन्हैया ! वो गदहा को रूपधारन करवे वारो असुर बडो वीर्य वारो है, और अपने सरीके बल वारे और भौतेरे दैत्य वाके समीप में हैं ॥ २३ ॥

हे शत्रून के मारन वारे ! वा जगे मनुष्य नहीं जाय सकें हैं ताई सों वो वन पशुपक्षिन समूह सों वर्जित है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विषूचीनः सर्वतः प्रसृतः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

सनगं सवृक्षम् ॥ २९ ॥

(१) वाञ्छाऽस्तीत्महतीति विज० सुबो० पा० ।

समेत्य तरसा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली ।
निहत्योरसि काशब्दं मुञ्चन्[1] पर्यसरत्खलः ॥ ३० ॥
पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः ।
चरणावपरौ राजन्! बलाय प्राक्षिपद्रुषा ॥ ३१ ॥
स तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना ।
चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितम् ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रत्यग्द्वाभ्यां पश्चिमाभ्यां काशब्दमिति गर्दभजातिशब्दानुकार्यं पर्यसरत्परितोऽधावदित्यर्थः ॥ ३० ॥

उपक्रोष्टा गर्दभः पराक्प्रतिमुखः अपरौ पश्चिमौ बलाय बलं हन्तुम् ॥ ३१ ॥

तृणराजस्तालः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चतुर्थ्यर्थे षष्ठी कृष्णेत्यादि मुहुरुभयसम्बोधनमतिवैयग्र्यं सूचयति-कृष्णगन्धेति । अत्रैवंशाऽस्माकं कदाऽपि लोभो नाऽसीत् नवनीतादिलुब्धस्यास्य सम्पर्केणैव लोभितचेतसामिति श्रीरामं प्रेक्ष्योक्तिः तेन च नर्मणा निजदुर्लभप्रार्थनदोषो निरस्त एव पुनः प्रार्थनेऽप्यनङ्गीकारमिवालक्ष्य सप्रणयरोषमाहुः वाञ्छाऽस्तीत्यादि ॥ २६ ॥

सुतौ माहात्म्याय परितो वेष्टितौ प्रभू तेषां प्रहर्षार्थं स्वसामर्थ्यं दर्शयन्तौ ॥ २७ ॥

बलदेवस्यादौ प्रवेशादिक्रमादौ प्रार्थितत्वात्ततः श्रीकृष्णस्यापि तदनन्तरं तत्र गौणत्वमात्रत्वात् तालानिति बहुत्वमेकस्य कम्पनेनैव सङ्घट्टितानां तेषां बहूनां कम्पात् सम्यक् परितः कम्पयन्निति विकीर्य दूरे पतन्तु न तु शिरसीत्यैतदिच्छया तथा बाहुभ्यां द्वाभ्यामेव बहूनां तेषां युगपद्ग्रहणात् सम्यक् परितः कम्पयन्निति महाबलस्वभावेन ॥ २८ ॥

सपर्वतं चितितलं सर्वां पृथ्वीं परितः कम्पयन्निति तस्य तत्कमतिवीर्यत्वं दर्शितम् ॥ २९ ॥

नितरां हत्वा प्रहृत्य यतो बली साधारणदेवताऽपेक्षया बलवत्त्वेन नितमानीत्यर्थः । काशब्दं कुत्सितशब्दम् आर्षः कादेशः, पर्यसरत् परितः पद्भ्यां हनने छिद्रान्वेषणाय परितो बभ्राम यतः खलः तादृशस्वभावः ॥ ३० ॥

आसाद्य निकटीभूय उपक्रोष्टा निकटे काशब्दं कुर्वन् पराक् प्रतिमुखं स्थितः सन् पुनरेत्य ॥ ३१ ॥

एकेनैव पाणिना पद्भ्योर्गृहीत्वा भ्रामयित्वा च प्रपदोरिति द्विवचनार्थः, पादयोरग्रभाग इत्यर्थः । पूर्वं तु तत्प्रहाराङ्गीकारः स्वानवधानप्रकाशनेन स्वस्य तेनाक्षोभ्यत्वं प्रख्यापयितुम् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे कृष्ण ! तत्फलगन्धेन लोभितानि चेतांसि येषां तेषां नोऽस्माकं पक्वानि फलानि प्रयच्छ प्रदाय देहि हे राम ! महती वाञ्छा तत्फलाऽनुबुभूषा वर्तते यदि रोचते तर्हि गम्यतां न वयं नियन्तुं प्रभवाम इति भावः ॥ २६ ॥

इत्थं सुहृदां वचः श्रुत्वा तेषां प्रियं कर्तुमिच्छया प्रहस्य गोपैर्वृतौ प्रभू रामकेशवौ तालवनं प्रति जग्मतुः ॥ २७ ॥

तत्र बलो रामः प्रविश्य बाहुभ्यां तालान्परितः कम्पयन् कथं मतङ्गज इवौजसा बलेन फलानि पातयामास ॥२८॥

तदा पततां फलानां शब्दमाकर्ण्य रासभरूपोऽसुरः सपर्वं क्षितितलं कम्पयन्नभ्यधावत् ॥ २९ ॥

बलं रामं स बल्यसुरः समेत्य पाश्चात्याभ्यां पादाभ्यां तरसा बलेन उरसि निहत्य काशब्दं गर्दभध्वनिं मुञ्चन्स खरः पर्यसरत्परितश्चचार ॥ ३० ॥

पुनराश्वासाद्य संरब्धः क्रुद्धः उपक्रोष्टा गर्दभः अनभिमुखः स्थितः हे राजन् ! अपराऽपरौ पाश्चात्यौ पादौ रामाय प्राक्षिपद्रुषोजयामास ॥ ३१ ॥

तदा स रामस्तमेकेनैव पाणिना पादयोर्गृहीत्वा भ्रामयित्वा भ्रमणेन त्यक्तं जीवितं येन तं तृणराजाग्रे तालाऽग्रे चिक्षेप प्राक्षिपत् ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नृभिरभुक्तपूर्वाणि विष्वक् सर्वत्राऽञ्चतीति विषूचीनः सर्वत्र व्याप्तिमानित्यर्थः । त्रिशंपणा गृह्णते घ्राणेन्द्रियेणाति शेषः ॥ २५ ॥

लोभ आकाङ्क्षा "लुभ गार्ध्ये" "गृधु अभिकाङ्क्षायाम्" इति धातुः अदनाकाङ्क्षा चेत्कालान्तरे आनेष्यामीति तत्राह–वाञ्छति ॥ २६ ॥ २७ ॥

मतङ्गजः वारणः ओजसा बलेन प्रचण्डेन वा "ओजोऽवष्टम्भबलयोः" इति च ॥ २८ ॥

रासभः गर्दभः नगैर्वृक्षैः पर्वतैश्च सहितम् ॥ २९ ॥

(१) पर्यचरदिति—विज० पा० ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

काशब्दं गर्दभजातिजं कर्णाभिदुरशब्दं पर्यसरत्व परितोऽधावत् ॥ ३० ॥

उपक्रोष्टुं क्रोधातिरत्र संपार्थः स्वप्तुं पराक् स्थितः प्राङ्मुखः ॥ ३१ ॥

पद्भ्यां पादयोः भ्रामणेन परिभ्रमणकरणेन ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, तत्र अभुक्तपूर्वाणि दिव्यानि सन्ति. केचिद्भुक्तपूर्वाणीत्याहुः, अन्यथा कथं तेषां कामनेति रक्षायां यद्यपि भोगो बाध्यते तथाऽपि चौर्येण भक्षणं सम्भवति, तानि च फलान्यत्यन्तं सुरभीणि सौरभ्यं तु तेषां प्रत्यक्षसिद्धमेव तदाह—एष वै सुरभिर्गन्ध इति । विषूचीनः परितः प्रसरद्रूपः अत एव सर्वतो गृह्यन्ते एवं दुर्लभानां फलानामभक्षणं चोक्त्वा तानि प्रार्थयन्ते—प्रयच्छतेति । द्वावेव भगवानेव समर्थ इति कृष्णेत्युक्तं तस्य सर्वत्र स्वत्वात् अन्येन प्रतिबन्धनिवृत्तावपि परकं न गृहीतुं शक्यं तत्र कामनायां हेतुः गन्धलोभितचेतसामिति गन्धेन लोभितं चेतो येषाम् ॥ २५ ॥

न केवलमिदानीमेव चित्तक्षोभः किन्तु पूर्वमपि वाञ्छाऽऽसीन्महती उत्सुको राम इति राम ! गम्यतामित्युक्तम् अतिनिर्बन्धे कदाचित्कोपं कुर्यात् गते वाऽनिष्टं भवेदित्याशङ्कयाहुः—यदि रोचत इति । यदि गन्तुं रोचते ॥ २६ ॥

ततो गतावित्याह—एवमिति । सुहृदां स्वभावत एव हितं कर्तव्यं तत्रापि तेषां वचनं श्रुतम् अतः सुहृदामेव प्रियचिकीर्षया तत्र गतौ अन्यथा अक्लिष्टकर्मा भगवान् निरपराधिनं कथं मारयेत् अत एव भगवता न मारितोऽपि मित्राहितं च कर्तव्यम् अतः प्रहस्य तेषामाग्रहं दृष्ट्वा दीर्घायुरस्ति वाञ्छनीति या सामान्यकार्यमित्युभौ जग्मतुः गोपैर्वृतावपि कर्तव्यार्थमिच्छाः अन्यथा तैः सह न गच्छेतां शङ्काभावार्थमाह—प्रभू इति ॥ २७ ॥

तत्र गत्वा यत्कृतवन्तौ तदाह—बल इति । अक्लिष्टकर्मा भगवान् बहिरेव स्थितः बलस्त्वन्तःप्रविश्य बाहुभ्यां तालान् सञ्चालितकरायन् फलानि पातयामास यानि सुपक्वानि तानि चाल्लेनैव पतन्ति । ननु, विद्यमानेषु फलेषु किमिति बहूनि पातयामास मतङ्गज इवेति मतङ्गजः सर्वाण्येवानुपयुक्तान्यपि पातयति यत्नाभिरतकरणं तदर्थम् उपायेनापि पातनं सम्भवतीति दर्पोद्धतरूपमाह, ओजसेति । स्वयं दुर्बलेनैव ॥ २८ ॥

ततो यज्जातं तदाह, पततां फलानां शब्दं श्रुत्वा असुरेष्वपि यमतोऽधमः असुराऽऽरक्षया असुरपक्षोऽधमाः तत्रापि गर्दभः तस्य निन्द्यागतत्वे हेतुमिव सामर्थ्यमाह, सनगं परिकम्पयन्निति । गोपवृन्देन सहितं नवभूतलं कम्पयत् ॥ २९ ॥

आगत्य बलभद्रं ताडितवानित्याह—समेत्येति । शीघ्रमेव निकटे समागत्य तत्वा प्रत्यकपूर्वो जातः विपरीतमुखस्तमो द्वाभ्यां पद्भ्यां बलं बलभद्रं उरसि निहत्य ताडयित्वा काशब्दं रासभशब्दं मुञ्चन्नुच्चारयत् पर्यसरत् परितो वेष्टनमिव प्रदक्षिणां कृतवान् अनिष्टमानवोऽयम् ननु, महान् फलार्थी स्वस्थाने समागत्य स्वयमेव फलानुत्पाद्य गृह्णाति तत्र कथमागत्य ताडनमुत श्रुतवांस्तदाह—स्व इति । बलभद्रोऽपि स्वयमेवागतस्तस्यान सकृदपराधः सोढः ॥ ३० ॥

तावताऽपि स न निवृत्त इत्याह—पुनरासाद्येति । पुनरागत्य क्रोधसंरब्धः उपक्रोष्टा मृगालतुल्यो गर्दभः पराक् स्थि पुनर्विमुखो भूत्वा अपरौ चरणौ पुनर्बलाय प्राऽक्षिपत् समा प्रबलपर्यन्तं क्रोधोऽनुवृत्त इति ज्ञापयितुमन्ते कर्मयुक्तं समो स्नेहाद्यनादराय ॥ ३१ ॥

तदा द्वितीयाऽपराधे बलभद्रो मारितवानित्याह—स तमि प्रपदोः पदाग्रयोर्गृहीत्वा एकपाणिनैव च भ्रामयित्वा तृ राजस्य तालवृक्षस्योपरि प्राहिणोत् यथा पतितो भग अयमत्यन्तविच्छ एव मृत इत्याह, त्यक्तजीवितमिति । त्यक्तं जीवि येन ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नोऽस्मभ्यं प्रयच्छ यतोऽस्माकं वाञ्छाऽस्ति ॥ २६ ॥

प्रहस्येत्यहो गर्दभोऽप्येवं यत्नीत्यस्मादभावान्मृत्यैव शृणोतीति भावः ॥ २७—२८ ॥

सनगं कुलपर्वतैरपि सहितम् ॥ २९ ॥

प्रत्यग्द्वाभ्यां पश्चिमाभ्यां द्वाभ्यां काशब्दमिति पो शब्दानुकरणं पर्यसरत् परितोऽधावत् ॥ ३० ॥

संरब्धः कोऽपि उपक्रोष्टा निकट एव काशब्दं कुर्वन् पृष्ठीकृत्य स्थितः ॥ ३१ ॥

तं धेनुकं प्रपदोः पदयोरग्रभागे इत्यर्थः । तृणरा स्तान्तः ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विषूचीनः सर्वतः प्रसृतः ॥ २५—२८ ॥

नगैर्वृक्षैः सहितं सनगम् ॥ २९ ॥

प्रत्यक् पश्चिमाभ्यां द्वाभ्यां पद्भ्यां काशब्दं गर्दभ मुञ्चन् पर्यसरत् परितोऽधावत् ॥ ३० ॥

उपक्रोष्टा गर्दभः संरब्धः क्रुद्धः सन् पुनरासाद्य पर अनभिमुखः स्थितः सन् अपरौ पाश्चात्यौ चरणौ हन्तुं रुषा प्राऽक्षिपत् ॥ ३१ ॥

तृणराजाग्रे तालशिरसि ॥ ३२ ॥ ३३ ॥

---

भाषा टीका ।

हे प्रभो ! आज तांई वे सुगन्धी फल काहूं ने नहीं देखे ये बड़ी सुन्दर गन्ध कैसी न्यारी आवै है ॥ २५ ॥

हे कृष्ण ! उन फलन की सुगन्ध सों हमारो तो

तेनाहतो महातालो वेपमानो महाशिराः ।
पार्श्वस्थं कम्पयन् भग्नः स चान्यं सोऽपि चापरम् ॥ ३३ ॥
बलस्य लीलयोत्सृष्टखरदेहहता हताः ।
तालाश्चकम्पिरे सर्वे महावातेरिता इव ॥ ३४ ॥
नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतं प्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ॥ ३५ ॥
ततः कृष्णं च रामं च ज्ञातयो धेनुकस्य ये ।
क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबान्धवाः ॥ ३६ ॥
तांस्तानापततः कृष्णो रामश्च नृप ! लीलया ।
गृहीतपश्चाच्चरणान् प्राहिणोत्तृणराजसु ॥ ३७ ॥
फलप्रकरसङ्कीर्णं दैत्यदेहैर्गतासुभिः ।
रराज भूः सतालाग्रैर्घनैरिव नभस्तलम् ॥ ३८ ॥
तयोस्तत्सुमहत्कर्म निशम्य विबुधादयः ।
मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ॥ ३९ ॥
अथ तालफलान्यादन् मनुष्या गतसाध्वसाः ।
तृणञ्च पशवश्चेरुर्हतधेनुककानने ॥ ४० ॥

भाषा टीका ।

…माय गयो, हे राम ! हम सवन की बडी इच्छा है जो तुमें …वे तौ चलौ ॥ २६ ॥

ऐसे सुहृदन के वचन कूं सुनकें सुहृदन की प्रिय …रबे की इच्छा सूं दौऊ भैया हंसिकें गोपन कूं साथ लेकें …ालवन कूं जात भये ॥ २७ ॥

पहिले वा वन में श्रीबलदेवजी घुस गये, तालके वृक्षन …ो हलाय२ कें फलन कूं गिराये, जैसे कोई बडो मत- …ज पराक्रम सों गिरावतो होय ॥ २८ ॥

गिरबे वारे फलन को शब्द सुनिके वो गर्दभरूप धेनुका- …र पर्वत सहित भूतल कंपावतो दौर के सन्मुख आवत …यो ॥ २९ ॥

दाऊजी के समीप आयके नेंक पीछे कों हटकें पिछाडी के …ऊ पायन की दुलत्ती सो दाऊजी के वक्षःस्थल में मार …े रेंकतो भयो वो खल पीछें को हटगयो ॥ ३० ॥

हे राजन् ! क्रोध में भरो भयो धेनुकासुर फिर आयकें …मकेर कें ठाढो भयो क्रोध करिके बलदेवजी कों फिर …छले पांयन की दुलत्ती फेंकत भयो ॥ ॥ ३१ ॥

श्रीबलदेवजी ने वाके दोनों पायन कों पकडके एक हाथ सों फिराय के ताल वृक्ष के ऊपर फेंक्यो वाके तो फिरायवेंई में प्राण निकस गये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्सृष्टेन खरदेहेन हतैराहताः चकम्पिरे अकम्पन्त ॥ ३४ ॥

यस्मिन्निदं विश्वमोतमूर्ध्वतन्तुषु पट इव ग्रथितम् प्रोतं तिर्यक्तन्तुषु पटवदेव संग्रथितम् सर्वतोऽनुस्यूतं वर्तत इत्यर्थः ॥ ३५—३६—३७ ॥

घनैर्नभ इव भुवस्तलं रराज तत्र फलप्रकरसङ्कीर्णत्विति दैत्यदेहैश्च सतालाग्रैः सङ्कीर्णमिलरुणश्वेतनीलघनसादृश्य-सम्पादनम् ॥ ३८—३९ ॥

आदन्नभक्षयन् ॥ ४०—४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चकारादपरोऽपि परमित्येवं बहवो बहून् कम्पयन्तो भग्ना इति ज्ञेयम् ॥ ३३ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सन्निकृष्टा भग्नाः दूरस्थास्तु कम्पिता इत्याह—बल-स्येति ॥ ३४ ॥

इदं च "न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते" इत्येवं वक्ष्यमाणरीत्या प्रतियोद्धाद्यनुरूपमात्रशक्तिप्रकाश-धारिण्या नरलीलयैव कृतमित्याश्चर्यत्वेन वर्ण्यते न स्वैश्वर्य-लीलयेत्याह—नैतदिति । अचित्रत्वे हेतुः भगवति शक्त्या समग्रै-श्वर्यादियुक्ते अनन्ते स्वरूपेणाप्यपरिच्छिन्ने तथोपाधिसम्बन्धेनापि जगदीश्वरे ओतं प्रोतमित्यादिलक्षणे च दृष्टान्तोपि तन्तूनां कार-णत्वेन कार्यात् पटादन्यत्वम् अत्र तादृशभगवत्त्वादिकं श्रीकृष्णां-शेषु मुख्यत्वात् युक्तमेवेति भावः ॥ ३५ ॥

कृष्णमित्यादावुक्तिः श्रीबलदेवस्य पराक्रमदृष्ट्या भयावेशेन तदभिद्रवणात् किंवा अग्रजप्रेम्णा स्वयमग्रतो गमनात् राम चेति पश्चादनुजस्नेहेन तस्यापि तत्पार्श्वे गमनात् अभिद्रवणे तु द्वयोरपि प्राधान्याच्चकारौ क्रोष्टार इति महाक्रोशनं कुर्वाणाः हतबान्धवा इति च शोकेनातिक्रोधाभिजशक्त्यतिशयं दर्शयन्त इति भावः ॥ ३६ ॥

हे नृपेति प्रहर्षोदयात् ( यद्वा, नृपस्येव लीलया राजानो हि मृगया क्रीडाकौतुकेन मृगान् घ्नन्तीति अनायास एव तात्पर्यम् ) तृणराजस्विति समासान्तविधेरनित्यत्वात् ॥ ३७ ॥

गतासुभिरिति देहानामस्पन्दनं बोधयति अत एव रराज श्रीकृष्णपक्षीयाणामानन्दजनकत्वात् भूः भूमिरूपं तलं तालानामधो देशः किं वा भूरित्यव्ययं भूर्लोकादिवत् । यद्वा, सुपांसुलुगित्या-दिना ङसः सुभावः । अथवा सतालाग्रैर्दैत्यदेहैरुपलक्षिता भूः फलप्रकरसङ्कीर्णा यथा स्यात्तथा रराज नभस्तलं नभःस्वरूपं "तलं स्वरूपाधरयोः" इति विश्वः ॥ ३८ ॥

गोपानामेव प्रीत्यर्थमपि तत्तत् अन्येषां जातमित्याह—तयो-रित्यादि द्वाभ्याम् । तयोस्तदिति वा पाठः सुमहदिति सपरिवा-रस्यैव तस्याचेहेत्थापि मारितस्य देवादिभयकरत्वं च बोधयति आदिशब्दाद्विद्याधरादयो महर्ष्यादयश्च क्रमेण तेषां तत्तत्कर्म ज्ञेयम् वाद्यैर्गीतनृत्यान्यपि ज्ञेयानि प्रायोऽन्योन्यं तेषां सङ्ग-तत्वात् ॥ ३९ ॥

गोपाला इत्यनुक्त्वा मनुष्या इत्युक्तेऽन्ये तु मृतगर्दभप्रसङ्गेन घृणां विधाय नादन् किं त्वन्य एव मनुष्या इत्यर्थः । हत-धेनुककानन इति तृणबाहुल्यमपि सूचितम् ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेन परिक्षिप्तनासुरेण हतस्ताडितो महान् तालः भग्नः पत-मानो वृहच्छिरोऽग्रभागो यस्मात् एव पार्श्वस्थं तालं पातयन् पपातेति शेषः । स च पार्श्वस्थः पतमानस्तथैवान्यं सोऽपि तथै-वान्यम् ॥ ३३ ॥

बलस्य रामस्य लीलयोत्सृष्टेन खरदेहेन हता ये तैर्हताः सर्वे तालाश्चकम्पिरे यथा महावातेनेरिता कम्पितास्तद्वत् ॥ ३४ ॥

जगदीश्वरेऽनन्ते एतच्चित्रं कुतः अङ्ग हे राजन् ! तन्तुषु पट इवेदं जगद्यच्छिद्रस्योतं प्रोतं च ॥ ३५ ॥

ततो धेनुकस्य ये ज्ञातय क्रोष्टारो गर्दभाः स्वरशब्दं कुर्वन्तो वा हतः बान्धवो येषां ते अत एव संरब्धाः सर्वेऽप्यग्र-अभिमुखं जग्मुः ॥ ३६ ॥

हे नृप ! गृहीतौ पश्चाच्चरणौ येषां तांस्तालेषु प्राहिणोत् प्राहि-णोत् प्रत्येकाभिप्रायकमेकवचनम् ॥ ३७ ॥

फलसमूहैः सङ्कीर्णा धरा गतप्राणैर्दैत्यदेहैः कठिनैस्तालाग्रैश्च घनैर्नभस्तलमिव रराज खरदेहैस्तालाग्रैरित्यरुणश्वेतनीलघन-साहश्यसम्पादनम् ॥ ३८ ॥

निशाम्य दृष्ट्वा विबुधादयः पुष्पवर्षाणि मुमुचुर्वपुर्वाणानि दुन्दुभयश्चक्रुः वादयामासुः । तुष्टुवुर्विबुधादय इत्यनुवर्तते ॥ ३९ ॥

अथ ततः गतभया मनुष्यास्तालफलान्यादन् भक्षितवन्तः हतो धेनुको यस्मिंस्तस्मिन्कानने पशवश्च तृणमचरन् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन खररूपासुरशरीरेण यत्नेन पार्श्वस्थं तालं कम्पयन् भग्नो-ऽभूत् किञ्च स च पार्श्वस्थः अन्यं तालं सोऽन्योऽप्यपरं तालमित्येवं परम्परया ॥ ३३ ॥

बलस्य लीलया कर्मणा उत्सृष्टेन उत्क्षिप्तेन खरदेहेन हताः तालाहताः ॥ ३४ ॥

अन्यस्य चित्रमपि रामस्यैतत्कर्म चित्रं न भवतीति शुकः परीक्षितमाह—नैतदिति । हि शब्दोऽधराखिलेयम् ननु, सर्वपर्वतां प्रसिद्धिं द्योतयति ॥ ३५ ॥

क्रोष्टारः चण्डकामाः ताच्छीलिकस्तृन्प्रत्ययः स्वजातिशब्दं कुर्वाणा वा ॥ ३६—३७ ॥

फलप्रकरसङ्कीर्णा तालफलसमूहेन व्याप्ता ॥ ३८ ॥

तयोः रामकृष्णयोः ॥ ३९ ॥

आदन् भक्षितवन्तः ॥ ४०—४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किञ्च, इदञ्च "न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्या-नुविधस्य वर्ण्यते" इति वक्ष्यमाणरीत्या प्रतियोद्धाद्यनुरूप-मात्रशक्तिप्रकाशकार्यात् धारिण्या नरलीलयैव कृत-मित्याश्चर्यत्वेन वर्ण्यते—नैतदिति, दृष्टान्तेऽपि तन्तूनां कारण-त्वेन कार्यात् पटादन्यत्वम् ॥ ३५—३७ ॥

दैत्यदेहैरुपलाञ्छिता भूः फलप्रकरसङ्कीर्णा यथा स्यात्तथा रराज नभस्तलं नभःस्वरूपम् ॥ ३८ ॥ ३९ ॥

यद्वा, साधारणमनुष्या एवादन् न तु गोपाः मृतगर्दभ-प्रसङ्गे घृणां विधायेति भावः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पूर्वं तु फलान्येव पतन्तीदानीन्तु वृक्षाः स्वयमपि पतिता इत्याह—तेनाहत इति। तेन बलभद्रेण रासभदेहेन वा आ समन्तात् हतः महातालोऽपि वेपमानो जातः ततो वृहच्छिराः स्थूलाग्रिमभागः कम्पेन स्थिरीभवितुमशक्तः स्वपार्श्वस्थं वृक्षं कम्पयन्नेव स्वयं भग्नः सोऽपि पूर्ववत् वेपमानः पार्श्वस्थं कम्पयन् भग्नः सोऽप्येवमपरः एवं सा पङ्क्तिः सर्वापि पतितेत्यर्थः ॥ ३३ ॥

किञ्च न केवलमेका पङ्क्तिः पातितेति किन्तु सर्व एव वृक्षा वेपमाना जाता इत्याह—बलस्येति। साक्षाद्बलरूप एवायम् अतस्तेन लीलयाप्युत्सृष्टखरदेहेन हतेन वृक्षेण आ सर्वतो हतास्ताला महावातेरिता इव चकम्पिरे अस्य क्रियाशक्तिरनेकपरम्परायामपि न शान्ता सर्वात्मकत्वादस्य यत्रैवास्य क्रियाशक्तिर्व्याप्नोति तत्सम्बन्धात्तत्र स्थिताऽपि क्रियाशक्तिरुद्गच्छति तथा चान्यस्पर्शे पुनरन्यत्र स्थिताप्युद्गच्छति यथा काष्ठेषु वह्निराधारमपि न स्थापयतीति वह्निसमानधर्मा वायुरत्र दृष्टान्तीकृतः महावातेन स्पृष्टो गुप्तोऽपि वायुरुद्गतो महानेव भूत्वान्यमप्येवमुद्बोधयतीत्यन्तं महानेव भवति ॥ ३४ ॥

इदं बलभद्रचरित्रमाश्चर्यमिव मत्वा समाधत्ते नैतच्चित्रमिति—नेदं कर्म बलस्य किन्त्वाविष्टस्य भगवतस्तदाह—भगवति नैतच्चित्रमिति। किञ्च, अनन्तोऽयं सर्वसंहर्ता सङ्कर्षणः तस्य तालवृक्षमात्रकम्पनं किमाश्चर्यं यं कालं स्मृत्वा जगदेव कम्पते किञ्च, जगदीश्वरोऽयं जगतो नियन्ता ईश्वराज्ञयैव सर्वे कम्पन्ते "यद्भयाद्वाति वातोऽयम्" इत्यादि वाक्यात् प्रथमप्रहारपर्यन्तं बलभद्रः ततो व्यथाप्रतीकारार्थमुपायान्वेषणे भगवदुपदेशे स्मृते सहसैवाविष्टो भगवान् तथा कृतवान् अन्यथा बाहुभ्यां कम्पन एव वृक्षभङ्गो भवेत् किञ्च यस्मिन् सङ्कर्षणे अहम्ममाभिमानाधिष्ठातरि सर्वमेव जगदोतं प्रोतञ्च समवायरूपत्वान्निमित्तरूपत्वाच्च तन्तुभिः पटः ओतः प्रोतश्च दीर्घतन्तव ओताः तिर्यक्तन्तवः प्रोताः तथा सर्वमेव जगत् भगवति समवेतत्वेन ग्रथितत्वेन च स्थितम् अतो हस्तचालनेन सर्वजगत्कम्प उचितः किमाश्चर्यं वृक्षाणां महाव्यापारे ॥ ३५ ॥

एवं धेनुकवधं भगवत्सामर्थ्यं चोक्त्वा प्रसङ्गात्तत्सम्बन्धिनां सर्वेषां वधमाह—तत इति। ते तु बहवो मूर्खाः कृष्णं रामं च धेनुकस्य घातयो ये धेनुकवधेन क्लिष्टा हतबान्धवाः क्रोधसंरब्धाः अन्तः क्रोष्टारो गर्दभाः आक्रोशयुक्ताः अभ्यद्रवन् चकारद्वयेन गोपानप्यभ्यद्रवन् तदा प्रातिगोपं रामः कृष्णश्चोपस्थितो भवतः अतो बहुधा कृष्णं बहुधा राममिति ज्ञापयति ॥ ३६ ॥

तदनुभक्तरक्षार्थं सर्वानेव मारितवन्तावित्याह—तांस्तानिति। य यथाग्रे आगतास्त एवाग्रे मारिताः कृष्णो रामश्चेति यस्यै वाग्रे पतन्ति नृपेति सम्बोधनं पूर्ववत् तेषां वधे न कोऽपि प्रयास इत्याह, लीलयेति। गृहीतौ पश्चाच्चरणौ येषां सर्वेषामेवान्तरिक्षमरणार्थं दुष्टारोपिततालवनदूरीकरणार्थं च तृणराजस्यैव प्राहिणोत् रामः कृष्णश्चैक एवेत्येकवचनम् ॥ ३७ ॥

ततो यज्जातं तदाह—फलप्रकारैः फलसमूहैः सङ्कीर्णां दैत्यदेहैर्गताद्भ्रमिव संकीर्णा ध्वस्ता भग्ना ये तालाद्रुमास्ताश्च शिरांसि तैरपि सङ्कीर्णा तलं भूतलं रराज शोभामेव प्राप्तवत् न तु भूशोभा काचिन्नष्टा तत्र दृष्टान्तः घनैर्नभ इवेति निर्मलं नभः सूर्यसहितं चन्द्रनक्षत्रसहितं यथा शोभते तथा घनैरपि सम्बद्धं शोभते घनानां सर्वजनापेक्षाविषयत्वात् श्रीदयप्येतानि नीलावान्तरजातियुक्तानि अतिनीलानि फलानि रासभास्तु धूसराः तालाग्राश्च श्यामाः मेघा अपि तथैव ॥ ३८ ॥

तत्कर्म तयोः सर्वजगत्प्रसिद्धं जातमिति ज्ञापकमाह—तयोरिति। सुमहत्कर्म धेनुकवधलक्षणं विबुधादयो गन्धर्वादयः पुष्पवर्षाणि मुमुचुर्वाद्यानि चक्रुस्तुष्टुवुश्च त्रिविधानां त्रयं हर्षनिधानम् अनेन देवानां हितार्थं वध उक्तः ॥ ३९ ॥

एवं सपरिकरो धेनुकवधो निरूपितः भगवता तु तालफलानि न दत्तानि परं स्वेच्छयैव सर्वैर्भक्षितमित्याह—अथेति। भिन्नमत्कर्मेणा तालफलान्यादन् सर्व एव मनुष्याः गतसाध्वसाश्च जाताः तृणं च पशवश्चेरुः हतो धेनुको यत्र तादृशे कानने तत्र छायया तृणं न शुष्कं भवतीति चकारात्तु पक्षिणोऽपि सुखिनो जाताः ॥ ४० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

उत्सृष्टेन खरदेहेन हतैस्तालैराहताः प्राप्ताघाताः ॥ ३४ ॥

विश्वम् ओतं अग्रतन्तुषु पट इव ग्रथितं प्रोतं तिर्यक्तन्तुषु पटवदेव ग्रथितं सर्वतोऽनुस्यूतं वर्त्तत इत्यर्थः ॥ ३५॥३६॥

हे नृप ॥ ३७ ॥

फलप्रकरसङ्कीर्णा यथा स्यात् तथा भू रराज कैः दैत्यदेहैः निर्भिन्नतालाग्रसहितैः तेषां स्वतः श्यामत्वात् रुधिरोक्षितत्वाच्च घनैः श्यामरक्तैर्नभस्तलमिव "तलं स्वरूपाधारयोः" इति विश्वः ॥ ३८ ॥ ३९ ॥

मनुष्यास्तत्रत्याः पुलिन्दादय एव न तु गोपालाः आदन् गर्दभरक्षितत्वेन फलेषु घृणोत्पत्तेः ॥ ४० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

लीलयोत्सृष्टेन खरदेहेन हतैस्तालैराहताः चकम्पिरे अकम्पत ॥ ३४ ॥

नैतदिति श्लोकः वासुदेवस्य सङ्कर्षणाख्या द्वितीया मूर्तिः वंशो न तु केवलशेषावतार इति ज्ञापयति ॥ ३५॥३६॥३७॥३८॥३९ ॥

आदन् अभक्षयन् ॥ ४० ॥

———

भाषा टीका।

धेनुकासुर कूं मारिके जा वृक्ष पै फेंक्यों तासूं बडो भारि ताल वृक्ष दूसरे ताल पै गिरयो तासों दूसरो समीप में ताल वृक्ष हो सो गिरयो ताकी ठाकर सों और वाकी सों और या प्रकार अनेक ताल वृक्ष गिरत भये ॥ ३३ ॥

श्रीबलदेवजी ने लीलाई सों फेंक्यो जो गधा के देह सों, जो ताडित भयो परंपरा सो प्रातें जो ताडित भये एसें पै

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्त्तनः ।
स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत् ॥ ४१ ॥
तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ।
वेणुं क्वणन्तमनुगैरनुगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः ॥ ४२ ॥
पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि ।
तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहाससविनयं यदपाङ्गमोक्षम् ॥ ४३ ॥
तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले ।
यथाकामं यथाकालं व्यधत्तां परमाशिषः ॥ ४४ ॥
गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः ।
नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥ ४५ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ।
संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥ ४६ ॥
एवं स भगवान् कृष्णो वृन्दावनचरः क्वचित् ।
ययौ राममृते राजन्! कालिन्दीं सखिभिर्वृतः ॥ ४७ ॥
अथ गावश्च गोपाश्च निदाघातपपीडिताः ।
दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितम् ॥ ४८ ॥

भाषा टीका

सगरे ताल वृक्ष ऐसें कंपित भये जैसें बडी आंधी में हले चले हैं ॥ ३४ ॥

जगदीश्वर भगवान् श्रीअनन्त जो बलदेवजी हैं उनमें जे बात कछु विचित्र नही हैं, जिनमें ये सब जगत् तंतून में पटके नाईं ओत प्रोत है अर्थात् पोहि रह्यो है (या जगे लंबे तंतू ओत और आडे तंतू प्रोत हैं ऐसे जाननो चाहिये) ॥ ३५ ॥

ताके पीछे धेनुक के जात के और जो गधा हे, ते सब राम कृष्ण के ऊपर बडे संरंभ से दौरे क्यों कि? उनको बंधु मारो गयो वा शोक सों ॥ ३६ ॥

हे नृप? तबतौ कृष्ण और बलदेव दोनो भैया जो जो गधा आवत गये तिन २ के पांय पकरि २ के ताल वृक्षन के ऊपर फेंकत गये ॥ ३७ ॥

फलन के बिखरवे तें और मरे दैत्यन के देहन तें और ताल वृक्षन के अग्र भागन तें पृथ्वी ऐसे शोभित होत भई कि-जैसे चित्र विचित्र मेघन से आकाश शोभित होवै ॥ ३८ ॥

दोऊ भैयान के या बडेभारी कर्म कों देख के देवतादिक पुष्पन की वर्षा करत भये बाजे बजावत भये और स्तुति करत भये ॥ ३९ ॥

या प्रकार जब धेनुकासुर मारो गयो तब कछु दिन पीछे वा तालवन में मनुष्य फल खायवे लगे, और पशु घास चरवे लगे ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गोरजोभिश्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च दिदृक्षितदृशो दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः ॥ ४२ ॥

मुकुन्दस्य मुखपद्मगतं सारघं मधु अह्नि यो विरहस्तस्माज्जातं तापं स च तासां सत्कृतिं पूजां, कां सत्कृतिं? कथं वा कृतां? तामाह सव्रीडेति । सव्रीडेन सलज्जेन हासेन विनयो यथा भवति तथा यद्दर्शनम्, किं तत्? अपाङ्गमोक्षकटाक्षदर्शनं तथा तां सत्कृतिं प्राप्य
॥ ४३-४४-४५-४६-४७-४८-४९-५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं प्रसङ्गेन दिनान्तरस्य धेनुकवधलीलामपि समाहृत्य प्रथमगोचारणदिनसन्ध्यालीलामपि यथायुक्तमित्थं ... सन्ध्यालीलामाह षड्भिः-तत्र सामान्यव्रजजनदृश्यमानत्वेन ... यति-कृष्ण इति । कृष्ण इत्यभिप्रेतं सर्वचित्ताकर्षकत्वं ... विशिनष्टि-कमलेत्यादिना । कमलपत्राक्ष इति सौन्दर्यं ...

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

वृषिकोद्यतया विस्तीर्णताकीर्णतया च कैशोरांशव्यक्तिरपि पुण्ये श्रवणकीर्तने यस्य स इति सर्वसद्गुणकर्मादिमाहात्म्यम् अनेन व्रजजनानन्तदृष्ट्यादेव विरहार्त्युपशमत्वाधकानां च चित्तोल्लासः सूचितः एवं स्वरूपशोभां दर्शयित्वा भावरूपशोभामाह, स्तूयमान इत्यादिना ॥ ४१ ॥

अथ तदुत्कण्ठितबालवैः श्रीगोपकुमारीविशेषैरपि दृश्यमानत्वेन तं वर्णयंस्तेषामनुरागोत्पत्तिं रूपयति—तमिति द्वाभ्याम्। तेषामवलोकनं गोरज इत्यादिना उपरि मध्ये तले च श्रीमच्छोभा दर्शिता अन्यत्रैव सङ्गोऽपि तत्तन्मात्रस्यैव वर्णनं सायं वनादागतत्वेन वैशिष्ट्यात् वेणुक्वणनं स्वभावत एव विशेषतश्च तासां प्रहर्षणार्थमाकर्षणार्थं च उपेतिरागमात्रगानमयवेणुक्वणोपगानत्वेन गीता कीर्त्तिर्यस्य तम् अत्र साग्रजतानुक्तिस्तस्य तत्रानुपयुक्तप्रायत्वात् अत एव छलेन व्यवहितत्वात् गुरुजनसङ्गतो हि तस्याग्रजताभाव एव प्रवर्तते तस्य वनागमननिर्द्धारे गोरजश्छुरितेति सूचितगोरज उद्धूतिर्वेणुक्वणनमनुगोपगीतकीर्त्तित्वमिति हेतुत्रयं ज्ञेयम् अभिगमने हेतुः, दिदृक्षिताः सञ्जातदिदृक्षा दृशो यासामिति, अत्र प्रथमतो गोचरणेन दूरगमनतो विविधशङ्कोत्पत्तिः तथा पूर्वतोऽधुनागोपालते कालविलम्बेनागमनं चोत्कण्ठावैशिष्ट्ये हेतुः समेताः अन्योन्यं मिलिताः एकमत्येन सख्यात् तत एव भयलज्जादिहानेश्च स्वस्वगृहतः सर्वासामेव युगपद्धावनाच्छ्रीकृष्णाध्वनि वा पूर्वमेवागतानामुपवनविशेषे वा ज्ञेयम् ॥ ४२ ॥

ततश्च यद्वृत्तं तदाह—पीत्वेति। तैर्व्याख्यातम् स्वमाधुरीपरिवेषणेन वियोगदुःखान्मुक्तिं ददातीति मुखे कुन्दानि दन्तरूपाणि यस्येति वा मुकुन्दः तस्य मुखाब्जसारघमाध्वीभृङ्गरूपैः पीत्वेति तत्सौन्दर्यपरमासक्त्या नेत्रमात्रात्मिकाः सत्यो भृशं वीक्ष्येत्यर्थः। अक्ष्याभिरूप इत्यादिवत्तृतीया किञ्च, भृङ्गरूपकेन श्रीमुखावयवेषु ततस्ततो मुहुर्दृष्टिसञ्चरनिता व्रजयोषित इति समुत्कण्ठाविशेषः अह्नीति रात्रौ विहरतापाभावः सूचितः। तस्यां व्रजेन्द्रप्रहादौ तत्सन्दर्शनादिविधेः सत्कृतिमाह—सव्रीडो हासोपतादृशोऽपि विनयः रहस्यप्रियजनोचितव्यवहारोपत्रतादृशं यथा स्यात्तथा तद्रूपामित्यर्थः परिक्षेपतश्चोक्ता तां किं रूपां अपाङ्गमोचकटाक्षदर्शनरूपामित्यर्थः यद्वा यथासौ अपाङ्गमोक्ष एव सत्कारोपकरणत्वेन विद्यते यत्र तादृशं यथा स्यात् तथा सत्कृतिं समधिगम्येति यद्वा, प्रासकृत्यधिगमनं सव्रीडेत्यादिरूपं अपाङ्गस्य मोक्षो यत्र तद्रूपं च कवीवत्वमार्थं द। कंसारकार्तिं यः अपाङ्गमोच इत्यर्थः। तद्विशेषणं सव्रीडहासेति यद्वा व्रजयोषितः पूर्वोक्तास्तद्विशेषाः मुकुन्दस्य सर्वदुःखमोचकत्वेन तादृशनाम्नः श्रीकृष्णस्य मुखारविन्दं मुखकमलस्य सौन्दर्यरूपं मकरन्दमाध्वीभृङ्गैरचिरेण भृङ्गैः पानपात्रैः पीत्वा समास्वाद्य अह्नि यो विरहजेन यस्तापस्तदुत्पादितजा तृष्णा तां जहुः रात्रिजविरहमार्थं तु प्रातर्दर्शनेन अजहुरेवेति भावः। यत् यत्रैव सव्रीडौ हासविनयौ यत्र तादृशमपाङ्गमोक्षं कटाक्षनिःक्षेपरूपां तत्सत्कृतिं ताभिः कृतं सम्मानं समधिगम्य मत्वा गोष्ठं गोष्ठाभिमुखं विवेशेति ॥ ४३ ॥

एवं तासामानन्दं द्वाभ्यामुक्त्वा मात्रोर्द्वयोराह—तयोरिति। पुत्रयोरिति। द्वयोरपि द्वौ प्रत्येव स्वपुत्रभावेन लालनभरं बोधयति—यथाकाममिति। शारदादौ सायं प्रदोषादौ च मगधे निषेधानुसारेणेत्यर्थः। यथा कामं पुत्रयोः स्वयोर्वा इच्छानुसारेण यथेष्याशिकयोर्विपर्ययेण पाठः क्वचित् परमा उत्कृष्टा आशिषः उपभोगान् मत्पादितवत्यौ यतः पुत्रवात्सल्ये अनेन प्रागङ्गारोपणालिङ्गनचुम्बनादिकं कुशलप्रश्नसर्वाङ्गनिरीक्षणादिकञ्च सूचितम् ॥ ४४ ॥

आशीर्विधानमेव प्रपञ्चयति—गतेति युग्मकेन। गताध्वानेति न श्रमो अश्रमः स चेश्वरत्वात् श्रीमद्वरलीलाङ्गीकारेण तस्याभावत्वेनश्रमः श्रम एवेत्यर्थः। सम्प्रति श्रमं विश्राममर्दा-स्नानां निगताध्वश्रमाविष्यर्थः। आदिशब्देन केशप्रसाधनजलमार्जनादीनि स्नेहभरसंभ्रमेण क्रमोल्लङ्घनाभ्यञ्जनस्यादावुक्तिः। यद्वा, जलेन धूलिमपसार्य पश्चात् सुगन्धिद्रव्येण तत् नीर्वामिति मज्जहल्लचणया परिधानवस्त्रं च उत्तरीयस्य यज्ञोपवीतात् प्रागनपेक्षत्वात् अनुलेपनादिशोभाव्यवधायकतया तस्याग्रहणाच्च भूषणानामनुक्तिः यदत्रादीनामिव स्नानत्वाभावेन तेषामपरिवर्त्तनात् प्रातरेव तदाधिक्यौचित्याच्च जननीभ्यामुपहृतं परिविष्टं प्राश्य प्रकर्षेण सुखेनाशित्वा उपलालितौ ताम्बूलादिमुखवासार्पणसुखगोष्ठीशिरोघ्राणादिभिः प्रतिलालितौ तत्र व्रजे तन्मध्ये अवरोधान्तर्महाप्रासादे तथा च पाद्मोत्तरखण्डे वर्णितम्—

> “तस्मिंश्च भवने श्रेष्ठे रम्ये दीपैर्विराजिते।
> श्लक्ष्णे विचित्रपर्यङ्के नानापुष्पविवासिते॥
> तस्मिन् शेते हरिः कृष्णः शेषे नारायणो यथा”।

इति वरशय्यायां दिव्यपर्यङ्कोपरि संविश्य श्रीगात्रं प्रसार्य अनेन क्रीडार्थं निद्रायां क्षणं विश्रम्यो बोध्यते तदेव सूचयति, सुखं यथा स्यादिति सखिदासादिकृतोपस्कृततल्पसमर्पणचामरान्दोलनपदाब्जसंवाहननर्मगोष्ठीगीतगानादिसुखप्रकारेणेत्यर्थः ॥ ४५—४६ ॥

अत्राध्यायसमाप्त्यकरणं क्रमप्राप्तामपि पूर्वेत्र दुःखमयतया त्यक्तां कालियदमनलीलामनुस्मृत्य वैचित्र्यात् अनुस्मृतायाञ्च तस्याम् आवेशादेव तां प्रथममागतो वक्तुमारब्धामपि तन्मात्रमुक्त्वाध्यायः समापयिष्यते। पुनश्च विहरत्यपि तत्र स्वयं भगवति यमुनायाः स दोषो नापगत इति श्रोतृणामपरितोषमाशङ्क्य विलोक्य दूषितां कृष्णामित्येकेनैव पद्येन सा लीला सूचयिष्यते राजप्रश्नसमुद्दीप्यमानावेशादेव तु विस्तारयिष्यते अथ तथैवोपक्रमे ते एवमित्यादिना एवं पूर्वोक्तप्रकारेण गोपालनभृङ्गाद्यनुकरणादिनेत्यर्थः। स व्रजजनैकजीवनभूतो वृन्दावनचरो भगवान् कृष्ण इति भगवत्तायामपि साद्र्चित्तत्तद्विशेषं स्मरन्ति, क्वचित् कदाचित् गोचारणारम्भवर्षस्य निदाघे रामं विनेति अन्यथा तेन तादृशसाहसानिवेशमयमातृशिक्षया कालियह्रदप्रवेशो निवार्य्यतेति सम्भाव्य तस्मिन् दिन एव तत्र गत इति भावः। वृतो वेष्टितः श्रीमुखसन्दर्शनार्थं सर्वेषामेव प्रेमस्पर्द्धया परितोऽन्तिकागमनाद्विशेषतः स्नेहेन व्रजेश्वर्या अनुशासनाच्च ॥ ४७ ॥

गावश्च गोपाश्च अथानन्तरमेव पपुरिति गावस्तावदन्यत्र चालिता अपि निदाघातपपीडिताः सत्यस्तज्जलमुद्भाव यमुना-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तीरादृदृष्ट्वा पशुतया तद्दोषाज्ञानादेव द्रुतगत्या प्रविश्य पपुः गोपाश्च तत्पीडिता एव किं तु प्रसिद्ध तद्दोषं जानन् तासां मृतिं दृष्ट्वा शरीरजिहासया पपुरिति ज्ञेयम् अत एव गोपाश्चेति तदनन्तरमुक्तं ताश्च ते चाग्रगामिनः कतिचिदेव ज्ञेयाः श्रीकृष्णस्यैकाकित्वेन पश्चात् त्यक्तुं तैरशक्यत्वात् सङ्ख्यातीतगोचारणाय समन्तात् भागश एव गन्तुं तेषां योग्यत्वात् पश्चाद्गामिना श्रीकृष्णेन दृश्यमानानां गवामपि तत्पानासम्भवात् दुष्टत्वे कारणमाह-विषदूषितामिति ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सारघं मधु ॥ ४३—५२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोतॄणां कीर्त्तयतां च पुण्यावहं यत्कृष्णकीर्त्तनं च तद्यस्य सः कृष्णः साग्रजो व्रजमाविवेश ॥ ४१ ॥

तं व्रजमाविशन्तं दिदृक्षिताः दृशः यासान्ताः गोप्यः समेताः समुदिताः अभ्यगमन्नभिमुखमाजग्मुः कथम्भूतम् ? गोरजांसिच्छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुः हासश्च यस्य अनुगैः उपगीता कीर्तिर्यस्य तं मुकुन्दस्य मुखसारसं मुखपद्मं पीत्वा तद्गतं मधु पीत्वेत्यर्थः । आह्नि यो विरहस्तज्जं तापं जहुः तासां व्रजयोषितां सत्कृतिं बहुमानं समधिगम्य, सत्कृतिस्वरूपमेवाह,सलज्जं सहासं सविनयं च यथा तथा अपाङ्गयोर्नेत्रान्तयोर्मोक्षः प्रसरणं यस्मिंस्तत् यत् तद्रूपां तासां सत्कृतिं प्राप्य गोष्ठं विवेश ॥ ४२ ॥ ४३ ॥

यथाकाममिच्छानुगुणं कालानुगुणं च यथा तथा परमा आशिषः कामान् व्यधत्तामकुर्वताम् ॥ ४४ ॥

तदेव दर्शयन्नाह—तत्र गृहेऽङ्गमर्दनादिभिर्गतोऽध्वसम्बन्धी श्रमो ययोस्तौ रुचिरं नवं वस्त्रं वसित्वा दिव्याभ्यां स्रग्गन्धाभ्यामलङ्कृतौ जनन्योपहृतं पात्रे दत्तं स्वादु मृष्टमन्नं प्राश्य उपलालितौ सुखं यथा तथा सुप्तवन्तौ ॥ ४५-४६ ॥

कदाचिद्रामं विनेतरैः सखिभिर्वृतः हे राजन् ! कालिन्दीं यमुनां ययौ ॥ ४७ ॥

निदाघे ग्रीष्मर्तौ य आतपः तेन पीडिता अत एव तृषार्त्ताः तस्याः कालिन्द्याः कालीयविषेण दूषितमत एव दुष्टं जलं अपुः पीतवन्तः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

गोरजसा छुरितकेशपाशैः बद्धानि बर्हवन्यप्रसूनानि पिच्छवनभवपुष्पाणि यस्य स तथा । गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनश्च रुचिरे ईक्षणे चारुहासश्च यस्य स तथा तम् ॥४२॥

मुकुन्दस्य मुखमेव सारघं मधु सरघायोग्यं सारघं "सरघा मधुमक्षिका प्रोक्ता" इति हलायुधः । आह्न विरहजं तापं यासामपाङ्गमोक्षः कटाक्षनिरीक्षणं व्रीडया सहितः सव्रीडश्चासौ हासश्च सव्रीडहासः तस्य विगमो राहित्य विशेषेण प्रश्रयः यस्य स तथा तासां सत्कृतिं सत्कारं समधिगम्य प्राप्य ॥४३-४४॥

मज्जनं स्नानम् उन्मर्दनं शरीरमलोद्वर्तनं नीवीं वस्त्रं वसित्वा आच्छाद्य ॥ ४५ ॥

प्राश्य पीत्वा संविश्य शयित्वा ॥ ४६ ॥

इदानीं कथान्तरं वक्तुमुपक्रमते, एवमिति ॥ ४७ ॥

निदाघातपः ग्रीष्मर्तुभवरविकिरणभव उष्णविशेषः तेन पीडिताः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र सामान्यव्रजजनदृश्यमानत्वेन वर्णयति—कृष्ण इति एकेन अथ परमतेजस्वित्वेन झटिति तद्बुद्ध्युल्लङ्घनशीलैः श्रीगोपकुमारीविशेषैरपि दृश्यमानत्वेन वर्णयंस्तेषामनुरागवैचित्रीं स्पष्टयति-तदिति द्वाभ्याम् ॥ ४१—४२ ॥

अक्ष्णोरेव भृङ्गास्तत्पाने स्वतः प्रवृत्तत्वात् तैः द्वारभूतैः स्वयमपि पीत्वा सत्कृतिमाह—सव्रीडो हासो यत्र तादृशः विनयरहस्यप्रियजनोचितव्यवहारो यत्र एतादृशं यथा स्यात् यत् स्यात् तद्रूपामित्यर्थः । यदित्येतत् प्रोक्तां तां किं रूपां अपाङ्गमोक्षां कटाक्षदर्शनरूपामित्यर्थः ॥ ४३ ॥

परमाशिषः उत्कृष्टोपभोगान् तत्र गोष्ठमध्ये निजावरोधप्रासादे गतः आध्वनः अध्वसम्बन्धि श्रमो ययोः टेरलोप आर्षः सविसर्गपाठे गताध्वश्रमावित्यर्थः । यष्ठ्यलुक् छान्दसः स्रग्वयं विभ्रमलीलायां विगतश्रमावित्यर्थः । एवं गोपालनभृत्यमनुकरणोक्तप्रकारेण ॥ ४४—४७ ॥

दुष्टत्वकारणमाह-विषदूषितामिति ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वनलीलामुक्त्वा पुनर्व्रजे भगवतः समागमनमाह-कृष्ण कमलपत्राक्ष इति । कृष्णः व्रजमाव्रजविति व्रजस्थानां महानन्दहेतुरुक्तः तदेतावत्कालं विरहतप्तानां कथं तापं दूरीकरिष्यतीत्याशङ्क्याह, कमलपत्राक्ष इति । कमलपत्रवत् आयते विशाले परतापापनोदके अक्षिणी यस्य अनेन दृष्ट्यैव तापहारित्वमुक्तम् । ननु, कारणभूते आध्यात्मिके पापे विद्यमाने कथं तापनिवृत्तिस्तत्राह, पुण्यश्रवणकीर्त्तन इति । पुण्ये श्रवणकीर्त्तने यस्य अनेन पापं जलपूरेणेव नाश्यत इति निरूपितं श्रवणे प्रविशति कथापूरो हृदयं ततः सर्वमेव दोषमालोड्य मुखतो निःसरति एवं कियत्कालपर्यावृत्या सर्वथैव शुद्धो भवति, नन्वेवमपि सति भगवत्कीर्त्तिः कथं प्राप्यते ? तत्राह-स्तूयमानोऽनुगैरिति । अनुगा भक्ता गोपाश्च तेन भगवच्चरित्रं सर्वथैव सुखमनुभूतं अलौकिकेनापि प्रकारेण साग्रज इति धेनुकवधस्तेन कृत इति तं पुरस्कृत्य सहैवागतो भगवान् न तु पृथक् पृथक् यथायथम् ॥ ४१ ॥

श्रीवल्लभाचार्यकृतसुबोधिनी।

आगच्छन्तं भगवन्तं वर्णयति "तं गोरजश्छुरितकुन्तलम्" इति तं भगवन्तं गोप्योऽभ्यगमन्निति सम्बन्धः पूर्वं पुरुषार्थचतुष्टयसहिता दशरसयुक्ता लीला च प्रदर्शिता सा गोपिकाभिर्न दृष्टेति गोपिकानां भवति तापः अतस्तन्निवृत्त्यर्थं चतुर्दश धर्मयुक्तो भगवानत्र निरूप्यते तत्र गोरजोभिश्छुरितानि व्याप्तानि कुन्तलानि यस्येति पुरुषार्थलीलाप्रतिपादिता गावोऽत्र धर्मः रजोऽर्थः व्याप्तिः कामः अलका मोक्षस्थानीयाः सत्यावलम्बिनः धर्मादिसहितानामेव मोक्षः इति चतुर्णामेकवाक्यता कुन्तलाश्च कामरूपाः रजो रजोगुणा एव गावोऽत्रानुभावाः तेन पुष्टः शृङ्गाररसो निरूपितः बद्धो बर्हः बर्हस्य मयूरपिच्छस्य बन्धनं वीराद्भुतरसौ बोधयति-वनोद्भवानां प्रसूनानां सम्बन्धो भयहास्ये जनयति रुचिरेक्षणं करुणारसं चारुहासो रौद्ररसं महतस्तादृशो विशिष्टो वेषः नाद्यान्तशिष्टरसं जनयति--वेणुं क्वणन्तमिति शान्तरसः ब्रह्मामृतं प्रकटीकुर्वन् अनुगैरनुगीता कीर्त्तिर्यस्येति भक्तिरसः एवं सर्वरसयुक्तं भगवन्तं पश्यन्त्योऽपि दिदृक्षितरूप एव स्थिताः न हि साधारण्येन दृष्टो भगवान् रसस्य परमरसमुत्पादयति एकान्ते समागतं भगवन्तं सर्वरससहितं द्रक्ष्याम इति दिदृक्षैव स्थिता अत एव प्रथमं दर्शनं नोक्तं समागम एवोक्तः समागमार्थं यद्दर्शनं तदन्यसंपूर्णमिति न पृथङ्निरूपणमपेक्षते अभितः समागता इति भगवतस्ताभिरेव वेष्टनं निरूपितम् एकस्यास्तत्कार्यं न भवतीति समेता अग्रे गावो बलभद्रप्रमुखाश्च गताः पश्चादागच्छन्तो गोपिकाभिरेव व्यवहिताः मध्ये गोपिकाभिर्भगवान् वेष्टित इत्यर्थः ॥ ४२ ॥

ततस्ता यत्कृतवत्यः तदुक्त्वा पश्चाद्भगवतो व्रजे समागमनं निरूपयति-पीत्वेति। आदौ तापापनोदनार्थं गोपीजनवल्लभसरसः करुणावीचियुक्तालावण्यामृतं पातव्यम् अन्यथान्तस्तापो न गच्छेत् गते हि तापे रसास्वादनं बहिस्तापो मिलनादेव गतः न पेपीयमानो रसो यदि तापहारको मिष्टश्च भवति तदैव भूयान् पातुं शक्यः लोके नास्ति दुग्धादीनां तृषादिजनकत्वात् जलं नीहारवत् पातुं न शक्यते उभयात्मकमपि यदि परिणामे सुखदं न भवति तदापि न समीचीनम् अतो भगवल्लावण्यामृतं सर्वगुणविशिष्टमित्याह-मुकुन्दो मोक्षदाता ज्ञानरूपः शान्तः अतो नाग्रे दोषजनकः प्रत्युत मोक्षपर्यवसायी मुखं हि भक्त्यात्मकं भवति अतः स्नेहाद्बहुपानं सम्भवति तत्र सारघं सरघा मधुमक्षिका तया सर्वेभ्यः पुष्पेभ्यो रसं समानीयैकत्र मधु क्रियते तत्कोटरादिषु तिष्ठति अन्यजातीयं तु मधु न द्रवीभूतं भवति घनीभूतं च पातुं न शक्यं ब्रह्मादयोऽत्र सर्वे श्रुतयश्च सर्वाः सरघास्थानीयास्तैः सर्वैरेव सर्वप्रकरणेभ्यः परमानन्दमादृत्यैकत्रानन्दनिधिर्बोधितः सर्वप्रकरणेषु प्रतिपादित आनन्द एकीभूयात्र स्थित इत्यर्थः। ब्रह्मादिभिः श्रुतिभिश्च प्रार्थनया भगवानत्रानीतः रसस्तु गोपिकाभिरेव भुक्तः त एव हि रसं जानन्ति ये तदेकोपि जीविनो भवन्ति ते भृङ्गाः न तेषामन्यद्देहनिर्वाहकमप्यस्तीति विषयान्तरसम्बन्धो नास्त्येव केवलमन्यत्र परिभ्रमणमात्रं तथा गोपिकानामपि चक्षुषि परिभ्रमन्ति सर्वत्र विषयीकुर्वन्ति भगवन्मुखलावण्यामृतमेव अत आह अक्षिभृङ्गैरिति अनेन गोपिकानां श्रुत्यादिभिः साजात्यमपि निरूपितं पानं बहिःस्थितस्य द्रवद्रव्यस्यान्तर्निवेशनं नेत्राणामपि स्वतो रसाभिज्ञत्वज्ञापनाय भृङ्गपदं तथा सति स्वतोऽपि प्रवृत्तिर्भवति अन्यत्र च न विनियोगः सिद्ध्यति गोपिकानामपि देवतात्वादन्येनापि पानं सम्भवति अतोऽस्माभिरेतावत्कालं नानुभूत इति चिन्तया यस्तापः सलावण्यामृतरसेन्तः पूर्णो गच्छति अन्यस्तु त्रिविधोपि तापः पूर्वमेव गत इति ज्ञापयितुं विरहजमित्युक्तम् ननु, विरह एव किमिति सम्पाद्यते सन्निधान एव कथं न स्थीयते? इत्याशङ्क्याह, व्रजयोषित इति। व्रजस्थ हि स्त्रियो विवेकरहिताः पराधीनाश्च तत्राप्यहि अहनि स्त्रीस्वभावोऽपि बाधकः अतः परं ताभिर्मिलिताभिर्भवत्स्थिते भगवति यत्कर्तव्यम् तद्वक्तुमशक्यमिति सङ्क्षेपेणाह-तत्सत्कृतिमिति। तासां सत्कारमनुभूय परितः समालिङ्गनादि यावद्वा भगवद्वैभवेनापि शक्यं तत्सर्वं तासां मध्ये स्थित्वा सत्कारत्वेनोच्यते सम्यगभिगम्य प्रत्येकं भिन्नतया तत्सुखमनुभूय सम्यक्तया ताः कृतार्थीकृत्य गोष्ठं विवेश। ननु, कोयं तत्कृतसत्कारो लौकिकभोजनादिरपि चेत्तत्कृत एव पुनर्गोष्ठे समागमनं व्यर्थमेव स्यात् लौकिकं च बाध्येत अतो विशिनष्टि—सव्रीडहासविनयमिति-यदिति विशेषतो वक्तुमशक्यं मुख्य एव रसः तत्रान्धकारे यादृशी लीला सा व्यावर्त्यते अपाङ्गानां मोक्षो यत्रेति अलसादयश्चापाङ्गाः कं कं प्रकारमभिनेष्यतीति प्रथमप्रकारापन्नाया एव तस्याभिभूतान् त्रिविधान् रसानाह-सव्रीडहासविनयमिति। आदौ व्रीडा मध्ये पुष्टे रसे हासः रसान्ते च विनयः तैः सह वर्त्तमानं प्रत्येकं बहुधायं रस इति द्वितीयो भगवत्प्रभाव उक्तः अनौचित्यपरिहाराय सत्कृतिशब्दः अगत्पूज्यत्वाच्च भगवतो यथाधिकारं च पूजा नन्वत्राप्यागतस्य तद्भवेदिति कथं मार्गे एव सत्कारस्वीकार इति शङ्कापरिहारार्थमाह—गोष्ठमिति। गवां बन्धनस्थानं तत् ॥ ४३ ॥

तथापि भगवत्प्रभावाद्यथोचितं तत्रापि; सत्कारो जात इत्याह-तयोरिति। साधारण्य इति ज्ञापनार्थमुभयोर्ग्रहणं यशोदारोहिण्याविति लोके ख्यातिरुक्ता पुत्रयोरिति लौकिक एव भावः प्रेमरहितं न गृह्णातीत्याशङ्क्य पुत्रवत्सले इत्युक्तम्। इच्छामप्यनतिक्रम्य कालमप्यनतिक्रम्य परमाशिषो व्यधत्तां कामः स्वानिष्टः सन्ध्याकाले च परोक्षतयैवाशिषो वक्तव्या इति कालापेक्षा निरूपणं नमस्कारे कृते भक्ते वा स्वस्य महत्त्वं स्थापितवत्याविति ज्ञापयितुमाशिषां निरूपणम् ॥ ४४ ॥

तत उपचाराः गताध्वानश्रमाविति मज्जनान्युन्मर्दनादीनि उन्मर्दनमादिर्येषां मज्जनानां छान्दसः परनिपातः मज्जनं वा पादयोर्मर्दनं वा उन्मर्दनादिना रजोनिवृत्त्यर्थमादौ वा मज्जनं प्रातीतिकोऽयं श्रमः नीर्वी मल्लानामिव रुचिरां पीताम्बरादिभिर्निर्मितां दिव्येन स्रगन्धादिना च मण्डितौ जातौ ॥ ४५ ॥

मध्ये त्वधिकारिदेहैस्तया कृतौ पश्चाज्जनन्युपहृतं प्राश्येति रोहिण्या समानीतं प्रायशो भगवतो बलभद्रेणैव सह भोजनमसमासात् द्वयमेकमेवेति न यशोदाया वैलक्षण्यं प्राश्येति कोमलदुग्धाजादिकं सूचितम्। तत उपलालितौ पित्रादिभिः सर्वैरेव सर्वेषामनुग्रहार्थमेवमुक्तं शय्यायां

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सन्निद्रवेति रात्रिकृत्यमुक्तं जनन्यादिभिः सह शयननिषेधार्थमुक्तं सुखं सुषुपतुरिति लीला आह्निकी सम्पूर्णा निरूपिता व्रजे हि नात्यन्तं धर्मप्रधानता अतो न रात्रिकृत्यं किञ्चिदुक्तं व्रजस्यानुक्तिसिद्धत्वेऽपि केवलेन सम्पूर्णो व्रजे स्वामिनाभिः सह शयनं सूच्यते ॥ ४६ ॥

एवमाह्निकं भगवत्कृत्यं निरूप्य वैषयिकं भगवत्कृत्यं वक्तुं कालीयह्रदगमनार्थं प्रस्तावनामाह–एवं स भगवानिति । एवं तिरोधार्थं वृन्दावनचरो भगवान् जातः तत्र हेतुः स भगवानिति । स इति निरोधार्थमेवागतः भगवानिति सामर्थ्यं कृष्ण इति नाम्ना "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति वाक्यार्थं बोधयितुं प्रवृत्तिरुचितेति ज्ञापयति–क्वचित् कदाचित् कस्मिंश्चिद्देशे तत्कार्यं स्वसाध्यमेवेति ज्ञात्वा रामऋते कालिन्दीं ययौ वनं सुभयत्रापि भवति पर्वतसमीपे कालिन्दीसमीपे च तत्र निदाघे प्रायशः कालिन्दीसमीप एव गोचारणं सन्निविष्टं इति तेषां समानशीलतोक्ता अपरिहार्यतापि अन्यथा भगवान् स्वयमेव गच्छेत् ॥ ४७ ॥

एवं सम्भूय गतानां मध्ये भगवानन्यत्रैव स्थितः किन्तु प्रकमेणैव गावो गोपालाश्च गता इत्याह–अथेति । कश्चिद्वृक्षच्छायायां भगवन्तं स्थापयित्वा अग्रं पाययित्वा पीत्वा चागमिष्याम इत्यनुज्ञाप्य दूरे गन्तव्यमिति बोधिता अपि विशेषतो न निषिद्धा निदाघातपेनात्यन्तं पीडिता दुष्टं तस्या यमुनाया जलं पपुः सा हि यमभगिन्यतो दुष्टा या स्थानं दत्तवती सत्रदोषो न तस्याः किन्तु अन्यकृत इत्याह—विषदूषितमिति । विषेणात्यन्तं दूषितम् उष्णस्पर्शादिनापि दूष्यते तदर्थं विशेषः ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यमाद्गोष्ठप्रवेशलीलामाह त्रिभिः—कृष्ण इति । व्रजस्थानां चित्तस्याकर्षणं कमलपत्राक्ष इति नेत्रनासयोः पुष्पे श्रव्ये श्रवणे कर्णौ यतस्तथाभूतं कीर्तनं वेणुगानं यस्य स इति श्रोत्रस्याप्याकर्षणं ध्वनितम् ॥ ४१ ॥

व्रजबालानां विशेषत आकर्षणमाह—तं गोप्योऽभ्यगमन् गोरजोभिश्छुरितेषु व्याप्तेषु कुन्तलेषु बद्धं बर्हं वन्यप्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य ईक्षणमेव हासो वा यस्य तं दिदृक्षितुः सञ्जातदर्शनेच्छा दृशो यासान्ता इति गोपीकर्तृकं लज्जा भयहेतुकं वर्जनममानयन्त्यो दृशस्तदाकरणात्वं परित्यज्य स्वतन्त्रकर्तृत्वं प्राप्ता इति ध्वनिः तेन च प्रतिवेशिनां श्रोत्रघ्राणेन्द्रियाणां वेणुसौस्वर्याङ्गसौरभ्यसम्पत्तिमात्रस्य मात्सर्येणैव श्रेष्ठो दृक्त्वमसहमानाः स्वाभयभूता गोपीः परिक्षिप्यैव सपत्नीमपि स्तुतिमिव चापलत्वात् स्वयमेव कृष्णपार्श्वे चलिता इत्युत्प्रेक्षा ध्वन्यते । समेता इति सर्वा एव कुलवध्वः स्वस्वगृहान् विहाय चलन्ति पश्य ग्रामेव किं त्वं पारयन्ती वाधिष्यसीति स्वस्वश्वश्रूः प्रत्युत्तरस्य इति भावः ॥ ४२ ॥

अभिगम्य किं चक्रुरित्यत आह—पीत्वेति । मुकुन्दस्य मुखसारघं स्मितरूपं मधु अक्षिभृङ्गैः पीत्वा नयनपाङ्गभृङ्गैः । पीत्वे- नेन कृष्णस्यादृष्टगोपीकस्याप्यमनस्कस्यैव यत् सार्... स्मितं तत् ताभिर्निःशङ्कतया सम्पूर्णनेत्रैरेव पीतमिति ... ततश्च द्वितीयपद्ये कृष्णस्य तत्रावधाने सति हर्षोत्थो हा... स्तासां यदेवाजनि तदेवोद्भूतया लज्जया स सम्पूर्णावले... हासश्चावृतः वामकरकृतमवगुण्ठनं च किञ्चित्संवृत्तं तत... वरणाव्यञ्जितो विनयश्चाभूदित्येतत् सर्वमाधुर्यमेव कृष्णोऽ... अभूदित्याह—तत्सत्कृतिं तादृशावलोकनरूपां सत्कृतिं ताभिः कृ... किञ्चिदुपायनप्रदानरूपं सम्मानमित्यर्थः । समधिगम्य विवे... शिरोमणित्वात् सत्स्वात्स्वादं स्वीकृत्य गोष्ठं विवेश अत्र साक्ष... समधिगमक्रिययोः क्रमेण सव्रीडेत्यादिविशेषणद्वयं तेन ... व्रीडया सहितो हासो विनयश्च यत्र तत् यथा स्यात... तासां सत्कृतिं यतः प्राप्नुवतः अपाङ्गस्य मोक्षो यत्र तद... स्यात्तथा समधिगम्य गोष्ठं विवेशेत्यर्थः । ताभिः कृता सव्री... हासविनया तादृशावलोकरूपा सत्कृतिः तस्याश्चाधिगमः कृष्णे... तत्प्राप्नुवदपाङ्गमोचसहितः कृत इति फलितम् अत्र सम्पू... नेत्राभ्यां दर्शने तासां लज्जया विमुखीभावः स्यादतस्त... टाक्षप्राप्त्यर्थमेव कृष्णेनापाङ्गमोचः इति ज्ञेयम् । अथैतद्विव... ताभिः प्रत्येकं स्वनयनाञ्जनाद्यैरस्तुत्यं सञ्चारिण्या स्वपरिज्ञा... नीयावलोकनकुसुममर्पितं तथैव स्वाधरपल्लवाञ्चलो ... सञ्चारिण्योपधावीयार्पितं हासकुसुमं च गृहीत्वा एतद्द्वयकुसुम... मेवाहमद्य तत्र भवते देयमस्ति तत् कृपया गृह्यताम्... यदैव दर्शितं तदैव तदुपायनद्वयमानेतुं कृष्णेन स्वप्रेष्ठोऽपाङ्ग... न्ययुज्यत स च महाचपलः पूर्वमेव तद्द्वयं तासामन्तः... गतमपि चोरयितुमुद्यतोऽतः कृष्णेन यत्रैव स्थापित ... ताभिस्तस्मिन्नुपायनद्वये प्रकटीकृत्य दित्सिते सति स ... बन्धान्मोचितः सन् चार इव शीघ्रं गत्वा तदैव ... मारभत तदक्षया एव तासां कोपाधिकारिण्या लज्जया ... प्रादुर्भूय तदुपायनद्वयमावरीतुं प्रवृत्ते ततश्च ... विग्रहे प्रवृत्ते सम्प्रदर्श्ये विनये च तासां परिज्ञाने समा... स च बलवान् कृष्णप्रेष्ठोऽपाङ्गो व्रीडाविनयाभ्यां सहित... सहासावलोकनमुपायनमाकृष्यानीय कृष्णाय प्रादात् ... तत्रिक्रमातिदुर्लभमहारत्नमिव प्राप्य स्वहृदयमन्दिराभ्यन्तरे ... स्थापयामासेति कथा सत्कारव्यञ्जितोपलब्धा यद्वा ... योषितोह्नितोऽह्नि तापं जहुः, कास्ता व्रजयोषितः ? यासामपाङ्ग... दत्तां प्रसिद्धां सत्कृतिं समधिगम्य गोष्ठं विवेश ... सव्रीडहासविनयम् अत्र यत् पदस्योत्तरवाक्यगतत्वात् तद... पेक्षा ॥ ४३ ॥

यथाकामं पुत्रयोर्वाञ्छितं भक्ष्यादिकमनतिक्रम्य यथा... प्रदोषादिकं भोजनकालमनतिक्रम्य परमाशिषो भक्ष्यपरिवे... भोगान् ॥ ४४ ॥

न श्रमोऽश्रमः स चैश्वरत्वात् नरलीलया तदभाव... अश्रमः गतोऽध्वनोऽनश्रमः श्रम एव ययोस्तौ नीवीं परि... धनम् ॥ ४५ ॥

एवं कार्त्तिकगोपाष्टमीदिनलीलां समाप्य तद्दर्शविधि... गतस्य कस्यचिद्दिनस्य लीलामाह — क्वचिदिति । रामऋते ...

विषाम्भस्तदुपस्पृश्य दैवोपहतचेतसः।
निपेतुर्व्यसवः सर्वे सलिलान्ते कुरूद्वह ! ॥ ४९ ॥
वीक्ष्य तान् वै तथाभूतान् कृष्णो योगेश्वरेश्वरः।
ईक्षयाऽमृतवर्षिण्या स्वनाथान् समजीवयत् ॥ ५० ॥
ते संप्रतीतस्मृतयः समुत्थाय जलान्तिकात्।
आसन् सुविस्मिताः सर्वे वीक्षमाणाः परस्परम् ॥ ५१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सायंतनाग्निकस्नानार्थं मातृभ्यां तस्य तद्दिने गृह एवोपवेशितत्वात् ॥ ४७ ॥

गाव इति पश्चात् शनैरागच्छन्तं कृष्णमनपेक्ष्य तृषार्त्तत्वात् पुरोगामिन्यः तदनुद्रुताः केचन गोपाश्च ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पुण्ये श्रवणकीर्त्तने यस्य सः ॥ ४१ ॥

तं श्रीकृष्णं व्रजमाविशन्तम् दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः गोप्यः अभ्यगमन् अभिमुखमाजग्मुः कथम्भूतम्? गोरजोभिश्छुरितेषु कुन्तलेषु बद्धानि बर्हवन्यप्रसूनानि यस्य रुचिरमीक्षणं चारु हासश्च यस्य तं च तं च ॥ ४२ ॥

व्रजयोषितः मुकुन्दमुखस्य मुकुन्दमुखपङ्कजस्य सारघं मधु अक्षिभृङ्गैः पीत्वा अह्नि यो विरहस्ततो जातं तापं जहुः मुकुन्दोऽपि तत्सत्कृतिं तासां पूजां समधिगम्य गोष्ठं विवेश सत्कृतिमेवाह-सव्रीडेन हासेन विनयो यथा भवति तथा यदेतदपाङ्गमोक्षं कटाक्षदर्शनम् ॥ ४३ ॥

परमाशिषः प्रियान् कामान् ॥ ४४ ॥

रुचिरां मीर्वीं सुखदं वस्त्रं वसित्वा सुखं सुषुपतुः ॥ ४५-५० ॥

भाषा टीका।

पुण्य रूप है जिनकी कथा को श्रवण और कीर्त्तन ऐसे कमलदललोचन श्रीकृष्ण अपने अनुचर गोपन सहित और बडे भैया बलभद्रजी सहित व्रज में प्रवेश करत भये ॥ ४१ ॥

गायन के खुर की रज अलकन पै पलकन पै कपोलनकी झलकन पै पर रही है, मोर पिच्छ के मुकट कों धारण करें हैं, वन के फूलन के गुच्छा माला लटकायें सुन्दर चितवन मनोहर जाकी हसन सखा जिनको जस गाय रहे ऐसे श्रीकृष्णचन्द्र वेणु कों बजावत जब वनते आवत भये, देखवे की इच्छा जिनकी ऐसी आंखन वारी सब गोपी जुरमिलकें आवत भईं ॥ ४२ ॥

वे सगरी व्रजकी वनिता अपने नेत्र रूपी भौंरान तें सांवरे के मुख कमलतें सुन्दरता रूपी अमृत कूं पीके दिन भर तांई प्यारे के विरह सों भयो जो ताप ताकों छोडत भईं ॥ श्रीकृष्णचन्द्र भी उन गोपीन की नम्रता और लाज भरी मुस्क्यांन कटाक्ष भरी चितवन रूप भेंट कू लेके अपने व्रज में प्रवेश करत भये ॥ ४३ ॥

अपने पुत्रन पै प्यार करनवारी मैया यशोदा और रोहिणीजी दोनोंई दोऊ भयान की जैसी इच्छा और जैसो समय वाई के अनुगुण उनके मनोरथन कों पूर्ण करत भई और आशीर्वाद देत भईं ॥ ४४ ॥

घर में आयकें स्नान उबटनो इत्यादिक उपचारन सों मार्ग को परिश्रम दूरि भयो जिनको ऐसे कृष्ण बलदेव दोऊ भैया सुन्दर पीतांबर नीलाम्बर को पहिर कें माला गंध चन्दन सों भूपित होय कें शोभा को प्राप्त होत भये ॥ ४५ ॥

इतनेई में मैया थार परोस के जो लाई सो बडो स्वादु वो अन्न दोऊ भैया जेंमत भये, ता पीछें मैया ने उपलालन करकें शय्या पै दोऊ भैयान कूं पौढाय दिये, और कहानी कहवे लगी, इतनेई में नींद जो आई सो व्रज में सुख पूर्वक खूब सोवत भये ॥ ४६ ॥

हे राजन् ! या प्रकार श्रीवृन्दावन विहारी श्रीकृष्ण भगवान् कभऊ एकले बलदेवजी बिना आपही ग्वाल बालन कूं साथ लेकें यमुनाजी के तीर पै जात भये ॥ ४७ ॥

ता पीछे गरमी की धूपसों व्याकुल होयवेतें गऊ और ग्वाल बाल सब तृषा सों आर्त्त होय गये और काली के विष सों दूषित जो यमुना जल हो ताकूं पीवत भये ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सम्प्रति सद्य एव इता प्राप्ता स्मृतिर्यैस्ते सम्प्रतीतस्मृतयः यद्वा, सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथेति ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

अन्वमंसत तद्राजन् ! गोविन्दानुग्रहेक्षितम् ।
पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे वृन्दावनक्रीडायां धेनुकवधो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतच्च सर्वं श्रीभगवतो भाविलीलाविशेषाधिष्ठातृशक्तिवैभवमेवेत्याह—देवो भगवान् तस्येदं दैवं लीलाशक्तिवैभवं तेन उपहतं ज्ञानं येषां त इति तदुक्तं ईशचेष्टित इति वक्ष्यते च श्रीकृष्णेनाद्भुतकर्मणेति उपस्पृश्य किञ्चिदाचम्य विषाम्भ इति पुनरुक्तिस्तद्विशेषविवक्षया व्यसव इवात्र च तादृशदैवमेव कारणम् ॥ ४९ ॥

वै एव ईक्षयेत्यविलम्बं बोधयति, यतः स्वनाथान् अनन्यगतीन् अत एवामृतवर्षिण्या प्राकृतानां प्राकृतममृतमिव तेषां तदीयानामेकं जीवनहेतुं कारुण्यं वर्षितुं शीलं यस्याः । यद्वा, अमृतं तादृशं कारुण्याश्रुजलं तद्वर्षिण्या यथोक्तं द्वितीये "यद्वै व्रजे व्रजपशून् विषतोयपीतान् पालानजीवयदनुग्रहदृष्टिवृष्ट्या" इति सम्यक् ग्लानिशोकादिनिरासेन युगपदेवाजीवयत् स्वस्थानकरोत् तादृशी च शक्तिर्न कृत्रिमा किन्तु स्वाभाविक्येवेत्याह—योगेश्वरेश्वर इति । यदुपासनाविशेषेणैव योगेश्वराणामपि तत्तच्छक्तिरित्यर्थः ॥ ५० ॥

सुविस्मिताः सुषुप्तेरिव सर्वेषामेकदैव सद्यः समुत्थानात् परस्परं वीक्षमाणा इत्यत्यन्तविस्मयस्वभावात् ॥ ५१ ॥

गोविन्दस्य गोकुलेन्द्रस्यानुग्रहेक्षितमन्वमंसत अनुमितवन्तः यद्वा विषं पीत्वा परेतस्यात्मनः पुनरुत्थानम् इति एतेष्वघासुरादात्मनां मोक्षणमनुस्मृत्येति ज्ञेयम् । हे राजन्निति भवादृशामेतद्युक्तमेवेति भावः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्विषोदकमुपस्पृश्य दैवोपहतचेतसः मूर्च्छिता व्यसवः प्राणव्यापाररहिताः हे कुरूद्वह ! निपेतुः तथाभूतान् मूर्च्छितान् पतितांश्च तान् दृष्ट्वाऽमृतसञ्जीवनादियोगानिर्वाहकः कृष्णः स्व आत्मैव नाथो रक्षको येषां तानमृतवर्षिण्या ईक्षया दृष्ट्या … जीवयत्सचेतनान् करोति स्म ॥ ४९ ॥ ५० ॥

ताश्च ते च ते "पुमान्स्त्रिया" [१।२।६७] इत्येकशेषः गावो गोपाः … संप्रतीताः सम्यक्प्राप्ताः स्मृतयो यैस्तथाभूता जलान्ति… वुत्थाय परस्परं वीक्षमाणाः सुविस्मिताश्चाऽऽसन् ॥ ५१ ॥

विषं पीत्वा सम्परेतस्य मृतस्यात्मनो यत्पुनरुत्थानं … गोविन्दस्यानुग्रहेक्षणकृतममन्यन्त ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपस्पृश्य आचम्य पीत्वा च ॥ ४९ ॥ ५० ॥

तथाभूतान् मृतप्रायान् ईक्षया दृष्ट्या सम्प्रति स्मृत… सम्यक् प्राप्तप्रत्यभिज्ञानाः ॥ ५१ ॥

विषं विषमिश्रजलं पीत्वा परेतस्य मृतस्यात्मनः पुनरुत्… गोविन्दस्यानुग्रहयुक्तनिरीक्षणकृतमन्वमंसत न्यरूपयन् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चदशोऽध्यायः ॥ ५२ ॥
( विजयध्वजरीत्या त्रयोदशः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वानुपपत्तिसमाधानार्थमाह—दैवेति । देवो भगवान् तस्य… भाविलीलाशक्तिः वैभवं दैवं व्यसन इव अत्र च तादृश… मेव कारणं ज्ञेयम् ॥ ४९ ॥ ५० ॥ ५१ ॥

पुनरुत्थानं गोविन्दानुग्रहेक्षितं तद्धेतुकमन्वमंसत ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पानफलमाह—विषाम्भस इति । उपस्पर्शनं पानस्नाना… स्पर्शमात्रं वा तावतैव सर्वे व्यसवः सलिलान्त एव निपेतुः ! … तेषां जीवनादृष्टस्य विद्यमानत्वात् कथं व्यसवो जाताः ? … दैवोपहतचेतस इति । तेषां हि तावदेव जीवनादृष्टमतो दैवो… पहतचेतसः सलिलसमीपे अर्द्धजल एव निपेतुः यद्यपि … दूरीकर्ता धेनुकवधेन पूर्वसङ्गतिरपि दूरीकर्तव्या तुर्यैव …

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

दोषाणां नाशो भवत्यलौकिकसुकृतेन च दिव्यभावोत्पत्तिः विश्वासार्थं सम्बोधनम् ॥ ४६ ॥

ततो भगवत्कृत्यमाह-वीक्ष्येति । स्वभावतोऽपि जानाति तथापि क्रीडायां साधनं वक्तव्यमिति योगेश्वरेश्वर इत्युक्तं योगस्यापि नियन्ता योगेन हि सर्वेषां ज्ञानं भवति तत्राप्ययं नियामकः किम्पुनः स्वज्ञाने वक्तव्य इत्यर्थः । योगेश्वराणामपीश्वर इत्युपवृंहणामप्ययं नियामक उक्तः तत्र हेतुः कृष्ण इति सदानन्दः तान् निरोधार्थमानीतान् वै निश्चयेन तथाभूतान् न तु मूर्च्छितान् स्वयमागत्य वीक्षणेन नूतनदेहान् निर्माणामृतवर्षिण्येक्षया समजीवयत् सर्वेऽपि प्राणा अमृता आधिदैविकाः तान् दृष्ट्यैवानीय तेषु तेषु देहेषु वर्षन्ति स्म नन्वेतावत्करणे को हेतुः ? तत्राह, तन्नाथानिति । सम्यग्जीवयदिति पुनर्विषसम्बन्धेपि न तेषां काचित् क्षतिः ॥ ५० ॥

तेषां पूर्वस्मात् वैलक्षण्यं तद्रूपताञ्च प्रतिपादयति-त इति । त एवैते जीवाः सम्यक् प्रतीता स्मृतिर्येषाम् अनुसन्धानं प्राप्तमेव भवति परं सर्ववृत्तान्तपुरस्सरं न भवतीति आधिदैविकमावमापन्नाः सर्वस्मृतियुक्ता जाताः अतः समुत्थाय जलसमीपं परित्यज्य प्रदेशान्तरं गताः सुविस्मिता जाताः एतावान् भावो भगवता विशेषतः कारितः अतो विस्मयः भगवद्भावस्य निवृत्तत्वात् ततः सर्व एव परस्परं वीक्षमाणाः प्रत्येकमुद्बोधका इव जाताः ॥ ५१ ॥

अत एवोद्बुद्धज्ञानाः पूर्वसिद्धं सर्वमेव ज्ञातवन्त इत्याह, अन्वमंसतेति । स्वयमेवानुमानं कृतवन्तः प्रायेणैवं भविष्यतीत्युत्प्रेक्षितवन्तः भगवद्वैभवस्याप्रत्यक्षत्वात् राजन्निति स्नेहसम्बोधनं तदग्रे वक्ष्यमाणां गोविन्दस्यानुग्रहेक्षणं यत्रेति तज्ज्ञातवन्तस्तदाह-विषं पीत्वा परेतस्यात्मनः स्वस्य पुनरुत्थानमिति भगवत्कृपावीक्षणेनैव जातमिति ज्ञातवन्तः एवं ज्ञानपूर्णा देहस्तैः प्राप्त इति प्रथमो निरोधो निरूपितः ॥ ५२ ॥

इति श्रीमद्भागवते सुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे (१)
द्वादशाऽध्यायविवरणम् ॥१२॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवो भगवांस्तस्येदं दैवं लीलाशक्तिवैभवं तेनोपहतसुस्मृतयः इति लीलासौष्ठवार्थं योगमाययैव नित्यानामपि तेषाममृतानामपि तथा दर्शनात् ॥ ४९ ॥ ५० ॥

ते जलाग्निकात्समुत्थाय सुविस्मिता इति मृता एव वयं केन जीविताः केनाप्यौषधेन विषहरमन्त्रेण वा परस्परमिति सखे! किन्त्वमेतद्रहस्यं जानासीति प्रत्येकं प्रश्नात् एवं महासन्देहे प्रवर्त्तमाने भो वयस्या मां मयैवैतत्कारणम् "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति गर्गाचार्य्यवचनस्मरणात् सम्यगवगतमिति केनाप्युक्ते सति सर्वे एव सम्यक् प्रकारेण प्रतीता प्रतीतिविषयीकृता स्मृतिस्तदीया यैस्तथाभूता आसन्नित्यन्वयः ॥ ५१ ॥

अनु अनन्तरमैकमत्येन व्रजेष्टदेवश्रीनारायणेनाविष्टस्य गोविन्दस्य अनुग्रहेक्षितमेव कारणममंसत यस्मात् पीत्वा विषमित्यादि ॥ ५२ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
दशमेऽस्मिन् पञ्चदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ताः गावश्च ते गोपाश्च तथा ते "पुमान् स्त्रिया" (१।२।६२) इत्येकशेषः सम्यक् प्राप्ताः स्मृतयो यैस्ते तथा ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चदशाध्यायार्थप्रकाशः ॥१५॥

---

### भाषा टीका ।

हे कुरूद्वह ! राजन् ! दैव सों हरचो गयो चित्त जिनको ऐसे गऊ ग्वालन ने जब वो जल पियो ताके पीछें सबन के प्राण निकस गये जलके किनारे पै सगरे गिरत भये ॥४९॥

योगेश्वरन केऊ ईश्वर श्रीकृष्ण उनकी ऐसी दशा देखिकें, आपही जिनके नाथ एसं उन गाय और ग्वालन कों अपनी अमृत वर्षिणी दृष्टि सों देखिके जिवावत भये ॥ ५० ॥

वे सगरे तत्काल स्मृति को प्राप्त होयकें जलके किनारे ते उठिकें बडे विस्मय को प्राप्त होयकें आपुस में देखन लगे ॥ ५१ ॥

हे राजन् ! ता पीछे सगरे ग्वाल बाल "विषहू जल पीवने तें हम सबन के प्राण निकस गये, फिर जो अब हम जी उठे या में गोविन्द को अनुग्रह पूर्वक देखनोई कारण है" ऐसे मानत भये ॥ ५२ ॥

इति श्रीमद्भागवत दशमस्कन्धमें पन्द्रहवें अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १५ ॥

---

(१) अध्यायत्रिकस्य क्षेपकत्वात्स द्वादशत्वेन सोऽत्रापि ज्ञेयः

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

## ॥ षोडशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः ।
तस्या विशुद्धिमन्विच्छन् सर्पं तमुदवासयत् ॥ १ ॥

राजोवाच ।

कथमन्तर्जलेऽगाधे न्यगृह्णाद्भगवानहिम् ।
स वै बहुयुगावासं यथाऽऽसीद्विप्र ! कथ्यताम् ॥ २ ॥
ब्रह्मन् ! भगवतस्तस्य भूम्नः स्वच्छन्दवर्त्तिनः ।
गोपालोदारचरितं कस्तृप्येताऽमृतं जुषन् ॥ ३ ॥

श्रीशुक उवाच ।

कालिन्द्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना ।
श्रप्यमाणपया यस्मिन् पतन्त्युपरि गाः खगाः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षोडशे कालियस्योक्तो विग्रहो यमुनाह्रदे ।
तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥
हत्वा रासभदैतेयान् जग्ध्वा तालफलान्यथ ।
प्रीतोऽनृत्यत्फणारङ्गे कालियस्य कलानिधिः ॥

उदवासयत् निःसारितवान् ॥ १ ॥

बहूनि युगान्यावासो यस्य तमहिं स वै महिरजलचरोऽपि तस्मिन्नन्तर्जले यथा येन प्रकारेणासीत्, अथवा बहूनि युगान्यावासो यथा भवति तथा तेन प्रकारेण स वै तत्रासीदिति कथ्यतामिति ॥ २ ॥

गोपालेन यदुदारं चरितमाचरितं तदेवामृतम् अतः कथ्यतामिति ॥ ३ ॥

श्रप्यमाणं पच्यमानं पयो यस्य सः अत उपरि गच्छन्तः खगा यस्मिन् पतन्ति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णामिति वर्णतो नामतश्च अतः सवर्णास्तस्या दुर्विषदूषितत्वेनाऽवश्यप्रतीकार्यमभिप्रेतम् । कृष्णेनाहिनेति, महादुर्विषमयत्वमुक्तं न केवलं तस्या एव तद्धितायाभूत् अपि तु सर्वेषामपि यतः कृष्णः कर्षति दुःखानीति जलपानादिविशिष्टया व्रजस्य महातीर्थोद्धारणादिना जगतामपि, दमनादिना कालियस्यापि हिताचरणात् बाल्यलीलारसाविष्टस्यापि तस्य पुं... वत् स्वावसरेण ऐश्वर्यमभ्युदयते इत्याह, विभुरिति ॥ १ ॥

भगवान् सर्वेणापि प्रकारेण कर्तुं समर्थः तथापि ... केन प्रकारेणेति वै च स च "बहुयुगावासम्" इति विश्रुत... बहूनि युगानि आवासो यत्र तादृशं यथा भवति तथा ... आसीत्तत्कथ्यतामित्येवान्वयः । विप्र ! हे परमविद्याप्रवीण ! ... च याज्ञवल्क्यः—

"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणम्" ।

इति ॥ २ ॥

यद्यपि श्रीमुनीन्द्रेण तद्विक्षेपदुःखशङ्कया सङ्क्षिप्... कथितं तथापि तदज्ञानेन राज्ञा तल्लीलासामान्याभिलापादेव ... दृष्टमिति तद्वाक्येनैव दर्शयति—ब्रह्मन्निति । भगवतः ऐश्वर्या... षट्कयुक्तस्य भूम्नः सर्वथापि सर्वातिशयितस्य त... स्वच्छन्दवर्तिनः स्वैरलीलाप्रकाशिनः एवमेवम्भूतस्य गोपा... जात्यनुरूपम् उदारं सर्वतोऽपि महत्परमानन्ददातृ वा य... तज्जुषमाणः कस्तृप्येत् ? अतृप्तौ हेतुः अमृतमिवेति ॥ ३ ॥

श्रीशुक उवाचेति तदेवं निशम्य सवासनत्वे तस्मिन् ... स्नेहः सुखदुःखात्मकं सर्वमेव तादृशाय निवेदनीयमित्यभिप्रा... श्रीव्रजवासिदुःखमयनिजदुःखात्मकमपि तन्निवेदयन् श्रीशु... यथाभूतमेवोवाच न त्वन्यथैव विस्तारयांपिस्थितः । कालि... ह्रद इति तस्या दक्षिणभागे वर्तमानस्य तस्य तद्गर्भ...

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तस्याः प्रवाहस्तूत्तरतः पृथगेवोह्यः अन्यथा तद्विषजलेन यादव-कुलवासश्रीमधुपुर्यादिव्याप्तेः स तु कालियस्य विषाग्निना अल्पमाणपया मासीत् उपरिगाः ऊर्ध्वं गच्छन्तः खगा इति तत्रापि दूरगत्वमभिप्रेतम् ॥ ४॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

कृष्णां यमुनाम् ॥ १ ॥

न्यगृह्णात् निगृहीतवान् ॥ २ ॥

भूम्नः अपरिच्छिन्नमहिम्नः गोपालोदारचरित गोपालकाऽनु गुणमुदारचरितं तदेवामृतम् ॥ ३ ॥

अल्पमाणपया कथितजलाः ॥ ४—५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ कालीयदमनात्मकं कर्मानुवर्णयितुकामस्तावद्राज्ञः प्रश्नावसरप्रदानाय तत्सङ्गृह्य दर्शयति—विलोक्येति। कृष्णाहिना कालीयेन दूषितां कृष्णां यमुनां विलोक्यालोच्य तस्याः कृष्णायाः विशुद्धिमन्विच्छुः तं सर्पमुदवासयत्ततो निष्कासितवान् ॥ १ ॥

तत्र विस्मितः पृच्छति राजा—कथमिति द्वाभ्याम्। अन्तर्जले तत्राप्यगाधे तत्राप्यर्हि सर्पं कथं निगृहीतवान्? स वै अहिर्बहूनि युगान्यावसतीति तथाभूतो यथा येन प्रकारेणासीत्तदपि हे विप्र वर्णयतात् ॥ २ ॥

आत्मनः शुश्रूषाधिक्यं व्यनक्ति—ब्रह्मन्निति। भूम्नः विपुल-माहात्म्यस्य स्वतन्त्रस्यापि लीलया गोपालस्य सतः यदुदारं चरितं तदेवामृतं जुषन् कः पुमान् तृप्येत न कोऽपि ॥ ३ ॥

विषाग्निना पच्यमानं पयो यस्मिंस्तस्य ह्रदस्योपरिगाः उपरि चरन्तः खगाः पक्षिणः पतन्ति पेततुः विषजलवायुप्रसार-मात्रेऽपि मूर्छिताः पतन्तीत्यर्थः ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हरौ भक्तिमतां संसारविषं निर्वीर्यं भवतीति निदर्शयितुं अनन्तरातीताध्याये सङ्क्षिप्योक्तं कालीयनागमर्दनमहिमानं प्रपञ्चयत्यस्मिन्नध्याये, तत्र राज्ञः प्रश्नमुत्थापयितुमाह—विलो-क्येति। कृष्णां यमुनां कृष्णाहिना कृष्णसर्पेण उदवासयत् ततोऽन्यत्रावासमकारयत् ॥ १ ॥

अगाधे अतलस्पर्शे न्यगृह्णात् निगृहीतवान् प्रसह्य गृही-तवानित्यर्थः। यथा येन प्रकारेणासीत् स प्रकारः ॥ २—३ ॥

अल्पमाणं क्वाथ्यमानं पयो जलं यस्मिन् ह्रदे स तथा तस्मिन् ह्रदे ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

बहुयुगावासमिति विश्रुतत्वात् बहूनि युगानि आवासो यत्र तादृशं यथा भवति तथा यया स्यात्तया कथ्यतामित्येवा-न्वयः ॥ १ ॥

यद्यपि मुनीन्द्रेण तद्विरोधपतुःस्वशङ्कया सङ्क्षिप्य कथितं तथा तदज्ञानेन वा तल्लीलासामान्याभिलाषादेव तथा पृष्ट-मिति दर्शयति ॥ २ ॥

ब्रह्मन्निति स तु तत्प्रीतये स्वयुःकथानिवेदनाय च नास्य-न्तमर्थेऽभिनिविश्य यथाश्रुतमेवोवाचेत्यर्थः ॥ ३ ॥ ४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इन्द्रियाणि समस्तानां मूलयः समुदाहृताः।
त एव विषपूर्णानि कालीयस्य शिरांसि हि ॥
अतस्तदुपमर्दोऽत्र निरूप्यो हि त्रयोदशे।
सन्तुष्टो भगवांस्तेषु स्वलीलां चेत्करोति हि ॥
भक्तिमार्गानुसारेण निस्तारो नान्यथा भवेत्।
तेषां प्रपञ्चः कालिन्द्यस्ताश्चेत् कृष्णस्य सर्वथा ॥
ततोऽङ्गभेवेन्द्रियाणि भगवल्लाभावतो हरेः।
तदैव विषयश्चापि हर्षसंपति सर्वथा ॥
सर्वोपयोगरहितः पूर्वसम्बन्धहानतः।
परीक्षवेन्द्रियाणां हि निग्रहं कुरुते हरिः।
परीक्षार्थं ततो देवः कालं प्रेरितवांस्तथा।
स्वासक्तिश्चापि कर्त्तव्या निरोधे मध्यमे महान् ॥
बलः कर्त्तव्य इत्येव मुख्यभावं चकार ह।
कथामात्रवाप्रभावाय सङ्क्षेपेणाहृतां पुरः ॥
अक्लिष्टकर्मा भगवान् ज्ञापयामास लीलया।
उद्यमश्चापराधश्च परीक्षाकार्यमेव च ॥
स्तुतिः प्रसाद इत्यत्र पदार्थाः परिकीर्तिताः।

तत्र प्रथमं सङ्क्षेपेण कथामाह—विलोक्येति। कृष्णां यमुनां कृष्णाहिना कालसर्पेण कालीयेन दूषितां विलोक्य समर्थो भगवान् तस्या विशुद्धिमपि क्रीडार्थमन्विच्छन् तं सर्पमुदवासयत् ततो-ऽन्यत्र प्रेषितवान् सारूप्यं प्राप्तो हि भगवता निर्दुष्टः कर्त्तव्यः सारूप्यं प्राप्तेन च दोषो नान्येन निवारणीयः रूपान्तरेण च रूपान्तरदोषो न निवारणीय इति मर्यादा अतः कृष्णपदत्रयं विभुरिति सामर्थ्यं प्रकृतोपयोगिसारूप्यादेव न मारणं दर्पा-केशत्वाच्च नर्त्तनम्। अत एव कलौ कृष्ण एव सर्वदोषनिवारकः यदि सर्वेन्द्रियेषु नृत्यति इन्द्रियकृतमपराधं च सहते असौ यमुना शुद्धा कर्त्तव्येति तस्याः प्रसिद्धायाः प्रसिद्धं सर्पं दूरी-कृतवान् ॥ १ ॥

राजा विक्षेपं पृच्छति—कथमिति स हि जानाति बडिशेन यथा मत्स्यो बध्यते तथा कालीयो बद्ध इति अतलस्य महतः कीदृशं बडिशमिति साधनप्रकारप्रश्नः यदि लोके नादृशमपि बन्धनं स्यात् तदा न पृष्टव्यः स्यात् सतु नास्ति यतः स बहुयुगपर्यन्त-मावासो यत्र तादृशं यथा भवति तथा अवात्सीत् यदि तादृशं भवेद्बन्धनं पूर्वमेव निवृत्तः स्यात् न चैवद्वस्मा-

विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः ।
म्रियन्ते तीरगा यस्य प्राणिनः स्थिरजङ्गमाः ॥ ५ ॥
तं चण्डवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ।
कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गमास्फोट्य गाढरशनो न्यपतद्विषोदे ॥ ६ ॥
सर्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्यक्प्लुतो विषकषायविभीषणोर्मिर्धावन् धनुःशतमनन्तबलस्य किं तत् ॥ ७ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

चितं यतो भगवान् अतः प्रकारं कथयेति प्रश्नः विप्रेति सम्बोधनं विशेषेण ज्ञानपूरणाय विशेषण प्रकर्षेण वा कथ्यतामिति ॥ २ ॥

जलचरसाधारणवन्धनवदिदमपि भविष्यति अतो न वक्ष्यतीत्याशङ्कयासाधारणयत्वेन भगवत्कथां श्रोतव्यत्वेन स्तौति, ब्रह्मन्निति । ब्रह्मन्निति सम्बोधनं ज्ञानायानुद्वेगाय च भगवत इति सर्वैव लीलापङ्गुणयुक्ता भविष्यतीत्यप्रयोजकत्वं निवारितं भूम्न इति सर्वत्र लीलाधिक्यं स्वच्छन्दवर्तिन इति लीलायां न कस्याप्यनुरोधः तत्रापि गोपालस्य लौकिकानां बुद्धिपरिग्रहार्थं यतमानस्य उदारं सर्वपुरुषार्थान् पात्रापात्रविवेकं परित्यज्य प्रयच्छतीति पुरुषार्थानामपेक्षितत्वात् सर्वथैतदेव वक्तव्यं श्रोतव्यं च तदपि चरितं न तु कल्पितं तत्रापि सर्वदोषनिवारकं मृत्युनिवारकं च तदाहामृतम् इति किञ्च, अमृतं जुषन् किं कश्चित् तृप्येतेति लोकोक्तिः ॥ ३ ॥

भगवतोऽतिसामर्थ्यं ख्यापयितुं ह्रदस्वरूपमाह द्वयेन–कालिन्द्यामिति । कालियः कालीय इत्युभयं कालीयस्य सम्बन्धी कश्चित् ह्रद आसीत् सम्बन्धोऽग्रे वक्तव्यः विषाग्निना तस्यैव श्रप्यमाणमानयमानं त्रिधेण व्याप्यमानं वा पयो यस्मिन् यस्मिन् ह्रदे आकाशमार्गेण उपरि गच्छन्तोऽपि खगादि मध्ये पतन्ति इत्युपरि दोषमर्यादा निरूपिता ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न्यगृह्णात् कालियं कृष्णो दर्शयन् स्वमपादूव्रजम् ।
स्तुतो ऽहिभिः प्रसन्नस्तान् षोडशे निरसारयत् ॥

कृष्णां यमुनाम् उदवासयत् तस्मान्निस्सारितवान् ॥ १ ॥ बहूनि युगानि व्याप्य आवासो यत्र तद्यथा स्यात्तथा आसीत् विशेषतः प्रकर्षेण कथ्यताम् ॥ २ ॥

गवां श्लेषेण सर्वभक्तश्रोत्रादीन्द्रियाणां च पावनेनोदारं सुखदांतृचरितम् ॥ ३ ॥

कालिन्द्यां ह्रद इति हरिवंशोक्तेर्योजनप्रमाणस्तस्या दक्षिणे भागे तत्प्रवाहेनास्पृष्ट एव अन्यथा तद्विषसम्पृक्तप्रवाहवती सा मथुरादिदेशस्थजनैरव्यवहार्य्यैवाभविष्यादिति श्रप्यमाणं पच्यमानं पयो यस्य सः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षोडशे कालीयनिग्रहस्तद्भार्याकृतं श्रीकृष्णस्तोत्रं कार्या प्रत्यनुग्रहश्च निरूप्यते, उदवासयत् निःसारितवान् ॥ १ ॥ स अहिः बहूनि युगानि आवासो यथा भवति तथा प्रकारेण तत्रासीदिति कथ्यताम् ॥ २–३ ॥ कालिन्द्यां कालिन्दीसमीपे श्रप्यमाणं पच्यमानं पयो यस्मिन् सः ॥ ४ ॥

---

भाषा टीका ।

ॐकालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजाय नमः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—विभु श्रीकृष्ण यमुना जी कूं काले नाग से दूषित देखिके, वाके विशेष शुद्धि की इच्छा करत वा कालिय नाग कूं यमुनाजी में से निकास देते भये ॥ १ ॥

राजोवाच ॥

राजा परीक्षित बोले, कि—हे श्रीशुकदेवजी महाराज भगवान् श्रीकृष्णचन्द्र वा अगाध जल के भीतर में काले नाग को कैसें दंड देत भये ? और वो काली जैसे वा ... बहुत युगन सों वास करतो रह्यो सो आप कहिये ॥ २ ॥ हे ब्रह्मन् ! उन श्रीकृष्णचन्द्र भूमा भगवान् के ताड़... स्वच्छन्द वर्त्तवे वारे गोपाल रूपके उदार चरित रूप अमृत को सेवन करत करत कौन तृप्त होय सके ॥ ३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—कालिन्दी [ यमुना ] जी के बीच में एक बड़ो दह रह्यो, जा में विषकी अग्नि सों सदा ... औंट्यो करतो हो, और वा दह के ऊपर सों जो पक्षी उडके जाते तो वाहि में गिर परते हे ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, विप्रुष्मता अम्बुकणयुक्तेन विषोदतरङ्गस्पर्शि मारुतेन स्पृष्टा यस्य तीरगा म्रियन्ते स ह्रद आसीदिति ॥ ५ ॥ तं कालियं चण्डो वेगो यस्य तद्विषमेव वीर्यं ... तं कदम्बमिति भाविना श्रीकृष्णचरणस्पर्शमात्रेण स ... स्तवीर न शुष्कः अमृतमाहरता गरुत्मता क्रान्तत्वादिति ...

तस्य ह्रदे विहरतो भुजदण्डघूर्णवार्घोषमङ्ग ! वरवारणविक्रमस्य ।
आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमाणः ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पुराणान्तरम् आस्फोट्य बाहुकुरतलेनाहत्य गाढा दृढम्बद्धा रशना कटिबन्धनवस्त्रं येन सः ॥ ६ ॥

तदा सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभारेण सङ्क्षोभितानामुरगाणां विषैरुच्छ्वसितोऽम्बुराशिर्यस्य स विषेण कषायीकृता भयङ्करा ऊर्मयो यस्य सः पर्यक् परितो धावन् धनुःशतं प्लुतः प्रसृतः नैतच्चित्रमित्याह—अनन्तबलस्येति ॥ ७ ॥

ह्रदे विहरतो भुजदण्डाहतोदकघोषं श्रुत्वा ततः स्वसदनाभिभवं निरीक्ष्य तदसहमानः सर्पः समसरत् समाजगाम ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विप्रुष्मतेति । अप्यमाणपयस्तया सदा जवेन तत्कारणानामुपलनाद् इति मारुतस्यापि दाहकत्वमुक्तम् अन्यञ्च विशेषः श्रीहरिवंशे—

"दीर्घं योजनविस्तार(दुस्तरं) मगम्यं त्रिदशैरपि ।
गम्भीरमक्षोभ्यजलम् निष्कम्पमिव सागरम् ॥
दुःखोपसर्पं तीरेषु ससर्पैर्विपुलैर्बिलैः ।
विषारणीभवस्याग्नेर्धूमेन परिवेष्टितम् ॥
तृणेष्वपि पतत्स्वप्सु ज्वलन्तमिव तेजसा ।
समन्ताद्योजनं साग्रं तीरेष्वपि दुरासदम्" ॥ इति ।

एवं भूमिगुहायां तत्पुरीजलस्तम्भविद्यया जलमध्य एव वा ॥ ५ ॥

वेगः शीघ्रप्रसर्पणं चण्डेति अप्रतिकार्यत्वादितोऽयं निःसार्य एवेति भावः । तेन कालियेन हेतुना अधिरुह्य तच्छिखरे आरुह्य तथा च तत्रैव "आरुढश्चपलः कृष्णः कदम्बशिखरे मुदा" इति ततः कदम्बात् गाढरसन इत्यनेन केशादीनामपि गाढबन्धनमुपलक्ष्यते तथा च तत्रैव "बध्वा परिकरं दृढम्" इति न्यपतदित्यत्र हेतुः खलानां संयमनाय अवतारः स्वलोकादवतरणं किंवा मत्स्याद्यवतारा अपि यस्य सः इति कालियदमनार्थमित्यर्थः । एकः कदम्बः किमवशिष्टः श्रीकृष्णवृक्षत्वात् कृष्णवत् "कदम्बः कृष्णवृक्षो हि कालियह्रदसमीपगः । तस्मादेको न शुष्कोऽसौ विषहारकरः परात्" इति प्रसिद्ध्या श्रीकृष्णेनैव स विहाराय रक्षित इति गम्यते, पराणिति वचनात् तत्सन्निवासिनो वृक्षगणा अपि न मृता इत्यायातमेवेत्यर्थः ॥ ६ ॥

पुरुषसारत्वादेव निपातवेगः अन्यत्तैः । यद्वा, पुरुषस्य भगवतः सारेण किञ्चिद्बलप्राकट्येन यो निपातस्तस्य वेगेन जवेन संक्षोभितः अत एवोरगविषोच्छ्वसिताम्बुराशिर्यस्य स कषायितेति पाठः श्रीचित्सुखस्य श्रीस्वामिपादानां च सम्मतः कषायीकृत इति व्याख्यानात् । कषायोऽत्र काद्वरसो रक्तः पीतवर्णो वा "निर्यासेऽपि कषायोऽस्त्री" इत्यत्र क्षीरस्वामिना तत्तद्व्याख्यानात् श्रीमन् हे विवेकिन् ! इति राजानमाश्वसयति, धनुषः प्रमाणमुक्तम् "अष्टभिर्यवमध्यैः स्यादङ्गुलं द्वादशाङ्गुलम् । तालं वितालको हस्तो हस्तौ द्वौ किष्कुरुच्यते । किष्कुद्वयं धनुः प्रोक्तम्" इति. अतः पूर्वं तावत्प्रदेशमतिक्रम्यैव वाधा गावश्च रक्षिता इति ज्ञेयम् अनन्तं बलं शक्तिर्यस्य तत्कर्म । यद्वा, अनन्तस्य नागराजस्यापि विषादियलं यस्मात्तस्य तद्विषं किम्? अपि तु न किञ्चिदपीत्यर्थः ॥ ७ ॥

विहरतः विचित्रजलवाद्यसम्भारादिक्रीडां कुर्वतः वरवारणो दिग्गजस्तद्वद्विक्रमस्य अङ्गेत्यव्ययं राज्ञः शोकनिरासार्थं सखालनसम्बोधनम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गाढरशनः दृढीकृतवासःपरिधानः ॥ ६ ॥

पुरुषसारः कृष्णः विषोच्छ्वसिताम्बुराशिः विषजुष्टप्रवृद्धवारिपूरः धनुःशतं धनुःशतहस्तमितं देशं पर्यक्प्लुतः तीरप्रान्तमलङ्घयत् ॥ ७—८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्य ह्रदस्य तीरगाः स्थिरजङ्गमाः वृक्षादिरूपा मृगादिरूपाश्च प्राणिनः विप्रुष्मता शीकरयुक्तेन विषजलतरङ्गाणां मारुतेनाभिमर्शिताः संस्पृष्टाः म्रियन्ते तथाविधः कश्चिद्ध्रदः कालीयस्यावासभूतः कालिन्द्यामासीदित्यन्वयः ॥ ५ ॥

स्पर्शमात्रेणैव व्यापनशीलं विषमेव वीर्यं बलं यस्य तं कालीयं ह्रदं वा तेन दुष्टां नदीं यमुनां चालोक्य खलानां संयमनाय दमनायाऽवतारो यस्य सः हेतुगर्भमिदं तस्मात् कदम्बं वृक्षमधिरुह्य गाढा दृढीकृता रशना काञ्ची यस्य सः आस्फोट्य करतलेन भुजमुत्सङ्गं वा आहत्याद्भुतात्ततः कदम्बात् कथञ्चिद्विषोदे न्यपतत् अमृतमाहृत्य गरुत्मताक्रान्तत्वात्स कदम्बो विषजलेनापि न शुष्क इत्याहुः ॥ ६ ॥

सर्पस्य ह्रदः पुरुषवर्यस्य पुरुषोत्तमस्य निपातवेगेन संक्षोभितानामुरगाणां विषैरुच्छ्वसितः प्रवृद्धोऽम्बुराशिर्वारिपूरो यस्य विषैः कषायिताः कषायीकृताः क्वथिताः भीषणा ऊर्मयो यस्मिन् तथाभूतः पर्यक् परितोऽश्चधनुश्शतं तत्परिमाणस्थलं प्लुत आवृतः, नैतच्चित्रमित्याह—अनन्तबलस्य तत्किं कियत् ॥ ७ ॥

तस्मिन् ह्रदे विहरतः गजश्रेष्ठस्येव विक्रमो यस्य तस्य भगवतो भुजदण्डाहतोदकघोषमाकर्ण्य अङ्ग हे राजन् ! स्वनिलयतिरस्कारमसहमानश्चक्षुःश्रवाः सर्पः स्वसैन्यसहितः समसरदाजगाम ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विप्लुष्मता विशेषणा वहता " प्रुष प्लुष दाहे " इति धातुः विषेण विशिष्टमुदं विषोदं तेन युक्ता ऊर्मयः विषोदोर्मयः यस्य स तथा स चासौ मारुतः विषोदोर्मिमारुतः तेनाभिमर्शिता आवृत्य गृहीताः यस्य ह्रदस्य ॥ ५ ॥

तेन कालियेन खलानां संयमनार्थं निग्रहार्थम् अवतारो यस्य स तथा आस्फोट्य द्विगुणीकृतहस्तप्रहारं कृत्वा गाढरशनः दृढबद्धकक्षप्रदेशः विषोदे विषमिश्रितजले ह्रद इति शेषः ॥ ६ ॥

सर्पस्य निवासभूतह्रदः सर्पह्रदः पुरुषसारस्य पुरुषवरस्य पुरुषश्रेष्ठस्य पुरुषोत्तमस्येत्यर्थः । निपातवेगेन सङ्क्षोभितस्य सञ्चालितस्य स्वस्थानस्थितिक्लिष्टस्योरगस्य विषेण सह उच्छ्वसितः उद्रेचितः अम्बुराशिर्यस्य ह्रदस्य स तथा विषकषायेण विषक्वाथेन विषरागेण वा विभीषणोर्मिभिः भयङ्करतरङ्गैर्भिभः भयजनकः "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" इति यादवः । एवंविधो ह्रदो धनुश्शतं तीरस्थानमुल्लङ्घ्य पर्यक्प्लुतः परितः उद्रिच्य गतः हरेरेतन्न चित्रमित्याह-अनन्तबलस्येति । लक्षयोजनविस्तारायामपरिमितभूच्छावनेऽपि न चोद्यं किमुत धनुःशतमित्यर्थः ॥ ७ ॥

अङ्ग नृप ! शृणु वारवारणविक्रमस्य गजेन्द्रविक्रमस्य यद्वा भक्तैरवयवैः वरणीयस्य वारणस्य विक्रम इव विक्रमो यस्य स तथा तस्य हरेर्भुजदण्डाभ्यां घूर्णस्य मन्द्रध्वनितया क्षुब्धस्य वारः जलस्य घोषमाश्रुत्य तस्मात्स्वसदनाभिभवो यस्तमसृष्यमाणः चक्षुःश्रवाः सर्पः तं कृष्णं समसरत् संसृतवान् बाधितुमागतवानित्यर्थः "वरो ना रूपजामात्रोर्देवादेरीप्सिते वृते" इति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विप्रुष्मतेति जलस्तम्भविद्यया तन्मध्य एव तत्पुरीदुःखोपसर्पे तीरेषु ससर्पैर्विपुलैरिति श्रीहरिवंशदृष्ट्या विलेष्वपि ॥ ५—६ ॥

पुरुषस्य भगवतः सारेण किञ्चिद्बलमाकट्येनेत्याद्यपि प्राह्यं कषायितेति पाठः श्रीस्वामीचरणस्यापि मतः कषायीकृता इति व्याख्यानात् ॥ ७—८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

परितो दोषमाह-विप्रुष्मतेति । बिन्दुसहितेन विषोदसम्बन्धिनामूर्मीणां चलनेन जातेन वायुना अभिमर्शिताः स्पृष्टा एवोभयकूले विद्यमानास्तीरगा भूमिष्ठा अपि प्राणिनः स्थावरा वृक्षा जङ्गमा मण्डूकादयोऽपि प्रमादादप्यागता म्रियन्ते लतावृक्षशाखाश्च वर्तमानास्तत्रयान्तीति तथोक्तम् ॥ ५ ॥

एतादृशो दोषः परिहरणीय इति भगवानुद्यमं कृतवानित्याह—तमिति । आदौ भगवान् स्वयं तत्र गत इत्याह, तं कालियं प्रसिद्धमदेन न निराकार्य चण्डवेगं कालवदतिवेगवत्तरम् अत एव भगवतैव शक्यप्रतीकार इत्यवेक्ष्य कदम्बमधिरुह्य ततोऽतितुङ्गात् बाहुस्फोटनं कृत्वा मल्लभावाविष्करणेन विषोदे न्यपतदिति सम्बन्धः प्रथमत एव चण्डवेगं तत्रापि विषं वीर्यं यस्येति उपासिता देवता तस्य प्रत्यक्षेण सूचितम् अत एव भगवदतिक्रमोऽपि विषमिति सर्पं इति... तद्भेदनात् भूत्वावतीति च अत एव विषस्य चण्डवेगता गु... उक्तः विषस्यापि पराक्रमः तेन दुष्टमिति विशेषणांशम... अत एवाधिदैविकेन दुष्टा देवाधिदैवं विना नान्येन समीचीना कर्तुं शक्या चकारात्तत्रापि दुष्टं समीचीनं कर्तुं खलसंयमनावतार इति स्वावतारप्रयोजनमपि तत्खलाः परोपद्रवकारिणः तेषां संयमो नियमनं जीवने दोषनिवृत्तौ दोष... मेव दूरीकरोति न मारयतीति अन्यदा मारयतीति निय... नियमनार्थमेवावतारः कृष्ण इति सदानन्दः दोष... निवृत्यर्थं तज्जातीयश्च कदम्बो वृक्षः स हि तुङ्गे उच्चे वर्त... स हि कदम्बो भगवत्कृत एव गरुडस्थानभूतस्तत्रागत्य गरु... कालियनिर्गमनं मारणार्थं प्रतीक्षते गरुडकृपयैव न शुष्य... विप्रुष्मनेति विशेषणात् सजलवायुस्पर्श एव मरणस्योक्तत्वा... ऊर्मिजनितस्यैव वायोः तथात्वात् उच्चैः स्थितोऽयं महा... वृक्षो न म्रियन्त इति सिद्धान्तः प्रथमतस्तस्यारोहणं कृत्वा... ततो वृक्षादतितुङ्गात् अत्युच्चैः रोधसि प्ररूढादत्युच्चा... आधिदैविकेन सह समानेन युद्धं कर्त्तुं आस्फोटनं कृत्वा म... कालेन भूमौ मर्यादाभङ्गो मा भवत्विति गाढा रशना यस्य... तादृशो भूत्वा नितरां आस्फालनं कृतवान् ॥ ६ ॥

स्थानस्य क्रूरतानिर्देशो भगवन्माहात्म्यज्ञापनाय तं... यज्जातं तदाह-सर्पह्रद इति । पुरुषसारस्य पुरुषोत्तमस्य निपातवे... गेन सम्यक् क्षोभितो योऽयमुरगः तस्य यद्विषोच्छ्वसितं विशेषच्छ्व... तेन उच्छ्वसितः अम्बुराशिर्यस्या उच्छ्वसितपदमावृत्यायोजनी... एतादृशो ह्रदः परितः प्लुतः उत्प्लुतः सर्पायामिवोच्छूनो अ... उत्प्लुत्य गच्छन्निव जातो वा भगवन्निपातेन जाठचोभादितोऽन्य... गमिष्यामीति विशेषा कषायाः विशेषेण भीषणाः ऊर्मयो... यस्य तादृशश्च स एतादृशो धावन् जातः अधावदिति... अडभाव छान्दसः धनुःशतं हस्तानां चतुःशतम् अनन्तं ब... यस्य तादृशस्य नैतदाश्चर्यम् अनन्ते काले वा बलं यस्मात् ए... जगदेवोत्प्लुतं करोति विषकषायविभीषणोर्मिकथनात् सर्वमा... कत्वं तस्योक्तम् उपासितभगवच्चरित्रमेतत् अत एवोपाधि... भगवतद्रूपसामर्थ्येन सहितः ॥ ७ ॥

भगवत्समीपमागत इत्याह-तस्येति । ह्रदे विहर... भगवतः समसरत् समीपमागतः भुजदण्डयोः प्रहारे... पूर्यायमानं यद्वाजलं तस्य घोषम् आश्रुत्य तदसृष्यमाण... समागत इति सम्बध्यते आदौ निपाते किं जातमित्याश... विष्टः ततः कश्चित् विहरतीति श्रुतवान् ततोऽपि ता... बाहुप्रहारेण जले शब्दः श्रुतः शब्दे हेतुः वरवारणवि... मस्येति वर उत्कृष्टो यो वारणो गजः तद्वत् विक्र... यस्येति तस्य हि स्वभावो जले विहरणं सर्वोपमर्दाङ्ग... यतोऽपि तथा न श्रवणमात्रेण तस्यागमनं किन्तु तेन ग... वता स्वसदनस्याभिभवं श्रुत्वा तेन शब्देन वा चक्षुःश्र... इति श्रवणदर्शने एकत्रैव अतः श्रुतमपि दृष्टमिव मत्वा... सम्यगागत इति स्वप्रौढिसहितः तत् स्वसदनाभिभवमसृष्य... माण इत्यागमने हेतुः ॥ ८ ॥

---

तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुन्दरास्यम् ।
क्रीडन्तमप्रतिभयं कमलोदराङ्घ्रिं सन्दश्य मर्मसु रुषा भुजया चछाद ॥ ९ ॥
तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः ॥ १० ॥
गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः ।
कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे ॥ ११ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विप्रुष्मता अम्बुकणयुक्तेन विषोदकतरङ्गस्पर्शिमारुतेन अभिमृष्टाः स्पृष्टाः ॥ ५ ॥

तं कालियं कदम्बमिति भाविना श्रीकृष्णचरणस्पर्शभाग्येन स एकस्तत्तीरे न शुष्कः अमृतमाहरता गरुत्मताक्रान्तत्वादिति पुराणान्तरमिति श्रीस्वामिचरणाः गाढं दृढं यथा स्यात्तथा रशना रशनापदोपलक्षिताः कुन्तलोष्णीषादयोऽपि येन सः आस्फोट्य बाहुं करतलेनाहत्य ॥ ६ ॥

ततश्च पुरुषस्य कृष्णस्य सारेण बलेन यो निपातवेगस्तेन संक्षोभितानाम् उरगाणां विषैरुच्छ्वसितोऽम्बुराशिर्यस्य सः विषेण कषायीकृता रक्तपीतवर्णीकृता भयङ्करा ऊर्मयो यस्य सः "निर्यासेऽपि कषायोऽस्त्रीत्यत्र,, क्षीरस्वामिना तथा व्याख्यानात् पर्य्यक् परितः धनुश्शतं प्लुतः प्रसृतः—
"अष्टभिर्यवमध्यैः स्यादङ्गुलं नैरिभिर्भवेत् ।
तालं त्रिनालको हस्तो हस्तौ द्वौ किष्कुरुच्यते ॥
किष्कुद्वयं धनुःप्रोक्तम्" इति ॥ ७ ॥

विहरतः विचित्रजलवाद्यसन्तारादिना क्रीडतः भुजदण्डाभ्यां घूर्णां येषां तथाभूतानां वारां जलानां घोषं श्रुत्वा तत्तो धाम्नादेव स्वसदनस्याभिभवं निरीक्ष्य तत्तम् असहमानः ॥ ८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्य नीरगाः स्थिरजङ्गमाः स्थावराः जङ्गमाश्च विप्लुट् विषाम्बुकणो विद्यते यस्मिन् तेन विषोदकोर्मिस्पर्शिमारुतेन अभिमर्शिताः परितः स्पृष्टा म्रियन्ते स ह्रदः आसीत् ॥ ५ ॥

खलसंयमनाः अवताराः यस्य सः स्वयमाविर्भूतो भगवान् कृष्णः तं कालियं चण्डवेगं तीव्रवेगं यद्विषं तदेव वीर्यं यस्य तं तेन दुष्टां नदीं प्रावृषि अतिवृष्ट्यां सत्यां तज्जलक्लेदादिस्वर्थः। काद्रवेयैर्नियुक्तेनामृतमाहरता श्रीगरुडेनाक्रान्तत्वात् कदम्बस्तत्तीरे न शुष्कस्तमारुढः गाढा दृढीकृता रशना काञ्ची येन सः बाह्वाद्यङ्गानि करतलाभ्यामास्फोट्य तत्र नद्यां निपतत् ॥ ६ ॥

तदा स सर्पह्रदः पुरुषसारस्य पुरुषोत्तमस्य पतनवेगेन संक्षोभितानामुरगाणां विषैरुच्छ्वसितः उद्रिक्तोऽम्बुराशिर्यस्य सः विषैः कषायाः कषायीकृताः विशेषतो भीषणा ऊर्मयो यस्य सः पर्य्यक् परितो धावन् धनुः शतं प्लुतप्रसृतः एतच्चित्रं नेत्याह—अनन्तबलस्य किं तदिति ॥ ७ ॥

तस्य श्रीपुरुषोत्तमस्य भुजदण्डाहतोदकघोषमाकर्ण्य तत्तनः स्वसदनाभिभवं च निरीक्ष्य तदमृष्यमाणः तत्स्वसदनाभिभवमसहमानः समसरत्समाजगाम ॥ ८ ॥

———

भाषा टीका ।

जा दह के विषहरे जल कणमिश्रित पवन के स्पर्श सों नीर पै प्राप्त होयवे वारे स्थावर जंगम सब प्राणी मृत्यु जांय हैं ॥ ५ ॥

या कालो के बडे प्रचंड वेगवारे विषके बलको देखिके, और वाके संसर्ग सों श्रीयमुनाजी को दूषित देखकें, श्रीकृष्ण, खलन के दंड देवे कूं ही अवतार धारण कियो है, तासों बडे ऊंचे कदंब पै चढके फेंट बांधिकें ताल ठोंक के वा विषके कुंड में कूद परे ( जा कदंब पै तें भगवान् कूदे वे वोई कदंब है जापै गरुडजी ने स्वर्ग तें अमृत लायके धर्यो हो ताई सूं बचि रह्यो( ॥ ६ ॥

परम पुरुष श्रीकृष्ण जा समें वा ह्रद में कूदे तब उनके बोझ के वेगतें बडो खेदित भयो जो सर्प ताके विष के श्वास तें ऊपर को जल उछरिवे लग्यो और चारो ओर वा विषहरे जलकी भयानक लहरें सो ( १०० ) धनुष पर्यंत जान भई । हे राजन् ! अनंत बलवारे श्रीकृष्ण को ये कहा पराक्रम है ? ॥ ७ ॥

हे राजन् ! श्रेष्ठ हाथी के सदृश पराक्रम वारे श्रीकृष्ण के वा ह्रद ( दह ) में विहार करते समें श्रीभुजन सों घुमेर खायके जो जल को शब्द भयो ताकूं सुनकें अपने घर को पराभव मान के वाकों न सहन करिके वो कालो सरपट्यो- ई तो सही ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रेक्षणीयश्च सुकुमारश्च घनवदुज्ज्वलश्च तं श्रीवत्सपीतवसनं हृदे विहरतः श्रीवत्सेन संयुक्तमुज्ज्वलपीतं वस्त्रं यस्य तं भुजया भोगेन चछादावेष्टयत् ॥ ९ ॥

स प्रियो येषां ते तत्प्रियास्ते च ते सखायश्चेति तथा ॥१०-११॥

**अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः ।**
**उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥ १२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भुवि भूकम्पादयः दिवि उल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः आसन्नं भयं शंसितुं शीलं येषां ते ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तादृशोऽपि दुष्टोऽसौ तथाऽचेष्टतेति कालियस्य महापराधं दर्शयन् व्रजजनभावेनानुशोचन् विशिनष्टि—प्रेक्षणीयेत्यादिना । क्रीडन्तमित्यत्र हेतुः अप्रतिभयमिति तच्च कालियस्य निर्बुद्धित्वं सूचयति, चक्षुः श्रवा इति. प्रस्तुतत्वादेव ज्ञेयं कया भुजया भुजाकारत्वात्तस्य भोग एव भुजा यतो भुजग इत्यप्युच्यते तस्माद्भोगेनेत्यर्थः भुजग इति पाठे भोगेनेति शेषः ॥ ९ ॥

तस्य प्रियसखा इति परमसौहार्दमुक्तं पशुपा इति स्वभावसारल्येन सुस्निग्धचित्तत्वं कृष्णे अर्पिता आत्मानः सुहृदादयश्च यैस्ते तत्साहाय्याय कृतसर्वार्पणा इत्यर्थः । तत्र सुहृदः पितृभ्रात्रादयः अर्था धनानि कामा लोकद्वयभोगाः सुहृच्छब्देन गृहीतस्यापि कलत्रस्य पृथङ्निर्देशो विशेषविवक्षया किन्तु कलत्रपदेन केचिल्लब्धयशोपवीता ये ज्येष्ठास्तेच सखायो लभ्यन्त इति सर्वेषां तेषामनन्यापेक्षत्वम् अतो भृशार्ता अत्यर्थदुःखिताः सन्तः आर्त्तस्वरेण क्रन्दन्तो वा अत एव दुःखेन अनुशोकः वारं वारं शोचनं भयं च तं विना कथं भविष्याम इति ताभ्यां मूढा विवेकहीना धीर्येषां तथाभूता नष्टचेतना वा सन्तः यद्वा नागभोगपरिवीतमालोक्यादौ भृशार्ताः अदृष्टचेष्टं चालोक्य दुःखानुशोकभयैर्मूढधियः सन्तो नितरां छिन्नमूलवृक्षवदचेष्टत्वादिना पेतुः मूढधीत्वादेव तं ह्रदं न प्राविशन्निति ज्ञेयं तज्जलाप्लुतदेशपतनेऽप्येषां विषाक्रान्तत्वाभावः श्रीकृष्णस्य स्पर्शप्रभावेन ह्रदस्यापि निर्विषीकरणात् अदृष्टचेष्टत्वं च कालियस्य निःसारणाय तस्मिंस्तत्पत्नीषु च तद्दोषातिशयप्रदर्शनार्थम् ॥ १० ॥

क्रन्दमाना आर्त्तनादमुच्चैः कुर्वत्यः इवेति लोकोक्तौ रुदन्त्यः रुदत्यः अश्रूणि मुञ्चन्त्यः तस्थिरे इति परमवत्सलानां गवादीनामत्यन्तशोकेनापि स्तब्धतापत्तेः कदाचिद्वज्रविशेषघातेन मृतस्यापि प्राणिन ऊर्द्ध्वावस्थितिवत् आत्मनेपदमार्षं गवाद्युपलक्षितत्वेन महिष्यादयो हरिण्यादयश्च ज्ञेयाः पशुश्चेति वक्ष्यमाणात् तेषां किञ्चिद्दूरचरत्वेन पश्चादागमनादत्रानुक्तिरियमिति ज्ञेयम् ॥ ११ ॥

अथानन्तरमेव दारुणाः स्वभावतो महाभयङ्कराः महोत्पाताश्च महादुर्निमित्तं स्वभावतः ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

फणां चछाद छादयामास पशवः पशुपायाः तत्प्रभावानभिज्ञाः ॥ १०—११ ॥

आत्मनि शरीरे भुवि शृगालकृतादि दिवि निघातादि आत्मनि वामनेत्रस्फुरणादि ॥ १२—१६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भुजगः कालियस्तं कृष्णं मर्मसु सन्दश्य चछाद वेष्टितवान्, कथम्भूतम् ? प्रेक्षणीयश्च सुकुमारश्च घनवाग्मिनश्च तं श्रीवत्सशब्दोऽत्रार्शं आद्यजन्तः श्रीवत्सयुक्तं पीतं वस्त्रं यस्य तं च स्मितेन सुन्दरमाननं यस्य प्रतिपच्चाङ्घ्रयरहितं कमलवत्सुन्दरमङ्घ्री च यस्य तम् ॥ ९ ॥

नागस्य भोगेन देहेन वेष्टितमत एवादृष्टा इतरैर्लक्षिता चेष्टा यस्य तं कृष्णमालोक्य तस्य कृष्णस्य प्रियाः सखायः गोपाः भयेनार्त्ताः कृष्ण एवार्पिता आत्मानो मनांसि शरीराणि वा सुहृदादयश्च यैस्तथाभूताः अर्थां वित्तं कामा इष्टार्था दुःखादिभिः मूढा धियो येषां ते निपेतुः दुःखं मानसिकं शोको रोदनम् ॥१०॥

वत्सतर्यो दम्याः सुतरां दुःखिताः क्रन्दमाना आह्वयन्त्यः कृष्ण एव न्यस्तानीक्षणानि याभिस्ता रुदन्त्य इव तस्थुः ॥ ११ ॥

दिवि भुव्यात्मनीत्येवं त्रिविधा आसन्नभयसूचका उत्पाता बभूवुः तत्र भुव्युत्पाताः भूकम्पादयः दिव्युल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवदातः श्यामलः " अवदातोऽरुणे पीते श्वेते श्यामे निरामये " इति च. चछाद आच्छादितवान् आवृतवानित्यर्थः ॥९॥

परिवीतं परिवेष्टितम् अदृष्टचेष्टं निश्चेष्टम् ॥ १० ॥

वत्सतर्यः गर्भाधानयोग्यवयसः ॥ ११ ॥

त्रिविधा इत्युक्तं विविच्यते—दिवीत्यादिना । दिवि उत्पाताः आदित्यमण्डले कबन्धादिदर्शनं निर्घातादिभिः भुवि कम्पादिकम् आत्मनि देहे वामनेत्रस्फुरणादि आसन्नभयशंसिनः समीप भयसूचकाः ॥ १२—१४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीयुक्तं वत्सं वक्षो यस्य पीतं वसनं यस्य स च स तं भुजाकारत्वात्तस्य भोग एव भुजा यतो भुजग इत्यप्युच्यते तस्माद्भोगेनेत्यर्थः । भुजग इति पाठे भोगेनेति शेषः ॥ ९-१३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽपराधं कृतवानित्याह—तमिति । अयुक्तं कृतवानिति वक्तुं भगवन्तं वर्णयति—प्रेक्षणीयमिति । प्रेक्षणीयश्चासौ घनावदातश्च सात्त्विकादित्रिविधानामप्यादरणीयः अनेन लोकविरुद्धं तेन कृतमित्युक्तं भवति परमार्थतोऽपि विरुद्धं कृतवानित्याह-श्रीवत्सेन सहितं पीतवसनं यस्य प्रमेयविरोधः प्रमाण

**तानालक्ष्य भयोद्विग्ना गोपा नन्दपुरोगमाः ।**
**विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ १३ ॥**

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विरोधश्चोक्तः स्मितयुक्तं सुन्दरमास्यं यस्येति भक्तिमार्गविरोधश्च क्रीडन्तमिति रसशास्त्रविरोधश्च अप्रतिभयमिति नीतिशास्त्रविरोधश्च कमलां हूमिति सर्वोपास्यत्वेन ज्ञानादिविरोधश्च तत्रापराधं कृत्वा स्वस्थानं नेष्यामीति विचार्य रोषेण भुजया स्वकायेन फणेन वा आच्छादितवान् वेष्टितवान् वा ॥ ९ ॥

ततो यज्जातं तदाह—तमिति । नागशरीरेण परिवीतं शेषशयनाभिनयनकर्तारमत एवादृष्टचेष्टमालोक्य प्रलयो भविष्यतीत्याशङ्क्य तस्य भगवतः प्रियाः सखायश्च तादृशमार्त्ता जाताः ते ह्यात्मनिवेदिनः आत्मनिवेदिनां पृथक् स्थातुमुचितं अत एव व्याकुला जाताः तदाह कृष्णे भगवति अर्पितः आत्मा यैस्तः सुहृदः मित्राणि अर्थो धनं कलत्रं स्त्री कामाः पुत्रादयः सर्वं एवार्पिता यैः अत एव दुःखमात्मापि तत्र गतं इति अनु पश्चात् शोकश्च सुहृदोपि तत्र निवेदिता अतो उभाभ्यां मूढाः भयेन च गुणत्रयकार्यैः त्रिभिरपि मूढा अर्थेषां ते पूर्वं जीविना अपि मूर्च्छिताः सन्तो निपेतुः ॥१०॥

गावोऽपि गोपालवज्जाता इत्याह—गाव इति । स्त्रियः पुरुषाः बालाश्च क्रन्दमानाः सुदुःखिता जाताः तेषां चित्ते सात्त्विकभावाश्च मूर्च्छिताः किन्तु कृष्णे न्यस्तानि ईक्षणानि प्राणाश्च यासां ते सर्पादिभेदं न जानन्ति पश्यन्ति च कृष्णं किमयमेते तिष्ठतीति दुःखिताः क्रन्दत्य इति ग्राम्यपशुसङ्घत्वात् स्त्रीप्रयोग"ग्राम्यपशुसङ्घे ष्वतरुणेषु स्त्री"[१।२।७३]इत्यनुशासनात् यथा वा अविवेकयुक्ताः स्त्रियो रुदन्ति तद्वदेव तादृशे सर्वं एव ताः लोकाः भूतानि च कालादयोऽपि च भगवान् शेषशायी प्रलयं करिष्यतीति ज्ञात्वा प्रलये यावन्त उत्पाताः तान् सर्वानेव कृतवन्तः ॥ ११ ॥

ततो गोकुलवासिनस्तान् दृष्ट्वा भीता जाता इति वक्तुं प्रकृतोपयोगित्वाद् व्रज एवोत्पातान् वर्णयन्ति—अथेति, सर्वकालविलक्षणत्वमथेति महोत्पाताः प्रलयकालीनाः दिवि भुव्यन्तरिक्षे चेति त्रिविधा हि युक्तश्चायमर्थः प्रलये हि ते कर्त्तव्याः अन्यथाऽधिकारिणो दण्ड्याः स्युः । किञ्च, शीघ्रमेव प्रलयो भविष्यतीति आसन्नभयशंसिनः सूचका अपि स्वरूपतोपि भयानका इत्याह अतिदारुणा इति दिवि उत्पेतुरुत्पन्नाः भुवि आत्मनि शरीरे च उत्पन्नाः तद्देशोत्पन्नत्वादतिशीघ्रानिष्टपर्यवसायित्वम् ॥१२॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रेक्षणीयमतिसुखदमपि रूपं कालियं प्रति विपरीतमभूदित्याह—तमिति । घनवदुज्ज्वलं श्रीवत्से विहारवशात् आयातं पीतवसनं यस्य तं यद्वा श्रिया लक्ष्मीरेखया युक्तं वत्सं वक्षो यस्य पीतं वसनं यस्य स च स च तम् "उरो वत्सं च वक्षश्च"इत्यमरः भुजया भोगेन ॥ ९ ॥

परिवीतं वेष्टितम् अदृष्टचेष्टमिति कालियस्योत्साहवर्द्धनार्थं यथा भीतस्तब्धवत् स्थितं यद्वा अरे कालिय त्वया यथेष्टं प्रथमं दश्यतां वेष्ट्यताम् अहं पश्चात् बलं दर्शयिष्यामीति वीरदर्पेण स्थितं पशुपाः केचित् गोपाः शालिक्षेत्रस्थाः कृषकाश्च शीघ्रमायाताः ते कीदृशाः कृष्णेऽर्पिता लालनार्थमात्मादयो यैस्ते ॥ १० ॥

रुदन्त्य इवेति भयधैर्यग्रेणाश्रूणां शोषात् ॥ ११ ॥

त्रिविधाः भुवि भूकम्पादयः दिवि उल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः भगवतः स्वल्पमङ्गलाशङ्कारहितेऽपि यदुत्पातप्राकट्यं तद्गवां गोपादीनां च दुःखसूचनार्थं किंवा तत्तदधिष्ठातृदेवानामपि कृष्णे प्रीतिमत्त्वेनैश्वर्यविस्मरणात् कृष्णेऽप्यशुभाशङ्किनः उत्पातं प्रकटयामासुरिति ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आगत्य किं कृतवानित्याकाङ्क्षायामाह—तमिति । तं श्रीकृष्णं मर्मसु सन्दश्य भुजया भोगेन चछाद आवेष्टयत् ॥ ९ ॥

स प्रियो येषां ते तत्प्रियाः ते च ते सखायश्च ते तथा ॥१०-११॥

आसन्नं सन्निहितं भयं शंसितुं शीलं येषां ते ॥ १२-१३ ॥

भाषा टीका ।

देखिवे योग्य सुकुमार मेघ की तुल्य निर्मल वर्ण जाको, श्री वत्स के चिन्ह कों धारण करें, पीतांबर की काछिनी काछें, मंद मुस्क्यान सों सुन्दर जाको मुख, निर्भय क्रीड़ा करन वारे, कमल के गाभे सरी के जिन के चरन की शोभा, ऐसे श्रीकृष्ण कूं वो कालीनाग बडे रोष सें मर्म स्थलन में डसिकें अङ्ग में लिपिट गयो ॥ ९ ॥

समस्त देह में सर्प लिपिट गयो ताहे सों नहीं दीखे है चेष्टा जिनकी ऐसे श्रीकृष्ण कूं देखिकें तिनके प्यारे ग्वाल बाल बहुत दुःखित होत भये, श्रीकृष्ण में ई अर्पण किये हैं सगरे आत्मा सहित सुहृद अर्थ कलत्र और मनोरथ जिनने ऐसे दुःख शोक भय सों मोहित बुद्धिवारे ह्वै यकें धरती गिर परत भये ॥ १० ॥

गाय, वृषभ, छोटी २ बछिया, अति दुःखित होयकें रम्हावें हैं, कृष्ण की ओर टक टकी लगायकें देखि रहे हैं, डर के मारें रोबने से ठाढे हैं ॥ ११ ॥

इतनेई में व्रज में अति दारुण त्रिविध उत्पात उठे भूमि में कंप आकाश में तारापतन और देह में वामांगस्फुरण इत्यादि होत भये जो जल्दी आयवे वारी भय को जनावन वारे हैं ॥१२॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानालक्ष्य गोकुलाद्विनिर्जग्मुरिति तृतीयेनान्वयः भयोद्विग्ना भयहेतुभ्यो भीताः भयेन कम्पमाना इति वा ॥ १३ ॥

तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ।
तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ॥ १४ ॥
आबालवृद्धवनिताः सर्वेऽङ्ग ! पशुवृत्तयः ।
निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥ १५ ॥
तांस्तथा कातरान् वीक्ष्य भगवान् माधवो बलः ।
प्रहस्य किञ्चिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

न तं विदन्तीत्यतद्विदः ॥ १४ ॥
पशुवृत्तयोऽतिवत्सलाः ॥ १५ ॥
कातरान् भीतान् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नागतमिति त्रिकम् । विना रामेणेति परमसमर्थस्य स्निग्धस्य गम्भीरस्य सदा साहाय्यपरस्य तस्य समक्षे तदनुजस्य तादृशव्यसनता न सम्भवेदिति भावः । मन्यत्तैः, यद्वा, आश्चर्येण भयोद्विग्ना बभूवुः ॥ १३ ॥

अत एव निधनमेव प्राप्तं मत्वा नितरां धनं श्रीयमुनाहृदरूपं स्वविहारसर्वस्वमिति सरस्वतीसम्वादः अतद्विदः तन्माहात्म्यमननुसन्दधाना इत्यर्थः । ननु कथं तत्रैव तेषां सन्देहो जातस्तत्राह—स एव प्राणो जीवनं येषाम् अतस्तस्मिन्नेव मनो येषामिति ॥ १४ ॥

ते तदेकप्रियत्वेन प्रसिद्धाः पशुवृत्तित्वेन तदीयवात्सल्यस्वभावभाविता इत्यर्थः । पशुवद्वृत्ति वात्सल्यांशे येषामिति वा अत एव दीनाः इतस्ततो मुहुः स्खलन्तो निपतन्तश्चेत्यर्थः । कृष्णः व्रजजनचित्ताकर्षकः कथं कुत्रास्तीति तद्दर्शनोत्सुकाः सन्तः यद्वा स्वभावत एव तादृशाः ॥ १५ ॥

तथा तादृशकातर्यं प्राप्तानपि तान् वीक्ष्य स गोकुलैकप्रियोऽपि बलः भगवान् सर्वशक्तियुक्तोऽपि माधवः सर्वविद्यापतिरपि असमर्थ इव किञ्चिन्न कृतवान् अज्ञ इव च न किञ्चिदुपदिष्टवान् किन्तु तद्दुःखेन दुःखितोऽपि तेषामेव किञ्चिद् धैर्यार्थं प्रेति प्रकटं बहिरेव हसित्वा तूष्णीमासीत् अयं निजानुजस्य तत्त्वज्ञः स्निग्धस्य हसतीति नात्र चिन्तेति बोधयितुमित्यर्थः । एवं तेषां प्राणरक्षायोग्यत्वात् नाश एव तदा नस्याविर्भूतः स्वभावत एव सर्वसमाधानशक्तिमयत्वात् भगवल्लीलया इति भावः । तर्हि कथमीदृशेऽपि दुःखसङ्कटे स्वसामर्थ्यं न व्यञ्जितवान् न च तत्प्रभावं स्पष्टमुपदिष्टवान्? तत्राह प्रभावज्ञ इति तज्ज्ञत्वेन तदिच्छां विना तत्कर्त्तुं न शक्तवानित्यर्थः । माधवपदं चेदं श्रीहरिवंशे व्युत्पादितम्—

मा विद्या च यतः प्रोक्ता तस्या ईशो यतो भवेत् ।
तस्मात् माधवनामासि धवः स्वामीति कीर्तितः ॥

इति ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तानुत्पातानालक्ष्य भयेनोद्विग्नाः कम्पितगात्राः नन्दप्रभृतयो गोपा रामेण विना गाश्चारयितुं गतं कृष्णं ज्ञात्वा ॥ १३ ॥

तन्माहात्म्यानभिज्ञास्तैर्दुर्निमित्तैर्निधनं तस्य विपत्तिं प्राप्तां ज्ञात्वा यतस्तस्मिन्नेव प्राणास्तस्मिन्नेव मनांसि च येषां शोकभयाभ्यामातुराः ॥ १४ ॥

सर्वे अङ्ग हे राजन् ! पशुवत्सलाः धेनुवद्वात्सल्ययुक्ताः कृष्णदर्शने निमित्ते लालसाः निर्जग्मुः ॥ १५ ॥

तदा तान्निर्गच्छतः कातरांश्चावलोक्य माधवो बलो मधुवंशप्रभवत्वान्माधवः अनुजस्य प्रभावाभिज्ञोऽत एव किञ्चिदपि नोवाच ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

पशुवत् वृत्तिर्येषां ते तथा दृष्टमात्रव्यवहारिणः ॥ १५ ॥
माधवो मधुकुलोद्भवः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निधनमिति नितरां धनं श्रीयमुनाहृदरूपमिति वा वार्थः ॥ १४—१५ ॥

भगवान् सर्वशक्तियुक्तोऽपि माधवः सर्वविद्यापतिरपि असमर्थ इव न किञ्चिदुपदिष्टवान् किन्तु तद्दुःखेन दुःखितोऽपि तेषामेव किञ्चिद्धैर्यार्थं प्रकटं बहिरेव हसित्वा तूष्णीमासीत् निजानुजस्य तत्त्वज्ञः स्निग्धश्च हसतीति नात्र चिन्तेति बोधयितुमित्यर्थः । तस्माच्च हेतोरतिदुःखितमाज्ञाय विचार्य तर्हि कथमीदृशेऽपि सङ्कटे स्वसामर्थ्यं न व्यञ्जितवान् न च तत्प्रभावं स्पष्टमुपदिष्टवान्, तत्राह—प्रभावज्ञ इति । तज्ज्ञत्वेन तदिच्छां विना तत्कर्त्तुं न शक्तवानित्यर्थः । माधवपदं चेदं श्रीहरिवंशे व्युत्पादितम्—

"मा विद्या च यतः प्रोक्ता तस्या ईशो यतो भवेत् ।
तस्मान्माधवनामासि धवः स्वामीति कीर्त्तितः" ॥

इति ॥ १९—२० ॥

तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ।
भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥ १७ ॥
ते तत्र तत्राब्जयवाङ्कुशाशनिध्वजोपपन्नानि पदानि विश्पतेः ।
मार्गे गवामन्यपदान्तरान्तरे निरीक्षमाणा ययुरङ्ग ! सत्वराः ॥ १८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ते च व्रजस्थास्तानालक्ष्य एते उत्पाता भवन्तीति ज्ञात्वा भयेनोद्विग्ना जाताः यतो गोपाः नन्दः कर्मसिद्धान्तयुक्तः पुरोगमो मुख्यो येषां कृतनिरोधा वा विधेयिनः कृष्णे विद्यमाने अस्माकं प्रलयोपि न भविष्यतीति निश्चित्य प्राकृतबुद्ध्या कल्पयन्ति स्म । विना रामेणेति रामो हि बलिष्ठः लोकप्रतीत्या धेनुकोपि तेनैव मारित इति रामेण विना भगवानेव गाश्चारयितुं गतः तन्मध्ये उत्पाताश्च जायन्ते ॥ १३ ॥

अतो दुर्निमित्तान्यत्यनिष्टं सूचयन्तीति विपरीतं ज्ञात्वा निर्जग्मुरित्युत्तरेण सम्बन्धः विपरीतज्ञाने हेतुः अतद्विद इति तस्य भगवतः माहात्म्यं न विदन्तीति उचितमेव तेषां लौकिका हि ते लौकिकानां प्रियो ऽनिष्टं भावयन्त्यप्रिय इष्टमिति स्थिति-वचननिषेधविषयत्वेन सर्वदा ऽनिष्टमेव भावयति प्रियः स्नेहस्य तथा भावकस्वभावत्वात् अन्यस्य विपरीतं किञ्च ते मात्मान-स्वानिष्टविषयभावितवन्त इत्याह, तत्प्राणा इति । तस्मिन्नेव प्राणा येषां तस्मिन्नेव मनो येषाम् अत एव दुःखं शोकं भयं च त्रिभिरातुराः ॥ १४ ॥

गोकुलं शून्यं विधाय सर्व एव निर्गता इत्याह—आबाल-वृद्धवनिता इति । अङ्गेतिसम्बोधनं सर्वत्र स्नेहसूचकं पशूनामिव वृत्तिर्येषामिति न देहवस्त्रादिदृष्टिः गोकुलादेव निर्गताः तेषां काम-नामाह—कृष्णदर्शने लालसाः दर्शनार्थमतिव्याकुलाः ॥ १५ ॥

* ननु, कथमत्र सर्वज्ञो बलभद्रः तेषां निषेधं न कृतवान्? इत्याशङ्क्याह–तांस्तथेति । तथा कातरानतिदीनान् वीक्ष्य प्रहस्य भगवत्परीक्षां स्मृत्वा विधिनिषेधयोरन्यतरदपि नोक्तवान् यतो-ऽनुजस्य भगवतः प्रभावज्ञः अयं श्लोकः पूर्वत्र वा विगीतो वा गतः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तानालक्ष्य गोकुलान्निर्जग्मुरिति तृतीयेनान्वयः । निधनमेव ...ं मत्वा नितरां धनं श्रीयमुनाहृदरूपं स्वविहारास्पदमिति ...त्रलीसम्वादः महाशोकात् पशूनामिव बुद्धिविवेकप्रतीकार-...शून्या वृत्तिः सत्ता येषां ते ॥ १३—१५ ॥

"मा विद्या च यतः प्रोक्ता तस्या ईशो यतो भवेत् ।
तस्मान्माधवनामाऽसि धवः स्वामीति कीर्तितः" ॥

...ति हरिवंशोक्तनिरुक्तेः प्रभावं लीलैश्वर्यं जानातीति सः तस्य स्वानुजमहाप्रभवत्वेपि प्रेम्णा तदैश्वर्यानावरणं कृष्णेच्छा-नुरञ्जितलीलाशक्त्यैव अन्यथा श्रीनन्दादीन् शोकावेगेन सपदि हृदं मंक्षु शीघ्रं निमंक्षून् को वारयितुं प्रभवेदिति भावः प्रहस्येति मत्स्वरूपेण शेषनागेन सह क्रीडा न रोचते किन्तु प्राकृतक्षुद्र-कालियसर्पाधमेनैवेति तस्य नरलीलत्वस्मरणात् किञ्चिन्नोवाचेति तेषां शोकान्धानां कृष्णं दिदृक्षूणां तदावरणस्यानौचित्याद्दश-क्यत्वाच्च किन्तु स्वप्रहासशोकाभावदर्शनं यतो न किञ्चिदनिष्ट-भावमूहयित्वा प्राणजिहासां शिथिलयामासुः ॥ १६ ॥

* सटीकोऽयं श्लोकः सुबोधिन्यामष्टादशसङ्ख्याकत्वेन ...तोऽस्ति ।

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न तं कालकालं श्रीकृष्णं विदन्तीत्यतद्विदः "ज्ञः काल-कालो गुणी सर्वविद्यः" इति श्रुतिरत्रानुसन्धेया ॥ १४ ॥

पशवो यथा भयकाले सहैव पलायन्ते तद्वद्वृत्तिर्येषां ते पशुवृत्तयो निर्जग्मुः ॥ १५ ॥

कातरान् उद्भ्रान्तचित्तान् ॥ १६ ॥

---

### भाषा टीका ।

उन उत्पातन कों देखिकें नन्दादिक गोप बड़े भयसों उद्विग्न होत भये, ताई में ये सुनी कि आज लाला बिना-दाऊ के गऊन कूं चरायवे को गयो है, तब और हू भय भीत भये ॥ १३ ॥

कृष्ण में ई जिनके प्राण और मन बसें एसे वे सगरे गोप आपके प्रभाव कूं न जान के उन खोटे निमित्तन सों श्रीकृष्ण को निधन ( मरण ) मानि के शोक दुःख भय सों आतुर होयकें ॥ १४ ॥

हे राजन् ! लगाय बालकन सों वृद्ध स्त्री सगरे पशुन की जीविकावारे कृष्ण के दर्शन की लालसा सों दीन होयकें गोकुल तें निकसत भये ॥ १५ ॥

उन सबन कूं एसे कातर देखिकें मधुवंशी भगवान् श्रीबलदेवजी नेक हंस के रह गये, और कछु न बोले, काहे सों कि अपने छोटे भया के प्रभाव कूं जानतेई रहे ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भगवन्तं लक्षयन्ति–यानि पदानि तैः पदैः सूचितया पदव्या मार्गेण ॥ १७ ॥

अन्तर्ह्रदे भुजगभोगपरीतमारात् कृष्णं निरीहमुपलभ्य जलाशयान्ते ।
गोपांश्च मूढधिषणान् परितः पशूंश्च सङ्क्रन्दतः परमकश्मलमापुरार्ताः ॥ १९ ॥
गोप्योऽनुरक्तमनसो भगवत्यनन्ते तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ।
ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पदैर्मार्गज्ञानप्रकारमाह—त इति । चिह्नैः श्रीकृष्णस्यान्येषां पदानामन्तरान्तरे मध्ये मध्ये तत्तदपोहेन गवां श्रुतीनां मार्गे सत्वरा अप्रमत्ता योगिनस्तत्तदुपाध्यपवादेन यथा परं तत्त्वं मृगयन्ते तद्वदिति भावः ॥ १८ ॥

ततश्च सर्पशरीरवेष्टितं कृष्णं दूरान्निरीक्ष्य गोपांश्च पशूंश्च तथा निरीक्ष्यार्त्ताः परमकश्मलं परं मोहं प्रापुः ॥ १९ ॥

प्रियेण श्रीकृष्णेन व्यतिहृतं विरहितं त्रैलोक्यं शून्यं ददृशुः ॥ २०—२२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्वेषमाणाः अन्विच्छन्त्यः तत्र हेतुः दयितं तत्र हेतुः कृष्णम् ॥ १७ ॥

तत्र तत्र श्रीचरणन्यासभुवि चिह्नो वेद्या गोपरूपाः ततो गोकुलपतेरित्यर्थः । परवाद्यभावश्छान्दसः अन्यपदान्तरान्तर इति चिरं प्रोषितस्य पशुपशुपवर्गपरिवेष्टितस्यापि तस्य पदानि न केनचिदाक्रान्तानीति बोधयित्वा भूम्यत तावदात्मभूषणत्वेन रचितत्वं सर्वेषामपि प्रेमास्पदत्वमचेतनैर्वाद्वादिभिरप्यत्रो-ऽप्यत्वेन महाप्रभावत्वमिति हेतुत्रयं सम्भावयति एवमेवोक्तं भगवल्लक्षणैरिति ततश्च साक्षात्तस्य तादृशानां तादृशप्रेमास्पदत्वे काश्चिदाकाङ्क्ष्यत्वे च को विस्मय इति भावः ॥ १८ ॥

मूढधिषणान् मोहं गतान् परितः सर्वमेव तीरं व्याप्य ॥ १९ ॥

एवं सर्वेषामेव सामान्येन दुरवस्थामुक्त्वा तत्रैव श्री गोपीनां विशेषमाह—गोप्य इति । भगवति सर्वैश्वर्ययुक्ते अतो न विद्यते ऽन्तो नाशो भक्तानां यस्मात् तथाभूते अपरिच्छिन्न इति वा इत्यहिग्रसनासम्भव उक्तः तथाप्यहिना ग्रस्ते तदिच्छ-यैव भोगेनाक्रान्ते सति अत्यर्थदुःखतप्ताः यतो ऽनुरक्तमनसः स्वभावतो निरन्तरप्रेमवत्य इत्यर्थः । तथा तस्मात् तास्मिन्नपि स्वभावतः प्रियतम एवेति आत्मा प्रियः परमात्मा प्रियतरः ततो ऽपि विशिष्टत्वात् श्रीकृष्णः प्रियतम एवेति ततः प्रेमभरा-क्रान्त्या तत्तत्त्वाननुसन्धानादित्यर्थः । यद्वा, भगवति परमसुन्दरे अनन्ते च अपरिच्छिन्नगुणे तथा प्रियतमे कस्यचित् प्रियतरे तासां तु प्रियतमे यतः सदानुरक्तमनसः अधुना च ग्रस्ते ग्रस्तवत् सर्वतो भोगेन परिवेष्टिते सति तस्य सौहृदेन प्रेम्णा याः स्मितावलोकगिरः ताः स्मरन्त्यो भृशदुःख-तप्ताः सत्यः प्रियेणैव कर्त्रा विशेषेणातिशयेन हृतं स्वप्र-स्तादर्शनायान्धबधिरायमाणानां विधाय च विस्मारित-मित्यर्थः । प्रियव्यतिकृतमिति पाठे च "व्यतिकरः समाख्याने व्यसने व्यतिषञ्जने" इति विश्वप्रकाशात् "व्यसनं विपदि भ्रंशे" इत्यमरकोशाच्च । प्रियेण हेतुना भ्रष्टमिति तथैवार्थः टीकायां विरहितमित्यस्य च त्याजितमित्यर्थं इति तथैव तात्पर्यं ततस्तादृशं जगच्छून्यं ददृशुः शून्यमिति शोकवेगेनात्मन इव जगतः अपि मरणमननात् निजप्रियतमाभावेन सर्वस्यैकाकारगमद्दृ-ष्ट्वा ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पदैः सूचितया पदव्या ॥ १७ ॥
गवामन्यपदान्तरान्तरैः गवां पदैरन्यपदैश्च मिश्रितैः ॥ १८ ॥
कश्मलम्मोहम् ॥ १९ ॥
प्रियप्रतिहृतं विरहितम् ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ते नन्दादयः कृष्णं मृगयन्तः भगवन्तं रामः लक्षयन्ती-तथा तैर्ध्वजवज्रादिभिश्चिह्नैरितिभावः । पदैः सूचितया पदव्या मार्गेण यमुनायास्तटं जग्मुः ॥ १७ ॥

तदेव प्रपञ्चयति—ते इति । चिह्नैः विश्वस्य पत्युः कृष्णस्य तत्र तत्र ध्वजादिरेखाभिरुपपन्नानि युक्तानि पदानि तत्राशानिर्द्र-गवां मार्गे अन्येषां पदानामन्तरान्तरे मध्येमध्ये निरीक्षमाणा अङ्ग हे राजन् ! त्वरायुक्ता ययुः ॥ १८ ॥

जलमध्ये भुजगदेहेन परिवेष्टितमदृष्टचेष्टितं कृष्णं ह्रदस्य तीरे मूर्च्छितान् गोपांश्च सङ्क्रन्दतः पशूंश्चाराद्दूरादुपलभ्य आर्त्ताः सन्तो महत्कश्मलं मोहमापुः ॥ १९ ॥

तस्य कृष्णस्य सौहृदेन सौहार्देन यत् स्मितं ये च विलोक-कटाक्षास्तान् गिरश्च स्मरन्त्यः निरतिशयप्रीतिविषये तस्मिन् सर्व-ग्रस्ते सति नितरां दुःखेन तप्ताः प्रियेण रहिताः त्रिलोकं शून्यं ददृशुः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवल्लक्षणैर्हरेः पद्मध्वजादिलक्षणोपेतैः पदैश्चरणन्यासैः सूचितया सूचयन्त्या पदव्या मार्गेण ॥ १७ ॥

वैशद्याय पुनरुक्तं विवृणोति—त इति । यवो व्रीहिविशेषः अशनिर्वज्रं "दम्भोलिरशनिर्द्वयोः" इत्यमरः । चिह्नैः प्रजाप-कृष्णस्य गवां मार्गे कृष्णपादेनान्यस्य गोपस्य अन्यासां च पादेनान्तरान्तरे मध्ये मध्ये मिश्रित इति शेषः । गवां ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अन्यपदेन वज्रादिलक्षणेन पदेन इतरलक्षणेन पदेनान्तरान्तरे मध्याविनाभूते वा ॥ १८ ॥

जलाशयान्ते ह्रदसमीपे परितः स्थितान् गोपादानुपलक्ष्य परमं कश्मलं मोहम् ॥ १९ ॥

तस्य कृष्णस्य सौहृदं च स्मितं च विलोकञ्च गिरश्च तत्सौहृदस्मितविलोकगिरः ताः स्मरन्त्यः प्रियव्यतिहृतं विरहितम् ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तेषां भगवत्समीपगमने भ्रमाभावाय हेतुमाह—तेऽन्वेषमाणा इति। पतिरेवान्वेषणीयस्ततोऽपि सदानन्दः ते भगवद्गतेन मार्गेणैव गताः तदाह—पदव्या यमुनातटमिति। पदवी सूक्ष्मो मार्गः तथा यमुनातटमेव गताः तेषां मार्गान्तरागमने तथैव च गमने अभिज्ञानमाह—भगवल्लक्षणैः पदैः सूचितयेति। ध्वजवज्राङ्कुशाद्यसाधारणचिह्नैः भगवच्चरणसम्बन्धे भूमेरार्द्रता भवतीति स्फुटसर्वलक्षणानि पदानि भूमावुद्गच्छन्ति तैः सूचिता पदवी भवति ॥ १७ ॥

तत्रापि भगवान् न केवलं गतः किन्तु गोपालसहित एव गत इत्यत्राभिज्ञानमाह—ते तत्र तत्रेति। तत्र तत्र मार्गे विट्पतेः वैश्याधिपतेर्गोकुलराजस्य भगवतः पदानि दृष्ट्वा तेनागतप्राणाः सत्वरा ययुः अन्यथा गमनेऽप्यसामर्थ्यं स्यात् यवः कीर्त्तिप्रतिपादकः अब्जाकाररेखा सुसेव्यत्वाय भक्तानां मनोगजनिवारणायाङ्कुशरेखा अशनिः पापपर्वतच्छेदनाय ध्वजो निर्भयवासदानाय एवमनेकविधैः चिह्नैरुपपन्नानि पदानि अतः स्वस्यापि कृतार्थता भविष्यतीति शकुनमिव प्राप्येष्टदर्शनार्थं शीघ्रं गताः गवां मार्गे अन्येषां गोपालानां च पदान्यन्तरा यत्र तेन सर्वैः सह तिष्ठतीति सन्तोषोऽपि ॥ १८ ॥

भगवन्तं दृष्टवन्त इत्याह—अन्तर्ह्रद इति। दूरादेव भगवन्तं यमुनाह्रदे समुद्रे शेषशायिनमिव भगवन्तं दृष्टवन्तस्तदाह—ह्रदमध्ये भुजगभोगेन सर्पशरीरेण परीतं वेष्टितमाराद्दूरादुपलभ्य सुप्तत्वात् निरीहं जलाशयसमीपे च गोपानुपलभ्य वृत्तान्तप्रश्नाभावाय विशेषणमाह, मूढधिषणानिति मूढा लयं प्राप्ता धिषणा बुद्धिर्येषां परितः पर्वतो विक्षिप्तान् पशूंश्च सङ्क्रन्दतः इति तेषामनिष्टसूचकत्वम् अतो मार्गे यथाकथञ्चिदप्यागता एतत्रितयं दृष्ट्वा परमकश्मलं मूर्च्छामापुः आर्त्ता विकलाः सन्तापयुक्ताश्च जाताः ॥ १९ ॥

एवमार्त्यनन्तरं गोपिकानां यशोदासहितधारणक्षीणां नन्दादीनां च वृद्धगोपानामवस्था आह—गोप्य इति त्रिभिः। गोप्यस्तु भगवन्तं तादृशं दृष्ट्वा त्रैलोक्यमेव प्रियरहितं ज्ञातवत्यः प्रिया एव हि रक्षणीयाः अतः प्राणरक्षायामिह लोकरक्षायां परलोकरक्षायां च निवृत्तव्यापाराः तथैव लयं प्राप्तवत्य इति तामवस्था अनुरक्तं मनो यासाम् अनेन तेषां प्राणवियोगाभावे हेतुरुक्तः। ननु, भगवति साम्प्रतं मनः प्राणवियोजकमेव न तु प्राणरक्षकमित्याशङ्क्याह, भगवतीति। सर्वकरणसमर्थो भगवान् अतः षड्भिरपि गुणैस्तासां प्राणा रक्षिता इत्यर्थः। तथापि विषयस्यानिष्टरूपत्वे प्राणरक्षा भक्तिविरोधिनीत्याशङ्क्याह,

अनन्त इति। न विद्यते अन्तो यस्येति विषयश्च नानिष्टरूपः अतो भगवता रक्षिताः सजीवा एवेतिकर्त्तव्यता मूढाः। स्थिताः। किञ्च, तासां जीवने हेत्वन्तरमपि जातमित्याह—तत्सौहृदेति। तस्य भगवतः सौहृदं स्मितं विलोकं गिरश्च स्मरन्त्यः सौहृदस्मरणे शरीरस्थितिः स्मितस्मरणे इन्द्रियाणां विलोकस्मरणे प्राणानां वाक्यस्मरणेऽन्तःकरणस्य साधकानुक्त्वा बाधकमाह—अहिना सर्पेण वेष्टिते परमप्रीतिविषये भृशं दुःखेन तप्ताश्च जाताः अतः त्रिलोकं प्रियेण व्यतिहृतं शून्यमेव ददृशुरित्यर्थं जरतीयम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भगवन्तं लक्षयन्ति यानि तैः सूचितया पदव्या ॥ १७ ॥

पदैः पदवीज्ञानप्रकारमाह—ते इति। विट्पतेः विशां वैश्यानां गोपानां पत्युरध्यक्षस्य कृष्णस्य, पदव्याश्च मार्गः। अन्येषां पदानामन्तरान्तरे मध्ये मध्ये तदपोहेन गवां धूर्तानां मार्गे सत्वरा अप्रमत्ता योगिनस्तत्तदुपाध्यपवादेन यथा परमतत्त्वं मृगयन्ति तद्वादिति भावः ॥ १८ ॥

सामान्यतो गोपगोपीजनानां वैक्लव्यमाह—ततश्चान्तर्ह्रदे ह्रदमध्ये भुजगभोगपरीतं सर्पशरीरवेष्टितं भो बालकाः वृत्तान्तं तावत्कथयत किं कालियेनैव तीरात् कृष्णो बलादाकृष्य जले पातितः किंवा कृष्ण एव तीरादवप्लुत्य जले पतितः तत्रापि स्वबुद्ध्या अन्यस्य कस्यचिदादेशेन वेत्यादिप्रश्ने मूढधियः मूर्च्छितबुद्धीन् वक्तुं किमपि चेष्टितुं चासमर्थान् गोपान् वीक्ष्य परमकश्मलं तन्मूर्च्छातः सकाशादप्यतिमूर्च्छाम् ॥ १९ ॥

तत्रानुरागवतीनां वैक्लव्यमाह—भगवति परमसुन्दरे अनन्तगुणे तस्य सौहृदं स्वविषयकं प्रेमस्मितं विलोकं रहसि कृतां गिरं सौरतवार्त्तां च स्मरन्त्यः त्रिलोकं प्रियेण व्यतिकृतं विरहितं तद्विरहदावाग्निभस्मीभूतत्वाच्छून्यं व्यतिहृतमिति पाठे प्रियेणैव विशेषेणातिशयेन हृतं स्ववशान्तःपातीकृतं ददृशुः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ते नन्दाद्याः दयितं प्रियमन्वेषयन्तः भगवन्तं लक्षयन्तीति भगवल्लक्षणैरब्जादिलक्ष्मयुक्तैः पदैः सूचितया पदव्या मार्गेण यमुनातटं जग्मुः ॥ १७ ॥

तदेवाह—ते इति। हे अङ्ग! विट्पतेः अनेकप्रजापालकरूपायाः प्रजायाः पालकस्य श्रीकृष्णस्य तत्र तत्र गवां मार्गे अन्येषां पद्मानामन्तरं मध्ये मध्ये अब्जादिभिरुपपन्नानि पदानि निरीक्षमाणाः त्वरायुक्ताः ययुः ॥ १८ ॥

अन्तर्ह्रदे भुजगभोगेन परीतं वेष्टितं कृष्णं जलाशयस्यान्ते तीरे परितः मूढधिषणान् गोपान् सङ्क्रन्दतः पशूंश्च आरादेव उपलभ्य प्राप्य परं महत् कश्मलमापुः ॥ १९ ॥

भगवति अनुरक्तं मनो यासां ताः गोप्यः प्रियतमेऽहिना ग्रस्ते सति भृशदुःखतप्ताः प्रियेण श्रीकृष्णेन व्यतिहृतं विरहितं त्रिलोकं शून्यं ददृशुः ॥ २० ॥

ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ।
तास्ताः प्रियव्रजकथाः कथयन्त्य आसन् कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥२१॥
कृष्णप्राणान्निर्विशतो नन्दादीन् वीक्ष्य तं ह्रदम् ।
प्रत्यषेधत्स भगवन्रामः कृष्णानुभाववित् ॥ २२ ॥
इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः ।
आज्ञाय मर्त्यपदवीमनुवर्त्तमानः स्थित्वा मुहूर्त्तमुदतिष्ठदुरङ्गबन्धात् ॥ २३ ॥
तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्यक्त्वोन्नमय्य कुपितः स्वफणान् भुजङ्गः ।
तस्थौ श्वसन् श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः ॥२४॥

भाषा टीका।

ते संपूर्ण व्रजवासी अपने प्यारे कृष्ण को ढूंढत २ श्रीकृष्णचन्द्र के चरण चिन्हन के मार्ग कों देखिकें श्रीयमुनाजी के तट पै जात भये ॥ १७ ॥

हे राजन् ! ते सगरे व्रजवासी रस्ता में गायन के पांयन के बीच बीच में तहां २ कमल यव अंकुश वज्र ध्वजा इत्यादिक चिन्हन सों युक्त श्रीकृष्ण के चरणन कूं देख २ कें बड़ी जल्दी जात भये ॥ १८ ॥

वा (ह्रद)दह के किनारे पै समीप जायकें कालीनाग जिनकें लपिट रह्यो चेष्टा सों रहित ऐसे श्रीकृष्ण कूं देखिकें और मोहित जिनकी बुद्धि ऐसे ग्वाल बालन कों देखिकें तथा चारों ओर डकराते भये गाय बछरान कों देखिकें सगरे व्रज के बड़े आर्त्त होयके परम दुःख कों प्राप्त होत भये ॥ १९ ॥

श्रीअनंत भगवान् में अनुराग युक्त मनवारी गोपी तिन तिन कृष्ण के सुहृदता मंद मुस्क्यांन पूर्वक चितवन मीठी २ वाणी को स्मरण करि करिकें जब अपने प्रियतम श्रीकृष्ण कूं सर्पने ग्रसलियो तब अतिदुःख सों तप्त होयकें अपने प्यारे के विना तीनों लोकन कूं सूनो देखत भई ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनन्यगतिमात्मानमित्थं निरीक्ष्याऽत एवात्महेतोः स्वगोकुलमतिदुःखितमाज्ञायोरगबन्धादुदतिष्ठदित्यन्वयः ॥ २३ ॥

तस्य प्रथ्यमानेन वपुषा व्यथितात्मशरीरो भुजङ्गः कुण्डलीमुन्मुच्य तं त्यक्त्वा कुपितः स्वफणानुन्नमय्य श्वसन् केवलमीक्षमाणस्तस्थौ कथम्भूतः श्वसनरन्ध्रेषु नासाविवरेषु विषं यस्य स तथा अम्बरीषो भ्राष्ट्रपाकभाजनं तद्वत्स्तब्धानि स्तब्धानीक्षणानि यस्य स तथा उल्मुकानि मुखेषु यस्य स च स च ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तन्माता हन्त कीदृशी जातेत्यपेक्षायां शोकभरेण किञ्चिदेव प्रकाशयन् सर्वासामेव तासां दशाविशेषमाह—ता इति । ताः पूर्वोक्ताः श्रीयशोदासख्योऽन्याः श्रीगोप्यः न परान्तकस्मिन्नपि दुःखे कुत्र यस्मात्तदपत्यं परमस्नेहपात्रपुत्रमित्यर्थः अत एव तत् अनुलक्षीकृत्य तदर्थं प्रकर्षेण सर्वतोऽधिकतया तत्तां प्रविशामिति पाठे ह्रदं प्रवेष्टुमारब्धामित्यर्थः । तुल्यव्यथा अपि स सम्यक् अनु निरन्तरं गृहीत्वा धृत्वा शुचः शोकाश्रूणि स्रवन्त्यः प्रवाहरूपेण मुञ्चन्त्यः तास्ताः पूतनादितो दैवकृतरक्षामयीः वत्सवकादिवधरूपाश्चैश्वर्यमयीश्च व्रजस्य प्रियकथाः कथयन्त्यः तादृशा महादुष्टा बहवोऽपि हताः अयं सर्पः तेभ्यः को नाम वराकः एनं हत्वा ऽधुनैवायास्यतीति तन्मातृसान्त्वनार्थमित्यर्थः । तथा कृष्णार्पितदृशश्च सत्य आसन् पश्चात् मृतकतुल्याश्चासन्नित्यर्थः । विशेषतस्तासां शोकोक्तिः श्रीविष्णुपुराणे—

"सर्वा यशोदया सार्द्धं विशामोऽत्र महाह्रदे।
नागराजस्य नो गन्तुमस्माकं युज्यते व्रजे"॥

"दिवसः को विना सूर्यं विना चन्द्रेण का निशा। विना वृषेण का गावो विना कृष्णेन को व्रजः ॥ विना कृता न यास्यामः कृष्णेनानेन गोकुलम् । अरम्यं नातिसेव्यं च वारिहीनं यथा सरः ॥ यत्र नेन्दीवरदलप्रख्यकान्तिरयं हरिः । तेनापि मातर्वासेरतिरस्तीति विस्मयः ॥ उत्फुल्लपङ्कजदलस्पष्टकान्तिविलोचनम् । अपश्यन्त्यो हरिं दीनाः कथं गोष्ठे भविष्यथ ॥ अत्यर्थमधुरालापहृताशेषमनोधनाः । न विना पुण्डरीकाक्षं यास्यामो नन्दगोकुलम् ॥ भोगेनावेष्टितस्यापि सर्पराजस्य पश्यत । स्मितशोभिमुखं गोप्यः कृष्णस्यास्मद्विलोकने" ॥ इति ॥२१॥

कथञ्चिन्मोहोपशमे कालविलम्बे च ह्रदं निःशेषेण प्रविशतः नन्दादीन् सर्वानेव व्रजजनान् सः व्रजरक्षार्थं भगवद्गृहे त्यक्तो यः बन्धुवत्सलत्वेन प्रसिद्धो वा. ननु, तेषां सर्वेषां प्रतिषेधनं सकथं कर्त्तुं शक्तः ? तत्राह—भगवान् सर्वशक्तियुक्तः काँश्चिद्युक्तयुक्त्या काँश्चिद्बलेन काँश्चिदन्तःप्रेरणया च एवं सर्वरमणाद्रामः। ननु, सोऽपि नामकुतः स्वस्थ आसीत्? तत्राह—कृष्णस्य परब्रह्ममूर्तेर्भगवतः अनुभावं प्रभावं वेत्तीति तथा सः ॥ २२॥

इत्थम् अनेन सर्वेषां तेषामपि मोहनादिना प्रकारेण न विद्यते अन्या गतिः रक्षको यस्य तथाभूतम् आत्मानमिति शेषः पतिमिति पाठे स एवार्थः उदतिष्ठत् श्रीकृष्णः अन्यत्तैः यद्वा सच मुहूर्त्तं स्थित्वा उरङ्गमबन्धादुदतिष्ठत् मुहूर्त्तस्थितौ हेतुः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मर्त्यपदवीं यं प्रति दण्डो विधीयते तस्य दोषो लोके दृश्यते तादृशीं तल्लीलामनुवर्त्तमान इति उत्थाने हेतुः स्वात्मीयं गोकुलम् इत्थं निजोत्थानं विना न जीविष्यतीति प्रकारेण न विद्यतेऽन्या गतिः रक्षको यस्य किं वा न विद्यतेऽन्या यत्रादिवेष्टनं स्वस्यावस्थितिस्तस्मादपरा गतिर्गमनं यस्येति तत्रैव प्रवेशनिश्चयो यस्येत्यर्थः। तादृशं निरीक्ष्य तच्चेष्टादर्शनेन निश्चित्य समोत्थानभाव आर्षः तत्रापि सस्त्रीकुमारं कृत्स्नमित्यर्थः साकल्येऽव्ययीभावः, चेष्टादर्शनमेवाह—आत्महेतोरतिदुःखितं दुःखपराकाष्ठामापन्नं मरुपक्षात्त्वेति स्वभावतो जनमात्रस्य दुःखासहिष्णुता तस्मिन् वर्त्तत एव तत्रापि स्त्रीयस्य तत्रात्मस्मानत्रासिहेतुकदुःखस्य तत्राप्यात्मदुःखदुःखितस्येति क्रमशाप-नेनोत्थानेति त्वरा बोधिता एवं तदुत्थानादिका सर्वैव लीलाव्रजनेन दृष्टेति गम्यते ॥ २३ ॥

उत्थानप्रकारमेव दर्शयन् कालियस्य ग्लानिमाह—तदिति। तस्य कृष्णस्य प्रथ्यमानेन स्वयं विस्तार्यमाणेन किञ्चिदुच्छ्रा-यमानेन वपुषा व्यथितः त्रुट्यन्निव पीडितः आत्मभोगो यस्य आत्मशब्देन तत्रात्यन्तमध्यामं मध्यज्य पीडानैशिष्ट्यं बोधितं स्वशब्दश्चासाधारणता विवक्षया अम्बरीषमत्र उज्ज्वलाग्नि-भर्जनपात्रं हरिं दुरभिमानदोषहरणात् निजावासहरणोद्यमत्वाद्वा मन्यते: तत्र कुण्डलं वेष्टनम् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

व्रजप्रियः कृष्णः मृतकप्रतीकाः मृतकल्पाः ॥ २१—२२ ॥

वृध्यमानं वर्द्धमानम् उरङ्गबन्धात् ॥ २३ ॥

श्वसनरन्ध्रविषाम्बरीषः श्वसनरन्ध्रमेव विषपाचकं यस्य यः स्तब्धचक्षुर्यो य अलातचक्रमुखः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तां कृष्णस्य मातरं यशोदामपत्यमनूद्दिश्य प्रनष्टां दुःखिताम् अनुगृह्य समवगृहीत्वा ह्रदे पतितुम् उद्युक्तां निवार्येत्यर्थः। शुचोऽश्रूणि स्रवन्त्यः तया तुल्यदुःखाः प्रियो व्रजो यस्य तस्य कृष्णस्य तास्ताः कथाः पूतनायमलार्जुनभञ्जनादिरूपाः कथयन्त्यः कृष्णस्याननेऽर्पिताः निहिताः दृशो याभिस्ताः मृतकप्रतीकाः मृततुल्या आसन् ॥ २१ ॥

कृष्ण एव प्राणो येषां तान् कृष्णैकजीवनान्नन्दादीन् तं ह्रदं विशतः प्रवेष्टुमुद्युक्तान् रामः प्रत्यर्पयन्निवारितवान् तत्र हेतुः तत्प्रभाववित् तत्रापि हेतुर्भगवान् ॥ २२ ॥

न विद्यते अन्या गतिः रक्षणोपायो यस्य तत् आत्मनः स्वस्य हेतोः स्त्रीकुमारपर्यन्तं दुःखितं गोकुलं निरीक्ष्य आज्ञाय तद्दुःखं ज्ञात्वा मर्त्यपदवीमनुवर्त्तमानोऽत्र एव मुहूर्त्तमात्रं तूष्णीं स्थित्वा तत उरङ्गबन्धादुदतिष्ठत् त्याजितोरगबन्धो बभूवेत्यर्थः ॥ २३ ॥

तस्य कृष्णस्य प्रथ्यमानेन भारीक्रियमाणेन पृथुशब्दात्तत्करोतीति यन्तात् "रङ्गोहलन्तेर्लघोः (६।४।१६१) इति कृतरभावात्

कर्मणि लटः शानच् वपुषा व्यथितस्वशरीरो भुजङ्गः कृष्णमुन्मुच्य कुपितः फणानुन्नमय्य श्वसन् केवलं हरिमीक्षमाणः तस्थौ कथम्भूतः? नासारन्ध्रेषु विषं यस्य अम्बरीषवत्सन्तप्तानि स्तब्धानि चक्षूणि यस्य अम्बरीषशब्दो भ्राष्ट्रवाची "अम्बरीषः पुमान् भ्राष्ट्रम् क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यादिनामानुशासनात् अम्बरीष इत्यौणादिकसूत्रेण "अबि शब्दे" इत्यस्माद्धातोः "कृतृभ्यामीषन्निलत ईषन्नित्यनुवर्त्तमाने तत्सन्नियोगेन रुडागमो निपात्यते समस्तपाठे नासिकाच्छिद्रमेव विषपाकभ्राष्ट्रं यस्य स चासौ स्तब्धेक्षणः उल्मुकान्यग्निकणानि मुखे यस्य उल्मुकवज्ज्वलन्मुखो वा ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अपत्यमनुप्रविष्टाम् आत्मना पुरस्थितह्रदे प्रविष्टां शरीरेण तीरे स्थितां कृष्णमातरं यशोदां समनुगृह्य परिरभ्य यशोदा-दुःखतुल्यव्यथाः शुचः शोकादश्रूणि स्रवन्त्यः बाष्पधारया नदीं कुर्वन्त्यः याः पूर्वं व्रजप्रियस्य कृष्णस्य कथाः कथयन्त्यः आसन् ता अधुना त्रस्ताः कृष्णाननेऽर्पितनेत्राः गोप्यो मृतकप्रतीकाश्चिह्नाता अनेनेति शेषः ॥ २१ ॥

कृष्ण एव प्राणो येषां ते तथा तान् ह्रदं निर्विशतः प्रवेष्टुकामान् ॥ २२ ॥

आज्ञाय ज्ञात्वा उरगबन्धात् सर्पकृतबन्धनात् उदतिष्ठत् उत्थितोऽभूत् ॥ २३ ॥

भगवत्युत्थिते सर्पः किं क्रियोऽभूदित्यत्राह—तत्प्रथ्यमानेनेति। तेन कृष्णेन प्रथ्यमानवपुषा वर्ध्यमानशरीरेण व्यथितः आत्मभोगः स्वशरीरं यस्य स तथा अत एव कुपितोऽत एव श्वसन् दीर्घश्वासं कुर्वन् श्वसनरन्ध्रे नासिकाच्छिद्रे विषाम्बरीषं विषभ्राष्ट्रं यस्य स तथा "क्लीबेऽम्बरीषं भ्राष्ट्रो वा कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः। स्तब्धेक्षणा उल्मुकमुखश्च स्तब्धे ईक्षणे उल्मुके मुखे यस्य स तथा "अङ्गारेऽलात उल्मुकः" इत्यमरः एवंविधो भुजङ्गो हरिमीक्षमाणस्तस्थाविसन्धयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ताः पूर्वपूर्वोक्ताः श्रीयशोदासख्योऽन्याः तास्ताः पूतनादिभ्यो रक्षामयीः ॥ २१—२२ ॥

स च मुहूर्त्तं स्थित्वा उरगबन्धादुदतिष्ठत् तावत् स्थितौ हेतुः मर्त्यपदवीमनुवर्त्तमानः उत्थाने हेतुः स्वगात्मीयम् इत्थं गोकुलं निजोत्थानं विना न जीविष्यतीति प्रकारेण न विद्यतेऽन्यः गतिः रक्षको यस्य तादृशं निरीक्ष्य दृष्ट्वा तत्रापि सस्त्रीकुमारं श्रीकृष्णमित्यर्थः। प्रकारमेवाह—आत्मेत्यादि ॥२३-२४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यशोदासहितानामवस्थामाह-ता इति। कृष्णमातरं समनुगृह्य लोकन्यायेन शुचः स्रवन्त्यो जाताः यशोदा तु अपत्यमगवन्तम् अनुप्रविष्टा तत्रैव गता अन्यासां जीवने हेतुः तास्ताः व्रजप्रियस्य ।

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भगवतः कथाः कथयन्त्यः । किञ्च, कृष्णाननं अर्पितं दृशः भगवन्मुखारविन्दमपि पश्यन्ति अतो मृतकप्रतीका आसन् मृतप्रायाः सजीवा एव स्थिताः पूर्वं भगवता रक्षिताः एता भगवद्गुणैः दर्शनेन च ॥ २१ ॥

अन्ये तु नन्दादयो बलभद्रेण रक्षिता इत्याह—कृष्णेति । कृष्णे प्राणा येषां प्राणस्थाने हि खेनापि स्थातव्यमिति तमेव ह्रदं निर्विशन्तो जाताः तदा तान् बलः कथं प्रत्यषेधत् तेन प्रतिषिद्धा स्थिता इत्याशङ्क्याह—सभगवानिति । स रामो भगवान् भगवत्सहितो वा सोऽपि किमिति तत्राह कृष्णानुभावविदिति कालीयदमनलक्षणं भगवदनुभावं जानातीति ॥ २२ ॥

एवं सर्वेषां गोकुलवासिनां वैयर्थ्यमुपपाद्य सर्वसमर्थस्य भगवत एवं करणमनुचितमित्याशङ्क्य तत्समाधानार्थं भगवान् परीक्षां कृतवानित्याह—इत्थमिति । परीक्षायां हेतुः स्वगोकुलमिति, स्वस्य गोकुलं परीक्षणीयमेव अन्यथा कृतकरिष्यमाणयोर्निरोधयोर्वैयर्थ्यं स्यात् यदि तेषु कृतकार्यं नोपलभ्येत परीक्षया यत्सम्पन्नं तदाह—अनन्यपतिमिति । न विद्यतेऽन्यः पतिर्यस्य जडत्वात् गोकुलत्वेनान्यपत्यभाव एव निरूपितः । किञ्च, सस्त्रीकुमारमात्महेतोरतिदुःखितं निरीक्ष्य स्त्रियः साधारण्यः कुमाराः अतिबालाः तदनु आज्ञाय विचार्य अनन्यमेवैतदिति निश्चित्य, ननु स्वतः सर्वज्ञस्य किम्परीक्षयेत्याशंक्याह—मर्त्यपदवीमनुवर्त्तमान इति । यथा तेषु मानुषभावेनैव निरोधं करोति तथा परीक्षामपि कृतवान् अतो मुहूर्त्तं स्थित्वा उरगबन्धात् सर्पबन्धनात् उदतिष्ठत् उत्थितः निद्रापाये सुप्तमिव कृतवानित्यर्थः ॥ २३ ॥

तस्योत्थाने यदासीत्तदाह—तत्प्रथ्यमानेति । अत्र भारतादौ बलभद्रस्तुतिप्रबोधादिकं निरूपितं तत्कल्पान्तरीयं तत्रांशावतारः मनुष्यभावापत्तिश्चेति केचिल्लीलयैव तथेत्यपरे वस्तुतो यथा येन यत्र कारयति तथा स करोतीति व्यवस्थापूर्वं भगवान् सूक्ष्मः स्थितः पश्चात् पुष्टो जातः तेन स्वयमेव वेष्टनानि भग्नानीव जातानि, तदाह, तेन भगवता प्रथ्यमानं यद्वपुः तेन कृत्स्ना व्यथितः आत्मा भोगो यस्य एतादृशः शीघ्रं भगवन्तं स्वयं परित्यज्य स्वफणानुन्नमय्य कुपितो भुजङ्गः युद्धार्थं तस्थौ क्रोधे हि बलमधिकं भवतीति विपन्निसमयेऽपि श्वसन् विषवायुं मुञ्चन् स्थितः किञ्च, श्वसनरन्ध्रविषाम्बरीषस्तब्धेक्षणोल्मुकमुखः तस्य उपरि पञ्च छिद्राणि नासे चक्षुषी मुखमिति स्थानत्रयेऽपि सघोर इत्युच्यते तत्र प्रथमं श्वसनरन्ध्रेविषं यस्य अम्बरीषवत् भ्राष्ट्राग्निवत् स्तब्धे ईक्षणे यस्य उल्मुकयुक्तं मुखं यस्य एतादृशोऽपि हरिं समीक्षमाणः भगवत्सान्निध्यात् स्वयमपि न ज्वलितः परं सम्मुखे स्थितः ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्र वात्सल्यवतीनां वैक्लव्यमाह—ताः प्रसिद्धाः पुरन्ध्र्यः अपत्यम् अनुलक्षीकृत्य प्रतप्तां सन्तापजर्जरां प्रविष्टामिति पाठे अपत्य एव लीनमां प्राप्तां मूर्च्छितामिति यावत् यशोदां सम्यगनुगृह्येत्यधुनाप्यस्याः शरीरं प्राणाः प्रायो वर्त्तन्ते तदिदं नोपेक्षणीयमिति तद्भुजाभ्यामङ्कीकृत्य शीतलसलिलेनाश्रुकणाक्लि... मुखं मुहुर्मुहुः प्रक्षाल्य व्रजप्रियस्य कृष्णस्य कथास्तास्ताः ... कथयन्त्यः तच्चेतनाप्रापणार्थमिति भावः । ताः कीदृश्यः? दुः... शोकस्य स्रवन्त्यो नद्यः "स्रवन्ती निम्नगा ऽपगा" इत्यमरः । अन... ङ्गणान्यानपि प्लावयन्त्य इति भावः । अन्ते तु मृतकस्येव प्रती... अवयवा यासां ताः ॥ २१ ॥

प्रत्यषेधदिति भो आर्य्यपादाः ! "अनेन सर्वदुर्गाणि यूयम... स्तरिष्यथ" इति गर्गवचनादस्यत्वेतादृशदुर्गोत्तरणं किञ्चिदपि... विचार्य्य विवेकं भजत युष्मासु ह्रदं प्रविष्टेषु पश्चात् स्व... गतस्यास्य मनुजस्य लालनपालनादिकं कैः कर्तव्यं "गोपायन्न म... हितः" इति गर्गमहर्षिनिर्देशलङ्घने प्रवृत्ताः कथं स्थ... वाक्यैरित्यर्थः । भगवान् इति तत्र सामर्थ्यम् ॥ २२ ॥

अनन्यगतिमिति पुंस्त्वमार्षम् आज्ञाय सम्यक् ज्ञात्वा मु... घटिकाद्वयं स्तब्ध इव स्थित्वा किं रे कालिय ! त्वया वि... सर्वस्वमहं दर्शित एव सम्प्रति गोपबालकोऽप्ययं विक्रम... याति पश्येत्युक्त्वा उरङ्ग उरगस्तद्बन्धात् उदतिष्ठत् ॥ २३ ॥

उत्थानप्रकारमेव दर्शयन् कालियस्य ग्लानिमाह—तदि... तेन कृष्णेन प्रथ्यमानं वेष्टनसमयगतसङ्कोचनां परित्य... विस्तार्य्यमानं यद्वपुर्भुजजङ्घादिकं तेन व्यथितः भुग्नां... पीडितः आत्मनो भोगो यस्य सः वेष्टनमुन्मुच्य तं स... स्वफणान् उन्नमय्य श्वसन् केवलमीक्षमाण एव तस्थौ कीदृ... श्वसनरन्ध्रेषु नासाविवरेषु विषं यस्य तथा अम्बरीषं भ्रा... ज्वलद्विषमर्जनपात्रं भाण्ड इति ख्यातं तद्वत् प्राप्तानि स्तब्धा... ईक्षणानि यस्य तथा उल्मुकानि निस्सरन्ति मुखेभ्यो य... सच सच सच सः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मृतकप्रतीकाः इति भगवदमृतदृष्टिवृष्ट्या न मृता ... भावः ॥ २१—२२ ॥

इत्थमुक्तप्रकारां गोकुलस्य मर्त्यपदवीं मर्त्यप्रकृतिं तत्त्वानु... शतामाज्ञाय स्वगोकुलमात्महेतोः दुःखितं च निरीक्ष्य मु... स्थित्वा अनन्यगतिम् अन्यैर्दुर्धरं स्वायत्तमात्मानमनुवर्तमा... उरङ्गबन्धादुदतिष्ठदित्यन्वयः ॥ २३ ॥

नस्तस्य श्रीकृष्णस्य प्रथ्यमानेन वपुषा व्यथितात्मभो... पीडितात्मदेहः श्रीकृष्णे विनिर्गते तद्बन्धनार्थं कृतं कुण्डलं त्यक्त्वा... कुपितः स्वफणानुन्नमय्य श्वसन् श्वासान् मुञ्चन् केवलं ह... मीक्षमाणस्तस्थौ, कथम्भूतः? श्वसनरन्ध्रेषु नासाच्छिद्रेषु विष... तथा अम्बरीषाणीव भ्राष्ट्राणीव सन्तप्तानि स्तब्धानीक्षणा... यस्य तथा उल्मुकवत् प्रज्वलितानि मुखानि यस्य स च ... तथा ॥ २४ ॥

---

भाषा टीका ।

जब यशोदा कृष्ण के तांईं कालीदह में घुसने लगी तब ... कन्हैया की मैया यशोदा कूं हृदय दुःखकारी वे सगरी ...

तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिम् ।
क्रीडन्नमुं परिससार यथा खगेन्द्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः ॥ २५ ॥
एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथुशिरस्स्वधिरूढ आद्यः ।
तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त्त ॥ २६ ॥
तं नर्त्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः ।
प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः ॥ २७ ॥
यद्यच्छिरो न नमते(1)ऽङ्गशतैकशीर्ष्णस्तत्तन्ममर्द खलदण्डधरोऽङ्घ्रिपातैः ।
क्षीणायुषो भ्रमत उल्बणमास्यतोऽसृङ्नस्तो वमन् परमकश्मलमाप नागः ॥ २८ ॥

### भाषा टीका

प्रासून कों बहावती तौन २ व्रज की प्रिय कथान कों कह २ के श्रीकृष्णकी ओर टकटकी लगायकें यशोदाजी कूं पकरिकें मृतक तुल्य खडी होयके रहजात भई ॥ २१ ॥

कृष्ण में जिनके प्राण धरे ऐसे नंदादिक गोपन कूं कालीदह में प्रवेश करने देखकें कृष्ण के प्रभाव कूं जानन वारे भगवान् श्रीबलदेवजी सबन को रोकत भये ॥ २२ ॥

ऐसे अपने ताईं स्त्री बाल बच्चान सहित सबन कों अति दुखित, देखिकें और नहीं दूसरों रक्षक जाको ऐसे अपने गोकुल कूं जानकें मनुष्यन की तुल्य लीला करन वारे दोघडी ताईं वा सर्प के बन्धन में रह कें एक बार जो फुरफुरी लीनी सोई झट देसी बन्धन से बाहर निकस आये ॥ २३ ॥

कैसें निकसे, कि—श्रीकृष्णके देह बढायवे तें नस नस जाकी ढीली होय गई ताईंसो भगवानकूं छोडके बडो कुपित होयकें अपने फणानकों उठायकें बडी २ श्वासलेतो भयो, नासाके छिद्रनमें तें विष जाकें निकस आयो, तपे भये ठीकरा से नेत्र जाके मुखमें ते जाके लुकें निकस रहीं ऐसो वो काली सर्प, श्रीकृष्णकों देखतो भयो स्थित होत भयो ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हरिश्च क्रीडंस्तममुं सर्पं परिससार परितो बभ्राम अति करालविषाग्नियुक्ता दृष्टिर्यस्य तं जिह्वया द्विशिखयेति प्रतिमुखम् ॥ २५ ॥

एवं परिभ्रमेणैव हतमोजो यस्य तम् उन्नतावंसौ यस्य तं तस्य मूर्द्धसु ये रत्ननिकारास्तेषां स्पर्शनात्ताम्रं पादाम्बुजं यस्य सः । ननु, कथं चञ्चलेषु शिरस्सु ननर्त्त ? तत्राह—अखिलकलानामादिगुरुः ॥ २६ ॥

उपसेदुः प्राप्ताः ॥ २७ ॥

शतैकशीर्ष्णः शतमेकानि मुख्यानि शीर्षाणि यस्य तस्य क्षीणायुषोऽपि पुनर्भ्रमतो यद्यच्छिरो न नमते स्तब्धतां न जहाति नृत्यच्छलेनाङ्घ्रिपातैस्तत्तन्ममर्द तदा चास्यतो मुखेभ्यो नस्तो नासाविवरेभ्यश्चासृग्वमन् ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सृक्किणी सृक्कणीपरितो मुहुर्लिहन्तमिति युगपदेव द्वाभ्यां द्वयोः परिलेहनात् अस्य जातिस्वभावत्वेऽप्यधुना कोपनातिशयोऽभिप्रेतः तेनातिघोरत्वं सूचितम् अत एव करालेति पुनरुक्तिश्च हि एव क्रीडन्नेव परितः ससार भ्रमणार्थे तस्य सर्वतो बभ्रामेत्यर्थः । यथा खगेन्द्रः श्रीगरुड इति प्रबलत्वेन क्रीडायां शीघ्रतायां वा दृष्टान्तः सः कालियोऽपि दंशनावसरं प्रकर्षेण प्रतिपदं सम्यगीक्षमाणः अभीक्ष्णं बभ्राम इति सर्पेण क्रीडाकौशलमुक्तम् ॥ २५ ॥

. . परिभ्रमहतौजसमपि उन्नतांसम् अत एव आनम्य तं श्रीहस्तेन नत्वा च श्रीहरिवंशे "शिरः स कृष्णो जग्राह स्वहस्तेनावनम्य च" इति पूर्ववत् तद्दन्तयोग्यतोक्ता तन्मूर्द्धनि सौन्दर्यविशेषः स्पर्शेति लाघवविशेषः तथापि अतिताम्रत्वं कोमलत्वात् मादिगुरुत्वे हेतुः आद्यः अनेन कालियस्य च महाभाग्यं सूचितम् ॥ २६ ॥

नृत्यसुखार्थं तदुपकरणमाह—तमिति । अवेक्ष्य अवेक्ष्येति वा पाठः समानार्थः देवैरिणाश्च ज्ञानार्थत्वात् नदीयाः श्रीगरुडादयः पार्षदाः गन्धर्वादयश्च स्वर्ग्याः यद्वा, वैकुण्ठवर्त्तिये गन्धर्वादयस्ते तत्र मृदङ्गादीनां वादनेनारणा उपसेदुः असेवन्त गीतैर्गन्धर्वाः पुष्पैर्देवाः तत्रस्थैश्चेत्यर्थः । उपहाराः विविधगन्धसुगन्धिचूर्णावर्षनैः सिद्धाः नुतिभिश्च मुनयः इत्येवं निवेचनीयं क्रमातिक्रमो हर्षभरेण वाद्दरावर्त्तैरननुसन्धानात् । यद्वा, प्रीत्या सर्वेषामपि सर्वत्र प्रवृत्तिरभिप्रेता ॥ २७ ॥

एकशब्देन मुख्यवाचकेनान्यान्यपि बहूनि सन्तीति बोध्यते अग्रे फणासहस्रोक्तेः क्षीणायुषः मृतप्रायस्येत्यर्थः । उल्बणम् उद्भटं प्रचुरमित्यर्थः ॥ २८ ॥

(1) गरकाल्शीर्ष्णः इति विज० ।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमुङ्कालियं क्रीडन् कृष्णः सोऽपि कालियः ॥ २५ ॥
अमितकलादिगुरुः भरतादिकलानामादिगुरुः ॥ २६—२७ ॥
नस्तः नासिकाभ्यः वमन् उद्गिरन् ॥ २८—२९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्वे शिखे अग्रभागौ यस्यास्तया जिह्वया द्वे सृक्किणी ओष्ठप्रान्तौ लेलिहानमतिकराला विषाग्निमयी यस्या दृष्टिर्यस्य तममुं कालियं क्रीडन्निव परितश्चचार "अभितः परितः समया" इत्यादिवचनेनामुमिति षष्ठ्यर्थे द्वितीया अमुष्य परितः सञ्चारेत्यर्थः । यथा गरुडस्तद्वत् सोऽपि कालियोऽप्यवसरं दंशनार्थमन्तरमन्वेषयन् परिबभ्राम ॥ २५ ॥

एवं परिभ्रमणेनैव गतबलम् उन्नतांसौ यस्य तं कालीयनागस्य नम्रं कृत्वा तस्य पृथुषु विपुलेषु शिरस्स्वधिरूढः आद्योऽखिलविद्याकारणभूतः अखिलानां भरतशास्त्रविदाम् आदिगुरुः हेतुगर्भमिदं तस्मात् चपलेष्वपि शिरस्सु ननर्त, कथम्भूतः ? तस्य मूर्द्धसु ये रत्नसमूहास्तेषां स्पर्शेनारुणं पादाम्बुजं यस्य तथाभूतः ॥ २६ ॥

नृत्यं कर्तुमुद्युक्तं तं कृष्णमवेक्ष्य तदीयाः भगवत्सेवकाः गन्धर्वादयः प्रीतिपूर्वकं मृदङ्गादिभिरुपलक्षिताः सहसा आशु उपसङ्गाऽजग्मुः । यद्वा, तदीयाः कालियस्य परिजनाः उपसेदुः गन्धर्वादयश्च तथा भगवन्तं सेवितुं मृदङ्गादिभिः सहोपसेदुरित्यन्वयः ॥ २७ ॥

शतमेकाधि मुख्यानि शिरांसि यस्य तस्य शतैकशीर्ष्णः कालियस्य आर्षत्वात् "शीर्षंश्छन्दसि" (६ १-६१) इति शिरःशब्दस्य शीर्षन्नादेशः यद्यच्छिरो न नमते नम्रं नाभूत्, अङ्ग हे राजन् ! तत्तच्छिरः कर्म अङ्घ्रिपातैः खरदण्डधरः हेतुगर्भं तस्मान्ममर्द कथम्भूतस्य क्षीणमायुर्बलं वा यस्य भ्रमतः तदा आस्यतः मुखेभ्यः नस्तो नासिकाभ्यश्चोल्बणमुल्बणम् अधिकं वा असृग्रुधिरं वमन्नुद्गिरन् स नागः कालियः परमधिकं कश्मलं मोहं मूर्छां दुःखं वा अवाप लेभे ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तम् अमुं सर्पं परिससार परितश्चचार द्वे सृक्किणी ओष्ठान्तभागौ स सर्पोऽप्यपसरन् तिर्यग्गच्छन् बभ्राम चतुर्दिशं परिवर्त्तमानोऽभूत् ॥ २५ ॥

इतौजसं क्षीणबलम् आनस्य आनम्रस्य प्रह्वीकृत्य अमृतकलस्य चन्द्रस्याधिगुरुः परमगुरुः अमृतकलानामधिको गुरुः डांकरणशील इति भावः इदं विशेषप्रज्ञानार्थमुक्तम् ॥ २६ ॥
उपसेदुः उपस्थिताः ॥ २७ ॥

गरकालशीर्ष्णः विषेण नीलशिरसः सर्पस्य "मूर्च्छा तु कश्मलं मोहः" इत्यमरः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भगवान् यत्कृतवान् तदाह-तं जिह्वयेति । द्विशिख जिह्वया युगपदेव द्वे सृक्किणी परिलेलिहानं तं प्रसिद्धं कालि मतिकरालविषमेवाग्निर्दृष्ट्योर्यस्य तादृशं सर्वप्रकारेण क्रोध मूर्छितं कौतुकी भगवान् क्रीडन्नेवामुं परिससार भगवतो निर्भयगमने दृष्टान्तं हेतुत्वेनाह-यथा खगेन्द्र इति । न हि स स्निग्धत्वाद्भयमस्ति दुष्टाश्च भगवतो द्राह्याः न हि कापुरात् भयं भवति अतः स एव भगवतो भीतः युद्धार्थमवसरं प्रत मीक्षमाणो बभ्राम प्रदक्षिणां बहुधा कृतवान् ॥ २५ ॥

तदा भगवान् तं निगृह्य तदुपरि नृत्यं कृतवानित्याह-एवमिति । ननु, दुष्टः कथं नृत्यं कारितवान् ? तत्राह-परिभ्रम इतौजसमिति । सर्पो हि परिभ्रमे व्यथां प्राप्नोति अतो बहुधा परिभ्रमात् इतौजा इव जातः केवलमुन्नता अंसा यस्य तादृशमानतस्य तमपि आगमबन्धनात् कृत्वा तत्र द्वयोर्ग्रां पादौ निवेश्य अन्यौ हस्ताभ्यां धृत्वा आनतस्य तत्पृथुशिरःसु अधिरूढो जातः । ननु, सर्पोऽयममङ्गलः कथं भगवता आरूढः ! इति चेत्तत्राह—आद्य इति । स हि सर्वकर्ता सर्वस्याद्यः तस्यापि पिता भवति अनन्तमारूढवान् अथवा आद्यः शेषशायी स हि सर्वदा सर्पमेवारुह्य तिष्ठति अनन्तस्य सर्परोहणाभ्यासात् तत्राऽऽस्थितः सन् तस्य मूर्द्धसु यानि रत्नानि तेषां निकरः समूहः तस्य स्पर्शेन अतिताम्रपादाम्बुजं यस्य तादृशः पूजितचरण इव सन्तुष्टस्तत्पृथुशिरस्सु ननर्त्त । ननु, विषमशिरस्सु कथं नृत्यं कृतवान् ? तत्राह-अखिलकलादिगुरुरिति । अखिलकलानामादिगुरुः कलाकौशलानि यावन्ति सं तानि सर्वाण्यनेनैव कृतान्युपदिष्टानि च लोकाः रज्जौ पादुका सहिता नृत्यन्तो दृश्यन्ते तत्र किमाश्चर्यं तत्र स्थूलेषु पृथु शिरस्सु नृत्यतीति ॥ २६ ॥

नृत्ये गीतवाद्ययोरङ्गत्वात्तदभावे नृत्यं विगुणं स्यादित्याशङ्क्याह-तं नर्तुमुद्यतमवेक्ष्येति । सर्वत्र देवा भगवन्तं पश्यन्त तिष्ठन्ति अत्रापि ते लौकिकानां सेवासामर्थ्यात् स्वयमेव सेवां कृतवन्त इत्याह—तं नर्तुमुद्यतं भगवन्तमवेक्ष्य तदा तदि समये तदीया ये गन्धर्वादयः ते प्रीत्या स्वस्य सेवावसरं ज्ञात्वा मृदङ्गपणवानकानि वाद्यानि गीतानि च पुष्पोपहा पुष्पवृष्ट्यः नुतिभिः स्तोत्रैः सहसा शीघ्रमेवोपसेदुः उपसर्प नृत्ये हि प्रथमतो नान्दी तत्र देवतास्तुतिः पुष्पवृष्टिश्च कर्त तदनु वाद्यं गीतं च तत्रापि वाद्यगीतयोरारम्भं कृत्वा नान्दीप्रकटनार्थं पुष्पवृष्टिर्भवत्येव भगवन्तमेव च देवाधिदेवं स्तुवन्तः अत्र क्रमो न विवक्षित इति ज्ञापयितुं सहसा शीघ्रमेवोपसेदुः इत्युक्तं गन्धर्वा गायका सिद्धा पुष्पवृष्टिकर्तारः मुनयः स्तोत्रकर्त्तारः चारणा वादकाः देववध्वोऽप्सरसः नर्त्तक्यः कश्चिदभिनये उभयोर्बहूनां च नृत्यं भवति तदा स्तासाम् ॥ २७ ॥

एवं नृत्ये क्रियमाणे यदासीत्तदाह-यद्यदिति । यद्यदेव कालियस्य शिरः न नमते तत्तदेव नामयन् दमयामासेति सम्बन्धः शतं शत संख्यान्येकानि प्रधानानि शीर्षाणि यस्येति एतादृशस्य कालि यस्य सर्वाण्येव शिरांसि प्रधानानीत्येकनमनेऽपि नान्येषां नमन अतः प्रत्येकं नामनम् अङ्गतिसम्बोधनं स्नेहात् आदौ

**तस्याऽक्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषोच्चैः।**
**नृत्यन् पदाऽनुनमयन् दमयाम्बभूव पुष्पैः प्रपूजित इवेह पुमान् पुराणः॥ २९॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

न मन्यते अन्यत्र स्थित एवाङ्घ्रिपातैः नृत्ये गतिविशेषैस्ताल-समाप्तिस्थानेषु तस्मिन्नेवोच्चशिरसि पादप्रहारं करोति ततः पादप्रहारभिया तत्तमेव तिष्ठति। किञ्च, न प्रहारमात्रं करोति किं तु मर्मदं पादेन मर्दनमपि करोति यथोपरितनी त्वग्गच्छति द्वितीयप्रहारे अधिकव्यथाजननार्थम्, नन्वक्लिष्टकर्मा किमित्थं करोति? तत्राह–खलदण्डधर इति। खलानां दण्डमयं बिभर्ति अतो दण्डार्थमेवं करोतीत्यर्थः। ततः क्षीणायुषः क्षीणप्राणा-बलस्य मूर्च्छितस्य रुधिरमुल्वणं जातं तदन्तः स्थापयितुमशक्य-मिति मुखाभ्यां नासिकातश्च वमन् नागः परमकश्मलमाप-मूर्च्छां महतीं व्यथां वा नागजातित्वाच्च पलायते शूरा हि ते क्षीणा-युषो रुधिरमुल्वणमिति भिन्नं वाक्यं सङ्घातपरं देहपरं वा अन्यत्तु जीवपरम्॥ २८॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

द्वे स्त्रीये सृक्किण्यौ पुनः पुनर्लिहन्तं तममुं परि परितः ससार तं भ्रमयितुं तस्य सर्वतो बभ्रामेत्यर्थः। स कालियोऽपि दंशनस्य अवसरं समीक्षमाण एव बभ्राम कृष्णाकर्तृकभ्रमणलाघवाद्दंश-नावसरं न प्रापेति तिर्यग्भ्रमिखेलयापि तं जिगायेत्यर्थः॥ २५॥

उन्नतांसुद्धावंसौ यस्य तम् आनम्येति परिश्रमहतौजस्त्वात् भ्रमणासमर्थस्य शिरांस्येव एकहस्तेनैवानम्य तत्राधिरूढः सन्ननर्त "शिरः स कृष्णो जग्राह स्वहस्तेनावनम्य च" इति हरि-वंशोक्तेः तस्य मूर्द्धसु ये रत्ननिकरास्तेषां कठोराणां स्पर्शेनातिसुकुमारत्वादतिताम्रमत्यरुणं पादाम्बुजं यस्य सः स्थानीयरागादिषु कलाज्ञापनाय नटा नटन्ति। अयं तु सर्व-कलानामादिगुरुत्वात् चञ्चलेषु कालियमूर्द्धसु ननर्तेति स्वकला-भिज्ञत्वदर्शनेयं व्रजसुन्दरीषु पूर्वरागवतीषु ज्ञेया॥ २६॥

नर्त्तनर्त्तितुं तदीयेति वाद्यं विनैव स्वमुखेनैवोच्चारितैस्थैथै-शब्दैः प्रभुर्नृत्यति तद्वयं कं समयं प्रतिस्थिता इति विचार्येति भावः॥ २७॥

शतम् एकानि मुखानि शिरांसि यस्य तस्य अग्रे फणा-सहस्रोक्तेः यत् यत् न नमत्युच्चीभवति तत्रैव सहसाऽऽरूढ अङ्घ्रि पातैस्तानेव क्षणान्ममर्द तदा च मास्यतो मुखेभ्यो नस्तो नासा-विवरेभ्यः असृग्वमन्॥ २८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरिश्च क्रीडन् द्विशिखया जिह्वया प्रतिमुखं द्वे सृक्किणी लेलिहानम् अतिकरालां विषाग्नियुक्तां दृष्टिं यस्य तममुं कालियम् परितः ससार सोऽपि कालियोऽपि अवसरं दंशनार्थम् अन्तरं प्रसमीक्षमाणः बभ्राम॥ २५॥

आद्यः विश्वहेतुः एवं परिभ्रमणेनैव हतमोजो बलं यस्य तम् उन्नतावंसौ यस्य तं कालियम् आनम्य तस्य पृथुशिरस्सु अधिरूढः सन् ननर्त, कथम्भूतः? तस्य नागस्य मूर्द्धसु ये रत्ननिकरास्तेषां स्पर्शेनाताम्रम् पादाम्बुजम् यस्य सः; ननु, विषमेषु तच्छिरस्सु कथं ननर्त? इत्यत आह–अखिलकलाना-मखिलाः कलाः येषु तेषां शिवादिनामादिर्हेतुश्चासौ गुरुश्च स तथा॥ २६॥

देवशब्दवाच्यानां सर्वेषां वध्वः भार्याश्च॥ २७॥

शतमेकानि मुखानि शीर्षाणि यस्य तस्य॥ २८॥

---

### भाषा टीका।

दो फांक वारी जीभतें दोनों होठन की बगलन कों चाटतो जाय है, बड़ी भारी कराल विषकी अग्नि भरी भई जा की दृष्टि, या काली नाग पै खेलतेई खेलत श्रीकृष्ण झपटे जैसे गरुड झपटे, वो भी भ्रमतो २ अपनो अवसर देखतो भयो दाव विचारतो रह्यो॥ २५॥

ऐसे फिरते २ बल जाको घट गयो तब काली के ऊंचे फणान कूं नवाय के स्थूल फणान पै चढ़के, काली के मस्तक के रत्नन के समूहन के स्पर्श से अतिताम्र जिनके चरण कमल ऐसे आदि पुरुष अखिल कलान के आदि गुरु "थेई" करि के नांचिबे लगे॥ २६॥

जासमें काली के फनन पै वनमाली ने नृत्य करिबे की ठानी, तासमें हरि के भृत्य गन्धर्व सिद्ध सुर चारण और देववधू सब प्रेमसूं मृदंग पणव आनक इत्यादि बाजे और गीत पुष्प भेंट पूजा स्तुति पूर्वक समीप आय के उपस्थित होत भये॥ २७॥

हे राजन् एकसो एक (१०१) फणान में सों जा फन कूं काली ऊंचो उठावतो खलन को दण्ड देन वारे श्रीकृष्ण अपने चरण सों वाई फन को अच्छी तरियां कुचल देवें वासमें क्षीण आयु वारो इत उत कूं भ्रमतो काली नाग तीव्र रुधिर नाक सो वमन करके बड़ी कश्मलता कूं प्राप्त होतो भयो॥ २८॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

पुनरपि रुषा उच्चैर्निःश्वसतो यद्यत्समुन्नमति तत्तत्पादाघाते-नानुनमयन्निदानीमवसरे हृष्टैर्गन्धर्वादिभिः शेषपायनः पुराण-पुरुष इव यशोदानन्दनन्दनः पुष्पैः प्रपूजितः यद्वा, तदा गन्धर्वा-दिभिः पुष्पैः प्रपूजितो गोपैः पुराणः पुमानिव दृष्ट इति। यद्वा, पुष्पैः प्रपूजित इव प्रसन्नः सन्दमयाम्बभूव हितं कृतवा-नित्यर्थः॥ २९॥

तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन् नृप ! भग्नगात्रः ।
स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥ ३० ॥
कृष्णस्य गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ।
दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसनभूषणकेशबन्धाः ॥ ३१ ॥
तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः ।
साध्व्यः कृताञ्जलिपुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अरणं शरणम् ॥ ३० ॥

गर्भे जगन्ति यस्य तस्यातिभारेणावसन्नमाक्रान्तं पार्ष्णिः पादपृष्ठम् आद्यं श्रीकृष्णं श्लथन्तो विस्रंसमाना वसनादयो यासां ताः ॥ ३१ ॥

ताः शरणं प्रपन्नाः सत्यस्तं प्रणेमुः सुविग्नमनसोऽतिविह्वलचित्ताः भुवीति तस्मिन् स्थाने जलाधस्ताद्वा तीरे वा शमलस्य पापात्मनोऽपि भर्तुर्मोक्षेप्सवः भर्तुर्यच्छमलं तस्य वा भूतपतिं प्राणिमात्रस्य पतिं शरणदमाश्रयप्रदम् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वाङ्गवैवश्येऽपि अक्षिभिर्गरलमुद्वमत इति तुच्छस्वभावनिर्देशः ॥ २९ ॥

तस्य तद्वा अनिर्वचनीयं चित्रं विविधं भ्रान्तिरेचकादिगतिभेदं यत्ताण्डवं तेन विशेषतो रुग्णो जातभङ्गं भग्नं वा फणानां सहस्रं यस्य सः । अथ साक्षात् श्रीचरणकृतदण्डात् सहजान्तर्दोषक्षयेण श्रीवत्सविन्दु तत्स्पर्शाद्विशुद्धभावोत्पत्त्या च श्रीभगवन्तं ज्ञातवान् प्रपन्नश्चेत्याह—स्मृत्वेति । तं श्रीकृष्णं चराचराणां गुरुं जनकत्वादेः यतः पुराणं पुरुषं सर्वेषामाद्यमित्यर्थः । यतः नारायणं लोकपालकारणाभिमित्यर्थः । किं वा सर्वजीवानामाश्रयम् एते सर्वथा शरणापत्तौ हेतवः स्मृत्वेति प्राचीनेन तेन शतशः श्रुतस्यापि तस्य दौरात्म्यमानराहित्यात् मनसेति परमार्त्या तथास्मीत्युक्तावप्यशक्तेः यद्वा मनसो शरणगमने हेतुः पुरुषमन्तर्यामितया हृदयरूपायां पुरि शेते सदा वर्त्तत इति तथा तं यद्वा तं श्रीकृष्णं नारायणं स्मृत्वा स्वपत्नीभ्यस्तथा श्रुतमनुसन्धाय शेषं प्राग्वत् ॥ ३० ॥

एवं शरणापत्त्या त्यक्तचरणाघातदण्डे सम्यक् प्रसन्ने तासां स्वभक्तानामपि तुच्छस्वामिसङ्कोचादनागतचरीणां सम्बन्धेन स्वयमेव तस्य तादृक्त्वं साधितं तदपेक्षान्न्यायेति तदर्थमेव ताभ्यस्तात्स्वप्रसाददर्शनार्थमेव च शिरस्येव विलम्बमाने श्रीभगवति तासां प्रतिपत्तिमाह—कृष्णस्येति द्वाभ्याम् । गर्भजगत इति विभुत्वादुक्तं "न चान्तर्न बहिर्यस्य" इति न्यायेन गर्भशब्देन स्थानान्तरमुच्यते ततो व्याप्तसर्वस्येत्यर्थः । तथापि जगत्स्पर्शमात्रमतु दर्शितः "मया ततमिदं सर्वम्" इत्यस्मिन्नेवम्भूते भारतायाः कैमुत्यात्कालियादेः सर्वस्यापि चूर्णत्वं न जायते तत् खलु तस्येच्छामयनिजशक्तिप्राकट्यस्यापेक्षात एव सम्भवतीति भावः आतपत्ररूपकेण फणानां परिरुग्णतया तस्य ताभ्यो विभवः सूचितः उपसेदुः पार्श्वे जग्मुः आर्त्तत्वादेव श्लथद्वसनादिकाः इति महादैन्यमुक्तम् ॥ ३१ ॥

सुविग्नं पतिमरणशङ्कया तदन्यपराधशङ्कया वाऽतिभीतमतिदुःखितं वा मनो यासां ताः अर्थं प्रणामे प्रपत्तौ वा परमदैन्येन गुणविशेष उक्तः भुवि कायं निधाय दण्डवन्निपत्येत्यर्थः । एवं ह्रदस्य मध्ये कश्चित् द्वीपो बोध्यते यत्र क्रीडाविशेषार्थमुत्थितः श्रीकृष्णः कालियेनाधुना गोकुलजनैरदृश्यतेति वर्णितं पुरस्कृतार्भास्तं कृपाजननार्थम्, ननु, भर्त्तुरपराधेन कुतो न बिभ्यति स्म ? तत्राह भूतानां प्राणिनां सर्वेषामपि पतिं तासां तादृशतया स्फुरितं तस्माद्भयेऽपि कुत्रान्यत्र गन्तव्यमिति भावः । अत एव भर्तुः भर्त्रो यः शमलस्य मोक्षस्त्यागः तमिच्छन्त्यः कुतः साध्व्यः पतिव्रताः श्रीकृष्णशक्तिमत्यश्च ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चित्रताण्डवम् अद्भुतनृत्यन्तेन विरुग्णां भग्नम् ॥ ३०—३१ ॥
पुरस्कृतार्भाः पुरस्कृतबालाः ॥ ३२—३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अक्षिभिर्नेत्रैर्विषमुद्वमतः पुनः रुषा क्रोधेन उच्चैर्निश्वसतः श्वासं मुञ्चतस्तस्य शिरस्सु मध्ये यद्यच्छिरः कर्तुं समुन्नमति उद्वृत्तं बभूवेत्यर्थः । तत्तत्पदा पादघातेनानुनमयन् प्रह्वीकुर्वन्नित्यर्थं नृत्यन् दमयाञ्चकार दण्डयामास, कथम्भूतः ? पुष्पैः पुष्पवर्षैः सुपूजितः गन्धर्वादिभिरिति कर्तृपदाध्याहारः तादात्त्विकं भगवन्तं वर्णयति इह अस्मिन्नवसरे पुराणः पुमानिव शेषासनो भगवानिवालक्ष्यतेत्यर्थः ॥ २९ ॥

तस्य भगवतश्चित्रेणोत्कटेन ताण्डवेन नृत्येन निरुग्णं नितरां पीडितं फणानां सहस्रं यस्य भग्नं गात्रं यस्य सः कालियः हे नृप ! मुखैः रुधिरमुद्वमन् उद्गिरन् तदा तं कृष्णं चराचरात्मकं सर्वभूतनियन्तारं पुराणं पुरुषं श्रीनारायणं स्मृत्वा तमेव मनसा अरणं शरणं जगाम ॥ ३० ॥

कृष्णस्य गर्भे यज्जगत्तस्यातिभरेणावसन्नं पीडितं पार्ष्णिप्रहारैः पादपृष्ठघातैः परितो रुग्णाः पीडिताः फणा एवाऽऽतपत्राणि यस्य तमहिं कालियं दृष्ट्वा अमुष्य कालियस्य पत्न्यः आर्त्ताः दुःखिताः विस्रंसमाना वस्त्रादयो यासां ताः आद्यं श्रीकृष्णमुपसेदुरुपजग्मुः ॥ ३१ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ताः कालियपत्न्यः सुविघ्नानि नितरां भीतानि मनांसि यासामत एव पुरस्कृताः पुरोनिधापिताः अर्भा बालाः याभिस्तास्तथाभूताः भुवि कायान् देहान्निधाय दण्डवत्पातयित्वा तं भूतपतिमपराधानवेक्षणेन शरणागतभूतमात्ररक्षितारं कृष्णं प्रणेमुर्नमश्चक्रुः ततस्ताः साध्व्यः पतिव्रताः शमलस्य पाप्मनो भर्तुर्विमुक्तः मोक्षेच्छवः भर्तुः शमलस्य वा धृताञ्जलिपुटाः शरण्यं शरणं रक्षणोपायमात्मानं ददातीति तथा तं "य आत्मदा बलदा" इति श्रुतेः। तं कृष्णं शरणम् उपायं प्रपन्नाः अध्यवसितवत्यः—

"अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः" ॥

इत्युक्तविधां प्रपत्तिं चक्रुरित्यर्थः ॥ ३२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शिरस्सु मध्ये यद्यच्छिरः समुन्नमति तत्तच्छिरः अनुनमयन् नृत्यन् बभूव ॥ २९ ॥

अङ्घ्रिपातविशेषेण रुग्णं भग्नम् अरणं शरणं क्षीरसागरशायी यस्तम् ॥ ३० ॥

गर्भे जठरे जगद्यस्य स गर्भजगत् तस्य कृष्णस्य अतिभारावसन्नः पीडितः पार्ष्णिः पादपृष्ठभागो यः तेन कृतेन प्रहारेण परिरुग्णं फणातपत्रं यस्य स तथा तम् ॥ ३१ ॥

पुरस्कृतार्हाः अग्रे कृतपूजनाः परमस्य सकाशात् पत्युर्मोक्षेच्छवः ॥ ३२ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तं श्रीकृष्णं नारायणं स्मृत्वा सपत्नीभिः श्रुतमनुसन्धाय तं शरणापत्त्या चान्तवन्तमपि तदपेक्षया शिरस्येव स्थितं तत्पत्न्यः प्रपेदिरे इत्याह—कृष्णस्येति द्वाभ्याम्। गर्भजगत इति विभुत्वात् भुवि कायं निधायेति तत्र मध्यद्वीपः सूचितः ॥ ३०—३९ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पूर्वश्लोके आधिभौतिकस्याध्यात्मिकस्य च दण्डो निरूपितः आधिदैविकस्य दण्डमाह—तस्याक्षिभिरिति। नासिकामुखयोः श्वासमेव विषप्रतिबन्धकं जातम् अक्ष्णोस्तु ज्ञानप्रधानत्वात् प्रतिबन्धकं न जातमिति यदाऽक्षिभिर्गरलमुद्वमति तादृशस्य शिरस्सु मध्ये यद्यत् समुन्नमति तत्तदेव पदा अनुनमयन् दमयाम्बभूव आधिदैविकभावापन्नान्यपि कानिचिच्छिरांसि तान्येव वा प्रवृत्तानि गरलं स्वस्योपास्यं रूपं तदग्रे करोति पश्चात् स्वयमपि गतिहते निःश्वसिति नातःपरं निस्तार इति तादृशमपि चेन्मारयति भगवान् तदा मरणार्थं यदा उद्वे- भगवति सत्त्वगुणमनीत्यनेन देवताधिष्ठानं ज्ञापितम् आधिदैविके वीर्यं मरणार्थमुपस्थिते साक्षान्मारणमनुचितमिति नृत्यरूपतया ऽनृत्यं कुर्वतैव नृत्यकरणभूतेन पदा अनुनमयन् स्वसम्मुखतया नमनं कारयन् शिक्षयन्निव दमयाम्बभूव दमनं कारितवान् स्वयमेव वा कृतवान् एवं दमने कृते आधिदैविकस्य उपास्यस्य भगवतो वा अस्वारस्यं भवेत् तदा मर्यादाविरोधः स्यादित्याशङ्क्याह—पुष्पैः सुपूजित इवेह पुमान् पुराण इति। इहास्मिन्नेवावसरे पुष्पैः सुपूजित इव जातः आध्यात्मिकः भगवता सन्मार्गे शिक्षित इति तयोः सन्तोष एवान्तरनाभ्यां पूजितो भगवान् तौ ह्यलौकिकप्रकारेण दिव्यैः स्वतेजोभिः पूजां कृतवन्तौ तानि पुष्पाणीव जातानि तदाह—पुष्पैरिव सुपूजित इति। उभयोः पूजायां प्रत्येकं हेतुमाह—पुरुष इति। आधिदैविकपूजायां हेतुः अयमपि प्राकृतमेवेति पुराणस्तूपास्यः पुरुषोत्तमो हि सर्वोपास्यरूपाणामप्युपास्यः यथा ब्रह्मकपिलादेः एवं मूर्छापर्यन्तं दण्डं कृतवान् अद्भुतकर्मत्वान्नृत्येन अक्लिष्टकर्मत्वान्न मारितवान् ॥ २९ ॥

एवं सति भगवच्चरणारविन्दप्रसादात्तस्य ज्ञानभक्ती जाते इत्याह—तच्चित्रेति। नन्वभिमाने विद्यमाने कथं ज्ञानं? तत्राह—चित्रताण्डवेन विभग्नं फणातपत्रं यस्येति अभिमानस्य सूचकाः फणा एव श्वेतातपत्रस्थानीयाः ते पुनर्विचित्रताण्डवेन विशेषेण भग्नाः नृत्यं द्विविधं लास्यताण्डवभेदेन लास्यनाम स्त्रीनृत्यं ताण्डवं पुरुषनृत्यं तयोरवान्तरभेदाः शतशः सन्ति तत्र रसाभिनिविष्टः पुरुषः प्रलये महादेव इव विचित्रताण्डवं करोति तद्भगवतापि तच्छिक्षार्थं कृतं तेन विशेषेण भग्नफणातपत्रो जातः, ननु शरीरे दोषे विद्यमाने आध्यात्मिके भौतिके च कथं ज्ञानभक्ती भवतः? इत्याशंक्याह—रक्तं मुखैरुरु वमन्निति। रुधिरमन्नदोषात्मकं तद्वमने अन्तर्दोषो गतः अन्नगतत्वाद्बहिर्दोषोऽपि अतो निर्दुष्टो नारायणं स्मृतवान् आधिदैविके हि शेषे स्वसम्बन्धिनि स शेते अत आधिदैविकानोपकृतो नारायणं स्मृतवान् उपास्येन च स एवाऽयं नारायण इति ज्ञातवान् तदा स्वस्य दासत्वमस्य भगवतः स्वामित्वं चात्मत्वेन ज्ञात्वा तमेवारणं शरणं मनसा जगाम मनसा हि नारायणशरणत्वेन भावनीयः स ह्यन्तःकरणसाक्षी शरणङ्गतो हि पश्चात् सेवया भक्तो भवति ततः परं न प्रहार इति ज्ञातव्यम् ॥ ३० ॥

अनेन स एवं जात इत्यन्येनैव तस्य विमोचनं वक्तुं तस्य स्त्रियः समागता इत्याह—कृष्णस्येति। ता हि भर्तारं दृष्ट्वागताः पतिव्रता नार्यः अतः स्वधर्मेणैव तासां ज्ञानं कृष्णस्य भारेण अवसन्नं पीडितं पार्ष्णिप्रहारेण च परितो भग्नं फणातपत्रं यस्य एवं स्वतोऽभिमानमपि गतदोषमपूर्वमेव पत्न्यः तं दृष्ट्वार्ताः सत्यो भगवन्तमुपासेदुरिति अत्ययः ननु, बालकस्य भगवतः को भारः? तत्रापि सच्चिदानन्दस्य स्थूलकार्यस्यैव भारत्वात् तत्राह—गर्भे जगद्यस्येति। न ह्येतेन जगद्भारः सोढुं शक्यते तत्रस्थैव भ्राता शेषः कथं सहते तत्रोक्तं परितो भग्नं फणातपत्रं वर्ण्यते न केवलं भगवान् भाररूपः किन्तु मारयति च तन्नान्यस्य स्त्रियः कथं भगवत्स्थानं समागतास्तत्राह—भार्यागतेति। स हृदेः स्वस्य च मूल-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भूतो भवति । किञ्च, ममुष्य पत्न्यः "पत्युर्नो यज्ञसंयोगः" इति यज्ञसंयोग एवासां पत्नीत्वम् अयं च भगवान् यज्ञः तत्र पतिः संयुक्तः स्वयं वेदसंयुक्ताः स्युः तदा पत्न्य एव न स्युः किञ्च, आर्त्ताः पत्नीत्वादेव ताः शरीरं भवन्ति अतः स्वयमेव ताडिताः अर्द्धमृता विज्ञापयन्ति नन्वस्य मारणं कथमन्यो मारित इव पीडितो भवेत् शास्त्रं तूपचरितार्थमिति मतं दूरीकुर्वन् तत्राधिकारे तथैव भवतीति ताडितचिन्हान्याह श्लथन्ति वसनानि भूषणानि केशबन्धाश्च यासाम् ॥ ३१ ॥

आदिमध्यावसानेषु संयुक्तपदार्थानामपगमः ताडनव्यतिरेकेण न सम्भवति तत्रापि मानवतीनां तासां भर्तृमोचनार्थं भर्तरि दयोत्पादनार्थं भर्तुर्बालकत्वं ज्ञापयन्त्यः भर्तृरूपात् बालकान् पुरस्कृत्योपायनमिव स्वसर्वस्वं भर्तृस्थापितं निवेद्य स्वयमपि भूमौ जल एवोद्गताविवेकधूमो तीरस्थभूमौ वा अन्तर्ह्रदमध्ये प्रविष्टं भगवन्तं वा आत्मनिवेदनमिव कुर्वन्त्यो नमस्कारं कृत्वा भगवत्स्तोत्रं कृतवत्य इत्याह—तास्तमिति । नन्वागता एव कथं न प्रार्थितवत्यः ? तदाह-विपन्नमनस इति । विपन्नं मनो यासां भगवान् मोचयिष्यतीति गतविश्वासाः भर्तुरपराधित्वात् अतस्तं प्रकारं परित्यज्य अथ भिन्नप्रकारेण स्तोत्रं कृतवत्यः पुरस्कृताः अर्भा बालका याभिः संयुक्ता तु सामग्री पूर्वमेव गता अतो भूमौ कायं निधाय नन्वेताहगवस्थायां कथं पुरुषान्तरे पतितास्तत्राह-भूतपतिमिति । स हि भूतमात्रस्य पतिः साधारणः तद्गीता एवानुगृहीताः स्युस्तत्राह-साध्व्य इति । ताः हि भर्तृरूपमेव भगवन्तं सेवितुं वाञ्छन्ति नान्यप्रकारेण अतः कृताञ्जलिपुटाः अञ्जलिं बध्वा देवतारूपत्वात् दिव्यस्त्रीरूपाः भर्तुः शमलस्य पापस्यापराधस्य च मोक्षे मोचने इच्छा यासां तादृश्यः सत्यो भगवान् शरणद इति शरणं प्रपन्नाः स तु शरणागत इति भगवतेव न मारणीयः तथापि तस्य पापं सहजं तमोरूपमपराधश्च न गच्छतीत्येतासामुद्योगः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्य शिरस्सु मध्ये यत् यत् समुन्नमति तत्तदेव पदा पादप्रहारेण अनुनमयन् तस्मिन्नवसरे दृष्टैर्गन्धर्वादिवृन्दैर्माणैः पुष्पैः प्रपूजित इव प्रसन्नः सन् तेषामेव हितार्थं दुष्टं दमयाम्बभूव ॥ २९ ॥

परममक्कामिस्तत्पत्नीभिः कृपारूपं भक्तिबीजं पूर्वमुप्तमपि पूर्वपूर्वापराधजनितक्रौर्यदोषव्याप्ते कालियस्य तस्यान्तःकरणे दुष्टक्षेत्र इव प्ररोढुमसमर्थमेवासीत् तदा तु श्रीचरणस्पर्शेन तत्कृतदण्डप्राप्त्या च तद्दोषक्षये सति सहसैव तद्भक्तिबीजमङ्कुरितं बभूवेत्याह-रम्येति । मद्वैरिणो गरुडादप्यस्य परस्सहस्रगुणाधिकं बलं मयोपलब्धं तस्मान्मत्पत्नीभिरुपदिष्ट भक्ति कोऽयमेव परमेश्वर इति स्त्रीयस्मृतिगोचरीकृत्येत्यर्थः । चराचरगुरुमित्यसाधारणं बलन्दर्शयन्नहमेव परमेश्वर उपास्य- इति मूढमपि मां शासयन् कृपया मच्छिरोऽर्पितचरणो गुरुर्भवान् प्रसीदति नमितमर्दमदानी शरणं यामीति मरणं शरणम् ॥ ३० ॥

गर्भे जगन्ति यस्य तस्य भत एवातिभरेण आर्त कृष्णम् आर्त्ता इत्येतावत्कालपर्यन्तं याः पत्यावुदासीना पत्यु बहिर्मुखोऽयं भगवत्कृतदण्डेन म्रियते चेन्म्रियतां वयं विर एव भूत्वा भगवन्तं भजामेति यदा तु मनसा शरणं गतस्य दैन्यातिवैदविषादवितर्कमित्यादिसञ्चारिलक्षणं मुखाचक्षुषु स्तदैवाहो अस्मद्भाग्यवशादयं वैष्णवोऽभूत्तदस्य रक्षणे इति संहतास्तास्तत्र जातस्नेहत्वादार्त्ताः श्रीमच्चरणा माजग्मुः ॥ ३१ ॥

तास्तं प्रथमं प्रणेमुः—मुचीति । ह्रदस्य मध्ये कश्चित् वृन्दावने यत्रैव स्थितः कृष्णः कालियचेष्टितो गोकुलजनैर्द ज्ञेयं पुरः कृष्णस्याग्रे कृता अर्भा बाला याभिस्ता कृपाजननार्थम् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रुपाञ्चैर्निश्वसतस्तस्य शिरस्सु मध्ये यद्यच्छिरः मति तत्तत्पदा पादमूलेनानुनमयन् एवं नृत्यन् इह नृत्यक्री पुराणः पुमान् श्रीकृष्णः पुष्पैः प्रपूजित इव प्रसन्नः दमयांबभूव हितं कृतवानित्यन्वयः ॥ २९ ॥

सोऽपि मनसा तं श्रीकृष्णमरणं शरणं गृहं मुक्तौ आश्रयं साधनसमये सहायमित्यर्थः जगाम ॥ ३० ॥

गर्भे जगन्ति यस्य अत एवातिभरेण अवसन्न पार्ष्णिप्रहारैः पादपृष्ठघातैः परितः रुग्णानि फणा एवातप यस्य तमाहिं दृष्ट्वा आर्त्तं श्रीकृष्णमुपसेदुरुपजग्मुः, कथम् द्रवयन्तो विस्रंसमानाः वसनादयो यासां ताः ॥ ३१ ॥

ताः नागपत्न्यः सुविग्नमनसः अतिविह्वलमनसः पुर अग्रे कृताः अर्भाः बालाः याभिस्ताः भर्तुः शमलस्य पा मोचिप्सवः तं श्रीकृष्णं भूतपतिं प्राणिमात्रस्य पतिं शर माश्रयदं शरणं प्रपन्नाः सन्तः प्रणेमुः, प्रणामप्रकारमाह, कायं निधाय दण्डवत्पातयित्वेति कृताञ्जलिपुटा इत्यनेन क युक्तानि शरीराण्यपि ताभिः प्रकटीकृतानीति गम्यते ॥ ३२

---

### भाषा टीका ।

नेत्रनसों विष उगरिवे वारो कालो जा२ मस्तककूं ऊंचो उठावतो वाई२ माथेकूं अपने चरणन सों नवावते भये जैसे पुराणपुरुष विष्णु पुष्पनसों पूजित होंय ॥ २९ ॥
हे नृप ! या चित्र विचित्र ताण्डव नृत्यमों फनरूप छत्र जाके मग्नगात्र वारो ऐसो कालो मुखनमों डारतो भयो चराचर गुरु पुराण पुरुष श्रीनारायण श्रीकृष्णके शरण जात भयो ॥ ३० ॥
जगत गर्भमें जाके ऐसे कृष्णके भारसों और ठोकर सों टूटिगयें फन जाके ऐसे वा सर्पकूं देखके पत्नी परम आर्त्त होयकें ढीलेपर रहे वसन भूषण बन्धन जिनन के ऐसी वे नागपत्नी आदि पुत्र शरणागत आवत भई ॥ ३१ ॥

नागपत्न्य ऊचुः ।

न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय ।
रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवाऽनुशंसन् ॥ ३३ ॥
अनुग्रहोऽयं भवता कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः ।
यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः ॥ ३४ ॥
तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन ।
धर्मोऽथवा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥ ३५ ॥
कस्यानुभावोऽस्य न देव ! विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः ।
यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥ ३६ ॥

भाषा टीका ।

ताके पीछे ये सब नागपत्नी अपने कच्छा बच्चान कूं आगे करकें अपने मस्तकन कूं पृथिवी पै धरकें भूतनके पति श्रीकृष्ण कूं प्रणाम करत भईं । बडी सीधी हाथ जोरिकें अपराधी भर्त्ताके छुडायवे की इच्छासूं आश्रय देन वारे श्रीकृष्ण के शरण जात भईं ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथमं तावत्कुपितं भगवन्तं दण्डानुमोदनेनोपशमयन्त्यः स्तुवन्ति—न्याय्योहीति । तत्र—

दण्डानुमोदनं षड्भिर्दशभिश्च हरे [ स्तुतिः ] नतिः ।
प्रार्थनं पञ्चभिः श्लोकैस्ततः पन्नगयोषिताम् ॥

न च निग्रहानुग्रहलक्षणं वैषम्यं तवास्तीत्याहुः—धत्से दममिति । अनुशंसन्नालोचयन् ॥ ३३ ॥

निग्रहोऽप्यनुग्रहार्थ इत्युक्तमिदानीमनुग्रह एवायं न निग्रह इत्याहुः—अनुग्रह इति । नोऽस्माकं यस्मादमुष्य सर्पत्वं दृश्यते अतस्तन्मूलपापनिवर्त्तको दण्डोऽनुग्रह एव क्रोधत्वेन प्रतीयमानोऽपीत्यर्थः ॥ ३४ ॥

महांश्चायमनुग्रह इति तस्य पूर्वपुण्यमभिनन्दन्ति—तप इति । स्वयं मानरहितेनान्येभ्यो मानदेन च सर्वं जीवयतीति सर्वजीवः ॥३५॥

न तप आदिनिमित्त एष भाग्योदयः किन्त्वचिन्त्यं तव कृपावैभवमित्याहुः श्लोकत्रयेण—कस्यानुभाव इति । तप आदिना ब्रह्मादयोऽपि यस्याः श्रियः प्रसादमिच्छन्ति सा श्रीर्ललना उत्तमा स्त्री यस्य त्वदङ्घ्रिस्पर्शाधिकारस्य वाञ्छया तप आचरत् अस्य सर्पस्य स किं कृतवानिति को वेत्तीत्यर्थः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अस्मिन् दण्डो न्याय्य एव ; तत्र हेतुः, कृतानि किल्बिषाणि गरदे श्रीयमुनावृन्दावनयोस्तज्जीवसमूहे श्रीभगवति च अपराधा येन तादृशे यस्तवावतारः प्राकट्यमात्रं खलानां साधुद्रोहिणां निग्रहाय भवति एवं साधूनामनुग्रहाय चेति सूचितम् अन्यथा तु न निग्रहो न चानुग्रह इत्याह—रिपोरिति । रिपूणां सुतानां च सम्बन्धे च तुल्या दृष्टिर्यस्य तादृशस्य न च खलनिग्रहेऽपि नैर्घृण्यमित्याह—धत्स इति । फलं नानानरकादि दुःखहेतुस्वखलत्वोपशमपूर्वकं नित्यसुखदानलक्षणम् ॥ ३३ ॥

हि निश्चितं नोऽस्मान् प्रति दण्डो दण्डत्वेन दृश्यमानोऽप्ययमनुग्रह एव भवता कृतः यतस्ते त्वया कृतः सोऽयमसतां कल्मषापह एव स्यात् यद्यस्मात् कल्मषादमुष्य देहिनः कर्मभिर्नानाविधं प्राप्नुवतः सम्प्रति दन्दशूकत्वं जातं कृते त्वनुग्रहे निरन्तरभवदावेशेन जीवन्मुक्तत्वात् दन्दशूकत्वाभास एव दर्शयतीत्यर्थः । तस्मात् क्रोधोपीत्यादि । यद्वा, असतां कल्मषापहोऽपि ते त्वया दण्डो नो कृतो न कृतः यद्यस्मात् अमुष्य सर्पत्वं सर्पशरीरं तत्खलु अनुग्रहे निमित्त त्वया सम्मतमेव तथा क्रोधो जातिस्वभावोऽपि अनुग्रहे निमित्त एव त्वया सम्मतः अङ्गीकृतः स्वक्रीडार्थे योजित इत्यर्थः । भोगपरिवेष्टनस्वीकारात् तथा फणेषु क्रोधेनोन्नम्यमानेषु परमहर्षेण नृत्याचरणाच्च ॥ ३४ ॥

तपः कृच्छ्रादि सुष्ठु तप्तं कृतं सौष्ठवमेव दर्शयति—निरस्तेति विशेषणद्वयेन । तेन चैच्छिकेन तस्य सन्तोषमसम्भाव्य पक्षान्तरमाहुर्धर्म इति, स्वधर्मोनित्यः कृत इति शेषः । एवं स्वरूपेण सामर्थ्यमुक्त्वा विशेषणेनाप्याहुः—सर्वजनानुकम्पयेति । अनुकम्पा सर्वात्मना हिताचरणं तत्पूर्वक इत्यर्थः । पूर्वस्मिन् एतज्जन्मनि तत्तदसम्भवात् यतो याभ्यां तपोधर्माभ्यां त्वत्सन्तोषार्थं कृताभ्यामिति गम्यं सर्वे जीवा यस्येति जीवेषु सर्वेषु समानाधभावेन सम्माननाऽनुकम्पनादिना च तव तत्प्रसादतोषसिद्धेः ॥ ३५ ॥

तव श्रीगोकुलेश्वररूपस्याङ्घ्रिरेणूनां स्पर्शः तत्राधिकारः अस्यापराधिनः कालियस्य फलमस्य कारणस्याऽनुभावः फलं तत्र विद्मः तत्र हेतुर्यदिति तादृशतप आदिप्रभावा श्रीरपि ललना परमसुकोमलाऽपि यद्वाञ्छया कामान् त्वद्विधपरमभवत्सङ्गमयनसङ्गोगान् विहाय धृतव्रता बद्धनियमा सती तप आचरदेव नतु तं प्रापेत्यर्थः । प्राच्यौ सत्यां "कस्यानुभावोऽस्य

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न देव ! विद्महे" इति नोच्यंतेति भावः । तच्च युक्तमेवेति सम्बोधयन्ति-देव हे अद्भुतानन्तमहिम्ना द्योतमान ! इति । एतदुक्तं भवति श्रीरियं वैकुण्ठेश्वरादिप्रेयसीरूपा नतु गोपरामारूपा रेखादिरूपा च "गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः" इति तदुक्तेस्तस्मिन्नेव पर्यवसानात् सूक्ष्मस्वर्णरेखारूपेण तद्वामवक्षोभागे स्थितत्वाच्च तपोऽत्र स्त्रीत्वात् स्वपत्याराधनम् अत एव पूर्वत उत्कृष्टत्वं श्रीकृष्णस्य तेन सहैकात्म्यज्ञानात्तथापि सौन्दर्यादिवैशिष्ट्येन लोभविशेषात् तद्वाङ्कत्वं च युक्तमिति श्रीत्वेन सर्वासां तासामैकात्म्ये सत्यप्यन्यतमाया अभिलाषः प्रादुर्भावभेदेनाभिमानभेदात् यथा वैकुण्ठनाथादिसङ्गिनीष्वपि तत्तल्लक्ष्मीषु सीतादीनां श्रीरामविरहाद्यं श्रूयत इति तस्याश्च तप आदिना त्रिकालमप्राप्तिरेव विवक्षिता अप्राप्तिकारणं च गोपीवत्तदनन्यत्वाभाव एवेति च यद्यपि तासां परमतद्भक्तानां सङ्ग एव श्रीवृन्दावनान्तर्यमुनावास एव च हेतुरस्ति तथापि स्वावमाननात् तद्वासस्य च तद्रजः स्पर्शमयत्वेन फलान्तःपातात् तदप्रस्ताव इति ज्ञेयम् ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यद्दन्दशूकत्वं येन फलगणेनामुष्य दन्दशूकत्वमभूत्तत्फलमघापह इत्यन्वयः । अतस्तव क्रोधोऽप्यनुग्रहरूप इत्यर्थः ॥ ३५ ॥

कस्य पुण्यस्य श्रीललना वेदवतीसंज्ञा श्रीस्स्वयं तपश्चचारेति श्रीमद्रामायणे श्रूयते ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र भगवतस्तद्वितरासाच्च स्वभर्तृप्राणसंरक्षणात्मकं स्वाभीष्टोपायतां महाविश्वासपूर्वकं यियाचिषवस्तावद्याचनीयत्वोपयुक्तगुणवत्तां स्तुतिव्याजेनाविष्कुर्वन्त्यस्तावद्रक्षणीयस्यस्वभर्तुः कार्पण्यं भवान्तरसुकृतवत्त्वञ्च सूचयन्त्यः प्रकृतमेतस्य. दमनमहितव्याजं हितमेव तच्च समदृशा त्वया कर्तुमुचितमेवेति शिक्षापयामासुः-न्याय्य इत्यादिना द्वयेन । ततश्चतुर्भिः कार्पण्यसुकृतवत्त्वं ततो दशभिर्याचनीयत्वोपयुक्तगुणानाविष्कर्तुं स्तुतिः ततः पञ्चभिर्याच्ञेति विवेकः कृतं किल्बिषं हृद्यविदूषणात्मकं त्वद्दंशनात्मकं वा येनास्मिन् यस्त्वया धृतो दण्डः स न्याय्य उचित एव, कृतकिल्बिष इत्यनेन तस्य दण्ड्यत्वमाकिञ्चन्यं प्रत्युत सापराधत्वं च सूचितम् अथ तद्दण्डयितृत्वं न्याय्यमित्यभिप्रायेणाहुः-तवावतारः खलानां दुष्टानां निग्रहार्थं हि तवावतार इत्यर्थः । नन्वेवमपि वात्सल्यनिधेः ममैव तदनुचितमित्यत्राहुः-रिपोरिति । रिपोः सुतानामपि विषये तुल्या वैषम्यरहिता दृष्टिर्यस्य तथाभूतस्त्वं फलं हितात्मकमेव अनु समनन्तरमेव शंसन् सूचयंस्तावद्दमं दण्डं धत्से करोषि रिपोः सुतानामपीत्यनेन मित्रामित्रविभागानादरेणापराधिनां सर्वेषामपि दमं धत्स इति सूचितम् अत एव तुल्यदृष्टिः यद्वा, "हरिर्दुःखानि भक्तानां हितबुद्ध्या करोति वै । शस्त्रक्षाराग्नि कर्माणि स्वपुत्राय पिता यथा" इत्युक्तरीत्या अनुगृह्णमाणानां तावत्पुत्रादीनामिव सर्वेषामपि तादात्विकाहितव्याजं हितमेव करोषीति सूचितम् अतोऽयं दण्डोऽनुग्रहरूप एव वात्सल्यनिधेस्तवांचितोऽति भावः ॥ ३३ ॥

दण्डस्याऽनुग्रहरूपतामेव स्पष्टयन्ति—अनुग्रह इति । यः कृतो दण्डः सोऽयं नाऽस्माकमस्मद्विषयं अनुग्रह एव, कृत यतस्ते दण्डस्त्वत्कर्तृकदण्डोऽसतां नोऽस्माकं कल्मषापहः दुरितापहः किं तत्कल्मषं यदपहन्ता भवद्दण्डस्तत्राहु-अंहिनः कालियाख्यजीवस्य यत् यस्मात्कल्मषाद्दन्दशूकत्वं सर्पत्वं प्राप्तमिति शेषः । तत्कल्मषापह इत्यर्थः । अतः क्रोधोऽप्यनुग्रह एवाऽनुग्रहगर्भ एव सम्यक् मतो विज्ञातः ॥ ३४ ॥

कृतकिल्बिषे दन्दशूकत्वं सर्पत्वमिति पदद्वयेन ...नान्तराहित्यात्मकमाकिञ्चन्यरूपं कार्पण्यं सूचितम् अथ ...नुग्रहनिमित्तं सुकृतवत्त्वमनुमान्ति—तप इति । अनेनास्मत्पूर्वं पूर्वस्मिन् जन्मनि निरस्ताहङ्कारेण मानदेन ...पूजाप्रदेन च सता किं तपः सुतप्तं सुष्ठु कृतं पाकं ...तीतिविप्रतिदेशः । अथवा सर्वभूतानुकम्पया कश्चिद्धर्मो वा अनुष्ठितः स्यात्, कथमेवं ज्ञायते ? इत्यत्राहुः यतः सर्वान् जीवयति "... ह्येवान्यात्कः प्राण्यात्" इति श्रुत्युक्तरीत्या भोगमोक्षप्र... नोज्जीवयतीति तथा भवांस्तुष्यति तुष्टो भवितुं तावद्दण्डश... भावः । तपोधर्मयोरनिर्वचनीयत्वाभिप्रायकः किंशब्दः अ... नुष्ठितौ तपोधर्मौ इदमित्थन्तया नास्माभिरल्पबुद्धिभिर्... शक्यौ किन्तु केवलं सर्वान्तरात्मनो भवतस्तोषाल्लि... तन्निमित्तं किञ्चित्तप आदिकं कृतमित्यनुमास्यामह इति भा... यद्वा, तपस्यादिभिश्चतुर्भिः कार्पण्यमेवाविष्क्रियते अथ... पूर्वमनुग्रहरूपाद्दण्डात्प्रागेवानेन निर्गतः क्रूरेणानेन सर्पेण ... तपः सुतप्तं न किञ्चित् अथवा को धर्मः न कश्चित यतो ... तपसा धर्मेण वा भवांस्तुष्यति तत्र किञ्चिदपि कृतमित्यर्थः ... स्वभावतः क्रूरस्य निरस्तमानत्वाद्यसम्भावनाप्रदर्शनाय तानि... णानि ॥ ३५ ॥

कस्येति । अस्य कालियस्य त्वत्पादरजःस्पर्शाधिकारः ... पुण्यस्यानुभावः प्रभावस्तत्पुण्यमयं न वेद वयमपि न विद्मः ... कस्य न कस्यचिदपि तादृशं पुण्यमस्मिन् सपंजातौ किञ्चित् सम्भावितमित्ययं न वेद वयमपि न विद्मह इत्यर्थः । भवतः तदङ्घ्रिरेणोर्दौर्लभ्यमभिप्रेतं तदेवाविष्कुर्वन्ति-यद्वाञ्छ... यद्वाञ्छया यदङ्घ्रिरेणुलिप्सया श्रीललना श्रीलक्ष्मीरेव ... यस्याः पादरजो ब्रह्मादयो लिप्सन्ति सा श्रीरपि ... तदङ्घ्रिरेणुव्यतिरिक्तान् पुरुषार्थान् विहायाऽभिलषन्ती धृत... धृतं तपश्चर्योपयुक्तम् इन्द्रियजयात्मकं व्रतं यया तप... तपो बहुकालमचरत् पुरा श्रीवेदवतीरूपेण तपश्चचारे... श्रीरामायणकथाऽत्र सूच्यते ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दण्डः शासनं न्याय्यो युक्तं रिपोः सुतानामिति सप्तम्यर्थे रिपोः सुतेष्वपि तुल्यदृष्टेः त्वं तेषूभयेष्वपराधे दण्डं धत्से, कथं धत्से ? इति तत्राह—फलमिति । अनुशंसन् ...राधानुरूपं फलम् अनुग्रहलक्षणं दण्डं करोषीत्यन्वयः । ...

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, निगृह्णतः कथमनुग्रहो भवतीत्यत्राह—अनुग्रह इति । हि-शब्द एवार्थे भवता सर्वपूज्येन त्वया नः अस्माकं अयमनुग्रह एव कृतो न तु विरोधः कुतः ते त्वया क्रियमाणो दण्डोऽसतामसाधुभावानां दुष्कर्मणां तामसयोनिं प्राप्तानां कल्मषापहः खलु पापपरिहारक एव अमुष्यास्त्वं कथमत्राह, वर्ष्मेति । अमुष्य कालियनाम्नो दन्दशूकत्वं तत्तत्प्राणिदंशनशीलयोनित्वमभूत् इति ज्ञायते यद्यस्मात्तस्माद्वस्त्वं योग्यं तथा अतस्ते तव क्रोधः क्रोधकारणादण्डो योग्यस्य देहिनोऽनुग्रहः सम्मतः अस्माभिः प्रतिपन्न इत्यन्वयः "दण्डोऽपि भगवच्छीर्णां ममैवानुग्रहः कृतः" इत्यादिस्मृतेर्मक्तिमत एवायं विशेष इति ज्ञायते ॥३४॥

यद्दन्दशूकत्वमपि न दुष्कर्मनिमित्तमपि तु पूर्वजन्मन्यत्युत्कटत्वद्विषयतप आदिप्रभावोपनतमिति मन्यामहे "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" यतोऽस्य गवादिप्राणिद्रोहत्वदंशोत्पन्नपापपरिहाराय तव लक्ष्म्यादिसर्वदेवतावाञ्छितसेवाचरणसरोजरेणुमन्दिरमूर्द्धाऽभूदिति भावेन वदन्ति, तप इत्यादिना । भूतानादिलक्षणो धर्मः सर्वेषां जीवानां प्राणभूतः सर्वान् जीवयतीति वा ॥ ३५ ॥

तप आदिषु कस्य पुण्यस्यानुभावोऽयं प्रभावः अध्यवसायो वा काम्यन्त इति कामाः विषयास्तान् ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यद्वाञ्छयेति श्रीरियं वैकुण्ठेश्वरादिप्रेयसीरूपा तपोऽत्र स्त्रीत्वात् स्वपत्याराधनम् अत एव पूर्वेण उत्कण्ठत्वं श्रीव्रजेन्द्रनन्दनरूपाविर्भावविशेषेऽस्मिन् लोभविशेषात्तद्वाञ्छत्वं च युक्तं तथाश्च तप आदिना त्रिकालप्राप्तिरेव विवक्षिता कस्यानुभावोऽस्येत्यादेः अप्राप्तिकारणञ्च गोपीत्वादन्यत्वाभाव एव यद्यपि तासां परमतद्भक्तानां सङ्ग एव श्रीवृन्दावनान्तर्वास एव च हेतुरस्ति तथापि स्वावमाननाच्चद्वासस्य तद्द्रजस्पर्शमयत्वेन फणान्तःपातात् तदप्रस्ताव इति वज् ज्ञेयम् ॥ ३६—४४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दण्डानुमोदनं षड्भिर्नमनं दशभिस्तथा ।
प्रार्थना पञ्चभिश्चेति त्रेधा स्तुतिरुदीर्यते ॥
द्विविधस्यापि पापस्य सापराधस्य नाशिका ।
भगवान् षड्गुणास्तासु दशधा पञ्चधा पतिः ।

तत्र प्रथमं भगवत्कृतस्य दण्डत्वं स्वीकृत्य तस्य न्याय्यत्वमाहुः—न्याय्यो हि दण्ड इति । अयं मारणलक्षणो दण्डो न्यायानपेतः ईश्वरो हि त्रिविधं दण्डं करोति न्याय्यं न्यूनमाधिकं च प्रसादमर्यादेश्वरत्वधर्मास्तत्र प्रयोजकाः तत्रायं न्याय्यः कृतं त्रिविधं पापं येन अनेन वहव एव विहिंसिता इत्येतद्धिंसाप्युचितैव । ननु, पापे दण्डधरो यमोऽस्ति भवता स कथं कर्त्तव्यः ? इति चेत्तत्राहुः—तवावतारः खलनिग्रहायेति । खला हि निरन्तरं दोषकर्त्तारो बहुजीविनश्च मरणानन्तरमेव यमोऽधिकारी तावत्पर्यन्तमुपेक्षायां सर्वनाश एव स्यात् अतः खलानां निग्रहार्थमेव भगवान् मध्ये ऽवतीर्णः । ननु, तथापि कश्यपपुत्रोऽयं शेषभ्राता कथं दण्ड्यः ? इति चेत्तत्राहुः—रिपोः सुतानामपि तुल्यदृष्टेरिति । न ह्यवतीर्णः सम्बन्धमपेक्षते दण्डार्थमेव ह्यवतारात् रिपोः सुतानां स्वसुतानाञ्च सम्बन्धिनी तद्विषयिका भगवतस्तुल्यैव दृष्टिः अन्यथाकरणे वैषम्यं स्यात् रिपोः सम्बन्धिनी सुतसम्बन्धिनी वा सप्तम्यर्थे वा षष्ठी । किञ्च, भगवान् दण्डं न पीडार्थं करोति तथा सत्यात्मत्वं भज्येतात्मत्वञ्च. किन्तु भगवान् पुत्रमिव तस्याग्रे सत्फलमेवाऽनुशंसन् दमं करोति तदाह—धत्से दमं फलमेवानुशंसन्निति । अतोऽस्याग्रे फलं भविष्यतीति दण्डेन विनिश्चितम् ॥ ३३ ॥

एवं भगवत्कृतस्य दण्डत्वमङ्गीकृत्येदानीं दण्ड एवायं न भवति किन्त्वनुग्रह एवेत्याहुः—अनुग्रह इति । भवता ऽयमनुग्रह एव कृतः अहिनोऽहेः अप्रयोजकत्वात्स्वपुंस्त्वं ततो नुम् अतो वाऽनुग्रहः अहीनो वाऽनुग्रहः । ननु, दुःखात्मकत्वादस्य कथमनुग्रहरूपत्वं तत्राहुः—दण्डः असतां खलु कल्मषापह इति । दण्डो भगवानिति भारते व्यवस्थापितम् अतः क्लेशरूपोऽपि तपोवत् [दण्डोऽपि]याग्वत्फलमघनाशक इत्यनुग्रह एव । ननु, पापस्य प्रत्यहं जायमानस्य दीपेनान्धकारस्येव निवृत्तिरप्रयोजिका अन्यथा दुःखनिवारणार्थं कोऽपि पापं न कुर्यात् दण्डापेक्षया पूर्वदुःखस्यैवाल्पत्वादत आहुः—यद्दन्दशूकत्वमिति । आदानभरनप्रतिपादकत्वं तस्योक्तमेव तद्गमनेन सत्यं भवतीति च सिद्धं दन्दशूकत्वं सर्पत्वमपि जातं तदपि गच्छति चेत् दन्दशूकत्वमपि गच्छेत् ततो देहिन इति शब्दात् देहसम्बन्धः तदभिमानश्च गच्छेत् अतो यदर्थं साधकदण्डस्य हेतुभूतः क्रोधोऽप्यनुग्रह एव न केवलं युक्तिमात्रं किन्तु सम्मतः सतां मतः सर्वाऽविप्रतिपन्नरूपः अतो दण्डो दण्डहेतुः क्रोधश्चानुग्रह एव ॥ ३४ ॥

किञ्च, आस्तां दण्डप्रसादवार्त्ताः, एकमत्यन्तमाश्चर्यं प्रतिभाति यदस्मिन्नृत्यं कृतवानिति, तत्र हेतुं न जानीम इत्याहुः—तपःसुतप्तमिति । धर्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च तत्र निवृत्तिलक्षणो धर्मस्तपः विद्यमानस्यैवासत्सम्बन्धस्य त्याजकत्वात् अत एव "यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति" इत्यादिवाक्यानि सम्पादकन्तु प्रवृत्तिलक्षणो धर्म इत्युच्यते एकस्तु दोषनिवृत्त्या विद्यमानमेव फलं प्रकटीकरोत्यपरस्तु दोषचिन्तां परित्यज्यागन्तुकं फलं साधयति भगवांस्त्वात्मा ईश्वरश्च ज्ञानप्रसादो भक्तिप्रमादश्च तत्राद्ये पक्षे तपसा ये दूरीकर्तुमशक्या दोषास्तेषु विद्यमानेषु तपसा न निवृत्तिः सम्पादयितुं शक्या स दोषस्त्वहङ्कारात्मकः यस्तपसा न गच्छति प्रत्युताहन्तपस्वीत्यधिक एवाहङ्कारो भवति तदर्थमाह—किं वा अनेन लोकोत्तरं तपस्तप्तमिति येन भवान् परमात्मा तुष्यति तेषामन्यथानुपपत्त्या तादृशमपि तपोऽस्तीति कल्प्यते तत्रापि सुतप्तं देशकालादिसाधनानि सम्यग्जातानि प्रकारश्च अन्यथा षड्गुणो भगवांश्च तुष्येत् परं दोषान्तरनिराकरणार्थं धर्मद्वयमपेक्षते तदाह—निरतमानेन च मानदेनेति । स्वयं निरभिमानः महानप्यन्यस्मै हीनायापि मानं प्रयच्छामि तदा स्वकृतः परकृत आभिमानो गच्छतः यद्यप्यस्य पक्षस्य दोषजनकत्वमस्ति तथापि यावता भगवान् नृत्यति तावद्दोषजनकत्वं न भवतीति पक्षान्तरमाह—धर्मोऽयमिति,

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रथमपक्षे बहिस्तोषरूपनृत्यहेतुत्वं नोपपद्यते अत उभयमप्यपेक्षितं वाशब्दः समुच्चये वाशब्दप्रयोगाच्चैवं ज्ञायते तपोनिवृत्तिलक्षणो धर्मोऽस्तु न वा बहिस्तोषहेतुत्वमवश्यमपेक्ष्यते । अर्थात् भिन्नप्रक्रमे तेन धर्मशास्त्रानुसारेण धर्मो नैतादृशं फलं साधयति किन्तु भगवदिच्छानुसारेणैव तत्राप्येको दोषः परिहरणीयः द्रव्यमयश्चेत्परोपद्रवकारी क्रियामयश्चेदात्मोपद्रवकारी ज्ञानमयश्च तथायमेवापरितोषस्तपसि अतस्तद्दोषपरिहारार्थमाह—सर्वजनानुकम्पयेति । सर्वजनेषु या अनुकम्पा कृपा यत्र स्वपरद्रोहसम्भावना नास्ति भगवच्छ्रवणकीर्तनादौ तत्रापि कीर्तने । ननु, भगवत्तोषहेतुषु परिचर्यादिरूपेषु भगवद्धर्मेषु सत्सु कथमयमेव सर्वोपकारी धर्मस्तोषहेतुरिति चेत्तत्राह—सर्वजीव इति । सर्वान् जीवयतीति सर्वजीवः सर्वेषां जीवा यस्मादिति वा सर्वेषां जीवात्मरूपो वा अतः सर्वोपकारिणि धर्मे तोष उचितः यतो भगवान् सर्वजीवः अनेनैवापराधाभावोपि सूचितः योनिजीवस्वभावकर्मणां विरुद्धत्वादाश्चर्यञ्च ॥ ३५ ॥

किञ्च, अस्तामिदमाश्चर्यम् इतोप्यधिकमाश्चर्यमस्तीत्याहुः—कस्येति । भगवच्चरणारविन्दरेणवो भगवदीयदेहसम्पादका इति पूर्वमवोचाम तादृशानां सम्बन्धोऽस्य च जातः तेन ज्ञायते भगवदीयदेहं प्राप्स्यतीति परं येषामेव कोटिजन्मोपार्जितत्रिविधधर्मसंस्कृतभूतानि तेषामेव देहं सम्पादयन्तीति मर्यादया व्यवस्था साधारणसंस्कारपक्षे तूपपत्तिः सम्भवति तत्रापि हेतुः कश्चन वक्तव्यः न च क्रियारूपं न भवति अधिकारिणामेव तथात्वसम्पादकत्वात् अलौकिकस्तु भवति स लोके अनुभावो न सिद्धः ततोऽप्यपि कस्यचिदनुभावोस्तीति ज्ञायते परं स सम्बन्धी न निर्णीतः तस्याऽनुभावस्य प्रयोजनमाह—तवाङ्घ्रिरेणुस्पर्शाधिकार इति । तवाङ्घ्रिरेणूनां स्पर्शेऽधिकारो येन गुणातीता एव हि जीवास्तदधिकारिणो न तु सगुणाः कथञ्चन यतो महद्भिरपि सगुणैर्जीवैस्तन्न प्राप्यत इत्याह—यद्वाञ्छयेति । श्रीः सात्त्विकी भगवच्छक्तिः तस्याश्चेत् नाधिकारः ब्रह्मरुद्रयोस्तत्सम्बन्धिनां च सुतरामेव नाधिकारः ब्रह्मानन्दरूपापि सा भवतीति तद्व्यावृत्त्यर्थमाह—ललनेति । या श्रीः स्त्रीरूपा शक्तिरूपेति यावत् अनेन भगवतोऽन्तरङ्गदासीभूता निरूपिता साऽपि तपः करोति दास्यसिद्ध्यर्थं तथापि न प्राप्तवती त्रितयमेवैतत्स्थानमिति सर्वप्रसिद्धिः । ननु, चरणौ न च वक्तव्यं स्त्रीभावेन भोगेच्छा तत्र प्रतिबन्धिकेत्याह—विहाय कामानिति । सर्वानेवान्तःकरणाभिलाषरूपान् धर्मान् परित्यज्य तपः करोति न च वक्तव्यं दीर्घकालादर्वाक्तपस्तस्या इति तत्राह—सुचिरं धृतव्रतेति । आदरनैरन्तर्ये व्रताभिनिवेशाज्ज्ञायेते ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रथमं स्तुवन्त्यः कोपमुपशमयितुं दण्डमनुमोदयन्ति—न्याय इति । अनेन साधुद्रोहलक्षणस्य खलत्वस्य फलमवश्यप्राप्यं प्राप्तमिति भावः । शिशुपालवत्तत्तुष्टिग्रहकृतस्तव तु कापि वैषम्यं नैवास्तीत्याहुः, रिपोः सुतानां रिपुसुतेषु अपकारात् स्वसुतेषु च तुल्यदृष्टेः रिपोरपि पुत्रस्य शिष्टस्य प्रह्लादस्य पालनदर्शनात् स्वस्यापि सुतस्य नरकासुरस्य वधदर्शनाच्चेति भावः । नच खलनिग्रहेऽपि नैर्घृण्यमित्याहुः, धत्से इति । स्वहेतुकनानानरकदुःखोपशमपूर्वकनित्यसुखमयमोक्षलक्षणं फलमेव दीयते भवेत्यनुशंसन् कथयस्येव दमं दण्डं धत्से ॥ ३३ ॥

तस्माद्दुष्टेष्वपि तव वस्तुतस्त्वनुग्रह एव निग्रहाकार इत्याहुः—अनुग्रह इति । नोऽस्माकं दण्डः कल्मषं प्राचीनार्जितपापम् अपहन्तीति सः यतः कल्मषात् अमुष्य देहिनो जीवस्य दन्दशूकत्वं तस्मात् क्रोधोऽपीत्यादि ॥ ३४ ॥

इदानीं तु निग्रहाकारोपि नैवायमनुग्रहः किन्तु शिष्टजनकष्टलभ्यमपि वस्तुत्वमनायासेनैव लब्धं क्व यत्तत्र हि प्राचीनं सुपुण्यमस्तीति वितर्कयन्त्य आहुः तप इति । निरभिमानेन गर्वशून्यत्वादन्यकृतसम्मानाभिलाषरहितेन मानं अन्येभ्यो मानयदतेति तपसो वैष्णवीयत्वं सूचितं वैष्णवेतरेषु तपस्विषु मानित्वमानदत्वादर्शनात् "नाहं दानेन तपसा" इति त्वदुक्तेरन्यतपसस्त्वत्प्रसादकत्वाभावाच्च सर्वजनानुकम्पया उपलक्षितो यो धर्मः स कृत इति धर्मस्यापि वैष्णवीयत्वं कीर्तितं सर्वभूतानुकम्पयानुत्पत्तेः यतस्तपसो धर्माद्वा हेतोस्तुष्यति त्वं शिरस्सु रङ्गस्थलीकृतेषु प्रहर्षनृत्याचरणात् सर्वजीवः सर्वजनानुकम्पादिना सर्वजीवेषु सन्तोषितेषु सर्वजीवमन्दिरो भवानपि सन्तुष्यतीत्यर्थः । श्लेषेण सर्वोत्तमं जीवयसि त्वत्सन्तोषमिममेव किं पार्ष्णिप्रहारैर्ददासीति द्योतितम् ॥ ३५ ॥

किञ्च, न तप आदिहेतुक एव भाग्योदयः किन्त्वतर्क्य एव कृपाधिभवमेवेदमित्याहुः—कस्येति त्रिभिः । अस्य अतिनीचस्याऽपि कालियस्य कस्य तावदनुभावः फलं तत्र आदौ फलमेव किं दृष्टं तत्राहुः, तव नन्दपुत्रस्य अङ्घ्रिरेणोरपि स्पर्शकर्तृको योऽधिकारः सोऽपि तप आदिसर्वसुकृतदुर्लभः अस्य तु अङ्घ्रिद्वयकर्तृकं स्पर्शं तं च नृत्यलक्षणं तत्रापि स्वशिरस्सु प्रापेति भाग्यस्य कियान् महिमा वाच्य इति भावः । ब्रह्मादिभ्यो भक्तेभ्योऽधिकापि श्रीस्तव नारायणरूपस्य ललनापि अस्य गोपालरूपस्य तव चरणस्पर्शवाञ्छया तप आचरत् तदपि न प्राप ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वेश्वरेण त्वया सर्वोद्वेजकेऽस्मिन् दण्डो हितायैव इति दण्डानुमोदनपूर्वकम् कालीयभाग्यं वर्णयन्ति—न्याय इति षड्भिः । फलं हितमेवानुशंसन् आलोचयन् दमं दण्डं धत्से ॥ ३३ ॥

निग्रहो हितायैव कृत इत्युक्तमेव स्पष्टयन्ति—अनुग्रह इति भवता कृतोऽयं दण्डः नोऽस्माकमनुग्रह एव हि यतस्तं यदस्मात्त्वत्कृतो दण्डः असतां कल्मषापहः पापनाशकः यदस्मात् कल्मषात् अमुष्य दन्दशूकत्वं सर्पत्वम् अतस्ते क्रोधोऽपि अनुग्रह एव सम्मतः ॥ ३४ ॥

अनुग्रहनिमित्तं किमपि तप आद्यनेन पूर्वमनुष्ठितमित्याहुः तप इति । अनेन किञ्चिदप्यस्मद्बुद्ध्यगोचरं तपः सुचरितं अथवा कश्चिद्धर्मः स्वनुष्ठितः यतः सर्वान् जीवयतीति

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥ ३७ ॥
तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः।
संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः ॥ ३८ ॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने।
भूतावासाय भूताय पराय परमात्मने ॥ ३९ ॥
ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये।
अगुणायाविकाराय नमस्ते प्राकृताय च ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शीघ्रो भवांस्तुष्यति चिरमस्मत्कृतप्रचर्ययोनास्मत्पति पवित्रीकरोतीति भावः ॥ ३५ ॥

निर्निमित्तानुग्रहस्वीकारे वैषम्यादिदोषप्रसङ्गात्किमप्यनुग्रहनिमित्तं तव भाग्यस्यास्तीत्युक्तम् तद्विशेषतस्तु वयं न विद्मह इत्याहुः, यद्वाञ्छया यस्याङ्घ्रिरेणुस्पर्शाधिकारस्य वाञ्छया यस्याः विश्वमातुर्ब्रह्मादयोऽपि पादपद्मरेणुस्पर्शाधिकारमिच्छन्ति सा श्रीरपि ललना भगवतोऽतिप्रिया नित्यसहचरी अपि लीलावशादियुक्ता यदायदाऽभवत्प्रादुर्भावो जातस्तदा तदा तप आचरत् स तवाङ्घ्रिरेणुस्पर्शाधिकारः अस्य नागस्य कस्यानुभावः किमाकारस्य तव आदेरनुभावः, हे देव! वयं न विद्महे न तद्विद्मः तवाङ्घ्रिरेणुस्पर्शाधिकारकारणं तव आदिकमपि अधिकारतः स्वरूपतश्च गहनमेवातो भवत्कृपा सर्वत्र कारणमिति भावः ॥ ३६ ॥

भाषा टीका।

नागपत्न्य ऊचुः ॥

नागपत्नी भगवान् की स्तुति करबे कूं बोली, कि—हे प्रभो! वैरी और पुत्रन में भी तुल्य दृष्टिवारे देसे आपने जो या सर्प कूं दंड दियो सो योग्य है। काहे सों, कि—आपको जो अवतार है, सो खलन के दंड देबेई कूं है। हे भगवन्! आप देसेन को जो दंड देओ हो, सो कछु फल देवे की इच्छा सों देओ हो ॥ ३३ ॥

आपने ये हमपे बड़ो अनुग्रह कियो आपको दंड देवो दुष्टन के कल्मषन कों दूर करन वारो है। और जा कर्म सों आपने या कूं सर्प की योनि दीनी है सो वा कर्म के नाश करन वारो आपको क्रोध भी अनुग्रह रूप ही संमत है ॥ ३४ ॥

हम कों तो यही बड़ो आश्चर्य है, कि—पूर्व काल में मानत्याग के दूसरेन कों मानदेके कौन सो तप याने कियो अथवा कौन सो धर्म कियो, कि कौनसी सर्व प्राणी मात्रन पै कृपा करी, कि—जासों सबन के आत्मा आप संतुष्ट भये ॥ ३५ ॥

हे देव! ये कौन को प्रभाव है सो हम नहीं जानें हैं, कि—जो या कू आपके श्रीचरण रज के स्पर्श को अधिकार मिल्यो, जो जारज की आकांक्षा सों श्रीलक्ष्मीजी ने सब कामन कूं छोड व्रतन कों धारण कर बहुत तप कियो ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यस्य च पादरजः प्रपन्नाः प्राप्ताः पारमेष्ठ्याद्यपि तुच्छं मन्यन्ते ॥ ३७ ॥

अहो तदेषः अयत्नत एव प्राप अन्यैः दुरापादिभिरपि कथम्भूतं पादरजः? यदिच्छतः सेव्यं मे भवत्विति प्रार्थयमानस्यैव समक्षः प्रत्यक्ष एव विभवोऽपेक्षिता सम्पद्भवति ॥ ३८ ॥

नमस्तुभ्यं भगवतेऽचिन्त्यैश्वर्यादिगुणाय तदुपपादनाय दशभिः श्लोकैर्विशेषणानि पुरुषाय पूर्वमन्तर्यामिरूपेण वर्तमानाय महात्मने एवमपि नातिपरिच्छिन्नाय, कुतः भूतावासायाकाशाद्याश्रयाय एतदपि कुतः? भूताय पूर्वमपि सते कुतः पराय कारणाय किञ्च परमात्मने कारणातीताय ॥ ३९ ॥

कारणत्वं कारणातीतत्वं च समर्थयितुमाहुः—ज्ञानविज्ञाननिधये ज्ञानं ज्ञप्तिः विज्ञानं चिच्छक्तिः उभयोर्निधये ताभ्यां पूर्णाय कथं तथात्वमत उक्तं ब्रह्मणेऽनन्तशक्तये कथम्भूताय ब्रह्मणे, अगुणायाविकाराय कथम्भूतायानन्तशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृतायेति वा अप्राकृतानन्तशक्तियुक्ताय अयमर्थः अगुणत्वादविकारं ब्रह्म ज्ञप्तिमात्रत्वात्कारणातीतं प्रकृतिप्रवर्तकोऽनन्तशक्तिर्विज्ञाननिधित्वादीश्वरः कारणं तदुभयात्मने नम इति ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो अस्तु तावत्त्वत्पादाब्जयोर्द्वयोर्बहुनरेरेणूनां स्पर्शमाहात्म्यं तदेकस्य यथाकथञ्चित् आश्रयणमाहात्म्यमप्यनिर्वाच्यमित्याहुः—नेति। नाकपृष्ठं न वाञ्छन्ति किमुत सार्वभौमम् एवं पारमेष्ठ्यमित्यादि कर्मफलं कैमुत्येनोक्त्वा योगादिफलं समुच्चयेनाहुः न योगेति 'अत्र टीकायां नाकपृष्ठादीति लेख्ये पारमेष्ठ्यादीति लेखप्रमाद ॥ ३७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्यैर्ब्रह्मादिभिः परमोपासकैरपि दुःखेन प्राप्यं न त्वद्यापि प्राप्तम् एष महापराध्यपि यतस्तमोजनिस्तामसजातिः तत्र च क्रोधवशः तत्रापि अहिषु श्रेष्ठोपि तदेव प्राप्तः एतच्च साधनसहस्रादपि न घटते केवलत्वत्कारुण्यादेर्वात सम्योधयन्तिनाययति दीनान् याचयतीति हे नाथेति । किञ्च, यस्मिन् मनः सम्बन्धमात्रेण सर्वेषां स एव सिद्धिः स्यादित्याहुः—संसारेति, देहाभिमानिनोपि विभवः ऐहिकी पारलौकिकी च विभूतिः प्रेमसम्पद्वा एतं प्राप्यमुद्दिष्टम् अतोऽधुना साक्षात्त्वत्पादाब्जद्वयाङ्गीकृतफणागणोऽयं व्यक्तविभवविशेषमेव खलु प्राप्तुमर्हतीति भावः ॥ ३८ ॥

एवं दण्डमनुमोदमाना एवैश्वर्येऽस्येनावदनुग्रहेणाश्चर्यं मत्वा तत्परिहाराय मिथो विरोधिनानाधर्माश्रयत्वं दर्शयन्त्योऽतर्क्यशक्तितास्फूर्त्या क्षमापणादैन्येन च प्रणमन्ति—नम इति दशभिः । भगवते अतर्क्यानन्तैश्वर्यनिधये अत एव सर्वे विरोधास्त्वयि विलीयन्त इति स्तुवन्ति, पुरुषायेत्यादिना । एतच्च प्रायो हेतुहेतुमत्त्वादिप्रदर्शनेन तैरपि व्याञ्जितमेव । यद्वा, पुरुषायेत्यादि विशेषणानां मध्ये प्रायो द्वाभ्यां द्वाभ्याम् अतिदुर्घटतया क्वचिदेकैको विरोधः क्वचित्तु विश्ववैलक्षण्येन विस्मयो द्रष्टव्यः तथाहि पुरुषायापि महात्मने व्यापकाय भूतावासाय सर्वजीवेष्वन्तर्यामितया नियामकाय अथ च भूताय जीवानां तदंशत्वेनाभेदात् जीवनरूपाय तद्रूपत्वेन नियम्यायेत्यर्थः । यद्वा, भूतावासाय जननिवासाय भूताय गृहीतजन्मने तथा च वक्ष्यति स्कन्धान्ते "जयति जननिवासो देवकीजन्मवादः,, इत्यद्भुतत्वमेव पराय सर्वतो भिन्नत्वेन स्थिताय अथ च परमात्मने सर्वेषां हृदि वर्त्तमानाय ॥ ३९ ॥

ज्ञानस्वरूपाय अथ च विज्ञाननिधये कर्मधारयः ब्रह्मणे सजातीयादिभेदरहितस्वरूपाय अथ च अनन्तशक्तये अगुणत्वेनाविकाराय अथ च प्रकृतिप्रवर्त्तकाय इत्यत्राद्भुतत्वमेव परत्राप्येवमेव ज्ञेयम् ॥ ४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रसाधिपत्यं पाताळाधिपत्यम् ॥ ३७ ॥

प्रत्यक्षत्वं साक्षात्कारः तमन्यैर्दुरापं एष आपेत्यन्वयः ॥३८॥३९॥

ज्ञानविज्ञानशब्दौ धर्मिधर्मविषयौ अगुणाय सत्त्वादिगुणारहिताय अप्राकृताय अकार्यभूताय यद्वा प्राकृताय प्रकृतावुपलब्धाय ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वैश्वर्यकैवल्यादिषु प्रार्थनीयपुरुषार्थेषु सत्स्वपि तान्विहाय किं विशेषेण मदङ्घ्रिरेणुं वाञ्छन्तीत्यत्राहुः—नेति । ये त्वत्पादरजः प्रपन्नास्ते पारमेष्ठ्यादिकं न वाञ्छन्ति पारमेष्ठ्यादिभ्यो ऽतिशयपुरुषार्थरूपं त्वत्पादरजःसेवमानास्तेनैव तृप्ताः पारमेष्ठ्यादिकं न वाञ्छन्तीत्यर्थः । तत्र पारमेष्ठ्यं चतुर्मुखैश्वर्यं नाकपृष्ठं स्वर्लोकं सार्वभौमं चक्रवर्त्तित्वं रसाधिपत्यं भूर्लोकादधस्तनलोकाधिपत्यं योगसिद्धीरणिमादीन् अपुनर्भवं कैवल्यम् ॥ ३७ ॥

तर्ह्येवं कृपयास्यापि कथं दुर्लभतमत्पादरजःस्पर्शा… कारः ? तत्राहुः—तदिति । एष अहीशः सर्पाधिपस्तमोजनि… प्रचुरजन्माऽत एव क्रोधवशः तदपि तथापि हे नाथान्यैर्दु… त्वत्पदाम्बुजस्पर्शम् आप लेभे यद्भवतः समक्षं प्रत्यक्षत्वं नरै… दुरापमपि एष आपेति वान्वयः । युक्तश्चैतदित्याहुः—संसारच… स्वकर्मभिर्भ्रमतो जीवस्य यदृच्छया भवतः समक्षत्वं स्यात्—

एवं संसृतिचक्रेऽस्मिन् भ्राम्यमाणो दुरत्ययं ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥

इति स्मरणादिति भावः । विभव इति पाठे विभवस्त्वदनुग्रहस… विभवः समक्षःप्रत्यक्षः स्यादेव याहच्छिकादिसुकृतविशेषरूपव्या… मात्रावलंबनेनानुजिघृक्षोर्वात्सल्यनिधेस्तवानुग्रहरूपो विभ… प्रत्यक्षः स्यादेव अन्यथा कस्यापि चेतनस्य निर्दुष्टस्यासम्भव… त्वत्कृपानिर्विषयैव स्यादिति भावः ॥ ३८ ॥

तदेवं कार्पण्यमाविष्कृत्याथ शरण्यत्वोपयुक्तगुणैर्विशिष्टं… स्तुवन्ति—नम इति दशभिः । चतुर्थ्यन्तानां भगवत इत्यादीनां तुभ्यं… नमः इत्यन्वयः तत्राश्रितकार्यनिर्वाहका आश्रयणसौकर्यापाद… श्चेति द्विविधाः शरण्यगुणास्तत्र ज्ञानशक्तिपूर्तिप्राप्त्याद… आश्रितकार्यनिर्वाहकाः तत्र ज्ञानमनिष्टपरिहारेष्टप्रापणोपयुक्त… तच्च ज्ञानविज्ञाननिधय इत्यनेनोक्तं ज्ञानमनिष्टपरिहारोपयुक्तं विज्ञा… मिष्टप्रापणोपयुक्तं तयोर्निधिराश्रयः तस्मै शक्तिर्नाम अघटित… घटनसामर्थ्यात्मिका स चानन्तशक्तय इत्यनेनोक्ता बृह… इत्यनेन सर्वशेषित्वादिगुणबृहत्त्ववाचिना भगवत इत्यनेन षाड्गुण्य… पूर्णवाचिना पूर्तिप्राप्ती विवक्षिते पूर्तिरवाप्तसमस्तकाम… प्राप्तिर्निरुपाधिकशेषित्वम् आश्रयणसौकर्यापादकास्तु गुण… परत्वस्वामित्वसौशील्यवात्सल्यादयस्तत्र भूताय पराय परमात्म… इति परत्वमुक्तम्. परत्वं नाम स्वेतरापेक्षयोत्कृष्टत्वम्—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इति स्वेतरनिखिलजगदन्तःप्रवेशनप्रशासनाभ्यां व्याप्य… दोषास्पर्शेन च धारकत्वं हि परमात्मशब्दप्रवृत्तिनिमित्तमवगत… अनेन स्वेतरनियाम्यसर्ववस्त्वपेक्षयोत्कृष्टत्वं स्पष्टमेव पराय भूता… भूतत्वमत्र सर्वेभ्यः कारणतया प्रागवस्थितत्वं परमकारणा… त्यर्थः । अनेनापि परत्वं स्पष्टमेव भूतावासायेत्यनेन सौलभ्य… मवगतं परत्वयुक्तोपि न मेर्वादिवद्दूरतरोऽपि तु सर्वभूतहृद… गुहावास इति भावः । अनेन सौलभ्यं सुव्यक्तमेव, पुरुषाय महा… त्मन इत्यनेन सौशील्यं विवक्षितं स्वयं वाचामगोचरमाहात्म्य… युक्तोपि यादवानामन्यतमपुरुषरूपेण तैः सह संश्लेषवत… इति भावः । महतो मन्दैः सह संश्लेषस्वभावत्वं हि सौशील्य… महापराधीनं कालियमनुगृहीतुमुद्योगप्रख्यापनपरेणानेन प्र… येन वात्सल्यं व्यक्तमेवावगतं भूतावासाय परमात्मने… व्यापकत्वोक्त्या प्रसक्तं व्याप्यगतदोषं परिजह्रुः—अगुणायेति… गुणरहिताय पराय भूतायेति कारणत्वोक्त्या प्रसक्तविकार… वत्त्वपरिहाराभिप्रायेणाविकारायेत्युक्तिः सद्वारकविकाराभ…

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारणत्वेऽपि स्वरूपतः स्वभावतश्चाविकारायेत्यर्थः । सद्वारक-विकाराश्रयत्वमेव स्पष्टयन्ति प्राकृताय"भूमिरापोऽनलो वायुः' अपरेयमितस्त्वन्याम्" इति श्लोकद्वयोक्तप्रधानपुरुषात्मकप्रकृतिद्वयद्वारा तद्गतविकाराश्रयाय ॥ ३९—४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कीदृशा विषया इति भावेन तानाहुः—न नाकेति । नाकस्य पृष्ठे सुकृतेनुभूत्वा इमं लोकं हीनतरं वा विशन्तीति पारमेष्ठ्यं सत्यलोकः सार्वभौमं चक्रवर्तिपदं "इमा रामाः सरथाः सतूर्याः" इत्यादिलक्षणं रसाधिपत्यम् अखिलस्वर्गविभवं योगसिद्धीरणिमादिलक्षणाः अपुनर्भवम् अपवर्गाक्तिलभ्यं मोक्षम् "अपुनर्भवमाप्यपि हरिसामीप्यमुत्तमम्" इत्यादि स्मृतेः ॥ ३७ ॥

किं बहु वक्तव्यमिति भावेन वदन्ति–तदिति । ईशनाथ, शङ्करस्वामिन् ! यद्भवत्समक्षं भवतः साक्षात्करणं तदपि दुरापम् "न चक्षुषा पश्यति कश्चिदेनं, नान्यैर्देवैर्मनसा नापि वाचा" इत्यादिश्रुतेः । साधनसामग्रीमन्तरेण दुष्प्रापमित्यर्थः । तमसा गुणेन जनिर्जन्म यस्य स तथा अत एव क्रोधस्वभावः तथाप्यनीशोऽसमर्थः ॥ ३८ ॥

"दण्डोऽपि भगवच्छीर्यः" इति स्मृत्यर्थमात्मनि ज्ञापयितुं कृष्णं स्तुवन्ति–नम इत्यादिना । भूतावासायेत्यनेन भूतनाशेन नाशः स्यादित्युच्यत इति शङ्कां निवारयति भूतायेति सर्वदा विद्यमानाय "भूसत्तायाम्" इति धातुः ॥ ३९ ॥

अविकारायेत्युक्तं समर्थयते, अप्राकृतायेति ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं साधनविचारेण रेणूनामुत्कृष्टत्वमुक्त्वा तत्स्पर्शायोग्यत्वमस्य समर्थितम् इदानीं फलविचारेणापि माहात्म्यं वदन्त्यस्तत्पात्त्वमाहुः–न नाकपृष्ठमिति । लोके ह्येतावन्ति फलानि त्रिविधधर्मसाध्यानि तत्र सात्त्विकधर्मसाध्यः स्वर्गो नाकपृष्ठात्मकः यत्रेन्द्रादयो निवसन्ति राजसधर्मसाध्यं सार्वभौमं सर्वस्या अपि भूमेराधिपत्यं ध्यानसहितसात्त्विकराजसोभयधर्मसाध्यं पारमेष्ठ्यं ब्रह्मस्थानं तामसधर्मसाध्यं रसाधिपत्यं निवृत्तिधर्मसाध्यो योगः सिद्धयश्चाणिमादयो ध्यानादिसाध्याः अपुनर्भवो मोक्षः स सर्वसाध्यः एतावन्ति फलानि वा शब्देनानुक्तसर्वसमुच्चयः अनादरश्च सूच्यते एतानि सर्वाण्येव फलानि यत्पादरजःप्रपन्ना न वाञ्छन्ति रजःप्राप्तौ तु न वाञ्छन्तीति किं वाच्यं रजःप्रपन्ना एव यत्र न वाञ्छन्ति ॥ ३७ ॥

एवं रजसो महाफलत्वं निरूप्य तद्वनेन प्राप्तमित्यस्य भाग्यमभिनन्दन्ति—तदेवेति । नाथेति सम्बोधनेनोपपत्तिरुक्ता अन्यैर्दुरापमप्ययमपि प्राप्तवान् अस्यानधिकारधर्मानाह, तमोजनिरित्यादिभिः । केवलतमसैव जनिर्जन्म यस्य अनेन मूढा गुणिरुक्ता क्रोधवश इति कार्याशुद्धिः अहीश इति संसर्गाशुद्धिरुक्ता ईशपदेन अन्यकृतपापसम्बन्धोऽप्युक्तः एवं सर्वदोषनिधानस्य सर्वोत्कृष्टदुर्लभफलप्राप्तिः केवलं भगवदिच्छयेत्याहुः, संसारचक्र इति । यादृच्छिकमिदं फलं भगवदिच्छयैव भवतीति निर्णीयते चक्रे हि पतितः सर्वत्र परिभ्रमति स भगवच्चरणोपाश्रयाति भगवति समागते अतो न कोपि हेतुः कर्मादिः किन्तु यदिच्छतः यस्य चरणारविन्दरेणो इच्छतः इच्छां कुर्वतः पुरुषस्य साधनरहितस्यापि विभवः उत्कृष्टफलं कदाचित्समक्षो भवति प्रत्यक्षो भवति यदृच्छत इति पाठे यदृच्छातः अकस्माद्भगवदिच्छया वा ॥ ३८ ॥

एवं चरणस्पर्शभगवत्तोषादिलक्षणं तस्य भाग्यमभिनन्द्य तत्सम्बन्धात्स्वयमपि भगवन्नमस्काराधिकारिण्य इति नमस्यन्ति-नमस्तुभ्यमिति दशभिः । —

> दश रूपाणि तु हरेर्मूलरूपः स्वशाश्वतः ।
> वेदान्तवेद्यरूपश्च जगद्रूपस्तथैव च ।
> सङ्घातजीवरूपश्च नानारूपश्च शाश्वतः ।
> एवं प्रमेयरूपाणि पञ्चप्रोक्तानि वै हरेः ।
> वेदार्थरूपस्तन्त्रार्थो गुणार्थो ह्यवतारकृत् ।
> अन्तर्यामी च भगवान् दशप्रोक्तः स्वलीलया ॥

ज्ञात्वा हि स्तोत्रं कर्त्तव्यं कोयमिति कियानिति कथं गुणक इति च तत्र दशविधो भगवान् दशविधलीलाभिः एकस्यामेकस्यां लीलायां यावन्त्यवान्तररूपाणि तानि सर्वाण्युच्यन्ते तत्र प्रथमं सृष्टिलीलां वदन्त्यः पुरुषोत्तमरूपं भगवन्तं निरूपयन्त्यो नमस्यन्ति, नमस्तुभ्यमिति । भगवान् मूलभूतः स एव भगवान् तदाह तुभ्यं भगवते नम इति आविर्भूतनानाविर्भूतरूपे एते एव ततः सर्वोत्तमोप्ययं जात इतीतरसापेक्षत्वेन पुरुषोत्तमत्वं पदद्वयेन निरूपयति, पुरुषाय महात्मने महांश्चासावात्मा चेति आत्मा हि साक्षात् सर्वस्मृतिप्रतिपाद्यः पुरुषः साङ्ख्यप्रतिपाद्यः महान् वेदप्रतिपाद्यः त्रितयमेकीकृतं महान् पुरुषरूप आत्मेत्युक्तं भवति, अनेनैव सच्चिदानन्दरूपताप्युक्ता पुरुषः सद्रूपो महानानन्दरूपः चिद्रूप आत्मेति ततो मूलभूतस्य पञ्चात्मकत्वमाह–भूतावासेत्यादिपदैः । स एव मूलरूपो भवति यस्मिन् सर्वाणि भूतानि तिष्ठन्ति एतदर्थमेव भगवता प्रदर्शितं मात्रे स्वस्मिन् जगत्तदाह–भूतानामावासो यस्मिन्निति । तानि चेद्भूतानि भिन्नानि भवेयुस्तदाऽसङ्गत्वं भगवतो भज्येतेति भूतरूपोपि भगवान् तदाह भूतायेति स एव च पुनर्मूलरूपो भवति यस्तु प्रशासिता अनियामकस्य मूलत्वं न सम्भवति इति तदाह परायेति "एतस्यैवाक्षरस्य प्रशासने गार्गि ! द्यावा पृथिवी विधृते तिष्ठतः" इत्यादि श्रुतेः । यश्च पुनर्न सर्वोत्तमः स मूलभूतो न भवतीति परम उत्कृष्टः तथा न व्यापको योयं नात्मा स विभूतिमात्रं भवतीति न तस्य मूलत्वं तदाह आत्मन इति परमश्चासावात्मा चेति ॥३९॥

सर्गलीलायां तु प्रथमतो भगवान् ततः पुरुषः ततो महत्तत्त्वं भूतावासोऽहङ्कारः ततो भूतानि ततः सर्वं जगत् तत्रापि परो विराड्रूपः परमात्मा नारायणश्चेति ब्रह्माण्डनिग्रहान्तासर्गकथाविसर्गसहितं ब्रह्मरूपं भगवन्तं नमस्यन्ति–ज्ञानविज्ञाननिधय इति । ज्ञानं शास्त्रीयं विज्ञानमनुभवः निर्विषयकं सविषयकं वा आत्मभूतं गुणभूतं च तयोः निधिरुत्पत्तिस्थानं ये केचन ज्ञानविज्ञानार्थिनः ते सर्वे ततः एव कृतार्था भवन्तीति एवं साधनरूपतामुक्त्वा

**कालाय कालनाभाय कालावयवसाक्षिणे ।**
**विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥**

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

फलरूपतामाह—ब्रह्मण इति । ननु, ब्रह्मणः फलरूपत्वं जगत्कर्तृत्वं च कथमुपपद्यते ? तत्राह, अनन्तशक्तय इति । अनन्ताः शक्तयो यस्य तेन सर्वरूपोपि भवितुं शक्नोति अनन्तशक्तित्वं गुणसङ्गाद्भविष्यतीत्याशङ्कयाह, अगुणायेति । न विद्यन्ते गुणा यस्य गुणसम्बन्धाभावे हेतुः अविकारायेति विकारेषु सत्सु कारणत्वेन गुणा मृग्यन्ते विकारा अत्र जन्मादयः दोषाश्च तत्रापि हेतुः अप्राकृतायेति प्राकृतो हि विकारी दोषवांश्च भवति चकाराद्प्राकृतत्वे असङ्गित्वं हेतुरुक्तः विसर्गे तु ज्ञानमधिकारि विशेषणं ज्ञानपूर्णो हि ब्रह्मा भवति विविधं ज्ञानं सृष्ट्युपयोगि एवं स्वरूपकार्योपयोगिविशेषणद्वयमुक्त्वा विसर्गरूपमाह, ब्रह्मण इति । ब्रह्मात्र चतुर्मुखः ततः सर्वकार्योत्पत्त्यर्थमनन्तशक्तय इति बन्धाभावाय गुणायेति दोषाभावायाविकारायेति स्वेच्छया सृष्टिव्यावृत्त्यर्थमाह, अप्राकृतायेति अनेन विसर्गे षड्गुणा अप्युक्ताः गुणत्रयं दोषत्रयाभावश्च ज्ञानमहत्त्वसामर्थ्यं निर्गुणा बन्धदोषजडतादोषाः ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतावन्महिमभिर्मत्पादरेणुभिः किं फलं स्यादिति चेन्मैवं वाच्यं तव चरणरेणव एव फलं सर्वफलेभ्योऽप्यधिकमित्याहुः नेति । प्रपन्ना एव न वाञ्छति किं पुनस्तत्प्राप्ताः अपवर्गमपि किम्पुनर्नाकपृष्ठादिकम् ॥ ३७ ॥

अन्यैर्वक्त्यादिभिरपि किञ्च सर्वफलमुकुटभूतमपि त्वत्पादरजः सकामजन्यस्य फलसाधनमपि भवतीत्याहुः—संसारेति । इच्छतः सकामस्य शरीरिणः यत् यतो विभवः समन्तः इच्छाविषयीभूतादपि यतः अपेक्षिता सम्पत्तिः प्रत्यक्षैव भवतीत्यर्थः ॥ ३८ ॥

"षड्भिः श्लोकैः कृपामेवं विवृत्य दशभिः पुनः ।
एकादश नतीश्चक्रुर्भक्त्या कालिययोषितः" ॥

भक्तेरुपास्यत्वेनाहुः भगवते अप्राकृतषडैश्वर्य्यवते पुरुषाय नराकाराय महात्मने नराकृत्यापि सर्वव्यापकाय योगिभिरुपास्यत्वेनाहुः सर्वभूतनिवासाय भूताय पूर्वमपि सते ॥ ३९ ॥

ज्ञानिभिरुपास्यत्वेनाहुः—ज्ञानविज्ञानयोः सम्पदोर्निधिरिव निधिस्तस्मै पुनर्मुक्तोपास्ये नराकारे तस्मिन्मन्दधीभिः प्रसञ्जितान् गुणविकारादिदोषान् वारयन्त्य आहुः—अनन्तशक्तये अतर्क्यानन्तशक्तिसमुद्राय अगुणायाविकाराय प्राकृतगुणविकाररहिताय अप्राकृताय अप्राकृतगुणविकारसहितायेत्यर्थः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवदङ्घ्रिरेणुस्पर्शाधिकारिकृतार्थताकथनपूर्वकं कालीयभाग्यातिशयमाहुः— नेति द्वाभ्याम् । यद्ये त्वत्पादरजःप्रपन्नाः प्राप्तास्ते पारमेष्ठ्याद्यपि न वाञ्छन्ति ॥ ३७ ॥

तत्तव पादरजः एष तमोजनिरपि आप अहो अस्य भाग्यमिति भावः यदिच्छतः यस्त्वदीयपादरजो मे सेव्यं गर्वादि... प्रार्थयत एव समक्षः प्रत्यक्ष एव विभवः वाञ्छितः का... स्यात् ॥ ३८ ॥

अथ स्तुवन्ति—नम इति द्वादशभिः । भगवते—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चापि षण्णां भग इतीरितः ॥

नेति स्वाभाविकैरैश्वर्यादिगुणैर्युक्ता यत्तदेवोपपादयन्ति पुरुषायेत्यादिना । पुरुषाय पूर्वमन्तर्यामिरूपेण वर्त्तमानाय तथापि महात्मने पूर्भिरपरिच्छिन्नाय भूतावासाय आकाशादिभूतोपलक्षितकार्यमात्रधारकाय भूताय पूर्ववर्तिने सर्वोद्गमनस्थानाय परतल्लयस्थानाय परमात्मने अन्यनिरपेक्षस्थितिप्रवृत्त्यादियुक्ताय ॥ ३९ ॥

ज्ञानं धर्मभूतं सामान्यतः सर्वपदार्थविषयकं ज्ञानमतीतानागतवर्त्तमानसर्वपदार्थविवेकलक्षणं विविधं ज्ञानं तयोर्निधये अनेनाल्पज्ञाज्जीवात्सर्वज्ञः परमेश्वरो भिन्न इत्युक्तम् तथा च श्रुतिः "ज्ञाज्ञौ द्वावजावीशानीशौ" इति ब्रह्मणे बृहत्स्वरूपगुणाय अनन्ताः चेतनाचेतनरूपाः असंख्येयाः शक्तयो यस्य तस्मै अगुणाय सत्त्वादिगुणास्पृष्टस्वरूपविग्रहाय अविकाराय शक्तिविक्षेपत एव जगदुपादानकारणत्वात्स्वरूपतो विकाररहितायेत्यर्थः । अप्राकृताय च प्राकृतविभूतिमते इत्यर्थः ॥ ४० ॥

---

### भाषा टीका ।

जिन आपके चरणारविन्द के रज कूं पाय के आप के अनन्य भक्तजन न स्वर्ग को राज्य चाहैं हैं न पृथ्वी को आधिपत्य न ब्रह्माजी को पद, न रसातल के अधिपति होयवे कूं चाहैं न योगन की सिद्धीन कूं चाहैं । और कहां लग कहैं वे अपुनर्भव जो ( कैवल्य मोक्ष ) है ताऊ कों नहीं चाहैं हैं फिर और कामनान की इच्छा क्यों करेंगे ॥ ३७ ॥

तासों हे नाथ ! तामसजन्म वारे क्रोध वश होइकें सर्पन को राजा होयकेंऊ एसी दुर्लभ वस्तून कों प्राप्त भये हैं, कि-जो औरन कों भी बहुत दुर्लभ है । जीव कूं या संसार चक्र में भ्रमत २ जा चरण की इच्छा सों सब सब वैभव प्रत्यक्ष होय जावै है ॥ ३८ ॥

भगवान् [ भूतावास ] सब भूतन में निवास करवे वारे, पुरुष, महात्मा, स्वयंभूतरूप पर परमात्मा जो आपहि तिन्हैं नमस्कार होय हैं ॥ ३९ ॥

ज्ञान विज्ञान के निधि, ब्रह्म, अनन्त शक्ति वारे, प्राकृत गुण रहित निर्विकार जो अप्राकृत अथवा कृपा सों प्राकृत से होयवे वारे ऐसे आप को नमः हो ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनन्तशक्तित्वात्कालशक्त्या विश्वसृष्ट्यादिरूपेण नमस्यन्ति कालाय कालस्वरूपाय कालनाभाय कालशक्त्याश्रयाय का...

भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने ।
त्रिगुणेनाभिमानेन गूढस्वात्मानुभूतये ॥ ॥ ४२ ॥
नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते ।
नानावादानुरोधाय वाच्यवाचकशक्तये ॥ ४३ ॥
नमः प्रमाणमूलाय कवये शास्त्रयोनये ।
प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवयवानां सृष्ट्यादिसमयानां साक्षिणे ततश्च विश्वाय विश्वरूपाय तर्हि किं जडोऽहम् न हि तदुपद्रष्ट्रे न च द्रष्टृमात्राय किन्तु तत्कर्त्रे न च कर्तृमात्राय विश्वहेतवे सर्वकारकरूपाय ॥ ४१ ॥

तदेवाहुः—भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने आशयश्चित्तं भूतादिरूपाय अतः सर्वकारकरूपायेति अहङ्कारात्मतया नमस्यन्ति—त्रिगुणेनेति । एवं सृष्टे कार्ये यस्त्रिगुणोऽभिमानस्तेन गूढा स्वांशभूतानामात्मनां जीवानामनुभूतिर्येन तस्मै ॥ ४२ ॥

स्वं त्वहङ्कारानावृत इति स्तुवन्ति—नमोऽनन्तायाहङ्कारापरिच्छेदात् अतः सूक्ष्मायादृश्यत्वात् अत एव कूटस्थायोपाधिकृतविकाराभावात् अत एव विपश्चिते सर्वज्ञाय एवं वस्तुतः स्तुत्वा ऽचिन्त्यमायात्वेन स्तुवन्ति—नानावादानुरोधाय "अस्ति नास्ति सर्वज्ञः किञ्चिज्ज्ञः बद्धो मुक्त एकोऽनेकः" इत्यादिनानावादाननुरुणद्धि माययाऽनुवर्त्तते यस्तस्मै किञ्च वाच्यवाचकशक्तये अभिधानाभिधेयशक्तिभेदादपि नानात्वेन प्रतीयमानायेत्यर्थः ॥ ४३ ॥

अनावृतत्वमेव हेत्वन्तरेणापि सूचयन्त्यः स्तुवन्ति—नमः प्रमाणमूलाय चक्षुरादीनां चक्षुरादिरूपाय अत एव कवये स्वयं तन्निरपेक्षज्ञानाय कुतः शास्त्रयोनये वेदात्मकनिःश्वासाय किञ्च, प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥ ४४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कालाय कालशक्तिकत्वेन तद्रूपाय अथ च कालस्य कालचक्रस्य नाभये मध्यवलयाय तदाश्रयायेत्यर्थः । समासान्तत्वमार्षं तथापि कालावयवानां साक्षिण एव न तु तेषु प्रसक्ताय विश्वाय विराड्रूपाय तदुपद्रष्ट्रे विश्वान्तर्यामिणे ॥ ४१ ॥

भूतादीनामात्मने चेतयित्रे ज्ञानप्रदायेत्यर्थः । अथ च गूढाच्छादिता स्वांशभूतानां जीवानामनुभूतिरात्मतत्त्वज्ञानं येन तस्मै ॥ ४२ ॥

अनन्ताय परममहते अथ च सूक्ष्माय कूटस्थाय निर्विकाराय अथ च विपश्चिते विचित्रवैदग्धिगुरवे नानावादाननुरोधयति प्रवर्तयतीति तस्मै यतः वाच्यवाचकयोः अर्थशब्दयोः शक्तिर्यस्मात् तस्मै ॥ ४३ ॥

अतः प्रमाणं श्रीभागवतशास्त्रसारसङ्ग्रहाः वेदाः तस्य मूलाय कारणायाऽऽश्रयाय वा कवये स्वतः सिद्धज्ञानाय अथ च शास्त्रयोनये शास्त्रमेव योनिः प्रमाणं यस्य "शास्त्रयोनित्वात्" (१।१।३) इत्यत्र तथा तथा व्याख्यानात् प्रवृत्तं च निवृत्तं च शास्त्रं तदुभयस्मा अपि निगमरूपाय अद्भुतत्वेन पुनर्नमो नम इति ॥ ४४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कालः नाभिवदंशभूतो यस्य सः कालनाभः हेतवे उपादानाय ॥ ४१ ॥

निर्गुणेन अगुणहेतुना अभिमानेन स्वसङ्कल्पेन गूढस्वात्मानुभूतये स्वविषयमन्येषां ज्ञानं निरुध्यते ॥ ४२ ॥

कूटस्थाय सर्वकारणाय अविकाराय वा नानावादाविरुद्धाय ताननादृत्यावस्थिताय ॥ ४३ ॥

प्रवृत्ताय निवृत्ताय उभयविधकर्मनिर्वाहकाय निगमाय औपनिषद्ज्ञानप्रवर्त्तकाय ॥ ४४ ॥ ४५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्त्वादिप्रकृतिगुणक्षोभनिमित्तकालस्यापि पृथङ् निमित्तताव्युदासाय तस्य तत्सामानाधिकरण्यनिर्देशः कालायेति कालात्मकायेत्यर्थः । तदात्मकत्वं न मृदात्मको घट इतिवत् स्वरूपाभेदनिबन्धनमपित्वात्मा देवो जात इतिवच्छरीरात्मभावनिबन्धनमित्यभिप्रायेणाहुः—कालनाभायेति । कालो नाभिवदङ्गभूतो यस्य सः कालनाभः "अच्प्रत्यन्ववपूर्वात्सामलोम्नः" (५।४।७५) इत्यत्राजितियोगविभागाश्रयणात्सर्वसमासान्तोऽच्प्रत्ययः । यद्वा, कालस्य नाभिर्नेश्वरादीनां नाभिवद्धारकः आत्मभूत इति यावत् देवमनुष्यादिदेहपारवश्येन जीवस्य तच्छरीरकत्ववच्च कालपारवश्येन तच्छरीरकत्वमपितु तथाथात्म्यावलोकनेनेत्यभिप्रायेणाहुः—कालावयवसाक्षिण इति । कालावयवानां निमेषादिसंवत्सरान्तानां साक्षिणे साक्षाद्द्रष्ट्रे पराय भूतादुत्युक्तकारणत्वप्रयुक्तकार्यानन्यत्वाभिप्रायेण कार्यसामानाधिकरण्येन निर्दिशन्ति—विश्वायेति । विश्वात्मकायेत्यर्थः । तदात्मकत्वं किं तत्स्वरूपाभेदनिबन्धनं नेत्याहुः, विश्वरूपायेति । विश्वं रूपं शरीरं यस्य तस्मै शरीरात्मभावनिबन्धनं सामानाधिकरण्यमिति भावः । यद्वा, सूक्ष्मचिदचिद्विशिष्टस्यैव ·

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कारणत्वात् तस्य स्थूलचिदचिद्विशिष्टेनात्मना साकमनन्यत्वाभिप्रायेण विश्वायेत्युक्तिः विशेष्यांशस्यापि शरीरात्मभावनिबन्धनविश्वसामानाधिकरण्याभिप्रायेण विश्वरूपायेत्युक्तिः न केवलमुपादानकारणभूताय अपितु जगन्निमित्तभूताय चेत्यभिप्रायेणाहुः–त्वमेवेत्यभिप्राये-तत्कर्त्रे इति। उपकरणाधिकरणादिकमपि त्वमेवेत्यभिप्रायेणोक्तं विश्वस्य हेतव इति हेतुत्वं कारकषट्कसाधारणं गोबलीवर्दन्यायेन तत्कर्त्रे इत्युक्तिः ॥ ४१ ॥

विश्वाय विश्वरूपायेत्युक्तयोः कार्येण सह विशिष्टविशेष्यांशसामानाधिकरण्ययोर्निबन्धनद्वयमाहुः–भूतेति। भूतादिरूपेण परिणतत्वाद्भूतात्मने अत्र भूतादिशब्दाः भूतादिकार्यरूपेण परिणताचिद्विशिष्टब्रह्मपराः एवं च कार्यावस्थब्रह्माभिन्नकारणावस्थब्रह्मण इत्यर्थः। भूतादीनामात्मने तदन्तः प्रवेशप्रशासनाभ्यां भर्त्रे इत्यर्थस्तन्त्रेण विवक्षितः अन्तःप्रवेशप्रशासनाभ्यां भर्तृत्वमेवात्मशब्दप्रवृत्तिनिमित्तं तत्र भूतान्याकाशादीनि मात्राः शब्दादयः पञ्च इन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि श्रोत्रादीनि दश प्राणाः पञ्च मनोबुद्धिश्चाशयो वासनाः एवं सूक्ष्मचिदचिद्विशिष्टब्रह्मणः स्थूलावस्थाचिदचिद्विशिष्टभेदे तयोः कार्यकारणभावो विशेषणविशेष्ययोः शरीरात्मभावश्चेति निबन्धनद्वयमुक्तम् अथ चित्सामानाधिकरण्येऽपि निबन्धनमाहु–त्रिगुणेनेत्यर्द्धेन। त्रिगुणेन गुणत्रयहेतुकेनाभिमानेन गूढा छन्ना स्वात्मानुभूतिर्ज्ञानं यस्मात्तस्मै ज्ञानविकासरूपजीवगतकार्यं प्रति कारणभूतायेत्यभिप्रेतार्थः ॥ ४२ ॥

एवं जगत्कारणत्वेन परत्वनिर्णयोद्धृताल्लाञ्छितस्य परमात्मनः चिदचिद्विशिष्टस्य स्वरूपं विशेष्यांशभूत जगन्निमित्तकारणं विशोधयन्ति नमोऽनन्तायेति–अत्र सत्यादिवाक्यं प्रत्यभिज्ञाप्यते अनन्तपदेन तस्य कूटस्थपदेन निर्विकारवाचिना सत्यपदस्य विपश्चिच्छब्देन ज्ञानपदस्य च प्रत्यभिज्ञानात् चिविधं पठन्ति इति विपश्चित् तस्मै नित्यासङ्कुचितसर्ववस्तुविषयकधर्मभूतज्ञानाश्रयायेत्यर्थः। पृषोदरादित्वाच्छब्दस्य निपातः एवमचेतनात् त्रिविधजीवेभ्यश्च व्यावृत्तायेत्युक्तं भवति अनन्तायेत्यनेन सर्ववस्तुसामानाधिकरण्यार्हत्वरूपवस्तुपरिच्छेदराहित्यमप्युक्तं सर्ववस्तुसामानाधिकरण्यार्हत्वञ्च सर्वान्तःप्रवेशेन तच्छरीरकत्वेन च, तत्र कथमणुस्वरूपजीवान्तःप्रवेशेन तच्छरीरकत्वं विभोः परमात्मनः सङ्गच्छते? इत्यत्राहु–सूक्ष्मायेति "अणोरणीयान्' नित्यं विभुं सर्वगतं सुसूक्ष्मम्"इत्यादि श्रुत्युक्तरीत्या सूक्ष्मादपि सूक्ष्मत्वाज्जीवान्तःप्रवेशयोग्यायेति भावः। नन्वेवम्भूतं मां कथं केचिन्निमित्तकारणमेव वदन्ति केचिच्च जीवाभिन्नमित्यादीत्यत्राहुः–नानावादा वेदविरुद्धाक्तानुवृत्त्यावीक्ष्यताय अनधिगतवेदान्तवाक्यैकवाक्यतानां विप्रतिपन्नबुद्धीनां तत्तद्वादानुरूपेणापि प्रतीतायेत्यर्थः। तत्र हेतुः वाच्यवाचकशक्तये वाचकाः तत्तद्वादिप्रयुक्ताः विवक्षितार्थाविपयाः शब्दाः वाच्यास्तत्तच्छब्दविवक्षिता अर्थाः, तत्र वाच्यशक्तिरूपस्याप्य त्वयोग्यतालक्षणावाचकशक्तिरूपस्यापकत्वलक्षणा तदुभयशक्तिनिर्वाहकत्वान्नानावादानुरोधायेत्यर्थः ॥ ४३ ॥

एवमपि केवलं शास्त्रयोनये शास्त्रं योनिः कारणं स्वस्वरूपस्वभावप्रमितिजनकं यस्य तस्मै शास्त्रस्य भ्रमप्रमादविप्रलिप्सादिपुरुषदोषसम्भावनां निराकुर्वन्त्यो विशिंषन्ति–प्रमाणमूलाय प्रमाणं स्वप्रमिति साधनं शास्त्रं तस्य मूलाय तदाविष्कर्तृत्वेन तत्कारणाय तथा च स्मर्यते—

> अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा।
> आदौ वेदमयी नाम्ना यतः सर्वाः प्रसूतयः ॥ इति.

श्रूयते च "तस्य ह्वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदः" इति. "ऋचःसामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" इति च. प्रमाणमूलत्वाभ्रमसम्भावनां निराकुर्वन्ति कवये पूर्वपूर्वानुपूर्वीविशिष्टत्वेन शास्त्राविष्कारोपयुक्तमाहात्म्ययुक्ताय न केवलं प्रमाणमूलाय अपि तु प्रमेयनिर्वाहकायापीत्याहु-प्रवृत्ताय निवृत्ताय च उभयकर्मनिर्वाहकाय निगमायोपनिषत्कार्य-प्रवर्त्तकाय ॥ ४४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

काखाय भक्तकामधेनवे कालनाभाय काखाश्रयाय विश्वाय स्वाधीनप्रपञ्चाय तस्य विश्वस्योपद्रष्ट्रे अध्यक्षाय तस्य ... अवान्तरकारणाय प्रकृतेर्मूलकारणत्वं निवारयन्ति—विश्वहेतव इति। प्रपञ्चस्य मूलकारणाय "विश्वस्य तदधीनत्वाद्विश्वं विष्णुरुदीर्यते" इत्यादिस्मृतेः। विश्वाय विराट्पुरुषाय तत्कर्त्रे विश्वस्योत्पादनमायाप्रेरकाय इत्यादिरर्थो न युक्तः अप्रामाणिकत्वादिति ॥ ४१ ॥

विश्वस्य भगवदधीनत्वं विवृणोति—भूतेति। भूतानि पञ्च मात्राः शब्दादयः इन्द्रियाणि श्रोत्रादीनि प्राणाः दश मनः सङ्कल्पविकल्पलक्षणं बुद्धिर्निश्चयहेतुः एषामाशयः स्थानम् आत्मा स्वभावो यस्य स तथा तस्मै "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः "स्थानेऽभिप्राय आशय" इति यादवः। निर्गुणेन सत्त्वादिगुणजन्मरहितेनाभिमानेनाऽज्ञानेन गूढा अप्रकाशिता स्वात्मानुभूतिर्यस्य स तथा तस्मै ॥ ४२ ॥

अनन्ताय नित्याय सर्वगताय सूक्ष्माय इन्द्रियाऽविषयाय "नित्यं विभुं सर्वगतं सुसूक्ष्मम्"इति श्रुतेः। कूटस्थाय शब्दैकप्रकाराय विपश्चिते सर्वज्ञाय निपुणबुद्धये वा नानावादानां सिद्धान्तानाम् अनुरोधाय अनुकूलवर्तनाय वाच्योऽर्थः। तस्य प्रतिपाद्यत्वे योग्यत्वं वाच्यशक्तिः वाचकः शब्दः तस्यार्थप्रतिपादनसामर्थ्यं तद्द्वयं यस्य स तथा तस्मै ॥ ४३ ॥

प्रमाणमूलाय प्रत्यक्षादिप्रमाणप्रतिष्ठापकाय कवये अतिक्रान्तदर्शिने शास्त्रं वेदः योनिर्ज्ञप्तिकारणं यस्य स तथा तस्मै "योनिः स्त्रीणां भगे स्थाने कारणे ताम्रके पणे" इति यादवः। निर्देशकारणाय इदं कुर्यादिदं न कुर्यादिति विधिकर्त्रे "निर्देशग्रन्थयोः शास्त्रम्" इत्यमरः। प्रवृत्ताय प्रवृत्तिमार्गप्रवर्त्तकाय वा सृष्टौ प्रवृत्ताय प्रलये निवृत्तायेति वा उभयेषां निगमाय मार्गाय विषयायेत्यर्थः। "अयनं पदवी मार्गः पद्या च विनिगद्यते निगम" इति हलायुधः। वेदमूर्त्तये वा निश्चायकाय वा "निगमो निश्चये वेदे परे पथि वणिक्पथे" इति यादवः ॥ ४४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गुणत्रयं दोषत्रयाभावश्च ज्ञानमहत्त्वसामर्थ्यानि गुणाः अस्वदोषजडतादोषाः जगद्रूपतां सहेतुकीमुक्त्वा नमस्यन्ति—कालायेति । स्थानं हि त्रिविधमुक्तं शब्दमर्यादायां कालो नियामकः अर्थमर्यादायां भूमिरिति तदप्याह—जगतो हि मूलकारणं कालः भगवच्चेष्टारूपत्वात् कालो नामौ यस्येति सृष्टौ प्रयोजनमुक्तं सृत्यर्हि कालः ( स ) स्वस्थाने तिष्ठति नाभिस्तस्य स्थानं मृत्युना प्रक्षिता हि सृष्टिर्बहिःकृता मृत्युमन्तर्निवेश्य "मृत्युनैवेदमावृतमासीत्" इत्यत्र विस्तरेण प्रपञ्चितं तेन कालत्वेन क्रियाशक्तिरुक्ता कालनामत्वेन सृष्टिप्रयोजनमुक्तं सृष्टिप्रकारमाह–कालावयवसाक्षिण इति । कालावयवानां सर्वोत्पत्तिनिमित्तानां साक्षिणे अनेन विश्वसृष्टौ क्लेशाभावोऽप्युक्तः शब्दमर्यादायां तु कालः सूर्यः काला नाम्नाः शब्दाः सर्व एव वेदाः कालावयवसाक्षिणः कर्माणि सूर्यस्य कालात्मत्वं तृतीये प्रपञ्चितं वर्णा हि मात्रात्मकाः तेन काल एव नामौ येषामिति मर्यादा कालापेक्षा तेषामेव "काले कर्म हि चोद्यते,, इति कालावयवसाक्षित्वं कर्मणां नित्यत्वाय कालावयवस्य साक्षित्वमुक्तं विश्वकारणरूपत्वमुक्त्वा विश्वरूपत्वमाह–विश्वायेति । तस्य विश्वस्य त्रैविध्यं निरूपयन्नादावाधिदैविकरूपमाह–तदुपद्रष्ट्र इति । तस्य विश्वस्योपद्रष्टा आधिदैविकव्यतिरेकेण तस्य स्वरूपेणैवासम्भवात् तत्कर्त्रे इत्याध्यात्मिकं रूपं स हि सर्वकर्ता आधिभौतिकमाह–तस्य हेतव इति । हेतुः कारणं भूतादि अनन्तानन्यथापि निरूपिता विश्वमेधार्थरूपः तदुपद्रष्टा मोक्षरूपः तत्कर्ता कामरूपः तद्धेतुर्धर्मः ॥ ४१ ॥

एवं विश्वरूपत्वमुक्त्वा तदङ्गीकृतसङ्घातजीवरूपत्वमाह–तत्र प्रथमं सङ्घातं निर्दिशति, भूतानि मात्राः इन्द्रियाणि प्राणाः मनो बुद्धिराशयः चित्तमात्माऽहङ्कारश्च त्वमेव हि सङ्घातः तद्रूपाय जीवरूपश्चेत्याह–त्रिगुणेन अभिमानेन गूढा स्वात्मानुभूतिर्यस्य इत्येवं हि भगवतः पुष्टिः यदमर्यादव्यवस्थया स्थितिः स्वात्मानुभूतौ सत्यां जीवभावो विरुध्यत इति गुणैराच्छादनम् ॥ ४२ ॥

एवं भगवतोऽर्थसृष्टिरूपत्वमुक्त्वा शब्दसृष्टिरूपत्वमाह–नमोऽनन्तायेति । रूपसृष्टिपर्यवसाया नामसृष्टिर्विलक्षणा अन्तवती रूपसृष्टिरनन्ता नामसृष्टिः स्थूला रूपसृष्टिः सूक्ष्मा नामसृष्टिः विकृता रूपसृष्टिः कूटस्था विकृतानामसृष्टि जडरूपा रूपसृष्टि विपश्चित् बोधरूपा नामसृष्टिः एवं चतुर्भिर्लक्षणैरमक्षयेवं नामसृष्टौ सर्वाङ्गित्वप्रसङ्गस्तत्राह–नानावादानुरोधायेति, सिद्धान्तभेदा भासन्त अवान्तररूपा नानावादाः तेषामनुरोधो यस्य सर्वैरेव यथा निरूप्यते तथा भगवान् भवतीति तत्रोपपत्तिमाह–वाच्यवाचकशक्तय इति । वाच्योऽर्थो वाचकः शब्दः तयोरपि शक्तयो यस्य यथैवार्थं वक्तुमिच्छन्ति तथैवार्थो भवति यदि सर्वेऽप्यपि शब्दस्य यथैवार्थं वक्तुमिच्छति तथैवाऽयमिदं वदे तदर्थं शक्तयो भवन्ति उक्तिरत्र स्पष्टैव ॥ ४३ ॥

एवं सामान्यतो नामसृष्टिलीलामुक्त्वा विशेषमाह–नमः प्रमाणमूलायेति । वेदादयो हि प्रमाणं तेषां यत्प्रामाण्यमादरणीयत्वं भगवत्प्रतिपाद्यत्वेन भगवत्प्रतिपादितत्वेन च अन्यथा तत्प्रामाण्यं न स्यात् नित्यत्वेऽपि भगवद्व्यतिरिक्तत्वे अप्रामाण्यं च स्यात् नित्यता च न स्यात् अतः प्रमाणमूलभूतो भवानेव कवये तद्रसाभिज्ञाय अनेन शब्दवक्ता शब्दरसाभिज्ञः शब्दरूपश्चोक्तः शब्दोपादानकारणरूपश्चेत्याह—शास्त्रयोनय इति । शास्त्रस्य वेदस्य योनिः कारणं एवं निदानरूपत्वमुक्त्वा अवान्तररूपत्वमाह—प्रवृत्ताय निवृत्तायेति । वेदो हि द्वयं सम्पादयति प्रवृत्तिं निवृत्तिं च कुतश्चिन्निवर्तयति क्वचित्प्रवर्तयति निगम आज्ञारूपो भवति एवं प्रकारेण निगमरूपो वेदरूपो वा अनेन सद्धर्मा उक्ताः ॥४४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कालविशेषे देशविशेषे च प्रादुर्भवति तस्मिन् तत्तत्परिच्छेदादिदोषान् वारयन्त्य आहुः–कालाय कालस्वरूपाय कालनाभाय कालशक्त्याश्रयाय तथापि कालावयवानां सृष्ट्यादिसमयानां साक्षिणे एव न तु तेषु सक्ताय विश्वाय विश्वरूपाय तर्हि किं जडोऽहं ? न हि तदुपद्रष्ट्रे न च द्रष्टृमात्राय किन्तु तत्कर्त्रे नच कर्तृमात्राय किन्तु विश्वहेतवे विश्वस्य हेतुसमुदायाय ॥ ४१ ॥

न च हेतुमात्रायापि यतो भूतानाम् आत्मने चेतयित्रे अतोऽङ्गं ते चरित्रं यतो जडानपि चेतयसि चेतनान् जडीकरोषीत्याहुः–त्रिगुणो योऽभिमानस्तेन गूढा आवृता शोभना आत्मनो जीवस्यानुभूतिर्ज्ञानं येन तस्मै ॥ ४२ ॥

ननु, किमत्र तत्त्वं तत्राहुः—अनन्ताय अन्तं वयं न प्राप्नुम इत्यर्थः । तत्र हेतुः सूक्ष्माय दुर्ज्ञेयत्वादित्यर्थः । ननु, जीवात्मानं मद्भिन्नमेव पण्डिता आहुस्तत् किमहमात्मानमेव मोहयामि तत्र मैवं वादीरित्याहुः—कूटस्थाय "एकरूपतया तु यः, कालव्यापी स कूटस्थः" इत्यभिधानात् स्वर्गेकैनैवाप्रच्युतस्वरूपेण सर्वकालं व्याप्नोपि स तु देवमनुष्यतिर्यगादिभिरनेकैः प्रच्युतैः स्वरूपैः कञ्चिदेव कालं व्याप्नोतीति कथं त्वदभिन्नः स इति भावः । देवमनुष्यादित्वं वस्तुतो जीवस्य न स्वरूपमिति चेत्तदपि त्वत्तः स भिन्न एवेत्याहुः विपश्चिते सर्वज्ञाय सत्त्वपक्ष एव प्रसिद्ध इत्यर्थः । किञ्च, तदपि जीवात्मा ईश्वराद्भिन्न इति ईश्वराभिन्न इति जड इति चेतन इति एक इत्यनेक इत्यादिनानावादान् अनुरुन्धानः कौतुकार्थमयं काशयसीति तस्मै अत एव स्वविच्छानशादेव तत्र मिथो विवादिनो मिथःसंवादिनश्च पण्डिताः शब्दमेव प्रमाणीकुर्वन्तीत्याहुः वाच्यानामर्थानां वाचकानां शब्दानां च नानाविधाः शक्तयो यस्मात्तस्मै ॥ ४३ ॥

शिष्टशब्दमात्रस्य प्रामाण्येऽपि श्रीभागवतस्य सर्वाधिक्यमाहुः प्रमाणमूलाय श्रीभागवतस्वरूपाय कवये तत्कर्त्रे वेदव्यासस्वरूपाय अत एव शास्त्रस्य योनये प्रादुर्भावकाय तथा चतुर्वेदप्रतिपादकं शास्त्रमपि प्रमाणमित्याहुः प्रवृत्ताख्याय निवृत्ताख्याय तन्मूलनिगमशास्त्राय ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालाय कालभिन्नाय ननु चेतनस्याचेतनेनाभेदः कथं घटेत ? इत्यतः शक्तितद्वतो हि भेदाभेदसम्बन्धादित्याशयेनाहुः काल-

नमः कृष्णाय रामाय वसुदेवसुताय च ।
प्रद्युम्नायाऽनिरुद्धाय सात्वतां पतये नमः ॥ ४५ ॥
नमो गुणप्रदीपाय गुणात्मच्छादनाय च ।
गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसम्विदे ॥ ४६ ॥
अव्याकृतविहाराय सर्वव्याकृतसिद्धये ।
हृषीकेश ! नमस्तेऽस्तु मुनये मौनशीलिने ॥ ४७ ॥
परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः ।
अविश्वाय च विश्वाय तद्द्रष्ट्रेऽस्य च हेतवे ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नामाय कालशक्त्याश्रयाय कालावयवानां सृष्ट्यादिसमयानां साक्षिणे विश्वाय विश्वाभिन्नाय कार्यकारणयोर्भेदाभेदसम्बन्धात् "सर्वं खल्विदं ब्रह्म तज्जलानिति" इतिश्रुतेः विश्वस्य ब्रह्मणि द्वैताद्वैतसम्बन्धहेतुं तज्जत्वादिकमाहुः तत्कर्त्रे विश्वजन्मादिकर्त्रे निमित्तकारणमात्रपक्षनिराकरणायाहुः विश्वहेतवे विश्वस्य निमित्तकारणायोपादानकारणाय चेत्यर्थः । हेतुशब्दस्योभयविधकारणवाचकत्वात् "तदात्मानꣳस्वयमकुरुत" इति श्रुतेश्च प्रधानकारणवादनिराकरणायाहुः तदुपद्रष्ट्रे विश्वोपद्रष्ट्रे सर्वज्ञाय विश्वतत्सृष्ट्यादिसमयाद्यनभिज्ञस्य प्रधानस्य तत्कर्तृत्वासम्भवात् ॥ ४१ ॥

समष्टिव्यष्टिदेहावयवसंयोगवियोगहेतुत्वेन स्तुवन्ति–भूतेति । भूतानि समष्टिव्यष्टिदेहगतान्याकाशादीनि मात्राणि शब्दतन्मात्रादीनि च उभयेन्द्रियाणि च प्राणस्य तस्य वायोरवस्थाविशेषत्वात्पृथङ्निर्देशः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खम्वायुः" इति श्रुतावपि पृथगेव तन्निर्देशः । आशयश्चित्तं च तेषामात्मने आश्रयाय उत्पत्तिस्थितिप्रवृत्त्यादि हेतव इत्यर्थः । ननु, समष्टिदेहे तेषामाश्रयः समष्टिजीवः व्यष्टिजीवश्च भवतु तदाश्रय इत्यत्र जीवानामात्मपरमात्मानुभूतिरपि स्वतो नास्ति कुतः ? पुनर्भूतानामाश्रयत्वमिति सूचयितुं जीवानुभूतिप्रदत्वेन स्तुवन्ति–त्रिगुणेनेति । त्रिगुणनिमित्तेनाभिमानेन देहाद्यभिमानेन गूढा देहे केनापि नियोजितः कश्चिदस्मीति किञ्चिद्विवेकरूपा स्वांशानामात्मनां जीवानामनुभूतिर्यस्मात्तस्मै ॥ ४२ ॥

अनन्ताय महतोऽपि महीयसे सूक्ष्माय अणोरप्यणीयसे "अणोरणीयान् महतो महीयान्" इति श्रुतेः । कूटस्थाय सर्वबीजत्वेपि निर्विकाराय विपश्चिते सर्वज्ञाय दृश्यत्वादृश्यत्वनिर्गुणत्वैकत्वानेकत्वादिविषयान् नानावादान् वेदान्तवाक्यानि अनुपपन्नान्हि अविरोधप्रकारेणानुवर्तते यस्तस्मै "तत्तु समन्वयात्" (१।१।४) इति न्यायात् वाच्यानां तत्तद्वाक्यार्थानां वाचकानाम् तत्तद्वाक्यानाम् उपस्थाप्योपस्थापकत्वादिलक्षणाः शक्तयो यस्मात्तस्मै सर्वोऽभिधेयाभिधानशक्तिमूलायेत्यर्थः ॥ ४३ ॥

प्रमाणं शास्त्रं मूलं ज्ञापकं यस्य तस्मै वेदैकवेद्याय कवये शास्त्रार्थद्रष्ट्रे शास्त्रयोनये शास्त्रप्राकट्यकर्त्रे "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग् वेदः" इति श्रुतेः । किञ्च, कुरु कर्म त्यजेति चेत्याद्युभयविधाय प्रवृ प्रवृत्तिबोधकाय निवृत्ताय निवृत्तिबोधकाय निगमाय धर्मा कामस्वरूपतदुपायबोधकतया बुभुक्षूणां मुक्तिस्वरूपतदु बोधकतया मुमुक्षूणां च हितकर्त्रे नमः ॥ ४४ ॥

---

भाषा टीका ।

कालरूप और कालशक्ति के आधार, काल के अव क्षण दिन मास वर्षादि के देखनवारे, विश्वरूप और वि के देखनवारे, विश्व के कर्ता और उपादान कारण आप को नमः ॥ ४१ ॥

पंचभूत और उनकी तन्मात्रा अर्थात् भूतों की कार वस्था, और दश इन्द्रियें और चार अन्तःकरण एतद्रा जो आप तिन कों नमः । त्रिगुण अभिमान सों गूढ है स्मानुभव जिनको ऐसे आप कों नमः ॥ ४२ ॥

अनंत सूक्ष्म कूटस्थ और विपश्चित् ऐसे, तथा प्रकार के वाद जिनके अनुरोध सों प्रवृत्त हैं, ऐसे (नामी) वाचक (नाम) रूप जो आप हैं तिन कूं नमः ॥ ४

सब प्रमाणन के मूल, परमज्ञानी, तथा श्वासतें कों प्रकट करनवारे और प्रवृत्त निवृत्त निगमरूप जो तिन कों नमो नमः ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, अनावृत्तैश्वर्यत्वादेव चतुर्मूर्त्तिरूपेण सर्वोपास्य नमन्ति—नमः कृष्णायेति श्लोकेन । रामाय सङ्कर्षणाय देवसुताय च वसुदेवशब्दितं शुद्धं सत्त्वं तत्र प्रकाशमा वासुदेवायेत्यर्थः । सात्वतामुपासकानां पतये साक्षोऽश्यार पालकाय एवं चतुर्मूर्त्तये कृष्णाय तुभ्यं नम इति । ४५

कथं चतुर्मूर्त्तितेति तदाहुः—नमो गुणप्रदीपायेति । गु अन्तःकरणानि तानि प्रदीपयति प्रकाशयतीति तथा चित्ताद्यधिष्ठातृत्वेन चतुर्मूर्त्तितेत्यर्थः । ननु, तथाप्येकस्यैव चतुष्ट्वमत आहुः—गुणात्मच्छादनाय तैरेव गुणैरुपास

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कयाचिच्छक्त्यात्मानमाच्छाद्य नानात्वेन प्रकाशमानायेत्यर्थः । ननु, तर्हि कथं प्रतीतिरत उक्तं गुणवृत्युपलक्ष्याय चित्तादीनां चेतनाऽध्यवसायादिवृत्तिभिरुपलक्ष्याय उपलक्षणमेवाहुः गुणद्रष्ट्रे तत्साक्षिणो कथञ्चिदुपलक्ष्य एव न ज्ञेय इत्याहुः स्वसंविदे अगोचरायेत्यर्थः ॥ ४६ ॥

अगोचरत्वमुपलक्ष्यत्वं च दर्शयन्तो नमन्ति–अव्याकृतविहाराय अतर्क्यमहिम्न इत्यर्थः । सर्वव्याकृतसिद्धये सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणयोग्यायेत्यर्थः । उपलक्षणान्तरमाहुः, हे हृषीकेश ! करणप्रवर्तक ! किं विषयच्छिन्मया ? न. मुनये आत्मारामाय किं साधनवशेन वा ? न हि मौनशीलिने मौन आत्मारामता तत्स्वभावाय ॥ ४७ ॥

कुतः ? परावरगतिज्ञाय स्थूलसूक्ष्माणां गतिज्ञत्वेन न क्वापि सज्जमानायेत्यर्थः । अपि च सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे कुत एतत् ? अविश्वाय न विश्वं यस्मिंस्तन्निषेधविषये विश्वाय च तद्विवर्ताधिष्ठानायेत्यर्थः । किञ्च, तद्द्रष्ट्रे अध्यासापवादसाक्षिणे अपि च अस्य विश्वाध्यासस्य तदपवादस्य चाविद्याविद्याभ्यां हेतवे । यद्वा, अविश्वाय विश्वतैजसाद्यवस्थारहिताय विश्वाय च मायया स्वांशैस्तत्तदवस्थाय तद्द्रष्ट्रे तासामवस्थानां भावाभावसाक्षिणे अन्यत्समानम् तस्मात्सर्वगतिज्ञत्वसर्वाधिष्ठातृत्वात्मारामत्वादिभिर्निरतिशयैश्वर्याय तुभ्यं नम इति—

विशेषणैरसङ्कीर्णैः पञ्चपञ्चाशता नुतः ।
अहिस्त्रीभिः प्रसन्नो यस्तासामिव भवेद्धरिः ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किञ्च, स्वयं भगवान् कृष्णोऽपि त्वमेकश्चतुर्विधश्चेति वदन्तस्तत्रैव नतिं पर्यवसाययन्ति—नम इति । सात्वतामुपासकानां पतय इति पतित्वेनैक्यमेव साधितम् अन्यथानर्थापत्तिः तथा चोक्तं पञ्चमस्कन्धे श्रीलक्ष्मीदेव्या "स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् । स एक एवेतरथा मिथोभयम्" इति. अन्यत्तैः । यद्वा, कृष्णायेति प्रस्तुतत्वात् श्रीनन्दनन्दनरूपाय"वक्त्रं व्रजेशसुतयोः" इत्यादि प्रसिद्ध्या रामाय च तत्तद्रूपाय वसुदेवसुताय च तस्मै तस्मै तत्सहयोगेन प्रद्युम्नायाऽनिरुद्धाय च तद्व्यूहान्तःपातिने एवमत्र कृष्णायेति वासुदेवान्तरस्य व्यावृत्त्यर्थं रामायेति सङ्कर्षणान्तरस्य अत एव वसुदेवसुतायेति क्रमेण धर्मपुत्रादेः दशरथपुत्रादेश्च तत्तत्सहयोगेन प्रद्युम्नानिरुद्धयोश्चान्ययोरिति तत्र सात्वता यादवा एव तदेवं नित्यत्वमपि सूचितं तथा च श्रीगोपालतापन्याम्—

"प्राप्य मथुरां पुरीं रम्यां सदा ब्रह्मादिसेविताम् ।
शङ्खचक्रगदाशार्ङ्गरक्षितां मुसलादिभिः ॥
यत्रासौ संस्थितः कृष्णः त्रिभिः शक्त्या समाहितः ।
रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः" ॥

इति त्रिभिः रामादिभिः शक्त्या च रुक्मिण्येत्यन्वयः एवमेवोक्तं 'मथुरा भगवान् यत्र"इति वसुदेवसुताय चेति श्रीकृष्णपक्षे चकारात् श्रीमन्नन्दगोपकुमाराय "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः" इति न्यायेन वसुदेवसुताय चेत्यर्थः । श्रीरामपक्षे "तात भवन्तं मन्वानः" इति. वक्त्रं व्रजेशसुतयोः"इति व्यवहारेण श्रीमन्नन्दगोपकुमाराय चेत्यर्थः ॥ ४५ ॥

तदेवं भक्तान् प्रति गुणप्रदीपाय स्वरूपभूतानामैश्वर्यादिगुणानां प्रकाशकाय अभक्तान् प्रति तु गुणैः प्राकृतैरात्माच्छादनाय यद्यप्येवं तथापि तेषां प्राकृतगुणानां जडानामपि वृत्त्या प्रवृत्त्योपलक्ष्याय तत्प्रवर्त्तकत्वेनानुमेयाय तत्प्रवर्त्तकत्वमेव कथं तत्राह–तद्द्रष्ट्रे साक्षिमात्रायेति भावः । स्वयन्तु स्वसंविदे स्वप्रकाशस्वरूपगुणाय यद्वा एवं यादवसम्बन्धेऽपि गोकुलसम्बन्ध एव गरीयानित्याहुः प्रेमवश्यतादीनां गुणानां प्रकर्षेण प्रकाशकाय तादृशगुणप्रकाशेनान्यात्मच्छादनाय च आवृतनिजैश्वर्याय गुणैर्दामभिरात्मानमाच्छादयसि तथा तस्मै वा दामोदरत्वे श्रीयशोदया बहुभिर्दामभिर्बन्धनात् तथापि गुणानां यमलार्जुनमोचनादिलक्षितानां दाम्नामेव वा बहूनामप्यपर्याप्तानां वृत्त्या प्रवर्त्तनेन ज्ञेयाय किञ्च गुणद्रष्ट्रे दाम्नां तेषामेव द्रष्ट्रे भीत्या मुहुर्दर्शनपराय अथ च स्वेषु वयस्यबालकेषु तदानीमपि नवनीतचौर्याद्यर्थसंविदः सङ्केता यस्येति इदमद्भुतमेव ॥ ४६ ॥

अव्याकृतः प्रपञ्चातीतो विहारो यस्य अथ च सर्वत्र व्याकृते न तत्तल्लीलत्वेन सिद्धिः प्रसिद्धिर्यस्य सर्वव्याकृतस्यैव सिद्धिस्तत्तल्लीलासाधकता यस्येति वा तदुक्तं "प्रपञ्चं निष्प्रपञ्चोऽपि"इति अव्याकृतलीलत्वादेव"परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे ! आख्यानं यदधीतवान्" इत्यादिकं घटत इत्याहुः, हृषीकेश हे स्वकीयात्मारामपर्यन्तानां सर्वेन्द्रियप्रवर्त्तकेति मुनये आत्मारामाय अथ च अकारप्रश्लेषेण अमौनशीलिने तद्विपरीतश्रीगोकुलानन्दलीलाय यद्वा, न व्याकृतो न व्यक्तो विहारो दधिपयश्चौर्यादिचेष्टा यस्य तथापि सर्वैरेव व्याकृता तन्मातृादिभ्यो व्याख्याता सिद्धिस्तत्तच्चेष्टाफलं दधिपयोभक्षणादिकमपि यस्य तस्मै अहो तेन च सर्वेषां प्रीतिरेवासीदित्याहुः–हृषीकेश हे सर्वेन्द्रियवशीकारिगुणगणेति । किञ्च, नम्रोपालम्भातो मुनये मौनशीलिन इति स्वान्तःकरणनिहिततादृशगुणोऽपि बहिर्मौनेन सुप्रतीको यथास्त इत्येवमुक्तरूपो यस्तस्मा इत्यर्थः । श्लोकद्वयेऽस्मिन्नाद्यान्तराच्छन्नतयोक्तिरियं प्रभुतास्फुरणात् सङ्कोचेनेति ज्ञेयम् ॥४७॥

तादृशातर्क्यलीलत्वे हेतुः परावरगतिज्ञाय तत्तदात्मत्वेन तत्तत्त्वज्ञाय ननु ज्ञेयाय तथापि सम्प्रति सर्वेषामध्यक्षाय अक्षाण्यधिकृत्य वर्त्तत इति प्रत्यक्षाय किञ्च न विद्यते विश्वं यत्र तस्मै तथापि विश्वाय तदेव प्रतिपादयन्ति "तद्द्रष्टेऽस्य च हेतवे" द्रष्टृत्वात् स्वस्मादुत्पन्नाय उपादानरूपात् स्वव्यतिरिक्तमिदमिति विश्वरूपाय श्रीगोपाललीलापक्षेऽपि "अद्यैव त्वदृतेऽस्य किं मम न ते,,इत्यादिदृष्ट्या तत्तत्सङ्गमनीयम् एवं सर्वविरोधाश्रयत्वेनैवाचिन्त्यशक्तित्वं तेनैव वैश्वर्यमिति पूर्वमपि प्रतिपादितम् अतोऽशेषविरोधाश्रयत्वात् निग्राह्यस्याप्यनुग्रहो युक्त एवेति भावः ॥ ४८ ॥

---

दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ।
दिव्यगन्धाऽनुलेपैश्च महत्योत्पलमालया ॥ ६५ ॥
पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ।
ततः प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवन्द्य तम् ॥ ६६ ॥
सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह ।
तदैव साऽमृतजला यमुना निर्विषाऽभवत् ।
अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे कालियनिर्यापणं नाम
षोडशोऽध्यायः ॥ १६ ॥

भाषा टीका ।

और हम जामें खेलें हे या कालीदह में जो स्नान करिके देव पितृ आदिकन को जलसों तर्पण करेगो, और उपवास करके स्मरण करत मेरो जो अर्चन [ पूजन ] करेगो सो पुरुष समस्त पापन तें छूटि जायगो ॥ ६२ ॥

और जा गरुड की भयसों रमणक द्वीप कूं छोडि के तुम या कालीदह में आय रहे हो, सो गरुड अब तुम्हारे मस्तक पें मेरे चरणन के चिन्हन कूं देखि के तुम कूं भक्षण नहीं करेगो ॥ ६३ ॥

ऋषिरुवाच ।

श्रीशुकदेवजी बोले, कि—अद्भुतकर्मा भगवान् श्रीकृष्ण ने जब ऐसी आज्ञा दीनी तब उन श्रीकृष्णचन्द्र कूं काली सर्प और सगरी नागपत्नी सादर पूजन करत भई ॥ ६४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दिव्येति सार्द्धत्रयम् । दिव्यत्वादिविशेषणैर्मर्त्यलौकिकतो वैशिष्ट्यम् अत एव माल्यादीनां विपदोषाद्यस्पर्शादिकं च ज्ञेयं प्रायश्चेत्तं संकल्पसिद्धत्वं च जगतां नाथं पूजयित्वेति तत्पूजयैवेह लोके परत्र च जगति सर्वेषैव स्वतो मङ्गलं वृत्तमिति गरुडध्वजं प्रसाद्येति श्रीगरुडादपि भयं निवृत्तमिति भावः । प्रीतः सन्तुष्टमनाः यद्वा तस्मिन् प्रीतः जातप्रीतः यद्यपि तस्य गमनेन कलत्रादिसहितस्यैव तस्य गमनं स्वत एवायाति तथापि सकलत्रेति ज्ञात्यपत्यदाराढ्य इति श्रीभगवन्निदेशानुवर्त्तित्वं ज्ञापितं ह स्फुटमेव सा सर्वोपघातकदुर्विषमयजलापि तत्र हृदविशिष्टे प्रदेशे निर्विषतापत्त्यैव तस्या निर्विषत्वमुक्तं न केवलं निर्विषा अमृतजला परममिष्टतोया च श्रीभगवच्चरणसंसर्गेण परमानन्दप्रदजलापि वाऽभवत् तादृशं च सामर्थ्यं तस्य न किञ्चिदपीत्याह, भगवत इति । तत्र प्रयोजनं क्रीडेति क्रीडायुक्तश्चासौ प्रसिद्धमानुषस्येव यद्रूपमाकारस्तद्विद्यते यस्य सच तस्य तथा च सा स्वमानुष्यलीलौपयिकी स्यादिति भावेनेत्यर्थः ॥ ६५-६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिण्याम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिव्याम्बरादिभिः पूजयामासुः परार्ध्यैरनर्घैः ततस्तं परिक्रम्य प्रदक्षिणीकृत्याभिवाद्य च ॥ ६५ ॥ ६६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कलत्रादिभिः सहितः अब्धेः द्वीपं रमणकाख्यं जगाम क्रीडार्थं न तु कर्मफलभोगार्थं मानुषं रूपमस्यास्तीति तथा तस्य भगवतोऽनुग्रहादेव सा यमुना निर्विषा अमृतजला चाभवत् ॥६७॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पराध्यरनर्घ्यैस्वेनोत्तमैः ॥ ६१ ॥ ६६ ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षोडशोऽध्यायः ॥ १६ ॥
( विजयध्वजरीत्या चतुर्दशः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षोडशोऽध्यायः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूजासाधनान्याह—दिव्येति । दिव्यान्यम्बराणि स्रजो माला भूषणश्च सर्वाणि शरीररत्नानि पराद्ध्यान्यमूल्यानि मुकुटकटककेयूरादीनि दिव्यो गन्धो येषाम् एतादृशा अनुलेपाः चतुःसमाः महती चोत्पलानां माला एवमलङ्कारचतुष्टयमपि कृतवान् ॥ ६५ ॥

ततः पूजयित्वा प्रसाद्य अब्धेर्द्वीपं जगामेति सम्बन्धः ननु पीडितः कथं पूजां कृतवांस्तत्राह—जगन्नाथमिति । स हि सर्वस्वामी तत्रापि रक्षकः स एवेति मुक्तमेव तत्पूजाकरणं ततः प्रार्थितवान् प्रसन्नो भवेति तत्र हेतुमप्याह—गरुडध्वजमिति । गरुडो ध्वजे यस्य कोऽप्यंशेनापि भगवानप्रसन्न इति गरुडो यदि जानीयात्तदा भक्षयदेव अतः प्रसादः कारणीय एव ततो भगवत्प्रसादानन्तरं प्रीतः सन्तुष्टः भगवता चाऽप्यनुज्ञातः प्रथमतस्तु क्रोधेनाज्ञानेन युद्धा ततोऽप्यनुज्ञातः परिक्रम्य प्रदक्षिणीकृत्य अभिवन्द्य च सम्भूतिं कृत्वा सर्वसहायः अब्धेर्द्वीपं सर्वेषामप्यगम्यं जगामेति इत्याश्चर्यं तस्मिन्निर्गत एव तदैव भगवत्कृपया सा यमुना मिष्टोदका ऽभवत् निर्विषा च न केवलममृतत्वं मिष्टतामात्रपरं किन्तु मरणनिवर्तकमपि सहजोऽपि यमुनाया यो दोषो विषादिः स्थितः सोऽपि गतः तत्र हेतुः अनुग्रहाद्भगवत इति, न केवलं कालीयगमनेन निर्विषा जाता किन्त्वनुग्रहाद्भगवतः क्रीडायाः करिष्यमाणत्वात्तस्यामनुग्रहः ज्ञानादिकं तु सूचयति भगवत इति ननु किमिति क्रीडां तस्यां कर्त्तव्या, तदाह क्रीडामानुषरूपिण इति । क्रीडार्थमेव मानुषरूपवान् अतोऽवश्यं यमुनायां क्रीडा विधातव्या ततः प्रसाद इति अनेन यमुनायाः सर्वदोषनिवृत्तिः सूचिता ॥६६—६७॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षित विरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
त्रयोदशाऽध्यायविवरणम् ॥१३॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सादरमिति पूर्वश्लोकोक्तेर्हे प्रभो ! दुष्टतायाः परमावधिरूपे मयि कृपायाः परमावधिरर्पितं त्वया यदहो प्राकृताप्राकृतलोकेषु मदन्यः कोऽपि ध्वजवज्राङ्कुशादिचिह्नानि स्वमूर्ध्नि न धत्ते तदहं साम्प्रतं श्रीमदङ्गानि मद्दन्तदंशोत्पन्नविषदाहतप्तानि सुगन्धसुशीतलचन्दनरसेन सस्त्रीक एव पाणिभिः स्पृशन्ननुलिम्पानि शृङ्गारजानि चेत्यतः स्वयमत्रैव दिव्यासने उपविशेत्युपवेश्य स्ववाञ्छितं पूरयित्वा लब्धभगवत्प्रसादस्ततो निर्जगामेत्याह—दिव्येति सार्द्धद्वयेन । मणिभिरिति कृष्णप्रादुर्भावकाले तद्वक्षःस्थल एवासीत् यः कौस्तुभः स एव तस्य नरलीलत्वशोभाव्याघाताभावार्थं तदैवालक्षितं कालियकोषागारमध्ये प्रविष्टोऽभूत् अत एव बहुरत्नालङ्कारप्रदानसमये कालियपत्नीभिरर्पितः एव स्वीयरत्नविशेषज्ञानेन कौस्तुभो दत्तः यदुक्तम् ।

"कौस्तुभाख्यो मणिर्येन प्रविश्य ह्रदमौरगम् ।
कालियप्रेयसीवृन्दहस्तैः स्वस्योपहारितः" ॥

इति गणोद्देशदीपिकायां प्रसाद्येति भगवानपि कालियमूर्द्धस्वभयहस्ततलनिधानेन तदीयमनोदुःखव्यथामुपशमयामासेति भावः । गरुडध्वजं प्रसाद्येति भो गरुडवाहन ! प्रभो ! सम्प्रत्यहं गरुडस्य ज्येष्ठभ्रातुर्दासोऽभूवम् अतः कदाचिद्दूरदेशस्य गन्तव्यत्वे सत्यहमपि स्ववाहनत्वेन स्मर्तव्यो निमेषमात्रेणैव शतकोटियोजनगामी दासानुदास इति तदुक्तिर्गम्यते अतः कालियारूढ एव कंसनिर्दिष्टः कृष्णो मथुरां जगामेति पौराणिकी कथा क्वचित् श्रूयते इति क्रीडामानुषरूपिण इति निलयोग इति ॥ ६५—६७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमे षोडशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

क्रीडार्थं मानुषेषु यदाविष्कृतमप्राकृतरूपं तदस्यास्तीति । क्रीडामानुषरूपी तस्य ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षोडशाध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषा टीका ।

दिव्य अम्बर ( वस्त्र ) माला मणि और बहु मोल भूषण तथा दिव्य चन्दन के लेप बड़ी कमलन की माला, इत्यादिक सामग्री सों ॥ ६५ ॥

जगत् के नाथ श्रीकृष्ण को पूजन करके और गरुड़ध्वज को प्रसन्न करकें । ता पीछें बड़ो प्रसन्न होयकें श्रीकृष्ण की आज्ञा पाय के भगवान् की परिक्रमा देकें उनको प्रणाम कारकें ॥ ६६ ॥

स्त्री सुहृद और पुत्रन कों साथ लेकें रमणक द्वीप के मध्य में काली जातो भयो ॥ श्रीयमुना जी वाई समें निर्विष हो के अमृत के तुल्य जल वारी होत भईं, सो केवल क्रीड़ा के ताईं मनुष्य रूप धारण करन वारे भगवान् श्रीकृष्ण के अनुग्रह सों होती भईं ॥ ६७ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें सोरहवें अध्यायकी, श्रीवृन्दावनस्थ पं० भागवताचार्यकृत भाषाटीका समाप्ता ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥



## ॥ सप्तदशोऽध्यायः ॥

—:*:—

राजोवाच ।

नागालयं रमणकं कस्मात्तत्याज कालियः ।
कृतं किम्वा सुपर्णस्य तेनैकेनासमञ्जसम् ॥ १ ॥

श्रीशुक उवाच ।

उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः ।
वानस्पत्यो महाबाहो ! नागानां प्राङ्निरूपितः ॥ २ ॥
स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि ।
गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥
विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ।
कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नागं सप्तदशे नागालयं तं निरयापयत् ।
बन्धून् स्वदुःखतः भ्रान्तान् सुप्तांस्तत्र दवादपात् ॥

असमञ्जसमप्रियम् ॥ १ ॥

उपहार्यैर्भक्ष्यैः सर्पजनैः सर्पाख्यैर्जनैः वानस्पत्यो वनस्पतेर्मूले देयो नागानां तद्बाधापरिहाराय यो बलिर्निरूपित उपकल्पितः ॥ २ ॥

ते च नागाः स्वं स्वं भागं जनैर्दत्तं सुपर्णाय प्रयच्छन्ति ततो भीताः गोपीथाय रक्षणाय ॥ ३ ॥

विषवीर्याभ्यां यो मदस्तेनाविष्टः काद्रवेयः कद्रूपुत्रः गरुडं कदर्थीकृत्यावगणय्य । यद्वा, उपहार्यैः सुपर्णभक्ष्यैः सर्पा एव जनास्तैर्नागानां सम्बन्धी यस्मिन्नेकैको नागो दीयते तथाभूतो यो बलिः सुपर्णाय निरूपितः तत्र स्वंस्वं भागं सर्वे नागाः प्रयच्छन्ति कालियस्तु न प्रयच्छति किन्त्वन्यैर्दत्तमपि तं बलिं स्वयमेव बुभुजे ॥ ४ ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अभीष्टलीलासिद्ध्या श्रीभगवतस्तदभ्युदयदर्शनेन श्रीव्रजस्य च स्वस्थतामाकर्ण्य स्वस्थः प्रीतमनाः सन् कथामध्य एव कथाशेषत्वाय तत्पूर्ववृत्तं पृच्छति—नागेति । नागानामालयं स्वभावतः सर्पवर्गस्य वसति स्थानं न तु गरुडस्येत्यर्थः । अतो यद्यपि नागास्तत्रान्ये निवसन्त्येवेति भावः । ननु, यद्भयादिति तत्सूचितमेव तथाह कृतं किमिति बाधाद्यः कटाक्षे ॥ १ ॥

उपेति त्रिकम् । हे महाबाहो ! इति यथा भवतो महाराजस्य पराक्रमेण वैरिणोऽपि राजानो बलिमुपहरन्तीति भावः ॥ २ ॥

पर्वणि पर्वणि प्रति पक्षद्वयान्तं महात्मने अपरिच्छिन्नशक्तय इत्यर्थः । अयं भागप्रदाने हेतुः ॥ ३ ॥

पश्चात् विषवीर्याभ्यां मदाविष्टः सन् काद्रवेय इति भ्रातृत्वं च मदे हेत्वन्तरं ज्ञेयं कदर्थीकृत्य तदनादरेण तच्छ्रुत्वेति वक्ष्यमाणात् तदीयेभ्यो बलादपहरणेनैव वा कदर्थीकृत्य स्वयं तु स्वयमेव ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥१॥

उपहार्यैः निवेद्यभूतैः सर्पजनैर्यो बलिः सर्परूपबलिरित्यर्थः । यो बलिस्तस्य स्थाने निरूपित इत्यर्थः । वानस्पत्यः वनस्पतिरपुष्पफलवृक्षः वृक्षविशेषमूले कल्पितः यद्वा, वनस्पतिगते चन्द्रे अमावास्यायां प्रवर्तमान इत्यर्थः ॥ २ ॥

गोपीथाय रक्षणाय ॥ ३—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं "द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः । यद्भयात्" इति, तत्र कालियस्य द्वीपत्यागनिमित्तस्य सुपर्णाद्भयस्य निमित्तं बुभुत्सुः पृच्छति राजा—नागालयमिति । नागालयमित्यनेन तद्द्वीपस्थानां नागानां सुपर्णाद्भयमस्तीति सूचितम् । अत एव पृच्छति कथमिति·

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेनैकेन कालियेन स्वस्य भयनिमित्तं सुपर्णस्यासमञ्जसमप्रियं किं कृतम् अन्येषु निर्भयेषु सत्स्वप्यनेन स्वभयनिमित्तं किमप्रियं कृतम् अन्येषां वा भयाभावनिमित्तं च किमिति प्रश्नार्थः ॥ १ ॥

तावत्तत्रत्यानां नागानां सुपर्णाद्भयाभावनिमित्तमाह—उपहार्यैरिति । हे महाबाहो ! प्राक् पुरा काले सर्पजनैः सर्पा नो मा दंशन्त्विति तेषां यो बलिरुपहार्यैर्भक्ष्यैर्मासि मासि वानस्पत्यः वनस्पतिरपुष्पफलवृक्षः तन्मूले देयो वानस्पत्यः वनस्पतिगते चन्द्रे अमावास्यायां प्रवर्तमानो वा निरूपितः कल्पितः ॥ २ ॥

तत्र सर्वे नागाः जनैः पर्वणि कल्पिते बलौ स्वं स्वं भागमात्मनां गोपीथाय रक्षणार्थं महात्मने सुपर्णाय प्रयच्छन्ति अतस्तत्रत्यानां न गरुडाद्भयमस्तीत्युक्तम् ॥ ३ ॥

एवं सर्वेषु नागेषु प्रयच्छत्सु एव काद्रवेयः कद्र्वाःसुतः कालियस्तु विषवीर्याभ्यां यो मदस्तेनाविष्टः सुपर्णं कदर्थीकृत्य तुच्छीकृत्याविगणय्यैवेति यावत् तं गरुडाय देयं बलिं भागं स्वयमेव बुभुजे ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असमञ्जसं अपराधम् ॥ १ ॥

उपहार्यैः उपहारकैः गरुडादीनां पूजकैरन्यजनेन पूज्यैर्वा सर्पजनैरिह यो बलिः मासि प्रतिमासं क्रियत इति शेषः । कीदृशः वानस्पत्यः सोमे वनस्पतिं गते क्रियमाणः अमावास्यायां क्रियमाण इत्यर्थः । यद्वा, वनस्पतौ क्रियमाणः स बलिः प्राङ्नागानामैकमत्येनात्मरक्षणार्थं निरूपित इत्यन्वयः ॥ २ ॥

आत्मनः गोपीथाय गोपनाय आत्मरक्षणाय ॥ ३ ॥

कद्रोरपत्यं काद्रवेयः जातिज्ञानार्थमिदमुक्तं कदर्थीकृत्य धिक्कृत्य तां बलिं पूजां बलिशब्दः पूजार्थः स्त्रीलिङ्गः पूजायां स्त्रीबलिरित्यभेदेनाकर एव चेति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीभगवतो व्रजस्य च स्वस्थतामाकर्ण्य स्वस्थः कथामध्यतः एव तत्सौष्ठवाय पृच्छति-नागेति ॥ १ –५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्दशे भगवतो दर्शनान्निर्वृतो व्रजः ।
अग्नेः संरक्षितो पश्चात्प्रासङ्गिकमिहोच्यते ॥
इन्द्रियप्राणयोर्दोषो निवार्यस्तु सदै(है)व हि ।
अतः कालीयकथया दाहाभावो निरूप्यते ॥
प्रासङ्गिककथात्यत्र हरेरद्भुतकर्मता ॥
वक्तुं युक्ता धर्मदोषा नान्यथा यान्ति हीति च ॥

प्रथमं प्रासङ्गिकं पृच्छति—नागालयमिति । द्वीपं रमणकं हित्वेति यद्भगवतोक्तं तस्य परित्यागे हेतुर्वक्तव्यः नापि तत्स्थानं गरुडस्येति शङ्कनीयम् ? यतः सहजं नागानामेव तदाह—नागालयमिति कस्माद्धेतोरिति यद्यपि भयं पूर्वमुक्तं तथापि तद्भयं साधारणमसाधारणं वा ? साधारणं चेत् कथमन्यैर्न त्यक्तमनेन त्यक्तमिति भवति विशेषजिज्ञासा, विशेषभयं चेत्तत्र हेतुं पृच्छति कृतमिति । तेनैवैकेन सुपर्णस्य किं वा असमञ्जसं कृतं सुपर्णस्यादक्लिष्टकर्मा एको वा कथमपराधी तत्रोपाख्यानमाह उपहार्यैरिति । उपहरन्तीत्युपहाराः समर्प्यन्ते यैः ते उपहार्याः उपहारसमर्पका इत्यर्थः । ते सर्व एव सर्पजनाः साधारणपक्षे सर्पाणां वा जनाः सेवकाः अतलादिवासिनः तैः मर्यैरेव रमणके मासि मासि बलिः कल्पितः य इति प्रसिद्धः । हाख्यायिका गरुडः सर्वानेव सर्पान् भक्षयति सर्वदा यति च कांश्चिद्वृथैव मातुर्वैरमनुस्मरन् ततो वासुकिप्रमुखा गरुडाद्भीताः ब्रह्माणं शरणं गताः ततो ब्रह्मा गरुड सह हूय सन्धिं कृत्वा दण्डरूपं बलिं कल्पितवान्—

"अमायां वृक्षमूले तु नागलोकेषु यद्भवेत् ।
एकस्मिन् दिवसे तावदेकत्र स्थापयन्तु हि ॥
ततो हि गरुडस्तार्क्ष्यस्तद्भुक्त्वा नैव पीडयेत् ।
इति व्यवस्थया सर्पा मासि मासि बलिं ददुः" ।

तदाह—मासिमासीह यो बलिरिति । वानस्पत्यो वनस्पतेर्मूले हे महाबाहो ! इति सम्बोधनं यथा त्वया सर्वेभ्योऽपि करो गृह्यते गरुडोऽपि गृह्णातीति सूचनार्थम् अरयो न केवलं वध्याः किन्तु दण्ड्या अपि ततः किमत आह—नागानां सम्बन्धि प्राक् एवंविधो निरूपितः ॥ १—२ ॥

ततः स्वं स्वं भागं सर्व एव नागाः अष्टकुलपरि सर्व एव काद्रवेयाः पर्वणि अमावास्यायां वीप्सा नित्यार्था गोपीथाय रक्षणार्थम् । ननु, वैरी कथं दण्डे दत्तेऽपि विमुञ्चेदित्याशङ्क्याह—सुपर्णाय महात्मन इति । तत्रायं कालियः देवोपासको जातः ॥ ३ ॥

ततो विषस्य वीर्यं जातं तस्य मदेनाविष्टः काद्रवेयः दोषोऽप्यस्मिन्नलग्नः कालाधिभौतिकरूपोऽपि कालियः कदर्थीकृत्य दूषयित्वा गरुडसेवकान् मारयित्वा तं बलिं स्वयं बुभुजे यतोऽयं महाबलिः बलिष्ठः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तार्क्ष्याद्भीतिः कालियस्य तार्क्ष्यं सौभरिशापवाक् ।
कृष्णाप्तिर्गोवुहान्दावाग्न्याप्तिः सप्तदशेऽभवत् ॥

॥ १ ॥

उपहार्यैः भक्ष्यत्वेनोपहारीक्रियमाणैः सर्परूपैर्जनैः वानस्पत्यः वनस्पतेर्मूले देयः नागानां नागैर्गरुडात्स्वबाधापरिहाराय निरूपित उपकल्पितः ॥ २ ॥

तत्र सर्वेनागास्तं स्वंस्वम्भागं प्रयच्छन्ति पर्वणि पर्वणि पश्चद्दयन्तं गोपीथाय रक्षणाय किन्तु कालियस्तु तं न प्रयच्छति प्रत्युतान्यैर्दत्तमपि स्वयमेव बुभुजे ॥ ३ ॥

कदर्थीकृत्य अनादृत्य ॥ ४ ॥

---

तच्छ्रुत्वा कुपितो राजन्! भगवान् भगवत्प्रियः।
विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥ ५ ॥
तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः।
दद्भिः सुपर्णं व्यदशद्दायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ॥ ६ ॥
तं तार्क्ष्यपुत्रः स निरस्य मन्युमान् प्रचण्डवेगो मधुसूदनासनः।
पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ॥ ७ ॥
सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः।
ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सप्तदशेऽध्याये श्रीयमुनाह्रदं कालीयवासकरणं वनाग्नितो बन्धुत्राणं च निरूप्यते—नागालयमिति। असमञ्जसमर्दनम् ॥ १ ॥

हे महाबाहो! उपहार्यैर्गरुडभक्ष्यैः सर्पजनैः सर्पजनभय इत्यर्थः। वानस्पत्यो वनस्पतेर्मूले देयः नागानां सम्बन्धी यो बलिर्निरूपितः ॥ २ ॥

ते बलिं नागजनमयं स्वं स्वं भागं स्वकुलात् सङ्गृहीतं ते च नागाः आत्मनो गोपीथाय रक्षणाय प्रयच्छन्ति ॥ ३ ॥

कालियस्तु स्वयं बुभुजे ॥ ४—५ ॥

भाषा टीका।

ओं दावानलपानकर्त्रे नमः ॥

राजोवाच।

राजा पूछें हैं, कि—हे भगवन्! कालीनाग, सर्पन को निवासरूप जो रमणक द्वीप है, ताकूं क्यों? छोडतो भयो, और वाने इकले ने गरुडजी को कहा अपराध कियो रह्यो ॥ १ ॥

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे बडी भुजान वारे! राजन्! पहिले गरुडजी रमणक द्वीपमें जायकें कितनेएक सर्पन कूं मारके खाय जाते कितनेन कूं व्यर्थ मार गेरते तब वासुकि प्रभृति सर्पन ने ब्रह्माजी सों प्रार्थना करी, ब्रह्माजी ने गरुडजी कूं समुझाय दीने और ये नियम कर दियो कि हर अमावस्या कूं तुम सब सर्पलोग अपनी वारीसों एक वृक्षके मूलमें अपनी तरफसों गरुडजी को भेट देदियो करो, तब गरुडजी तुमारी भेट लेके चले जायो करेंगे, और सर्पन कूं न मारेंगे तब वा समयसों ऐसेई होतो रह्यो, कि—बलि अर्थात् भेट जो वृक्षके नीचे देवेको नियम करयो हो ॥ २ ॥

सो सबरे सर्प अपनो भाग २ अमावसके अमावस अपनी रक्षाके तांई महात्मा श्रीगरुडजी कों देते रहे ॥ ३ ॥

परन्तु विष और वीर्य के मदसों उन्मत्त जो काली नाग रह्यो सो तो गरुडजी कूं भी तुच्छ समुझके आपतो बलि (भेट) क्यों देय पर औरन की दई भेटकूं भी आपही खाय जातो हो ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

विषमेवायुधं यस्य सः प्रत्यभ्ययाद्योद्धुं प्रति जगाम उच्छ्रितनैकमस्तकः उन्नमितानेकफणः दन्तायुधो दन्तायुधः करालजिह्वश्चासावुच्छ्वसितोग्रलोचनश्च उच्छ्वसितान्युज्जृम्भितान्युग्राणि लोचनानि यस्य सः ॥ ६ ॥

तार्क्ष्यपुत्रो गरुडः मधुसूदनस्यासनं यस्मिन्सः ॥ ७ ॥

तस्य गरुडस्यागम्यमगाधतया च दुरासदम् ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

हे राजन्निति बलिप्रदराजविप्रतिपत्त्या भवद्विधवदिति भावः यतो भगवान् सर्वशक्तियुक्तः भगवतः प्रियश्च पार्षदप्रवर इत्यर्थः। अतो भगवद्द्वेषिनिग्रहपरतया महावेगः सन् सद्यः मारणोद्यततया समीप एवागच्छत् तस्य तुच्छत्वेऽपि भावयितुं तामसत्वेन भगवदनादरस्वभावत्वाच्चेति भावः ॥ ५ ॥

विषायुधः दूरादेव फूत्कारादिना तन्मोचकः सन् प्रत्यभ्ययात् निकटे तु दन्तायुधस्सन् व्यदशत् कराला दुर्दर्शनप्रसारितया स्पर्शमात्रेण हिंसिका जिह्वा यस्य उच्छ्वसितानि प्रसारितानि उग्राणि दृष्टिमात्रेण भस्मीकराणि लोचनानि यस्य सच सच ॥ ६ ॥

तृक्षो मरीचिः ततः शिवादित्वादपत्यार्थे तनस्तदनन्तरापत्यस्य तार्क्ष्यस्य श्रीकश्यपस्य महामुनेः पुत्रः अनेन तत्प्रभावसञ्चारः सूचितः तार्क्षीति वा पाठः गर्गादिभ्योयञिति गोत्रापत्यविवक्षया गरुत्मान् गरुडस्तार्क्ष्य इत्यप्युक्तत्वे अत्र कालीयस्तु कियानिति स्वाभाविकविशेषान्तरत्वात्, मर्दयति। कालीयं तु तादृशस्वभावे मातुरेव गुणसञ्चार इत्याह कद्रूसुतमिति श्रीगरुडस्य सौन्दर्यमप्याह हिरण्येति सव्येनेति अपरेषां बोधयति ॥ ७ ॥

अन्यैरपि दुरासदं दुष्प्रवेशम् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

ताक्ष्यपुत्रो गरुडः॥७॥

तद्गम्यं गरुडंनागम्यं ब्राह्मणवाक्यस्य माननीयत्वात् परमपुरुषेणैव गरुत्मतापि प्रतिघातशक्तिमतापि तदनुरोध उपपद्यते॥८—१३॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे राजन्! तत्कालियस्य कर्माऽऽकर्ण्य भगवतः प्रियो भगवान् गरुडः कालियं हन्तुम् इच्छुर्महावेगः समुपाद्रवत्॥५॥

तमापतन्तं गरुडं विषमेवायुधं यस्य स कालियस्तरसा बलेन प्रत्यभ्यपतत् दद्भिर्दन्तैर्व्यदशत् ददंश च, कथम्भूतः? उच्छ्रितानि उद्धृतानि नैकान्यनेकानि मस्तकानि फणा येन दन्ता एवायुधानि यस्य कराला जिह्वा यस्य उच्छ्वसितान्युदस्तानि उग्राणि लोचनानि यस्य सः॥६॥

मधुसूदनस्यासनमुपवेशनं यस्मिन् सः उग्रः विक्रमो यस्य प्रचण्डः वेगो यस्य सः ताक्ष्यपुत्रो गरुडः क्रोधवांस्तं कद्रूसुतं निरस्य ततः प्रक्षिप्य हिरण्यरोचिषा सव्येन वामेन पक्षेण जघान ताडितवान्॥७॥

सुपर्णस्य पक्षेणाभिहतः कालियोऽतीव विह्वलः उद्विग्नस्तेन सुपर्णेनागम्यं गन्तुमशक्यं दुरासदमगाधतया अन्यैश्च दुष्प्रवेशं यमुनाया ह्रदं विवेश प्रविष्टवान्॥८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विजिघांसुः हन्तुकामः॥५॥

विषमेवायुधं यस्य स तथा उद्धृतनैकमस्तकः उद्धृतानेकफणः दद्भिः दन्तैः व्यदशत् दंशितवान् दन्ता एवायुधं यस्य स तथा करालजिह्वश्च उच्छ्वसितोग्रलोचनश्च तथा तथा उच्छ्वसिताः दीर्घश्वासोपेतः उग्रे लोचने यस्य स तथा॥६॥

जघान अहनत् आत्मपादैस्ताडितवानित्यर्थः॥७॥

कालिन्द्याः यमुनायाः तेन गरुडेन अगम्यं दुरासदं पश्वादीनामिति शेषः॥८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विषायुधः फूत्कारादिना दूरात् ददायुधो निकटात्॥६॥७॥
अन्यैर्दुरासदम् दुष्प्रवेशम्॥८॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्सेवकैर्निवेदितो गरुडः श्रुत्वा कुपितो जातः राजस्त्रिति राजर्षिभिरेतादृशीति ज्ञापयति असामर्थ्येन्तु तस्य नास्तीत्याह—भगवानिति। भगवत्कृपया भगवान् यतो भगवतोऽयं प्रियः वाहनरूपः अतः तस्य दण्डमप्यङ्गीकृत्य विशेषेण जिघांसुरेन कालियं प्रति सम्यक् महाघोषपूर्वकम् उप समीप शीघ्रमाद्रवत्॥५॥

आराधितो विषाग्ना हृदये प्रविष्ट इति तस्यापि सम्मुखे इत्याह—तमापतन्तमिति। नन्वशस्त्रः कथं वधियाते? इत्यागूर्णायुधमिति। प्रातिकूल्यतया अभ्ययात् सम्मुखं गतः उद्धृतानेकानि मस्तकानि यस्य अयमेकोऽहं बहुरूप इति ज्ञापयितुं सुपर्णी दद्भिर्दन्तैराशीरूपैः यतोयं ददायुधः ददा दन्ता आयुधानि यस्य न केवलं दंशमात्रेण न त्यक्तुमिच्छति किन्तु भक्षयिष्यतीत्याह—करालजिह्वा इति। कराला जिह्वा यस्य ग्रसनसमर्था क्रूरा उच्छ्वसितान्युग्राणि लोचनानि यस्य तस्य ज्ञानशक्तिः कुण्ठितेति सूचितम् उच्छ्वसितत्वान्मर्यादाया उग्रत्वात् विपरीतत्वम्॥६॥

एतादृशमपि गरुडो मारितवानित्याह—तमिति। तं प्रति तुल्यतायामवश्यमारकत्वे च हेतुमाह—तं ताक्ष्यपुत्र इति। भार्ये कश्यपो भावान्तरमापन्नः रूपान्तरेण वनसृण्यां विवाहः कृतः अयमपि काद्रवेय इति तुल्यता स इमि पूर्वशत्रुः कोपितश्च निरन्तरामसुक्षेपेण दूरादेव क्षिप्त्वा तिरस्कृत्येत्यर्थः। नन्वाशीर्दैवबलेन समगच्छन्त कथं तिरस्कृतवान्? तत्राह—मन्युमानिति। क्रोधेन तिरस्कारं कृतवान् प्रचण्डो वेगो यस्य तदपेक्षयाप्यस्य क्रियाशक्तिरधिकोक्ता तत्र हेतुः मधुसूदनस्यासनभूत इति गमने भगवदासनं तदर्थं भगवद्दत्ता क्रियाशक्तिरस्मिन् वर्त्तत इति सव्येन पक्षेण बृहद्रूपेण तद्ब्रह्मात्मकं भवति तेन स निरस्तः पक्षस्य ब्रह्मत्वाभिव्यक्तिर्जातेत्याह—हिरण्यरोचिषेति। हिरण्यरूपत्वं भगवद्धर्मः। ननु, सोऽपि कश्यपपुत्रः कथं तं मारितवानित्याशङ्क्याह—कद्रूसुतमिति। मातृदोषेण दुष्टं मातृप्राधान्यं चात्र बीजमुख्यता। ननु, दंष्ट्रापेक्षया प्रहारोऽल्पीयानिति कथमस्य जयः? तत्राह—उग्रो विक्रमो यस्येति वाह्योऽप्ययं विक्रम उग्रो मरणपर्यवसायी॥७॥

ततो यज्जातं तदाह—सुपर्णपक्षाभिहित इति। सुपर्णस्य गरुडस्य पक्षेणाभिहतस्ताडितः कालियो विह्वलो जातः तत्र कालिन्द्याः ह्रदं विवेश तत्रागम्यं गरुडस्य॥८॥

---

श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी।

तत्रत्य कर्णौ जपसर्पमुखात्तत् श्रुत्वा॥५॥

विषायुधः दूरात् फूत्कारेण तम्मोचकः निकटे तु ददायुधो व्यदशत् कराला जिह्वा यस्य उद्भूतं श्वसितं यस्य उग्राणि लोचनानि यस्य स च स च स च सः॥६॥

ताक्ष्यस्य कश्यपस्य पुत्रः मधुसूदनस्यासनं यस्मिन् सः॥७॥

दुरासदम् अगाधजलत्वेनान्यैरपि दुष्प्रवेशम्॥८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

विषमेवायुधं यस्य स कालियः तं गरुडं योद्धुं प्रत्यभ्ययात् प्रतिजगाम॥६॥

ताक्ष्यस्य कश्यपस्य पुत्रः मधुसूदनस्य आसनं यस्मिन् स गरुडः तं कालियम् कद्रूसुतमित्यनेन काद्रवेयैः सह गरुडस्य

तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितम् ।
निवारितः सौभरिणा प्रसह्य क्षुधितोऽहरत् ॥ ९ ॥
मीनान् सुदुःखितान् दृष्ट्वा दीनान् मीनपतौ[1] हते ।
कृपया सौभरिः प्राह[2] तत्रत्यक्षेममाचरन् ॥ १० ॥
अत्र प्रविश्य गरुडो यदि मत्स्यान् स खादति ।
सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहम् ॥ ११ ॥
तं कालियः परं वेद नान्यः कश्चन[3] लेलिहः ।
अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रतिविरोधः सूच्यते समुद्रमथने उच्चैःश्रवाः कृष्णवर्णः शुक्लवर्णो वेति कद्रूप्रश्ने तथ्यभाषिणी विनतोवाच शुक्लवर्णः पुनः कद्रूर्यदि शुक्लवर्णस्तर्हि तव दासी अहम्, यदा कृष्णवर्णस्तदा मम दासी त्वमिति समयं कृत्वा स्वपुत्रैः कृष्णवालभूतैः तमश्वं कृष्णवर्णं कारयित्वा विनतां दास्येनायोजयत् तदा काद्रवेयैर्वैनतेयो बहुधा क्लेशितोऽमृताहरणेन दासीभावगतां पतितां स्वमातरमुद्धारेति महाभारते द्रष्टव्यम् ॥ ७ ॥
तस्य गरुडस्यागस्त्वम् ॥ ८ ॥

भाषा टीका ।

हे राजन् ! या बात कूं सुनकें भगवत् के प्यारे पार्षद भगवान् श्रीगरुडजी बडे कुपित भये, और मारिवे की इच्छासों बडे वेगसों काली के पीछे दौडे ॥ ५ ॥
तबतो आवते भये गरुडजीकूं विषजाको आयुध ऐसो काली अनेक मस्तकनकों उठायकें सन्मुख भाजिके दांतनसों काटतो भयो, दांतही आयुध जाके, बडी कराल जिह्वावारो ऊंचे श्वास लेवेतें उग्र होय रहे लोचन जाके, ऐसो काली गरुड कौ सामनो करत भयो ॥ ६ ॥
बडे क्रोधित होय रहे और प्रचण्ड वेगवारे श्रीमधुसूदन के आसन अर्थात् वाहन रूप गरुडजी वा कालीकूं अपने अङ्गते उडाय के सुवर्ण सदृश जाकी दीप्ति ऐसे अपने बायें पंख सों वा कालिय नागकूं मारत भये ॥ ७ ॥
गरुडके पंखसों ताडित होयकें वो काली अत्यन्त व्याकुल भयो, और गरुड जहां न जायसकें ऐसे वा कालिन्दी [यमुना] के ह्रदमें प्रवेश करतो भयो ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्गमनभये कारणमाह—तत्रेति । निवारितोऽपि ॥ ९।१०।११ ॥
लेलिहः सर्पः अतस्तत्रावात्सीत् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एकदेति चतुर्विंशचतुर्युगादपि पूर्वत्र श्रीरघुनाथपूर्वजमान्धातृमहाराजे पृथ्वीं शासतीति ज्ञेयं जलचरमिति सर्वेषामेव सत्त्वे साधारणमित्यर्थः। तत्र च भक्ष्यं पक्षिजात्युचितलीलस्य तस्याहारत्वेन प्राप्तम् अत एवेप्सितं तथापि मुनिवाक्यमादरणीयमिति चेत्तत्राह, क्षुधित इति । भगवद्देवलीलयाऽङ्गीकृतक्षुदपि क्षुधार्त्तानां भक्ष्यानर्हस्यापि भक्षणे दोषाभावेऽपि पुनः एवं श्रीगरुडस्यापराधः परिहृतः किन्तु तस्य मुनेरेवापराध इति भावः। क्षुधितस्य महत्तमस्य भक्ष्यभक्षणाविघ्नाचरणात् ॥ ९ ॥
अन्यमपि महापराधं तस्याह—मीनानिति द्वाभ्याम् । दीनान् स्वभावत एव जलचरत्वेन किञ्चिदपि कर्त्तुमशक्तेः मीनपतौ सर्वमत्स्यरक्षके हते सुष्ठु दुःखितान् दृष्ट्वा अत्र एतेन तस्यान्यमत्स्यविलक्षणं सज्ञानत्वं ज्ञापयति—दीन इति । सप्तम्यन्तपाठे सदैव गरुडभयेनार्त्त इत्यर्थः । प्रथमान्तपाठो वा महापापेऽदृष्टयोंदिना विवेकरहित इत्यर्थः ॥ १० ॥
अत्र ह्रदे मत्स्यानिति जलचरोपलक्षणं मः महावाक्याद्यमन्ता श्रीभगवत्पार्षदवरोऽपीति वा अहमिति तपोबलाभिमानात् एतेनैव किल श्रीवैष्णवापराधेन तस्य तपो भङ्गादिपरमानर्थः फलितः तच्च नवमस्कन्धे वर्णितं किञ्च तत्रत्यक्षेमार्थसङ्कल्पोऽपि विपरीत एवाभवत् तत्रास्तु तावज्जलचराणां वार्त्ता कालियनिवासेन तीरवर्त्तिनां वृक्षादीनामपि तथोपरि गच्छतां खगादीनामपि मरणं प्राप्तमिति केवलं श्रीवृन्दावनयमुनाधवमाहात्म्येन श्रीभगवत्कृपयाऽनतिचिरेण तदपराधस्सद्यः फलमिव विवेकिनां नरकतुल्यमेव विषयभोगं कृत्वा तेन पश्चात् निस्तीर्णमिति ॥ ११ ॥
तत्प्रोक्तवृत्तं कालिय एव परं केवलं वेदेति श्रीगरुडद्वेषेण तल्लीलया सर्वत्र निर्भयस्थानान्वेषणात् पूर्वजन्मकृतभाग्यविशेषाच्च कृष्णेन सर्वानन्दकरेणेति भावः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुतस्तत्र गरुडस्यागमनं न तत्कारणमाह—तत्रेत्यादिभिस्त्रिभिः। तत्र ह्रदे

(१) हतं इति सुबो० पा० । (२) तत्रतत्क्षेमम् । (३) लेलिहा इति विज० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कदाचित् गरुडः स्वाभीष्टं भक्ष्यं जलचरं मीनपतिं क्षुधितः प्रसह्य बलादहरज्जहार, कथम्भूतः? सौभरिणा निवारितोऽपि ॥ ९ ॥

एवं मीनपतौ गरुडेन हृते सति सुतरां दुःखितान् मीनान् दृष्ट्वा सौभरिः कृपया तत्रस्थानां जन्तूनां क्षेमं भयाभावरूपमाचरन् कुर्वन् प्राह ॥ १० ॥

किम् अत्र ह्रदे प्रविश्य यदि गरुडो मत्स्यान् खादति तर्हि स गरुडः सद्य एव प्राणैर्वियुज्येत एतदहं सत्यं ब्रवीमीति ब्राह्मणवाक्यस्य माननीयत्वात् परमपुरुषेणेव गरुत्मता तत्प्रतिघातशक्तिमताऽपि तस्यानुरोध उपपद्यते ॥ ११ ॥

तच्छापात्मकं सौभरेर्वचः केवलं कालिय एव वेद तदन्यः कोऽपि लेलिहानः सर्पः न वेद अतोऽयं गरुडाद्भीतः तत्र ह्रदं अवात्सीत् ततः कृष्णेन विवासितः निष्कासितश्चेति कालियदमनात्मकवृत्तान्तोपसंहारः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गरुडस्याऽगम्यत्वे निमित्तमाह-तत्रेति। भक्ष्यत इति भक्ष्यम् ॥९॥

तत्क्षेमं तेषां शिष्टानां क्षेमं योग्यरक्षाम् ॥ १० ॥

खादन्ति भक्षति प्राणवियोगं मरणमाप्नोतु ॥ ११ ॥

लेलिहा लेलिहानः सर्पः छन्दोभङ्गभयादेवमुक्तं गरुडाद्भीत्यैवावात्सीत् सौभरेः शापातिक्रमणासमर्थेन तेन किमर्थं ह्रदं प्रविश्य हननं नाकारीतीयमाशङ्का—

"विष्णुना विष्णुभक्तैश्च ब्रह्मशापोऽनुवर्त्यते।
ब्राह्मणानामपीडार्थं बलिभिः क्षत्रियादिभिः" ॥

इत्यादिब्रह्माण्डवचनेन निस्तुषीकर्तव्या एतद्विवक्षया वा लेलिहेत्युक्तम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

भक्ष्यं पक्षिजात्युचितलीलस्य आहारत्वेन प्राप्तम्। अत एव ईप्सितम् अत एव लीलया भगवद्वदेव क्षुधितः ॥ ९ ॥

मत्स्यानिति जलचरोपलक्षणम् ॥ १० ॥ ११ ॥

वेदेति श्रीनारदद्वारेति ज्ञेयम् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्र हेतुं वक्तुमुपाख्यानमाह-तत्रैकदेति। यदाऽस्य न भगवद्भावः सौभर्युपाख्याने सर्वत्र मीनसङ्गः प्रसिद्धः। स हि मीनहितकारी भवति पुनर्गरुडो दैवगत्या तस्यैव समीपे ईप्सितं भक्ष्यं जलचरविशेषं रोहितादिरूपं निवारितोऽपि सौभरिणा क्षुद्वशात् बहिर्मुखावस्थां प्राप्तः तं गृहीत्वाऽन्यत्र गतः तत्र भक्षणे आलोडनादिक्षेपतः खेदजननाच्च मरणमेव भवेत् जीवन्तमेवान्यत्र हृतवानिति तत्र तस्यागमनं प्रोच्यते ॥ ९ ॥

ननु, भगवन्निर्मितेऽर्थे कथं मुनेराग्रहस्तत्राह-मीनान् सुदुःखितान् दृष्ट्वेति। यथा भगवता मर्यादाशास्त्रं कृतं लौकिक एवं वैदिकमपि ततः परं दुःखं दृष्ट्वा दुःखितः कारुणिकः तदुपायं कुर्यादिति दीनोपेक्षा दोषस्य भयात् "स्वर्गे ... तस्यापि भिन्नभाण्डात् पयो यथा" इत्यादिवाक्यात्। अतो दया लोकमर्यादोल्लङ्घनं कृतवान् तदाह—सुदुःखितान् दृष्ट्वेति। ननु ज्ञानादेव तेषां दुःखं कथं प्रतीकारार्थं यत्नस्तत्राह-दीनानिति विचार्यमाणेऽपि ते दीनाः रक्षकाभावात् अत एव तत्र हेतुः मीनपतौ हृते इति स हि मीनानां पतिः अन्यथा गोत्रजा निस्से स्वात्मीयानपि भक्षयेयुः अतः केवलं कृपया सौभरिः ईक्षमाणं प्राह-तत्रत्यं मीनानां क्षेममाचरन् वस्तुतस्त्वनर्थ एव कृतः मीनाः सर्व एव तत्रत्या विषेण दग्धाः तत्प्रसङ्गादन्येऽपि जीवाः अतोऽन्येन यत्क्रियते तेनानर्थ एव सम्पद्यत इति फलितम् ॥ १० ॥

शापवाक्यमाह—अत्र प्रविश्येति। अत्र ह्रदे प्रविश्य ... तथा भवेदित्येकः शापः तत्रापि यदि मत्स्यान् तत्रापि एव गरुडः नत्वन्यः पक्षी ततः सद्य एव प्राणैर्वियुज्येत स्यपरः तेनान्यानहनस्याप्यत्रत्यमत्स्यस्य भक्षणं निषिद्धं तथा न विशिष्टशापः अत एव कालियस्य रक्षा अन्यथा मत्स्यखादने शापाभावात्स सा स्यादिति भावः। अत एव स ... पुनरुक्तं ब्रह्मवाक्यमाशारूपम् इदमनुवादकं वाक्यमित्याशङ्क्याह सत्यमेतद्ब्रवीम्यहमिति। प्रमाणं न हि ब्रह्मवादो मृषा भवति ॥११॥

तमर्थं कालिय एव परं वेद गरुडेन सह विरोधं चिकीर्षुः तस्यागम्यं स्थानं विचारितवान् अन्येषां त्वेवमध्यवसायाभावात् नान्यो लेलिहः सर्पो जानाति अतो गरुडाद्भीतः तत्रावात्सीत् कृष्णेन च विवासितस्ततो दूरीकृतः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

गरुडागम्यत्वे कारणमाह-तत्रेति। मा भुङ्क्ष्वेति निवारितोऽपीति तस्मिन् परमभक्ते गरुडे आज्ञाप्रदानं तद्विप्रातिकूल्यं चेति सौभरेरपराधद्वयं तदाज्ञालङ्घनं प्राणिहिंसनं चेत्यपराधद्वयं गुरुडस्य नाभूत् ततः सकाशादतितेजस्वित्वादिति ज्ञेयम् ॥ ९ ॥

तत्र तृतीयमपराधं तस्याह-मीनानिति। कृपयेति मीनान् प्रति यथा तस्य कृपा तथा गरुडं प्रति कोपश्च गम्यः तत्रत्यानां जीवानां मात्राणामेव क्षेमं कर्तुमिति ततश्च कालियागमनेन तेषां सर्वेषां मक्षेममेवाभूदिति महदपराधिनः कृपापि विपरीतफलैव भवेदिति द्योतितम् ॥ १० ॥

अत्र यदीत्यनेन पक्षान्तरमपि लभ्यते तनश्चायमर्थः ह्रदे प्रविश्य यदि मत्स्यान् खादति तदा सद्यस्तत्क्षणमेव प्राणैः विंयुज्येत यदि च मत्स्यान्न खादति तदा त्वसद्यः किञ्चिद्विलम्बेन एवंति ह्रदप्रवेशमात्र एव शापः मत्स्यखादने तु शापातिशयः इत्यभिशापं गरुडः सर्वज्ञत्वादेव ज्ञात्वा नागतः कालियस्यापि तत्रत्यसर्पमुखाज्ज्ञात्वैवागतः सौभरेस्तु गरुडाय कुप्यतो यदि कृपा अजनिष्ट तस्य मीनस्यैव सङ्गादुत्थिता दुर्वासनैवापराधस्य यतश्च विलुप्तब्रह्मानन्दः सचिरसञ्चिततपस्सम्पद्भ्योऽभ्रंशत्

कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्ध[1]वाससम् ।
महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ॥ १३ ॥
उपलभ्योत्थिताः सर्वे लब्धप्राणा[2] इवासवः ।
प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे ॥ १४ ॥
यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव ! ।
कृष्णं समेत्य लब्धेहा[3] आसँल्लब्धमनोरथाः ॥ १५ ॥
रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित् ।
* ( प्रेम्णा तमङ्कमारोप्य पुनः पुनरुदैक्षत )
[4]नगा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मृतेन कामिनीवृन्दं क्रीत्वा तत्रैव नरकतुल्ये विषयानन्दे निमज्जदपराधभोगान्ते श्रीवृन्दावनयमुनाश्रयमाहात्म्येनैव पश्चान्निस्तारेति नवमे कथा ॥ ११—१२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नद्गम्यत्वे कारणमाह—तत्रेत्यादिना ॥ ९—११ ॥

तन्मुनिशापं परं केवलं कालियो वेद नान्यो लेलिहः सर्पः ॥ १२ ॥

भाषा टीका ।

कालिन्दी के वा ह्रद [दह] में एक समें अपनो इच्छित भोजन जो जलचर (मच्छ) ताकूं सौभरि ऋषिके निवारण करिबे पै हूं भूखे रहे तासों हरण करके लेगये ॥ ९ ॥

जब मछरीनकों पति एक बडो मच्छ मरिगयो तब और मछरीन कूं दुःखित देखिके सौभरि ऋषि कृपा करिके वा स्थलकी कुशलता के ताई बोलत भये ॥ १० ॥

सौभरि बोले, कि—आजसों पीछे या जगे गरुड आयकें जो मछरीनकूं खाय तौ तुरन्त गरुड प्राणन के वियोगकों प्राप्त होजाय, या बातकूं मैं सत्य कहूं हूं [या प्रकार शाप देवेसूं प्राणिमात्रकी रक्षामें तात्पर्य है] ॥ ११ ॥

हे राजन् ! या शापकूं केवल काली मात्र जानतो रह्यो और दूसरो कोई सर्प नहीं, ताई सों गरुडतें डरपतो भयो या दह में वसतो रह्यो सो श्रीकृष्ण ने निकासि दियो ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जाम्बूनदं सुवर्णं तेनालङ्कृतम् ॥ १३ ॥

असवः इन्द्रियाणि प्रमोदनिभृतात्मान आनन्दपूर्णमनसः ॥ १४ ॥
लब्धेहाः लब्धचेष्टाः ॥ १५ ॥

नगा वृक्षाः अपि पूर्वं शुष्काः सन्तः सद्य एव विरूढा इत्यर्थः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमुपोद्घातं समाप्य प्रस्तुतमाह—कृष्णमित्यादिना । तत्र कृष्णमिति युग्मकम् । जाम्बूनदं दिव्यस्वर्णं भक्त्या नागवृन्दपरिवृतत्वात् तस्माद्ध्रदात् विशेषेणैव निष्क्रान्तं सन्तमुपलभ्य दृष्ट्वा तावदपि शङ्कया स्तब्धत्वात् निष्क्रमणमपि गतिलाघवेन जलोपर्य्युपरि क्रान्त्यैवेति ज्ञेयम् ॥ १३ ॥

सर्वे वक्ष्यमाणाः अचेतनानामिव स्तब्धानामपि तेषामेकदोत्थाने हेतुमाह—लब्धप्राणा इति । तत्र मेलने क्रमः प्रमोदेति सार्द्धेन गोपाः सखायः पूर्वत एव तीराग्रमवलम्ब्य स्थितत्वात् अभिरेभिरे परिरेभिरे ॥ १४ ॥

ततः श्रीयशोदादयः स्नेहक्रमेणाग्रतोऽग्र आगत्य तत्रैव स्थितत्वात् तत्र श्रीयशोदा व्रजात् प्रस्थितानां सर्वेषामग्रगामिनी तस्या एवासमोर्द्ध्ववात्सल्यात् ततः श्रीरोहिणी तया सख्येन सवासनत्वेन च तत्सहयोगात् ततः श्रीनन्दस्तदनुगवात्सल्यात् गोप्यो गोपाश्च क्रमेण दम्पत्योर्निकटत्वा ज्ञेयाः केषाञ्चित् सवासनत्वात् केषाञ्चिदनुयायित्वाच्च समेत्येति पूर्ववत् तावत् स्तब्धीभूय केवलं दृष्ट्वा एवासन् पश्चात् सम्भ्रमणोत्थितमात्राः तत धावितुं शक्ताः समेत्य तु आलिङ्गनादिचेष्टावन्तो बभूवुरित्यर्थः । किंबहुनेत्याह—शुष्का इति । निकटे तावद्वृक्षोत्पत्तिरेव नास्ति दूरतस्तु ये वायुगत्या शुष्काः तदानीमेव तादृशश्रीकृष्णालीलया वा दुःशकुनान्तरवत् शुष्कास्तेऽपि अङ्कुरादिविकासचेष्टावन्तो बभूवुरित्यर्थः लब्धमनोरथा इति पाठस्तु स्वारस्यसम्मतः ॥ १५ ॥

अथ तादृशदुःखितव्रजजनसङ्गमाय दृत्तानसरेण श्रीरामेण

(१) गन्धमाल्यमण्डनम् इति विज० पा० । (२) इव प्रजा इति विज० सुधां० पा० । (३) आसञ्छुष्का नगा अपि इति वैष्णवतोषिणी । (४) नरानार्या इति विज० पा० ।
* इदमर्द्धमधिकपाठः वीर० वैष्णव० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सङ्गमं वर्णयति—रामश्चेति । चकारात्पूर्वं व्रजवासिशोकेन रामश्चान्तः शुष्कः पश्चात् लब्धेहस्तमालिङ्ग्य जहासेत्यर्थः अच्युतं न कथञ्चिदपि माहात्म्यात् च्युतं कुतो जहास तदाह अस्य अच्युतस्य अनुभावम् इच्छामात्रेण सर्वसामर्थ्यं वेत्तीति तथा सः अतो निजव्रजदुःखमयमिदं भद्रं कृतमित्युपालम्भन-पूर्वकमेवेत्यर्थः । नगाः अन्येपि सर्वे गावो वृषा वत्सतरा इति पाठः क्वचित् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभिरेभिरे परिरेभिरे ॥ १४—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तत उपरितनवृत्तान्तमाह--कृष्णमिति यावदध्यायसमाप्ति । दिव्यानि स्रग्गन्धवासांसि नागपत्नीभिः समर्पितानि यस्य तं महतामनर्घाणां मणीनां गणैराकीर्णं सर्वतः समलङ्कृतं जाम्बूनदेन सुवर्णेनालङ्कृतं ह्रदाद्विनिर्गच्छन्तं कृष्णमुपलभ्यालक्ष्य लब्धप्राणा असव इन्द्रियाणीव सर्वे गोपादयः उत्थितास्ततः प्रमोदेन निभृताः पूर्णा आत्मानो देहा मनांसि येषां तथाभूताः गोपाः प्रीत्या कृष्णमभिरेभिरे आलिङ्गितवन्तः ॥ १३—१४ ॥

यशोदादयो गोप्यो नन्दादयो गोपाश्च हे कौरव ! कृष्णम् समेत्य सङ्गम्य लब्धचेष्टा लब्धमनोरथाश्च बभूवुः ॥ १५ ॥

रामस्तु कृष्णमालिङ्ग्याऽस्य कृष्णस्य प्रभावं जानन् केवलं जहास हसितवांस्ततस्तं कृष्णमङ्कमारोप्य पुनःपुनः प्रीत्योदैक्षत समवैक्षत नन्दादयः परमां मुदं लेभिरे तत्र नगा वृक्षा अपि पूर्वं शुष्काः सन्तः पुनः फलपुष्पादिभिर्विरूढा इत्यर्थः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपलभ्य दृष्ट्वा प्रमोदनिभृतात्मानः आनन्दपूर्णात्मानः अभिरेभिरे आलिङ्गनञ्चक्रुः अभीत्युपसर्गात् मुख्यामुख्यभेदो द्रष्टव्यः ॥ १४ ॥

लब्धेहाः लब्धचेष्टाः पूर्वं शवप्राया इत्यर्थः ॥ १५—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विशेषेणैव निष्क्रान्तम् ॥ १३ ॥

उपलभ्य दृष्ट्वा तावदपि शङ्कया स्तब्धत्वात् पूर्वं ईक्षमाणाः सर्वे गोपाः सखायोऽपरे नानाविधाः ॥ १४ ॥

समेत्यैवालिङ्गने चेष्टावन्तो बभूवुरित्यर्थः । तदानीं व्रजवासि-सर्वमेतामाप्त्वा नगा अपि पूर्वं शुष्काः पश्चाल्लब्धेहाः अङ्कुरोद्ग-मनादिचेष्टावन्त आसन् तांश्च शुष्कानामतिप्राचीनत्वाद्बहा-न्यपि तदा नासन्निति जहासेत्यत्र हेतुरच्युतेति अतो निजव्रजदुःख-मयमिदं भद्रं कृतमित्युपालम्भनपूर्वकमेवेत्यर्थः । गवादिषु तत्रैव

विद्यमानेष्वपि क्षुधादिकर्षितत्वं तेषां विषसम्पर्कशङ्कया श्रीः कृष्णायानुप्रयोजनात् ॥ १५—१६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रासङ्गिकं परिहृत्य प्रस्तुतमाह—कृष्णं ह्रदादिति । निःशे-षेण निष्क्रान्तं भगवन्तं दृष्ट्वा उत्थिताः सर्वेऽभिरेभिरे [illegible] द्वयोः सम्बन्धः ह्रदात् ह्रदमध्यात् विशेषेण निष्क्रमणमकस्मा-दाविर्भावः पूर्वस्मात् वैलक्षण्यार्थं रूपं वर्णयति, दिव्यानि स्रग्गन्धवासांसि यस्येति अनेन सामान्यतः पूजा निरूपिता महामणिगणैराकीर्णमिति विशेषपूजा जाम्बूनदेन च परिष्कृतं अनेन लोकत्रयपदार्थैः पूजित उक्तः तत्र दिव्यानि स्वर्गाणि मणयः पातालस्थाः सुवर्णं भूमिष्ठम् ॥ १३ ॥

अकस्मादुपलभ्य भगवत्सन्निधिमात्रेणैव लब्धप्राणा जाताः प्रजा बालका इवोत्थिताः यथा बालका उत्तिष्ठन्ति एवं लब्धप्राणाः एते महान्तोऽप्युत्थिताः परस्परज्ञानरहिताः प्रज्ञा लौकिका वा यथा प्राणोऽध्यागतेपूत्तिष्ठन्ति एवमेते कृष्णे समा-गते उत्थिताः ततोऽपि भगवत्सान्निध्ये प्रमोदेन निभृतः पूर्णः आत्मा अन्तःकरणं येषाम् आदौ पुरुषास्तरुणाः पुरुषोत्तमं प्रीत्या आलिङ्गितवन्तः ॥ १४ ॥

ततो यशोदा रोहिणी स्त्रियो ह्यत्युत्सुकाः ततो नन्दः गोपि-स्पर्शभयात् ततो गोप्यः नन्दभयात् ततो गावोऽपि हे कौरवेति सम्बोधनं विश्वासार्थं सर्व एव कृष्णं समेत्य लब्धचेष्टा जाताः लब्धो मनोरथो यैः तादृशा अप्यासन् क्रियाज्ञानयोः सम्बन्धः उक्तः ॥ १५ ॥

रामश्चाप्येवंविधो जातः विशेषमप्याह—अच्युतमालिङ्ग्य जहा-सेति । पूर्वं भगवदंशो भगवत्येव स्थितः तदा सर्वसमावेशं कृतवान् ततो भगवत्यालिङ्गिते तदीयोऽत्र समागत इति पश्चात् जहास तुल्यता सम्पादिता परीक्षासम्पत्कृतेति कालियनिग्र-हणं तु नाश्चर्याय यतोऽयमस्यानुभावविद् विश्वमेवान्यथा दर्शनं करोति तस्य किमिदमाश्चर्यमिति दुःखसुखयोर्निश्चयार्थं [illegible] येषामर्थमाह—नरा नार्य इति । चतुर्विधा अप्येते परमानन्दं सुखमापुः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपोद्घातं समाप्य प्रस्तुतमाह—कृष्णमिति द्वाभ्याम् । विशे-षेण निष्क्रान्तमिति जलोपर्युपर्येव चरणाभ्यामेव सन्तरण-लाघवेनैव कालियादिदं कमपि सर्पमलक्षितमारुह्यैवेति [illegible] अन्यथाऽङ्गानां जलाप्लुतत्वे दिव्यस्रग्गन्धवाससामिति विशेषणं साधु नोपपद्यते । १३ ॥

असव इन्द्रियाणि प्रमोदनिभृतात्मानः आनन्दपूर्णमनसः गोपाः सखायः तेषामेव नारत्वेन प्राथम्यौचित्यात् ॥ १४ ॥

ततो हा पुत्र जीवसीति गद्गदस्वरा गुरुजनलज्जाभयप्रभृति-निरपेक्षा अतिविह्वला श्रीयशोदा तनस्तत्स्पर्शीकृति निविडं प्रेमोत्कट्यं तदभितः प्राप्तासु मध्ये मुख्या रोहिणी ततः

नन्दं विप्राः समागत्य गुरवः सकलत्रकाः ।
ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥ १७ ॥
देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ।
नन्दः प्रीतमना राजन् ! गाः सुवर्णं तदाऽदिशत् ॥ १८ ॥
यशोदाऽपि महाभागा नष्टलब्धप्रजा सती ।
परिष्वज्याङ्कमारोप्य मुमोचाश्रुकलां मुहुः ॥ १९ ॥
*( तत्रास्तं गते भानौ कृष्णा वासमकल्पयत् ।
सरामः सह गोपालैर्मात्रा पित्रा सगोधनैः )
तां रात्रिं तत्र राजेन्द्र ! क्षुत्तृड्भ्यां श्रमकर्शिताः ।
ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुलकितगाऽभीष्यों विलम्बासहिष्णुः स्त्रीसम्मर्दमध्य एव प्रविश्य नन्दः ततोऽम्बा गोप्यो वत्सला गोपाश्चोपनन्दादयः चकारेणानुरागिणयः पूर्वरागवत्यो गोप्यश्च दूरतो लोचनाञ्जलीभिरेव समेत्य परिष्वङ्गादिभिः सङ्गतीभूय लब्धचेष्टाः लब्धवाञ्छिता मृता इव जीवन्त्यो बभूवुः किं बहुना नगास्तीरे वृक्षाभावाद्दूरे वृन्दावनस्था वृक्षा अपि तत्स्वाधर्म्यप्राप्त्या कृष्णमदृष्ट्वा शोकात् शुष्कास्तं पुनर्दृष्ट्वा लब्धेहा अङ्कुरपल्लवपुष्पाद्युद्गमवन्तः ॥ १५ ॥

जहासेति धन्योऽस्यैवं कर्तुं युज्यतेत्युक्त्वा तत्प्रभावज्ञोऽपि प्रेम्णा पुनः पुनरुत्कर्षैर्व्याप्ततोऽति कालियहृतकेन कचित् व्रतन्तु नाभूरिति न्यभालयत् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जाम्बूनदपरिष्कृतं सुवर्णालङ्कृतम् ॥ १३ ॥

असव इन्द्रियाणि यथा लब्धप्राणाः उत्तिष्ठन्ति तथोत्थिताः प्रमोदेन निभृतः पूर्णः आत्मा मनो येषां ते ॥ १४ ॥

लब्धेहाः प्राप्तचेष्टाः आसन् नगाः वृक्षा अपि लब्धचेष्टा आसन् ॥ १५—१६ ॥

---

### भाषा टीका ।

हाँ श्रीकृष्ण जब वा कालीदह में सों बाहर निकसे, तब उनको सबन ने दिव्य माला चन्दन वस्त्र धारण किये और बड़े२ मणि गणों से जड़ाऊ सुवर्ण के गहनेन कूं पहिरे देखे ॥ १३ ॥

तब कृष्ण कूं ऐसे देखिके सब व्रजवासी उठि बैठे, जैसे प्राणन कूं प्राप्त होय के इन्द्रिये चैतन्य को प्राप्त होय जाय हैं, आनन्द में भरे भये व्रजवासी गोप लोग बड़े प्रेमसों कृष्ण कूं छातीसों लगाय के मिलत भये ॥ १४ ॥

हे कुरुवंशीन में श्रेष्ठ हे राजन् ! श्रीयशोदाजी रोहिणीजी नन्दबाबा गोपी और गोप सगरे कृष्ण कूं देखिके चेष्टा जिनकी बगद आई मनोरथ जिनके पूरे भये ऐसे होत भये ॥ १५ ॥

और श्रीबलदेवजी भी कृष्ण सों भेट करिके हंसे, क्योंकि— कृष्ण के प्रभाव के जाननवारे हैं, ता पीछें वृक्ष गायें बैल और बछरा परम आनन्द कूं प्राप्त होत भये ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ते विप्राः ऊचुः ॥ १७ ॥ १८ ॥
नष्टलब्धप्रजा नष्टप्राया पुनर्लब्धा प्रजा यया सा ॥ १९ ॥
श्रमेण च कर्शिताः उपकूलतः कूलप्रान्ते ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्रैव विशेषतो ब्राह्मणानां हर्षभरेण वाक्यमाह—नन्दमिति । गुरवः पुरोहिताः अन्ये च विप्राः समागत्येति प्रागेव तेन सह व्रजात् निर्गताः अधुना तन्निकटमागत्येत्यर्थः । ते परम वैष्णवत्वादिना प्रसिद्धाः दिष्ट्या भद्रम् अहो तवास्माकं च भाग्यमित्यर्थः । अतोऽतिहृष्टो भूत्वा सुमहोत्सवं विधेहीति भावः ॥ १७—१८ ॥

महाप्रेम्णा पुनः श्रीयशोदया मिलितमित्याह । यशोदेति त्वर्थे चकारः श्रीनन्दतोऽपि विशेषात् महाभागत्वमाह—नष्टेति । यतः सतीति तस्याः कथमन्यथा स्यात् इति भावविशेषणा-

* इत्यधिकः पठ्यते वीरराघ० ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भिप्रेतम् यद्वा, स्वभावतः श्रीकृष्णस्नेहादिना सर्वोत्कृष्टा यद्वा तादृशीभवन्ती कथां धारां मुहुरिति कदाचित् पूर्ववृत्तस्मृत्या दुःखोदयेन कदाचिच्च प्राप्तानन्देनाश्रुधारामोचनस्य विरामेऽपि उष्णशीततामेदेन पौनःपुन्यात् ॥ १९ ॥

कथाक्रमेणान्यामप्यद्भुतलीलामाह-तामित्यादिना । रात्रिमिति श्रीकृष्णस्य कालियदमनादिना तेन सह व्रजजनानां प्रत्येक-मेलनेन च दिनावसानतः तां तद्दिनसम्बन्धिनीं तादृशपरमा-नन्दमयीं वा यत्र कृष्णेन सह सङ्गमस्तस्मिन् प्रदेश एवोषुः तत्रैव हेतुः क्षुत्तृड्भ्यां रोदनादिश्रमेण च यद्वा क्षुत्तृड्भ्यां यः श्रमस्तेन कृशीकृताः दौर्बल्यं प्रापिता इत्यर्थः । तत्र धेन्वादिषु तत्रैव विद्यमानास्वपि क्षुधादिकर्शितत्वं तासां विषसम्पर्क-शङ्कया श्रीकृष्णायानुपयोजनात् ततः स्वयमप्यनुपयोगात् कालिन्द्या उपकूलतः विषजलादिभयेन तत्कूलस्य जलान्तिकं परित्यज्येत्यर्थः । अन्यथा दावाग्निना सर्वत आवरणासिद्धेः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सभार्या विप्रा नन्दं समेत्य कालियेन ग्रस्तस्तवात्मजः मुक्तः तद्ग्रासविमुक्तः किल दिष्ट्या अयं महानानन्द इत्यूचुः ॥ १७-१८ ॥

नष्टप्राया पुनर्लब्धा प्रजा पुत्रो यया सा सती यशोदा सुतं परिष्वज्याङ्कमारोप्य च बहूनानन्दाश्रुकणान् मुमोच ॥ १९ ॥

ततस्तां रात्रिं तत्र यमुनायास्तीर एव व्रजौकसो गावश्च ऊषुरुषितवन्तः, कथम्भूताः ? क्षुत्तृड्भ्यां श्रमेण च कर्शिताः ॥२०॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नष्टा च लब्धा च प्रजा यस्याः सा तथा अश्रुकणान् बाष्पबिन्दून् ॥ १९ ॥

क्षुत्तृड्भ्यामुत्पन्नश्रमेण कर्शिताः अभिभवं प्राप्ताः उपकूलतः कूलसमीपे ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उपकूलतः किञ्चित् कूलं परित्यज्येत्यर्थः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेतावत्कालं ब्राह्मणैः कथमेते नोपदिष्टाः इदानीं ब्राह्मणाः कथं वा सान्त्वनं कृतवन्त इत्याशङ्क्याह-नन्दमिति । विप्रास्त्वत्यन्तमेव महापुरुषाः केवलं कर्मजडा वेदयशुग्न्यो जीवनार्थं स्थिताः तत्सम्बन्धिनोऽपि तथा अतः सकलत्रा एते समागत्य नन्दमूचुः कालियेन ग्रस्तो भगवान् तवात्मजो दिष्ट्याऽस्मदादिभाग्यैर्मुक्त एतावतोऽस्मयो देय इति सूचितं भवति ॥ १७ ॥

अतो द्विजातिभ्यो दानं देहीति कृष्णागमननिमित्तं ततो नन्दो गाः सुवर्णं च दत्तवान् ॥ १८ ॥

यशोदाया विशेषमाह—यशोदा च तैरुक्ता महाभागेति तेभ्यो बहुदिविस्ततवर्ती विशेषकारणाद्वा तस्याः भाग्यमभि-नन्दति, नष्टा अदृष्टा पुनर्लब्धा प्राप्ता प्रजा यया तथात्वे हेतुर्धर्मः सतीति अतो भाग्योदयं ज्ञाने परिष्वज्य पश्चाद्कु-मारोप्य श्रुकलां मुमोच एतावताऽन्तरागज्ञाना ॥ १९ ॥

तस्मिन् दिवसे न केनापि भुक्तं गावः पूर्वं शुष्कस्तना एत-धुना तु स्तन्यसहिता अपि दहासाधनाभावात्त दुग्धदा जाताः भगवदागमनप्रमोदेनैव च निवृत्तास्तत्रैव स्थिता इत्याह-तां रात्रिमिति । श्रम आगमनश्रमः चिन्ताश्रमो वा मध्ये वा मरणादि श्रमस्तेनापि कर्शिताः क्षुत्तृड्भ्यां सहिताः श्रमस्य कार्यं कृत्वा गतत्वात् कार्यमेव निरूपितं क्षुत्तृषोः स्वरूपं च व्रजौकस इत्यव्युत्पन्नाः कालिन्द्याः कूलसमीपे कियद्दूरे कूलं विहाय वनमध्ये शयनं कृतवन्तः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी ।

गुरवो भार्गुर्यादिपुरोहिताः ॥ १७—१८ ॥

आदौ नष्टप्राया पश्चाल्लब्धा प्रजा यया सा अङ्कमारोप्य परिष्वज्येति पूर्वं बहुशोकापत्त्यावशात् तादृशपरिष्वङ्गालाभादिति भावः ॥ १९ ॥

अतःपरमद्य रात्रौ वयं कृष्णं निर्निमेषं पश्यन्त एव स्यामः भाग्याद्गतोऽपि कालियः पुनर्यदि वैरं सिषाधयिषु-रायाति तदा मिलितीभूय लकुटैर्वारयामः । नतु दर्शनव्यवधायकं स्वस्वगृहं याम इति सर्वेषां मनोरथमालक्ष्य नन्दाद्या व्रजौकसः उपकूलतः विषजलादिभयात् कूलसमीपं परित्यज्य ऊषुः अन्यथा दावाग्निना सर्वत आवरणासिद्धेः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते विप्रा ऊचुः ॥ १७—१८ ॥

नष्टप्राया पुनर्लब्धा प्रजा यया सा ॥ १९ ॥

क्षुत्तृड्भ्यां श्रमेण च कर्शिताः कालिन्द्याः उपकूलतः कूलप्रान्ते ॥ २० ॥

---

### भाषा टीका ।

वाचिरियां शांडिल्यसों आदि लेके सब पुरोहित और ब्राह्मण अपनी २ स्त्रीन सहित आयके नन्दराय सों बोलत भये, कि-आज बड़े भागन सों काली को डस्यो तुमारो पुत्र छूटि आयो बडी बधाई है ॥ १७ ॥

तासों कृष्ण के छूटिबे के निमित्त को ब्राह्मणन कूं दान देवो ? हे राजन् ! इतनी सुनके नन्दराय ब्राह्मण कूं गायें और सुवर्ण देत भये ॥ १८ ॥

नष्ट भयो पुत्र जाको फिर प्राप्त भयो देसी बड़भागिनी यशोदा सती कृष्ण कूं छाती सों लगायके गोदमें लै रिकें वारम्वार नेत्रनतें आंसून की वर्षा करत भई ॥ १९ ॥

(एतस्मिन्नेव काले तु व्रजे कौरवसत्तम!)

'[1]तदा शुचिवनोद्भूतो दावाग्निः सर्वतो व्रजम्।
सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥ २१ ॥
तत उत्थाय सम्भ्रान्ता दह्यमाना व्रजौकसः।
कृष्णं ययुस्ते शरणं मायामनुजमीश्वरम् ॥ २२ ॥
कृष्णकृष्ण! महाभाग! हे रामामितविक्रम!।
एष घोरतमो वह्निस्तावकान् ग्रसते हि नः ॥ २३ ॥
सुदुस्तरान्नः स्वान् पाहि कालाग्नेः सुहृदः प्रभो!।
न शक्नुमस्त्वच्चरणं सन्त्यक्तुमकुतोऽभयम् ॥ २४ ॥
इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः।
तमग्निमपिबत्तीव्रमनन्तोऽनन्तशक्तिधृक् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे वृन्दावनक्रीडायां दावाग्निमोचनं नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

भाषा टीका।

हे राजेन्द्र! वा रात कूं तौ सग व्रजवासी और गौंवें भूखे प्यासे श्रमसों थके भये वाई ठौर कालिन्दीके किनारे पै निवास करत भये ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

कालाग्नेर्मृत्युरूपादग्नेः न मृत्योर्बिभीमः किन्तु त्वच्चरणवियोगाद्बिभ्यामः न शक्नुम इति ॥ २४ ॥ २५ ॥

विमोहनाद्विदग्धेन ततः स्वं शरणागतान्।
गोपानपाद्दनन्तो ऽसावनन्तवनवह्नितः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदा तद्रात्र्यामेव शुचिर्ग्रीष्मसमयः तत्सम्बन्धि वनं शुष्कारण्यमित्यर्थः। तत्र उद्भूतः अयं च दावाग्निरूपः कालियसखः कंसानुचरः कश्चिदसुर इति केचिदाहुः ॥ २१ ॥

सम्भ्रान्ताः सद्यस्तत्प्रतिकाराद्यज्ञानात् यद्वा निस्सारणार्थं सम्भ्रमेण कृतपरिभ्रमणा इत्यर्थः। ततो दह्यमानाः दग्धुमुपक्रम्यमाणाः मायया कापट्येनैव मनुजत्वेन प्राकृतमनुष्यत्वेन स्फुरन्तं वस्तुतस्तु नराकृतिपरब्रह्मत्वेन तद्रूपेणैवेश्वरं किंवा माया कृपा तयुक्तं मनुजं द्विभुजत्वादिसाम्येन। यद्वा, माया लक्ष्म्या ईश्वरं स्वामिनमपि मनुजं मानुषलीलम् इति कारुण्यातिशयः सूचितः तत्रापि कृष्णं तत्र व्रजजनप्राणनाथम् अतः शरणं ययुः ॥ २२ ॥

तत्प्रकारमेवाह—कृष्णेति। वीप्सा सम्भ्रमेण स्नेहभरस्वभावेन वा महान् भागो भाग्यमस्माकमस्मात्तानां यस्मादिति स्वस्मात्त्वादस्माकं दुःखं नोपयुक्तमिति भावः। अमितः अनन्तो विक्रमः शौर्यं यस्येति बलदेवं प्रति सम्बोधनं तव वीर्येण दावाग्निरपि निर्वातीति भावः एवं तदापि तेषां महाप्रभावत्वज्ञानमेव जातं नत्वैश्वर्यज्ञानमिति भावः। एष इति प्रत्यक्षत्वं शीघ्रत्वं वा बोधयति घोरतमः अप्रतिकार्यत्वात् युष्मदग्निकप्रासत्वाच्च ग्रसते निःशेषेण संहरतीत्यर्थः। तावकानिति कृपाजननार्थं प्रसनायोग्यत्वबोधनार्थं वा तव "कममकावेकवचनम्" इति तद्धितनिमित्तकादादेशस्त्राद्यत्रैकत्वेन सम्बन्धः प्रतिपाद्यते हि निश्चयं तत्खलु द्वयोरभेदप्रतिपादनार्थमिति ज्ञेयम् ॥ २३ ॥

स्वान् ज्ञातीन् आत्मीयान् वा सुशोभनं हृत् येषां तान् सद्भावेन तदेकनिष्ठानित्यर्थः। प्रभो हे सर्वं कर्तुं समर्थ! न कुतोऽपि भयं यस्मात्तम् अतो निजचरणापरित्यागभयमस्माकमाशु विनाशयेति भावः। अतः सम्यक् क्षणमपि वियुक्ततया त्यक्तुं न शक्नुम इति ॥ २४ ॥

इत्थं स्वप्रेमैकमूलकानेककाकुत्त्यादिप्रकारकं निरीक्ष्य

---

(१) तदाऽशु विपिनोद्भूतः इति वीर० पा०।

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

अनुभूय तं तादृशं अतस्तीव्रं दुस्सहं तथाभूतमपि अपिबत् कारुण्यमयप्रेमावेशेनेति भावः। ननु, भवतु तदानैशस्तेन कथं तत्पानं स्यादित्याशङ्क्य गूढमपि तदैश्वर्यं स्वसमये स्वयमेव व्यक्तीभवतीत्यभिप्रेत्य सिद्धान्तयति–जगतामपीश्वरः सर्वेषु तत्तच्छक्तिप्रद इत्यर्थः। तस्माद्दावाग्नेरपि शक्तेः को नाम विस्मय इति भावः। ननु, गोपबालकरूपः समन्तादुत्थमग्निं कथमपिबत् तत्राह, अनन्तः तादृशस्यैव विग्रहस्य विभुत्वेन स्वयमपि समन्तात् प्रकाशमान इत्यर्थः, न च तन्मात्रशक्तित्वमद्याश्चर्यमित्याह अनन्तशक्तिधृगिति अत एव श्रीगोपा अपि निवारयितुं नावसरं लब्धवन्त इत्यर्थः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिण्याम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा रात्रावरण्यप्रभवो दवाग्निर्निशीथे सुप्तं व्रजं व्रजस्य परितः आवृत्य प्रदग्धुमुपक्रान्तवान् ॥ २१ ॥

ततो दवाग्निना दह्यमाना व्रजौकस उत्थाय सम्भ्रान्ताः व्याकुलचित्ताः मायया आत्मीयसङ्कल्पेन मनुजं साक्षादीश्वरं कृष्णं शरणं ययुः रक्षणोपायत्वेनाध्यवसितवन्तः ॥ २२ ॥

शरणवरणप्रकारमेवाह—कृष्णेति द्वाभ्याम्। तावकान् त्वेदक रक्षणोऽस्मानेष वह्निर्ग्रसते ॥ २३ ॥

स्वान् स्वान् सुहृदो नोऽस्मान् सुदुस्तरात् कालाग्नेः प्रलयाग्नितुल्याद्दवाग्नेः पाहि, हे प्रभो! नास्ति कुतोऽपि भयं यस्मात्त्वं तव चरणं सन्त्यक्तुं न शक्नुमः न वयं मृत्योर्बिभीमः अपि तु त्वच्चरणवियोगादिति भावः ॥ २४ ॥

स्वजनानां वैक्लव्यं निरीक्ष्यानन्तशक्तिभृक् हेतुगर्भमिदं तत्वात् जगदीश्वरः कृष्णः शीघ्रं तमग्निमपिबत् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुचिः पवनः तस्य वशेनोद्भूतः शुचिनाम्नो मरुतो वशेन वा अतः परिवेष्टितः निशीथे अर्धरात्रे ॥ २१—२४ ॥

अनन्तशक्तिभृक् अनियतशक्तिभृक् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तदशोऽध्यायः ॥ १७ ॥
( विजयध्वजरीत्या चतुर्दशः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अकुतोभयमिति त्वच्छरणप्राप्तिं विना अन्यत् सर्वमस्माकं भयहेतुरित्यर्थः। अपिबत् कृपावेशेन पानाभिनयेन संहृतवान् तत्र हेतुः जगदीश्वरः अग्न्यादीनां सर्वेषामेव तत्तच्छक्तिप्रवर्त्तकनिवर्त्तकः समन्तादुत्थाग्निपाने युक्तिः ॥ २४ ॥

अनन्तः सर्वत्र प्रकाशमानस्वविग्रहः तादृशशक्त्यावतत्वम् अनन्तशक्तिधृगिति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीय
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा कालियाविष्टो वैत्यो दोषाभिमानी सर्वभक्षणार्थं रिपुः मृत्युश्च एकीभूय वह्निर्भूत्वा गोकुलवासिनां दाहार्थमुद्गत त्वा तदेति। आशु प्रतिक्रियायाः करणार्थं विपिने स्वयमेवाङ्गदारुघर्षणजन्यो वा दावानलशब्दवाच्यो जातः सर्वपदार्थानेकीकृत्य ज्वालनात् सर्वत एव व्रजं सुप्तमावृत्याद्धराग्रस प्रदग्धुमुपक्रान्तवान् पूर्वं हि मे स्नेहे परीक्षिताः न स्थापयन् तद्देहसम्बन्धित्वं दूरीकरिष्यन् माहात्म्यं प्रदर्श अन्यथा लौकिक एव स स्नेहः स्यात् भगवदर्थं च क्लिष्टा एते गतदेहाभिमाना इति च ज्ञापयितुमिवमुच्यते अन्यथा धिकारिण एव स्युः शरीराभिमानस्य गतत्वात् ॥ २१ ॥

अतस्तेषां व्याकुलतां प्रार्थनां चाह–तत उत्थायेति। सम्भ्रान्ता जाताः अतिनिद्रया दिग्देशकालज्ञानरहिता स्वभाव व्रजौकसः कालियेन पूजितं भगवन्तं दृष्ट्वा कृष्णं तं शरणं ययुः ॥ २२ ॥

ननु कृष्णरक्षार्थं यत्नं कृतवन्तः प्रत्युत स्वरक्षार्थमेव प्रार्थितवन्त इत्याह–कृष्णकृष्णेति। भयाद्वीप्सा महाभागेति शरण्यत्वेऽस्माकं शरणागमने च हेतुः साधारणाः सर्वं रामसप्याहुः—हे रामेति। अमितः पराक्रमो यस्येति वने ज्ञातम् एकवचेनाहुः एष घोरतमः शीघ्रभक्षकः तावत् वैष्णवाज्ञोऽस्मान् ग्रसते ग्रासे सन्देहाभावाद्विशब्दः। २३

नातःपरमाशा जीवनस्येति तर्हि किं कर्त्तव्यमित्याकाङ्क्षा माहुः–सुदुस्तरादिति। अयं कालाग्निः प्रलयाग्निरेव अत सुदुस्तरः अतः स्वान् भक्तान् सुहृदः हृदयशुद्धान् सम्बन्धिनो भगवच्छास्त्रं लौकिकं वा विचार्य पाहि यतस्त्वं प्रभुः। भगवद्भक्तानां किं देहरक्षणेन प्रत्युत भगवत्समीपे मरणं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

समीचीनमित्याशङ्क्याहुः—न शक्नुमस्त्वच्चरणमिति । न हि मरणे अस्माकं चिन्ता किन्तु तव चरणवियोगो भविष्यतीति दाहस्तु सोढुं शक्यो न तु चरणवियोगः । ननु, चिरोधि कथमङ्गीक्रियते दाहो वह्निः चरणाद्दूरीकरिष्यत्येवेति तत्राह—अकुतोभयमिति, न विद्यते कुतश्चिद्भयं यस्मात् अनेनेदानीमपि नास्माकं भयं निश्चितं किन्तु शङ्कामात्रेण प्रार्थ्यत इति भावः ॥ २४ ॥

एवं प्रार्थनायां यत्कर्त्तव्यं तत्कृतवानित्याह—इत्थमिति । समागतस्य वह्नेः निर्वापणे एतेषां चान्यत्र नयने तावदपि विलम्बं न सहत इत्यतः कालीयसम्बन्धकृततदुष्टानां दाहार्थं तमग्निमपिबत् "मुखमग्निरिति नाग्नेर्हि तापः, ननु, किमित्येवं कृतवांस्तत्राह—स्वजनवैक्लव्यं निरीक्ष्येति । स हि सर्वनियन्ता दुष्टश्चाग्निः वह्निं स्थापनीयोऽन्यथा कालान्तरेऽप्युपद्रवं कुर्यात् कालकूटभक्षणेन जातगर्वस्य महादेवस्य गर्वनिवारणार्थं दहनधारणाजनितगर्वनिवारणार्थं च तमपिबत् शीघ्रमिति तेषां प्रतीतिजनितभयाभावाय स्वतस्तु भयाभावः अनन्त इति प्रकारविशेषप्रश्ने उत्तरमाह—अनन्तशक्तिधृगिति । अनन्ता एव शक्तीर्बिभर्त्ति यदि वायुरूपो भवेत्तथापि पिबेत् यदि जलरूपो भवेत्तथापि शमयेत् यदि मुखं वा मुद्रयेत्तथापि पिबेत् सर्वमुखत्वात्तत्रैव वा मुखं प्रसारयेत्तथापि पिबेत् इति नात्र किमप्याश्चर्यमित्यर्थः ॥ २५ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
चतुर्दशाध्यायविवरणम् ॥१४॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शुचिर्ग्रीष्मः दावाग्निरयं कंसानुचरः कालियसखः कश्चिदसुर इति केचिदाहुः ॥ २१ ॥

व्रजौकसः व्रजस्थकृषीवलादयः मायया स्वरूपेणैव मनुजं स्वरूपभूतया नित्यशक्त्या मायाख्ययेति श्रुतेः । शरणं ययुरित्यहो अस्माकं प्राणसङ्कटसमये अभिमन्नेव बालके स्वप्रसादोद्भूते नारायण आविश्यास्मान् पालयति "अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति गर्गोक्तेस्तमिमं सम्प्रति श्रीनारायणाविष्टं कृष्णमेव नारायणत्वेन विज्ञाय विपत्तरणार्थं शरणं याम इति विमृश्येति भावः ॥ २२ ॥

हे रामेति तस्यापि तद्दिने सर्वज्ञत्वदर्शनादयमपि कृष्णभ्राता देवाविष्ट इत्यनुमानात् ॥ २३ ॥

कालो मृत्युस्तद्रूपादग्नेः मृत्यौ सति त्वच्चरणेन सह वियोगो भवेद् स तु दुःसह इत्याहुः—न शक्नुम इति ॥ २४ ॥

स्वजनवैक्लव्यं दृष्ट्वेति स्वजनविषयकस्तत्प्रेमैव तेषां रक्षणार्थं तमैश्वर्यमनुसन्धापयामासेति भावः । ननु, परमसुकुमारः कथं तीव्रमग्निमपिबत्तत्राह—अनन्तशक्तिधृक् तस्य संहारिका शक्तिरेवापिबत् तस्मिन् शक्तिमति तत्पानोपचारमात्रमिति भावः ॥ २५ ॥

इति सारार्थदर्शिन्यां हर्षिण्याम् भक्तचेतसाम् ।
दशमेऽस्मिन् सप्तदशः सङ्गतः सङ्गतः सताम् ॥ १७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, श्रमकर्शितानां सुप्तानामुत्थाने को हेतुरत्राह—माया-मिति । मायां योगमायां प्रति यो मनुजस्तं शरणं ययुः योगमायया स्वलीलासौष्ठवसिद्ध्यै भगवता प्रवर्तितया प्रबोधिता इति भावः ॥ २१—२३ ॥

कालाग्नेः मृत्युरूपादग्नेः ॥ २४—२५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

———

भाषा टीका ।

वाई दिन आधीरात के समय ग्रीष्म के सूखे वनतें प्रगट भयो दावानल सोवते भये व्रजवासीन कों घेर-कें जरायवे लग्यो कोई कहें हैं कि येऊ दैत्य रह्यो ॥ २१ ॥

जब सब व्रजवासी जरिबे लगे तब उठि के हरवराय के मनुष्य कृपासों मनुष्यरूप धारण करनवारे ईश्वर जो श्रीकृष्ण तिन के शरण जात भये ॥ २२ ॥

व्रजवासी, बोले, कि–हे कृष्ण हे महाभाग? हे राम अमित पराक्रम वारे? ये बड़ो घोर भयङ्कर अग्नि आपके जो हम हैं तिनकूं ग्रसें लेत है ॥ २३ ॥

हे प्रभो? या अति दुस्तर कालाग्निते अपने सुहृदन की रक्षा करो, निर्भय आपके श्री चरणनकूं छोडिवे कूं हम समर्थ नहीं है ॥ २४ ॥

जगदीश्वर श्रीकृष्ण ऐसे अपने जनन की विकलता कूं देखिके वा तीव्र अग्नि को पान कर गये, क्योंकि- अनन्त शक्ति वारे स्वयं आप अनन्त हैं ॥ २५ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें सत्रहवें अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १७ ॥

———

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

## ॥ अष्टादशोऽध्यायः ॥

—:*:—

### श्रीशुक उवाच ।

अथ कृष्णः परिवृतो ज्ञातिभिर्मुदितात्मभिः ।
अनुगीयमानो न्यविशद्व्रजं गोकुलमण्डितम् ॥ १ ॥
व्रजे विक्रीडतोरेवं गोपालच्छद्म[1]मायया ।
ग्रीष्मो नामर्तुरभवन्नातिप्रेयान् शरीरिणाम् ॥ २ ॥
स च वृन्दावनगुणैर्वसन्त इव लक्षितः ।
यत्रास्ते भगवान् साक्षाद्रामेण सह केशवः ॥ ३ ॥
यत्र निर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ।
शश्वत्तच्छीकरर्जीषद्रुम[2]मण्डलमण्डितम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ।
अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥
कृत्वा नित्यं फणाग्रेषु कालियस्य सकौतुकम् ।
यत्र प्रलम्बतुङ्गाङ्गसमारोहयदराविहा ॥

॥१॥

गोपालच्छद्ममायया गोपालनमेवच्छद्म यस्यां तया मायया ॥ २ ॥ ३ ॥

वसन्तसाम्यमाह—चतुर्भिः । यत्र ग्रीष्मेऽपि निर्झराणां निर्ह्रादेन घोषेण निवृत्तस्वनाश्छन्नध्वनयो झिल्लिकाः कठोरध्वनिसूक्ष्मकीटा यस्मिंस्तथाभूतं वृन्दावनं भवति । किञ्च, शश्वत्तेषां निर्झराणां शीकरैरम्बुकणैर्ऋजीषाः स्निग्धा ये द्रुमास्तेषां मण्डलैर्मण्डितम् ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ ज्ञातिभिरिति तदापि तद्भावमाधुर्यापरित्यागो दर्शितः परितो वृतः स्नेहातिरेकेण सर्वत आवरणात् तया वेष्टितोऽनुगीयमानश्च गोकुलमण्डितमिति प्राक् गवां प्रवेशात् क्रियाविशेषणं वा प्रातरेव गोप्रवेशनन्तदुपद्रवस्फोरकत्वेन दवदग्धत्वेन च तत्प्रदेशं त्यक्त्वा कोशमात्राश्रितस्य व्रजस्य परतश्चारणेच्छयेति ज्ञेयं तादृशकुसमयगततद्याञापरिवर्त्तनेच्छयेति वा विशेषतस्तु कारणं मनुष्या इव पशवोऽपि तं व्रजं प्रविशन्तं त्यक्तुं नाशक्नुवन्निति ॥ १ ॥

गोपालनं छद्मेति या माया तस्य छद्मतावादिनां वचनं तया क्रीडतोः तान् वञ्चयित्वा विहरतोरित्यर्थः । यद्वा, गोपालनमपि छद्मक्रीडान्तराभिप्रायश्चास्ति यत्र तादृशी या माया जनवञ्चनं तया क्रीडतोर्विचित्रक्रीडाविशेषानपि कुर्वतोः नामप्रकारं ग्रीष्म इति ग्रीष्मान्तरमभवदित्यर्थः । नातिप्रेयानित्यतिशय जलकेल्यादिनां किञ्चित् प्रियतापेक्षया ॥ २ ॥

स च सोऽपि तद्गुणानां नित्यवसन्तसान्निध्यकरत्वं किमत्र माहात्म्यमित्यभिप्रेत्याह—यत्रेति । "यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन ! तस्मात्केशवनामा त्वं लोके गेयो भविष्यसि" इति श्रीविष्णुपुराणोक्तरीत्या केशवोऽत्र श्रीकृष्ण एव अत एव भगवान् परिपूर्णसर्वभगः आस्ते नित्यमेव विहरति वर्त्तमानप्रयोगस्तु श्रीशुकस्य स्वस्फूर्त्यनुसारेण ॥ ३ ॥

यत्रेति पद्यं तद्वनमविशदिति पञ्चमेनान्वयात् तथापि पृथगङ्कयिष्यते वैशद्याय यत्र वृन्दावने सामान्येन सर्वत्र स्थानं निर्झरेत्यादिलक्षणं शब्ददित्यादिलक्षणं च यद्वा निर्झरनिर्ह्रादेन वर्षाभ्रमजनकेन निवृत्तस्वना ये झिल्लयः तैः कं सुखं दुःखाभाव इति यावत् तादृशद्रुममण्डलैर्मण्डनं च यत्र भवति भावे निष्ठा अत्र टीकायां तेषामिति षष्ठीनिर्देशान्मण्डलैरित्यन्वयं युज्यते मण्डपैरिति पाठे तु कथञ्चिदेव सा योज्या ॥ ४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

शीकरैः जुष्टं द्रुमपिप्पलमण्डितं शीकरजुष्टद्रुमावृतपिप्पल द्रुममण्डितं पिप्पलमश्वत्थः ॥ ४ ॥

---

(१) रूपिणोः इति विज० । (२) द्रुमपिप्पलमण्डितम । इति शुकपक्षीये, विज० पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ बलदेवकृतं श्रीकृष्णकारितं प्रलम्बासुरवधात्मकं कर्माऽनुवर्णयत्यष्टादशेन तावत्तदुपोद्घातत्वेन काञ्चित्पौगण्डक्रीडामनुपयुक्तं वनं कालञ्चानुवर्णयितुं तावद्वृत्तेन सङ्गमयितुं वृत्तशेषमाह—अथेति। अथ तद्रात्रिव्यतिक्रमानन्तरं मुदिता आत्मानो मनांसि येषां तैर्ज्ञातिभिर्गोपैरुपगीयमानो भगवान् गवां समूहेन मण्डितं व्रजं प्राविशत् ॥ १ ॥

गोपालच्छद्मगोपाल इति व्याजो यतस्तया मायया आत्मसङ्कल्पेन इत्थं व्रजे सम्यक् क्रीडतोः सतोः रामकृष्णयोरिति शेषः ग्रीष्माख्यः ऋतुः प्रवृत्तः अनेनोक्ताः क्रीडाः वासन्तिका इति सूचितम् ॥ २ ॥

स च यद्यपि शरीरिणां नातीव सुखकरः तथापि वृन्दावनस्य गुणैर्वसन्ततुल्यो बभूव, के ते गुणाः? यैर्वसन्त इव लक्षितः ऋतुधर्ममतिक्रम्यापि कुतस्तस्य ते गुणाः इत्यत्राह—यत्रेति। यत्र साक्षाद्भगवान् केशवः रामेण सहाऽऽस्ते भगवदावासप्रभावेन गुणव्यत्यय इति भावः। वृन्दावने भगवानवसत्तस्य गुणैरित्यन्वयः ॥ ३ ॥

ग्रीष्मस्य वसन्ततुल्यतां ख्यापयितुं वृन्दावनगुणाननुवर्णयति—यत्रेति। यत्र शब्दानां वृन्दावनसहचरिते ग्रीष्मर्त्तावित्यर्थः। निर्झराणां घोषेण निवृत्तस्वनाः छन्नध्वनयः झिल्लिकाः कठोरध्वनयः सूक्ष्मकीटविशेषाः यस्मिंस्तथाभूतं वृन्दावनमभवदित्यर्थः। किञ्च, शश्वत् सदा तेषां निर्झराणां शीकरैरम्बुकणैः जुष्टाः स्निग्धाः ये द्रुमास्तेषां मण्डलैर्मण्डितम् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

॥ १ ॥

हरेर्भूभारहरणस्य यदन्तरङ्गं कर्त्तुमवतीर्णो शेषेण तद्वक्तुमुपक्रमते—व्रज इत्यादिना। गोपालच्छद्मरूपिणोः गोपालाविति कपटशब्दिनोः "रूपं शब्दे पशौ ग्रन्थे श्लोके वृत्तौ हितादिषु। सौन्दर्ये च स्वभावे च" इति यादवः। नातिप्रेयान्नातिप्रियतरः घर्महेतुत्वात् ॥ २—३ ॥

वसन्ततुल्यत्वे निमित्तमाह—यत्रेति। यत्र वृन्दावने निर्झरस्य निर्ह्रादेन शब्देन निवृत्तस्वनाः प्रतिरुद्धस्वराः झिल्लिकाः कीटविशेषाः यस्मिन् तत्तथा तस्य निर्झरस्य शीकरैः वायुशीर्णवारिबिन्दुभिः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ प्रातर्गोकुलेन गोसमूहेन मण्डितं यथा स्यात् ॥ १ ॥

तद्दिने तत्प्रदेशस्य दाहात् व्रजात् परतश्चारणार्थं गोपानं करोति या गाथा तस्य छद्मनावादीनां वञ्चनं तया क्रीडतोः तान् वञ्चयित्वा विहरतोरित्यर्थः। तद्गुणानां नित्यवसन्तमाधिक्यकरमाहात्म्यमित्याभिप्रेत्याह—यत्रास्त इति। नित्यमेव विहरति ॥ २ ॥ ३ ॥

यत्र वृन्दावने तद्वनमविशदिति पञ्चभिरन्वयः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

उक्तः पञ्चदशाध्याये प्रलम्बस्य वधो महान्।
आधेधि चरितं वाच्यं बलभद्रकृतं ततः॥
व्रजं गतस्य क्रीडा च सर्वथा वनगोष्ठयोः।
अन्तःकरणदोषश्च महानत्र निवर्त्यते॥

एवं पूर्वाध्यायान्ते दवाग्नेर्मोचिता इत्युक्तं ततः स्वस्थानां कृत्यमाह—अथेति। भिन्नप्रक्रमेण प्रातःकाले जाते सर्वैः सह भगवान् क्रीडार्थमेवाविर्भूतः सर्वैरेव बन्धुभिश्च वेष्टितः सन्तुष्टैर्गोपैरुपगीयमानश्च गोकुलेन मण्डितं व्रजमाविशत् तस्मिन् दिवसे गावोऽपि गोकुल एव समानीताः न तु काञ्चिच्चारणार्थं गतः एतेन पूर्वं गाः स्वस्थानस्थिताः कारयित्वा पश्चात्स्वयं प्रविष्ट इति ज्ञायते ॥ १ ॥

एवमेकेन प्रत्यापत्तिरुक्ता: अन्यथा दोषाभावे दोषाणां नियतधर्मत्वात् भस्मपि गच्छेत् अयं सर्वोऽपि दोषः कालकृत इति ज्ञापयितुं ग्रीष्मोपद्रवं वर्णयति—भूमिगुणेन च स्वसान्निध्यकृतेन तद्दोषपरिहार इति कालकृतोऽन्तःकरणदोषः स्वसंनिधिसहितपदार्थैरनभिवृत्तिर्भविष्यतीति-सूचयति व्रजे क्रीडतोरेवमिति। व्रजे गोपादीनां निवेशनस्थाने प्रसिद्धेऽपि क्रीडतोः सतोः ग्रीष्मो नाम ऋतुरभवदिति सम्बन्धः। ननु, भगवति विद्यमाने कथमनभिप्रेतो ग्रीष्मस्तत्रागत इत्यत आह—गोपालेति। गोपाल इति छद्म कपटभूतं रूपं ययोः अन्यतरस्यानेऽपि नागच्छेदिति द्विवचनं छद्मरूपमनयोः वर्तत इति छद्मरूपिणौ भगवतो गुप्तत्वात् ग्रीष्मप्रवृत्तिः ग्रीष्मस्य दुष्टत्वमाह नातिप्रेयान् शरीरिणामिति शरीरमात्रपरिग्रहवतां नातिप्रेयान् केषाञ्चिच्छीतभीतानां प्रिय इत्यतिपदम् ॥ २ ॥

तर्हि तन्निवृत्यर्थं भगवानाविर्भावं कुर्यादित्याशङ्क्य तस्य दोषस्यान्यथैव निवृत्तिमाह—स चेति। चकारादन्येऽपि दोषाः वातादयः वृन्दावनस्य ये गुणा वक्ष्यमाणास्तैः कृत्वा वसन्त इव तत्रस्थैर्लक्षितो ज्ञातः वसन्ते शीतोष्णयोः समता शीतादिषु शीताधिक्यं ग्रीष्मादिषु तापाधिक्यं च सरसो देशः शीतजनकः सन्तापश्च ग्रीष्मकाले शीतजनको देशः समतामापादयति अतो वसन्तत्वं स्वाभाविका एव वृन्दावनगुणा आधिभौतिकवसन्तत्वं सम्पादयन्ति रामसहिता आध्यात्मिकवसन्तत्वं भगवत्सहिता आधिदैविकवसन्तत्वमिति अतः सर्वथैव वसन्तत्वं वृत्तं तदाह वृन्दावनगुणैर्वसन्त इव लक्षित इति देशापेक्षया कालस्य प्रबलत्वादित्युक्तम् अन्यथा पृथक् ग्रीष्मप्रवृत्तिर्वक्तव्या स्यात् कालवाभोग्या सदा ग्रीष्मानुगुणा न भवेयुः यथादयश्च यत्र वृन्दावने ग्रीष्मेऽपि या साक्षाद्भगवानास्ते षड्गुणान् प्रकटीकुर्वन्नीश्वररक्षितानेव सर्वकालीना गुणा लोके भवन्ति वीर्यं सत्यन्यदीया अन्यस्य सम्भवन्तीति स्पष्टं यशांसि सर्वेषामागमनात्तथा श्रियां च ज्ञाने सर्वात्मकतायां सर्वं स्पष्टं वैराग्ये च निरपेक्षत्वात् तदयना यत्र साक्षादेव सर्वैर्गुणैः सह भगवान् तत्र कः सन्देहः? केशव इति श्रीशाधिपतेर्महादेवस्य ग्रीष्मवरदातुर्ब्रह्मणश्चापि भगवानुपजीव्य इति तयोः पक्षपातः परिहृतः ॥ ३ ॥

वृन्दावनगुणानाह—यत्रेति त्रिभिः। "राजसः सात्त्विकश्चैव तामस-

सरित्सरःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा ।
न विद्यते यत्र वनौकसां दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥ ५ ॥
अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याः पुलिनैः समन्ततः ।
न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥ ६ ॥
वनं कुसुमितं श्रीमन्नदच्चित्रमृगद्विजम् ।
गायन्मयूरभ्रमरं कूजत्कोकिलसारसम् ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अपि कीर्त्यते" तत्र राजसगुणानाह—यत्र वृन्दावने निर्झर-निर्ह्रादैः झरणाशब्दैः निवृत्तस्वना गतशतशब्दाः झिल्लिका यत्र तादृशं वनं शश्वत् सर्वदा तच्छीकरैः झरणाकणैः ऋजीष-युक्ता ये द्रुमास्तेषां मण्डलैर्मण्डितं च ग्रीष्मर्तौ सर्वे वृक्षा ऋजीषप्राया भवन्ति ऋजीषं स्वल्पमात्रं निःसारं शश्वत्तच्छीकरैः सहितम् ऋजीषयुक्ता द्रुमा भवन्ति तेषां मण्डलानि च भवन्ति सजातीयविजातीय प्रचययुक्तानि मण्डलानि तैर्मण्डितम् ॥ ४ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ग्रीष्मेऽष्टादशे कृष्णः श्रीदामवाडभूत् ।
रामः प्रलम्बमारुह्याऽहन्निमष्टादशे कथा ॥

अथ प्रातः ॥ १ ॥

गोपालनं छद्मवनगमनाय मिषं यस्यां तथाभूता या माया प्रच्छन्नकामतामयीजनवञ्चना तया विक्रीडतोर्व्रजबालाभिः सह विहरतोरिति बलदेवस्यापि पृथक्कान्ता गोप्य आनन्दवृन्दावने दृष्टाः सूक्ष्मेऽप्युपरिष्टाद्व्यक्ताभविष्यन्ति ॥ २—३ ॥

वसन्तसाम्यमाह—चतुर्भिः । यत्र वृन्दावने ग्रीष्मेऽपि निर्झराणां निह्रादेन घोषेण निवृत्तस्वना आच्छन्नस्वनयो झिल्लिकाः कठोर-ध्वनिसूक्ष्मकीटा यस्मिन् तथाभूतं स्थलं भवतीति शेषः । शश्व-त्तेषां शीकरैरम्बुकणैः ऋजीषाः स्निग्धा ये द्रुमास्तेषां मण्डलै-र्मण्डितम् ॥ ४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथाष्टादशेऽध्याये वृन्दावनयोगात् ग्रीष्मस्य वसन्तसाम्यं कृष्णविहारपूर्वकप्रलम्बवधादिकं च निरूप्यते—अथेति ॥ १ ॥

गोपालशब्देनात्र गोपालनं गृह्यते गोपालनं छद्म व्याजो यस्यां सङ्कल्पात्मिकायां मायायां तया ॥ २ ॥

ननु, वृन्दावने एवंभूताः गुणाः कुतोऽत आह—यत्र भगवा-नास्ते इति । ननु, स अन्यत्रापि प्रादुर्भवति अत्राह—साक्षादिति स्वयमित्यर्थः । अस्मिन् महापुराणे साक्षादित्याद्यभ्यासः श्रीकृष्ण एव परतरत्वं ततः परतरं नास्ति द्योतयति "मत्तः परतरं नान्यत्" इति स्मृतेः "श्रीकृष्ण एव परो देवस्तं ध्यायेत्" इति श्रुतेश्च साक्षाद्भगवत्त्वं स्पष्टयति—केश इति । कश्च ईशश्च केशौ तौ वश-यते स तथा ॥ ३ ॥

ग्रीष्मस्य वसन्तसाम्यापादकान् श्रीवृन्दावनगुणानाह—यत्रेत्यादिना । यत्र ग्रीष्मेऽपि निर्झरनिर्ह्रादैः निवृत्तस्वनाश्छन्नस्वनाः झिल्लिकाः कठोरध्वनयः सूक्ष्मकीटाः यस्मिन् वने तत् ग्रीष्मो-ऽविशदिति पञ्चमेनान्वयः । कथम्भूतम् ? शश्वत्तेषां निर्झराणां शीकरैरम्बुकणैः ऋजीषाणां स्निग्धानां द्रुमाणां मण्डलैर्मण्डि-तम् ॥ ४ ॥

———

भाषा टीका ।

ॐ प्रलम्बासुरभञ्जनाय नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—ताके पीछे श्रीकृष्ण मुदित... वारे ज्ञाति लोगन के सहित गऊन के समुदाय सों शोभित... जो व्रज है तामें प्रवेश करत भये, और गोप गोपी... भगवान् को यश गावते भये ॥ १ ॥

याप्रकार गोपालपने की चेष्टा सों दोऊ भैयान वृन्दावन... में क्रीडा करतेई में ग्रीष्मनामक ऋतु प्रकट भई जो देह-धारीन कों अत्यन्त प्रिय नहीं है ॥ २ ॥

तौभी वो ग्रीष्म ऋतु वृन्दावनके गुणन सों वसन्त... लखाई परतो भयो, काहेसों, कि—जहां श्रीबलदेवजी सहित साक्षात् ब्रह्म रुद्र कों वशमें राखिवे वारे भगवान् श्रीकृष्ण विराजें हैं ॥ ३ ॥

जांवृन्दावन में झरनानके शब्द सों झींगुरनकी बोलि नहीं सुनाई देय है, सदा झरनानके छींटनसों हरे जो... हैं तिनके समूहनसों वृन्दावन बडाई शोभित होय रहो है ॥ ४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्र ग्रीष्मे वने वा निदाघो ग्रीष्मस्तेन तत्कालीनवह्न्यर्कोभ्यां च भवति यो दवस्तापः अतिशाद्वलेऽतिहरितदूर्वा-कीर्णे यद्वा अतिक्रान्तशाद्वलेऽपि स्थाने ॥ ५ ॥

ननु, शाद्वलमेव कुतस्त्यं तत्राह—अगाधेति । अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिनीभिरूर्मिभिः पुलिनैः सह द्र-वत्पुरीषः पङ्को यस्यास्तस्या भुवः रसं शाद्वलितं शाद्वलं च विषवदुल्बणा अपि सूर्यरश्मयो न गृह्णन्ति हरन्ति ॥ ६ ॥

क्रीडिष्यमाणस्तत्कृष्णो भगवान् बलसंयुतः।
वेणुं विरणयन् गोपैर्गोधनैः सम्वृतोऽविशत् ॥ ८॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तद्वनमविशदित्युत्तरेणान्वयः नदन्तश्चित्रा मृगा द्विजाश्च यस्मिन् गायन्तः मयूरा भ्रमराश्च यस्मिन् कूजन्तः कोकिलाः सारसाश्च यस्मिंस्तदविशत् ॥ ७—११ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यत्र च वृन्दावने सरिदित्यादिना वायोः सुशैत्यादिकमुक्तं अयमेको दवाभावे हेतुः प्रतिशाद्वल इत्यन्यः तथा च श्री-विष्णुपुराणे —

"ततस्तत्रातिरूक्षेऽपि घर्मकाले द्विजोत्तम!।
प्रावृट्काल इवोद्भूतं नवशष्पं समन्ततः" ॥ इति ।

शाद्वलेति वकारमध्य एव पाठः नडशाद्वलाजिति स्मृतेः ॥ ५ ॥

कुतस्तदाह—अगाधेति । अगाधतोयत्वेन सदोर्मीणामुद्भवः सौदर्यं च सूचितम् ऊर्मिभिरिति निमित्तं पुलिनैरित्युपादानं तत्तन्मयत्वात्तद्वत् सदार्द्रं पुरीषं मृदस्यास्तस्या इत्यर्थः ङीषर्थं गौरादौ पठनीयं शाद्वलितमित्याचारार्थक्विबन्ताभावे निष्ठा अन्यत्तैः । यद्वा, अगाधेत्यादिकं पुलिनविशेषणं समन्तत इत्यस्य परेणान्वयः यत्र च श्रीवृन्दावने सर्वत्रापीत्यर्थः । ह्रदिनीनां बाहुल्यात् ॥ ६ ॥

पक्षकान्तरेण वनमिति युग्मकम् श्रीमत्वं स्वतः विशेषत-श्चाह-कुसुमितमित्यादिना । कुसुमितं प्रफुल्लाशेषपुष्पव्याप्त-मित्यर्थः । ग्रीष्मेऽपि वसन्तगुणैः एवं द्विजशब्देन गृहीतानामपि मयूरादीनां पृथगुक्तिरन्यत्तुंभीणामपि सम्वलनं बोधयति क्रीडिष्यमाणः क्रीडिष्यन्निति क्रीडाविशेषापेक्षया यतः कृष्णः जगच्चित्ताकर्षकलीलः अत एव भगवान् बलदेवेन सम्यग्युत इति विशेषेणोक्तिरग्रे तेन प्रयोजनविशेषार्थं विरणयन् चिक्री-डिषानन्देन तदुत्साहनेच्छया च विशेषतो वादयन् अत एव गोपैः गाव एव धनानि तैश्च सम्यग्वृत्तः गोधनानामपि गोप-क्रीडायामपि युक्तत्वात् ॥ ७—८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दवः वनान्ताग्निः ॥ ५ ॥
द्रवत्पुरीष्याः आर्द्रशैवलायाः नद्या इत्यध्याहारः ॥ ६—७ ॥
विरणयन् विशेषेण रणयन् ॥ ८—१९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सरिदिति । सरितां सरसां प्रस्रवणानां निर्झराणां च ये ऊर्मयस्तेषां सम्बन्धिना वायुना कह्लारादीनां रेणून् हरतीति तथाभूतेन यत्रातिशाद्वले अतिहरिततृणाकीर्णे अतिक्रान्तशाद्वलेऽपि वा निदाघो ग्रीष्मस्तेन तात्कालिकवह्न्यर्कांऽर्थां च भवति यो दवस्तापः स वनौकसां न विद्यते ॥ ५ ॥

ननु, शाद्वलमेव कुतस्तत्राह—अगाधेति । अगाधानि तोयानि यासां तासां ह्रदिनीनां तटस्पर्शिभिरूर्मिभिः हेतुभिः पुलिनैः सह द्रवत्पुरीषं पङ्को यस्यास्तस्या भुवो रसं शाद्वलितं शाद्वलरूपतां च विषवदुल्वणा अपि सूर्यस्य रश्मयो यत्र न विगृह्णते न हरन्ति आशुतरत्वात्तावियदत्यन्तः तद्वनमाविशदित्युत्तरेणान्वयः ॥ ६ ॥

श्रीमत्फलकिसलयादिसमृद्धिमद्भगवदावासत्वात् लक्ष्मीवद् नदन्तश्चित्रा मृगा द्विजाः पक्षिणाश्च यस्मिन् गायन्तो मयूराः भ्रमराश्च यस्मिन् कूजन्तः कोकिलाः सारसाश्च यस्मिन् तत् ॥७॥

एवम्भूतं वनं भगवान् श्रीकृष्णः क्रीडिष्यमाणो बल-देवेन संयुतः वेणुं विशेषेण रणयन् नादयन् गोपैर्गोधनैश्च संवृतः प्राविशत् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सरित् नदी सरो देवखातः एतयोः प्रस्रवणं निर्झरम् ऊर्मिस्तरङ्गः एतत्सम्बन्धि वायुना च कह्लारं सौगन्धिकं कञ्जं पद्मम् नीलोत्पलम् उत्पलम् एषां रेणुभिः परागैः हारिणा मनोहरेण । यद्वा, रेणूनां हारो हरणम् अस्यास्तीति हारी तेन निदाघवह्न्यर्केभ्यो भव उत्पत्तिर्यस्य स तथा दवस्तापः "दव परितापे" इति धातुः । अच्प्रत्यये एतत्सिद्ध्यति वनाग्निरित्यर्थोऽङ्गीकारे वह्निस्थितवर्ण्यं भवति प्रति शाद्वले कोमलतरतृणोपेते ॥ ५ ॥

विषवदुल्वणाः चण्डांशुकराः सूर्यरश्मयः यत्र शाद्वलितं बालतृणनिचयं भुवो गतं रसं जलं न निगृह्णते किं कारण-मत्राह—अगाधेति । अगाधं तोयं यस्याः सा अगाधतोया सा च ह्रदिनी नदी तत्तस्यास्तटं रुद्धैः तीरजातैर्वृक्षैः समन्ततः द्रवन्त्याः स्यन्दमानायाः पुलिन्याः विभक्तनद्याः शाखानद्या इत्यर्थः पुलिनै-र्निमित्तैः सर्वदा द्रवीभूतस्थलत्वादित्यर्थः ॥ ६—७ ॥

विरणयन् विविधैः स्वरैर्वर्णयन् कृष्णः तद्वनमविशदि-त्यन्वयः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ऊर्मिभिरिति निमित्तम् ॥ ५ ॥

पुलिनैरित्युपादानं द्रवत् सदार्द्रं पुरीषं मृदस्यास्तस्याः शाद्वलितमित्याचारार्थक्विबन्ताभावे निष्ठा ॥ ६—१० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

अनिष्टशब्दस्य सुशब्दो बाधकः रसहारकस्य रसदायक इति तापनिवारकं वायुमाह—सरिदिति । सरितो नद्यः सरांसि सरोवराणि प्रस्रवाः झरणाः राजससात्त्विकतामसात्त्रिविधानामप्यूर्मिभिर्यं उत्पाद्यते वायुः अनेन मान्द्यं शैत्यं चोक्तम् सौरभ्यमाह—कह्लारपुष्पाणि सन्ध्याविकासीनि कञ्जानि कमलानि दिनविकासयुक्तानि उत्पलानि रात्रिविकासीनि त्रिविधैरप्येतैः सर्वदा वायुः सुगन्ध एव भवति. तदाह—तेषां रेणुहारिणेति । अत एव वनौकसां दवः अरण्याग्निजनितस्तापः धावस्यारण्यार्थता दवतापयोगादेव दवदावशब्दावरण्यवाचकाविति कोशः तापवाचकोऽत्र प्रयुक्तः क्वचिद्दावोऽग्निवाचकः प्रयुक्तः अतो ऽनेकार्थौ दवदावशब्दो तापस्त्वन्तःपित्तादिनापि भवतीति तन्निवृत्त्यर्थमाह—निदाघवह्न्यर्कभव इति । निदाघे यौ वह्न्यर्कौ ताभ्यां भवो यस्य । ननु, भूमिकृतस्तापो भवेत्तत्राह, अतिशाद्वल इति । शाद्वलं हरिततृणभूखण्डः दूर्वायुक्तः अत्यन्तं शाद्वलं यत्र ॥ ५ ॥

शिष्टानपि गुणानाह—अगाधं तोयं यत्र एतादृशीनां ह्रदिनीनां तटसम्बन्धिनो य ऊर्मयः तीरे जायमानास्तैः कृत्वा द्रवत् पुरीषं मृत्तिका यस्याः सा द्रवत्पुरीषी गौरादित्वात् ङीष् तादृश्याः भुवः समन्ततोऽपि रसं शाद्वलितं च यत्र वृन्दावने विषादल्बणाश्चण्डांशुकरा न गृह्णते वृन्दावनभूमिः सर्वदा सरसैव तिष्ठति सर्वतश्च पुलिनानि भवन्ति तानि च पुलिनान्यगाधह्रदिनीतटोर्मिभिर्युक्तानि भवन्ति भुव एव वा स्थानविशेषास्तेषां शीतलत्वायोर्मिभिर्द्रवत्पुरीषत्वं निरूप्यते मध्ये शीतलतानिरूपणाय द्रवत्पुरीषता निरूपिता बहिःशीतलतायै पुलिनानि अतो मूलात् उपरिभागाच्च रसाधिक्यात् शोषाभावेन भूरसशाद्वलितयोर्नाभावः एवं सरसता निरूपिता ॥ ६ ॥

अन्यान्वनधर्मानाह-वनमिति । आदौ कुसुमितं ग्रीष्मे हि प्रायेण कुसुमानि न भवन्ति शोभायुक्तं च कुसुमानि राजसानि नदन्तश्चित्रा मृगा द्विजाः पक्षिणश्च यत्र सात्त्विकाः एते गायन्तो मयूरा भ्रमराश्च यत्र कूजन्तः कोकिलाः सारसाश्च यत्र आदौ नादस्तदनुगानं तत उद्रिक्ते रसे कूजितानीति त्रयमुक्तम् । मिथुनाय क्रौञ्चौ नादेऽद्विश्रुतिपूरकोपेक्ष्यत इति मृगाः सह निरूपिताः । गाने नृत्यमपेक्ष्यत इतिमयूराः कूजिते परपुष्टोपेक्षिता इति कोकिलाः ॥ ७ ॥

एवं वनगुणानुक्त्वा तत्र भगवतः क्रीडां वक्तुमादौ भगवतः प्रवेशमाह—क्रीडिष्यमाण इति । क्रीडार्थमेव हि भगवता तत्र गुणाः सम्पादिताः तत्तस्मात् कारणात् कृष्णः क्रीडार्थमाविर्भूतः भगवान् बलसंयुतो जातः षड्गुणाः स्वयं बलं च तस्य अतः सप्तभिः क्रीडां वक्ष्यति पूर्ववत् तत्रत्यानां देवानामुद्बोधनार्थं वेणुं विरणयन् गोपा गोधनानि च सेवार्थं धर्मार्थमर्थार्थं सम्वृत्तो जात एतादृशः अविशादिति तद्रसप्रारम्भ उक्तः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सरिदादीनामूर्मयो यतस्तेनेति शैत्यं कह्लारादीनां रेणून् हर्तुं निःशङ्कत्वेनालक्ष्यतया चोरयितुं शीलं यस्येति सौगन्ध्यमान्द्ये दवस्तापः अन्यत्र निदाघे दावानलभवस्तापो भवति सोऽत्र नास्तीत्याह—अतिशाद्वले अतिकोमलहरिततृणाकीर्णे ॥ ५ ॥

अर्कभवतापाभावे पूर्वोक्तद्रुममण्डलमण्डितत्वमेव हेतुरिति हेत्वन्तरमप्याह—अगाधतोया ह्रदिन्यस्तासां तटस्पर्शिभिरूर्मिभिर्द्रवत् सदैवार्द्रं पुरीषं पङ्कं यस्यास्तथाभूताया भुवो रसं न गृह्णतीत्यन्वयः । गौरादित्वात् ङीष् रसं कीदृशं समन्ततः पङ्किलैः पुलिनैः शाद्वलितं शाद्वलयुक्तीकृतं "विन्मतोर्लुक् [ ५।३।६५ ] इति मतुपो लुक् ॥ ६—८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्र अतिशाद्वले अतिहरिततृणाकीर्णे वने सरित्सरःप्रस्रवणानां ये ऊर्मयस्तत्सम्बन्धिवायुना कह्लारादिरेणून् आहरतीति तथा तेन निदाघस्य ग्रीष्मस्य वह्न्यर्काभ्यां भवति यो दवस्तापः स न विद्यते ॥ ५ ॥

यत्र वने अगाधतोयह्रदिनीतटोर्मिभिर्हेतुभिः पुलिनैः सा द्रवत्पुरीषं पङ्को यस्यास्तस्या भुवः रसं शाद्वलितं शाद्वलरूपं च विषोल्बणाः विषवदसह्यहिताः अपि चण्डांशुकराः न गृह्णन्ति न हरन्ति ॥ ६ ॥

नदन्तश्चित्रा मृगा द्विजाश्च यस्मिन् गायन्तो मयूरा भ्रमराश्च यस्मिन् कूजन्तः कोकिलाः सारसाश्च यस्मिन् ॥ ७—११ ॥

---

### भाषा टीका ।

जा वृन्दावन में गहरी हरी २ घास जामी है कल्हार कञ्ज उत्पल इत्यादि कमलनकी जातिन के पराग [ रज ] को हरण करवे वारो सुगन्धी, और नदी सरोवर झरनान के तरङ्गन के स्पर्श करिवे सों शीतल एसो जो पवन वहै हैं तासों वा जगे के रहवे वारे जीवनकूं ग्रीष्म सम्बन्धी अग्नि और सूर्य को ताप नहीं सतावै है ॥ ५ ॥

अगाधजलवारे सरोवरन के किनारे नूं लगिके जो तरङ्ग उठैं हैं तिन सों दूरताईं तीर की मृत्तिका गीली बनी रहै वा कीचवारी सजल पृथिवी कूं तथा सजलताई के कारण सो भई जो हरियाली ताकूं विषके समान बडी तीक्ष्ण सूर्य की किरण नहीं सुखाय सकैं है ॥ ६ ॥

पुष्प जामें खिलरहे और चित्र विचित्र जामें मृग और पक्षी शब्द कररहे मोर जामें कुहुक रहे भौंरा जामें गुञ्जार कररहे कोयल जामें पञ्चमस्वर सें कुहू २ करैं है सारस जामें न्यारे बोलिरहे हैं ऐसी शोभा युक्त वो वृन्दावन हैं ॥ ७ ॥

या वनमें क्रीडा करिवे की इच्छासों बलदेवजी और

प्रवालबर्हस्तवकस्रग्धातुकृतभूषणाः ।
रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः ॥ ९ ॥
कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् ।
वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे ॥ १० ॥
गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः ।
ईडिरे कृष्णरामौ च नटा इव नटं नृप ! ॥ ११ ॥
भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः ।
चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् ॥ १२ ॥

भाषा टीका ।

वेणु बजावत गोप और गोधन के सहित आनन्दकन्द श्रीकृष्णचन्द्र प्रवेश करत भये ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

काकपक्षाश्चूडाकरणात्प्राक्तनकेशाः भ्रामणादिप्रकारैर्नियुद्धेन बाहुयुद्धेन चिक्रीडतुः ॥ १२ ॥ १३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोपा इति गोपक्रीडायां निजाभीष्टत्वं स्पष्टयन् तत्र च रामकृष्णादय इति परमाविष्टोपि स्वस्य तदानीमन्यनिर्विशेषतया श्रीरामकृष्णयोर्गोपत्वस्फूर्त्या तयोरपि तदावेशाभिमानौ सम्मन्यमानस्तादृशक्रीडायां परमातिपरमानन्दमयत्वं व्यञ्जितवान् अथ तल्लीलावेशादिकमेव व्यञ्जयति—ननृतुरित्यादिना ॥ ९ ॥

तत्र वैदेशिकयोरिव नटवेषेण श्रीदामसभायां समागतयोः श्रीकृष्णरामयोर्मुख्यत्वेन प्रथमतः श्रीकृष्णस्य नृत्यं वर्णयति—कृष्णेति द्वाभ्याम् । अपरे श्रीदामादयः सभापतयः अथ कार्त्स्न्येन साधुसाध्विति प्रशशंसुः एवमन्यतो विशिष्टस्तस्य नृत्यकौशलमुक्तम् ॥ १० ॥

अथ तत्र श्रीदामादीनां सभापतितया निविष्टानामग्रतः समुत्थाय स्थितानन्यान्नटवेषान् प्रशंसकानपि गोपान् प्रशंसनीयश्रीकृष्णादिवैशिष्ट्याय प्रशंसति—गोपेति । देवाः श्रीकृष्णोपासनपरत्वादौ तद्वद्रूपास्पदत्वेन प्रसिद्धाः इति समानमहिमत्वं व्यञ्जितम् । तर्हि कथं ते तादृशमहिमत्वेन न केश्चिद् प्रतीयन्ते कथं वा भवद्भिः प्रतीयन्ते तत्राह—देवा अपि गोपजात्यैव प्रतिच्छन्नाः गुणादिभिस्तु स्पष्टाः अविवेकिनां यत्किञ्चित् साधारण्येन भ्रान्तिर्भवति न तु विवेकिनां प्रत्युत तादृशेन तादृशऔपयिकेन परमगुणाविष्कारेण च चमत्कारातिशय एव स्यादिति भावः । ननु, तेषां गोपजातित्वमेव कुतः ? तत्राह—गोपालरूपिणामिति नित्ययोगे मत्वर्थीयः ततस्तदत्यन्ताभीष्टत्वं तस्य रूपस्य दर्शयित्वा तेषां तदनुरूपत्वमेवानुरूपमिति ध्वनितं एवं समानरूपवेषत्वं च व्यक्तं समानगुणत्वं व्यनक्ति नटा इवेति एवमन्येष्वपि गुणेषु ज्ञेयम् अतः सर्वथा तद्योग्यत्वात् वेषयन्ति क्रीडयन्ति देवा इति च श्लेषोक्तिः हे नृपेति नरोत्तमत्वेन भवतैवेदं ज्ञायत एवेति भावः ॥ ११ ॥

अथ नृत्यकौतुकानन्तरं कृतं युद्धकौतुकं वर्णयति—अन्योन्यं हस्तग्रहणादिना भ्रामणैर्लङ्घनैरधो निपात्यारोहणैः क्षेपैः प्रतिविनोदनैः आस्फोटनैः करतलेन भुजमूलाघातैः विकर्षणैः आकर्षणैः नियुद्धेन बाहुयुद्धेन काकपक्षः केशगुम्फितत्वेणीत्रयमिति केचित ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः प्रवालादिभिः कृतानि भूषणानि यैः तथाभूताः रामकृष्णादयो गोपा ननृतुर्युयुधुर्मिथो बाहुभिर्जगुश्च ॥ ९ ॥

तत्र कृष्णस्य नृत्यतः सतः केचिद्गोपाः जगुः केचिच्च वेणवादिभिरवादयन् केचिच्च प्रशशंसुः ॥ १० ॥

गोपजातिप्रतिच्छन्नौ साक्षादीश्वरावतारभूतौ रामकृष्णौ गोपालरूपिणौ देवा ईडिरे तुष्टुवुः हे नृप ! नटं नटा इव ॥ ११ ॥

भ्रामणादिभिर्नियुद्धेन बाहुयुद्धेन काकपक्षधरौ रामकृष्णौ क्वचिच्चिक्रीडतुः काकपक्षाश्चूडाकर्मणः प्राक्तनकेशाः तत्र भ्रामणं नाम जिघृक्षतः प्रतिद्वन्द्विजनाद्‌दारमानं कौशलेन वञ्चयता परितस्तत्सञ्चारणं लङ्घनमासन्नस्य प्राप्तस्य ग्रहणस्य वञ्चनार्थं लाघवेनेतस्ततो वल्गनं स्वगृहीतस्य भूमौ पातनं क्षेपः करतलैर्भुजयोर्घातः आस्फोटनं बलपरीक्षार्थमन्योन्यमाकर्षणं विकर्षणम् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धातुभिरिति ॥ ९—११ ॥

भ्रामणैः भगदलाकारेण तिर्यग्भिर्लङ्घनैर्दशपदान्युत्पतनैः क्षेपैः आक्षेपणैः पापाणक्षेपणैर्वा आस्फोटनैः एकं हस्तं द्विगुणीकृत्यान्येन पाणिना स्फालनानि आस्फोटनानि तैः परस्परैः पाणिना पाणिनवलम्ब्याकर्षणं विकर्षणं नियुद्धेन मल्लयुद्धेन

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

काकपक्षधरौ अकृतचौलकेशधारिणौ त्रिवृत्कृतवेणीधारिणा-वित्यर्थः॥ १२—१३॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रशंसनीयमहिमद्योतनाय प्रशंसकान् प्रशंसति—गोपेति। गोपाः श्रीकृष्णोपासनपटलादौ तद्वदुपास्यत्वेन प्रसिद्धाः श्रीदाम-सुदामवसुदामाद्यः इति समानमहिमत्वं व्यञ्जितं तर्हि कथं केश्चित्तादृशमहिमत्वेन न ते प्रतीयन्ते, कथं वा भवाद्भिः प्रतीयन्ते? तत्राह—देवा अपि गोपजात्यैव प्रतिच्छन्ना गुणादिभिस्तु स्पष्टाः ननु, तेषां गोपजातित्वं कुतस्तत्राह गोपालरूपिणामिति नित्य-योगे मत्वर्थीयः ततस्तदत्यन्ताभीष्टत्वं तस्य रूपस्य दर्शयित्वा तेषां त्वदनुरूपत्वं दर्शितम्॥ ११—१५॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सामान्यतः प्रथमतः क्रीडामाह—सर्वेषां प्रवालेति। प्रवालानि पल्लवानि बर्हस्तबकानि पुष्पगुच्छानि स्रजः पुष्पमालाः धातवो गैरिकादयः तैः कृतानि भूषणानि यैः पञ्चधा हि वनभूषणानीति गणितानि साधारणक्रीडात्वात् कृष्णरामौ राम-कृष्णौ वा आदिर्येषां सर्वे गोपाः ननृतुः मनोविलासं कृत-वन्तः युयुधुर्देहविलासं जगुर्वाग्विलासम्॥ ९॥

भगवतो लीलामाह—कृष्णस्येति शिक्षार्थं लोके नृत्यप्रसिद्ध्यर्थं च भगवतो नृत्यतः सतः नृत्याङ्गभूते गीतवाद्ये अन्ये कृतवन्तः केचिज्जगुः केचिद्वादयन्निति वेणुः श्रुतिपूरकः पाणिशृङ्गव-नादं करोति दलान्यश्वत्थपत्रादीनि गोमुखवच्छब्दं कुर्वन्तीति शृङ्गाणि चावादयन् अथापरे प्रशशंसुः भिन्नप्रकारेण नृत्य-सम्बन्धप्रशंसातः स्वतन्त्रप्रशंसाभिन्ना॥ १०॥

नन्वेते कथं प्रशंसादिकं कृतवन्तः? अज्ञाने प्रशंसासम्भवात् ज्ञाने महतो लीलायां प्रशंसानुपपत्ति-रित्याशङ्क्याह—गोपजातिप्रतिच्छन्ना इति। यथा भगवान् प्रति-च्छन्नः एवं भगवत्सेवका अपि गोपजात्या प्रतिच्छन्ना जाताः इदानीमेव गोपवेषं कृत्वा समागता इत्याशङ्कां व्यावर्त्तयति, गोपालरूपिण इति। गोपरूपयुक्तास्तथैवोत्पन्नास्तेऽप्यविद्याश्च अतः कृष्णरामावीडिरे तथापि सेवकानां कथमेवं धाष्टर्यमत आह, नटा इव नटं नृपेति। नटा हि स्वामिसेवकभावं परित्यज्या-न्योन्यम् प्रशंसन्ति तद्वदित्यर्थः॥ ११॥

पुनर्भगवतो नानाविधक्रीडामाह—भ्रामणैरिति। मल्लयुद्धे ह्येते प्रकाराः अन्यो हस्तस्पर्शेन भ्रमन्ति हस्तद्वयं धृत्वा वा भ्राम-यन्ति एतद्बालानामपि भवति तथा उल्लङ्घनानि उच्चैर्भूमौ गर्ता-दिषु च मल्लानां वा उल्लङ्घनं क्षेपः प्रक्षेपः तिरस्कारादिर्वा आस्फोटनं बाहुस्फोटनं विकर्षणं नियमस्थाने बलात्मयनम् एवं पञ्चविधा लीला चिक्रीडतुः क्रीडां कृतवन्तौ बाहुयुद्धेन कचित् काकपक्षधरौ कृतचूडाकरणौ कियत्कालमेव हि चूडाकरणा-नन्तरं केशांस्तत्तद्देशेषु कचित् स्थापयन्ति॥ १२॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

गोपा इति रामस्यापि गोपाभिमानत्वात्॥ ९॥

कृष्णस्य नृत्यतः कृष्णो नृत्यति सतीत्यर्थः कृष्णोपासकैः भक्तै-रुपास्यत्वादागमादिषु तथा प्रसिद्धा च देवाः किन्तु गोपजात्या प्रतिच्छन्ना इति तेषां देवानामपि गोपजातित्वमित्यर्थः। यद्वा, गोप-जातिषु कृष्णसखेषु मध्ये एव प्रतिच्छन्ना नरवेषेण भवनारदादयो भक्तास्तल्लीलास्वादार्थमित्यर्थः गोपालरूपिणामिति नित्ययोगे इति॥ १०—११॥

आस्फोटनैः करतलेन भुजमूलाघातैः नियुद्धेन बाहुयुद्धेन काकपक्षाश्चूडाकरणात् प्राक्तनाः केशा इति स्वामिचरणाः केशगुम्फितवेणीत्रयमिति केचित् कर्णाग्रलम्बिवक्रालका इत्यन्ये॥ १२—१३॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

काकपक्षधरौ चूडाकरणात्प्राक्तनाः केशाः लोके काकपक्षाः प्रसिद्धाः तदाकारतां नीताः "हिरण्यकेशः" इत्यादिश्रुतिप्रसिद्धाः सनातनाः ये केशास्तद्धरौ॥ १२—१३॥

---

### भाषा टीका

नवीन कोमल वृक्षन के पतौवा मोरपङ्ख पुष्पन के गुच्छा माला और खरिया गेरु मनशिल इत्यादिकन सों शृङ्गार कर के रामकृष्ण सूं आदि लेकें सगरे गोप कभऊ नाचें कभऊ गावन लगें, कभऊ कुस्ती लरत भये॥ ९॥

जाबिरियां कृष्ण नाचिवे लगे हैं तब कितनेई गोप गायवे लगे हैं। कितनेई वंशी वजावन लगें हैं, कितनेई तारी वजावन लगें हैं, कितने माहिषशृङ्ग (भैंसको सींग) वजावने लगे हैं, और सिगरे "वा भैया भलो नाच्यो" या प्रकार बड़ाई करिवे लगें हैं,॥ १०॥

हे राजन्! वा समें गोप रूपमें छिपे भये जो देवता हैं सो गोप रूप धारण करन वारे राम कृष्ण की बड़ी प्रशंसा करतभये जैसें नट नटकी बड़ाई करें हैं॥ ११॥

मूड़नो जिनको नहीं भयो ताई सों छोटी २ अलकनवारे राम कृष्ण दोऊ भैया कभऊ चाई माई खेलें हैं, कभऊ कूदें हैं, कभऊ "कोन को फेंक्यो कितनी दूर जाय" देसे कह के छोटे २ ढेलन को फेंकें हैं, कभऊ खम्भ ठोकें हैं। कभऊ खेंचा खेंची करें हैं, कभऊ फिर कुस्ती लरें हैं, याप्रकार की क्रीडा करत भये॥ १२॥

---

क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ स्वयम् ।
शशंसतुर्महाराज ! साधुसाध्विति वादिनौ ॥ १३ ॥
क्वचिद्बिल्वैः क्वचित्कुम्भैः क्वचामलकमुष्टिभिः ।
अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया ॥ १४ ॥
क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः ।
कदाचित्स्पन्दोलिकया कर्हिचिन्नृपचेष्टया ॥ १५ ॥
एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ।
नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरस्सु च ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कुम्भैः कुम्भवृक्षफलैः अस्पृश्यत्वं नेत्रबन्धश्च तदाद्यैः मृगाणां खगानां च चेष्टया ॥ १४ ॥

दर्दुरप्लावैर्मण्डूकप्लुतिभिः स्पन्दोलिकया दोलावलम्बनेन नृपाणामिव लीलया ॥ १५ ॥

नद्योऽद्रिद्रोणयः कुञ्जानि च एतेषु ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ नियुद्धश्रमानन्तरं कौतुकेन स्वयं नाट्यगुरुपमाणाभ्यां गानादिकमपि कुर्वद्भ्यां श्रीरामकृष्णाभ्यां प्रशस्यमानानामन्येषामपि नृत्यमाह—क्वचिदिति । चकारः पूर्वोक्तश्रीकृष्णनृत्यापेक्षया साधुसाध्विति वादिनौ सन्तौ शशंसतुः तत्तद्गुणविशेषं विशिष्य श्लाघां चक्रतुः एवं निर्भरक्रीडारसो दर्शितः महाराज ! हे राजवर्गमध्ये श्रीकृष्णभक्तिविशेषेण परमश्रेष्ठेति भवानेवेदं श्रोतुमर्हतीति भावः । एवं नृत्यमिश्रगानानुसारेण क्रमप्राप्तं तद्मिश्रगानमप्यूह्यमिति प्रकरणाभिप्रायः ॥ १३ ॥

अन्या अपि युद्धादिविचित्रलीलाः सङ्गृह्णाति—क्वचिदिति त्रिकेण । बिल्वादिभिः कृत्वा याः क्रीडास्ताभिश्चेरतुः एवं लोकसिद्धाभिरन्याभिश्च क्रीडाभिश्चेरतुरित्यन्वयः ॥ १४ ॥

उपहासकैर्हास्यजनकैः विचित्रानुकरणादिभिः क्वचिदिति चिरायसंनीयं नृपचेष्टया गिरिशिखासिंहासनासनकौसुमच्छत्रचामरादिपरिच्छदस्वपात्रपुरःसरत्वादिमय्या ॥ १५ ॥

नद्यः अद्रयः द्रोणयश्चाद्रिसन्धयः "काष्ठागारेऽम्बुवाहिन्यां द्रोणमन्धौ च योषिति । द्रोणी न स्त्रीमानभेदे द्रोणः काके कपीपतौ" इति त्रिकाण्डशेषात्. वने श्रीवृन्दावने काननेषु तदन्तर्गतेषु काम्यकवनादिषु तत्र तयोर्विहारो वेषविशेषश्चोक्तः श्रीहरिवंशे—

"चारयन्तौ विवृद्धानि गोधनानि शुभाननौ ।
स्फीतशष्पप्ररूढानि वीक्षमाणौ वनानि च ॥
स्वेडयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ।
नामभिर्व्याहरन्तौ च सवत्सा गाः परन्तपौ ॥
निर्योगपाशैरासक्तैः स्कन्धाभ्यां शुभवक्षसौ ।
वनमालाकुलोरस्कौ बालशृङ्गाविवर्षभौ ॥
सुवर्णाञ्जनवर्णाभ्यामन्योन्यसदृशाम्बरौ ।
महेन्द्रायुधसंसक्तौ कृष्णशुक्लाविवाम्बुदौ ॥
कुशाग्रकुसुमानां च कर्णपूरं मनोहरम् ।
वनमार्गेषु कुर्वाणौ वन्यवेषधरावुभौ" ॥
इति ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिदन्येषु गोपेषु नृत्यत्सु सत्सु स्वयं गायकौ वादकौ च भूत्वा हे महाराज ! साधुसाध्विति वदन्तौ सन्तौ प्रशशंसतुः ॥ १३ ॥

क्वचिद्बिल्वादिभिरित्थं लोकप्रसिद्धाभिर्बालक्रीडाभिः रामकृष्णौ विचेरतुः सञ्चरितवन्तौ इति त्रयाणामन्वयः कुम्भो नाम वृक्षविशेषस्तस्य फलैः गुच्छैरिति पाठान्तरम् आमलकैः शुक्तिभिः कालिन्दीपुलिनगतमुक्तास्फोटैश्च अस्पृश्यम् आवां मिथो न स्पृश्यौ इति आपादबन्धनेन तदनुकूलं कर्म नेत्रबन्ध आगमिष्यतो नामकथनार्थं पाणिभ्यां कस्यचिन्नेत्रप्रच्छादनं मृगाणां खगानां चेष्टया तत्सजातीयचेष्टया ॥ १४ ॥

दर्दुरप्लावैः मण्डूकप्लुतिभिरुपहासकैः परिहासकवाक्यैः आन्दोलिकया तदाकारदोलावलम्बनेन नृपाणामिव लीलया च ॥ १५ ॥

नद्यादिषु रामकृष्णयोर्गोपैः सह पशूंश्चारयतोः गोपरूपी प्रलम्बोऽगादित्युत्तरेणान्वयः । द्रोणः पर्वतसन्धिप्रदेशः तज्जिघांसया रामकृष्णहननेच्छया ॥ १६—१७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कुम्भैः कुम्भफलैः मनोज्ञाकारैः "कुम्भोलूखलके क्लीबे कौशिको गुग्गुलः पुमान्" इत्यमरः । पृष्ठतो धावनात्स्पष्टुमशक्यं त्वं मां स्पृशेत्युक्त्वा पुरतो लीलया धावतीति यत्रादृश्यमस्पृश्यक्रीडनं यस्मिन्वा नेत्रमाच्छाद्य मां स्पृशेति निगद्य तं मुक्त्वा पुरतो भ्रमणं नेत्रबन्धलीला दूरान्तरप्रदेशे स्थितं वृक्षं वर्णीकृत्याभ्यां प्राग्वृक्षस्य स्पर्शी विजयी इत्यादिलीयं क्रीडा धावनसंख्यादिकमादिपदगृहीतम् ॥ १४ ॥

दर्दुरप्लाद्यैः मण्डूकवदुत्पतनैः ॥ १५ ॥

द्रोणी निम्नसानुस्थलं अन्तर्लतानिचितो द्रुमादिकुञ्जः "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः ॥ १६—१८ ॥

पशूंश्चारयतो गोपैस्तद्वने रामकृष्णयोः ।
गोपरूपी प्रलम्बोऽगादसुरस्तज्जिहीर्षया ॥ १७ ॥
तं विद्वानपि दाशार्हो भगवान् सर्वदर्शनः ।
अन्वमोदत तत्सख्यं वधं तस्य विचिन्तयन् ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

द्रोण्यश्चाद्रिसन्ध्यः दूरान्तरवं विचार्य काननेषु अन्तर्वनेषु ॥ १९—२१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतो नृत्यमुक्त्वा भगवत्सन्निधानेऽन्येषां नृत्यमाह, कचिन्नृत्यत्स्विति । अन्येषु नृत्यत्सु सत्सु स्वयं गायकौ वादकौ च चकारादन्येषु गायकेषु स्वयं वादकौ अन्येषु वादकेषु स्वयं गायकाविति । किञ्च, स्वयमेव शशंसतुः स्वयं पदात्परप्रेरणयापि साधु साधु इति वादिनौ कचिद्भगवतः कचिद्विशेषेण शशंसतुस्स्तोत्रं कुरुतः कचिद्विशेषणानुशासनं वा ॥ १३ ॥

एवं शास्त्रानुसारिलीलामुक्त्वा केवलबालकसम्प्रदायसिद्धां लीलामाह—कचिद्बिल्वैरिति । बिल्वफलानां क्रीडाकन्दुकवत् क्षेपणरूपां कुम्भफलानि सूक्ष्माणि ततः तैः क्रीडा लाक्षा सूक्ष्मपिण्डवत्सूक्ष्माण्यामलकानि मुष्टिभ्रामणक्रीडया क्रीडनम् अस्पृश्यक्रीडाकपर्द्दिकेति प्रसिद्धा वरवर्त्तिकेति च नेत्रबन्धक्रीडा आंखमुद्रिकेति प्रसिद्धा आदिशब्देन निलायनक्रीडामग्रे वक्ष्यति आरोहक्रीडा एकपदक्रीडा च तथा काष्ठखण्डैस्तथा कपर्दैः जलस्थलयोः कचिद्धरिणक्रीडा हरिणाऽऽकृतिं विधाय नृत्यं कुर्वन्ति खगवन्मयूरादिकवदीहाऽनेकविधा ॥ १४ ॥

एवं स्थललीलामुक्त्वा जले प्रकारविशेषलीलामाह—कचिल्लेति । कचिद्दर्दुरवद्भेकवत्प्लवनं कुर्वन्ति मध्ये ह्रदस्य प्लवस्यनिगृह्य चतुरः पद इति श्रुतेः विरन्तरमुत्प्लुत्य गमनं तथातिकठिनं नेदानीं बालकेषु प्रसिद्धम् उत्प्लवाश्चोल्लङ्घनानि च अतो विविधैरित्युभयत्र सम्बध्यते उपहासकान्युपहासवचनानि चेष्टाश्च कदाचिद् भगवान् राजा भवति तदा दोलामारुह्य गच्छति केचन वाहकाः केचन दोलारूपा एव भवन्ति स्पन्दोलिका दोलास्पन्दरूपा, दोलिका वा वृषभाविवाग्रे द्वौ भवतः प्रसारितबाहुरपरो मध्ये बद्धहस्ताश्चत्वारः पश्चात्सर्वे सम्बद्धाः भगवन्तं नयन्ति सा स्पन्दनदोलिका कदाचित् पुनर्नृपचेष्टया क्रीडति कचिदुपविश्य सिंहासनेऽक्षादिभिश्च क्रीडत्याज्ञापयति बध्नाति दण्डयति वा ॥ १५ ॥

एवं क्रीडामुक्त्वोपसंहरति—एवं ताविति । अत्र प्रमाणं लोका एताः क्रीडाः एव काश्चन क्रीडा नद्यामद्रौ अद्रिद्रोणीषु उभयतः पर्वता मध्ये निम्ना भूमिर्द्रोणी तथा नद्यामपि भवति कुञ्जानि तृणसहितानि गह्वरस्थानानि काननानि निबिडवनानि सरितः क्षुद्रनद्यश्च कासारसरस्सु च एवं सर्वलौकिकभावात् बालकानां निवारयन्नन्तःकरणदोषान्निवारितवान् यावत्तासु स्वयं न प्रविशति तावत्ताः केवला एव स्मृता भवन्ति न भगवद्विशिष्टाः भगवत्स्मारिका वा अतो बालकानां प्रपञ्चविस्मरणार्थं सर्वकर्मसु स्वयं प्रविष्टः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कचिद्बिल्वैरिति निःक्षिप्यमाणयोर्बिल्वफलयोः परस्पराघात एवं कुम्भैः कुम्भवृक्षफलैः अस्पृश्येति स्पर्शस्य अदित्सायां क्रीडा तत्र स्पर्शकर्तुर्जयः स्पर्शकर्मणः पराजयः अक्षिमेव पृष्ठदेशमासाद्य पाणितलाभ्यां नेत्रबन्धकं परिचिनोति चेत् पराजयः सर्वत्र जयपराजययोर्मुरलीवेत्रादिरेव ग्लहः खगमृगेहं खगाद्याकृतिमतां मिथो युद्धकूजितादिकं कदाचित् भावगा तृतीयामारभ्य स्पन्दोलिकया दोलान्दोलनेन नृपचेष्टया प्रदेशे नृपस्येव चेष्टाघट्टकराजिघृक्षया व्रजबालानिरोधस्य द्रोण्यश्चाद्रिसन्धयः ॥ १४—१६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कुम्भैः कुम्भवृक्षफलैः ॥ १४—१६ ॥

भाषा टीका ।

हे महाराज ! हे राजा परिक्षित ! जब कभऊ और बालक नाचिवे लगें हैं, तब श्रीकृष्ण और बलदाऊ भैया आप स्वयं गायवे बजायवे लग जांय हैं, और भले खूब नांचे वातारियां बडाई करिवे लगें हैं ॥ १३ ॥

कभऊ बेल के फलन सों कभऊ कुम्भ वृक्षके फलन कभऊ आमरेन की मुट्ठीन सों फेंक २ के खेले हैं। कभऊ छुआ छुई काई समें आंखिमिचोनी इत्यादि खेलान सों हैं, कभऊ पशून मरी की कभऊ पक्षीन सरी की कर २ के खेलें हैं ॥ १४ ॥

कभऊ मेंडक की नाई फुदकें हैं, कभऊ नानाप्रकार नकल करिके हंसी करिवे लगें हैं, काई समें झूला डारि झूलें हैं कभऊ आपस में राजा नौकर चाकर दीमान बनि खेलें हैं ॥ १५ ॥

याप्रकार कृष्ण बलदेव दोऊ भैया लोक प्रसिद्ध या वनमें नदीन में गोवर्द्धन की गुफान में कुञ्जन में में सरोवरन में खेलत भये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चारयतोः सतोः तद्वने तस्मिन् वने तयोर्जिहीर्षया ॥ १७ ॥

तत्रोपाहूय गोपालान् कृष्णः प्राह विहारवित् ।
हे गोपाः! विहरिष्यामो द्वन्द्वीभूय यथायथम् ॥ १९ ॥
तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ ।
कृष्णसङ्घट्टिनः केचिदासन्नामस्य चापरे ॥ २० ॥
आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः ।
यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥ २१ ॥
वहन्तो वाह्यमानाश्च चारयन्तश्च गोधनम् ।
भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः ॥ २२ ॥
रामसङ्घट्टिनो यर्हि श्रीदामवृषभादयः ।
क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप! ॥ २३ ॥
उवाह कृष्णो भगवान् श्रीदामानं पराजितः ।
वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यथायथं वयो बलाद्यनुरूपं द्वन्द्वीभूय ॥ १९ ॥

परिवृढौ नायकौ तत्र केचन कृष्णसङ्घट्टिनः कृष्णपक्षीयाः ॥ २० ॥ २१ ॥

वाह्यमानाः पृष्ठेनोह्यमानाः ॥ २२ ॥ २३ ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परमैश्वर्यविशेषगर्भां मधुरमधुरां लौकिकलीलामुक्त्वाऽधुना श्रीबलदेवद्वारा विहितां प्रकटैश्वर्यामलौकिकीमाह— पशूनित्यादिना । यः कोपि गोपस्तद्दिने गृहे तिष्ठन् तद्रूपीत्यर्थः ॥ १७ ॥

दाशार्हं इति प्रलम्बबकचाणूरेत्यादिना यदुकुलकदनं मुख्यतयाऽऽदौ निर्दिष्टस्य प्रलम्बस्य वधेन यदुकुलाहितविशेषापेक्षया तद्वेदने हेतुः सर्वदर्शनः सर्वज्ञः यतो भगवान् विचिन्तयन् वक्ष्यमाणप्रकारेण विचारयन् तस्य सख्यं सख्युः कर्म चेष्टामिति यावत् ॥ १८ ॥

तत्र तद्वधे निमित्ते प्रकर्षेणाह—प्रलम्बस्यापि मनोरमत्वात् विहारवित् यतः स एव तत्र सर्वज्ञोऽभिज्ञ इत्यर्थः ॥ १९ ॥

गोपा इति सत्यपि सख्यसामान्ये वर्गभेदेन तयोः पृथक्पृथक् तद्विशेषवतां तेषामसङ्कोचातिशयवत् क्रीडारसाय वैपरीत्येन परिवृढौ चक्रुः एवमेव च तयोर्मिथः प्रयासोपि विधुनः स्यात् यथा हरिवंशोक्तजलक्रीडायां स्वसुतायोपि श्रीबलरामपक्षे तत्सुताश्चात्मपक्षे तेन कृताः अतः श्रीदामादयो रामसङ्घट्टिनो जाताः रामेति रमणाभिप्रायेण जनार्दनेति तत्क्रीडाभिः स्वमनोरथपूरकतया सर्वेषांदयमानत्वाभिप्रायेण ॥ २० ॥

विविधाः हरिणा क्रीडनाद्यादयः तथा च श्रीविष्णुपुराणे—

"हरिणा क्रीडनं नाम बालक्रीडनकं ततः ।
प्रक्रीडिता हि ते सर्वे द्वौ द्वौ युगपदुत्पतन्" ॥

इति ॥ २१ ॥

वाह्यमाना ऊह्यमानाः स्कन्धारूढाः भाण्डीरकमिति संज्ञायां कन् नाम प्रसिद्धौ स च वर्णितः श्रीहरिवंशे—

"ददर्श विपुलोदग्रशाखिनं शाखिनाम्वरम् ।
स्थितं धरण्यां मेघाभं निबिडं दलसञ्चयैः ॥
गगनार्द्धोच्छ्रिताकारं पवनाभोगकारिणम् ।
नीलचित्राङ्गवर्णैश्च सेवितं बहुभिः खगैः ॥
फलैः प्रवालैश्च घनैः सेन्द्रचापघनोपमम् ।
भवनाकारविटपं लतापुष्पसुमण्डितम् ॥
विशालमूलावनतपवनाम्भोदधारिणम् ।
आधिपत्यमिवान्येषां तस्य देशस्य शाखिनाम् ॥
कुर्वाणं शुभकर्माणं निरोधर्ममनामयम् ।
न्यग्रोधं पर्वताग्राभं भाण्डीरं नाम नामतः" ॥ इति ।

तत्र गमनं निदाघक्रीडौचित्यात् ॥ २२ ॥

यर्हि ये ये श्रीदामवृषभादयः क्रीडायां जयिनो बभूवुस्तर्हि तांस्तान् कृष्णादय ऊहुरित्यन्वयः ॥ २३ ॥

भगवानिति युष्माकं यो भगवान् सोऽस्माकं व्रजवासिभिः पराजित इति नर्म च व्यञ्जितं रोहिण्याः सुतमिति तेन तत्प्रभावाज्ञानस्यापेक्षया ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सङ्घट्टिनः संसर्गिणः ॥ २०—२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वदर्शनः हेतुगर्भमिदं सर्वज्ञत्वात् तं जिघांसुमागतं गोपरूपिणं प्रलम्बासुरं विद्वानपि सद्यो न तं जघानेति वाक्यशेषः किन्तु उपायान्तरेण तस्य वधं विचिन्तयन् तेन सह सख्यमेवाभ्यमोदत अभ्यमन्यत ॥ १८ ॥

तत्र गोपानाहूय तद्वधोचितविहारक्रमाभिज्ञः प्राह, उक्तिमेवाह—हे गोपा इति । यथायथमाकृतिवयोबलानुरूपं द्वन्द्वीभूय सङ्घद्वयं भूत्वा विहरिष्याम इति ॥ १९ ॥

तत्रैवं भगवतोक्ते सति गोपाः रामकृष्णौ परिवृढौ सङ्घयोः नायकौ चक्रुः ततः केचिद्गोपाः कृष्णपक्षीया बभूवुरपरे तु रामस्य सङ्घट्टिनः ॥ २० ॥

एवं भूत्वा वाह्यवाहकेतिभावप्रधानो निर्देशः वाह्यत्ववाहकत्वे लक्षणे फले यासु ताः वाह्यवाहकाश्च जयपराजयकृता याश्चेति तथाभूता विविधाः क्रीडाश्चेरु', वाह्यवाहकलक्षणा इत्येतदेव विशदयति–यत्रेति । यत्र यासु क्रीडासु जेतार आरोहन्ति पराजितास्तु वहन्ति इति ॥ २१ ॥

एवं क्रीडायां अनेन हेतुना वाह्यमानाः पराजयेन हेतुना वहन्तश्च गोधनं चारयन्तश्च कृष्णप्रभृतयो गोपाः शनैः भाण्डीराख्यं वटं वृक्षं जग्मुः ॥ २२ ॥

तत्र यर्हि यदा श्रीदामादयो रामसङ्घट्टिनः क्रीडायां जिग्युस्तदा तान् हे नृप ! कृष्णादयः ऊहुरुढवन्तः ॥ २३ ॥

तत्र भगवान् श्री कृष्णः पराजितः श्रीदामानमुवाह चन्द्रसेनस्तु वृषभं तथा श्रीकृष्णसङ्घट्टी प्रलम्बासुरः रोहिणीसुतं बलदेवम् उवाह ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यस्य यो विहारस्तं वेत्तीति ॥ १९ ॥

परिवृढौ नायकौ कृष्णसङ्घट्टिनः कृष्णपक्षीयाः ॥ २० ॥

वाह्यवाहकत्वं विशदयति—तत्रेति । उवाह कृष्णो भगवानित्यत्र व्यत्ययेन नेतव्यः श्रीदामा कृष्णमुवाहेति कुत एवं विकल्प्यते ? हरिवंशादिवचनात् तथाप्ययं दुराग्रह इति न वक्तव्यम् "बाहुमानविरोधे तु व्यत्यासः शब्दतोऽर्थतः" इत्यादिनिर्णयवचनात् ॥ २१-२२-२३-२४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वाह्यमाना ऊह्यमानाः ॥ २२—३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं क्रियामयान् संस्काररूपांश्च दोषान् निवर्त्य अन्तःकरणदोषाभिमानिनीं दैत्यभूतां निवारयितुमुपाख्यानमारभते, पशूंश्चारयतोरिति । गोपैः सह पशूंश्चारयतोः सतोः प्रलम्बः प्रगात् अन्तःकरणमेव रूपसमर्पकमिति गोपरूपी सः प्रकर्षेण लम्बः मुक्तिपर्यन्तमनुवर्तमानः तज्जिघांसया भगवान् तं विद्वानपि तत्सख्यमन्वमोदतेति सम्बन्धः गत्वा मारणीयः सः तत्र स्वयमागते कः सन्देहः अतः प्रथमत एव जिघांसयेत्युक्तं सम्भवति अविरोधव्याख्याने विरुद्धं न व्याख्येयम् ॥ १७ ॥

तं प्रलम्बं दुष्टं भगवान् ज्ञात्वा तत्र प्रवेशेनैव नश्य इति सञ्चिन्त्य तथैव लीलायाः प्रारब्धत्वात् भगवतः सर्वसख्यस्य सर्वात्मकस्य दोषत्वेन दैत्यहननादप्यकरणात् सख्यं कृतवान् अत एव भगवता न मारितः देहोत्पन्नश्च स्वतो न मार्यन्ते यथौपधं तथा बलभद्रः व्यवहारे च स कृष्णसम्बन्धी गोपालानां मध्ये कृष्णस्यार्द्धं तस्य प्रवेशात् अनेनैव प्रकारेणाक्लिष्टतया वधो भवतीति विचारं स्तनां कृतवान् ॥ —१८ ॥

ततः सख्यकरणानन्तरं वधप्रकारं कृतवानित्याह-तत्रोपाहूयेति सर्वानेव गोपालानुपाहूय नानाविधक्रीडायां प्रवृत्तान् क्रीडाविशेषमुपदेष्टुं प्राह—तत्रोपाहूयेति । यत्र समभूमौ तादृशी लीला भवति तत्र सर्वानुपाहूयाग्रे वक्ष्यमाणं प्राहेति सम्बन्धः यतो भगवानाक्लिष्टकर्मा प्रकर्षेण स्पष्टमेवाह गोपालानां विश्वासार्थं स्वज्ञातक्रीड-परित्यागार्थं च विशेषणं विहारविदिति सर्वानेव विहारान् वेत्ति भगवद्वाक्यमेवाह—हे गोपा विहरिष्याम इति । अद्वन्द्वभूता अपि द्वन्द्वीभूय यथा येन सह यो द्वन्द्वं प्राप्तः तथा तेनैव सह ( स ) जयमपजयं वा प्राप्नोतीति यथा तथा यथा यथं वा यथासुखमित्यर्थः यथातथमिति पाठेऽपि क्रियाविशेषणमात्रत्वं विशेषः ॥ १९ ॥

भगवदुक्तास्तथैव कृतवन्त इत्याह—तत्र चक्रुरिति । उभौ तत्र क्रीडायां मुख्यौ क्रियेते पश्चात् द्वौ द्वौ समागच्छतः द्वाभ्यां सङ्केतं कृत्वा तत्र य एव यमर्थं वृणीते तेन सङ्केतितः तदीयो भवति एवं सर्वे गोपालाः प्रकारद्वयेन द्विविधा भवन्ति तदा कृष्णसङ्घट्टिनः केचिदासन्रामस्य चापर इति । तत्रापि प्रथममागतौ मुख्यकार्यं कुरुतः श्रीदामा प्रलम्बश्च उभौ समानौ द्वन्द्वीभूतत्रापि श्रीदामा बलभद्रेण गृहीतः बलकार्यं कर्तुं प्रलम्बो भगवत्कार्यम् एतौ मन्त्रिणाविव अन्यथा जयपराजययोः कृष्णरामावेवान्योन्यं वाहकौ स्यातां तुल्यत्वात् नान्यतरत्वस्य तया वहनं तथा सत्यतिप्रसङ्गात् कलहसम्भवाच्च नान्यः मुख्यो वाहकत्वपक्षः अन्यथा भगवतोऽपि वाहकत्वं न स्यात् मुख्ययोरेकः क्रीडति एको वहति अथवा क्रीडाविशेषे सर्वे सर्वान् वहन्तीति तत्रैकपादगमने क्रीडान्तरे वा मध्ये द्वितीयपादभूस्पर्शे पराजितो भवति तत्र प्रतियोगिनस्तान् भ्रामयन्ति यदा स्खलनं भवति येन प्रतियोगिना भ्रामितः स्पृशति भूमिं वहति ॥ २० ॥

तदाह—आचेरुर्विविधाः क्रीडा इति । वाह्यवाहकत्वे निमित्तमाह-यत्रारोहन्तीति । जेतारः आरोहन्ति पराजिता वहन्ति नाति निसर्गतः पराजितः पराजित एव भवति अतः कदाचित् कश्चिद्वहति वाह्यते च ॥ २१ ॥

तदाह—वहन्तो वाह्यमानाश्चेति मध्ये सर्वेषामेव क्रीडायां प्रविष्टत्वात् गवां चारणाभावे चतुर्विधपुरुषार्थहानिः स्यादिति आशङ्क्याह-चारयन्तश्च गोधनमिति । गाव एव धनं चकारादन्यदपि कुर्वन्तो भाण्डीरके वने मुख्यो वटोऽस्ति तदाश्रयार्थं करः तत्र समा च भूमिः प्रलम्बस्य सहायान्तरस्यापि तत्र दागतस्यानागमनं भवति अतो भाण्डीरकं नाम वटं सर्वे

अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः ।
वहन् द्रुततरं प्रागादवरोहणतः परम् ॥ २५ ॥
तमुद्वहन् धरणिधरेन्द्रगौरवं महाऽसुरो विगतरयो निजं वपुः ।
स आस्थितः पुरटपरिच्छदो बभौ तडिद्द्युमानुडुपतिवाडिवाम्बुदः ॥ २६ ॥

**श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।**

वपुः इममर्थं भगवानेव जानातीति कृष्णपुरोगमाः कृष्ण एव पुरोगमो येषां तत्र मध्येऽपि क्रीडां कुर्वाणा एव गताः ततो यदा पराजयस्तदा वहनम् ॥ २२ ॥

तदाह—रामसङ्घट्टिनो यर्हीति । अयोऽत्र निरूपिता अन्तःकरणगुणानां त्रैविध्यज्ञापनाय रामो यथा तथा श्रीदामा वृषभश्च रामो राजसः श्रीदामा सात्त्विकः वृषभस्तामसः तत्र यदा ते क्रीडायां जयिनः तांस्तान् कृष्णादयः ऊहुः—

"भक्तिसहकर्मतासिद्ध्यर्थं हीनत्वं कुरुते क्वचित् ।
धर्मप्रधानो भगवानिति ज्ञापयितुं तथा" ॥

यथा बलभद्रः प्रलम्बारूढो भवेत्तदर्थं भगवान् श्रीदामानमुवाह नाम्ना लक्ष्मी वनमाला रूपत्वं तस्यातोऽलङ्कारार्थं वहनमुचितं पराजित इति निमित्तम् अन्यस्यापि वहनार्थं तदाह—वृषभं भद्रसेनस्त्विति । मुख्यवत्तृतीयस्य तत्पूर्ववद्वहनमिति ज्ञापयति प्रलम्बस्तु रोहिणीसुतं मातृनाम्ना व्यपदेशस्तदज्ञानज्ञापनाय ॥ २३—२४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।**

चारयतोः सतोः गोपरूपी यः कोपि गोपस्तद्दिने किञ्चित् कार्यार्थं गृहे स्थितस्तद्रूपधारी तयोर्जिहीर्षया ॥ १७ ॥

विचिन्तयन् अनेनैव प्रकारेण सङ्घातयिष्यामीति चिन्तया निश्चिन्वन् ॥ १८—१९ ॥

परिवृढौ नायकौ कृष्णरामौ सङ्घट्टौ यूथस्तद्गताः ॥ २० ॥

किन्तु वाह्यवाहकलक्षणाः अस्यार्थं विवृणोति—यत्रेति । तेन यद्येषां रामसङ्घट्टिनां मध्ये कोऽपि कृष्णसङ्घट्टिनां कमपि यदि स्पृशति तदा रामसङ्घट्टिनः सर्वं एव पराजिताः यथायथं वहन्ति एवं जयन्ति चेत् कृष्णसङ्घट्टिनस्तान् रामसङ्घट्टिनो वहन्ति एवमेव नेत्रबन्धादिखेलायामपि ॥ २१ ॥

भाण्डीरकं वटं जग्मुरिति स एव वटो अवरोहणं स्थानं कल्पितः तत्रैव । तथैवारोहस्थलमपि तत्समीपवर्त्ति क्षेत्रम् ॥ २२—२४ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

कृष्णस्वभावं दृष्ट्वा हनिष्यामीत्याशयेन गोपरूपी अगात् ॥ १७ ॥

तत्सख्यमन्वमोदतेति निजस्वभावो दर्शितः तथापि कौटिल्यापरित्यागे वधं तस्य विचिन्तयन् ॥ १८ ॥

यथायथं यथायोग्यम् ॥ १९ ॥

परिवृढौ यूथनाथौ ॥ २०—२४ ॥

**भाषा टीका ।**

गोपन कूं संग लेके ता श्रीवृन्दावन में गऊन कूं चरावनवारे श्रीकृष्ण बलराम दोऊ भैयान कों हरण करवे की इच्छा सूं गोप को रूप धारण करिकें प्रलम्बासुर आवत भयो ॥ १७ ॥

सबरी बातन के जाननवारे दाशार्ह वंश में प्रकट भये भगवान् श्रीकृष्णचंद्र कपट वेष में वा प्रलंबासुर कों जान भी गये तथा वाके मारिवे को उपाय विचार कें मित्र बनायवे की इच्छा सूं वाकी बडाई करन लगे, कि—हे मित्र ! भली भई तू जल्दी आई गयो ॥ १८ ॥

ता समय सब खेलन कूं जाननवारे श्रीकृष्णचन्द्र ग्वाल बालन कूं बुलावत भये, हे ग्वाल बालो ! हम सब अपनेन में बराबरी के दोनों मिल २ के खेलेंगे ॥ १९ ॥

ऐसे सुनिकें सबरें ग्वाल बाल इकट्ठे होयकें श्रीकृष्ण बलराम कूं मुख्य बनावत भये, कोई ग्वाल श्रीकृष्णचन्द्र की ओर होत भये, और कितनेई दाऊजी ओर भये ॥ २० ॥

पीठ पै चढिवो और चढाव के ले चलिवो या तरियां अनेकन प्रकार के खेल खेलत भये, जा खेल में जीतनवारे चढिकें चलें, और हारिवे वारे पीठ पै चढाय के (घोडा बनकें) ले चलें ॥ २१ ॥

या प्रकार चढत चढावत गायन कूं चरावत कृष्ण सों आदि लेके सिगरे ग्वाल बाल भांडीर नामक वट को जात भये ॥ २२ ॥

या खेल में दाऊ के साथ के जब श्रीदामा वृषभ इत्यादिक सगरे बालक जीत गये तब हे नृप ! उन सबन कों कृष्ण आदिकन नें [चट्टी दई] अपनी पीठ पै बैठारि के भांडीर वट को पहुंचाये ॥ २३ ॥

भगवान् श्रीकृष्ण जब हार गये तब श्रीदामा कूं अपनी पीठ पै चढाय कें लेचले, ऐसेई भद्रसेन वृषभ को चढाय के लेचल्यो, और प्रलम्बासुर रोहिणी सुत श्रीबलदेवजी कूं चढाय के लेचल्यो ॥ २४ ॥

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

कृष्णदृष्टिवञ्चनाय अवरुह्यतेऽस्मिन्निति अवरोहणं मर्यादा ततः परं दूरमगात् ॥ २५ ॥

धरणिधरेन्द्रवद्गौरवं यस्य तन्निजमासुरं वपुरास्थितः पुरटपरिच्छदः सुवर्णालङ्कारः तडिद्द्युमान्विद्युद्दीप्तिमानिलालङ्कारोपमा उडुपतिवाडिति रामोपमा उडुपतिं वहतीत्युडुपतिवाट् यदि ययोचितस्थानेषु स्थिता विद्युतो भवन्त्युपरि चोडुपतिस्तदा सोऽम्बुदो यथा भाति तद्वद्बभाविलर्थः ॥ २६ ॥

निरीक्ष्य तद्वपुरलमम्बरेचरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम् ।
ज्वलच्छिखं कटककिरीटकुण्डलत्विषाऽद्भुतं हलधर ईषदत्रसत् ॥ २७ ॥
अथागतस्मृतिरभयो रिपुं बलो विहायसार्थमिव हरन्तमात्मनः ।
रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अलमतिवेगेन प्रदीप्ते दृशौ यस्मिन् वपुषि तत् भ्रुकुटितट-संलग्ना उग्रा दंष्ट्रा यस्मिंस्तत् प्रदीप्तदृक् भ्रुकुटितटं यस्मिन् उग्रा दंष्ट्रा यस्मिंस्तच्च तच्चेति वा ज्वलन्त्यः शिखाः केशा यस्मिंस्तत् ॥ २७ ॥

आगतस्मृतिरभय इवात्मनः सार्थं गोपसमूहं विहाय हरन्तं रिपुमहनत् । यद्वा, विहायसाऽऽकाशमार्गेणात्मनः आप्तमर्थमिव हरन्तमिति वज्ररंहसा वज्रवेगेन मुष्टिना ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तथापि कंसस्य सुखार्थं श्रीकृष्णं हर्तुं कथमयं नाचेष्टतेत्याह—अविषह्यमिति । श्रीरामद्वारा मारयितुं श्रीकृष्णेन तत्तेज आवृत्य स्वतेजस आविष्कृतेः अत एव कृष्णपक्षीयो भूत्वा बलदेवं वहन् सन् यतो दानवेषु पुङ्गवः बलादिना श्रेष्ठः अवरोहणतः भाण्डीरस्कन्धात् तथा च श्रीविष्णुपुराणे—

"ते वाहयन्तस्त्वन्योन्यं भाण्डीरस्कन्धमेत्य वै ।
पुनर्निवर्त्तिताः सर्वे ये ये पूर्वं पराजिताः ॥
सङ्कर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः ।
न तस्थौ अजगामैव सचन्द्र इव वारिदः" ॥

इति ॥ २५ ॥

धरणिधरेन्द्रः सुमेरुस्तस्मादपि गौरवं भारो यस्य सीमाति-क्रमे जाते विहस्य विस्मित्य विशङ्क्य च क्रमेण भारातिरेकप्रकटनात् उत् उच्चैः स्कन्धे वहतीत्यर्थः । स महासुरोऽपि अत एव निजमासुरं वपुरास्थितः तथा च तत्रैव—

"असहन् रौहिणेयस्य स भारं दानवोत्तमः ।
ववृधे सुमहाकायः प्रावृषीव बलाहकः" ॥

इति ॥ २६ ॥

ईषदत्रसत् बाल्यक्रीडावेशेनेति पूर्वपूर्ववत् ॥ २७ ॥

अथानन्तरमिति—

"किमयं मानुषो भावो व्यक्तमेवावलम्ब्यते ।
सर्वात्मन् सर्वगुह्यानां गुह्यगुह्यात्मना त्वया ॥"

इत्यादिकात् श्रीविष्णुपुराणोक्तात्तं प्रति श्रीकृष्णस्य वचनात् सद्य एवागता स्मृतिः दैत्यवधार्थनिजावतारप्रयोजनं यस्य सः बलो मुष्टिना रिपुमहनत् अहन् कः केन कमिव सुराधिपो वज्ररंहसा गिरिमिव ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अविषह्यं कृष्णम् अविष्टभ्यं मन्यमानो बलभद्रं वहन् द्रुततरं प्रागादित्यन्वयः ॥ २५ ॥

विहतरयः नष्टवेगः दूरं गतेन साशङ्कत्वात् अवरोहणात्‌परतः ताडिद्द्युमान् विद्युद्दीप्तिमान् उडुपतिवाऽम्बुद इव बभावित्यन्वयः ॥ २६—२८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तावद्रामसङ्घट्टी किं न बभूव प्रलम्ब इतीमां शङ्कां निराकुर्वंस्तं विशिनष्टि—कृष्णमविषह्यं सोढुमशक्यं व्योमासुरवृत्तान्तस्मरणेन दुर्वहं मन्यमानः श्रीकृष्णसङ्घट्टी भूत्वा रामेण पराजितस्तमेवोवाहेत्यर्थः । यद्यहं रामसङ्घट्टी भवेयं तर्हि यदा कृष्णेन पराजितस्तं वहेयं तर्हि व्योमासुरवन्म्रियेयेत्यभिप्रायेण कृष्णसङ्घाट्टी बभूवेत्यभिप्रायः रोहिणीसुतं वहन् अवरुह्यतेऽस्मिन्नित्यवरोहणं मर्यादास्थानं ततःपरं दूरं द्रुततरं यथा तथा प्रागात् ॥ २५ ॥

धरणिधरेन्द्रवत्पर्वतवद्गौरवं यस्य तं बलदेवं वहन् स महासुरः प्रलम्बः विहतरयः नष्टवेगः निजं स्वासाधारणं वपुरास्थितः सन् स्वर्णालङ्कारः बभौ तडिद्द्युमानित्यलङ्कारोपमा उडुपतिमानिवेति रामोपमा यदि यथोचितस्थानेषु विद्युतो भान्ति उपरि चोडुपतिस्तदा सोऽम्बुदो यथा भवति तद्वद्बभावित्यर्थः ॥ २६ ॥

निरीक्ष्येति हलधरः बलदेवस्तु तद्वपुर्निरीक्ष्य किञ्चिदभिभेद, कथम्भूतम् ? अम्बरेचरदाकाशस्पर्शी अत्युन्नतमित्यर्थः । अलमतिवेगेन प्रदीप्ते दृशौ यस्मिन् भ्रूकुटितटलग्ना उग्रदंष्ट्रा यस्मिन् तच्च तच्चेति वा ज्वलन्त्यः शिखाः केशाः यस्मिन् कटकादीनां त्विषा अद्भुतं चित्रम् ॥ २७ ॥

अथागतस्मृतिर्बलासुरस्वशक्त्यादिज्ञानोऽत एवाभयः बलदेवः आत्मनः सार्थं सहायं गोपसमूहं विहाय दूरतो हरन्तं रिपुं रुषा शिरसि दृढेन मुष्टिना जघान यथा सुराधिप इन्द्रो वज्ररंहसा वज्रवेगेन गिरिं तद्वत् ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रलम्बः कृष्णं विहाय राममवहत्तत्र किं कारणमत्राह—अविषह्यमिति ॥ २५ ॥

धरणिधरेन्द्रः पर्वतराजस्तद्वद्गौरवम् अतिभारवत्त्वं यस्य स तथा तं पुरटपरिच्छदः स्वर्णालङ्कारः तडिता द्युमता भासि-खेन च संयुक्तः तडिद्युमान् उडुपतिश्चन्द्रः तद्वानम्बुद इतीयमाशङ्का अभूतापमा यद्वा तडिद्द्युमान् तडिता युक्तो

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मेघस्थाने प्रलम्बः तडित्स्थाने पुरटपरिच्छदः चन्द्रस्थानीयो रामः ॥ २६ ॥

अम्बरेचरमित्यलुक् ॥ २७ ॥

अथ कृष्णस्तवाजन्तरम् आगतस्मृतिः उपात्तमूलस्मरणः वज्रंहसा वज्रवेगेन ॥ २८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

ततो यज्जातं तदाह—अविषह्यमिति। प्रलम्बेन हि ज्ञातं भगवता सचबकरणात् भगवानविषह्यः न केनापि सोढुं शक्यः अतोऽस्वतरस्त्वाच्युपद्रवः स्वकार्यफलसाधक इति दानवपुङ्गवः दानवानां मध्ये श्रेष्ठः दानवारिः भगवन्तं कृष्णं परित्यज्य रोहिणीसुतं वहन् अवरोहणतः परमपि द्रुततरं प्रागात् शनैर्गमने भगवतः सहगमनसम्भवात् पश्चाद्गमनं न सम्भवेत् अवरोहणपर्यन्तं मर्यादैवेति ततः परं गतः ॥ २५ ॥

स्वार्यसिद्धिं मत्वोपास्यां मायां परित्यज्य तत्कृतं भगवति स्वयं चाहङ्कारदेवतायामपहृतायां दोषो दृढो भवतीति विचिन्त्य दैत्यरूपमेव हतवानित्याह—तमुद्वहन्निति। बलभद्रोऽपि मर्यादातिक्रमे भगवदाविष्टो जातः ततो धरणिधरेन्द्रवत् मेर्वादिपर्वतवत् गौरवं यस्य तस्य वहने सामर्थ्यं महासुर इति प्रलम्बो हि युवः तथापि विगतरयो जातः ततः कृत्रिमवपुषा गमनमशक्यमिति मत्वा निजं वपुरासुरं वपुरास्थितः तस्य वपुर्वर्णयति, पुरटपरिच्छदो यथाविति। पुरटं सुवर्णं तदेव परिच्छदो भूषणादिकं यस्य तादृशः सन् बभौ स्कन्धे बलभद्रः बलभद्रस्यापि मुकुटादिकं शीघ्रगमने स्वमुकुटं तडिद्वत् भाति बलभद्रमुकुटं द्युमानिव द्युमान् सूर्यः तडित् द्युमांश्च यस्य उडुपतिश्चन्द्रः बलभद्रोऽपि श्वेतमन्द्रतुल्यः तद्वानुडुपतिमान् अम्बुद इव स्वयं श्यामः वेगवांश्च अमृतोपमेयं तडित्सूर्यचन्द्रा एकदैकस्य मेघस्य सम्बन्धिनो न भवन्तीति ॥ २६ ॥

ततो बलभद्रकृत्यमाह—निरीक्ष्येति। तस्य वपुरत्यर्थं निरीक्ष्य अवमाकाशे चरन् गच्छन् ईषदत्रसदिति सम्बन्धः तत्र हेतुः हलधर इति तस्य रूपं वर्णयति। प्रदीप्ता दृग्यस्य भ्रुकुटितटं उग्रा दंष्ट्रा यस्य भाविष्क्रोधमुखविकारयुक्त इत्यर्थः। ज्वलन्ती शिखा यस्येति भास्करं दीपशिखायुक्तं कटककिरीटकुण्डलानां त्विषा अद्भुतमेतादृशमपूर्वं दृष्ट्वा हलधरोऽपि गृहीतहलायुधोऽपीषदत्रसदिति या त्रासे हेतुः बलाद् अत्र कल्पान्तरे भगवता ज्ञापित इति ॥ २७ ॥

प्रकृते तु भगवदाविष्टो यत्कृतवांस्तदाह—आगता स्मृतिर्यस्येति स्मृतिः केवलव्युदासार्थः अत एवाभयः अत्रस्तो जातः विहायसा आकाशमार्गेण हरन्तं रिपुमात्मनो रिपुत्वात् स्वभायतो रुषा शिरसि दृढेन मुष्टिना रुषा अहनत् मुष्टिप्रहारं कृतवान् ननु मयतमात्रेण कथं हननं तत्राह, सुराधिपो गिरिमिवेति सर्वलोकापकारित्वात् वज्रवेगेन यथेन्द्रेण गिरिर्हतः तथायमपि लोकापकारित्वादेव हतः रंहसेति प्रतीकाराकरणार्थः तावन्मात्रेण देवा हननशङ्कापि निवारिता ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी।

कृष्णमविषह्यं मन्यमान इलत एव रामं हर्तुमनाः कृष्णपक्षीयोऽभूदिति भावः। अवरुह्यतेऽस्मिन्निन्त्यवरोहणं मर्य्यादास्थानं कृष्णदृष्टिवञ्चनाय ततः परमपि प्रागात् ॥ २५ ॥

तमुत्कटयत्नतयैव वहन् यतो धरणिधरेन्द्रः सुमेरुस्तद्वद्गौरवं यस्य तं तस्य श्रीमातिरिक्तगमनदर्शनेन विस्मित्य स्वभावाधिक्यप्रकटनात् ततश्च वोढुमसामर्थ्यादेव विगतवेगः ततश्च तेन वपुषा स्वमहापराक्रमम् अमितमालक्ष्य स निजं वपुरास्थितः बभौ पुरटपरिच्छदः सुवर्णालङ्कारवान् अम्बुदस्तडिद्द्युतिमान् उडुपति वहतीति सः मत्रासुरस्त्वाम्बुद उपमा स्वर्णालङ्कारस्य तडिद्द्युतिः बलदेवस्योडुपतिः ॥ २६ ॥

अलमतिवेगेन प्रदीप्ते दृशौ यस्मिन् भ्रुकुटितटमेतस्मृग्रा उग्रा दंष्ट्रा यस्मिंस्तच्च तच्च तत् वपुर्निरीक्ष्य ईषदत्रसदिति साक्षात् परमात्मनोऽपि तस्य त्रासोऽयं तदैश्वर्यज्ञानस्य कृष्णेनैव स्वयोगमायया आवरणात् तत्राम्बुदाकारमसुरवपुरेतत्तथा यद्येनां यथा मदग्रजवपुश्चन्द्रप्रदेशे पयोधिरिदिति कृष्णस्य कौतुकदिदृक्षैव कारणं तदैश्वर्यज्ञानावरणे तु असुरवपुःप्राकट्यारम्भ एव नायं गोपः किन्त्वसुर एवेति विदुषा बलदेवेन सद्यस्तद्वधे तत्कौतुकं न सिद्ध्येदिति ज्ञेयम् ॥ २७ ॥

लब्धाभीष्टः कृष्णः साम्प्रतं त्रिभ्यतीति सति तत्र पुनरैश्वर्यज्ञानं सहसैवार्पयामासेत्याह अथागतस्मृतिरिति—

किमयं मानुषो भावो व्यक्तमेवावलम्ब्यते।

सर्वात्मन् सर्वगुह्यानां गुह्यगुह्यात्मना त्वया॥

इति विष्णुपुराणोक्तकृष्णवाक्यालुब्धनिजैश्वर्यज्ञानः विहायसा आकाशमार्गेण आत्मनः प्रायमर्थं धनं हरन्तमिव रिपुं मुष्टिना अहनत् कः केन कमिव सुराधिपो वज्ररंहसा गिरिमिव ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अवरुह्यतेऽस्मिन्नित्यवरोहणं मर्य्यादास्थानम् ॥ २५ ॥

धरणिधरेन्द्रवद्गौरवं गुरुत्वं यस्य तं वलमुद्वहन् विगतवेगः निजमासुरं वपुरास्थितः पुरटपरिच्छदः कनकाभरणः तडित् द्युमानुडुपतिवाडम्बुद इव बभौ तडिद्द्युमान् तडिद्दीप्तिमान् इत्याभरणोपमा उडुपतियाडिति बलोपमा ॥ २६ ॥

अलमतिवेगेनाम्बरेचरत् आकाशगतम् प्रदीप्तदृक् भ्रुकुटितटं यस्मिन् उग्रा दंष्ट्रा तच्च तच्च तत् ॥ २७ ॥

विहायसा आकाशमार्गेण आत्मनोऽर्थं हरन्तमिव वज्ररंहसा वज्रवेगेन मुष्टिना यद्वा वज्रस्य रंहसा गिरिमिवेत्यन्वयः ॥ २८ ॥

---

भाषा टीका।

दानवन में श्रेष्ठ ऐसो प्रलंबासुर सो श्रीकृष्ण कूं जोरावर मानि कें दाऊजी को जहां उतारिवे की ठहरी तहां तें और आगे लेकें जातो भयो ॥ २५ ॥

पर्वत सदृश गरुवे श्रीबलदेवजी कूं वो महा असुर जो प्रलम्बासुर है सो लेकें चल्यो परन्तु जब भार नहीं सहसक्यो तब अपनो निजरूप धारण करतो भयो, तब तौ सोनेन के कीट कुण्डल धारें वो असुर कैसो जान्यो

स आहतः सपदि विशीर्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽसुरः ।
महारवं व्यसुरपतत्समीरयन् गिरिर्यथा मघवत आयुधाहतः ॥ २९ ॥
दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना ।
गोपाः सुविस्मिता आसन् साधुसाध्विति वादिनः ॥ ३० ॥
आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तदर्हणम् ।
प्रेत्यागतमिवालिङ्ग्य प्रेमविह्वलचेतसः ॥ ३१ ॥
पापे प्रलम्बे निहते देवाः परमनिर्वृताः ।
अभ्यवर्षन् बलं माल्यैः शशंसुः साधुसाध्विति ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे प्रलम्बवधो
नामाष्टादशोऽध्यायः ॥ १८ ॥

भाषा टीका ।

जातो कि—जैसे बीजुरी की बिजलिवारो मेघ चन्द्रमा कूं लिये चल्यो जातो होय ॥ २९ ॥

दाऊजी ने जब वा के देहकूं आकाश में चलतौ देख्यो और तालु में जरते से लाल २ नेत्र वारी जाकी भृकुटी चढी २ उग्र जाकी डाढ चोटी जाकी अग्नि के ज्वाला सदृश रंग वारी ऐसे भयानक रूप पैहू किरीट कुण्डल जो पहिरे ताकी कांति सो अद्भुत मालूम होतौ ऐसे वाके रूप कों देखिकें बलदेवजी नेक डरसे गये, मनमें विचारी कि, एका एकी ये कहा भयो ? ॥ २७ ॥

नेक भय के आयवे सों ठंढाई जो उतरगई तासों पीछैं सुधि आई कि, अरे ये तो असुर है तबतो निर्भय होयके जैसे आकाश मार्ग होकें चन्द्रमा लिये जातो होय ता रीत सों आप को लिये चल्योजाय रह्यो जो वैरी ताके माथे पै एक गाढी मुट्ठी बाधिकें इन्द्र जैसे पर्वत पै वज्र छोडै तारीत सों वज्रसरी की एक जोरसे दई ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपस्मृतः गतस्मृतिः महारवं समीरयन् ॥ २९ ॥ ३० ॥
तदर्हणं प्रशंसार्हम् ॥ ३१ ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अपस्मृत इति अपस्मारव्याधिनेवातिव्याकुलः सन्नित्यर्थः ॥२९॥

बलशालिनेति तत्प्रभृतिबलविशेषाभिव्यक्तेः तथा च श्रीहरिवंशे—

"बलं तु बलदेवस्य तदा भुवि जना विदुः ।
प्रलम्बे निहते दैत्ये देवैरपि दुरासदे" ॥ इति

सुविस्मिताः सन्तः तत्कपटगोपवेषादिना ॥ ३० ॥

आशिष इत्थं चिरं सानुजः सुखं विहरन्नस्मान् पाहीत्यादिप्रकाराः अभि अभितः तत्र तत्र सर्वत्रैव हेतुः प्रेमेति ॥ ३१ ॥

न केवलं त एव सन्तुष्टा बभूवुः देवा अपि परमानन्दं प्राप्ता इत्याह-पाप इति । परमदुष्टे जगदुपद्रावक इत्यर्थः । नितरां हते अपुनरावृत्तिमुक्तिप्राप्तेः तथा च द्वितीयस्कन्धे-

ये च प्रलम्बखरदर्दुरकेश्यरिष्ट—
मल्लेभकंसयवनाः कुजपौण्ड्रकाद्याः ।
अन्ये च साल्वकपिबल्वलदन्तवक्र—
सप्तोक्षसम्बरविदूरथरुक्मिमुख्याः ॥
ये वा मृधे समितिशालिन आत्तचापाः—
काम्बोजमत्स्यकुरुसृञ्जयकैकयाद्याः ।
यास्यन्त्यदर्शनमलं बलपार्थभीम—
व्याजाह्वयेन हरिणा निलयं तदीयम् ॥ इति.

अत्र केचिदमलदर्शनो ब्रह्मसायुज्यादि केचित्तन्निलयमिति विवेचनीयम् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अपस्मृतः अपगतस्मृतिः व्यसुः निष्प्राणः ॥ २९—३२ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सोऽसुरः प्रलम्बः आहतस्ताडितः सपद्येव भग्नशिराः मुखाद्रुधिरं वमन्नुद्गिरन्नपस्मृतः अपगतं स्मृतं स्मृतिर्यस्य सः महारवम् उच्चैः स्वरमीरयन् व्यसुर्गतप्राणो न्यपतत् यथा मघवत इन्द्रस्यायुधेन आहतो गिरिस्तद्वत् ॥ २९ ॥

बलशालिना बलदेवेन हतमसुरं दृष्ट्वा विस्मिता बभूवुः ॥ ३० ॥

आशिषः प्रयुञ्जानाः प्रशंसार्हं तं बलदेवं प्रशशंसुः मृतिं प्राप्य पुनरागतमिवालिङ्ग्य प्रेम्णा विक्लवान्यधृष्टानि चेतांसि येषां ते प्रशशंसुरित्यन्वयः ॥ ३१ ॥

परमनिर्वृताः नितरां हृष्टाः देवाश्च माल्यैः पुष्पैर्बलदेवं पापे सर्वदुःखकरे प्रलम्बे निहते सति अभ्यवर्षन् साधुसाध्विति प्रशशंसुश्च ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

महारवं समीरयन् व्यसुः गतप्राणः ॥ २९ ॥

बलशालिना रामेण राविणः वादिनः ॥ ३० ॥ ३१ ॥

माल्यैः पुष्पैः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टादशोऽध्यायः ॥ १८ ॥
[ विजयध्वजरीत्या पञ्चदशः ]

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टादशोऽध्यायः ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो यज्जातं तदाह—स आहत इति। समन्तादाहतः सपद्येव शीर्णमस्तको जातः ततः मुखाद्रुधिरं वमन् अन्तर्गतमपि दूरीकुर्वन् स्मृतिरहितोऽपि जातः एवं देहेन्द्रियमनसां वैफल्यं निरूपितं तथाप्यसुरत्वात् स्वस्य राजसं भावं कृतवान् तदाह—महारवं समीरयन् व्यसुः सन्नपतदिति प्राणास्त्वन्तरिक्ष एव गताः पश्चाद्भूमौ पतितः पुनरुत्थानं पतितस्य नाभूदित्येतदर्थं दृष्टान्तमाह—गिरिर्यथेति। मघवत आयुधेन वज्रेण हतो गिरिः यथेति न कदाचिदप्युद्गतो नापि प्रबुद्धः तथैवायमपि समूढो जात इत्यर्थः ॥ २९ ॥

ततो यज्जातं तदाह—दृष्ट्वा प्रलम्बं निहतमिति। बलभद्रः प्रलम्बं मारयतीति नाश्चर्यं यतो बलशाली तथापि कथं ज्ञातवान् कथं वा शीघ्रमुपायस्फूर्तिः कथं वा सकृत् प्रहारेणैव मृत इति गोपालास्त्वाद्या सुष्ठु विस्मिता आश्चर्ययुक्ता आसन् भावी चिन्ताकुला जाता इति हननमात्रेणैव साधुसाध्विति वादिनो जाताः ॥ ३० ॥

ततो देवास्त एव देवभावं प्राप्ताः आशिषोऽभिगृणन्तश्च जाताः चिरञ्जीवास्मान् पालयेत्यादि तस्यार्हणं यथा भवति तथा प्रशशंसुश्च पूजां कृत्वा स्तोत्रमपि कृतवन्तः उत्तमानां हीनानाम् उत्तमा ऽन्यभावौ वा निरूपितौ समभावकृत्यमाह, प्रेत्यागतमिवालिङ्ग्य प्रेम्णा विह्वलचेतसोऽपि जाता इति ॥ ३१ ॥

न केवलं प्रलम्बवधो भूमिष्ठानामेव हितार्थः किन्तु देवानामपीत्याह—पाप इति। पापरूपेऽस्मिन् निहते देवाः शुद्धसत्त्वात्मकाः परमनिर्वृता जाताः कंसादेरपि निर्भयाश्च जाताः अतः माल्यैर्बलमभ्यवर्षन् पुष्पवृष्टिं कृतवन्तः शशंसुः स्तोत्रं च कृतवन्तः साधुसाध्विति प्रशंसां च कृतवन्तः अन्यथा आकाशे गच्छतः तदारूढेन मारणं स्वरक्षां भावयता अशक्यम् अन्यश्च न तत्र प्रकारः अतो महासाहसेन कृतमिति साधुसाध्विति कथनं प्रशंसादेव त्वज्ञापिका पुष्पवृष्टिहर्षज्ञापिका दोषापगतिः तदभिमानिनामपि सुखदायिनीति ज्ञापितम् एवमन्तःकारणदोषः परिहृतः तैश्चानुमोदितो देवैश्च ॥ ३२ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायाम्
सुबोधिन्यां दशमस्कन्धविवरणे
पञ्चदशाऽध्यायविवरणम् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अपस्मृतः गतस्मृतिः अपस्माराख्याधिग्रस्त इवेत्यर्थः। महारवं समीरयन् ॥ २९—३० ॥

तदर्हणं प्रशंसार्हम् ॥ ३१ ॥ ३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
दशमे ऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम्।

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अपस्मृतः गतस्मृतिः ॥ २९-३० ॥

तदर्हणं प्रशंसार्हम् ॥ ३१-३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टादशाऽध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषा टीका।

दाऊ के मुक के डुक लगतेई मायो जाको खिलगयो सुख जाकी जातरही मुख तें रुधिर गिरावत बडो शब्द करत विना प्रायान को होय कें सो प्रलम्बासुर इन्द्र के वज्र को मारचो पहाड जैसे गिरे तातीत सों मरि कें गिर तो भयो ॥ २९ ॥

बडे बल वारे बलदेवजी ने मारचो जो प्रलम्बासुर ताकूं देखि कें सगरे ग्वाल बाल बडो अचरज मानत भये, और वाह जू वाह खूब मारचो ऐसें कहने लगे ॥ ३० ॥

कितनेई बडी अवस्थावारे भोरे मारे गोप प्रेम सों विह्वल चित्त वारे होयकें, मानो मरि के फिर आये [illegible] तारियां के दाऊ कों छाती सों लगाय कें असीस देते [illegible] उनकी योग्य प्रशंसा करत भये ॥ ३१ ॥

पापी प्रलम्ब के मरे पै देवता बडे सुखी भये, और [illegible] बलदेवजी के ऊपर माला की वर्षा करत भये, तथा वा[illegible] जू वाह खूब मारचो ऐसें प्रशंसा करत भये ॥ ३२ ॥

इतिश्रीमद्भागवत दशमस्कन्धमें अठारवें अध्यायकी,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे ऽष्टादशोऽध्यायः ॥ १८ ॥



## ॥ एकोनविंशोऽध्यायः ॥

—०:*:०—

श्रीशुक उवाच ।

क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः ।
स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् ॥ १ ॥
अजा गावो महिष्यश्च निर्विशन्त्यो वनाद्वनम् ।
इषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः ॥ २ ॥
तेऽपश्यन्तः पशून् गोपाः कृष्णरामादयस्तदा ।
जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ॥ ३ ॥
तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम् ।
मार्गमन्वगमन् सर्वे नष्टाजीव्या विचेतसः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ।
मुञ्जारण्यमरण्याग्नेररक्षत्सन्निपानतः" ॥

दूरचारिणीः दूरचारिण्यः ॥ १ ॥

वनाद्वनान्तरं निर्विशन्त्यो दावेन तर्षितास्तृषिताः क्रन्दन्त्यः […]षीकाटवीमत्युच्छूनघनतृणविशेषारण्यं निर्विविशुः ॥ २ ॥

कृष्णरामावादी येषां ते न तु तौ ॥ ३ ॥

तासां गवां खुरैर्दद्भिश्च छिन्नैस्तृणैर्गोष्पदैरङ्कितैश्च भूप्रदेशै[…]स्तेषां गवां मार्गमन्वगमन् नष्टाजीव्या गतजीविका[…]साधनाः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसङ्गादलौकिकत्वेऽप्यलौकिकीमेवान्यां लीलां क्रमप्राप्ता[…]माह—क्रीडेत्यादिना । तेषां वा ता असङ्ख्या गावः समासान्त[…]भाव आर्षः गह्वरं दुर्गमवनं तृणलोभेनेति श्रीगोकुलानन्द[…]मूकचारणानन्दादकारणावेशः ततस्तल्लोभस्तेनेति ज्ञेयं "यज्ञी[…]भूतं तु निखिलं भगवान् मुकुन्दः" इत्यादौ तथा प्रसिद्धेः […]न्दावने यत्र कुत्रापि मुहूर्तमात्रेणोदरपूरणस्य शक्य[…]त्व ॥ १ ॥

न केवलं गाव एवान्येऽपि सर्वे पशव इत्युक्तपोषन्यायेनाह—[…] इति । अजादीनां गमने यथापूर्वं शैघ्र्यापेक्षया तत्क्रमेण […]षः इषिकाटवीं प्रायो यमुनातीरपरित्यक्ततद्दूरवर्त्ति रुक्षसैक[…]तम् अत एव दावेन अग्निसदृशेन ग्रीष्मकालीनतापेन तर्षिताः […]तापिताः अत एव क्रन्दन्त्यो बभूवुः ॥ २ ॥

कृष्णात् तैर्व्याख्यातमेव तथापि तयोः साक्षाद्वर्त्तमानयोरपि गोपानां पश्वदर्शनादिकं तयोः कौतुकपरतयेति ज्ञेयं यद्वा, कृष्णरामौ आदी आदौ वर्त्तेते येषामिति "उभावपि वने कृष्णौ विचिक्याय समन्ततः" इतिवदुगवादिस्नेहमयलीलावेश एवं तद्गुणसंविज्ञानः ॥ ३ ॥

गोष्पदैर्गोभिः सेवितैर्मार्गैः यतोऽङ्कितैः तत्खुरादिभिर्लिखितैः गोष्पदं सेवितासेवितप्रमाणेष्विति शब्दस्मृतेः अन्यत्र खुराभावात् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥
खुरदच्छिन्नैः खुरैः दद्भिश्च छिन्नैः ॥ ४—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ दवाग्निपानानन्तरं श्रीकृष्णकर्मानुवर्णयितुं तावत्प्राकृतं वृत्तान्तमाह—क्रीडेति । प्रलम्बवधानन्तरमपीत्यादिः गोपेषु क्रीडासक्तेषु सत्सु तेषां गावो दूरचारिण्यो यथेच्छं चरन्त्यस्तृणलोभेन गह्वरं विविशुः ॥ १ ॥

तदेव प्रपञ्चयति—अजा इति । अजादयो वनाद्वनं विशन्त्यः दावेन तापेन तर्षिताः तृषिता आक्रोशन्त्यः इषीकाटवीमत्युच्छूनसान्द्रतृणविशेषारण्यं विविशुः इषीकारण्ये वने पूर्वत्र गह्वरशब्दविवक्षिता ॥ २ ॥

ततस्ते क्रीडासक्ताः कृष्णादयो गोपास्तदा पशून् अपश्यन्तोऽत एव जाता अनुकम्पा येषां तथाभूताः गवां गतिं गतिक्रमं खुर-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विन्यासात्मकं चिह्नं विचिन्वन्तोऽपि न विदुः न ज्ञातवन्तः ॥ ३ ॥

ततः कथञ्चिल्लब्धैः तासां गवां खुरैर्दद्भिर्दन्तैश्च छिन्नैस्तृणैर्गोष्पदैश्चाङ्कितं गवां मार्गमन्वगमन्ननुसृत्य जग्मुः ततः पुनरपि नष्टाजीव्या नष्टो क्षीणः आजीव्यः जीवनसाधनमार्गो येषां ते अत एव विचेतसः विचाराकान्तचित्ताः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वभक्तजनसंसारविनाशनं हरेरेव सुशकं नान्यस्येति निदर्शनाय दावाग्निपानप्रकटितमाहात्म्यमस्य वक्तुमुपक्रमतेऽस्मिन्नध्याये—तेषां गोपानां गावः दूरचारिण्यः दूरगामिन्यः स्वैरं स्वेच्छया गह्वरं गम्भीरकक्षम् ॥ १ ॥.

मुञ्जाटव्यामिषीकाटवीं शराटवीं वा उभयं च प्रचुरं तत्रेत्यर्थः । "शरो मुञ्ज इतीरितः" इति हलायुधः । दावेन तापेन तर्षिताः जलं पातुकामाः ॥ २ ॥

अपश्यन्तः अनुतापः पश्चात्तापः विचिन्वन्तः अन्वेषमाणाः ॥ ३ ॥

तासां गवां खुरैः दद्भिः दन्तैश्छिन्नैरङ्कितैः भूतलैः नष्टजीवाः जीवन्मृताः विचेतसः इतो गताः अत्र गता इति विविधबुद्धयः यो दैवे गतं चेतो येषां ते तथा ये दैवमेव चेतसा वचसा च शरणं गच्छन्त इत्यर्थः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२ ॥

कृष्णरामादय इति नष्टगसंविधानत्वेन लीलावेशः ॥३—९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

> अज्ञानात्मा ह्यात्मबोधो दवाग्निस्तन्निवारणम् ।
> षोडशे प्रोच्यते सम्यग्ज्ञानरोधः संस्यते ततः ॥
> ततो दामैर्मुदा लीला स्वच्छन्दाग्रे भविष्यति ।
> स्त्रीणां चैव मनःप्रीतिस्तद्वासक्तिः फलिष्यति ॥

एवं प्रलम्बवधप्रसङ्गेन क्रीडासक्तानां गोपानां विस्मृतपशुधनानां सम्यग्निध्यो गावः यतः कुतश्चिद्गताः अन्तःकरणदोषे परिस्रियमाणे जीवस्यासद्बद्ध्या भवतीत्यज्ञानं वह्निष्टमिव भवति उपाधेर्देहस्यासदर्थनिवेशात्तत्प्रसङ्गे आत्मापि तद्दोषसहितो भवति तदा गवां दाहे गोपाला अपि दग्धा उच्यन्ते एवं सर्वनाशे समुपस्थिते हरिरेव रक्षकः तदुपेक्षायां तु सर्वनाश एव भवेत् शरणागतौ च रक्षा अतः सर्वोपाधिविनिर्मुक्तोऽपि हरिं शरणमात्रजेदिति क्रीडायामासक्ते गोपेषु सत्सु तत्सम्बन्धिन्यो गावो रक्षकाभावाद्दूरचारिण्यो जाताः ततः स्वैरं चरन्त्यस्तृणलोभेन गह्वरमत्यगम्यस्थानं विविशुः एवमेव देह उपेक्षितोऽप्यशक्यस्थाने निविशेत् ॥ १ ॥

देहानां त्रैविध्यमिव वक्तुं नास्मिन् दिवसे अजाः राजस्यो गावः सात्त्विक्यो महिष्यस्तामस्यश्च पूर्वं धर्मरक्षायां निरूपितत्वात् न राजसतामसानां निरूपणं चकारादन्ये हरिणादयश्च लीलार्थं गृहीताः स्थानो वा एकं वनं परित्यज्य वनान्तरं नितरां विविशुः पूर्वोक्तवने हि देवतासान्निध्यं निरुपद्रवश्च अतस्तद्वनं परित्यज्य वनान्तरं गताः तत्रापि रक्षकाभावादिषीकाटवीं विविशुः यत्र प्रवेशनिर्गमौ कठिनौ ते वर्षवृद्धा आसन्नमरणाः स्वयमेव म्रियमाणाः कथमन्यरक्षां कुर्युः तत्र प्रविष्टाः क्रन्दन्त्यो जाताः औष्ण्येन च कृत्वा तर्षिता तृषायुक्ताश्च जाताः ॥ २ ॥

एवं गवां स्वतः स्वसम्बन्धाभावोऽनिष्टसम्बन्धश्च कथितः तादृशीषु निवृत्तान्तःकरणदोषायां स्मृतिमाह—तेऽपश्यन्तः इति ते गोपालाः पशूनपश्यन्तः कृष्णरामादयः गतस्थानपरिज्ञानार्थं भगवत्प्रधानाः सन्तः मार्गमन्वगमन्नित्यग्रेण सम्बन्धः प्रथमं तदाक्रीडाव्यवहितदशायां स्मरणानन्तरं जातानुतापाः जाताः कृतापि लीला भाविता अत एव न विदुः गवाङ्घ्रि विचिन्वन्तोऽपि धर्मपरिपालने तु गाव एव मुख्याः ॥ ३ ॥

ततोऽनुमानेन ज्ञातवन्त इत्याह—तृणैरिति । तासां गवां खुरैर्दद्भिश्च छिन्नैः तृणैः कृत्वा मार्गमन्वगमन् आरण्यवैलक्षण्यं खुरैश्छिन्नं रदच्छेदेन सामान्यतो ज्ञातम् अतः सामान्यविशेषज्ञापकैस्तृणैः गवां सम्बन्धिभिः गोष्पदैः चाङ्कितैः चिह्नैः तृणैरेव त्रिविधानि तृणानि जातानि मूलतः छिन्नानि मध्यतः छिन्नानि पीडितानि च गोमयखुरघातैः एतत्त्रिविधानामपि ज्ञापकत्वात् नात्र भ्रमशङ्का ततः सर्व एव मार्गमन्वगमन् गवां मार्गे गता यतः सर्व एव नष्टाजीव्याः । ननु, चेतना अचेतनप्रायादं मार्गे कथं गताः ? तत्राह—विचेतस इति । विवेकरहिता व्याकुला वा ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> ऊनविंशे मुदितान्स्वान् मुञ्जाटव्यां दवानलात् ।
> रक्षन् माण्डीरमापय्य स्वान् मुक्ताक्षान् व्यधाद्धरिः ।

तत्तदनन्तरं दूरचारिणीः दुरचारिण्यः ॥ १ ॥

इषीकायां शराख्यतृणविशेषायामटव्यां दावेन ग्रीष्मसूर्यतपोत्थतापेन तर्षिताः तृष्णां प्रापिताः ॥ २ ॥

जातानुतापा न विदुर्न विविदुः गोविषयकप्रेम्णैवाज्ञानाः ॥ ३ ॥

तासां गवां खुरैर्दद्भिश्च छिन्नैस्तृणैर्गोष्पदैरङ्कितैर्भूप्रदेशैश्च वर्तिगवां मार्गे नष्टाजीव्या विगतजीविकासाधनाः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ऊनविंशे मुञ्जाटव्यां प्रज्वलितादग्नेर्गोपगोकुलमरक्षदरिरिति । क्रीडासक्तेष्विति । दूरचारिणीः दूरचारिण्यः स्वैरं यथेष्टं चरन्त्यः गह्वरं गहनं तृणलोभेन विविशुः ॥ १ ॥

तदेव प्रपञ्चयति–अजेत्यादिना । दावेन तापेन तर्षिताः इषीकाटवीमुच्छ्रितघनतृणविशेषाटवीं मुञ्जाटवीमित्यर्थः ॥ २ ॥

कृष्णरामादयो येषां ते इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । नष्टाजीव्या गतजीविकासाधनाः अत एव विचेतसः

मुञ्जाटव्यां भ्रष्टमार्गं (१)क्रन्दमानं स्वगोधनम्।
(२)सम्प्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्त्तयन्॥ ५॥
*(कृष्णः प्रोत्तुङ्गमारुह्य वृत्तं मेघनिभच्छविम्।
आर्त्तांस्ता आह्वयामास दर्शयन् गास्स्वनामभिः॥०॥)
ता आहूता भगवता मेघगम्भीरया गिरा।
स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः॥ ६॥
ततः समन्ताद्वनधूमकेतुर्यदृच्छया ऽभूत् क्षयकृद्वनौकसाम्।
समीरितः सारथिनोल्वणोल्मुकैर्विलेलिहानः स्थिरजङ्गमान् महान्॥ ७॥
तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः।
ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः॥ ८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इच्छितैः तासामजादीनां खुरैर्दद्भिश्च छिन्नैस्तृणैः गोष्पदैरङ्कितैः भूप्रदेशैश्च गवां मार्गमन्वगमन्॥ ४॥ ५॥ ६॥

---

भाषा टीका।

ॐ इषीकाटवीदाहकानलशान्तिकारिणे नमः।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—गोपबालकन को क्रीडा में आसक्त होयबे पै दूर चरिबेवारी उनकी गायें अपनी इच्छा सों चरतीं चरतीं घास के लोभ सों बड़े गह्वर [सघन] वन में घुस गईं॥१॥ बोसर गायें [अथवा छेरी] गायें भैंसें एक वनसों दूसरे वनमें घुसती भईं मूंज के वनमें घुस गईं, वा वनमें लगी जो अग्नि सोई वासों रम्हायबे लगीं॥ २॥ और रामकृष्ण सों आदि लेकें वे सगरे गोपबालक चारों ओर गायन कों देखबे लगे, जब नहीं दीसीं तब व्याकुल होयके ढूढते हूये भी गायन की गति कों नहीं जानत भये, कि कहां चली गईं॥३॥ जीविका के साधन जिनके गये ताई सों व्याकुल चित्त जिनको ऐसे ग्वाल बाल गायन के खुरन तें और दांतन तें काटे भये घास कूं और खुरन के चिन्हन कों देखत २ गायन के मार्ग के पीछें जात भये॥ ४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मुञ्जाटव्यपि सैव इषीकाटवी॥ ५॥ ६॥ गोगोपानां नाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत सारथिना वायुना॥ ७॥ ८॥ ९॥ १०॥ ११॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक् मन्त्रमङ्गलत्वादिनैकत्रैव प्राप्य सम्यक् त्वरया एकीकरणादिना न्यवर्त्तयन् ततस्तृषिताः श्रान्ताश्च बहुलपरिभ्रमणात् अभवन्॥ ५॥

सम्प्राप्येत्युक्तं तत्प्रकारं वदन् श्रीगोपचूडामणिना गोगोपसन्तोषणमाह—ता इति। मेघगम्भीरयेत्यत्र मेघशब्देन मेघगर्जितं लक्ष्यते, सर्वत्र तु गम्भीरशब्दः खलु दूरहृदयतलस्य गर्त्तस्य विशेषणं भवति लक्षणयातु तत्रस्थजलमपि विशिनष्टि—तस्मादुत्थितो नादश्च प्रायो गुरुर्भवन् गम्भीरतयोपचर्यते मेघस्य नादस्तु तद्वद्गुरुः स्यात् तत् भगवतो गीश्च स्वरतस्तादृशी स्यादित्यभिप्रेत्याह—मेघगम्भीरया गिरेति। ततश्च मेघगम्भीरया गिरा यत् स्वस्वनाम तदुच्चारणं तेनाहूताः सत्यस्तत्सम्बन्धिनं निनदं मधुरतारस्वरविशेषं श्रुत्वा प्रहर्षिताः प्रहृष्टाः सत्यः प्रतिनेदुः प्रत्युत्तरतया शब्दं चक्रुः॥ ६॥

ततस्तस्मिन्नेव समयेऽभूत् उद्भूतः यदृच्छया अकस्मात् अयमपि प्रलम्बसखः कश्चिद्दैत्य इति केचिदाहुः वृन्दावने दवनिषेधात् उल्वणैः उल्मुकैः उल्कासदृशविस्फुलिङ्गैः विलेलिहानः विशेषेण लेलिहन् दन्दह्यमान इत्यर्थः। यतो महान् व्यापकः॥ ७॥

आपतन्तं वेगेनागच्छन्तं प्रसमीक्ष्य अत्युद्भटं सुदुस्तरं च विचार्येत्यर्थः। अत्र गोपा गोपालनाय नियुक्ताः साधारणा एव श्रीदामादीनां तु तदङ्गसङ्गित्वान्निवेदनापेक्षा नास्तीति अतः प्रपन्ना दवसमीपादागत्य शरणमागताः भीतत्वे हेतुः सगावः गोभिः सहिता इति "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वत्वाभाव आर्षः गोपाश्च गावश्च इति पाठे गावश्चोचुरित्यायाति तत्र व्यग्रतयारम्भणात् ता अप्यूचुरित्यर्थः। गोपाः स्म गाव इति पाठे स्म प्रसिद्धौ हरिमिति तस्यैवैश्वर्याद्यो दृष्टान्तः मृत्योर्मरणपरम्परालक्षणसंसारात् भयेनार्दिता जना इति समयार्थुक्तौ दृष्टान्तः नतु मरणमात्रत्राणांशे अतश्च केवलं श्रीभगवद्वियोगत एव भीता इति पूर्ववद्बोद्धव्यं तच्चाग्रे व्यक्तं भावि॥ ८॥

(१) क्रन्दमानाः। (२) अप्राप्य तृषिता याताः इति च विज० पा०। * इत्यधिकः पठ्यते वीर०।

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सारथिना वायुना ॥ ७—११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मुञ्जाटव्यां भ्रष्टो लीनः मार्गो यस्य तत्क्रन्दमानं गोरूपधनमप्राप्य तृषिता अत एव श्रान्तास्ते गोपाः संन्यवर्त्तयन् प्रत्याजग्मुरन्वेषणाद्विरेमिरे ॥ ५ ॥

तदा भगवता कृष्णो मेघस्येव गम्भीरया गिरा आहूतास्ता गावः स्वस्वनाम्नां ध्वनिमाकर्ण्य प्रहर्षिताः प्रतिदध्वनुः ततः प्रतिनादेन गोधनानि सञ्जग्मुरित्यर्थतोऽत्र विवक्षितम् ॥ ६ ॥

ततस्तदा यदृच्छया महान् वनधूमकेतुर्दवाग्निरभूत् उद्भवत् कथम्भूतः वनौकसां क्षयं नाशं करोतीति तथा सारथिना वायुना समीरितः उद्दीपितः उल्वणैरुल्मुकैर्ज्वालायुकैस्तृणकाष्ठादिभिः स्थावरजङ्गमात्मकं भूतजातं विलेलिहानः पुरः पुरः संस्पृशन् ॥७॥

परित आपतन्तं व्याप्यागच्छन्तं दवाग्निमवलोक्य भीताः सगवो गोपाः सरामं कृष्णं प्रपन्नाः शरणं गताः ऊचुर्यथा मृत्युभयेन संसारभयेनार्दिताः पीडिता जनाः हरिमाश्रितयन्भहरं भगवन्तं प्रपन्नाः स्वदैन्यं विज्ञापयन्ति तद्वत् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भ्रष्टमार्गं मार्गं हित्वेतस्ततो गतं ततो मुञ्जाटव्याः संन्यवर्त्तयन् गतमार्गमेवागन्तुकामा अभवन्नित्यर्थः ॥ ५ ॥

ततः कृष्णेन किमकारीति तत्राह—ता इति । प्रतिनेदुः प्रत्याक्रोशं चक्रुः ॥ ६ ॥

संसारस्तु सदा दुःखाकर इति दर्शनार्थम् एकदुःखशमनानन्तरं दुःखान्तरं वदति—तत इति । ततः गोदर्शनानन्तरं धूमकेतुः अग्निः सारथिना वायुना समीरितः प्रेरितो वर्धितः उल्वणोल्मुकैः क्रूरतरज्वालाभिः स्थिरजङ्गमान् विलेलिहानः विशेषेणास्वादयन् ॥ ७ ॥

प्रपन्नाः शरणमिति शेषः ॥ ८—९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः प्राप्य न्यवर्त्तन्तेत्याह—मुञ्जाटव्यामिति । यदि मध्ये मुञ्जाटवी न स्यात् अग्रेऽपि गच्छेयुः अतो मुञ्जाटव्यां भ्रष्टमार्गा अत एव क्रन्दमाना इतिकर्त्तव्यतामौढ्यात् सुतरां मुञ्जस्पर्शेन सुदुःखिता गावो जाताः ततः तादृशं गोधनं संप्राप्य स्वयमपि तृषिताः श्रान्ताः गोभिः समानधर्माः क्षणं विश्रम्य तृषं दूरीकृत्य ततस्तदनन्तरं सम्यक् न्यवर्त्तयन् निवर्त्तितवन्तः ॥५॥

सर्वं निवर्त्तिता न निवर्त्तिता इति सन्देहे भगवता सामान्यतो विशेषतश्च वनमध्यप्रविष्टास्ता आहूताः शब्देनैव तासामन्तस्तापबहिस्तापौ गताविति ज्ञापयति—मेघगम्भीरयेति । ततो गततापाः स्वनाम्नां निनदं शब्दं श्रुत्वा प्रतिनेदुः तत्रैव स्थित्वा प्रतिशब्दं कृतवत्यः प्रहर्षिताश्च जाताः निकटे समागताश्चेति ज्ञातव्यम् ॥ ६ ॥

असमागताश्च काश्चन एतस्मिन्नवसरे दैत्याभिमानिनी देवतोपासिता लौकिकयश्चान्तःकरणदेवताः क्रुद्धा एकीभूय दावानलरूपा जाताः स दवानलस्तस्मिन्नवसरे पलायनासम... समन्तात्प्रादुर्भूतो जात इत्याह—तत इति । वनसम्बन्धी धूमकेतुरग्निरनिष्टहेतुरिति धूमकेतुपदेनोक्ताः तेषां माहात्म्यज्ञापना... यदृच्छयैवाऽभूत् अकस्मात् कालकर्मस्वभावा भगवदिच्छामि... उद्भवे हेतुमाह—क्षयकृद्वनौकसामिति । वनसम्बन्धमात्रेणैव सोऽपि... पीडयति सुतरामेव वने स्थानं येषां तादृशस्य सहायोऽप्य... जात इत्याह समीरितः सारथिनेति वायुरग्नेः सारथिः रथप्र... र्त्तकः रथोज्वाला अत एवोल्वणोल्मुकैर्विलेलिहानो जातः म... इव प्रसन्नागतः ततो बहुभक्षणेन पुष्टः सन् महान् जातः ॥ ७ ॥

तादृशो भगवदीयानामपि स्थाने समागत इत्याह—तमापतन्तमिति । परितः आगच्छन्तम् उपर्यागच्छन्तं दवाग्निमप... रिहार्यं सहजदोषरूपं गोपाः प्रतिक्रियानभिज्ञाः गावश्च मूढा... प्रकर्षेण वीक्ष्य भीता जाताः ततो ज्ञातभगवन्माहात्म्या भगव... प्रार्थितवन्त इत्याह—ऊचुश्चेति । बलभद्रसहितमिति प्रकृतोपयो... गात् क्रियाशक्तिसाहित्यमुक्तं कृष्णं सदानन्दं प्रकृते लील... कर्त्तारं शरणापन्नाः सन्त ऊचुः तत्र दैत्यार्थे दृष्टान्तमाह—मृ... हरिमिति । मृत्युभये प्राणाप्रतीकार्येणार्दितो यथा कश्चित् कृ... पुण्यपुञ्जो जनो गजेन्द्र इव हरिं शरणं गच्छति तथाऽन्ये... दीनाः सर्व एव शरणं गताः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मुञ्जाटव्यां तत्रैव शरवणे सम्प्राप्य ता गवाद्याः न्यवर्त्तय... परावर्तयामासुः ॥ ५ ॥

सम्प्राप्येत्युक्तं तत्केन प्रकारेणेत्याकाङ्क्षायामाह—कृष्ण... आत्मानं दर्शयन् गा आह्वयामास ता गवादयः ॥ ६ ॥

तदेवं गोभिः सङ्गतीभूय यदैव तद्वनान्निष्क्रमितुमैच्छंस्तदैव... दावानलेनाग्निवन्तेत्याह—तत इति । दवो वनं तत्सम्बन्धी धूमके... रग्निः यदृच्छया आकस्मिक इत्ययमपि प्रलम्बवत्... दैत्य इत्याहुः सारथिना वायुना उल्वणैरतितीव्रैरुल्मुकैः ॥ ७ ॥

ऊचुश्चेति "अनेन सर्वदुर्गाणि" इतिगर्गोक्तिमनुस्मृत्य... गोपाश्च गाव इति गोपास्म गाव इति गोपाः सगा... इति त्रयः पाठाः तत्र सगाव इति "गोरस्त्रियोः" (१।२।४८) इत्यादि... ह्रस्वत्वाभावः आर्षः ॥ ८ ॥ ९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सारथिना वातेन ॥ ७—१२ ॥

भाषा टीका ।

इतने में मूंज के वन चारो ओर सों अग्नि सों घिरे... रुकि गयो मार्ग जाको और रम्हाय रहीं जो अपनी गौ... ताकूं पायके आप सगरे गोप प्यासे थके अपनो कछु वन... देखिके लौटत भये ॥ ५ ॥

तब मेघ सदृश गम्भीर वाणी सों भगवान् ने अब उ... गाम लेंव करिके बुलाई तब वे सगरी गायें अपने नाम... शब्दन कों सुनकें बडे हर्ष सों रम्हाय के प्रत्युत्तर देत भईं ॥ ६ ॥

कृष्ण ! कृष्ण ! महावीर्य ! हे रामामितविक्रम ! ।
दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः ॥ ९ ॥
नूनं त्वद्बान्धवाः कृष्ण ! न चार्हन्त्यवसीदितुम् ।
वयं हि सर्वधर्मज्ञ ! त्वन्नाथास्त्वत्परायणाः ॥ १० ॥

श्रीशुक उवाच ।

वचो निशम्य कृपणं बन्धूनां भगवान् हरिः ।
निमीलयत मा भैष्ट लोचनानीत्यभाषत ॥ ११ ॥
तथेति मीलिताक्षेषु भगवानग्निमुल्बणम् ।
पीत्वा मुखेन तान् कृच्छ्राद्योगाधीशो व्यमोचयत् ॥ १२ ॥

---

### भाषा टीका ।

इतने में तौ वो वन की अग्नि आपही आप चारो ओर मों ऐसो बढ्यो कि—वन के रहवेवारेन कों बडोई भयदायक भयो, तामें अग्निको सारथि जब पवन चलिवे लग्यो तब तौ बडी २ लपटे उठिवे लगीं, और ऐसो भयको कि स्थावर जंगम प्राणीन कों चाटतो भयो चल्यो ॥ ७ ॥

चारों ओर सों आवते भये या वन के अग्नि कों देखिकें गोप और गायें बडे भय कूं प्राप्त भये, और बलदाऊ सहित श्रीकृष्ण सों बोलत भये, जैसे मृत्यु सें डरप्यो भयो पुरुष श्रीहरि के शरण जाय ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृच्छ्राद्दहनप्रवेशक्षुत्तृड्भ्रमादिजनितान् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

महत् वीर्यं प्रभावो यस्येति "अविषह्यं मन्यमानः कृष्णं दानवपुङ्गवः" इति दृष्टरीत्या कृष्णं प्रतिमस्थांधनम् अमोघनिक्रमेति श्रीबलदेवं प्रति महादैत्यस्य मुष्टिनैकेनैव वधात् अमितेति पाठोऽपि तथाभिप्रायात् एवं त्राणसामर्थ्यमुक्तं प्रपन्नान् शरणागतानिति महाभयस्वभावेन ॥ ९ ॥

एवं तत्कालौचित्यात् प्रथमं द्वावेव प्रार्थ्य स्नेहविशेषेण प्रभावविशेषानुभवेन च श्रीकृष्णमेव विज्ञापयन्ति—नूनमिति निश्चये त्वद्बान्धवास्त्वत्सम्बन्धमात्रवन्तोऽपि चकारोऽवधर्थे अव सादितुं अवसमन्तात्सादो येषां तेऽवसादाः तद्वदाचरन्तीति किम्, ततस्तुमुन् दुःखितजनवदाचरितुमपि नार्हन्ति कुतस्तु दावाग्निदाहमित्यर्थः । हि विशेषे वयं तु त्वन्नाथाः त्वदेकाश्रया इत्यर्थः । हि पादपूरणे हेतौ विशेषेऽप्यवधारणे इति विश्वः किञ्च, त्वमेव परमयनमाश्रयो येषां ते त्वदेकनिष्ठा इत्यर्थः अतस्त्वत्पादाब्जं त्यक्तुं न शक्नुम इति भावः । दावाग्निभयेन गोभिः सममेवात्र वयमागताः आसां जीवनमेव चास्माकं जीवनमित्येव न स्वरक्षार्थं प्रार्थयामह इति स्वानुभवेन स्वयं नो जानासि ततो यथायथं विधास्यसीत्यभिप्रेत्याह—सर्वधर्मज्ञेति । हे स्वस्य चास्माकं च धर्माभिज्ञ इत्यर्थः ॥ १० ॥

स्वभावत एव हरिः सर्वदुःखहर्त्ता तत्र च भगवान् भक्तवात्सल्यादिनिजविशेषगुणप्रकटनपरः तत्रापि बन्धूनां "वन्मित्रं परमानन्दम्" इति न्यायेनाश्मैकामित्राणां कृपणं कातर्ययुक्तं वचः लोचनानि निमीलयतेति क्रीडाकौतुकस्वभावेन, वस्तुतस्तत्रायं भावः एते मदेकस्नेहाक्रान्तचित्ताः निजक्षेमानपेक्षयापि मत्क्षेममेव निजजीवनतोऽप्यपेक्षन्ते अतो ममाग्निपानं निरीक्ष्य मदनिष्टशङ्कया सहसा दावाग्निमध्येऽतं किल प्रविशेयुः अतोऽमुमेवामलक्षितमेव पास्यामीति किञ्चालक्षितं क्रीडार्थं भाण्डीरं तान् शीघ्रं नेतुं तथोक्तम् ननु, अहो परमकौतुकिन् ! लोचननिमीलनेन कथमग्निपरिहारः तत्राह—मा भैष्ट रक्षितास्मीति भावः ॥ ११ ॥

तथा एवमस्त्वित्यर्थः इति एतदुक्त्वेत्यर्थः । ननु, तादृशाग्निः श्रीमुखेनाहो वन कथं पीतः ? तत्राह—योगाधीशः दुर्वितर्क्यैश्वर्यविशेषैकस्वामी तच्छक्त्यापानकगण्डूषतामिव गतमिति भावः विशेषणामोचयत् भाण्डीरप्रापणात् मुखेन पानाभिप्रायः प्रागेवोद्दिष्टः ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पीत्वेति उत्पत्तिस्थाने लीनं कृत्वेत्यर्थः । "मुखादग्निश्चेन्द्रश्च" इति हि श्रुतिः ॥ १२—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—कृष्णेति द्वाभ्याम् ॥ ९ ॥

त्वमेव बान्धवो येषां ते अवसादितुं दुःखितुं नार्हन्त्येव नूनं ध्रुवं हे धर्मज्ञ प्रपन्नपरिपालनात्मकधर्मज्ञ ! वयं त्वमेव नाथो रक्षको येषां त्वमेव परमयनं रक्षणोपायो येषां तथाभूताश्च ॥ १० ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

हरिराश्रितार्त्तिहरः भगवान् कृपणां बन्धूनां वचो निशम्य आकर्ण्य मा भैष्ट भयं मा कुरुत लोचनानि निमीलयत पिहितानि कुरुतेत्युवाच ॥ ११ ॥

तथेत्यङ्गीकृत्य सर्वेषु गोपेषु मीलितान्यक्षीणि यैस्तथाभूतेषु सत्सु भगवानुल्बणमुरुत्कटमग्निं मुखेन पीत्वा तत्र हेतुर्योगाधीशः आश्चर्यशक्त्यात्मकयोगधनामधीशः मुखेन पीत्वेत्यस्य उत्पत्तिस्थाने लीनं कृत्वेत्यर्थः । "मुखादिन्द्रश्चाग्निश्च" इति श्रुतिः । कृच्छ्राद् दावाग्निजाद् दुःखात् सगोधनान् गोपान् अमोचयत् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नूनमिदानीम् ॥ १०—१३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वद्बान्धवाः त्वत्सम्बन्धमात्रवन्तोऽपि चकारोऽप्यर्थे अवसादितुम् अव समन्तात् सादो येषां तद्वदाचरितुमपि ततश्चेति विशेषेण निशम्य निशम्य योगस्य दुर्घटनाया वीर्यं माहात्म्यं दावाग्नेः सकाशादात्मनः क्षेमं रक्षाहेतुं वीक्ष्य तद्वीर्यस्यागन्तुकत्वं निरस्यति योगमायाया स्वाभाविक्या चिच्छक्त्याऽनुभावितम् ॥ १०—१६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां विज्ञापनामाह—कृष्णकृष्णेति द्वाभ्याम् । प्रार्थनामुपपत्तिं च क्रमेणाह—निराकृतौ कृष्णकृष्णेति सम्बोधनमादरेण वैकल्याद्वा महावीर्येति प्रकृतोपयोगिसामर्थ्यं द्विविधा हि त इति राममप्याहुः परं न द्विरुक्तिः प्रलम्बादिवधात् प्रकृतोपयोगिसामर्थ्यममितविक्रमेति सम्बोधनेनोक्तम् विज्ञापनामाहुः—दावाग्निना दह्यमानानिति । रक्षायां हेतुः प्रपन्नानिति समर्थ एव प्रपन्नरक्षायामधिकारी अतः त्रातुमर्हथः ॥ ९ ॥

एवं मर्यादाविचारेणाऽपि स्वरक्षाया आवश्यकत्वं निरूप्य पुष्टिमार्गेणापि स्वरक्षायास्तथात्वमाहुः—नूनमिति । भगवद्विचारेणोक्त्वा स्वविचारेणाहुर्वा कृष्णेति सदानन्दसम्बोधनं सेवकानां दुःखित्वानौचित्याय त्वद्बान्धवाः त्वमेव बन्धुर्येषां बन्धुत्वसम्बन्धं ज्ञानवन्तः ते अवसीदितुम् अवसादं प्राप्तुं नार्हन्ति चकारादल्पमपि खेदं प्राप्तुं नार्हन्त्येवावसादितुमिति वा पाठः एवकारेण कादाचित्कोऽप्यवसादो निषिद्धः भगवद्बान्धवत्वं समर्थयन्ति—वयं हीति । धर्मा अनेकविधा लौकिकवैदिकान्तप्रकारभिन्नाः सर्वे त्वय्येव ज्ञायन्ते तेषां बाध्यबाधकता च अतो येन केनापि प्रकारेणास्मत्प्रपत्तिः कश्चिद्धर्मे प्रवेशमर्हति अन्यथा वयं कथं त्वन्नाथाः ? त्वमेव नाथो येषां तादृशा भवेम न हि धर्मव्यतिरेकेण विशेषाकारेण त्वं नाथो भवसि किञ्च, वयं त्वत्परायणाः त्वमेव परमयनं स्थानं येषां नाथत्वेऽपि तदेकनिष्ठतातिदुर्लभा यथा गावस्त्वन्नाथा त्वन्निष्ठाः वयं तूभयविधाः गवां वा वचनमाद्यं गोपानामग्रिम ॥ १० ॥

भगवांस्तु तेषां प्रार्थितं कृतवानित्याह—वचो निशम्येति । कृपणां दीनतरं बन्धूनामुभयविधानां भगवानुपायाभिज्ञः समर्थश्च हरिः सर्वदुःखहर्त्ता स्वाभाविकोऽयं धर्मः देवगुह्यं भगवत्कर्म अज्ञानां भयजनकं च रात्रौ तु सम्यग्दर्शनाभावात् न चक्षुर्निमीलनोपदेशः ज्ञानशक्तिप्राकट्यादेवैतज्ज्ञातम् अज्ञानं तु हितमेवैतद्भवेद् यथाग्नौ पतङ्गाः पतन्ति अन्यथा वैते नेयाः तथात्वेतेषां भयं स्यात् अतः सर्वप्रकारेण भयाभावायाह—निमीलयेति । चक्षुर्निमीलनं कुरुत न शङ्कनीयमग्निर्धक्ष्यतीति अत आह मा भैष्टेति अग्निभयं न कर्तव्यम् ॥ ११ ॥

ईश्वरवाक्यादुपायत्वेन ज्ञातमपि कृतवन्त इत्याह—तथेति । निमीलिताक्षेषु सत्सु उल्बणमप्यग्निं भगवान् मुखेनैव पीत्वा पूर्ववत् तान् व्यमोचयत् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अवसादितुम् अव समन्तात् सादो येषां तेऽवसादास्तद्वदाचरितुमपि नार्हन्तीत्याचारक्विबन्तात्तुमुन् ॥ १० ॥

निमीलयतेति तेषामग्निपानदर्शनानौचित्यं तथैवावस्थितं तत्स्थानात्तेषामतिश्रान्तानामतिसन्तप्तानामलक्षितमेवातिसुशीतलसुच्छायभाण्डीरतरुतलप्रापणौचित्यं च परामृश्येति भावः । ननु हो कौतुकिन् लोचननिमीलने कथमग्निपरिहारस्तत्राह—मा भैष्टेति । ततोऽन्यथाऽद्य न त्राणहेतुरस्तीति भावः ॥ ११ ॥

भो वयस्या वह्निविषादीनामुपशमकं मणिमन्त्रमहौषधादिकमयं कृष्णो बहुतरं जानातीति तच्च विविक्तं विना न सिद्ध्येदतोऽत्र जनसङ्घट्टे अस्माकं लोचननिमीलनमेव विविक्तमित्यभिप्रेत्यैवं ब्रूते तदयं दृढतरमेव स्वस्वनेत्रे निमीलयाम इत्युक्त्वा ते निमीलयाञ्चक्रुरित्याह—तथेति । भगवान् महैश्वर्यशक्तियुक्तः तीव्रमपि तं पीत्वेति तत्र पिपासायां जातायां तदिच्छाप्रतिकूलमाचरितुमसमर्थः सोऽग्निरेव महाविस्म्यत् सद्य एव परमसुशीतलसुगन्धमधुररसपानकीभूय तदीयकरकमलतले यदैव गण्डूषमात्री बभूव तदैव योगाधीशो मुखेन पीत्वेत्यनेन तदीया योगमायैव शक्तिः प्रकटीभूय तदर्पं तत् स्मरतामनुरागार्द्रचित्तभक्तानां दुःसहदुःखप्रदमित्युक्त्वा तत्करतलादाच्छिद्य सैव मुखेन पपाविति लभ्यते योगा योगमाया तस्या अधीशत्वात् तस्मिन्नेव तत्पानोपचारोऽभूदिति भावः । यद्वा, मुखेन उपायेन पीत्वा कः स उपायस्तत्राह योगाधीश इति योगैश्वर्यशक्तिरेवेति भावः । "मुखं प्रसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी कृच्छ्रात् गह्वरप्रवेशतृट्श्रमादिजनितात्तस्मादेव भाण्डीरं नीत्वा तानमोचयदित्यर्थः ततश्च भोः सखायो महाग्नेः प्रतीकारो मया कृतः साम्प्रतमक्षीण्युन्मीलयतेति कृष्णेनोक्तास्ते पुनरक्षीण्युन्मील्य आत्मानं मोचितं गाश्च मोचिता निशम्य ज्ञात्वा विस्मिता आसन्नित्यन्वयः । कीदृशाः भाण्डीरमापिताः तेनैवेति सर्वत्र योज्यम् ॥ १२—१३ ॥

भाषा टीका ।

ग्वाल बाल बोले, कि—हे कृष्ण ! हे कृष्ण ! हे महा पराक्रमवारे ! हे अमित पराक्रम वारे श्रीबलदेवजी ! वन की आंच

ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः ।
निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥ १३ ॥
कृष्णस्य योगवीर्यं तद्योगमायानुभावितम् ।
दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥ १४ ॥
गाः सन्निवर्त्य सायाह्ने सह रामो जनार्दनः ।
वेणुं विरणयन् गोष्ठमगाद्गोपैरभिष्टुतः ॥ १५ ॥
गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विनाऽभवत् ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे दवाग्निपानं नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

### भाषा टीका

सो जरे जांय हैं ऐसे हम आपके शरण आये हैं आप दोऊ हमारी रक्षा करबे कों योग्य हौ ॥ ९ ॥

हे कृष्ण ! भैया हम तेरे बन्धु होयके ऐसे दुःख पायबे के योग्य नहीं हैं । हे सर्व धर्मन के जानबे वारे ! हे कृष्ण ! हम सबकौ तौ तूई नाथ है, और हम सब तेरेई परायण हैं जो तेरे परायण हैं, तिनकू कैसें राखनो चाहिये सो तूई जाने है ॥ १० ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले कि—भगवान् हरि श्रीकृष्ण अपने बन्धुन के ऐसे दीन बचन सुनि के बोले, कि—हे भैया हो ! तुम सब डरपो मति अपने नेत्र मूँदि लेउ ॥ ११ ॥

बहुत अच्छे भैया ! ऐसे कहतें जब ग्वाल बालन ने नेत्र मूंद लिये, तब योगाधीश्वर भगवान् वा तीव्र अग्नि कों अपने सुकुमार मुख ते पीकर के उन सबन कों कष्ट तें छुड़ावत भये ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षणेनैव भाण्डीरं प्रापिताः ततोऽक्षीण्युन्मील्य विस्मिताः ॥ १३ । १४ । १५ ॥ १६ ॥

श्रीदामादिस्वगोपानां स्वाङ्कमारुह्य दृश्यताम् ।
संश्रयं माविरकरोद्भगवान् हानपानतः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततः पानानन्तरं च नूनं श्रीभगवदुक्त्यैवाक्षीण्युन्मील्य तत्र आत्मानं मोचितं गाश्च मोचिता निशाम्य निशाम्य दृष्ट्वा विस्मिता आसन् न केवलं मोचिताः पुनर्भाण्डीरमापिताश्च निशाम्येत्येव पाठः क्वचित मोचिता इत्यंशस्याऽभावाद्विपरिणामेनान्वयो ज्ञेयः । तत्र श्रीयमुनादक्षिणकूले श्रीवृन्दावनमध्ये इत्याद्युक्तेः प्रसिद्धादिनामख्यग्रामतो वायव्यदिशि भाण्डीर इति यः प्रसिद्धोऽस्माभिर्दृष्टचरो महांश्चैत्यतरुस्तत्स्थानाख्यो यद्वान्यत्र तथा स्नानप्रदेशो यमुनाघट्टश्च विराजते स एव भाण्डीरवटो ज्ञेयः तद्विलक्षणः कोशमात्रं भाण्डीरग्रामादूरे च नन्दिकेश्वरप्रसिद्धग्रामात्मे ग्राह्या तथा मध्ये चास्य महाशाखो न्यग्रोध इत्यादिना श्रीहरिवंशे वृन्दावन एव भाण्डीरस्य वर्णितं भविष्योत्तरे च मल्लद्वादशीप्रसङ्गे भाण्डीरे यो मल्लरूपी श्रीकृष्णो निर्दिष्टस्तस्य तत्रैव महामल्ल इति प्रसिद्धः अतो वासुदेवेति प्रसिद्धा तद्वत्ता च सैव ज्ञेया एवमेव "तद्वनो नाम्नाश्च वाराहश्च गोधनम्" इत्युक्तं श्रीवृन्दावनस्य द्वादशाधः क्रीडायः प्रसिद्धेर्वे पञ्चविंशेन भगवत्तयार्थनामृतारसादिना तदपि सिद्धं एवं हि विप्रार्थिनि कृष्णाभिगमनं भाण्डीरभूमिकाद इत्यादिप्राचीनवैष्णवकृतिताभिरपि समन्वयाकृष्ट्यात् तत्र श्रीधराद्यैः टीके भाण्डीरेति तथापि भाण्डीरात् तीर्थान्तरं [illegible] ज्ञेयम् ॥ १३ ॥

[illegible] "[illegible]" इत्यादिषु सर्वोऽर्थः [illegible] न बभूव किन्तु [illegible] कृष्णस्य योगमायया [illegible] अनुभावितं व्यञ्जितं "गावो वृन्दावनस्पर्शात्" इति निश्चयकाशात् तुपार्थस्वरूपादि तत्सम्पादकं यद्वीर्यं प्रभावविशेषं मत्वा ममरं देवनिर्दिष्टं मेनिरे कीदृशं वीर्यं दावाग्नेः सकाशादात्मनः क्षेमं मङ्गलं हेतुमिति यद्वा, न विद्यते मरो

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मरणं यस्मात् तम् एतवाभयेण मरणादपि न विरहं प्राप्स्याम इति भावः । जनार्दन इति व्रजजनैः सदा द्रष्टुं याच्यत इत्यभिप्रायेण ॥ १४—१५ ॥

श्रीगोपानां दावाग्नेर्मोचनपूर्वकं स्वप्रापितपरमानन्दं यथा ददौ तथा श्रीगोपीनामपि विरहाग्नितस्तत्पूर्वकं तं ददाविति नित्यमपि प्रस्तावसादृश्येन श्रीहृतलीलान्त एवाह—गोपीनामिति परमः परां काष्ठामापन्न आनन्द एवासीत् कासां गोपीनां तत्राह क्षणमिति "कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम्" इति "त्रुटियुगायते त्वामपश्यताम्" इति च, तासामेव तादृशवचनश्रवणात् "यद्दर्शने दृशिषु पक्ष्मकृतं शपन्ति" इति ता एवोद्दिश्य श्रीमन्मुनीन्द्रेणापि सर्वातिशयप्रेमदर्शनाय वर्णितत्वात् तत्प्रेयसीरूपाणामित्यर्थः । कीदृशं तस्यानन्दस्य परमत्वं तत्राप्याह, क्षणमिति । सम्प्रत्यानन्दनागोचरत्वात् स्वरूपेणानिर्देष्टुं न शक्यते किन्तु कथञ्चित् प्रतियोगिमुखेनैवेति भावः गोविन्ददर्शनं इति सप्तम्यानिर्देशस्तथापि तासां निमेषादिव्यवधाने पूर्ववद्विरहावस्थैव दर्शिता क्षणमिति नपुंसकत्वमार्षम् एवमयमासां भावप्रेमप्रणयमानरागानुरागमहाभावाख्यतया सप्तमकक्षामारूढाया रतेः परिपाकः श्रीमन्मद्गुणजवरैर्विरचितोज्ज्वलनीलमणावनुलोकनीयः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

योगवीर्यं योगमायानुभावितमाश्चर्यशक्तियोगस्थापितं विरचयन् नितरां रचयन् ॥ १५—१६ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्ते गोपाः लोचनान्युन्मील्य पुनर्भाण्डीरं प्रत्यागता आत्मानम् आत्मनः प्रत्येकाभिप्रायकमेकवचनं तथा मोचिताः गाश्चालोक्य विस्मिता आसन् ॥ १३ ॥

ततस्तस्य कृष्णस्य योगमाययाऽऽश्चर्यशक्तिरूपया अनुभावितात्तत् प्रभावविषयीकृताः तस्य कृष्णस्य योगात्मकं वीर्यं दवाग्नेरात्मनां क्षेमं च वीक्ष्य तं कृष्णममरं दैवतं मेनिरे ॥ १४ ॥

ततः सायाह्ने गाः सन्निवर्त्य सङ्कीकृत्य सरामः कृष्णो वेणु निरणयन्वादयन् गोपैरभिष्टुतो गोष्ठमागात् ॥ १५ ॥

तदा गोविन्दस्य दर्शनं गोपीनां यशोदादीनां परमानन्दकरमासीत् तत्र हेतुं वदन् दर्शनं विशिनष्टि—आसां गोपीनां येन श्रीकृष्णेन विना क्षणमपि युगशतमिव अभवत् अनन्तदर्शनं परमानन्दकरं बभूवेत्यर्थः ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योगमायानुभावितं स्वरूपसामर्थ्येन प्रभावितम् अमरं जरामरणशून्यं नारायणं मेनिरे ॥ १४ ॥

सायाह्न संध्याकाले ॥ १५ ॥

यथा यावान्युगशतं कालः यासां गोपीनां येन गोविन्ददर्शनेन विना क्षणः कालस्तावानभवत् ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनविंशोऽध्यायः ॥ १९ ॥
[ विजयध्वजरीत्या षोडशोऽध्यायः ]

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनविंशोऽध्यायः ॥ १९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उल्वणां दुष्टावेशात् सख्यसम्बन्धेन प्राप्तदोषदाहार्थं पानं तेषाम् अग्निरूपदोषाणां दाहार्थं वा नेत्राधिदैविका एव दग्धाभवन्निति ननु, कथं स्वान्तर्गतानामग्निगतानां वा धर्माणां प्रकटीकरणं तदाह, योगाधीश इति—योगानामधीशः स्वामी अतो निरोधेनामोचयत् यथा तत्संस्कारोऽपि न तिष्ठतीति तथा भीताः पीतेऽप्यग्नौ निमीलिताक्षा एव स्थिताः ततो भगवतो मोन्मीलयतेत्युक्तास्ते अक्षीण्युन्मील्य पुनरलौकिकेनैव प्रकारेण भाण्डीरवनमापिताः पुनर्गमने तेषां ज्ञानाभावात् आगतमार्गस्य विस्मृतत्वात् ज्ञापकानां नूतनैर्नाशनात् अतिजिज्ञासादिविलम्बाच्च अतो भगवतैव भाण्डीरमापिताः निमीलितादेव समागता इति विमर्शः यतो भगवान् हरिः अतः निश्चयं ज्ञात्वा श्रुत्वा वा विस्मिता आसन् आत्मानं गाश्च मोचिता निश्चयेन आत्मान गा इत्यवयुज्यानुवादः चक्षुर्निमीलनेन पूर्वसर्वविस्मरणं पश्चाद्भगवन्मुखात् बलभद्रमुखाद्वा श्रवणं तदाह निश्चयेति ॥ १३ ॥

ननु तेषां गतानिद्राणां या बुद्धिर्जाता तामाह—कृष्णस्य योगवीर्यं तदिति योगमायया अनुभावितं विस्मारणपुरःस्मारणाङ्गं तत्सामर्थ्यं भगवद्वीर्यमलौकिकमात्मानो दवाग्नेः सकाशात् क्षेमं वीक्ष्य ते भगवन्तम् अमरं मरणनिवर्तकं कालातीतं वा पुरुषोत्तमं मेनिरे तेषां देवा एवोत्तमा इति सर्वे पचारिकं देवत्वं वा मेनिरे दवाग्निर्हि खण्डनाशकः अतः परिपालनं क्षेमो भवत्येव ॥ १४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तान् सर्वथा निर्दुष्टान् कृत्वा अग्नेर्निवर्त्यं दोषाभावत्रैव प्रत्यापत्तिः क्रियते—गाः सान्नयत्यंति । न हि भीताना-मेवागमनं किन्तु यथासुखं मायाह एव जना भविद्या नाशितेति जनार्दनः न केवलं दोषं दूरीकृतवान् किञ्चिदपि कृतवा-नित्याह-पद्दराम इति । वेणुं विरावयन् इति सर्वसद्गुणोद्बोधनं गोष्ठमगादिति स्थानस्य पवित्रता निरूपिता गोपैरभिष्टुत इति गोष्ठसमागमनेऽपि तेषां माहात्म्यज्ञानं दृढमिति ज्ञापितम् ॥१५॥

एवं वनगमने गोपानां सौख्यमुक्त्वा गोष्ठगमने गोपीनां सौख्यमाह-गोपीनामिति । गोविन्ददर्शने तेषामानन्दाविर्भावात् अज्ञाननिवृत्तिर्याहेवोक्ता प्रपञ्चविस्मृतिमाह-त्रुटिं युगशतमिवेति। यासां गोपिकानां येन भगवता विना क्षणं युगशतमिवाऽभवत् एकस्मिन् क्षणे अनन्तवारमुत्पद्यन्ते म्रियन्ते चेति एवमति-दूरया संसाराभावो ज्ञापितः ॥ १६ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
षोडशाध्यायविवरणम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तादृशैश्वर्यदर्शनेऽपि तेषां विशुद्धप्रेममैत्रीमतां तदाच्छादक-मैश्वर्यज्ञानम् अर्जुनादीनामिव न बभूवेत्याह-कृष्णस्य योगमाया-शक्त्या मनुभावितं ज्ञापितयोगवीर्यम् "योगोऽपूर्वार्थसम्प्राप्तौ" इति विश्वकोशादपूर्वार्थसम्प्रापकं वीर्यं प्रभावं तत् आत्मक्षेमं वीक्ष्य तं कृष्णम् अमरं देवविशेषं मेनिरे नतु तदपि एषां सखसम्बन्धस्य शैथिल्यगन्धोऽपि ज्ञेयो यतः सख्ययमस्माकं सखा मनुष्याशक्य-कर्मत्वाद्देव एव न मानुषः इति ततश्चैतत्सखात्वाद्वयमपि देवा एवेत्यतुल्यत्वे सख्यासम्मर्यादित्यनुमायानन्दमत्तास्ते बभूवुरिति भावः ॥ १४ ॥

जगान् चलस्थस्थावरजङ्गमलोकान् स्वविरहं दित्सुः पीडयति व्रजस्थजनांस्तु स्वसंगमं दित्सुस्तं याचयतीति सः ॥ १५ ॥

गोष्ठप्रवेशसमये व्रजस्थानां सर्वेषामेव तत्सङ्गमादानन्दे सत्यपि व्रजेश्वर्यादीनां परमवत्सलानामानन्दाधिक्यं चतुर्दशा-ध्याये वर्हप्रसूनेत्यादिना "गोपीदृग्उत्सवदृशिः प्रविवेश गोष्ठम्" इति पद्येन वर्णितमेवात इदानीं प्रेयसीनां गोपीनामिति पद्मा-नन्द इति मुक्तप्रग्रहया वृत्त्या आनन्दजातिप्रमाणाऽप्यमाधिक्य-मात्यन्तिकमेव तत्रापेक्षिकं ज्ञेयम्, ननु, कास्ता गोप्यस्तदसाधा-रणलक्षणेन परिचाययेत्यत आह—क्षणमिति । कीदृशमपि येन श्रीकृष्णेन विना युगशतमिवाति क्षणस्य युगशतायमानत्वं रति-प्रेमस्नेहमानप्रणयरागानुरागमहाभावानामुत्तरोत्तरप्रेमभूमिकाना-मन्तिमस्य महाभावस्य लक्षणमित्युज्ज्वलनीलमणौ दृष्टमतस्ता महाभाववत्यो वृषभानुनन्दिनीप्रभृतय एव ज्ञेयाः ॥ १६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकोनविंशो दशमे सङ्गतः सङ्गतः सताम् ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततो मीलिताक्षा एव क्षणमात्रेण भाण्डीरमापिताः अक्षीण्युन्मील्य गाः मोचिताः आत्मानं च मोचितं निशाम्य विस्मिता आसन्नित्यन्वयः ॥ १३—१६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनविंशाऽध्यायार्थप्रकाशः ॥ १९ ॥

---

भाषा टीका ।

ता पीछे जब उन गोपन नें नेत्र खोले, तब देखें कहा कि सगरे भांडीर वन में आय गये, और अपन कूं सब गायन कूं अग्नि के दुःख तें छूटे भये देखि कें बडे विस्मय कों प्राप्त होत भये ॥ १३ ॥

श्रीकृष्ण के या योग के पराक्रम कू और योगमाया के प्रभाव कूं देखि कें और दवाग्नि में अपनी कुशलता कों देख कें ते सब गोप ग्वाल कृष्ण कुं देवता मानत भये ॥ १४ ॥

बलदेवजी सहित श्रीकृष्णचन्द्र सन्ध्या के समय वन ते गायन कूं लौटाय के सखा जिनकी बडाई करते जावें या रीत सों बाँसुरी बजावत ब्रज में आवत भये ॥ १५ ॥

जब ब्रज में आये तब श्रीकृष्ण के दर्शन में गोपीन कों परम आनन्द भयो, गोपी कैसी, कि—जिन गोपीन कूं श्री-कृष्ण के बिना एक क्षण सो युगन की बरोबर बीतत भयो ॥ १६ ॥

इति श्रीमद्भागवत दशमस्कन्ध में उन्नीसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ १९ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥

---

### श्रीशुक उवाच ।

तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः ।
गोपाः स्त्रीभ्यः समाचख्युः प्रलम्बवधमेव च ॥ १ ॥
गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः ।
मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ ॥ २ ॥
ततः प्रावर्त्तत प्रावृट् सर्वसत्त्वसमुद्भवा ।
विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥ ३ ॥
सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः ।
अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विंशे प्रावृट्शरच्छोभा वर्णनेन वनौकसाम् ।
प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजा हरेः ॥
दृष्टान्तोपमानेन प्रावृट्शरदोर्द्वयोः ।
वर्णनं भक्तनैष्कर्म्यकृष्णलीलाविवक्षया ॥

॥ १ ॥ २ ॥

तत्र प्रावृड्योगं तत आदित्यादिशात्मा सर्वेषां प्राणिनां समुद्भव उत्पत्तिर्जीवनञ्च यस्यां सा प्रावृट् विद्योतमानाः परिधयः परिवेषा दिशोभा यस्यां सा विस्फूर्जितं सङ्क्षुभितं नभस्तलं यस्यां सा ॥ ३ ॥

सान्द्रैर्निबिडैर्नीलाम्बुदैर्विद्युद्भिः स्तनयित्नुभिश्चाच्छन्नम् सगुणं गुणैराच्छन्नं जीवरूपम् विद्युद्गर्जिताम्बुदानां सत्त्वरजस्तमोभिरुपमा ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तयोः श्रीकृष्णरामयोर्दावाग्निमोचनरूपं प्रलम्बवधरूपं च यथाक्रमं तत्कर्मेति सामयिकत्वेनैकवचननिर्देशः प्राधान्यापेक्षया स्त्रीभ्यः स्वमातृादिभ्यः अस्वक्लेशात् ता एव आनयितुमित्यर्थः। सम्यक् तत्तद्विशेषत आचख्युः ॥ १ ॥

तत एव सर्वेषामपि श्रवणं जातमित्याह—गोपेति। तत्रापि वृद्धगोपवृद्धा इति तेषामपि चमत्कारातिशयेन स्वाधिक्यापेक्षया समं गोप्योऽपि तादृशौ देवेषु प्रवरौ क्वापि बन्धुजनादिसम्बन्धाकाराभिव्यक्त्या निश्चयाभावात् ॥ २ ॥

क्रमप्राप्तां श्रीभगवतः प्रावृट्शरत्क्रीडां वर्णयितुं श्रीवृन्दावनसम्बन्धेनात्यन्तसुखमयीं तदुद्दीपनरूपां श्रीमद्भगवत्याभिव्यक्तिसुखमये-वादौ वर्णयति—वर्णनालङ्कारादानुषङ्गिकत्वेन सर्वां देशीं पादेयतां च दर्शयति—तत इत्यादिना यावत्समाप्ति। तत्र तत्र शारदमासिकमंशमपि सर्वमेव ज्ञेयम् अन्यत्तैः तत्र विशदा द्युतिः वर्षारम्भे ईषदुद्भूतया मरीचिकादिमयधूल्या व्याच्छादनेन दूरतो दृश्यमानत्वात् विस्फूर्जितं गर्जितम् ॥ ३ ॥

अस्पष्टं ज्योतिश्चन्द्रसूर्यादिकं यत्र तादृशं सत् व्योम तद्द्वारा स्वप्रकाशात्मकं तत्सुखमयमपि अस्पष्टज्योतिष्ट्वं हेतुः सान्द्रनीलाम्बुदैराच्छन्नमिति कीदृशैः तैः विद्युद्भिः स्तनयित्नुभिश्च तत्राह ब्रह्मेव जीवाख्यं ब्रह्मादि इव यथा सगुणं रजस्तमोभिर्नतत्क्वाचिद् आवृतस्वरूपज्ञानमित्यर्थः । दृष्टान्तीयांशास्तत्र यथायथं विवेचनीयाः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—२ ॥

विद्योतमानपरिधिः विद्युद्भिर्द्योतमानपरिधिः विस्फूर्जितनभस्तला च ॥ ३ ॥

सान्द्रत्वे हेतुमाह—आच्छन्नं प्रकृत्या तिरोहितं ज्योतिः स्वरूपं ब्रह्मेव ॥ ४–६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वसन्तग्रीष्मयोर्भगवत्क्रीडा अनुवर्णिताः अथ प्रावृट्... ता अनुवर्णयितुं हरणमौत्सुक्यं प्रावृडादि...

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रावृड्वर्तुं तात्कालिकान् कांश्चिद्विहारांश्चानुवर्णयति विंशे- नाध्यायेन—तावत्प्रथमं भगवत्क्रीडावृत्तशेषमाह——तयोरिति द्वाभ्याम् । आत्मनः आत्मनां दवाग्निमोचनात्मकं तद्रामकृष्णयो- रद्भुतं कर्म प्रलम्बवधञ्च गोपाः स्त्रीभ्यो यशोदादिभ्यः कथयामासुः ॥ १ ॥

तद्गोपबालैरुक्तमाकर्ण्य विस्मिताः गोपवृद्धा नन्दादयः गोप्यश्च रामकृष्णौ व्रजं गतौ देवश्रेष्ठौ मेनिरे देवश्रेष्ठावेव रामकृष्णरूपेण व्रजे जातावित्यमन्यन्तेत्यर्थः ॥ २ ॥

ततः प्रावृट् वर्षर्तुः प्रावर्त्तत प्रावृषं विशिनष्टि—सर्वेषां प्राणिनां समुद्भव उत्पत्तितो जीवनतश्च यस्यां विद्योतमानाः विद्यु- द्भिर्द्योतमानाः परिधयो दिशो यस्यां विस्फूर्जितं वज्रनिर्घुष्टं नभस्तलं यस्यां सा प्रावृट् प्रावर्त्ततेत्यन्वयः ॥ ३ ॥

सान्द्रैरिति । सान्द्रैर्निबिडैर्नीलाम्बुदैर्विद्युद्गर्जितसहितै- राच्छन्नम् अत एवास्पृष्टानि ज्योतींषि सूर्यचन्द्रादीनि यस्मिं- स्तद्व्योम सगुणं ब्रह्मेव बभौ, यथा प्रकृत्या तिरोहितं ज्योतिर्ज्ञानरूपत्वाद्विषयप्रकाशकधर्मभूतज्ञानं यस्य तत् सगुणं ब्रह्म गुणत्रयवश्यं ब्रह्म गुणतो बृहत्त्वाद्धि जीवस्वरूपं भाति तद्वदित्यर्थः । अनेनाकाशस्य यावच्छरदं नीलाम्बुदविद्युत्स्तनयित्नु सम्बन्धवज्जीवस्य यावन्मुक्तिगुणवश्यत्वं सूर्यादिज्योतिस्स्था- नीयधर्मभूतस्य सङ्कोचेन प्रसराभावः व्योमवत्स्वतो निर्मलस्या- गन्तुकमालिन्यं चेति तदपनोदकमोक्षोपाये यतितव्यमित्यभिप्रेतं ब्रह्मशब्देन मुक्तिदशायां ज्ञानद्वारा बृहत्त्वमस्तीति सूचितम् ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं तत्कर्मेति तत्राह—दावाग्नेरिति । चशब्दः समुच्चये दावाग्नि- मोचं प्रलम्बवधं चेति द्वयमेवेत्यर्थः ॥ १ ॥

एकश्चशब्दः समाहारे "चोन्वाचये समाहारः" इति यादवः व्रजं गतौ कृष्णरामौ देवप्रवरौ मेनिरे इत्यन्वयः ॥ २ ॥

नारायणभक्तिवैशद्यावैशद्यदृष्टान्तत्वेन प्रावृड्वर्तुं वर्णयत्य- स्मिन्नध्याये ततः ग्रीष्मत्वंतनन्तरं सर्वेषां सत्त्वानां स्थावरजङ्गम- लक्षणानां पदार्थानां समुद्भवो यस्यां सा तथा "सत्त्वं द्रव्ये सत्ता स्वभावयोः" इति यादवः विद्योतमानाः तडिदन्तरे प्रका- शमानाः परिधयः परिवेषा यस्यां सा तथा विस्फूर्जितम् अशनि- गर्जनोपेतं नभस्तलं यस्याम् एवंविधा प्रावृट् प्रावर्त्तत इत्य- न्वयः ॥ ३ ॥

प्रावृड्गुणान्तरं दर्शयति—सान्द्रेति । जलेन सान्द्रनीलाम्बुदै- राच्छन्नं व्योम नभो बभौ विद्युता स्तनयित्नुना गर्जितेन सहितैः अत एवास्पष्टसूर्यज्योतिः "परायणं ज्योतिरेकं तप- स्य" इति श्रुतिः । कथमिव सगुणं चतुर्मुखाख्यं ब्रह्मेव ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२ ॥

विस्फूर्जितं गर्जितम् ॥ ३ ॥ ४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लीला सप्तदशोऽध्याये निरुद्धैः सहितोच्यते ।
वर्षाशरत्कालयोगात् सर्वतत्त्वं च (नि)रूप्यते ॥
दोषापगमने एव सर्वतत्त्वस्य बोधनम् ।
ज्ञाते च तत्त्वे सक्रीडा प्राजापत्ये निरूप्यते ॥
माहात्म्यज्ञानपूर्वस्तु स्नेहः कृष्णे हि युज्यते ।
तादृशैश्च मुदा क्रीडा तथात्वत्र निरूप्यते ॥

पूर्वाध्याये गोष्ठे समागता इत्युक्तं ततः पूर्वापेक्षया यो विशेषः स वक्तव्यः तमाह—द्वाभ्यां तयोरिति । रामकृष्णयोः प्रलम्बवधाग्नि- धिमोचनलक्षणमद्भुतं सर्वलोकोत्तममश्रुतमदृष्टं च कर्म स्त्रीभ्यः समाचख्युः तत्कर्म निर्दिशन्ति—दवाग्नेरात्मनो मोक्षः प्रलम्बस्य च वधः यथा यथा माहात्म्यं भगवतो ज्ञायते तथा शान्ततया कथ्यते इति गोपालाः शनैः शनैः स्वगृहे समागत्य स्त्रीभ्य एवोक्तवन्तः तासामपि सर्वथा भगवत्परत्वाय तथा सति तत्सङ्गदोषो न भवेदिति तेषां विमर्शः प्रसङ्गाद्वृद्धाना- मपि श्रवणम् ॥ १ ॥

ततः सर्व एव गोकुलवासिनो भगवन्माहात्म्यं ज्ञातवन्त इत्याह—गोपवृद्धाश्चेति । चकारादतिमूढा बालाश्च गोप्यः चका- रादन्याः सर्वाः तदुपाकर्ण्य भगवन्माहात्म्यं श्रुत्वा विस्मिता जाताः तस्मिन् धर्मिणि शुभे भगवति यज्ज्ञानं जातं तदाह, मेनिरे देवप्रवराविति । देवानामपि प्रकृष्टा वराः वरणीयाः देवानां मध्ये प्रकृष्टा इन्द्रादयः तेषामपि वरणीयौ पुरुषोत्तमरूपौ अनुपचारादित्येतदर्थं कृष्णरामाविति नामग्रहणं इत्यानुपपत्तिं परिहरन्ति—व्रजं गताविति । व्रजं समागतौ यथा महाराजः कदा- चित् क्वचित् गच्छति एवं भगवानपि व्रजमागत इति ॥ २ ॥

एवं तेषां ज्ञानानन्तरं भगवत्क्रीडार्थं प्रावृट् समा- गतेत्याह——तत इति द्वाविंशत्या । आदौ स्वयं प्रावृट् समागता । ननु, प्रावृष्यागतायां का भगल्लीला भवि- ष्यतीत्याशङ्क्याह—सर्वसत्त्वसमुद्भवेति । सर्वेषामेव सत्त्वानां सम्यगुद्भवो यत्रेति सर्वजीवैक्येन हि भगवत्क्रीडा तदर्थं वा सर्व- सत्त्वगुणोद्बोधाद्वा तदा भगवान् सत्त्वेन सात्त्विकैः सह क्रीडि- ष्यतीति कार्यतस्तस्या भगवत्क्रीडोपयिकत्वमुक्त्वा स्वरूपतोऽपि क्रीडोपयिकत्वमाह—विद्योतमानाः परिधयो यत्रेति परिधयः परितो वेष्टनदिशः ताः सर्वाः एवान्यदा ऽप्रकाशमाना अपि वर्षास्वागतास्त्वेव विद्योतमानाः विशेषेण प्रकाशमाना भवन्ति विस्फूर्जितं नभस्तलं च भवति, अनेन भगवतः इयं सम्भृतिरूपा निरूपिता यस्यामागतायामुत्सवः सर्वतश्च सर्वे गुणाः उद्बुद्धा भवन्तीति यथा महाराजसम्भृतौ समागतायां सर्वो ग्राम उद्बुद्धो भवति भूतेर्गुणाः सर्वे जीवाः दिशो विद्युत् गर्जितान्या- काशस्य एतान्येव तमःसत्त्वरजांस्यपि ॥ ३ ॥

तस्यामागतायां सर्वा एव भगवच्छक्तयः क्रीडोपयिक्यः समा- गता इति ज्ञापयितुं दिव्यानेकाविंशतिधर्मानाह—सान्द्रेत्यादि तावद्भिः श्लोकैः "एकविंशो वा इतःस्वर्गो लोक" इति श्रुतेः । "एकविंशतिर्वै देवलोकाः" इति च एतेनैव सर्वप्रतिष्ठा "द्वादश- मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इति च तत्र प्रथममादित्यवत् प्रकाशमानं सगुणं ब्रह्म दृष्टान्तेन

अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु ।
स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ॥ ५ ॥
तडित्वन्तो महामेघाश्चण्डश्वसनवेपिताः ।
(१)प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥ ६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

प्रावृट् स्पष्टयतीति प्रावृट्कृतं ब्रह्मदृष्टान्तमाह—सान्द्रेति । "आकाशशरीरं ब्रह्म" इति श्रुतावाकाशस्य शरीरत्वं श्रूयते तत्प्रसिद्धकृष्णस्वरूपतुल्यं न भवतीति श्रुतिबाधायां प्रावृट्कालेन तत्समर्थनं क्रियते सत्यमियं श्रुतिः आकाशो भगवद्रूपतुल्य इति तल्लोकाः प्रत्यक्षविरुद्धं नाङ्गीकुर्वन्तीति विद्यमानानेव गुणान् समयान्तरे गुप्तान् प्रकटीकरोति तान् गुणानाह—सान्द्राः चिक्कणाः किर्मीरिता ये नीलाम्बुदाः सजलजलदाः अवयवप्रायाः तैः सहितं व्योम तथापि न शरीरतुल्यं वर्णमात्रेणैव साम्यादिति विशेषमाह—सविद्युत्स्तनयित्नुभिरिति । विद्युत् पीताम्बरस्थानीया आभरणस्थानीया च नानाभाषणगीतवेणुनादादिरूपशब्दसिद्ध्यर्थं स्तनयित्नुसहिताः गर्जितानि नानाविधानि भवन्ति तेनाकाशशरीरं ब्रह्म भवति । ननु, शरीरं ह्यन्तस्तेजोमयं बहिराच्छन्नं तेजो भवति यथा भगवान् लोकव्यामोहनार्थं जात इव दृश्यते तदभावात् कथमाकाशस्य भगवद्रूपतुल्यत्वमित्याशङ्क्याह—अस्पष्टज्योतिरिति । न स्पष्टानि ज्योतींषि सूर्यादीनि यत्रेति तथाप्यनेकविधवस्त्रगूढगोपिकाभिर्वेष्टितो भगवान् भवति तदभावात् कथं तुल्यत्वमित्याशङ्क्याह—आच्छन्नमिति । तदप्यवान्तरमेघैराच्छन्नं भवति अतः सगुणमनन्तगुणपरिपूर्णं ब्रह्म भगवद्रूपं यथा तथा व्योम यतो अतः श्रुतिप्रमाणमिति भावः । सत्त्वरजस्तमोगुणपक्षेऽपि आकाशेऽप्यभ्रतमःप्रकाशा भवन्ति भगवत्यपि लोकव्यामोहनं गोपिकालीलावबोधनं चेति ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपमानेन वस्तूनामुपादेयत्वहेयते ।
विंशे प्रावट्शरच्छोभा वर्णनेऽद्योतयन्मुनिः ॥
॥ १ ॥

देवप्रवराविति प्रेमप्राबल्येन स्वसम्बन्धस्य दार्ढ्यात् पूर्वं तन्माधुर्य्यस्यैव पोषणं तत्त्वेषामैश्वर्य्यज्ञानं ज्ञेयं तत् कार्य्यस्य स्वसम्बन्धशैथिल्यस्य तत्संयोगे कुत्राप्यश्रवणात् ॥ २ ॥

ततो ग्रीष्मानन्तरं सर्वेषां सत्त्वानां प्राणिनां समुद्भव उत्पत्तितो जीवनतश्च यस्यां सा प्रावृट् वर्षा परिधिश्चन्द्रार्कयोर्मण्डलं विस्फूर्जितं गर्जितं तद्युक्तं नभस्तलं यस्यां सा ॥ ३ ॥

सान्द्रैर्निविडैर्नीलैरम्बुदैर्विद्युद्गर्जितसहितैराच्छन्नमाच्छन्नत्वेन प्रतीतं सगुणं ब्रह्मसमष्टिविराडात्मा विद्युद्गर्जिताम्बुदानां सत्त्वरजस्तमोभिरुपमा अत्र व्योम्नो निर्लेपत्वेन वस्तुतस्त्वनाच्छन्नत्वेनाम्बुदाद्यधिष्ठानमात्रत्वाद्ब्रह्मणा सहोपमेयं योगिभिः स्वीयोपास्यदृष्ट्या उपादेया ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विंशे गोपगोपीभ्यः प्रलम्बवधादिप्रभुकर्मनिवेदनं प्रावृट् शरच्छोभा सलक्ष्य हरेः प्रावृट् क्रीडा च निरूप्यते—तयोः इति ॥ १ ॥ २ ॥

सर्वेषां सत्त्वानां समुद्भवः उत्पत्तितो जीवनतश्च यस्मात् विद्योतमानाः परिधयः दिशो यस्याम् विस्फूर्जितं संक्षुभितं नभस्तलं यस्यां सा ॥ ३ ॥

तदानीं सान्द्रैर्निविडैर्विद्युद्गर्जितसहितैर्नीलाम्बुदैराच्छन्नं व्योम सगुणं गुणान्वयं ब्रह्म वृहदुद्भानगुणं जीवतत्त्वमिव अस्पष्टज्योतिः आभाति यथा वृतज्ञानो जीवस्तथावृतसूर्यादिज्योतिराकाशो बभावित्यर्थः । विद्युद्गर्जिताम्बुदानां सत्त्वादिभिरुपमा ॥ ४ ॥

भाषा टीका ।

ॐ गोपगोपीश्वराय नमः ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—दावाग्नितें अपनकों छुडायवे रूप जो श्रीकृष्ण और बलदेवजी को अद्भुत कर्म है ताय गोप ला(य) स्त्रीननें कहत भये और जैसे प्रलम्बासुरकों मार्यो सो भी कहत भये ॥ १ ॥

बडे २ वृद्ध गोप और गोपी या बातकूं सुनिकें बडे विस्मयकों प्राप्त होत भये, और श्रीकृष्ण और बलदेवकों "ये दोउ कोई देवतानमें श्रेष्ठ व्रजमें आये हैं" ऐसें मानत भये ॥ २ ॥

अब, वर्षाऋतुको वर्णन करें हैं, ऐसें ग्रीष्मऋतुके पीछें वर्षा ऋतु आवत भई ता वर्षाऋतु में बहुतसे जीव उत्पन्न होवें कैसी वो वर्षाऋतु है, कि—दिखाई परें हैं परिधि अर्थात् सूर्य चन्द्र के चारों ओर कुण्डलाकार मण्डल जामें, और क्षुभित होय रह्यो (मेघादिसों) नभस्तल जामें ॥ ३ ॥

बीजुरी और गर्जनवारे सघननीलमेघनसों नहीं भली भांत प्रकाशित होंयहैं चन्द्रसूर्यादि जोति जामें ऐसो आकाश सगुण ब्रह्मकी शोभा कूं पावत भयो ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पर्जन्यः सूर्यः स्वगोभिर्निजरश्मिभिः काले यथोचितसमये ॥ ५ ॥
अत्र राजोपमाकरादानतः समये पुनर्दानतश्च सूचिता ॥ ५ ॥
अस्य विश्वस्य प्रीणनमाप्यायनकरं जीवनमुदकं मुमु(चुः)

(१) प्राणिनाम् इति वीर० पा० ।

तपःकृशा देवमीढा आसीद्वर्षीयसी मही ।
यथैव काम्यतपसस्तनुः सम्प्राप्य तत्फलम् ॥ ७ ॥
निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः ।
यथा पापेन पाषण्डा न हि वेदाः कलौ युगे ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृपालवो यथा तप्तं जनं निरीक्ष्यानुकम्पमानास्तदाप्यायनाय स्वजीवनमपि त्यजन्ति तद्वन्महान्तो मेघास्तडित्वन्तोऽर्थिभ्यं तप्त निरीक्ष्य वायुभिर्वेपिता जीवनं मुमुचुरिति ॥ ६ ॥

तपसा ग्रीष्मेण कृशा देवमीढा पर्जन्यसिक्ता वर्षीयसी उत्कृष्टा पुष्टा काम्यन्तपो यस्य तस्य तनुः कामान् सम्प्राप्य यथेति ॥ ७ ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सहस्रादि वसुरूपकमुदकस्य करत्वं व्यञ्जयति, तच्च पर्जन्यस्य राजत्वम् अत एव निपीतमाहृतमित्यर्थः ॥ ५ ॥

तडित्वन्त इति तैर्व्याख्यातं तत्र कृपालव इति करुणा त्वस्य व्याख्यानेन स्वभावकथनम् अनुकम्पमानाः इत्यनुकम्पया तत्कालमुदितया वेपिताः सन्त इत्यर्थः । स्वजीवनमपीति तस्मिं स्त्यक्ते यदि तप्तानामाप्यायनं स्यात् तदा तदपि त्यजन्तीत्यर्थः वायुभिरिति बहुत्वं चण्डशब्देन लभ्यते हि निश्चये । यद्वा, तडित्वन्त इति स्वरूपातिशयद्योतनार्थं करुणा इवेत्युत्प्रेक्षा तस्या घटना तु श्लेषेण चण्डश्वासकम्पयुक्ताः सन्तो रन्तिदेवादिवज्जीवनहेतुजलमपि मुमुचुरिति ॥ ६ ॥

तप इति सान्तत्वमार्षम् ॥ ७ ॥

ग्रहास्तु न भान्ति पाषण्डाः तच्छास्त्राणि ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तपःकृशा सूर्यरश्मितापकृशा देवेन वर्षासिक्ता वर्षीयसी माननीया ॥ ७—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अष्टौ मासान् अत्यन्तसंयोगे द्वितीया कार्तिकादारभ्य यावज्ज्येष्ठं गोभिः स्वकिरणैर्नितरां पीतं गृहीतम् उदकात्मकं वसु धनं तत् गोभिरेव पुनरुचितकाले आगते प्राप्ते सति मोक्तुं पर्जन्यो वर्षाधिपः सूर्यः प्रारेभे अनेन राज्याधिकृतः शिक्षितः पर्जन्यवद्यथोचितं कालेषु प्रजाभ्यो धनानि गृहीत्वा पुनरर्थिभ्यो दद्यादिति. यावज्ज्ञानोदयं गृहीतान् कामान् सति ज्ञानोदये जह्यादिति मुमुक्षुशिक्षा वा ॥५॥

तडित्वन्त इति । चण्डश्वसनेन तीव्रवायुना कम्पिताः मेघाः प्राणिनां जीवनं जीवनसाधनमम्बु जलं करुणा इवार्त्ता आपन्नाः दयावन्त इव मुमुचुः प्राणसञ्जीवनं करोति पाठान्तरं । तदाऽस्य विश्वस्य प्राणसञ्जीवनकरं जीवनं जलं करुणा इव मुमुचुरित्यर्थः । अनेन दुःखितं जनमवलोक्य मेघवत् श्वासेन कम्पि ( तगात्राः ) तान्तःकरणाः करुणावन्तश्च स्वजीवनपर्यन्तदानेनोपकुर्युरिति शिक्षा कृता ॥ ६ ॥

तपःकृशेति । तपसा ग्रीष्मेण कृशा शुष्का देवेन पर्जन्येन मीढा सिक्ता भूमिर्वर्षीयसी प्रवृद्धा बभूव सस्यादिसम्पन्ना बभूवेत्यर्थः । यथा काम्यं तपो यस्य तस्य पुंसः तनुस्तावत्तपोदशायां कृशा सती तत्फलं काम्यतपःफलं प्राप्य परिपुष्टा भवति तद्वदनेन काम्यतपसः केवलं देहसुखसाधनत्वमेव न स्वात्मसुखसाधनत्वमिति शिक्षितम् ॥ ७ ॥

निशामुखेष्विति । निशामुखेषु सायङ्कालेषु खद्योता तेजोविशिष्टाः कीटविशेषा एव भान्ति तत्र हेतुः तमसेति एतेन दिवसे तेषां शोभा नास्तीति भावः । न तु ग्रहाश्चन्द्रशुक्रादयः मेघकृततमोवृतत्वाद्गगनस्थेत्यर्थः । यथा कलौ युगे पापेन पापप्रचुरेण पाषण्डाः वेदविरुद्धाः आगमा एव भान्ति न तु वेदा भान्ति तद्वदनेन वैदिकधर्माभासरुचिः पापहेतुकेति सूचितम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अष्टौ मासानिति द्वितीया सप्तम्यर्थे कालाध्वनोरत्यन्तसंयोग (२।३।५) इति सूत्रात् सम्वत्सरमधीते क्रोशं कुटिला नदीति प्रयोगः उदमयं जलात्मकं वसु वस्तु भूम्यां विद्यमानं स्वगोभिः स्वरश्मिभिः पीतं ताभिरेव मोक्तुं प्रारब्धवान् पर्जन्यो गर्जन्मेघः अभिमन्यमानेनाभिमानी सविता लक्ष्यते पर्जन्यो गर्जदभ्रेऽभ्रध्वनिदाके स्वर्गयत्रिक इति स्वगोभिरित्युक्त्या सांकेतिन गम्यते—

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

इति च ॥ ५ ॥

प्रचण्डश्वसनवेपिताः कम्पिताः जीवनं जीवनसाधनं करुणावन्तीति करुणाः । यद्वा, कृष्णस्य करुणा इव अनेन भक्तिसामग्रीमतां ज्ञानाम्बु वर्षन्ति कृष्णकटाक्षा इति सूचितं भवति ॥ ६ ॥

ग्रीष्मे तपःकृशा सूर्यतपनेन कार्श्यं गता देवेन सवित्रा मीढा सेचिता वर्षीयसी वृद्धा अपि वृद्धिं गता का इव काम्यतपसः पुंसः तनुस्तत्फलं काम्यतपःफलं प्राप्य सम्पदा वर्धते अनेन प्रवृत्तिप्रकारमार्गो दर्शितः ॥ ७ ॥

निशामुखेषु सन्ध्यासु सूर्यादिग्रहाः न भान्ति पापेन कर्मणा अनेन दुर्जनबुद्ध्या सज्जनाभिभवो दर्शितः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वक्ष्यति करादानं तेन च राज्ञोपस्यं ध्वनितम् अत एव पीतमाहृतमित्यर्थः ॥ ५ ॥ ६ ॥

तप इति सान्तत्वमपि "तपस्तु तपसा सह" इति द्विरूपकोशात् ॥ ७—११ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं वर्षाकृतमाकाशं निरूप्य तत्सम्बन्धिनं सूर्यं निरूपयति अष्टौ मासानिति । अयमेव सूर्यः पर्जन्यः "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुतेः सूर्यस्याध्यात्मिकं रूपं पर्जन्यः आधिभौतिकम् आदित्यः आधिदैविकः सम्वत्सरः स-प्रजापतिः अतोऽयं सूर्यं एव पर्जन्यः स्वरश्मिभिरेव अष्टौ मासान् निरन्तरं मासाष्टकपर्यन्त पीतं बहुदमयं जलमयं वसु धनं साद्रां हि भूमिः सर्वमन्नादिकमुत्पादयति अतो जलं वस्वेव वसुप्रधानं वा जलेनैव सस्यादिना धनोत्पत्तिः अतो दत्तं ग्राह्यमिति पक्कं कृत्वा तदेव प्रयच्छति तस्य किरणा एव मेघाः अतो मोकुमारेभे प्रावृष्यागतायामन्यथा सकालस्तस्याप्युपद्रवहेतुः स्यादत आह काले समागत इति अतो यथा ब्रह्मशरीरत्वं सम्पादयति तथा सूर्यस्यापि जगत्कर्तृत्वरूपं सवितृत्वं सम्पादयति ॥ ५ ॥

एवमाकाशसूर्ययोः स्वरूपसम्पादकत्वमुक्त्वा सूर्योपरि लोकयोर्मध्यमलोकस्याप्यन्तरिक्षस्य स्वरूपसम्पादिका प्रावृड् जातेत्याह—तडित्वन्त इति । अन्तरिक्षदेवतया मेघा वाय्वधीनावलकार्ये स एव तद्देहा एव सर्वे इन्द्रादय इति त्रिदेवतापक्षे निर्णयः अतो मेघानां वाय्वधीनत्वमिन्द्राधीनत्वमिति न विरुध्यते इन्द्रो देवता वायुरात्मा मेघा भूतानीति अथायाम् एकरूपत्वं वा यथा पुरुषप्रयत्नेन शरीरचेष्टा तथा वायुप्रेरणया मेघानां कार्ये क्षिप्तिः ते हि मेघाः सर्वेभ्यो लोकेभ्यः जलरूपं प्रयच्छन्तोऽपि नावैदिकन्यायेन प्रयच्छन्ति तथा सति फलं न स्यात् न हि वृष्टिमात्रं फलं किन्तु तत अन्नोत्पत्तिः तदग्नौ होमव्यतिरेकेण फलजनकं न भवतीत्यग्निहोमार्थं विद्युद्रूपो गृहीत इत्याह—तडित्वन्त इति । "विद्युदग्निर्वर्षं हविः स्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोऽनु वषट्कारः" इति-श्रुतेः । महामेघा इति सम्यक् शास्त्रार्थकर्तारः चण्डश्वसनेन च वेपिताः कम्पिताः प्रचण्डो हि पवनः देहमर्यादां न मन्यते अतस्तेन कम्पिताः प्रीणनमाप्यायनजनकं तापनिवर्तकं च जीवनमप्रेऽप्याणुभ्यस्या प्राणधारकं तदपगमे तेऽपि रिक्ता भवन्तीति कथमात्मविरोधिदानमित्याशङ्क्याह—करुणा इवेति । दध्यङ् शिबिप्रभृतयः परार्थं स्वप्राणानपि ददुः न चैते करुणया प्रयच्छन्ति किन्तु कालवायुप्रेरिता इति करुणा इवेत्युक्तम् ॥ ६ ॥

क्रमप्राप्तां प्रावृट्कृतां भूमिं वर्णयति—तपःकृशेति । पूर्वं तपसा सन्तापेन सर्वजलहरणात् शुष्का कृशा जाता देवेन इन्द्रेण मीढा "मिह सेचने" सिक्ता वर्षावसी स्थूला उच्छूना वर्षाकालसम्बन्धिनी च तुन्दोजने हि पुष्टो भवति । नन्वस्य देवस्य किं प्रयोजनं ग्रहणत्यागाभ्यां भूम्यर्थमिति चेत् ? भूम्या अपि न किञ्चित् फलं पश्याम इत्याशङ्क्याह—यथैवेति । तपसा शोषिते देहे तत्तपसा या विशेषसम्पत्तिः फलत्वेनायाति तेन सुखं पुष्टिश्च भवति प्रथमपुष्टिस्तु न सुखं जनयति—अतस्तस्या दूरीकरणं पुनःकरणमिति युक्तमेव भूमेस्तथात्वं तदाह काम्यतपसःसम्बन्धिन्यः तनूः तत्फलं सम्प्राप्य यथा वर्षस्यो भवन्ति तनुरिति वा पाठः प्रथमार्थे द्वितीया वा अथवा तपस्वी तपसः सम्बन्धिनीस्तनूः स्वर्गादिदेहान् प्राप्य तत्फलं प्राप्नोति तद्वत् पृथिवीफलमपि सस्यादिकं प्राप्तवतीत्यर्थः नतु, न यत्र चण्डांशुकरा विपोलवणा भुवो रसं गृहन् इति पूर्वमुक्तम् इति तपःकृशत्वोक्तिस्तद्विरुद्धेतिचेत् न दृष्टान्तेनैव तन्निरासात् तथा हि यथाग्रिमफलार्थमसहजमपि तपःकरोति कामी तेन विना तदसम्भवात्तथाग्रिमसस्यार्थं तदुत्पत्तियोग्यं रसं गृह्णन्ति नान्यत्र पूर्वं सारस्यवति देशे उप्तस्य बीजस्याऽपि नाशात्तत्र रसग्रहणस्यावश्यकत्वात् अत एव जलादिपदं हित्वा रसपदमुक्तं तस्योत्पादनशक्तेः रसपदार्थत्वात् विषादप्युत्पत्तेन तामपि उत्पादयितुं सामर्थ्यमप्यस्तीति ज्ञापयं जीवितविरोधित्वाद्विषस्य तादृशैरपि रसाग्रहणं यत्तद्वृन्दावनमाहात्म्यम् एतेन कालादयोऽपि व्रजवासिविरुद्धं कर्तुं न शक्नुवन्तीति ज्ञापितम् अत्र काम्यतपःफलस्य दृष्टान्तीकरणेनाऽत्र सस्यादेस्तद्विकारत्वं ज्ञाप्यते तदेतत्पूर्वमेवोक्तं तत आरभ्याग्रिमश्लोके ॥ ७ ॥

एवं लोकत्रयस्यादित्यसाहितस्यापि स्वरूपमुक्त्वा शिष्टं स्वरूपं वक्तुम् ऋतवो धर्मे प्रतिष्ठिताः मासाधार्गीष्वाति प्रथमऋतुवर्णानायां धर्मप्रतिष्ठामाह—निशामुखेष्वित्यादिपञ्चभिः—

> अर्थः शब्दः फलं चापि त्रिविधं परिकीर्त्तितम् ।
> अन्तर्बहिस्तथाचाङ्गमान्तरं चेति भेदतः ॥
> पुष्टिमार्गे हि मर्यादामार्गस्तत्र न शोभते ।
> अतः पञ्चविधस्यापि हानिरत्र निरूप्यते ॥

तत्र प्रथमतो वेदार्थहानिमाह—वसन्ते हि ब्राह्मणानामुपनयनाऽन्याधानादि तस्याभावे वसन्तव्यवस्थोक्ता भवति ब्राह्मणानामन्यशेषस्थे उपनयनानन्तरं यदध्ययनादि ग्रीष्मर्त्तौ तदन्यार्थमिति तत्स्वरूपमप्युक्तं भवति ततः कर्मफलं तद्वर्णाकार्यं तदप्सङ्गतमिति तस्यापि स्वरूपं विवृतं भवति अल्पफलं बहुक्लेशसाध्यं शरत्फलमिति दोषदुष्टत्वात् तस्यापि स्वरूपमुक्तं भवति ततोऽप्यसन्तोषस्तदभावश्चेत्यवशिष्टाङ्गरूपस्य प्राप्तिर्निशामुखेषु खद्योताः कीटविशेषाः लोकानां प्रकाशका इव भवन्ति स्वयमपि प्रकाशन्ते तत्र हेतुः तमसेति कालकृतं यत्तमः मेघवृष्ट्यादिकृतं तेनैव तेषां प्रकाशः तदपि प्रकाशकं तमेव अग्रे वृष्ट्या तेषामेव मरणसम्भवात् यद्य प्रकाशको भवेयुः ग्रहा ये नित्यप्रकाशाः ते न भान्ति एवं भावे यो हेतुः तं दृष्टान्तेन स्पष्टयति यथा पापेनेति यथा यथा पापाधिक्यं तथा तथा वेदविरुद्धमार्गे रुचिः वेदमार्गविरोधेन येषां कथा भवत्यपि ते हि पाषण्डिनो ज्ञेयाः शास्त्रार्थत्वेन वेषिणः पूर्वं दृष्टे तु तत्र रुचिनं भवत्येव न ह्युपनयनादिसंस्कृतं पूर्वमस्यां कर्तुं वाञ्छति अतोऽत्रापि पापेनैव पाषण्डाः । ननु, कि

श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः ।
तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये ॥ ९ ॥
आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ।
पुंसो यथाऽस्वतन्त्रस्य देहद्रविणसम्पदः ॥ १० ॥
हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिता ।
उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत् ॥ ११ ॥
क्षेत्राणि सस्यसम्पद्भिः कर्षकाणां मुदं ददुः ।
धनिनामुपतापं च दैवाधीनमजानताम् ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सति वेदे जागरूके कथं पाषण्डप्रवृत्तिस्तत्राह, न हि वेदाः कलौ युग इति । त्रियुगो धर्मः तत्प्रतिपादको वेदोऽपि तावत्काल एव भवितुमर्हति तदाह हीति वेदान्तः कलिर्यतः युगपद्प्रयोगादनुल्लङ्घ्यत्वम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पर्जन्यः सूर्यः स्वगोभिः स्वरश्मिभिः काले समये अत्र पर्जन्यस्य राजत्वम् उदकस्य करत्वं निपानस्य ग्रहणत्वं मोचनस्य दानत्वं सूचितमिति वस्तुनः स्वप्रजाभ्य आदानतः समये पुनः प्रदानतश्च राजोपमेयं नीतिदृष्ट्या राजभिरुपादेया ॥ ५ ॥

श्वसनो वायुः अस्य विश्वस्य सन्तप्तस्य प्रीणनम् आप्यायनकरम् अत एव जीवनं जीवनतुल्यं जलं करुणाः कृपालवो दातार इव तत्पक्षे श्वासवेपावनुभावौ जीवनं जीवितमपि तप्तं जनं वीक्ष्य ते त्यजन्ति रन्तिदेवादयो जीवनं स्वमाप्यायकं जलमपीतीयमुपमा तत्तद्दृष्ट्या दयावीरदानवीरैरुपादेया ॥ ६ ॥

तपसा पक्षे ग्रीष्मेण कृशा ततो देवैरुद्रादिभिः पर्जन्येन च मीढा कामितवस्तुप्रदानेन जलवृष्ट्या च सिक्ता वर्षीयसी पुष्टाङ्गा उच्छूना च कार्श्यं तपो यस्य तस्य पुंसस्तनुः कामान् प्राप्य यथेत्युपमेया परिणामदर्शिभिः सद्भिर्हेया ॥ ७ ॥

पाषण्डाः पाषण्डशास्त्राणि हेयैवेयमुपमा ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पर्जन्यो रविः भूप इवेत्युपमा ज्ञेया ॥ ५ ॥

अस्य लोकस्य प्राणनमाप्यायनम् ॥ ६ ॥

तपःकृशा ग्रीष्मेण शुष्का देवमीढा देवेन पर्जन्येन मीढा सिक्ता वर्षीयसी प्रवृद्धा बभौ काम्यतपसः पुंसस्तनुः यथा ॥ ७ ॥ ८ ॥

---

भाषा टीका ।

आठ महीना ताईं सूर्यने अपनी किरणनसों भूमिको जलरूप द्रव्य पान कियो ताको सूर्य समयके ऊपर वर्षाको प्रारम्भ करत भयो, या श्लोकमें राजाकी उपमा जताई जो अपनी प्रजासूं सुकाल में करलेय हैं और अकालमें उनको अन्न देकें पालन करैं हैं ॥ ५ ॥

बीजुरी वारे और बडी प्रचण्ड पवनतें चलायमान जो बडे मेघ हैं ते या विश्वकूं तृप्त करने वारो जल जो है ताय छोडत भये, जैसें करुणा वारे पुरुष दीन दुखीन को देखिकें वाके सुखके ताईं अपनो सर्वस्व प्राण ताईं दै देवें हैं ॥ ६ ॥

ग्रीष्मकी धूपनसों सूखी जो पृथिवी सो वर्षा ऋतुमें कैसी फूलत भई जैसे सकाम तप करिवे वारे को देह दुर्बल होयकें फिर तपके फल मिलवेपै पुष्ट होय जाय है ॥ ७ ॥

वर्षा ऋतु में सन्ध्या समय पटबीजना तो चमकें हैं, और तारागण नहीं दीसैं हैं, जैसें कलियुगमें पापसों पाखण्ड के मार्ग बहुत देख परें हैं, और वेदके मार्ग लुप्तसे हो जाय हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नित्यकर्मावसाने आचार्यनिनदं श्रुत्वा तच्छिष्या यथा अधीयन्ते तद्वदिति ॥ ९ ॥

अनुशुष्यतीरनुशुष्यन्त्यः अस्वतन्त्रस्येन्द्रियपरतन्त्रस्य स्वतन्त्रस्य निरङ्कुशस्येति वा ॥ १० ॥

हरिभिर्नीलैः शष्पैर्बालतृणैर्नीलवर्णा क्वचिदिन्द्रगोपैः कीटविशेषैर्लोहिता तत्र तत्रोच्छिलीन्ध्रैश्छत्राकारैरङ्कुरैः कृतच्छाया नृणां राज्ञां श्रीः सेना सम्पदिव ॥ ११ ॥

क्षेत्राणीति तदा हि वृष्टेरविच्छेदं लसन्तः प्रियंवादयो मुदं ददति विच्छेदे शुष्यन्तोऽनुतापं यंति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

व्यसृजन् विविधं विस्तारयामासुः प्राक् तूष्णीं शयानाः निद्रायां वर्षाभ्यश्चरवेन वृत्ताः मण्डूकाः ब्राह्मणाश्च नित्यध्यानजपार्थं कृतमौनत्वेनेति ॥ ९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कदाचिदुत्पथवाहिन्य एवासन् कदाचिदनुशुष्यन्त्य एव चासन् नतु सत्पथगामिन्यो नतु वैकल्यरहिताः यथा स्वतन्त्रस्य शास्त्र-मनुसरतः पुंसो देहसम्पदो द्रविणसम्पदश्चेति ॥ १० ॥

इन्द्रगोपैः श्रीवृन्दावनेऽत्र इन्द्रचूडेति ख्यातैः कीटविशेषैः हरितादिकत्वं चेदं पटगृहादीनाम् ॥ ११ ॥

समुच्चये वैशब्दः सस्यसम्पद्भिस्तद्भावाभावैरित्यर्थः मुदनु-तापयोर्हेतुः मानिनां तदभिमानवतां दैवाधीनं सर्वमित्यजानतां यथाऽन्येषामपि क्षेत्राणि देहाः अन्याभिः सम्पद्भिरिति ज्ञेयम् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनशुष्यती शोषरहिता अनुष्यतीति पाठे आसन्नशोषा इत्यर्थः ॥ १०—११ ॥

मानिनां परसमृद्धिद्वेषिणाम् अभिमानवताम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुत्वेति । पर्जन्यस्य निनदं गर्जितमाकर्ण्य मण्डूकाः भेकाः गिरं व्यसृजन् ध्वनिं चक्रुः यथा ब्राह्मणाः शिष्याः आचार्यस्य नित्यकर्मणः प्राक् तूष्णीं शयानाः तस्य नियमाख्ये नित्यकर्मावसाने तस्य ध्वनिं श्रुत्वा अधीयन्ते तद्वत् अनेनाचार्यसन्निधाव-ध्ययनावसरं प्रतीक्षमाणः तूष्णीमासीतेति सूचितम् ॥ ९ ॥

आसन्निति । अम्बुभिर्वर्षजलैः पूरिताः क्षुद्रनद्यः उत्पथवाहिन्य आसन् क्षुद्रनद्यो न शुष्यतीरिति पाठे शोषरहिताः सत्यः उत्पथ-वाहिन्य आसन्नित्यर्थः । अनुशुष्यतीरित्यपि पाठस्तदा आसन्नशोषा इत्यर्थः । उभयत्रापि विभक्तिव्यत्यय आर्षः, यथा अस्वतन्त्रस्येन्द्रिय-परवशस्य पुंसो गेहद्रव्यसमृद्धयो न शुष्यन्त्यः दानभोगयोरभा-वात् यद्वाऽनुशुष्यन्त्यः धर्मानुपयुक्तत्वेनेति भावः । जितेन्द्रियस्य तु दानभोगाभ्यां शुष्यन्त्यः धर्मोपयोगद्वारा आसन्नशोषाश्च द्रव्यसम्पदां शोषो नाम तद्व्यय एव अम्बुपूरिता इति पाठे तु अजितेन्द्रियस्य यथा द्रव्यसम्पदः वराटिकापर्यन्तैरप्यार्जनैः पूरितास्ततः पुन-र्बुद्ध्यादिभिर्निन्दितैर्वर्द्धन्त एव अपात्रगामिन्यो वा तद्वदित्यर्थः अनेनैवास्वतन्त्रेन्द्रियसम्पदश्चला व्यर्थाश्चेति सूचितम् ॥ १० ॥

हरितेति । भूमिर्हरिभिर्हरितवर्णैः शष्पैर्बालतृणैर्हरितवर्णाः इन्द्रकोपैः कीटविशेषैर्लोहिताः उद्गतैः शिलीन्ध्रकुसुमैः कृतच्छाया लोहितपीतवर्णा च बभूव नृणां श्रीरिव यथा नृणां राज्ञां श्रीः सेनासम्पत् हरितलोहितपीतवर्णपटैर्विचित्रवर्णा भवति तद्वत् इदं वास्तवार्थकथनं. यद्वा, नृणां स्वदेहालङ्कारमात्रपराणां श्रीर्वस्त्राभरणादिसम्पत्तेरित्यर्थः । अनेन मूर्खाणां सम्पत्स्वोपकार-मात्रपर्यवसाना न तु परोपकारार्थेति सूचितम् ॥ ११ ॥

क्षेत्राणीति । क्षेत्राणि सस्यसमृद्धिभिः कृषीवलानां मुदं फलम-दृष्टाधीनमित्यजानतां मानिनां फलसमृद्धिर्द्वेषिणामनुतापं च ददुः अनेन परसमृद्धिं दृष्ट्वा हर्षवता भवितव्यमिति शिक्षितम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पर्जन्यनिनदं मन्द्रगर्जन्मेघनादं प्राक् पूर्वं तूष्णीं शयानाः मण्डूकाः नियमो नाम मौनेन जपादिकरणस्यान्त्ये अवमाने वेदाध्ययनशीला भवन्ति अनेन विष्णवनुग्रहमाकाङ्क्षमाणैः कालो वन्ध्यो न कर्तव्य इति दर्शितम् ॥ ९ ॥

ग्रीष्मे शुष्यतीः शोषं गच्छन्त्यः क्षुद्रनद्यः फल्गुनद्याः अनु ग्रीष्मानन्तरं वर्षासु उत्पथवाहिन्यः जलाभिवृद्ध्या तीर-मुद्धृत्य स्पन्दमाना बभूवुः अस्वतन्त्रस्य विषयरागादिरसङ्गस्य पुंसो देहो वनिताक्षिभागेन वर्धते अनेन रजोगुणस्वभावः सूचितः ॥ १० ॥

हरिभिः श्यामैः शष्पैः बालतृणैः हरिता श्यामला इन्द्र-गोपैः आषाढसमये उत्पद्यमानैः जपाकुसुमवर्णैः कृमिविशेषैः लोहिता रक्ता च उत्कृष्टैः उत्पन्नैः शिलीन्ध्रैः गुल्मविशेषपुष्प-च्छत्राकैर्वा कृतच्छाया कृतशोभा भूर्नृणां श्रीरिव सम्पदिव बहुविधाऽभूदित्यन्वयः । अनेन भूमिवदेक एव चेतनो गुणत्रिकाणां नानास्वभावमापन्न इव प्रतीयत इति संसारस्यासारत्वप्रति-हेतुत्वेन हरौ भक्तिः कर्तव्येति सूच्यते ॥ ११ ॥

कर्षकाणामुल्लेखनादिक्रियया वर्तमानानां क्षेत्राणि केदार-सस्यानां सम्पद्भिः फलोद्रेकाऽभिमुखलक्षणाभिर्मुदं ददुः वाक्य-शेषे तदजानतां कृषिक्रियाविशेषमजानतां मानिनां कृषा-द्यभिमानवतां पुंसां तान्येव क्षेत्राणि अतिवृष्ट्यनावृष्टिमेलुरसा-मग्रचाद्यभावादिना सस्यनाशेन विपत्तिमनुतापं च ददुः पुन-रुत्पत्तिनाशेन बीजं नष्टमित्यनुतापम् इन्द्रियाणि विषयजलाश-कुष्य हरिचरणारविन्द एव मनो निदधतां क्षेत्राणि पुण्य-स्थानानि सस्यसम्पद्भिः ज्ञानसमुद्रेकैः मुदं ददति तान्येव पुण्यस्थानानि तदजानतां स्नानादिक्रियाविशेषमनुष्ठमानानां मानिनामहङ्कारिणां पुंसां अयोग्यानां विपत्ति दुःखबहुलं बहुवित्तव्ययेन न किमपि फलं प्राप्तम् इत्यनुतापं च ददती-त्यतो मुमुक्षुणा स्वयं विचक्षणेभ्यो वा श्रुत्वा ज्ञात्वा हरि-चरणसरोजे भक्तिः कर्तव्येति सूचितम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दैवाधीनमजानतामत एव मानिनाम् अहम्मतानामपराणां कर्षकाणां सस्यसम्पद्भिः तत्सद्भावात्तावद्वा मुदमनुतापञ्च ददुः ॥ १२—१९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमर्थतो वेदनिराकरणमुक्त्वा शब्दतोऽप्याह-श्रुत्वा पर्जन्य-निनदमिति । मण्डूकाः सर्वप्रायनुपजीवनीयाः एव वै पशूना-मनुपजीवनीयो न वा "एष ग्राम्येषु पशुषु हि ते नारण्येषु" इति श्रुतेः । तथाचेद्ब्राह्मणाः सर्वोपद्रवकारिणो भवन्ति ततः वर्ष-वेदस्तत्र प्रतिष्ठितः स्यात् तेषां च मण्डूकानां च वर्ष-सर्वोपद्रवकर्तृकालाधीनं तदाह, पर्जन्यनिनदं श्रुत्वा मण्डूकाः गिरं व्यसृजन्निति पर्जन्यनादव्यतिरेकेण न तेषां सहजा प्रवृत्तिः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदैव तेषामुद्गमात् अनेनोत्तमा वाणी तस्मिन् काले लुप्ता गर्जनशब्दो वा मण्डूकशब्दो वा उपर्यधश्च ब्राह्मणानां विद्यमानत्वात् कथं नोत्तमशब्द इत्याशङ्क्य दृष्टान्ते ब्राह्मणान् निरूपयति, तूष्णीं शयाना इति। पूर्वं कश्चित्ता ब्राह्मणाः प्राक् शयाना एव भवन्ति ततो नियमस्याप्यत्यये मर्यादायां गताय प्रमोदानादिकं श्रुत्वा तदा गिरो व्यसृजन् तथा च ऋक् ब्राह्मणा सः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणं अध्वर्यवो धर्मिणः शिश्विदाना आविर्भवन्ति गुह्या न केचित् सोमपानप्रवणाः ब्राह्मणाः यथासुखं वाचमकृत कृतवन्तः परिवत्सरीणं सम्वत्सरसाध्यं ब्रह्म अन्नादिकं कृण्वन्तः कृष्यादिपरा यथासुखं वेदशब्दान् पठन्तीत्यर्थः। केचित् पुनः अध्वर्यवः अध्वरयोजकाः धर्मिणः प्रवर्ग्यकर्त्तारः शिश्विदानाः प्रकाशमानाः गुह्याः सन्तो नाविर्भवन्ति यद्वा धर्माश्च न वर्षासु प्रभवन्ति अतो बहिर्मुखा एव कृष्यादिपराः यथासुखं वाचमकृत अस्यैवार्थस्य भूयसे निर्वचनायापरा ऋक् देवहितं जगुपुर्द्वादशस्य ऋतुं नरो न प्रमिणन्त्येते सम्वत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गं येन पुरुषाः देवहितिं भगवतः शब्दरूपम् ऋतुं जुगुपुः द्वादशस्य सम्वत्सरस्य सम्बन्धी ऋतुर्मुख्यो वसन्तः तं न प्रमिणन्त्येते न जानन्ति अतो ज्ञानात्तूष्णीमेव तदास्थिता सम्वत्सरे सम्वत्सरमध्ये प्रावृषि आगतायां पूर्वं तप्ता घर्माः विविधमेव सर्गमश्नुवते न तु मूकभूतां वाणीं वदन्ति यत्किञ्चिद्वदन्तीत्यर्थः यतो घर्माः परतापकाः स्वयं च तप्ताः तेषां यत्किञ्चिद्वचनान्याहापरा ऋक् गोमायुरदादजमायुरदात्पृश्निरदाद्धरितो नो वसूनि गवां मण्डूका ददतः शतानि सहस्रसावे प्रतिरन्त आयुः वर्षामुत्पन्नं फलं प्राप्य केनैतत्फलं दत्तमिति पृष्टा आह गोमायुरदात् शृगालो दत्तवान् अजमायुर्बर्कः पृश्निभूमिः हरितो मेघाः नोऽस्मभ्यं वसूनि दत्तवन्तः किञ्च गवां शतानि मण्डूका ददतः सहस्रसावे सहस्रवर्षपर्यन्तमायुश्च प्रतिरन्तः प्रयच्छन्तो जाताः किञ्च वृष्ट्यर्थं मण्डूकस्य पत्नीं च प्रार्थयन्ति उपप्लवद मण्डूकि वर्षमावदतादुरिमध्ये ह्रदस्य प्लवस्वानिगृह्य चतुरः पदः हे मण्डूकि! उप समीपे वर्षं प्लवद आसमन्तात् दुरि मण्डूकः वदतात् तस्यावरणं चाह मध्य इति एवं ब्राह्मणा यथा तेषामुपजीव्या मण्डूकास्तथैव ये ब्राह्मणा मण्डूकोपजीविनः तैः कथं वा वेदरक्षा भवेदिति शब्दतोपि वेदनिवृत्तिः सूचिता ॥ ६ ॥

तर्हि मास्तु वेदाः पाषण्डैरेव कार्यं भवत्वित्याशङ्क्य महतां नु ते क्षोभका भवन्ति अल्पानां तु व्यामोहका भवन्तीत्याह-आसन्निति। उत्पथवाहिन्यः क्षुद्रनद्यो वर्षासु जाताः अकस्मादेव निषिद्धं फलं यदेव प्राप्नुवन्ति अमर्यादत्वात् तद्रक्षणाशक्ता उत्पथवाहिन्यो भवन्ति ततः अनु तत्क्षणमेव शुष्यन्तीर्भवन्ति प्राकृतोपयोगाय दृष्टान्तमाह-यथा अस्वतन्त्रस्य इन्द्रियपरवशस्य देहेन्द्रियसम्पदः अमार्गवाहिन्योपि भवन्ति अनुशुष्यतीश्च भवन्ति ॥ १० ॥

पाशसम्पन्नाः स्वरूपमाह—हरिता इति। इयं सर्वैव भूः त्रिगुणा सती नृपां यथा राजसम्पाद्धिर्भवतस्माद्विभज्यते तथा जाता हरिभिः हरिद्वर्णैः शष्पैः घासैः हरिता श्यामवर्णा भूः इन्द्रकोपैः कीटविशेषैः लोहितवर्णा उच्छिलीन्ध्रैः श्वेतवर्णा कृतं तच्छायैव एवं लोहितशुक्लकृष्णा इन्द्रकोपा राजेव छत्रमिव छत्राकं सेनावत् शष्पाणि अनेन भूमिरपि युद्धसामग्रीव वर्णिता ॥ ११ ॥

अतो यथा खड्गजीविका मरणपर्यवसायिनी एवमियं कृष्यादिजीविकापि मरणपर्यवसायिनी शरत्कालीनो धर्मः तथैव च भवति अतस्तोपवदमावाचाह-क्षेत्राणीति। सस्यानां सम्पत्तिभिः कृत्वा कर्षकाणां कृषीवलानां क्षेत्राणि मुदं ददुः मानिनाम् अभिमानवतां शत्रुवधार्थं प्रवृत्तानां वर्षा सस्यादिभिः प्रतिबन्धं ज्ञात्वा क्लिष्टानामुपतापं च ददुः जयादिकं सर्वं भगवदधीनं न हि वर्षाप्रतिबन्धभावे सर्वथा तेषां जयः निश्चयाभावात्तदाह दैवाधीनमजानतां इति जये पराजये च दैवमेव प्रयोजकम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नित्यकर्मावसाने आचार्याह्वानशब्दं श्रुत्वा तच्छिष्या यथा अधीयन्ते तद्वदिति ब्रह्मचारिभिरुपादेया ॥ ९ ॥

अनुशुष्यतीः अनुशुष्यन्त्यः वृष्यमाणैरल्पैरपि जलैरुत्पथगामिन्यः। स्वतन्त्रस्य शास्त्रशासनममानयतः देहस्य सम्पदो यौवनलावण्यविद्याद्रविणसम्पदः पञ्चषग्रामाधिपत्यं च यथा निकृष्टस्य कुमतेः परोद्वेजिकास्तथेति ज्ञेयेयम् ॥ १० ॥

हरिभिर्नीलवर्णैः शष्पैः कोमलैः क्वचिन्नीलवर्णा इन्द्रगोपैः रक्तवर्णकीटविशेषैः क्वचित् लोहिता उच्छिलीन्ध्रैश्छत्राकारैः हरिद्रैः कृतच्छाया कृतश्वेतकान्तिः नृणां राज्ञां श्रीरसेनासम्पत् हरितादिवर्णाण्डगोहयुक्ता इयं राज्ञामुपमेया ॥ ११ ॥

मानिनामिति कृषिं निकृष्टं कर्म वयं प्रतिष्ठिता न कुर्मः इति गर्वकृताम् अनुतापं हन्तहन्त यदि कृषिं वयमप्यकरिष्याम तदैतादृशी सस्यसम्पदः प्राप्स्याम इति पश्चात्तापं ददुर्मानिव्यपदेश्यर्थः। यतो यदनुतापादिकं दैवाधीनं ते न जानन्तीत्यर्थः। यथा निवृत्तिकर्मपरान् ब्रह्मलोकं गच्छतो दृष्ट्वा प्रवृत्तिकर्मपराः स्वर्गस्था अनुतपन्तीति गम्योपमा मन्तव्या ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नियमात्यये जपादिसमाप्तौ गुरुशब्दं श्रुत्वा शिष्या यथाऽधीयन्ते तद्वत् ॥ ९ ॥

अनुशुष्यतीः अनुशुष्यन्त्यः ॥ १० ॥

भूर्भूमिः क्वचित् हरिभिः हरितवर्णैः सर्वैर्वाकृतैर्हरिता क्वचिदिन्द्रगोपैः लोहितवर्णैः कीटविशेषैर्लोहिता तत्र तत्र उच्छिलीन्ध्रैश्छत्राकारैर्हरिद्रैः कृतच्छाया अभूत् नृणां राज्ञां श्रीहरिः हरितलोहितवस्त्रच्छत्रादिसंयुक्ता सम्पदिव ॥ ११ ॥

कर्षकाणां क्षेत्रस्वामिनां मुदं ददुः धनिनां धनवतां तत्क्षेत्रसस्यसम्पदसहिष्णूनामुपतापं च ददुः तत्र हेतुमाह—दैवाधीनमजानतामिति स्वसम्पद्दर्शनेन मोदमानः परसम्पद्दर्शनेनोपतप्यमानश्च मूढः इति भावः ॥ १२ ॥

जलस्थलौकसः सर्वे नववारिनिषेवया।
अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया॥ १३॥
सरिद्भिः सङ्गतः सिन्धुश्चुक्षुभे श्वसनोर्मिमान्।
अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा॥ १४॥
गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः।
अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः॥ ॥ १५॥
मार्गा बभूवुः सन्दिग्धास्तृणैश्छन्ना ह्यसंस्कृताः।
नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव॥ १६॥

भाषा टीका।

मेघकी गर्जना कूं सुनिकें मेडुका बोलवे लगे, जैसें गुरुजी के सन्ध्या वन्दनादि नियमके पहिले विद्यार्थी चुप बैठे रहें हैं जब गुरुजी नित्यनियम कर चुके हैं तब पाठ लेके पढ़ें हैं। एसें कहवे तें ये बात जताई, कि-विद्यार्थी गुरुकी आज्ञासों पाठ लेय पहले पहिले चुपको बैठ्यो रहे॥ ९॥

क्षुद्रनदी जो सूखी परी हीं सो वर्षा में अपने मार्गकूं छोडिके बहबे लगीं जैसें इन्द्रियन के परवश होयवे वारे पुरुषकी देह द्रव्य और सम्पत् सब कुमार्ग में लगे हैं॥ १०॥

वर्षा में हरे २ घासन सों पृथिवी हरी होय गई, लाल २ वीरबहोटीन तें लालरूपं वारी दीखबेलगी, और जहां तहां छतोना जो जामें तिन सों कायावारी होयरही है, ऐसी पृथिवी की शोभा होत भई जैसें मनुष्यनकी शोभा श्रीतें होय है॥ ११॥

वर्षाके बीच में खेतनमें अन्न जो उपजे हैं तिन की सम्पत्ति सों खेत जे हैं ते किसानन कों तो आनन्द देत भये, और दैव की गति कूं नहीं जानिवे वारे अन्न की भरती करन वारे धनीन कों सन्तापदेत भये,॥ १२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अबिभ्रदबिभरुः यथा हरिनिषेवयेति हरिसेवायां प्रवृत्ताहि एव सर्वे रुचिरा भवन्ति तस्याः परमधर्मत्वात्परम-... तद्वदिति॥ १३॥

...काक्तं कामवासनायुक्तमिति श्वसनोर्मिसाम्यम् गुणो-...वत इति सरित्सङ्गतिसाम्यम्॥ १४॥

...ज एव चेतो येषां ते॥ १५॥

...ता अभ्यस्यमाना इत्यसंस्कृतसाम्यं कालेन चाहता ...तृणाच्छादनसाम्यम्॥ १६॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अबिभ्रेति नैव्यांख्यातं तत्र साधनावस्थायां परमधर्मत्वं प्रसि... मेव सुखरूपत्वं च—

"कर्मयवस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान्।
आपाययति गोविन्दपादपद्मासवं मधु"॥

इत्यनुसारेण साध्यावस्थायां तु परमसुखरूपत्वं प्रसिद्धमे... विवेचनीयम्॥ १३॥

श्रीवृन्दावनेऽत्रावसमानस्यापि सिन्धोर्वर्णनं प्रावृड् वर्णनात् किम्वा सिन्धुरिव सिन्धुः श्रीमथुरामण्डलपरि... सीमायां वर्त्तमानं मानसगङ्गाप्रभवकोटराख्यमहासरो ज्ञेयम्॥ १४॥

वर्षधाराभिरिति गिरिषु वृष्टेराधिक्याद् अभिभूयमानाः ... भवचेष्टाविषयीक्रियमाणा अपि न विव्यथुः न विव्यथि... दुःखं प्रापुः किन्तु ते रज आद्यपगमात् सद्योभन्तैवेत्यर्थः। ... रोगादिविघ्नैः प्रारब्धस्यावश्यभोग्यत्वात् "स्वां सेवतां सुरा... बहवोऽन्तरायाः" इति न्यायाच्चाभिभूयमाना अपि न व्यथ... प्रत्युताशोभन्तैव. दुष्कर्मापगमादिना भगवत्स्मरणविशेषा... टीकायामेवकारस्तद्व्ययायां हेतुः॥ १५॥

नाभ्यस्यमाना अनभ्यस्यमानाः कालहताः कालेन ... युगादिना हताः श्रुतय इव एव एव पाठो बहुत्र ... व्याख्यातृणां केचित् कालेन चाहता इति पाठं कुर्वन्ति॥ १६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

रुचिरं रूपमिति "वसति हृदि सनातने च तस्मिन् ... पुमान् जगतोऽस्य सौम्यरूपः" इत्यर्थ उक्तः॥ १३—१७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

जलस्थलौकस इति। जलौकसः स्थलौकसश्च ते सर्वे ... नूतनस्य वारिणो निषेवया रुचिरं रूपमबिभ्रन् अबिभरुः ... विषेरनित्यत्वादार्षत्वाद्वाऽड्यस्तलक्षणजुसभावः यथा हरि... त्यर्थहरिनिषेवया रुचिरं रूपं बिभ्रति तद्वत "वसति हृदि स...

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व तस्मिन् भवति पुमान् जगतोऽस्य सौम्यरूपः" इति वचनार्थोऽत्र उक्तः अनेन हरिसेवया विना न सौम्यतेति सूचितम् ॥ १३ ॥

सरिद्भिरिति । सिन्धुः समुद्रः सरिद्भिः सङ्गतः वातोद्धूततरङ्गश्च चुक्षुभे सञ्चचाल यथा अपक्वयोगिनः अनिष्पन्नसमाधेः पुंसश्चित्तं विषयस्पृहायुक्तं गुणयुक् च गुणैर्विषयैर्युज्यत इति तथाभूतश्च सत् क्षुभ्यति तद्वत् कामासक्तमिति श्वसनोर्मिसाम्यं गुणयुगिति श्वसनोर्मिसरित्सङ्गसाम्यं चित्तचाञ्चल्यनिमित्तकामाञ्जनगुणयोगनिवर्तकभगवत्समाधिविपाकार्थं यतितव्यमिति सूचितम् ॥ १४ ॥

गिरय इति । [illegible]वर्षैरभिहन्यमाना अपि गिरयो न विव्यथुः यथा अधोक्षज[illegible]चेतांसि येषां ते व्यसनैराध्यात्मिकादितापैः पीड्यमाना अपि न व्यथन्ति तद्वद्भगवद्भक्तिरेव तापत्रयविघातिनीत्युक्तं भवति ॥ १५ ॥

मार्गा इति । तृणैश्छन्ना असंस्कृता अक्षुण्णाः वर्षासु पथिकानां प्रायशो गमनाभावादिति भावः । सन्दिग्धाः सन्देहजनका बभूवुः यथा श्रुतयो वेदाः द्विजैरनभ्यस्यमानाः अनावर्त्यमाना इत्यसंस्कृतं साम्यं यतः नाभ्यस्यमानाः अत एव कालेन केनचित्कालेन आहता विस्मृताश्च भवन्ति कालेन चाहता इति तृणाच्छादनसाम्यम् अनेनाधीतानां वेदानामावृत्तिं कुर्वतैव स्थेयमन्यथा तु प्रत्यवाय इति सूचितम्. तथा च स्मर्यते—

"आधीतमपि यद्वेदं नानुपालयति द्विजः ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥

इति ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जलौकसः पातालवासिनः स्थलौकसः भूलोकवासिनः किञ्च खे अन्तरिक्षादिलोकवासिनः सर्वेषां संसारदुःखं निवारयतीति वारिदानं नवं निर्दोषं वारि तस्य नितरां सेवयाऽभ्यासलक्षणया रुचिरं निर्दोषं रूपमबिभ्रन् बिभ्रति कथङ्कारं जातया यथा यथावद्धरिनिषेवया जातया ॥ १३ ॥

अपक्वयोगिनः अपक्वः परिपाकमप्राप्तः योगोऽस्यास्तीत्यपक्वयोगी तस्य गुणयुक् रजोगुणयुक् यद्वा गुणेषु विषयेषु युक्त इति अत एव कामासक्तम् ॥ १४ ॥

न विव्यथुः न विलीना बभूवुः, कुतः ? गिरयः गिरयोऽरणसमर्थत्वाद्व्यथाभावमात्रे निदर्शनं न तु बुद्धिमत्त्वबुद्धिमत्त्वविवक्षायाम् अनेन सर्वसहनशक्तिर्हरिभक्तानामेवेति दार्ष्टान्तिकम् ॥ १५ ॥

असंभिता जनैरनाक्रान्ताः अनेन सच्छास्त्रं निरन्तरमभ्यसनीयं ज्ञानोत्पत्तये इति व्यतिरेकनिदर्शनम् ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवम् ऋतुन्यायेन वर्षाणामुक्त्वा मासन्यायेन द्वादशधा धर्मानाह—जलस्थलौकस इति द्वादशभिः । मासा हि निमित्तं धर्मिणोऽत्र प्रधानं गुणा वाच्याः—

जीवा नद्यः पर्वताश्च मार्गाः कामिन्य एव च ।
विद्यावान् चन्द्रमा वर्हो भक्ता वा तापसास्तथा ॥
गृहिणो वैदिका मार्गा राजानश्चेति कीर्तिताः ।
त्रिविधाः सर्व एवैते मासभोग्याः प्रकीर्तिताः ॥
सर्वेऽप्येते वृष्टिकाले सुखं दुःखं च लेभिरे ।
पुष्टिमार्गस्थिताः सर्वे सुखं प्रापुर्न चापरे ॥

तत्र क्रमेण सुखदुःखे निरूपयन्नादौ भगवदीयेयं प्रावृडिति ज्ञापयितुं सर्वेषामेव प्राणिनां सुखजनिका जातेत्याह—जलस्थलौकस इति । जलं वा स्थलं वा ओको येषां भूचरा जलचराश्च राजसास्तामसाश्च सात्त्विकास्तु अनुक्तसिद्धाः सुखिनः दृष्टान्तार्थं भिन्नतया स्थापिताः सर्व एव नववारिसेवया रुचिरं मनोहरं रूपम् अबिभ्रन् दोषावपि रूपवैलक्षण्यं भवतीति तद्व्यावृत्त्यर्थं दृष्टान्तमाह—यथा हरिनिषेवया भगवत्सेवया चतुर्भुजादिरूपं प्राप्नोति तेजोविशेषं वा हरिपदेन तदानीमेव गजेन्द्रस्य रूपान्तरसम्पत्तिः स्पष्टार्थं ज्ञापितेति प्रदर्शितम् ॥ १३ ॥

अभिमानी तु महान् मोहं प्राप्नोतीति समुद्रं निरूपयति—सरितो हि तस्य स्त्रियः सर्वाभिरेव ताभिः सङ्गतः सिन्धुः समुद्रः चुक्षुभे क्षोभं प्राप्तवान् वर्षाकालो हि कामिनां क्षोभकः सुतरां स्त्रीसङ्गिनां किञ्च,श्वसनेन कल्लोलोर्मिमांश्च जातः तरङ्गाश्च गर्भस्थानीयाः वायुश्च रजोगुणः एवं तस्यानर्थो निरूपितः महतः कथमनर्थ इत्याशङ्क्य दृष्टान्तेन परिहरति—अपक्वयोगिन इति । न पक्वो योगः फलपर्यवसायी यस्य चित्तवृत्तिनिरोधो हि योगः स चेत् पक्वो भवेत् कुर्यात् चित्तवृत्तिनिरोधम् अपक्वत्वाद्विरोधो जात इव प्रतिभाति परीक्षाणां न सङ्गच्छते तदाह—कामाक्तमिति । स्वभावतो गुणयुक् गुणसम्बन्धी स चेत् कामेनाक्तो भवेत् विषयसम्बन्धी भवेत् तदा क्षोभं प्राप्नुयात् कामलक्षणदोषयुक्तं वा गुणयुक् विषयसम्बन्धी अतः स्वभावदोषस्याऽनिवृत्तत्वात् महानपि क्षुभ्यति तत्रापि ये पुनर्महान्तो दृष्टा (ष्टा) उक्ता भगवन्निष्ठाः न तु ज्ञानिन इव सर्वसमाः समुद्रविलक्षणाः ॥ १४ ॥

तेषां वर्षाकृतोपद्रवमाह—गिरय इति । निरन्तरं वर्षधाराभिः हन्यमाना अपि गिरयो न विव्यथुः व्यथां न प्राप्तवन्तः यतस्तेऽन्तःसाराः हेतुं दृष्टान्तेन स्पष्टयति—अभिभूयमाना व्यसनैरिति । यथा व्यसनैः स्वपादिभिरापद्भिर्वाऽभिभूयमाना वशीक्रियमाणा अधोक्षजचेतसः इन्द्रियातीते भगवति स्थापितचित्ताः न क्षोभं प्राप्नुवन्ति तथा तदा कन्दरादिष्वन्तर्भगवानस्तीति तत्र वृष्टिधारास्पर्शनिवारकत्वं स्वस्य सम्पद्यत इति तदानन्देन च पूर्णा धाराकठिनस्पर्शमपि सुखत्वेन मानयामासुर्जलद इवानपस्पर्शमित्यर्थः । अधोक्षजपदं नान्याविषयत्वोक्त्या रहःशयनं सूच्यते यत्र जडाः कठिना अचेतनाश्चात्र चेतना किमु वाच्या इति भावः । समुद्रस्तूद्भूतरत्नादिरित्यसारः ॥ १५ ॥

एवं राजसीं सात्त्विकीं व्यवस्थामुक्त्वा तामसीमाह—मार्गा बभूवुरिति । सर्व एव मार्गाः सन्दिग्धा जाताः यतस्तृणैराच्छन्नाः युक्तश्चायमर्थः प्रत्यक्षत एव सन्देहदर्शनात् पूर्वं यं तेन मार्गेण सञ्चरन्ति तान्प्रति सन्दिग्धा अन्येषान्तु दानमेव यतस्तृणैः छन्नाः तद्वंशे मार्गप्रवृत्तिः कथमित्याशङ्क्याह,

लोकवन्धुषु मेघेषु विद्युतश्चलसौहृदाः ।
स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव ॥ १७ ॥
धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् ।
व्यक्ते गुणव्यतिकरेऽगुणवान् पुरुषो यथा ॥ १८ ॥
न रराजोडुपश्छन्नः स्वज्योत्स्ना राजितैर्घनैः ।
अहम्मत्या भासितया स्वभासा पुरुषो यथा ॥ १९ ॥
मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखण्डिनः ।
गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

असंस्कृता इति संस्कारपर्यन्तं सन्देह एव संस्काराभावे तु मार्गस्य लोप एव, बहुधा दृष्टस्य कथं सन्देहजनकत्वमिति शङ्कां दृष्टान्तेन वारयति—नाऽभ्यस्यमाना इति। यथा अनऽभ्यस्यमानाः श्रुतयः तैरेव द्विजैः पुनः स्मृताः सन्दिग्धा भवन्ति आम्नायः छन्दसां द्वयङ्ः तदभावे सन्देहः सहजस्नस्य कालेन महता कालेन हताश्च भवन्ति ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अबिभ्रन् अबिभरुः यथेति हरिसेवायां प्रवृत्ता अपि सद्य एव सर्वे रुचिरा भवन्ति तस्याः परमधर्मत्वात् परमसुखदत्वाच्च तद्वदित्युपादेया ॥ १३ ॥

सिन्धुर्नदीविशेषः पाश्चात्यः विशेषणस्य पुंस्त्वमार्षं कामाक्तं कामवासनायुक्तम् इति श्वसनोर्मिसाम्यं गुणैर्विषयैर्युज्यते इति सरित् सङ्गतिसाम्यमिति ज्ञेया ॥ १४ ॥

न विव्यथुर्न विव्यथिरे प्रत्युत रज आद्यपगमाद्व्योमन्तैवेत्यर्थः । व्यसनैराध्यात्मिकादिभिस्तापैरधोक्षजचेतस्त्वादेव न व्यथन्ते "तपन्ति विविधास्तापा नैतान्मद्गतचेतसः" इति भगवदुक्तेः प्रत्युत दैन्यवृद्ध्या गर्वासूयादिमालिन्यरहिता एव भवन्तीति सद्भिरुपाद्या ॥ १५ ॥

नाऽभ्यस्यमाना इत्यसंस्कृतसाम्यं कालहता इति तृणाच्छादनसाम्यम् अत एव मार्गाः श्रुतयश्च सन्दिग्धा इतीयं वद्भिर्ज्ञेया ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नववारिनिषेवया सर्वे रुचिरं रूपमबिभ्रन् हरिभक्त्या यथा सर्वे वर्णाः आश्रमिणश्च रुचिरं रूपं बिभ्रन्ति तद्वदित्यन्वयः ॥ १३ ॥

कामेन विषयसङ्कल्पेनाक्तं गुणैर्विषयैर्युज्यते इति गुणयुक् चित्तं यथा क्षुभ्यति तद्वत् ॥ १४ ॥

व्यसनैस्त्रिभिराध्यात्मिकादितापैरधोक्षजचेतसो भगवद्ध्याननिष्ठा न व्यथन्ति तद्वत् ॥ १५ ॥ १६ ॥ १७ ॥

---

भाषा टीका ।

जल और स्थल वासी सगरे प्राणी नवीन जल के सेवन करि कें रुचिर रूप कों धारण करत भये जैसें श्रीहरि की निरन्तर सेवा करिबे तें तिलक माला धारण करि कें जनन को रुचिर रूप होय जाय है, ऐसे कहिबे ये बात जनाई, कि—हरि सेवा के बिना पुरुष कों सौम्य नहीं प्राप्त होयहै, और जब तक सौम्यता नहीं तब तक चाहें जैसो सुरूप वारो होय परन्तु रुचिर नहीं लगे है ॥ १३ ॥

बढी भई नदीन के मिलबे तें श्वासलेनवारो और ऊ (तरङ्गन) वारो समुद्र क्षोभ कों प्राप्त होत भयो, जैसें अपरि पक्वयोगी को कामासक्त चित्त गुणन (विषयन) योग पाय के क्षोभ को प्राप्त होय है ॥ १४ ॥

वर्षा ऋतु में वर्षा की धारान सों ताडित होय कें पर्वत व्यथा को नहीं प्राप्त होत भये, जैसें हरि में चि जिनको लग्यो ऐसें वैष्णव जन संसार के अनेक प्रका के दुःखन को पाय के भी दुःखित नहीं होवैं हैं ॥ १५ ॥

जिन मार्गन में सों जावबो आयबो बन्द होय ऐसे मार्ग तृणन सों ढकि के सन्देह करबे के योग्य हो गये हैं, जैसें ब्राह्मणन कों वेद पढिकें फिर अभ्यास छोड देवे कछु काल पीछें पाठ में सन्देह होयवे लगेहै ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथा कामिन्यः पुंश्चल्यः ॥ १७ ॥

निर्गुणं ज्यारहितमपि गुणानि गर्जितशब्दवति अशोभत गुणव्यतिकरात्मके व्यक्ते प्रपञ्चेऽगुणवान्निर्गुणः पु यथेति ॥ १८ ॥

स्वभासा भासितयाऽहम्मत्येति स्वचैतन्येनैव प्रकाशि

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अहङ्कारेण कृतो जीवो यथा ब्रह्मा अहं विद्वान् दाता वेत्ता शूर इति स्वप्रतीत्यैवारोपितया इति ॥ १९ ॥

मेघागमेनोत्सवो येषामतो हृष्टाः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गुणिषु वैदग्ध्यादिविविधगुणयुक्तेष्वपि ॥ १७ ॥

अगुणवान् मायागुणातीतोऽपि पुरुषः ॥ १८ ॥

स्वीयया तुषारमय्या ज्योत्स्नया राजितैः प्रकाशितैः सम्बन्धितैश्च ॥ १९ ॥

मेघागम एव उत्सवो येषां ते अत एव हृष्टाः प्रत्यनन्दन् मेघगर्जिताद्यनन्तरमुच्चैर्नादादिकमकुर्वन् यथा वैष्णवगृहस्थाः समागतवैष्णवगीतानन्तरं नृत्यगीतादिकं कुर्वन्ति तथेत्यर्थः एवं चातका अपि ज्ञेया इति भावः ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गुणिनि शब्दगुणके निर्गुणः गुणत्रयरहितः ॥ १८ ॥

राजितैः प्रकाशितैः अहंमत्या स्वभासा भासितया स्वज्ञानभूतेन देहात्माभिमानेन ॥ १९—२० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लोकबन्धुष्विति सर्वप्राणिजीवनभूतजलप्रदानेन महोपकर्तृत्वाल्लोकानां बन्धुषु मेघेषु विद्युतस्तडितश्चलं सौहृदं यासां तथाभूता बभूवुः अनियतदेशमल्पकालं च सङ्गं चक्रुरित्यर्थः यद्वा स्थैर्यं न चक्रुरित्यपि दार्ष्टान्तिकान्वयि चलसौहृदाः सत्यः स्थैर्यं न चक्रुः यथा कामिन्यः पुंश्चल्यः गुणिषु सौन्दर्यसौशील्यादिगुणाश्रयेष्वपि निर्द्धनेषु पुरुषेषु चलसौहृदाः स्थैर्यं न कुर्वन्ति तद्वत् अनेन यत्नतः कामिनीनां सङ्गः परिहार्य इति सूचितं भवति ॥ १७ ॥

धनुरिति । गुणिनि शब्दगुणके वियत्याकाशे माहेन्द्रं धनुर्गुणं मौर्वीरहितमभादृबभौ यथा गुणव्यतिकरे गुणत्रयपरिणामात्मके व्यक्ते देहे अगुणवान् गुणत्रयरहितः पुरुषो जीवो भाति तद्वत् वियद्धनुषोरिव देहात्मनोर्विलक्षणस्वरूपस्वभावत्वमुक्तम् ॥ १८ ॥

नेति । उडुपश्चन्द्रः स्वज्योत्स्नया राजितैः प्रकाशितैर्घनैर्मेघैः छन्नो न रराज घनेभ्यो विलक्षणतया न रराजेत्यर्थः । यथा पुरुषः प्रत्यगात्मा स्वभासा स्वापृथक्सिद्धधर्मभूतज्ञानेन भासितया समुत्थयाऽहंमत्या देहात्मभ्रान्त्या देहात् पृथक् प्रकाशते तद्वत् देहात्मभ्रान्तिरात्मस्वरूपाच्छादनहेतुरिति सा प्रयत्नेन परिहार्येत्युक्तम् ॥ १९ ॥

मेघेति मेघागमे उत्सवो येषामतो हृष्टाः शिखण्डिनो मयूराः प्रत्यनन्दन् यथा गृहेषु तप्तास्त्रिभिस्तापैरिति शेषः । अत एव निर्विण्णा जनाः अच्युतभक्तानामागमने सति प्रतिनन्दन्ति तद्वत् तापत्रयतप्तैरवश्यमच्युतजनसङ्गतिः कार्येत्युक्तम् ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चलसौहृदाश्चञ्चलस्वभावाः विद्युतः लोकोपकारित्वाल्लोकबन्धुषु मेघेषु स्थैर्यं स्थिरक्रियां न चक्रुः नापुरित्यन्वयः कामिन्यः गुणिषु विविधेषु पुरुषेषु इव यथा स्थैर्यं न कुर्वन्ति तथा विद्युद्वच्चञ्चलभक्तिनं कर्त्तव्या किन्तु पूर्ववत्स्थिरः इति भावः । चलसौहृदाः चलस्नेहाः मानुषस्वभावो दर्शित इति वा ॥ १७ ॥

गुणिनि शब्दगुणोपेते नीलिमगुणयुक्ते वा वियति महेन्द्रस्य विद्यमानं निर्गुणं ज्यारहितं धनुः अभात भाति कथमिव गुणव्यतिकरं जगत्सर्जने व्यक्ते प्रवृत्ते पुरुषो नारायणो यथा गुणवान् सत्त्वादिगुणैः प्रवर्त्तमानो भाति स्वयं पूर्वं निर्गुणः सत्त्वादिगुणप्रवृत्तिशून्यः गुणवान् प्राकृतज्ञानानन्दादिगुणपूर्णो वा निर्गुणः देहरहितः गुणव्यतिकरे गुणवान् देहवान् पुरुषो हिरण्यगर्भो यथेति वा ॥ १८ ॥

स्वया ज्योत्स्नया राजितैः सन्ध्यारागं प्राप्तैर्घनैश्छन्न उडुपश्चन्द्रः न रराज स्वरूपाभिव्यक्तिं नाप स्वभासा स्वयम्प्रकाशज्ञानेन भासितयाऽभिव्यक्तया अहम्मत्याऽहङ्काराख्यया पुरुषः संसारी यथाऽभिव्यक्तस्वरूपो न भवति भगवत्प्रसादानुगृहीतज्ञानलक्षणप्रकाशेनाभिव्यक्तरूपः पुरुषः स्याद्यथा तथा शरदादिलक्षणप्रकाशेन प्रकाशितमण्डलश्चन्द्र इति सूचितं भवति ॥ १९ ॥

शिखण्डिनो मयूराः मेघानामागम एवोत्सवः तेन हृष्टाः रोमाञ्चत्वं प्राप्ताः कुटुम्बभरणादिना तप्ताः सज्जनदर्शनाभावाग्निना वा अत एव निर्विण्णाः विरक्ताः संसारदुःखयुक्ताः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मेघागमे एवोत्सवो येषाम् अत एव हृष्टाः तान् मेघान् प्रत्यनन्दयन् ॥ २० ॥ २१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं गुणातीतसगुणभेदेन चतुर्धा वर्षाकृता धर्मा उक्ताः पुनर्विपरीततया चतुर्द्धा निरूपयति, द्वितीये राजसाः प्रथमाः ततः सात्त्विकः ततः तामसः गुणातीतश्चेति तामसभावेन चतुर्द्धाऽग्रे निरूपयिष्यति तत्र स्त्रियो राजस्यो मुख्याः तासां तामस राजसतमसो वा चेद्भक्तौ तदाऽस्थिरता सात्त्विकत्वे तु न स्थैर्यं विद्युतामस्थैर्ये हेतुरनेनोक्तः लोकबन्धुषु लोकानां सर्वेषां बान्धवाः मेघाः यदि सर्वमेव जलं विद्युत्स्वेव प्रयच्छेयुः तदा विद्युतः स्थिरा भवेयुः ते तु लोकहितैषिण इति सर्वेभ्यो दानं तेषु चलसौहृदा जाताः सौहार्दं तत्प्रकाशकत्वं तत्र शोभाजनकत्वं वा यत एताः कामिन्यः अतो लोकेषु कामिन्यः

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

परोपकारनिपतेषु स्थिरतां न प्राप्नुवन्ति कामिनीपदात् कुलवधूव्युदासः शुक्लश्चायमर्थः सर्वस्वे दत्ते किं वा भक्षयेयुरिति चेत्तत्राह गुणिष्वपीति । ते हि गुणवन्तः ततोऽप्यधिकं सम्पादयिष्यन्ति तथापि प्रत्यक्ष एव पर्यवसितमतित्वात् न स्थैर्यं चक्रुः मेघा अपि गर्जनेन गुणवन्तः ॥ १७ ॥

विजातीया अपि विजातीयेषु शोभाम्प्राप्नुवन्तीति प्रावृट्कृतधर्ममाह—धनुरिति । वियत्याकाशे माहेन्द्रं धनुर्निर्गुणमपि गुणिन्यपि विद्यावत्यपि वियत्यभात् प्रकाशं प्राप्तवत् "महेन्द्रोऽपि वृत्रवधात् महान्या भयमभूत्तो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्" इति श्रुतेः । भगवत्सम्बन्धो महेन्द्रे निरूपितः तस्य सम्बन्धात् निर्गुणमपि सगुणे शोभां प्राप्नोति तथा भगवदीयोऽपि सर्वत्र शोभां प्राप्स्यतीति फलितं जीवास्तु त्रिविधाः स्वभावतो भगवद्गुणवन्तः दोषवन्तः उभयरहिताश्च तत्र देवाः गुणवन्तः दैत्या दोषवन्तः मानुषास्तूभयरहिताः तेऽपि भगवत्कृपया देवा इव गुणवन्तो भवन्ति तदभावेऽपि कर्मणा व्यक्ते गुणव्यतिकरे संसारे त्रिगुणयुक्ते अगुणवानपि पुरुषः योनिबीजवर्णधर्मान् प्राप्य भासते अगुणत्वात् गुणातीतो वा भगवत्सेवकः भगवद्धर्मान् दृष्टान्तीकुर्वतेन्द्रधनुषो माहात्म्यं निरूपितम् । भगवदीयैव सम्पत्तिर्गुप्तं भगवदीयं प्रकटीकरोतीति पुरुष इति गुणातिरिक्तत्वख्यापनाय प्रकृतिस्तु गुणमय्येव ॥ १८ ॥

गुणेष्ववशिष्टं चन्द्रमाह—न रराजेति । उडुपः क्षुद्रपोषको नक्षत्राधिपतिः स्वज्योत्स्नयैवाभासितैरपि घनैः न रराज तत्र भगवदीयव्यतिरिक्तं पुरुषं साहङ्कारं दृष्टान्तीकरोति—अहम्मत्या भासितया स्वभासा पुरुषो यथेति । अहम्मतिरहङ्कारः अहमिति या बुद्धिः साऽपि स्वभासा आत्मभासैव भासिता तथापि तया पुरुषो न शोभते ॥ १९ ॥

एवं त्रिविधानुक्त्वा ये केवलं भगवदीयाः यथा मेघोत्सवाभिकाङ्क्षिणो बर्हिणः ते सुखिनो भवन्तीति वर्षाकृतं तेषु सुखमाह-मेघागमोत्सवानिति । मेघानामागमे य उत्सवः स येषां सच्चवृक्षलतादीनां तान् दृष्ट्वा मेघोत्सवान् वा वृष्टिविद्युदादीन् शिखण्डिनो मयूराः प्रत्यनन्दन् भगवता विचाञ्चिताः कृता एव भगवदीयोत्सवं मन्यन्त इति एतन्निरूपणं. यदर्थं तदाह—गृहेषु तप्ता इति । गृहेषु स्थिताः गृहादिचिन्तया तप्ताः दुःसङ्केरसदिन्द्रियैश्च अत एव गृहा बहुविधा उक्ताः तथाभूता अपि यदा निर्विषयाः तापेनैव वा निर्विषयाः अच्युतजनाः जितेन्द्रियाः परमहंसाः त्रिदण्डिनो भगवज्जनाः ते हि परिभ्रमन्तो वर्षासु गृहस्थस्य गृहे गच्छन्ति तदा तेषां समागमो भवति तेषु समागतेषु ये निर्विषयाः ते प्रतिनन्दनं कुर्वन्ति नत्वनिर्विषयाः अतः प्रावृट् सर्वेषामेव तप्तानां सुखदायिनी ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा कामिन्यः पुंश्चल्यः गुणिषु पुरुषेषु वैदग्ध्यादिगुणवत्स्वपीति हैयैव ॥ १७ ॥

निर्गुणं ज्यारहितं गुणिनि गर्जितशब्दवति व्यक्ते प्रपञ्चे गुणव्यतिकरात्मकेऽगुणवान् मायागुणातीतः पुरुषो भगवान् भाति विविधलीलाभिरिति भक्तैरुपादेयाः ॥ १८ ॥

उडुपतिश्चन्द्रः स्वज्योत्स्नाराजितैर्घनैस्तुषारमयैः कुहेलिकामयैर्मेघैश्छन्न आच्छन्नत्वाभावेऽप्याच्छन्नत्वेन प्रतीतो न रराज स्वभासा स्वीयगुणमयच्छविरूपया अहंमत्या अविद्यया स्वशक्त्या कीदृश्या भासितया स्वेनैव प्रकाशितया पुरुषः परमेश्वरो यथा घनच्छन्नदृष्टिर्घनच्छन्नमर्कमितिवत् छन्नत्वेन प्रतीति इत्यर्थः । ज्ञानिभिरियमुपादेया ॥ १९ ॥

मेघागमेनोत्सवो येषां ते प्रत्यनन्दन् मेघसमृद्धगर्जितानन्तरमुच्चैरानन्दादिकमकुर्वन् यथा वैष्णवगृहस्थाः समागतवैष्णवसप्रेमानन्दगीतानन्तरमानन्दगीतनृत्यादिकं कुर्वन्तीति । वैष्णवानामुपादेया ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्गुणं ज्यारहितमपि गुणिनि शब्दगुणयुक्ते अभादशोभत यथा गुणव्यतिकरे प्रकृतिगुणपरिणामात्मके व्यक्ते देहे अगुणवान् प्राकृतगुणरहितः पुरुषो ज्ञातस्वो जीवो भाति तद्वत् ॥ १८ ।

स्वभासा धर्मभूतेन ज्ञानेनैव भासितया स्थूलोऽस्मि कृशोऽस्मीत्यादिरूपया ऽहम्मत्या यथा पुरुषो अनात्मको जीवो न राजते तद्वत् ॥ १९ ॥ २० ॥

---

भाषा टीका ।

लोकन के हितकारी जो मेघ हैं तिनमें बीजुरी स्थिरता नहीं करत भई कबहूं काऊ बादर में चमके हैं कबहू काहु में जाय चमके हैं. जैसे चलायमान सौहृदवारी व्यभिचारिणी स्त्री एक गुणी पुरुष के समीप स्थिर होके नहीं रहे है ॥ १७ ॥

वर्षाऋतु में गर्जना के शब्द रूप गुणवारे आकाश में बिना प्रत्यञ्चा को इन्द्र को धनुष शोभा पावत भयो, जैसे गुणपरिणामात्मक या प्रकट जगत् में, प्राकृत गुणरहित पुरुष ईश्वर शोभा पावे है ॥ १८ ॥

अपनी चांदिनी से शोभा पावनवारे मेघन सों ढँक्यो भयो चन्द्रमा शोभा नहीं पावत भयो, जैसे पुरुष के धर्मभूत ज्ञान से होयवेवारी जो देहमें अहंबुद्धि अर्थात् देह में आत्मबुद्धि तासों पुरुष शोभा नही पावे हैं, तात्पर्य ये है कि जब देहमें आत्माभिमान होय जाय है तब आत्मस्वरूप ढँक जाय है, और देहै को आत्मा मानन लगे है ॥ १९ ॥

मेघ के आगमनरूप उत्सव सों हर्षित होयके मोर आनन्द पावत भये, जैसे गृह के तापन सों तप्त होय के निर्वेद (वैराग्य) पाय के रहवेवारे विवेकी जन कोई हरि भक्त साधुजन के आयवे ते सुख पावें है ॥ २० ॥

---

पीत्वाऽपः पादपाः पद्भिरासन्नानात्ममूर्त्तयः ।
प्राक् क्षामास्तपसा श्रान्ता यथा कामानुसेवया ॥ २१ ॥
सरस्स्वशान्तरोधस्सु न्यूषुरङ्गापि सारसाः ।
गृहेष्वशान्तकृत्येषु ग्राम्या इव दुराशयाः ॥ २२ ॥
जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे ।
पाषण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा ॥ २३ ॥
व्यमुञ्चन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः ।
यथाऽऽशिषो विश्पतयः काले काले द्विजेरिताः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नानात्ममूर्तयः अनेकरूपदेहाः ॥ २१ ॥

अशान्तानि पङ्ककण्टकादियुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूषुर्नितरामावसन् सारसाश्चक्रवाकाः अशान्तानि घोराण्यनुपरतानि वा कृत्यानि येषु तेष्वपि गृहेषु ॥ २२ ॥

ईश्वरे इन्द्रे ॥ २३ ॥

नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयो राजानः वणिजाम्पतयो वा द्विजेरिताः पुरोहितैरुक्ताः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तपसा व्रतादिना क्षामाः कृशाङ्गाः श्रान्ताश्च निर्बलाः एवं ग्रीष्मेण पादपानामप्यूह्यम् ॥ २१ ॥

अशान्तानि तरङ्गातिशयेन मुहुः पतन्ति रोधांसि येषु सारसाः स्वनाम्नैव ख्याताः पुष्कराह्वयाः ग्राम्या अविवेकिजनाः तत्रापि दुराशयाः गृहमेव सर्वार्थप्रदमिति दुष्टाभिप्रायाः अत एव यथा नितरां वसन्तीति निशब्दार्थः अत एव आश्चर्येण खेदेन वा अङ्ग ! हे राजन्निति ॥ २२ ॥

ईश्वर इत्यनिवृष्ट्या स्वैरताभिप्रायेण तदंशेनैव तस्य पाषण्डस्यानीयता ॥ २३ ॥

अथ पुनः अनवच्छिन्नवर्षानन्तरम् अथेति पाठे स एवार्थः भूतेभ्यः काले काले योग्यं योग्यं कालं प्राप्य अमृतं जलं वसुरिति वर्षान्ते जलस्योपादेयत्वादमृतशब्दन्यासः एवं विशब्दो विशिष्टार्थो ज्ञेयः द्विजैः प्रेरिता विश्पतय इत्यन्वयः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रामानुसेवया परस्त्रीसेवया ॥ २१ ॥

अशान्तरोधस्सु सलिलाकुलतीरेषु अशान्ततोयेष्विति वा पाठः ॥ २२ ॥

वेदमार्गाः वर्णाश्रमधर्माः ॥ २३ ॥

प्रेरिताः विशो वैश्याः तेषां पतयः दासदासीजनाध्यक्षाः ॥२४॥२५॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पीत्वेति । पादपाः वृक्षाः पद्भिर्मूलैः अपो जलानि पीत्वा नानात्ममूर्त्तयः नानाविधा आत्मनां मूर्त्तयः शाखापल्लवपुष्पफलादिरूपाः येषां तथाभूता बभूवुः यथा प्राक्काम्यतपःफलरूपकामानुसेवातः प्राक् तपश्चर्यादशायां तपसा श्रान्ताः क्षामाः कृशाश्च जनाः कामानुसेवया नानात्ममूर्त्तयो भवन्ति कलत्रपुत्रपौत्रादिपरिजनरूपेणेति तद्वत् अनेन काम्यतपसः शरीरावयवपरिकरादिपुष्टिफलकत्वमात्रं सूचितं यद्वा फलाभिसन्धिरहितभगवदाराधनात्मकतपश्चर्यादशायां तपसा श्रान्ताः कृशाश्च तत्फलानुभवात्मकमुक्तिदशायां काम्यन्त इति कामाः भगवतः कल्याणगुणास्तेषामनुसेवया "स एकधा भवति द्विधा भवति त्रिधा भवति" इत्यादिश्रुत्युक्तरीत्या नानात्ममूर्त्तिमन्तो भवन्ति तद्वत् अनेन भगवदाराधनात्मकतपसः स्वेच्छानुरूपाप्राकृतानेकशरीरपरिग्रहेण भगवता भोगसाम्यसाधनत्वमुक्तम् ॥ २१ ॥

सरस्स्विति । अङ्ग हे राजन् ! अशान्तान्यनिर्मलानि कलुषितानीति यावत् तानि तोयानि येषु तथाभूतेष्वपि सरस्सु सारसाः चक्रवाकाः गोनर्दकाख्यपक्षिविशेषा वा न्यूषुः नितरामुषितवन्तः अशान्तरोधस्सु इति पाठे अशान्तानि सलिलाकुलानि पङ्ककण्टकादियुक्तानि रोधांसि तटानि येषां तेष्वपि सरस्सु इत्यर्थः । अशान्तान्यनुपरतानि कृत्यानि येषु तेष्वपि गृहेषु दुराशयाः वैषयिकसुखाभासलेशलिप्सवो ग्राम्याः पामरा इव ते यथा निवसन्ति तद्वत् अनेन ग्राम्याणां विषया दुःखप्रचुरा अल्पसुखाश्चेत्युक्तं भवति ॥२२॥

जलौघैरिति ईश्वरे पर्जन्ये वर्षति सति जलपूरैरुत्कटैः सेतवो जलनिरोधार्थं मृत्पाषाणादिनिर्मिताः निरभिद्यन्त त्रुटिताः बभूवुः यथा कलौ युगे प्रवृत्ते सति पाषण्डानां वेदबाह्यानामसद्वादैर्वेदमार्गा वर्णाश्रमधर्मा निर्भिद्यन्ते तद्वदनेन पाषण्डवादानामश्रोतव्यत्वमुक्तम् ॥ २३ ॥

व्यमुञ्चन्निति । वायुना नुन्नाः प्रेरिताः सन्तो घना मेघा भूतेभ्योऽमृतवज्जीवनहेतु जलं व्यमुञ्चन् यथा द्विजैः पुरोहितादिभिरीरिताः प्रेरिताः विश्पतयो जनाध्यक्षा राजानः उचितकालेष्वाशिषः कामानर्थिभ्यो विमुञ्चन्ति तद्वत् राजभिरेवं भवितव्यमित्युक्तं भवति ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पादपैर्मूलैः फलैः पुष्पैः नानात्ममूर्तयः शाखोपशाखाभिर्नैतखरूपाः प्राग् ग्रीष्मे तपसा तपोमासोर्जितनापेन क्षामाः कृशाः यथा कामानामनुसेवया जातेन श्रमेण श्रान्ताः इन्द्रियदौर्बल्यमाप्ताः प्राक्कुटुम्बव्यवस्थायां क्षामाः पादेन ग्रासेन आत्मानं पान्ति रक्षन्तीति पादपाः तपस्विनः गतिसाधनत्वात् पद्भिः शाखैः अपः पुरुषार्थावाप्तिहेतुत्वात् ज्ञानरसान् पीत्वा स्वाध्यनप्रायरुद्धा वशीकृतात्मनः परात्मानो मूर्तिर्विग्रहविशेषो यैस्ते तथेति भावः। यद्वा, प्राक् क्षामाः वनिताद्यभावेन तपसा कामाग्नितापेन श्रान्ता जनाः कामानुसेवया पश्चादेव वनितादिलाभेन निरन्तरकामभोगेन पुत्रतत्पुत्रपुष्पफलादिना नानात्ममूर्तयः परायत्तनिजशरीरा यथा भवन्ति तथेति ॥ २१ ॥

अङ्ग हे परीक्षित्! सारसाश्चक्रवाकाः अशान्तानि जलैः पूर्णानि रोधांसि तीराणि येषां तानि तथा तेषु सरस्स्वपि ऊषुर्हि जलप्रवाहाभिभूततीरवासस्याशक्यत्वेपि तत्रैवोषुरित्यर्थः दुराशयाः ग्राम्याः प्राकृतजनाः अशान्तकृत्येषु अनुपरतकर्तव्येषु गृहेष्विव यथा वसन्ति अनेन नित्यसंसारिस्वभावो दर्शितः ॥ २२ ॥

पाषण्डादिमतज्ञानं नरकसाधकमिति ज्ञातव्यम् ॥ २३ ॥

वायुभिर्नुन्नाः प्रेरिताः अमृतं जलं द्विजैरीरिताः प्रेरिताः विट्पतयो राजानः विशः प्रजा उद्दिश्य काले काले कालगुणं ज्ञात्वा अमृतं हेम विमुञ्चन्ति प्रयच्छन्ति—

"अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने ।
अयाचिते जले दुग्धे मोक्षेऽन्ने हेम्नि गोरसे" ॥

इतियादवः। यद्वा, षष्ठमंश इति ब्राह्मणोक्तं विशो वैश्या विट्पतिभ्यो राजभ्यः यथाकालममृतकुत्सात्मकं धनं ददतीति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सारसाः पुष्कराह्वयाः अशान्तानि तरङ्गातिशयेन मुहुः पतन्ति रोधांसि येषु ।द्विजैः प्रेरिता विश्वत इत्यन्वयः ॥ २२—३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकारान्तरेण चातुर्विध्यमाह—पीत्वाप इति । पादपाः सर्वे वृक्षाः तामसेषु सात्त्विकाः नाना आत्ममूर्तिर्येषां तादृशा जाताः पानमप्रत्यक्षसिद्धमिति पद्भिरित्युक्तं पादपशब्दो रूढो वा मर्यादेति तेषां नीरस्यैव जीवनत्वेन पदयोरेव तत्पानसाधनत्वेन स्वच्छायथैवोष्मतापक्षीतादिभ्यः स्वपादान् पान्तीति वा तथा नानामूर्तयस्तु स्वभावत एव भवन्ति पुत्रग्रामानियतरूपस्योक्तत्वात् तन्निराकरणार्थमात्मपदं यस्य ग्रीष्मर्तौ या मूर्तिः स्थिता ततो विलक्षणा नानामूर्तिर्जातेति एतदपि निरूपणं यदर्थं तदाह—प्राक् क्षामाः दुर्बलास्तपसा न केवलं देहदौर्बल्यमपितु तपसा श्रान्ताः इन्द्रियशक्तिरपि कुण्ठिता भवति ते यदा तपःफलरूपं काममनुसेवन्ते तदा प्रत्यहं नानात्ममूर्तयो भवन्ति ते वर्षास्वेव पुष्टा भवन्तीति प्रकृते निरूपितम् अन्यदा शोषकत्वाद्बुल्याश्च शीघ्रमुप-
चयः ॥ २१ ॥

तत्र राजसानामाह—सरस्स्विति । सारसा हि सरस्येव रमन्ते तानि वर्षाकाले पूरितानि भवन्ति उपरि बहुदूरं जलं गच्छति तत्र यत्र नीडं कृत्वा स्थिता कूले तत्कूलं जलेन प्लावितं भवति तदुपरि कृते तदपि कदाचित् कूलं पतति एवमनेकविधदोषयुक्तेष्वपि सरस्सु सारसाः तद्रसाविष्टाः न्यूषुः समीपसम्बन्धिविशेषणवशादशान्तरोधसि तिष्ठन्तीति गम्यते एतदर्थमुक्तं तदाह गृहेष्विति । न शान्तं कदाचिदपि कर्तव्यं येषु न ह्यामरणं गृहचिन्ता कदाप्यपगच्छति तेऽपि ग्राम्याः ग्रामएवोत्पन्ना रता इन्द्रियग्रामपोषका वा तादृशा अपि दुराशयाः अन्तःकरणदोषयुक्ता अपि बहिर्निर्गतानां खेदेन भगवत्स्मरणं तीर्थदर्शनं सत्सङ्गो वा भवेत् क्रियाव्यापृतौ चिन्ताभावो वा वर्षासु तु सर्वा-
भावः ॥ २२ ॥

एवं राजसानुक्त्वा तामसानाह—जलौघैरिति । जलसमूहैः सेतवो निरभिद्यन्त भिन्नाः जाताः तत्र च प्रतीकारो न शक्यः ईश्वरे वर्षति पर्जन्य ईश्वरः स हि सर्वसुखार्थं वर्षति ततोऽशक्यप्रतीकारात् सेतवोऽपि भिन्ना एव एतदपि यदर्थं तदाह—पाषण्डिनामसद्वादैरिति । कलौ बुद्धावतारे भगवति तेन प्रवर्तिताः पाषण्डाः तेषामसद्वादैः कुयुक्तिभिः सर्व एव वेदमार्गा कर्मज्ञानभक्त्युपासनादिप्रतिपादकाः निरभिद्यन्त कलौ तेषां प्रयोजनाभावात् ॥ २३ ॥

गुणातीतस्थानीयमाह—व्यमुञ्चन्निति । वायुभिः प्रेरिताः घनाः भूतेभ्यः अमृतं हस्तादिजलं मेघादिजलं वा अन्यत्र जलं गच्छति मेघादिजलं यथा इति दृष्टान्ते कालपर्यवसया यदा यत्र जलमपेक्षितं तत्रैव तदैव वृष्टिरिति ज्ञाप्यते भूतेभ्य इति चतुर्थी एतदपि यदर्थं तदाह—यथेति। विट्पतयो देशाधिपतयो ब्राह्मणैः प्रेरिता आशिषो धनादिकं प्रयच्छन्ति पुरोहितप्रेरिता हि ते दीनेभ्योऽन्नादिकं प्रयच्छन्ति वर्षासु दीनानां स्वतः कार्यसामर्थ्याभावात् यस्तु वर्षासु दाता स दातेति ब्राह्मणप्रेरणा प्रकृतोपयोगिनी ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नानाविधा आत्मनः स्वस्य मूर्तयोऽङ्कुरपत्रपल्लवपुष्पफलादयो येषां ते पक्षे नाना आत्मानः पानभोजनरमणादिनानास्वभाववन्त आत्मनो मूर्तयो देहा येषां ते निष्कामायामियं हेया ॥ २१ ॥

अशान्तानि पङ्ककण्टकभङ्गुरत्वादिदोषयुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूषुर्नितरामेवाऽऽसन् एवं हेयैव ॥ २२ ॥

ईश्वरे ईश्वरत्वाभिमानवशादतिवर्षोपद्रवं कुर्वति सति इयं इति कलिसाम्यमियं हेया ॥ २३ ॥

नुन्नाः प्रेरिताः आशिषः कामान् विट्पतयो राजानो वणिजां पतयो वा द्विजैर्विप्रैरीरिताः प्रेरिता इति राजभक्तये-
देया ॥ २४ ॥

---

एवं वनं तद्वर्षिष्ठं पक्कखर्जूरजम्बुमत् ।
गोगोपालैर्वृतो रन्तुं सबलः प्राविशद्धरिः ॥ २५ ॥
धेनवो मन्दगामिन्य ऊधोभारेण भूयसा ।
ययुर्भगवताऽऽहूता द्रुतं प्रीत्या स्नुतस्तनीः ॥ २६ ॥
वनौकसः प्रमुदिता वनराजीर्मधुच्युतः ।
जलधारा गिरेर्नादानासन्ना ददृशे गुहाः ॥ २७ ॥
क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति ।
निर्विश्य भगवान्नूमे कन्दमूलफलाशनः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पक्विसूर्बैः नाना अनेकविधा आत्मनां शाखापत्रपुष्पादिरूपा मूर्तयो येषां ते तथाभूताः ॥ २१ ॥

सारसाः जलजीविनः पक्षिविशेषाः अशान्तानि शङ्कितानि शङ्कुकण्टकादियुक्ततया क्लेशावहानि वा रोधांसि तटानि येषां तेष्वपि न्यूषुः नितरामेवावसन् दुराशयाः दुष्टाभिप्रायाः शिश्नोदरतृपः अशान्तकृत्येषु अस्थिरफलबहुक्लेशोदर्ककृत्येषु गृहेषु यथा निवसन्ति तद्वत् ॥ २२ ॥ २३ ॥

तुन्नाः प्रेरिताः यथा विशां प्रजानां पतयः आशिषः कामान् अर्थिभ्यो विमुञ्चन्ति तद्वत् ॥ २४ ॥

---

भाषा टीका ।

वृक्ष अपनी जड़न सों जल पीके हरे २ लाल २ पत्तान सों शोभित होत भये, जैसे पहिले तपस्या सों थके भये दुर्बल होयके पीछें भोगन कों भोगिवेतें हृष्ट पुष्ट और अनेक चाल चलन वारे होय जाय हैं ॥ २१ ॥

हे राजन् ! कीच कांटेन सों नहीं हैं स्वच्छ किनारे जिनके ऐसे तलावन में सारस पक्षी वास करत भये, कबहूं कामन सों छुटकारो नाय जिनमें ऐसे घरन में दुराशा सों विषयी जन जैसें वास करें हैं ॥ २२ ॥

खूब मेघ की वर्षा होयवे पै जलके प्रवाहन सों खेतन की मेंड ( मर्यादा ) टूट जात भई, जैसे कलियुग में पाखंडियों के खोटे वादन सों वेद के मार्ग टूट जांय हैं ॥ २३ ॥

पवन की टक्कर लगिवे ते मेघ अमृत ( जल ) की वर्षा करत भये, जैसे पुरोहित ब्राह्मन की प्रेरणा ( करवे ) से धनीजन समय २ पै याचकन के मनोरथन कों देवे हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रावृषि कृतां क्रीडां वर्णयति-एवं वनमिति सप्तभिः । वर्षिष्ठं समृद्धम् ॥ २५ ॥ २६ ॥

वनौकसः पुलिन्द्यः प्रमुदिता भगवान् ददर्श तथा वनराजीर्मधुच्युतो मधुस्रवा ददर्श गिरेः सकाशाज्जलधाराश्च तासां नादानासन्ना निकटवर्तिनीर्गुहाश्च यद्वा वनौकसः प्रमुदिता आसन् तथा वनराजीर्वनराजयो वनपरम्परा मधुच्युत आसन् गिरेर्जलधारा आसन् तानेवंभूतानाद्ददर्श समन्ततो ददर्श भगवान् तथा धाराणां नादान् गुहाश्चेति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं वर्षाकालं वर्णयित्वा तत्फलं तत्र श्रीभगवतः क्रीडाविशेषं वक्ष्यन्नादौ वनप्रवेशमाह-एवमिति । उक्तप्रकारेण यथायथाहं वर्णितवांस्तथा वर्णयिष्यस्यर्थः । तदनुसारेणैवाहमवर्णयमिति भावः वृतः श्रीमुखशोभाक्षोभेन ॥ २५ ॥

क्रीडामाह-धेनव इति षड्भिः । मन्दगामिन्योऽपि प्रीत्याऽऽहूताः प्रीत्यैव द्रुतं ययुश्चेत्यन्वयः प्रीतौ लिङ्गं स्नुतस्तना इति स्नुतस्तनीरिति पाठे स्नुतस्तन्यः इति प्रावृट्काले विशेषतो दुग्धादिसम्पत्त्या शोभाविशेषं तत्सङ्गोगादिसम्पत्त्याऽपि मिथः प्रेमविशेषश्च क्रीडापरिकरत्वेन दर्शितः ॥ २६ ॥

वनौकसः पुलिन्द्यादीन् गुहानां दर्शने नादस्य हेतुना दूरवर्त्तिनीनामपि तृणादिभिराच्छन्नानामपि तासां प्रतिध्वन्युदयेनाभिव्यक्तेः ददृशे ददर्श ॥ २७ ॥

क्वचित् कस्मिंश्चित् कदाचिद्वा भगवानपीति अहो अस्या लीलायाः परममाधुर्यमिति भावः कन्दमूलयोर्वृत्तदीर्घत्वाभ्यां भेदो लोके प्रसिद्धः तयोः प्रावृषि कोमलत्वादिना उपादेयत्वात् फलतः प्राङ्निर्देशः ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऊधः क्षीराधारस्थानम् ॥ २६ ॥

जलधारा गिरेः निर्झरयुक्तगिरेः नादसवाना निर्झरनादेन सम्नादाः ॥ २७ ॥

क्रोडं मध्यभागे ॥ २८—३७ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं वर्षर्तुमनुवर्ण्याथ तदा कृतानि कानिचिद्भगवच्चेष्टितानि वर्णयति–एवमित्यादिभिः सप्तभिः । इत्थं पक्वानि खर्जूरादिफलानि अस्मिन् सन्तीति तद्वत् तद्वर्षिष्ठं वृद्धं प्रभूतमिति यावत् वनं हरिः सबलदेवो गोपालैः सह रन्तुं प्राविशत् ॥ २५ ॥

भूयसा ऊधसः पयःकोशस्य भारेण मन्दगामिन्योऽपि धेनवो भगवता आहूताः स्नुतस्तन्यः सत्यो द्रुतमेव ययुः ॥ २६ ॥

वनौकःप्रभृतीन् ददर्श इत्यन्वयः प्रमुदिताः मधुच्युत इति च वनराजीरित्यस्य विशेषणं मधुच्युतः मधूनि स्रवन्त्यः प्रमुदिताः फलपुष्पसमृद्धिभिः मुदिताः इव स्थिताः प्रमुदिताः वनौकसः पुलिन्दीरिति वा गिरेः सकाशाज्जलधारास्तासां नादानासन्ना निकटवर्त्तिनीर्गुहाश्च ददर्शुरित्यर्थः ॥ २७ ॥

कदाचित्पर्जन्ये अभितो वर्षति सति वनस्पतिक्रोडे वृक्षमूले गुहायां वा प्रविशन् भगवान् कन्दानि मूलानि फलान्येवाशनं यस्य तथाभूतो रेमे ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वर्षिष्ठं प्रभूतवर्षोपेतम् ॥ २५ ॥

स्नुतस्तनीः स्रवित्स्तन्यः ॥ २६ ॥

वनौकसो गावः मृगादयो वा गुहाः ददृशुरित्यन्वयः कथम्भूताः प्रमुदिताः प्रहृष्टानन्दाः वने राजी राजनं यासां ताः वनराज्यः मधुश्च्युतः मधुवन्मधुरं क्षीरं श्च्यवन्ती मधुश्च्युतः गम्भीरश्चासौ सन्नादश्च गभीरसन्नादः तेन सन्नादेन सह वर्त्तमानाः । यद्वा, वृष्टयभावसमये मधुश्च्युतः वनराजीर्वनपङ्क्तीः ददृशुः वृष्टौ सत्यां गुहा ददृशुरिति वनौकसः किराता वा गिरेर्हेतोः सन्नादा राक्षसाः सन्नादाः भावप्रधानो निर्देशः नष्टराक्षसत्वेन नादसहिताः ॥ २७ ॥

अभिवर्षति सति वनस्पतिक्रोडे गुहायां चैव निर्विशन् उपभुञ्जानः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमेकविंशतिप्रकारेण स्वरूपेण च प्रावृट् वर्णिता तस्यां प्रावृषि भगवतो गुणानां च रमणमाह—सप्तभिः । तत्र प्रथमं रमणार्थं भगवतः प्रवेशमाह–एवमिति । एवं पूर्वोक्तप्रकारेण सर्वगुणसम्पन्नं वनं तत्प्रसिद्धं वर्षिष्ठं श्रेष्ठं सर्वोत्तमं जातम् नन्वत्र वने क्रीडायां शीघ्रं गृहागमनं न सम्भवति भुक्त्वागमनेऽपि महद्दिनमिति मध्ये क्षुध्येत् आम्रादिफलानि तु निवृत्तानि ततः कथं रमणमित्याह–पक्वखर्जूरजम्बुमदिति । पक्वानि खर्जूरफलानि जम्बुफलानि यस्मिन् वने भगवान् गुणातीतः सत्वस्थानीयो बलः रजःस्थानीयाः गोपालाः गावस्तमःस्थानीयाःतैः सर्वैरेव भगवदीयैराप्तैःप्रकर्षेण क्रीडां कर्तुं स्वसम्पादितनिर्दुष्टैर्जीवैः सह वनं प्राविशत्॥२५॥

तत्र प्रथमं धेनूनां शोभामाह—प्रवेशो वीर्यशक्तिरिव वैराग्यशक्तिर्वा ऐश्वर्यशक्तिमाह–मन्दगामिन्यो धेनवो जाताः गर्भेणापि तथा भवन्तीति तद्व्यावृत्त्यर्थमाह–ऊधोभारेण भूयसेति । क्षीरात्मकस्यैव महान् भारः तादृश्योऽपि भगवता आहूताः ऐश्वर्यवशात् [illegible] मागताः निर्बन्धेनागमनं सम्भवतीति तदर्थ वृत्त्यर्थमाह-प्रीत्या [illegible] प्रीत्या आहूताः प्रीत्या च ययुः प्रीत्यैव च स्नुता स्तना यासां [illegible] ष्टापौ व्यत्यये न भवतः ॥ २६ ॥

गोपानां सुखमाह—वनौकसः प्रमुदिताः इति । वनवासि[illegible] हि कालान्तरे तापो भवति इदानीं शीतलत्वात् सर्वे प्रमुदि[illegible] अनेन दोषाभाव उक्तः सहजं च सुखं भक्ष्यसम्पत्तिमाह-व[illegible] राजीर्वनपङ्क्तयः सर्वे एव वृक्षाः नानाजातीयाः मधुच्यु[illegible] पूर्णा मधूनि ततोऽपि प्रवाहमधुयुक्ता जाताः पेयसम्पत्तिमा[illegible] जलधारा गिरेरासन्नेति । पर्वतसम्बन्धिन्यो जलधाराः अत्[illegible] पिताः शीतलाः पानयोग्यधाराश्च भवन्ति वृष्टौ स्थातुं [illegible] च कर्तुं स्थानमाह—आसन्ना ददर्श गुहा इति । आसन्ना नि[illegible] टस्थाः गुहाः विश्रामस्थानानि एतांश्चाविषसामग्रीयुक्तान् व[illegible] कसः गोपालानन्यांश्च ददर्श ॥ २७ ॥

बलभद्रस्य तत्र रमणमाह—कचिद्वनस्पतिक्रोड इति वृक्षस्य क्रोडे कोटरे गुहायां वा अभिवर्षति [illegible] निर्विशन् तत्रोपविशन् भगवान् रामः मूलकन्दफला[illegible] शनं यस्य वनस्थानि तानि सर्वाणि दिव्या[illegible] स्वादिष्टानि च रेम इति पदात् रामो ज्ञायते विशेषं च [illegible] भगवति क्रोडे पुनर्निलीयोपवेशनं फलाहारश्च न [illegible] सम्पद्यते ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वर्षा वर्णयित्वा तादात्त्विकीं लीलां वर्णयति–एवमिति सप्तभि[illegible] वर्षिष्ठं समृद्धम् ॥ २५ ॥

स्नुतस्तनीः स्नुतस्तन्य इति प्रीतिचिह्नम् ॥ २६ ॥

तत्र च कृष्णो वनौकसः पुलिन्दीः प्रमुदिताः ददर्श [illegible] वनराजीर्मधुच्युतः मधूनां च्युत् क्षरणं यासु तथाभूता [illegible] गिरेः सकाशाज्जलधारादूरवर्तिनीरपि नादाद्धेतोरासन्ना नि[illegible] वर्तिनीः ददर्श गुहाश्च ददर्श ॥ २७ ॥

मेघे अभितो वर्षति सति वृक्षक्रोडे गुहायां वा निःशं[illegible] द्रुतमभिद्रुत्य विशन् प्रविशन् कन्दमूलयोर्वर्तुलत्वदीर्घत्वा[illegible] भेदो ज्ञेयः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ सङ्क्षेपतो भगवल्लीलां प्रावृषिकृतां वर्णयति—एवमि[illegible] सप्तभिः । वर्षिष्ठं समृद्धम् ॥ २५ ॥

ऊधसः पयःकोशस्य भूयसा भारेण मन्दगामिन्योऽपि भग[illegible] वता ऽऽहूताः प्रीताः सत्यो द्रुतं ययुः ॥ २६ ॥

प्रमुदितशब्दस्य लिङ्गविपरिणामेन सर्वत्रान्वयः तथा [illegible] मधुच्युतः मधुभवाः वनराजीः प्रमुदिताः ददर्श गिरेः सका[illegible] जलधाराः प्रमुदिताः ददर्श नादान् जलधाराणामन्येषां च श[illegible] प्रमुदितान् ददर्श आसन्नाः निकटवर्तीर्गुहाश्च प्रमुदिताः दद[illegible] बहुना वनौकसः सर्वान् प्रमुदितान् ददर्श इत्यर्थः ॥ २७ ॥

दध्योदनं समानीतं शिलायां सलिलान्तिके ।
सम्भोजनीयैर्बुभुजे गोपैः सङ्कर्षणान्वितः ॥ २९ ॥
शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् ।
तृप्तान् वृषान् वत्सतरान् गाश्च स्वोधोभरश्रमाः ॥ ३० ॥
प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् ।
भगवान् पूजयाञ्चक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥
एवं निवसतोस्तस्मिन्रामकेशवयोर्व्रजे ।
शरत्समभवद्व्यभ्रा स्वच्छाम्ब्वपरुषानिला ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वनस्पतेर्महावृक्षस्य क्रोडे मूलभागे विपुलस्थाने ॥ २८-२९ ॥

---

भाषा टीका ।

या प्रकार की वर्षा काल में पके भये खजूर जामुन जामें ऐसे या वृन्दावन में बलदेवजी और ग्वाल बालन सहित श्रीकृष्ण गायन कों लेकें क्रीडा करवे कूं प्रवेश करत भये ॥ २५ ॥

बडे २ थैन के भारतें मंद गमनवारी धेनून को भगवान् जब प्रेम सों बुलावें तब वे गायें वेग सों श्रीकृष्ण के समीप जात भई जल्दी चलिवें ते मार्ग में स्तन जिनके न्यारे चुचावत जाँय हैं ॥ २६ ॥

वा समें श्रीकृष्ण सिगरे वनवासीन को प्रसन्न देखत भये मकरंद जिनमें ते चुचाय रह्यो एसी वृक्षन की लतान कूं और गोवर्द्धन पर्वत में ते झरना झरें हैं तिन कूं देखत भये, और झरनान के शब्दन कूं सुनत भये तथा गिरराज की गुफान कों देखत भये ॥ २७ ॥

कभऊ जब वर्षा होयवे लगे तब श्रीकृष्ण काई बडे वृक्ष की खोतर में कभऊ गिरराज की गुफा में बेठि करि के अपने सखान सहित कंद मूल और फलन को भोजन करके क्रीडा करें हैं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

शरदं वर्णयति—एवं निवसतोरित्यष्टादशभिः । विगताभ्राणि यस्यां सा स्वच्छान्यम्बूनि यस्यां सा अपरुषः शान्तोऽनिलो यस्यां सा च सा च ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपानीतं स्वगृहजनैर्बान्धवजनैर्वा समीपं प्रापितं सम्भोजनीयैः सह भोजयितव्यैः सजातीयैः सह संवासादिशब्दवद संशब्दोऽत्र सहार्थः सम्भुज्यते एभिरिति तैस्तेमनैः सहेति वा सङ्कर्षण इति तत्र सर्वमेवनाभिप्रायेण ॥ २९ ॥

शाद्वलेति युग्मकम् । चर्वतः रोमन्थायमानान् निरीक्ष्येति परेणान्वयः ॥ ३० ॥

तत्रापि स्वलीलायोग्यतापादनार्थमात्मशक्त्याह्लादिनीनाम्न्या उपबृंहिताम् अतः पूजयाञ्चक्रे साध्वमन्यत अन्यच्च तच्च क्रीडादिकम् उक्तं पराशरेण "उन्मत्तशिखिसारङ्गे तस्मिन् काले महावने । कृष्णरामौ मुदायुक्तौ गोपालैः सह चेरतुः ॥ क्वचिद्गोभिः समं रम्यं गेयतालरतावुभौ । चेरतुः क्वचिदत्यर्थं शीतवृक्षतलाश्रये । क्वचित्कदम्बस्रक्चित्रौ मायूरस्रगलङ्कृतौ । विचित्रौ क्वचिदासातां विविधैर्गिरिधातुभिः ॥ पर्णशय्यासुसुप्तौ च क्वचिन्निद्रान्तरैषिणौ । क्वचिद्गर्जति जीमूते हाहाकाररवैषिणौ" इति ॥ ३१ ॥

एवमुक्तप्रावृट्क्रीडाविशेषेण तत्र व्रजे नितरां परमासक्त्या वसतोः सतोरिति तत्र शरच्छ्रीविशेषसम्पत्तिहेतुरुक्तः अतः सम्यक् अभवत् ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कदाचिद्गृहादानीतं दध्यन्नं सलिलसमीपे स्थितायां शिलायां पात्रभूतायां सह भोजनीयैः गोपैः सह बुभुजे ॥ २९ ॥

क्वचित् शाद्वलोपरि हरिततृणाकीर्णप्रदेशे उपविश्य वृषादीन् वीक्ष्य भगवान् सर्वभूतानां मुदमावहतीति तथा तामात्मशक्त्या स्वसङ्कल्पात्मिकया उपबृंहितां प्रवर्द्धितां तां प्रावृट्श्रियं पूजयाञ्चक्रे बह्वमन्यतेत्यन्वयः चर्वतो मीलितेक्षणान् तृप्तानिति च वृषानित्यस्य विशेषणं चर्वतः तृणानि खादतः मीलितानीक्षणानि यैस्तान् तृप्तान् गर्वितान् स्वोधसां भरेण भारेण श्रमो यासां ता गाश्च ॥ ३० ॥ ३१ ॥

अथ शरदागममाह—एवमिति । तस्मिन् व्रजे इत्थं निवसतोः रामकेशवयोः शरत्समभवत् सम्यक् प्रवर्त्तत, कथम्भूता ? विगताभ्राणि यस्यां स्वच्छान्यम्बूनि यस्यामपरुषः सुखस्पर्शोऽनिलो वायुर्यस्यां ततस्त्रयाणां कर्मधारयः ॥ ३२ ॥

---

**शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः ।**
**भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥**

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्भोजनीयैः सह भोक्तव्यैः ॥ २९—३० ॥
आत्मशक्त्युपबृंहितां सम्वर्धिताम् ॥ ३१ ॥
व्यभ्रा विगतमेघा स्वच्छाम्बु तस्य विप्लुषितेन विप्लुषा बिन्दुना युतः अनिलः स्वच्छाम्बुप्लुषितानिलः स यस्यां सा तथा ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्रापि स्वलीलायोग्यायोग्यतापादनार्थमात्मशक्त्या ह्लादिनीनाम्न्या उपबृंहिताम् ॥ ३१—३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतो लीलामाह-दध्योदनमिति । गोपैर्गोपिकाभिर्यशोदया रोहिण्या वा तदानीमुपनीतं दध्योदनं शिलायां पर्वतसानुनि स्थूले आच्छन्नमेघे वर्षति सलिलसमीप एव जलार्थमन्यत्र गमनाभावाय सम्भोजनीयैः सजातीयैर्गोपैः सङ्कर्षणेन चान्वितो बुभुजे एतद्भोजनं प्रावृषि तस्याः स्वसम्पत्तित्वख्यापनार्थम् अन्ये च गोपाला भिन्नतया बुभुजुः बलभद्रेण सह फलाहारो वा ॥२९॥

ननु, गोषु विद्यमानासु ताभ्यो ऽदत्त्वा कथं भगवान् बुभुज इति शङ्कां वारयति—शाद्वलोपरीति । शाद्वलं हरिततृणवद्देशः तत्र सन्निविश्य चर्वतः रोमन्थं कुर्वाणान् तृप्तान् वृषान् वत्सतरान् गाश्च ददर्श इति सम्बन्धः रोमन्थसमये न तेभ्यो देयं त्रिविधा गणिताः तत्र गोभ्यो देय इत्यधिकशङ्कायामाह—स्वोधोभरश्रमा इति । स्वस्य ऊधसो भरेण श्रमो यासाम् एवं सर्वेषां भोजनपानशयनविहारा निरूपिताः ॥ ३० ॥

एतादृशस्य वनस्य भगवत्कृतम् अभिनन्दनमाह-प्रावृट् श्रियमिति । आधिदैविकी प्रावृट्श्रीः स्वकीया तत्र समागता आधिदैविकीमपि तां वीक्ष्य भगवान् पूजयाञ्चक्रे पूजायां हेतुत्रयं सर्वभूतसुखावहत्वम् आत्मनो यावत्यः शक्तयः ताभिरुपबृंहितत्वं चकारसूचितम् आधिदैविकरूपत्वं च तस्यां क्रीडित्वा तस्या अभिनन्दनं कृतवान् ॥ ३१ ॥

इदानीं पूर्वलीलामुपसंहरन् लीलान्तरकथनार्थं शरद्वर्णनमाह, एवमित्यष्टादशभिः । सामान्यतः शरत्प्रवृत्तिरेकेन सप्तदशभिश्च तत्कार्याणि तत्र प्रथमं तस्याः प्रवृत्तिमाह—एवं लीलां कुर्वाणयोः तस्मिन्नेव वने निवसतोः रामकेशवयोः सतोः व्रजे च निवसतोः शरत्समभवत् वर्षासु भगवान् रेमे इति ज्ञात्वा शरदपि समागता मय्यपि रंस्यत इति तस्या वर्षातो वैलक्षण्यमाह-व्यभ्रेति । वर्षायां गुणत्रयमुक्तं मेघा विद्युत्स्तनयित्नव इति तथास्या अपि गुणत्रयमाह अभ्राभावः जलगतमलनिवृत्तिः वायोः परुषस्पर्शनिवृत्तिश्चेति ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपानीतं छाक इत्याख्यया प्रसिद्धं गृहजनैः प्रापितं शिलायां सलिलान्तिक इत्यद्यापि कुण्डतटे भोजनस्थाल्यो दृश्यन्त सर्वैरपि जनैः ॥ २९—३१ ॥

शरदं वर्णयति-एवं निवसतोरित्यष्टादशभिः । स्वच्छान्यम्बूनि यस्याम् अपरुषोऽनिलो यस्यां सा च सा च सा ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मीलितेक्षणाशब्दोऽपि लिङ्गविपरिणामेन योज्य वृषान् वत्सतरान् मीलितेक्षणान् गाश्च मीलितेक्षणाः वीक्ष्य प्रावृट्श्रियं पूजयाञ्चक्र इति द्वयोरन्वयः ॥ ३०—३१ ॥

अथाष्ट दशभिः शरदं वर्णयति-एवमिति । शरत् समभवत् सम्यक् प्रावर्त्तत कथंभूता व्यभ्रा विगतान्यभ्राणि यस्यां सा स्वच्छानि निर्मलान्यम्बूनि यस्याम् अपरुषः मृदुस्पर्शोऽनिलो यस्यां सा च सा च सा च तथा ॥ ३२ ॥

---

### भाषा टीका ।

इतने में यशोदा जी की पठाई भई ग्वालिनी जब वहां भात की छाक लेकें आवे है, तब जल के समीप में शिला के ऊपर परोसिकें साथ भोजन करायवे योग्य जे गोप हैं तिन कूं और बलदेवजी कूं संग लेकें भोजन करत भये ॥ २९ ॥

हरी २ घासन पै बैठिकें आनन्द को मीच कें रोथन वारे पेट जिनको भर्यो ऐसे बैल बछरान कूं और अपने थन के बोझ तें श्रम जिन कों ऐसी गायन कों देखि श्रीकृष्ण बड़े प्रसन्न होत भये ॥ ३० ॥

सर्वभूत प्राणीन को आनन्द प्राप्त करनवारी और अपनी शक्ति से बढ़ी भई ऐसी जो वर्षा ऋतु की शोभा है, ताकों देखिकें भगवान् श्रीकृष्णचन्द्र भी श्लाघा करत भये ३१

या प्रकार या व्रज में श्रीकृष्ण और बलदेव कों वास करत २ शरद ऋतु प्रकट होत भई, कैसी वो शरद ऋतु है कि—जामें जल स्वच्छ होय गये हैं । पवन जामें मन्द सुगन्ध चले है ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नीरजानामुत्पत्तिर्यस्या तया शरदा कृत्वा नीरजानामुत्पत्त्या वा ॥ ३३ ॥

---

व्योम्नोऽब्दं भूतशाबल्यं भुवःपङ्कमपाम्मलम्।
शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम्॥ ३४॥
सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः।
यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः॥ ३५॥
गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्।
यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा॥ ३६॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

व्योम्नोऽब्दमिति व्योमादीनां चतुर्णां चतुरो मलान् शरद्धरत् आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभमशुभं हरति तथा हि ब्रह्मचारिणो गुर्वर्थोदकाहरणादिकष्टं यथा भक्तिर्हरति तथा पूर्णस्य तेनानुपयोगात् गुरुभिरपि कृतार्थस्य तत्त्वानियोगात् एवं व्योम्नोऽब्दं शरज्जहार यथा च गृहिणो-पत्यादिसाङ्कर्यं भक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथाभूतानां शाबल्यं साङ्कर्यं शरत् वर्षासु वृष्टिभिया सङ्कुला निवसन्ति यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पङ्कं शरत् यथा च यतीनां कामादिवासनामलं श्रीकृष्णभक्तिर्हरति एवमपां मलं शरदिति॥ ३४॥

त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणा यैस्ते॥ ३५॥

गिरय इति। अयं भावः न ह्युपाध्यायाः कर्मविद्यामिव ज्ञानिनो ज्ञानामृतं सर्वतो वितरन्त्यपि तु कृपया क्वचिदेव एवं गिरयः शिवं निर्मलं तोयं क्वचिन्मुमुचुः क्वचिन्न न पुनः प्रावृषीव सर्वत इति॥ ३६॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तेषामुत्तरपद्ये नीरजोत्पत्त्या सहेति योज्यम्॥ ३३॥

यथा कृष्णे जाता भक्तिरेका सर्वेषामेवाश्रमिणामशुभं महाकष्टमयं तत्तद्धर्मानुष्ठानं हरति—

"तावत्कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते"॥ इत्यादेः।

तथा शरदप्येका व्योमादेरान्तरकत्वात् कष्टमयमब्दादिकं जहार एवं कष्टमयत्वेनैव साम्यं क्रमरीत्या तत्तद्विशेषैः कथञ्चित् साम्यव्याख्यायामपि लक्षणापरम्परया तत्तदनुष्ठानसामान्य एव पर्यवसानात् कामादिवासनानां गुरुसेवादिमदाश्रमान्तःपाताभावात्तद्वासनात्वपार्थक्यमनियमाद्यनुष्ठाने तात्पर्यात् किं बहुना यतीनामव्यक्तासक्तचित्तानामपि कष्टमेव "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति श्रीभगवद्गीताभ्यः अन्यस्मैः तत्र गुर्वर्थोदकाहरणकुम्भमिति गुर्वर्थमुदककुम्भाहरणासुखमित्यर्थः। कामादिवासनामलमिति तद्वासनारूपासुखमित्यर्थः। एवं साङ्कर्यमपि तज्जनिताऽसुखमित्यर्थः तथाश्रमिणां न हरतीति तस्मात् भ्रष्टस्तु न विवक्षितः॥ ३४॥

किल्बिषं संसारहेतुः कर्म तत्त्यागादेव त्यक्तैषणाः तस्मादेव शान्ता अक्षुभितचित्ताः॥ ३५॥

गिरय इति नैर्घृण्यख्यातं तत्र कृपायां हेतुः पात्रत्वादगुणत्वं ज्ञेयं गिरिपक्षेऽपि गङ्गायमुनादिस्रोतोरेखास्वेव न तु क्षुद्रस्रोतोरेखास्विति क्वचिद्ग्रहणार्थः मोचनविषयत्वेनोभयत्र विवक्षितत्वं न तु तदाश्रयस्येति॥ ३६॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ मुमुक्षूणां हितं दर्शयन्निव समीचीनैर्दृष्टान्तैः शारदान् धर्माननुवर्णयति—शारदानित्यादिना यावदध्यायसमाप्ति पूर्वं शारदानि शरत्सम्बन्धीनि नीराणि जलानि निर्मलान्येव स्थितानि अन्तरा प्रावृषि रजोत्पत्त्या पङ्कप्रादुर्भावेन भ्रष्टानीत्युत्तरस्मादध्याहर्तव्यं पुनः प्रकृतिं स्वभावं ययुः यथा योगिनां चित्तानि निर्मलान्येव क्वचिद्योगाद्भ्रष्टान्यपि पुनरपि पुनर्योगनिषेवया प्रकृतिं यान्ति तद्वत् योगभ्रंशेन चित्तकालुष्ये सति पुनर्योगमेव सेवनेति शिक्षितं। शरदा नीरजोत्पत्त्येति पाठान्तरं नीरजानामुत्पत्तिर्यस्यां तया शरदा हेतुभूतया नीराणि प्रकृतिं स्वच्छत्वप्रकृतिभिकारित्वशान्तत्वादिरूपां ययुः उत्तरार्द्धं तु पूर्ववत्॥ ३३॥

व्योम्न इति। क्रमेण व्योमभूतपृथ्वीजलानां चतुर्णामभ्रशाबल्यपङ्कमलानि चत्वारि शरद्धरत् यथा चतुर्णामाश्रमिणामशुभं कृष्णभक्तिर्हरति तद्वत्। तत्राब्दं मेघं भूतानां प्राणिनः सलिलगतानां शाबल्यं सम्पर्कं वर्षासु तेषां मिथः सम्पर्कात् शरदि तन्निवृत्तेरिति भावः। यथा कृष्णभक्तिः ब्रह्मचारिणो गुरूपदिष्टार्थग्रहणप्रतिबन्धकमज्ञानात्मकमशुभं हरति यथा च गृहस्थस्य विषयसङ्गदोषं यथा वनस्थस्य कदाचिदशक्त्या स्वाश्रमोचितधर्माननुष्ठानप्रयुक्तप्रत्यवायं यथा च यतिनः कृष्णप्राप्तिप्रतिबन्धकं पुण्यपापात्मकं सवासनं कामादिदोषरूपमशुभं हरति तथेत्यर्थः। अनेनावश्यं चतुर्भिरप्याश्रमिभिः कृष्णभक्तिः कार्येत्युक्तम्॥ ३४॥

सर्वस्वमिति। जलदा मेघाः सर्वस्वभूतं जलं हित्वा शुभ्रं वर्चो येषां तथाभूता विरेजिरे यथा मुनयो भगवन्मननशीलास्त्यक्ता दारधनपुत्राख्या ईषणाः यैस्तथाभूताः निरस्तपापाः विराजन्ते तद्वत् अनेनावश्यं मुनिभिरपि एषणात्याज्या इत्युक्तम्॥ ३५॥

गिरय इति। पर्वताः क्वचिन्निर्मलं जलं मुमुचुः क्वचिन्न

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मुमुक्षुश्च ज्ञानिनो यथा कश्चित्तत्त्वत्रययाथात्म्यज्ञानात्मकमृतं केभ्यश्चिच्छुश्रूषुभ्यो ददते केभ्यश्च न ददते अनेन सर्वेभ्योऽपि प्रष्टृभ्यो नोपदेष्टव्यं ज्ञानिभिर्ज्ञानमित्युक्तं, तथैवोक्तं भगवता—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥

इति ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शारद्या शरत्सम्बन्धिन्या नीरजानां पद्मानाम् उत्परया प्रकृतिं स्वच्छतां योगभ्रष्टानां पुनर्योगनिषेवया योगाभ्यासेन ॥ ३३ ॥

शरद्व्योम्नः अब्दम् अर्थिभ्यो जलस्य दातारं मेघं जहार वर्षाकालो निरत इत्यर्थः । ततोऽभ्रशाबल्यम् अभ्रं जलं दधत् मेघः न तु वर्षणं कुर्वन् तन्निमित्तं शाबल्यं व्योम्नः निःस्रवणं जहार अभ्रच्छायाभावात् भुवः पङ्कं कर्दमम् अपां मलं कालुष्यं च अहरत् तत्तदाश्रमोक्तानुष्ठानं यथावत्स्थितसूचनायाश्रमिणामित्युक्तम् अशुभं पातकम् ॥ ३४ ॥

सर्वस्वं जलं शुभ्रवर्चसः धवलवर्णाः त्यक्ताः पुत्रादिवृष्टेर्यथा वैरते तथा ॥ ३५ ॥

शिवं जलं जान्वानन्नूपानूपस्थलभेदाभिप्रायेण निरीक्षणाञ्जनमोक्षामोक्षौ ज्ञानिनां ज्ञानदानादाने योग्यायोग्यमुहूर्त्तामुहूर्त्तकालमेवाविचक्षयेति ज्ञातव्यम् ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्योम्नोऽब्भ्रमिति साधनक्लेशेन तुल्यं क्लेशश्चात्र क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामित्यत्र श्रीगीतासूक्तः ॥ ३४–४० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनेन तदपेक्षया अस्या उत्तमत्वमुच्यते सा हि प्रवृत्तिधर्मरूपा इयं निवृत्तिधर्मरूपा उपर्याकाशनैर्मल्यम् अधो जलनैर्मल्यं परितो वायुनैर्मल्यमिति यथा प्रवृत्त्युत्पत्तिर्मुख्या तदपेक्षया उत्परया नैर्मल्यं मुख्यं भूम्यपेक्षया च जलं महत् परिमाणपेक्षया च वायुः अत एतस्यां भगवान् रातिं करिष्यतीति श्रीयामानन्दः तत्र प्रतिष्ठित इति शुद्ध्यर्थमस्याः प्रवृत्तिरिति षोडशकलासहितस्य जीवस्य सप्तदशात्मकस्य शुद्धिरुच्यते "जलानां सर्वभूतानामश्राणां ज्ञानिनां तथा ॥ कुटुम्बिनां दरिद्राणां विरक्तानां विमुक्तिनाम् योगिनां गोपिकानां च शरत्सम्बन्धितो हरिः ॥ दश दोषाश्चिवार्याऽत्र चित्तस्यापि निवार्य च । सर्वानशोभयद्देवः षड्गुणैश्चन्द्रमा नवाः । गावः पद्मानि भूमिश्च वर्णाश्चैव विभाविताः । शरदः कार्यमेतावद्भगवानविभ्रमतः" । तत्र प्रथमं जलानां दोषं निवर्तियतीत्याह–शरदेति । अद्भिः सर्वशुद्धिः ताश्चेन्निर्मलाः तदा सर्वमेव शुद्धं भवेत् शुद्धौ प्रकार उच्यते—शरदेति । कमलोत्पत्तिः शर[...] निर्गतं रजो यस्मादिति नीरजं सर्वमेव जलरजः [...] भूमौ विलाप्याध्यात्मिकं स्वरूपभूतं कृत्वा आधिदैविकं [...] मकरन्दात्मकं स्वस्मिन् कृत्वा सर्वमेव रजो दूरीकरोति [...] नीरजमुच्यते तानि चेदुत्पन्नानि तदा दोषस्य निवृत्त[...] नीराणि प्रकृतिं ययुः नीरे जातानीत्यपि व्युत्पत्तिः अतः [...] जाते स्वयमपर्यो भवति तदा प्रकृतिं प्राप्नोति अन्यथा [...] पीडित एव स्यात् न केवलमेतद्बौतिकदोषनिवृत्त्यर्थं शरद[...] करोति किन्तु भगवत्क्रीडार्थमन्तरपि हृदयकमलविकास[...] हृदयं गुणातीतं भवति तत्र शरत् योगमुत्पादयन्ती त[...] करोतीति योगो दृष्टान्तत्वेनोच्यते अथवा शनैः शनैः शुद्धि[...] भवतीति तदर्थं दृष्टान्तस्तदाह—भ्रष्टानामिव चेतांसीति । भ्र[...] योगभ्रष्टाः तेषां चेतांस्यपि भ्रष्टानि भवन्ति तानि पुनर्योग[...] यथा वृत्तिरूपस्य रजसो निरोधं प्राप्नुवन्ति ॥ ३३ ॥

एवं शुद्धि हेतुभूतस्यान्तःकरणस्य जलस्य च शुद्धि[...] पपाद्य महाभूतानां शुद्धिं कथयन् आश्रमाणां शुद्धिप्रक[...] माह–महाभूतानि चेच्छुद्धानि तदा देहः शुद्धो भवेत् आत्मशुद्ध[...] धर्मः शुद्धिः तदर्थमाह—व्योम्नोऽब्दमिति । व्योम्नः आकाश[...] मेघा एव मलरूपाः भूतशबलता अग्निवाय्वोर्मलं स्पर्श[...] शुद्धर्थं च तत्सम्भवात् भुवः पङ्क एव मलम् अपामपि [...] एवेति एवं पञ्चमहाभूतानां शरज्जहार इयं च शरदाश्रमाणा[...] मपि मलं दूरीकरोति वर्षासु स्वधर्मस्य निरुद्धत्वात् न्याय[...] मेकत्रान्नभोजनेन दोषोत्पत्तिसम्भवात् ब्रह्मचारिणो गु[...] सेवायां सङ्कोचसम्भवात् गृहस्थस्य कालाज्ञानात् कर्म[...] सम्भवात् वन (वानप्र) स्थस्य च सङ्ग्रहादिना दोषसम्भवात्त[...] निवर्त्तयति शरत् तस्या भगवत्सान्निध्यात् आधिदैविकवत् [...] निवर्त्तकत्वं जातमिति दृष्टान्तेनाह–कृष्णो भक्तिर्यथेति । [...] हृदयाकाशशोकं दूरीकरोति नेत्रजलजननात् अब्दः भू[...] शबलता त्रिविधजीवानां किर्मीरित्वं भक्तिर्दूरीकरोति [...] प्रवर्त्तकः आसन्यो वाग्निर्धति एको दूरीकरोत्यपरो ज्वाल[...] भुवः पङ्कमपि प्रसाददानाद्दूरीकरोति भक्त्या भाविनां च[...] भक्तानां हृदये स्नेहार्द्रा जलार्द्रतां दूरीकुरुतः तावेव [...] भूः अपां सर्वासामेव मलं (भक्तौ) दूरीकरोतीति प्रसिद्ध[...] ब्रह्मचर्यं च गुरवे जलदानमस्ति भक्तिश्च तद्दूरीकरो[...] प्रसिद्धमेव ब्रह्मचर्यं च गुरवे जलदानमस्ति भक्तिश्च [...] करोति अलौकिकदानसामर्थ्यात् भूतैः सह शबलता गार्ह[...] भवति भक्त्या तान्निवृत्तिः स्पष्टैव भूस्थानीयो वनवासः तत्र [...] धारणं धर्मः भगवद्भक्तिस्तु भगवत्सेवार्थं तत् दूरीकरोति [...] वहूदकादीनां मलं परिभ्रमणादिक्लेशं भगवदायतने नित्य[...] तिसम्भवात् । किञ्च, अशुभं पापमपि दूरीकरोति यद[...] तत्संस्काराथमुत्तरांकथा ॥ ३४ ॥

एवमेषां दोषान् दूरीकृत्यजोत्पादकानां मेघानां दो[...] दूरीकृतवतीत्याह–सर्वस्वमिति । यथा मरणकाले न कोऽपि कि[...] चेतुं शक्नोत्येवं शरत्कालेऽपि मेघाः किञ्चित् स्थापयितुं [...] शक्ताः सर्वस्वत्याग एव सर्वप्रायश्चित्तं स्वधर्मगत इति [...] माह–जलदा इति । हित्वा ज्ञानपूर्वकं ततः शुभ्रवर्चसो [...] चिरन्तुः पापस्य हि रूपं नीलिमा पुण्यस्य शुक्लत्[...]

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मेघानां नीलं रूपं गतं शुभ्रं च जातं तदाह—शुभ्रवर्चस इति । शुभ्रं वर्चस्तेजो येषामिति न केवलं शुभ्रत्वमात्रेण सम्यक्त्वं केशादिषु व्यभिचारादत आह—चिरंजुरिति । विशेषेण दीप्तियुक्ता जाताः कालवशादेवैवम्भूता जाता इति तदा नापि रमणं नापि दीप्तिरित्याशङ्क्य दृष्टान्तेन तद्दोषनिवृत्तिपूर्वकं शास्त्रतो दीप्तिमाह—यथेति । अन्तःकरणं हि चतुर्विधं तत्र चतुर्विधा अपि दोषश्चेत् गच्छति तदा बहिस्त्यागादिना दीप्तिमान् भवति तदभावे न शोभते तत्र चित्तस्यैषणात्रयं दोषः बुद्धेर्वीरवि- मूढत्वं मनसो बहिर्विषयत्वम् अहङ्कारस्तु सन्निपातरूपो दोषा- त्मक एव तदत्र क्रमेणैव तेषां निराकरणमाह—त्यक्ता ईषणा यै: ईषणात्रयम् तत्र लोकैषणा द्विविधा भुवनजनभेदात् वित्तैषणा सर्वविषयरूपा अर्थैषणा नाम दारैषणा पुत्रसहिता अनेन धर्मार्थकामा उक्ताः त्रिवर्गपरित्याग ईषणात्रयाभावः शान्तिः सत्त्वादपि भवति तथा सति गुणान्तरोद्भवे सा निवर्त्तते अतः शान्ता स्वरूपेणैव शुद्धसत्त्वरूपेण वा "मनसैवेतदाप्तव्यम्" इति श्रुतेः आत्मप्रवणं मनो येषां ते मुनयः मुक्तं किल्बिषमहङ्कारात्मकं यैः एवं त्यक्तदोषाः बहिःसर्वपरित्यागेन शुद्धा अपि भवन्ति प्रकाशमानाश्च एतत् शरदैव भवति भगवत्सहितया अत एवाग्रे वक्ष्यति सर्वाः शरत्काव्यकथारसाश्रया इति ॥ ३५ ॥

एवं शरत्कृतां दोषनिवृत्तिमुक्त्वा गुणानाह—गिरयो मुमुचुरिति । ज्ञानं हि गुणः अन्तःसारत्वेन तिष्ठति तत्तज्ज्ञानं शुद्धं सर्वदोषनाशकं तदत्र जलं निरूपयन् दृष्टान्तेन निरूपयति—पर्वताः क्वचित्तोयं मुमुचुः क्वचिन्न यत्र झरणादिमार्गौ भवति तत्र मुञ्चन्ति अन्तःस्थितं जलं न तु वर्षोद्भूतं तदाह—शिवमिति । शान्तं शीतलं सुस्वादु महतां सन्तस्तापाभावात् न सूर्यादिनापि तेषां तापः शक्यते कर्तुं तेषामुभयरूपत्वं बुद्धिकृतमाहोस्वित् स्वाभाविकम् ? इति विचिन्त्य स्वाभाविकत्वे शरदो न कापि प्रतिष्ठेति ज्ञानकृतत्वं वदन् शरदस्तत्र प्रयोजकतामाह—यथा ज्ञानामृतमिति । ज्ञानमेवामृतं मरणनिवर्त्तकं काले शुद्धे अवसरे पुरुषविशेषे स्वयं ज्ञानपूर्णा अपि देशकालाधिकारिणो दृष्ट्वा ज्ञानयोग्याश्चेत् उत्तरत्र सम्प्रदाय- निर्वाहकाः अमार्गरहिताः विचार्यैव ज्ञानप्रदाश्चेत् तदा ददते अन्यथा तु न ददत इति "विद्यया सहितो विद्वान् म्रियेतैवा- विचारयन् । नत्वयुक्ताय तद्दद्यात् कथञ्चिदिति निश्चयः" शुद्धिः एषां शरत्कृतेति शरदः प्रयोजकत्वम् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नीरजानामुत्पत्तिर्यस्यां तया शरदा हेतुना अत्र भक्तियोग- विशेषया साम्यं शरदः भगवत्स्फुरणेन साम्यं नीरजस्येतीय- मुपादेया ॥ ३३ ॥

व्योम्न इति । व्योमादीनां चतुर्णां चतुरो मलान् शरज्जहार यथा आश्रमिणां चतुर्णां सत्सङ्गप्रादुर्भूता भक्तिः अशुभम् आश्र- मानुष्ठेयकृत्यरूपम् अमङ्गलं दुःखं यथा हरति भक्तिमतां वर्णा- श्रमधर्मानधिकारादेव तत्तदकरणात् तथाहि ब्रह्मचारिणां धर्मिगुरूपसत्तिप्राप्तगोचारणादिक्लेशं भक्तिर्यथा हरति तथा शरत् व्योम्नोऽभ्रमावरकं मेघम् अभ्रमिति पाठः यथा च गृहिणः श्राद्धादि- विधिप्राप्तकुटुम्बादिसाङ्कर्य्यक्लेशं भक्तिर्हरति तथा शरदि भूतानां शावल्यं वर्षासु वृष्टिभयादेकत्र वसतां सम्मर्दं हरति शरदारम्भ एव तेषां पृथक् पृथक् स्थानगमनात् यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति, एवं भुवः पङ्कं शरत् यथा च यतीनां ब्रह्मजीवैक्यभावनाक्लेशरूपं मालिन्यं भक्तिर्हरति "क्लेशो ऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति गीतोक्तेः एवमपां मलं शरदित्युपादेया ॥ ३४ ॥

त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणाः यैस्ते इतीयमुपा- देया ॥ ३५ ॥

ज्ञानामृतं भगवत्तत्त्वोपदेशं ज्ञानिनो नारदभरतप्रह्लादादयः व्याधरहूगणचैत्यबालकादिषु ददते अन्यत्र न ददते इति कृता- र्थीबुभूषयैवोपादेया तेषां गिरीणां च स्वभाव एवायमचि- न्त्यत्वाद्धाऽत्र युक्तिर्योजनीया पात्रमालिन्यादेर्हेतुत्वे तेषां तुल्य- दर्शित्वं तत्कृपायाश्च निरुपाधित्वं व्याहतं स्यादित्यवधेयम् ॥३६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नीरजानामुत्पत्तिर्यया शरदा कृत्वा नीराणि प्रकृतिं प्रावृट्- सङ्गजदोषपरित्यागपूर्वकं स्वकीयनिर्मलं स्वभावं ययुः भ्रष्टानां दुष्टसंसर्गेण मलिनचित्तानाम् ॥ ३३ ॥

व्योम्न इति मुमुक्षोर्ब्रह्मचारिणः समावर्तनमशुभमेव गृहाश्रमे महागर्ते पतितस्यैव प्रायः पुनर्निर्गमासम्भवात् वनितातनयादि- वशीभूतस्य वैराग्यासम्भवात् अत एवोक्तं "कौमारे आचरेत् प्राज्ञः" इत्यादि जाता तु कृष्णे भक्तिस्तदशुभं हरति श्रीकृष्ण- स्वरूपगुणादियाथात्म्योपदेष्टृश्रीगुरुसेवानुरूपे नैष्ठिके ब्रह्म- चर्ये श्रीकृष्णसाधने मुमुक्षुं स्थापयति "यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये" इति श्रीमुखवचनात् गृह- स्थस्य वनितातनयादिसाङ्कर्यं परमात्मस्वरूपादिश्रवणमननादि- प्रतिबन्धकतयाशुभमेव तत् सा हरति "मत्कृतेत्यक्तकर्माणः त्यक्त- स्वजनबान्धवाः" इत्युक्तत्वात् वनस्थस्य मलधारणक्लेशरूपमशुभं सा हरति कृष्णभक्तौ जातायां मालिन्यस्य दूरतो हेयत्वात् यतीनां च एकाकित्वेन भ्रमणरूपमशुभं सा हरति बहुकृष्ण- दाससंयुते तीर्थे तं स्थापयति एवं चतुर्णामाश्रमिणां यथा कृष्णे भक्तिरशुभं हरति तथा व्योमादीनामब्दादीन् शरत् जहार अहरदित्यर्थः ॥ ३४ ॥

शुभ्रं शुभं वर्चो येषां त्यक्ता ऐहिकामुष्मिकभोगैषणा यैस्ते ॥ ३५ ॥ ३६ ॥

---

भाषा टीका ।

कमलन की उत्पत्ति भई जामें ऐसी शरद ऋतु में जल निर्मल होत भये, योग ते भ्रष्ट होयवे वारे योगीन के चित्त फिर योग की सेवा सों जैसें निर्मल होय जांय हैं ॥ ३३ ॥

आकाश की गर्जना और बादर शरद ऋतु ने हर लिये, याई प्रकार पृथिवी की कीच और जलन के मल शरद ने हर लीने, जैसें आश्रम वारे पुरुषन के अशुभन कों श्रीकृष्णभक्ति हर लेय है ॥ ३४ ॥

नैवाऽविदन् क्षीयमाणं जलं गाधजलेचराः ।
यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः ॥ ३७ ॥
गाधवारिचरास्तापमविन्दन् शरदर्कजम् ।
यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः ॥ ३८ ॥
शनैः शनैर्जहुः पङ्कं स्थलान्यामं च वीरुधः ।
यथाहम्ममतां धीराः शरीरादिष्वनात्मसु ॥ ३९ ॥
निश्चलाम्बुरभूत्तूष्णीं समुद्रः शरदागमे ।
(१)आत्मन्युपरते सम्यङ्मुनिर्व्युपरतागमः ॥ ४० ॥

भाषा टीका ।

आकाश में बादर अपने सर्वस्व[जल]कों त्याग करिकें श्वेत कांतिधारे शोभायमान होत भये, जैसें, चित्त पुत्रादिकन की वासना के त्याग करिबें से दूर भये पाप जिनकें ऐसे शांत मुनि जन शोभा पावे हैं ॥ ३५ ॥

शरद ऋतु में पर्वत कहूं २ झरनान में सों निर्मल जल बहावें हैं, कहूं २ नहीं बहावें हैं । जैसें ज्ञानिजन कहू २ समय पै ज्ञानरूप अमृत कों देवें है कबहूं २ नहीं भी देवे हैं ॥३६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गाधे क्षुद्रे जले चरन्तीति तथा ते मीनादयः ॥ ३७ ॥

अविन्दन् लेभिरे ॥ ३८ ॥

शनैः शनैरिति तत्र ममतामिव पङ्कमहन्तामिव चामताऽमपक्तां जहुरिति ॥ ३९ ॥

आत्मन्युपरते त्यक्तक्रियो मुनिरिव निश्चलाम्बुः स एव व्युपरतागमो निवृत्तवेदघोष इव तूष्णीमभूदिति ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गाधजलचरत्वेन जलक्षयज्ञानयोग्यतोक्ता तथापि नैवाविदन् दृष्टान्ते च कुटुम्बित्वेन कुटुम्बभरणादिदर्शनादायुःक्षयज्ञानं सम्भावितमेव ॥ ३७ ॥

न च तेषां जलक्षयज्ञानेन भयादिराहित्यात् सुखं किन्तु दुःखं महदस्त्येवेत्याह—गाधेति । शरदर्कजमिति तापस्य तैक्ष्ण्यमुक्तं दरिद्रः निर्धनः तत्र च कृपणः धनार्थोद्यमाक्लिष्टः तत्रापि कुटुम्बी स्त्रीपुत्रादिभरणार्थबहुधनापेक्षक इत्यर्थः । तत्राप्यविजितेन्द्रियः लोभादिपर इत्यर्थः । अत एव तापं त्रिविधं लभते ॥ ३८ ॥

ममताया बाह्यविषयत्वात् पङ्केन अहन्ताया आन्तरविषयत्वादामतया साम्यम् ॥ ३९ ॥

समुद्र इति पूर्वोक्तसिन्धुवत् सम्यगुपरते परित्यक्तक्रिये आत्मनि स्वस्मिन् सन्यस्तः तत्र स एव समुद्र एव तूष्णीं बभूवेत्यन्वयः । व्युपरतेत्यादिद्वयं मुनिविशेषणं ज्ञेयं यद्वा कामादिभ्यो विरते चित्ते यतो मुनिः आत्मारामः अत एव व्युपरतागमः गृहीतमौन इत्यर्थः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गाधजलेचराः अल्पजलचारिणः ॥ ३७ ॥ ३८ ॥

आमं जलजाड्यम् ॥ ३९ ॥

मनस्युपरते श्रीभगवद्व्याख्यानरते सति विशेषेण उपरतागमः शास्त्रव्याख्यानरहितो यथा भवतीति ॥ ४०—४२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैवेति । गाधजलेचराः अल्पजलचारिणः क्षीयमाणं जलं नैवाविन्दन्नैव ज्ञातवन्तः यथा मूढाः अज्ञाः कुटुम्बपोषणरता नरा अल्पायुषस्तथाप्यन्वहं क्षीयमाणमायुः न जानन्ति तद्वत् अनेन कुटुम्बिभिरपि देहात्मनोर्याथात्म्यं परिशीलयद्भिरन्वहमायुःक्षयानुसन्धाननिमित्तपरितापवद्भिश्च भवितव्यमित्युक्तं भवति ॥ ३७ ॥

गाधेति । गाधवारिचराः क्षुद्रजलचराः शरदि योऽर्कस्तज्जं तापमविन्दन् लेभिरे यथाऽजितेन्द्रियः इन्द्रियपरतन्त्रः कुटुम्बी दरिद्रः धनधान्यहीनः कृपणः दीनः क्षुत्प्रयुक्तं तापमाप्नोति तद्वत् जितेन्द्रियेण भवितव्यमिति सूचितम् ॥ ३८ ॥

शनैश्शनैरिति । स्थलानि शनैः शनैः पङ्कं जहुः वीरुधश्च ममपक्तां जहुः यथा धीराः ज्ञानिनः शरीरादिषु देहेन्द्रियादिषु अनात्मस्वात्मव्यतिरिक्तेष्वहम्ममतामहन्तां ममतां च जहति तद्वत् तत्राहन्तामात्म्यं पङ्कस्य ममतासाम्यमामस्येति विवेकः अवश्यं ज्ञानिभिरहङ्कारममकारौ यत्नेन परिहर्तव्याविरयुक्तं भवति ॥ ३९ ॥

(१) मनस्युपरत इति शुकपक्षीय पा० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निश्चलेति । शरदागमे शरदः प्रवृत्तौ सत्यां समुद्रो निश्चलाम्बुभरस्तूष्णीं बभूव यथा मुनिः शुभाश्रयमननशीलः व्युपरतः आगमः श्रवणाद्यागमो यस्य स अनुपपन्नाद्यपानोऽपि आत्मनि शरीरे उपरतेऽपि आधिकर्माधिकः उपरन्तुमारब्धवत्यपि देहनिपातिपर्यन्त दशायामपि निश्चलस्तूष्णीमास्ते तद्वत् मुनिनैवं भवितव्यमिति भावः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गाधजलेचराः अल्पजलनिवासिनो मत्स्यादयः प्राणिनः क्षीयमाणं शुष्यमाणं जलं दृष्ट्वा सुखं नैवाऽविन्दन् अन्वहं स्वयं क्षीयमाणम् अन्तं गच्छदायुः अनेन संसारस्याऽनित्यत्वेन असारत्वं संसूचितवान् ॥ ३७ ॥

शरदर्कः शरदृतुसम्बन्धी सूर्यः तस्माज्जातः शरदर्कजः तं कुटुम्बसम्बद्धं तापम् ॥ ३८ ॥

वीरुधः आसन् अङ्कुरिताः अनात्मव्यतिरिक्तेषु जडेष्वि-त्यर्थः ॥ ३९ ॥

उपरते उपरतविषयव्यापारे आत्मनि मनसि । यद्वा, उपे शर्वाधिपे हरौ रते सति उपरतागमः निवृत्तशास्त्रश्रवणादिकः समाधिस्थ इत्यर्थः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं शरदो ज्ञानोपयोगित्वमुक्त्वा वैराग्योपयोगित्वमाह—नैवाविदन्निति । जलस्य क्षयकर्त्री शरत् जलं च गाधं परिमितं जले चराः जल एव क्रियाशक्तियुक्ता भवन्ति जले गते गता एव तेन जलेन सह यद्यगाधे जले प्रविष्टा भवेयुः तदा न कापि चिन्ता स्यात् जलेऽपि स्थित्वा जलक्षयं न ज्ञातवन्तः अत एव न प्रयत्नं कृतवन्तः एतदपि स्वाभाविकं चेत् न शास्त्रुपयोग इति । शास्त्रीयत्वसमर्थनार्थं दृष्टान्तमाह—यथायुरिति । आयुषा हि पुरुषार्थः सम्पादनीयः तच्चायुः परिमितं तादृशेनाप्यायुषा वृथा व्ययव्यापारं गृहं परित्यज्य निर्गुणं भगवन्तं चेदनुगच्छेत् तदा न काचित्क्षतिः आधिदैविकायुषः पूर्णस्य तत्र विद्यमानत्वात् सर्वोपीष्टसाधने प्रवर्तत इति । तदेव तत्र विद्यमानत्वात् अज्ञानं निरूप्यते आयुः क्षीयमाणे ज्ञानाभाव एव हेतुः अतः अज्ञानं निरूप्यते आयुः क्षीयमाणं न विदुरिति क्षयपदेन शक्यता निरूपिता । यद्यक्षयं कर्तुं वाञ्छन्ति तदा अक्षयमपि भवति आयुः प्राणायामादि विशेष इति पूर्वमुक्तं शतायुः पुरुष इत्यपि सर्वत्र मृत्युतोऽप्युक्ताः प्रतीकाराश्च अत आयुः क्षयतीत्युक्तमन्यहानिरिति । पश्चाज्ज्ञाने पश्चात्तापाभावाय अज्ञाने हेतुत्रयं नरत्वं मूढत्वं कुटुम्बित्वं च स्वभावतः शास्त्रतः सङ्गतश्चेति ज्ञानाभावो निरूपितः ॥ ३७ ॥

ननु, कश्चिदज्ञानमपि सुखकरं भवति तथा नरत्वादयो-ऽपि वैराग्याभावेऽप्यैहिकं सुखं भविष्यतीत्याशङ्क्याह—गाधवारिचरा इति । अल्पवारिचराः विद्यमानेऽपि जले शरदा कृता-नेव भासवन्तः अज्ञानं तदैवोपयोगि यदि काचन कर्मणा वा न पीड्यते अतोऽत्र शरदा मेघा निवर्तिता इति जलशोषकस्य तापजनकस्य सूर्यस्य व्यवधायकाभावात् जलतापे तप्ता भवन्ति तत्रापि पूर्ववद्दोषपरिहारायाह—यथेति । दोषचतुष्टयाभावे दुःखाभावः प्रत्येकसमुदायाभ्यां तारतम्येन अन्तःकरणेन्द्रियशरीरविषयाः पुरुषस्य पोषकाः सुखदातारः ते सर्वे स्वभावदोषसहिताः तत्र दारिद्र्यं सर्वविषयनाशकं बहिर्मुखस्य दुःखदायि कार्पण्यमन्तःकरणदोषो लोभात्मकः दरिद्रोऽपि भूत्वा अलुब्धो यदि भवति तदा न प्राप्नुयात् दुःखं तत्राप्येकाकी चेत् न काचित् क्षतिः प्रत्युत कुटुम्बी देहदोषोऽयं तथाभूतोऽपि यदि जितेन्द्रियः स्यात् न काचिच्चिन्ता न विजितानि विशेषेणेन्द्रियाणि येन ॥ ३८ ॥

एवं शरत्कृतदोषत्रयमुक्त्वा गुणसहितं केवलान् गुणानाह—शनैःशनैरित्येकादशभिः । शनैः शनैः क्रमेणैव स्थलानि पङ्कं जहुः तामसाः स्वतामसदोषं जहुः वीरुधो लतागुल्मादयः आममपक्वतां जहुः चकारात् वृक्षा अपि सात्त्विकाः आममेव जहुः पूर्ववदेवाह—यथाहम्ममतामिति । ममता पङ्कस्थानीया अहन्ता आमस्थानीया अहन्ताममतात्यागे यद्यपि शास्त्रं हेतुः तथापि धैर्याभावात् स्वाभाविकदोषेण पीडिताः शास्त्रीयं न मन्यन्ते अतो धैर्यमेव हेतुत्वेनाह—अहन्तां ममतैव अन्येषामहन्तापि अतो द्वयमप्युक्तमभेदश्च केचिदत्रात्मनादात्म्यसम्बन्धश्चाहुः अहङ्कारो ब्रह्मवादे नैयायिकादिसिद्धान्ते नास्ति तत्रात्मबुद्धिरेवेति प्रथम आत्मत्वमध्यस्यन्त इत्यपरे तादात्म्यमित्यन्ये सर्वथा त्याज्यमेव गौणपक्षेऽपि त्यागमर्हति करणपक्षे तु ममता कार्यांश इति त्यागः अत एव धीरा इत्युक्तं नतु भक्ताः आदिशब्देन पुत्रादयः तेष्वहन्ता कथाश्चित् वैदिकत्वहन्तैव पुत्रे भार्यायां च शनैस्त्यागस्यक्तांशस्य पुनग्रहणार्थं त्यागे विद्यमानं हेतुरिति तदुपपादयति, अनात्मस्विति ॥ ३८ ॥

एवं बहिर्दोषं परिहृत्य मनोऽन्तरङ्गदोषपरिहारार्थं समुद्रं निरूपयति—निश्चलाम्बुरिति । पृथिव्यपेक्षया जलमुत्तमं जले च समुद्रः तत्र चाञ्चल्यं दोषः रजःसम्बन्धस्तत्र स्वभावत एव नास्ति शब्दश्च दोषः चलनेनैवोत्पद्यते उभयमपि राजसं तामसं पृथिव्यां तेनोक्तं तदुभयाभावमाह—निश्चलाम्बुरिति । तूष्णीमभूदिति तत्र हेतुः शरदेव पूर्ववद्दृष्टान्तमाह—आत्मन्यन्तःकरणे सम्यगुपरते सर्वविक्षेपरहिते जाते मुनिर्मननशीलः उपरतागमोऽपि भवति निवृत्तवेदार्थानुसन्धानो भवति यतोऽयं सम्यङ्मुनिः निष्प्रपञ्चमननार्थी निदिध्यासनसाधनः आगमः शब्दः चाञ्चल्याभावः उपरतिः सात्त्विकस्तु तथा दोषो न भवतीति पृथिवीजले एव निरूपिते ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गाधे अल्पप्रमाणे जले चरन्तीति मीनादय इतीयं ज्ञेया ॥ ३७ ॥

अविन्दन् लेभिरे यथा दरिद्र इत्यतः पूर्वश्लोके सकपणाः कुटुम्बिनो ज्ञेयाः तेषामेव तत्तापं यथायथमिति—गाधेति ॥ ३८ ॥

आत्मा भक्त्यनुकूलो जीवात्मा परमात्मा कृष्णश्च तद्व्यतिरिक्तेषु शरीरादिषु तत्र तत्र तु अहन्ताममते यत्नेन भावयितव्यौ इति भावः इत्युपादेया ॥ ३९ ॥

केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः ।
यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः ॥ ४१ ॥
शरदर्कांशुजांस्तापान् भूतानामुडुपोऽहरत् ।
देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥ ४२ ॥
खमशोभत निर्मेघं शरद्विमलतारकम् ।
सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥ ४३ ॥
अखण्डमण्डलो व्योम्नि रराजोडुगणैः शशी ।
यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि ॥ ४४ ॥

### श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी ।

आत्मन्युपरते त्यक्तक्रिये सति निश्चलचित्तो मुनिरिव निश्चलाम्बुः समुद्रः मथुरापश्चिमदिशि सातोयास इति ख्यातः व्युपरतागमो निवृत्तवेदघोषो मुनिरिव तूष्णीमितीयमुपादेया ॥४०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवाविन्दन् नैव ज्ञातवन्तः ॥ ३८ ॥
आममपक्वभावम् ॥ ३९ ॥
आत्मनि मनसि उपरते ऐहिकामुष्मिकभोगेष्वयतो निर्विषये सति व्युपरतागमः त्यक्तप्रवृत्तिवाक्यघोषः ॥ ४० ॥

### भाषा टीका ।

शरद में सरोवरन के थोरे जल में रहवे वारे जीव, नित्य २ जो जल घटे है ताकूं नहीं जानत भये । जैसें मूढ दीन कुटुंबी नर नित्य २ जो आयु घटे है ताकूं नहीं जानें हैं ॥ ३७ ॥

थोरे जल के रहन वारे जंतु शरद के सूर्य की ताप कूं प्राप्त होत भये, जैसें अजितेन्द्रिय दीन दरिद्री कुटुंबी गृहन के तापन कूं प्राप्त होवें हैं ॥ ३८ ॥

शरद ऋतु में होलें २ कीच सूखन लगी, लतान की कचाई धीरें २ जायवे लगी, जैसें धीर पुरुष देह गेहादिकन में ते अहंता ममता कूं छोड देवें हैं ॥ ३९ ॥

शरद के आयवे पे समुद्र स्थिर जलवारो चुपको होय गयो, । जैसें आत्मज्ञान भये पैं मुनि पढिवे गुणवे की खट पट कूं छांडिके शांत होयजाय है ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

केदारेभ्यो बद्धसेतुप्रान्तक्षेत्रेभ्यो दृढैः सेतुभिरपोऽगृह्णन् ततः परं स्रवणाभावात् प्राणैरिन्द्रियैः तन्निरोधेनेन्द्रियप्रत्याहारेण ॥ ४१ ॥

देहाभिमानजं बोध इव व्रजयोषितां मुकुन्द इत्यर्थः ॥ ४२ ॥

शरदा विमलास्तारका यस्मिंस्तत् शब्दब्रह्मणो वेदस्यार्थान् पूर्वोत्तरमीमांसानिर्णीतान्दर्शयतीति तथा तद्वत् ॥ ४३ ॥ ४४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत्रैः सेतुभिः केदारेभ्यः स्रवन्तीरपः दृढैः सेतुभिरगृह्णन् अरक्षन् प्राणैरिन्द्रियैः क्षुभितैर्द्वारभूतैः छेदेभ्यः स्रवज् ज्ञानं प्रत्याहारेण यथा रक्षन्तीत्यर्थः ॥ ४१ ॥

शरदिति लुप्तोपमेयं व्यवहारिकाणां तादृशतापहरणे उडुपो विशिष्टः पारमार्थिकानां बोध आत्मज्ञानं तदकानुरक्तानां व्रजयोषितान्तु मुकुन्द एवेति तासां वैशिष्ट्यं बोधितम् आसां तापश्चानिर्वचनीयतविवक्षया प्रसिद्धत्वया चानुरक्तोऽपि त्रुटिर्युगायतमिव यासां येन विनाऽभवदित्यनुसारेण ज्ञेयः वक्ष्यते च आश्लिष्य इत्यादौ गोप्योऽपि कृष्णाहृतचेतस इति ॥ ४२ ॥

खमिति । खस्य स्थाने चित्तं ज्ञेयं निर्मेघतायाः सत्त्वयुक्तत्वेन मेघस्थानीयरजस्तमोनिषेधात् शरदः शब्दब्रह्म तारकाणां तदर्थाः तारकाशब्देन च चन्द्र एव मुख्यत्वेन गृह्यते नक्षत्राणां तदुक्तं "नक्षत्रेशः क्षपाकरः" इत्यादेः तत्र चन्द्रस्य भगवत्तत्त्वं अन्येषां त्वन्येऽर्था इति ॥ ४३ ॥

तथैवाह—अखण्डेति । चन्द्रस्य पूर्णिमापेक्षया श्रीकृष्णस्य च स्वयं भगवत्ताप्राकट्यापेक्षया तत्र यद्यपि वर्षास्वपि शशिनः स्तादृशस्य सोडुगणस्य अतो राजमानत्वमस्त्येव किन्तु घनाच्छन्नतया न दृश्यते शरदि तु तदभावात् दृश्यते तथा यदुपुर्यामप्राकट्यसमयानुसारेण योज्यं यदुपतिरित्यधिकाः यदुभिः सह तस्य नित्यसम्बन्धो ज्ञाप्यते वृष्णिशब्दनिर्देशस्तु यदुषु तेषां प्राधान्यापेक्षया ॥ ४४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राणैरिन्द्रियैः शब्दब्रह्म वेदः ॥ ४३—४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

केदारेभ्य इति पञ्चमी कृषीवलाः शालिक्षेत्रेभ्यः प्रवहन्तीरपः जलानि दृढैः सेतुभिर्बन्धनैररगृह्णन्निरुद्धवन्तस्ततःपरं वृष्ट्यभावादिति भावः । यथा योगिनः प्राणैरिन्द्रियैः तद्द्वारा स्रवत् बाह्यविषयग्रहणप्रवणीभवत् ज्ञानं धर्मभूतज्ञानं तन्निरोधेन प्राणनिरोधेन आत्मस्वरूपगोचरं कुर्वन्ति तद्वत् इन्द्रियनिरोधपरेणात्मस्वरूपपरिशीलनपरेण च भवितव्यमिति सूचितम् ॥ ४१ ॥

शरदिति । उडुपश्चन्द्रो भूतानां शरदि योऽर्कस्तस्यांशुभ्यो जातांस्तापान् जहार उत्तरार्द्धस्य यथेत्यादि यथा देहाभिमानेन जातं तापं परकृतनिन्दादिप्रयुक्तं देहयाथात्म्यगोचरो बोधो हरति यथा च व्रजयोषितां तापं मन्मथप्रयुक्तं मुकुन्दो जहार तद्वच्च 'देहाभिमानजं तापं' इति पाठे बोध इत्ति कर्तृपदमध्याहर्तव्यं यथोक्त एवार्थः अनेन हेयत्वज्ञानार्थं देहयाथात्म्यपरिशीलनमपि कर्त्तव्यमित्युक्तं भवति ॥ ४२ ॥

खमिति । निर्मेघं मेघरहितं शरदि विमलास्तारका यस्मिंस्तथाभूतं सत् खमशोभत यथा सत्त्वयुक्तं सत्त्वगुणयुक्तं सत्त्वप्रचुरमितियावत्तद्विषयं शब्दब्रह्मणो वेदस्य योऽर्थस्तत्स्वरूपस्तं पश्यतीति तथा नन्द्यादित्वात्कर्तरि ल्युः यद्वा शब्दब्रह्मार्थो लक्ष्यतेऽनेनेति तथा करणे ल्युट् सत्त्वप्रचुरं चेतो रागाद्यकलुषितं सन्निर्मलमतीन्द्रियवेदार्थप्रकाशकं भवति तद्वदित्यर्थः । सत्त्वप्राचुर्याय आहारशुद्ध्या भवितव्यमिति सूचितम् अत्र तारकास्थानीयाः वेदार्थाः परमात्मतदाराधनराधकादिस्वरूपात्मकाः आकाशस्थानीयं चेतः मेघस्थानीयं रजस्तमश्चेति विवेकः ॥ ४३ ॥

अखण्डमण्डलेति । शशी चन्द्रो व्योम्न्याकाशे निर्मेघेऽखण्डपूर्णमण्डलं यस्य तथाभूतो नक्षत्रसमूहैः सह रराज यथा यदुपतिः श्रीकृष्णो भुवि वृष्णीनां समूहेनावृतो रराज तद्वत् अनेन यदुपतेश्चन्द्रवत्सर्वलोकाह्लादकरत्वमभिप्रेतम् ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

केदारेभ्यः केदारार्थे प्राणैरिन्द्रियैः तेषामिन्द्रियाणां निरोधेन प्रत्याहारेण ॥ ४१ ॥

अहं देह इति देहाभिमानो देहविषयं ज्ञानं तस्माज्जातं देहाभिमानजं तापं बोध आत्मज्ञानं मुकुन्दो यथेति शेषः । दृष्टान्तद्वयम् ॥ ४२ ॥

खमाकाशं शरदा विमलानि विशदानि तारकाणि यस्मिंस्तथा सत्त्वेन व्यवसायेन युक्तं सत्त्वगुणोपेतं वा शब्दात्मकं ब्रह्म वेदस्तस्य मुख्यवाच्यः श्रीनारायणस्तं दर्शयतीति शब्दब्रह्मार्थदर्शनं शब्दब्रह्म हिरण्यगर्भः तस्यार्थो हेतुः कारणभूतो वा ॥ ४३ ॥

अखण्डमण्डलं पूर्णमण्डलम् ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काले प्राप्तसाद्गुण्यया प्रावसरे अन्यथा तदभावे केदारेभ्यः प्रवहन्तीरिति लिङ्गविपरिणामेन अत्र प्रणालीभिरिति शेषः सर्वादिस्वत्र चात्मन इति शेषः ॥ ४१ ॥

देहाभिमानजमिति शसः स्थाने अमादेशः व्रजयोषितामिति । सन्ध्यादिसमये दर्शनाविना विरहतापानिति ज्ञेयम् ॥ ४२—४५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जलभेदान्निरूपयति—केदारेभ्य इति । केदारा धान्योत्पत्तिक्षेत्राणि विभक्तानि तेभ्यो निस्सरन्तीरपः कर्षका अगृह्णन् गमनमार्गमुद्र्योन तदाह—दृढसेतुभिरिति । जलेन सर्वं मार्द्रमिति जलमार्गनिरोधार्थं दृढत्वमुक्तम् अस्यापि गुणस्य स्वाभाविकत्वपरिहाराय दृष्टान्तमाह—यथेति । शरदि वृष्टिर्दुर्लभेति जलार्थिनां तन्निरोध उचितः तथाप्यस्य फलसाधकत्वं साधनीयं जलाभावे सर्वैव कृषिर्व्यर्था भवेदिति रक्षायां दार्ष्टान्तमपि निरूपणीयं प्राणाद्यो वायवो यदा बहिर्निस्सरन्ति तदा ज्ञानसहिता एव निस्सरन्ति तथेन्द्रियाण्यपि ज्ञानक्रियाशक्तियुक्तो हि भगवान् ज्ञानक्रिययोर्गतयोरपगच्छतीव प्राकट्यं तु नियतमेव ज्ञानं हि प्रकटमुच्यते शास्त्रतो जातं "स्रवन्तीन्द्रियच्छिद्रैर्यन् ज्ञानं चैवावकीर्यते" इति वाक्यात् ज्ञानार्थमेव हि योगशास्त्रं प्रवृत्तम्—

"ऊर्ध्वेन्द्रियैस्तु विक्षेपो ज्ञानस्याधो विनाशनम् ।
निरोधे पुञ्जभावेन स्वकार्यं साधयेत् ध्रुवम्" ॥

प्राणेन्द्रियनिरोधेन स्रवदानमगृह्णन् तत्र योगमार्गो दृढसेतवः इति केदारेभ्यः इति चतुर्थी तुशब्दः अप्रदानेऽपि सिद्धिं व्यावर्तयति अतः साधनदशायां योगो नित्यः आसनप्राणायामादिस्थैर्ये ज्ञानं नावकीर्येत एव योगः शरदि सिद्ध्यतीति च शुद्धिद्वारा च हेतुः ॥ ४१ ॥

एवमाधिभौतिकीमाध्यात्मिकीं च जलस्य शुद्धिमुक्त्वाऽऽधिदैविकप्रकारेण शुद्धिमाह—शरदर्कांशुजानिति । शरत्कालीनो योऽर्कः सोऽत्यन्तं खरः तस्यांशवोऽपि तथा तज्जनितास्तापाः ज्वराद्युत्पादकत्वेनापि खराः अतः तापेषु बहुवचनं भूतानां जातानां चन्द्रो हि जलाधिपतिः जलप्रकृतिकः तदात्मिकानि च भूतानि अतस्तत्तापनिवारकत्वं तस्य युक्तम् उडुप इति नक्षत्रद्वाराऽपि तापहारकत्वमुक्तम् उभयत्रापि शरदो हेतुत्वं पूर्ववत् दृष्टान्तः यथा चन्द्रः आधिभौतिकं तापं हृतवान् एवं भगवानध्यात्मिकं तापं हृतवान् स तापो देहाभिमानरूपः स क्रमेण पुष्टिमार्गप्रवेशनात् हृतः देहादीनां भगवति विनियोगात् न केनांऽशेन तापः व्रजयोषितामिति तदा एता एव स्थिताः चन्द्रसमानतयात्र निवारणाद्द्राग्वेव देहाभिमानः स्त्रीत्वाभिमानः अज्ञानं कामस्तत्कृताश्च तापाः । ननु, आत्यादिधर्मनाशकत्वात् कथं तापनिवारकत्वम् ? तत्राह—मुकुन्द इति । मोक्षदानसमये पूर्वावस्था त्याजनीयैव अत उपयुक्त एव त्यागः अन्यथा शरदि ता मृता एव स्युः तत्र विद्यमाने भगवति मोक्षाभावश्च सर्वभावेन ता गृहीता इति नासां तापाभावः शरदो विभावकत्वादुपयोगः केदारदृष्टान्त एव वायोः शुद्धिः अर्कचन्द्रमसोर्निरूपणा एव तेजसः ॥ ४२ ॥

आकाशस्य शुद्धिपूर्वकं गुणमाह—खमशोभतेति । निर्मेघं खमशोभतेति शरदा कृत्वा विमलास्तारका यस्मिन्—

आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम् ।
जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः ॥ ४५ ॥
गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाऽभवन् ।
अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव ॥ ४६ ॥
उदहृष्यन् वारिजानि सूर्योत्थाने कुमुद्विना ।
राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप ! ॥ ४७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मासाष्टकं तथाऽऽकाशे तमस्तापैः कृतं रजः ।
मेघैरपोह्यते सम्यगतः शरदि निर्मला ॥
सर्वं नभो दिशश्चैव तारकाश्चन्द्र एव च ।

तदाह–शरद्विमलेति । मेघापगमो दोषाभावः आधिभौतिकः विमलताध्यात्मिकी तारका गुणाः आधिदैविकीयं शरदिति ज्ञापयितुं दृष्टान्तमाह–सत्त्वयुक्तमिति । सत्त्वगुणेन युक्तं चित्तं शब्दब्रह्मणो वेदस्य दर्शनं यत्र तादृशमशोभत चित्तस्य रजस्तमसी दो(ष पौ सत्त्वसम्बन्धेऽपगच्छ(ति)तः गुणास्तु सर्वपदार्थानां तत्त्वतो ज्ञानं ते च पदार्थाःश्रुत्येकसमधिगम्याः शुद्धेऽन्तःकरणे वेदभावनया स्फुरन्ति शुद्धिहेतुत्वात् शरदुपयोगः मेघाभावस्थानीयं सत्त्वं विमलस्थानीयं शब्दब्रह्म तदर्थज्ञानं तारकस्थानीयं एतद्भावरयां दोषः आकाशो बाह्य आभ्यन्तरश्च शुद्धो निरूपितः ॥ ४३ ॥

तत्र हृदये भगवच्छोभां वक्तुं प्रथमत आकाशे चन्द्रशोभामाह–महाभूतानन्तरं मनसः क्रमभावित्वात्, अखण्डमण्डलमिति । अखण्डं मण्डलं यस्य तादृशः पौर्णमासश्चन्द्रः भगवदीयो वा उडुगणैः सह रराज भगवदीयरूपावृत्त्यर्थं शशी निरूपितः सोऽपि चन्द्रः गोपिकादिभिर्दृश्यमान एव तथा अग्रे वा तस्य प्राकट्यं यथा हृदये यदुभिः सह यदुपतिः श्रीकृष्णः भुवि अखण्डमण्डलो राजते यद्यपि यदुपतिः सर्वत्रैव राजते कृष्ण एवावतारान्तरेष्वपि तथापि वृष्णिचक्रेणावृतोऽवतीर्णः साक्षाद्भगवानेव शोभते ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

केदारेभ्यः स्रवन्तीरपः दृढैः सेतुभिरगृह्णन् ररक्षुः यथा प्राणैरिन्द्रियैरिन्द्रियक्षोभैः स्रवद् ज्ञानं तेषामिन्द्रियाणां निरोधेन प्रत्याहारेणेत्युपादेया ॥ ४१ ॥

यथा देहाभिमानजं तापं बोधः यथा च व्रजयोषितां विरहतापं मुकुन्द इत्युपादेया ॥ ४२ ॥

शब्दब्रह्मणो वेदस्य अर्थाः निवृत्तकर्मज्ञानभक्तियोगास्तेषां दर्शनं ज्ञानं यत्र तच्चित्तं कीदृशं सत्त्वयुक्तं साधुत्वयुक्तं तत्र खस्य चित्तेन साम्यं निर्मेघत्वस्य सत्त्वयुक्तत्वेन शब्दब्रह्मणा शरदः निवृत्तकर्मज्ञानतपोयोगैस्ताराणां भक्तियोगेन तारापदगम्यस्य तारकेश्वस्येतीयमुपादेया ॥ ४३ ॥

सम्पूर्णमण्डलत्वस्य खयं भगवत्त्वेन साम्यं यदुपतित्वेन ओषधीश्वरत्वस्य वृष्णिचक्रैः नन्दोपनन्दवसुदेवाक्रूरादिभिः दृश्यानामुडुगणानामितीयं व्यानार्थमुपादेया ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

केदारेभ्य इति । तादर्थ्ये चतुर्थी तत् सिञ्चनार्थमित्यर्थः । अगृह्णन् निरुद्धवन्तः प्राणैरिन्द्रियैः विषयोन्मुखैः स्रवत् ज्ञानं तन्निरोधेर्नान्द्रियप्रत्याहारेण गृह्णन्ति ॥ ४१ ॥ ४२ ॥

यथा शब्दब्रह्मार्थं "सर्वे वेदा यत्पदमामनन्ति" वेदैश्च सर्वैरहमेव वेद्यः"इति श्रुतिस्मृतिप्रोक्तं वेदैकवेद्यं श्रीकृष्णं दर्शयतीति सत्त्वयुक्तं शोभते तथा शरदा विमला तारका यस्मिन् तत् खमशोभत ॥ ४३ ॥ ४४ ॥

---

भाषा टीका ।

शरद ऋतु में खेत वारे किसान खेतन की जवर २ मेड़न को बांधिकें जलकूं रोकत भये जैसे इन्द्रियन के द्वारा निकसवे वारे ज्ञानकों योगी जन इन्द्रियन को निरोध करिं रोक राखें है ॥ ४१ ॥

शरद में दिनमें सूर्य की किरणनसों जो ताप होय है ताकूं रात में चन्द्रमा हर लेय है। जैसें ज्ञान भयं पै देहाभिमान सों भयो जो ताप सो दूर होय जाय है, और जैसें व्रजकी स्त्रीन के तापको मुकुन्द भगवान् दूर करें हैं। ४२।

शरद काल में विना मेघन को आकाश निर्मल तारागणन के उदय होयवे तें शोभा पावत भयो, जैसे सत्त्वगुण युक्त जो चित्त है, सो वेद के अर्थ को दिखायवे वारो होयकें शोभा पावे है ॥ ४३ ॥

शरद में सम्पूर्ण मण्डल वारो चन्द्रमा आकाश में तारागणन सहित शोभापावत भयो, जैसे पृथिवीमें यादवपति श्रीकृष्णचन्द्रमा यादवन के मण्डल सहित शोभा पावे हैं ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

समोऽन्यूनाधिकः शीतश्चोष्णश्च तं ननु गोप्यः कृष्णापहृतचेतस्त्वेन तासां सन्तापो दुःसह इति यद्वा नकार उभयतः तदा कृष्णहृतचेतस इति चेतसा कृष्णमाश्लिष्य यथेत्यर्थः॥ ४५ ॥

पुरग्रामेष्वाग्रयणैरैन्द्रियैश्च महोत्सवैः।
बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः ॥ ४८ ॥
वणिङ्मुनिनृपस्नाता निर्गम्यार्थान् प्रपेदिरे।
वर्षरुद्धा यथा सिद्धाः स्वपिण्डान् काल आगते ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
दशमस्कन्धे वृन्दावनक्रीडायां प्रावृट्शरद्वर्णनं नाम
विंशतितमोऽध्यायः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुष्पिण्यो गर्भिण्यः अन्वीयमानाः स्ववृषैः स्वपतिभि-रतिक्रान्त्योऽपि वत्सान्ननुगम्यमानाः ईश्वराराधनार्थाः क्रियाः यथा फलैरनुगम्यमानाः समस्तभोगगर्भा यथेति ॥ ४६ ॥

कुमुत्कुमुदम् कुत्सिता मुदस्येति दस्युसाम्यम् ॥ ४७ ॥

आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैर्यागैरैन्द्रियैरिन्द्रियार्थैर्लौकिकैश्च महोत्सवैः कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्याम् ॥ ४८ ॥

वणिजो यतयो नृपाः स्नातकाश्च दृष्टादृष्टाभ्यां वर्षरुद्धाः सन्तो निर्गम्यार्थान्वाणिज्यं स्वाच्छन्द्यादिग्विजयविद्यादीन् प्रपेदिरे प्रापद्यन्त यथा मन्त्रयोगादिसिद्धाः आयुषा रुद्धाः काले आगते स्वपिण्डान्योगादिप्राप्यान्देवादिदेहानिति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
विंशतितमोऽध्यायः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु गोप्य इति विशेषोक्तिस्तत्र हेतुमाह—कृष्णेति। ततस्तेनोद्दीपनात् प्रत्युताधिकं तापं प्रापुरित्यर्थः। हृधातुप्रयोगस्तमेव स्पष्टीकृतवान् योगिनां मनसि प्रविश्य सम्पदं कल्पितुं आसान्तु मनो हृत्वा विपदे कल्पितुं युक्त एवेति भावः। मुकुन्दो व्रजयोषितामिति तासामुत्तरावस्था दृष्टान्तिता अनेन तु पूर्वावस्थेति ॥ ४५ ॥

मृगाः खगा इत्यार्षे मृग्यः खग्यः अन्वयैः। यद्वा, पुष्पम् ऋतुकारी धातुविशेषस्तद्वत्यः सत्यः स्ववृषैः प्रसवविशेषसम्पादकस्वस्वपुंभिः प्रार्थनां विनाप्यन्वीयमाना बभूवुः फलैः फलविशेषसम्पादकैरपूर्वैरपूर्वैः ॥ ४६ ॥

वारिजशब्देनात्र वार्युद्भवपुष्पमात्रं गृह्यते न तु कमलमेव कुमुदनिषेधानुपपत्तेर्लौकिकशब्दवत् सामान्यमेव ग्राह्यमिति कुमुदानां रात्रिविकासित्वाद्दस्युसाम्यं राज्ञा तस्योत्थाने सिंहासनप्रथमारोहे उद्यमे वा लुप्तोपमेयं यथा दस्यूनिति वा पाठः तेषेति दृष्टान्तस्यापि दृष्टान्तसूचना ॥ ४७ ॥

पुरेषु श्रीमथुरादिषु ग्रामेष्विव ग्रामेषु श्रीनन्दावासादिषु आग्रयणैरिति "नवान्नं नैव नन्दायां नच सुप्ते जनार्दने। न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" इत्यनुसारेण वृश्चिके प्रबोधिन्यनन्तरमेव इदं ज्ञेयं शरदन्तरस्यास्तु शरद्व्यवहारः ऐन्द्रियैश्च महोत्सवैरिति "इन्द्रमिन्द्रियकामस्तु" इत्युक्तत्वात् इन्द्रपूजामयैरित्यर्थः। कार्त्तिकमध्ये हि तत्पूजा व्रजादौ पूर्वमासीत् तां खण्डयित्वैव श्रीभगवता गोवर्द्धनपूजा प्रवर्त्तितेति इन्द्रपूजायास्तस्या लोकपरम्पराप्राप्तत्वञ्च श्रीव्रजराजेन मंस्यते कीदृशी भूर्हरेः कला शक्तिः आभ्यां रामकृष्णाभ्याम् ॥ ४८ ॥

वर्षशब्दः कालस्यापि वाचीति आयुरिति व्याख्या ततश्च जीवनार्थपरिमितैर्वत्सरैरुद्धा इत्यर्थः स्नातकानामर्थास्तीर्थाटनादिरूपाः सिद्धाः भक्त्यादिसिद्धाः स्वपिण्डान् प्राप्तव्यपार्षददेहान् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

पुष्पिण्यः शोभायुक्ताः ऋतुयुक्ताश्च ॥ ४६—४७ ॥
हरेः कलाभ्यां नितरां सुखिनाः ॥ ४८ ॥
यथा सिद्धाः स्वपिण्डान् काल आगते यथा तपःसिद्धाः अस्माल्लोकान्निर्गत्य फलकाले स्वपिण्डान् भोग्यजातं प्रतिपद्यन्ते तद्वत् ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
विंशतितमोऽध्यायः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

आश्लिष्येति। जनाः समं मितं शीतम् उष्णञ्च यस्य तं प्रकृष्टानि सूनानि कुसुमानि यस्य तस्य वनस्य मारुतमाश्लिष्य अनुमाद्य तापं जहुः श्रीष्मर्तुप्रयुक्तं दुःखं जहुरित्यर्थः। गोप्यस्तु तापं मन्मथतापं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न जहुः तत्र हेतुं वदन् विशिनष्टि कृष्णेन हृतानि चेतांसि यासां तथाभूताः अनेन कृष्णस्य यौवनावस्था गोपीचित्तसमाकृष्टिश्च सूचिता ॥ ४५ ॥

गाव इति । गवादयः स्ववृषैः स्वस्वप्रियैरन्वीयमानाः शरदा निमित्तभूतया पुष्पिण्यो गर्भिण्यो बभूवुः यथा ईश्वराराधकात्मिकाः क्रियाः स्वसाध्यैः फलैः धर्मादिपुरुषार्थैरन्वीयमानाः समस्तभोगगर्भा भवन्ति तद्वत् अनेनेश्वराराधक्रियायाः फलाविनाभावित्वमुक्तम् ॥ ४६ ॥

उदहृष्यन्निति । कुमुदमितिजात्यभिप्रायमेकवचनं कुमुदान्युत्पलानि विना सर्वाणि वारिजानि सूर्येणोदहृष्यन् विकासेन हृष्टा इव लक्षिता बभूवुः यथा हे नृप दस्यूंश्चोरव्याघ्रादीन् वीना इतरे सर्वे जनाः राज्ञा हेतुना निर्भया हृष्यन्ति तद्वत् अनेन राज्ञा दस्यूनुद्वेजयता भवितव्यमित्युक्तम् ॥ ४७ ॥

पुरग्रामेष्विति । पुरेषु ग्रामेषु चाग्रयणैर्नूतनव्रीह्यादिभिर्भक्षणाभ्यनुज्ञार्थैराग्रयणाख्ययागरूपैरैन्द्रियैरिन्द्रियप्रीत्यर्थैरन्यैश्च महद्भिरुत्सवैः सर्वसस्याढ्या भूर्यभौ हरेः कलाभ्यां रामकृष्णाभ्यां तु नितरां बभौ छत्रिन्यायेन कलाभ्यामित्युक्तिः ॥ ४८ ॥

वणिगित्यादि वणिगादयस्तावद्वर्षेण रुद्धाः शरदि निर्गम्यार्थान् प्रयोजनानि प्रपेदिरे तत्र वणिजः क्रयविक्रयादिव्यापारिणः मुनयः संन्यासिनः नृपाः जयिनः स्नानान्तीर्थयात्रापराः एते वाणिज्यस्वच्छन्दचारविजयतीर्थस्नानादिरूपानर्थान् प्रपेदिरे इत्यर्थः । यद्वा सिद्धाः तपःसिद्धाः फलकाले आगते सत्यस्मात् लोकान्निर्गत्य स्वपिण्डान् स्वस्य तपस्साध्यभोग्यजातं प्रतिपद्यन्ते तद्वत् अनेन तपसःफलाविनाभावित्वमुक्तम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मारुतं शारदमिति शेषः । अर्कजनितं तापं गोप्यः कामार्कजनितं तापं न जहुः तत्र निमित्तं कृष्णाहृतचेतसः कृष्णेनाहृतं चेतो यासां तास्तथा ॥ ४५ ॥

पुष्पिण्यः गर्भिण्यः ऋषभैरिति पाठः वृषभैरिति पाठे मातृसहोदरीविवेकज्ञानशून्यत्वात्तथोक्तमित्यर्थः । फलैर्बीजैरन्वीयमानाः उप्यमानाः ईषत् क्रियाः शनैः क्रियमाणाः कृषिक्रिया इव फलैः स्वर्गादिलक्षणैः अनुगता ईशक्रिया ऊनातिरेकपरिहारार्थाः विलम्बमानयागक्रिया इव लाभनिष्पत्तिभोगेषु बीजे फलधर्म फल इति वा ॥ ४६—४७ ॥

इन्द्रयागमहोत्सवैः इन्द्रदेवत्याग्रायणेष्टिलक्षणोत्सवैः हरेः कलाभ्यां नितरां बभौ भाभमिणां आश्रवतां गृहस्थमात्राणां वा ॥ ४८ ॥

प्रावृषि वर्षेण रुद्धाः शरदि स्वीयात्नगरात्पत्तनान्निर्गत्यार्थान् देयादेयविषयान् प्रपेदिरे वर्षेणाब्देन तल्लक्षितकालेनेत्यर्थः । रुद्धाः साधनसामग्रीसम्पत्तिपर्यन्तकालेन प्रतिबद्धाः सिद्धाः मन्त्रौषधतपस्संपन्नाः पुरुषाः काले फलदानाभिमुखत्वे आगते आसन्ने स्वीयान्नगरात्स्वत्वेनाभिमताद्देहान्निर्गत्य स्वांपदान् निजफलानुभावयोग्यान् देहान् यथा प्रपद्यन्त इत्यन्वयः "वर्षो स्त्री भारताद्यंशवृष्टिषु प्रावृषि स्त्रियाम्" इति यादवः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
विंशोऽध्यायः ॥ २० ॥
( विजयध्वजरीत्या अष्टादशोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मृगाः मृग्यः खगाः खग्यः पुष्पिण्यः ऋतुमत्यः ताः स्ववृषैरवश्यमन्वीयमाना अभवन् फलैरीशक्रिया इव ॥ ४६ ॥ ४७ ॥

हरेः कला पृथ्वी आभ्यां रामकृष्णाभ्याम् ॥ ४८ ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
विंशोऽध्यायः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शरदो मासान्तरकृत्यमाह—आश्लिष्येति । समं शीतमुष्णं च यत्र प्रसूनयुक्ते वने मारुतो यस्य तादृशं शीतोष्णं भावमाश्रित्य तापं जहुः वनमारुतं वा समत्वान्मान्द्यमपि प्रसूनसम्बन्धात् सौगन्ध्यम् एवं सर्वगुणयुक्तमपि वायुमाश्लिष्य जनास्तापं जहुः अस्य सहजत्वाभावाच्च दृष्टान्तः परं हीनतामाह—गोप्यो नेति, तत्र हेतुः कृष्णाहृतचेतस इति कृष्णेनैव हृतं चित्तं यासां चित्ते हि सुखं भवति तत्कृष्णसम्बन्ध एव देहे तिष्ठति आश्लेषोपि न कृत: सामान्यनिषेधात् कृष्णाश्लेषोऽप्यनेनैव निषिद्धः हरणशब्दाच्च ॥ ४५ ॥

अत आध्यात्मिकीयं शरत् सुखदायिनी वृत्ता आधिदैविकीं तु वक्ष्यति आध्यात्मिक्याः प्रसङ्गादुपयोगान्तरमप्याह—गाव इति । गर्भाधानकालोऽयं वर्षाभिर्बीजोत्पत्तिः गावो मृगाः खगाः तासां सादिभेदाः स्त्रिय एव नार्यः स्त्रियोऽपि स्पष्टार्थं वा ता एव शरदा कृत्वा पुष्पिण्यः अन्तःप्रविष्टा शरत् रजोविकासं कृतवती तासां ऋतुकालो जात इत्यर्थः । व्यञ्जकं तु नारीणामेव नैमित्तिकं स्ववृषैः स्वपतिभिः अन्वीयमानाः फलैरप्यन्वीयमाना अभवन्निति योजना फलस्यामोघत्व प्रतिपादनाय दृष्टान्तमाह, ईशसम्बन्धिन्यः क्रियाः ईशसंयोगात् फलयुक्ता अपि भवन्ति ईशः पतिस्थानीयः ता क्रियाः फलैरन्विताः फलमभिलषितं सहजं वा दृष्टान्तस्याभिलाषितसिद्ध्यर्थः भगवत्सम्बन्धात् शरद एते गुणाः॥ ४६ ॥

जङ्गमानामुक्त्वा स्थावराणामाह—उदहृष्यन्निति । सूर्येणोदहृष्यन् कमलान्युदहृष्यन् कुमुत् कुमुदं तु विना चन्द्रमसा कालेन उदहृष्यत् कुमुदं वा सुप्लोपः अनेन सात्त्विकाः सात्त्विकाधिपतावुद्दहृष्यन्निति सुखं नन्वेवं सात्त्विकस्य सर्वसुखदातृत्वेपि न सात्त्विकव्यतिरिक्तानां सुखं यतस्तेषां कुत्सिता मुत् केवलभौतिकव्यावृत्त्यर्थं दृष्टान्तमाह—मुजासर्वं एव लोका निर्भयाः ननु दस्यवः ते कुमुदाः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नृपेति संबोधनं तत्सम्पत्त्यर्थं लोका भुक्तान्यपि शरदि चौर्याभावश्च सूचितः ॥ ४७ ॥

एवं लौकिकं सर्वमुक्त्वा वैदिकमाह–पुरग्रामेष्विति। पुराणि नागरिकाणि ग्रामा राजसाः आग्रयणानि श्रौतानि इन्द्रसम्बन्धीनि स्मार्त्तानि महोत्सवाः लौकिकाः चकारात् कुलधर्माश्च पुरग्रामेष्विति बहुवचनात् त्रिविधा अपि गृहीताः सर्वैः कृत्वा भूरेव बभौ तस्या आधिभौतिकीं शोभामाह—पक्वसस्याढ्येति पक्वैः सस्यैराढ्या आधिदैविकीमाह, कलाभ्यामिति। रामकृष्णाभ्यां सङ्कर्षणकृष्णाभ्यां भारहरणार्थं हि तावेवागतौ विशेषमप्याह नितरां हरेरिति हरेः सम्बन्धिनी भूः नितरां बभौ पदैरनुभावैः लीलाभिश्च भस्मन्याकर्षे भूप्रस्तावाद्दन्पदाघत्वा एव दुःखहर्त्तोच्यते स च पुरुषोत्तम एव भारहरणद्वारा सङ्कर्षणो ऽपीति नरकलारूपत्वं च केशयोरिति भूमेर्वा दुःखहर्त्तुः केशाभ्यां नितरामित्यन्तःकरणसन्तोषात् चिदानन्दाभ्यां वा सत् सिद्धेव ॥ ४८ ॥

उपसंहारार्थं शरदः सर्वसाधकत्वमाह–वणिगिति। वणिक् मुनिनृपाः वैश्यब्राह्मणक्षत्रियश्रेष्ठाः ते निर्गत्य परग्रामदेशान् प्राप्तवन्तस्तद्ग्राह्यार्थान् प्रपेदिरे अर्थशब्दो इह लोके प्रसिद्धो वक्तव्यः ततो वैदिकः ततः स्मार्त्त इति अर्थं ततःप्रधानं ततः सत्त्वं ततो रजः अनेन स्थितानां न सिद्धिरुक्ता लौकिकोपकारी वैदिकोपकारी च उपकार्थं पूर्वमुक्तौ स्नाताः स्नानकाले हि तीर्थवासिनः ते यथाभिलषितान् धर्मार्थकामान् प्रपेदिरे प्रत्येकसमुदायाभ्यां वा धर्मार्थकामा उक्ताः अत्रापि पूर्ववत् दृष्टान्तमाह, वर्षरुद्धा इति वर्षैर्वृष्टिभिरेव रुद्धा निरुद्धाः सिद्धाः पश्चात्प्राप्तफलाः स्वपिण्डान् पूर्वस्थितानेव काले आगते प्रपेदिरे योगादिना बहुकालं स्वनिरोधं कृत्वा ततः सिद्धाः सन्तः तत्फलमनुभूय पुनः काले प्रलये समागते मोक्षसाधकत्वात् पुनस्तानेव देहान् गृह्णन्ति स्वपिण्डान् फलरूपान्वा कालः फलकालः पूर्वकालस्य साधकत्वमस्य फलत्वमिति आधिभौतिकाध्यात्मिकभेदेन निरूपितं कालप्राधान्यार्थमागत इति एवं सलीला शरद्वर्णिता ॥ ४९ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
सप्तदशाध्यायविवरणम् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

समः अन्यूनाधिकः शीतश्चोष्णश्च तं न तु गोप्यस्तापं प्रदुर्यतः कृष्णाहृतचेतसो विरहिण्यः प्रत्युत तं मारुतमाश्लिष्य तापं प्रापुरिति भावः। अत्र प्रक्रमभङ्गाभावार्थं केचिदेवं व्याचक्षते गोप्य इत्यनन्तरं कृष्णामिवेति शेषो देयः कीदृश्यः न कृष्णाहृतानि अपि तु हृतानि एव चेतांसि यासां ताः शिरकालेन जनैकर्कीर्तिनैकयशा इतिवत् लोपाभावः चेतश्चौराभावाद्गलास्खलच्चेत आदावृमिव तमाश्लिष्यन्त्योपि तास्तत्र प्रापुरिति भावः ॥ ४५ ॥

मृगा मृग्यः खगा खग्यः स्वदृष्टैः स्वस्वपतीनामनुगम्यमानाः अनिच्छन्त्योपि सम्भोगार्थमनुगम्यमानाः ईशक्रिया भगवदाराधनलक्षणाः क्रिया निष्कामा अपि फलैः सुखभोगादिभिः ॥ ४६ ॥

कुमुत् कुमुदं कुन्तिसतेषु मृत यस्येति दस्युसाम्यम् ॥ ४७ ॥

आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैः—

"नवान्नं नैव नन्दायां नच सुप्ते जनार्दने।
न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" ॥ इति स्मृतेः।

प्रबोधिन्यन्ते वृश्चिके इति ज्ञेयं शारदं तत्त्वात्तु शरदव्यवहारः इन्द्रियैरिन्द्रदेवताकैः इन्द्रमखमङ्गलात् पूर्वस्याः शरदो वर्णनमिदं कीदृशी भूः हरेः कलाशक्तिः आभ्यां रामकृष्णाभ्यां यद्वा हरेश्चन्द्रस्य कलाभ्यां शुक्लद्वितीयासायमुदिताभ्यामुत्सवै राजकीयपुरुषप्रभृतिकृतैर्यथा सैव भूरिति व्याख्या यथेति पदस्य शेषत्वे प्रक्रमभङ्गाभावार्थमुपादेया "हरिश्चन्द्रार्धनाताश्वशुकभेकयमाहिषु,, इति मेदिनी ॥ ४८ ॥

वणिजो यतयो नृपाः स्नातकाश्च ये वर्षेण वृष्ट्या रुद्धा आसंस्ते वर्षान्ते निष्क्रम्य अर्थान् वाणिज्यलाभराज्यादिग्विजयविद्यादीन् प्रपेदिरे प्रपद्यन्त यथा सिद्धाः वर्षैः स्वायुर्घटकैर्वत्सरैरुद्धाः काले अन्तसमये आयाते स्वपिण्डान् पार्षदादिदेहान् इयमुपादेया ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
विंशोऽध्यायोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥२०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

समे तुल्ये गुणाभूते शीतोष्णौ यस्य तमाश्लिष्य जनास्तापं जहुः गोप्यस्तु तमाश्लिष्यापि न जहुः तत्र हेतुगर्भं विशेषणं कृष्णाहृतचेतस इति तासां तापापनोदकः श्रीकृष्ण एवेति फलितोर्थः ॥ ४५ ॥

शरदा निमित्तभूतया स्ववृषैः स्वपतिभिरन्वीयमानाः पुष्पिण्यो गर्भिण्यः अभवन् बभूवुः यथा ईश्वराराधनार्थाः क्रियाः फलैरनुगम्यमानाः समस्तभोगगर्भा भवन्ति तद्वत् ईश्वराराधनार्थं कर्म कदाचिदपि निष्फलं न भवतीति भावः ॥ ४६ ॥ ४७ ॥

आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैः ऐन्द्रियैरिन्द्रियप्रीत्यर्थैर्लौकिकैश्च महोत्सवैः हरेः कला भूः बभौ आभ्यां रामशाधवाभ्यां तु नितरां बभौ यद्वा हरेः कलाभ्यां सोमसूर्याभ्यां यद्वा छत्रिणो यान्तीति वत् हरेः कलाभ्यां राममाधवाभ्यां हरिणा माधवेन तत्कलया रामेणेत्यर्थः ॥ ४८ ॥

वणिगादयो वर्षेण रुद्धाः शरदि निर्गत्य अर्थान् वाणिज्यलाभराज्यादिग्विजयवधादीन् प्रपेदिरे आपद्यन्त यथा सिद्धाः मन्त्रजपादिसिद्धाः प्रारब्धकर्मणा रुद्धाः काले आगते स्वपिण्डान् स्वकीयमन्त्रजपादिसाध्यान् भुक्तिमुक्तिरूपाणि फलानि प्रतिपद्यन्ते तद्वत् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
विंशोऽध्यायः ॥ २० ॥

---

भाषा टीका ।

शरद में सीरो नता तो ऐसे पुष्पितवन के पवन के को सेवन करकें समस्त जब तापकों छोडत भये, परन्तु कृष्ण ने चुरायो चित्त जिनको ऐसी गोपी तापकूं त्याग करत भई ॥ ४५ ॥

शरद ऋतु में गऊ हरिणी पक्षिणी स्त्री, पुष्पवती होत भई, इनके पति इनके पीछें लगे डोलत भये, जैसे, ईश्वर के अर्थ जो कर्म करो जाय ताके पीछें फूल लगे डोले हैं ॥ ४६ ॥

हे राजन् ! शरद काल में सूर्य के उदय होयवेतें कुमोदिनी के विना सरोवरनमें कमल खिलत भये, जैसे सावधान राजन सों चोरन के विना और सब प्रजा निर्भय होयके प्रफुल्लित होवे हैं ॥ ४७ ॥

शरदकाल में पुरन में ग्रामनमें वैदिक और लौकिक उत्सवनसों पकी भई खेतीसों सपन्न जो पृथिवी है सो बड़ी शोभाकूं प्राप्त होत भई ॥ और श्रीहरि के अवतार रूप श्रीकृष्णचन्द्र और बलदेवजी सों तो अत्यन्त ही शोभा पावत भई ॥ ४८ ॥

वणिक् लोग, मुनि जन, राजा लोग, ये सब वर्षा ऋतु में रुके भये बैठे हे । जब शरद ऋतु आई तब बाहर निकरिके अपने २ प्रयोजन कों प्राप्त होत भये, जैसे सिद्ध लोग समय पै भौतिकदेह कों छोडकें दिव्य देह कों पायके भोगन कों भोगें हैं ॥ ४९ ॥

इति श्रीमद्भागवत दशमस्कन्ध में बीसवें अध्याय की,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषाटीका समाप्ता ॥ २० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे विंशोऽध्यायः ॥ २० ॥



## ॥ एकविंशोऽध्यायः ॥

श्रीशुक उवाच ।

इत्थं शरत्स्वच्छजलं पद्माकरसुगन्धिना ।
न्यविशद्वायुना वातं सगोगोपालकोऽच्युतः ॥ १ ॥
कुसुमितवनराजिशुष्मिभृङ्गद्विजकुलघुष्टसरःसरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन् गाः सह पशुपालबलश्चुकूज वेणुम् ॥ २ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकविंशे शरद्रम्यवृन्दावनगते हरौ ।
तद्वेणुस्वनमाकर्ण्य गोपीभिर्गीतमीर्यते ॥

इत्थमेवम्भूतं वनं तदेवाह—शरदा स्वच्छानि जलानि यस्मिंस्तत् वायुना वातमनुगतं तदेकव्याप्तमित्यर्थः ॥ १ ॥

ततश्च कुसुमितवनराजिषु शुष्मिणो मत्ता भृङ्गा द्विजाः खगाश्च तेषां कुलानि तैर्घुष्टाः सरांसि सरितो महीध्राश्च यस्मिंस्तद्वनं कृष्णो ऽवगाह्य प्रविश्य वेणुमवादयत् ॥ २ ॥

### श्रीमत्सनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

एवं शरदं वर्णयित्वा वर्णावत्तत्र श्रीभगवत्क्रीडाविशेषमाह—इत्थमित्यादिना यावत् समाप्ति। तत्र तदुपकरणत्वेनादौ मनोहरजलवायुसमाश्रयत्वेन स्वतश्च मनो हरतया वनमनुवदति सार्द्धेन तत्र जलस्य मनोहरत्वं स्वच्छत्वेन स्पष्टमेव निर्मलत्वेनैव सहजगुणाभिव्यक्तेः वायोश्च पद्मानामाकरः प्रस्फुटत् पद्ममयः सरोवरादिः तेन सुगन्धिनेति शैत्येन सौरभ्येन च वातमिति च मान्द्येन वनस्य च ॥ १ ॥

कुसुमितेति । इदंच सर्वं कामोद्दीपनत्वेनोक्तं वनं न्यविशदिति प्रविश्यासीदिति पूर्ववदेव नित्यमीदृशी क्रीडा ज्ञेया एवं चुकूजेति अन्ववर्णयन्नित्यादिकमग्रेप्यूह्यं सगोगोपालको मधुपतिरित्यन्वयः। यद्वा, इत् प्राप्तवर्णनीयरूपलीलादिना भावविशेषाविर्भावतो विशेष्यस्यानुच्चारणादुच्चारणाशक्तेर्वा श्रीकृष्ण इति। वाक्यशेषो ज्ञेयः एवमग्रे बर्हापीडमित्यादावपि अच्युत इति पाठः श्रीचित्सुखस्यैव सम्मतः माधवो यादवास्तेषां पतिरीश्वर इति गोचारणाद्यसम्भवेपि गोचारणादिना भक्तवात्सल्यादिरसविशेषमभिप्रैति मधुमादकरसविशेषस्तस्य स्वामीति श्लेषेण तदानीं समदत्वं मादकत्वं च सूचितम् अवगाह्य अन्तःप्रविश्येति वनस्य सर्वतः प्रवेशेन तत्रत्यानां स्वनितं पशुपालैर्बलेन च सहित इति तेऽपि सर्वे वेणुं वादयामासुरित्यर्थः। यद्वा सहपशुपालबलो गाश्चारयन्नित्यन्वयः ॥ २ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं शरदं वर्णयित्वा वर्णावत् तत्र श्रीभगवत्क्रीडाविशेषमाह—इत्थमित्यादिना यावत्समाप्ति । तत्र तदुपकरणत्वेनादौ मनोहरजलवायुसमाश्रयत्वेन स्वतश्च मनोहरतया वनमनुवदति सार्द्धेन । तत्रेत्थमिति यथाऽहं वर्णितवान् प्रायस्तथा वर्णनप्रकारेणेत्यर्थः। सगोगोपालको मधुपतिरित्यन्वयः। यद्वा, इत्प्राप्तवर्णनीयरूपलीलादिना भावविशेषाविर्भावतो विशेष्यस्यानुच्चारणादुच्चारणाशक्तेर्वा श्रीकृष्ण इति वाक्यशेषो ज्ञेयः एवमग्रे बर्हापीडमित्यादावपि अच्युत इति पाठः चित्सुखस्य सम्मतः अत्र तु वनमिति शेषः ॥ १ ॥

यादवस्याङ्गोपाश्च मधवः तेषां पतिरिति क्रीडायां सामग्र्यं विवक्षितं श्लेषेण मधोर्ऋतुराजस्यापि पतिरिति तत्प्रवेशे सर्वापि वनशोभासमाधिक्येन दर्शिता अवगाह्य अन्तः प्रविश्येति वनस्य सर्वतः प्रवेशेन तत्रत्यानां ध्वनितं सहपशुपालबल इत्यस्य गाश्चारयन्नित्यनेनैवान्वयो योग्यः नतु चुकूज वेणुमित्यनेन च "तद्व्रजस्त्रिय आश्रुत्य" इत्युत्तरवाक्ये पूर्वत्रैव सामञ्जस्यप्रतिपत्तेः चुकूजेत्यन्तर्भूतण्यर्थः ॥ २ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वायुना वातं " वातेर्गतिगन्धनयोः " व्याप्तं वनमिति शेषः ॥ १ ॥

शुष्मिभृङ्गा मत्तभ्रमराः ॥ २—४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं शरदमनुवर्ण्याथ तदा वृन्दावने क्रीडतो वेणुं क्वणयतो भगवतो गोपीचित्तापहारिणः कांश्चिद्विहारान् स्ववेणुगीतान् गोपीभिर्मिथोऽनुवर्णितानाहैकविंशेन—इत्थमिति । इत्थमेवम्भूतं शारदगुणसम्पन्नं वनमिति विशेष्यमध्याहर्त्तव्यम् इत्थमित्यनेनाभिप्रेतं प्रकाशयन्विशिनष्टि–शरदा स्वच्छानि जलानि

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यस्मिन् पद्माकरैः शोभनो गन्धो यस्य तेन वातेन वातं व्याप्तं वनं गोभिर्गोपालैश्च सहितोऽच्युतो न्यविशत् ॥ १ ॥

ततश्च कुसुमितवनराजिषु शुष्मिणां मत्तानां भृङ्गाणां द्विजानां पक्षिणां च कुलैः घुष्टाः शब्दिताः सरांसि सरितः महीध्राः पर्वताश्च यस्मिन् तद्वनं विगाह्य प्रविश्य यदुपतिः कृष्णः पशुपालैः बलदेवेन च सहितः गाश्चारयन् वेणुं चुकूज अवादयत् ॥ २ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वयोग्यतानुसारेण हरौ ज्ञानसाधनं भक्तिः कर्तव्येत्यभिप्रेत्यास्मिन्नध्याये, तत्र गोपस्त्रीणां कृष्णे स्नेहातिशयस्वकुमुपक्रमते—इत्थं शरत् स्वच्छजलमित्यादिना । पद्माकराणां सुगन्धोऽस्यास्तीति पद्माकरसुगन्धी तेन वायुना वीतस्पारिवृतम् इत्युक्तविधिना शरदा स्वच्छं निर्मलजलं यस्मिंस्तत्तथा अनेन वायोः शैत्यं सूचितं न्यविशत् वनमितिशेषः "नेर्विशः" (१।३।१७) इति सूत्रेण लौकिकस्यात्मनेपद विधानं नतु छान्दसस्य अच्युत इत्यनेन वनक्रीडाद्यभावेपि सुखच्युतिर्नास्तीतिसूचयति ॥ १ ॥

अत्र वनशब्देन वृक्षसमुच्चय उच्यते कुसुमिताः पुष्पितोपेताः वनराजयः वृक्षपङ्क्तयो यस्मिंस्तत्तथा शुष्मिभिर्मत्तैः स्वजातिश्रेष्ठैर्वा भृङ्गैर्द्विजगणैः पक्षिगणैश्च घुष्टानि शब्दितानि सरांसिअखात-तटाकाः सरितः स्यन्दमाना नद्यः महीध्राः पर्वता यस्मिंस्तत्तथा मधुपतिर्माधवः एवम्विधं वनमवगाह्य वेणुञ्चुकूजेत्यन्वयः । कूजनं सुरतमन्त्रणाकामवर्धनं सीत्कारोद्भवं श्रोत्रीणां गोपीनां कर्पणार्थमेव मुक्तम् ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १-४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रवेशे सर्वोपि वनशोभा समाधिकैव दर्शिता इत्थमित्यादि ॥ १ ॥ २ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मदावेशो गोपिकानामासक्तिर्वर्ण्यते स्फुटा ।
वर्ण्यवर्णकभेदेन गोपानामपि सोच्यते ॥
प्रवेशबोधने तासामुद्बोधाय निरूपिते ।
तद्गुणेषु प्रसक्ता हि तदा सक्ता भवन्ति हि ॥
आसक्तिः प्रेमपूर्वैव प्रेमापि हरिणा कृतम् ।
उद्बोधकं च हरिणा कृतं नान्येन केनचित् ॥
आसक्त्या वर्णनं तस्माद्द्वियान्ते वर्ण्यते स्फुटा ।
कालाधिको हरिश्चात्र पुरुषोत्तम एव च ॥
त्रयोदशविधा लीला तत उक्ता पृथक् पृथक् ।

भगवल्लीलार्थं पूर्वाध्यायान्ते शरद्वर्णिता ततोऽत्र लीलार्थं भगवतो वृन्दावनप्रवेश उच्यते—इत्थमिति । इत्थम्भूता या शरत् तया स्वच्छं जलं यस्मिन् वृन्दावने तादृशमच्युतो न्यविशदिति सम्बन्धः अत्रापि पूर्ववदाधिदैविकीभिः शक्तिभिर्लीला तत्कथा तत्र नायकोत्कर्षार्थमच्युत इत्याह, तत्रापि गावोऽनुभाविकाः गोपालाः सेवकाः शक्तीनां निर्भयत्वाय एते देवाः सात्त्विकाः रमणं जलस्थलभेदेन द्विविधं निर्भररमणे च वायोरपेक्षा जलक्रीडायां तु नैर्मल्यं शीताभावश्च शरदा नैर्मल्यं शीताभावश्चोक्तः शरत्स्वच्छजलमिति शारदा स्वच्छानि जलानि यत्र विशेषतः कर्मानिर्देशात् क्रीडार्थं जलप्रवेशश्च पद्माकराणां सुष्ठु यो गन्धः शैत्यसहितस्तद्वान् सुगन्धी एतादृशं वायुना वातं वनं न्यविशत् गन्धवत्त्वेनैव मान्द्यमुक्तम् ॥ १ ॥

एतावदेव क्रीडायामपेक्षितं विशेषणधर्माणामेव प्राधान्यान्न विशेष्यनिर्देशः नितरां प्रवेश आधिदैविकपर्यन्तः प्रवेशमुक्त्वा देवतोद्बोधनमाह—कुसुमितेति । मधुपतिर्गाश्चारयन्वेणुं चुकूज वसन्ताधिपतिः सरसः शृङ्गाररात्मा धर्मं कुर्वन् क्रियाज्ञानशक्तिसहितो देवतोद्बोधनाय वेणुनादं कृतवान् उद्बुद्धा देवताः सामग्र्याश्च रता भवन्तीति भगवतो मधुपतित्वं निरूपितं विभावादीन्निरूपयति कुसुमिता या वनराजयः ताभिर्ये शुष्मिणो जाताः मत्ता भृङ्गाः पक्षिणश्च तेषां कुलान्यवान्तरजातिभेदाः तैर्घुष्टानि सरितः सरांसि महीध्राः पर्वताश्च यस्मिन् तानेव वा एकवद्भावः एवंविधमवगाह्य तत्रत्यानपि त्रिविधानुद्बोधयितुं केवलं शृङ्गारार्थमेव कूजनं कृतवान् एवमुद्बोधनमुक्त्वा ताभिः सह रमणे कामिनीकामोद्बोधकत्वात् कूजितस्य व्रजाङ्गनयोऽप्युद्बुद्धकामा जाताः ॥ २ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकविंशे वेणुगीतस्मरार्त्ता गोपिका मुहुः ।
वेणुवृन्दावनमृगी देव्यादीनां यशो जगुः ॥
यद्यद्वनं गतः कृष्णः चरितं मधुरं व्यधात् ।
प्रेमनेत्रेक्षितं गोप्यो गोष्ठस्थास्तद्वर्णयन् ॥

शरदं वर्णयित्वा तादात्विकीं वेणुगानलीलां वर्णयिष्यंस्तन्माधुरिममण्डिते वृन्दावने प्रथमं कृष्णस्य 'प्रवेशमाह—इत्थमिति । पद्माकरसुगन्धिनेति पद्माकरसम्बन्धात्सौगन्ध्यं शैत्यं च ज्ञेयं वायुभिरित्यनुक्तेर्वायुनेत्येकवचनेन वा तस्य मान्द्यं च गो गोपालकसहित अत्र मधुपतिरिति विशेष्यपदेनोत्तरश्लोकस्तेनान्वयः ॥ १ ॥

कुसुमितवनराजिषु शुष्मिणो मत्ता भृङ्गा द्विजाश्च तेषां कुलैर्घुष्टानि सरांसि सरितो महीध्राश्च यस्मिन् तत् वनं मधुपतिः कृष्णः अवगाह्येति यस्यावगाहनेन वनं शोभते तस्य माधवेसन्तस्यापि पतिरित्यतिशोभाद्यवेषणा ध्वनिता चुकूज कूजयामास सह पशुपालबल इति वनावगाहने गोचारणे च साहित्यं न तु वेणुकूजने उत्तरश्लोके कृष्णस्य वेणुगीतमित्युक्तेः ॥ २ ॥

---

तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम्।
काश्चित्परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥ ३ ॥
तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम्।
नाऽशकन् स्मरवेगेन विक्षिप्तमनसो नृप ! ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकविंशाध्याये शरद्रम्यं वनं गतस्य श्रीकृष्णस्य वेणुगीतं श्रुत्वा तदेव गोपीभिर्मिथोऽनुवर्णितमित्याह—इत्थमिति। शरदा स्वच्छानि जलानि यस्मिन् तत्पद्माकरसुगन्धिना वायुना वातं व्याप्तम् इत्थमेवम्भूतं वनमिति विशेष्यमध्याहर्त्तव्यम् अच्युतः प्राविशत् ॥ १ ॥

ततश्च मधुपतिः श्रीकृष्णः कुसुमितवनराजिषु शुष्मिणां मत्तानां भृङ्गाणां द्विजानां पक्षिणां च कुलैः घुष्टाः सरःसरिन्महीध्राः यस्मिन् तद्वनमवगाह्य प्रविश्य गाश्चारयन् वेणुं चुकूज अवादयत् ॥ २ ॥

---

श्रीमिश्ररामकृष्णकृतप्रेममञ्जरी।

॥ १—४ ॥

---

श्रीमत्कृष्णदासकृत श्रीगणदीपिका।

श्रीकृष्णाय नमः॥

श्रीमद्भागवते एकविंशतितमाध्याये श्रीवेणुगीतव्याख्या, श्रीयुक्तः शुक इति भावसमुल्लासेन शोभातिशयाद्वस्तुतस्तु श्रिया शुक इति श्लेषेण पद्माया महालक्ष्म्याः करो हस्तः तेन गुणापचयात् संक्रान्तसुगन्धिनेति परमोद्दीपकत्वम्। "राधायमाना सा पद्मा पद्मोद्भवसुधिष्ठिता" इति ब्रह्माण्डोक्तेः ॥ १ ॥

अत्र वेणुं वादितवानिति वक्तव्ये चुकूजेति सङ्केतव्यक्तिः कूजनं हि कोकिलादिध्वनौ रूढं कोकिलकूजितसदृशं वेणुवाद्यमनुचक्रे तस्यानुकरणं सङ्केतसूचनायेति भावः ॥ २ ॥

---

भाषा टीका।

ॐ वेणुनादविशारदाय नमः।

श्रीशुक उवाच।

श्रीशुकदेव जी बोले, कि—या प्रकार शरद ऋतु में निर्मल भये जल जामें और कमलन की सुगन्ध लेकें पवन जामें बहैं, ऐसे वृन्दावन में गैयान कूं और ग्वाल बालन कों संग लेकें श्रीकृष्ण जात भये ॥ १ ॥

फूल रही जो वन की पंक्ती तिनकी सुगन्ध तें मतवारे जो भौंरा और पक्षी तिनके समूहन की बोली सों सरोवर नदी और पर्वत गूंज उठे जामें ऐसे वृन्दावन में मधुवंशी यादवन के पति श्रीकृष्ण चन्द्र घुस करके बलदेवजी और ग्वाल बालन सहित गायन कों चरावत बांसुरी बजावत भये ॥ २ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्कृष्णवेणुगीतं स्मरस्योदयो यस्मात्तदाश्रुत्य श्रुत्वा परोक्षं यथा भवति तथा व्रजे स्थितत्वात् ॥ ३ ॥

विक्षिप्तमनसो व्याकुलचित्ताः ॥ ४ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

ततस्तत्र कृष्णस्य वेणुगीतम् अनुगीतानन्तरं वा अवर्णयन् तत्र हेतुः तादृशजलादिदर्शनात्तस्यैव स्मरेण कामेन गोपीस्मरणेन वा उदयो यस्य यद्वा स्मरस्य उदयो यस्मात्तत् यद्यपि सदा तस्य तादृश एव स्वभावः तथापि तदानीं भावविशेषोत्पत्त्या वादनविशेषेण तादृशत्वमुक्तम् अत एव तदानीमेव ताभिस्तदनुवर्णनं च यद्वा तदिति कृष्णभावविशेषसूचकं परममोहनमिति वा यतः स्मरोदयम् अन्यत् समानं व्रजस्य व्रजे वा वर्त्तमानायास्त्रियस्ताः आश्रुत्य दूरतोऽपि सम्यक् श्रुत्वा कृष्णेच्छाविशेषेण तासां भावबलेनैव वा विवक्षितत्वात् आ ईषत् श्रुत्वेति वा वेणुनाम्नां वेणोर्वा गीतं श्रीकृष्णाधरस्पर्शमात्रेण स्वत एव तत्कूजनस्यैव भङ्गीविशेषेण गीतत्वेनैव परिस्फूर्त्तेः कूजनेन गीतमेव वाभिप्रेतं काश्चिद्भावविशेषयुक्ताः श्रीराधादेवाद्याः इति सर्वासामेव व्रजस्त्रीणां तच्छ्रवणेऽपि मान्यानां वात्सल्यप्रसरस्यैवोदयो न तु स्मरस्येति ताः परिहृताः परोक्षं तासामेव साक्षात्निभृतमित्यर्थः। अतः स्वीयाभ्यः सखीभ्यः श्रीललितादिभ्य एव ताः प्रतीत्यर्थः। यद्वा, तादर्थ्ये चतुर्थी तासां सुखार्थमित्यर्थः तासां सुखेनैवात्मसुखविशेषात् ॥ ३ ॥

आरब्धाः आरब्धवत्यः इत्यवद्यमारब्धपरिसमाप्तिरपेक्ष्यत इति भावः तथापि न शेकुः तत्र हेतुः स्मरस्य श्रीकृष्णस्मृतिविशेषस्य तद्विषयककामस्य सर्वचित्ताकर्षकस्य चेष्टितं तद्वेणुवादनात्मकम् अग्रे वर्णनीयं वा स्मरन्त्य अनुसन्दधानाः यद्वा काश्चिदन्ववर्णयन् काश्चिद्वर्णयितुमारब्धा अपि न शेकुः हे नृपेति तत् कथनेन स्वयमेव भावविशेषप्राप्त्या कार्त्स्न्येन किं वा तस्यैव भावविशेषोदयमालक्ष्य तत्संवरणार्थं सम्बोधनम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नत्तत्र तदेव वा कृष्णस्य वेणुगीतम् अनुगीतानन्तरं निरन्तरं वा अवर्णयन् तत्र हेतुः स्मरस्य उदयः प्राकट्यं यत्र तादृशं यथा स्यात्तथाऽऽश्रुत्य यद्यपि सदा तस्य वेणुवादनावलोको वर्त्तत एव तथापि तदानीं वयोऽतिशयेन शरल्लक्ष्मीविलासावलोकनेन च दीप्तभावस्य ताः समाकृष्टुं वेणुविद्यामभ्यसतस्तथा तासां तादृशत्वं जातम् अत एव तदानीमेव ताभिस्तदनुवर्णनं च आश्रुत्य दूरतोऽपि सम्यक् श्रुत्वा कलत्वेऽपि सर्वव्यापिस्वभावत्वात् ईषदपि श्रुत्वेति वा काश्चिद्भावविशेषयुक्ताः श्रीराधादेव्याद्याः इति सर्वासामेव व्रजस्त्रीणां तच्छ्रवणेऽपि सर्वभूतमनोहरमिति वक्ष्यमाणान्मात्रादीनां वात्सल्यादेरेवोदयो न तु स्मरस्येति ताः परिहृताः अतः स्वीयाभ्यः सखीभ्यः श्रीललितादिभ्यः निजमनोबाष्पोद्गिरणाय ता अपि भावयितुमित्यर्थः । स्वशब्देन सख्याः सख्योऽपि व्यावर्त्यन्ते इति तासां परमशालीनत्वं दर्शितं किं बहुना तत्रापि परोक्षम् अर्थान्तराच्छादनवत् सावहितं यथास्यात्तथेत्यर्थः ॥ ३ ॥

स्मरोदयस्य क्रममेवाह—तदिति । तत्तादृशं परोक्षं यथा स्यात् तथा वर्णयितुम् आरब्धाः आरब्धवत्योऽपि नाशकन् तथा वर्णयितुं नापारयन्नित्यर्थः । तत्र हेतुः स्मरेति, कुतः ? कृष्णस्य सर्वचित्ताकर्षकस्य चेष्टितं तद्वेणुवादनमयं स्मरन्त्यः अनुसन्दधानाः हे नृपेति तत्कथनेन स्वयमेव भावविशेषप्राप्त्या कातर्येण सम्बोधनम् ॥ ४ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्मरस्योदयो यस्मात्तत् कृष्णस्य वेणुगीतमाकर्ण्य काश्चिद्व्रजस्त्रियः तस्य कृष्णस्य परोक्षमसमक्षं स्वसखीभ्योऽन्ववर्णयन् ॥ ३ ॥

तत्कृष्णस्य वेणुगीतं चेष्टितं वर्णयितुमारब्धाः आरब्धवत्यः तत्स्मरन्त्यो हे नृप स्मरवेगेन व्याकुलितचित्तास्तावद्वर्णयितुमेव ना शक्नुवन् शक्ता न बभूवुः कृष्णश्च तच्चेष्टितं च तयोः समाहारः कृष्णचेष्टितं यादृशस्तदा कृष्णः चेष्टितं च तदुभयं स्मरन्त्यो नाशक्नुवन्नित्यर्थः ॥ ४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मदः कामः तस्योदयः अङ्कुरीभावः यस्मात्तन्महोदयं स्मरोदयमिति केचित्पठन्ति तद्वेणुगीतमाश्रित्य काश्चिद्व्रजस्त्रियः परोक्षं कासाञ्चिददृष्टश्रुतं कृष्णस्य चरितं स्वसखीभ्यो न्यवेदयन्नित्यन्वयः ॥ ३ ॥

वर्णयितुं कीर्तयितुम् ॥ ४ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काश्चित् प्रेयसीरूपास्ता एव इत्यर्थः । सर्वास्तास्त्वेव सर्वभेदाः ॥ ३—६ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः कामवशाद्भगवदुद्बोधार्थं स्वसखीभ्यः स्वसमानशीलव्यसनाभ्यः तद्गुणान् वर्णयितुमारेभिर इत्याह—तद्व्रजस्त्रिय इति । आसमन्तात् श्रुत्वा आधिदैविकत्वात् अन्यथा कथं वनस्थितो वेणुनादो व्रजस्थिताभिर्गोपिकाभिरेव श्रूयेत यथा सर्वे देवा उत्थिता एवं स्मरोऽपि उद्दीपनविभावत्वाच्च नादव्याप्तमध्ये काश्चन स्मरेण मूर्च्छिता एव काश्चित् पुनः कृपया भगवत्सङ्गं प्राप्य कृष्णस्य परोक्षे विद्यमानाभ्यः स्वसखीभ्यः अनुभवत् करणानन्तरमेवावर्णयन् वर्णितवत्यः ॥ ३ ॥

तासामपि पुनः कामोद्बोधे विशेषतो वर्णनाशक्तिर्जातेत्याह, तद्वर्णयितुमिति । तत्स्वानुभूतं भगवद्रूपं वेणुगीतं वा वर्णयितुं कार्यतः कारणतः फलतः स्वरूपतश्च निरूपयितुमारब्धवत्यः ततो मध्ये वर्णनार्थं कृष्णचेष्टितं स्मरन्त्यः तत् स्मरणे जातेन स्मरेण जातो वेगः चित्तचाञ्चल्यं तेन विक्षिप्तमनसो जाताः नृपेति सम्बोधनं धर्मत्वेन जितेन्द्रियत्वाय बर्हापीडमिति नान्वयं श्लोकः पूर्वोत्तरश्लोकान्वितस्तथा हि पूर्वं वर्णयितुं नाशक्नुवन्नित्युक्त्वा वृन्दारण्यं प्राविशदित्युक्तेः अग्रेचेति वेणुरवं श्रुत्वा वर्णयन्त्योऽभिरेभिर इत्युच्यते एवं सति स्पष्टैवासङ्गतिर्मध्यस्थस्यास्य श्लोकस्येति चेत् अत्रेदं प्रतिभाति आद्ये प्रवेशमात्रमुक्तं न तु विशेषतः कर्मोक्तं द्वितीये च पूर्वं वेणुं चुकूजेत्युक्तं ततस्तत्कूजितमाधुर्येत्युक्तं तेन कूजनस्वभावादेव भावोद्दीपनं प्राप्तं पश्चाद्विप्रकार्यार्थं लीलाविशिष्टं स्वस्वरूपं वेणुद्वारा प्रियया गीतमाश्रुत्येत्युक्तम् एवं सत्याश्रुत्येत्यस्याप्तिर्ज्ञेया गीतं हि स्पष्टार्थकं रसनिरूपकं च भवति तच्छ्रवणेन लीलाविशिष्टस्वरूपानुभवो ह्यभूत् अत एव कृष्णचेष्टितं स्मरन्त्य इत्युक्तं तदा तदनुभवात् तद्विना व्यातुमशक्तास्तद्भावस्वभावादेव तदेवान्ववर्णयन्नित्युक्तम् एतद्वर्णनं तदा स्याद्यदि गुणलीलाविशिष्टं स्वरूपं सर्वांशेनानुभूतं स्यात् प्रकृते च स्मरोदयमेव गीतं प्रियया कृतमिति न सर्वात्मना तदनुभवोऽस्तीति शक्तिरभूत् एवं सति चिकीर्षितकार्योसम्भवं दृष्ट्वा पूर्वं तादृशं नादं प्रकटितवान् यच्छ्रवणेन गुणलीलाविशिष्टसुदृढस्वरूपात्मकं स्वरूपं सर्वेन्द्रियप्राणान्तःकरणजीवेषु पूर्णमाविरभूत् तदा तद्वर्णनमभूदभितो रमणमपि एवं सति पूर्वं वर्णनाशक्तिमुक्त्वाऽग्रे तच्छक्तिहेतुं चैतेन श्लोकेनोक्त्वा शुका आहुः—इति वेणुरवमिति । एवम्भूतं पूर्वोक्तश्लोकोक्तरूपं न तु पूर्वंवत्केवलं वेणुरवमित्यर्थः । एवं सति तद्व्रजस्त्रिय आश्रुत्य तद्वर्णयितुं नाशकन् अनेनैवरूपत्वात् ततः इति वेणुरवं बर्हापीडमितिश्लोकोक्तं वेणुरवमित्यर्थः तं श्रुत्वा वर्णयन्त्योऽभिरेभिरे इति श्लोकसङ्गतिर्निष्प्रत्यूहा मिथ्या तारतम्येन रसानां क्रमेणाविर्भावे महानुभव इत्येवं करणं दुर्लभत्वं चैतस्य रसस्य ज्ञापितं परमकाष्ठापन्नस्वतन्त्रमहाफलदित्सयैवं कृतवान् प्रभुरिति ज्ञेयम् अन्यथा शुकशुकादीनामज्ञानेऽप्युपदेशावदत्रापि तथा भवेत् अन्यच्चाख्याने स्फुटीभावेऽपि नाभिवर्णयितुमशक्यं स्वयं वर्णयति तथात्वज्ञापनाय बर्हापीडमिति भावोद्दीपकत्वमात्रं कूजनधर्म इति तत्कार्यं सम्पूर्णं तत्कार्ये जायमाने स्मरत्वे वेगजश्चित्तविक्षेपः प्रतिबन्धक उक्तः

बर्हापीडं (१) नटवरवपुः कर्णयोः कर्णिकारम्—
बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दैः—
वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्त्तिः ॥ ५ ॥
*( बर्हापिच्छो वनचरवपुः कर्णयोः कर्णिकारः—
सव्ये बाहौ निहितवदनः सज्जमन्यत्र हस्ते ।

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कृष्णचेष्टितस्मरणं चाशक्तौ स्मरवेग च हेतुरुक्तः तदाग्रेऽप्यस्यावश्यकत्वात् सार्वादकत्वाच्च वर्णनं न स्यादेवेति शङ्कामपनुदन्नग्रे वर्णनायामुपपत्तिमाहैकेन बर्हापिडमिति अत्रेदं ज्ञेयं सामोपनिषत्सु स्मरो वा आकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वा वते स्मरेयुरथ शृणुयुरित्यादिना स्मरणस्यैव स्मरशब्दवाच्यत्वमुच्यते स्मरणं स्मर इति व्युत्पत्तेः प्रकृते स्वामिनीनां मुखारविन्देषु स्वाधरसुधासम्बन्धः प्रभुणाऽग्रमप्रयोजनार्थमवश्यं कारणीयः स च वर्णनेनैव भवति तच्च न सुधा सम्बन्धिनादान्तः प्रवेशं विना भवितुमर्हति तत्प्रवेशेऽपि पूर्ववत् कृष्णचेष्टितस्मृतौ न तत्सम्भवत्यत एव तदीयवेणुस्यैवान्या प्रतिबन्धत्वं स्मरणस्य ज्ञापयितुं स्मरवेगेनेत्युक्तमन्यथा न वदेत् कृष्णचेष्टितं स्मरन्त्यो नाशक्नुवन्नेव चारित्राद्ध्यपादतो नाद प्राधान्येनैव नादस्मरणं तद्धेतुत्वेनैव च प्रभुस्मरणं ननु प्राधान्येन चेत्तदा सर्वं सम्पद्यत इति स्वयं विचार्य पूर्ववत्तथा कृत्वापि तदशक्ति दृष्टोक्तकार्यार्थमुद्भूतपूर्णशृङ्गाररसात्मकमद्दूयोपकाच्छादकविक्षेपकशक्तिमत्त्वेनाखिलाङ्ग्युक्तमपि स्वरूपं नादऽनुभूयमान एवानुभूतं भवति न तु पृथगेवऽभूतं नाहं सम्पाद्य शुद्धपुष्टिस्थानं प्राविशत्पुष्टिमार्गाङ्गीकारं प्रकटीकृतवान् तथा सति तनानां साक्षाद्भोगः सम्भवत्यन्यथैतावत्करणं निष्प्रयोजनकं स्यात् यथा वृन्दाङ्गीकारेण तृणनिवारणं कृतवानेवमेतदङ्गीकारेणापि कीर्तिद्वारा विश्वस्य सर्वस्यैव दोषं दूरीकरिष्यतीति गोपस्वमत्वस्या लीलायाः स्थापयितुमत्रे विशेषणम् एवं सति निष्पन्यूहं स्वधवर्णनमभूदतो वर्णनाशक्तिमुक्त्वा तत्साधनं मध्ये निरूपयन्ग्रे तदुक्तम् एतेन वेणुरवं स्वरूपमेव वर्णितं भवति अत एव इति वेणुरवमित्येवाग्रे उक्तं तेन पूर्वस्माद्विलक्षणत्वं नादस्य ज्ञापितं भवति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत कृष्णस्य वेणुगीतम् आश्रुत्य परोक्षं यथा स्यात्तथात तासां व्रजे स्थितत्वात् ॥ ३ ॥

तद्वेणुगीतं वर्णयितुमारब्धा आरब्धवत्योऽपि वर्णयितुं नाशक्नुवन् तत्र हेतुः स्मरवेगेनेत्यादि ॥ ४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णस्य तद्वेणुगीतमाश्रुत्य तदेव काश्चित् परोक्षं यथा भवति तथा स्वसखिभ्यः अन्ववर्णयन् ॥ ३ ॥

तदेव वेणुगीतं वर्णयितुमारब्धा अपि कृष्णचेष्टितं स्मरन्त्यः स्मरवेगेन विक्षिप्तमनसः नाशकन् ॥ ४ ॥

---

### श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

तत्पूर्वोक्तप्रकारं सङ्केतसूचकमित्यर्थः । यद्वा, तस्य व्रजे वर्तमानायाः स्त्रियः स्वकान्तभावा न तु मातृभावास्तथा प्रौढाः न तु कुमार्य इत्यर्थः । स्मरोदयं स्मरस्य कामस्योदयो यस्मात् अत्र कामोऽनुकरणमात्रमेव न तु वास्तवोऽसौ प्रच्छन्नकामुकत्वादासां गोकुलेन्द्रस्य सौख्यादेरित्युक्तः । यद्वा, प्रेमोदयं तदुक्तं वंशोद्दनतन्त्रे "प्रेमैव गोपरामाणां काम इत्यगमत् प्रथाम्" इति तदेवमनुकरणेन कोऽपि विरोधः, तदुक्तं ब्रह्मणा "प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले" इत्यादि काश्चिद्गायवर्त्तीभूताः परोक्षम् अश्वत्थराच्छन्नं । यद्वा, लज्जया निजजनाचारणाय तद्व्रजाविस्मृतवर्णनदयागेनाच्छन्नं यथा स्यात्तथेति समुचितवर्णनं हि प्रीतिमात्रं बोधयति न तु कान्तभावमित्यभिप्रायात् । यद्वा, काश्चित् कृष्णस्य व्रजस्त्रिय इति सम्बन्धः यद्वा कृष्णस्य स्मरोदयं कृष्णस्य सम्यग्भिसारस्योदयो यस्मादिति ॥ ३—४ ॥

---

### भाषा टीका ।

काम को जामें उदय होय ऐसे वा वेणु गीतकों व्रज की स्त्री सुनकरकें कितनी स्त्री श्रीकृष्ण के पीछैं अपनी सखीन सों वर्णन करत भई ॥ ३ ॥

वा वेणु गीत के वर्णन करबे को आरम्भ कियो परन्तु बीच २ में श्रीकृष्णकी लीला चेष्टान को स्मरण होयबाते तामों कामदेव के वेगतें मन जिनके विक्षिप्त होय गये ऐसी वे स्त्री हे राजन्! वर्णन करिबे कों नहीं समर्थ होत भई ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यादृशं कृष्णस्मरणं तासां मनसः क्षोभकं जातं तदाह बर्हापीडमिति । नटवद्वरं वपुर्बिभ्रद्वृन्दावनं प्राविशत् कथम्भूतं ?

(१) नटवरवपुरितिजीवगोस्वाम्यादयः। * इत्यधिकः पठ्यते विजय० पा० ।

भ्रूविन्यासाङ्गुलिभिरणयन् गापयन् गोपवृन्दान्—
भूतग्रामन्तर्हि रमयन्ब्रह्मगान्धर्वमेव ) ॥ ० ॥

इति वेणुरवं राजन्! सर्वभूतमनोहरम्।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

वनं स्वपदैरङ्कितैरमणं रतिजनकं गोपवृन्दैर्गीतकीर्त्तिः तथा वर्हमयमापीडं शिरोभूषणं बिभ्रत् वर्हापीडो यस्मिन्निति वपुषो विशेषणं वा वेणुवादनमुत्प्रेक्षते रन्ध्राण्वेणोरिति अतो नूनमधरसुधयैव पूर्णाद्वेणोरुच्छलन्ती गीतवत्प्रसर्पितुमर्हतीति भावः ॥ ५ ॥

अभिरेभिरे वर्णयन्त्यः पदेपदे परमानन्दमूर्तिं कृष्णं परिरम्भयन्त्यः ॥ ६ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एवं भावविशेषाधिमावेन श्रीव्यासनन्दनन्दनस्य तदानीन्तनवेषादिकं स्मरन् तासां तद्वर्णनान्तरेव स्वयं तद्वर्णयति-बर्हेति। तदभिप्रायो यादृगस्यादिनां तैर्व्यञ्जित एव अथवा तच्चेष्टितस्मरणेन हृताक्रान्ततद्रूपवेषविशेषतो विक्षिप्तमनस्त्वाच्च न शेकुरित्यभिप्रायेण हेत्वन्तरमपि वदन् तद्रूपमेव वर्णयति। यद्वा, पश्चात् कथञ्चित् प्रयत्नेन तास्तद्वर्णयन्त्येवेत्याह—बर्हेति। इनीति निरन्तरश्लोके तथैव श्रीबादरायणिना वेणुरवोक्तेः नटश्चासौ नरश्चेति तद्वद्विचित्रवेषं वपुः देवानां सदैव विचित्रवेषत्वेन नराणां च मध्ये नटस्य कालविशेष एव नृत्यार्थविचित्रवेषग्रहणापेक्षया नरशब्दप्रयोगः तदेव दर्शयति—बर्हापीडमित्यादिभिः। यद्वा नरन्ति हर्षभरेण नृत्यन्तीति नटाः नराः जीवाः सर्वे यस्मात् तद्वपुः बिभ्रत् प्रकटयन् यद्वा तद्वपुर्यस्य सः नटवरेति पाठोऽपि क्वचिद्दृश्यते कर्णिकारमित्येकत्वेऽपि कर्णयोर्द्वित्वाद्वित्वमेव ज्ञेयं तथा वासश्च कर्णिकारं पीतवर्णमुत्पलाकारं पुष्पं तस्य धारणं शरदि वसन्ते च विशेषतः सम्पत्तेः शोभा विशेषापेक्षया वैजयन्ती नाम पञ्चवर्णपुष्पैर्ग्रथिता माला तां वेणोः रन्ध्राणि अधरसुधया पूरयन्निति भावविशेषेण वेणुवादनं तथा तस्या इव तस्य परममोहनत्वं च सूचितं वृन्दाया आरण्यमिति तदधिष्ठात्र्या तथा श्रीभगवत्क्रीडाविशेषोत्सुकतामभिप्रेत्य विशेषतः संस्कृतमित्यर्थः। अतः स्वैः असाधारणैः पदैः सर्वत्राङ्कितैः रमणं तस्याः सर्वेषां वा सुकरं यद्वा स्वपादयोः रमणं रम्यकोमलधूलीपुष्पपरागपत्रादिमयत्वेन रतिजनकं गोपवृन्दैर्गीता कीर्त्तिः विचित्रसौन्दर्यवैदग्ध्यादिरूपा यस्य। यद्वा, तस्य भावविशेषमालक्ष्य गीता कीर्त्तिर्गोपीनां यस्मिन् तासां साक्षादनुक्तिर्लज्जया मौक्तिकहारस्वर्णाङ्गदाद्यलङ्कारवर्णनं स्वत एव तस्य नित्यासद्भावात्। किं वा शरत्प्रथमदिने वनविहारविशेषार्थं केवलवन्यवेषेण तथैव वने प्रवेशात् पूर्वमुक्तस्याग्रेऽपि वक्ष्यमाणस्य श्रीवत्सादेः साहित्यस्याऽत्रानुक्तिः भावविशेषेण गुरुदृष्ट्या लज्जाद्युत्पत्तेः किं वा नवस्य श्रीकृष्णचेष्टितस्यैव परममोहनत्वेन तद्वर्णने चात्र तदपेक्षाधिक्याभावात् किं वा गोपवृन्दैरिति सोऽपि गृहीत एव तत्र तस्य गौणत्वेन न स्पष्टो निर्देशः ॥ ५ ॥

इति ईदृशेन अनेन प्रकारेण वा सत्रादूरेऽन्तिके वा स्थिता यद्वा प्रौढबालादिभेदेन वर्त्तमानाः यद्वा सर्वा एव सङ्घशः वर्णयन्त्यः सत्यः वेणुरवमेव अन्ववर्णयन्निति पूर्वमपि तस्यैव प्रस्तुतत्वात् अतो यत्रासौ व्यक्तो नास्ति तत्राप्यूह्य एव यच्चाग्रे रूपवेषादिवर्णनं तच्च तत्साहचर्येण प्रसक्तादिति ज्ञेयं यद्वा, कृष्णचेष्टितमिति पूर्वोक्तमाकर्षणीयं वर्णयन्त्यो मिथो गोप्यः क्रीडा इति सर्वान्तोक्तेः अभिरेभिरे इदा कान्तं श्रीकृष्णं भावनया किं वा भावविशेषोदयस्वभावेन परस्परं सर्वा एव परिरब्धवत्यः किंवा वेणुनादमेव वा प्रीत्या हृदये संलग्नं चक्रुरित्यर्थः। सर्वत्रैव हेतुः सर्वेषामपि भूतानां मनोहरं किमुत तासामिति अभिरेभिरे इति पाठस्तु श्रीचित्सुखसम्मत एव अभितो रतिं प्रापुरित्यर्थः। हे राजन्निति पूर्वोक्तनृपतिवत् यद्वा हे भावविशेषेण प्रकाशमानेति सम्बोधयन् हस्तग्रहणादिना तमसावनुभाव्यालिङ्गितवानिति ज्ञेयम् ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्तद्भावविशेषात्तदेव विवृणोति—बर्हेति युग्मकेन। नटवरवपुरिति बहुव्रीहिरभेदेऽपि भेदोपचारात् यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतं विस्मापनं स्वस्य च सौभगर्द्धेः परंपदं भूषणभूषणाङ्गमिति तस्यापि विस्मापकतानिर्णयेन स्वभावत एव तावत्तन्नटवरवपुः सर्वतदीयरूपवृन्दवरिष्ठं तत्रापि तदानीं नटवेषमित्यर्थः। यद्वा, तादृशवपुर्बिभ्रत् शश्वच्छोभाविभावेन पुष्णन् नरवरेति पाठोऽपि क्वचित् दृश्यते कर्णिकारं पीतवर्णमुत्पलाकारं पुष्पं वैजयन्तीनामपञ्चवर्णपुष्पैर्ग्रथिता माला तां वेणोः रन्ध्राणि अधरसुधया पूरयन्निति तस्या इव तद्वादस्यापि परममोहनत्वं सूचितं वृन्दाया अरण्यमिति तदधिष्ठात्र्या तथा श्रीभगवतः क्रीडाविशेषोत्सुकतामभिप्रेत्य विशेषतः संस्कृतमित्यर्थः। अतः स्वैः असाधारणैः पदैः सर्वत्राङ्कितैः रमणं तस्याः सर्वेषाञ्च सुखकरं यद्वा स्वपादयोः रमणं स्वतः प्रियत्वेन रम्यकोमलधूलीपुष्पपरागपत्रादिमयत्वेन च रतिजनकं व्रजस्यापि वृन्दावनान्तर्वर्त्तित्वेन तद्बहिरेव वनत्वव्यपेक्षया विशेषतस्तत्पदोपादानं गोपवृन्दैर्गीता कीर्तिः विचित्रसौन्दर्यवैदग्ध्यादिप्रसंशारूपा यस्य यद्वा तस्य भावविशेषमालक्ष्य

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

गीता कीर्त्तिः गोपीनां यस्मिन् तासां साक्षादनुक्ति-लज्जया मौक्तिकहारस्रग्यांङ्गदाद्यलङ्कारस्यावर्णनं स्वत एव तस्य नित्यसिद्धत्वात्। यद्वा, वन्यवेषस्यैव मोहनत्वात् किंवा शरत्प्रथमदिने वन्यविहारवेषार्थं वनप्रान्तमागत्य कृतेन केवलवन्यवेषेणैव वने प्रवेशात् अत्र गोपवृन्दैरपि बलदेवोऽपि गृहीतः तस्य युगलत्वेनानुक्तिः श्रीगोपीनां श्रीकृष्णैकनिष्ठत्वं तत्परिकरतयैव तु तत्साहित्येन वर्णनमिति व्यञ्जयन्ति ॥ ५ ॥

इति उक्तप्रकारेण सर्वास्तास्त्वेव प्रौढबालादिभेदेन वर्त्तमानाः अभिरेभिरे हृदाक्रान्तं श्रीकृष्णं भावनया किंवा भावविशेषोदयसम्मोहेनान्योन्यं तं मत्वा किंवा भावविशेषोदयस्वभावेनैव परस्परं सर्वा एव परिरब्धवत्यः सर्वत्रैव हेतुः सर्वेषामपि भूतानां प्राणिनां मनोहरं किमुत तासामिति अभिरेमिरे इति पाठस्तु चित्तसुखमस्मन एव आभितो रतिं प्रापुरित्यर्थः हे राजन्निति पूर्वोक्तनृपेतिवत् ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

स्वपदरमणं स्वपदेन प्रीतिकरम् ॥ ५–६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कीदृशं कृष्णचेष्टितमित्यत्राह–बर्हेति। बर्हात्मकमापीडं शिरोभूषणं द्वितीयान्तानां बिभ्रदित्यनेनान्वयः कर्णयोः श्रोत्रसन्दर्योः कर्णिकारं वाङ्कलीकुसुमात्मकं कर्णपूरं च तथा कनकवत् कपिशं पिशङ्गं वासः वैजयन्तीं मालां नटात्मकवरस्येव वपुश्च बिभ्रत् नटवरवपुरिति बहुव्रीहिणा कृष्णविशेषणं वा तस्य तत्पुरुषपक्षे तद्विशेषणत्वमपि बर्हापीडमित्यस्य बहुव्रीहिणा स्वस्मयाति अधरस्य सुधया वेणोः रन्ध्रान् पूरयन् साधरसुधेन मुख वायुना वेणुं नादयन्नित्यर्थः। गोपानां वृन्दैः गीता कीर्त्तिर्यस्य तथाभूतः सन् स्वपदैरङ्कितैः रमणं रतिजनकं वृन्दावनं प्राविशत् उक्तवेषं कृष्णं बर्हापीडादिधारणवेणुरन्ध्रपूरणवृन्दारण्यप्रवेशनात्मकं चेष्टितं च स्मरन्त्यो नाशक्नुवन्निति (भावः) पूर्वेणान्वयः ॥ ५ ॥

एवं नादं वर्णयितुमशक्तास्ततः शनैर्लब्धाश्वासा वर्णयामासुरित्याह—इतीति। हे राजन्! इतीत्थं तावदेवम्भूताः व्रजस्त्रियः सर्वभूतानां मनोहरं वेणुशब्दमाकर्ण्य तमेव चेष्टितं वर्णयन्त्यः तद्वर्णनात्मकं विहारं चक्रुः अभिरेभिरे इति पाठे वर्णितुं बुद्धौ सन्निधापितं मन्मथमन्मथं भगवन्तं बुद्ध्या परिरेभिर इत्यर्थः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हरस्तदाकारदर्शनं च सुखहेतुरिति भावेन तस्य स्वरूपप्रकारं वक्ति–बर्हापीडमित्यादिना। बर्हं पिच्छमेवापीडं शेखरोत्तंसं यस्मिन् तत् नटवत् वरवपुः शुभाकारं बिभ्रदिति प्रत्येकं सम्बन्धयितव्यं स्वपदेन स्वपादेन रमत इति रमणं रमयत रन्ध्रान् सुषिराणि ॥ ५ ॥

वर्हमेवापिच्छं यस्य स तथा वनचरवपुः किरातादिकार इवाकारो यस्य स तथा शुभाकारे तनौ वपुरिति च वनचरा गोपा वा कर्णयोः कर्णिकार इत्येकं पदं कण्ठेकाल इतिवत् भ्रुवोर्विन्यासः भ्रूभङ्गविशेषः तेन सहाङ्गुलीभिः अन्यत्र हस्ते सज्जं सक्तं रणयन् वेणुमिति शेषः। अङ्गुलीभीरणयन्निति वक्तव्ये ह्रस्वत्वं छन्दोभङ्गभयात्कृतं गान्धर्वं ग्रहीव भरतशास्त्रोक्तप्रकारमेव गोपवृन्दान् गापयन्निति छिकर्मकोऽयं धातुः भूतग्रामं प्राणिसमूहं रमयन् वृन्दावनं प्राविशदिति पूर्वेणान्वयः ॥ ० ॥

अभिरेभिरे इत्यत्र या रतिः सा मुख्यतः श्रिय एव तद्गीतरसविशेषज्ञत्वात्तदन्यासां तदभावात्तस्मादौपचारिकमभिरमणं तदुक्तं "श्रीदेवी वेणुमाश्रित्य रेमे कृष्णमुखाम्बुजे" इत्यादि सुरा इतरभागडगा इत्यत्र इतरभागडानि वेणुगन्तरेणान्यभूषणानि गता आविष्टा इत्यर्थः। इतरेषां रामादीनां वा "वेणुमुखे धने पात्रे भाण्डं भूषाश्वभूषयोः" इति यादवः वनचरा गोपा वा ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अथ शरदागमे वृन्दावनभुवं वर्णयन्नाह—बभौ भूः पक्वेत्यादि, हरेः कला पत्नीरूपा भरणया च दूर्वावलद्यामलाङ्कुरैरलभियुक्ताः श्रीभूलीला इत्यादिन्यागमान्तरं सा तु भुवोऽधिष्ठात्री तत्सम्बद्धा भूरपि तथा आभ्यां श्रीकृष्णरामाभ्यां हेतुभूताभ्यां बभौ पक्वसस्यात्वेति जात्युक्तिः नितराम् अतिशयेन एवं शरद्वर्णनमुपक्रम्य तत्रैव शरदि पूर्वविहारमाह—बर्हापीडमित्यादि। नटवत् वरवत् वपुर्यस्य वरो विवाहप्रवृत्तः नटेभ्योऽपि वरमिति वा नटवरवदिति वा नटनरेतिपाठे नटवत् नरवत् द्विभुजत्वे तात्पर्यम्। यद्वा, नटनम् आनन्दोल्लासविकारः तद्दानि ददातीति नटनरं वपुर्यस्य यद्दृष्ट्वा सर्वेषामेव नटनं जायत इति भावः। कर्णयोः कर्णिकारं सप्तम्या अलुक्। यद्वा, कर्णयोः कर्णिकारं बिभ्रत् बिभ्रदित्युभयत्र योज्यं लीलावशादेकमेव कर्णिकारं कदाचिद्वामे कर्णे कदाचिद्दक्षिणे च बिभ्रतीति भावः। जात्येकवचनं वा वैजयन्ती नानापुष्पपत्ररचनामयी माला वृन्दारण्यं कीदृशं स्वपदैः स्वपदचिह्नैरमणीयम्। यद्वा, स्वपदं स्वयोगाधिष्ठानं परमवैकुण्ठं तेन रमणीयं स्वतोऽपि भौमवैकुण्ठत्वाद्रमणं भगवत्प्रादुर्भावे प्रादुर्भूतादुक्तप्रकारवैभवाद्रम्याभौमवैकुण्ठत्वेन च रमणं वैकुण्ठस्य च वैधर्म्यं प्रागुक्तं तद्रमणिकं च। अथवा स्वपदादपि वैकुण्ठादपि रमणीयं किं कुर्वन् अधरसुधया वेणोरन्ध्रान् पूरयन् पुंस्त्वमार्षं यद्यपि अधरसुधया वेणोरेकमेव रन्ध्रं पूर्यते तथापि अतिशयतया एकं रन्ध्रं प्रविश्य उच्छलद्रूपतया सर्वाण्येव रन्ध्राणि पूरितानीति भावः। वस्तुतस्तु अधरबिम्बस्य शोणं महः एकमेव रन्ध्रं प्रविश्य तत्रैव बहुलीभूय रन्ध्रान्तरविवरेभ्य उद्गच्छन्तीव वेणोरमृतरूपेण ध्वनेश्च स्वरगतमाधुर्यधुर्यतया भवणयोरमृतत्वादानन्दप्रदत्वं व्यञ्जयन् ॥ ५ ॥

तदेवं वेणुरवस्य माधुर्यं वर्णयति—इतीत्यादि। इति उक्तप्रकारं राजन्निति विस्मये सम्बोधनं एक एव वेणुरवः श्रोतृणामधिकारिभेदेनानन्दवर्द्धक इत्याहुः—सर्वभूतमनोहरं सर्व-

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

शब्दः स्थिरजङ्गमादिपरः मनोहरशब्दः विकारकारिपरः तेन स्थिराणां चाञ्चल्यं जङ्गमानां स्थैर्यं यत इति भावः । सर्वभूतमनोहरत्वं प्रतिपाद्य सर्वभूतबहिर्भूतानां गोपीनां विशेषमाह, श्रुत्वेत्यादि । व्रजस्त्रिय इति, सामान्योक्तेर्बहुत्वेनैव सर्वसिद्धेः सर्वा इति तासामेव विविधत्वं वर्णयन्त्यः सत्यः परस्परम् अभिरेभिरे आलिङ्गितवत्यः सर्वभूतमनोहरं यथा स्यात्तथा वर्णयन्त्य इति वा सर्वा इत्यस्य गणवैविध्यपरत्वं गणाश्च तासां बहव एव तथा हि—

नित्यसिद्धेति सिद्धेति प्रथमं भिद्यते द्विधा ।
नित्यस्वरूपसिद्धत्वादवतीर्णा सहादिमा ॥
उपासनाभिर्बह्वीभिर्बहुभिश्च मनोरथैः ।
कृष्णप्रसादतः सिद्धा या सा सिद्धा निगद्यते ॥
नित्यसिद्धा भवेत् द्वेधाऽनूढोढाभेददर्शनात् ।
ऊढापत्युर्ममत्वैकपात्री नैवास्य सङ्गभाक् ॥
अनूढा कन्यकैवात्र भेदो नानाविधोऽनयोः ।
विलासिनः श्रीकृष्णस्य तथैवेच्छावशेन हि ॥
नित्यसिद्धाऽप्यूढता प्राक् जाता रसविशेषतः ।
कन्याः स्वरूपसिद्धाश्च पुनः कात्यायनीव्रतात् ॥
कृष्णलीलाविशेषार्थं साधकत्वमुपागताः ।
श्रुतिरूपतया काश्चिन्मुनिरूपतया पराः ॥
पूर्वं स्थिता व्रजे पश्चाज्जाता गोपकुले तथा ।
कृष्णप्रसादतो या तु सिद्धास्तादृश द्विधोदिताः ।
सुरस्त्रियो यावतीयास्ताश्च तासां प्रसङ्गतः ।
सिद्धा एव भविष्यन्ति न तासां पूर्वरूपता ॥
एषु भेदेषु मुनिनां वा विहायाभवंस्तथा ।
भौमवैकुण्ठजस्यात्ता भौम्य एव प्रिया हरेः ॥
अन्याश्चभौमवैकुण्ठप्रियाः सह महीं गताः ।
एवं भौमाभौमतया तासां भेदास्तु भूरिशः ॥
अपत्यवत्यो याः काश्चिद्दीव्यस्ता अपि तत्स्पृहाः ।
तत्तद्वपुर्विहायैव सिद्धास्तं प्रापुरञ्जसा ॥
अतः सिद्धा अपि द्वेधा प्राचीनाधुनिकत्वतः ।
मुग्धा मध्यादिभेदेन धीराधीरादिभेदतः ॥
अवस्थाभिस्तथाष्टाभिस्तासामानन्त्यमिष्यते ।
मुख्यगौणप्रभेदेऽपि पुनरानन्त्यमेव च ॥
शतकोटितया तासां संख्यां कः कर्तुमर्हति ।
अथात्र नित्यसिद्धानां नित्यं वृन्दावनस्थितिः ॥
अनुरक्ता इमाः सर्वाः वत्सलाः सांख्यमातरः ।
रसभेदेन संप्राप्ताः कृष्णस्योत्तमभक्तताम् ॥
किं पल्लवेन बहुना द्वापराश्च तदा स्त्रियः ।
कृष्णोत्सवापथं प्राप्य रत्या तं प्रापुरञ्जसा ॥

एवं स्थिते व्रजदेवीनां गणभेदे सजातीयासजातीयाभिः सह वर्णयन्त्यः परस्परमाभिरेभिर इति प्रकृतास्थितिः वर्णनोपक्रमे प्रायः प्रतिश्लोकमेव वेणुवादनलीला दृश्यत इति प्रकृति वैचित्र्यात् विविधानां वक्रीणामुक्तिमन्तव्याः तेनार्थस्यापि वैविध्यमवगन्तव्यामिति प्रथमश्लोके विविधोऽर्थो बोद्धव्यः तत्र सर्वभूतमनोहरमिति सर्वेषां चेतनानां भूतानां पृथिव्यादीनामचेतनानामिति द्वन्द्वगर्भः मनोहरशब्दो विकारकत्वं वाचयिष्यकः तेन सर्वशब्दो वत्सलत्वापरोऽपि बोद्धव्यः तेन अभिरेभिरे इत्यन्तं तत्परं वाक्यं तद्वर्णयितुमारब्धाः इत्यारभ्य विक्षिप्तमनसो नृपेत्यन्तमनुरक्तपरम् अतः स्मरवेगेन विक्षिप्तमनसः सत्यो वर्णयितुं नाशकन् अयम्भावः अर्धाहृत्यादिवैदग्धीपूर्वकं वर्णनं कर्तुं नाशकन् वस्तुतस्तु वर्णनं चक्रुरेव तेन प्रथमं वात्सल्यरसानुगुण्यं व्याख्यायते ॥ ६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ताभिर्वर्णयितुमशक्यं स्वयं तथात्वज्ञापनाय बर्हापीडमिति वाक्यार्थोऽत्र वर्णनीयः । ननु, रूपमात्र तथा सति रूपं वेणुनादः क्रीडा चेति त्रयं वर्णितं स्यात् अन्योन्यसम्बन्धे प्रकारविशेषश्च एतादृशं वपुर्बिभ्रद्वेणोः रन्ध्रान् पूरयन् वृन्दारण्यं प्राविशदिति सम्बन्धः स्वरूपगुणलीला उक्ताः क्रमेणैव बर्हं मयूरपिच्छं तदेवापीडः शिरोभूषणं यस्य वपुषः नृत्यन्मयूरानुकरणार्थं तत् च चोद्बुद्धरस एव तथेति भगवतोऽप्युद्बुद्धरसात्मकत्वं सूचितं भवत्यनेन अतो शुकेनाशक्तिरिति भावः नटवत् वरवपुः रसो हि द्विविधः धर्मसहितः केवलश्च केवलो नाट्ये प्रसिद्धः धर्मसहितः सम्भोगे भगवतो वपुरुभयविधमप्यत उक्तं नटवद्वरवदिति वरः प्रत्यक्षभोक्ता भगवांस्तु हृदयेऽपि वसते तावत्तथापि ज्ञानिनामिव न तासां सुखमिति ज्ञापयितुं वपुषो भरणं निरूप्यते । ननु, स एव तथा यथा पात्रस्थं रसं पाययितुमुद्यतः स्तत्पात्रं हस्ते बिभ्रद्भवति पुरुषस्तथा स्वरूपात्मकं रसमेतेभ्यो भक्तेभ्यो दातुमुद्यत इति ज्ञायत एतादृक् स्वरूपप्राकट्येनेति ज्ञापयितुं वपुर्बिभ्रदित्युक्तम् अथवा नटवरवपुरिति विशेष्यं पदं नटवरवपुरूपः प्राविशदिति सम्बन्धः बिभ्रत्पदस्य बर्हापीडः कर्णिकारवासोमालापदैः सम्बन्धः कर्णयोः कर्णिकारकुसुमं यस्य अलुक्सप्तमी कर्णिकारस्तु शृङ्गारोद्बोधकः शृङ्गारस्तु संयोगविप्रयोगेन द्विविधः श्रोत्रे तदुभयप्रतिपादके तयोः कर्णिकारसम्बन्धेन पूर्वं निरूपितो रस उच्छलितो भवति तादृशस्तु रसो गुप्त एव रसत्वमापद्यत इति पीताम्बरं वर्णयति कनककपिशं वासो बिभ्रदिति उद्बुद्धे रसे गोपिकावासो न गणयेयुरिति व्यामोहकत्वकनकतुल्यता निरूपिता कनकवत्कपिशं पीतमिति माया हि सा अतो यत्र वसनाकृतिरपि न सम्यगवलोकिता तत्र तेन वसनेनाच्छन्नं रसं कथमुद्घाटयेयुः ततोऽप्याच्छादिकामाह, कीर्तिमयीं वनमालां वैजयन्तीं च मालां बिभ्रदिति वै निश्चयेन सर्वजयप्रकाशिका वैजयन्ती एवं रसद्वयं तदुद्बोध आच्छादकं विक्षेपकं च रूपे निरूपितं नामलीलारूपं वेणुनादं निरूपयति—रन्ध्रान् वेणोरिति । रन्ध्रान् वेणोः सप्त सुधा त्रिविधा देवभोग्या भगवद्भोग्या सर्वा भोग्या च तत्र हेतुः शोभाम्बे अधरे स्थापिता तस्याः साक्षादनुभावो नोच्छिष्टेन सम्भवति अतः श्रोत्रपेयैव सा हि सर्वेषां भगवदीयत्वं सम्पादयति आनन्दमेव सा प्रकटा द्रवीभूता ब्रह्मानन्दादप्यधिका आनन्दसारभूता सा न कथञ्चित्साधनतामापद्यते स्वतः अतो नादब्रह्मणि तां योजयितुं नादोत्पत्तिस्थाने वेणौ तत्रापि तद्रन्ध्रेष्वमूर्तत्वात्पूरित

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नहि साक्षाद्वेणुमपि स्पृशति वेणोरित्यसमासात् वेणुमध्येऽपि सा न अतो यदा नादस्तद्द्वारा गच्छति तदा तेन सम्बन्धो गच्छति ततः कर्णद्वारा हृदये प्रविष्टा वर्णनायां मुखे समागच्छन्ती मुखमपि स्वभोगयोग्यं करोति यावच्च रसपूरेण सोऽवयवो नान्तः प्रविशति तावदपि साक्षात्तद्भोगयोग्यता न भवति एतदर्थमेव वर्णनं तद्रसप्रवेशो निरोधः सिद्धः अतः स्वल्पतरो गोपेषु भोग्यगोपीव्यतिरिक्तासु सर्वेषु च अत एव निरोधो भक्त्यनन्तरं निरूपितः मुमुक्षुत्पन्नानां भोग एतत्पर्यवसायी ततो विमोचनं स्वाश्रयप्रापणञ्च प्रत्यापत्तिः अन्यथा सृष्टिवैयर्थ्यं स्यात् अयं पुनर्ब्रह्मानन्दभावे जाते तत्राप्याधिदैविकरूपे सम्पन्ने लक्ष्म्या इव मुख्यो रसभोगः सम्भवति तदंशानां च क्रमेण अतो निरोधो महाफलः अतोऽत्र स्त्रियः प्रकरणान्ते निरूप्यन्ते भगवद्भोगानन्तरमेव भगवान् भोग्यो भवति अतोऽत्र शुकोऽपि मुख्यतया स्त्रिय एव वर्णयति, अग्निकुमाराणामप्यत एव स्त्रीत्वं न हि पुरुषोऽन्योपभोग्यो भवति स्त्र्युपभोग्यो वा परं ज्ञात्वा पाने महान् रस इति भगवतोऽग्रे गानोपदेशनिर्बन्धः मुख्यप्रापणार्थं वा दुःखदूरीकरणार्थं च अत एवाग्रे आधिदैविकीं स्त्रियं प्रार्थयिष्यन्ति अतो रूपेण वशीकृत्याधरामृतं पाययन् स्वच्छन्दतां सम्पादयति । स्वच्छन्दतामाह, गोपवृन्दैरिति वृन्दायाः स्त्रियाः अरण्यं प्राविशत् सर्वं कार्यं कृत्वा स्वच्छन्दतां सम्पादितवान् । ननु, जगति भक्तिर्न स्थापितेति कथं कृतकार्यता तत्राह स्वपदरमणमिति स्वपदानां स्वचरणानां रमणं यत्र धर्मस्थापनमाह गोपवृन्दैः सहेति अवशिष्टपुरुषार्थस्थापनमाह, गीतकीर्त्तिरिति । गीता कीर्त्तिर्यस्येति स्त्रीभावो गूढः पुष्टिमार्गे तत्त्वमिति कृष्णपदार्थः क्वचिद्विवृतः ॥ ५ ॥

अतः सर्वमेवोपसर्जनीभूतं वेणुनाद एव मुख्य इति तमेव वर्णयितुमारेभिरे गोप्य इत्याह—इति वेणुरवमिति । इति हेतोः वेणुरवमेव वर्णयितुं वेणुरवमाकर्ण्य वर्णयितुमारेभिरे इति सम्बन्धः तत्र प्रथमश्रवणे वर्णनार्थं श्रवणे च आदरं श्रवणं भवति अमुना प्रकारेणोद्गतं वेणुरवं न तु केवलं राजन्निति सम्बोधनं तद्रसानभिज्ञत्वाज्ञापनाय अनेनापि स्पष्टोऽर्थो नोक्त इति ज्ञापितं तर्हि तत्र कथं प्रवृत्तिरित्याशङ्क्य प्रमेयबलादेव भावि भवतीत्यभिप्रायेणाह सर्वभूतमनोहरमिति सर्वभूतानां मनोहरं अत एव मनोवशीकरणसमर्थम् अतः सम्यक् श्रुत्वा अभिरेभिरे व्रजस्त्रिय इति कालान्तराभावः सूचितः न हि व्रजस्त्रीणां पुरुषेषु वनं गतेषु सन्ध्यापर्यन्तमागमनसम्भावनारहितेषु प्रातरेव निवृत्तावश्यकेषु किञ्चित्कार्यमस्ति अतः सद्य एव वर्णयन्त्यः पौर्वापर्येणाभिज्ञो रेमिरे दुःखात्मकं प्रपञ्चं विस्मृत्य परमानन्दविलासं कृतवत्यः पूर्वं प्रथमश्रवणमात्रेण कामोद्दीपनमेव चित्तविक्षेपाद्यशक्तिरुक्ता ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेव तासां मनोविक्षेपकस्मरवेगजनकं कृष्णचेष्टितं किमित्यपेक्षायां श्रीशुक एव सर्वज्ञत्वाद्वर्णयति—बर्हापीडः शिरोभूषणं यत्र तथाभूतं नटवरवपुर्बिभ्रत् कर्णिकारमेकमेव कर्णयोः कदाचिद्वामे कदाचिद्दक्षिणे इति स्वस्य यौवनमत्ततामभिव्यञ्जयितुं बिभ्रदिति तु कृष्णचेष्टितं तासामतिशयेन स्मरवेगजनकं भवति वैजयन्तीं पञ्चवर्णपुष्पग्रथितां वेणुवादनमुख्यचेष्टितं—रन्ध्रानिति । तेन स्ववेणुं स्वाधरसुधयैव निश्छिद्रीकरोमीति कृष्णस्येच्छा अधरसुधा तु वेणुं निष्प्राणमपि स्वस्पर्शेन चेतयित्वा सप्राणीकृत्य तेन त्रिजगदप्युन्माद्य पश्चात्तं कठोरमचेतनस्वभावमनधिकारिणं ज्ञात्वा तदीयच्छिद्रेभ्यो निःसृत्य व्रजवालानां कर्णद्वारेण तन्मनःप्रविश्य स्वं सफलीकृत्य तत्रैव स्वमनीषिक्रमान् दर्शयामासेति ध्वनितं स्वपदयोरासक्त्यकूर्दनादिभीरमणं यत्र तदिति व्रजाद्वैशिष्ट्यं प्राविशदित्युक्तपौनरुक्त्यायैनैव न पुनरुक्तिः ॥ ५ ॥

ततश्च कतिचित्क्षणानन्तरं कृष्णचेष्टितस्मरणोत्थस्मरवेगवैयग्र्यस्योपशमे वृत्ते सति वेणुगीतं वर्णयितुं सख्यगणाकल्पीत्याह—इतीति । समाप्यवर्णकं स्मरवेगविक्षेपं समाप्ते सतीत्यर्थः । "इति हेतुप्रकरणप्रकारादिसमाप्तिषु" इत्यमरः । सर्वभूतमनोहरं ननु रामारमणमवगतमिव गोपिमात्रमनोहरं वर्णयन्त्योऽभिरेभिरे सखि ! त्वं मन्मनः प्रविश्यैवं ब्रूषे यतोऽहमप्येवं विवक्षे इति प्रत्येकमनुभवसाम्योपलब्ध्या परस्पराश्लिष्टं तासाम् ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासां यच्चेष्टितस्मरणमात्रेणैव मनःक्षोभो जातस्तत्कृष्णचेष्टितं वर्णयति—बर्हापीडमिति । गोपवृन्दैर्गीतकीर्तिः नटस्येव संयत्तं वरं वपुर्यस्य सः । यद्वा, नटस्य नृत्यप्रियस्य श्रीशिवस्य यद्वरमुपास्यं तद्वपुर्यस्य सः श्रीकृष्णः बर्हापीडं बर्हमयमापीडं शिरोभूषणं बिभ्रत् कर्णिकारादिकं च बिभ्रत् अधरसुधया वेणोरन्ध्रान्पूरयन्वेणुं वादयन् स्वपदैर्चिह्नितैः रमणं प्राविशत् ॥ ५ ॥

तदनन्तरं पुनर्लब्धधैर्याः स्वस्वसखिभ्यः अन्ववर्णयन्नित्याह इतीति । वक्ष्यमाणेन प्रकारेण वेणुरवं वेणुगीतं वर्णयन्त्यः अभिरेभिरे परिरब्धवत्यः मनसि स्फुरन्तं श्रीकृष्णमिति शेषः ॥ ६ ॥

श्रीरामकृष्णकृतप्रेममञ्जरी ।

श्रीराधावल्लभो जयति ।

बर्हापीडमिति । अथ तद्भावावेशेन मुनीन्द्रः स्वयमेव तद्विवृणोति—बर्हेति युग्मकेन । हे सखि ! वृन्दावनं प्राविशत् भाववित्रशस्त्वात्कर्तृपदानुपादानम् सर्वेति राजानं प्रति वा तद्भावावेशावेशात्मनि गोपीभावाश्च अभिनिवेशाच्च पिकुकुन्दबर्हापीडं बिभ्रत् कृष्णस्यापि तद्भावावेशेनैव चेष्टितं यथा स्थानमूह्यम् तदुक्तं कृष्णयामले "राधाप्रियमयूरस्य पत्रं राधेक्षणप्रभम् बिभर्ति शिरसा कृष्णस्तस्याश्चूडानिभं यतः" इति श्रीराधिकाया इदं मम शिरोभूषणं स्यादिति भावनया नटोऽपि

गोप्य ऊचुः ।

अक्षण्वतां फलमिदं न परं विदामः सख्यः ! पशूननुविवेशयतोर्वयस्यैः ।
वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ७ ॥
चूतप्रवालबर्हस्तबकोत्पलाब्जमालाऽनुपृक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां रङ्गे यथा नटवरौ क्व च गायमानौ ॥ ८ ॥

श्रीरामकृष्णकृतप्रेममञ्जरी ।

सामाजिकरञ्जनार्थैव तत्तद्वेषं दधाति तद्द्वयमपि स्वेषां विनोदायेति भावः । कर्णिकारं पीतवर्णमुत्पलाकारं पुष्पम् । "कार्णिकारस्तु वकुचे पीतवर्णे तथाम्बुजे" इति हेमः । तदिदं यत्र यत्र सूर्यो भ्रमति तत्र तत्र तत्सम्मुखं भवति मित्रावकश्चास्तथा साऽपि मय्यनुरक्ता स्यादिति भावनया पञ्चवर्णपुष्पग्रथितमालां वैजयन्तीम् "तुलसीकुन्दमन्दारपारिजातसरोरुहैः । पञ्चभिः पुष्पैरेतैर्वनमालाप्रकीर्तिता" ॥ अधरसुधया पूरयन् तस्या माधुर्यस्यापरिमितत्वमुक्तम् । यद्वा, अधरा नीचीना सुधा यस्याः सति परमालौकिकत्वेनाऽसाधारणत्वं पूरयन्निन्त्यौदार्यम् इदं चातिमधुरस्वरोद्गारादनुमितं सचायं वेणुरपि वाद्यविशेषरूपेण वंशीप्रियसखीति ब्रह्मसंहितोक्तेन नित्यसहचरीरूपेण चानवरतं प्रेमपरतन्त्रस्तमेवानुसरतीति तथा सति तद्रन्ध्राणां मधुरसुधया पूरणमपि भावावेशेनैवेति वृन्देति वृन्दाख्या निजसखी स्वयं प्रियतमा वा तस्या अरण्यं स्वैः असाधारणैर्ध्वजादिचिह्नैः रमणं रतिजनकं यद्वा स्वैरसाधारणैर्निकुञ्जप्रदेशैरमणं रतिप्रदम् यद्वा स्वस्याः आत्मभूतायास्तस्याः पदैः क्रीडाविशेषसूचकैः स्थानैरमणमुद्दीपकम् कथम्भूतः ? गोपवृन्दैर्गीता कीर्त्तिर्विचित्रसौन्दर्य्यवैदग्ध्यादिरूपा यस्य सः गोपेति नर्दाभिप्रायानभिज्ञत्वम् अभिज्ञत्वेऽप्यतिगोपकत्वं चाभिप्रेतमिति ॥ ५ ॥

इतीति । उक्तप्रकारेण सर्वाः कान्तभावास्सख्यभावाश्च याः परकीयाभिमानिन्यः स्वकीयाभिमानिन्यश्चेति द्विविधाः तत्राप्याद्याः प्रौढाः पराश्च मुग्धाः नपराः धन्या याः कन्याः सर्वा व्रजस्त्रियः वेणुरवं श्रुत्वा तमेव वर्णयन्त्यः भावलब्धं सर्वभूतमनोहरं तद्धादकमेवाभिभिरे, यद्वा, भावसमाहितः परस्परं तमेव मत्वा परिरब्धवत्यः भावाक्रान्तत्वादेवात्र कर्मपदानुपादानं यद्वा वेणुरवस्यैव विशेषणं सर्वत्र निजप्रियतमा स्फुरणात् तावन्मात्रेणैव सर्वासां तासां मनोहरणमिति ताश्चापि निजभावमोपनमभिप्रेतं वर्णनमाशयेणैवाभितो रतिं प्रापुरित्यर्थः । आनन्दमूर्त्तेर्गुणा अप्यानन्दरूपा इति तस्यामाध्यात्मबहिःस्फूर्त्तेरिति ज्ञेयम ॥ ६ ॥

श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

रन्ध्रान्वेणोरिति पुंस्त्वनिर्देशात् पुंवत्केरप्यधरसुधापूरणादिनाचिन्त्यं वंशीप्रेमसखी तथेति ब्रह्मसंहितोक्तेर्नित्यसहचारिणीयमात्मनो गोपनायेवात्मानं पुंस्त्वेन ख्यापयति तेन च तस्या अधरपूरणं प्रियतमाभावनया अविरुद्धमेवेतिज्ञेयम् अत्राख्यायिका कृष्णयामले कदाचिच्छ्रीराधिकागुणानामगानव्यग्रस्य स्वयं भगवतो वदनारविन्दाद्भारती देवी समुद्भूता कन्दर्पकोटिलावण्यं तमेवावलोक्य रन्तुं मनश्चक्रे ततश्च मम देहादुत्समुत्पन्ना मामेव कामितवतीति तेनानाहता जडतामवाप्ता श्रीवृन्दावनतृणराजाख्यवंशरूपतामवाप तथा तद्रन्ध्राणामधरसुधया पूरणं भावावेशेनैवेति सर्वमनवद्यमित्यर्थः । तथा हि श्रीराधानामगानैकव्यग्रगोविन्दवक्त्रतः सरस्वती समुद्भूता पुनः सा वंशिकामतेति संक्षेपः ॥ ५—७ ॥

---

भाषा टीका ।

मोर पिच्छ के मुकुट को धारण करें, मल्ल काछिनी कूं काछें श्रेष्ठ नट की नाईं वेष धारण किये, कानन में पीत कनेर के फूल खुरसें, सोने के नाईं पीत वर्ण वारे चटकीले पीताम्बर कूं धारण किये, वैजयन्ती माला कूं पहिरें बांसुरी के छेदन कूं अधरामृत सों पूरण करत, ग्वालवालन के झुण्ड जिनकी कीर्ति को गावें, एसे श्रीकृष्णचन्द्र अपने चरणन की रमण भूमि श्रीवृन्दावन में प्रवेश करत भये ॥ ५ ॥

हे राजन् ! या प्रकार सर्व प्राणीन के मनको हरनवारी बांसुरी की टेर कूं सिगरी व्रजस्त्रियें सुनकें आपुस में वर्णन करतीं २ मनसूं श्रीकृष्ण को आलिङ्गन करत भई ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुवर्णनमेवाह—अक्षण्वतामिति, त्रयोदशभिः । अक्षण्वतां चक्षुष्मतां तावदिदमेव फलं प्रियदर्शनं परमन्यत विद्मो न विद्म इत्यर्थः । तच्च फलं सखिभिः सह पशून् वनं प्रवेशयतोः रामकृष्णयोर्वक्त्रं यैर्निपीतं तैरेव जुष्टं सेवितं नान्यैरित्यर्थः । कथम्भूतं वक्त्रम् अनुवेणु वेणुमनुवर्त्तमानं तं वादयत् तथाऽनुरक्तकटाक्षमोक्षं स्निग्धकटाक्षविसर्गम् अथवा यैर्निपीतं तयोर्वक्त्रं तैर्यज्जुष्टमिदमेवाक्षण्वतामक्ष्णोः फलमिति ॥ ७ ॥

अन्या आहुः—चूतेति । चूतप्रवालादीनां विचित्राभिर्मालाभिरनुपृक्ते ईषदन्तरान्तरतः सम्युक्ते परिधाने नीलपीताम्बरे ताभ्यां विचित्रो वेषो ययोस्तौ क्व च कदाचित्पशुपालगोष्ठ्यां गोपालसभायां मध्ये अत्यर्थं विरेजतुः अहो गोपालपुण्यमिति भावः ॥ ८ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

श्रीगोप्य ऊचुरिति तेषामसम्मतं लक्ष्यते अनुवर्णनमेवाहेति लिखितत्वात् अन्यथा गोप्य ऊचुरित्यनन्तं वर्त्तमानस्य अध्यवतामित्यादेराभाषात्तिखने आर्हतिलेखायोग्यत्वात् किन्तु तत्पाठः सर्वत्रैव दृश्यते—

यासां वुद्धयेन वागर्थौ यासामेव प्रसादतः ।
गोपीःप्रपद्ये ता याभिः भगम्भीराशयोज्जितः ॥

इदमित्यस्यादौ निर्देशः वाक्यमाणार्थस्य परमफलरूपस्य सुगोप्यत्वेन सहसा प्राक् प्रकाशनायोग्यत्वात् यद्वा हृदयमाक्रान्ते तस्मिन् प्रेमभरोदयवैवश्येन सद्यस्तस्य विशेषनिर्देशाशक्तेः परं श्रीवृन्दावनादिपरमाश्चर्यदर्शनं तस्य चान्यैः सहितस्यान्यदान्यथा वा दर्शनमक्ष्णोः फलं न विद्मो वयम् अन्ये जनास्त्वन्यज्जानं तु नामेत्यर्थः । एषां सोल्लुण्ठोक्तिः अतोऽस्माकं चक्षुःसाफल्यं न किमपि वृत्तं तदानीं तथा दर्शनाभावादिति भावः । यद्यपि यत्र यदा तदा येन तेन प्रकारेण तद्वक्त्रनिपानमेव चक्षुःफलं व्रजान्तस्तु तासां तद्दर्शनं सुष्ठु फलत्येव तथापि वनविहारे तथा तद्दर्शनौत्सुक्येन तथोक्तम् अयमेव हि निर्भरप्रेम्णोऽतृप्तार्त्तिनिशेषलक्षणस्वभावः हे सख्यः ! इति युष्माभिरेतन्नितरां ज्ञायत एवेति भावः । अनुपश्चात् स्थित्वा यद्वा वनाद्वनान्तरं विशेषेण प्रवेशेन सङ्केतमधुरशब्दादिना प्रवेशयतोः व्रजेशौ श्रीनन्दवसुदेवौ "वसुदेव इति ख्यातो गोषु तिष्ठति भूतले" इत्यादि श्रीहरिवंशोक्तानुसारेण श्रीवलदेवस्यापि तत्सुतत्वं श्रीकृष्णसाहचर्यतः पुष्टपुत्रत्वाद्वा यद्यपि श्रीकृष्णस्यैव वेणुगीतादिवर्णनप्रसङ्गे ऽत्राग्रजस्योपयोगो न स्यात् तथापि तत्साहित्येन श्रीकृष्णस्य शोभाविशेषविवक्षया किं वा श्रीकृष्णविषयकनिजभावविशेषस्य स्वाभाविकलज्जयाच्छादनाय साधारण्येन द्वयोरप्युक्तिः एवमग्रेऽपि तयोर्द्वित्वेनापि वक्त्रस्यैकत्वं नित्ययुगलत्वादिना वर्त्तमानानामप्यङ्गानां जात्यापेक्षया एकत्वादिनापि स्वत एव युगलत्वादिप्राप्तेः इदं च पूर्वमपि विवृतमस्ति "प्रपिवतोः स्म मुखम्" इत्यत्र यद्वा व्रजेशसुतयोर्मध्ये वेणुजुष्टं वक्त्रं यैर्निपीतं श्रीकृष्णस्य वक्त्रमेव वेणुजुष्टतया प्रसिद्धं नितरां पीतमित्यनेन वक्त्रस्य सुधामयचन्द्ररूपत्वं ध्वन्यते वै प्रसिद्धम् अन्यत्रैव्याख्यातं यद्वा छन्दांसि "स्ववहिताश्च" ( १४ ८२ ) इति न्यायेन परिचरन्तीत्यादिवत् अनु निरन्तरं वेणुना जुष्टं सेवितमिति अनुरूपेण वेणुना जुष्टमिति वा अथवा वैशब्दः समुच्चये मानिनामनुतापं वै इति वत् वेति पाठोऽपि क्वचित् यैर्निपीतं सादरं सम्यक् दृष्टं तथा स्निग्धकटाक्षमोक्षं यथा स्यात्तथा जुष्टं चामरादिवीजनेन सम्मार्जनादिना च सेवितम् यद्वा अनुरक्तजनानां युष्माकं कटाक्षमोक्षो यस्मिन् किं वा अनुरक्तः कटाक्षमोक्षो यस्य तदिति सेवायां सुखविशेषसम्पत्तिहेतुः तेषाम् अक्षण्वताम् इन्द्रियवताम् इदं निपानं ज्योत्स्ना एव फलं सर्वेन्द्रियसाफल्यं विद्मः नचान्यत् किमपि तन्निपानेन दृष्टेः साफल्येन साक्षात्कारस्य च परमफलरूपतया सर्वेन्द्रियकर्म्मसाफल्यसिद्धेः विशेषतश्च वीजनस्य स्पर्शनादिसेवया त्वगादीनामपि नितरां साफल्यसुसिद्धेः सर्वेन्द्रियाणामिव साफल्यं सिद्धम् । अथवा इदमेव परं परमं केवलं वा फलं न विद्मः, किं तत् ? जुष्टं प्रीत्या दृष्टं वत् । तर्हि किं परं फलम् ? तदाहुः, यैरधरामृतपानरूपं फलं इदमेव परं फलं विद्म इत्यर्थः । "जितं सर्वं जिते रसे" इत्यादिन्यायेन मुखस्य रसनेन्द्रियस्य तन्निपानेन साफल्यसिद्ध्या विशेषतश्च सर्वफलवर्गपूज्यतदधरामृतपानसम्पत्त्या सर्वेन्द्रियाणामेव साफल्यस्य स्वतः सुसिद्धेः अतस्तदानीमस्माकं तदप्राप्त्या सर्वमेव व्यर्थमिति भावः । एतच्चात्यन्तोत्कण्ठयोक्तम् । यद्वा, वक्त्रं जुष्टं यत् इदमेव चक्षुष्मतां चक्षुःफलं त्वर्थे वैशब्दः यैस्तु जनैः रसनेन्द्रियैर्वा निपीतं तेषां फलं किं वक्तव्यमिति शेषः । तत्स्मरणमात्रेण वाष्परुद्धकण्ठतया व्यक्तं वक्तुमशक्तेः किं वा विदग्धजनवर्गपूज्यपादानां तासां प्रेमोक्तिगाम्भीर्यस्यैव तादृशस्वभावात् अन्यत् समानम् ॥ ७ ॥

चूतस्य प्रवालो नवपल्लवः स्तवकः पुष्पगुच्छः पशुपालानां गोष्ठ्यां मण्डल्यां तत्रापि मध्ये अतो विशेषेण तेषु पृथक् पृथक् तत्तच्छोभाप्रकटनेन किं वा विविधं रेजतुः शुशुभाते यथा नटवरौ रङ्गे विराजेते इति दृष्टान्तेन तयोर्नृत्यादिकं स्वाच्छन्द्यसुखादिपरत्वं च ध्वन्यते अन्यथा नृत्यादिशोभाया असम्पत्तिः क्व कदाचिदिति क्रीडावशेन सदा मध्येऽनवस्थानात् अलमिति कदाचित् पित्रोरकस्मादपि वान्तिके तस्यावस्थितावपि सङ्कोचेन तादृशगानाद्यभावाद्विराजनासम्पत्तेः अन्यत्सैव्यञ्जितं, यद्वा प्रतिश्लोकं वक्त्रीभेदमकल्पयित्वा गोष्ठीभेदेन श्लोकानां सङ्गतिः क्रियते तत्राद्यैः पद्भिरेकस्या गोष्ठ्या वाक्यम् अन्यथा सप्तमश्लोके वर्णयाभ्यो गोभ्यः षष्ठश्लोकोक्तदेवीनां माहात्म्यापत्त्या विवक्षितासिद्धिः । यद्वा, गोष्ठीभेदमप्यकल्पयित्वा सर्वासामेव तासां वाक्यत्वेनाक्रमतः सर्वश्लोकानां मिथः सम्बन्धः कार्य्यः । तथा हि अतो गोपानामेव तेषां चक्षुःसाफल्यं तदानीं तथा तद्वक्त्रदर्शनादिति पूर्वश्लोकाभिप्रायः न केवलं तेषां तद्दर्शनमात्रं वनमध्ये वर्ण्यविचित्रवेषयोस्तयोर्निजमण्डलीमध्ये स्वाच्छन्द्येन नृत्यगीताद्यनुभवश्च सुखं स्यादित्याहुः—चूतेति । गायमानौ वेणुनैव गायन्तौ यद्वा गायेन मानेन मानः पूजा ययोः सर्वतो विशिष्टमानात् क्वचिदिस्यस्यात्रैव गान्वयः नृत्यादिश्रमेण सदा गानाकरणात् यद्वा कदाचिद्गायमाने मानः आवाभ्यां समो युष्मासु को गायकोऽस्ति अत्रागत्य इत्थं गायत्वित्यादिप्रकारो गर्वो ययोस्तौ अयं च क्रीडामाधुरीविशेषः अतो गोपा एव धन्याः वयं तु नितरामधन्या एव तेन प्रकारेण तयोरस्मन्मध्येऽत्र लोकभयादिनाऽसङ्कोचेनाऽवस्थानाद्यसिद्धेः एवमग्रेऽपि वाक्यशेष ऊह्यः तद्वदुल्लिखित एव ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीगोप्य ऊचुरिति तेषामसम्मतं लक्ष्यते अनुवर्णनमेवाहेति लिखितत्वात् पुनरुक्तत्वेन एकत्वायोग्यत्वेन च तदनङ्गीत किन्तु सपाठः सर्वत्रैव दृश्यते "यासां वुद्धयेन वागर्थौ यासामेव प्रसादतः । गोपीः प्रपद्ये ताः याभिः सगम्भीराशयोज्जितः" अथ पूर्वोक्तानुसारेणाऽवाहित्थया राममहितमेव वर्णयन्त्योऽपि स्वभावव्यञ्जितार्थविशेषेण तथा न शेकुरिति दर्शयति—अक्षण्वतामिति । अत्र तेषां व्याख्या सङ्गतिः क्रियते चक्षुष्मतां तावदिदमेव फलं विद्मः परमन्यत् प्रियदर्शनमपि फलं न विद्मः नान्यदमिति किन्तत्राह—वक्त्रेत्यादि । निपीतमनुभूतं जुष्टमास्वादितम्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अक्षण्वतीति यैर्निपीतं तयोर्वक्त्रं तैर्यज्जुष्टं तदिदमेव तेषामक्ष्णोः फलमित्यर्थः। उभयत्र तेषामेवास्वादविषयत्वादिति कथमन्ये बोधयितुं शक्नुयुरिति भावः। किञ्च, विशेषतया निर्देशमकृत्वा प्रथममिदं तथैव निर्देशः सुगोप्यत्वेन सहसा नामप्रकाशनायोग्यत्वात्। यद्वा, प्रेमभरोद्भववैवश्येन सद्यस्तद्विशेषनिर्देशाशक्तेः परमन्यत् सर्वं पशूनित्यादिना तथा तस्य चान्यैः सहितस्य अन्यदा अन्यथा वा दर्शनमपीति विवक्षितं तयोरक्ष्णोः फलं न विद्मा वयमिति अन्ये जनास्त्वन्यत् जानन्तु नामेत्यर्थः। एषा सोल्लुण्ठोक्तिः अतोऽस्माकं चक्षुस्साफल्यं न किमपि वृत्तं तदानीं तथा तद्दर्शनाभावादित्यर्थः। यद्यपि यत्र तत्र यदा तदा येन तेन प्रकारेण तद्व्रजजोषणामेव चक्षुःफलं व्रजान्तस्तु तासां तत् सुष्ठुफलत्वेन तथापि वनविहारे तथा तद्दर्शनौत्सुक्येन तथोक्तम् अयमेव हि निर्भरप्रेम्णोऽतृप्त्यार्त्तिविशेषलक्षणः स्वभावः हे सख्यः! इति युष्माभिरेतन्नितरां ज्ञायत एवेति भावः। अनु पश्चात् स्थित्वा वनाद्वनान्तरं वा विशेषेण प्रवेशेन सङ्केतमधुरशब्दादिना प्रवेशयतोः व्रजेशौ श्रीनन्दवसुदेवौ "वसुदेव इति ख्यातो गोषु तिष्ठति भूतले" इत्यादि श्रीहरिवंशोक्तानुसारेण वसुदेवस्यापि बहुलगोपसमृद्धेः व्रजेशो गोपराजः श्रीनन्द एव तस्य सुतयोः श्रीबलदेवस्यापि तत्सुतत्वव्यवहारो दर्शित एव "भ्रातर्मम सुत" इत्यादौ "तातं भवन्तं मन्वानः" इति श्रीवसुदेवोक्तेः अत एव तस्य पुनर्व्रजागमने "रामोऽभिवाद्य पितरावाशीर्भिरभिनन्दितः" इति वक्ष्यते अथ "स्मरन्त्यः कृष्णचेष्टितम्" इति दर्शितम् स्वभावदर्शनार्थौ यथा व्रजेशसुतयोर्मध्ये अनुपश्चात् वेणुजुष्टं वक्त्रं यैर्निपीतं श्रीकृष्णस्य वक्त्रेणैव वेणुजुष्टतया पश्चाद्भावेन कनिष्ठतया च प्रसिद्धम् अत एवैकत्वं नितरां पीतमित्यनेन वक्त्रस्य सुधामयचन्द्ररूपकत्वं ध्वन्यते वै प्रसिद्धं यद्वा छन्दसि "व्यवहिताश्च"(१।४।८२) इति न्यायेन अनुनिरन्तरं वेणुना जुष्टं संवितमिति अथवा वै शब्दः समुच्चये "मानिनामनुतापं वै" इति वत् वेति पाठोऽपि क्वचित् यैर्निपीतं सादरं सम्यक् दृष्टं तथा स्निग्धकटाक्षमोक्षं यथा स्यात् तथा जुष्टं च, यद्वा, अनुरक्तजनानां युष्माकं कटाक्षमोक्षो यस्मिन् ( किंवा अनुरक्तजनेषु कटाक्षमोक्षो यस्मिन् ) किंवा अनुरक्तजनेषु कटाक्षमोक्षो यस्य तदिति सेवायां सुखविशेषसम्पत्तिहेतुः तेषां अक्षण्वताम् इन्द्रियवताम् इदं निपानं जोषणं चैव फलं सर्वेन्द्रियसाफल्यं विद्मः नान्यत् किमपि तन्निपानादिरूपस्य परमफलरूपतया सर्वेन्द्रियकर्मसाफल्यसिद्धेः अयमपि निगूढोऽभिप्रायः इदमेव परं केवलं फलं न विद्मः किन्तत् जुष्टं प्रीत्या दृष्टं यत् तर्हि किमन्यत् फलं तदाहुः यैरधरामृतपानद्वारा निपीतं तेषां तन्निपानरूपं फलम् इदमेवेति। यद्वा, वक्त्रजुष्टं निपीतं यत् इदमेव चक्षुष्मतां चक्षुःफलं स्वर्गे वैशब्दः यैस्तु जनैः रसनेन्द्रियैर्वा निपीतं तेषां फलं किं वक्तव्यमिति शेषः। तत्स्मरणमात्रेण वाष्परुद्धकण्ठतया स्पष्टं वक्तुमशक्तेः किंवा विदग्धजनवर्गपूज्यपादानां तासां प्रेमोक्तिगाम्भीर्यस्यैव तादृशस्वभावात् अन्यत् समानम् ॥ ७ ॥

तदेवमप्यर्थान्तरेण निजभावव्यक्ति वितर्क्य पुनर्बाढावधानेन द्वितीयपद्ये नामपलेपुः पुनस्तु परमस्मरवेगेन तृतीयेन शेकुः चतुर्थादौ न किञ्चिदपि शेकुरित्याह—पञ्चभिः। चूतस्य प्रवालो नवपल्लवः स्तबकः पुष्पगुच्छः तत्र चूतपल्लवो बर्हं स्तबकश्च शीर्ष्णि उत्पलं तदन्तःकोशः कर्णयोः अब्जं लीलाकमलं दक्षिणकरे एतानि च मालानुपृक्तपरिधानानि च यानि तैर्विचित्रवेषौ पशुपालानां गोष्ठ्यां मण्डल्यां तत्रापि मध्ये अतो विशेषेण तेषु पृथक् पृथक् तत्तच्छोभाप्रकटनेन किंवा विविधं रेजतुः शुशुभाते यथा नटवरौ रङ्गे विराजेते इत्यादिदृष्टान्तेन तयोर्नृत्यादिकं स्वाच्छन्द्यसुखादिकञ्च गोपानामपि तादृशवेषवैदग्ध्यादिकं वाद्यादिपरत्वं च ध्वन्यते अन्यथा नृत्यादिशोभाया असम्पत्तेः क्व च कदाचित् इति क्रीडावशेन सदामध्येऽवस्थानात् अलमिति व्रजमध्ये तु विविधसङ्कोचेन तादृशगानाद्यभावाद्विराजमानतामसम्पत्तेः। अथवा अत्र पद्यपञ्चके सर्वासामेव तासां वाक्यत्वेन क्रमतः सर्वश्लोकानां मिथः सम्बन्धः कार्यः तथा हि अतो गोपानामेव तेषां चक्षुःसाफल्यं तदानीं तथा तद्वक्त्रदर्शनादिति पूर्वश्लोकाभिप्रायः न केवलं तेषां तद्दर्शनमात्र वनमध्ये सर्वविचित्रवेषयोस्तयोर्निजमण्डलीमध्ये स्वाच्छन्द्येन नृत्यगीताद्यनुभवश्च सुखं स्यादित्याहुः—चूतेति। गायमानौ गायन्तौ यद्वा गायेन गानेन मानः पूजा ययोः सर्वतो विशिष्टगानात् क्वचिदित्यस्यात्रैव चान्वयः। नृत्याद्यावेशेन सदा गानाऽकरणात् यद्वा कदाचिद्गायमाने मानः आवाभ्यां समो युष्मासु को गायकोऽस्ति अत्रागत्य हन्त गायत्वित्यादिप्रकारो गर्वो ययोस्तौ अयं च क्रीडामाधुरीविशेषः अतो गोपा एव धन्याः वयं तु नितरामधन्या एव तेन प्रकारेण तयोरस्मन्मध्येऽत्र लोकभयादिना स्वच्छन्दावस्थानाद्यसिद्धेः एवमग्रेऽपि वाक्यशेष ऊह्यः तद्धेतुर्लिखित एव ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अक्षण्वतां चक्षुष्मताम् ॥ ७ ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वर्णनामेवाह—अक्षण्वतामित्यादिना यावदध्यायसमाप्ति इतीत्यस्य वक्ष्यमाणप्रकारेणेति वाऽर्थः तदा तमेव प्रकारमक्षण्वतामित्यादिना दर्शयति; हे सख्यः चक्षुष्मतां जनानां चक्षुषामिदमेव फलमन्यत्तु न विद्मः, किं तत्? व्रजेशस्य नन्दस्य सुतयोः रामकृष्णयोर्वक्त्रं मुखं यैर्नितरां पीतमनुभूतं दृष्टमिति यावत् तदेतत् यैर्वा निपीतमिति पाठः यैस्तैर्निपीतमिति च पाठो दृश्यते तदा यैश्चक्षुर्भिः साधनैस्तैरक्षण्वद्भिः कर्तृभिर्निपीतमित्येतदर्थः। कथम्भूतयोर्वयस्यैः समानवयस्कैः गोपैः सह पशूननुविवेशयतोः वनं प्रतिप्रवेशयतोः कथम्भूतं वक्त्रम्? अनुवेणु वेणुमनुवर्त्तमानं वेणुं वादयदित्यर्थः जुष्टं पश्यतां निरतिशयप्रीतिविषयमनुरक्तानां स्निग्धानां कटाक्षाणां मोक्षो विसर्गो यस्मिंस्तथाभूतम् ॥ ७ ॥

अन्यास्त्वाहुः—चूतेति। एवमुत्तरत्रापि अत एव सर्वत्र वक्तृभेदाज्ज्ञातीव सङ्गतिरपेक्षिता चूतपल्लवादीनां मालाभिरनुयुक्तं परिधानं ईषदन्तरान्तरा संयुक्ते अनुपृक्तेति पाठे स एवार्थः परिधाने नीलपीताम्बरे ताभ्यां विचित्रौ वेषौ ययोस्तौ क्व च कदाचिद्गायमानौ गोपसभायां मध्ये नितरां विरेजतुः यथा रङ्गे नटश्रेष्ठौ तथा अहो पश्यतां गोपानां महद्भाग्यमिति भावः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपस्त्रीणां वर्णनप्रकारं दर्शयति—अक्षण्वतामित्यादिना । व्रजेशसुतयोः रामकृष्णयोर्वक्त्रं नितरां पीतं दृष्टिभिरिति शेषः । तेषां तेषामक्षण्वतां चक्षुष्मतां चक्षुषामिदं फलं वयं विदामो न परं नान्यत् फलम् अन्यस्य नरकदुःखफलहेतुत्वात् हे सख्यः ! कीदृशयोर्वयस्यैः पशूनभिनिवेशयतोः अनुसन्ध्यं गोष्ठे इति शेषः अनुवेणोः पश्चाद्भागे जुष्टं चुम्बितम् अनुरक्तः स्निग्धः कटाक्षमोक्षो यस्मिंस्तत्तथा ॥ ७ ॥

चूतस्य प्रवालादिभिः अनुरक्तपरिधानेन विचित्रः नानाविधः वेषो ययोस्तौ तथा अनुरक्तम् अनुरागोपेतं पशुपालगोष्ठ्यां गोपगोष्ठ्यां मध्ये गवां समष्टिः संघातो गोष्ठचशाला च कथ्यते इत्युत्पलमाला क्व च क्वचित्स्थले गायमानौ तिष्ठत इति शेषः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

व्रजस्त्रियः सर्वा इति सर्वशब्दस्य सामान्यवचनत्वात् नात्र विरोधः, तदेव किमित्याह—अक्षण्वतामित्यादि । हे सख्य इति समानवासनाः प्रतिसम्बोधनम् अक्षण्वतां चक्षुष्मताम् इदं फलम् इदमेव फलमिति भावः । न परं नान्यत्, कुतः ? विदामः सर्वानुभव एव प्रमाणं किं तदित्याह पशूनित्यादि वयस्यैः सह पशूननुविवेशयतोर्व्रजेशसुतयोर्वक्त्रं यैर्निपीतं तयोरक्षिकरणकं वक्त्रपानमेवाक्षिमतां फलमिति वाक्यार्थः कीदृशम् अनु अनुक्षणं वेणुना जुष्टं सेवितमिति रामकृष्णयोरेव वात्सल्यात् द्विवचनेनोपपादनमिति श्रीकृष्णे वनं गते सखिमातरोऽपि पुत्रादिकं विस्मृत्य वात्सल्यात्तमेव वेणुवादनलीलापूर्वकं गवाश्रयतावनुस्मरन्त्य ऊचिरे एवमनुरक्ताश्चानुवर्णयन्ति—तथा हि, हे सख्यः स्वजातीयाः प्रति सम्बोधनं व्रजेशसुतयोर्मध्ये अनुवेणुजुष्टं वक्त्रं यैर्निपीतं तेषाम् अक्षण्वताम् इदं वेणुजुष्टवक्त्रपानमेव फलं तासां रामे रत्यभावात् निर्द्धारणेन श्रीकृष्णविषयमात्ररतिमत्त्वं दर्शितम् अनुगतवेणुजुष्टत्वेन कृष्णवक्त्रस्यैव प्रसिद्धेः एवमनुरक्तानां मध्ये ज्येष्ठकनिष्ठभेदात् या द्विधा अन्यास्तासामेव मध्ये सखीभावेन कनिष्ठाभिमानिन्यो राधानुचर्य एव सजातीयाभिरन्याभिरतीतोभयसंयोगलीलां वनं गते कृष्णे तद्गतचित्ततया वर्णयन्ति उभयोः सख्यः ननु विचित्रं इदमेव अक्षण्वतां फलमिति पूर्ववदेव किन्तादृशं आह—व्रजेशसुतयोः व्रजेशो नन्दः व्रजेशा वृषभानुः व्रजेशश्च व्रजेशा च व्रजेशावित्येकशेषः पुनः सुतश्च सुता च सुतौ पुनः षष्ठीतत्पुरुषः यथासङ्ख्यतया व्रजेशसुतयोरिति कृष्णराधयोर्वक्त्रं यैर्निपीतम् एकत्वं जातिविवक्षया कीदृशम् अनुवेणु अनुगतो वेणुर्येनेति श्रीकृष्णमुखविशेषणं जुष्टं सेवितं अर्थाच्छ्रीकृष्णेनेति श्रीराधावक्त्रविशेषणम् अनुरक्तानां कटाक्षाणां मोक्षो यस्मात् द्वयोरेव विशेषणं कीदृशयोः पशुविवेशयतोः अन्योन्यवेशं प्रापयतोः "चादयोऽसत्त्वे"(१।४।५७) इति चादिमध्ये पशुशब्दपाठादसत्त्वइति पश्वादिष्वावरयं वेशगेवाभिभक्तं पशुशब्दोऽव्ययो वेशवाचनायां पशुनरगोमहिष्यादिषु इत्यादिकाशान्तर प्रयोगश्च क्रीडा यत्र "प्रकरमकरीपाशुपाल्यं हि वृत्तः" इति लोके च पशुपालो वेषकारीति वयसि भवं वयस्यं यशस्यादिवत् लावण्यमिति यावत् अनुरागविकारप्रतिघातैः करणे विशेषणे वा तृतीया ॥ ७ ॥

अन्या वात्सल्यया एवोचुः—चूतप्रवालेत्यादि । पशुपालगोष्ठ्यां तौ रामकृष्णौ विरेजतुरिति तच्छब्दोऽध्याहार्यः कस्मिन् काचित् रङ्गे नृत्यस्थले नटवराविव कीदृशौ चूतेत्यादितुल्यम् अयं अर्थः यद्वा पूर्ववद्राधासहचर्यो वेव तौ व्रजेशसुतौ पूर्ववत्समासः कुत्र पशुपालगोष्ठ्यां पशुपाः पशुपालयो वेषकर्यः सहचर्यस्ताला तीति तथा साचासौ गोष्ठी चेति पुंवद्भावे पशुपालगोष्ठी तस्यां कस्मिन् काचित् नटवरौ नटनं नटः नटं नृत्यं वरो नटवरः नटवरा च नटवरश्च नटवरौ ताविव तुल्यमन्यत् इदं तु राधायाः परोक्षमेव मन्तव्यम् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोप्य ऊचुरिति न टीकासम्मतम् अनुवर्णनमाहात्म्ये पुनरुक्त्यापातात् एकत्वायोग्यत्वाच्च ॥ ७ ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत उक्तसुधायामन्तःपूर्णायामत्याधिक्येन परितो गलनरूपं वर्णनमिति पश्चात्तदुक्तम् अनुवर्णनमेवाह—अक्षण्वतामिति त्रयोदशभिः—

> रसत्रयार्थं त्रितयं वेणुपूरणमेकतः ।
> स्वच्छन्दपादगमने हेतुश्चापि तथापरः ॥
> चतुर्भिः पीठकैव स्यात् षड्भिर्वर्णास्तु वादनम् ।
> द्वाभ्यां भक्तेः प्रतिष्ठा च दोषः स्याद्वर्णनेऽन्यथा ॥
> वैपरीत्यात्समाधानमन्यथा स्यात्तु दूषणम् ।

तत्र प्रथमं यद्वर्णयितुमारब्धं तत्राशक्तौ शुकेन तद्वर्णितं चतुर्भिस्तद्वर्णयन्ति तत्र प्रथमं स्वरूपतो रसात्मकं भगवन्तं वर्णयन्ति अक्षण्वतामिति । अक्षण्वतामिन्द्रियवतां चक्षुष्मतां वा इदमिति स्वहृदये मनोरथप्रकारेण प्रतिभानम्—

> भगवता सह संलापो दर्शनं मिलितस्य च ।
> आश्लेषः सेवनं चापि स्पर्शश्चापि तथाविधः ॥
> अधरामृतपानं च भोगो रोमोद्गमस्तथा ।
> तत्कूजितानां श्रवणमाघ्राणं चापि सर्वतः ॥
> तदन्तिकगतिर्नित्यमेवं तद्भावनं सदा ।
> इदमेवेन्द्रियवतां फलं मोक्षोऽपि नान्यथा ॥
> यथान्धकारे नियता स्थितिर्नाक्ष्णोः फलं भवेत् ।
> एवं मोक्षोऽपीन्द्रियाविमुक्तानां सर्वथा न हि ॥
> बाधकानां परित्यागे साधकानां न लङ्घयेत् ।

तदाह—न परं विदाम इति । परो मोक्षः सायुज्यादिः ननु "आत्मलाभान्नपरं विद्यते" इति श्रुतेः । कथं न परस्य पुरुषार्थत्वं ? तत्राहुः—विदाम इति । वयमप्युपनिषद्रूपाः अतो वयमेवं जानीम न ह्यनुभवविरुद्धम् अनुभवापर्यवसायि फलं श्रुत्युक्तं भवति ततः केवलानां तदेव फलम् इन्द्रियवतां स्वतोऽपि व्यपरिगततारफलः

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अस्मिन्नर्थे श्रुत्यन्तररूपाणां गोपिकानां सम्मतिमाहुः, हे सख्य इति। समानशीलव्यसन एव सख्य (इति) पदप्रयोगात् अतः श्रुत्यन्तरसम्मतिरप्युक्ता एतत्फलसाक्षिद्वोऽपिकानामेव भवतीति सर्वेषां साधारणं पक्षमाहुः चक्षुष्मताम् अस्मिन्पक्षे अक्षण्वत्पदं चक्षुष्मत्पदपरं ज्ञेयम्, तेनास्याऽऽवृत्तिर्ज्ञेया पशूननु पशूनां पश्चाद्भागे वयस्यैः सह वनं पशून्निवेशयतोः रामकृष्णयोः वक्त्रमेकं यैर्वा निपीतमिति वेत्यनादरे मुखपद्मापेक्षयेदं गौणमिति ये तु कालेन तुल्याः तैः सह पशूनेतद्रसानभिज्ञान् वनं प्रवेशयति भगवान् निर्गुणावस्थाधिकाराभावे सात्त्विकावस्थाया युक्तत्वात् भगवतो लीलायां कालो निमित्तं गोपानां लीलायाश्च तदाधारत्वे निमित्तमिति वयस्यता तदा तैः पशूनां वने निवेशनं तैः सह वा समानकालैः वने निवेशनं भगवतो वा सहभावः तथा सति वननिविष्टानां पशूनामपि गोपानां अग्रे तत्स्थाने निवेशनार्थम् आविष्टस्य मुखारविन्दं न स्पष्टमिति भगवत एव मुखमुभयरूपस्यापि मुखं चक्षुर्द्वारा यैस्तदन्तःप्रवेशितं "तत्सर्वं व्यापकं चित्तमाकृष्यैकत्र धारयेत्। नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम्" इति वाक्यात्। किञ्च, एता हि स्वहृदि भावितं निरूपयन्ति तथा च साधारणपक्षत्वेन सामान्यतो बलभद्रस्य निरूपणेऽपि मुखनिरूपणप्रस्तावे अन्यमुखमेतासां हृदि नायातीत्येकमेव तन्निरूपितं मुखस्यैकत्वं प्रतिपादयन्त्य ईश्वरत्वेनाराधनबुद्ध्या अनुरोधबुद्ध्या वा येषां पानं तत्सापेक्षमित्यनादरे हेतुमाहुः-व्रजेशसुतयोरिति। न हि बलभद्रो व्रजेशस्य पुत्रः आवेशपक्षे तु कृष्ण एवाविशतीति युक्तमेव तयोर्व्रजेशसुतत्वम्, अनादरे लौकिकसापेक्षदर्शनं हेतुः अन्ये पुनर्गीतरसाभिज्ञाः वेणुनादश्रवणार्थं भगवन्मुखारविन्दं पश्यन्ति तदाह-अनुवेणुजुष्टमिति। वेणुम् अनु लक्षीकृत्य यद्वर्त्तते तदनुवेणु वेणुवादनपरं तत् यैर्जुष्टं यैर्वा निपीतमिति सेवनं निदर्शनं पानमन्तःप्रवेशनं केवलं शब्दग्रहणं मनोहरत्वात् शिक्षार्थं वेति विकल्पः अनादरस्तु स्वरागादेवायाति एवं मनोहरत्वात् नादाविष्टत्वात् वा भजनमुक्तं कामसम्बन्धादपि भजनस्यापेक्षिकमिति विशेषणान्तरमाह—अनुरक्तकटाक्षमोक्षमिति। अनुरक्तानां कटाक्षाणां मोक्षो यत्र एतच्चक्षुष्मतां फलमिति निर्गुणसगुणाभेदा निरूपिताः ॥ ७ ॥

केवलरसरूपमाह—चूतेति। चूतानामाम्राणां प्रवालाः कर्णयोः बर्हस्तबकाः बर्हगुच्छानि शिरसि उत्पलाब्जानां माला कण्ठे तैः अनुपृक्तं मिलितं परिधानं पीताम्बरादिवस्त्राणि तैः विचित्रो वेषो ययोः एतादृशावुभावपि पशुपालगोष्ठ्यां मध्ये विरेजतुः रसाभिनये अवतारवदेवावेशस्याप्युपयोगाद्द्विवचनम्—

गुणा माया च वेषार्थमुपयुक्ता भवन्ति हि।
अतो रसस्याभिनये चत्वारोऽर्था निरूपिताः ॥
रसरूपसुगन्धानां प्रतिष्ठा त्रिषु निश्चिता।
धर्म्याच्छादनबोधाय मायाऽप्यत्र निरूप्यते ॥
वस्तुनिर्देशमात्रेण श्रोतॄणां काव्यवद्भ्रमः।
रसतत्त्वप्रबोधाय प्रथमं पल्लवो मतः।
शास्त्रार्थस्य परिज्ञानात् भावस्य कलिका भवेत् ॥
ततस्तस्य च वैचित्र्यं पुष्पस्थानमिहोच्यते।
अहोरात्रं वासनास्यात्तत आच्छादनं स्मृतम् ॥
रसोत्पत्त्यर्थमेतावन्निरूपितमिति स्थितिः।
आविर्भावे रसास्वादात् नृत्यं शोभा ततो भवेत् ॥
एतोऽतिगुप्तो भगवान् रसत्वं प्रतिपद्यते।

विचित्रवेषाविति सर्वरसाभिनिवेशार्थं त्रयाणामन्योन्यगुणप्रधानभावेन रसा भवन्ति एवं रसरूपं भगवन्तं निरूप्य तद्रसपोषकौ समाजे वाद्यगीतविशेषौ निरूपयति–मध्ये विरेजतुरिति। पशुपालानां गोष्ठीनामत्यन्तं गूढा तेन रसस्य सुलभत्वं निरूपितं मध्ये गीतवाद्ययोः त्रयाणां समानतैव सर्वोत्तमा नृत्यस्य तु विशेषः प्रविष्ट एवेति तदेवोक्तं कादाचित्कानिषेधार्थमलमिति शास्त्रमत्रानियामकं न भविष्यतीत्याशङ्कयाह-दृष्टान्तं रङ्गे यथा नटवराविति। रङ्गः शास्त्राधारभूतं स्थानं रङ्गमण्डपे यथा नटौ शास्त्रार्थानुसारिणौ भवतः अलौकिकनाट्यार्थं वरपदम् एवं राजसभावं नृत्यमुक्त्वा सात्त्विकभावनृत्यमाह-क्वच गायमानाविति। देशविशेषे हस्ताभिनयमात्रपूर्वकं श्रमरहितं गानं कुरुतः एतदपि लोकप्रसिद्धम् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वेणुनादसुधावृष्ट्या निष्क्रमय्योक्तिमाधुरीम्।
यासां नः पाययामास कृष्णस्ता एव नो गतिः ॥

भोः सख्यो! यूयमिह गृहनिगडे स्थित्वा विधात्रा दत्तानि चक्षुरादीन्द्रियाणि केवलं विफलीकुरुध्वे एव तदितोऽद्य वनं द्रुतमेव गत्वा किमप्यद्भुतं वस्तुदर्शनाद्यैरनुभवगोचरीकृत्य सफलजन्मानो भवतेत्याहुः, अक्षण्वतामित्यादि अक्षिमतामक्ष्णामिदमेव फलं ननु परं विदामः विद्म इति अन्यमते अन्यद्भवतु नाम अस्मन्मते तु नान्यत्, किन्तत्? व्रजेशसुतयोः रामकृष्णयोर्वक्त्रम् अनुकूलवेणुसेवितं यैर्निपीतमिति प्रकटोऽर्थः स्वीयभावगोपनार्थं एव यद्यस्मद्वचसि श्वश्रूननान्दृप्रतिवेशिजनाः कर्णौ ददति तर्हि ददतु नाम का तत्र चिन्ता सर्वे एव व्रजवासिस्त्रीपुंसजनाः रामकृष्णयोर्वक्त्रमाधुर्यं यथा वर्णयन्ति तथा वयमपि वर्णयाम इति स्वाभिप्रायज्ञापनात् अत्र पशुपक्षिपर्य्यन्तानां सर्वप्राणिनामेव तद्वक्त्रमानन्दप्रदं केवलं दवीयसीनां युष्माकमेव नेति व्यञ्जितं व्रजेशसुतयोरिति "तातं भवन्तं मन्वानः" इति वसुदेवोक्तेः "रामोऽभिवाद्य पितरौ" इति शुकोक्तेश्च बलदेवस्यापि व्रजेशसुतत्वं व्रजे प्रसिद्धमेव अभीप्सितोऽर्थस्त्वयं व्रजेशसुतयोर्मध्ये अनुपश्चाद्वर्त्तिनो यस्य वक्त्रं वेणुजुष्टं तत् यैर्वेति वाशब्देन यैरेवं स्पृष्टं श्रुतमाघ्रातं यैर्वा नितरामतिशयेन पीतं वै इति पाठे निश्चितमेव यैर्लज्जाधैर्य्यमपि त्यक्त्वा निपीतं तेषामेवाक्षिमतां जनानां चक्षुरादीन्द्रियाणां साफल्यं नान्येषां तत्र दीयतां कुलधर्मलज्जाभयधैर्यादिभ्यो जलाञ्जलिरिति भावः ननु, दर्शनश्रवणादिकमस्माकं कुलवतीनां सम्भवतु नाम वक्त्रकर्मकं निपानं तु ह्रीमतीनां कथं सम्भवेत्तत्राहुः, अनुरक्तेषु जनेषु कटाक्षस्य मोक्षो येन तत् तेन तथा सम्भावकटाक्षशरो मुच्यते यथा तदाघातेन विह्वलीभूय लज्जाधैर्यादिकमपि विस्मृत्य तत्पाययेति भावः ॥ ७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतादृशं विडम्बनं स्वस्य कथं कुर्मस्तस्मात्तत्र न याम इति चेन्मैवम्, बलदेवसाहित्ये सति तत्राप्यभिगमिष्याया अभावात् तत्र भविष्यत्यतो दूरतो वल्लिपल्लवरन्ध्रेणैव तस्य स्वरमयस्य सौन्दर्यामृतं गानामृतं चास्वाद्य नृत्यादिकं च दृष्ट्वा द्रुतमायास्याम इत्याहुः चूतस्य प्रवालो नवपल्लवं बर्हं च स्तबकः पुष्पगुच्छश्च चूडायाम् उत्पलं तदन्तःकोपां कर्णयोः अब्जं लीलाकमलं दक्षिणकरे मालाश्च गले तथा अनुगुणतया पृक्तानि गात्रसंलग्नानि परिधानानि नाट्योचितरक्तपीतसितवासांसि च तैर्विचित्रो वेषो ययोस्तौ नटवराविति सखिषु गायकेषु वादकेषु नृत्यन्तौ क्व च कदाचिच्च गायमानौ ताच्छील्ये शानच् । यद्वा, गाये गाने मानः सर्वदैव आदरो ययोस्तौ । यद्वा, गाये गाने मानो गर्वो ययोः स चास्मत्तुल्यस्त्रिलोक्यामपि गायको नास्ति के यूयं वराका इति प्रकारः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनुवर्णनं दर्शयति—अक्षण्वतामित्यादिना । हे सख्यः ! व्रजेशसुतयोः वयस्यैः सह पशून् वनमनुविशतोः अनुवेणु वेणुमनुवर्तमानं वक्त्रं यैर्निपीतं तैरेव जुष्टं सेवितमिदमेवाक्षण्वतां चक्षुष्मतामक्ष्णोः फलम् परमन्यन्न विदामो न विद्मः कथम्भूतं वक्त्रम् ? अनुरक्तकटाक्षमोक्षम् अनुरक्तानां स्निग्धानां कटाक्षाणां मोक्षो विसर्गो यस्मिन् तत् ॥ ७ ॥

अन्या आहुः—आम्रपल्लवादिनिर्मिताभिर्विचित्राभिर्मालाभिरनुपृक्ताभ्यामीषदन्तरान्तरतो युक्ताभ्यां परिधानाभ्यां नीलपीतपटाभ्यां विचित्रो वेषो ययोस्तौ क्व च कदाचिद्गायमानौ वेणुनेति शेषः । पशुपालानां गोपालानां गोष्ठ्यां सभायां मध्ये भवमत्यर्थं विरेजतुः अहो पशुपालानां महद्भाग्यमित्यभिप्रायः ॥ ८ ॥

---

### श्रीरामकृष्णकृतप्रेममञ्जरी ।

गोप्य ऊचुः—गोपीनास्तावद्द्विविधाः कान्तभावाः सख्यश्च भावाश्च काश्चित्स्वीयाभिमानिन्यः काश्चित्परकीयाभिमानिन्यश्च ता अपि वामा दक्षिणाश्च पराः सख्याभिमानिन्यो दास्याभिमानिन्यश्च तत्रास्मिंस्त्रयोदशश्लोकात्मके महावाक्ये आद्यं श्लोकद्वयं स्वीयानां ततः परं पद्यद्वयं परकीयानाम् तत्रापि श्रुतिमुनिरूपा सुधन्याः स्मेति पद्यद्वयं मुनिरूपाणां ततः परं पद्यद्वयं श्रुतिरूपाणामिति अथ दृष्ट्वेत्यादिद्वयं सखीनां तदनन्तरं श्लोकद्वयं दास्याभिमानिनीनामिति विवेकः ॥ अथ वेणुगीतं व्याख्यायते ॥ अथ एव तामिति श्रीकृष्णस्य वनप्रस्थानानन्तरं निजनिजोद्वसतिं प्राप्ताः कस्मिंश्चिद्विजनप्रदेशे समुपविष्टाः प्रियसखीपरिवेष्टिता विचेष्टिता इव स्थिताः तस्मिन्नेवावसरे वेणुध्वनिमाकर्ण्य प्रिया ध्वनिदत्तचित्ताः किञ्चिदुन्मीलितनयनाः पुरतः स्वैकधनान्परिजनानवलोक्य सानुशयमाहुः—हे सख्यः ! चक्षुष्मतां तावदिदमेव फलं विद्मः सुगोप्यत्वात्ययमिदन्त्वया निर्दिश्य प्रेमवैवश्याद्वा यैः वक्त्रं निपीतं जुष्टं वा पानस्यैकवारमध्यत्वं बुद्धिजनकत्वात्सेवनस्य पौनःपुन्यधर्मत्वात् जुष्टमिति यतिमावाक्रान्ततत्वान्नन्दसुतयोरिति नोक्तं स्वदांतिआदाप्तिशयाद्वा अर्थाहरणायां द्विवचनम् यद्वा यत्तयोर्मध्येऽप्यनुवेणुवक्त्रं परं केवलं विद्मः यद्वा वयं तु विदाम एव नत्वस्माभिः पीतमिति दैन्यम् अल्पभाग्यवत्त्वादस्माभिरनुभूतं यद्वा इदम् एतावदेव निश्चं नयस्यैश्चावृतयोस्तयोर्मध्ये चानुवेणुजुष्टं यत्तत्त्वं न परम् अन्यथा वक्त्रं इत्युच्येत कटाक्षमोक्षम् अनुरक्तेषु स्निग्धेषु तदेकपरेषु कटाक्षमात्रमपि मोक्षाधिकसुखप्रदं यस्य यस्मिन् वा तन्महाति संघट्टेऽपि तत्पानेनातिचातुर्यम् कटाक्षकर्तृकस्तत्कर्तृको वा तत्राद्यसाद्यस्मान्विहाय चिरं वने स्थितमित्यादिरूपः द्वितीयसूचितोऽपि वेणुना सङ्केतेन प्रस्थिता गृह एव स्थिता इत्यादि यद्वा ननु भवतीभिर्जातमुहुर्मुहुर्निपीयते किमेतावता अस्माकं चक्षुष्माफल्यमपि न वृत्तमिति भावः इदमक्ष्णोः फलं वयं न विदामः गुरुजनावरोधात् अन्ये जानन्तु नाम सामर्थ्यदैन्यं यद्वा अक्षाणीन्द्रियाणि इन्द्रियवतामिदं सुगोप्यमेव फलं यदवं वक्त्रमनुकटाक्षमोक्षं यथातथा निपीतं यद्वा साहङ्कारमाहुः इदमेव फलं यत्परमन्यत्तदतिरिक्तं सर्वमपि न विदामः तदेकावेशाद्विषयान्तरास्फूर्तेः यद्वा ज्ञानकर्मभेदेनेन्द्रियाणां द्वैविध्याज्ज्ञानेन्द्रियैर्निपानं रूपादेः कर्मेन्द्रियैश्च पोषणं तत्तदङ्गसेवनमिति अस्माकं तु प्रथममपि यथावन्न सम्पद्यते विघ्नबाहुल्यात् विघ्नाश्च पशुवयस्यसम्मर्दादयः अत एव गा इति वक्तव्ये पशूनित्युक्तं परदुःखानभिज्ञत्वेन यद्वा सजातीयेनैव सजातीयहृदयज्ञता प्रसिद्धा कटाक्षमोक्षव्यापारः स चाक्षमात्रवेद्यः इत्येतदर्थमेवास्माभिरक्ष्णोः रक्षा क्रियत इति भावः । किमिति मुद्रितनेत्राभिः स्थीयत इति पृष्टे किं पश्यामः तदवलोकलब्धावरा उद्घाटयिष्यामः स्वजनवेष्टितनेत्रे निर्जने बुभुक्षितृणाञ्जनाविवपाशितौ तद्दर्शने सति निर्मुक्तबन्धनौ तत्कटाक्षसुखमनुभवेतामिति यद्वा निपानमात्रेणैव सकलेन्द्रियानन्दत्वात्परं किं तत्र विदामः तूष्णीं स्थेयमितिमोल्लुण्ठम् तत्तु धक्तुं न युक्तं चुम्बनाधरपानयोः साक्षादिति किमिति कृशा इति सखीभिः पृष्टा आहुः अक्षण्वतामिदं फलं यदि चक्षुषी न स्यातां तदा तद्वक्त्रदर्शनमपि न स्यात्तेन तां तां दशामनुभवाम इति साभ्यसूयमिति ॥ ७ ॥

चूतेति । तदेव अर्थान्तराच्छन्नमपि सूक्ष्मदृशां व्यक्तं स्यात् प्रवालो नवपल्लवः वन्यवेषस्यैव धारणं तत्तदङ्गस्पर्शसुखायेति सानुरागत्वम् पशुपालेति तदभिप्रायानभिज्ञत्वं तत्रत्यश्च गौरश्यामयुगमशोभानुगवाय न चेदमसम्भावितं विपरीततो राधाकृष्णयोरस्वरूपयोः जातावेतौ महात्मानौ दुर्गारामौ जगत्प्रभू या दुर्गा सैव गोविन्दो राधासङ्कर्षणावस्यसाविति कृष्णयामलात अंशेन अंशिनस्स्मरणम् गाये गाने मानश्चित्तसमुन्नतिः ययोस्ताविति लीलारूपोऽनुभावो व्यञ्जितः प्रियानुकरणं लीलेत्युक्तेः ॥ ८ ॥

---

### श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

चन्द्रावती चन्द्रमालां प्रत्याह—चूतप्रवालेति ॥ ८ ॥

---

गोप्यः ! किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधामपि गोपिकानाम् ।
भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्याः ॥ ९ ॥
वृन्दावनं सखि ! भुवो वितनोति कीर्तिं यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि ।
गोविन्दवेणुमनु मत्तमयूरनृत्यं प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥ १० ॥

भाषा टीका ।

गोप्य ऊचुः ।

गोपी बोलीं, कि— हे सखी हो ! नेत्रवारेन को अथवा इन्द्रियनवारेन को यही फल है और फल नहीं हैं, या बात कू हम जाने हैं [ क्योंकि ? श्रुति रूपा हैं ] कौन फल है ? जो सखान सहित गायन कों वन में चरावनवारे नन्दराय के दोऊ पुत्रन को मुख जिनने देखो हैं वो देखनोई फल है। अथवा वासुरी बजायबे की शोभा सहित और अनुराग भरे भये कटाक्ष जामें छूटरहे ऐसे या नन्द सुत के मुख को जिनने निरन्तरनपान कियो है, बस इन्द्रियन के पायबे को यही फल है ॥ ७ ॥

कोऊ सखी बोली, कि—सखियों ! आम के पल्लव, मोरपिच्छ, फूलन के गुच्छ, कमलन की माला, इन कों धारण करें और वाई सब अलंकार सों लगे भये जो नीलाम्बर पीताम्बर तिनसों विचित्र जिन को वेष ऐसे श्रीकृष्ण बलदेव दोऊ भैया कबहूं २ गान करत ग्वाल मण्डली में बहुत सुन्दर शोभा पावैं हैं जैसे रंग भूमि में श्रेष्ठ दो नटन की शोभा होय ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्या ऊचुः—हे गोप्यः अयं वेणुः किं स्म पुण्यमाचरत् कृतवान् । कथम् ? यद्यस्माद्गोपिकानामेव भोग्यां सतीमपि दामोदराधरसुधां स्वयं स्वातन्त्र्येण यथेष्टं भुङ्क्ते । कथम् ? अवशिष्टरसं केवलमवशिष्टं रसमात्रं यथा भवति तथा यतो यासां ह्रदिनीनां पयसा पुष्टस्ता मातृतुल्या ह्रदिन्यो हृष्यत्त्वचो विकसितकमलवनमिषेण रोमाञ्चिता लक्ष्यन्ते येषां वंशे जातस्ते तरवो मधुधाराभिषेणानन्दाश्रु मुमुचुः यथा आर्याः कुलवृद्धाः स्ववंशे भगवत्सेवकं दृष्ट्वा हृष्यत्त्वचोऽश्रु मुञ्चन्ति तद्वदिति ॥ ९ ॥

काश्चिदाहुः—हे सखि ! वृन्दावनं भुवः कीर्तिं स्वर्गादपि विशेषेण वितनोति, कथम्भूतम् ? यद्देवकीसुतस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः शोभा सम्पद्येन तत् । किञ्च, गोविन्दस्य वेणुमनु वेणुनिनादं श्रुत्वाऽनन्तरं मन्दगर्जितं नीलमेघं तं मत्वा मत्ता ये मयूरास्तेषां नृत्यं प्रेक्ष्य सङ्घशस्तत्र तत्राद्रिसानुष्वपरतान्युपरतक्रियाण्यन्यापि समस्तानि सत्त्वानि यस्मिंस्तत् नैतदन्येषु लोकेषु विद्यतेऽतो भुवः कीर्तिं वितनोतीत्यर्थः ॥ १० ॥

———

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

अहो वतास्तु तत्सङ्गगोपानां भाग्यं किं वक्तव्यमित्याहुः, गोप्य इति । अयं नीरसदारुमयो वेणुः किं कतमत्पुण्यं कृतवानस्मिन् जन्मनि पूर्वस्मिन् वा तत्पुण्ये ज्ञाते वयमपि तदर्थं यतामह इति भावः । क्रमेण विस्मये तल्लिङ्गमाहुः, दामोदरेत्यादिना । दामोदरशब्देन निजयूथेश्वर्याः प्रेमविशेषेणात्मवश्यतां बोधयन्ति राधादामोदरयोर्द्वन्द्वत्वात् अत एव गोपिकानां भोग्यम् अयमिति पुंस्त्वनिर्देशेन तस्य तद्भोगायोग्यतोक्ता तथापि भुङ्क्ते तदेकोपभोग्यकत्वेन सदा पिबति तस्य तदन्यभोगादर्शनात् । ननु, दामोदराधरस्तद्भोगानन्तरमपि सरस एव दृश्यते न तु शुष्कस्तत्राहुः, यदिति । सुधा भुक्तैव केवलं द्रवमात्रमवशिष्यतेत्यर्थः । हे गोप्यः ! इति तस्माद्वेणुजन्मनैव सौभाग्यं न तु गोपीजन्मनेति, कुतः ? यूयं गोप्यो भूता इति भावः अस्माकमिति वक्तव्ये गोपिकानामिति गोपीजात्यैव तद्भोग्यत्वसिद्धेः निजाभिमानविशेषाच्च वैदग्धीरसविशेषाच्च श्लेषेण तदेकाशयेव देहादिरक्षिकाणामिति अन्यच्चैव्यंञ्जितम् अथवा गोपिकानां चावश्यः स्वामी वा यो दामोदरस्तस्य करे हृदये धरे च सदावर्तितां नाम अधरसुधामपि स्वयं युष्मत्स्वस्मासिविनैव भुङ्क्ते अवेति अवरताविवर्जनार्थे अवहीनं शिष्टं शेषो यस्य रसस्य तथाभूतं यथा स्यात् रसमात्रमपि नावशेषयतीत्यर्थः । यद्वा, अवशिष्टो रसो रागो यथा स्यात् रागस्यावशिष्टत्वान्न कदाचिदपि विरमेदिति किं वा मुहुर्भोक्ष्यत एवेत्यर्थः । यद्वा, सुधां कथम्भूतां ? गोपिकानामवशिष्टो यो रसः तदेकापेक्षया तदितराशेषरसपरित्यागात् तमप्ययं भुङ्क्ते तत्र रसो नाम प्रीत्याख्यरसविषयत्वेऽपि तादात्म्यापेक्षयोपचारेण सुधैव रसः किं वा रसनीयमधुरद्रव्यविशेष इति अथवा कुशलाचरणलक्षणान्तरमप्याहुः—यस्य अवशिष्टम् उच्छिष्टमेव तथापि रसं द्रवमात्रं न तु सुधा ह्रदिन्यः स्नानपानादिना जगतां पावन्यः सर्वार्थदाश्च श्रीयमुनाद्या नद्योऽपि भुञ्जते जलविहारादिनाऽधररागोपमा नद्यादयो ऽधरामृतं पिबन्तीति "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः" इत्यादिवचनतः काव्येष्वनुमानद्वारा प्रसिद्धमेव तासां तद्भोगे लिङ्गं हृष्यत्त्वच इति तरवश्च मुनय इव तत्तीरवर्तिनो जगदुपकारपरा भगवत्स्तुतमाहात्म्याद्भुञ्जते पादैस्तन्नदी जलपानतः तत्र लिङ्गम् अश्रु मुमुचुरिति अन्यथा तादृशहृष्यत्त्वक्ताऽश्रुमोचकतानुपपत्तेः तत्र दृष्टान्तः आर्या महान्तो यथा श्रीभगवद्रसानुभवेनैव हर्षाद्रोमाञ्चिता गद्गदाश्च भवन्ति नान्यथेति । यद्वा, हृष्यत्त्वचः स्वइति परमदुर्लभलाभेनानन्दभरः सूचितः अतो यस्योच्छिष्टद्रवमात्रपानेनापि तासामीदृशो हर्षः तस्य पुण्यमाहात्म्यं कथं

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषणी ।

वर्यमिति भावः तरवस्तु अश्रु मुमुचुः तस्याप्यलाभेन शोकादरुदन्नित्यर्थः । कथम्भूताः ? आर्य्याश्छायादिना जगदुपकारान्महान्तोऽपि यद्वा ननु, तरूणां तद्गाने कथमपि सम्भावनापि नास्ति कथं तदप्राप्त्यारोदनं सम्भवेत् न हि रङ्को राज्याप्राप्त्या रोदिति किं तर्हि क्षुधादिनाऽप्राप्त्यर्थमेवेत्याशङ्क्याहुः यथा आर्याः परमार्थविदः तदधरामृतपानहीना अपि तदप्राप्त्या शोकेनाश्रु मुञ्चन्ति तद्वदिति तद्वा यथा यथावत् तरवः आर्याः सरलबुद्धयः अन्यत् समानम् अतोऽयं गोप्यः निभृतं कुत्रापि सङ्गोप्यरुचणीय इत्यर्थः ॥ ९ ॥

अहो किं वक्तव्यं श्रीहस्तादौ वर्तमानस्य वेणोर्माहात्म्यं श्रीवृन्दावनस्यैव भाग्यं किं वर्ण्यतामित्याहुः—वृन्देति । सखि, हे श्रीराधे ! वितनोति स्वर्गादिभ्योऽपि विशेषेण विस्तारयति यद्यस्मात् यद्वृन्दावनमिति वा देवकीसुतस्य श्रीकृष्णस्य पदाम्बुजाभ्याम् कृत्वा लब्धा लक्ष्म्यः जगद्विलक्षणवज्राङ्कुशादि सुलक्षणैः सर्वाः शोभासम्पदो वा सर्वेषां तत्रत्यानां जनानां सर्वार्थभूतमहानिधिप्रकाशनरूपा येन तत् तत्र च साक्षात्पादाम्बुजाभ्यामेव न तु पादुकाभ्यामित्यनेन तथाऽम्बुजरूपकध्वनितपरमसौकुमार्यशीतलत्वादिसहजगुणयुक्तपादस्पर्शेन च श्रीवृन्दावनभूमेः परमसौभाग्यं सूचितम् अलभ्यलाभात् पदाम्बुजशब्देन च स्वर्गादिषु सपादुकस्य श्रीविष्ण्वादिभ्यः स्वत एव महात्म्येन तत्पदाम्बुजाभ्याम् लक्ष्मीविशेषसम्पत्तेः नामाम देवकीसुतेत्युक्तिः "प्रागयम् वसुदेवस्य" इत्यादिगर्गवाक्यानुसारेण किं वा स्वत एव तासु सर्वपरिस्फूर्तेः तत्र च सुतशब्देन केवलं तया प्रसूत एव पुत्रस्तु श्रीयशोदाया एवेति भावः । यद्वा, देवकी व्रजेश्वर्य्येव ।

"द्वे नाम्नी नन्दभार्य्याया यशोदा देवकीत्यपि ।
अतः सख्यमभूत्तस्या देवक्या शौरिजायया" ॥

इति बृहद्विष्णुपुराणवचनात् अतोऽस्मत्तो वृन्दावनमपि परमधन्यमिति भावः । अहो किं वक्तव्यं स्वर्गादिभ्यः श्रीवैकुण्ठलोकादपि विस्तारयतीति विशब्दोक्तं वैशिष्ट्यमाहुः—गोविन्देति । गवामिन्द्रो गोविन्द इति गोपचूडामणिर्गोपगणपरिवृतो वन्यभूषणो विचित्रक्रीडारसिकः श्रीयशोदानन्दनो लक्षितः हे सखीति श्रीकृष्णप्रदत्ततदाधिपत्येन तव तु परमधन्यत्वैवेति पूर्वश्लोकेन स्वयं वर्णिताद्वेणुमाहात्म्याज्जातशोकां भगवतीं श्रीराधां प्रति ललितादितदीयसखीवर्गकृतसान्त्वनमिदं ज्ञेयम् । अन्यत्तैर्व्याख्यातं तत्र मन्द्रगर्जितं नीलमेघं तं मत्वेति मयूराणां मत्तत्वे नृत्ये च हेतुः अन्यथाऽन्येषामिव तेषामप्यवरतत्वमेव स्यात् "मल्लानामशनिः" इत्यादिवत् तत्तद्भावानुरूपमेकोऽपि श्रीभगवान् तथा तथैव तेषु परिस्फुरन्तीत्यैश्वर्यं सुसिद्धमेवेदं इत्थं कोकिलादिष्वपि वसन्तादिरूपेणास्फुरदित्यप्यूह्यम् किन्तु श्रीभगवतो मेघविशेषादिरूपेण मयूरादिषु परिस्फूरणं तेषां प्राकृतमेघादिभ्यो जायमानभावतोऽधिकाधिकभावश्च ज्ञेय इति दिक् । अथवा, गोविन्दस्य वेणुमनु तन्नादश्रवणानन्तरमित्यग्रेऽपि सर्वत्रानुवर्त्तनीयम् यद्वा, गोविन्दवेणोर्मनुः नादात्मकपरममोहनमन्त्रः तेनैव मत्तानां मयूराणां नृत्यं यस्मिन् किञ्च, तेनैव प्रेक्ष्याः तत्प्रतिध्वनिना परमरमणीयाः किम्वा वनेषु चरतां पशूनां दर्शनार्थं श्रीभगवद्दासनताप्राप्त्या सर्वेषां परमावलोकनीया अद्रिसानवो यस्मिन् तत् । किञ्च, तेनैव अवरतानि स्तब्धतां प्राप्तानि अन्यानि मयूरव्यतिरिक्तानि समस्तानि सत्त्वानि प्राणिनो यस्मिन् । यद्वा, प्रेक्ष्यः परमसुन्दरप्रीत्या व्रजजनैः सदा दृश्यो वा अद्रेः श्रीगोवर्द्धनस्य सानुः शिखरप्रदेशो यस्मिन् श्रीगोवर्द्धनपूजायां शैलोऽस्मीति वदता श्रीभगवता तदूर्ध्वस्थितुं भक्षयता लीलाविशेषेणोपविश्याक्रम्यमानत्वात् । किञ्च, अवरतं निवृत्तं अन्ये रजस्तमसी यस्मात्तथाभूतसमस्तसत्त्वगुणो यस्मिन् तत् वनलतास्तरव इत्यादिवक्ष्यमाणत्वेन तरुलतादीनामपि सात्त्विकभावोत्पत्तेः अनेन च "प्रवर्त्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं नच" इत्यादिनोक्तायाः साम्येन स्वर्गादिभ्यो भूकीर्त्तिविस्तारणं सिद्धमेव तत्र च तदनन्तरमेव " न यत्र माया किमुतापरः" इत्युक्त्या प्राकृतसत्त्वगुणाभावेऽपि शुद्धसत्त्वप्रवृत्तेरुक्तिः गुणातीतस्य सच्चिदानन्दविलासरूपस्य सत्त्वस्याभिप्रायेण तच्च श्रीभागवतामृते बहुशो विवृतमेव अत्रापि तथैवोह्यमिति दिक् । वैकुण्ठतोऽपि कीर्त्तिवितानपक्षे च अवरतानि उपरतानि अन्यानि गोविन्दवेणुश्रवणतद्दर्शनेतराणि चेष्टितानि येषां तथाभूतानि । यद्वा, अवरतान्यानि समस्तानि सत्त्वानि यस्मिन् । यद्वा, प्रेक्ष्याः अद्रयः श्रीगोवर्द्धनाद्या यस्मिन् तत् सानुषु अवरतानि मयूरेतरसमस्तसत्त्वानि यस्मिन् । यद्वा, मत्तमयूरनृत्यं प्रेक्ष्य गोविन्दवेणुमिति व्युत्क्रमेण योज्यम् अयमर्थः वर्षावतंसकस्य तस्य घनागमनसन्दर्शनमात्रेण प्रीत्या मत्तानां मयूराणां नृत्यं तत्प्रेक्षया हर्षेण गोविन्दस्य वेणुः तेन तद्वावनमित्यर्थः । ननु अद्रिसानुषु अवरतानि विरतानि श्रीभगवद्दर्शनादिव्यतिरिक्ताशेषप्रयोजनानि येषां तथाभूतानि समस्तसत्त्वानि यस्मिन् समस्तशब्देन मयूरा अपि गृहीताः ततश्च तेषामादौ श्रीभगवद्दर्शनानन्देन मत्ततया नृत्यं पश्चाच्च वेणुनादेनान्येषामिव तद्वेणुनादश्रवणतद्दर्शनेतराखिलोपरामलक्षणा प्रेममूर्च्छा जातेत्यर्थः । ईदृशं श्रीवैकुण्ठेऽपि नास्तीति ततोऽपि कीर्त्तिविशेषोऽस्याः सिद्ध एव, अहो वनास्माकं तत्र तथा तादृश्यवस्था न सिद्ध्येदिति वयमधन्या एवेति भावः । एतच्च तासां प्रेमविशेषस्वाभाविका तुच्छातितलक्षणमेव सर्वत्रोह्यम् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो वनाऽस्तु नरो गोपानां भाग्यं वेणोरपि भाग्यं किं वक्तव्यमिति महाभावस्फुरदुन्मादतया मिथ्याकल्पनापूर्वकं सप्लोभिलापमाहुः—गोप्य इति । अयमस्माभिर्दृश्यमान इव नीरसदारुमयो वेणुः अस्मिन् जन्मनि पूर्वस्मिन् वा किङ्कुशलं पुण्यं कृतवान् तत्पुण्ये ज्ञाते वयमपि तदर्थं यतामहे इति भावः । इमेति विस्मये नाविङ्कमाहुः यद्यस्मात् दामोदरेत्यादिदामोदरशब्देन तस्याऽस्माकं च तादृशबाल्यमारभ्य जातेदृशभावाङ्कुरतया स्वाभाविकं सम्बन्धविशेषं सूचयन्ति अत एव गोपिकानामस्माकमेव भोग्याम् अधमिति पुंस्त्वनिर्देशेन तस्य तद्भोगायोग्यता चोक्ता तथापि भुङ्क्ते तदेकोपभोग्यत्वेन सदा पिबति तस्य तदन्यभोगादर्शनात् । ननु, दामोदराधरस्तनमङ्कानन्तरमपि सरस एव दृश्यते ननु शुष्कत्वमादसौ न किञ्चिदपि भुङ्क्ते तत्राहुः—अवशिष्टो रसो रसमात्रं यत्र तथया स्यात् सुधां भुङ्क्तैव' स्वयं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

द्रवमात्रमेवावशिष्येनेत्यर्थः । हे गोप्यः ! इति तस्माद्वेणुजन्मनैव सौभाग्यं ननु गोपीजन्मनेति कुतो यूयं गोप्यो जाता इति भावः । अस्माकामिति वक्तव्यं गोपिकानामित्युक्तिर्गोकुलवासित्वेनास्मत्कोटिप्रवेशेऽपि गोपिकाविशेषत्वाभावान्न तद्विधस्याधिकार इति निजाभिमानविशेषात् वैदग्धीरसविशेषाच्च श्लेषेण तदेकाशयैव देहादिरक्षिकाणामिति किञ्च तस्य युष्मदीयकान्तस्य करे हृदये वदने च सदा वर्तनं नाम अधरसुधामपि स्वयं युष्मत् मस्माभि विनैव भुङ्क्ते इति भावान्तरम् अथवा नच कथं भुङ्क्ते तत्राहुः अवेति वशिष्टं मर्यादेष्ट वशिष्टमागुर्विलोपमित्यादेः न वशिष्टम् अवशिष्टम् अनवशिष्टमित्यर्थः । तादृशो रसो यत्र तथाभूतं यथा स्यात् रसमात्रमपि नावशेषयन्तीत्यर्थः । यद्वा अर्वाशिष्टो रसो रागो यत्र तद्यथा स्यात् रागस्यावशिष्टत्वात् न कदाचिदपि निरमेत् किन्तु मुहुर्भोक्ष्यन एवेत्यर्थः । यद्वा सुधां कथम्भूतामपि गोपिकानामवशिष्टो यो रसः तदेकापेक्षया तदितराशेषरसपरित्यागात् तद्रूपामपि अथवा कुशलाचरणे लक्षणान्तरमप्याहुः हृदिन्यो ह्रष्यत्त्वच इति तस्य तादृशं भोगं दृष्ट्वा परमपुण्यया ह्रदिन्योऽपि शोभाविकसितकमलमिषेण ह्रष्यत्त्वचो जातरोमहर्षा बभूवुः इत्यर्थः अथवा यदवशिष्ट उच्छिष्टो यो रसो नादरूपस्तं ह्रदिन्योऽपि भुञ्जते आस्वादयन्ति यतश्च ह्रष्यत्त्वचो भवन्तीत्यर्थः । किञ्च यस्य स्वजातिसम्भवस्य वेणोस्तादृशं सौभाग्यं दृष्ट्वा सर्वे स्थावरजातयोऽपि मधुमिषेणाश्रु मुमुचुः तत्र दृष्टान्तः यथाऽऽर्याः पितरः स्वकुलसम्भवस्य तादृशं सौभाग्यमनुभूयाश्रु मुञ्चन्तीत्यर्थः । ईर्ष्यापक्षे तस्मात् समाज एव तादृशस्तस्यैकस्य वा को दोषः अतोऽयं गोप्यः निभृतं कुत्रापि सङ्कोचयत्वणीय इत्यर्थः ॥ ९ ॥

अहो किं वक्तव्यं श्रीहस्तादौ वर्तमानस्य वेणोर्माहात्म्यं वृन्दावनस्य सौभाग्यं कियद्वर्णयन्त्यामित्याहुः—वृन्देति । हे सखि । वितनोति वैकुण्ठेभ्योऽपि विशेषेण विस्तारयति यद्यस्मात् यद्वृन्दावनमिति या देवकीसुतस्य श्रीकृष्णस्य पदाम्बुजाभ्यां कृत्वा लब्धा लक्ष्म्यः सर्वशोभामहिम्नोः सम्पदो येन तत् तद्वैयासनोऽद्वरूपत्वात् तत्र च साक्षात्पदाम्बुजाभ्यामेव ननु पादुकाभ्यामित्यनेन श्रीवृन्दावनभूमेः परमसौभाग्यं सूचितं तासां देवकीसुतस्युक्तिं प्रागयं वसुदेवस्येत्यादि गर्गवाक्यानुसारात् तथा वोक्तिर्गोपनाय एवं गोविन्दशब्दोऽपि गवाध्यक्षेऽपि गोविन्द इति कोशकारमतमाश्रित्य तस्मिन् सङ्केतितः श्रीगोविन्दाभिधेकानन्तरमेव तन्नाम्नो व्रजे प्रसिद्धेः उत्तरत्र नन्दनन्दनमिति तु गोपनाशक्तेः यद्वा देवकीव्रजेश्वर्यैवनाम—

"द्वेनाम्नी नन्दभार्याया यशोदा देवकीत्यपि ।
अतः सख्यमभूत्तस्या देवक्या शौरिजायया" ॥

इति बृहद्विष्णुपुराणवचनात् विशब्दोक्तं वैशिष्ट्यमाहुः-गोविन्देति । गवामिन्द्रो गोविन्द इति गोपवर्णचूडामणिर्गोगोपालपरिवृतो यत्र भूषणो विचित्रक्रीडारसिकः श्रीयशोदानन्दनो लक्षितः अतो वृन्दावनस्यापि भाग्यमस्माभिरभिलषणीयमेवेति भावः । अन्यत्तैः तत्र मन्दगर्जितं नीलमेघं तं मत्वेति मयूराणां मत्तत्वे नृत्ये च हेतुः अन्यथाऽन्येषामिव तेषामप्युपरतत्वमेव स्यात् तथाप्यलौकिकत्वं त्वधिकमस्त्येवेति अथवा तादृशश्रीकृष्णे स्वाभाविकप्रीत्यतिशयवतां श्रीवृन्दावनमयूराणां सम्बन्धेन सर्वेषामपि तज्जातो भगवत्प्रसादादन्यत्रत्या अपि एतत्सादृश्येनैव मत्त प्रीतिमन्तो ज्ञेयाः ततश्च गोविन्दस्य वेणुमनु तत्रादश्रवणान्तरमिश्रप्रापि सर्वत्रानुवर्तनीयं यद्वा, गोविन्दस्य वेणोर्मनुः नादात्मकपरममोहनमन्त्रस्तेनैव मत्तानां मयूराणां नृत्यं यस्मिन् यद्यपि तद्वेणुनाद एव यथा मयूराणां नृत्ये हेतुस्तथान्येषामवतारत्वेऽपि तथापि नृत्यरीतिमुत्प्रेक्षितुमेवान्येषां सभासदत्वनिरूपणायोग्यं प्रेक्ष्येत्युक्तं किंवा मुहुः श्रीभगवद्दर्शनताप्राप्त्या सर्वेषां परमावलोकनीया अद्रिसानवो ये यद्वा प्रेक्ष्यनृत्येसत्यो वृन्दाविति विश्वप्रकाशात् प्रेक्षाम् अर्हन्ति ये तेषु उर्वेषु तद्दर्शनस्थानेषु अवरतानि स्तब्धतां प्राप्तानि अन्यानि मयूरव्यतिरिक्तानि समस्तानि सत्त्वानि प्राणिनो यस्मिन् यद्वा मत्तमयूरनृत्यं प्रेक्ष्य गोविन्दवेणुमन्विति व्युत्क्रमेण योजयम् अत्रेदं विवक्षितं बर्हावतंसस्य मयूरप्रियस्य तस्य वनागमनसन्दर्शनसाभेण प्रीत्या मत्तानां मयूराणां नृत्यं तत्प्रेक्षया हर्षेण गोविन्दस्य वेणुः तेन तद्वादनमित्यर्थः । तमनु अद्रिसानुषु अवरतानि विरतानि अन्यानि श्रीभगवद्दर्शनादिव्यतिरिक्ताशेषप्रयोजनानि येषां तथाभूतानि समस्तसत्त्वानि यस्मिन् ईदृशं श्रीवैकुण्ठेऽपि नास्तीति तथा ततोऽपि कीर्तिविशेषोऽस्याः सिद्ध एव अहो यतास्माकं तत्र तथा तादृशवस्था न सिद्ध्येदिति वयमधन्या एवेति भावः तच्च तासां प्रेमविशेषस्वाभाविकाऽतृप्त्यातिलक्षणमेवेति सर्वज्ञेयम् ॥ १० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हृष्टत्वक्पुलकिनत्वचः अश्रु मधुरूपं पुष्परसम् अस्मद्वंश्योऽयं स्वन्वन इति धिया तरवोऽप्यश्रु मुमुचुरित्यर्थः ॥ ९ ॥

गोविन्दवेणुमनु प्रेक्ष्य मत्तमयूरनृत्यञ्चानुप्रेक्ष्येत्यन्वयः । अद्रिसानुषु अवरतान्यसमस्तसत्त्वं शब्दादुपरतमनुष्यव्यतिरिक्तसमस्तप्राणिजातम् ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोप्य इति । हे गोप्यः ! अयं कृष्णकरस्थो वेणुः किं स्म कुशलं पुण्यमाचरचकार कुतः यद्यस्माद्गोपिकानामपि अपिशब्दो दौर्लभ्यद्योतकः गोपिकानामस्माकमपि दुर्लभां दामोदरस्याधरसुधां स्वयं भुङ्क्ते अनेकोपभोग्यां स्वयमेक एव भुङ्क्ते अवशिष्टरसन्तु ह्रदिन्यो नद्यः तरवश्च भुञ्जते कस्मिन्नधरसुधायां वेणुनैकेन पीयमानायां यद्गलितमधरसुधात्मकरसकणजातं ह्रदिन्यस्तरवश्च भुञ्जते अश्रु इति जात्यभिप्रायकमेकवचनम् अवशिष्टरसभोगप्रयुक्तहर्षाश्रूणि मुमुचुर्हृष्यत्त्वचश्च तत्र ह्रदिन्यो विकसितकमलव्याजेन हृष्यत्त्वचः उदञ्चितरोमाण इव लक्ष्यन्ते तरवस्तु मधुमिषेणानन्दाश्रूणि मुमुचुरिति भावः यथा आर्याः भागवतशेषरसाभिज्ञास्तद्भक्तावशिष्टमुपभुज्य हृष्यत्त्वचोऽश्रूणि मुञ्चन्तश्च भवन्ति तद्वदित्यर्थः ॥ ९ ॥

वृन्दावनमिति । हे सखि ! वृन्दावनं भुवः कीर्तिं वितनोत्यानितरलोकसाधारणीं कीर्तिं जनयतीत्यर्थः । अत्र हेतुं वदन्तो

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विशिषन्ति यद्वृन्दावनं देवकीसुतस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः सौन्दर्यसम्पद्येन किञ्च गोविन्दस्य वेणुमनु वेणुगीतमनुसृत्य मन्द्रगर्जितनीलमेघभ्रान्त्या मत्ता ये मयूरास्तेषां नृत्तमवलोक्य अद्रिसानुषु उपरतानि वेणुगीततदनुरूपमयूरनृत्तादिदृक्षया निवृत्तस्वस्वव्यापाराणि अन्यानि मयूरव्यतिरिक्तानि समस्तानि सत्त्वानि जन्तवो यस्मिंस्तथाभूतं न ह्यन्योऽस्यैवंविधो लोक इति भावः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे गोप्यः! अयं वेणुः किं कुशलं तपोलक्षणम् आचरत् स्म स्मरणं कर्त्तव्यं किमप्यस्तीति वृत्तं पूर्वजन्मनि चीर्णं वा "स्मृतौ वृत्ते निषेधे स्म" इति च. यो वेणुः दामोदरस्याधरोष्ठः स एव सुधा तया सरसं सरागमग्र्यं गेयं यस्मिन् सः सरागमग्र्यगेयः तं रसं भुङ्क्ते आस्वादयति सदर्भाः दर्भाङ्कुरैः सहिताः तरवः हृष्टत्वचः अस्माद्वंश्योयमिति रोमाञ्चितसर्वगात्रा येन वेणुना पीतोऽवशिष्टो यो रसः तस्यौघः प्रवाहो यस्मिन् स यद्वचाशिष्टरसौघः तस्मिन् मार्गे कृष्णेन सञ्चरितेऽस्यति मधु आनन्दजलं मुमुचुरित्यन्वयः । सदर्भाः सकुशा वा ॥ ९ ॥

भुवो भूमेः हे सखि! यद्वृन्दावनं देवकीसुतस्य पादाम्बुजाभ्यां लब्धा लक्ष्मीः श्रीर्येन तत् देवकीसुतपदाम्बुजलब्धलक्ष्मि लक्ष्मेति केचित् लक्ष्म चिह्नं गोविन्दस्य वेणुमनु वेणुस्वरानुकूलमेघनादशङ्कया वेणुस्वरानुकारेण वा मत्तानां मयूराणां नृत्यं दृष्ट्वा आहताः सादराश्च अनुकूलं चरितं येषां ते तथा कृष्णाचरितानुकूलचरिताश्चान्ये मनुष्यविजातीयाः समस्ताः सत्त्वा जन्तवो यस्मिंस्तदाहतानुचरितान्यसमस्तसत्त्वं सत्त्वोऽस्त्रीति वचनात् पुल्लिङ्गोऽप्ययं शब्दः आहतौ सादरार्चिताविति च ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्य वेणोरवशिष्ट उच्छिष्टो रसो नादरूपस्तं स्नानपानादौ ह्रदिन्यो जगत्पावन्यो भुञ्जते अहो तद्दर्शनात्तरवोऽपि हृष्यत्त्वचः अङ्कुरादिविशेषेण रोमाञ्चिताः सन्तो मधुमिषेणाश्रु मुमुचुः कीदृशा अपि यथाऽऽर्या गुरवस्तद्गुणैस्तथाभूता अपीत्यर्थः ॥ ९ ॥

तस्यां समाज इत्युक्तानुसारेण तयाचोक्तिर्गोपनार्था ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

मुग्धा मुग्धाभिः सहोचुः—गोप्य इत्यादि । हे गोप्यः! गोपयतीति गोपी जानन्त्योऽपि भवत्यो न कथयन्ति कथयत अयं वेणुः किं कुशलम् आचरत् ? स्मेति वितर्के यतः दामोदरसुधां भुङ्क्ते भोग्यत्वेनोपसन्नां सुधां पिबतु नाम किं तत्राऽस्माकमसूयेत्याशङ्क्याहुः—गोपिकानामपि अस्माकमपि भोग्यैषा तथाप्येष एव पिबतीति परकीयभोग्यभोगो विना तादृशकुशलाचरणेन न स्यात् तत्राऽस्मदनुज्ञयैव तु नापि तथेत्याह—स्वयं यथा देव तत्र परिमितामेव पिबतु नापि तथेत्याह—यदित्यादि एवमेव मात्रातिरेकेण पिबति यथा यदवशिष्टरसं ह्रदिन्योऽपि भुञ्जत इत्यर्थः । तदेव कथं ज्ञातं तत्राह—हृष्यत्त्वचः फुल्लत्कमलादिरूपाङ्करत्वचो यासां ता अपि यथेष्टं स्वविकारं गोपयितुं न शक्नुवन्तीति भावः । न केवलं ह्रदिन्य एव भुञ्जते तरवश्चेत्यर्थः । अतियाहुल्यात् कथमवगतं ? तत्राहुः—अश्रु मुमुचुः एषामप्यतिमात्रता जातेत्यर्थः । क इवाश्रु मुमुचुः ? यथाऽऽर्याः प्रधानभूता राधादयः अधरपानसम्बन्धस्यान्येषामसम्भवात् सामान्याश्रुपातविवक्षायां सक्ता वा । यद्वा, तस्मादयं वेणुः गोप्यश्चोरयितव्यः अत्र मौग्ध्यगर्वदैन्यानि ॥ ९ ॥

मध्या ऊचुः—वृन्दावनमित्यादि । हे सखि! वृन्दावनं भुवः कीर्त्तिं तनोति आत्मकीर्त्तिस्तु स्वत एवानन्त्याद्विस्तारयितुं न शक्यत इति भावः । एतेन भुवः पृथक् स्वेनाऽसौमत्वमपि प्रतिपादितं तत्र हेतुः यद्देवकीत्यादि, देवकीसुतेति प्रायमानेऽपि यशोदासुतत्वे व्यवहारसम्बन्धस्यगमनार्थं तथा चाधुनिककविप्रयोगः "नन्दुम्ने मञ्जुमहसो सम्बन्धाशिद्वविज्जनि" इति अथवा देवकीति यशोदाया एव नामान्तरं तस्य पदाचरणेन अम्बुजैरिव लब्धा लक्ष्मीर्येन सर्वतः फुल्लारविन्दमिवत्यद्भुतोपमा गर्वस्था प्रकृतार्थो वा वस्तुतस्तु भूरेव तया वनं तु वृन्दावनसम्बन्धादेव भुवस्तादृशत्वमिति समुचितमेव भुवः कीर्त्तितननं कीदृशं पुनर्गोविन्दवेणु अनुलक्षीकृत्य मत्तानां मयूराणां नृत्यं यत्र अथवा गोविन्दवेणुरेव वेणुध्वनिः स एव मन्त्रस्तेन भक्तानामिति पूर्ववत् यद्वा गोविन्दवेणुमनु इति छेदः गोविन्दवेणुरेव मनुधर्मोपदेष्टा यत्र यस्योक्त्या वयं सकलमेव कुलशीलादिकमत्यजाम दोषो मनुरत्रीदित्यादिवत् अद्यापि वचसि प्रामाण्यं तदा मत्तानां मयूराणां नृत्यं यत्र पुनः कीदृशं प्रेक्षणीय दर्शनीयानि अद्रेर्गोवर्द्धनस्य यानि सानूनि तेषु अपरतास्तूष्णीं भूताः अन्यसमस्ताः सत्त्वाः प्राणिनो यस्य पूर्वसंकेतितस्थलस्मरणं व्यक्तम् अथवा मत्तमयूरनृत्यं प्रेक्ष्य दृष्ट्वा अद्रिसानुषु अपरतान्यसमस्तसत्त्वमिति बहुपदसापेक्षसमासः मयूराणां नृत्यं प्रेक्ष्य अहो अमी भागवता एव भगवदावेशेन यदेवं नृत्यन्तीति तेषां नृत्यामोदेनान्येषां तत्र स्थितानां पशुपक्षिमृगादीनामपि सामाजिकत्वेन रसावेशात्तूष्णीकत्वमिति भावः अहो अतिरम्यं तदा तदासीत्संकेतस्थानमिति स्मृतिभावः ॥ १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं रसं निरूप्य तस्याधिदैविकरूपतासम्पादकं वेणुनादं निरूपयन्ति—गोप्य इति । सम्बोधनपूर्वरसाभिज्ञापकं नात्र बोधनीयं वचनीयं वा किञ्चिदस्ति । यद्यपि तेन रसो न पीतः तथापि मुखेषु दर्शनादन्यार्थत्वेऽपि भोजनं करोतीति लक्ष्यते पुरुषस्य तद्भोजनं सर्वथा असंभावितम् अन्यथा भगवतैव भुक्तं स्यात् अतः स्त्रीणामेव तद्भोग्यं तदाह—गोपिकानामिति । अधरसुधा गोपिकानां सम्बन्धिनी बहुवचनेन समुदायरूपा लक्ष्मीरप्यनेन सूचिता तदंशाश्च तथैव समागताः नान्यथा तद्भोगो लोके प्रसिद्धः तादृशस्य वस्तुनो भोक्ता पुरुष एव न भवति किं पुनर्योन्यन्तरगतो जीवः तत्रापि वेणुः आधिदैविकस्य

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चेतनत्वं सूचयन्त्य आहुः—सर्वा एवाधिदैविक्य इति। स्वगोष्ठ्यां तथापि विचारो घटते सर्वं धर्मफलमिति वैदिकः सिद्धान्तः अतः कारणभूतं धर्मं विचारयन्ति—किमाचरदिति। धर्मः सर्वोऽपि वेदसिद्धः वेदरूपाश्च वयम् अतोऽस्मदज्ञातः कथं धर्मो भवति? येन धर्मेण वयं जानाः परं तत्रापि मर्यादा न्यायेन साधनाविरोधाभावः ततोऽस्मासु स्त्रीत्वं वेणौ तु तदभावः ततः सन्देहः फलस्य दृष्टत्वाच्च सम्मत्यर्थं च गोपिका(नां) सम्बोधनम् अयमिति पुल्लिङ्गनिर्देशश्च बाधकः स्मेति प्रसिद्धिश्च वस्तुतस्तु न तस्य फलं तदुपपादितं तद्धर्म्यन्तरा-बाधे कर्तव्ये साधनबलनिश्चयेन फलाभावः पूर्वपक्षः फलबल-विचारेण साधनाभावाभावः सिद्धान्तः तदाह—वेणुपदेन वंश इव नयौ तावणुकृतौ येनेति लोकेभ्यस्तथा सुखदानात् धर्मोऽस्तीति निश्चीयते अधरसम्बन्धादेव तथात्वमित्यनिश्चयोऽपि तथापि साधनं स्वयमेवेति निश्चयः पुष्टिबलमाश्रित्य तस्य सिद्धिरिति ज्ञापयितुं मर्यादायां हीनतामाह—दामोदरेति। दाम उदरे यस्येति भगवतो गोपिकाधीनत्वं सूचितं वंशात्मकस्या-धरः अतः स्वतः परतश्च तस्य साधनाभावः सूचितः सुधा-पदेन च रसविवक्षायां रसनेन्द्रियाभावश्च बाधकत्वेन सूचितः नावं भुङ्क्त इत्यविवादं सुधामपि भुङ्क्त इति विवादास्पदं "मा वनस्पतीन् प्राविशत्" इति श्रुतेः। सुधानधिकारः पूर्वमुपपादितः किञ्च, भगवांश्चेद्दद्यात् कदाचित्सम्भवेदपि व्यभिचारे स्त्री-सिद्धान्तवत् गोपिकावत्स्वयं भुङ्क्त इत्याश्चर्यम् अधरमुखसम्बन्धे पानमस्माकं सिद्धमस्ति तदपि मन्यामहे। किञ्च, अस्मदपेक्षयापि तस्मिन् विशेषः यस्मिन् भोजने अवशिष्टं रसं ह्रदिन्यस्तरवश्च भुञ्जते बालत्वान्मातरपितरावेव पालयति उभयत्र हेतुमाह—यतो ह्रदिन्यो हृष्यत्त्वचो जाताः अतः पूर्णानन्दाः ततोऽप्यानन्दाधिक्ये रोमाञ्चयुक्ता भवन्ति तत्रायं निर्णयः रोमाञ्चोऽत्र कमलरूपः स च जगति सर्वोत्तमः अतो हेतुत्वमरानन्द-रोमाञ्चो न भवति तथा सति शैवालानामेवोद्गमः स्यात् न कमलादीनाम् अतो ज्ञायते अधरामृतमेव ह्रदिनीभिः पीतमिति अन्यथा तेषु लक्ष्म्या उद्गमो न स्यात् यत्राप्यतिशयो दृष्टः स स्वार्थोनति-लङ्घनादिति न्यायात् लक्ष्म्यास्तदंकभागित्वमुपपादितम् उपलक्षणमेतत् अश्रु च मुमुचुः न हि मकरन्दोऽन्यस्य रसो भवति तरवश्च तथा तेषां रोमाञ्चः फलानि अश्रु च मधुधाराः एतदुभयविधं नान्यथा सम्भवति न चैतद् द्वयं तयोः स्वाभाविकमिति मन्तव्यं कादाचित्कत्वात् वेणुनादानन्तरमेव तथात्वात् स्वाभाविकवैलक्षण्याच्च तदाह-यथार्या इति। सन्तो हि भगवद्धर्मान्तः-प्रवेश एव तथा भवन्तीति तस्मात् ह्रदिन्यो मातृरूपाः तरवः पितृरूपाश्च तद्भुक्तावशिष्टरसपातारः। अत्रेदं विचार्यते पूर्वं रन्ध्रान्वेणोरधरसुधया पूरयन्तीत्युक्तं तस्य रन्ध्राः एव मुखरूपा इति तत्र पूरिताश्चेत् सा तदाऽनायासेनैव प्रमुकादिति एव तद्भोगो भवत्यतः स्वयं भुङ्क्त इत्यनुपपन्नं यद्यपि तथापि स्वप्रियाणां साक्षात्सुधाभोगाधिकारसम्पत्त्यर्थम् उक्तरीत्या सुधापूरणं वेणवर्थं न अत एव गोपिकानामित्युक्तम् एवं सति यद्रस्य भोजनं तत्स्वत एवेति सुष्ठूक्तं स्वयं भुङ्क्त इति। नन्वेवमेतद्भुक्तावशिष्टस्यैव रसस्य पानं प्रभुप्रियाणामप्याभाति रन्ध्रसम्बन्धस्य प्राथमिकत्वात्

किञ्चित्कालमभोजने हेत्वभावादिति चेत्? अत्रेदं प्रतिभाति अत्रत्यं सर्वमलौकिकमतो लौकिकयुक्त्या निर्णेतुं नोचितम् अन्यथा सरःसरिन्महीध्रेषु कृतं वेणुकूजितं व्रजस्थिताः स्वामिन्य एव कथं शृणुयुरन्ये एतच्चोपपादितं तद्व्रजस्त्रिय इत्यत्र एवं मति भगवदिच्छाया बलिष्ठत्वात्प्रयोजनस्यातिगुरुत्वाच्चादौ व्रजदेवीकर्णां हृदयेष्वेव सा प्रविष्टा अपरं च यशोच्छ्वासदशायामास्यपतितमप्युद्गीर्णमेव वस्तु भवति न निगीर्णं तथा भगवता व्यवहित-देशस्वप्रियाकर्णहृदयपूरणैकचित्तेन निजास्याम्बुजाविर्भूतच्छ्वासो नादब्रह्माविर्भावहेतुस्तादृशः कृतो यो मार्गत्वेन प्रसक्तो रन्ध्रेभ्यायात स्तत्र च सुधां पूरितामभीष्टदेशेऽनयदतो न तामितरो भोक्तुं शक्तः एवं सत्यपि साक्षादधरसम्बन्धो मुखे वेणोरस्तीति सम्भाव्यते तत्पान वेणुत्वेन निश्चयोत्पत्तावस्य तद्भोगो व्रजदेवीनां तूक्तरीत्या साक्षाद्भागवत्समर्पितवस्त्वशिष्टरसस्य अन्यथा ह्रदिन्यादिषु यथाऽवशिष्टरसपानमुक्तं तथात्रापि वदेयुरेव तु गोपिकानामिति पदेन भासामेवात्र स्वत्वं वदेयुः अपरं च वेणोः स्नातन्त्र्येण सुधाभोगो भगवतो मनीषितोऽन्यथा ह्रदिन्यादिषु सुधासम्बन्धो न स्यात् तथा सति तेषु लीला न स्यादेव एतत्सुधासम्बन्धित्वेन साचिकीर्षिता अतो अलक्ष्यलक्षणसम्बन्धिषु तत् सम्बन्धः कार्यते स च वेणुभुक्तसुधांशो यो नादद्वारा निर्गतस्तेनैवेति सर्वमनवद्यम् एवं सति व्रजदेवीनां वेणोश्च युगपत्सुधाभोग उपपद्यते किञ्च, दामोदरत्वेन व्रजदेव्यधीनस्तदुपभोगोपयोगि-सर्वमवशः सम्पादयतीति किमतोऽधिकं वदामः न हि जलधिरुद्धस्य केनापि निरोद्धुं शक्यः इति दिक् इदं वेणुवादनं रन्ध्राद् वेणोरधरसुधयेति वाक्येन यदुक्तं तदिति जानीमः यतोऽन्यदापि गवामाहृतेऽनुचरैरित्यत्र गागोपकैरित्यादिषु नद्यस्तदिदादिषु च जनादीनां चैतत्कार्यमुच्यते तेनावाचेवात्राधिकारमस्पष्टं वेणुरन्ध्रेषु यत्सुधापूरणं तत्सामायिकमेवेवमुच्यत इति ज्ञापनायापि गोपिकानामित्युक्तम् ॥ ९ ॥

वृन्दावनविहारे चरणानां स्वरूपमाह—वृन्दावनमिति। देवानां पादा भूमिं न स्पृशन्ति सुतरां देवोत्तमस्य तत्रापि पुरुषोत्तमस्य पुरुषोत्तमांशस्य पुरुषस्य महाधिभौतिकौ पादौ आध्यात्मिकावतीन्द्रियौ आधिदैविकावानन्दरूपौ तयोरपि न भूमिसम्बन्धः भूमावपि दैत्यभूमिरधमा तत्रापि स्त्री सम्बन्धिनी तद्वृन्दावनं तस्मिन् भगवतः पादा वर्तन्त इति तस्यमाग्यामिनन्दनं स्वस्यौत्कण्ठ्यज्ञापकं स्वस्यापि हृदयदेशो भूमिर्भवति स्त्रीणां च हृदयं कठिनमपि भवति पर्वता अपि सन्ति अन्तःप्रवाहा नद्यश्च सन्ति रसपूराः रोमपङ्क्तिवर्णनमपि भवति स्त्रीसम्बन्धि च एवं तुल्यतायामप्यत्र चरणौ न स्थाप्येते तत्र स्थापयेमे इतीर्ष्या वर्णनं गुणत्रयेण पूर्वं वर्णनं निर्गुणगोपिकास्त्वेषामिति नात्रासूयेति काचित् सखीति सम्मत्यर्थं तादृश्यो न बहवः इत्येकवचनम् असूयापक्षेऽपि तथा। ननु, भगवत्पदानि यथा व्यापिवैकुण्ठे भवन्ति एवं वृन्दावनेऽपि जातानीति किमाश्चर्यं तत्राह-भुवो वितनोति कीर्तिमिति यदि वृन्दावनं व्यापिवैकुण्ठ एव स्यात् तदा न काचिदन्या भूमौ तद्वर्तत इति केवलं भूमेः कीर्तिमेव करोति धन्या भूर्यत्र वृन्दावनमस्तीति भगवतो नित्यस्थितिममन्यमानाया वचनं पदानि चाधिदैविके नित्यान्येव स्थास्यन्ति प्रदर्शयिष्यति च कश्चिद्भगवान्स्वपराभिन्न इति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्प्रदर्शने वृन्दावनस्य सामर्थ्यं भक्तेः सर्वत्रैव नयात्वात् न वृन्दावनप्रतिष्ठा भवति प्रतिष्ठाया निमित्तमाह—यद्देवकीसुतपदाम्बुजलब्धलक्ष्मीति। यद्यस्मात्तद्वने देवक्याः पुत्रस्य पदाम्बुजानां लक्ष्माणि चिह्नानि ध्वजवज्रादीनि तैर्लब्धा लक्ष्मीर्येन स्वस्य स्वच्छन्दसम्बन्धार्थं देवकीसुतपदप्रयोगः नन्दगोपसम्बन्धिनी वा देवक्याः प्रसूतिमात्रं न सम्बन्धादिति सुतपदं स्त्रीप्राधान्यात् स्त्रीषु कृपाऽपि सूचिता पुष्टिमार्गे तासां प्राधान्यमित्यवोचाम भक्तिमार्गे चरणौ प्रधानभूतौ तत्राप्यम्बुजं जलोद्भूतं स्त्रीणामेव हृदये तापहारकत्वेन शोभते तादृशस्यापि या ध्वजवज्राङ्कुशादिशोभा सा नान्यत्र फलति वृन्दावने सा प्रतिफलतीति पादत्वमेव मत्पक्षमतो लक्ष्मीरपि तत्र नियता अतः पदाम्बुजैर्लब्धा लक्ष्मीर्येनेति भूमिर्यदि माद्री तदैव भवतीति भूमिकृतैव सा लक्ष्मीप्राप्तिः अतो युक्तं च भूमेः कीर्तिं स्थापयतीति। किञ्च, न केवलं लक्ष्मीरेव प्राप्ता किन्तु भक्तिज्ञानेऽपि प्राप्ते इत्याह—गोविन्देति। यदा भगवान् वेणुनादं करोति तदा नीलमेघो गर्जनीव भाति [ततो] मयूरा मत्ताश्च भवन्ति ततो नृत्यन्ति यदैव भगवता वेणुनादः क्रियते तदैव देहविस्मरणं नृत्यं च जायत इति भक्त्युद्रेक उक्तः मयूरा वन एवेति वृन्दावनप्रशंसा तादृशं नृत्यं प्रेक्ष्याद्रिसानुष्ववतारतानि तूष्णीं स्थितान्यन्यानि सर्वाण्येव सत्त्वानि यत्र भगवद्भक्तिज्ञानात्तेषां तूष्णीं भावलक्षणं ज्ञानमुक्तम् एको भक्तोऽन्ये सर्वे ज्ञानिनः तत्त्वतो विलक्षणाः स्वभावतः कथं ज्ञानिनो भविष्यन्ति ज्ञानस्य फलमूर्ध्वगमनमित्याशङ्क्याह—अद्रिसानुष्विति। यत्र क्वापि स्थितास्तत्रैव गत्वा पश्यन्तस्तिष्ठन्तीति दोषाभावः स्वस्थानत्याग ऊर्ध्वगमनं चोक्तम् ॥ १०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किञ्चास्मान् विडम्बनाब्धौ निक्षिपन्नयं वेणुरेवानर्थकारीत्याहुः—हे गोप्यः! वेणुः मुरली किंस्वित् कुशलं पुण्यमाचरत् वंशीमुरल्यादिशब्दानां स्त्रीलिङ्गत्वेऽपि तत्पर्यायस्य वेणुशब्दस्य पुंस्त्वं दारशब्दवज्ज्ञेयम् यद्वा, किं मङ्गलमाचरत् अपितु न किमपि स्थावरजातित्वेनैव लक्ष्यत इति भावः तदपि दामोदरस्याधरसुधां भुङ्क्ते इति कथं वयं सोढुं प्रभवाम इति भावः तत्र हेतुर्गोपिकानामिति अधरसुधायां हि गोपिकानामस्माकमेव स्वत्वं कृष्णस्य गोपजातित्वादस्माकं गोपजातिस्त्रीत्वादिति न्यायप्राप्तेः नित्यं रात्रावस्माभिः सम्भुज्यमानत्वाच्च वेणुस्तु विजातीयस्तत्रापि कृष्णरमितत्वमात्मनो मत्वा कृष्णप्रेयसीत्वाभिमानं धत्ते तत्रापि धार्ष्ट्येन पुनः पौरुषमाविष्कृत्य सम्भुङ्क्ते तत्रापि परकीयं धनं तत्रापि स्वयमेव न त्वन्यं जनमेकमपि भाजनं करोति तत्रापि न चौर्येण किन्तु धनस्वामिनीरस्मान् फूत्कारेण ज्ञापयित्वैव किञ्च नायं फूत्कारः किन्तु स्वसम्भोगोत्थं मणितमेव तथास्मान् आर्त्तयन्नेव तत्रापि नवशिष्टः न अवशिष्टो रसः किञ्चिन्मात्रोऽपि यत्र तद्यथा स्यात्तथा भुङ्क्ते "वष्टिभागुरिरल्लोपम्" इत्यादिना अकारलोपः धनस्वामिनीनामस्माकं कृते स्वभुक्तावशिष्टमपि किञ्चिन्न रक्षतीत्यहो धार्ष्ट्यमिति भावः। किञ्च, तद्देशवर्त्तिनः सर्व एव जनास्तादृशा एवेत्याहुः—यत् यतो अधरसुधाभोगात् तं वीक्ष्येत्यर्थः। ह्रदिन्यो नद्यो हृष्यत्त्वचः उत्फुल्लकमलादिमिषेण पुलकवत्यो बभूवुः तरवो मकरन्दमिषेणाश्रु मुमुचुर्यथा आर्याः भगवद्गुणान् श्रुत्वा अश्रुपुलकादिमन्तो भवन्ति, तथैव ते वेणोर्भाग्यं श्रुत्वेति ह्रदिन्योऽस्य सखवत्तरवोऽस्य सखायो दूता एवेति वेणुह्रदिनीतरवः सर्वं एवास्माकं वैरिण एवेति भावः। अतोऽयं गोप्यः निभृतं कुत्रापि रक्षणीयो यथा कृष्णाधरं न प्राप्नोतीत्यसूयाख्यः सञ्चारीव्यञ्जितः ॥ ९॥

तद्दीपनादशाविलासास्पदस्य वृन्दावनस्य सम्प्रति माधुर्यमधिकमुल्लसन्त्यतस्तदेव दिदृक्षमाणास्तत्र गच्छामो वयं नात्र कापि दोष इत्यन्या आहुः—वृन्दावनमिति। भुवः कीर्तिं स्वर्गादिभ्यो विशेषेण तनोति यद्यतो देवकीसुतस्य यशोदानन्दनस्य पदाम्बुजाभ्यां लब्धा लक्ष्मीः ध्वजवज्रादिचिह्नमयी शोभा सम्पत् येन तत् न ह्यवम्भूतं वैकुण्ठवनमपि सम्भवेदिति भावः—

"द्वे नाम्नी नन्दभार्याया यशोदा देवकीति च।
अतः सख्यमभूत्तस्या देवक्या शौरिजायया"॥

इति बृहद्विष्णुपुराणम् एवम्भूतं गोष्ठस्थलमपि सम्भवेदिति चेत्तत्राहुः—गोविन्दस्य वेणु वेणुवाद्यं लक्षीकृत्य प्रमत्तानां मयूराणां नृत्यं तत् प्रेक्ष्य अद्रिसानुषु अवरतानि उपरतक्रियाणि अन्यानि समस्तानि सत्त्वानि यत्र तत् [illegible] मयूरैः प्रार्थितस्य गोविन्दस्य वेणुवादनं तदीयताण्डवस्यैव मण्डलीभूय नृत्यतां तेषां मध्य एव तस्यापि सनृत्यं वादनं ततस्तद्वाद्येन सन्तुष्यतां तेषां पारितोषिकस्वीयचित्रबर्हप्रदानं तस्मै तेन च वादकश्रीकर्ण्या माह्लादं तद्गृहीत्वा स्वशिरस्युष्णीषस्योपरि तद्धारणं तत्तौर्यत्रिकमास्वादयतामद्रिसानुपूर्वनिष्ठानां सत्त्वानां कृष्णसारकपोतादिमृगपक्षिणामानन्दजाड्यमित्यादिकं सर्वं दिदृक्षामहे इति भावः ॥ १०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्या आहुः। हे गोप्यः! अयं श्रीकृष्णकरपद्मस्थो वेणुः किं स्म कुशलं तपोदानव्रतादि आचरत् कृतवान् तत्र हेतुमाहु—गोपिकानामस्माकं भोग्यां सतीं दामोदराधरसुधामपि स्वयं स्वातन्त्र्येण यथेष्टं भुङ्क्ते इति दामोदरस्य जठरपट्टयोर्मध्ये हस्तपद्मे च वसन् तत्स्पर्शानन्दं प्राप्य तदधरसुधामपि सेवते इत्यर्थः। किं च यत् यस्य वेणोः जलद्वारोत्पादकतया सम्बन्धिन्यः मातृतुल्याः ह्रदिन्यः अपि अवशिष्टरसं स्नानाद्यर्थं प्राप्तस्य दामोदरस्याधरसुधाशेषं भुञ्जते यतः हृष्यत्त्वचः विकसितपद्मनिकरव्याजेन रोमाञ्चिता इव लक्ष्यन्ते पुत्रं वेणुमात्मानं च कृतार्थं मन्यन्ते इत्यर्थः। यथा आर्याः पुत्रं स्वात्मानं च कृतार्थं मत्वा हृष्यत्त्वचो भवन्ति तद्वत् किं चाऽस्य पितृतुल्यास्तरवोऽपि तदधरसुधाशेषं तत्र तत्र विहारवेलायां भुञ्जते यतस्ते मधुधाराव्याजेनानन्दाश्रु अश्रूणि मुमुचुः अश्र्विति जातावेकवचनम् यथा आर्याः स्वपुत्रमात्मानं कृतार्थं ज्ञात्वा आनन्दाश्रूणि विमुञ्चन्ति तद्वदित्यर्थः ॥ ९॥

अन्याः आहुः—हे सखि! वृन्दावनं भुवः कीर्तिं वितनोति यद्

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतः देवकीसुतपदाम्बुजाभ्यां लब्धा लक्ष्मीः शोभा सम्पद्येन तत् किं च गोविन्दवेणुमनु गोविन्दस्य वेणुनिनादमनुसृत्य मन्दगर्जितश्यामघनभ्रान्त्या मत्ता ये मयूरास्तन्नृत्यं प्रेक्ष्य अवलोक्य अद्रिसानुषु अवरता निवृत्तसर्वव्यापाराणि अन्यानि समस्तानि सत्त्वानि यस्मिंस्तत् नाम्नोऽस्यैवम्विधो देश इति भावः ॥ १० ॥

---

### श्रीरामकृष्णकृतप्रेममञ्जरी ।

गोप्यः किमाचरदयमिति एता दक्षिणा अधीराश्च । हे गोप्यः ! गोपनशीलाः सख्यः गोपनीयमिदं रहस्यमित्यभिप्रायः । अयं प्रसिद्धः श्रूयमाणो वेणुः किं कुशलमाचरत् जानीमश्चेद्वयमपि तदेवाचरामः । स्मेति विस्मये ज्ञानं यत्सवंशो जातः शिरसा धृतश्च तत्सर्वमपि विहाय प्रागुक्तशुभाशुभसंपर्कमुत्सृज्य शिरोग्रन्थिमात्रशेषः एषोऽभिमात्रसात्त्विकं नव छिद्राणि संशोध्यानुरागयोग्यमात्मानं विधाय कृष्णमनुसृतोऽधरामृतैकजीवनस्तेनाप्यतीव सघनानुरागेण कक्षकटिशय्यादिष्वनुशायितः मम च चाधरामृतेनाप्यायितश्च विलसतीति गूढं तद्रहस्यं न कस्यापि प्रकाशनीयं वयमपि तथा चरामस्तर्हि तथैव भवामः दामोदराधरसुधां भुंक्ते न तु पिबतीति तस्याचरणम् स्वयमिति धनिनामनुमतिमपि नाकांक्षते पीतामृतगर्जितेन जितेन च क्षते स्वयामिवातपयति त्वक्सारो ऽयमन्तःसारशून्योऽपि दारुखण्डः किं कुर्मः ? दामोदरेति वाक्यमारभ्य सुधासञ्चयोऽभिप्रेतः । यद्वा, बाल्यचापलेनैव पुंस्त्वे नीयोग्यमपि पाययतीति साभ्यसूयम् यद्वा, दाम्ना निःपीडयोदरमशेषामेव सुधां पाययति नवशिष्टम् अवशिष्टम् अनवशिष्टमित्यर्थः । रसमात्रमपि नावशिष्यते । ननु, स्वरचातुर्येण सुषिरं वादयति भवतीभिः कुतो ज्ञानं सुधां पाययति तत्राहुः मातृभावा गम्भीराशयाः हृदिन्योपि हृष्यादिति तरवो मान्या अपि यथा पित्रादयो हि राजमान्यत्वेन स्वपुत्रस्योदयमालक्ष्य विलक्षणसुखमनुभवन्ति प्राग्भवीनं पुण्यजातमस्य तिष्ठतु सम्प्रत्येवायमतिपुण्यवानिति सदाचारवद्धैर्यश्लाघ्यत्वेऽतीति ॥ ९ ॥

वृन्दावनमिति । हे सखि ! मात्मां श्रीहस्तादौ नित्यं क्रीडतो वेणुराजस्य भाग्यं तत्पदाम्बुजस्पर्शलब्धपरभागभारतान्तर्गतवृन्दावनाख्यभूभागस्य भाग्यं नावदनुभूयतामित्याहुः यत्सम्बन्धेन कल्पायुषो ब्रह्मादिस्वर्गादिना कल्पवासिभिरपि स्तूयते तत्साध्यमेव पूर्णं ब्रह्म निजचरणाङ्कैर्निखिलधामभ्योपि विशिष्टं सौभाग्यमातनोति राजमुद्राङ्कितवस्तु सर्वतः श्रेष्ठयमाप्नोतीति न्यायात् ॥ १० ॥

---

### श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

चम्पावती चम्पकाङ्गीं प्रत्याह-गोप्य इति । बहुवचनं गौरवादितिना यद्वा, गोपनशीलाः सख्य इत्यर्थः । गोपनीयमिदं रहस्यमित्यभिप्रायोक्तम् अवमनर्थकारी वेणुः किं कुशलमाचरत् पूर्वजन्मनि किमनिर्वचनीयपुण्यविशेषं कृतवान् इत्यर्थः यत् सुवंशो जातः श्रीराधावल्लभे प्रेमपात्रमात्मानं विधाय तमेवानुसृतश्चाधरामृतैकजीवनश्च तेन राधावल्लभेन अतिनवानुरागेण कक्षकटिस्थानयोः शायितश्च अधरामृतेन पायितश्च श्रीवृषभानुकुमारीवल्लभस्य प्राणतोऽप्यधिकप्रियश्च ततः किं पुण्यविशेष इति भावः । जानीमश्चेत्तद्वयमाचरामस्तथैव भवाम इति भावः । अवशिष्टमित्यत्र नञ्समासः त्याकारः नतूपसर्गस्य । यद्वा, स्वयमिति धनस्वामिनीनामस्माकमनुमतिमपि न काङ्क्षते पीतामृतगर्वितश्चते स्वयमिवापयतीतिभावः ॥ ९ ॥

चम्पा ललितानाम्नीं सखीं प्रत्याह—वृन्दावनमिति ।—

अलमलमिह योषिद्वृन्दमीसङ्गरङ्गै-
रलमलमिहविद्यापत्यविद्यायशोभिः ॥
अलमलमिह नाना साधनायासजाले—
र्भजत भवत वृन्दारण्यमाश्रित्य धन्याः ॥
सा मे न माता स च मे पिता न ।—
स मे न बन्धुः स च मे सुहृन्न ॥
स मे न मित्रं स च मे गुरुर्न ।—
यो मे न वृन्दावनवासमादिशेत् ॥
तच्छास्त्रं मम कर्णमूलमपि च स्वप्नेऽपि यायादहो—
श्रीवृन्दाविपिनस्य यत्र महिमा नात्यद्भुतः श्रूयते ॥
ते मे दृष्टिपथं न यान्तु नितरां सम्भाव्यतां ये तथा ।
ये वृन्दावनवैभवस्य श्रवणेऽप्युल्लासिनो नोऽखिलाः ॥
रचति संसारमयाहोपाकरमप्यशेषनृद्वन्द्वम् ।
वृन्दावनमिति तेन प्रथितं तन्नौमि काननं किमपि ॥१०॥

---

### भाषा टीका ।

हे गोपीओ ! या वासुरी नें कौन पुण्य कियो है, जा पुण्य के प्रभाव सों हम गोपीन के पीवे योग्य जो दामोदर को अधरामृत है, ताय ये इकिलखोरी आपुही पीवे है । याके पिये पीछें बच्यो खुच्यो जो रस ताकूं ये या जगे की तलाईं नदियें और वृक्ष पान करें हैं, ताई सों तो इनमें कमल खिले हैं, और वृक्षन तें मीठी २ मधु की धारा चल रही हैं । जैसें भार्य जो शिष्ट पुरुष हैं ते भगवान् के अवशिष्ट प्रसाद कूं पायकें रोमांच गद्गद होयके आसुन कों वहावें हैं ॥ ९ ॥

अरी सखी ! ये वृन्दावन पृथिवी की कीर्ति कों बढावे है, कैसो ये वृन्दावन हैं ? कि—देवकी सुत श्रीकृष्णचन्द्र के चरणन सों जाने शोभा पाई है, और जामें गोविन्द जब वेणु बजावें हैं ताकूं सुनकें उन्मत्त मोर नाचिवे लगें हैं, वा नृत्य कूं देखिके गिरराज की शिखर पै आर लता पतान में जितने जीव जन्तु हैं ते निश्चल होयकें सुनवे लगे है ॥ १० ॥

---

धन्याः स्म मूढमतयोऽपि हरिण्य एता या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरणितं सह कृष्णसाराः पूजां दधुर्विरचितां प्रणयावलोकैः ॥ ११ ॥
कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं श्रुत्वा च तत्क्वणितवेणुविचित्रगीतम् ।
देव्यो विमानगतयः स्मरनुन्नसारा भ्रश्यत्प्रसूनकवरा मुमुहुर्विनीव्यः ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपरा आहुः-हे सखि ! मूढमतयस्तिर्यग्जातयोऽप्येता हरिण्यो धन्याः कृतार्थाः या वेणुरणितं वेणुनादमाकर्ण्य नन्दनन्दनं प्रति प्रणयसहितैरवलोकनैर्विरचितां पूजां सम्मानं दधुः कृतवत्यः । किञ्च, कृष्णसारैः स्वपतिभिः सहिता एव दधुः अस्मत्पतयस्तु गोपाः क्षुद्राः समक्षं तन्न सहन्त इति भावः ॥११॥

अन्या ऊचुः हे गोप्यः ! आश्चर्यं शृणुत वनितानामुत्सवो यस्मात्तद्रूपं शीलं च यस्य तं कृष्णं निरीक्ष्य तेन नादितवेणोरसङ्कीर्णं गीतं च श्रुत्वा विमानैर्गच्छन्त्यो देव्यो देवानामङ्केषु स्थिता अपि स्मरेण नुन्नसाराः परिक्षिप्तधैर्या मुमुहुः । मोहं विक्रमाहुः भ्रश्यत्प्रसूनाः कबराश्चूडा यासां ताः विगता नीव्यो यासां ताः अत्र सर्वत्र वक्तृभेदाज्जातीव सङ्गतिर्वक्तव्या ॥ १२ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो अस्तुतरां हरिप्रियसर्वजीवाश्रयस्य श्रीवृन्दावनस्य महापशुजातीनामारण्यानां हरिणीनामपि भाग्यं किं वर्ण्यतामित्याहुः, धन्या इति । मूढा विवेकहीना गतिर्ज्ञानं यासां ताः पशुजातित्वात् मतय इति पाठेऽपि तथैवार्थः ता वक्तव्ये एता इति प्रत्यक्षत्वाद्यभिप्रायेण एताः श्रीवृन्दावनवर्त्तिन्यः वनचर्य्यो वा नन्दस्य श्रीवल्लवेन्द्रस्य नन्दनं कुमारमिति परमसुन्दरवेषरसिकत्वादिकं सूचितं श्लेषेण नन्दं साक्षादानन्दमप्यानन्दयतीति परमानन्दघनमूर्त्तिमित्यर्थः । उपात्ताः स्वीकृताः विचित्रा वेषा सखिभिरुपायनतया समर्पिता वनमाला बर्हापीडगुञ्जावतंसादिभूषणानि येन तं प्रति प्रणयाद्य लोकैरेव विरचितां विशेषेण कल्पितामिति तासां तदतिरिक्तत् पूजाद्रव्याभावात् रसिकशिरोमणिश्च तस्य तैरेव पूजासम्पत्तेः बहुत्वं गौरवेण दृष्टिपरम्पराविवक्षया वा स्मेति विस्मये खेदे वा अहो वतास्माकमीदृशं भाग्यं नास्तीति भावः । अन्यत्तैर्व्याख्यातमेव अथवा वेणुनादमाकर्ण्य महाश्रीवृन्दावनविषयकजन्मादिमाहात्म्येन सर्वेषानां परमविदग्धानामपि विवेकहीनतां प्राप्ता गतिः बाह्यान्तरेन्द्रियवृत्तिः किम्वा मूढानां जडानामिव गतिः स्थितिः गमनमेव वा इतस्ततः स्खलनादिलक्षणाम् स्तब्धतालक्षणाम् वा यासां हरिण्यः सद्य वनान्तश्चारिण्योऽपि प्रणयावलोकैर्विरचितामेव पूजां दधुः काममोहिततया किञ्चिदन्यत् कर्त्तुं विवेक्तुं वाशक्ताः केवलं सादरं पूजयन्त्य इव प्रेम्णा निरीक्षयन्त्य इत्यर्थः एता अस्मत्सपत्न्यः अपीत्यस्य कृष्णसारैरन्वयः । कृष्णसारा अपि सह एकदैव तथा चक्रुरित्यर्थः, कृष्ण एव सारः श्रेष्ठः परमोपादेयो येषामिति श्लेषेण गोपा निन्दिताः तेषां साक्षात् सदङ्गेनारमनस्तादृशश्रीकृष्णसेवाचरणाशक्तेः अन्यत्समानम् ॥११॥

अहो आस्तां श्रीवृन्दावनवर्त्तिनीनां गोसङ्गत्या श्रीकृष्णान्तिके चरन्तीनां तासां माहात्म्यं खेचरीणामपि भाग्यं किं वर्ण्यमित्याहुः—कृष्णमिति । चित्ताकर्षकं वनिता विदग्धाः सर्वा वा स्त्रीजातयः शीलं विचित्रक्रीडादिपरस्वभावः येषामिति क्वचित् पाठः तेन क्वणितस्य वादितस्य वेणोः विविक्तं शुद्धं मनोज्ञं वा किं वा शृङ्गारादिरसलब्धविभागं गीतं विमानगतय इति स्वर्पति साहित्यं वैमानिकत्वेनाकस्मादागमनं श्रीकृष्णसङ्गमायोग्यत्वं चोक्तं तथापि कामहृतधैर्य्याः सत्यो मुमुहुः अत्र रूपादेर्निरीक्षणोक्तिः ताभिस्तस्याहृष्टत्वात् अत एव तद्दर्शनेन विशेषतो वेणुगीतश्रवणेन च तादृशमोहो युक्त एव किं वा यदा यदा रूपाद्यनुभवस्तदा तदैव मोह इति अन्यत्र च व्यक्ततया तदुक्तिः श्रीवृन्दावनवर्त्तिनां महाभागानां तेषां स्वतस्तत्सिद्धेः मोहेनैव विमानतोऽवतीर्य श्रीकृष्णान्तिकमागन्तुं न शक्यम् इति भावः । अतो वत सुरसुन्दरीणामपि सम्मोहनस्यैवम्भूतस्य सर्वसौभाग्यामृतसिन्धोरस्य दर्शनमप्यनाप्नुवतीरस्मान् धिगिति । किम्वा वनविहारिणस्तस्य तत्र तथा दर्शनाद्यभावाद्वयमधन्या एव तास्तु धन्या इति भावः ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो अस्तुतरां हरिप्रियसर्वजीवाश्रयस्य श्रीवृन्दावनस्य माहात्म्यं तदाश्रयिकाणां पशुजातीनामपि भाग्यं किं वर्ण्यतामित्याहुः—धन्या इति । मूढाः विवेकहीना गतिर्ज्ञानं यासां तथाभूता अपि मतय इति पाठे तथैवार्थः हरिण्य इति वनचारिण्योऽपि एता दृश्यमाना इव नन्दस्य श्रीवल्लवेन्द्रस्य नन्दनमिति धात्वर्थबलादखिलगुणमहिष्ठत्वं सूचितम् एवं गुरोरपि तस्य नामग्रहणमतिक्षोभवैवश्येन विक्षिप्तमनस इत्युक्तत्वात् उपात्ताः स्वीकृताः विचित्रवेषा वनमाला बर्हापीडगुञ्जावतंसादिरूपा येन तं वेणुविरुतमिति रागरचनापर्य्यवसितं प्रथमफूत्कारमात्रमुक्तम् अनुकरणशब्दो ह्ययं रणितमिति पाठोऽपि क्वचित् अत्र टीका पुनरुक्ता स्यात् कृष्ण एव सारः परमोपादेयो येषामिति श्लेषेण च स्वपतयो निन्दिताः पूजामिति तावतैव सर्वोपचारपूर्णत्वं जातमिति ध्वनितम् अत एव दधुः पुपुषुः सर्वपूजाकार्योऽधिकं चक्रुरित्यर्थः । अतः स्थितोऽपि वैशिष्ट्यं विशेषेण रचितामिति तत्र सर्वत्र हेतुः प्रणयावलोकैरिति भावमात्रग्राहिणस्तस्य तैरेव पूजासम्पत्तेः बहुत्वं परम्पराविवक्षया स्मेति विस्मये खेदे वा अहो वतास्माकमीदृशं भाग्यं नास्तीति भावः । अन्यत्तैः अथवा वेणोरिरिफितं यत्र तादृशं सन्तम् आकर्ण्य श्रवणद्वारा ज्ञात्वा उपात्तवेषं सन्तं प्रणयावलोकैर्दधुः वशीकृतवत्यः तैरेव

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रीतिसेवामपि विदधुरित्यर्थः "ससाधि भूमिपतिभिः" इत्यारभ्य दधत् दशनचुम्बुरशब्दमश्वः" इति माघकाव्यवत् "संस्तुवन् वदमानांस्तान् रावणस्य गुणान् जनान्" इति भट्टिकाव्यवच्च श्रीमन्नन्दनन्दनस्य भवणक्रियाकर्मकत्वं ज्ञेयम् अन्यत्समानम् ॥११॥

अहो आस्तां श्रीवृन्दावनवर्तिनीनां श्रीकृष्णान्तिके चरन्तीनामासां माहात्म्यं खेचरीणामपि भाग्यं किं वर्णयामस्याहुः, कृष्णमिति चित्ताकर्षकं वनिताः तदनुरागयोग्याः स्त्रीजातयः शीलं सुस्वभावः तेन कथितस्य वेणोः विविक्तं प्रतिकूलरागामिश्रणेन शुद्धं किम्वा शृङ्गारादिरसलक्ष्मविभागं गीतं विमानगतय इति स्वपति सान्निध्यं वैमानिकत्वेनाकस्मादागमनं श्रीकृष्णसङ्गमायोग्यत्वं चोक्तं तथापि कामहृतधैर्याः सत्यो मुमुहुः अत्र रूपादेर्निरीक्षणोक्तिः तासामेतस्या दृष्टचरत्वात् अत एव तद्दर्शनेन विशेषतो वेणुगीतश्रवणेन च तादृशमोहो युक्त एव किं वा यदा यदैव रूपाद्यनुभवस्तदा तदैव मोह इति निरीक्ष्य श्रुत्वा चेति द्वयोरपि मोहे कारणत्वमुक्त्वा तयोर्वैपरीत्यमपि जन्मनि मतं यदैव खलु क्रमप्राप्तं भवतीति मोहेनैव विमानतो ऽवतीर्य श्रीकृष्णान्तिकमपि गन्तुं न शक्ता इति भावः मोट्टायिताख्यानुभावोयं यथोक्तम्—

कान्तस्मरणवार्तादौ हृदि तद्भावभावतः ।
प्राकट्यमभिलाषस्य मोट्टायितमितीर्यते ॥ इति

अहो बत परममूढानां हरिणीनां परमविदग्धानां सुरसुन्दरीणामपि सम्मोहनस्यैवम्भूतस्य सर्वसौभाग्यामृतसिन्धोरस्य दर्शनमप्यनाप्नुवतीरस्मान् धिगिति किम्वा वनविहारिणः तस्य तत्र तथा दर्शनाद्यभावाद्वयमधन्या इति भावः ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वेणुरणितं शब्दितं दधुः आदधुः ॥ ११ ॥
स्मरनुन्नसाराः स्मरनुन्नधैर्याः ऽयनीव्यः शिथिलनीवीबन्धाः ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

धन्या इति । मूढगतयस्तिर्यग्गतयोऽपि मतय इति पाठे सुन्दरासुन्दरवस्तुविवेकरहिता अपि गतय इति पाठेऽप्ययमर्थस्सम्भवति "गत्यर्था बुद्ध्यर्थाः" इति न्यायात् एता हरिण्यो धन्याः कृतार्थाः एवं कुत इत्यत्र विशिंषन्ति याः हरिण्यो वेणुगीतमाकर्ण्य उपात्तः स्वीकृतो बर्हादिभिर्विचित्रो वेषो येन तं नन्दस्य नन्दनं प्रति प्रणयसहितैरवलोकैः पूजां सम्मानं दधुः कृतवत्यः किञ्च कृष्णसारैः स्वपतिभिः सहिताः एव दधुरस्मत्पतयस्तु गोपाः क्षुद्राः तन्न सहन्ते न समक्षमिति भावः ॥ ११ ॥

अन्यास्तु हे गोप्यः इदमप्यद्भुतं शृणुतेत्याहुः—कृष्णमिति । वनितानामुत्सवो यस्मात्तच्चारु शीलं यस्य तं कृष्णं निरीक्ष्य तेन वादितस्य वेणोरसङ्कीर्णं गीतं च श्रुत्वा विमानैर्गच्छन्त्यो देवानामङ्केषु स्थिताः स्मरापहृतधैर्या मुमुहुः मोहे चिह्नमाहुः

भ्रश्यत्प्रसूनाः कवराश्चूडाः यासां ताः विगता नीव्यो यासां ताः शिथिलनीवीबन्धनाः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुष्ठु मूढा विवेकरहिता मतयोऽमां तास्तथा कृष्णमार्गानुसारेण पुम्मृगेण कान्तमृगेण वा सहिताः नन्दस्य नन्दन वेणोरचितं निःसृतं स्वरं चापीयास्वाद्यप्रणयेन सहितैः अवलोकनैः दर्शनैः उन्नतमस्तकत्वाद्दधुरिति ॥ ११ ॥

वनितानामुत्सवभूतं रूपसारं स्थिरसौन्दर्यं यस्य स तथा तं तत्सौन्दर्ये च स्वभावे चेति "सारो बले स्थिरांशे च" इति यादवः तेन कथितात् वा तेन शब्दिताद्वेणोर्निर्गतं निर्गतं चित्र सप्तस्वराभिगीतं "वीगतौ" इति धातुः "चित्रमाश्चर्यालेख्ययोः" इति यादवः देव्यो देवस्त्रियः स्मरेण नुन्नं नष्टं सारो धैर्यं यासां तास्तथा भ्रश्यत्प्रसूनकवराः विगलितपुष्पकेशभराः विगताः स्रस्ताः नीव्यः वस्त्राणि वस्त्रग्रन्थयो वा यासां तास्तथा "नीवी वस्त्रांशुकग्रन्थ्योः" इति च ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रौढा ऊचुः—धन्या इत्यादिद्वाभ्याम् । स्मेति विस्मये हरिण्योऽपि मूढगतयः सत्यः प्रणयावलोकैर्या नन्दनन्दनम् एताः प्राप्ताः सत्यः पूजां दधुः कीदृशीं विरचितां विशेषेण रचितां प्रणयावलोकैर्विरचितां वा किञ्च वेणुरणितम् आकर्ण्य तत्रापि पतिसहिता इत्याहुः सह कृष्णसाराः अतो धन्या वयं तु वेणुरणितमाकर्ण्यापि प्रणयावलोकैः पूजयितुं न शक्नुमः अस्माकं पतयो यतोऽस्य नाम्नापि कुप्यन्तीति तद्वयमधन्या एवेति ऊढानामिदं दैन्यमिति मन्तव्यम् ॥ ११ ॥

तथैव ऊढप्रौढा ऊचुः—कृष्णं निरीक्ष्येत्यादि । हे सख्य इति वाच्यत्वं सन्तु हरिण्यः देवीनामपि वैवश्यं पश्यतेत्याशयः विमानगत इत्यनेन भर्तृसहितत्वं द्योत्यते स्त्रीणां स्वातन्त्र्येणापि विमानकरणकागमनासम्भवात् तेन देव्योऽपि प्रकृष्टज्ञानादिमत्योऽपि कृष्णं निरीक्ष्य मुमुहुः मोहे चिह्नमाह—विनीव्यः भ्रश्यत् प्रसूनाः कवरात् यासां दूरस्थानां तासां वनस्थत्वेनास्य कदाचित् कासां च न दर्शनं न सङ्गच्छते तदाशङ्क्याहुः—श्रुत्वा चेति । या न पश्यन्ति ता वेणुरवं श्रुत्वैव मुह्यन्तीत्यर्थः । स्वरूपमाह, स्मरनुन्नसाराः स्मरेण नुन्नः छिन्नः सारो धैर्यं यासां कृष्णं कीदृशं वनितोत्सवरूपशीलं "वनिताजनितात्यर्थानुरागायां च योषिति,, तासाम् उत्सववत् रूपं च शीलं च यस्य विविक्तगीतमिति विविक्तं रागान्तरेणामिश्रितं विरलं वा स्वकल्पितत्वात् सङ्केतबहुलं वा यत्सर्वैर्नावगम्यते अस्माभिरेव ज्ञायत इति भावः । एवंविधवैवश्येऽप्यासां पतयो नाऽसूयन्ति अस्माकं निश्वसितेऽप्यसूयन्ति पतयः अतो वेणुविविक्तगीतं श्रुत्वापि न शृणुम इत्यहो नः काठिन्यं पामरताचेति पूर्ववद्दैन्यम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उत्तरत्र श्रीनन्दनन्दनामिति तु गोपनाशक्तेः वेणोरणितं तत्र तथाभूतम् अकर्ण्य श्रोत्रविषयीकृत्य विचित्रवेषं सन्तं प्रणयावलोकैर्वशीकृतवत्यः तैरेव पूजाश्च दधुः कृतवत्यः ॥ ११ ॥ १२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं रूपवर्णनामुक्त्वा षोढा वेणुं वर्णयन्ति—धन्यास्त्विति षड्भिः—

हरिण्योऽप्सरसो गावः पक्षिणो नद्य एव च ।
मेघाश्चेति क्रमेणैव कृष्णैश्वर्यादिबोधकाः ॥
ईश्वरः पूज्यते लोके मूढैरपि यथा तदा ।
निरुपाधिकमैश्वर्यं वर्णयन्ति मनीषिणः ॥
वीर्यं देवेषु तत्रापि स्त्रीषु तत्रापि कामतः ।
सान्निध्ये पुरुषाणाञ्च मूर्च्छा तेन ततो महत् ।
यशो यदि विमूढानाम् प्रत्यक्षासक्तिवारणात् ॥
स्वधर्मं योजयेत्तेषु तदा भवति नान्यथा ।
तामसा राजसाश्चान्ये गुणातीताश्च रूप्यते ॥
वृन्दावनं गुणातीतं मुनयश्चापि पक्षिणः ।
गोवर्द्धनश्च त्रितयं गुणातीतमिह स्थितम् ॥
तद्गताश्चापि लोके ऽस्मिन् गुणातीता भवन्ति हि ।

"यदा खलु वै पुरुषः श्रियमश्नुते वीणास्मै वाद्यते" इति श्रुतिन्यायेन सर्वं एव विहगा भगवदीया अपि परमां श्रियं प्राप्नुवन्ति

श्रियो हि परमा काष्ठा सेवकास्तादृशा यदि ।
ज्ञानोत्कर्षस्तदैव स्यात् स्वभावविजयो यदि ॥
हरेश्चरणयोः प्रीतिः स्वसर्वस्वनिवेदनात् ।
उत्कर्षश्चापि वैराग्ये हरेरपि हरिर्यदि ॥
भक्त्या च तादृशत्वं च सा सेवा सेवकोचिता ॥

तत्र प्रथमं हरिणीनां भाग्यमभिनन्दन्ति—धन्या इति । ज्ञानम् हि क्रियाविशेषणीभूतम् क्रियोत्कर्षः पूजायां सापि चेत ज्ञानमयैर्द्रव्यैर्भगवद्विषयिणी भवति भगवज्ज्ञानं स्वज्ञानं चतस्यात्यक्तं तदभावे सर्वं व्यर्थं यद्यन्यत्रापि तद्भवेत् तदा तदेषामिति पक्षमाश्रित्य पूर्वं पक्षं व्यावर्त्तयन्ति, धन्यास्त्विति । तुशब्देन सदोषो न ज्ञायत इत्याशङ्कां परिहरन्त्य आहुः—मूढमतयोऽपीति । स्त्रीणामेवाभिनन्दनं प्रकरणात् हरिणानां स्त्रियोऽत्र विवक्षिताः हरिण्यः सर्वत्रान्या एव वर्णयन्तीति ज्ञातव्यं स्वस्याकृतार्थताभावनया दैन्याविर्भावे भगवान् कृपया वर्धमानसर्वसामग्रीसहितः प्रकटीभूत इति ज्ञापयितुमेता इत्युक्तं तासाम् भाग्ये हेतुमाहुः, याः नन्दनन्दनं निरीक्ष्य वेणुरणितमाकर्ण्य भगवत्कृतैः प्रणयावलोकैर्विरचितां पूजां स्वस्मिन् दधुरिति या इति पूर्वं भगवदुक्ताः प्रसिद्धाः नन्दमप्यानन्दयतीति नन्दनन्दनः भक्तोद्धारार्थमेव प्रवाक्यात् प्रवृत्तः उद्धारप्रकरणाच्चा अप्युद्धरिष्यतीति उपास्यः स्वीकृतो विचित्रो वेषो येन अनेन रसाभिनयार्थं प्रवृत्तो भगवानुक्तः एवं स्वरूपतस्तत्कार्यकर्तृत्वं साधनतश्च फलमुक्तं कर्तृत्वमुक्तं विचित्रपदेन सर्वे एव रसाः परिगृहीताः समीपे स्वीकारो भक्ता-नन्दस्य तत्र प्रवेशनार्थः । आकर्ण्यैत्येव क्रियावेणुरणिते भगवति च भवेतः शब्दतश्च पशुद्वारिविशेषं न गृह्णन्तीति शास्त्रसंप्रयुक्ता पश्चाज्जायमानापि प्रत्यक्षदृष्टिरन्यानुरोधिनीति विद्यमानापि (सा) न गणिता तदाह—आकर्ण्येति वेणो रणितं सर्वरसाऽऽधारणां यथा रसो वाहितो न गच्छति तथा शब्दविशेषं रणितम् तादृशमपि निकटं गत्वा श्रुतवत्यः अनेन दैहिका धर्मा निवर्त्तिताः । सह कृष्णसाराः स्वभर्तृसहिताः अनेन भर्तृनिरोधोऽपि परिहृतः सापत्न्याभावश्च कृष्णसार इत्यनेन कृष्ण एव सारो येषामिति कृष्णसाराः अनेन गोपास्तथा न भवन्तीति स्वस्यातथात्वं सूचितम् अन्यथाऽस्माभिरपि सह गोचारणां कुर्युः अत एतेऽभिमानसारा एव धन्यास्ते कृष्णसाराः स्नेहपूर्वकावलोकनैः विरचितां भगवति पूजां धारयामासुः नेत्राण्येव कमलानि ज्ञानवासितानि ज्ञानोद्गमस्थानानि तैः पूजा सर्वोत्तमा तस्याश्च धारणम् ततोऽपि कृतिरर्थादेवोक्ता भगवता च प्रतिपूजितम् आत्मनि वा दधुः सप्रणयावलोकैरिति वा पाठः एतावदेव कर्तव्यं प्राणिनां भगवतश्च ॥ ११ ॥

अप्सरसामवस्थामाह—कृष्णं निरीक्ष्येति । कृष्णपदार्थात् स्त्रीणां निरोधः सूचितः आनन्दे दृष्टे आनन्दसाधने आसक्त्याभावो युक्त एव तत्रापि सदानन्दे नितरामीक्षणं दिव्यदृष्ट्या स्वजातीयोद्धारार्थमेवागत इति विशेषः तदाहुः—वनितोत्सवरूपशीलमिति । वनितानामेवोत्सवार्थं चारुर्वेषो यस्य उत्सवो ह्यनेकविधः तत्तदुत्सवे ते ते भूषिता भवन्ति उत्सवरसानुभावार्थं केवलं वनितानामेवोत्सवो यत्र वनं यौवनमिताः प्राप्ताः प्राप्तवत्यः वनं सञ्जातमिति वा इतच्प्रत्ययः न हि तत्र प्रविष्टः पुनरावर्त्तते यौवनमित्यत्रापि युग्मिभवार्थं वनमिति तासामेवोत्सवो भवत्विति भगवता वेषः कृतः सर्वाभरणभूषिता सर्वा एव वनिताः यथा वेशरसं पुरुषार्थमनुभवन्ति अनेनास्मिन्नुत्सवे यासामलङ्कारादिनोत्सवो न जातः तासां वनितात्वं व्यर्थमेव यथा रण्डानां तत्रापि चारु मनोहरम् अन्तरप्यलङ्कारहेतुः तत्र प्रेमज्ञानादिकमलङ्काराः बहिरिवान्तरपि रसानुभवश्च अनेनाप्सरसां भगवद्दर्शनगमने सर्वोऽप्युपाय उक्तः अनुभावकं ततोऽविलम्बेन प्रत्यापकमाह—श्रुत्वा चेति । निकटे समागत्य पूर्ववदेव क्वणितस्य श्रवणम् अत्र वेणुव्यतिरिक्तकूजितादिक्वणितानां संग्रहार्थं तस्य भगवतः क्वणितमित्युक्तं क्वणितञ्च वेणुः तादृशवेणुनाविर्भावं प्राप्तानि विचित्राणि गीतान्याकर्ण्येति सम्बन्धः एकेनैव गीतेन मूर्च्छिता जाता इत्येकवचनं विचित्राणि सर्वरसात्मकानि शृङ्गार एव सर्वे रसा इति नाट्यशास्त्रसिद्धान्तः अन्यस्य रसत्वमेव न मन्यन्ते यथा महान्तः सुवर्णाभरणान्यन्योपकारणानि च कुर्वन्ति तथा शृङ्गार एव सर्वरसाः अन्यथा रसिकानां रुचिर्नोत्पद्येत अत एव विचित्रं गीतं यद्यपि ता देव्यो देवतारूपाः पूज्या एव तत्रापि विमानेनैव गतियासां नापि भोग्याः नापि दुःखसहनशीलाः तथापि स्मरेणैव तुन्नः सारो यासां शरीरेन्द्रियापेक्षया मनो वरिष्ठमिति स्मरेण सारो विवेकः सर्वोऽप्यपहृतः भूमावनागमनं पञ्चत्वमनागमने स्वतोऽप्यनागमने हेतव उक्ताः अतो यत्जाते तदाहुः—मुमुहुरिति । न केवलमन्तरेव हृदयप्रदेशे मोहः किन्तु एतदेवोक्तं प्रश्रमसूनानि कबरे यासां विगता नीवी च

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यासामिति केशनीवीबन्धयोर्विश्लेष आमुष्मिकैहिकफलपरित्यागज्ञापकः देवतात्वाच्च मरणं विमानगतित्वाच्चाधःपतनं विवेकाभावात्तोपायेनागमनं भगवदनुपयोगेऽन्यस्यापि रसो नोत्पद्यतामिति रसाभासो वर्णितः देवसहिता अपि प्रायेणात्रावतीर्णानां केवलानां स्त्रियस्ताः स्वपत्यन्वेषणार्थमागता भगवन्तं दृष्ट्वा पूर्वावस्थां सर्वामेव विस्मृतवत्यो भगवानेव पतिर्भविष्यतीति तदाऽस्माकं तथात्वं युक्तमेवेत्यर्थः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो स्वरमणं त्वमनभिसृत्य वयं बुद्धिमत्योऽपि स्वजन्म विफलीकुर्महे यतो मूढा अपि सफलीभवन्तीति दर्शयन्त्य आहुः—धन्या इति । स्मेति विस्मये खेदे वा एतादृशं भाग्यम् अस्माकं नाभूदिति भावः या वेणुरणितं वेणुरिफितमिति पाठद्वयं तुल्यार्थं वेणुनादम् आकर्ण्य नन्दनन्दनं प्रति प्रणयपूर्वकावलोकैरेव पूजां दधुः पुपुषुः तासां तैरपि यः आत्मनः पूजां पुष्टां मन्यते स नन्दनन्दनोऽस्माकं तैः पुनः किमुतेति भावः । किञ्च, ताः सह कृष्णसाराः पतिभिः सहिता एव । अयमर्थः कृष्ण एव प्रीतिविषयत्वेन सारो येषां ते यथार्थनामानः तासां पतयः स्वपत्नीः कृष्णानुरागिणीरालक्ष्य स्वगार्हस्थ्यमेव धन्यं मानयन्तोऽतिहृष्यन्तो अन्वनुगच्छन्तस्ताः कृष्णमसारयन्ति अस्मत्पतयस्तु कृष्णगन्धायापि द्रुह्यन्ति धिगस्मज्जीवितमिति ॥ ११ ॥

किञ्चास्माकं गोपीनां गोपे कृष्णे रतिर्नातीवानुचिता यतो देव्योऽपि मानुषे तत्रापि गोपे कृष्णे रतिमत्यः सत्य एव स्वदेवत्वमपि सफलयन्तीत्याश्चर्यमित्याहुः कृष्णमिति वनितानां स्त्रीमात्राणामेवानुरागिणीनामुत्सवो यस्मात्तथाभूतं रूपं शीलं च यस्य तं देव्यो देवानामङ्के स्थिता अपि विमानगतयो विमानचारिण्यः स्मरेण नुन्नश्चालितः सारो धैर्यं यासां ताः मुमुहुः मोहे चिह्नमाहुर्भ्रश्यत्प्रसूनाः कबरा यासां विगता नीव्योऽपि यासां ताः मोट्टायितमिदं यदुक्तं "कान्तस्मरणवार्तादौ हृदि तद्भावभावतः । प्राकट्यमभिलाषस्य मोट्टायितमितीर्यते" इति परमविदग्धाः सूक्ष्मधियो देवास्तज्ज्ञात्वापि स्त्रीभ्यो न द्रुह्यन्ति प्रत्युत स्वीयं भाग्यं मानयन्तो नित्यमेव ताः कृष्णं दर्शयितुं विमानमारोह्य आनयन्ति अस्मत्पतयस्तु द्रुह्यन्त्येवेत्यतो निकृष्टाभ्य उत्कृष्टा देव्योऽपि धन्या मध्यस्था मानुष्य एव वयमधन्या इति भावः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या आहुः—हे सखि । याः कृष्णसारैः स्वपतिभिः सहिताः वेणोः रणितं निनादम् आकर्ण्य उपात्तविचित्रवेषं नन्दनन्दनम् प्रति प्रणयसहितैरवलोकैर्विरचितां पूजां दधुः कृतवत्यः, अत एता मूढमतयोऽपि हरिण्यः धन्याः कृतार्थाः कृष्णविमुखाः सुमतयोऽपि अधन्या इति भावः । तथाऽऽहुः "प्राप्य जन्म यदि मानुषं नरः सेवते न तव पादपङ्कजम् । धिक् च जन्म कुलमादिदेव ! तद्यौवनादिमकवत्(?) शोभते" इति ॥ ११ ॥

अन्या आहुः । हे सखि ! वनितोत्सवं रूपं शीलं च यस्य तं कृष्णं निरीक्ष्य तेन कृष्णेन कणितस्य वादितस्य वेणोर्विचित्रमसर्ज्जनं(?) गीतं च श्रुत्वा विमानगतयः विमानैर्गतिर्यासां ताः देव्यः देवाङ्गनाः स्मरेण उक्तप्रकाराभ्यां दर्शनश्रवणाभ्यामुत्पन्नेन कामेन नुन्नः परिक्षिप्तः सारः धैर्यं यासां ताः मुमुहुः तत्र चिह्नमाहुः भ्रश्यत्प्रसूनाः कामाग्निना विभ्रष्टपुष्पाः कबराः चूडाश्च यासां ताः श्रीकृष्णसंयोगदौर्लभ्यात्सद्यः कार्श्यभावेन शिथिलनीव्यः इति ॥ १२ ॥

---

श्रीगिरधरामकृष्णकृतप्रेममञ्जरी ।

धन्या इति एता हरिण्यः जात्यैव हरिसम्बन्धिन्यः वयं तु गोप्यः गोपसामान्यस्त्रिय इति ततोऽपि निकृष्टा इति भावः मूढमतयोऽपीति तमोपहत्यै इति तत्प्रतीत्यभिप्रायेण धन्याः श्लाघनीयाः स्मेति विस्मये एता इति मानससाक्षात्कारेण अहोभाग्यमेतासाम् एता हरिण्यो यदि वयं स्म तर्हि धन्या एताः काः ? या नन्दनन्दनं नन्दमानन्दं नन्दयत्यानन्दयन्तीति आनन्दस्याप्यानन्दमिति साक्षान्मन्मथमन्मथ इति तं पश्यतीति गुरोरपि नामग्रहणं भाववैवश्याद्वा नास्माकं कश्चित्सम्बन्धोऽस्तीति सूचयन्तीः स्वयाऽऽकारगुप्त्यैवाहारिणी यूयं दृष्ट्वा तदवलोचनादिसाम्यस्फूर्त्या तस्यापि भावोदयेन स्वभावविनिमयो जातस्तेन वेषपरिवर्त्तनं कृतमिति गृहस्थिताभिरेवैताभिर्भावनाप्रभावादनुभूतम् ननु, हरिण्यो जातिभीरवः कथं तत्र विश्वस्ता इति तत्राहुः-वेणुरणितमाकर्ण्येति । रणितमनुकरणशब्दः स च नूपुरशिञ्जितभावनयेति ध्वनितं तत्रागताः सत्यः कृष्णसारैः सह वर्त्तमाना इति तेषामप्राधान्यं तासां ध्वनिमात्रमोहितानां तादृशमवलोकनमपि प्रणयावलोकनत्वेन पूजा सम्भाविता निजभावसाजात्यात् यतः भावमात्रग्राहिण्यः "जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इति न्यायादिति ॥ ११ ॥

आस्तां वृन्दावनवर्त्तिनीनां कृष्णमनोहारिणीनां वार्त्ता खेचरीणामपि देवसहचरीणां वृत्तान्तः श्रूयतामित्याहुः-कृष्णमिति । अविशेषेण सर्वचित्ताकर्षकं निरीक्ष्य वनितानां जनितात्यर्थानुरागाणामुत्सवश्चित्तसमुल्लासो यस्मात्तादृशं रूपं शीलं च यस्य तं स च स्वभावो रागिजनानुवर्त्तित्वादिः तेन श्रीकृष्णेनैव कणितो वीणावादनभङ्ग्या वादितो यो वेणुस्तदिमाक्षरावलीप्रकाशनवैचित्र्येण नानास्वरजात्यादिप्रस्तारविचित्रं गीतं श्रुत्वा च देवाङ्गना विमानगतयः विमानयानाः अकस्मादागताः श्लेषेण विगतमानगतय इति तत्पूर्वं मानवत्य आसन्निति सूचितम् अत्र हेतुः-स्मरेण नुन्नः सारो धैर्येण मानस्थितिर्यासां ताः मुमुहुर्मोहेनैव कृष्णान्तिकमागन्तुं न शक्ताः अहो वेणुगीतस्याचिन्त्यः प्रभावः यतो देवानां सविधे वर्त्तमाना अपि स्मरेण मूर्च्छिता अपि प्रत्युत मानापगमात्प्रीत्या समालिङ्गिता इति मोहे चिह्नं भ्रंशादिति एवं श्लोकद्वयेनातिमूढानां हरिणरमणीनाम् अतिविदग्धानां देवीनां मोहं सम्भाव्यात्मनि तद्भावाभावस्य दैन्यं सूचितं सञ्चार्यमोट्टायिताख्योऽनुभावः तदुक्तम्—

**गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्यः।**
**शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्गोविन्दमात्मनि दृशाऽश्रुकलाः स्पृशन्त्यः॥ १३॥**

### श्रीरामकृष्णकृतप्रेममञ्जरी।

"कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः।
प्राकट्यमभिलापस्य मोट्टायितमितीर्य्यते"॥

भावस्य सजातीयतया वाक्यार्थसङ्गतिः सा चेयं प्रेमप्रत्यासक्तिर्यौगजप्रत्यासक्तिरिव सर्वविलक्षणेति॥ १२॥

---

### श्रीमत्कृष्णदासकृतश्रीगणदीपिका।

सौदामिनी सखी खण्डितां प्रत्याह—धन्या इति। हे सखीति योज्यं "स्वसखिभ्यो ऽन्यवर्णयन्"इत्युक्तेः एता हरिण्यो आत्मैव (धन्या) हरिसम्बन्धिन्यो वयं तु गोप्य इति ततो ऽतिनिकृष्टाः गोपसामान्यस्त्रीत्वविशिष्टा इति भावः। मूढमतयो ऽपीति तमोहरण्यै इतिवत् प्रतीत्यभिप्रायेण सुराङ्गनानामिव वर्गगतत्वेन सर्वज्ञत्वात् धन्याः श्लाघनीयाः स्मेति विस्मये आश्चर्य्यमिदं वेणुगीतमिति भावः। खेदे वाऽहो भाग्यमेतासामिति। यद्वा, यतो हरिण्यो यदि वयं स्म तर्हि धन्या इति। एताः काः? तत्राहुः—या इति। एता इति मानससाक्षात्कारेण यद्वा, एताः काः? या नन्दनन्दनमुपात्तविचित्रवेषमित्यावेशाद् गृहीतप्रियतमावेषामित्यर्थः। पश्यन्तीति दधुरिति भावमात्रग्राहस्तस्य तैरेव पूजा मुख्येति अत एव दधुः पुपुरित्यर्थः। इत्युक्तं न तु चक्रुरिति तासां ध्वनिमात्रमोहितानां स्वाभाविकावलोकनमपि प्रणयावलोकत्वेन सम्भावितं निजभावसायुज्यात् "जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" इतिन्यायात् सङ्क्षेपः। भाववैवश्येनोक्तं गुरोरपि नाम ग्रहणं तत एव किं वा प्रियतमाकारगुप्तेन स्म किं कश्चित्सम्बन्ध इति सूचनाय प्रियावेशानुकरणमिति "मुहुरवलोकितमण्डनलीला मधुरिपुरहमितिभावनशीला" इति वज्ज्ञेयम्॥ ११॥

आस्तां वृन्दावनवर्त्तिनीनां अस्मन्मनोहारिणीनां वार्ता खेचरीणामपि देवसहचरीणां वृत्तान्तः श्रूयतामिति वल्लवी सखी मधुमती प्रत्याह—कृष्णमिति॥ १२॥ १३॥

---

### भाषा टीका।

सखी श्रो! ये भोरी बुद्धि वारी हरिणी भी हमसों बड़ भागिनी हैं। काहे सों, कि—जो बासुरी के शब्द कूं सुनिके चित्र विचित्र वेष को धारण करन वारे श्रीनन्दनन्दन के समीप में अपने पतिन सहित जायके प्रीति पूर्वक चितवन सों उनकी पूजा करें हैं, हमारे पति तौ हम को क्यों दर्शन करन देंयगे॥ ११॥

श्रीन को उत्सव (आनन्द) देन वारो जाको रूप ऐसे श्रीकृष्ण चन्द्र को देखिके और बाजी जो वंशी ताके गीतन कों सुनि के विमान में बैठि के जायवे वारी जो देवांगना हैं काम के उदय होय वे तें धीरज जिनके छूटिगये आपहीं ते चोटी खुलगईं तिनमें सों फूल झरत जाय हैं, नारे जिनके खुल गये, या प्रकार मोहित होत भई। तौ फिर हम विचारी मानुषीन की कहा दशा है॥ १२॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

श्रवणाशङ्कयैवोत्तभितैरुन्नमितैः कर्णपुटैः पिबन्त्यः सत्यः तथा शावाश्च वत्साश्च स्तनपाने प्रवृत्ताः समनन्तरमेव गीतं श्रुत्वा तदेव पीयूषमुत्तभितकर्णपुटैः पिबन्तः स्नुतस्तनपयः-कवलाः केवलं स्तनेभ्यः क्षरितक्षीरग्रासा मुखेषु येषां ते तस्थुर्विस्मृतक्रिया बभूवुरित्यर्थः। तत्र हेतुः गोविन्दं दृशा मार्गेणात्मनि मनसि स्पृशन्त्य आलिङ्गन्त्यः अत एवाऽश्रूणां कला लेशा लोचनयोर्यासां ता गावस्ते च शावाः वत्साः॥ १३॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

अथान्यस्या गोप्या वाक्यमाह–गाव इति चतुर्भिः। यद्वा, पूर्वलिखितानुसारेणैव वाक्यतया व्याख्या तत्र सर्वश्लोकेषु पूर्वपूर्वस्मिन् वर्णितात् पदार्थादुत्तरोत्तरस्मिन् वर्ण्यस्य न्यूनत्वं कथ्यते अतो यद्यपि देवीभ्यः परमार्थतो वा न्यूनत्वं न सम्भवेत् तथापि प्रेमोल्लासस्य विचित्रगतित्वात् क्वापि किञ्चिद्विशेषमाभित्य तत्पदं करोति तथापि अस्तु तावत्परमविदग्धानां देवीनां भाग्यं पशुजातीनां मनुष्याधीनानामपि गवादीनां किं भाग्यं वर्ण्यमित्याहुः–गावश्चेति। स्वर्थे चकारः पूर्वतो वैशिष्ट्याय पीयूषरूपकेण मुखस्य चन्द्रत्वं कृष्णमुखशब्देन पीयूषस्य वैशिष्ट्यं सूच्यते कृष्णः परमानन्दघनमूर्त्तिः अतस्तस्य मुखचन्द्राद्विर्गतं वेणुगीतमेव पीयूषं स्मेति विस्मये निश्चये वा तस्थुः स्तब्धतालक्षणं सात्त्विकविकारं प्राप्ता इत्यर्थः। गोविन्दं निजप्रभुमिति प्रीत्यास्पर्शनं बोधयति अन्यत्तैर्व्याख्यातम्। यद्वा, शावेषु कथञ्चिन्निर्गलितेष्वपि न स्तनेभ्यः स्नुतः स्तनस्नुतः पयसः कवलः एकग्रासोऽपि याभ्यस्ताः पाठोऽयं तेषामपि सम्मतो लक्ष्यते वैपरीत्यपाठे सविसर्गपृथक्पदत्वे च शावाः स्नुतं भगवति जातवात्सल्यभरेण क्षरितं स्तनेभ्यः पयःकवलश्च मुखात् तृणग्रासो यासां ताः शावा वत्सा इति पक्षे स्नुतं केषाञ्चिदपि नवानां मुखात् क्षरितं स्तनपयः मातृस्तनक्षीरं कवलश्च केषाञ्चित् तृणचराणां तृणग्रासो येषां ते आत्मनि मनसि गोविन्दं स्पृशन्त्यः साक्षात् सम्यक् दर्शनाशक्तेः तत्र हेतुमाहुः–दृशा नेत्रेण अश्रूणि कलयन्ति वर्षन्तीति तथा ताः अश्रुधारया दृष्ट्या छादनान्मनसैव पश्यन्त इत्यर्थः। यद्वा, गोविन्दं लेहनादिना स्पृशन्त्यस्तस्थुः कथम्भूतम्? आत्मनीति जातापेक्षत्वं गोषु विषये दृशा वक्षिनं

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

गवां तादृशभावदृष्ट्या ता निरीक्षमाणामित्यर्थः । अन्यत् समानम् अतस्तत्स्पर्शनाद्यभावेन वयमधन्या एवेति भावः । हरिणीनां देवीनां च तद्रूपदर्शनवेणुश्रवणे उक्ते गवां च वेणुगीतश्रवणमात्रेणैव तादृशभाव इति ताभ्यस्ताभ्यश्चासां विशेषः अत एव चकारः ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथान्यस्या गोष्ठ्या वाक्यमाह—गाव इति त्रिभिः । तत्र प्रथमतो निजभावविरोधिमातृभावादीनां गवां वर्णनं पूर्ववद्वहिःस्थार्थं प्रीतिसामान्यांशे विरोधाभावाद्विवाँच्छतोपयोगार्थं च अप्यर्थे चकारः लोके सारासारविवेकहीनत्वेन ख्याता गावोऽपि पीयूषरूपकेण मुखस्य चन्द्रत्वम् अतिकोटिचन्द्रताऽव्यञ्जकेन कृष्णमुखशब्देन पीयूषस्य वैशिष्ट्यं सूच्यते कृष्णः खलु परमानन्दघनमूर्तिरुच्यते स्मेति विस्मये तस्थुः स्तब्धताख्यं सात्त्विकविकारं प्राप्ता इत्यर्थः । गोविन्दं निजप्रभुमिति प्रीत्या स्पर्शनं बोधयति अन्यैः तदसम्मते स्नुतस्तनपय इति पाठे स्नुतं केषाञ्चिदभिनवानां मुखात् चरितं स्तनपयः मातृस्तनक्षीरं केषाञ्चित्तु तृणचराणां पूरितकण्ठाचश्रूणामत एव सद्रवतया चरितः कवलश्च तृणग्रासो येषां ते । यद्वा, आत्मनि मनसि गोविन्दं स्पृशन्त्यः अर्पयन्त्यः पश्चात् सम्यक् दर्शनाशक्तेः तत्र हेतुमाह—दृशा नेत्रेण अश्रूणि कलयन्ति वर्षन्तीति तथा ताः अश्रुधारया दृष्ट्याच्छादनात् मनसैव पश्यन्त इत्यर्थः । अतस्तद्दर्शनमात्राभावेन वयमधन्या एवेति भावः ॥ १३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मनि ये गोविन्दं ध्यात्वेति शेषः ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गाव इति । कृष्णमुखान्निर्गतं वेणुगीतमेव पीयूषममृतम् उत्तम्भितैरचनमनेक्षरणशङ्कयेवोन्नमितैः कर्णपुटैः पिबन्त्यः तस्थुस्तथा शावा वत्साश्च स्तन्यपानप्रवृत्ता गीतं श्रुत्वा तदेव पीयूषमुत्तम्भितकर्णपुटैः पिबन्तः स्नुतपयःकवलाः केवलं स्तनेभ्यः गलितक्षीरग्रासाः मुखेषु येषां ते तस्थुः विस्मृतव्यापारा बभूवुरित्यर्थः । अत्र हेतुः गोविन्दं दृशा दृष्टिमार्गेण आत्मनि चित्ते स्पृशन्त्यः आलिङ्गन्त्य अत एवाश्रूणां कला लेशाः लोचनयोर्यासां ता गावस्ते च शावाः ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्तभितकर्णपुटैः निश्चलकर्णरन्ध्रभागैः कवलाः कवलसहिताः गोविन्दमात्मनि हृदि स्मरन्त्यः दृशा नेत्रेण अश्रुबिन्दून् स्रवन्त्यः शावस्नुतस्तनपयःकवला इति केचित् शावा वत्साः तेषां स्मरणेन स्नुताः संजाताः चरिणी कवलाः शष्पग्रासाः यासां तास्तथा तस्थुरित्यन्वयः । कवलाः आसां सन्तीति कवलाः अर्शं आद्यच् "अजाद्यतष्टाप्" (४।१।४) इति टाप्प्रत्यये कृते कवलेति रूपं सिद्धं भवति जायाशब्दवदिति वा ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सख्यः । देव्यः सुवैदग्ध्यवशादेवं भवितुमर्हन्त्येव न केवलमस्त्रीणामेव मोहकरो वेणुरवः अपि तु प्राणिमात्रस्यैवेत्यपरा आहु- गावश्चेत्यादि । उत्तभितैरुत्तम्भितैः कर्णपुटैः पिबन्त्य इति शत्रन्तनिर्देशेनातृप्तत्वं तस्थुरिति निवृत्तिगतयो बभूवुरिति ध्वनितं कीदृशाः ? गोविन्दम् आत्मनि स्पृशन्त्यः दृष्ट्या दृष्टिरन्ध्रेण आत्मनि कृत्वा न केवलं गावः शावा अपि सद्यो जाता वत्सा अपि वस्तुतो वेणुरवेणैव पयः प्रस्नुतं न तु वत्सवात्सल्येन अनन्यमनस्कत्वात् तत्र स्नुते पयसि कवल एव येषाम् अभ्यासवशात् मुखसंपर्क एव न तु पानम् अश्रुभिः कला शोभा यासां येषां चेत्युभयविशेषणं तदासां पशुत्वेऽपि स्वदेहविस्मृतिः न त्वस्माकं गेहस्यापि अहो नः प्रेम तदस्मान् धिगिति पूर्ववद्दैन्यम् ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गाव इत्यादित्रयं गोष्ठान्तरस्य ॥ १३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गवां वत्सानां च चरित्रमाह—गाव इति । चकाराद्वत्सा अपि तथा जाताः उत्तमाधमयोर्मध्यमाभिलाषो निरूप्यते असम्भावितत्वान्मोहः ता हि वेणुमात्रे आसक्तास्तथा कुर्वन्तीति शङ्कां परिहर्तुमाहुः—कृष्णमुखेति । कृष्णमुखान्निर्गतं यद्वेणुगीतम् । ननु, बहूनां वादने मुखादर्शने इतरवैलक्षण्यानवधाने वा कथं भगवन्मुखवेणुगीतमिति ज्ञायते तत्राह, पीयूषेति । अमृतं हि तत्तेन व्यञ्जकान्तराभावेऽपि स्वत एव ज्ञायते सदानन्दो वाच्यः मुखं वागधिपतिर्निर्गमनं वाक् वेणुरितरविस्मारकः गीतं षड्गुणात्मकम् अतः सर्वा सामग्री वक्तुमेतावदुक्तम् अन्यथा कृष्णगीतपीयूषमित्येव वदेयुः इतरगीतप्रवेशनिवृत्त्यर्थं कर्णानामुत्तम्भनं प्रतिचर्णं नूतनकर्णत्वात् प्रत्येकपक्षेऽपि बहुवचनं सङ्गच्छते पुटशब्देन तदर्थमेव कर्णनिष्पादनमिति ज्ञापितं न हि पर्णपुटे पुनः कार्यान्तरं भवति चषकादिकं तु बह्वर्थं भवेत् पुटानां बहुत्वं प्रतिक्षणं नूतनत्वं बोधयति अपवस्था तु पूर्वोक्तैव शावाः बालकाः हरिणादीनामन्यज्जीवानां गवामेव वा अति बालकाः घोषे वा स्नुतं स्तनात् पयःकवलरूपं येषां न तस्य पयसोऽन्तःप्रवेशः इदं सान्दिग्धमिति प्रमाणमाहुः—स्मेति । तस्थुर्गाव शावाश्च उभयेषामपि तथात्वे हेतुमाहुः—गोविन्दमात्मनि दृशाऽश्रुकलाः स्पृशन्त्य इति । तासां न बहिस्संवेदनं यतोऽन्तर्गतं भगवन्तं स्पृशन्ति तत्रापि दृशा आवृत्तचक्षुषा भगवन्तं स्पृशन्त्य इति न भावनामात्रं किन्त्वाविर्भूत इति ज्ञापितम् अन्यथा कथं तुल्यता स्युरिति बहिरदर्शने हेतुः अश्रुकला इति अश्रूणां कला यासां गोविन्दपदं गवां हृदये आविर्भावे दोषाभावार्थं यतोऽयं तेषामेवेन्द्रः ॥ १३ ॥

प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन् कृष्णेक्षितं तदुदितं कलवेणुगीतम्।
आरुह्य ये द्रुमभुजान् रुचिरप्रवालान्(१) शृण्वन्त्यमीलितदृशो विगतान्यवाचः॥ १४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नच स्त्रीजातीनां सर्वासामेतत् कामविजृम्भितमेवैतन्मोहनमिति वाच्यं यतो वत्सलानां गवामपि मोहं पश्यतेत्याहुः, गावश्चेति। श्रवणाशङ्कुर्येर्बोत्तम्भितैरुत्तमितैः कर्णपुटैः पिबन्त्य एव तस्थुः नच तत्रापि वात्सल्यमात्र एव तस्थुः नच तत्रापि वात्सल्यमात्र एव मोहने हेतुरस्तीति वाच्यं यतो मावशून्यानामपि तदीयशावानां मोहनं पश्यतेत्याहुः, शावा वत्साः स्तनपाने प्रवृत्ताः समनन्तरमेव गीतं श्रुत्वा तदेव पीयूषमुत्तम्भितकर्णपुटैः पिबन्तः स्तनपानासामर्थ्यात् स्तनेभ्यः स्नुतानां पयसां कवल एव मुखेन तु निगिलनं येषां ते तस्थुः आश्चर्यावेशेन स्तब्धा बभूवुरित्यर्थः ततश्च तन्मातरः गोविन्दं दृशा दृष्ट्यैवाकृष्यानीय नेत्ररन्ध्रद्वारेणैवान्तःप्रवेश्य आत्मनि मनसि स्पृशन्त्यः स्वमनसः क्रोडे एव वात्सल्यात् स्थापयन्त्यस्तस्थुः तथा अश्रूण्यानन्दात् कलयन्ति धारयन्तीति एवं च सर्वप्राणिनां कृष्णे निरुपाधिरेव प्रेमा किन्तु ते संयोगात् धन्या वयं तु विच्छेदादधन्या एवेत्येतावानेव विशेष इति भावः॥ १३॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्या आहुः—हे सख्यः! न केवलं नार्यो देव्यो वा श्रीकृष्णवादितवेणुगीतेन मोहिताः अपि तु गावश्च उत्तम्भितैः तच्छ्रवणानुकूलीकृतैः कर्णपुटैः कृष्णमुखनिर्गत वेणुगीतपीयूषं पिबन्त्यः गोविन्दमात्मनि हृदि दृशाऽन्तःस्पृशन्त्यः अश्रुकलाः आनन्दाश्रूणां कला मुखेषु यासां ताः तस्थुः त्यक्ततदितरसकलव्यापारा बभूवुरित्यर्थः। तथैव शावा वत्साः स्नुतस्तनपयांस्येव कवलाः ग्रासा येषां ते तस्थुः तद्वेणुगीतपीयूषपानाशक्तत्वादित्यर्थः॥ १३॥

---

### श्रीरामकृष्णकृतप्रेममञ्जरी।

एवं पशुत्वेनातिमूढानामपि सङ्कुद्रवाप्यं केवलं भावोत्कटतयाभिव्यञ्जकमेव अहो किं वक्तव्यं देवाङ्गनानां यतो गवामपि सारासारविवेकनिधुरायां सर्वविलक्षणं भावमनुभवाम इत्याहुः—गाव। इति पीयूषस्यपान्मुरन्यत्र चन्द्रत्वम् उपमामहत्वाभावात्साक्षाच्छ्रीकं निर्गतत्वेन प्रभूतत्वं वेणुगीतत्वेन विचक्षणत्वं उत्तम्भितेति साश्चर्यं सोत्कण्ठञ्च पिबन्त्यः सादरमास्वादयन्त्यः सत्यः स्नुतस्तनपयःकवलाः पीयूषपूरिताभ्यन्तरावशिष्टं पयोरूपेण बहिर्निःसृतमिति भावः। कवला घासग्रासाः तस्थुर्विरतव्यापाराजाताः एतेनस्तम्भाख्यः सात्त्विकभावः सूचितः॥ १३॥

---

### भाषा टीका।

और गोपी बोलीं, कि अरी बीरहो! श्रीकृष्ण के मुखतें निकस्यो जो बाँसुरी को गीत रूप अमृत, ताकूं गायें अपने कान रूप दोनान तें पीवती भई अपनी दृष्टि मार्ग तें गोविन्द को चित्तमें लेजाय के आलिङ्गन करती भई आनन्दाश्रुन को बहावती भई ठाढ़ी होय हैं; और बछराऊ याही रीति सूं स्तन में सों निकस्यो जो दूध ताको घूट लियेई भये ठड़े रहे हैं॥ १३॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

भो अम्ब! मातरस्मिन् वने ये विहगाः पक्षिणस्ते प्रायेण मुनयो भवितुमर्हन्ति, कुतः? कृष्णेक्षितं कृष्णदर्शनं पुरुषफलान्तरं विना यथा भवति तथा रुचिराः प्रवाला येषां तान् द्रुमभुजान् वृक्षाणां शाखा आरुह्य तेन श्रीकृष्णेनोदितं प्रकटितं कलवेणुगीतं केनापि सुखेनाऽमीलितदृशस्त्यक्तान्यवाचश्च सन्तो ये शृण्वन्तीति. तथाहि मुनयः श्रीकृष्णदर्शनं यथा भवति तथा वेदोक्तकर्मफलपरित्यागेन वेदद्रुमशाखारूढा रुचिरप्रवालस्थानीयानि कर्मोपदेशोपादवानाः सुखिनः सन्तः श्रीकृष्णगीतमेव शृण्वन्ति अतस्त एवैते भवितुमर्हन्तीति भावः॥ १४॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषणी।

अहो अद्भुततरां श्रीकृष्णपादयमानानां गवां धन्यत्वं वन्यानां विहङ्गमानामपि भाग्यं किं वर्णयेमित्याहुः—प्राय इति। यद्युक्ते मयूरादीनां केषाञ्चित् प्रेमनृत्यादिना परमभक्तसाम्यात् वत्येति विस्मये हे अम्बेति प्रेमवैवश्येन स्वमातॄं प्रत्येव मातृतया सम्बोधनं काञ्चिद्वृद्धां प्रति वा किं वा अयं भावविद्गमदाजनकथास्वभावः पद्धिकमवादी मातरित्युक्तिः कृष्णेक्षितं स्वकर्तृकं कृष्णस्य दर्शनं तत्कर्तृकं वा स्वदर्शनं यथा स्यात्तथा द्रुमभुजान् आरुह्य तदुपरि स्थित्वा रुचिरप्रवालानिति तद्दर्शनव्यवधानं सुखभोगसाधनं च दर्शितं तथापि कृष्णेक्षितं यथा तथा शृण्वन्ति मीलितदृशः अर्द्धमुद्रितदृशः महाप्रेमसम्पत्त्या अलसदृष्ट्य इत्यर्थः। विगता अन्या कृष्णकृष्णेति व्यतिरिक्ता वाचो येषाम् अतस्त एव धन्या इति भावः। अन्यपक्षेऽपेक्षितं तत्र भावार्थैरुचिरशब्दाङ्कुरवत्कर्माणीति बोद्धव्यमिति. अथवा प्राय इति वितर्के मुनयः

---

(१) शृण्वन्ति मीलितदृश इति सनातनजी यशुकदेव—विश्वनाथ पा० धे०रे०।

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

आत्मारामाः श्रीसनकादयोऽस्मिन् वने विहगा एव बभूवुरित्यर्थः। तत्र प्रयोजनमाहुः—कृष्णेत्यादिना। कृष्णेन ईक्षितं स्वयमेवोत्प्रेक्षितं पूर्वं तादृशाभावात् तत् अनिर्वचनीयम् उदितं स्वयमेवाविर्भूतम् इति वेणुगीतस्य सच्चिदानन्दरूपताभिप्रेता किं वा स कृष्णः उदितः प्रकटो भवति यस्मात् वृन्दावनाद्यावृतस्यापि तस्य विज्ञापक मित्यर्थः। कथयति जगच्चित्तमाकर्षतीति कलं वेणोर्गीतं द्रुमस्य भुजान् उच्चदीर्घपृथुशाखाः तत्रापि तदुपरि स्थितान् कोमलत्वादिना रुचिरान् प्रवालानारुह्येति सम्यक्-श्रवणसिद्ध्यर्थं प्रेमवैवश्येन पातपरिहाराय च मीलिता मुद्रिता आच्छन्ना दृक् आत्मवस्त्वादिज्ञानं येषां तथाभूताः सन्तः विगता अन्येषां कृष्णव्यतिरिक्तानां वाक् तथापि किं पुनर्विचारादिकं येभ्यः पूर्ववदेव वा अन्यत् समानम्॥ १४॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अहो अस्तुतरां श्रीकृष्णपादयमानानां गवां धन्यत्वं वन्यानां विहगानामपि भाग्यं किं वर्ण्यमित्याहुः—प्राय इति। बाहुल्ये मयूरादीनां केषाञ्चित् प्रेमनृत्यादिना परमभक्तसाम्यात् वनेति विस्मये हे अम्बेति अयं भावाविष्टप्रमदाजनकथास्वभावः यत्खलु तच्छून्ये तत्सम्बोधनं स्वसखीभ्योऽन्यवर्णयितृत्वयुक्तत्वात् कृष्णोचितं स्वकर्तृकं कृष्णस्य दर्शनं तत्कर्तृकं वा स्वदर्शनं यत्र तत् यथा स्यात् तथा द्रुमभुजानारुह्य रुचिरप्रवालानिति तेषामप्य-ङ्कुरादिविकारो दर्शितः विहगानामपि तद्दर्शने व्यवधानं सुखभोग-साधनं च दर्शितं तथापि कृष्णोचितं यथा स्यात्तथा शृण्वन्ति मीलित दृशः अर्द्धमुद्रितदृशः महाप्रेमसम्पत्त्याऽलसदृश इत्यर्थः। विगता मनःश्रवणवागिन्द्रियेभ्यो निर्गता अन्या मुरलीवाग्व्यतिरिक्ता वाचो येषां अतस्त एव धन्या इति भावः। अन्यत्तैः तत्र भावार्थे रुचिरशब्दाङ्गवदर्पितकर्माणीनि वोद्धव्यानि अथवा प्राय इति वितर्के मुनयः आत्मारामाः श्रीसनकादयोऽस्मिन् वने विहगा एव बभूवुरित्यर्थः। तत्र प्रयोजनमाहुः—कृष्णेत्यादिना कृष्णेन ईक्षितं स्वयमेवोत्प्रेक्षितं कल्पितं पूर्वं तादृशाभावात् तेनैव उदितम् उत्तरोत्तरप्रकटितगुणं इति वेणुगीतस्य ब्रह्मसमा-धितोऽप्याकर्षकता दर्शिता कथयति जगच्चित्तमाकर्षतीति कलं वेणोर्गीतं तादृशमुनित्वे लिङ्गमाहुः—रुचिरप्रवालान् विचित्रो-पशाखामयान् द्रुमभुजान् वेदशाखारूपान् आरुह्यातिक्रम्य तद-भिनिवेशमपि परित्यज्य मीलिता आवृता दृक् देहादिज्ञानं येस्तथाभूता अपि विगता अन्येषां कृष्णव्यतिरिक्तानां वाक् कथापि किं पुनर्विचारादिकं येभ्यः॥ १४॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

द्रुमभुजान् द्रुमशाखाः॥ १४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्राय इति। अम्ब हे मातः! ममादरमपि पूजार्थं सम्बोधयन्ति अस्मिन् वने विहगाः पक्षिणः प्रायशो मुनयो भवितु-मर्हन्ति कुतः ये विहगा रुचिराः प्रवालाः पल्लवाः येषां तान् द्रुमभुजान् तरुशाखाः आरुह्य स्वभोज्यं फलादिकं विहाय केवलं कृष्णस्येक्षितं दर्शनं यस्मिंस्तद्यथा भवति तथा तेनोदितं प्रकटितं मधुरं वेणुगीतं केनापि सुखेन मीलितदृशः त्यक्तान्य-वाचः सन्तः शृण्वन्ति तथा हि मुनयः वेदद्रुमशाखाश्रिताः कृष्णदर्शनं यथा भवति तथा वेदोक्तकाम्यकर्मफलत्यागेन भग-वदेकदृष्टयः सुखिनस्तन्महिमानमेव शृण्वन्ति अत एवैते भवि-तुमर्हन्तीति॥ १४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विगताश्च्युताः स्वजातिसिद्धा वाचो येस्ते विगतान्य-वाचो धृतमौना इत्यर्थः। बत आश्चर्यमिदं हे अम्ब! पक्षिणां मुनीनां च मौनत्वसामान्यादेवमुच्यते॥ १४॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

पुनर्मुग्धा ऊचुः। प्रायो बतेत्यादि। बत खेदे अद्य आश्चर्ये अस्मिन् वने प्रायः साकल्येन विहगा मुनयः मननशीलाः विगतरज-स्तमस्काः यतः कृष्णेक्षितं यथा भवति यत्र स्थिते कृष्णेन दृश्यते कृष्णो वा दृश्यते तत्र द्रुमभुजान् शाखा आरुह्य तदुदितं तद्वचः कलवेणुगीतं च शृण्वन्ति कीदृशाः विगता अन्याः कृष्णकृष्णेति वागतिरिक्ता वाचो येषां समये यदा तदुदितं कलवेणुगीतं वा न शृण्वन्ति तदा कृष्णकृष्णेत्येवं भाषन्त इति अन्यशब्दरहिता द्रुम भुजानारुह्येति आसनं मुनय इति ध्यानं कृष्णेक्षितमिति दर्शनं शृण्वन्तीति श्रवणं विगतान्यवाच इति मौनं कीर्त्तिनं चेति मुनिध-र्मैरेभिरमी मुनय एव कदा वयमेवं वनस्था भूयास्म इत्यौत्सुक्य-शेषादद्भुतानां श्रावत्वम्॥ १४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कृष्णेक्षितं तेनैव प्रथममवगतं तस्मादुदितं व्यक्तश्च रुचि-रेति द्रुमाणामपि विकारः सूचितः॥ १४॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पक्षिणां श्रवणं सङ्गाभावात् ज्ञानाभावाच्चासम्भावितं मत्वा सम्भावनानिरूपणपूर्वकमुपपादयन्ति—प्राय इति। एता निर्गुणाः अत एव यशोदया सह स्नेहः तद्गृहकन्यका वा यथा गवां धनस्य रत्नानां सङ्ग्रहः एवमेवोत्तमकन्यकानामपि द्रव्येण क्रीतास्ता गृहे परिपाल्यन्ते राज्ञां दानार्थं ता यशोदानन्द-गोपकुमारिका अस्मेत्याहुः सिद्धवन्निरूपणा का एताः? इति सन्देहे भवेदतः प्राय इत्याहुः प्रायः प्रायेण वनेति खेदे कथमेतादृशी बोधं प्राप्ता इति हर्षे वा साधु तैरयमुपायकृतः इति अम्बेति सम्बोधनं दयार्थं भगवदाविर्भावादिति केचिदतस्तासां वाक्याद्विहगा मुनय एव बाहुल्येन ते हि मुनयो मननशीलाः जानन्त्यत्र भगवान्

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

आविर्भविष्यतीति अत एवास्मिन् वने कृष्णेक्षणाः कृष्णार्थमेव क्षणो येषां कृष्ण एव वा ईक्षणं येषां भगवन्तं पश्यन्त एव तदुदितं कलवेणुगीतं द्रुमभुजानारुह्य शृण्वन्ति यावद्भगवतो वेणुनादो न श्रुतः तावद्रूपमेव पश्यन्तः स्थिताः यदा पुनर्वेणुनादमारब्धवान् तदोभयं कृतवन्तः यदा पुनस्ततो भगवान् दूरे गतः तदोड्डीयान्यत्र गमने वेणुनादरसो गमिष्यतीति तत्रैव स्थिताः कदाचित् स रसो रसान्तरमुत्पादयिष्यति रसान्तरेण वा प्रतिबन्धो भविष्यतीति नाशङ्कनीयं यतः कलमव्यक्तमधुरं वेणुगीतं ततो भगवतः सकाशादुदितं नादब्रह्मात्मकं वेणुरन्ध्रव्यक्तमधुरः ततो मधुर एव रस उत्पद्यत इति गीतं वा भगवदुक्तपरमार्थप्रतिपादकं तदा तदुदितमिति विशेष्यं वेदशाखा इव द्रुमभुजानारुह्य पतनमारणादिशङ्काभावात् निश्चिन्ताः शृण्वन्ति मनसो विषयान्तरसञ्चाराभावाय भगवति दूरे गते दर्शनाभावात् मननाभ्यासाच्च मीलितदृशो जाताः विशेषेण गता अन्यविषयिका वाचो येभ्यः भगवदुपयोगि वागत्यागज्ञापनायान्यपदम् एतच्च सार्वदिकमिति ज्ञेयम् अन्यथा श्रवणकाले वाचस्तत्प्रतिबन्धकत्वेनैवाभावः सिद्ध इति तदुक्तिर्निरर्था स्यात् तथा च सदैव तद्रसानुभवो इरीति ज्ञापितं भवति एतेनास्य नादस्यालौकिकत्वं दुर्लभत्वं च सूच्यते न हि मुनीनामेतादृशेऽर्थे आसक्तिः सम्भवति तेषां शरादि भयाभावार्थमाह—रुचिरप्रवालानिति। पल्लवा उत्तमाः कोमलपत्राणयाग्रादिस्थितानि दृष्टिमुद्रणेऽपि हेतुः अन्यथा प्रवालदर्शनं स्यात् मुखमुद्रणेऽपि हेतुः अन्यथा तेषां भक्षणं स्यात् कोलाहलश्च सम्भवति शकुनभाषया अन्योन्यं पदार्थनिरूपणं वा यद्यप्युक्ता एते हेतवस्तु साधका एव भवन्ति तथापि मन्मनस्येवं भाति यतो यन्नादरसपराः स्वरूपरसान्तरायमपि सहन्ते तेन तात्पर्यान्तरमपि ज्ञेयम् तथाहि भुजपदतात्पर्यं पूर्वमेवोक्तं कदाचिद्वेणुशब्दार्थं तत्र भक्तानां प्रमोषो तदानयनार्थं तत्रारोहणे सान्निध्यरसोऽप्यनुभूतो भविष्यतीत्याशया तत्रारूढा इति विशेषणतात्पर्यं नेत्रनिमीलने पल्लवानयनार्थं भक्तानां निःशङ्का प्रवृत्तिर्न स्यादिति तथा कृतिः वाङ्निरोधहेतुः स्पष्टः ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वयसा अपि विषयग्राहिणो विषयरस एव तत्रोपाधिरस्तीत्यत आत्मारामा मुनयो ज्ञानेन सर्वानेव भावांस्त्यक्तवन्तो निर्विकाराः कृष्णेन क्षोभयितुं न शक्या इत्यपि न वाच्यं एतस्तानपि स्वमाधुर्येणाकृष्य सम्मोहयतीत्याहुः—प्राय इति। बतेति विस्मये अम्बेति सखीन् प्रत्यपि सम्बोधनं भावाविष्टप्रमदानां स्वभाव एवैषः विहगा मुनय एव भवेयुरित्यर्थः। वनवासदृङ्निमीलनमौननैश्चल्याद्यसाधारणधर्मदर्शनात् यद्द्रुमभुजान् आरुह्य वेणुगीतं शृण्वन्ति रुचिरप्रवालानिति द्रुमभुजानामपि वेणुगीतानन्दात् मुनिजनस्पर्शानन्दाश्वाङ्कुरादिविकारो दर्शितः कलयति जगच्चित्तं क्षोभयतीति कलवेणुगीतं कीदृशं कृष्णोचितं कृष्ण एव ईक्षितं ननु शक्रपरमेष्ठिरुद्रविष्णुषु गानस्पृक्ष्वपि इदं मुनीनामेषामतिप्राचीनत्वात् तत्र तत्र सर्वत्राचारितगतित्वात् बहुशोऽवकलिततत्सङ्गीतत्वाच्च तत्कृतसङ्गीतशास्त्राभिज्ञत्वाच्चेति भावः। न चास्य गानस्य कोऽप्यन्यः स्रष्टा सम्भवेदित्याहुः, तदुदितं तस्मात् कृष्णादेव उदितम् आविर्भूतं कृष्ण एवास्य स्रष्टेति गीतस्यानन्यधेयत्वं व्यञ्जितम् अत एव ब्रह्मरुद्रादिभिरपि कृष्णेन स्वसङ्गीतशास्त्रमपि ग्राहकासम्भवादेव न कृतमिति ज्ञेयम् अत एवास्यपूर्वगीतरसास्वादवशान्मीलितदृशः विगता अन्यस्य ब्रह्मानन्दानुभवस्यापि वाक्परस्परकथनं येषां ते इति सम्प्रति तमपि परित्यज्याऽमी कृष्णानन्दमत्ता एवाभूवन्निति भावः ॥ १४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्या आहुः—प्राय इति। हे अम्ब, मातः! अस्मिन् वने विहगाः पक्षिणो मुनयः सन्ति यतः कृष्णस्येक्षितं दर्शनं यथा स्यात्तथा द्रुमभुजान् आरुह्य रुचिरप्रवालानिति विशेषणेनात्र श्रीकृष्णश्चिरं स्थास्यतीति तेषामाशयः सूच्यते मीलितदृशः त्यक्तान्यदर्शना विगतान्यवाचः त्यक्तान्यकथाः तदुदितं वेणुगीतं शृण्वन्ति ॥ १४ ॥

---

### श्रीरामकृष्णकृतप्रेममञ्जरी।

अहो आसां तत्पाल्यमानानां गवां वार्त्ता वन्यविहगानामपि वेणुगानामृतास्वादः समाकर्ण्यतामित्याहुः—प्राय इति। बाहुल्ये मयूरादीनां प्रेमभक्तत्वात् बत विस्मये हे अम्बेति भावाविष्टप्रमदाजनालापस्वभावः हे सखीत्यर्थः। स्वसखीभ्योऽन्यर्थायन्नित्युक्तेः तत्रैव सहसाऽऽगतां व्रजेश्वरीं प्रति वा सम्बोधनम् अस्मिन्निति बुद्धिस्थं स्वकर्तृकं तत्कर्तृकं वा कृष्णोक्षितं यथा स्यात्तथा द्रुमशाखा आरुह्य अर्धमुद्रितदृष्टयः सन्तः शृण्वन्ति अन्येऽपि मननशीला विहगा आकाशचारिणो व्रजाः "आकाशस्तल्लिङ्गात्"(१।१।२३।)इतिवेदशाखाशिरोभागम् आरूढाः "यत्रां भ्रमविहीनस्तु वर्त्तते श्रुतिमूर्द्धनि" इत्यभियुक्तोक्तेः सकामास्तु वेदशाखासमाश्रिता भवन्ति परतन्त्रत्वात् रुचिरप्रवालान् रुचिप्रदनवनक्रियाकलापप्रतिपादकान्वेदमार्गान् ते मुनयस्तानाक्रम्य स्थिताः कथं मधुरास्फुटम् "सदेव सौम्येदम„इति मधुरम् अतीवरसनाच्चास्फुटं वेणुगीतमिव श्रुतिसुखं तदुदितं "तस्य महतो भूतस्य निश्वसितम्" इति। सच्चिदानन्दपरब्रह्मकृष्णसाक्षात्कारो यथा भवति तथा शृण्वन्ति मुनय इति मननं मीलितदृश इति निदिध्यासनमुक्तम्। यद्वा, मीलिता व्यावृता देहदैहिकादिभ्यो दृक् दृष्टिर्येषाम् विगतान्यवाच इति तदेकपरत्वं "नानुध्यायाद्बहून् शब्दान्" इति एवं वेणुगीतस्य ब्रह्मसमाधितोऽप्याकर्षकत्वमुक्तम् अत एव कलयति चित्तमाकर्षयतीति कलं तद्वेणुगीतमिति ॥ १४ ॥

---

### श्रीकृष्णदासकृतश्रीगणदीपिका।

ऋतुमती कान्तिमतीं प्रत्याह—प्राय इति। अम्बेति सम्बोधनं प्रेमवैवश्यादिति भावः ॥ १४ ॥

---

नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्त्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहाराः ॥ १५ ॥
दृष्ट्वाऽऽतपे व्रजपशून् सह रामगोपैः सञ्चारयन्तमनुवेणुमुदीरयन्तम् ।
प्रेमप्रवृद्ध उदितः कुसुमावलीभिः सख्युर्व्यधात् स्ववपुषाऽम्बुद आतपत्रम् ॥१६॥

भाषा टीका ।

तब अन्य सखी बोलीं, कि—सखी भो ! या वन में ये जो पक्षी हैं सो तो हम जाने हैं, कि—ये प्राय करके मुनि लोग हैं, काहे सों, कि—कृष्ण की चितवन उनकी बतरावन और मधुर वंशी को गीत जो है ताकूं सुन्दर पत्तोंवान वारी वृक्षन की डारीन पै बैठि के सुनें हैं । और नेक पलक नहीं लगावे हैं, चींचीं कूचीं इत्यादिक अपनी भाषा को त्यागि करके मौन होय के बैठे हैं और दर्शन करें हैं ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आस्तां चेतनानां कथा नद्योऽप्यावर्तैः परिभ्रमैर्लक्षितेन सूचितेन मनोभवेन कामेन भग्नो वेगो यासां ता आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा ऊर्मय एव भुजास्तैः कमलोपहाराः कमलान्युपहरन्त्यो मुरारेः पादयुगलं गृह्णन्ति धारयन्ति ॥ १५ ॥

लोकार्तिहरणशीलत्वादिसाम्यात्सख्युः श्रीकृष्णस्याम्बुदस्तुपर्युदितः पुनः प्रेम्णा प्रवृद्धः सन् कुसुमावलीभिः पुष्पसमूहैस्तत्तुल्यैस्तुषारैर्वा सह स्ववपुषा छत्रं विहितवान् ॥ १६ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो अस्तुतरां सचेतनानां माहात्म्यम् अचेतनजलमयीनामपि नदीनां भाग्यं किं वर्ण्यतामित्याहुः-नद्य इति । श्रीकालिन्दीमानसगङ्गे तत्परममोहनम् उपधार्य्य स्वत एव निकटायातं सावधानं श्रुत्वेत्यर्थः तदा तत् क्षणं एवेत्यस्य भावस्तेति पदेन गृह्णन्तीत्यनेन चान्वयः मुरारेरिति मुरो नाम महादैत्यः श्रीशिववरतो वक्षसि हस्तार्पणमात्रेण सर्वप्राणहरो देववर्गभयङ्करः श्रीवामनपुराणे प्रसिद्धः तस्यारिर्नारायणः "तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः" इति गर्गोक्तेस्तन्नामाभिधेये कृष्णस्य व्यपदिश्यमानत्वात् गुणसाम्याच्च मुरो यथा तेन पूर्वलीलया हततयास्माकं वधोद्यतो मारोऽपि त्वया निरस्यतामित्यभिप्रायेण तस्य पादाब्जयोर्युगलमेव परमार्त्या गृह्णन्ति कमलान्युपहरन्त्यः तत्प्रियपुष्पाणि बलित्वेनार्पयन्त्य इत्यर्थः अतस्तद्भावाद्वयमधन्या एवेति भावः । अन्यत्तैर्व्याख्यातम् . यद्वा, तद्वेणुनादामृतमयं मुरारेर्मुकुन्दं परमसुखप्रदं मोहनत्वादिना तत्सदृशं वा गीतम् आवर्ताः कामविकारभङ्गाः तेषां वर्त्तं तारकादित्वादितच् तद्युक्तो यो मनोभवस्तेन यद्वा मुकुन्दगीतस्य मा लक्ष्मीः सम्पत् तस्या आवर्त्तः परिपाटिः परम्परा वा तेन लक्षितो दर्शितोऽभिव्यञ्जितो यो मनोभवस्तेन भग्नस्रोतोवेगाः सद्यः अगर्धाद्रूपयकगाढभावेन तत्रैव परिभ्रमन्त्यः रहितमपि । यद्वा, सदा विचित्रगत्या चञ्चलमपि आलिङ्गनेन तदर्थं वा स्थगितं सुस्थितम् इत्थं कमलया लक्ष्म्यापि उपहारः बलत्वेनार्प्यन्ते यासु तस्याऽपि पूज्या इत्यर्थः । उक्तप्रकारेण ततोऽपि सौभाग्याधिक्यात् अन्यत् समानम् . उपहारादिशब्देन श्लेषत इदमपि सूच्यते नद्यो मोहनवेणुगीतं श्रुत्वा सहजां स्वपतिसमुद्राभिगमनत्वरां विसृज्य मूर्तिमत्यो भूत्वा मणिमौक्तिकादिदिव्योपहारवत्योऽपि जात्यैव श्रीकृष्णप्रियायां विशेषतश्च श्रीवृन्दावनजातानां कमलानामुपहारैः उपरि विन्यस्तैर्हारैर्भूषिताः सत्य ऊर्मिसदृशैः दीर्घैर्बहुभिर्भुजैर्मुरारेः पादयुगलं सुस्थिरीकृत्य सम्यगालिङ्गन्तीति अतस्ता एव परमधन्याः वयं तु दुर्भगा एव यतो न तद्वेणुगीतश्रवणं भिद्यते न च स्वपतिसेवादिगृहकृत्यप्रवाहोपरमः नापि प्राकट्येन तत्तोपयार्थभूषादिधारणं नाप्यस्माकं बहवो भुजा यैस्तत्पादमेकमपि सुस्थिरीकृत्य वक्षःस्थलादिषु गाढमालिङ्गाम इति ॥ १५ ॥

आस्तां तावच्छ्रीकृष्णस्य विचित्रविहारप्राप्ताया श्रीवृन्दावनवर्तिन्याः श्रीकालिन्द्याः श्रीमानसगङ्गायाश्च तथा तत्साहचर्येणान्यासामपि जगत्पाविन्यम अन्यकालीनानां नदीनां तादृशं भाग्यं धूमोद्भवस्याचेतनप्रायस्याकाशवर्तिनो मेघस्यापि भाग्यं किं वर्णयामित्याहुः-दृष्ट्वेति । आतपे शरत्कालीनेऽपि व्रजस्य पशून् सर्वानेव गोमहिष्यादीन् सर्वैरेव गोपैः सहैकत्र सञ्चारणाय सम्यक् तत्तदिच्छानुसारेण इतस्ततश्चारयन्तं तेषामनन्तानां बहुलदूरप्रदेशं व्याप्य चरतां सम्मेलनार्थं प्रहर्षार्थं च वेणुम् अनु वारम्वारम् उत् उच्चैः ईरयन्तं वादयन्तं श्रीकृष्णमिति शेषः । सूचितः छान्दसत्वाद्व्यवधानमदुष्टं यद्वा, वेणुमनु तद्वादनानन्तरमित्यर्थः । उदीरयन्तम् अनुवेणुमित्यस्यात्रैव चान्वयः वेणुनादेनैवोदीरयन्तमित्यर्थः । प्रेम्णा प्रवृद्धः सन् सहचराणामपि तापनिवारणाय कुसुमं मेघपुष्पं जलं "मेघपुष्पं घनरसम्" इत्यभिधानात् तस्यावलीभिर्विन्दुनिकरैः सहितेनेत्यर्थः । विशेषणे वा तृतीया ताभिर्विशिष्टमातपत्रं स्वस्य वपुषा सजलदेहेनैव अम्बुदेत्युक्तेः स्ववपुरेव छत्रं कृतवानित्यर्थः । छत्रमपि कुसुमावलीयुक्तं भवत्येव एवं सख्येन निजदेहं धनं चार्पितवानित्यर्थः । अन्यत्तैर्व्याख्यातम् . यद्वा, प्रवृद्धे आतपे अस्माकं सख्युः प्रियस्य स्वस्य वपुषा आतपत्रं व्यधात् कुसुमावलीभिश्च प्रेमप्रीतिं व्यधात् इति अम्बुदत्वेन प्राप्तं वृष्ट्यादिदुःखं निरस्तं अतोऽसौ परमधन्योऽस्माकञ्च तद्दर्शनाद्यसम्पत्तेर्भाग्यहीनतैवेति भावः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं पूर्ववद्बहिःस्थामपि कर्त्तुमशक्नुवत्यः स्वस्वानुरूपमेवानुवर्णयन्त्यो रागोत्कर्षदर्शनेन स्वस्माद्वमचेतनेष्वप्युत्प्रेक्षन्ते-नद्य इति ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकालिन्दीमानसगङ्गाद्याः तदा तच्छ्रया एव तत्तादृशपरममोहनम् उपधार्य स्वत एव निकटायातं सावधानं श्रुत्वेत्यर्थः सर्वानन्दशिरोमणिना निजसङ्गमेन सर्वदुःखात् मुक्तिं ददातीति मुकुन्दस्तस्य गीतं परमानन्दजनकं रागम् आवर्त्तैरत्यतिशोभां दर्शितः ऊर्मिभुजैः कमलोपहाराः सत्यस्तैरेवालिङ्गनेन स्थगितमावृतं यथा स्यात् तथा तैरेव मुरारेः पादयुगलं गृह्णन्तीत्यन्वयः । तत्र चायं क्रमः प्रथमं तावदावर्त्तैर्दिदृक्षां नि कमलान्युपहरन्ति तत्पश्चात्पादयुगलं गृह्णन्ति तदनन्तरं च प्रवृत्ततया वक्षःस्थलपर्यन्तमपि वेष्टयित्वाऽऽलिङ्गयन्तीति । एतदुक्तं भवति नद्यो मोहनवेणुगीतं श्रुत्वा सहजां स्वपतिसमुद्राभिगमनत्वरां विसृज्य जातैव श्रीकृष्णाभिमुख्यापि विशेषतश्च श्रीवृन्दावनजातानि कमलान्येवोपहारो यासां तथाभूताः सत्य ऊर्मिभिरेव दीर्घैर्बहुभिर्भुजैः मुरारेः पादयुगलं ग्रहणालिङ्गनाभ्यां स्वस्मिन् सुस्थिरी कुर्वन्तीति तत्र च मुरारेरिति वामनपुराणोक्तस्य प्राचीनस्य दैत्यविशेषस्य मुरस्य हन्त्रा नारायणेन समोऽयमिति नाऽस्य भजने पातिव्रत्यभ्रंश इति विभावयन्तीति च अतस्ता एव परमधन्याः वयं तु दुर्भगा एव यतो न तद्वेणुगीतश्रवणं सिद्ध्येत् न च स्वपतिगृहकृत्यप्रवाहोपरमः नाप्यस्माकं बहवो भुजा दीर्घा वा यैः तत्पादपद्ममेकमपि सुस्थिरीकृत्य स्तनादिषु गाढमालिङ्गामः । इतीत्थमत्र तत्त्वं यदा श्रीकृष्णचन्द्रस्तादृशं वेणुगानमाचरति तदा शुष्कशाखाङ्कुरशिलाद्रवप्रवाहस्तम्भादयो भवन्ति ततो जलस्तम्भेन प्रवृद्धजला नद्यस्तस्मिन् उच्चप्रदेशेऽपि सकमलतरङ्गाः समागत्य तत्पादकमलं स्पृशन्ति तच्च दृष्ट्वा ताः सचेतनादित्वेन प्रतियन्तीति ॥ १५ ॥

अथ दृष्ट्वेत्यादिद्वयेन पूर्ववदवहित्थातद्वशाक्तिभ्यां गोप्यन्तरं तत्र पूर्ववदचेतने भावं कल्पयन्त्योऽपि सख्यमधुरसत्वर्णनयानिजरसमाच्छादयन्त्य इवाहुः-दृष्ट्वेति । विशुम्भयश्चक्षुर्यति शेषः । आतप इति तापाधिक्यं व्रजपशूनिति तद्बहुत्वात् तृणबाहुल्यापेक्षयाऽऽइयं तत्र स्थितिः सहेति बहुलच्छायापेक्षा अनु पश्चात् मधाकर्षणार्थमुच्चैरीरयन्तं ततः एव प्रेमप्रमाणं व्याप्य उदितः प्रवृद्धश्च उत्फुल्लतनुत्वात् कुसुमं मेघपुष्पं जलम् "मेघपुष्पं घनरसम्" इत्यभिधानात् तस्यावलीभिः बिन्दुनिकरैः सहितैरित्यर्थः । सख्युरिति वर्णादिसाम्यात् स्वस्य वपुषा सजलदेहेनैव अभ्युदेत्युक्तेः स्ववपुरेव छत्रं कृतवान् इत्यर्थः । छत्रमपि कुसुमावलीयुक्तं भवत्येव एवं सर्वेण निजं देहं धनं चार्पितवानित्यर्थः । अतोऽसौ परमधन्योऽस्माकं च तदानीं दर्शनस्याप्यसम्पत्तेर्भाग्यहीनतैवेति भावः । अत्र चेदं तत्त्वं यदाऽऽतपे गाश्चारयन्तः सखायः खिन्ना भवन्ति गावश्च विक्षिप्तगतयो भवन्ति तदा तासां मेघानां चाकर्षणाय तत्तन्नाम्ना मल्लाररागं वादयति तत्तादृशलीलास्फूर्त्यां काश्चिदेवमुदमेचन्त इति ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आवर्त्तलक्षितो ज्ञापितो मनोभवेन भग्नो वेगो यासां ताः ॥ १५ ॥

सख्युः कृष्णस्य तुल्यवर्णत्वात्सखित्वम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आस्तां चेतनानां कथा इत्यभिप्रायेण काश्चिदाहुः-नद्य इति । तथा यथा चेतनास्तद्वदचेतना नद्योऽपि तन्मुकुन्दस्य गीतं वेणुगीतम् उपधार्य श्रुत्वा उत्प्रेक्षामात्राभिप्रायकमिदम् आवर्त्तैः परिभ्रमैः लक्षितेन सूचितेन मनोभवेन मन्मथेन भग्नो वेगो यासां ताः आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा ऊर्मय एव भुजास्तैः कमलान्युपहरन्त्यः मुरारेः पादयुगलं गृह्णन्ति धारयन्ति ॥ १५ ॥

दृष्ट्वेति । तीरे यमुनातीरे आतपे इनिपाटान्तरं तदा तस्मिन् रामेण गोपैश्च सह व्रजपशून् सञ्चारयन्तम् अनुगतं पश्चाद्भागे वेणुम् उदीरयन्तं वादयन्तं श्रीकृष्णं दृष्ट्वा अम्बुदो मेघः उदितः पुनः प्रेम्णा प्रवृद्धः सख्युः श्रीकृष्णस्य श्यामत्विड्वत्वनीलवर्णत्वादिसाम्यात्सञ्जातसख्यभावः उपरि इति शेषः कुसुमसमूहतुल्यैस्तुषारैः सह स्ववपुषा आतपत्रं व्यधात् चकार ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्यदा मुकुन्देन गीतं तदा तदुपधार्य हृद्यवधार्य आवर्त्तनाख्यसम्भ्रमेण लक्षितेन मनोभवेन कामेन भग्नो वेगो यासां तास्तथा ऊर्मय एव भुजाः आलिङ्गनेन स्पर्शलक्षणेन प्रमुदिता ऊर्मिभुजाः आलिङ्गनप्रमुदितोर्मिभुजाः तैः कमलमेवोपहारो यासां तास्तथा ॥ १५ ॥

अम्बुदः श्यामवर्णसाम्यात्सख्युः मुरारेः स्ववपुषाऽऽतपत्रं व्यधात् कुसुमावलीभिः नन्दनवनपुष्पराजिभिः सह । यद्वा, जलकणनिकरैः सह पुष्पं मेघपुष्पमित्यभिधानात् प्रेम्णा प्रवृद्धं समुद्भिन्नं हृदिस्थं हर्षणं रोमाञ्चलक्षणं यस्य स तथा आभिमान्यपेक्ष्यैतत् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सखि ! नदीनां प्रवाहो हि स्वभावेन वेगवानेव सोऽपि कृष्णवेणुगीतं श्रुत्वा स्तब्धो भवति वयं तु न तथेत्यात्मनोऽतिकाठिन्यं मन्यमानः प्रौढा एवाहुः—नद्यस्तदेत्यादि । तदा तस्मिन्नेव समये यदा वेणुं वादयन् इत्यर्थः तन्मुकुन्दगीतं तन्मुकुन्दस्य गानम् उपधार्य ऊर्मिभुजैः कमलोपहाराः सत्यः पादकमलं गृह्णन्ति कमलान्युपहारीकृत्य कमलैः पूजयन्त्येवेत्यर्थः । कीदृश्यः आवर्तेन पयसां भ्रमेण लक्षितोऽनुमितो मनोभवस्तेन भग्नो वेगो यासां ताः कीदृशम् ? आलिङ्गनेन नदीनामूर्मिभुजाश्लेषेण स्थगितं पुलिनेषु केवलपयःसमीपे व्रजत ऊर्मिभुजाश्लेषणं यज्जायते तत्सुखानुभवेन स्थगितमितिभावः । अतः स्वभावमपि नद्यो दूरीकुर्वन्ति वयं तु कुलशीलादिस्वभावमंशापि न त्यजाम इति विषादव्याख्यानिर्देश्यानि ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सखि! अस्माकं हृदयमश्मसारं यतो वने गाश्चारयन्तम् आतपेन क्लिश्यन्तं स्मृत्वापि न विदीर्य्यति तदनुकूलसेवां कर्त्तुं न शक्नुमः मेघैः सह तस्य कः स्नेहानुबन्धः तथापि ते तत्कालोचितां सेवां कुर्वन्ति न पुनर्वयं मन्दभाग्या इति मध्यमा ऊचुः—दृष्ट्वेत्यादि । आतपे घर्मे व्रजपशून् सञ्चारयन्तं दृष्ट्वा स्ववपुषा आतपत्रमम्बुदो मेघः व्यधात् विदधे गाश्चारयन् यत्र यत्र याति तत्र तत्र तदुपरि गच्छन्नातपत्रायते स्म कीदृशः प्रेम्णा प्रवृद्धम् अत एव उदितः प्रफुल्लः पुलकितः सख्युर्मित्रस्य श्यामत्वात् सह रामगोपैः न केवलमेकस्यैव तस्य तत्सम्बन्धात् रामादीनामपि छत्रायतेस्मेत्यर्थः । उदितः प्रफुल्ल पुलकित इत्यर्थः । कुसुमावलिभिर्जलकणैरुपलालितमित्यातपत्रविशेषणं मुक्ताप्रालम्बशोभितं छत्रमिव कुतः? सख्युः मित्रस्य श्यामत्वात्सह रामगोपैः न केवलमेकस्यैव तस्य तत्सम्बन्धाद्रामादीनामपि छत्रायतेस्मेत्यर्थः । उदित ऊर्द्ध्वङ्गतो वा निकटश्चेत्तदा उपरिस्थितानां विमानचारिणां देवानां दर्शनबाधात् कीदृशम् अनुमेघगर्जितसदृशं वेणुमुदीरयन्तं हर्षेण मेघो यथा मन्दं मन्दं गर्जति तत्समानं वेणुं वादयन्तमित्यर्थः । अनुसदृशार्थः तदस्य प्रेमैव प्रेमा यत्स्वदेहमेवातपत्रीकरोति अस्माकं प्रेमाणं तु धिगिति निर्वेदः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नद्य इति वेणुवाद्यमाधुर्येण जलस्तम्भादेर्जलवृद्धया तत्चरणपीठपर्यन्तागमनात् एवमम्बुदागमनमपि ॥ १५ ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्वेणुनादेन नद्यादिषु जातमाह—नद्यस्तदेति । यदा मुनयो भगवताऽनुगृहीताः वेणुद्वारा सर्वं तत्त्वं ज्ञातवन्तः तदा नद्योऽपि वयमपि भविष्याम इति तदुपधार्य मुनीनां ज्ञानोपदेशं निश्चित्य सर्वप्रसिद्धं मोक्षदातुर्गीतं श्रुत्वा आवर्त्तेन भ्रमणेन मूर्च्छया लक्षितो योऽयं मनोभवः तेन स्तम्भजनकेन भग्नो वेगो यासां स्वाभाविकी गतिः कुण्ठिता मनोभवोऽत्र विवेक अचेतनप्रायाणामपि भगवत्सम्बन्धाकाङ्क्षेत्याहुः, न स्थितिमात्रेण तदासक्तिर्भवति श्रीपदार्दनाऽपि तथा सम्भवादत आह, आलिङ्गनार्थं स्थगितं स्थिरीभूतं भगवतः पादयुगलं कमलोपहाराः सत्यः ऊर्मिरूपैर्भुजैः गृह्णन्ति स्वहृदयकमलं भगवच्चरणारविन्दे दत्वा तत्स्थं गृह्णन्ति नदीनामपि देवतात्वात् ताभिः सह नान्या क्रीडा सम्भवति अत आलिङ्गनार्थमेव स्थितिः प्रयोजनार्थमुक्तं मुरारेरिति मुरो हि जलदोषात्मकः अविद्यारूपः तस्यारित्वात्तदीय चरणसम्बन्धे नदीगतामविद्यां नाशयिष्यति ॥ १५ ॥

मेघानाहु—दृष्ट्वेति । आतपे शरत्कालसम्बन्धिनि व्रजपशून् सर्वदा छायापेक्षायुक्तान् सर्वदा रक्षका गोपाः अभितो रतिवर्धको रामः एभिः सहितम् एतेषां सञ्चारयन्तं सर्वेषामग्निसहितं देवतादेवसहितं धर्मसहितं तदनुवेणुमुदीरयन्तं सर्वेषामाधिदैविकानुद्दीपयन्तं सर्वशक्तिसहितो हि ताभिः सह क्रीडति तदावश्यं छायापेक्षितेति प्रेम्णा भगवत्स्नेहेन सख्यपर्यन्तं गतेन तादृशेन प्रवृद्धो मेघः स्ववपुषा सख्युरातपत्रं व्यधात् प्रवृद्धमुदित इति पाठे प्रवृद्धश्चासौ मुदितश्चेति प्रेमप्रवृद्धं यथा भवति तथा वा उदित अतः कुसुमावलीभिः सूक्ष्मस्वकणिकाभिः "मेघपुष्पं घनरसम्" इति कोशात् पूर्वमनेन सख्यपर्यन्तम्भक्तिः कृता इदानीमात्मनिवेदनं कृतवान् प्रेम्णैव प्रवृद्धः श्रवणमारभ्य सख्यपर्यन्तमागतः स्नेहवशाद्वा स्थूलो जातः कामरूपिणश्चे यथाभिलषितं रूपं कुर्वन्ति प्रकृते भगवत्स्नेहात् यथाभिलषितं रूपं कृतवान् यावता सर्वेषां छाया भवति । ननु, स्वस्यापि क्लेशो भवतीति किं दुःखेन तथा कृतवान् नेत्याह, मुदित इति यावज्जन्म यो भक्त्यैव वर्द्धते सोऽन्ते कृतात्मनिवेदो भवति लोकोपकारित्वात् नीलत्वात् जीवनदातृत्वाच्च सख्यमिति कांचित् सर्वस्वमपि दत्तवानिति ज्ञापयितुं कुसुमावलीभिः सहेत्युक्तम् अनेन साक्षाल्लक्ष्म्या सह भगवतः क्रीडा सूचिता अत एवाग्रे पुलिन्दीनां स्तोत्रं भविष्यति गोपैर्गोचारणं बलभद्रेण रक्षा वेणुनादेन प्रबोधनं पश्चाद्रमणमिति शेषत्वदस्यापि सात्त्विकत्वात्तादृशेऽपि समये छायाकरणं युक्तमेव ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च, कृष्णस्य सर्वमोहनत्वेपि नारीजातिमात्रमोहनत्वमत्यधिकमित्याहुः—नद्य इति । आवर्त्तैः परिभ्रमैर्लक्षितेन मनोभवेन कामेन भग्नो वेगो यासां ताः अत एव धैर्यलज्जापगमात् समुद्रं स्वपतिं प्रत्यगमनाज्जलातिवृद्धया ऊर्मय एव भुजास्तैर्यदालिङ्गनं तेन स्थगितं सम्वृतं निश्चलीभूतं कुर्वाणस्य मुरारेः पादयुगलं गृह्णन्ति स्वाङ्गेषु धारयन्ति कमलं पद्ममुपहरन्त्यः । यद्वा, सुशीतलं सुगन्धजलं "सलिलं कमलं जलम्" इत्यमरः स्वीयजलेन क्षालनार्थं पाद्योपहारं प्रददत्य इवेत्यर्थः किम्वा कमला स्वसर्वसम्पत्तिस्तामर्पयन्त्यः स्वरमणं प्रीणयितुमिति भावः । तासां पतिः समुद्रोऽपि नानेव क्रेधि यथा ऽस्मत्पतयोऽस्मानित्यहो वयमेवाधन्या इतिभावः ॥ १५ ॥

हन्तहन्त सख्यभाववन्त्योऽप्यात्मानं कृतार्थयन्तीत्याहुः—दृष्ट्वेति । प्रेम्णैव प्रवृद्धः यावत्या स्ववृद्धया गोगोपालसहितस्य तस्य तापनिवारणं भवेत्तावतीं वृद्धिं प्राप्त इत्यर्थः । कुसुमावलीभिरिति "मेघपुष्पं घनरस" इत्यभिधानात् जलकणावलीभिः सह वपुषा सख्युः कृष्णस्येति रसवृष्ट्या सन्तापहारित्वेन सवर्णत्वेन स्वीयविद्युद्गर्जनाभ्यां पीतवस्त्रवेणुनादयोः साम्यदृष्ट्या च सखिभावमभिमन्यमानः आतपत्रं तुषारवर्षिच्छत्रं व्यधादित्याकाशस्थो मेघोपि सुखयति केवलं वयमेव तं सुखयितुं न प्राप्नुम इति धिगस्मानिति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या आहुः—हे सख्यः! नद्यस्तदभिमानिन्यो देवताः यदा तासांतीरे श्रीकृष्णो वेणुना गायति तदा वेणुनिस्सृतं मुकुन्द-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गीतमुपधार्य श्रुत्वा आवर्तलक्षितेन भ्रमणाद्योतितेन मनोभवेन भग्नो वेगो यासां ताः आलिङ्गनेन स्थगितमाच्छादितं यथा भवति तथा ऊर्मिरूपैर्भुजैः कमलोपहाराः कमलान्युपहरन्त्यः मुरारेः पादयुगलं गृह्णन्ति अहो ता धन्या इति भावः ॥ १५ ॥

धन्या आहुः—रामेण गोपैश्च सह व्रजपशून् सञ्चारयन्तं व्रजात् पशून् वने निवेशयन्तम् वेणुमुदीरयन्तम् अत एव आतपे दृष्ट्वा उदितोऽम्बुदः प्रेम्णा प्रवृद्धः सन् मौक्तिकादि-विलम्बस्थानीयाभिः कुसुमावलीभिः सह स्ववपुषा सख्युः श्रीकृष्णस्य घनश्यामत्वेन सोपमस्य स्वतनुरूपमातपत्रम् व्यधात् ॥ १६ ॥

श्रीरामकृष्णकृतप्रेममञ्जरी ।

एवं वर्णयन्त्यो रागौत्कण्ठ्येन विवशा स्वकीयमेव भाव—मचेतनेष्वपि समारोपयन्त्य आहुः—नद्य इति । अथ तृतीये यामे वयस्यानां सुखविशेषं जलक्रीडां विधाय वन्यपुष्पैः शृङ्गाररचनाः निर्माय व्रजगमनोन्मुख उत्थाय तत्रैव स्थितो गवां सङ्कलनाय निजरूपावलोकजीवनानां परमासक्तानां नानाविनोदजननाय तत्त-द्रागमग्राह्यं निजवेणुं वादयति—

हिही गङ्गे यमुने ! सरस्वति शुभे कालिन्दि सप्तमंदे हिही ।
रोहिणी मोहिनी सदयिते ही धमंदे धमंदे ! ॥

कालिन्दीमानसगङ्गाद्याः तदा वादनसमकालमेव परम-मोहनता उक्ता इति सर्वा अपि लोकवेदमर्यादा मोचयतीति मुक् ता ददातीति तादृशं वेणुगीतं वैवश्याद्वेणुपदानुपादानम् उपधार्य सावधानं श्रुत्वा आलिङ्गने स्वपामयोग्यतामननात्स्थगि-तत्वम् । यद्वा,तटगतस्य प्रतिबिम्बमात्मगतमालिङ्ग्य स्थगितत्वम् यद्वा,म्रियते विधुरजनोऽनेनेति मुरः कामस्तस्यारिःकोटिकन्दर्पजयी साक्षान्मन्मथमन्मथः श्रीकृष्णः नायं च कामवतीनां वशवर्त्ती किन्तु प्रेमवतीनां नद्योहि मोहनगीतमाकर्ण्य स्वभावेन समुद्रपाति-सम्मुखं धावन्त्योऽपि ततः परावृत्य आवर्त्तेन अम्भसां चक्रेण भ्रमेण लक्षितं मनोभवेन भग्नो वेगो यासां ताः सकामा इव स्वकीयानि हृदयकमलान्येव उपहरन्त्य आलिङ्गनोन्मुखाः सत्यः मुरारितया तस्योदासीन्यमालक्ष्य विलज्जिताः पादयुगलं गृह्णन्ति इयं सिद्धविषयोत्प्रेक्षा अयम्भावः श्रीकृष्णवेणुगीतप्रभावा-न्नीरसास्तरुलतादयः सरसा भवन्ति सरसाश्च मधु स्रवन्ति शिला अपि द्रवन्ति नद्यश्च स्तम्भमनुभवन्ति आवर्त्तेन द्विगुणं प्रवाहमभिवर्द्धयन्तीति ॥ १५ ॥

अथ पूर्वोक्ताभ्यो विशिष्टा सख्यरसाविष्टा गोष्ठी सङ्गृह्यते तत्र श्रीकृष्णविषयं सख्यं प्रशंसन्ति—दृष्ट्वेति । यथातीते तृतीये यामे यामेव रीतिमुद्दिश्य सासा क्रीडा विरचिता तद्भाववैवश्यतया आवश्यकतया च गवां सङ्कलनमपि कर्त्तुमुचितं मत्वा वन्य-कुसुमादिभिः कृतानल्पाकल्पो गिरिशिखरमारुह्याधित्यकायां वा कदम्बस्कन्धशाखामवलम्ब्य त्रिभङ्गभङ्ग्याऽवस्थितव्रजाभिमुखो वनशोभां निभालयति—तदेकजीवना निमेषासहाः सहचराश्च तद्रूपमाधुरीमास्वादयन्तोऽप्यतृप्ततया तदग्रेऽवस्थितादिवातप्त-शिला तापमपि न गणयन्ति स्म तदसहमानतदेकप्राणा श्रीकृष्णो दिवाकरतापोपशमनाय ससुखं व्रजगमनाय निखिल-कृतसाचिव्यं सुहृद्विशेषं वारिदमाकारयन्नुच्चैर्मेघमल्लारमाला-पयन्वेणुं वादयति तेनाकृष्टो वारिवाहस्तावदेवाभिवर्षति यावता गिरिशिलाशैत्यं भवेदिति व्रजपशूनिति चारणावश्यकत्वं तदनु-रोधेन शनैर्गमनं तापभूयस्त्वञ्च दृष्ट्वा विधुनेत्रैः रामेण गोपै-श्च सहेति बहुतरच्छायापेक्षा अहोभाग्यमम्बुदस्य येन मर्त्योऽपि तादृश एव लब्धः समये साहाय्यमप्याचरति, अयमपि घनश्यामः सोऽपी-त्यादिसाम्यात्सख्युरिति ॥ १६ ॥

श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

सुखदा हंसानिकामाह—नद्य इति । म्रियते मधुरजनोऽनेनेति मुर कामः तस्यारिः "साक्षान्मन्मथमन्मथः" इति वक्ष्यमाणत्वात् कन्दर्पदर्पहेति स्वामिनाऽपि वक्ष्यते एवं च नायं कामवतीनां वशवर्त्ती किन्तु प्रेमवतीनामिति सूचितम् आलिङ्गनायोत्था-पितभुजानां तासां कामकृतं स्थगितत्वमप्यतस्यारिपदोपादान-मनादरात् इवमत्र कृतं नद्यो हि स्वभावेन समुद्राख्यपति-मभिधावन्त्यो मोहनगीतमाकर्ण्य ततः परावृत्य स्वकीयानि हृदयान्येव रागवन्ति कमलानि उपहृत्य आलिङ्गनोन्मुखाः सत्यः मुरारितया तस्योदासीन्यमालक्ष्य लज्जितास्तदा पतिं त्यक्त्वा न वयं कामवत्यः किन्तु प्रेमवत्य इति सूचयन्त्यः पादयुगलं गृह्णन्तीति सिद्धविषयोत्प्रेक्षा यद्वा,मुरारेरिति "नारायण-समो गुणैः" इति गर्गोक्तेः । यद्वा,मुरो नामाऽसुरः स्वाशिषं समा-राध्य यस्य यस्योरसि हस्तं विदध्यात् स म्रियेतेति लब्धवरो लोकभयङ्करो यदासीत् तदा छद्मवेषेण श्रीभगवता पृष्टः तेन स्वहृदये हस्तं निधाय मुरोऽहमिति तेनैव हत इति वामन-पुराणे प्रसिद्धम् तद्वासनयोक्तम्—

"मुरः क्लेशे च सन्तापे कामभोगे च कर्मणाम् ।
दैत्यभेदे हरिस्तेषां मुरारिस्तेनकीर्त्तिते" ॥

इति ब्रह्मवैवर्त्तोक्तवासनयोक्तं मुरारिः कामजन्यसन्तापनाशकस्य पादयुगलमिति सम्बन्धः—

"मुक्तं भक्तिरसप्रेमवचनं वेदसम्मतम् ।
यः स्वं ददाति भक्तेभ्यो मुकुन्दः सो हि कीर्त्तितः" ॥

तदा तत्क्षणमेव वादनसमकालमेवेति परममोहनतोक्ता उपा-धार्य सावधानं श्रुत्वा वैवश्यवेणुपादानुपादानमिति यावत् यद्वा, आलिङ्गनेन आश्लेषाभिलाषेण स्थगितं यथा स्यात्तथा यद्वा, तटगतस्य तस्य प्रतिबिम्बमात्मगतमालिङ्ग्य स्थगितत्वं यद्वा, आलिङ्गनाद्धेतोः स्थगितं पादयुगलमिति सम्बन्धः यद्वा एवं वर्णयन्त्यो रागौत्कण्ठ्यात् विवशाः स्वकीयमेव भावमचेत-नेष्वपि समारोपयन्त्य आहुः—नद्य इति । अयं भावः श्रीकृष्ण-वेणुगीतप्रभावात् नीरसास्तरुलतादयः सरसा भवन्ति सरसाश्च मधु स्रवन्ति शिला अपि द्रवन्ति नद्यश्च स्तम्भमनुभवन्ति परिवर्त्तनेन द्विगुणप्रवाहमभिवर्द्धयन्ति तदा तद्गतकमलान्यपि तद्गतपादयुगलं स्पृशन्ति तत्रेदमवासितम् ॥ १५ ॥

तिलोत्तमा विचित्रवसनामाह—दृष्ट्वेति ॥ १६ ॥

**पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन ।**
**तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥ १७ ॥**

भाषा टीका ।

श्रीमुकुन्द की वंशी की टेर सुन के यमुना सूं आदि लेके जो नदी हैं ते भमरन सों जान परयो जो काम ता सों मन्द भयो वेग जिनको ऐसी होयकें आलिंगन ते जैसे ढंकि जाय ऐसे तरंग रूपी भुजान ते कमलन की भेट लेके श्रीमुरारि के दोनों चरणन कूं पकरे हैं ॥ १५ ॥

अपने भैया बलदेव जी कूं और सग गोपन कूं संग लेकें धूप मे ब्रज की गऊन कों चरावत पीछेर बासुरी बजावत जब आपको मेघ देखें हैं, तब प्रेम सों उमगि के बाढि के पुष्पन की पंक्ति तुल्य जो अपनो शरीर है तासें अपने सदृश रंगवारे सामरे सखा कों छत्र धारण करें हैं यासों ये बात जनाई, कि—मेघ जडसे होय के श्रीकृष्ण चन्द्र और श्रीबलराम की सेवा करें हैं, ऐसी इनकी प्रारब्ध है. । हम सबन कूं चेतन होय केऊं प्रत्यक्ष में सेवा नहीं प्राप्त भई ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

साहङ्कारमाहुः-पूर्णाः कृतार्थाः पुलिन्द्यः शबराङ्गनाः कथमित्यत आहुः प्रथमं दयितानां स्तनेषु मण्डितेनानुलिप्तेन पुनश्च रतिसमये उरुगायस्य श्रीकृष्णस्य पदाब्जयोः रागेणारुणयेन श्रीः कान्तिर्यस्य तेन कुङ्कुमेन पुनस्तस्य वनस्थलीषु चङ्क्रमणेन तृणेषु रूषितेन लग्नेन तद्दर्शनेन तथाभूतस्य कुङ्कुमस्य दर्शनेन स्मरकृता रुक् तापो यासां तास्तेन कुङ्कुमेनाननेषु कुचेषु च कामस्थानेषु लिम्पन्त्यस्तदाधिं कामव्यथां जहुः, अतस्ताः कृतार्था धिगस्या मादृश्यो याः एवम्भूतमप्याधिशमनं न लभन्त इति भावः ॥ १७ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषणी ।

अथापरस्याः गोप्या वाक्यं त्रिभिः । यद्वा, पूर्ववदेकवाक्यतया व्याख्यानं तथा हि आस्तान्तावत् सर्वोपकारादिना सख्यमित्रमाप्तस्य तादृशसेवाकारिणो मेघस्य भाग्यं अस्पृश्यरवादिना दूरतोवर्ज्यानामप्यन्त्यजस्त्रीणां भाग्यं किं वर्णयेमित्याहुः-पूर्णा इति । पुलिन्दीभिः सर्वा एव वनचर्यो भिल्लात्यन्त्यजास्त्रियः साहचर्येणापि लक्ष्याः उरुधा गीयते गोपैः स्वयं वा गायति वेणुनेत्युरुगायः दयितानां कासाञ्चित् स्तनेषु मण्डितेन भूषणतया गृहीतेन तृणेष्वपलक्षणं शिखादिष्वपि रूषितेन तत्तत्प्रकारश्च व्यक्तं लज्जया नोक्तः श्रीस्वामिपादैर्व्यञ्जित एव तदाधिं कामव्यथां तदा तस्मिन्नेव क्षणे आधिं मनोव्यथां सर्वात् स्मरकृतमेव । यद्वा, तम् अनिर्वचनीयमाधिं श्रीकृष्णप्राप्तिमनोदुःखं जहुः श्रीशब्देन च श्लेषेण लभ्यते श्रीकृष्णवल्लभानां स्तनैरनुलेपनद्वारा भूषितेन सौन्दर्यातिशयं नीतेन पुनः श्रीकृष्णपदाब्जसम्पर्केण कान्तिविशेषं प्राप्तेन कुङ्कुमेन तृणादिभ्यः समुद्धृत्य स्वाङ्गेषु लिप्यमानेन सदा प्रायो भूषणहीनाः कान्त्यादिरहिताश्च काष्ठशाकाद्याहरणाय वनान्तर्भ्रमन्त्यः पुलिन्द्यस्तेनैव महाभूषादिसम्पत्तेर्योग्यतां प्राप्य सर्वविधमाधिं जहुः अन्यैस्तद्दर्शितमेव यद्वा, अहो बत श्रीवृन्दावनेऽत्र वयमेव केवलं भाग्यहीना इत्याहुः-पूर्णा इति, उरुगायपदाब्जयोः रागोऽनुरागो यस्य तस्याः श्रियः कुङ्कुमेन श्रीभगवद्विलासकप्रेयस्या तत्सन्तोषणार्थं तयोरर्पितेन कुङ्कुमजातिविशेषेणेत्यर्थः । अतः स्वसन्तोषणार्थमेव दयितानां युष्मादृशीनामपि स्तनेषु प्रथमं मण्डनतयाऽनुलिप्तेन यद्वा उरुगायपदाब्जरागवदरुणा श्रीर्यस्य कुङ्कुमस्य तेन तत्पादाब्जराग सादृश्येन प्रीत्या दयिताभिः स्वस्तनेषु मण्डनतया गृहीतेन पश्चात्तस्योरुगायत्वेन विचित्रवेणुगीतेन वनान्तः समाकृष्टानामितस्ततो भ्रमन्तीनां तदप्राप्तिवैकल्येन वनेषु विलुण्ठन्तीनां स्तनेभ्यः तृणेषु रूषितेन पूर्णा भूतगात्रा अपि श्रीभगवता स्वयमेव वा ताभिस्तृणद्वारा स्तनमण्डना तृणेषु रूषितेनेति केचित् तस्य कुङ्कुमस्य दर्शमात्रेण तादृशत्वाविचारतः तत्स्वभावतो वा स्मररुजो यासां तथाभूताः सत्यः तृणेभ्यः समुद्धृतेन तृणसहितेनैव कुङ्कुमेन प्रथमं सौरभ्यग्रहणाद्यर्थमाननेषु पश्चात् स्मरवेगेन कुचेषु लिम्पन्त्यः लेपमात्रं कुर्वन्त्यः सत्यः तत्कुङ्कुमं जहुः कुतः आधिं आधिहेतुत्वात्तदेवाधिरूपमित्यर्थः । प्रेमभरोत्पादनेन व्याकुलतया तद्दुःखपरिहाराय वा त्यजन्तीति भावः अहो बत कथम् ईदृश्यो वयमधन्याः परमार्तिसिन्धुमग्नाः या मादृशीनापि सम्बन्धेनान्येऽपि जना ईदृशीमार्तिं लभमाना अस्मद्गात्रगन्धसम्पृक्तद्रव्यमपि शङ्कया परित्यजन्तीति तात्पर्यं तत्कुङ्कुमसम्बन्धेन तासु महालक्ष्म्या आवेशाच्छ्रीभगवदनुग्रहविशेषेण तदाधिं ता जहुः अत एव पूर्णाः कृतार्था इति श्रीवल्लभचरणाः यद्वा अब्जरागः पद्मरागः तस्य श्रीः कान्तिर्यस्य तेन यद्वा अब्जस्य राग इव रागो यस्य तेन श्रीकुङ्कुमेन कथम्भूतेन दयितास्तनमण्डितेन पुनः कथम्भूतेन उरुगायपदा उरुगायं पद्यते प्राप्नोतीत्युरुगायपत् तेन शेषं प्रथमार्थवदेव श्लेषेणोद्गमयुक्तं स्यात् तादृशकुङ्कुमदर्शनेन श्रीभगवत्स्मरणात्तस्तदप्राप्त्या तादृशी पीडा अभूत् यत्राशेषदुःखातिरेकोऽन्तर्भूतः तद् कुङ्कुमस्पर्शेन च श्रीभगवत्स्मरणात्तस्तदप्राप्त्या तादृशी पीडाऽभूत् तादृशं सुखं जातं येन शेषानन्दसम्पन्नमाधुर्यं तत्रान्तर्भूतम् अत एवाशेषाधिं जहुः भगवत्तस्तदीयानां वा तासां सम्बन्धेन पूर्णाश्च बभूवुरिति एवं तासां निजाधिः शान्तः अस्माकं च निजाधिर्वर्द्धत एव अतस्ताभ्यो व्यातिन्यूनत्वेन सर्वथा सर्वेभ्यो जीवेभ्यो भाग्यहीना वयं वेति ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ निजभावप्रकटनमयेन पद्येन निजरसवर्णनं सङ्क्रान्तत्वेन आस्तां तावत्तत्सखस्य मेघस्य भाग्यम् अन्त्यजस्त्रीणामपि किमस्माकमित्याहुः—पूर्णा इति । तत्र पूर्णा इत्यनेन अहो वयमपि यथा कथञ्चित्तत्सम्बन्धेन तथा भवितुं पारयामः । किन्तु नास्ति तादृग्भाग्यमिति पुलिन्द्य इत्यनेन तादृशीभ्योऽपि श्रोतव्या वयमिति उरुधा वेणुना गायतीत्युरुगाय इत्यनेन निजाधैर्यं तत्कर्तृककारणविशेषोऽप्यस्तीति पादाब्जयोः रागरूपं यत्तत् एव हेतोरस्मादृशैकगम्यकाम्यामोदादि श्रीविशेषयुक्तं च यत् तेन कुङ्कुमेनेत्यनेन तादृशपदाब्जस्पर्शाय मनः स्पृहयतीति दर्शयता तादृशनागरस्य तादृशीं विना स्थितेरसम्भवात् या काचित् प्रेयसी निगूढं विद्यते तस्याः स्तनाभ्यां मण्डितं शोभाविशेषमानीतचरं यत्तेनेत्यनेन तस्यास्तु तत्तद्विलासात्मकं तादृशं भाग्यमस्माकमतिदूराद्दूरतरमेवेति तद्दर्शनेत्यनेन तत्सम्बन्धिनोऽपि झटिति तत्तल्लीलानुसन्धापनेन स्वभावेनैव वा तादृशमोहनत्वं किं पुनस्तस्येति तृणेष्वित्यनेन तादृशजन्मादयस्माकं गतिरिति लिम्पन्त्य इत्यादिना अहो हर्षभरस्तासामिति च बोधयन्ति प्रथमं तादृशलोभनस्वभावाकृष्टतया घ्राणादर्शनार्थं मुखमभिहितं नीतं ततस्तत्र लिम्पन्त्यः पश्चात् स्मरवेगेन कुचेषु लिम्पन्त्य इत्यर्थः । श्रीकृष्णाङ्गसङ्गिवस्तुदर्शनेन तद्वस्तुगात्रस्यापि प्रसङ्गो भवत्विति जातः स्मराधिस्तत्प्राप्त्या तद्दर्शेन शान्तो भवत्येव ततस्तासामभवदस्माकं तु न तद्दर्शनापीत्यर्थः ततस्ता अप्यस्मदपेक्षया पूर्णा इत्यहो दुर्भाग्यमिति भावः । अत्रैतदुक्तं भवति तदिदं तासामखिलं वचनं भावमात्रावगतमपि यथावदेव तादृशगाढभावस्य दूरतोऽपि स्वविषयसाक्षात्कारहेतुत्वात् "यस्यास्ति भक्तिर्भगवत्यकिञ्चना" इत्यादिभ्यः अनस्तवैतदनुवदिष्यते पट्टमहिषीभिरपि "कामयामह एतस्य श्रीमत्पादरजः श्रियः । कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः । व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः" इति तत्र सत्युरुगायपदाब्जरागेत्यनेन सह दयिताकुचमण्डितेनेत्युक्त्या तत्कुङ्कुमं दयितास्तनतस्तस्य पदे लग्नमिति गम्यते सा च दयिता श्रीपदेनानूदिता तदिदं वर्षासु तासु तास्वपि विशिष्टा "रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने" इति मात्स्यादिप्रसिद्धा श्रीराधैव लक्ष्यते "श्रियः कान्ताः कान्तः परमपुरुषः" इति ब्रह्मसंहितादर्शनात् व्रजदेवीमात्रायां श्रीत्वे प्राप्ते—

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा" ॥

इति बृहद्गौतमीये तु तदाधिक्यं दृश्यते अन्यस्याः श्रियः "कस्यानुभावोऽस्य न देव ! विद्महे" इत्यादौ निरस्तत्वात् रुक्मिणया अ तदानीमसम्बन्धादिति सङ्गमश्चायं दिवस एवेति सम्भाव्यते तत्रैव पुलिन्दीनां भ्रमणात् कुङ्कुमानां लेपनकर्मणाद्रत्वावगमाच्च द्वयोः सम्बन्धश्चायं न सम्भोगविशेषरूपः रासप्रसङ्गे "भगवानपि ता रात्रीः शारदोत्फुल्लमल्लिकाः । वीक्ष्य रन्तुं मनश्चक्रे" इति तत्रैव नवसङ्गमस्य प्रतीयमानत्वात् अन्यथा तत्र परीक्षार्थं पुनस्तेनोपेक्षावचनस्य सङ्गतत्वापत्तेः तदिदं वेणुप्रकरणे भविष्यत्वाद्वेणुसम्बन्धेनैव गम्यते उरुगायेत्यनेनैव एव हि सूचितः तस्मात् कदाचिद्वेणुकृताकर्षितायास्तस्या उच्चमूर्च्छोपमूर्च्छाशान्तये सकुङ्कुमे स्विन्ने वक्षसि सम्भ्रमतः केवलेन चरणसञ्जीवनीपल्लवेन स्पृशतोऽस्यापि सम्यक् सङ्कोचानपगमात् द्रुतमेव सतस्मात् निष्क्रामति सुध्यते "काञ्चित्परांत कृष्णस्य" इत्युक्तत्वात् यास्तु तदन्यास्तासामेव पूर्णाः पुलिन्द्य इति वचनं तासां च प्रायो ज्ञातपूर्वानुरागाणामीर्ष्यानवसरत्वादन्यसङ्गमस्फुरणेऽपि राग एव हितुर्भानः "यर्ह्यम्बुजाक्ष ! तव पादतलम्" इत्याद्युक्तिस्तु कुमारीणां स्वाभिमतत् स्वाकृततयैव ह्यत्र तत्स्पर्शतया निर्दिष्टम् अभिरामता आनन्दिता इत्यर्थः ॥ १७ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पूर्णाः कृतार्थाः पुलिन्द्यः वनचरस्त्रियः दयितास्तनमण्डितेन गोपीस्तनमण्डितत्वात् कृष्णपदाब्जसङ्गः ॥ १७ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शबराङ्गनानामपि भाग्यं वयं न लेभिमहे इति सखेदमाहुः—पूर्णा इति । पुलिन्द्यः शबराङ्गनाः पूर्णाः कृतार्थाः कुतः ? तत्राहुः उरुधिकं गीयते मुनिभिरित्युरुगायः कृष्णः तस्य पदाब्जयो रागेणारुणेन श्रीरोज्ज्वल्यं यस्य तेन श्रीकुङ्कुमेन कथम्भूतेन दयितायाः महालक्ष्म्याः स्तनयोर्मण्डितेनालङ्कृतेन तया क्रीडासमये उरुगायपदाब्जरागश्रीकुङ्कुमस्य तत्स्तनयोर्निहितत्वादुरुगायपदाब्जयोः कुङ्कुमसम्बन्धः उरुगायपदाब्जाभ्यां वनसञ्चारदशायां तृणेषु रूषितेन लिप्तेन आननेषु कुचेषु च लिम्पन्त्यः कथम्भूताः सत्यः तस्य कुङ्कुमस्य दर्शनेन स्मरकृता रुक् यासां तथाभूताः सत्यः आननेषु कुचेषु लिम्पन्त्यस्तदाधिं कामव्यथां जहुः अतस्ताः पूर्णा इति भावः ॥ १७ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुलिन्द्यः शबरस्त्रियः तस्मात्कामातुरत्वमाधिं मनोदुःखं जहुरित्यन्वयः । कीदृशाः पूर्णाः कृतकृत्याः तस्य कृष्णस्य दर्शनेन जातस्मर एव रुक् रोगो यासां ताः क्रीडासमये तृणेषु रूषितेन दिग्धेन दयितायाः प्रियतमायाः गोप्याः स्तनमण्डितेन स्तनयोः वर्त्तितेन उरुगायस्य हरेः पादाब्जयोः स्वतः अरुणयोरपि रागजननार्थं लिप्तेन श्रीमता कुङ्कुमेनाननकुचेषु लिम्पन्त्यः ॥ १७ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सखि ! अस्मिन् पुलिन्द्योऽप्यतिधन्या इति पुनः प्रोक्ता एव राधासख्य एवोचुः—पूर्णाः पुलिन्द्य इत्यादि । पुलिन्द्य इति श्रीवैकुण्ठोपलक्षणम् अन्यथा मर्यादा नाभ्यागमसम्भवात् एतेन उक्तप्रकाराणां व्रजे देवीनामतिरिक्ता अपि स्त्रियोऽपि तत्र वर्त्तन्ते ता अपि कृष्णेऽनुरक्ता मन्तव्याः अतो आपामरादौ जलाहरणादिदधिदुग्धादिविक्रियपराणामपि यदनुरागकथाः श्रूयन्ते न ता अवधीरयितव्याः सर्वेषाव सम्भवत्यधिकारभेदात् अभेदांशतः

## श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुलिन्द्यः पूर्णाः कृतार्थाः कुत इत्याहुः उरुगायपदाब्जयोर्यो रागस्तत्र यत्र श्रीकुङ्कुमं श्रीयुक्तं कुङ्कुमम् अथवा उरुगायपदाब्जरागजनकं यच्छ्रीकुङ्कुमम् तेन आननकुचेषु लिम्पन्त्यः आत्मनामित्यर्थः। तदाधिं यच्छ्रीकुङ्कुमम् स्मररुक्कृतम् आधिं जहुः अतः पूर्णाः कीदृशेन दयितायाः श्रीराधायाः स्तनाभ्यां स्तनयोर्वा मण्डितेन पक्षे भावेरुः दयितेति चन्द्रावल्यां राधासाक्षित्वं स्पष्टं ननु ताभिस्तत्कुतो लब्ध-मित्याह—तृणरूषितेन तृणलग्नेन अयं भावः दयितास्तनकुङ्कुमं यच्चरणयोर्लग्नं तत्प्रेम्णा तत्र प्रच्छाद्यते चरणराग एव तल्लीनं जनैश्च न लक्ष्यते तत्तु वृन्दावने पादत्राणं विनैव व्रजनश्चरण-स्पर्शेन तृणान्यपि स्निह्यन्ति तेन तेषु लग्नं भवति तदन्वेषण-पराः पुलिन्द्यो हि तन्मर्यादां जानन्तीति तथा वयन्त्वपूर्णा इति निर्विदः ॥ १७ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्णाः पुलिन्द्य इति । अत्र दयिताः काश्चिद्वेणुनाकृष्टाः मूर्च्छि-ताश्च तस्या मूर्च्छाशान्तये वै चरणपल्लवेन स्पर्शमात्रकृतामिति विवेचनीयं स्वभावसङ्गोपनाशक्तिपक्षे रमयां रामः क्रीडा तद्युक्तस्य कृष्णस्य चरणयोः स्पर्शेन प्रमोदो यस्य तयो-श्चरणयोः ॥ १७ ॥ १८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वनवासिनः क्षुद्रजातीयाः पुलिन्दाः तेषां पत्न्यः पुलिन्द्यः भग-वदेकत्वात्तासामपि भक्तिर्जातेत्याह—पूर्णा इति । सर्वापेक्षया पुलिन्द्यः पूर्णाः तासां साक्षाद्भगवच्चरणारविन्दरजःसम्बन्धो वर्तत इति उरुभिर्गीयत इति उरुगायो भगवान् सर्वप्रमाण-सिद्धः सर्वगुणपूर्णः तस्य पदाब्जं चरणारविन्दद्वयं तत्र यो रागः तत्सहिता श्रीः महता विचारेण हि लक्ष्मीर्भगवन्तं वव्रे अतः चरणारविन्दभक्ता या लक्ष्मीः तस्याः यत्कुङ्कुमं तयैव निष्पादितं दिव्यं कुङ्कुममर्थात्तयैव भगवच्चरणारविन्दे च दत्तं नत्पुनर्वन्धाविशेषे लक्ष्म्या एव दयितायाः रसदातृत्वेन प्रियायाः स्तनयोर्मण्डितं तया वा स्वहृदये स्थापितम् अथवा लक्ष्म्या दत्तं आधिदैविकीषु शक्तिषु स्तनेषु मण्डितं ततः चरणारविन्दे वा समागतम् अथवा तृणरूषितेन तृणेन कृत्वा कुङ्कुममेव मफरिकापत्रवद्रूषितं तदा तत् कुङ्कुमसहितं तृणं भगवद्धस्त-स्थितं भूमौ पतति तृणेषु वा रूषितं तल्लग्नं चरणारविन्दा-श्रयस्य कुङ्कुमस्य दर्शनेन लक्ष्म्या ताभिर्वा सह भगवत्सम्भोगदर्शनेन वा स्मरकृता रुक् यासां तास्तद्दर्शनस्मररुजः तदा तच्छान्त्यर्थमाननकुचेषु कुङ्कुमेन लिम्पन्त्यः तदाधिं जहुः तत्कुङ्कुमं मुखे स्तनयोश्च दत्त्वा ता अपि यदोपस्थिताः तदा तद्द्वारा लक्ष्मीप्रवेशात्ता अप्युपभुक्ताः तदाधिं जहुः अतस्ताः पूर्णाः इयमलौकिकी भगवत्कृपा उरुगायेति वचनात्ताभिरपि भग-वान् श्रुत इति लक्ष्यते ॥ १७ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इदानीं सौन्दर्यादिवेणुगानादिरूपगुणावद्यनपेक्षमाणं किञ्चित् सम्बन्धमात्रेणैव तन्मोहनत्वं प्रतिपादयन्त्यः प्रेम्णः सप्तम्या भूमिकाया महाभावस्य मादनाख्यं महासारं भागमभिव्यञ्ज-यन्त्यः श्रीवृषभानुकुमारीचरणपङ्कजच्युतय आहुः—पूर्णा इति। पुलिन्द्यः शबराङ्गना एव पूर्णाः वयं त्वपूर्णा एवेत्यतस्तदीयं तयोर्जिज्ञासमानाश्चिकीर्षाम इत्यनुरागो ध्वनितः। ननु, केन पूर्णा-स्तत्राहुः उरुगायपदाब्जस्य रागो रञ्जनं यत्र तेन श्रीकुङ्कुमेन ननु तत्पदाब्जगतं तत्कुङ्कुमं कुत इत्यन्तावत्तत्राहुः दयितास्तन-मण्डितेन अतस्तदीयपरमसौभाग्यस्य स्तुतावभिलापे च साहसं कर्तुमशक्नुवतीभिरस्माभिः पुलिन्द्य एव स्तूयन्त इति भावः यद्यप्यत्र दयिता सैव स्वयं श्रीवृषभानुकुमार्येव तदप्यनुरागा-धिक्येनैव तद्मानननम् ननु, तेन पुलिन्दीनां तासां किं तत्राहुः, तृणेषु रूषितेन लग्नेन दयितासम्भोगानन्तरं कृष्णस्य वन-विहारादिति भावः। ननु, ततोपि किं तत्राहुः तस्य तृणलग्नकुङ्कु-मस्य दर्शनेन स्मररुक् कन्दर्पपीडा यासां ताः न जानीमहे कृष्ण-दर्शने तासां किमभविष्यादिति भावः ततश्च कृष्णाङ्गसौरभ्य-जिघृक्षया आननेषु तत्कृतसम्भोगलिप्सया कुचेषु लिम्पन्त्यः सत्यः कृष्णसम्भुक्तम्मन्यास्तदाधिं कन्दर्पपीडां जहुः अहो तव-त्कुङ्कुमस्याप्ययं कोपि शक्तिविशेष इति भावः। वयं तु तथापि जन्ममध्येपि सकृदपि न प्राप्तुम इति भावः पद्यमिदं श्रीमदुज्ज्वलनीलमणौ मादनमधिकृत्य सदाभोगेपि तद्गन्धमात्रा-धारस्तुतिर्यथेत्यत्रोदाहृतम्। सदा भोगेपीति मादनस्य भाव-समष्टित्वाद् एव सम्भोगाः सर्वे विहाराश्च मादने वर्तन्ते एव अत्र विहारोपि सम्भोगादीनां सहस्रैव कृष्णस्याविर्भा-वात् तेन सह ज्ञेयः अत एवात्र प्रकृते वर्णयन्त्योऽभिरेभिरे इत्यत्र सहसैवाविर्भूतं कृष्णमालिङ्गितवत्य इत्यप्यर्थमाहुः—

> सर्वभावोद्गमोल्लासी मादनोऽयं परात्परः ।
> राजते ह्लादिनीसारो राधायामेव यः सदा" ॥ इति

तत्रैवोक्तेरन्यवक्तृकत्वेनापि नेदं व्याख्येयम् ॥ १७ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या आहुः—हे सख्यः पुलिन्दानां शबराणां स्त्रियः पूर्णाः प्राप्तसर्वपुरुषार्थाः पूर्णत्वे हेतुमाहुः प्रथमं दयितायाः प्रियायाः स्तनेषु मण्डितेनानुलिप्तेन पुनश्च स्तनपदाब्ज-सम्भोगतः उरुगायस्य उर्वधिकं गायते यः श्रीकृष्णस्तस्य पादाब्जयोः रागेणारुणेन श्रीः कान्तिर्यस्य तेन कुङ्कुमेन पुनस्तस्य वृन्दावने चङ्क्रमणेन स्तनेषु रूषितेन लग्नेन आननेषु कुचेषु च कामतप्तेषु लिम्पन्त्यस्तस्य कामरुजा-धिं जहुः, तादृशाध्युत्पत्तिस्तासां कुत इत्यत आहुः—तद्दर्शने स्मररुज इति। तस्य तृणरूषितस्य कुङ्कुमस्य दर्शनेन स्मर-रुक् कामतापो यासां ताः ॥ १७ ॥

---

### श्रीमदभिरामकृष्णकृतप्रेममञ्जरी ।

श्रीभगवदवतारावसरे खलु श्रीवृन्दावनक्रीडा द्विविधा एका रहोविहारात्मिका द्वितीया गोपालबालात्मिका च तदुक्तं कृष्णयामले—

"एकेन वपुषा गोपप्रेमवद्धो रसाम्बुधिः ।
अन्येन वपुषा वृन्दावने क्रीडति राधया ॥
गोपवेषधरो गोपैर्गोपीभीरसविग्रहः ।
शृङ्गारोचितवेषाढ्यः श्रीमान् गोपालनारतः ॥
एवं प्रकाशद्वैविध्ये स्थिते नित्यविहारिणाम्" ॥

प्रकटप्रकाशेन सहैकां गच्छता प्रकटप्रकाशेन स्वेच्छया परिजनेच्छया वा तत्तदभिमानेन सा सा क्रीडा सम्पाद्यते परिजना अपि तथाविधा एव नित्यसिद्धास्तां तां क्रीडां प्रकाशैक्येन प्रकाशभेदेन वा समास्वादयन्ति सम्पादयन्ति च कदा चित्साधकानुग्रहाय विप्रलम्भेनापि निजाभिलाषं वर्द्धयन्तस्तन्नाभेच पुष्णन्ति राधाकृष्णावपीति तथैव सुधानिधौ श्रीहितचरणैः "श्रीमद्राधे त्वमथ मधुरं श्रीयशोदाकुमारं प्राप्ते कैशोरकमति रसमहंती साधुयोगम् । इत्थं बाले महासि कथया नित्यलीलापरः श्रीजातावेशप्रकटसहजा किन्तु दृश्या किशोरी" ॥ इति. भविष्ये कार्तिक प्रसङ्गे ।

बाल्येऽपि भगवान्कृष्णः कैशोरं रूपमाश्रितः ।
रेमे विहारैर्विविधैः प्रियया सह राधया ॥ इति

पूर्णा इति पुलिन्द्यः"भृङ्गीमल्लीमतल्ली च पुलिन्दकुलकन्यकाः" इति कृष्णयामलोक्तेः पूर्णाः पूर्वोक्तप्रेमसम्पन्नाः उरुधा वेणुना गायतीत्युरुगायः उरुर्गायो यस्येति वा वस्तुत उरुधा गीयतेऽस्माभिरिति यद्वा उरुरस्मद्धृदयङ्गमो गायो निजप्रियानुगतिरूपं यशो यस्येति काचिदियं नववधूः श्रीकृष्णेन प्रागपरिचिता श्वश्रूादिभिः पतिमन्नाविकं दत्वैकाकिन्येव वनं प्रेषिता न चानयापि कृष्णपरिचयः कृतः दूरतरा वा यान्ती तां निभाल्य काननान्तर्निकुञ्जे निलीय वेणुवादितः सचमत्कारं तयाऽवलोकितः ततः मूर्च्छिता सा तत्पतिगमनात्प्रागेव परमदयालुना तत्र समागत्य उरसि पदाब्जमर्पितं किमियं जीवति न वेति आयान्तं पतिं दृष्ट्वा द्रागन्तर्हितेन परमाद्भितेन स्थितं तेन चैवं तर्हि तामियमत्र मूर्च्छिता कयापि वनदेवतयाक्रान्तेयमिति तदाराधनेन प्रसादनीया सा इति दधिभक्तबलिमादाय सङ्कल्पयति यद्वा इह यां वसति स तृप्यतु मम दयिता यद्विलोकनं ज्वारिता इति बलि भुरति गोपे विहसिति विटपान्तरे कृष्णः ततः संस्कादिना सा प्रबोधिता तदिदं पुलिन्दीभिर्दृष्टं यद्वा कस्मिंश्चिद्विहारे पुरुषायितकेलिमनुशीलयन्त्या श्रीराधया विहारश्रान्तस्य नायिकानुरूपमनुभवतः श्रीहरेः पुरुषायितरधाभिमानेनैव तदनुकुर्वत्या तत्कर्त्तव्यमखिलमप्यनुष्ठितम् यथा तेन तस्याश्चरणपरिचर्यां क्रियते तथा तया तस्यापि कृतम् अभिलाषश्चोगयोर्दर्शितं श्रीसुधानिधौ "त्वयि इयाने नित्यप्रणयिनि विदग्धे रसनिधौ प्रिये भूयो भूयः सुदृढमनुरागो भवतु मे । इति प्रेष्ठेनोक्ता रमण मम चित्ते तव वचो वदन्तीस्मेरा मम मनसि राधा विलसतु"यद्वा सुरतश्रान्तं प्रियतमं दयिता तदनुकरणेनानुगृह्णातीति दयिता पदं च तदनुकरणेन पादसंवाहनमप्यविरुद्धं, तदाह भरतः "प्रवृत्ते रतिचक्रे तु न वा शास्त्रं न वा क्रमः" इति. एवं च श्लिष्टैः पदैः पिशुनेन च रहस्यस्तित्त्वालङ्कारिकानुमतिमाश्रित्य वास्तवार्थोऽयम् उरुर्नानाप्रकारः कामबीजादिरूपेण श्रीराधेति साक्षान्नाम्ना वा गायो गानं वेणुवादो यस्याः सा उरुगाया श्रीराधैव तस्याः पदाब्जयो रागस्य श्रीर्यस्मिन्स्तनकुङ्कुमं तेन तथा दयित एतद्दयिता रूपस्तस्य स्तनाभ्यां मण्डितेन इति दाम्पत्याख्योऽपि सूचितः तथा पट्टमहिषीणामभिलाषोऽपि यथा—

कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ।
गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥

अनयोरर्थः श्रीमत् नित्यं नवनवायमानसुषमावत् श्रिय इति श्रीरत्र परमरमा श्रीराधैव "आत्मना रमया रेमे" इति गोपालपटले तामुद्दिश्यैव रमादिशब्दप्रयोगात् सामान्यायाः श्रियो "यद्वाञ्छया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रता" इत्यादिना साधककोट्यनुप्रवेशात्तदलाभश्रवणात् रुक्मिण्याद्यास्तु तत्रैव वर्त्तमानाः व्रजस्त्रीभिरथाञ्छनवाच्यानुपयोगेन पारिशेष्यात् तत्सम्बन्धस्य ताभिः सापत्न्याभासेनेर्ष्योदयात् मूर्ध्नि धारणानर्हत्वाच्च गदेति व्यक्तं राधानाम गायतीति गदा वंशी तां बिभर्त्ति तस्य व्रजस्त्रियश्चैताः पुलिन्दीसहपाठात्पूर्वनिर्दिष्टा नित्यसख्य एव व्यञ्जिताः एवं च वक्रीणामपि तत्समानभावापन्नत्वात् सत्यमेवाभिमतं स्कान्दभागवतमाहात्म्यादौ श्रीकालिन्दीपदेशेन तासां तल्लाभश्रवणाच्चेति ॥ १७ ॥

---

### श्रीमत्कृष्णदासकृतभीगणदीपिका ।

रङ्गवल्ली सारङ्गीं प्रत्याह—पूर्णा इति । भृङ्गी मल्ली मतल्ली च पुलिन्दकुलकन्यकाः" इति कृष्णयामले उरुधा वेणुना गायतीति उरुगायः उरुर्गायो यस्येति वा । यद्वा, उरुः अस्मद्धृदयङ्गमो गायः प्रियानुगतिरूपं यशो यस्येति वा यद्वा उरुधा गीयते ऽस्माभिरिति वा तस्य पदाब्जयोः रागस्य श्रीः शोभा यस्मिन् तत् कुङ्कुमं तेन परिपूर्णा इति सम्बन्धः ॥ १७ ॥

---

### भाषा टीका ।

सखी ओ ! देखो ये बन में रहनेवारीं भीलनीऊं पूर्णमनोरथवारीं हैं । क्योंकि ? प्यारी ने अनंग ताप शान्ति के तांई लगाई जो स्तनन में केशर वासों शान्ति न भई तब श्रीनन्दराजकुमार को श्रीचरण स्तनन पै धरयो है वा चरण की अरुणता से शोभा जाकी ऐसी श्रीजी के स्तनन पै भूषित होय रही जो केसर वो जब श्रीठाकुर जी गौन को चरावते समय चरणन को तृणन पै धरे हैं तब उन तृणन में लग जाय है ऐसी वा युगल स्वरूप प्रसादी केसर कों भीलनी तृणन पै सों लेकरिकें अपने मुख में, और कुचन में लेप करिके अपनी मनोभव की व्यथा कूं दूर करें हैं ॥ १७ ॥

---

हन्तायमद्रिरबला ! हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः ।
मानं तनोति सह गोगणयोस्तयोर्यत्पानीयसूयवसकन्दरकन्दमूलैः ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हन्तेति हर्षे हे सख्यः । अयमद्रिर्गोवर्द्धनो ध्रुवं हरिदासेषु श्रेष्ठः कुतः? इत्यत आहुः—यद्यस्माद्रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः तृणाद्युद्गमनिमिषेण रोमहर्षवर्णनात् किञ्च यदस्मान्मानं तनोति सह गोभिर्गणेन सखिसमूहेन च वर्त्तमानयोस्तयोः कैः पानीयैः सूयवसैः शोभनतृणैः कन्दरैश्च कन्दमूलैश्च यथोचितम् अतोऽयमतिधन्य इत्यर्थः ॥ १८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो यत्र यत्र कृष्णः प्रयाति तत्र तत्र प्रयाणासमर्थानां पुलिन्दीनामासां भाग्यं दूरेऽस्तु स्थिरोऽप्ययं श्रीगोवर्द्धनः परमभाग्यवानित्याहुः—हन्तेति । अयमिति तदानीं श्रीगोवर्द्धनान्तिक एव तासां निवासेन साक्षादङ्गुल्या दर्शनात् । यद्वा, श्रीकृष्णप्रियतमत्वेन तस्य तासु सदा साक्षादिव परिस्फूर्तेः किम्वा परमादरेण तन्नामाग्रहणात् जगतोऽशेषं पापं दुःखं चित्तं च यथा यथं हरतीति हरिः तत्स्वभावकेषु तस्य दासेषु मध्ये श्रेष्ठः प्रकृष्टो मोदो हर्षः रोमाञ्चस्वेदानन्दाश्र्वादिरूपतृणाद्युद्गमार्द्रता जलबिन्दुस्रावादिलक्षणः तनोतीति सर्वैरन्यैरपि क्रियमाणां मानमयं विस्तारेण करोतीत्यर्थः । गोशब्देनान्येपि पशवस्तदुपलक्ष्याः पानीयानि जलमध्वादीनि दीर्घत्वमार्षं छन्दोऽनुरोधात् सूयवसानि कोमलानि पुष्टिवर्द्धनानि सुखसम्पादकानि । यद्वा पानीयं सुवते स्रवन्ति पानीयसूनि मृदूनि यवसानि यद्वा सूसवः प्रसवः पुष्पफलादि इति कचित्पाठः भू उपवेशार्थसुन्दरस्थानमित्यर्थः । कन्दरा गुहाः तैश्च तत्रत्यरत्नपर्य्यङ्कपीठप्रदीपादर्शादयोप्युपलक्ष्याः कन्दमूलयोरेवाभ्यवहार्यः पूर्वं लिखित एव यथासम्भवं तैस्तेषां मानो ज्ञेयः तत्र पशूनां जलैः सूयवसैः सदा कन्दरैश्च कदाचित् कन्दमूलैरपि तेषां कांचिद्भक्ष्यैः गोपानां च सर्वदा सर्वैरेव तत्र ये मनोपवेशार्थं सुयवसानि ज्ञेयानि हे अबलाः! इति तत्र तत्र युष्माकं शक्त्यभावेन कथञ्चिदासमात्रमपि न घटेतेत्यदो यताभाग्यमस्माकमिति भावः अन्यत्सैर्व्याख्यातम् अथवा रमते सदा क्रीडतीति रमयति सुखयतीति वा रामो यः कृष्णः यद्वा, तथैव रामो यौ कृष्णचरणौ निजस्पर्शेन पादाब्जविन्यासपदेषु सद्यो नवनीतिकर्त्ताशाभिः सुकोमलेन तत्र चोष्णकाले सुशीतलेन शीतकाले चोष्णतेत्यादि बहुविधेन प्रकर्षेण मोदयतीति तथा सः । किञ्च, तयोः श्रमक्लमचर्वणादिना सुप्रसिद्धयोः गोगणयोः जातावेकत्वं गोश्च गणाश्च श्रीबलरामश्रीदामादिसहचरवर्गः तयोः सह तेन सहितयोः किम्वा एकैकैव यदा तं प्रति तदैव तौ प्रतिचेत्यर्थः । यद्वा, रामं जगन्मनोरमं यत् कृष्णस्य चरणम् आचरणं विहारस्तस्य स्पर्शेन स्पर्शनेन दानेन प्रमोदो यस्य सः 'विश्राणनं वितरणं स्पर्शनम्" इत्यमरः । सर्वथा सदा तत्क्रीडासम्पादनोत्सुक इत्यर्थः

यद्वा, तेन प्रमोदयति तमस्मात् वा जगदेव चेति तथा सः तत्क्रीडासम्पादनतस्तच्छ्रवणादिना सर्वदुःखहरणात्सेनाविस्तारणाच्च सर्वेषामेव सिद्धेः । यद्वा, रामयोः कृष्णचरणयोरिव स्पर्शप्रमोदो यस्य एतत्स्पर्शेन तत्स्पर्शनानन्दस्यैव सिद्धेः हरिदासवर्य्यत्वेन निरन्तराविच्छिन्नप्रेमविहारश्रेणीमिलत्तच्चरणस्पर्शमयतया इवाद्रिमन् सम्पत्तेरिति दिक् अलमतिविस्तरेण ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोष्ठचत्वरवासिनोपि तथैव रसान्तराच्छन्ना यत एवमाहुः द्वाभ्याम्—हन्तेति । अयमिति तदानीं श्रीगोवर्द्धनान्तिक एव तासां निवासेन साक्षादङ्गुल्या दर्शनात् जगतोऽशेषं पापं दुःखं चित्तं च यथायथं हरतीति हरिः तदधिष्ठाता देवः शास्त्रे लोके च प्रसिद्धः तत्स्वभावकेषु तस्य दासेषु मध्ये श्रेष्ठः तच्छ्रेष्ठत्वमेव फलाभिव्यक्तिद्वारा दर्शयति यद्रामेति प्रकृष्टो मोदो हर्षः रोमाञ्चस्वेदानन्दाश्र्वादिरूपतृणाद्युद्गमार्द्रता जलबिन्दुस्रावादिलक्षणः तनोतीति सर्वैरन्यैरपि क्रियमाणां मानमयं विस्तारेण करोतीत्यर्थः । पानीयानि पेयानि जलमध्वादीनि दीर्घत्वमार्षं छन्दोनुरोधात् सुयवसानि कोमलानि पुष्टिवर्द्धनानि सुखसम्पादकानि । यद्वा, पानीयं सुवते स्रवन्ति पानीयसुवो निर्झराः भू इति कचित् पाठः उपवेशार्थं सुन्दरस्थानमित्यर्थः । कन्दरा गुहाः तैश्च तत्रत्यरत्नपर्य्यङ्कपीठप्रदीपादर्शादयोप्युपलक्ष्याः यथासम्भवं च तैस्तेषां मानो ज्ञेयः हे अबलाः इति तत्र तत्र युष्माकं शक्त्यभावेन एतादृशसेवाभाग्यं न घटेत इत्यहो यताभाग्यमेवमिति भावः । अन्यत्तैः अत्र चाचयता मितिवदादित्यायामप्यर्थान्तरव्यक्तियैया रामो "नीलचारुसिते त्रिषु"इत्यमरकोशात् रामो रमणीयो यः कृष्णस्तस्य चरणयोः स्पर्शेन प्रमोदो यस्य सः तयोश्चरणयोः यद्वा तादृशकृष्णचरणयोः स्पर्शप्रमोदो यस्मात् ऋतुत्वनुरूपशैत्यादिगुणकत्वेन स्वाश्रितानां विधानात् । यद्वा, रामं क्रीडारूपं यच्छ्रीकृष्णस्य चरणम् आचरणं तस्य स्पर्शेन स्पर्शनेन दानेन प्रमोदो यस्य सः "विश्राणनं वितरणं स्पर्शनम्" इत्यमरः । सर्वदा सदा तत्क्रीडासम्पादनोत्सुक इत्यर्थः । यद्वा, तेन प्रमोदयति तमस्मात् जगचेति तथा सः यद्वा तादृशकृष्णचरणयोरिव स्पर्शप्रमोदो यस्य एतत्स्पर्शनेन तत्स्पर्शनानन्दस्यैव सिद्धेः निरन्तराविच्छिन्नप्रेमविहारश्रेणीमिलत्तच्चरणस्पर्शमयता इवाद्रिमन् सम्पत्तेः तत्र्येत वक्तव्यं तयोश्चरणयोरित्यादरेण ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हरिदासवर्यः भागवतश्रेष्ठः सूयवसं सम्यग्यवसम् ॥ १८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हन्तेति। हे अबलाः! अयमद्रिर्हरिदासश्रेष्ठः अहो अत्यरागामपि हरिदासस्याभिरुचिरिति विस्मयते हन्तेति, कुतः? यद्यस्माद्रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः उद्गतैस्तृणैः रोमहर्षमालक्ष्य तेन रामकृष्णचरणस्पर्शप्रमोद आलक्ष्यते किञ्च गोभिः सखिगणैः सहितयोस्तयोः रामकृष्णयोर्यः गोवर्द्धनाद्रिः पानीयादिभिर्यथोचितं मानं पूजामातिथ्यात्मकं करोति सुयवसानि शोभनानि तृणानि सुशब्दे दीर्घ आर्षः सूयवसेति पाठान्तरं तदापि स एवार्थः कन्दरेषु कन्दानि मूलानि च तैः ॥१८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हन्त आश्चर्यम् अयमद्रिर्गोवर्धनो हरिदासवर्यः भगवद्भक्तश्रेष्ठः कुतः? ययोः रामकृष्णयोश्चरणस्पर्शादाविर्भूतप्रमोदो योऽद्रिः सह गोगणयोस्तयोः पानीयादिभिः मानं पूजां तनोति यद्यस्मादिदमेव हि भक्तश्रेष्ठत्वं सुयवसं शोभनो ग्रासः दैर्घ्यं छान्दसं सुयवसाद्भगवतीहेति दर्शनात् कन्दरं गुहागृहं वृष्टौ स्थातुं योग्यं कन्दं सूरणं मूलम् अकण्डूयमानं दीर्घाकारं कन्दम् ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

हे सखि! कृष्णानुग्रहो विना महदनुग्रहं न स्यात् महान् गोवर्द्धनादन्योऽपि नास्ति तदस्माभिरयमेवाराध्य इत्याशयेनान्या ऊचुः—हन्तेत्यादि। हे अबलाः! हन्त हर्षे अयमद्रिर्गोवर्द्धनो हरिदासानां मध्ये वर्य्यः श्रेष्ठः कथमनुमितमित्याहुः यदिति यद्यस्मात् रामकृष्णचरणस्पर्शेन प्रमोदो यस्य तदेव कथमवगतं तत्राहुः मानं तनोति कयोः तयोः न केवलं तयोरेव सह गोगणयोः कैः पानीयं च सूयवसाश्च सुतृणानि च दीर्घ आर्षः कन्दराणि कन्दाश्च मूलानि च कन्दमूलयोरवान्तरभेदः कन्दाः कसेरुकादयः मूलानि तदितराणि भक्षणयोग्यानि अथवा तद्यादिमूलानि छायादानात् तैः अत एवंविधसेवापरो हि महान् भवतीति ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतद्वनगमने भवतीति अस्माकं तदभावादपूर्णत्वमिति कामस्तु वस्तुतो मनःपीडारूपः निर्गुणा आहुः—हन्तेति। कथं पुलिन्द्य एतादृश्यो जाताः इत्याशङ्कायां भगवद्भक्तसङ्गात्तथात्वं जातमिति गोवर्द्धनस्य भगवद्भक्तत्वमाहुः—हन्तेति। खेदे यद्यस्माभिरपि गोवर्द्धने स्थितं स्यात् तदास्माकमपि तथा भवेत् तदभावात् खेदः अयमद्रिर्गोवर्द्धनो हरिदासानां मध्ये वर्यः तत्र हेतुः यद्यस्मात्कारणात् रामकृष्णचरणारविन्दस्पर्शे प्रकृष्टमोदो यस्येति स एव भगवदीयेषु श्रेष्ठो यो भक्तिमार्गस्पर्शेनानन्दयुक्तो भवति। किञ्च, सात्त्विकोऽपि गुणातीतो वा अतो निर्धनः अथापि तयोर्मानं करोति सह गोगणयोः गावश्च गणा देवरूपाः बालकाश्च तयोः पानीयसूयवसकन्दरकन्दमूलैः चतुर्भिरातिथ्यं करोति पानीयसूयवसे गवां कन्दराणां कन्दमूलानि भक्षणाणि तृणानि भूमिरुदकमिति वाक्यात् तच्चतुष्टयसम्पत्तिरुक्ता तत्र कोमलदूर्वा गवां भक्षणार्थं अन्येषामास्तरणार्थं चोपयुज्यते भूमिः कन्दरैव प्रायेणेदानीं वर्षर्तौ लक्षणेन वाक्स्थाने कन्दमूलानि सर्वाण्येव वाचो गणनास्मोऽयो भक्तस्याधिकः अबला इति सम्बोधनं सर्वासामप्यस्माकं तत्र गमने सामर्थ्याभाव उक्तः कन्दा भर्जनसापेक्षाः मूलानि तु तथैव भक्ष्याणि एकरसाभावाय चोक्तम् अत्र व्यञ्जनभावार्थं तत्रापवादान्तरभेदा बहव इति बहुवचनम् अनेनायालास्वाकाङ्क्षोऽपि प्रदर्शितः या नवनीतादिभक्षणे विमनस्का जाताः अतो युक्तमेव अपूर्णत्वं पूर्वोक्ताः पुलिन्द्य इति पर्वतप्रेरणया कन्दमूलादिकं ताभिः समानीयत इति लक्ष्यते ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हन्त सख्यो महदाश्रयणं विना नैव मनोरथः फलानि महत्त्वं च हरिभक्तानामेव तेषामपि मध्ये श्रीगोवर्द्धनो गिरीन्द्र एव मुख्य इति गार्गिमुखात् श्रुतं तदद्य तत्रत्यमानसगङ्गायां स्नात्वा तदधिदैवतस्य श्रीहरिदेवनाम्नो नारायणस्य दर्शनार्थं याम इत्यत्र गुरुजनानामपि नैव विप्रतिपत्तिः कृष्णोऽपि तत्रैव खेलतीति युक्तिनिश्चितवत्यः स्मरमयं तमभिसिसीर्षवः श्रीगोवर्द्धनमेव सगणकृष्णवाञ्छितसाधकं स्ववाञ्छितसिद्ध्यर्थं स्तुवन्ति। हन्तेति, विस्मये हरिदासेषु नारदादिष्वपि मध्ये मुख्या ये त्रयो हरिदासा युधिष्ठिरोद्धवगोवर्द्धनास्तेष्वपि मध्ये अयमद्रिरेव हरिदासवर्य्यः "हरिदासस्य राजर्षे राजसूयं महोदयम्" इति युधिष्ठिरे "कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम्" इत्युद्धवे "हन्तायमद्रिरबला हरिदासवर्य्यः" इत्यस्मिन् पर्वतेऽपि हरिदासपदप्रयोगात् यस्माद्रामकृष्णयोश्चरणस्पर्शेन शिलाद्रवाद्यभिव्यञ्जितः प्रमोदो यस्य सः चरणस्पर्शे सति शिलानां पङ्कसाधर्म्यप्राप्त्या ध्वजवज्राङ्कुशादिमच्चरणचिह्नं निर्झरतृणोद्गमादयोऽश्रुपुलकादयोऽपि प्रमोदव्यञ्जका ज्ञेयाः अत्र रामपदप्रयोगो भावगोपनार्थः श्लेषेण रामो "नीलचारुसिते त्रिषु" इत्यमरकोशाद्रमणीयो यः कृष्णस्तस्य हे अबला इति पतिपारवश्यवतीनां युष्माकं तदाश्रयणमेव वरं युक्तमिति भावः। यत् यतः प्रमोदादेव हेतोः मानं तत्प्रसादनीं पूजां तनोति सह गोभिर्गणेन सखिसमूहेन च वर्तमानयोः तयोः कैः पानीयानि पाद्याचमनीयपानार्थं सुगन्धशीतलनिर्झरजलानि तथा नैवेद्यार्थं पानीयाः पेया मध्वाम्रपीयूषादिरसाश्च सूयवसानि अर्घ्यार्थं दूर्वा गवां ग्रासार्थं सुगन्धसुकोमलपुष्टिवर्द्धनतृणसम्पादकानि तृणानि च दीर्घत्वमार्षम् यद्वा। पानीयं सुवते इति पानीयसुवो निर्झराश्च कन्दरा उपवेशशय्याविलासाद्यर्थं शीतोष्णसमयसुखदा गुहाश्च भक्षणार्थं कन्दमूलानि च तत्रत्य रत्नपर्यङ्कपीठप्रदीपादर्शादयोऽप्युपलक्षितास्तैः ॥ १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अन्या आहुः—हे अबलाः! अयमद्रिः श्रीगोवर्द्धनाख्यः हरिदासवर्यः हरिदासेषु श्रेष्ठः स्वपरमप्रियदासश्रेष्ठं स्वप्रीतिं द्योतयितुमाहुः—हन्त इति। श्रीगोवर्द्धनस्य हरिदासवर्यत्वे हेतुमाहुः

गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः ।
अस्पन्दनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥१९॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत् यस्मात् रामकृष्णचरणस्पर्शेन प्रकृष्टो मोदो यस्य सः किं च यतः गोभिः गणेन सखिसमूहेन च सहितयोः रामकृष्णयोः पानीयादिभिर्मानं तनोति सूयवसैः शोभनैस्तृणैः सु इति देश्यमार्षम् ॥ १८ ॥

श्रीरामकृष्णकृतप्रेममञ्जरी ।

इदं देवपत्नीनां परिचारिकाभिमानिनीनां वाक्यं हन्तायमिति । इतोऽन्तहर्षे भट्टाखिकारूढा यूथेश्वरीभिरुद्दिश्योक्तम् अद्रिरिति नदं ब्रूयत इति युवत्याश्रमार्दवविक्लवैः अभिभूयमाना व्यसनैरिति ईदृशं सेवाभाग्यमस्माकं स्यादिति अबलात्वाद्बहिर्गन्तुमशक्ताः कथंवाद्रिवरपरिचरितुं शक्नुमः अयं परमोपकारी सख्यादिभिरानीतैर्वन्यफलादिभिः भोजनमण्डलीं कल्पयन् हरिदासवर्यत्वेन पानीयादिभिः पूजां तनोति तथाहि परमरमणीयशिलाभिः समासनं लतावल्लीकलितकालीभिः स्वागतं स्वागतं श्यामाकदूर्वाब्जविष्णुक्रान्तापर्यङ्गाक्रान्ततिष्यंक्लिर्झरीनिष्पाद्यं पाद्यम् एवमर्घ्यं जातीलवङ्गकङ्कोलसङ्गतपल्लवैराचमनीयम् शेखरशिलासरित्प्रस्रवधारापातैरम्बुकृतस्नपनं दुकूलवदनुकूलवर्णवर्णवृक्षविशेषवल्कलैः कलितसुवसनं सुगन्धिहरिचन्दनादिभिस्तिलकं प्रफुल्लमालतीलताभिर्नन्दितसुमनसः गव्यासुरव्याहतिजातागरुदारुधूमैर्धूपं विनापि विद्योतितमणिनिकरज्योतिभिः सर्वसम्पदुद्दीपं दीपं मञ्जुलगुञ्जापिच्छादिगुच्छनिर्माणैः कृतसुषमाभरणाभरणम् अभिलाषानुकूलफलमूलैः सुखमाहारं पुष्पवासितशीतलजलैः पुनराचमनं परिमलातुलतुलसिकादिभिर्मुखवासनं मरुदुच्चलस्फुरत्पुष्पसम्पत्सम्पर्कदीपावल्या स्फुटमारात्रिकं यत्किसलयवलयसङ्कुलबकुलमुखशाखानिकरैः शोभान्तरितमातपत्रं मलयमरुल्लघचलत्पल्लवविशालशाखैः व्यजनम् निजस्वरधिक्किनां केकिनामनेकाङ्कुशकेकाभिः कलितवाद्यं शय्यायमानपुष्पपातपर्यायैः कृतसर्वोत्तिशयनं शयनं काकलीकलितकलकोकिलकुलैः स्वपसङ्गानं गानमपीत्यादिकमूह्यम् हरिदासवर्यतां पर्यापयन्नास्त इति पानीयानि पेयानि जलमध्वादीनि । यद्वा, पानीयं सुवन्ते क्षरन्तीति पानीयसुवो निर्झराः कन्दरानिभृतगृहाः कन्दामालिन्याद्याः मूलानि च नानाप्रकारविरचनं भक्त्यनुभावः तदहं भरशुपहृतमिति यथालाभोपहरणमप्युक्तमिति ॥ १८ ॥

श्रीमत्कृष्णदासकृतश्रीगणदीपिका ।

सूर्यकान्तिका सखी चन्द्रकान्तिकां प्रत्याह—हन्तेति । अथवा इति बहुत्वगौरवादिति गावः । हन्तेति हर्षे ईदृशं सेवाभाग्यमस्माकं स्यादिति अनुकम्पाया अयं परमोपकारीत्याधिक्या द्युतिजालस्वारोहयित्वा श्रीकृष्णभोजनमण्डली कल्पयत् हे अबला ! गृहादविचला दूरास्थिता अस्मान् युष्मान् वा प्रदर्शयति अत एवोत्ततरो न तु गर्वविशेषेण विद्यावत् रामे रमणसमर्थेऽपि कृष्णस्येति व्याख्या तयोरिति द्विवचनेन पूर्णाः पुलिन्द्यश्च पूर्वोक्ता दयितास्तनमण्डितेन इत्यतो दयिता च परामृश्यते ॥ १८ ॥

भाषा टीका ।

कोई सखी बोली, कि—अरी अबला हो ! बड़ी हर्ष की बात है देखो ये गोवर्द्धन पर्वत हरि दासन में बड़ोई श्रेष्ठ है क्योंकि ? श्रीरामकृष्ण के चरणन के स्पर्श होयवेतें या कूं बड़ो आनन्द होय है ताईसों ये गिरिराज गऊ और ग्वालबाल सहित रामकृष्ण को सत्कार करे हैं काहेसों, कि—निर्मल मधुर जल और हरी घास और फल फूल कन्द मूलन सों सत्कार करे हैं और वर्षाबूंदी की विरियां सुन्दर गुफान सों सत्कार करे हैं ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे सख्यः ! इदं त्वतिचित्रम्, गोपैः सह वने वने गाः सञ्चारयतोस्तयोः रामकृष्णयोर्मधुरपदैर्महावेणुनादैः शरीरिषु ये गतिमन्तस्तेषामस्पन्दनं स्थावरधर्मस्तरूणां पुलको जङ्गमधर्म इति निर्युज्यन्ते गाव आभिरिति निर्योगाः पादबन्धनरज्जवोऽधृष्यगवां कर्षणार्थाः पाशाश्च तैः कृतं लक्षणं चिह्नं ययोः शिरसि निर्योगवेष्टनेन स्कन्धस्य पाशेन च गोपपरिवृढभिया विराजमानयोरित्यर्थः ॥ १९ ॥ २० ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

किं वक्तव्यो हरिदासवर्यत्वेन यथा नास्तोऽस्याद्रियते महिमा यतो श्रीव्रजभूमौ श्रीवृन्दावने स्थिताः सर्वे स्थावरा जङ्गमा चराः परमधन्या इत्याहुः—गा इति । गोपैकरिति स्नेहविवक्षया क प्रत्ययः यद्वा गोपयन्ति रक्षन्तीति गोपकाः गोपालाः यद्वा गोपानां कं सुखं येभ्यः तैर्वेणुस्वनैः अनुवनं प्रतिवनमिति श्रीमाथुराणां सर्वाण्येव वनानि गृहीतानि उदारैः महद्भिरुच्चैः सर्वानन्दप्रदैर्वा कलानि मधुरस्वराणि पदानि गीताङ्गानि येषु यद्वा, मधुरास्फुटध्वनियुक्तैः पदैश्च पादाब्जैः तेषां स्वनूपुरत्वात् कलयुक्तत्वम् अस्पन्दनं स्तब्धतेति स्थावरधर्मः तरूणामित्युपलक्षणं सर्वेषामपि स्थावराणां पुलक इति चोपलक्षणं कम्पादि च ज्ञेयं तेन जङ्गमधर्मः इति वैपरीत्यम् अतो विचित्रमद्भुतम् यद्वा, अस्पन्दनस्य विशेषणं जगद्विलक्षणमित्यर्थः तत्रश्च विलक्षणत्वेन पुलकस्यापि विशेषणमूह्यम् एवं सर्वेऽपि

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

प्रेमविशेषोदयः सूचितः निर्योगित्यनेन च तदद्भुतरम्यवेषदर्शनमप्येको हेतुरस्पन्दनादावूह्यः वृक्षादीनामपि सूक्ष्मा दृष्टिरस्तीति "तस्मात् पश्यन्ति पादपाः" इत्यादि महाभारततो ज्ञेयं यद्वा, न केवलमस्पन्दनादिकमेव अन्यश्च विविधप्रकारो भवतीति व्यक्तमेवाहुः निःशेषेण योगः सङ्गमो यस्मात् किंवा निर्गतो योगः प्रेमसम्पद्भिरोधो निर्विकल्पकसमाधिर्यस्मात् स चासौ पाशश्च प्रेमलक्षणाः साक्षात्तदनुक्तिदुःखविशेषात् तस्य कृतलक्षणं मोहादिना निपातादिकं रोदनादिकं च याभ्यां तनुभृत्स्वित्यस्यात्रैव चान्वयः । एवं चराचराणां वैपरीत्येनैक्येन च विविधप्रेमलक्षणानि भवन्तीत्यर्थः । यद्वा, चराचराणां तेषामेव निर्योगपाशेन तादृशप्रेमोदयेन कृतं ज्ञापितं लक्षणं स्थिरतिगमनादिचिह्नं ययोस्तेषामस्पन्दनादि दर्शनेन ज्ञायेत अत्र तौ तिष्ठतः अनेन यथा वा गतौ स्त इत्यादिकमित्यर्थः । द्वयोरपि निर्देशः पूर्वोक्ताभिप्रायः एव हन्त चराचराणामेषां भाग्यं यन्निर्योगपाशादिमधुरवेषं तं पश्यन्त्यमी मादृशीनां तु तद्दर्शनमात्रमपि सुदुर्लभमहो दौर्भाग्यमिति भावः ॥ १९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो किं वक्तव्यो हरिदासवर्यत्वेन यथार्थनाम्नोऽस्याद्रिपतेर्महिमा किन्तु सर्वेऽप्यत्रत्याश्चराचराः परमधन्या इत्याहुः—गा इति । अनेन तासां गवामसङ्ख्येयत्वात् दूरगामित्वेन विस्तीर्णदेशगजीवगणासुखदातृत्वं विवक्षितम् अनुवनमिति तत्रापि वनान्तरभेदेन ततः स्वेषामेव तद्दर्शनेन सर्वतः पुण्यहीनत्वं गोपकैरिति दयायां कन् तत्परिवारत्वेन स्नेहविषयत्वात् अतो गोपायन्ति दुःखभयस्थानात् श्रीकृष्णं रक्षन्तीति श्लेषश्च अस्माकं तु न तादृशप्रेमसेवायोग्यतेति भावः । नयतोरिति तत्र तत्र गमने तयोः स्वाच्छन्द्यं घटते हा कथं न स्वकमत् सन्निधाविव्येतत् उदारेति तत्र तत्रत्येषु तु तस्य परमानन्ददातृत्वं वेणिवति तदीयस्वनेष्वपि वैशिष्ट्यं कलपदैरिति "ध्वनौ तु मधुरास्फुटे कले" इत्यभिधानात् माधुर्येणैव तावन्मनोहरत्वं तत्र चास्फुटत्वात् केयं सङ्केतोक्तिरिति नानाभावाक्रान्त्या तद्तिशायित्वम् यद्वा, नूपुरकलशब्दयुक्तैः पदैः पादक्षेपैः इति तद्विलासस्मरणं बहुत्वं गौरवेण तनुभृत्स्विति एष कस्तनुभृद्वत् तद्दर्शनेन पतेदित्येतत् सख्य इति इदं भवत्योपि जानन्तीत्येतत् अस्पन्दनं किञ्चित् चलनस्याप्यभावः गतिमतां प्रशस्तवच्छक्तियुक्तानामपि निस्तलस्वभावानां नद्यादीनामपि वा अतः किमुतास्माकं दूरगमनमित्येतत् पुलकस्तरूणामिति अरोमकाणामप्यङ्कुरोद्भेदमिषेण रोमरोमाञ्चौ युगपदेव जायेत इत्येतत् अतः कम्पोपलक्षितत्वेन स्थावरजङ्गमयोर्द्वयोर्द्वमवैपरीत्यमपि निर्योगेति सर्वासामेव गवां सुशीलत्वेन पाशान्तरानुपयोगात् निर्योगाख्यः पाशो निर्योगपाशः स च चपलस्वभावानां वत्सानां दोहनसमये गोवामजङ्घसङ्गता गलबन्धनरज्जुः तेन कृतलक्षणो "गुणैः प्रतीते तु कृतलक्षणा हतलक्षणौ" इत्यमरकोषात् परमसौन्दर्यगुणेन प्रतीतौ ततश्चानेन मुक्तास्तवका गुम्फाग्रद्वयपट्टमयत्वं मस्य ध्वनितं सोऽयं चोष्णीषाद्युपरि शोभां दधानो गोपवेषः सर्वेषां मनो हर्तापि तासां श्रीगोपसुन्दरीणां तु विशेषतो ज्ञेयः । स्वदेशजातित्यस्सदृशं वेषादिकं हि सर्वेष्वतीव रोचकं स्यादिति विचित्रमिति तत्रतत्र स्वेषां विस्मयमोहः इदं यथायोग्यं बहुत्र योजनीयम् अथ पूर्ववत्केवलकृष्णोर्काविषयभावव्यञ्जकश्चायमर्थः । अहो सख्यः ! स्फुटं गोचारणमिषेण सगणः सभ्रातृकोऽसौ वनं भ्रमन् कितव इव लक्ष्यते इत्याहुः—गा इति । निर्योगपाशाभ्यां कृत मिद्धं लक्षणं कितवोचितपदबन्धनचिह्नं ययोस्तथाभूतयोः गोपकैस्तदधिपस्य स्तेयवस्तूनां च रक्षकैः पृष्ठपालकैः सहानयोर्गां वनाद्वनं नयतोर्मध्ये य उदारः सर्ववरीयान् तस्य वेणुस्वनैर्जङ्गमानामस्पन्दनमभूत् स्थावराणां च पुलकोभूत् कीदृशैः मोहनमन्त्रवन्मनोहराव्यक्तपदैः अतो महावैयाणिक एवात्र कितवमुख्यः अन्ये तु तदनुयायिन एव तस्मादस्माभिरिव तस्य तु मोहनविद्यात्मको वेणुर्भवतीभिर्न श्रोतव्यः । अन्यथा ताभ्यां निर्योगपाशाभ्यामेव नूनं भवन्मनो बद्धं भविष्यतीति भावः एवं सर्वथा स्वमोहदुःखमेव विवक्षितमिति स्थितम् ॥ १९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गतिमतामस्पन्दनं जङ्गमानां स्थावरधर्मभजनं तरूणा पुलकः स्थावराणां जङ्गमधर्मभजनञ्च विपरीतत्वं विचित्रम् ॥ १९–२० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे गोप्यः ! इदमन्यदतिचित्रमिति काश्चिदाहुः—गा इति । हे सख्यः ! गोपैस्सह प्रतिवनं गाः चारयन्तौ निर्योगो नियुज्यन्ते गाव एभिरिति निर्योगाः दोहनवेलायां गवां पादबन्धनार्थं रज्जवः पाशास्तु दुष्टगवाकर्षणार्थाः तैः कृतं चिह्नं लक्षणं ययोः शिरसि निर्योग वेष्टनस्कन्धयोः पाशधरणेन च गोपश्रिया विराजमानयोरित्यर्थः । एवम्भूतयोस्तयोः रामकृष्णयोः कलान्यव्यक्तमधुराणि पदानि शब्दाः येषु तैरुदारवेणुस्वनैर्महावेणुरवैर्देहिभिः देहिनां मध्ये चराणामस्पन्दनम् ईषदप्यचलनं तरूणां स्थावराणां तु पुलको रोमाञ्चश्चेति चित्रं जङ्गमानां स्थावरधर्मः स्थावराणां जङ्गमधर्मश्चेत्येतदतिचित्रमित्यर्थः ॥ १९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपकैः सहानुवनं गाः नयतोः सञ्चारयतोः तनुभृत्सु शरीरिषु जन्तुषु सख्यं विचित्रमिदं चित्रमपि चित्रं किं तदिति कलपदैरुदारवेणुस्वनैः विवशानां गतिमतां जङ्गमानाम् अस्पन्दनं स्थावरधर्मभजनं तरूणां स्थावराणां पुलकं जङ्गमधर्मं रोमाञ्चभजनं विचित्रं पश्यतेति शेषः कथमेतद्युज्यत इति तत्राह निर्योगेति नितरां योगपाशेन योगशक्तिलक्षणपाशेन कृतं लक्षणम् अस्पन्दनस्पन्दमानात्वं ययोस्तौ तयोः यद्वा निर्योगपाशः वेषपाशादयः तेन कृतं योगचिह्नं ययोः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उपसंहारेपि वत्सला एवोचुः—गागोपकैरित्यादि । महद् विचित्रमिदं यः तनुभृत्सु मध्ये गतिमताम् अस्पन्दनं स्थावराणां तरूणां पुलकः कैः उदारवेणुस्वनैः कयोः रामकृष्णयोरित्यर्थः । कीदृशयोः अनुवनं वृन्दावनादिवनम् अनुगोपकैर्गोपबालकैः अनुकम्पायां कः गायतोः कीदृशैः कलपदैः कीदृशयोः नियोगपाशो गोच्छन्दनरज्जुस्तेन कृतं लक्षणं शोभाचिह्नं याभ्यां ययोः यो हर्षः ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नयतोः सतोः उदारेति विशेषणात् श्रीकृष्णस्यैव वेणुर्बोध्यते सर्वतोपि गुणगहत्वात्तस्य तन्मयतां क्रीडामयताम् ॥ १९ ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, तथापि वयं सजातीयाः योग्याः ता विहाय तस्मिन् तासु च कथं कृपेत्याशङ्क्याहुः—गागोपकैरिति । विपरीतं हि भगवच्चरित्रं साक्षाद्भगवान् न किञ्चित्करोति किन्तु माचिगात्रेणैव गतिमतामस्पन्दनं भवति तरूणाञ्च पुलकः तथाऽस्माकं योग्यानामयोग्यत्वम् अयोग्यानां पुलिन्दीनां तथात्वमिति विपरीतसम्पादने हेतुत्रयमाह, गोपकैः सहगाः अनुवनं नयतोः सतोरित्येकः वेणुस्वनैरित्यपरः कलानि पदानि यत्रेति विशेषणेन चापरः पदैश्चरणैर्वा गावो वने नीयन्ते सर्वेषामेव वनानां शुद्धिः सम्पाद्यते, अतो वनानि निर्दुष्टानि भवन्ति गवां गोपानाञ्च परमस्वर्गो भवति एतदीया शुद्धिर्धर्मश्च तत्र गच्छतः तत उदारो यो वेणुस्वनः वेणुर्वा उदारः ततो वेणुभुक्तशेषं ते भुञ्जते अतस्तेषां पुलक उचित एव ये पुनर्गतिमन्तः ते दोहार्थे भगवति समागते मनः पूर्वकं स्वामृतदानार्थं तत्र विघ्नाभावार्थं च सर्व एव तूष्णीम् भवन्ति शब्दशङ्कया चलन्त्यपि न अत एव भगवतः अव्यक्तमधुराणि पदानि भवन्ति शनैर्गमनात् दोहकालोऽयं सख्य इति सम्बोधनं तत्र गतानां दर्शनेन सम्मत्यर्थम् अतस्तनुभृत्सु स्थावरजङ्गमेषु चित्रं भवति तामवस्थां ज्ञापयन्ति—नियोगपाशकृतलक्षणयोरिति । नितरां योगो याभ्यां येन गोवत्सयोः तौ पाशौ नियोगपाशौ सपाशौ नियोगपाशौ निदाने ताभ्यां कृतं लक्षणं ययोः हस्ते तदुभयमदर्शन पादयोर्योजनं वा अतो भीताः सर्व एव जङ्गमाः अस्मानपि बध्नीत इति स्थावराणां तु भयाभावात् एव मधुधारा अथवाऽत्र विषयिनिर्धीणां गुप्ततया निरूपयन्ति गोपकैर्गवां वने निवेशनेन प्रियस्य स्थानङ्गाभावः सूचितस्ततः स्वच्छन्दरमणार्थं तादृग्भक्तागमनार्थं वेणुस्वनाः दूरस्थागमनार्थमादौ तारस्ततो निर्गतानां प्रियस्थितिस्थानज्ञापको मध्यमस्ततो निकटे समागतस्तदर्थं मन्द्रस्तत्सङ्केतानां नामग्रहणेनापि स्वनानां बहुत्वम् अन्याज्ञापनादव्यक्तानि स्वनामत्वेन ज्ञापनान्मधुराणि अतः कलानि नामरूपाणि पदानि यत्र तादृशैः स्वनैर्गतिमतामस्पन्दनं तरूणां च पुलक एतच्चित्रम् एतदागमनं हि दिवसे तत्र सर्वमगत्वमशक्यं भवति, वेणुस्वनैः सर्वेषां तथात्वे निष्प्रयूहतद्ध्वनि उक्तवेणुस्वनैस्तनुभृत्सु कम्पकेषु सम्भूतस्वनैरस्पन्दनादीनि चित्राणि मधुरान्वेणुस्वनैः कलपदैरिति पदयोगावृत्याणि पक्षसमाप्तिर्ज्ञेयः प्रियसङ्गमाभावदशायां तदनुसन्धानाभावात्तैव तदनुसन्धानात्तथात्वं स्वगोष्ठ्यां सर्वां एतादृश्य एवेत्युक्तार्थं सस्मरणं सख्य इति सम्बोधनम् उदारो हि पात्रापात्रविवेकराहित्येन ददात्यल्पायाऽपि बहुत्वातः स्थावरेभ्योऽपि दानेन तत्तुमामर्थ्यांतेषां तरवं युक्तमतस्तरूणां स्मोपयोगिपुष्पमधुधारावत्वं गवां वने निवेशनोक्त्यादि वा सम्यग्ध्येयतच्चरित्रमुक्तं तत आगमनानन्तरसन्ध्यासम्बन्धिनां प्ररूपयन्ति, निर्योगत्यादिना । लक्षणपदेन गोदोहनानुरूपस्तत्सामयिकः सर्वोऽपि वेष उच्यते एतादृशयोस्तयोः मनोरथाद्दर्शनेनैवोक्तकार्यद्वयं पूर्वस्मादपि विशिष्टं चित्रम् औदार्येण उक्तरीत्या वेणुनादेनापि तेषां तथात्वं यद्यपि चित्रं तथापि परनिष्ठरसमादातुमुद्यतयोस्तेषां तथात्वं ततोपि विशिष्टं स्वाभाविकस्यापि ज्ञानस्य तिरोधानसम्भवात् अत एवोपमेयः उक्तः वेणुत्वेन ब्रह्मानन्दतुच्छकरणात्तनूरहितेभ्यो मुक्तेभ्योऽपि तद्ददातीति ज्ञायते परं तु तेषां तनुराहित्यान्नोक्तकार्यसम्भवः वेणुपदं तनुभृत्पदसमभिव्याहारादवगम्यते गोनिष्ठं गोरसं रसमादातुमुद्यतं प्रभुं दृष्ट्वा ताभ्यः स्वप्रयत्नपूर्वकं गृह्णाति वयं तु प्रभुप्रयत्नं विनैव स्वयमेव स्वनिष्ठं रसं समर्पयिष्याम इति तथा कुर्वन्ति, आदौ तरूणां रूपज्ञानं चित्रं निरीक्ष्य रूपं यद्द्विजद्रुममृगा इति वाक्यात्तेषां रूपज्ञानं सन्तव्यं तच्च दोहनसमये रूपमहिम्नैव एतेन स्वरूपसम्बन्धि सर्वं प्रमेयमर्यादानाशकं स्वरूपानन्ददायकं चेति सर्वं चित्रमिति ज्ञाप्यते तत्रापि रसवक्त्रोरसजिघृक्षाज्ञानमतिचित्रम् एवं सति प्रभोरसवदपेक्षाज्ञानेन स्वस्यापि तथात्वेन स्वोपयोगज्ञानेनापि प्रमुदिताः स्वानिष्ठं प्रकटीकुर्वन्तीति ज्ञायते, अतः पूर्णरसस्याधिक्ये स्थानाभावेन प्रतिरोमकूपं बहिर्निस्सारणे रोम्णामपि तथात्वं बहिः पुलकः सोत्र प्रत्यवयवं मधुधाराः पुष्पफलानि चेति ज्ञेयम् अथवा गागोपकैरनुवनं नयतोर्वेणुस्वनैर्नियोगपाशकृतलक्षणयोः कलपदैरुक्तकार्यद्वयं चित्रमिति प्रत्येकं सम्बन्धः दोहनार्थमतिशनैश्चलनेन नूपुराशिञ्जितमव्यक्तं मधुरं च भवतीति तद्वत्त्वं पदानां कलत्वं परितो गोविन्दवेष्टनेन पदाम्बुजानां कादाचित्कं दर्शनमिति वा तेषामव्यक्तता लक्षणपदेनोक्तपाशाभ्यां गोपादयोर्योजनेन तासां न गतिराहित्यं किन्तु कलपदैरेव तत्र गोदोहनचिह्नत्वेनैव कृतमिति ज्ञाप्यते पुलकपदमावृत्त्या पूर्वापरसम्बन्धीति ज्ञेयम् अतः सर्वरसभोक्ता भगवान्वृन्दावने विजयत इति निरूपितम् ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च तत्राभिसरणे विलम्बो न कार्यः तस्यानुगतीनां वनान्तरगमनसम्भवादित्याहुः—गा इति । गोपकैरित्यनुकम्पायां कन् अतो गोपायन्ति कृष्णं स्नेहात् पालयन्तीति श्लेषश्च प्रतिप्रातरेव श्रीयशोदया तथैव तन्नियोगात् वनेवने गास्तयोर्नयतोः सतोरिदं विचित्रं भवतीत्यन्वयः । किं तत् हे सख्यः ! तनुभृत्सु शरीरिषु

एवम्विधा भगवतो या वृन्दावनचारिणः ।
वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे वेणुगीतं नाम
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मध्ये गतिमन्तस्तेषां वेणुस्वनैरस्पन्दनं स्थावरधर्मः तरूणां पुलको जङ्गमधर्म इति निर्योगाख्यः पाशो निर्योगपाशः सच चपलानां वत्सानां दोहनसमये गोवामजङ्घासङ्गतागलबन्धनरज्जुः तेन कृतलक्षणयोः सौन्दर्यविशेषलाभेन ख्यातयोः "गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ" इत्यमरः । ततश्चायं मुक्तास्तवकगुच्छाग्रद्वयः पीतपट्टमयः उष्णीषबन्धभूषणविशेष इव गोपालकस्य व्यञ्जको द्रष्टॄणां मनोमोहन एव ज्ञेयः ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काश्चिदिदं चित्रं शृणुतेत्याहुः—गा इति । हे सख्यः ! गोपकैर्गोपैः सह गाः अनुवनं प्रतिवनं नयतोः निर्युज्यन्ते दोहनवेलायां गावः आभिरिति निर्योगाः पादबन्धनार्थाः ताभिः शिरस्यवेष्टिताभिः पाशास्तद्धृत्य गवां कर्षणार्थास्तैश्च स्कन्धस्थैः कृतं लक्षणं गोपालचिह्नं ययोः फलानि मधुराणि पदानि येषां तैरुदारैर्वेणुस्वनैः शरीरिषु मध्ये गतिमतां जङ्गमानामस्पन्दनं स्थावरधर्मस्तरूणां स्थावराणां पुलको जङ्गमधर्मश्चेति विचित्रमित्यर्थः ॥ १९ ॥

---

श्रीरामकृष्णकृतप्रेममञ्जरी ।

गागोपकैरिति । अथातीतप्रायेऽह्नि विरहवाहितापितहृदयाः सख्यो दूरत एवावलोकयाट्टालकादौ स्थिताश्चानुवनं विचरतो रागमनुविलम्बमसहमानाः परस्परमेवाहुः—हे सख्यः ! गोपकैः प्रयोज्यकर्तृभिर्गाः अनुवनं नयतोः सेयं तेषां वञ्चनासङ्केतसूचनायैव उदारैर्विधुरजनसमुत्कण्ठासन्धानधुरन्धरैः कलैर्मधुरास्फुटैः तत्र मधुरत्वेन सर्वमोहनता अस्फुटत्वेन च सङ्केतसूचना तथा निजप्रियतमाभिधानसमुदायैः कृत्वा तनुभृत्सु गतिमतां मृगपक्षिनद्यादीनाम् अस्पन्दनं जडीभावः स्थावराणां पुलकः अङ्कुराद्युद्गम इति विचित्रं परमाश्चर्यपदमिति भावः । निर्योगाद्युष्टग्वादिबन्धनरज्जुः तेन कृतं लक्षणं विभ्राजकचिह्नं याभ्यां तयोः यद्वा, नितरां योगसंयोगस्तत्सूचकः पाशः सङ्केतबन्धडोरकं तेन इति ॥ १९ ॥

---

श्रीकृष्णदासकृतश्रीगयादीपिका ।

चन्द्रतिलका सखी विचित्रचरितं प्राह—गा इति ॥१९॥२०॥

भाषा टीका ।

हे सखियों ! वन २ में गाय और ग्वालन सहित विचरे हैं और जा विरियां अव्यक्त मधुर पदवारे बांसुरी के शब्द निकसे हैं, तब उन शब्दन सों जंगम जीवन की अर्थात् चल के फिरबे वारे जीवन की गति रुकिजाय है और निश्चल होय के वेणु गीत कूं सुनवे कों लगजाय हैं और स्थावर जीव जो लता वृक्षादिक हैं ते पुलकित होय जाय हैं. और जा समय दोऊ भैया दोहवे समय की गऊन के पांव बांधि वे की रस्सी अपने माथे पै लपेट लेंवे हैं और गऊन के बांधिवे की रस्सी को कन्धा पै धर लेंवे हैं तब वो ग्वारियापने की शोभा बडी विचित्र होयजाय है ॥ १९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ईदृशान्यन्यान्यपि तच्चेष्टितानि बहुलानि वर्णयामासुः तानि च कात्स्न्येन वक्तुं शक्यानीत्युपसंहरति—एवमिति । ईदृश्यो जगन्मोहिन्यो याः क्रीडाः एवंविधत्वे हेतुः भगवतो निजाशेषैश्वर्यं विशेषेण प्रकटयत इत्यर्थः । तत्रापि वृन्दावनचारिणः स्वच्छन्दविहारिण इत्यर्थः । यद्वा, वृन्दावनचारिण इति तत्रत्यक्रीडा एवावर्णयन् नतु व्रजान्तश्चारिण इति तत्र भगवद्दर्शनादिना निजसौभाग्यस्यापत्तेः पाठान्तरेऽपि स एवार्थः विहारिण इति पाठः ताः सर्वा एव क्रीडा वर्णयन्त्यः सत्यः तन्मयतां भगवन्मयतां सदा तत्कीर्तनश्रवणादि परतामित्यर्थः यद्वा, सन्ततमेव तद्गुणगानानन्दमिति । यद्वा, क्रीडामयतां सदैव तेन सहाक्रीडामित्यर्थः यद्वा तच्छन्देन प्रेमाभिदाहः दुःखविशेषोत्पत्तेः साक्षात्तत्तामाप्रदर्शं पूर्ववत् सदैव प्रेमभरोदयेन परमार्त्तां बभूवुरित्यर्थः । गोप्य इति तासां स एव स्वभावः इति सर्वथैव तासां प्रेमसम्पद्वृद्ध्या सर्वातिशायि सौभाग्यं वर्णितमिति ॥ २० ॥

इतिश्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमत्सनातनगोस्वामिकृत बृहत्तोषिण्याम्
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं बहुलीला वर्णयामासिरे कति वा मया वर्णनीया इत्युपसंहरति—ईदृश्यो जगन्मोहिन्यो याः क्रीडाः एवंविधत्वे हेतुः भगवतः निजाशेषमाधुर्यं प्रकटयतः तत्र वृन्दावनचारिण इति ताच्छील्येन तस्य नित्यतादृशलीलत्वं तासां च नित्यतादृशभावत्वं व्यञ्जितं व्यक्तं वृन्दावनविहारिण इति पाठे तु तद्योग्यत्वं तस्य ताः सर्वा एव क्रीडाः वर्णयन्त्यस्तत्त्वतः तन्मयतां क्रीडामयतां तदाविष्टतां ययुः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिण्याम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवत व्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्रीडावर्णनमुपसंहरति—एवमिति । वृन्दावनचारिणो भगवत इत्थम्भूता अन्याश्च याः क्रीडास्ताश्च मिथो वर्णयन्त्यो गोप्यस्तन्मयतां कृष्णप्रचुरतां कृष्णविषयबुद्धिप्राचुर्यं ययुरित्यर्थः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृन्दावनचारिणो हरेरेवंविधाः याः क्रीडास्तास्ताः मिथो वर्णयन्त्यो गोप्यः तन्मयतां तत्स्वामितां ययुरित्यन्वयः ॥ २० ॥

इतिश्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकविंशोऽध्यायः ॥ २१ ॥
( विजयध्वजरीत्या एकोनविंशोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकविंशोऽध्यायः ॥ २१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपसंहरति–एवंविधा इति । प्रथमेकः प्रकार उक्तः एवंविधाः कोटिशः सन्ति लीलाः तत्र हेतुः भगवता इति गुणानां भगवतश्च मिश्रणे कोटिशः प्रस्तारा भवन्ति । किञ्च, मर्यादायां परिमिता अपि भवन्ति वा: पुनर्वृन्दावनचारिणः स्वेच्छागतिमतो भगवतः ता मर्यादाभावादसङ्ख्याता एव अतः एवं वर्णयन्त्यो गोप्यः तन्मयतां ययुः, क्रीडामय्य एव जाताः आग्रहजन्मेषु क्रीडामेव पश्यन्ति आसक्तिश्रमन्यायेन ययुरिति न पुनस्तेषां संसारे समागमनम् एवं सप्तभिर्मध्यमो निरोधो निरूपितः पञ्चपर्वाविद्यानिवृत्तिपूर्वकम् अन्तमर्गवत्प्राप्तिरूपः ॥ २० ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
अष्टादशाऽध्याय विवरणम् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उपसंहरति—एवमिति । वृन्दावनचारिणो भगवत एवंविधा अन्या अपि याः क्रीडाः वर्णयन्त्यो बभूवुस्तन्मयतां तत्प्रचुरतां क्रीडाप्राचुर्यं ययुः प्रापुः स्वकान्तमभिसृत्य तत्तत्क्रीडावत्यो बभूवुरित्यर्थः । यद्वा, अथन्ते अभिसरन्तीत्यथः गोप्यः एवम्विधाः भगवतः क्रीडाः भगवत्कर्तृकाः भगवत्कर्मकाश्च मिथो रहसि ययुः प्रापुः क्रीडन्त्यः क्रीडन्त्यश्च बभूवुरित्यर्थः । ततः परं तन्मयतां क्रीडाः तादात्म्यमानन्दमोहं च प्रापुः व्याख्येयमवश्योपादेया अग्रिमग्रन्थे यद्दाम्बुजाक्षेत्यत्र स्वयाभिरमिता इत्युक्तेः ॥ २० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकविंशोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंविधाः वेणुगीतादिक्रीडाः वर्णयन्त्यस्तन्मयतां तत्प्रचुरतां तत्तादात्म्यं श्रीकृष्णसाधर्म्यं ययुरित्यर्थः ॥ २० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकविंशाऽध्यायार्थ प्रकाशः ॥ २१ ॥

---

श्रीरामकृष्णकृतप्रेममञ्जरी ।

एवंविधा भगवत इति एवं विधा इति दिङ्मात्रं दर्शितं भगवतः श्रीमतः अत एव तस्य नित्यनिवासे वृन्दावने विचरितुं शीलं यस्य तस्य क्रीडाः बाह्या आभ्यन्तराश्च यास्स्वतन्त्रचेष्टामिथः स्वसगोष्ठ्यां वर्णयन्त्यः गोप्यः तन्मयतां ययुः स्वरूपे मयट् यद्वा तदादीनां बुद्धिस्थे शक्तेस्तन्मयतां भगवन्मयतामित्यर्थः । तदेवं नित्यसिद्धानां तत्रापि प्रौढानां पूर्वानुरागो वर्णितः साधनसिद्धानां प्राग्मयीयभावनासयुक्तानां कन्यानां दुर्गाव्रतापदेशेनास्कादितः सोयं प्रतिपादितः तदेवमत्र नयनप्रीतिप्रभृतयः स्मर-

श्रीरामकृष्णकृतप्रेममञ्जरी ।

दशाः प्राचीनैर्दर्शिताः नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः उन्मादो मूर्च्छा मृतिरित्येता स्मरदशा दशैव स्युरिति तासु दशावस्थानं प्रदर्शितासु प्रधानाश्रय नायिकाकर्तृकत्वानौचित्यमवधार्य श्रीभगवता कृतमेव इदं प्रकथा इत्यादिना मुनीन्द्रो दर्शयामास अन्यथा तद्वर्णनं रसाभासतां प्रकाशयतीति ज्ञेयमवसेयम् ॥ २० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे मिश्रश्रीरामकृष्ण-
विरचितायां प्रेममञ्जरीटीकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

श्रीकृष्णदासकृतश्रीगूढदीपिका ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीकृष्णदासकृत श्रीगूढदीपिकायाम्
एकविंशोऽध्यायः ॥ २१ ॥

---

भाषा टीका ।

हे राजन् ! वृन्दावन विहारी भगवान् की या प्रकार की लीलान को वर्णन करती भई गोपीतन्मय होत भई ॥ २० ॥

इति श्रीमद्भागवत दशमस्कन्ध में इकीसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २१ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

---

## ॥ द्वाविंशोऽध्यायः ॥

श्रीशुक उवाच ।

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः ।
चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥ १ ॥
आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे ।
कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप ! सैकतीम् ॥ २ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गोपीनां कामतः कृष्णो निरक्षीमपेमसङ्गमः ।
कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥
द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ।
वरं दत्त्वा गतः कृष्णो यज्ञशालामितीर्यते ॥

प्रथमे मासि मार्गशीर्षे ॥ १ ॥ २ ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं प्रायो व्रजान्तरादागतानां व्यूढानां पूर्वानुरागं शरत्प्रसङ्गे वर्णयित्वा हेमन्तप्रसङ्गे कुमारीणां पूर्वानुरागप्रक्रियामाह—हेमन्त इत्यादिना । तदिदं वर्णक्षयं श्रीहरिवंशे विविक्तं "युवतीर्गोपकन्याश्च रात्रौ सङ्कल्पकालवित्" इत्यनेन । ननु, तत आरभ्य नन्दस्येत्यादिना श्रीराधिकादीनां परमरमात्वं स्थापितं "बद्धाञ्जल्या भोर्लक्षनाचरस्तपः" इत्यनेन च श्रीव्रजेन्द्रनन्दनस्य तदेकप्रेयसीत्वं दर्शितं "नायं श्रियोऽङ्ग" इत्यादिना दर्शयिष्यते च "दामोदराधरसुधामपि गोपिकानाम्" इत्यनेन च तदेव दृढीकृतं रासप्रसङ्गे कृष्णवधू इति लक्ष्यते आगमे चान्यास्पृष्टतात्स्य-प्रेयसीत्वेन च तदुपासना विधीयते श्रीमद्दशाक्षरस्य तन्नाम-व्याख्यासु गौतमीये श्रीनारदेन गोपिकानां पतिरेवेति पर्यापनं कृतं ब्रह्मसंहितायां "श्रियः कान्ता कान्तः परमपुरुषः" इत्यन्दिना तथैव निश्चीयते तापनीश्रुतौ च "स वो हि स्वामी भवति" इति तदेव साक्षात् श्रूयते तथा "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इत्यादिना तत्पितृभिः श्रीकृष्णादन्यत्र तदेकयोग्यानां तासां दानं न श्रद्धीयते दाने च सति "जह्यामसून् व्रतकृशान् शतजन्मभिःस्यात्"इत्यादिश्रीरुक्मिणीवचनवत्तदेकाङ्क्षनं जीवनमपि न सम्भाव्यते अन्यपुरुषसम्बन्धेन तु सुतरां तर्हि कथमुच्यते व्यूढानामिति अत्र समाधीयते तत्तच्छ्रुतार्थानुपपत्त्यार्थापत्तिप्रमाणेन लीलाशक्त्यैव मायादिद्वारामिष्टैव तत्सम्पादितं यत्र तत्पितरश्च ताश्च सर्वे व्रजवासिनश्च तथाभूतास्ताश्च बभूवुः तथापि स्वाभाविकवासनामय्या श्रीकृष्णैकप्रत्याशया ता अपि जीवनं ररक्षुः पुरुषान्तरसम्बन्धश्च तासां सदकल्पनया माययैव निवारित इति लभ्यते तथा च

"नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः"

इत्युपलक्षणी करिष्यते तदेतदपि "यथाऽधनो लब्धधनो विनष्टे तच्चिन्तयान्यन्निभृतो न वेद"इति वक्तासामुत्कण्ठावर्णनार्थमेव अत्र च व्युढाकुमारीभेदेन द्विधा स्थितिस्तु वैचित्री पोषार्थमेवेति दिक् रासप्रसङ्गेतु विशेषतः स्थापयिष्यते अथ प्रस्तुतमनुसरामः श्रीनन्दस्य व्रजे याः कुमारिका इत्यौदासिन्येनैव निर्देशात् सगोत्रसपिण्डत्वादिसम्बन्धरहिता गृहीताः पाठान्तरे च श्रीमन्नन्दस्य ये गोपास्तेषां कुमारिका इति स एवार्थः तदुक्तं "युवतीर्गोपकन्याश्च"इति कन् प्रत्ययो बाल्यविवक्षयार्थे कात्यायनी वैष्णवी शक्तिः तस्या अर्चनरूपं व्रतम् ॥ १ ॥

तासां तादृशीं तदनुरागचेष्टां दर्शयन् तद्भिक्तिपुंजनानपि बोधयन् तत्प्रकारमेवाहुः-आप्लुत्येति सार्द्धस्त्रिभिः । तत्राप्लुत्येति युग्मकम् अम्भसीत्यादिना हेमन्तव्रते कृच्छ्रं दर्शितं कालिन्द्या एव जलान्ते अद्यापि घट्टवासिनीदेवीनाम्ना प्रसिद्धे व्रजघट्टे अरुणे सूर्यसारथौ देवीं कात्यायिनीं सैकतीं प्रतिकृतिं कृत्वा तदभिन्नत्वेन प्रतिष्ठाप्येत्यर्थः। सैकतीमित्यचिरात् साध्यसाधनत्वेन हे नृपेति अप्राप्तयौवना अपीदृशेन रागेण भजन्तीति विचारय श्रीकृष्णमोहननामिति भावः । सुरभिरिति यथापेक्षं सर्वैरपि योज्यं बहुत्वं तत्तद्व्याहुल्यात् बलिभिः वस्त्रभूषणनैवेद्याद्युपचारैः उच्चावचैरन्यैश्च बहुविधैस्तैः तानेवाह-प्रवालेति । अत्र क्रमभङ्गः श्रीकृष्णहृतमनस्त्वात्तासां तद्विस्मृतेः श्रीबादरायणेरेव वा तद्वृत्तकथनसम्मोहात् ॥ २ ॥ ३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हेमन्तप्रथमे मासि मार्गशीर्षे मासि हेमन्तपूर्वभाविनी-

श्रीसुदर्शनसूरिकृतशुकपक्षीये ।

कार्तिके कात्यायनी दुर्गां प्रतिकृतिं प्रतिमां सैकतीं वालुकामयीम् ॥ १—१० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं गोपीभिर्मिथोऽनुष्ठितानि शारत्कालिकानि कानिचिद्भगवच्चेष्टितानि उक्त्वाऽथ कानिचिद्विचक्षुस्तावदनन्तरासिद्धावलोकितन्यायेन पौगण्डवयसो भगवतः कानिचिच्चेष्टितानि हैमन्तिककालिकान्युपवर्णयति सप्तभिरध्यायैः, तत्र किञ्चिच्चेष्टितं वक्तुम् उपोद्घातमाह—हेमन्त इति । हेमन्ते ऋतौ तत्रापि प्रथमे मासे मार्गशीर्षे मासि नन्दव्रजस्थाः गोपकुमारिकाः कात्यायन्याः दुर्गायाः अर्चनात्मकं व्रतं चेरुरनुष्ठितवत्यः, कथम्भूताः ? हविष्यं भुञ्जानाः नियताहारा इति भावः ॥ १ ॥

कथं चेरुरित्यत्राह—आप्लुत्येति । अरुणे उदिते सत्यरुणोदयवेलायां यमुनाया अम्भसि स्नात्वा जलान्ते तटे प्रतिकृतिं वालुकामयीं कात्यायनीप्रतिमां विधाय हे नृप ॥ २ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिरेव भगवत्प्रसादजननीति दर्शयितुं गोपकुमारीणां कृष्णे भक्तिं निरूपयत्यस्मिन्नध्याये, तत्र तासां हरेः भर्तृकार्यार्थमन्तरङ्गकात्यायनीति तदर्चनव्रतकरणेन श्रीकृष्णः प्रसन्नो भवतीति तदर्चनाविधिं कथयति—हेमन्त इति । कार्तिकमार्गशीर्षमासौ हेमन्तऋतुः तत्र प्रथमे मासि कार्तिकमासे व्रतं नियमम् ॥ १ ॥

कालिन्द्याः यमुनायाः जलान्ते जलसमीपे च शब्द एवार्थः उदिते अरुणे अरुणोदय एव सैकतीं सिकतानिर्मितां प्रतिमामानर्चुः पूजां चक्रुः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं व्यूढानां पूर्वानुरागं शरत्प्रसङ्गे वर्णयित्वा हेमन्तप्रसङ्गे तदूव्रजकुमारीणां वर्णयति—हेमन्त इत्यादिना व्रजमित्यन्तेन ॥ १—३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः सप्तभिरध्यायैर्निरोधोऽत्र निरूप्यते ।
उत्तमः फलपर्यन्तो विद्यानिर्णयपूर्वकः ॥
विद्यापञ्चकमत्रापि तस्मिन् जाते सुरेश्वरम् ।
इहैव गमनं चापि वैकुण्ठावधि वर्ण्यते ॥
ज्ञानं कर्म च विद्यायां पञ्चात्मकमिति स्थितिः ।
अविद्याकार्यसम्बन्धो नात्रेति विनिरूप्यते ॥
स्त्री पुंसोः सह भावेन तुल्यत्वाच्च निरूपणम् ।
लोकानुसारिणी विद्याकर्मज्ञानात्मिका पुरा ॥
निरूप्यते गोपिकानां गोपानां च विभेदतः ।
एकोनविंशे भोग्यानां कुमारीणां व्रतं यथा ॥
अन्तःस्थानां कुमारीणां तथा ज्ञानमिहोच्यते ॥

पूर्वाध्याये स्त्रीणां गोपिकानां भगवत्क्रीडायां परमानन्दो निरूपिता ताश्च द्विविधाः अनन्यपूर्वाः अन्यपूर्वाश्च अन्यपूर्वास्त्वन्यथैव कृतसंस्काराः तासां त्यागोऽङ्गं तदुत्तरत्र वक्ष्यते अन्यासामसंस्कृतानां तत्संस्कार एव निरूप्यते विद्यायामयमेव त्यागात्यागनिर्णयः अत्यागस्त्यागादुत्तम इति निरूपयितुं परीक्षां नन्दगोपो मुख्य इति तत्रैव भोग्याः कन्यका भवन्ति ता दैवगत्या एकजातीया एव ऋषयः षोडशसहस्रमिति पुराणान्तरादवसीयते ता अध्यस्येति सम्बोधनात्पूर्वं निरूपिताः तासाम् ऋषित्वादन्यत्र दानमन्यथाभोगं चाशङ्क्य व्रतार्थं प्रवृत्तिः पूर्वं शरदि तासां चित्तस्थितिर्निरूपितेति हेमन्ते व्रतप्रवृत्तिः तत्रापि "मासानां मार्गशीर्षोऽहम्" इति भगवद्वाक्यात् प्रथमे मासि व्रतारम्भः इदं व्रतमग्रेव प्रसिद्धं कात्यायिनी आधिदैविकी तामसीशक्तिः दुर्गा पार्वती च राजसी ब्राह्मणाः सात्त्विकाः तेषां प्रसादरूपाशक्तिः स्त्री भवति भगवानेव वा गुणातीतः तदर्थं सेव्यत इति अतो हेमन्ते पञ्चम ऋतौ पञ्चमपुरुषार्थसिद्ध्यर्थं प्रथमे मासि मार्गशीर्षे नन्दगोपस्य कुमारिकाः सम्पादिताः संरचिताः हविष्यान्नमेव भुञ्जानाः कात्यायिनीपूजालक्षणं मासं समाप्य व्रतं चेरुः नित्यं कात्यायनी पूजनीयेति नियमः ॥ १ ॥

तत्र पूजाप्रकारमाह—आप्लुत्याम्भसीति । कालिन्द्या अम्भसि स्नात्वा सा हि भगवत्पतित्वकामनया तपः करोति तेन चाग्रे फलं भाव्यतः सफलतपः सम्बन्धित्वेनैतदम्भोऽपि तादृशमिति व्रतानुकूलं सफलं च तत्र स्नानमिति ज्ञापनाय कालिन्दीपदं तस्याश्चिरेण फलं भाव्यत्र तु शीघ्रमिति ज्ञापनाय पदन्यासः जलान्ते जलसमीपे चकारादागत्य गृहेऽपि देवी प्रतिमारूपां कृत्वा सिकतामयीमरुणे उदिते प्रातः सन्ध्यायां सर्वकामभगप्रदायां देवतां तामानर्चुः नृपेति सम्बोधनम् ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वाविंशे चण्डिकापूजा गोपिभिर्वाससां हृतिः ।
सन्तापोद्धरदानन्तु स्तुतिः कृष्णेन कीर्त्यते ॥

व्यूढानां शरदि कृष्णानुरागं वर्णयित्वाऽनूढानामपि गोपीनां तमनुवर्णयंस्तासां नित्यसिद्धकृष्णप्रेयसीभावानामपि कृष्णप्राप्तिकामनया लोकरीत्यैव हेमन्ते देवीपूजामाह—हेमन्त इति । प्रथमे मार्गशीर्षे तासां कृष्णकान्तानां भेदद्वयमिदं श्रीहरिवंशविष्णुपुराणब्रह्मपुराणादावपि दृष्टं "युवतीर्गोपकन्याश्च रात्रौ सङ्कल्पकालवित्" इत्यादिभिः ॥ १ ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वाविंशे कन्यकावस्त्रहरणादिलीलां वर्णयति—हेमन्त इति । प्रथमे मार्गशीर्षे ॥ १ ॥

सैकतीं प्रतिकृतिं वालुकामयीं प्रतिमाम् ॥ २ ॥ ३ ॥ ४ ॥

---

गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ।
उच्चावचैश्चोपहारैः प्रवालफलतण्डुलैः ॥ ३ ॥
कात्यायनि ! महामाये ! महायोगिन्यधीश्वरि ! ।
नन्दगोपसुतं देवि ! पतिं मे कुरु ते नमः ।
इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥ ४ ॥

भाषा टीका

ओं जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नमः ।

श्रीशुक उवाच ।

श्रीशुक देवजीबोलेकि हे राजन ! हेमन्त ऋतु मे प्रथम जो अगहन को महीना है तामें नन्दराय के व्रजा की कुमारीकन्या मूगमान को भोजन करकें कात्यायनी वाकी पूजा के व्रत को आचरण करत भई ॥ १ ॥

हे नृप ! बडे प्रातः काल अरुणोदय के समय कालिन्दीश्रीयमुना जी के जल में स्नान करिकें बारू की मूर्ति बनाय कें पूजा करत भई ॥ २ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

महामाये इत्यादिसम्बोधनैस्तव न किञ्चिदशक्यमिति सूचयन्त्यः प्रत्येकं प्रार्थयन्ते ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कात्येति सार्द्धकं कात्यायनीति तन्मुनिवंशप्रकाशकत्वात् महाधर्मदातृत्वं सूचितम् । हे महामाये ! हे श्रीभगवतो महाशक्तिरूपे ! इत्यभीष्टप्राप्तियोग्यां शक्तिमसम्भवमपि दातुं समर्थासीत्यर्थः । अत्र कापि दुर्घटताचेत्तत्राप्याहुः—हे महायोगिनि ! दुर्घटघटनासमर्थे ! नन्वन्यां काञ्चिद्देवतां भजध्वमिति स्वानिष्ठां परीक्षमाणां प्रत्याहुः—हे अधीश्वरि । न त्वत्त ऊर्द्ध्वं काचिद्देवतेत्यर्थः । नन्दगोपसुतं श्रीमन्नन्दराजकुमारमिति निजभावानुरूपासम्बन्धनिर्देशः तेन तस्यैव सर्वोपादेयत्वेन स्फुरणमपि सूचितम् । अत्र नन्देति साक्षान्महागुरुनामग्रहणं गोपेति विशेषणदानं च तत्तच्छब्दस्यान्यगतित्वशङ्कया । ननु,तत्प्राप्तये तमेवाराधयत तत्राहुः, हे देवि ! क्रीडारत्नाभिज्ञे ! तदर्थं साक्षात् तत्प्रार्थनं न रसावहमिति जानास्येवेत्यर्थः । मे इत्येकत्वः प्रतिस्वं पृथग्जपात् इति एतं मन्त्रम् अतः प्राक्सिद्ध एवासौ श्रीकृष्णावरणपतिपदो मन्त्रः तत्रश्चास्या देव्याः स्वरूपशक्तित्वमेव मन्तव्यं न बहिरङ्गजगत्कारणशक्तित्वं पूर्वस्याः "न विष्णुना विना लक्ष्मीर्न हरिः पद्मजां विना" इति भगवदैक्यात् उत्तरस्याः "यस्यांशांशांशभागेन" इत्यादिना तदपेक्षयाऽतितुच्छत्वात्—

"याऽतीतगोचरा वाचां मनसां च विशेषणा ।
ज्ञानिज्ञानापरिच्छेद्या वन्दे तामीश्वरीं पराम् ॥
सर्वभूतेषु सर्वात्मा या शक्तिरपरा तव ।
गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वर ! ॥

इति विष्णुपुराणपद्याभ्यां तादृशभेदप्राप्तेः तथा च श्रीनारदपञ्चरात्रे श्रुतिविद्यासम्वादे—

"जानात्येका परा कान्तं सैव दुर्गा तदात्मिका ।
या परा परमा शक्तिर्महाविष्णुस्वरूपिणी ॥
यस्या विज्ञानमात्रेण पराणां परमात्मनः ।
मुहूर्त्ताद्देवदेवस्य प्राप्तिर्भवति नान्यथा ॥
एकेयं प्रेमसर्वस्वस्वभावा श्री(गो)कुलेश्वरी ।
अनया सुलभो ज्ञेय आदिदेवोऽखिलेश्वरः ॥
अस्या आवरिका शक्तिर्महामायाखिलेश्वरी ।
यया मुग्धं जगत्सर्वं सर्वे देहाभिमानिनः" ॥ इति

अतः प्रथमैवाष्टादशाक्षराद्यधिष्ठात्रीति गम्यते दुर्गामहामायेत्यादिनामादिसाम्येनैव तु भ्रमो भवतीति ज्ञेयम् अथवा मन्त्रेऽस्मिंस्तृतीयः पादो निजाभीष्टनाम्ना योज्य इत्येव विधिः स्यात् ततो व्रजस्य लोकवल्लीलत्वान्मायोपासनमेव लक्ष्यते तासां च परमप्रेमोल्लासविलसितमेव तथोपासनं प्रेम्णैव च तथा तत्प्राप्तिर्न तथोपासनेनेति विवेक्तव्यम् अत्र केचिदनवगमन्या यदन्यथा मन्यन्ते तेन तदीयप्रेमगन्धसम्बन्धगन्धवाहमपि स्पृशन्ति सर्वत्र शुद्धभगवत्प्रेमैव हि पुरुषार्थः सर्वमनन्यदेवतोपासनादिकं तु तत्साधनमेवेति श्रीमद्भागवतसिद्धान्तः स च तासां स्त्रियः स्वयं समुद्रिक्तश्चेति किं साधनविचारेण परमसाध्यस्वरूपप्रेमविचारे तु स च प्रेमा केवलमाधुर्यानुभावाविर्भावी अनन्यभक्तिप्रवृत्तिकारणेन पारमैश्वर्यानुभवेन तु सम्भ्रमात् सङ्कुचित एव प्रेम्णैव च भगवानपि वशीक्रियते ननु तेन तथैव "नेमं विरिञ्च" इत्यादौ इत्थं सत्याभिस्यादौ "नायं श्रियोऽङ्ग"इत्यादौ श्रीव्रजवासिन एव सर्वोपरिप्रशस्यन्ते तथैवात्रोक्तं नन्दगोपसुतमिति ननु श्रीभगवन्तमिति तस्मात्तासां शुद्धमधुरप्रेम्णा एव विलासोऽयं नान्यादिति सर्वोपरैव स्थितमिदम् ॥ ४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गन्धादिभिस्तस्यर्चानचक्रुः सुरभिभिः गन्धैर्माल्यैः पुष्पैश्च धूपैर्दीपैश्चान्यैर्नानाविधैर्बलिभिः पूजासाधनैर्नानाविधैरुपहारैर्नैवेद्यैः पल्लवादिभिश्च ॥ ३ ॥

तथा कात्यायनीत्यादिमन्त्रं जपन्त्यस्ताः कुमारिकाः पूजां चक्रुः हे महामाये प्रत्याहरणयस्त्वधिष्ठात्रि महायोगिनि ज्ञानात्मकमहायोगनिर्वाहके अधीश्वरी आराधकसमीहितफलदानसमर्थे हे देवि ! नन्दगोपसुतं मम पतिं कुरु तुभ्यं नमः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इति प्रत्येकाभिप्रायकमेकवचनम् एवम्भूतायास्तव न किञ्चिदप्यशक्यमिति सम्बोधनानामभिप्रायः ॥ ४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बलिभिः परिवारदेवताविषयपूजाभिः ॥ ३ ॥

कात्यायनि कुलानामुत्पादके! महती माया माहात्म्यं यस्यां सा तथा तस्याः सम्बुद्धिः महामाये महान् योग उपायोऽस्या अस्तीति महायोगिनी तत्सम्बोधनं महायोगिनि! अधिगतेश्वरि ते तुभ्यं नमोऽस्तु इति समाप्तं एवं प्रकारं वा ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कात्यायनी वैष्णवीशक्तिः इत्येवं मन्त्रः अतः प्राक् सिद्ध एवासौ तत्र यदि तृतीयपादाभीष्टनाम्नो योजनीय इत्येव विधिः स्यात्तदा लोकवल्लीलया मायोपासनमेव यदि तु सोऽपि पूर्वसिद्धास्तदा स्वरूपशक्त्युपासनमेवेदम् ॥ ४—५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतावता क्लेशेन भगवान् प्राप्त इति ज्ञापयितुम् पूजासाधनान्याह-गन्धैरिति। माल्यानि पुष्पाणि सुरभिभिरित्युभयेषां विशेषणं बलिभिरर्हणैः ऋषिरवाञ्चासां परिधानं धूपो दीपावलयश्च पङ्क्तिरूपा दीपाः दीपकाः उच्चावचानि सर्वाण्येवानेकरूपाणि उपहारा नैवेद्यद्रव्याणि प्रवालाः पल्लवाः फलानि तन्दुलाश्च एवं नवविधा निरूपिताः एव कर्तृदशद्रव्याणि निरूपितानि ॥ ३ ॥

मन्त्रमाह-कात्यायनीति। ऋषित्वान्मन्त्रदर्शनं मन्त्रे प्रसिद्धदेवतामन्त्रोपासनायां साक्षात्कृता अर्थस्यापि इष्टत्वादतः कात्यायनीति परिज्ञानसम्बोधनं कायं त्याजयतीति कात्या संहारिकाशक्तिः तस्या आधिदैविकं रूपं कात्यायनीफक्किरूपं पूर्वं भगवान्न प्राप्तः तत्रावश्यं दुरदृष्टमेव प्रतिबन्धकमिति मन्तव्यं तपस्तु सिद्धमेव साधनम् अन्यथाऽग्रेऽपि न स्यात् अतःप्रतिबन्धस्याधिदैविकस्य नाशने इयमेव समर्था। ननु, प्रतिबन्धकमाधिदैविकं यदि भगवदिच्छयैव स्यात् तदा कथं निवर्तेत इत्याशङ्क्याह—महाभाग इति। अल्पभाग्यत्वे भगवान्नाज्ञापयेत् यशोदायाश्च जन्म न स्यात् भगवद्दास्यं च न प्राप्नुयात् त्वया प्रार्थितः प्रियः स्वेच्छामप्येतदनुगुणां करिष्यति, अतो महाभाग्यं तव आभिमानिकसम्बन्धेन त्वं पुनर्भगिनी भवसि ज्येष्ठा अत उपकारोऽपि कर्तव्यः न च मन्तव्यं तादृशदोषो न मया परिहर्तुं शक्यत इति यतस्त्वं महायोगिनी गर्भसङ्कर्षणादिकार्यकरणात् नन्वाधिदैविकं कथं परिहर्तव्यं कालादिरूपा बलिष्ठा हि सा प्रतिबन्धकशक्तिः तत्राह, अधीश्वरीति। ईश्वरं भगवन्तमधिकृत्य वर्तसे अतोऽन्तरङ्गा त्वं शक्तिः कात्यायिन्या गुणत्रयं चोक्तं पदत्रयेण अतः सर्वप्रकारेण त्वं भगवदीया नन्दगोपसुतं मे पतिं कुरु प्रत्येकं भर्तारं कुरु भगवानशक्य इति न मन्तव्यं यथा नन्दगोपस्य पुत्रो जातः तथाऽस्मत्पतिरपि भविष्यति। किञ्च, त्वं देवतारूपा अलौकिकेनापि प्रकारेण भगवन्तं पतिं कारिष्यसि प्रत्युपकारस्तु तुभ्यं नमनम् अहङ्कारस्तुभ्यं दत्तः त्वदीय इति अन्यत्सर्वं भगवदीयं प्रतिबन्धके निवृत्ते स एव भविष्यति तथापि वक्तव्योऽपि स हि मायायवनिकामाच्छाद्य कश्चिदल्पोद्घाटनेन तिष्ठति अतोऽस्मदर्थं तत्रतत्रोद्घाटिका भवेत्यर्थः। अपराधस्तु न भविष्यति यतस्तं पतिं कारिष्यसि कन्यावरयोर्विवाहे यवनिका दूरी क्रियत एव अयमर्थो निष्ठः प्रत्यगाशीर्मन्त्रत्वात् जप एवास्य न कर्माङ्गकरणं प्रत्यगाशिषो मन्त्रान् जपस्थकरणानीति कल्पात् अतः परं तेषां प्रसादरूपा शक्तिः स्त्रीभवति भगवानेव वा गुणातीत इति पदद्वये मन्त्रार्थं उच्यते भगवतः स्त्रियः कतीति प्रश्नविषयाः कात्याः अत एव परीक्षितो राज्ञः प्रश्ने "पत्न्यः कत्यभवन् प्रभोः" इति वचनं ता अयनं यस्याः सा कात्यायनी ङीबत्र छान्दसो ज्ञेयः नन्वेतस्या भगवद्भोग्यतासम्पादकत्वैकस्वभावायाः स्वाभिमास्थितिं चेज्जानन्ति तदा भगवत्सम्बन्धस्यावश्यं भावित्वेन ज्ञानञ्च भविष्यत्येवेति कथं व्रतारम्भः न च विश्वस्याभावार्थं इति वाच्यम् एतस्याः सर्वतोधिकत्वेनान्या प्रतिबाध्यसामर्थ्यत्वेन च स्वस्य रसयोग्यवयःसम्पत्तौ सा स्वत एव विश्वासहिष्णुर्यतः न च तादृग्वयस्सम्पत्त्यर्थमेव व्रतारम्भः इति वाच्यं प्रमाणाभावात् पतित्वकरणस्यैव मन्त्रे श्रूयमाणत्वात् नच्य चैतच्छक्तेरेतद्रूपस्य भगवतो वा प्रवेशो नैव सिद्धस्यादेतत् प्रयोजनं न विद्मः। अथ स्वाभिमतस्थितेरज्ञानाद्व्रतारम्भः इति वाच्यं तथापि वस्तुतस्तत्प्रयोजनं न सिद्ध्यतीति चेदुच्यते मन्त्रे पठ्यमानमेव फलं प्रयोजनं नचांकन्यायेन तत्सिद्धमिति वाच्यं तत्तात्पर्यानवगमात् तथा हि साक्षात्पुरुषोत्तमरमणे ह्येतासामिच्छामये मां रंस्यथ क्षपाः "यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः" इति भगवद्वचनात् एतच्च सत्युक्तरूपशक्तेर्भगवतो वा प्रवेशस्य प्रयोजनभावेऽरमणं नैवान्यथासिद्धं कदाचिद्भगवानन्येन सर्वं सर्वत्र योजयितुं शक्तो मतः तथाचावेशेनांशावतारेण वा सम्बन्धो माभूदिति तदर्थं व्रतस्वयां तदाराधनमारब्धं यथान्यसम्बन्धराहित्येन पुरुषोत्तमसम्बन्धो भवेत् अत एव भगवता सर्वोत्थं शिक्षयामुक्तमेतदभिप्रायेणैव नन्दगोपसुतपदमप्यत एव तत्रैव पुरुषोत्तमाविर्भावो यतः एतच्च यथा तथाद्य प्रकरणे निरूपितं यथा कंसादिभिया तद्वानार्थं गुप्तस्थाने स्थापितो नन्दपुत्रो भवस्तथात्वैकान्तस्थलेऽन्या ज्ञाततया प्रापितोऽस्माद्भवत्प्रकटो भवित्वत्पदस्य यदस्य तात्पर्यं ज्ञेयम् अत एव बलदेवादिरूपाद्भ्रांतरपि अत एव तथैवाग्रे करिष्यामीति भगवान् उद्देश्यपतित्वविधानप्रार्थनावाचकयोः पदयोरैक्यं देवीति सम्बोधनेन मध्यस्थतया कदाचिद्दूतीन्यायेनापि तथाकरणं द्योत्यते एतद्देव तव परमानन्दजनकं तव क्रीडैवेति देवीशब्देन द्योत्यते गावो हि स्वतः शुभाशुभयोः प्रवृत्तिनिवृत्तिरहिताः किं बहुना स्वमस्थेऽपि स्वरक्षकप्रेरणायां प्रवृत्तिनिरोधे तूष्णींभाव एव तासां तथा चैतादृशीनां पालकस्य सुत इत्यस्माकमप्येतादृशफलसम्बन्धं साधकबाधकज्ञानराहित्येन कदाचिदस्मतोऽन्यथा चिकीर्षायामपि

एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः।
भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः ॥ ५ ॥
उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः।
कृष्णमुच्चैर्जगुर्यान्त्यः कालिन्द्यां स्नातुमन्वहम् ॥ ६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्वयमेव कृपया ततो निवर्त्तक इष्टसम्पादकश्च भविष्यतीति गोपपदेन ज्ञायते अपरञ्च गोपजातीया हि लौकिक न महत्त्वेन गणयन्ते तथा च ब्रह्मवाक्यसत्यत्वार्थं स्वयं तादृशस्य पुत्रत्वमङ्गीकृतवान् यः स स्ववाक्यसत्यत्वार्थमस्मत्पतित्वमप्यङ्गीकरिष्यत्येव निमित्तमात्रत्वं भवेति ज्ञापनायापि गोपपदं तेनात्र तव नाधिकः प्रयासो भवितेति सूचितम्। स्वस्याभिमानाभावश्च एतादृक् फलसम्पादिकायास्तव प्रत्युपकारस्तु नास्माभिः कर्त्तुं शक्यः किन्तु यथा "किमासनं ते गरुडासनाय" इतिवाक्यात् नमोनम इत्येतावत्सदुपशिक्षितमिति वाक्याच्च भगवति जीवैर्नमनमेव कर्त्तव्यं भवति कर्त्तुं शक्यं च तथाऽस्माभिरपि तुभ्यं नमनमेव कर्त्तुं शक्यमित्याशयेनाहुः, ते नम इति नमनातिरिक्ताशक्यत्वे तन्महत्त्वं हेतुरिति तदुक्तं महाभाग इत्यादिना भगवता सह योगोऽप्यास्तीति योगी योगेन महत्त्वन्तु नायिकाभावपूर्वकत्वं तथा च तादृशे पुरुषे अधीश्वरि अङ्गीकृतस्वामित्व इत्यर्थः। तेन साधारण्याभावत्वेन महत्त्वसम्बन्धित्वेन च महत्त्वमुक्तं भवति एतादृशस्येश्वरो हि भगवानेव भवति स्वस्वेनादृशो यदीश्वरोपि त्वदधीनस्तस्मै फलं ददातीत्युपपन्नः पक्षद्वयेऽप्येतस्माद्भगवत्स्वरूपात्मकत्वात्तदधीनत्वेपि नेश्वरे काचिन्न्यूनता शङ्कनीया महायोगवत्त्वे हेतुभूतं पुरुषे विशेषणमाहुः महाभाग इति। भक्तिमार्गेऽङ्गीकार एव भाग्यरूपः तत्रापि पुष्टिपुष्टावङ्गीकारो महत्त्वम् अतस्तं मन्त्रं जपन्त्यस्तूष्णीमेव पूजां चक्रुरित्याह, इतीति। इममेव मन्त्रं जपन्त्यः ताः प्रसिद्धाः तूष्णीं पूजां चक्रुः यतः कुमारिकाः स्त्रीणां विवाहोत्तरमेव मन्त्रसम्बन्धः अयं तु मन्त्रः ताभिरेव दृष्ट इति युक्तं तासां जपकरणम् अनेन क्रियोक्ता ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

बलिभिः वस्त्रभूषणैर्नैवेद्याद्युपचारैः ॥ ३ ॥

हे कात्यायनि ! नन्दगोपसुतं पतिं कुरु। ननु, कुमारीजनेन मदंशेन किमिति तत्र स्वातन्त्र्यमदर्थे अहं तु तदर्थं तव पितरौ प्रेरयिष्यामि माञ्च भवत्याः कारयेति देहीति वा प्रयुज्यतामित्याशङ्क्य सम्बोधयन्त्याह—हे महायोगिनीति। तेन संयोगकरणेन शीघ्रं सम्पाद्यतां न तु पित्रादिप्रबन्धोपद्रवेण परमोत्कण्ठावतीभिरस्माभिः कथञ्चिदप्यस्मत्पारतन्त्र्यात् कृष्णस्य सम्यगनुपनीतत्वेन विवाहयोग्यत्वाभावात् हे देवि ! सुखं विवाहं विनैव केवलगान्धर्वविवाहेनैव मे पतिं कुर्वित्यर्थः। अधीश्वरीति तव तव किमप्यशक्यं नास्तीति भावः। ननु, तव कृष्णो पतिभावस्य स्वपितृभ्यामज्ञातत्वे त्वदभीष्टः कृष्णाङ्गसङ्गः कथं साधु सेत्स्यतीत्यत आह—महामाये मायया मत्पितरौ तथा मोहय यथा कदाचिदपि गोपान्तरेण मद्विवाहस्ताभ्यां न साध्यते कृष्णाङ्गसङ्गरहस्यञ्च नच ज्ञातुं शक्यत इति यद्वा, दीव्यति क्रीडति देवयति क्रीडयतीति वा देवी सचासौ पतिश्चेति तं तादृशपतित्वं विवाहं विनैव सिद्ध्यतीति मम गोपान्तरव्यूढत्वेपि न कापि क्षतिरिति भावः। इत्येवं प्रत्येकं मन्त्रार्थं पृथक्पृथक् विचिन्त्येत्यर्थः, इयं ताभिरुपासिता चिच्छक्तिवृत्तिः स्वरूपभूता योगमायैव नतु बहिरङ्गमाया यदुक्तं नारदपञ्चरात्रे श्रुतिविद्यासम्वादे—

"जानात्येकापरा कान्तं सैव दुर्गा तदात्मिका।
या परा परमा शक्तिर्महाविष्णुस्वरूपिणी ॥
यस्या विज्ञानमात्रेण पराणां परमात्मनः।
मुहूर्त्ताद्देवदेवस्य प्राप्तिर्भवति नान्यथा ॥
एकेयं प्रेमसर्वस्वस्वभावा श्रीकुलेश्वरी।
अनया सुलभो ज्ञेय आदिदेवोऽखिलेश्वरः ॥
अस्या आवारिका शक्तिर्महामायाऽखिलेश्वरी।
यया मुग्धं जगत् सर्वं सर्वे देहाभिमानिनः" ॥ इति।

अतः सर्वेषु कृष्णमन्त्रेषु दुर्गाधिष्ठातृदेवतेत्यागमे शुद्धसत्त्वस्वरूपा चिच्छक्तिवृत्तिः कृष्णभगिन्येकानंशाभिधाना योगमायैव मन्त्राधिष्ठात्री सैव स्वदनाभिरुपासिता दुर्गा महामायेत्यादि नामादि साम्येनैव लोकानां भ्रमो भवतीति ज्ञेयं व्रजस्थलोकवदलौकिकत्वान्मायोपासनेऽपि न दोषः अत्र केचिदनन्यस्मन्या यदन्यथा मन्यन्ते न ते तदीयप्रेमगन्धसम्बन्धगन्धवाहमपि स्पृशन्तीति श्रीवैष्णवतोषणी ॥ ४ ॥

---

भाषा टीका।

चन्दन, सुगन्धी पुष्पन की माला, बलि, धूप, और बड़ी छोटी भेट की सामग्रीन सूं तथा पल्लव, फल, और अक्षतन सु पूजा करत भई ॥ ३ ॥

और स्तुति करबे लगी। कि हे कात्यायनि ! हे महामाये हे महायोगिनि ! हे अधीश्वरि ! हे देवि ! नन्दगोप के सुत को हमारो पति करो तुमको नमस्कार होय ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कृष्णचेतस्त्वमाह—भूयान्नन्दसुतः पतिरित्यानर्चुरिति ॥ ५ ॥

अतस्य पूर्णां कुमाह—उषसीति। गोत्रैर्नामभिः अन्योन्याबद्धबाहवः परस्परं गृहीतपाणयः ॥ ६ ॥ ७ ॥

नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत्।
वासांसि कृष्णं गायन्त्यो विजह्रुः सलिले मुदा ॥ ७ ॥
भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः।
वयस्यैरावृतस्तत्र गतस्तत्कर्मसिद्धये ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

योगेश्वराणामीश्वर इति प्रत्येकं तादृङ्मनोरथपूरणसामर्थ्यं दर्शयति—तासां कर्मणः सिद्धये फलदानायेति ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मासेति। स्वल्पेनैव कालेन तासां तादृश्यपि सिद्धिरिति भावः। कृष्णे चेतो यासामिति तस्याः समर्चनमपि कृष्णार्चनमेवेत्यभिप्रेतम् अत एवाग्रे च वरदानाय श्रीकृष्णस्यैवागमनं वक्ष्यति भूयादिति पूजादौ सङ्कल्पः ॥ ५ ॥

प्रेम्णा विस्मृतमपि पुनस्तासामनुरागपरिपाटीमयं व्रतपूर्वाङ्गं स्मरन्नाह—उषसीति। उपस्युत्थायेति तासामुत्कण्ठा गोत्रैर्नामभिः स्वैरिति परस्परकार्यसाधकत्वं हेतौ तृतीया मिथस्तत्तन्नामभिराहूता इत्यर्थः। स्वैर्वर्गैः सहेति वा अन्योन्या इति श्रीकृष्णरागमयैकमत्येन मिथः स्नेहविशेषः कृष्णमिति चेतो बहुवचनस्यापि तदेकनिष्ठता तन्नाप्युच्चैरिति तदावेशः कालिन्द्यां स्नातुमन्वहमिति दूरगमनं नित्यमेकरसत्वं च दर्शितम् एवमनुरागवैशिष्ट्यमेव सर्वथापि वर्णितमिति ॥ ६ ॥

कदाचित् तन्मासान्ते पौर्णमास्यां पूर्ववदिति सदैव नग्नतया स्नानमित्यादिकं बोध्यते तच्च बाल्यभावादेव मुदा विहारे हेतुः कृष्णं गायन्त्य इति तद्गानानन्देन हेमन्तजलेऽपि शीताद्यस्फूर्तेः। यद्वा, मुदेति व्रतस्य तद्दिने पूर्णत्वात् अत एव कृष्णं गायन्त्यो विजह्रुः इति देहाननुसन्धानेन च कृष्णार्चनत्वमेव विशेषितम् एवं मानसवाचिककायिकैकतानत्वं दर्शितम् ॥ ७ ॥

योगेश्वराणां सर्वसार्वज्ञ्यादिसिद्धीनामाराध्यः अतएव भगवान् नित्यस्वाभाविकसार्वज्ञ्यादिशक्तियुक्तोपि तत्तस्य व्रतस्यावधिपूर्णत्वम् अभिप्रेत्य निजगानादिरीतिविशेषेणानुमायैवेति लौकिकार्थत्वम् अभिप्रेत्य तादृशतत्प्रेममयलीलामाधुर्यावेशो दर्शितः तथापि देवतास्य तादृशतत्प्रेममयलीलामाधुर्यावेशो दर्शितः तथापि देवतान्तरोपासकेभ्योपि स्वयं फलदाने युगपदखिलपक्षं इत्यर्थ च शक्तिर्दर्शिता तत्र हेतुः कृष्णः तादृशत्वेनैव प्रसिद्ध इत्यर्थः बालैरिति वक्ष्यमाणात् वयस्यैरिति बालकैरेव सखिभिरिति द्वयं तैर्वृतः समागत इति तेच परमान्तरङ्गा दामसुदामवसुदामकिङ्किण्याद्या ज्ञेयाः यथोक्तं गौतमीतन्त्रे—

"दामसुदामवसुदामकिङ्किणीगन्धपुष्पकैः।
अन्तःकरणरूपास्ते कृष्णस्य परिकीर्तिताः ॥
आत्माभेदेन ते पूज्या यथा कृष्णस्तथैव ते"। इति

अन्तःकरणरूपा इति क्रमेण शुद्धाहङ्कारचित्तमनोरूपा इत्यर्थः। तैर्वृत इति हासादिविलासार्थं ज्ञेयम् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं मासं व्रतं कृष्णचित्ताः कुमार्यश्चक्रुः मासमित्यत्यन्तसंयोगे द्वितीया कृष्णचेतस्त्वमेवाह भूयान्नन्दसुतः पतिरित्यानर्चुरिति ॥ ५ ॥

इत्थं मासं व्रतं चरित्वाऽथ कदाचिदुषसि नामभिर्गोत्रैश्च प्रयोज्य परस्परं गृहीताः पाणयो याभिस्ताः कालिन्द्यां स्नातु सुद्यताः ॥ ६ ॥

आगत्य पूर्ववन्नद्यास्तीरे वस्त्राणि निक्षिप्य कृष्णमेव गायन्त्यः सलिले मुदा विजह्रुः ॥ ७ ॥

तदा सर्वज्ञो भगवांस्तत्कर्म तासां विहरणं च ज्ञात्वा तस्मां कर्मणो व्रतस्य सिद्धये तत्कर्म सफलीकर्तुं वयस्यैः सह तत्र आगतस्सन् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उषसि ब्राह्मे मुहूर्ते नन्दस्नुषा भूयाः स्म इत्येवं सङ्कल्प्य नदीमागत्य नदीं प्राप्य भूयान्नन्दसुतः पतिरित्यपि पाठः ॥ ५ ॥ ६ ॥ ७ ॥

योगेश्वरेश्वर इत्यनेन दूरश्रवणदर्शनादिशक्तिः सूच्यते तासां कर्मसिद्धये सङ्कल्पितव्रतसिद्ध्यर्थम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वैर्गोत्रैः वर्गैः सह ॥ ५—१७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमप्रत्यक्षप्रकारेण मासपर्यन्तं व्रतं कुमारीभिः अनेन कालोप्युक्त उपसंहृतश्च एवं पडङ्गसहिता व्रतरूपा क्रिया निरूपिता एतस्य व्रतस्य फलं जातमित्याह, कृष्णचेतस इति। कृष्ण एव चेतो यासां तादृश्यो जाताः तदा नान्या प्रार्थिता अतोऽग्रे भगवन्तमेव प्रार्थयिष्यन्ति चित्तदोषस्य गतत्वात् आरम्भस्य व्रतस्यावान्तरफले जातेपि परमफलं न जातमिति पुनर्मासान्तरेपि व्रतं कृतवत्य इत्याह, भद्रकालीमिति। कात्यायिन्या गेयावस्था विशेषो देवताविशेषो वा वसंते यतो भगवत्सम्बन्धे उभयो भद्रकाली भवति अतस्तमेव भद्रकालीरूपां समानर्चुः तत्रान्यो मन्त्रः पश्चादुक्तः भूयान्नन्दसुतः पतिरिति नन्दसुतः स्वयमेव पतिर्भूयात् निमित्तं काल इति कालाभिमानिनी पूज्यते कामपतिर्भूयात् निमित्तं काम इति कालाभिमानिनी पूज्यते कादाचित्कत्वात् अतः कादाचित्कसम्बन्धो न सर्वदा जातः नन्दस्य पुत्रः कृपालुरिति भुवादिति प्रार्थना भगवन्तमेव प्रार्थयन्ति अत्र प्रत्येकं

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

प्रार्थनामात्रात् समुदायेनापि रमणम् अतोऽग्रेपि वक्ष्यते एकैकशः प्रतीक्ष्य तु सहैवोतेति फलवाचकत्वात् पूजायामशेषत्वान्मन्त्र-वदन्याङ्गत्वाभावाय स्वरूपेणैव कीर्त्तनं कृतम् इतिशब्दप्रयोगे गौणता स्यात् प्रार्थनया भगवान् स्वतो वृत इति अन्तः-करणधर्मत्वात् भगवान् पतिर्जातः परमन्तरेव "ये यथा मां प्रपद्यन्ते" इति वाक्याद् तदा अन्तःस्थितभगवद्रूपा निःशङ्का जाताः ॥ ५ ॥

ततः प्रकटतया पूजां परित्यज्य भगवद्गानं कुर्वन्त्यः कालिन्द्यां कामनाऽस्नानार्थं गता इत्याह-उषस्युत्थायेति। अधुना निःशङ्कतया अरुणोदयात् पूर्वमेवोत्थाय स्वैर्गोत्रैः कृत्वा कृष्णमुद्धजगुः अत्र गोत्रशब्देन नामान्युच्यन्ते ततः स्वस्वनामग्रहणेन बोधन प्रथमतः प्रबुद्धा अन्यास्तद्गोत्रैः प्रबोधयन्तीति व्यावहारिकोर्थः ते हि सर्वे गोत्रप्रवर्त्तका ऋषयः यत्र प्रवृत्ताः अत आपवंशानेन स्वगोत्रैः कृत्वा निर्भयाः सत्यः कृष्णं सदानन्दं स्वतः पुरुषार्थ-रूपं जगुः अध्ये भगवन्तं परिकल्प्याग्योन्यावद्धबाहवोऽभवन् यथा रासे अतः प्रकटमेव तासां तयात्वं जातम् अतो जल-क्रीडार्थं गोपिकाभिः परिवेष्टितं कृष्णं गायन्त्य एव कालिन्द्यां स्नातुं यान्त्यो जाताः गानं मुख्यं स्नानगमने गौणं अन्वहमयम् अनेन हेमन्तनियमो गतः अन्यान्यपि व्रतानि निवृत्तानि सर्वमेव गाने प्रतिष्ठितं कश्चिन्द्यतीति कश्चिन्दः तस्य पर्वतस्य कन्यकापि तादृशा अनेन दोषत्रयं परिहृतं भविष्यतीत्युक्तम् अन्योन्यं कलहो भगवता सह कलहः कलिकालदोषश्च एतदर्थमेव कालिन्द्यां स्नानस्नानं पुनः मुख्यमाचाय उषः सर्वकार्येषु प्रशस्तमिति भग-वत्क्रीडार्थम् "उषः प्रशंसते गर्गः" इति वाक्याद्गमनम् अन्वहमिति नात्र कालोऽपरिच्छिन्नः अतः अव्यक्ततया भगवत्सिद्धानि स्नानम् अन्योन्य स्पर्शाभावः असङ्गताभावः दोषाभावश्च सर्वदैव जातः न कदा-चिदपि कोप्यंशो निवृत्तः ॥ ६ ॥

एवं जाते स्वयमपि भगवान् प्रकटो जात इति वक्तुमुपाख्यान-मारभते-नद्यामिति। कदाचिदिति यदा पुनः भद्रः कालः कालिन्द्याः प्रयोजनं वृत्तमिति नद्यानिरूपिता पूर्ववदेव गानं कृत्वा तेन गानेन मत्ताः विस्मृतात्मानः स्वपरिहितानि वासांसि तीरे निक्षिप्य भगवता सह जलक्रीडार्थमेव प्रविष्टाः मुदा सलिले विजहुः स्नाने मौनवस्त्रपरित्यागौ दोषद्वयं क्रीडा च नियमरूपानां देह-विस्मरणं च मुदेत्यनेन सूचितम् ॥ ७ ॥

एवं चत्वारो दोषा जाताः कर्ममार्गे भक्तौ गुणाः अतः तद्दोषपरिहारार्थं कर्मपयगते भगवान् स्वयमागत इत्यतआह-भगवांस्तदभिप्रेत्येति। तासामपराधं ज्ञात्वा तन्निवृत्यर्थं समागतः किञ्च, कृष्णः स्त्रीणां हितकारी आनन्दस्तत्र प्रतिष्ठित इति परं सदानन्द इति दोषा निवर्तनीयाः अन्तःस्थितदोषनिवृत्तौ सामर्थ्य-माह, योगेश्वरेश्वर इति। योगेश्वरा हि योगबलेन अन्तःप्रविश्य तत्रत्यं स्थितं दोषं दूरीकुर्वन्ति तदपाव्ययमीश्वर इति नास्य प्रवेशोऽपेक्षते एते हि बालकाः पूतनायां प्रावृषाः पुनः स्वस्मिन्न गताः एतासामाधिदैविकरूपा अत एव पुरुषरूपाः एव अनभिप्लुताः पुनः स्वच्छन्दभोगयोग्या न भविष्यन्तीति दृष्टिद्वारा तेषामपि प्रवेशनं तद्भोगार्थं च तैरपि वृतः प्रार्थितः तत्रैव स्थाने ताभिरपि इतः भूयान्नन्दसुत इति एतदपि सर्वमभिप्रेत्य वयस्यैः सहागतश्च तत्रैव वृतश्च अतस्तस्य व्रतस्य सिद्धिः फलं तदर्थम् फलम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

नन्दसुतः पतिर्भूयादिति सङ्कल्पेति शेषः ॥ ५ ॥

आप्लुत्याम्भसीत्युक्तं तत्पूर्वक्रममनुस्मृत्याह-उषसीति। स्वैः स्वैर्गोत्रैर्नामभिरपि अन्ये कुमारासि किमिति विलम्बसे इत्येव-माहूता इत्यर्थः। कदाचिदिति व्रतपूर्त्यादिने पौर्णमाख्यामेव एवं मासं व्रतं चेत्तरिलनन्तरोक्तत्वात् अत एवोत्सवार्थं कुमारीभि-स्ताभिः समानवासनत्वेन प्रधानत्वपदीभूताः वृषभानुनन्दिन्या अपि निमन्त्र्यानीताः पूजासमाप्त्यनन्तरं ताभिः सहैवावभृत-स्नानदेशीयं जलविहारो ज्ञेयः ॥ ६ ॥ ७ ॥

योगेश्वराणामपीश्वर इत्यनेन सर्वज्ञः तासां प्रत्येकं तत्-दुमनोरथपूर्णसामर्थ्यं ताभिः संचयपये एव स्थापितानामपि-ज्ञानामपि वस्त्राणां चौर्य्यसामर्थ्यं प्राणत्यागादपि तादृशलज्जा-त्यागमधिकं निश्चिन्वतीनां तासां कुलकुमारीणां जलादुत्थापन-स्वप्रणामनादिसामर्थ्यं इष्टसर्वाङ्गानां रहः प्राणानां स्ववश्यता-मपि तासां तादात्विकसम्भोगाभावसामर्थ्यं च द्योतितं वयस्यै-र्वृत इति बालैरिति वक्ष्यमाणत्वात् द्वित्रिवर्षीयाः स्त्रीपुंसभेद-विवेकशून्या दिग्वाससः पृथुकाः एव सखित्वेनाभिमताः गो-चारणादावपि कृष्णसङ्गमव्यक्तो ज्ञेयाः यदुक्तं क्रमदीपिकायां—

"अङ्कान्तपीवरकटीरतटीनिबद्ध—
व्यालोलकिङ्किणिघटाघटितैरटद्भिः।
मुग्धैस्तरक्षुनखकल्पितकण्ठभूषै—
रव्यक्तमञ्जुवचनैः पृथुकैः परीतम्" ॥ इति.

वैष्णवतोषिण्यां तु दामसुदामवसुदामकिङ्किणयः कृष्णान्तः-करणरूपास्ते गोतमीयतन्त्रदृष्टा इत्युक्तम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उषसि प्रातःकाले गोत्रैर्नामभिरन्योन्यतः उच्चारितैरुत्थाय अन्योन्यं परस्परमाबद्धा बाहवः पाणयो याभिस्ताः ॥ ५ ॥ ६ ॥

तत्कर्मसिद्धये तद्व्रतफलदानाय ॥ ७ ॥

नीपं कदम्बविशेषं बालैः सह सत्वरमारुह्य परिहासं परिहासवाक्यमाह ॥ ८ ॥ ९ ॥

---

भाषा टीका।

ऐसे मन्त्र को जपती भई वे कुमारी पूजा करत भईं या प्रकार कृष्ण में चित्तलगाय के वे कुमारी महीना तांई व्रत करत भई और प्रतिदिन याई रीति सों भद्रकाली की पूजा करती रही और मन में या प्रकार को मनोरथ करती कि, नन्द के पुत्र हमारे पति होय ॥ ५ ॥

ऐसे प्रातः काल घडेई भोर उठ के अपने २ नामलेके मानुस में परस्पर हाथ पकरिकें नित्य यमुनाजी के स्नान करवे को जाती भईंवडे ऊंचे स्वर सों गावत भईं ॥ ६ ॥

तासां वासांस्युपादाय नीपमारुह्य सत्वरः।
हसद्भिः प्रहसन् बालैः परिहासमुवाच ह ॥ ९ ॥
अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम्।
सत्यं ब्रुवाणि नो नर्म यद्यूयं व्रतकर्शिताः ॥ १० ॥
न मयोदितपूर्वं वा अनृतं तदिमे विदुः।
एकैकशः प्रतीच्छध्वं सहैवोत सुमध्यमाः ! ॥ ११ ॥
तस्य तत्क्ष्वेलितं दृष्ट्वा गोप्यः प्रेमपरिप्लुताः।
व्रीडिताः प्रेक्ष्य चान्योन्यं जातहासा न निर्ययुः ॥ १२ ॥

भाषा टीका।

एक दिन वाई रीति सों यमुना पै जाय के तीर पै अपने वस्त्रन कूं धरि कें कृष्ण कूं गावती मई आनन्द सों जल में विहार करत भई ॥ ७ ॥

योगीश्वरन के ईश्वर श्रीकृष्ण भगवान् या बात कू जानि के अपने अन्तःकरण रूप दाम, सुदाम, वसुदाम, किंकिणि जिन को नाम ऐसे छोटे २ चार सखान को साथ लेके उन गोपकन्यान के व्रत की सिद्धि के तांई आवत भये ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

नीपं कदम्बम् बालैः सह ॥ ९ ॥

हे अबलाः ! नो नर्म न परिहासः यस्माद्यूयं व्रतश्रान्ताः ॥ १० ॥

एकैकशो वा आगत्य स्वीकुरुत सहैव वा न तत्रास्माकमाग्रह इत्यर्थः ॥ ११ ॥

क्ष्वेलितमुत परिहासः प्रेमपरिप्लुताः प्रेमरसनिमग्नाः ॥१२।१३॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

बालैः सह सत्वरं भीत इव त्वरायुक्तं परस्परं तूष्णीमासाद्य तासां वासांसि प्रयोजनविशेषाय उपादेयत्वेन गृहीत्वा नीपमारुह्य च स्वैरः सन् तैरेव हसद्भिः सह स्वयं च प्रहसन् तेन च हासेन कृतानुसन्धानाः सप्रणयेर्ष्यं ज्ञात्वैवाज्ञात्वेव वायुधायाः प्रति परिहासमिति कथं शीतलजले चिरं बत कम्पमानास्तिष्ठथ उत्थायार्द्रं परित्यज्य शुष्कमेव वासः परिधीयतामिति तदेवं कर्म तर्हि भवानेव भवानिवेति न्यायेन नायुकमिथ्यादिमिथः सम्वादपुरस्सरं सनर्मवाक्यमित्यर्थः। ह स्फुटमेवोवाचेत्यर्थः। बालैरिति तत्क्ष्वेलनार्थं पुरैव प्रौढानां सन्निकटसम्बन्धिनाञ्च परित्यागेन बालकैरेव सखिभिः ततो नायम् ॥ ९ ॥

परिहासोक्तिमेवाह—अत्रेति द्वाभ्याम्। अत्रागत्येति निर्भरस्वदृष्टिविषयं दर्शयति अत्रैव वस्त्रपदे पर्याप्तिरिति व्याजेन कामं यथेष्टं प्रकर्षेण गृह्यतामिति झटित्यागमनाय ताः प्रोत्साहयति तथा स्वस्यौदासीन्येन चौर्येऽप्यौदासीन्यमत्र चेमानि केनचित् चोरेणापहृत्यापहृत्य कदम्बेऽस्मिन् गोप्यमानानि मया दूरात् दृष्ट्वा समागतमिति सूचयति—स्वंस्वमिति। सर्वाभिरेवागत्य निजं निजं गृह्यतां नत्वेकया द्वित्राभिः कतिभिश्चिद्वा सर्वासामेव गृहीतव्यं कदाचिद्युष्मासु कपटयुवतीभिः परिवर्त्तितापीति भावः गूढो भावस्त्वन्य एवोह्यः। ननु, तवोक्तौ न प्रतीमस्तत्राह, सत्यमिति। ब्रुवाणीत्यार्षं ब्रवाणीत्यर्थः ब्रवाणीत्येव क्वचित्पाठः ननु, नर्मणा मिथ्यापि ब्रूयाः तत्राह, न नर्मेति। नन्वेतदपि तव नर्मैवेत्याशङ्क्याह—हे अबलाः ! यद्यूयमिति अबलासु तादृशावस्थापन्नासु तत्रापि व्रतकृशासु तपस्विनीषु नर्मणोऽत्यन्तायोग्यत्वादिति भावः। अनेन च स्वयं न चोरितं किन्त्वन्येनैवेति व्यज्य पुनरौदासीन्यव्यञ्जकनर्मणा तासां मनः क्षोभयति अधुना किं कर्त्तुं शक्नुथेति भीतिदर्शननर्मणा सान्त्वयति च यद्वा, यदि नर्म न भवति तर्ह्यस्मदीयानि कथं गृहीतवानिति चेत्तत्राह, अबलाः यूयमबलाः तत्रापि व्रतकृशाः अतो यद्यत्र दुष्टो नरो वानरो वा आगत्य क्रीडारसपराणामनवहितानामंशुकान्याददात् तदा मम राजपुत्रत्वात् महती लज्जा स्यादित्यभिप्रेत्य गृहीतानि तानि ननु नर्मणार्थमिति भावः ॥ १० ॥

ननु, सप्रहासोक्तेरसत्यतैवावगम्यते, तत्राह—नेति। उदितपूर्वं पूर्वपूर्वम् उक्तं यत् तदनृतं मिथ्या नैव भवति। यद्वा, अनृतं न मया उदितपूर्वं कदाचिदप्यनृतं पूर्वं नोदितमित्यर्थः। तच्च इमे मम सहचरा विदुः एषामेव मदीयाशेषवृत्तिज्ञानात्। ननु, त्वद्वयस्या अपि त्वत्सदृशा एवेति चेत्तत्राह—एकैकश आगत्य स्वीयं वस्त्रं गृह्णीत यदि पूर्वपूर्वस्यामन्यथा स्यात्तदैव उत्तरोत्तराभिर्मद्वचनं मिथ्या मत्वा नागन्तव्यमिति भावः। अहो प्रथमोत्थाने सर्वासामसम्मतिः स्यात् उत्थितानां च कस्याश्चिदन्यासां क्रमघटनादुर्घटा स्यादिति किमेवं विलम्बाचरणेन वा मम वचसि मनसि च कापि वक्रता नास्त्येवेति बोधयन् पक्षान्तरमाह, सहेति। उत वाशब्दार्थे हे सुमध्यमाः ! इति कृशमध्यानां युष्माकं शीताम्भसि चिरमूर्द्ध्वस्थितिर्मां कृपयतीति भावः। युष्माकं मध्यभागादिसौन्दर्यमेव द्रष्टुमिष्यते न च वस्त्रैरेतैर्मत्प्रयोजनमिति तु निगूढो भावः ॥ ११ ॥

प्रेमपरिप्लुता इति गोपीविशेषणत्वेन स्वभावत एव प्रेम-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

विशेषवत्यः सम्प्रति तु तत् क्ष्वेलितं परिहासोक्तिं दृष्ट्वा ज्ञात्वा अधिकप्रेमरसे निमग्ना इत्यर्थः तत्र च जातिस्वभावेन व्रीडिताः व्रीडया हर्षेण चान्योन्यं प्रेक्ष्य जातहासाश्च सत्यो न निर्ययुः ॥१२॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्ष्वेलितं क्रीडितम् ॥ १२—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तासां वासांसि गृहीत्वा सत्वरं नीपं कदम्बमारुह्य हसद्भिः बालैः सहितः प्रहसन् परिहासवाक्यमुवाच ॥ ९ ॥

तदेव दर्शयति—अत्रेति । हे अबलाः ! इदं सत्यमेव ब्रवाणि नो नर्म न परिहासं यद्यस्माद्यूयं व्रतेन कर्शिताः श्रान्ताः ॥ १० ॥

स्ववचनप्रामाण्यं ससाक्षिकमाह—नेति । मयाऽनृतं नोदितपूर्वं नोक्तपूर्वं कदापि मयाऽनृतं नोक्तमित्यर्थः । तदनृतस्यानुक्तपूर्वत्वम् इमे गोपा विदुः अतो हे सुमध्यमाः ! एकैकशो वाऽऽगत्य स्वी-कुरुत सह वा नास्माकमाग्रहः ॥ ११ ॥

एवं कृष्णस्य क्ष्वेलितं परिहासं दृष्ट्वा प्रेम्णा परितो व्याप्ताः अन्योन्यं प्रेक्ष्य व्रीडिताश्च हसन्त्यो न निर्ययुः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नीपमर्जुनं परितो हासो यस्मिन् तद्वचनं परिहासम् ॥ ९ ॥ १० ॥ ११ ॥

क्ष्वेलितं सिंहनादितं परिहासेनोदितं वा न निर्ययुः जलादिति शेषः ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवान् स्वस्य तासां च मध्ये यदन्तरास्थितं तद्वस्त्रमिति तानि हृतवानित्याह—तासां वासांसीति । उपादाय स्वसमीपे नीत्वा स्वान्तःस्थितजगतो महतोऽप्याच्छादनार्थं नैराच्छाद्य सत्वरं भगवान् नीपमारूढः नीपः कदम्बः अन्यथाऽन्तःस्थितेष्वाच्छादितेषु दैत्यप्रवेशः स्यात् वैष्णवा वनस्पतय इति न प्रवेशः अत एव सत्वरं यथा भवति तथा आरोहणं तासामावरणमन्यत्र । स्थापितमित्यर्थः नितरां ई कामं पिबतीति नीपः पातीति वा अनेन तासु कामः स्थापित एव अन्यथा निष्कामा भवेयुः कामरक्षकश्चेद्भगवता समारूढो नातःपरं निष्कामता तत्रस्थानां शङ्कनीया किञ्च हसद्भिर्बालैः सह प्रहसन् तासां सहजं कामं दूरीकृत्य स्वस्याधिदैविकं कामं प्रहसन् रूपं तत्र योजितवान् बालाः पुनर्भगवच्चातुर्यं शौर्यं च दृष्ट्वा स्वकृतार्थतां परिज्ञाय हसन्तो जाताः सन्तोषेण यतो बाला वस्त्रकार्यार्थमेव तत्र नीताः अत एव पुनस्तेषु ज्ञानशक्तिं दास्यति तेषामपि माया आधिदैविकी तत्र प्रविष्टेति प्रथमाकारणे अनागमनम् एवं कृत्वा परिहासं परितो हास्यं यथा भवति तथा सर्वतोऽभिमाननिवृत्त्यर्थमुवाच भगवान् सर्वेश्वरः कथमेवं वदतीत्याश्चर्यमाह, इति ॥ ९ ॥

भगवतो वाक्यमाह—अत्रागत्येति । अस्मदीयः कामः तत्र न गच्छति अतोऽत्रैवागत्य कामं वासः आच्छादकं वस्त्ररूपं काममयत्वात् यथेच्छमिति लोकप्रसिद्धिः सर्वस्यैव कामस्य आधिदैविकमत्र तिष्ठतीति अतो वस्त्रसम्बन्धात् पूर्वं निष्कामा एव ताः पुनरपि पूर्वकामवत् वस्त्रवद्धाहरणे ग्रहणं व्यर्थमित्याशङ्क्याह, प्रकर्षेण गृह्णतामिति दाने प्रयोजनमबला इति बलमस्मादेव भवतीति अत एव निरिन्द्रियाः स्त्रियः अबला इत्युच्यन्ते बहुव्रीहावपि निमित्ततायां स्वार्थं कामदानं वस्त्रदानं च अन्यथा मर्यादाभङ्गः स्यात् वासोऽपि मयि स्थितं प्रगृह्णतामिति ध्वनिः अस्मदीयाभिरेव वा पूर्वपरिग्रहः कर्तव्यः इति अन्यथा अनिष्टः स्यात् बालकानां मायया च व्याप्ता इति स्ववाक्ये अप्रामाण्यं ज्ञास्यन्तीत्यत आह—सत्यं ब्रुवाणीति सत्यं वदामीत्यर्थः । अनेन स्त्रीष्वनृतं वक्तव्यमिति निराकृतं नन्वनृतं न भवति हास्यसि परं नग्नदर्शनेनोपहासार्थं वदसीत्याशङ्क्याह—नो नर्मेति । नर्म नो भवति यद्यपि लोकदृष्ट्या नर्मवद्भाति तथापि वस्तुतो न नर्मयुक्तिमप्याह, नर्मत्वे यद्यस्माद्यूयं व्रतेन कर्षिताः न हि व्रतिभिः सह नर्म उचितं नापि क्लिष्टैः अन्यथा नर्म वैरजनकम् भवेत् ॥ १० ॥

किञ्च अस्मत्स्वरूपविचारेणापि नानृतमेतद्भवतीत्याह—न मयोदितपूर्वमिति । चेत्यनादरे समुच्चयार्थे च मया वा कदाचिदप्युदितपूर्वमनृतं भवति उदितम् उक्तं पूर्वमुदितपूर्वं मया वा जगत्कर्त्रा हेतुना उदितः पूर्वः स्वजातीयो यस्य मत्तः कादाचित्कमप्यनृतं नोत्पन्नमिति वै निश्चयेन वा तत्रैते आधिदैविका ऋषयः साक्षिणः अत इमे विदुः त्यक्ताधिदैविकत्वात् तन्मायामोहितत्वाच्च परं भवतीनां सन्देहः आगमने प्रकारमाह, एकैकशः प्रतीच्छध्वमिति एकैकशः एकैका समागत्य स्वंस्वं वस्त्रं परिगृह्णातु तदा प्रत्येकं भोगः अथवा सर्वा निर्मत्सराः अत्यन्तं भक्ताश्चेत् तदा सहैव वा उत अपि अयं पक्षः साधीयान् नन्वकर्तव्यं भगवान् कथमुपदिशतीत्याशङ्क्याह—सुमध्यमा इति । शोभनं मध्यमस्थानं यासां सुमध्यमा इति शुद्धान्तःकरणाः सर्वबन्धसिद्ध्यर्थं च पूर्णज्ञानदृष्ट्या दृष्टाः सर्वतो भद्रा भवन्तीति ॥ ११ ॥

एवं भगवतोक्ता अपि नागता इत्याह—तस्येति । तस्य निरोधकर्तुः भगवतः तत्प्रसिद्धं क्ष्वेलितं दृष्ट्वा अनेन वाक्यार्थो न विचारितः । किञ्च, तस्य तमवसरं दृष्ट्वा तस्य क्ष्वेलितत्वं निश्चित्य रसमध्ये स्वप्रवेशं मत्वा गोप्यो विशेषविचाररहिताः केवलं प्रेम्णा परिप्लुता जाताः प्रथमतः स्नेहेनैव निमग्नाः ततो जातान्तःसम्बन्धाः बहिः सम्वेदने जाते व्रीडिता जाताः तदा प्रत्यक्षतो भुक्त्वा इवात्मानं मन्यमानाः सम्वादार्थमन्योन्यप्रेक्षणं कृतवत्यः तदा अन्योन्यसम्बन्धसम्वेदनाभावात् कौतुकं तद्रसं विदित्वा जातहासा जाताः लोकरीत्यापि जातहासाः तदा न निर्ययुः न निर्गता ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हसद्भिर्बालैरित्यतिबाल्यानिष्कारणहास्यवद्भिस्तैः सह प्रकर्षेण हसन्निति हास्यशब्देनैव ताः स्वमवधापयन्निति भावः परिहासमिति भो व्रजबालिकाः अत्र कदम्बशाखास्वेतानि वस्त्राणि केन निबद्धय स्थापितानि यूयं किं जानीथ न वा ? मयातु गाश्चारयता दूरादेव दृष्ट्वा किमयमस्माकीनः कदम्बोऽद्य विचित्रवासांस्येव पुष्पफलानि दधारेत्याश्चर्यदर्शनोल्लसितेन द्रुतमागत्यारुह्यतेति । ननु, भो अस्मदीयान्येवैतानि वासांसि मैवं तर्हि कथमेतावदुच्चकदम्बशाखामारूढानि, ननु भोस्त्वयैव चोरयित्वा आरोहितानि सत्यं सत्यमेतावन्तमपि परिवादं दातुं वलं धत्थ नन्दस्य राज्ञः पुत्रोऽहं चौरस्तदद्य यूयं मथुरास्थस्य कंसराजस्य पार्श्वे यियासथेत्यनुमीयते, ननु भो माक्रुध्य वस्त्राण्येव निभाल्य विचारय किमेतानि स्त्रीवस्त्राणि पुंवस्त्राणि वा सत्यमयि धीमत्यो निभालितान्येतानि स्त्रीवस्त्राण्येव तत् किं जगत्यस्मिन् यूयमेव स्त्रियः स्थः अन्याः स्त्रियो न सन्ति ननु भोः सन्त्येव किन्त्वत्र निर्जने वने अस्मान् व्रजबाला विना काः स्वधन्या आयान्ति अयि रहः सञ्चारिण्यः किमत्रत्य एव रहसि खेलन्ति नान्याः, ननु भो अन्यथा विद्वन् वयं खेलितुमत्र नैवागच्छामः किन्तु कदम्बदेवतां दुर्गां पूजयितुं किं भोः दुर्गां पूजिका यूयमेव नान्याः सत्यं नान्या एव, अयि मुग्धाः प्रतिनिशीथमेव वैमानिकीभिर्देवीभिरागत्य दुर्गादेवी पूज्यते ननु भोः पूजयन्तु नाम देव्यो वस्त्राणि त्यक्त्वा ताः कथंगताः अयि बालाः ! तत्त्वं न जानीथ अद्य रजन्यां पुनःपूजयिष्यन्तीभिस्ताभिः स्नात्वा परिधातुं रक्षितानि भोः कृष्ण त्वमेव तत्त्वं न जानासि अद्य दिन एव पूजयिष्यन्तीभिरस्माभिरेव स्नात्वा परिधातुं वनदेवता द्वारा उच्चशाखोपरि वस्त्राणि रक्षितानीति ॥ ९ ॥

इत्यद्दोक्तं स्पष्टं परिहासमाह—अत्रेति । सत्यं युष्माकमेवैतानि वस्त्राणि चेत् कामं यथेष्टमेवात्रागत्य स्वं स्वं परिचित्य मत्प्रत्ययार्थं शपथं कृत्वा धनरक्षकाय मह्यं पारितोषिकमेकैकं हारं दत्वा वासो गृह्यतां स्वं स्वमिति सर्वाभिरेवागत्य नग्ने-कया द्वित्राभिर्वा आगत्य नग्नत्रोभवतीनां स्त्रीणामधिकग्रहणस्यापि सम्भविष्णुत्वात्. ननु, गन्तुं न शक्नुमस्तत्र सहासमाह—हे अबलाः ! मन्ये व्रतकाद्दर्यादेवात्रागन्तुं न शक्नुथेति भावः । यद्वा तर्हि न दास्यामि प्रबलस्यं मम किं कर्तुं शक्नुथेति भावः । ननु कपटिनस्तवोक्तौ न प्रतमिस्तत्राह सत्यं तथ्यमेव ब्रुवाणी सार्थे ब्रवाण्यस्त्यपि क्वचित्पाठः यद्वा, सत्यं शपथं कृत्वा ब्रवीमि "सत्यं शपथतथ्ययोः"इत्यमरः । ननु नर्म यतो व्रतेन कृशीकृता यूयं तपस्विनीषु युष्मासु दयाभक्तिश्च धर्मभयं चोत्पद्यत इति भावः ॥ १० ॥

ननु, मिथ्यावादिनस्तव शपथेपि न विश्वसिम इति तत्र सरसनादंशमाह—नेति । उदितपूर्वमिति सुपसुपेति समासः अनृतं न पूर्वमुदितमिति एतज्जन्मनि एतावद्वयःपर्यन्तं तु अनृतं न परिचिनोमि अत्र किं प्रमाणमिति चेदिमे बाला एव बालानां यथा दृष्टग्राहित्वस्वभावादार्जवाच्चेति भावः । ननु दूरतोऽत्र जले वस्त्राणि क्षिप्यन्तां बालद्वारा वा दीयन्तां तत्र हन्त हन्त एतानि युष्मदीयान्यन्यदीयानि वा मया ज्ञातुमशक्यानि कथं दीयन्ताम् अस्मद्विधैर्धार्मिकैः परद्रव्याणि नखाग्रेणापि न स्पृश्यन्ते तस्मात् यूयमत्रागत्य प्रतीच्छत स्वं स्वं परिचित्य गृह्णीत यतः पारक्यं वस्तु न गृह्णामि न ददामि नापि स्पृशामीति मम नियमः । ननु, त्वया धृष्टेन करिष्यमाणाद्विडम्बनाद्भीत्यैव कुलकुमार्यो वयं त्वत्समीपं न यामस्तत्राह—एकैकश इति प्रथमं युष्माकमन्यतरा काचिदिहागच्छतु तस्यामविडम्बितायां सत्यामन्या अन्या अप्यायान्तु सहैवोतेति युगपद्बह्वीनामागमने स्त्रीणां विडम्बनासम्भवाच्चेति भावः । हे सुमध्यमाः ! इति शिरांसि खलु तमाङ्गशब्देनोच्यन्ते तान्यतिसुन्दराणि भवत्यः कृपया मां यदि दर्शयन्त्येव तदा मध्यमाङ्गान्यपि सुन्दराणि मां दर्शयितुं का लज्जेति भावः ॥ ११ ॥

क्ष्वेलितं रहस्यपरिहासं दृष्ट्वा प्रेमपरिप्लुता इति मन्यामहे इममेकं कान्तं सुखयति तु अस्माकमहन्ताश्पदान्यनुरूपाणि किं भविष्यन्तीति मनोनुलापानन्देन मग्ना बहिस्त्वन्योन्यं प्रेक्ष्यापीडिता इत्ययि कमलेक्षणे त्वामाहृयत्ययं तथा हि मयि सुधामुखि-त्वमेव याहि सुधां पाययन्तीत्यन्योन्यं जातहासाः परिजह्नुरेव ननु निर्ययुः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकैकशो वाऽऽगत्य प्रतीच्छध्वं स्वीकुरुत ॥ १० ॥

क्ष्वेलितं परिहासं दृष्ट्वा प्रेमपरिप्लुताः प्रेम्णा परितो व्याप्ताः ॥ ११ ॥

नर्मणा तत्क्ष्वेलितेनाक्षिप्तानि गृहीतानि चेतांसि यासां ताः ॥ १२ ॥

---

भाषा टीका ।

और आप कैं वडी जल्दीसों उनके वस्त्रन कुं लेकर के एक कदम्ब के वृक्ष पै चढ़ि कैं हँसिबे वारे बालकन सहित आप भी परिहास के वचन बोलवे लगे ॥ ९ ॥

श्रीकृष्ण बोले, कि–हे अबला हो ! अर्थात् अब तुमारो कछु बल नहीं चल सके है प्यारिओ ! अब तुम सब या जगै आय के अपने २ वस्त्रन कूं ले जाओ हम सांची बात कहैं हैं, कछु हंसी की बात नहीं है, क्यों कि–तुम सों हंसी कैसे करेंगे तुम तौ बिचारी व्रत सों कृशित होय रही हो ॥ १० ॥

और मैंने आज ताईं कबऊ झूंठ बोली नहीं सो इन बालन कूं ये मेरे सखा जाने, हैं तासों अब तुमारी राजी होय तौ एक एक निकस के ले जाओ । अथवा हे सुन्दर-कटिवारी हो ! तुमारे मनमे आवै तौ एक साथ सिगरी निकस कैं ले जाओ कैसेई लेओ अपन कूं देनोई है ॥ ११ ॥

श्रीयमुनाजी में निमग्न तौ हीं पर ताऊ में प्रेम में डूबी भईं जो गोपी हैं सो कृष्ण की या प्रकार ठठोली की बानें सुन कैं लज्जित होय कैं परस्पर में देख भाव कैं हँसिबे लगीं परञ्च निकसी नहीं ॥ १२ ॥

---

एवं ब्रुवति गोविन्दे नर्मणाऽऽक्षिप्तचेतसः ।
आकण्ठमग्नाः शीतोदे वेपमानास्तमब्रुवन् ॥ १३ ॥
माऽनयं भोः कृथास्त्वां तु नन्दगोपसुतं प्रियम् ।
जानीमोऽङ्ग ! व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥ १४ ॥
श्यामसुन्दर ! ते दास्यः करवाम तवोदितम् ।
देहि वासांसि धर्मज्ञ ! नो चेद्राज्ञे ब्रुवामहे ॥ १५ ॥

श्रीभगवानुवाच ।

भवत्यो यदि मे दास्यो मयोक्तं वा करिष्यथ ।
अत्रागत्य स्ववासांसि प्रतीच्छन्तु शुचिस्मिताः ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र मुग्धा ऊचुः—अङ्ग ! भोः कृष्ण ! अनयमन्यायं मा कृथाः ॥ १४ ॥

प्रौढा ऊचुः—नो चेद्राज्ञे नन्दाय कंसाय वा ब्रुवामहे ब्रवाम हे कृष्णेति ॥ १५—१६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं ब्रुवतीति पुनः पुनस्तथैव नानाप्रकारं वदतीत्यर्थः । गां वाचं निजवश्यतया विन्दतीति गोविन्दस्तस्मिन्निति परमवाग्मिता अभिप्रेता नर्मोक्षिप्तचेतस्त्वेनैवाब्रुवन् अन्यथा नावदिष्यन्नित्यर्थः । किञ्च, वेपमानाः तत्र हेतुः लज्जया शीतोदकेऽप्याकण्ठमग्नाः ॥ १३ ॥

आदौ साम्नाऽऽहुः—मेति । प्रागेव माशब्दनिर्देशो व्यग्रतया अनयाऽकरणादार्ढ्यार्थे वा भो इति अङ्गेति च संप्रमार्थिसम्बोधने अत एव द्विरुक्तिः नन्दगोपस्य सुतं जानीम इति त्वं गोपकुमारः वयञ्च गोपकन्यका इति अस्मात् प्रत्येतादृशमन्याय्यं कर्त्तुं नार्हसि श्लेषेण नन्दयति व्रजमिति नन्दो यो गोपः व्रजराजस्तस्य सुतमिति प्रजास्वस्मासु युवराजस्य तव न्याय एवोचितः नतु स्वपितृप्रतिकूलं दुःखदानादिकर्मेति । यद्वा, नन्दस्य गोपं सुतमिति सर्वव्रजजनार्जीव्यरक्षकस्य तव विरुद्धाचरणं न युक्तमिति भावः । अत एव तन्नामग्रहणं संरम्भस्यौदासीन्यस्य च व्यञ्जनाय तच्च स्वभावव्यक्तौ लज्जया तत्र च प्रियं प्रिय इति जानीमः अतोऽस्माकमप्रियाचरणमन्याय्यमेवेति भावः । किञ्च व्रजे व्रजमध्ये व्रजेन वा श्लाघ्यं च जानीमः अतो व्रजनिन्द्यैतत्कर्माचरणमयुक्तमेवेति भावः । दाने हेतुः वेपिता वयं यद्वा वेपिताः प्रति इति कृपां जनयन्ति ॥ १४ ॥

अधुना दानं प्रदर्शयन्ति—श्यामेति । दास्यः स्याम भवेमेति चिरत्सुखसम्मतः पाठः एवं दास्येनात्मसमर्पणादिकमेव दानमूल्यं तत्रापि तवोदितं करवामेति विशेषोक्तिर्भावविशेषं व्यञ्जयति, श्यामेति तावव्यादिः कश्चित् तत्र दास्यः स्म इति योज्यं किन्तु भगवान् पृथगेवानुवादं करिष्यति अधुना भेदं प्रयुञ्जते धर्मज्ञेत्यादिना अन्यथा नग्नस्त्रीसंदर्शनेन परस्वहरणादिना चाधर्मतो भयमिति भावः । अदृष्टात्तस्य भयमनालोच्य दृष्टभयमुत्पादयन्ति नोचेदिति इति द्विविधो भेदः राज्ञे गोपराजाय श्लेषेण नन्दगोपसुतम् अर्थात् तस्यैव प्रियमिति प्रियत्वेन न त्वं किञ्चिद्वक्तव्यमुचितोऽसि तथा अङ्गेरेव व्रजे श्लाघ्यं ननु गुणैः धर्मज्ञेति सोल्लुण्ठोक्त्या धर्मपरित्याग इति अत्र तस्य तत् क्ष्वेलितमित्यारभ्यैतत्पर्यन्तेन किल किञ्चिताख्योऽनुभावोऽनुसन्धेयः यथोक्तम्—

"गर्वाभिलाषरुदितस्मितासूयाभयक्रुधाम् ।
सङ्करीकरणं हर्षादुच्यते किलकिञ्चितम्" ॥

इति ॥ १५ ॥

तासां तथाङ्गीकारेणैव पराजयं करोति भवत्य इति आदरव्यञ्जकभवच्छब्दप्रयोगश्चायं प्रोत्साहनार्थं स्वशब्देन च निजपरिधानमवश्यमाशुगृहीतुमुपयुज्यत इति भावः । हे शुचिस्मिताः ! इति इंहशेन शुद्धस्मितेनावगम्यते शीतादिदुःखं नास्ति वेपनं च कपटेनैवेति । यद्वा, शुचिस्मिताः सत्यः प्रतीच्छत मुखस्थानो च सत्यो न दास्याम इति भावः नोचेदित्यर्द्धं क्वाचित्कं न प्रवाच्ये प्रकर्षेण न दास्यामीति यदि वा किञ्चिद्दद्यां तदा खण्डशो विदार्य्यं किञ्चित् किञ्चिदेव काञ्चित्प्रत्येव दास्यामीति सूच्यते राजा गोपराजः क्रुद्धोऽपि सन् किं करिष्यति अपि तु न किञ्चिदेवेत्यर्थः । पुत्रे मयि स्नेहविशेषात् इत्युक्त्वा कानिचित्तासां वस्त्राणि स्वस्यासनानि कृत्वा कानिचित् शरणं रचयित्वा कानिचिद्ध्वजपताकावितानादितयानीय शाखोपशाखादिषु बद्ध्वा कानिचिद्दोलां रचयित्वा दोलयन् कानिचिदितस्ततो रचितवानित्यूह्यं स्कन्धे निधायेति विचित्रैकत्र निधानस्य वक्ष्यमाणत्वात् ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनयमिति पदं वेपिताः कम्पिताः वयं जानीम इत्यन्वयः ॥ १४—१८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोविन्दे एवं ब्रुवति सति नर्मणा परिहासेनाक्षिप्तं गृहीतं चेतो यासां ताः शीतोदके आकण्ठमग्नाः अत एव कम्पमानाः कृष्णमब्रुवन् ॥ १३ ॥

किमब्रुवन्नित्यपेक्षायां सामादिचतुर्विधोपायपूर्वकं भगवज्ज्ञानसम्पन्नं गोप्युक्तमाह—द्वाभ्याम् । भोः कृष्ण ! अनयमन्यायं मा कृथाः त्वां नन्दराजस्य सुतमत एव तस्य प्रियं च जानीमः नन्दराजोऽपि प्रेम्णा त्वामनयकारिणमपि न शिक्षयतीति भावः । नवनीतचौर्यादिषु चौर्ये प्रसिद्धमचेत्यभिप्रायेण विशिंषन्ति, श्लाघ्यमिति । यद्वा, अस्मदनुष्ठितव्रतेन नन्दराजसुतं त्वां श्लाघ्यं प्रियं भविष्यन्तं जानीम एव किन्त्वधुनैवानयं मा कृथाः वयं तु शीतोदकवेपिताः अतो वासांसि प्रयच्छ ॥ १४ ॥

हे श्यामसुन्दर ! ते तव दास्यो वयं तवोदितं त्वयोक्तमन्यत् किञ्चित्करवाम शानगर्भामिदं निरतिशयरम्यसौन्दर्यादिभिस्त्वद्दास्यः स्मः त्वदभिप्रेतं करवामैवेत्यभिप्रायः । हे धर्मज्ञ ! अनेनैकान्ते नग्नस्त्रीदर्शनाकरणरूपधर्मज्ञ ! स्त्रीणां लज्जाख्यभावरूपधर्मं जानातीति तथेति वा वासांसि प्रयच्छ मुग्धभावादनुपपन्नमपि त्रासयन्त्य इवाहुः नोचेद्वा प्रयच्छसि चेद्राज्ञे नन्दाय कंसाय वा ब्रुवामहे ॥ १५ ॥

एवमुक्तो भगवान् यदुक्तं "नोचेद्राज्ञे ब्रुवामहे" इति तदिदमनुपपन्नं नहि जलान्निर्गत्य वासांसि गृहीत्वैव लज्जन्तीनां राज्ञे ब्रुवामहे इत्युक्तिरुपपन्ना नग्नानां राजसन्निधौ गमनासम्भवाच्च न चान्यप्रेषणया निवेदनसम्भवः प्रेषणीयजनस्याप्यभावादिति तदुक्तेरुत्तरं न देयमेवेत्यभिप्रेत्य "ते दास्यः करवाम तवोदितम्" इत्यस्योत्तरमाह—भवत्य इति । हे शुचिस्मिताः ! नहि स्वामिनोक्तं किञ्चिदेव स्वसम्मतं दासीभिः कर्तव्यमिति नियमः किन्तु सर्वमपि तदभिमतं कर्तव्यमिति भावः ॥ १६ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नर्मणा गर्हितस्नेहविनोदवचनेन ॥ १३ ॥
शीतजले स्थित्या वेपिताः वयम् ॥ १४ ॥
ते तव दास्यः स्याम भवाम राज्ञे नन्दगोपाय ॥१५॥१६॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जलाद्बहिः भगवांस्तासामन्तर्भावं दृष्ट्वा पुनः पूर्ववदेवाह, तदा पुनः एवं ब्रुवति भगवति सति नर्मणा परिहासवचनेनापातत एव प्रतीतेन हास्यरसजनकेनाक्षिप्तचेतस एव भूत्वा अर्थमविचार्य बहिर्निर्गते भगवान् कोपं करिष्यतीति निर्लज्जा इति वा ज्ञास्यतीत्याकण्ठमग्ना जाताः यथा न कोऽप्यवयवो दृष्टो भवतीति ततो लौकिकरसभयाभ्यामाविष्टचित्ता जाताः बहिः सम्वेदनत्वात् शीतोदे वेपमाना जाताः ततो देहमावृत्य दृढत्वे विस्मृतपूर्वभावाः साक्षिभिश्च व्यामोहिताः तं भगवन्तं प्रति किञ्चिदब्रुवन् ॥ १३ ॥

तासां वाक्यमाह—माऽनयं भोः कृथा इति । मर्तृत्वात्र नामग्रहणं भो इति सम्बोधनं बालकत्वात्तुल्यधर्मश्च नयो न्यायः अन्यायं मा कार्षीः वयमद्यापि कुलस्त्रियः पुरुषान्तरदृष्ट्या न दृष्टाङ्गाः अतः साम्प्रतं बालानां दृष्ट्या न द्रष्टव्याः त्वदाज्ञया न वागन्तव्यं तथासति यद्यपीश्वरवाक्यकरणे नाधर्मः तथाप्यन्यायो भवति, नीतिलोकविरुद्धमित्यर्थः । नैवं मन्तव्यं मामेता न जानन्तीति तथा सत्यविचार्य करणादेता एव दुष्टा इति तत्राहुः, त्वान्तु जानीम इति परमार्थतो ज्ञानमस्माकं हितकारि न भवतीति तुशब्दस्तं पक्षं व्यावर्तयति किन्तु नन्दगोपस्य सुतं जानीमः तेन प्रभुपुत्रत्वमुक्तं न हि प्रभुपुत्रः प्रनीतिं करोति, किञ्चास्माकं प्रियो भवान् परमप्रीतिविषयः अनेन त्वद्दृष्ट्या न द्रष्टव्या इति नास्माकमभिप्रायः अङ्गेति सम्बोधनं च स्वस्याङ्गतां ज्ञापयति अथवा प्रियं सुतं जानीम इति सम्बन्धः प्रभोः प्रियः पुत्रो हि न कश्चन गणयति अतिलालनवशात्तेनानयमपि कदाचिच्छिक्षयतीति तं मा कृथा इति हृद्युच्छलद्रसाब्धिवीचिरूपा सहासवक्रोक्तिः नन्वस्त्वन्याय इति चेत् तत्राहुः, व्रजश्लाघ्यमिति । व्रजे सर्वत्र भवानेव श्लाघ्यः एवं सत्यपकीर्तिः स्यात् केपाञ्चिदिमे स्त्रियो धर्षयतीति केपाञ्चिन्न्यूनं प्रदर्शयतीति अतः कारणात् निर्गमनात् पूर्वमेव वासांसि देहि दयार्थमाहुः वेपिता इति ॥ १४ ॥

दण्डभयवक्त्री कुर्वन्ति । श्यामसुन्दर ! ते दास्य इति सुन्दरेति सम्बोधनात् न प्रतारणा अतुल्यत्वात् स्त्रीत्वं परित्यज्य दासीत्वमाहुः तेन तु त्वम्मस्वामिन एतेषां वा ननु, दर्शनाकाङ्क्षा दास्येन निवर्तत इति चेत्तत्राहुः, करवाम तवोदितमिति । दास्य एव वयं कस्यामि केवलः तत्करिष्याम इत्यर्थः । अनस्तवैतत्कथनम् । इदानीमुक्तन्तु बहूनां वाक्यमित्यभिप्रायः तर्हि दास्योऽपि भवतेति चेत्तत्राहुः, देहि वासांसीति । दासीत्वसिद्ध्यर्थं वा, किञ्च धर्मशास्त्रे—

"कन्यायोषि पशुक्रीडां नग्नस्त्रीं प्रकटस्तनीम् ।
उन्मत्तं पतितं क्रुद्धं यन्त्रस्थं नावलोकयेत्" ॥ इति

नग्नाया दर्शननिषेधात्तत्त्वमाहुः, धर्मज्ञेति । एवमप्यत्राने मतिक्लेशे सति निर्गता अप्यनिर्गता वा बहुकालमपि कष्टमनुभूय पश्चाद्राज्ञे ब्रुवामहे नन्दं ज्ञापयिष्यामः नवविधा वा नवपदैरुक्ताः राजसराजस्यावचनं माऽनयम्भोः कृथा इति राजसतामस्या वा राजसराजस्या नन्दगोपसुतमिति प्रियमिति राजससात्त्विक्याः व्रजश्लाघ्यमिति सात्त्विकराजस्याः वेपिता इति सात्त्विकसात्त्विक्याः श्यामसुन्दर ! ते दास्य इति सात्त्विकतामस्याः करवाम तवोदितमिति तामससात्त्विक्याः धर्मज्ञेति तामसराजस्याः अतिरिक्तं शिष्टायाः इति ॥ १५ ॥

एवं तासां वचनानि श्रुत्वा दैविकमोहिता इति तद्वचनमाद्य स्वेच्छयापि तथा जाता इति लौकिकयुक्त्या ताः प्रबोधयति, स्वभावस्य इति । यद्यस्माद्वाक्यानुसारेण न प्रवृत्तिः तदा स्वभवत्य इति । यद्यस्माद्वाक्यानुसारेण वा प्रवृत्तिरस्तु भवतीनामपि स्वात्मानं प्रति वाक्यवाक्यानुसारेण वा प्रवृत्तिरस्तु भवतीनामपि स्वात्मानं प्रति वाक्य-

वाक्यानुसारेण वा प्रवृत्तिरस्तु भवतीनामपि स्वात्मानं प्रति वाक्यं वयं श्यामसुन्दर ते दास्यः करवाम तवोदितमिति दासीत्वे दास्ये दास्ये लोके नौचित्यं भावनीयं स्वस्यैव चेदाज्ञा कर्तव्यं तर्ह्यागत्य स्ववासांसि प्रतीच्छन्तु उभयोरपि वाक्याकरणे असत्याभिनिवेशापाताद एव दासीत्वे ईश्वरसुखमेव कर्तव्यं न तासां काचिन्मर्यादा अतोऽस्यदर्शनमपि न दोषाय मनांसि निष्ठेषा वाक्यकरणे तु वाङ्निष्ठा अन्यथा देहनिष्ठा तथासति

❀ (नोचेन्नाहं प्रदास्ये किं क्रुद्धो राजा करिष्यति ।)
ततो जलाशयात्सर्वा दारिकाः शीतवेपिताः ।
पाणिभ्यां योनिमाच्छाद्य प्रोत्तेरुः शीतकर्शिताः ॥ १७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नाशः पार्ति मे कुर्विति प्रभौ पतिरश्रस्य प्रार्थितन्वात्स्नस्य आर्यत्वमाभिमतम् ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं नानाप्रकारं नर्म ब्रुवति सति गोविन्दे ता नर्ममधुरवाचो विन्दतीति तस्मिन् नथेदं नर्म भोः स्वङ्गनाक्षयः ! यदि यूयं नागच्छत तदा एतैरेव वासोभिः शाखानिबद्धैर्हिन्दोलिकामुपधानादिकं च विरचय्य मया शय्यते रात्रावद्य कृतजागरं मां निद्राभरप्रत्यायति भो गोपाल ! तत्र गावः तृणलोभेन गह्वरं प्रविष्टास्ततस्ताः परावर्तयितुं द्रुतमितो याहि भो गोपबालाः ! द्रुतमितो गृहकृत्यार्थं व्रजं व्रजत पित्रादिगुरुजनान् मा ममङ्गसमभ्यूहयथ भोः पिच्छचूड ! वयमितो मासं व्याप्य गृहं न यामः पित्रादिगुरुजनादेशेनैव कात्यायन्या व्रतं समाप्य मासमात्रमुदवासव्रतं कुर्मः भोः तपस्विन्यः ! अहमपि युष्मद्दर्शनप्रभावादुद्भूतगृहवासवैराग्यः सम्प्रति मासं व्याप्य अत्रैव नभावासव्रतं चिकीर्षामि यदि चानुकम्पध्वे तदारिवतोऽवरुह्य युष्माभिः सममुदवासव्रतमेव कर्तुं प्रयामीति नर्मणा आक्षिप्तचेतसः शङ्कया तत्राऽप्यधिकजले आकण्ठमग्नाः वेपमानाः शीतेन शङ्कितदर्शोत्सुकथादिभिश्च ॥ १३ ॥

प्रथमं मःस्ता आहुः—अनयमन्यायं मा कृथाः । ननु, मुग्धाः यूयं मां नैव परिचिनुथ यतो मय्यप्यनीतिकलङ्कं दातुं न शङ्कध्वे तत्राहुः—स्वन्नियति अन्यान् व्रजस्थानपि न जानीम एव त्वां त्वामिप्रसिद्धं नन्दराजस्य सुतं जानीम एव "गोपांभूपेपि दृश्यते" इत्यभिधानात् तत्रापि व्रजस्थमात्रस्यापि श्लाघ्यं तत्रापि प्रियं ननु, भो निर्बुद्धयः ! यद्यहं राज्ञः पुत्रस्तर्हि कथं मय्यनीतिः राजपुत्रा अपि कचिदनीतिमन्त इति चेत् कथमहं व्रजश्लाघ्यः प्रियश्च तह्यनीतिमत्सु श्लाघा प्रीतिर्वा सम्भवेदिति भावः । ननु, सत्यं स्त्रियो वयं वक्तुमनभिज्ञास्तस्मात् कृपयैवापराधं क्षान्त्वा वासांसि देहि वेपिता वयमिति कृपां जनयन्ति ॥ १४ ॥

पुनरपि साम्नैवाहुः—श्याम दास्यो भवामेति दन्त्यसकारपाठश्चेत्सुखसम्पतः श्यामेति तालव्यशकारपाठे दास्यः सत्यस्तवोक्तं करवामेति राज्ञि त्वयि प्रजानामस्माकं दास्यं समुचितमेवेति भावः । वस्तुतस्तु तन्निर्पर्यैव स्वात्मानमर्पयामासुः सुन्दरस्य तवास्माभिर्यद्दास्यं सम्भवेत्तत्र तवोक्तं करवामेति काश्चित्प्रखराभेदं प्रयुञ्जते हे धर्मज्ञेति स्त्रीधनहरणात्तवाधर्मो भावीति भावः । तस्याधर्मोद्भवमनालोच्य इष्टं भयं दर्शयन्ति नोचेद्राज्ञे इति द्विविधो भेदः राज्ञे नन्दाय कंसाय वा ॥ १५ ॥

तासां वचोभिरेव ताः पराजित्य निर्वचनीकुर्वन्नाह—भवत्य इति । प्रथममेतेनैव भवतीनां सत्यं परीक्ष सत्यात् प्रत्युताऽभवत्भवतीभ्यो नैव प्रदास्ये इति भावः । शुचिस्मिताः सत्य इति यद्यत्र धर्मपरीक्षायां मुखम्लानिः स्यात्तदापि नैव दास्ये इति भावः । वस्तुतस्तु शुचिःश्रृङ्गारस्तन्मयस्मिता इति स्वस्मिन्नुद्भूतं भावं ज्ञापयति । किञ्च, मयि प्रवक्ते सत्येव वः कार्यसाधकं ननु भेद इत्याह नोचेदिति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्रानुनयकोविदा आहुः—भोः अङ्ग ! नन्दगोपसुतं स्वज्ञातिप्रधानस्य श्रीनन्दगोपस्य सुतं व्रजश्लाघ्यञ्च किं बहुना प्रियं च त्वां जानीमः सर्वथा त्वय्यादरणीये स्नेहबद्धा वयमिति भावः । तुशब्दो अन्ययोगव्यवच्छेदार्थः त्वदन्यं कमपि न जानीम इत्यर्थः । अत आहुः अनयमनुचितं हास्यादिकं मा कृथाः ॥ १३ ॥

ताश्चात्यतिस्निग्धाः आहुः—श्यामसुन्दरेति । नो चेत् राज्ञे गोपराजाय श्रीनन्दाय ब्रुवामहे इत्यतिस्नेहगर्भं वाक्यम् ॥ १४ ॥

अनुनयकोविदाभिरनुनीतो ऽतिस्नेहयुक्ताभिः प्रार्थितस्तासां स्वानन्यकिङ्करीत्वं प्रकटीकारयितुमाह भगवान्—भवन्त्य इति ॥ १५ ॥

तत आज्ञापनानन्तरं दारिकाः कुमारिकाः उत्तेरुर्निर्गताः ॥ १६ ॥

---

भाषा टीका ।

या प्रकार श्रीकृष्णचन्द्र की कही बाते सुनिके हरण होय गये है वस्त्र और चित्त जिनके ऐसी सरमीली गोपी ठपढे यमुनाजी के जलमें कण्ठताई डूब रहीं जाडे के मारे कांपत कांपत श्रीकृष्णचन्द्र से बोलत भई ॥ १३ ॥

गोपी बोलीं, कि–हे कृष्णचन्द्र ! अनीती मत करो व्रज में श्लाघ्य नन्दगोपके पुत्र हम सबन के प्यारे हो तुमको हम सब जानतीहैं जाडे के मारे कम्पित होरही हैं हम सबन कूं कृपा करिके वस्त्र देऊ ॥ १४ ॥

हे श्यामसुन्दर ! हमसब तुम्हारी दासी हैं जो आज्ञा करोगे सोई हमसब करेंगी हे धर्म के जाननवारे ! हमारे वस्त्र देऊ नहीं तो राजा नन्द अथवा कंससे हमसब जाय कहेंगी ॥ १५ ॥

श्रीभगवानुवाच ।

भगवान् श्रीकृष्णचन्द्र कहे हैं, कि—जो तुम सब मेरी दासी हो और मेरो कह्यो करोगी तो हे सुन्दर मुसक्यानवारीओ ! यहां आयकें अपने २ वस्त्र ले जाओ ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रोत्तेरुर्निर्गताः ॥ १७ ॥

❀ अर्द्धोयमधिकः पठ्यते० विज० तोषणी ।

भगवानाहता वीक्ष्य शुद्धभावप्रसादितः ।
स्कन्धे निधाय वासांसि प्रीतः प्रोवाच सस्मितम् ॥ १८ ॥
यूयं विवस्त्रा यदपो धृतव्रताः व्यगाहतैतत्तदु देवहेलनम् ।
बध्वाऽञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः कृत्वा नमोऽधो वसनं प्रगृह्यताम् ॥ १९ ॥
* ( इत्येतद्वचनं श्रुत्वा धर्मयुक्तं महात्मनः ।
एकेन पाणिना नेमुरेकेनाच्छाद्य चाङ्गनाः ॥ ० ॥
ता वीक्ष्योवाच भगवान् भूयो धर्म्यमिदं वचः ।
एकेन पाणिना यो वै प्रणमेद्देवमच्युतम् ।
तस्य दण्डः करच्छेद इति वेदविदो विदुः ॥ ० ॥
तस्मादुभाभ्यां पाणिभ्यां प्रणमेत् स्वामिनं नरः ।
तथा च यूयं कुरुत तन्मे प्रियतरं भवेत् ) ॥ ० ॥
इत्यच्युतेनाभिहितं व्रजावला मत्वा विवस्त्राप्लवनं व्रतच्युतिम् ।
तत्पूर्तिकामास्तदशेषकर्मणां साक्षात्कृतं नेमुरवद्यमृग्यतः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आहताः ईषदुन्नतयोनीर्वीक्ष्य ॥ १८ ॥

धृतव्रताः सत्यो विवस्त्रा अपो व्यगाहतास्सु स्नाता इति यत्देतत् उ एव देवहेलनमपराध एवेत्यर्थः । व्रतवैगुण्यभीतानां प्रायश्चित्तमिवाह अस्यांहसः पापस्य निवृत्तये मूर्ध्न्यञ्जलिं बद्ध्वाऽधो नमः प्रणामं कृत्वेति ॥ १९ ॥

इति दोषत्वेनाच्युतेनाभिहितं विवस्त्राप्लवनं व्रतस्य च्युतिहेतुं मत्वा तस्य पूर्तिकामास्तदशेषकर्मणां तस्य व्रतस्यान्येषामशेषकर्मणाञ्च साक्षात्कृतं फलभूतं तमेव नेमुः स एवावद्यमृक् पापमार्जकः ॥ २० ॥ २१ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तं तदाभदं दृष्ट्वेत्यर्थः । दारिका बालाः शीतेनैव वेपिताः कम्पितदेहा अपि पाणिभ्यामाच्छाद्य वेपनं च सात्त्विकमेव प्रेमस्वभावजं प्रोत्तरणे हेतुः शीतेन कशीकृताहीनवत्त्वमापादिता इत्यर्थः ॥ १७ ॥

शुद्धेन भावेन प्रेम्णा प्रसादितः पूर्वत एव अधुना च आहताः हन्तेर्गत्यर्थत्वादागता वीक्ष्य प्रीतः सन् वासांसि सर्वासामेवावचित्य वृक्षस्य स्कन्धे निधाय प्रकर्षेण शिक्षणार्थमिव न्यायप्रदर्शनेनोवाच सस्मितमिति तासां चिरं तथा स्थापनेऽपि वक्ष्यमाणेऽपि नर्मसंस्पर्शात् नन्वाहता इत्यत्रागता इत्यर्थो न युक्तः अप्रयुक्तत्वात् उच्यते काव्यकूपवर्त्तिनामिदं मतं नतु वेदादिशब्दमहोदधिवर्त्तिनां यथाह महाभाष्ये "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या अनेकधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदा वाकोवाक्यमितिहासपुराणानि वैद्यकमित्येतावत् शब्दप्रयोगमनिशम्याप्रयुक्ताः शब्दाः" इति वचनं केवलं साहसमित्यादिकोपकारमतेष्वाह—ना इत्यस्यान्यार्थो घटते यथा विश्वप्रकाशे "आहतं गुणितेऽपि स्यात्ताडितेऽप्यानकेऽपि च" इति गुणितत्वं चात्र द्वित्रादिगुणतया पूर्वस्मात् अस्य शोरिकादेर्वा सङ्कुचीकरणं तद्वदत्रापि वस्त्रातः स्वयमात्मसु तादृशीकरणमिति किञ्च आहतशब्दस्य व्याख्यायां श्रीस्वामी आहतमुद्धोपितमिति आह, अत्र च तासां विख्यातत्वं गम्यते तच्च तासां तथा वीक्षणे चमत्कारातिशयद्योतकमित्यलमेतया कल्पनया ॥ १८ ॥

ननु, बाल्ये न दोष इति चेत्तत्राह—धृतव्रता इति । यदेतदिति । साक्षान्मयाऽनुभूतत्वादत्र प्रतारणं न किञ्चित् सम्भवेदिति भावः । देवस्य जलाधिष्ठातुर्वरुणस्य नारायणस्य वा हेलनमवज्ञा अञ्जलिं बद्ध्वा तं च मूर्ध्नि नत्वाभ्यन्तेति मिथाभिप्रायं ततश्च नमः कृत्वेत्युक्ते एकपाणिना नमनोद्यमालक्ष्य एकहस्तप्रणामश्चेत्यादिवचनपाठेनाञ्जलिं बद्ध्वेति तत्रापि पाञ्जलिबन्धनमभिप्रेत्य मूर्ध्नीत्युक्तमित्यूह्यम् अधो वसनं परिधानवस्त्रमेव उत्तरीयवस्त्रं च तथापि न प्राप्तव्यमेवेत्यर्थः ॥ १९ ॥

अच्युतेनेति कदाचित् कथञ्चिदपि तद्वाक्यस्य सत्याच्च्युतिर्नास्तीति तासामभिप्रायः सूचितः यतो व्रजस्य अबलाः स्त्रियः तत्र च अबलाशब्देन कथञ्चिदपि तद्वाक्यमस्वंतुमशक्ता इत्यर्थः । प्रेमवशत्वादिति भावः । मत्वेति वस्तुतो दैन्याचारणादयाचार-

* इत्याधिकः पठ्यते वीरस०विज०।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्राप्तत्वेनावोधात् अत एव प्रलब्धा इति वक्ष्यते साक्षात्कृतं पतिरूपं फलं तद्रूपत्वाद्देवावद्यमृगितित्तु तासामभिप्रायः ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देवहेलनं देवस्यापराधः अञ्जलिं बध्वेति शुकफरबन्दं कृत्वा ॥ १९ ॥

साक्षात्कृच्छब्दो द्वितीया साक्षात्कृतमिति साक्षात्कर्त्तारम भगवद्यमृग्यतः अवद्यमार्जनायनियताः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

स्वाम्यभिमतकरणं दासीनामुचितमेवेत्यभिप्रेत्य शीतेन कम्पिताः कुमारिकाः कालिन्दीह्रदात् प्रोत्तरुर्निर्जग्मुः ॥ १७ ॥

ततो भगवानाहताः ईषदव्यक्तयोनीर्वादययौवनसन्धिस्थाः ताः कुमारिकाः अवलोक्य शुद्धभावेन निष्कपटभावेन ययोक्तानतिक्रमशीलेन भावेन हेतुना प्रसादितः प्रसादोऽत्रानुग्रहः अस्य सञ्जात इति तथा अनुग्रहयुक्तः स्कन्धे वृक्षशाखायां वासांसि निधायारोप्य प्रीतः सस्मितश्च पुनरुवाच ॥ १८ ॥

तदेवाह—यूयमिति । धृतव्रताः सत्यो विवस्त्रा यूयमपो व्यगाहत अप्सु स्नाता इति यत्तदेतद्देवहेलनमुत अपराध एवेत्यर्थः व्रतवैगुण्यभीतानां प्रायश्चित्तविधानमाह—अस्यांहसः पापस्य अपनुत्तये अपनोदाय मूर्ध्नि अञ्जलिं बध्वा नमस्कृत्य वसनं प्रगृह्णताम् ॥ १९ ॥

इत्थमच्युतेनाभिहिताः अङ्गनाः एकेन वामेन पाणिना योनिमाच्छाद्य इतरेण पाणिना नेमुः ॥ ० ॥

पुनरपि भगवांस्ता वीक्ष्येदं वक्ष्यमाणं धर्म्यं धर्मादनपेतं वाक्यमाह ; तदेवाह—एकेनेति सार्द्धेन । एकेन पाणिना नेमुरित्यादिसार्द्धश्लोकद्वयं क्वचिन्न दृश्यते । तस्मादिति । हस्तद्वयसम्पुटस्यैवाञ्जलिशब्दार्थत्वादिति भावः ॥ ० ॥ ० ॥

इत्थमच्युतेनाभिहिताः व्रजकुमारिकाः विवस्त्रस्नानप्रयुक्तां व्रतच्युतिं व्रतभ्रंशं मत्वा तस्य व्रतस्य पूर्त्तिमवैगुण्यं कामयमानास्तस्य व्रतस्यान्येषां कर्मणाञ्च साक्षात्कर्त्तारमच्युतं नेमुः हस्तद्वयेन मूर्ध्न्यञ्जलिं बध्वा नेमुरित्यर्थः । कुतः ? यतः केवलमशेषकर्मणां न साक्षात्कृद्देवापितु अवद्यमुक् अवद्यं कर्मवैगुण्यऽऽपादकं पापं तस्मान्मोचयतीति तथा ययर्थगर्भोऽत्र मुचिः अतः प्रणेमुरित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दारिकाः कुमार्यः ॥ १७ ॥

मुग्धभावेन मधुरस्वभावेन प्रसादितः प्रसादं गमितः ॥ १८ ॥

यूयं वस्त्रहीना अपो जलं व्यगाहतेति यत्तदेतद् उ तापकारणं देवहेलनं देवतापराधः अतस्तस्यांहसः अपराधस्य परिहाराय " उ तापेऽव्ययमीशे च " इति यादवः ॥ १९ ॥

विवस्त्राप्लवनं दिगम्बरस्नानं व्रतच्युतिं नियमभ्रंशं तत्पूर्त्तिकामाः तस्य व्रतस्य पूर्णतां कामयमानाः तासामशेषकर्मणां साक्षात्कृतं साक्षीभूतं कृष्णं नेमुः । अनेन किं प्रयोजनमत्राह—अवद्यमिति । उज्झितुम् उन्मूलयितुम् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आहता आगताः यद्वा आहता शीतपीडिताः तथाच विश्वः "आहतं गुणितेऽपि स्यात्ताडितेऽप्यानकेऽपि च" इति ॥ १८ ॥

अधोवसनं परिधानवस्त्रमेव नत्वन्यदिति काठिन्यमिव ॥ १९ ॥

साक्षात्कृतं पतिरूपं फलं तद्रूपत्वाद्देवावद्यमृगिति तु तासामभिप्रायः ॥ २० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

पूर्वमित्यधुना यदीत्युक्तम् ईश्वरभावेन भगवतोक्तमिति वाक्यार्थापरिज्ञानेऽपि समागता इत्याह—तत इति । अज्ञानामाशयात् जडानामाशयात् अज्ञानामभिप्रायो न गन्तव्यमिति अज्ञानां मर्यादायां यतोऽशुद्धिसम्भावना तदपेक्षया भगवद्वाक्यनिष्ठा श्रेष्ठा सर्वा इति ईश्वरवाक्येन सर्वगुणतिरोभावः दारिका इति शुको बालत्वं ज्ञापयितुम् अन्यथा सदसो राज्ञश्च भावोऽन्यथा भवेदिति नन्वत्यन्ततामस्यः कथं वाक्यनिष्ठा जातास्तत्राह शीतवेपिता इति । बहिः कम्पः अन्तः शीतेन कर्शिताश्च स्वभावाधीना एवोत्थिताः अतो जातिवर्णिता परीक्षार्थं प्रमेयं निरूप्यमिति प्रकथने शुकस्य मूर्द्धा विपतेत् ॥ १७ ॥

ततो भगवान् भा सर्वतः अहताः न केनाप्यंशेन दृष्ट्वा वीक्ष्य अभिविष्टो सन्धिरापः अन्यार्थं सङ्गृहीता इतीयद्वगधा ज्ञानदृष्टिः सर्वत्र न व्याप्नोति अतस्त्याज्या इति मत्वापि शुद्धभावेन तासां शुद्धान्तःकरणेन प्रसादितो जाता ततः पुनः ज्ञानशक्तिमाविर्भाव्य वृक्षस्कन्धे वासांसि स्थापयित्वा तद्गवरणानि वैष्णवानि कृत्वा पश्चात्तासां निदानं श्रुत्वा स्वपमोहं कृत्वा स्मितसहितः अन्यथा मुक्ता एव भविष्यन्तीति प्रकर्षेण योवाच यथा वाक्यमङ्गीकुर्युः ॥ १८ ॥

भगवद्वाक्यमाह—यूयमिति । अप्स्वग्निर्देवताश्च तिष्ठन्ति अतो नाप्सु मूत्रपुरीषे कुर्यात् न निष्ठीवेत् न विवसनः स्नायात् गुह्यो वा "एषोऽग्निः पतत्याग्नेरनातिदाहाय" इति श्रुतेः । विवस्त्रस्नाने तत्र प्रतिष्ठिताग्निः देवताभ्यो वा व्रतादिसर्वनाशो भवेदिति तत्र प्रतिविधातव्यं भगवान् हि तत्कर्मसिद्धये समागत इति स्वतया फलदानात् कर्मसाद्गुण्यार्थमाह—यतो यूयं धृतव्रताः तथाभूता अपि विवस्त्रा यदपो व्यगाहत विशेषेण विलोडितवत्यः क्रीडया वस्त्राभावेन च हस्ताहस्ताभ्याम् एतदालोडनं तत्प्रसिद्धं देवहेलनं उ इति निश्चये एवं दोषं निरूप्य प्रायश्चित्तं विदधाति अञ्जलिं बध्वा मूर्ध्नि स्थापयित्वा अंहसः अपनुत्तये पापनाशाय नमः कृत्वा वो युष्माकमेतद्वसनं प्रगृह्णतामिति या क्रियाशक्तिः अभिमानरक्षार्थं स्थापिता सा अपराधनिवृत्तये योजनीया तत्रापि ज्ञानसहिता एतावतैव देवता तुष्यति क्रिया

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मूलस्यापि ज्ञानशक्तिव्याप्तेः एषैव प्रौढरूपा शक्तिरिति तद्विदः सा चेत् ज्ञानेन व्याप्ता फलं सिद्धं कृतार्थोऽपि भवति ॥ १९ ॥

ताः पुनः भगवदभिप्रायमपि ज्ञात्वोक्तादप्यधिकं कृतवत्य इत्याह—इत्यच्युतेनाभिहिता इति। केनाप्यंशेन च्युतिरहितेन पूर्णशक्तिमता अभिहिता उक्ता वचनद्वारा प्राप्तज्ञाना व्रजाबलाः स्वभावतश्चातुर्यादिदोषरहिताः विवस्त्राप्लवनं व्रतच्युतिं मत्वा हृदयेऽपि संवादं प्राप्य तत्पूर्तिकामाः न तु देवतापराधनिवृत्तिमात्रपराः तादृशेऽर्थे तस्य वा व्रतस्य अशेषकर्मणां च साक्षात्कृतं कर्मभिरयं साक्षात्फलरूपेण सम्पादितः फले जाते साधनन्यूनता व्यर्थेति फलदृष्टयः तादृशं भगवन्तं नेमुः भगवते नमस्कारं कृतवत्यः साष्टाङ्गप्रणाममिति केचित् तथा करणे हेतुः यत अवद्यमृक् अवद्यमार्जनं यतो नमस्कारात् भवति देवतापराधे शान्तेऽपि फलच्छिद्रस्य जातत्वात् फलं न भविष्यतीत्युभयमेकेन यथा भवेत् तथा कृतवत्यः। यद्वा, तस्य भगवतः पूर्तिकामा इत्यर्थः। न च व्रतच्युतिमिति पूर्वोक्तत्वेन तत्परामर्श एव तत्पदे नाकारीति वाच्यं व्रततदन्याशेषकर्मफलत्वेन भगवन्निरूपणवैयर्थ्यापत्तेः। किञ्च, दृढं प्रलब्धा इत्याद्यसूयाहेतूक्त्यनुपपत्तिः व्रतपूर्तिपक्षे तदर्थमेव सर्वमुक्तं भगवता कारितं चेदसूयाहेतुत्वाभावात्तेषां न हि स्वहितवाचा कृत्यावा तदारोपः सम्भवति प्रत्युत तद्वैपरीत्यमिति। ननु, व्रतच्युतिं मत्वा कथं तदुपेक्षां कृत्वा प्रियमेव नेमुस्तत्राहुः, तदशेषेति पूर्ववत् नचैवं व्रतच्युतिं मत्वेति कथनवैयर्थ्यमिति वाच्यं तत्कालीनभावप्रौढिनिरूपणार्थत्वात् अन्यथा विशेषणवैयर्थ्यापत्तिरित्युक्तमेव ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ततश्च अयि सख्यः लज्जयैव पराभूता वयमभूमैव यदि पुनरत्रापि विलम्बिष्यामहे एतन्मध्य एव कश्चिदन्यो मनुष्यश्चेदायाति तदा स्फुटमितोऽपि महाविडम्बनाम्बुधौ पतिष्यामः किञ्च, एतदङ्गस्पर्शप्राप्त्याशा महाबलवती दुर्वारा बभूव या लज्जयैव निमज्य मर्तुमपि न ददाति तदेतद्विधाऽस्माकं ललाटे लिखितमन्यथा न भवेदित्यतोऽस्य प्रियतमस्यैव हठं पुरस्कृत्य स्वहठं रसातले प्रस्थाप्य लज्जायै जलाञ्जलिं दत्त्वा नेत्राणि मुद्रयित्वा प्राप्तैरन्धकारैरेव स्वस्वशरीरावयवाच्छाद्य जलादस्मात्तटं गच्छाम इति मन्त्रयां मिथो दृढीकृत्य ताः कृष्णसमीपं जग्मुरित्याह, तत इति प्रोत्तेरुः निर्जग्मुः ॥ १७ ॥

भा सम्यक् प्रकारेणैव हता मृता इव वीक्ष्य कुलजानां मरणादप्यधिक दुःखो लज्जात्यागः सोऽपि मदनुरोधेनैवाभिः कृत इति मनसैवाधिगतो यः शुद्धो निरुपाधिर्मानः प्रेमा तेन प्रसादितः स्कन्धे निधायेति तासामङ्गसौरभ्यप्राप्तिलोभादेव अथ च भवतीनामधोवस्त्रावरणानि मया स्वस्कन्धे धार्यन्त इति तासु स्वप्रणय आदरश्च दर्शितः प्रकर्षेणोवाच सपरामर्शमुवाचेत्यर्थः। तत्रायं परामर्शः स्त्रीजातिमात्रेणापि दुष्करं कृत्यमाभिर्मत्प्रेमोपरोधेन कृतं किं चेतोऽप्यन्यदासामतिफल दुष्करं कृत्यमास्ति तदेताभिः शक्यमशक्यं चेति मत्प्रियवर्गप्रेष्याः सखीरियत्तां द्रष्टुं इति सस्मितमिति भोः स्वमुखेनैवाङ्गीकृतमद्दास्यं करवाम तवोदितमिति युष्मद्वचनस्य परीक्षामधुनाहं करिष्ये ततो यद्युत्तीर्णा भवितुं शक्नुथ तदैव युष्मद्वसनानि मदीयात्ममनःप्राणशरीरैः सहितान्येव कृत्वा दास्यामीति भावः ॥१८॥

हन्त हन्त गूढोऽयमपराधो युष्माकं व्यक्तोऽभूदित्याह, यूयं विवस्त्राः सत्यो यदपो व्यगाहत व्यगाहध्वं तदेतद् उ एवार्थे देवस्य जलाधिष्ठातुर्वरुणस्य नारायणस्य वा हेलनमपराधः। ननु, देशाचारोऽयं विशेषतो बालानां नापराधस्तत्राह, धृतव्रता इति। अनुष्ठितस्यास्य व्रतस्य फलाभावस्त्वनद्यस्माकीति भीषयते हन्त हन्तैतादृशं विडम्बनमभूद्व्रतफलञ्च न भविष्यत्यतो मृता अपि वयं विशेषतः सुष्ठु मृतास्तदलं प्राणत्यागविलम्बेनेति मनोऽनुतापवतीः विशीर्णसर्वाङ्गीर्विवर्णा अतिविह्वला वीक्ष्य हन्तासां मा प्राणाः प्रयान्त्विति सद्य एवातिकृपया स्वयमेव तस्य प्रायश्चित्तं वदन् भोः कृष्णाङ्गः। मा भैष्टेत्याश्वासयति, वन्द्विति स्त्रियो हि यस्य दास्यो भवन्ति स एव तासां सर्वदेवमयो नारायण इति शास्त्रादेशात् "नारायणसमो गुणैः" इति गर्गादेशाच्च सम्प्रत्यहमेव युष्माकं नारायणस्तन्मदभिमुखे एव स्थिताः अंहसोऽपराधस्यापनुत्तये निवृत्तये नमःकृत्वाऽधोवसनम् अन्तरीयवस्त्रं गृह्णतां स्त्रीणामन्तरीयवासोभिः पुंसो मम प्रयोजनाभावात्तान्येव दास्यामि उत्तरीयाणि तु स्वस्यैवोत्तरीयाणि करिष्यामीति भावः। ततश्च शिरोभिरेव प्रणामे क्रियमाणे इंदो केवलशिरःप्रणामो गौण एवेत्युक्तम् एकपाणिना नमनोद्यममालक्ष्य एकहस्तप्रणामश्चेति वचनपाठेन प्रत्यवायं दर्शयित्वा अञ्जलिं ताः कारयामासेति तत्रापि अधोऽञ्जलिमभिप्रेत्य मूर्द्ध्नीत्युक्तमित्याहूनाम ॥ १९ ॥

ततश्च व्रतवैगुण्यं मा भवतु भवत्वस्माकं जातिकुलधर्मलज्जादिसर्वनाशोऽपीति निश्चयवतीभिस्ताभिर्यथा यथैव प्रेयान् प्राह तथैव कृतमित्याह—इति दोषत्वेन अच्युतेनाभिहितं विवस्त्राप्लवनं व्रतस्य च्युतिरिति मत्वा तस्य व्रतस्य पूर्तिकामास्तास्तदशेषकर्मणां तस्य व्रतस्यान्येषामशेषकर्मणां च साक्षात्कृतं साध्यफलस्वरूपमेव तं नेमुः सर्वफलस्वरूपे तस्मिन्नेव सन्तुष्टे किं फलमवशिष्टं स्यादिति भावः। ननु, फलप्राप्तिरप्यस्तु दोषोऽपि भविष्यतीत्यत आह, यतोऽच्युतादेव अवद्यमृक् सर्वदोषनिवृत्तिरित्यर्थः। नहि तत् प्रसादविषयीभूतानां प्रत्यवायादिलक्षणः कोऽपि दोष इति भावः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ताः आज्ञानुसारेण निर्गताः वीक्ष्य भगवानाह, भवतीनां गुणेन भावेन प्रसादितोऽस्मीति एवं प्रीतः सन् स्कन्धे नीपशाखायां वासांसि निधाय सस्मितं प्रोवाचेत्यन्वयः। यद्वा, "आहतं गुणितेऽपि स्यात्" इति विश्वप्रकाशादाहता गुणिताः सञ्जातभक्तिगुणाः वीक्ष्य प्रोवाचेत्यन्वयः ॥ १७ ॥

यूयं धृतव्रताः सत्यो विवस्त्राः यदपो व्यगाहत अप्सु स्नाता इति यत्तद्देवहेलनं देवापराधः अतः अस्यांहसः देवहेलनस्य अपनुत्तये निराकरणाय मूर्द्ध्न्यञ्जलिं बद्ध्वाऽधो नमः कृत्वा वसनं प्रगृह्यताम् ॥ १८ ॥

तास्तथाऽवनता दृष्ट्वा भगवान् देवकीसुतः ।
वासांसि ताभ्यः प्रायच्छत्करुणस्तेन तोषितः ॥ २१ ॥
दृढं प्रलब्धास्त्रपया च हापिताः प्रस्तोभिताः क्रीडनवच्च कारिताः ।
वस्त्राणि चैवापहृतान्यथाप्यमुं ता नाभ्यसूयन् प्रियसङ्गनिर्वृताः ॥ २२ ॥
परिधाय स्ववासांसि प्रेष्ठसङ्गमसज्जिताः ।
गृहीतचित्ता नो चेलुस्तस्मिँल्लज्जायितेक्षणाः ॥ २३ ॥
तासां विज्ञाय भगवान् स्वपादस्पर्शकाम्यया ।
धृतव्रतानां सङ्कल्पमाह दामोदरोऽबलाः !॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अच्युतेन प्रकृतिकालकर्मादिच्युतिरहितेन स्ववशेन सर्वेश्वरेण इतीत्थं देवहेलनहेतुत्वेनाभिहितं विवस्त्राप्लवनं व्रतच्युतिं व्रतस्य च्युतिहेतुं मत्वा तत्पूर्तिकामाः तस्य व्रतस्य पूर्णताकामा तदशेषकर्मणां तासाम् अशेषाणां ब्रह्मादिपिपीलिकापर्यन्तानां च यानि कर्माणि तेषां साक्षात्कृतं फलभूतं सर्वात्मानं तमेव श्रीकृष्णं नेमुः यतः स एव अवद्यमृक् दोषमार्जकः ॥ १९ ॥

तेन प्रणामेन ॥ २० ॥

भाषा टीका ।

इतनी बातें सुनि के शीतसे कम्पित व्रतकरके कर्षित सबरी कुमारिका हाथन तें अपनी २ योनि कूं ढंकि के जलके बाहिर निकसत भई ॥ १७ ॥

सुन्दर प्रेम तें प्रसन्न भये ऐसे भगवान् श्रीकृष्णचन्द्र अखण्ड कन्यापन जिनकी ऐसी कुमारिकान कूं देखिके उनके वस्त्रनकूं कन्धापर धरिके प्रसन्नता पूर्वक मुसिकाय के बोले ॥ १८ ॥

तुम सब यमुना जल में नंगी स्नान करिके जो व्रत करी यासों जल को देवता वरुणको अपराध भयो ताको दूरि करबे के लिये हाथ जोरि माथे पै लगाय के धरती में प्रणाम करिके अपनो २ वस्त्र लेजाय के पहिरो ॥ १९ ॥

जब श्रीकृष्णचन्द्र ने या प्रकार सबन तें कही तब नंगी स्नान करिबो अपराध जानि के सब व्रजबाला व्रत के खण्डन करनवारो मानि के ता व्रत के पूरण करिबे के लियें व्रत और सर्व फल देनवारे श्रीकृष्णचन्द्र जो हैं, तिनकूं नमस्कार करत भईं क्योंकि ? सब पापन के दूर करनवारे श्रीकृष्णचन्द्र ही हैं ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दृढमत्यर्थं प्रलब्धा वञ्चिता "यूयं विवस्त्राः" इत्यादिना त्रपया लज्जया हापितास्त्याजिता अत्रागत्य स्ववासांसीत्यग्रहेण प्रस्तोभिता उपहसिताः "सत्यं ब्रवाणि नो नर्म" इत्यादिना क्रीडनवत्कारिताश्च बद्धाञ्जलिमित्यादिप्रायश्चित्तच्छलेन ताः नाभ्यसूयन् दोषदृष्ट्या नापश्यन् ॥ २२ ॥

प्रेष्ठसङ्गमेन सज्जिता वशीकृता अतो गृहीतचित्ताः सत्यो नो चेलुः गृहीतचित्तत्वमेवाह—तस्मिन् कृष्णे लज्जायितेक्षणा लज्जाविलसितमीक्षणं यासां ता इत्यर्थः ॥ २३ ॥

दामोदर इति भक्तवात्सल्यं दर्शयति—अबलाः प्रति ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा तेन श्लोक्तेन प्रकारेण वासांसि सर्वाण्येव परिधानीयोत्तरीयादीनि प्रकर्षेण प्रेमसम्बोधनादिना नीपाग्रादवरूढः सन् इति ज्ञेयं यतः करुणः स्वत एव सर्वत्र दयालुः विशेषतश्च तेन तोषितः यद्दर्शनोत्कण्ठया नागरजनोचितभावाविर्भावेपि प्रकृतबाल्यचापल्यमिवेदमाविष्कृतं तेन तासामभिमानलज्जाच्छेदकरूपेण पूर्वानुरागजेन परमार्त्तिमयेन दशाविशेषेण लब्धमनोरथ इत्यर्थः । देवकीसुत इति श्रीपरीक्षितं प्रति मुनीन्द्रोक्तिः साहि तत्रोचिता श्रीकुन्तीप्रपौत्रस्य श्रीसुभद्रापौत्रस्य तस्य तद्रूपालम्बनत्वेनैव सुखविशेषात् तथैव भवतां प्रपितामहीति श्रीशुकोक्तिः तथैव च दशमारम्भे तत्प्रश्न इति तस्मात् योऽसौ भवतामालम्बनीभूतः सोपि यासां प्रेम्णैवं चपलीकृतस्तासां महिमा विचार्यतामिति भावः । एवमन्यत्रापि ज्ञेयम् ॥ २१ ॥

तेनेत्युक्तमेव विवृणोति—दृढमिति । क्रीडनं क्रीडोपकरणं यन्त्रपुत्रिकादि प्रियस्य तस्य सङ्गेन सङ्गस्यैव निर्वृताः । यद्वा, प्रियस्य सङ्गेन प्रत्युत निर्वृता बभूवुः अहो एतस्य गाढप्रेममाहात्म्यमिति भावः ॥ २२ ॥

स्ववासांसि निजवस्त्राणि तेन परिवर्त्य दत्तान्यपि परिचित्यान्योन्यस्वीयस्वीयान्येव परिधायेत्यर्थः । अन्यत्तैः यद्वा प्रेष्ठस्य श्रीकृष्णस्य सङ्गमेन सज्जिताः तस्मिन्नेवासक्तीकृताः अत आकृष्टभगवच्चित्ताः अत एव मिथो भावविशेषोदयेनाश्वासवाक्यप्रसादेन च सलज्जदृष्टयः सत्यस्तस्मिन् स्थाने कृष्णे वा चिरा न चेलुस्तत एवेत्यर्थः । पञ्चम्यर्थे वा सप्तमी । यद्वा, वासःपरिधानानन्तरं लज्जातिशयापगमे सति गृहीतचित्ता

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

उदितभावाः अत एव प्रेष्ठसङ्गमाय तदैव रहः पाणिग्रहणाय सज्जिताः सज्जा इव वर्त्तमाना अत एव तस्मिन् लज्जायितेक्षणाः सत्यो न चेलुः वजते वज्ज इति पचाद्यजन्तं लज्जायितेति क्यन्ताविष्टायां रूपं धिकृतास्पदोऽयमनुभावो ज्ञेयः यथोक्तम्—

"ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितम्।
व्यज्यते चेष्टयैवेदं विकृतं तद्विदुर्बुधाः॥"

इति॥ २३॥

सङ्कल्पं विधाय पूर्वोक्तभावाभिव्यक्त्या साक्षादनुभूय सङ्कल्पमेव दर्शयति, स्वस्य पादयोः स्पर्शः पतित्वेन भक्त्यात्यन्तसान्निध्यमित्यर्थः। यद्वा, स्पर्शः स्पर्शनं पतित्वेन तासु स्वसमर्पणं तत् स्वत्वोपपादनं तस्य काम्यया धृतं नियमेनानुष्ठितं रक्षितं वा व्रतं याभिस्तासां स्वपादस्पर्शेच्छामयं सङ्कल्पं तत्र पादस्पर्शशब्देन प्रेमविशेषेण पतित्वं सूचितं दामोदर इति दामोदरत्वमारभ्यैव तासु प्रेमवानित्यर्थः। अबलाः कन्यात्वादिना स्वातन्त्र्यहीनाः प्रति इत्यात्मैकसाध्याभीष्टत्वं वितर्क्य तासु तस्य तादृशी कृपा युक्तैवेति भावः॥ २४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

करुणः करुणावान्॥ २१—२५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ भगवांस्तदा प्रवनतास्ता दृष्ट्वा तेन प्रणामेन तोषितः तद्यथा करुणा इति पाठे करुणावांस्ताभ्यः कुमारिकाभ्यो वासांसि प्रददौ॥ २१॥

इत्थमिति। यद्यपीत्थं प्रलब्धा "यूयं विवस्त्राः" इत्यादिना अधिक्षिप्ताः त्रपया लज्जया हापिताः बध्वाञ्जलीन् इत्यादिना प्रायश्चित्तव्याजेन बन्धपाञ्चालिकावत्प्रवर्तिताः वासांसि चापहृतानि तथाप्यमूः कुमारिकाः तं कृष्णं नाभ्यसूयन् गुणेषु सत्स्वप्युक्तान् दोषानाविष्कृताः तत्र हेतुः निरतिशयप्रियस्य कृष्णस्य सङ्गेन निर्वृताः सुखिताः तत्सङ्गनिर्वृत्या विस्मृतदोषा इति भावः। नाभ्यसूयन्॥ २२॥

किन्तु, स्ववासांसि परिधाय धृत्वा प्रेष्ठस्य सङ्गमेन वशीकृताः अत एव तदपहृतचित्ता नोचेलुर्न चलितवत्यः, गृहीतचित्तत्वमेवाह—तस्मिन् कृष्णे लज्जायितं लज्जाविलसितम् ईक्षणं यासां ताः॥ २३॥

ततो भगवान् दामोदरः स्वपादस्पर्शकाम्यया स्वपादस्पर्शशब्देनात्र तत्परत्वेन स्वेन सह क्रीडा विवक्षिता तत्काम्यया धृतमनुष्ठितं व्रतं कात्यायन्यर्चनात्मकं याभिस्तासां सङ्कल्पमभिसन्धिविशेषं विधाय प्राह॥ २४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

करुणः दयाशीलः॥ २१॥

तासां कृष्णे भक्त्यतिशयं कथयति-इत्थमिति। प्रलब्धाः वञ्चितत्वकारिताः हापितास्त्याजिताः मुक्तलज्जाः कारिताः प्रस्तोभिताः चाटुवचनजालं प्रापिताः क्रीडनवद्दारुयन्त्रवत् अथापि तथापि अमुं कृष्णं प्रति गुणेषु दोषाविष्करणमसूया तत्र हेतुमाह, प्रियेति। प्रियेण कृष्णेन सह सङ्कथनलक्षणसङ्गेन निर्वृताः॥ २२॥

प्रेष्ठस्य कृष्णस्य सङ्गमे सज्जिताः सन्नद्धाः न उच्चेलुः स्थितप्रदेशादिति शेषः। लज्जया ईषन्निमीला प्रेषितानीक्षणानि यासां ताः यद्वा लज्जया इषितानि गतानीक्षणानि यासां तास्तथा "इषुगतौ" इति धातुः॥ २३॥

पादं शरीरं "उत्तमानां शरीरं तु पादशब्देन भण्यते" इति॥ २४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

देवकीसुत इति श्रीपरीक्षितं प्रति मुनीन्द्रोक्तिः मदाल्लस्वरूपात्तरूप्येण एवमन्यत्रापि द्रष्टम्॥ २१—२८॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदा भगवान् सन्तुष्टः प्रादादित्याह-तास्तथेति। यदि चातुर्येण अवनताः स्युः तदा असन्तुष्ट एव भवेत् परं तथा अवनताः न तु चातुर्यार्थम् अतस्तथा दृष्ट्वा तथा ज्ञाने हेतुर्भगवानिति प्रसादे हेतुर्देवकीसुत इति तदा वासांसि ताभ्यः प्रायच्छत् चतुर्थ्या सम्प्रदानादपूर्वदानं सूचितम् अत एवार्थविशेषेपि दाञ् दायोरत्र दाण एव प्रयोगः कृतोयतोऽस्य पूर्वरूपनिवृत्तिरपूर्वेच्छादेशेनापुनरूपपत्त्वमेवमत्रापि देवेषु केवलवस्त्रत्यनिवृत्तिमपूर्वभगवज्ज्ञानात्मकफामरूपताञ्च सम्पाद्य तानि दत्तवानिति ज्ञाप्यते अत एव प्रेष्ठसङ्गमसज्जने वस्त्रपरिधानमेव हेतुत्वेनोक्तं परिधाय स्ववासांसीति अत एव स्वपदमप्युक्तं नायिकानां प्रियविषयकोत्कटभावस्यैव स्वकीयत्वादन्यथा न घटेत् प्रयोजनाभावात् अयोग्यतासामेव प्रकर्षेण दत्तवान् यथा तासु पूर्वोक्तः कामः सिद्धो भवति अत एव जलक्रीडादिषु वस्त्रोत्तारणपरिधानेनापेक्षिते नन्वेवंविधवस्त्रदाने को हेतुस्तत्राह, करुण इति। परमकरुणया दुःखप्रहारेच्छा आनन्दाविर्भावनरूपा तासूत्पन्ना। ननु, तर्हि मुक्तिमेव दद्यात् कुतो वस्त्राणि दत्तवान् तत्राह तेन तोषित इति तेन मुग्धभावेन तोषित इति साष्टाङ्गनमस्कारेण तोषं प्रापितः मतलोपः सञ्जातः ततो ब्रह्मभूतानामेव तासां भगवता सह रमणमपि भविष्यति रक्षार्थमेव वस्त्रदानम् अनेनान्यादर्शनमपि सेत्स्यति॥ २१॥

ननु,ताः अनेकविधाः वस्त्रपरिधानानन्तरं पूर्ववासनया क्षिप्तेः दोषः कथं नोत्पन्न इत्याशङ्क्याह-इत्थं प्रलब्धा इति। लौकिकदृष्टिरासां जाता नवेति विचार्यते भगवद्वचने च विश्वासः भगवति च स्नेहः तस्य च परमात्मत्वं स्वस्य च दोषस्फूर्तिः तन्निवृत्तेरनन्योपायत्वं च अन्यथा सर्वथा निरभिमानानां पुनर्जिज्ञासा नोपपद्यते इत्थमत्यर्थं प्रलब्धाः यूयं विधेक्षायपदए इति "अत्रागत्य स्ववासांसि" इति वाक्यात् त्रपया च

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ह्रापिताः त्याजिताः लज्जा हि तासां सर्वस्वं दोषारोपो गुणाभावश्चोक्तः चकारादपत्रपया च ह्रापिताः त्याजिताः भवत्यो यदि मे दास्य इति तद्वाक्यमेव पुरस्कृत्य ता निर्जिता इति प्रस्तोभिताः स्तोभवाक्यं वृथावाक्यं प्रकर्षस्तदर्थापकारहेतुत्वम् अतः प्रस्तोभिताः मूर्ध्नि बध्वाञ्जलिमिति क्रीडनवच्च कारिताः यथा पाञ्चो यथैव कार्य्यन्ते तथा कारिताः तासां च पुनर्वस्त्राण्यपहृतान्येव एवं पञ्चविधदोषैरपि ता भगवन्तं नाभ्यसूयन् अभ्यसूयाहेतुर्दुःखं भवति तानि च वाक्यानि महाग्नौ जलमिव भगवता स्वरूपैश्वानन्दं प्रापितास्तु न तैर्दुःखमुत्पादयितुं शक्यं आनन्देनैव निर्वृताः भगवदीयैरप्याधिदैविकैर्वाक्यैर्नापकारः कर्तुं शक्यः तत्र हेतुः प्रियस्य भगवतः सङ्गेन वस्त्रद्वाराप्रियस्य सङ्गः तेन निर्वृताः प्रमेयबलेन प्रमायां दुर्बलं जातमित्यर्थः अनेन प्रावच्छादिति प्रशब्देन परिधापनमप्युक्तं करुणापदेन च तदानीन्तनोऽन्यो योग्योऽप्युपचारः सूचितः अतो निर्वृताः भगवति अस्मिन् दोषाभावात् दोषं नारोपितवत्यः ॥ २२ ॥

ततो यज्जातं तदाह—परिधायेति । स्वस्ववासांसि परिधाय प्रेष्ठस्य सङ्गमे तृतीयपुरुषार्थे सज्जिता जाताः रसाकरा जाता इत्यर्थः अन्यथा आश्रयभङ्गः क्षीणरसता वा स्यात् एवं देहव्यवस्था निरूपिता अन्तःकरणव्यवस्थामाह—गृहीतचित्ता इति । गृहीतं चित्तं याभिर्यासामिति वा सम्बन्धिनः कर्तुश्चापेक्षितत्वात् भगवतश्चित्तं ताभिर्गृहीतमित्यभिप्रायो ज्ञातः वस्त्रपरिधानेनैव भगवता च तासां चित्तमपहृतं तोषित इति एवं चित्तव्यतिषङ्गे अङ्कुरे उत्पन्ने ततः क्रियाशक्तिः कुण्ठिता जातेत्याह नोचेलुरिति अन्यत्र ज्ञानशक्तिरपि कुण्ठितेति वक्तुं तस्मिन् रस एव तस्या विनियोगमाह, लज्जायितेक्षणाः लज्जां प्राप्तानि ईक्षणानि यासां भगवति लज्जयाऽर्पितानि वा पूर्वस्वदोषानुसन्धानादिति केचित् वस्तुतस्तु तदेयं भावदृष्टिः एवं तासां शरीरान्तःकरणेन्द्रियवृत्तय उक्ताः ॥ २३ ॥

तदा यदुचितं तद्भगवान् कृतवानित्याह—तासां विज्ञायेति । तासां सङ्कल्पं विज्ञाय आहेति सम्बन्धः भगवानिति सर्वसामर्थ्यमुक्तं तेन ज्ञात्वा यथोचितं तत्करिष्यतीति सिद्धम् उत्तरत्रा चोपरया च ज्ञानवानिति विशब्दार्थः तत्र विपर्ययनिर्द्धारमाह, न हिताः लौकिक्य इव विवाहार्थमागताः नापि भोगार्थं नापि लोकविरोधेन नापि ज्ञानार्थं किन्तु सर्वथा विचारेण भक्त्यर्थमागताः तदाह मत्पादस्पर्शकाम्ययेति स्वस्य भगवत एव तत्रापि भक्तिरेव भक्तावपि स्पर्श एव न तु भयशयादिसख्यपर्यन्ता तस्या एव कामना न केवलं कामनामात्रं तदर्थं देहेन्द्रियादीनामपि विनियोगं कृतवत्य इत्याह, धृतव्रतानामिति धृतं कात्यायन्यर्चनं व्रतं याभिः धारणेन व्रतनिवृत्तिर्निराक्रियते अन्यथा कृतव्रतानामित्येवोक्तं स्यात् सङ्कल्पो मानसो नियमः अनेन सर्वोऽपि सङ्गत एतासामुत्तमभक्त्यर्थमेवेति निश्चित्य पश्चादाह यथा भक्तिर्भवति तथोपायं नन्वेवं निर्बन्धकथने को हेतुस्तत्राह दामोदर इति अनेन गोपिकावश्यता निरूपिता यत्र तथा वश्यो जातः तत्रेत्थमपि वश्यो भविष्यतीति प्रथमतस्तासां सम्बोधनमाह, अबला इति रससम्बोधनमेतत् उभयोरन्योन्यवशत्वज्ञापकं भगवान् दामोदरः तास्ववशा इति ॥ २४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तीकृतसारार्थदर्शिनी ।

वासांसि सर्वाण्येव यतस्तेन प्रणामेन स्ववाञ्छितार्थसाधकेन तोषितः ॥ २१ ॥

तिरस्कुर्वतोऽपि स्वप्रियस्यानुकूल्यं ताभिः कृतमन्यैर्दुष्करत्वाद्विस्मयेनाभिनन्दति दृढमत्यर्थं प्रलब्धा वञ्चिता यूयं विवस्त्रा इत्यादिना त्रपया चावह्रापितास्त्याजिताः अत्रागत्य स्ववासांसीत्याग्रहेण प्रस्तोभिता उपहसिताः "सत्यं ब्रुवाणि नो नर्म" इत्यादिना क्रीडनं क्रीडोपकरणं यन्त्रपुत्रिकादि तद्वत् कारिताः कृताः वस्त्वाञ्जलिमित्यादि प्रायश्चित्तच्छलेन नाभ्यसूयन् दोषदृष्ट्या नापश्यन् प्रियस्य तथा कृतवतोऽपि सङ्गेन निर्वृताः प्रियत्वादेव प्रियकृतं दुःखप्रदानमपि सुखत्वेनैवानुभवन्त्य इति भावः ॥ २२ ॥

प्रेष्ठस्य सङ्गमेन सज्जितास्तस्मिन्नेवात्यधिकमासक्तीकृता यथा कृष्णेन तासां वसनानि गृहीतानि तथा गृहीतं तस्यापि चित्तं याभिस्ता इति परस्परप्रेमाश्रयत्वमुक्तम् अत्र भवत्येताः परमासक्ता इति कृष्णेन यथा ज्ञातं तथैव कात्यायनीप्रसादादस्मास्वपि अयमासक्त इति ताभिरप्यवगम्य तस्मिन् श्रीकृष्णे लज्जायितं प्राप्तम् ईक्षणं यासां तथाभूताः सत्यो भावोत्थजाड्यादेव न चेलुः याः खलु कृष्णेन निष्कासिता ताभिरपि तिरस्कृता तदङ्गेभ्यो निःसृत्य दूरं गताऽभूत् सा लज्जा पुनः परावृत्य यान्ती नयनेन कृततत्साहाय्येन कृष्णसमीपं नीयमाना कृष्णाल्लब्धातिप्रसादा पुनस्तासामङ्गेषु पूर्वतोऽप्यधिकमधिकारं प्राप्तेत्युत्प्रेक्षा ध्वनिता ॥ २३ ॥

भो रसिकशेखर ! अस्माभिर्व्रतफलं प्राप्तमेव यदसाधारणं विडम्बनं त्वया कृतं तेनापि प्राणा न निर्वापिताः प्रत्युत त्वदनुरोधेन सन्तोषिता एव । किञ्च, जलादस्मानुत्थाप्य नानाचातुर्यरुचा अस्मत्सर्वाङ्गानीक्षित्वा अस्मत् परिधानीयवासांसि स्वीयस्कन्धधृतानि कृत्वैवादभ्यं स्वमनोरथत्वेन सार्द्धं दत्तवता त्वया यत्किञ्चिदुक्तं तस्य च प्रत्युत्तरतयाऽस्माभिः सलज्जावलोकनमेव तुभ्यं दत्तम् अनेनास्माकं त्वदपराधो वा त्वत्प्रीणनं वेत्यजानतीरस्मान्मुग्धाः प्रतिपत्तेर्विवक्षितं तव खलु देवकावपात्राभिव्यक्तं ब्रूहि तत् श्रुत्वैव गृहं याम इति तत्र प्रत्युत्तरयिष्यतो भगवतः सर्वाभिव्यक्तत्वमेकेन ततस्तत् प्रत्युत्तरं चाह, त्रिभिः तासामिति ॥ २४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासां श्रीकृष्णेनासक्तिं दर्शयति—दृढमिति द्वाभ्याम् । यद्यपि दृढमत्यर्थं प्रलब्धाः अधिक्षिप्ताः यूयं विवस्त्रा इत्यादिना त्रपया लज्जया च ह्रापितास्त्याजिताः अत्रागत्य स्ववासांसीत्यादिना प्रस्तोभिता उपहासिताश्च "सत्यं ब्रुवाणि नो नर्म" इत्यादिना क्रीडनवत्कारिताश्च बद्धाञ्जलिमित्यादिप्रायश्चित्तव्याजेन वस्त्राणि चापहृतानि तथापि ताः कुमारिकाः अमुं श्रीकृष्णं नाभ्यसूयन् सर्वात्मानं सर्वलोकं सर्वदा स्वभावतोऽपास्तसमस्तदोषदृष्ट्या नापश्यमित्यर्थः । तत्र हेतुमाह प्रियसङ्गनिर्वृताः प्रियस्य निर्दोषतया प्रीतिविषयस्य स्वभक्तदोषनिराकरणार्थमधिक्षेपादिकर्तृत्वे प्रतीयमानस्य सङ्गेन निर्वृताः सुखिता इत्यर्थः । अस्मत्

सङ्कल्पो विदितः साध्व्यो ! भवतीनां मदर्चनम् ।
मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥ २५ ॥
न मय्यावेशितधियां कामः कामाय कल्पते ।
भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते ॥ २६ ॥
यातावला ! व्रजं सिद्धाः ! मयेमा रंस्यथ क्षपाः ।
यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ! ॥ २७ ॥
श्रीशुक उवाच ।
इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः ।
ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वभावानुसारेणास्मद्धितायैव पूर्णानन्दः सर्वदा स्वभावत एवावाप्तसमस्तदोषोयं चेष्टते इति विवेकेन श्रीकृष्णसङ्गजानन्दसमुद्रे निमग्ना बभूवुरिति भावः ॥ २१ ॥

परिधाप धृत्वा प्रेष्ठस्य श्रीकृष्णस्य सङ्गमेन सज्जिताः वशीकृताः गृहीतचित्ताः सख्यः नो चेलुः न चलितवत्यः तत्र समीपे एव लज्जायितं लज्जाविलसितमीक्षणं यासां ताः तस्थुरित्यर्थः ॥ २२ ॥

अबलाः प्रत्याह ॥ २३ ॥

हे साध्व्यः ! भवतीनां मदर्चनं मत्सेवनं मया सह रमणं प्रति वः सङ्कल्पः मनोरथः स लज्जया युष्माभिरकथितोपि मया विदितो ऽनुमोदितश्चातः सत्यो भवितुमर्हति ॥ २४ ॥

---

### भाषा टीका ।

देवकीके पुत्र श्रीकृष्णचन्द्र व्रजबालान की आधीनता देखिकें और उन के शुद्ध भाव सूं संतुष्ट होयके करुणा करि के वस्त्र देत भये ॥ २१ ॥

श्रीकृष्णचन्द्र ने व्रजबालान कों बहुत करिके ठगी लाज जिनकी छुटाई और हांसी भी करी खिलोना कीसी ठाडी करीं वस्त्रभी जिनके हरिलिये तथापि कुमारिका अपने परम प्रिय श्रीकृष्णके संग आनन्द मानिके काहु प्रकार की निन्दा नहीं करत भई ॥ २२ ॥

सगरी अपने २ वस्त्रपहिरकें परमप्रेष्ठ श्रीकृष्ण के सङ्ग ने वश करलीनो चित्त जिनको ऐसी व्रजकुमारिका श्रीकृष्णचन्द्रके ओर लज्जा पूर्वक देख करिकें अपने २ घर जाने को मन नहीं करत भई ॥ २३ ॥

तब श्रीकृष्णभगवान् अपने चरणारविन्द की स्पर्शकी चाहना करिके व्रत धारण करनवारी सबरी व्रजबालान कों कृपादृष्टी सों देखिकें बोले ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भोः साध्व्यो भवतीनां मदर्चनमेव सङ्कल्पो मनोरथः स च लज्जया युष्माभिरकथितोपि मया विदितः स मयानुमोदितोऽतः सत्यो भवितुमर्हति अर्हतीति सम्भावनोक्त्या मात्यन्तिको न भविष्यतीति सूचितम् ॥ २५ ॥

तत्कुतः ? इत्यत आह—न मयीति । कामाय पुनः कामभोगाय विषयमहिम्ना कामस्यापि शान्तिहेतुत्वादिति भावः । कामाप्ररोहे दृष्टान्तः भर्जिता दग्धा क्वथिता पक्वा धाना यवादिबीजाद्यङ्कुरोद्गमाय प्राय इति स्वेच्छया पुनः प्ररोहमपि सूचयति ध्रुवादीनां तथा दर्शनात् ॥ २६ ॥

सिद्धाः पूर्णमनोरथाः तत्राह—इमा आगामिनी रात्रीर्मया रंस्यथेति आर्यां कात्यायनी सतीः सत्यः ॥ २७ ॥ ३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र तदभीष्टप्राप्तिं तथाप्यन्यथैवलक्षणं च प्रतिपादयति, हे साध्व्यः! परमप्रेमव्यवसायगुणरूपत्वस्तेन च मदेकापेक्षिता इत्यर्थः यद्वा, साध्व्यो मदेकापेक्षिका भवतीनां मदर्चनं मद्विषयकपातिभावमयप्रेमसेवात्मकसङ्कल्पो मया विदितः ज्ञातस्तथापि सचानुमोदितः भद्रं कृतमिति स्वाभिलाषसिद्ध्या समास्वादितः अतो भवतीनां कामनान्तराभावात् मयानुमोदितत्वाच्च सचासौ सत्यः सदाव्यभिचारत्वेव भवितुं युज्यत एव किन्तत्र ममान्यस्य वा परादिप्रयासेनेत्यर्थः । सम्भावनं योग्यताध्यवसानम् अर्हत्वं योग्यत्वमिति काशिकायां सम्भावने ऽलमितीति अर्हे कृत्येति सूत्रयोर्भेदो विविक्तोऽस्ति अध्यवसानमारोपणं रूपकालङ्कारादौ प्रसिद्धमेवेति सम्भावनार्थत्वे च कल्पिते महतां सम्भावितं सत्यमेवेति तथा व्याख्यातम् ॥ २५ ॥

युक्तत्वमेवाह—न मयीति । मय्यावेशितधियां मनसापि तथा मां सेवमानानां तन्मात्राणां कामो राज्यस्वाराज्यादिविषयः कामाय कामत्वाय न कल्पते किन्तु निष्काममक्तत्व एव कल्पते पर्यवस्यति "सत्यं दिशत्यर्थितमर्थितो नृणाम्" इत्यादौ श्रीकर्दमादौ च श्रीविष्णूपासनावत् किं पुनर्मत्प्रेमसेवैकपुरुषार्थानां

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भवतीनामित्यर्थः । कामत्वाकल्पने दृष्टान्तः भर्जिता इति प्रायो वितर्के धानाः भ्रष्टयवाः "धाना भ्रष्टयवे प्रोक्ता धन्याकेऽभिनवाङ्कुरे" इति विश्वः । ताः स्वरूपत एव भर्जिताः पुनः क्वथिता दग्धिताश्चेत्यतिशयविवक्षया बीजाय बीजत्वाय नेशते न कल्पते अथवा मय्यावेशितधियां मदेकपुरुषार्थमात्राणामित्यर्थः । तेषां यः कामः मत्प्रेमसेवैकविषयः स कामाय कामनान्तराय न कल्पते किन्तु स्वयमेवास्वाद्यो भवतीत्यर्थः । किं पुनर्भवतीनामिति भावः । तत्र योग्यो दृष्टान्तः धानाः स्वत एव भ्रष्टाःपुनः स्वादविशेषाय घृतादिना भर्जिता गुडादिना क्वथिता निष्पक्वाश्च बीजाय नेशते फलान्तरोत्पादनाय न सम्पादनीया भवन्ति किन्तु स्वयमेवास्वाद्या भवन्ति तथा भवतीनामपि कामनान्तररहितभावविशेषसंस्कृतमत्प्रेमसेवाकामोपीत्यर्थः । एतादृशी मम कापि माधुरीति भावः तथा च ताभिरेवानुभूय वक्ष्यते—

"सुरतवर्द्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर ! नस्तेऽधरामृतम्" ॥ इति

एवमासां भावस्य परमपुरुषार्थशिरोमणित्वं श्रीभागवतामृते विवृतमस्ति श्रीभागवतसन्दर्भे च किञ्च "वाञ्छन्ति यद्भवभियो मुनयो वयं च" इति न्यायेन परमशान्तानां तेषां वाञ्छाविषयस्यास्य कथं शान्त्यन्तरापेक्षा स्यात् तस्मात् सत्यो भवितुमर्हत्येवेति निर्गमितम् एषा स्वगुणविस्थापनमयी मोहनीनागरचर्यापि भवत्सम्बन्धित्वेन पारमार्थिक्येव गम्या क्वचित् भर्जितेत्यादय एकवचनान्ता नेष्यत इति च स च चित्सुखसम्मतः स्पष्टार्थश्च ॥ २६ ॥

अभीष्टं सम्पादयति–यातेति । युष्मदभीष्टमङ्गीकृतमिति भावः तच्च मयैव सम्पाद्यमित्यभिप्रायेणाह, हे अबला ! इति पूर्ववत् तर्हि कुत्र यामेत्यपेक्षायामाह–व्रजमिति । एवं चेत्तर्हि कथमबलास्वस्मासु कारुण्यम् इत्याशङ्क्य स्फुटमेव तत्सम्पादयति सिद्धा इति यथा सङ्कल्पं मयाङ्गीकृता एवेत्यर्थः । एवमङ्गीकारमयं विवाहमेव सम्पाद्य तदङ्गभूतं फलविशेषमपि सम्पादयति मयेति इमाः सन्निहिता एव नाहशप्राप्त्याद्यक्रमत्यापनार्थं साधनसाधुवादेनैवोपसंहरति, यन्मत्पत्नीत्वं चेरुर्भवत्य इति शेषः । सतीः हे सत्यः ! अत एव ता अप्यास्वेद्या पत्यन्तरं नाङ्गीकृतवत्य एवेति तथापि रहोव्यूढात्वेनान्यव्युढावद्गूढमेवाऽवमन्तेति च बुध्यते एतदन्या एव हि परकीयायमाणां इति तदेवमुक्तं युवतीगोपकन्याश्चेति ॥ २७ ॥

इति व्रजं यातेत्यादिष्टाः लब्धः कामो निजवाञ्छितं याभिस्ताः अत एव देवीं तद्व्रतोद्यापनादिकमपि परमानन्दाङ्घ्रिस्मृतवत्य इति भावः । लब्धकामत्वेपि कृच्छ्रात् दुःखेनैव व्रजं प्राविशन्, कुतः ? तस्य पादाम्भोजं ध्यायन्त्य एव न तु साक्षात् पश्यन्त्यः तद्विच्छेदादित्यर्थः पदाम्भोजमिति विशेषनिर्देशः पतिभावेन गौरवात् तदानीं लज्जया नम्रीभूय स्थितानां तन्मात्रदर्शनेन तदनुस्मृतेरेव प्रकृतत्वाद्वा निःशब्दः पुनर्वेगार्थं व्रजात् यमुनागमनाभावाभिप्रायेण ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

धाना व्रीह्यादयः ॥ २६ ॥
आर्या दुर्गा ॥ २७—२८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह–अबला इत्यादिना । हे अबलाः हे साध्व्यः मदर्चनं मयासह क्रीडात्मके अर्चने निमित्ते यो भवतीनां सङ्कल्पः स मया विज्ञातः मोदितोऽभ्यनुज्ञातश्चेत्यर्थः सोऽसौ सङ्कल्पः सत्य एव भवितुमर्हति ॥ २५ ॥

केनापि व्याजमात्रेणानुजिघृक्षैकशीलत्वान्महोदारत्वाच्च देहान्ते तासां मुक्तिमपि सङ्कल्पयति मय्यावेशिता धीर्याभिस्तासां भवतीनां कामः मद्विषयकोऽभिलाषः कामाय केवलं विषयभोगायैव न कल्पते न भवति किन्तु मुक्तयेऽपीत्यर्थस्तात्र विवक्षितं विषयवैलक्षण्यमहिम्ना मद्विषयककामस्यापि संसृतिबीजभर्जनद्वारा मुक्तिहेतुत्वादिति भावः । यद्वा, मय्यावेशिताया धियो विषयवैलक्षण्यादविप्लुतत्वेन यावद्देहपातानुवर्तित्वात्तदा संसृतिबीजभर्जनद्वारा मुक्तिहेतुत्वान्मद्विषयकः कामः केवलं न कामायैव कल्पते इति भावः । निर्वीर्यं संसृतिबीजं न पुनः संसृतये भवतीत्यत्र दृष्टान्तमाह प्रायो भर्जिताः भ्राष्ट्रे निक्षिप्ता क्वथिताः निष्पक्वाश्च धाना बीजाय नेष्यते अङ्कुरोद्गमाय नेष्यते नेष्यन्ते वचनव्यत्यय आर्षः प्राय इत्यस्य भर्जिताः क्वथिता इत्याभ्यामन्वयः ॥ २६ ॥

यत एवमतो हे बालाः ! यूयं सिद्धाः पूर्णमनोरथाः व्रजं यात गच्छत सिद्धत्वमेवाह–मया सहेमा आगामिनीः रात्रीः शारदीः रस्यथ देवताराधनं न मुधा भवितुमर्हतीत्यभिप्रायेणाह यदिति । सतीः हे सत्यः ! यन्मया सह क्रीडनात्मकं प्रयोजनमुद्दिश्य भवत्य इदमार्यायाः कात्यायन्या व्रतं चेरुश्चक्रुः ॥ २७ ॥

इत्थं भगवता कृष्णेनादिष्टाःकुमारिकाः ! लब्धप्रायाः कामा इष्टार्थाः याभिस्तथाभूतास्तस्य भगवतः पदाम्भोजं ध्यायन्त्यस्तमेवानुचिन्तयन्त्य इत्यर्थः कृच्छ्रात्कथंचिद्व्रजं निर्विविशुः तद्विश्लेषासहिष्णुत्वादिति भावः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यन्मदर्चनं तस्मिन् कृतः नन्दसुतः पतिर्भूयादिति सङ्कल्पः अनुमोदितः अनुज्ञातः ॥ २५ ॥

मत्सम्भोगलालसानां भवतीनां विषयौत्सुक्यं पुनः संसारवर्तनाय स्यात् अतोऽस्मत्सङ्कल्पो निन्द्य इति शङ्कामाभूदित्याशयेनाह–नेति, कामाय विषयेच्छाप्ररोहाय तत्र दृष्टान्तमाह, भर्जितेति । धाना बीजं बीजाय अङ्कुरोत्पादनशक्तिमत् ॥ २६ ॥

आर्यार्चनं कात्यायनीपूजां सतीः सख्यः ॥ २७-२८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तासां हृदये स्वाभिप्रायो ज्ञापनीय इति यदासीत् तदाह, सङ्कल्पो विदित इति । भवतीनामभिप्रायो विदितः अनेन न

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वक्तव्य इति ज्ञापितम् अन्यथा रसस्त्वपुष्टः स्यात् अत एव भगवानपि नोच्चारयेदिति तत्रायुक्तः सङ्कल्पः इति शङ्कां वारयति, साध्व्य इति । साध्वी सर्वदोषविवर्जिता पतिव्रता इति यावत् अतोऽधिकारिणा कृतः सङ्कल्पः सफलो भवति अनेनान्यस्मै देयाः केनाप्यंशेन विनियोगान्तरं च निवारितं भवतीनां च सर्वासामेवाज्ञातस्वरूपाणां यद्यपि कात्यायन्यर्चनेनासमर्थः सिद्धः तथापि मदर्चनात् द्वितीयवारमहमेवार्थितः प्रबुद्धा हि देवता अर्च्यत इति तदैव ज्ञानं परमर्चनं मत्स्पर्शि न भवतीत्यसत्यो भवति देवताज्ञाऽव्यतिरेकेण च कृतेति फलदोऽपि न भवति तदिदानीं सन्तोषात् इयं पूर्वं मयानुमोदित इति तत्र मयाऽनुमोदित इति सः सङ्कल्पः अनु पश्चात् मोदित इति मोदं प्रापितः स प्रसिद्धः पूजायामभिव्यक्तः भावपूर्वकदृष्टिपूर्वकपुष्पादिपदार्थानां भाविते भगवति समर्पणरूपः सत्त्ववस्तुसमुदायरूप इत्यसत्य एव स्वरूपतः ज्ञापकः परं जातः तद्ज्ञापितमाह—अमाविति । इदानीमहं प्रत्यक्षः अन्तः कामश्च वृत्तः भावोद्गारिणी दृष्टिश्चेयं निवेद्यन्तु सर्वमेव अतः पूर्वाकृतितुल्यमेतत् साम्प्रतं जायमानं सर्वमेवासाधिरुच्यते स्वरूपतः सत्योऽपि फलतोऽपि सत्यो भवितुमर्हति सत्यात्सत्यफलमुचितमिति अतो योग्यत्वादेव फलं भविष्यति न चिन्ता कर्त्तव्येति भावः । अनेन कार्याधीनत्वात् गोपिकाधीनमेव फलमिति वाचनिकोऽपि सन्देहो निवारितः ॥ २५ ॥

ननु, कालान्तरे अन्यां सामग्रीं प्राप्येयं सामग्रीविशकलिता पूर्वावस्थामेव प्राप्स्यति न त्वेवंरूपा स्थास्यति इत्याशङ्क्य सामान्यन्यायेन परिहरति, न मयीति । अयं सामग्र्याः संस्कारः यथा संस्कृतो ब्राह्मणोऽसंस्कृतैः सहितो नासंस्कृतो भवति नापि पुनः संस्कारो भवति, अतो भगवति सर्वा सामग्री समर्पिता भगवदीया जाता कोटिसूर्याधिकज्ञानाग्निरूपो भगवान् तत्र सर्वं बुद्ध्यधीनमिति बुद्धिश्चेत् समर्पिता तदा सर्वमेव समर्पितमिति बुद्धिसमर्पणमेवाह, मयि आवेशितधियामिति न केवलं समर्पिता किन्त्वावेशिता तदुपरि धार्येश्च स्थापिता बुद्ध्यधीनः कामः इच्छा हि ज्ञानाधीनेति कामः सङ्कल्प इत्यादिश्रुतौ सर्वं मन एवेति निरूपितम् । मनोधर्मत्वात् मनसस्तु परा बुद्धिः अतो बुद्ध्यधीनं सर्वं यथा राजनि निगृहीते राज्यमेव तदधीनं भवति एवं बुद्धौ निवेदितायां सर्वमेव निवेदितम् अतः पूर्वावस्थावां यद्रूपं तत्तेषां न भवति कामो हि पुरुषात्मकः "काममय एवायं पुरुषः" इति श्रुतेः । यदि कामः कामाय न फलतः तर्हि तस्मात् सङ्कल्पात् न सङ्कल्पान्तरमुत्पत्स्यते किन्तु स एवाग्निमः सङ्कल्पो भवति धिया सह कामस्यापि दग्धत्वात् कामसङ्कल्पः तत्र दृष्टान्तेनावेशनमात्रेण तदयाकार्यत्वं साधयति, भर्जिता इति यथादयो हि भर्जिता धाना भवन्ति धानास्तु भ्रष्टयवा इति धनं हि धनोत्पादकं तथा यवा यवोत्पादकाः न तु धानावस्थायाद् अतः पूर्वावस्थां परित्यज्य ये सम्बन्धमात्रेण तदीया भवन्ति तेन तत्कार्यं कुर्वन्ति केषांचिद्बीजानां केवलाग्निना बीजशक्तिर्न गच्छति तेषां जलाग्निसंयोगेन गच्छतीति कथिता इत्युक्तम् उपलक्षणमेतत् यावता एव बीजशक्तिर्गच्छति ततस्तदनन्तरं तत्कार्यक्षमं न भवतीति अतो धाना जाता भूयो बीजाय नेशते न समर्था भवन्ति अथवास्त्रे धानास्तु क्षिपते धानाभूमौ प्रलीयन्त इत्यत्र धानाशब्देन बीजान्युक्तानि इत्यत्रापि तथैवेति ज्ञेयं तेन भर्जिता इत्युक्तिर्युक्ता अतो मयि समर्पितः कामः पुनः कामान्तरं न जनयिष्यति सुतरां पूर्वावस्थां न प्राप्स्यति तथा सति जनयेदेव ॥ २६ ॥

अधिकं तत्रानुप्रविष्टमिति यत्र कापि तिष्ठन्तु न प्राकृतत्वं भविष्यत्यतो गच्छन्तेत्याह—यातावला इति । पुनः स्वकीयत्वेन सम्बोधनं स्नेहं सूचयति सह पर्यटनं तु यत्कार्यं यथा भूमिः नान्यत्र नीयते शोभा एव च नीयन्ते तथापि संस्कारार्थं कर्षणवत् क्रियया व्याप्रियत इति भवानेव वा स्थित्वा तथा करोत्वित्याशङ्क्याह, सिद्धा इति । न भवतीषु किञ्चित्साध्यमस्ति किन्तु सिद्धा एव भवत्यः अतो व्रजं यात गच्छत अलौकिकीं च दृष्टिं दत्वाऽऽह मयेमा रंस्यथ क्षपा इति इमाः परिदृश्यमानाः क्षपाः गर्भेव विद्यमानाः क्षपा रात्रीः मया सह रंस्यथ रमणं करिष्यथ अत्यन्तसंयोगे छिन्नाया रमणाभावितास्ताः प्रदर्शिता इति न सन्देहः नन्वेतदेव कथं फल नित्यसम्बन्धः अन्यो वा अहोरात्रसम्बन्धः कथं नोक्त इत्याशङ्क्याह यदुद्दिश्येति रमणमेवोद्दिश्येदं व्रतं चेरुः । आर्याः कात्यायिन्या अर्चनलक्षणं स्वार्चनस्य तु सत्यत्वे विनियोगः रमणं तु तद्व्रतफलं तत्र तु मास एव नियामकः रात्रावन्ते च पूजनं अतो रात्रावेव परिमितकाले रमणं न दिवसे नाप्यपरिमितकाले किञ्च सतीर्हि सतीरूपाः पूर्वसवर्णात्र सतीनां न दिवसे रमणं नापि सर्वदा यथेष्टमिति अतो विवाहितान्यायेन रमणं भविष्यतीति भावः । प्रथमवाक्यसमागमने तु भगवदाज्ञाकरणादृष्टमेव फलं भवेत् कर्मफलं तु क्षयिष्णुः ॥ २७ ॥

ततो भगवता आज्ञप्ताः आज्ञोल्लङ्घनभीताः व्रजं गता इत्याह—इत्यादिष्टादिष्टा इति । यद्यपि कामो महान् तथापि भगवदिच्छया बाध्यते मनोरथश्च प्राप्तः परं साक्षाद्विवाहाभावात् कुमारिका एव तासां रसान्तरव्यावृत्त्यर्थं भक्तिमाह, ध्यायन्त्यस्तत्पदाम्भोजमिति । हृदि भगवच्चरणकमलं ध्यायन्त्यः कृच्छ्रादिति कथं प्राप्य मध्ये गन्तुमशक्ता कथञ्चिद्व्रजं निर्विविशुः गृहगमनाज्ञया तादृशस्तापो वृत्तो येन जीवनमपि तत्कालीनं न सम्भवेत् यदि पदाम्भोजध्यानं न स्यात्तस्मिन् सति तद्विषयस्याम्भोजत्वेन तापहरणाज्जीवनसम्पादितभूमण्यापि कृच्छ्रादित्युक्तं स्तद्ध्यानं नापकार्यप्रतिबन्ध एवोपर्यायं न तु तद्धरणमिति ज्ञाप्यते एवं साधकैस्तत्र्यैस्ता सामर्थ्यमाकार्णितापिता तत्प्रतिक्रमश्च ॥ २८ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे साध्व्यः ! भवतीनां मदर्चनं मदीयसुखोत्पादकमविषयकाराधनमेव सङ्कल्पो मनोरथः स च लज्जया युष्माभिरनर्थितोऽपि मया विदितोऽनुमोदितश्च निष्कैतवत्वात् सत्यश्च अनएव भवितुमर्हत्येव भवतीनां तत्सुखतात्पर्यात् ममापि प्रेमानन्दयत्वात् कात्यायन्यर्चनेनेति भावः । अत्र कृपाशक्तिरेव नाम्नाभिव्यक्तं वितत्यानवशमपि तत्सुखलीलाविष्टनपि भगवन्तमैश्वर्यं स्फोरयित्वा तस्मात्कर्षकात्यायन्यर्चनकृच्छ्रं ज्ञापयामास तत्फलं च मदीय-

अथ गोपैः परिवृतो भगवान् देवकीसुतः ।
वृन्दावनाद्गतो दूरं चारयन् गाः सहाग्रजः ॥ २९ ॥
निदाघाऽर्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ।
आतपत्रायितान् वीक्ष्य द्रुमानाह व्रजौकसः ॥ ३० ॥
हे स्तोक ! कृष्ण ! हे अंशो ! श्रीदामन् ! सुवलार्जुन ! ।
विशालर्षभ तेजस्विन् ! देवप्रस्थ ! वरूथप ! ॥ ३१ ॥
पश्यतैतान् महाभागान् परार्थैकान्तजीवितान् ।
वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यामास तास्तु नारायणसम इति गर्गोक्त्यैश्वार्य स्वं नारायणं मन्यते स्मेति जानन्ति स्मेति ज्ञेयम् ॥ २५ ॥

यच्च काचित्कं मदर्चनं सङ्केतवत्त्वात्सत्यमयथार्थं यदपि मया स्वसाद्भूयतात् सत्यमेव भवितुमर्हमेवं कर्त्तुं शक्यते किं पुनः परमशुद्धमहोत्तमप्रेममयो भवतीनां मदाराधनमनोरथ इत्याह-नेति । कामः सकामत्वलक्षणं कैतवं कामाय तत्फलाय अयथार्थाय कामभोगाय न कल्पते किन्तु विषयमहिम्ना कामशान्तय एव अत्र दृष्टान्तः भर्जिता इति अत्र धानाशब्देन यवा एवोच्यन्ते ते च यवाः खलु पङ्किले भूमावुप्ताः प्ररोहन्ति त एव सूर्यकान्तरत्नभूमावुप्तास्तापेन भर्जिताः भवन्ति ततो वृष्टिजलेन सिक्ताः क्वथिता रन्धिता बीजाय अङ्कुरोद्गमाय नेष्यते न समर्थाः स्युः प्राय इति पर्येत्यर्थः । यथाह, विश्वप्रकाशः "प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः" इति "प्रायो वयसानशने मृत्यौ बाहुल्य तुल्ययोः" इति मेदिनी च. नेष्यत इति पाठश्चित्सुखसम्मतस्तत्रैकार्थमार्षम् ॥ २६ ॥

प्राथमिकस्य रमणस्य शुभः समयो रात्रिरेवेत्याभिप्रेत्याह-यातेति । सिद्धा एव यूयं माधुर्यपोषकेण नरलीलात्वेनैव साधकत्वाभिमान इति भावः । इमाः सन्निहिताः रंस्यथ रंस्यध्वे अद्रमयाम आर्यां दुर्गां व्रतीः सत्यो भवत्यः ॥ २७ ॥

कृच्छ्रादिति तेन तासां मनोनेत्राद्याहरणात् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, एकस्मिन् पदार्थे कृतः सङ्कल्पस्तदितरपदार्थविषयकान् बहून् सङ्कल्पान् जनयति अतो जीवः स्वसङ्कल्पप्रवाहेन तत्पदार्थसंयोगवशगो संसारे परिभ्रमत्येव त्वयि कृतस्य सङ्कल्पस्यापि त्वदितरपदार्थविषयकसङ्कल्पोत्पादकत्वं प्राप्नोतीत्यत आह, नेति । मय्यावेशितधियां यः कामः मयि कृतः सङ्कल्पः स कामाय मदितरपदार्थविषयकसङ्कल्पाय न कल्पते मत्कामो जनः संसारं न प्राप्नोति मामेव प्राप्नोतीत्यर्थः । तस्येतरसङ्कल्पानुत्पादकत्वे दृष्टान्तः भर्जिता क्वथिता धाना बीजायाङ्कुरोद्गमाय नेष्यते दृष्टान्ते कदाचिद्वैपरीत्यं भवतु न तु दार्ष्टान्ते इति प्रायोग्रहणाभिप्रायः ॥ २५ ॥

हे अबलाः ! यन्मया सह रमणमुद्दिश्य सङ्कल्पः सतीः सत्यः भवत्यः आर्यायाः कात्यायिन्याः अर्चनरूपं व्रतं चेरुश्चक्रुः तस्माद्देवोद्देशात्सिमित्तात् इमाः आगामिनीः शारदीः रात्रीः मया सह रंस्यथेत्थं सिद्धाः पूर्णमनोरथाः व्रजं यात गच्छत सतीरिति चपाविशेषणं वा भगवत्प्रयुक्तविभक्तेरन्यथात्वासम्भवात् ॥ २६ ॥

कृच्छ्रात् श्रीकृष्णविश्लेषजात् ॥ २७ ॥ २८ ॥

---

भाषा टीका ।

हे धर्मकरन वारी सुशीलाओ ! मैं तुमारे सङ्कल्प ( इच्छा ) कूं जानि गयो जो तुमने मेरा पूजन किया सो मेरे आनुमोदन तें सत्य होवेगो ॥ २५ ॥

मों मे जिनन ने बुद्धि लगाई उनको काम विषय रूप नही होय है, जैसे भुंजे रन्धे यव उपजिवे योग्य नहीं होय है ॥ २६ ॥

याते हे अबलाओ ! तुमसब व्रजको जाओ तुम्हारे मनोरथ पूरण भये । हे पतिव्रताओ ! जा मनोरथ सें तुमने व्रतकरी हो कात्यायनी की पूजा करी ही सो शरत ऋतु की रात्रीनमें मेरे सङ्ग रमण करोगी ॥ २७ ॥

श्री शुकउवाच ।

श्रीशुकदेवजी बोले, कि—श्रीकृष्णभगवान् ने जब आज्ञा दीनी तब सगरी कुमारिका मनोवांछित वरदान पायकर श्रीकृष्णचन्द्र के चरणारविन्द को ध्यान करत बड़ो कष्ट तें व्रजकूं जात भई ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भक्त्याऽनुकम्प्य कन्यास्तास्तद्विवर्जितयज्वनाम् ।
पत्न्यनुग्रहतस्तेषामहन् कर्म महामदम् ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विप्रभार्यानुग्रहाय यज्ञवाटं गच्छन् विप्राणां काठिन्यमाभिप्रेत्य तेभ्योऽपि द्रुमाः श्रेष्ठा इति तानभिनन्दति चतुर्भिः—पश्यतेति । हे स्तोककृष्णादयो गोपाः एतान् द्रुमान् पश्यत परार्थमेवैकान्तेन जीवितं येषां तान् तदाह—वातवर्षादीन्स्वयं सहन्तः सहमाना अस्माकं वारयन्ति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधुना श्रीगोपकन्यासु प्रसादमुक्त्वा ततः तत्प्रस्तावसादृश्यात् यज्ञपत्नीषु प्रसादं वक्तुमारभते, अथ लीलान्तरारम्भे स च निदाघसमय इति विज्ञेयं निदाघार्कातपे तिग्म इति वक्ष्यमाणात् अत एव सहाग्रजः श्रीबलदेवेन सहितः गोपकन्यावस्त्रहरणदिने तत्र तेन साहित्याभावात् गोपैः परितो वृत इति प्रागुक्तवक्ष्यमाणलीलायां तेषामपेक्षाविशेषात् देवकीसुत इति पूर्वस्मादेव हेतोः वृन्दावनाद्गतो दूरमिति प्रथमं तावद्गिरिव्रजमयं काम्यकवनं गतः तत एतस्य भ्रातुरागमनवेशां वर्णयिष्यते पश्चात् निदाघतृष्णागमितधेनुजलपायनार्थं व्रजं दक्षिणे विधाय यमुनामागतः तथ व्रजादागच्छत् मध्याह्नभोजनवस्त्रनार्थं तथ श्रीयज्ञपत्नीष्वन्नप्रार्थनारूपकृपार्थमिति ज्ञेयम् ॥ २९ ॥

तत्र वृन्दावनक्रमणप्रकारमाह—निदाघेति सप्तभिः । आत्मन इत्युपलक्षणं स्वस्य स्वेषां च छत्रायितान् व्रजौकसो व्रजजनवर्तिनो द्रुमान् वीक्ष्याह एकि स्म ॥ ३० ॥

अथ प्रार्थयिनव्यान् यान्निदानन्यनादरणीयतया ऽवधाय सख्निमुख्यानभिमुखीकृत्य तान् द्रुमानस्तुवदित्याह—हे स्तोकेति युग्मकेन । सम्बोधनक्रमोऽयं यथा दृष्टिप्राप्तमेव ज्ञेयः एते दश श्रीकृष्णस्य दशदिक्ष्ववेक्षणार्थं प्रेम्णा वर्तन्त इति केचित् सम्भावयन्ति दशमस्कन्धफलत्वात् तत्र स्तोककृष्णादयोऽष्टावष्टविक्षु देवप्रस्थवरूथपौ छत्रधारणवर्त्मशोधनादिनोर्ध्वाधोवेशयोः एकादशो भद्रसेनस्तु गोपसेनाध्यक्षः सर्वानेवक्षकस्तदाणीं दूरे स्थित इति लक्ष्यते ॥ ३१ ॥

महान् भागो भाग्यं येषां तान् तल्लक्षणमाह—परेति । नोऽस्माकं केचिद्वातादीन् स्वयं सहन्ते तपस्विनः नत्वन्येषां वारयन्ति स्निग्धाश्च दयालवो वा केचित् परेषां वारयन्ति स्वयन्तु न सहन्ते किन्तु तत्प्रतीकारं कुर्वते एते च स्वयं सहमानाः परेषां वारयन्तीति महाभागत्वम् ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चरित्रान्तरमाह—अथेति । कदाचिद्वृन्दावनाद्दूरं गतः साग्रजो गाश्चारयन् ॥ २९ ॥

तीक्ष्णे निदाघार्कस्य ग्रैष्मार्कस्यातपे आत्मनः स्वस्य स्वाभिः छायाभिरातपत्रवदाचरितान् द्रुमानवलोक्य व्रजौकसो गोपानाह ॥ ३० ॥

तदेवाह—हे स्तोककृष्णेत्यादिभिः पञ्चभिः । स्तोककृष्णादयः कश्चिद्गोपबालः ॥ ३१ ॥

एतान् द्रुमान् पश्यत कथम्भूतान् परार्थं परोपकारार्थमेवैकान्तं नियतं जीवितं येषां तान् तदेवाह—पश्यतेति । स्वयं वातादीन् सहमानाः नोऽस्माकं तान्वारयन्ति हिमानिति पुंस्त्वमार्षम् ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्रजौकसः आहेत्यन्वयः । तिग्मे तीव्रे ॥ ३०—३१ ॥

परार्थाय परोपकाराय एकान्तेन नियमेन जीवनं स्वायुरवयं येषां ते तान् नः वारयन्ति क्षुधितानस्मांस्तर्पयन्ति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथेति लीलान्तरारम्भे स च निदाघसमय एव ॥ २९ ॥

निदाघार्कातप इति वक्ष्यमाणात् ॥ ३० ॥

अथ गोपैः व्रजौकसो निजसहवासिन इत्यर्थः । अथ पूर्वचद्विनोदवाक्यमेवेदं श्रीभगवदीयत्वेन परमार्थतामपि वहतीति भावः । अतो विनोदेनैव प्रत्येकमुक्तत्वात् सम्बोधयति हे स्तोकेति ॥ ३१—३४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अथ ज्ञानं निरूप्यते अन्यथा गोपालानामनर्थपर्यवसानं स्यात् नैवं चान्यार्थता बुध्येत तदा क्रमेण भगवदर्थमेव सर्वमिति ज्ञानं भवेत् अतस्तेभ्यः परार्थतां विद्यां प्रथमपर्वरूपां भगवान् बोधयितुं स्थानान्तरे जगामेत्याह—अथेति दशभिः । अत भिन्नप्रक्रमेण गोपैर्वृतो भगवान् भक्तोद्धारार्थं प्रवृत्तो वृन्दावनात् दूरं गतः वृन्दावनं परित्यज्याग्रे गतः वृन्दावनस्य तु स्त्रीप्राधान्याज्ज्ञानं न भविष्यतीति तत्र गतानां ज्ञानार्थं प्रथमतो धर्ममाह, चारयन् गा इति । पूर्वं तु न गोभिः सहितः नापि गोपालसहितो नापि बलभद्रसहितः पश्चादेव चेति मिलिताः तस्मिन्नेवावसरे तदुक्त्वा ज्ञापितम् अथ गोपैरिति ॥ २९ ॥

तदा कियद्दूरे गत्वा श्रान्तेषु सर्वेषु क्वचिच्छायायामुपविष्टेषूपदेशार्थं किञ्चिदाहेत्याह—निदाघेति । निदाघकाले गोऽर्कः तस्यातपे तिग्मेऽपि स्वाभिः छायाभिः आत्मनः स्वस्यातपत्रायितान् श्वेतच्छत्राकारेण समागच्छतः पूर्वं वर्णितान् वृक्षान् वीक्ष्य व्रजौकसो गोपालान् प्रत्याह, व्रजजातापेक्षया च वनजाता एव वृक्षाः समीचीना इति पञ्चपर्वां विद्यां बोधयिष्यति वृक्षदृष्टान्तेन वृक्षेषु चतस्रो विद्या गोपेष्वेका यद्येता अपि चतस्रो भवन्ति तदर्थमुपदेशः यद्यपीदानीं न निदाघकालो नाप्येते आतपत्रायिताः किन्तु तेषां पूर्वावस्थामेव स्मृत्वा साम्प्रतं तान् द्रुमान् दृष्ट्वाऽऽह ॥ ३० ॥

अत्रैकादशमुख्याधिकारिणो गोपा एकादशेन्द्रियाधिष्ठातृरूपा ते चेत्परार्थास्तदा सर्वं सिद्धमिति तान् सम्बोधयति, हे कृष्णेति भगवतो नामकरणे अन्या अपि गोपिकाः स्वपुत्रनाम तथा कृतवत्यः स्तोकोऽपि द्वितीयः अंशुरपरः श्रीदामा सुबलः अर्जुनः विशालः ऋषभः तेजस्वी देवप्रस्थः वरूथपश्च वरूथपो मनसः तन्निकटस्थो निकटस्थस्यैव कृष्णोनाचक्ताश्री रसस्य एकश्रीमयत्वात् पुनरन्येषां भिन्नतया सम्बोधनम् अंशुर्घ्राणस्य श्रीदामा

**अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ।**
**सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥ ३३ ॥**
**पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।**
**गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥ ३४ ॥**

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

चक्षुषः सुबलो बाह्वोः अर्जुनः श्रोत्रयोः विशालस्त्वचः ऋषभः पादयोः अवशिष्टस्तेजस्वी पाकज्ञापकत्वात् एतेषां भगवता सह संव्यवहार इति महत् पर्वसिद्धं तत्सम्बोधनेन निरूपितम् ॥ ३१ ॥

द्वितीयमाह—पश्यतेति । धर्मः प्रथमं पर्वपरित्यागेन परार्थता द्वितीयं सर्वत्र भगवद्बुद्धिस्तृतीयं तस्य ज्ञापिका सर्वसेवा प्रकाशश्चतुर्थः भगवदीयानां चेदेतच्चतुष्टयं तदा कृतार्थता भवतीति प्रथमं बाह्यो धर्मोऽपेक्ष्यते तादृशमाह, पश्यतेति । आदौ धर्मसन्देहे धर्मात्मानो द्रष्टव्याः धर्मो हि भागवतामेव फलति अन्यथा विघ्नः स्यात् भाग्यं च महत् तस्य ज्ञापकं यशः सर्वैरुच्यमानं तदाह, महाभागानिति । धर्मस्वरूपमाह परार्थेति जीवनं तदुपकरणं च स्वस्य तत्र परार्थमेव चेज्जीवितं तदा अन्ते धर्मो निरूपितः स हि मुख्यः "अन्ते या मतिः सा गतिः" इति सामान्यपक्षे व्यावर्त्तयति परार्थमेव एकान्ततः जीवनं वर्त्तते येषामिति एकान्तत्वात् न स्वार्थपरार्थत्वरूपमध्यमत्वं स्वार्थे त्वधमम् एवं स्वरूपतोऽन्ततो धर्मं निरूप्य बाह्यं धर्ममाह, वातवर्षेति । जीवनेन ह्रियते इति शरीरं सा वृद्धिः परेच्छयैव यदि च परो वृद्धिं न मन्यते तावतैव दारुणा कार्यमिच्छति एवं जीवनं चेत् परार्थता भवति तथा धर्मोऽपि यदि परार्थ एव भवेत् केवलश्चेदधमः उभयार्थश्चेत् काम्यो मध्यमः यथोपवासाः विद्यमानमन्नमन्योऽभ्यो दत्वा तदभावे रन्तिदेवस्येव मोचदेतयः स्वतोऽप्यभावे अन्यतः पोषणो तेषां दुःखाभावाय मध्यमः तदुभयाभावे क्लेशात्मकः निर्हेतुश्चेत् अधमोऽपि महान् सकामश्चेत् मध्यमः अन्यापकारीत्वधमाधमः तत्रोत्तममाह, वातः वर्षः आतपो हिमश्च त्रयः कालगुणाः आद्यः चतुर्णां सहकारी एतान् सहन्तोऽप्येषामेतान् वारयन्ति तत्रापि नः अस्माकं अनेन प्रमाणं प्रत्युपकाराभावश्चोक्तः बाह्यमेतदेव तपः अनशनादिकं तु प्रायश्चित्तमिति न धर्मत्वेन परिगणितम् अन्ये सर्वे भेदा हीनाः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गोपकन्याप्रसादस्य प्रकृत्याऽरोहितः स्मृतौ ।
यज्ञपत्नीप्रसादोऽत्रत्वं विंशस्तुरभूत्तुतिः ॥

अथेति समयान्तरव्यञ्जकं कदाचिन्निदाघाकालीनित्यर्थः ॥ २९ ॥

परमुदारवृत्त्वयोनाऽपि जन्म साङ्गः प्राज्ञै न तु कृपणाकर्मि-
·विप्रजातावितामर्थं ज्ञापयितुं वृक्षान् स्तौति, सखीन् सम्बोध्य
पश्यतेति चतुर्भिः । स्तोककृष्णादयोऽष्टावष्टविध्दु कृष्णस्य स्वाग-
कर्मसु स्थिताः देवप्रस्थवरूथपौ छत्रधारकवरमञ्चोधकाविस्युयौ
देशकृत्ययोः स्थितो एकादश्यां भद्रसेनस्तु गोपसेनाध्यक्षः सर्वा-
वेत्तकः ॥ ३०–३१ ॥

तदानीं दूरस्थित इति लक्ष्यते ये वातवर्षादीन् स्वयं सहमानाद् अस्माकं वारयन्ति ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ २९ ॥

व्रजौकसः तोककृष्णादीनाह ॥ ३० ॥

परहितकारिणो द्रुमा अपि धन्या इति तानभिनन्दति—हे स्तोककृष्णेति चतुर्भिः । परार्थमेवैकान्तं नियतं जीवितं येषां तान् एतान् द्रुमान् हे स्तोककृष्णादयः पश्यत परार्थैकान्तजीवितत्वमेवाह—वातादीन्स्वयं सहन्तो नोऽस्माकं वारयन्ति ॥ ३१ ॥ ३२ ॥

---

### भाषा टीका ।

ताके पीछे देवकी के पुत्र भगवान् श्रीकृष्णचन्द्र गोपन कूं अपने सङ्ग लेकर गऊन कों चरावत वृन्दावन में तें दूर चले जात भये ॥ २९ ॥

बडी तीक्ष्ण जो गरमी की धूप है तामें अपनी छायासूं छत्रान के नांई सुखदेन वारे वृक्षनकूं देखिके श्रीकृष्णचन्द्र व्रजवासीन सूं बोलत भये ॥ ३० ॥

श्रीकृष्णचन्द्र बोले, कि—हे स्तोक ! हे कृष्ण ! हे अंशो ! , हे श्रीदामन्, हे सुबल, हे अर्जुन, हे विशाल, हे ऋषभ, हे तेजस्विन् ! हे देवप्रस्थ ! हे वरूथप ! ॥ ३१ ॥

इन कों व्रज के बड भागी वृक्षन कों तो देखो, ये सब एक केवल पराये केई अर्थ जिये हैं । और आप. पवन, वर्षा, घाम, शीत सहैं हैं, और हमारे दुःखन कों निवारण करें हैं ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सुजनस्य कृपालोरर्थिन इव ॥ ३३ ॥

निर्यासो धनरसः तोक्माः पल्लवाद्यङ्कुराः ॥ ३४ ॥ ३५ ॥

एतावज्जन्मसाफल्यं देहिनामिह देहिषु ।
प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत्सदा ॥ ३५ ॥
इति प्रवालस्तबकफलपुष्पदलोत्करैः ।
तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यभिनन्दन् प्रवालादिसमूहैर्नम्रशाखानां तरूणां मध्येन यमुनां प्राप्तः ॥ ३६ ॥ ३७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न च केवलं वातादिदुःखात् रक्षन्ति सर्वार्थं च सम्पादयन्तीत्याह—अहो इति द्वाभ्याम् । अहो इति विस्मये हर्षे वा वरं सर्वतः श्रेष्ठं कुतः सर्वेषां प्राणिनाम् उपजीवनं जीविकाहेतुः जीविनामिति पाठे स एवार्थः हेतुगर्भजन्मार्थमाह—येषां येभ्यो विमुखा न यान्ति जनाः इति प्रसिद्धौ ॥ ३३ ॥

तदेवाह—पत्रेति । गन्धः रसादिभवः अस्थि सारांशः ॥ ३४ ॥

फलितमाह—एतावदिति । देहिनां विचित्रबहुलदेहभृतां कर्तृभूतानां प्राणादिभिः कृत्वा देहिषु जीवेषु श्रेय आचरणं यत् पाठान्तरे श्रेय एवाचरेत् सदेति यत् "एतावत् जन्म साफल्यम्" इति तत्र प्राणैरिति प्राणानाहरणे कर्मभिरित्यर्थः । धिया सदुपायचिन्तादिना वाचा उपदेशादिरूपया एषां समुच्चयः शक्त्यभावे परपरोपादानं च ज्ञेयम् ॥ ३५ ॥

स्तबकाः पुष्पाणां गुच्छकाः मध्येन मध्यवर्त्मनेत्यर्थः एवं तिग्मतापाऽप्राप्तिः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो सर्वप्राणिन उपजीवयन्तीति तथा तदेषां द्रुमाणां जन्म वरं मनुष्यजन्मनः श्रेष्ठं किञ्च सुजनस्य वदान्यस्येव येषामर्थिनो विमुखा न यान्ति किन्तु छायाफलादिभिः सत्कृता एव भवन्ति ॥ ३३ ॥

तदेवाह—पत्रेति । पत्रादिभिरर्थिनां कामान्वितन्वते वितरेण ददत इत्यर्थः । निर्यासः घनीभूतरसः अस्थीनि शान्ताग्नयोऽङ्गाराः तोक्माः पल्लवाद्यङ्कुराः ॥ ३४ ॥

अनुपकारिणां जन्म वृथैवेत्यभिप्रायेणाह—एतावदिति । इह लोके देहिषु मध्ये देहिनां जन्मनः साफल्यमेतावदेव कियत् प्राणादिभिः श्रेय आचरणं भूतहितकरणमित्येतावत् ॥ ३५ ॥

इतीत्थमभिनन्दन् प्रवालादीनामुत्करैः समूहैर्नम्राः शाखाः येषां तेषां तरूणां मध्येन यमुनां गतः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुजनस्य जन्मनः साफल्यमेतावत् अर्थिनो येषां विमुखा न यान्तीति ये अस्थ्या सारेण तोक्मैः अङ्कुरैः साफल्यमेतावत् ॥ ३३—३८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्थि सारांशः ॥ ३५ ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं धर्मं निरूप्य परोपकारलक्षणमर्थरूपं निरूपयति—अहो इति । एषामेव वरं जन्म देहग्रहणानन्तरजीवितं येषां न स्वार्थापेक्षा तदुपपादयति—सुजनस्येवेति । इदानीं अहो इत्याश्चर्यम् एतादृशमपि जन्म जायते इति अत्र स्वकार्ये नास्त्येव भगवतोऽप्यवतारे लीला भवति यद्यपि सा परार्था तथापि लोकप्रसिद्धा स्वार्थापि भवति अतो भगवतोऽप्याश्चर्यं केवलं कर्मफलभोगे मण्डूकानामिव परार्थता न स्यात् अत एषामेव जन्म वरं तत्र हेतुः सर्वप्राणिनामुपजीवनं यस्मिन्निति ये हि सर्वान् जीवयन्ति ते सफलजीवनाः तथैव भवति लोकेष्वपि प्रसिद्धं यथा सतां समागतोऽर्थी याचकः विद्यमानेऽर्थे विमुखो न गच्छति तादृशो दुर्लभ इत्येकवचनं येषामिति सर्वात्मना वृक्षाः सर्वे तादृशा एवेत्याधिक्यं निरूपितं ये निश्चयेन गृहीतुं योग्याः तत्रार्थिनः सम्पन्ना विमुखा न भवन्ति अग्रेऽपि वीनां मुखेन प्रविशन्ति यद्दारूणि भवन्ति नापि कालमुखं पतन्ति यदि वृक्षभिक्षुका एव भवन्ति ॥ ३३ ॥

एवमर्थोत्तमतां निरूप्य कामोत्तमतां निरूपयन् एतेषां कामजनितमपि सर्वं परार्थमेवेत्याह—पत्रेति । पत्राणि संयोगिलक्षणानि यथा केशाः दन्ताश्च तत्र पत्राणां सर्वोपयोगः न केशानां कथञ्चन पुष्पाणि रजोरूपाणि तानि सर्वपुरुषार्थसाधकानि स्त्रीणां तु तासामप्यपकारजनकानि फलानि पुत्रा इव तेषामर्थे परमन्यान् घातयन्ति न तु तान् प्रयच्छन्ति छायागृहाणि न तत्र सर्वः प्रविशति प्रविष्टोऽपि तापयुक्तो भवति शीतलत्वं गन्धं च प्राप्नोति व्यसनानि च क्षुधितत् मूलं तेषां धर्म एव प्राणिनां धर्मपशवो हन्यन्ते अत्र तु मूलान्यपत्येभ्यः प्रयच्छन्त्यौषधार्थं तथा वल्कलानि च परिच्छदा घटपटादय इव दारूणि काष्ठानि शुष्काणि उपभुक्तशेषमपि नान्यस्मा उपकरोति स्त्रीशरीरादिषु तथा प्रसिद्धिः गन्धः चन्दनादिषु कीर्तिवत् प्रसिद्धनामानोऽपि नाम्नापि नोपकुर्वन्ति, निर्यासः तद्रसः सारः वाक्यरूपः भस्म तद्भावधर्मणोऽपि प्रेतवत् श्राद्धादिकारणाद्वा अपकरोत्येवं इदन्तु इन्धनादावुपयुज्यते अस्थि इक्षवः तं सर्वत्र तैजसेषु कुर्वन्ति एतेषां स्वास्थि न कस्याप्युपकरोति प्रत्युत दोषे

तत्र गाः पाययित्वाऽपः सुमृष्टाः शीतलाः शिवाः ।
ततो नृप ! स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥ ३७ ॥
तस्या उपवने कामं चारयन्तः पशून् नृप ।
कृष्णरामावुपागम्य क्षुधार्त्ता इदमब्रुवन् ॥ ३८ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे यमुनागमनं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी

निमित्ततामापद्यते नार्थं स्पृहेत्यादौ तोकमाः सूक्ष्मवृक्षाः शाखारूपाः दासाविकत् एवं सर्वैरेव सर्वेषां कामाश्चिन्तयन्ते । किञ्च, न केवलं परार्थं कुर्वन्ति स्वार्थमपि किन्तु परार्थमेव ॥ ३४ ॥

यतो मोक्षरूपा विरक्ता ज्ञानिनः पूर्णास्वार्था इति वक्तुमाह-एतावदिति । एतावदमेवयज्जन्म तत्सफलम् अतः एतावदेव वक्ष्यमाणरूपमेव जन्मसाफल्यं देहिनां गृहीतदेहानां देहिषु गृहीतदेहेषु देहग्रहणं भगवदिच्छया स्वस्यान्येषामपि तत्र न स्वार्थक्रिया काचित् ततः संस्कारैः सिद्धे ज्ञाने यदि सर्वं तुल्यता तदा न कोऽपि पुरुषार्थः भगवान् पुनः सर्वार्थः सर्वं सृष्टवान् ततः स्वयमपि सर्वं स्वकीयं सर्वार्थं कुर्यात् तदा भगवानिव भवेदिति भगवतस्तुल्यतया जन्म सफलं भवति नोचेत् प्रवाहतुल्य एव परार्थमेव स्वामिति स्वार्थता न सम्भवत्येव तदाह, प्राणैरर्थैरिति एते चत्वारः प्राणादयः सर्वपुरुषार्थोपयोगिनोऽपि धर्मादिषु प्रत्येकं स्वातन्त्र्येण क्लृप्ताः अतः प्राणैः यः साध्यो धर्मः तं परार्थमेव कुर्यात् अर्थाः स्पष्टा एव बुद्धिः कामरूपा स्वविषयत्वात् वागुपदेशरूपा मोक्षदायिनी एवं सर्वेषां चतुर्भिः सर्वपुरुषार्थाः साधनीयाः एतदपि सदा इतीति समाप्तिः एवमुपदिश्यति नोक्तं पूर्ववत् अन्यथेयं लीला न स्यात् यथा भगवतः क्रिया वर्णिता उक्ता ॥ ३५ ॥

एवं वाक्यान्यद्युक्तानि ततो यत्कृतवान् तदाह–इति प्रवालेति । तेषां परार्थत्वं यत्र प्रसिद्धं तत्प्रदर्शयन् तेषां मध्येन मार्गेण यमुनां गत इति सम्बन्धः येषु वृक्षेषु पल्लवाङ्कुराः वर्त्तन्ते राशयः प्रवालाः कोमलपत्राणि स्तवकः पुष्पाणां पत्राणां वा फलानि पुष्पाणि च दलानि च केवलानि तैः पञ्चविधैरपि समूहैः नम्राः शाखा येषाम् एतावदपि दत्वा विनीताः तेषां मध्ये गमनं तद्धर्मसम्बन्धाय यमुनापि पुनरेतादृशधर्मवतीति तत्र गतः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुजनस्य आतिथेयस्य अर्थिनो याचकाः ॥ ३३ ॥
निर्यासो निबिडरसः भस्मिसारांशः तोकमाः पल्लवाद्यङ्कुराः ३४
जन्मनः साफल्यमेतावदेव ॥ ॥ ३५ ॥
प्रवालादिभिर्नतशाखानाम् ॥ ३६–३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वान् प्राणिनः उपजीवयतीति सर्वप्राण्युपजीवनम् परोपकारित्वेन शोभनो जनः सुजनस्तस्यार्थिन इव येषामर्थिनो विमुखा नैव यान्ति ॥ ३३ ॥

पत्रादिभिरर्थिनां कामान् वितन्वते तत्र निर्यासोऽवनरसः अस्थीनि दारुताग्नयोऽङ्गारा तोकमाः पल्लवाद्यङ्कुराः ॥ ३४ ॥

प्राणादिभिः देहिषु श्रेयस्तद्धितं सदाचरेत् एतावद्देहिनां जन्मसाफल्यम् ॥ ३५ ॥

इत्थं वदन् प्रवालाद्युत्करैः समूहैर्नम्रशाखानां मध्येन मध्यतः यमुनां गतः प्राप्तः ॥ ३६ ॥

---

### भाषा टीका

अहो ! धन्य है इनको जन्म जो सब प्राणीन को जिवावन वारो है, जैसे काऊ दयावान् सज्जन पुरुष के समीप तें याचक जन विमुख नहीं जाय है, ऐसे इन वृक्षन के समीप आय के प्राणी विमुख नहीं जाय हैं ॥ ३३ ॥

पत्र पुष्प, फल, छाया, मूल, वल्कल, काष्ठ, गन्ध, गोंद, भस्म, कोयला, और कोंपर, इन चीजन करिकें सब प्राणीन की कामना कों ये वृक्ष पूरण करें हैं ॥ ३४ ॥

या लोकमें देह धारीन के जन्म की इतनी ही सफलता है, कि—अपने प्राण, धन, बुद्धि, और वाणी सों सदा पराये के श्रेय (भलो) को आचरण करे ॥ ३५ ॥

ऐसें वृन्दावन के वृक्षन की बड़ाई करते, पात, गुच्छा, फल, फूल, और दलन के समूहन तें नइ रही शाखा जिनकी उन वृक्षन के बीच में होयकें श्रीकृष्णचन्द्र यमुना तीर पै जात भये ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कुमारिकाभ्यः पूर्वमेव तत्कर्मांकुलतया अगृहीतभोज्यानामेव निर्गमात्क्षुधार्त्ता इत्युक्तम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र तस्यां सुमृष्टा अतिस्वच्छाः शिवाः आरोग्यकरत्वेन पुण्यप्रदत्वेन च मङ्गलकराः ततस्तदनन्तरमेव यतो गोपाः तादृशधर्मा एव हे नृपेति तव प्रजापालनवत्तेषामपि गोपालनं धर्म इति भावः । स्वादु बहु पशुसङ्कुलत्वे च लोभेऽपि सुमृष्टत्वादिगुणयुक्तमेवेत्यर्थः । इति जलमाहात्म्यमुक्तम् अतः कामं यथेष्टम् अत एव पुनर्जलपदं सार्थकम् ॥ ३७ ॥

उपवने प्रायोऽशोकतरुमण्डित इति ज्ञेयम् । अग्रे तथोक्तेः अतः फलाद्यभावोऽपि सूचितः कामं पशूनामिच्छानुसारेणेत्यर्थः क्षुधार्त्तौ इति श्रीरामकृष्णयोरपि क्षुदनुमानेन विशेषार्त्तिश्चैषां निजतदुल्लेखस्तु प्रेमपरिपाटी याज्ञिकान् प्रति तु वक्ष्यते "रामाच्युतौ वो लपतो बुभुक्षितौ" इति दिनान्तरवत् तद्दिने दध्योदनाद्यनानयनं च केनचिन्मिषेण यज्ञपत्नीनामनुग्रहाय श्रीभगवतैव घटितं यासाम् उत्कर्षार्थमेव याज्ञिकानां निकर्षो दर्शयिष्यते तेषां शद्दर्शनार्थमेव वृक्षाः श्लाघिता इति ज्ञेयम् । उपसमीपे आगत्य वक्ष्यमाणार्थस्य गौरवाय इदं वक्ष्यमाणम् अत्रानवसरे ध्यायापातो वक्ष्यमाणलीलाविशेषस्मृत्या पूर्ववत् क्षणं श्रीबादरायणेः स्तब्धतया तत्कथाविच्छेदात् एवमन्यत्राप्यूह्यं हे नृपेति । वक्ष्यमाणाश्चर्यलीलाश्रवणेऽत्यन्तावधानार्थम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र यमुनायां मधुराः शीतला निर्मलाश्चापः जलानि गाः पाययित्वा हे नृप ! गोपाः कृष्णादयः स्वयमपि शुद्धजलमपुः ॥ ३७ ॥

ततस्तस्या यमुनायाः समीपे वने पशूंश्चारयन्तो गोपाः हे नृप कृष्णरामावुपामन्त्र्याहूय सम्बोध्य वा उपगम्येति पाठे समीपमेत्य इदं वक्ष्यमाणमब्रुवन् कथम्भूताः क्षुधाऽऽर्त्ताः प्रातर्भुक्तवन्तोऽपि विप्रपत्नीरनुजिघृक्षता भगवतोत्पादितया क्षुधा पीडिता इति भावः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतिश्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥
( विजयध्वजरीत्या विंशोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सुमृष्टाः अतिस्वच्छाः स्वादु पशुसङ्कुलत्वलोभेऽपि सुमृष्टत्वादिगुणयुक्तमेवेत्यर्थः । अथ कामं यथेष्टम् अत एव पुनर्जलपदं सार्थकम् ॥ ३७ ॥

क्षुधार्त्तौ इति श्रीकृष्णरामयोरपि क्षुदनुमानेन विशेषार्त्तिश्चैषा निजतदुल्लेखस्तत्प्रेमघटित इति ज्ञेयम् ॥ ३८ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र गतस्य कृत्यमाह—तत्रेति । तत्र यमुनायां गाः अपः पाययित्वा ततो गोपाः स्वयमपि भगवान् कामं यथेच्छं जलं पपुः प्रातरेव गृहान्निःसृताः भोजनाभावात् क्षुधिता भगवदिच्छया च लब्धभक्षा अपि गृहगमनप्रत्याशारहिताश्च जलमेव पपुः आपः स्त्रीप्रकृतिकाः अतः स्वजातीयाः पायिताः सुमृष्टा उज्वलाः पङ्कादिदोषरहिताः शीतलाः गुणवत्यः शिवाः परिणामत आरोग्यकराः जलं नपुंसकमपि कामरूपं स्वादु स्वादिष्टम् अनेनाधिकमपि पातुं शक्यत इत्युक्तम् ॥ ३७ ॥

एवं जाते आपानत एव क्षुन्निवृत्तेति विशेषं प्रार्थयितुं भगवन्तं विज्ञापयामासुरित्याह—तस्या इति । कालिन्द्या उपवने पशूंश्चारयन्त एव कृष्णरामावुपागम्य तालफलन्यायेन किञ्चिदूचनमब्रुवन् गोपा इत्यलिङ्गिनः सर्वत्र राजन्निति सम्बोधनं स्नेहेन कथायां रसोत्पादनार्थं राजन्निति सम्बोधनेन महत्त्वं सूच्यत इति सर्वार्थं भगवानेव वक्तव्य इति विद्याफलमन्ते सूचितम् ॥ ३८ ॥

इति श्रीमद्भागवते श्रीमद्वल्लभदीक्षितविरचितायां
सुबोधिन्यां दशमस्कन्धविवरणे
एकोनविंशाऽध्यायविवरणम् ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वाविंशो दशमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रियाः श्रेयस्कराः ॥ ३७ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाऽध्यायार्थप्रकाशः ॥ २२ ॥

---

भाषा टीका ।

हे नृप ! वा जगे सगरे गोप गऊन को शीतल सुन्दर जल पिवाय कें ता पीछें आपहू खूब स्वादु जल पीवत भये ॥ ३७ ॥

वा यमुना के तीर बागन में इच्छापूर्वक गायन कूं चरावत भये वाईं समें गोपन को लगी जो भूख तासों पीडित होय के श्रीकृष्ण बलराम कें समीप आय के ऐसे बोलत भये ॥ २२ ॥

इति श्रीमद्भागवत दशमस्कन्ध में बाईसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

—:*:—

गोपा ऊचुः ।

राम ! राम ! महावीर्य ! कृष्ण ! दुष्टनिवर्हण ! ।
एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्त्तुमर्हथः ॥ १ ॥

श्रीशुक उवाच ।

इति विज्ञापितो गोपैर्भगवान् देवकीसुतः ।
भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥ २ ॥
प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः ।
सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥
तत्र गत्वौदनं गोपा ! याचतास्मद्विसर्जिताः ! ।
कीर्त्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ।
तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥
॥ १ ॥

भक्ताया इत्येकवचनं सद्यः सायुज्याभिप्रायेण ॥ २ ॥ ३ ॥

अस्मद्विसर्जिता आवाभ्यां प्रहिताः सन्तो याचध्वम् युष्माकं का तत्र लज्जा । ननु, तथाप्यपात्रत्वादस्मभ्यं किमिति दास्यन्तीति चेत्तत्राह—कीर्त्तयन्त इति ॥ ४—६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ ते क्षुधार्त्ता अपि सख्यस्वभावाद्धर्मविशेषमवलम्ब्य तेन प्रस्तुतां वृत्तायां सर्वार्थदतामनन्यमानाः सर्वार्थदानार्थं मनुष्याणां प्रचारं परित्यज्य यास्मानिहानीतमेवप्रार्थयन्ते, रामेति । अस्मानपि रमयेति भावः । वीप्सा क्षुधार्त्त्या हे महाबाहो इति सामर्थ्यमुक्तं महावीर्येति पाठेऽपि सएवार्थः कृष्ण ! परमानन्दघनमूर्त्ते ! अतस्त्वदीयानां क्षुद्दुःखमयुक्तमिति भावः । विशेषतश्च हे दुष्टनिवर्हणेति "क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः" इति श्रुतेः । न अस्माकं दुःखप्रदमेतं क्षुदरिमपि नाशयेति भावः । स्नेहविशेषेण तयोरभेदात् द्वौ प्रत्येव प्रार्थनं तत्रादौ रामसम्बोधनं तत्रैवाम्रेडितं च लोकमर्यादानुरूपेण तद्गौरवेणैव श्रीकृष्णस्य सुखात् स्वयं च वक्ष्यते कीर्त्तयन्त इत्यादि यथा तुल्यत्वेनानुभूयमाना अर्हथः योग्यौ भवथः इत्यावश्यकत्वमपि सूचितं वस्तुत इयमप्येका क्रीडैव॥ १ ॥

भगवान् सर्वशक्तिमानपि इदं वक्ष्यमाणमब्रवीत्, कुतः ? विप्रभार्याया इति । जातावेकत्वं सर्वासां तासामविशेषेणोपादानार्थं ताः प्रति प्रसीदन् अनुग्रहं कर्त्तुं तत्र हेतुः भक्तायाः चिरं भगवति जातरतेः तथाप्यादौ विप्रेषु याचनं तासामेव माहात्म्यप्रदर्शनाय तच्चाग्रे व्यक्तं भावि । ननु, तासां भक्तत्वं कथं जातं तत्राह, जगदीश्वरः तदानीं जगत्यपि मधुरमैश्वर्यं प्रकाशयति तस्मिन् परमसुकोमलहृदयानां तासां भक्तिः कथं न जायतामिति भावः । देवकीसुत इति पाठे स एव भावः ॥ २ ॥

देवयजनं यज्ञवाटं ब्रह्मवादिनः वेदघोषणशीलाः न तु वेदार्थविद इति गूढोऽभिप्रायः अत एव स्वर्गकाम्यया सत्रं यज्ञमासते अनुतिष्ठन्तीत्युक्तं हि निश्चितम् ॥ ३ ॥

यदि तु सङ्कोचं मन्यध्वे तर्ह्यावयोरेव निदेशकारित्वेनात्मानं ख्यापयत न तु पित्रादिनास्नेत्यभिप्रेत्याह—अस्मद्विसर्जिता इति । तत्र च विशेषमाह—कीर्त्तयन्त इति । भगवतो महाप्रभावस्येति तत्र युक्तिश्चोक्ता मम च तत्सम्बन्धेनेत्यर्थः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमनुवर्णितैरुक्तं किन्तदित्यत्राह—रामरामेति । नोऽस्मानथा क्षुद्बाधते तस्याः क्षुधः शान्तिं कर्त्तुमर्हथः ॥ १ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विप्रभार्यायां इत्येकवचनं जात्यभिप्रायकं विप्रभार्याणां प्रसीदन् तां अनुजिघृक्षुरिदमब्रवीत् ॥ २ ॥

तदेवाह-प्रयातेति । ब्रह्मवादिनो ब्राह्मणाः वेदा इज्यन्तेऽस्मिन्निति देवयजनमाङ्गिरसाख्यं सत्रमासतेऽनुतिष्ठन्ति ॥ ३ ॥

हे गोपास्तत्र यज्ञवाटे गत्वाऽस्माद्विसर्जिताः आवाभ्यां प्रेषिताः वयमिति वदन्तोऽन्नं याचत याचध्वम् अस्मद्विसर्जिता इत्येतदेवोपपादयति—भगवत आर्यस्याग्रजस्य रामस्य मम चाभिधां नामधेयं कथयन्तो याचेतत्यन्वयः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णभक्तौ योग्यतैव बलीयसी न शास्त्रज्ञानमित्येतत्कथयत्यस्मिन्नध्याये, तत्र गोपानां कृष्णस्य च प्रश्नप्रतिवचने कथयति-शुक इति । दुष्टनिबर्हण, दुष्टजनोन्मर्दन ! क्षुत् भोक्तुमिच्छा बाधते क्लिश्नाति अस्याः क्षुधः शान्तिं प्रशमं "शान्तिः प्रशममङ्गले" इति यादवः ॥ १ ॥

विप्रभार्यायाः पतित्यक्तायाः जातावेकवचनं भक्ताः या इति छन्दो वा ॥ २ ॥

देवयजनं यज्ञवाटं सत्रं बहुकर्तृकम् आङ्गिरसम् आङ्गिरसा बृहस्पतिकथितं बृहस्पतिसवनमित्यर्थः । आसते कुर्वते अनेकार्थत्वाद्धातूनां हिशब्दो हेतौ यस्मात्सत्रे अन्नं देयं तस्मात्प्रयात ॥ ३ ॥

अस्मद्विसर्जिता नियुक्ताः निर्मुक्ता वा युष्माकं का वा तत्र लज्जा ननु, अस्माकं गोपालत्वेनापात्रत्वात्किमिति दास्यन्तीति तत्राह-कीर्तयन्त इति । आर्यस्य श्रेष्ठस्य रामस्याभिधां नाम ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

भक्ताया इति जातावेकवचनं स्वभावतः कृष्णप्रधानचेतस्त्वेनाहुः ॥ २—५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कर्मकाण्डे वैदिके तु त्रिंशत्यध्याय उक्तवान् ।
उभयोर्निर्णयो यादृक् सोऽप्यत्र विनिरूप्यते ॥
साक्षाद्भगवतोक्तं हि यथापूर्वं न भासते ।
परं परोक्षमध्येवं स्त्रिया भावस्तथा परः ॥

पूर्वाध्याये विद्यापञ्चपर्वा उपदिष्टा तेन मोहः सर्वोऽप्यपगतः दैहिका धर्मास्तु नापगतास्तेऽपि चेदपगता भवेयुः तदा कृतार्था भवन्तीति तद्विनिश्चित्य सर्वे गोपालाः परमाधिकारिणो विज्ञापयन्ति-रामरामेति । आदरे वीप्सानाम्ना—

"रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते" ॥

अतो यथात्मनि रतिर्भवति तथा कर्तव्यमिति प्रार्थना तत्र सामर्थ्यं माह-महावीर्येति । अयं हि ज्ञानात्मकः श्रुतिरूपः [illegible] च, भगवन्तं च प्रार्थयन्ति-कृष्णदुष्टनिबर्हणेति । "क्षुत्खलु वै मनुष्यस्य भ्रातृव्यः" इति श्रुतेः । सदानन्दतिरोभावरूपा सदानन्दादेव गच्छतीति कृष्णेति सम्बोधनं यदीयं क्षुत् बाधिका मृत्युरूपाऽपि भवति तथापि निवारणीयेति ज्ञापयितुमाहुः-दुष्टनिबर्हणेति । सर्वे एव दुष्टाः त्वया निवार्यन्त इति स्त्रीनिवारणेऽस्माकं सामर्थ्यं न हि विद्यया स्त्रिया क्षुद्रूपा स्त्री निवर्त्तते तदाहुः-तच्छान्तिं कर्तुमर्हथेति । तस्याः शम एव कर्तव्यः यथा न बाधते यथा अज्ञानादिदोषनिवृत्तौ शास्त्रमुपायः तथा क्षुन्निवृत्तावपि ज्ञानरूप एव कृष्णोपायो वक्तव्य इति भावः ॥ १ ॥

भगवांस्तु संसारस्याप्रपञ्चाद्भावेन गमनं स्यादिति विचिन्त्य सुतरां स्त्रीणाम् उपकारार्थं तत्रापि ब्राह्मणस्त्रीणां पुरुषाधिकाररहितानां धर्ममार्गमपि स्थापयितुं प्राप्तज्ञानानां भिक्षाटनमेव मुख्यमिति विचिन्त्य प्रथमं पुरुषभिक्षामुक्तवान् द्रव्ये हि तेषां स्वाम्यमिति अलौकिके तूपाये स्त्रीणां मुक्तिर्न स्यात् सर्वेषां च सत्सङ्गो न स्यात् ततः सम्प्रदायोच्छेदश्च स्यात् अभिमानाभावाद्दीनता तु नास्त्येव भगवत्कृपया नापि लोके अतो भगवान् याचनमेवोपदेष्टुकामः उत्तरं दत्तवानित्याह-इतीति । एवं गोपैर्विज्ञापितोऽपि भगवान् सर्वसमर्थोऽपि देवकीसुतः परमकृपालुः सुतरां स्त्रीषु कृपावान् भक्तिमार्गप्रवर्त्तकः भक्ताया विप्रभार्यायाः प्रसीदन् तस्याः प्रसादं करिष्यन् इदं वक्ष्यमाणं याचनरूपमब्रवीत् ॥ २ ॥

ज्ञानं हि ब्रह्मात्मकं बीजरूपं तद्ब्रह्मण्येव क्षेत्रपरिपुष्यते तद्ब्रह्मयोग्यं भवति यथा बीजं ब्राह्मणस्यामेव पुष्टं ब्राह्मणस्त्रैव पुष्टिं गतं ब्रह्मसंस्कारैर्ब्रह्मणा वेदेन च व्याप्तं ब्रह्मभावाय कल्पते तथैदानीमपि जातं ज्ञानं ब्राह्मणान्नेनैव चेत्पुष्टिमेति तदा कार्यक्षमं भवति तत्रापि ब्राह्मणाः पूर्णज्ञानकर्मनिष्ठाः ननु यादृशास्तादृशाः अन्नमूलकमेव हि ज्ञानम् "अन्नेन प्राणाः" इत्यादिप्रपरया श्रुतौ विज्ञानेनात्मानं वेदयतीत्यन्तभूतायां तथैव निरूपणात् तस्मादन्नं ददन् सर्वाण्येतानि ददातीति च ब्राह्मणवचनमेवान्नं भुक्तं सज्ज्ञानं जनयति तद्द्वारा सर्वदानात् ज्ञानं ब्राह्मण एव प्रतिष्ठितमिति मन्याऽन्नं तु ज्ञानादिकमन्योक्तमेव स्यात् ततश्च तत् ब्रह्मज्ञानं भवेत् अतो भगवान् प्रथमं ब्राह्मणान्नरूपमादौ पश्चाद्याचनं वक्ष्यति-प्रयातेति । देवा इज्यन्ते अस्मिन्निति देवयजनं यज्ञभूमिः तेषां भेदाः [illegible] यज्ञो न कर्तव्य इति ज्ञापनार्थाः ब्राह्मणा एव सर्वे न तु [illegible] कश्चित् क्षत्रियः ते च स्वधर्मैरवदाताः तदाह-ब्रह्म[illegible] इति । ब्रह्मवादशीलाः ब्रह्म वेदः वेदार्थश्च तादृशा मुख्याधिकारिणः आङ्गिरसं सत्रं चतुर्विंशतिरात्रं चत्वारः षड्ढाना[illegible] "अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमायन्" इति श्रुतेः स्वर्गो भगवत आनन्दांशो भगवदवतारः देवेभ्यो [illegible] लोकस्थितयाद्दिस्थश्च निर्णीतः ॥ ३ ॥

अतस्ते सर्वोत्तमाः सन्नियाः तत्र गत्वा याचनं कर्तव्यमित्याह । तत्र गत्वेति अस्मद्विसर्जिताः [illegible] ननु [illegible] न्यतया अन्यथा गमनेऽपराधः स्यात् [illegible] याचनीयं तदाह आर्यस्य बलभद्रस्य मम च अभिधां नाम कीर्तयन्तो याचत ॥ ४ ॥

इत्यादिष्टा भगवता गत्वा याचन्त ते तथा ।
कृताञ्जलिपुटा विप्रान्दण्डवत्पतिता भुवि ॥ ५ ॥
हे भूमिदेवाः ! शृणुत कृष्णस्यादेशकारिणः ।
प्राप्तान् जानीत भद्रं वो गोपान्नो रामचोदितान् ॥ ६ ॥
गाश्चारयन्तावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ ।
तयोर्द्विजाः ! ओदनमर्थिनोर्यदि श्रद्धा च वो यच्छत धर्मवित्तमाः ! ॥ ७ ॥
दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्च सत्तमाः ! ।
अन्यत्र दीक्षितस्यापि नान्नमश्नन् हि दुष्यति ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रयोविंशेऽन्नयाच्ञानाहतैर्गोपैः पुनश्च सा ।
" पत्नीनां प्रेम विप्राणामनुतापश्च वर्ण्यते ॥

क्षुध इति "क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः" इति श्रुतेरस्माकं क्षुन्महाशत्रुमधुना हन्तुं चेत् शक्नुथस्तदैव युवयोर्महाबलदुष्टहन्तृत्वे सार्थके ज्ञास्यते इति नर्म व्यञ्जितम् ॥ १ ॥

विप्रभार्याया इति जातावेकत्वं भक्ताया इति तासां भक्तिमनुसृत्य सद्य एव प्रसीदन् किञ्च तास्वेकस्यास्तु भविष्यन्तीं दशमीं दशामनुसृत्य प्रकर्षेण सीदन् शोचमानश्चेत्यर्थद्वयबाभार्थमेकत्वमिति केचित् ॥ २ ॥

तपोविद्याधर्मादिमत्स्वपि विप्रेषु भक्त्यभावात्र मे प्रसादस्तपआदिरहितास्वपि तत्पत्नीषु भक्तिसद्भावान्मत्प्रसाद इत्यर्थद्वयमेकस्यां ब्राह्मणजातावेव क्रमेण ज्ञापयितुं प्रथमं गोपान् ब्राह्मणसन्निधौ प्रस्थापयन्नाह—प्रयातेति ॥ ३ ॥

याचत याचध्वं कीर्तयन्त इति भावाङ्क्ष्यामपि स्वनाम्नापि प्रबोधयितुमशक्या ईदृशी तेषां विदुषां निद्रेति ज्ञापयितुमुक्तम् आर्यस्य बलदेवस्य प्रथममभिधां कीर्तयन्त इति मत्तो वेदज्ञातेः सकाशाद्दात्र्यं क्षत्रियजातिं किञ्चिदङ्गीकृत्य दानपात्रं मत्वापि यदि ते बहिर्दर्शिनो वः किञ्चिद्दास्यन्ति तदपि भद्रमित्यभिप्रायेण ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रयोविंशेऽध्याये कर्मफलाशकाः तदर्थकर्मानुष्ठानव्यग्राः न हरिभक्त्यधिकारिणो यद्यपि तथापि हरिभक्तिसङ्गस्तेऽपि हरिभक्ता भवन्तीति दीक्षित विप्रतत्पत्नीवृत्तान्तेन वर्णयति—रामरामेति ॥ १ ॥

विप्रभार्यायाः भक्तायाः प्रसीदन् जातावेकवचनम् वा सद्यो मुक्ताभूत्तत्प्राधान्यविवक्षया वा ॥ २ ॥

देवयजनं देवाः इज्यन्ते यत्र तत् यज्ञवाटं प्रयात तत्राङ्गिरसं नाम सत्रं बहुकर्तृकं यागं ब्राह्मणा आसते अनुतिष्ठन्ति ॥ ३ ॥

तत्र देवयजने ओदनं यूयं याचत याचध्वम् । ननु, अनधिकारिभिरत्रापि अकृतपूर्वा याच्ञाऽस्माभिः कथं कर्तुं शक्या इत्यत आह—अस्मद्विसर्जिताः आवाभ्यां प्रहिताः आर्यस्य बलस्य मम च अभिधां नामधेयं कीर्तयन्त इति ॥ ४—६ ॥

---

भाषा टीका ।

ॐ यज्ञपत्न्युद्धर्त्रे नमः ।

गोपा ऊचुः ।

गोप बालक बोले, कि हे राम ! हे राम, हे बड़े पराक्रम वारे, हे कृष्ण ! हे दुष्टन के नाश करनवारे ! आज ये भूख हम सबन कों बड़ी बाधा करे हैं तासों याकी शान्ति आप दोऊ करबे योग्य हो ॥ १ ॥

श्रीशुक उवाच ।

श्रीशुक देवजी बोले, कि—या प्रकार गोपन ने जब प्रार्थना करी तब देवकी के पुत्र भगवान् श्रीकृष्णचन्द्र भक्तिवारी जो ब्राह्मणन की स्त्री तिनके ऊपर प्रसन्न होय के ऐसे बोलत भये ॥ २ ॥

श्रीकृष्ण बोले, कि—हे गोप हो ! वेद के पढ़वे वारे ब्राह्मण स्वर्ग की कामना सों जहां आंगिरस नामक यज्ञ करे हैं तहां तुम जाओ ॥ ३ ॥

और हे गोप हो ! हमारे पठाये भये तहां जाय के ब्राह्मणन सों भात मांगनो और उन साधुन की ओर हमारे दादा (बलदेवजी) की खूब छने हैं तासों दादा को और मेरो भी नाम ले के मांगनो ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविदूरे वर्तमानौ सन्तौ वो युष्मत् तल्लुपतोऽभिलषतः यः ओदनं श्रद्धा च यद्यस्ति तर्हि यच्छतेति ॥ ७ ॥

दीक्षिता वयमभोज्यान्ना इति वदिष्यन्तीति स्वयमेवाशङ्क्याहुः—दीक्षाया आरभ्याग्नीषोमीयपश्वालम्भनात्पूर्वं दोषः न ततोऽन्यत्र तथा सौत्रामण्याश्चान्यत्रान्यदा ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्यादिष्टा इति तदादेशगौरवेणैवेत्यर्थः । याज्ञिकानां दौःशील्यं विशेषयितुं तेषां सौशील्यमाह—कृतेति ॥ ५ ॥

हे भूमिदेवाः ! इति भक्त्या सम्बोधनं स्वभावतः कृष्णप्रधान-चेतस्त्वेनाहुः—कृष्णस्येति । श्रीकृष्णोक्तिक्रमविस्मृतिर्माभिनीयाहुः रामेति । तत्र प्रेषणे तु रामादेश एव मुख्य इत्यर्थः । अत एव तत्सम्बरणार्थं मध्ये भद्रं व इति स सम्भ्रमादरोक्तिः ॥ ६ ॥

किमर्थं प्राप्तावत्र तत्राह—गा इति । ननु, कथमविदूरे तौ तत्राहुः गाश्चारयन्ताविति । मानरक्षार्थे तत्रास्माभिरागमनं परिहृतं भक्तमिति स्वामिपाठः ओदनमिति पाठो बहुत्र अर्थस्तु समानः "भिस्सा स्त्री भक्तमन्धोऽन्नमोदनो स्त्री च दीदिविः" इत्यमरः यद्वा कुतो बुभुक्षितौ तत्राहुः गाश्चारयन्तौ गोचारणेन तत्र च दूरागमनेन परिश्रमादित्यर्थः । बुभुक्षिताविति तयोरेव बुभुक्षयान्नप्रार्थन-सिद्धेः । यद्वा, तौ कुतोऽत्र नायातौ तत्राहुः, गा इति । तौ विना गवां रक्षा न भवेदिति भावः । ननु, सम्प्रति कुत्र तौ तिष्ठतः तत्राहुः अविदूरे प्रायो निकट एवेत्यर्थः । इदं निजवचनप्रामाण्याय तेषां सङ्कोचनार्थं च रामाच्युताविति ब्राह्मणोऽयं भयेन ज्येष्ठक्रमेण निर्दिष्टं लोकरमणात् रामः सर्वगुणात् च्युतिरहित इति माहात्म्यमत्रलब्धये ध्वनितं वो युष्माकमेवान्नमिति तदितरान्नं निरस्तम् । ननु, तथापि सत्रं परित्यज्य गन्तुं न शक्यते तत्राहुः यच्छत अस्मास्वेव समर्पयतेति यद्यस्तीति विनयः अथ च सतोऽर्थिभ्योऽप्रदानमधर्म इति गूढो भावः अत एवाहुः धर्मवित्तमा इति तमप्प्रत्ययः स्तुत्यर्थमेव ननु तत्त्वतः धर्मतत्त्वाज्ञानात् एवमग्रे सत्तमा इति च ॥ ७ ॥

दीक्षाया इत्याद्युक्तिः तेषां स्वाभाविकपाण्डित्यं व्यनक्ति अतः पशुसंस्था च जानेति अनुष्ठानविशेषेण परिचितं हीति शास्त्रप्रसिद्ध्या निश्चिन्वन्ति स्म दीक्षामारभ्य पशुसंस्थातः पूर्वं दुष्यति ततोऽन्यत्र ततःपरं न दुष्यति सौत्रामण्याश्चान्यत्र न दुष्यति सौत्रामण्यां तु दुष्यतीत्यर्थः । तदेवमपरमपि समयासमयादिविचारं जानन्त एव याचामह इति भावः ॥ ८ ॥

—————

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

लपतः अन्नमिच्छतः ॥ ७ ॥

दीक्षाया इति दीक्षापूर्विकायाः अग्निषोमीयपशुसंस्थायाः ऊर्ध्वं सौत्रामण्या अन्यत्र अनन्तरेषु दीक्षितस्य यजमानस्यान्नं न दुष्यतीत्यर्थः ॥ ८—९ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवतेत्थमादिष्टास्ते गोपास्तत्र गत्वा यथोक्तमदाम्नन्त, याच्ञाप्रकारमेव दर्शयति—कृताञ्जलिपुटाविति । तादृशिप्रानुद्दिश्य भुवि दण्डवत्पतिताःकृतान्यञ्जलिपुटानि यैस्ते तथाभूतास्ते गोपाः ॥५॥

हे भूमिदेवाः ! शृणुत किं कृष्णस्याज्ञाकारिणः श्रीमान् रामेण चोदितानिह प्राप्तानस्मान् गोपालान् जानीत यो युष्माकं भद्रमस्तु ॥ ६ ॥

किमर्थं चोदिता इह प्राप्ताश्चेत्यत्राह—गाव इति । इतोऽविदूरे समीपे गाश्चारयन्तौ रामकृष्णौ बुभुक्षितौ क्षुधितौ वः युष्माकमोदनं लपतोऽभिलषन इच्छन इति यावत् यत्तुत्र इतिपाठे यस्मात्तुवतः अतो हे द्विजाः वः युष्माकं श्रद्धा वर्तते चेत्तर्हि अर्थिनोस्तयोः ओदनं यच्छत दीक्षितानामस्माकमन्नं न भोज्यमिति इमां शङ्कां निराकुर्वन्तः सम्बोधयन्ति, हे धर्मवित्तमाः इति ॥ ७ ॥

तदेवोपपादयन्ति—दीक्षाया इति । हे सत्तमाः ! दीक्षायाः दीक्षापूर्विकाया अग्निष्टोमीयपशुसंस्थाया ऊर्ध्वं सौत्रामण्या अन्यत्रानन्तरे च दीक्षितस्य युज्यमानस्यान्नमदन्नत्र दुष्यति यत्भुक्षिरिति कर्तृपदमध्याहर्तव्यं दीक्षितशब्दोऽत्र यजमानपरः सौत्रामण्यां दीक्षणीयेष्टिपूर्वकसङ्कल्पाभावात् ॥ ८ ॥

—————

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निराधारो दण्डो यथा पतति ॥ ५ ॥

हे भूमिदेवाः ब्राह्मणाः "भूमिदेवो द्विजोत्तमः" इति हलायुधः ॥ ६ ॥

लपतोऽभिलषत इच्छतः श्रद्धा आस्तिक्यम् अभिलाषो वा "श्रद्धास्तिक्याभिलाषयोः" इति यादवः ॥ ७ ॥

ननु, दीक्षितान्नं न भोक्तव्यमिति शास्त्रविरोधं परिहरति—दीक्षाया इति । दीक्षायाः व्रतसङ्ग्रहरूपायाः वर्तमानायाः मत्यः पशुसंस्थायाः अग्नीषोमीयपश्वालम्भादूर्ध्वं दीक्षितस्यान्नमश्नन् सौत्रामण्यास्तथा सौत्रामणीनाम्न्या इष्टेश्चान्यत्र कर्मान्तरे दीक्षितस्य चान्नं न दुष्यति ॥ ८ ॥

—————

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कृष्णस्येति श्रीकृष्णोक्तिः क्रमविस्मृतिमभिनीय तत्संस्मरणार्थं सादरं किञ्चिदाहुर्भद्रमिति श्रीकृष्णादेशवदाहुः रामेति ।

६ ॥ ७ ॥

दीक्षामारभ्य पशुसंस्थानतः पूर्वं दुष्यति सौत्रामण्याञ्च सर्वदैव दुष्यति ततोऽन्यत्र न दुष्यतीत्यर्थः ॥ ८—१० ॥

—————

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यथा गमनेऽपराधः स्यात् स्वनाम्ना न याचनीयं तदाह—आर्यस्य बलभद्रस्य मम च अभिधा नाम कीर्तयन्तो याचत तथैव कृतवन्त इत्याह—इत्यादिष्टा इति । भगवता आदिष्टा नान्यथा कर्तुं शक्ताः अतस्तत्र गत्वा तथैव ते याचितवन्तः तेषां याचने प्रकारमाह, कृताञ्जलिपुटा इति । कृतोऽञ्जलिपुटो यैः भगवदर्थमेतत् दण्डवत्पतिताः भुवि ब्राह्मणा न याचन्तेति सम्बन्धः ॥ ५ ॥

तेषां याचनवाक्यान्याह—त्रिभिः । हे भूमिदेवाः ! इति भूमौ प्रत्यक्षदेवा ब्राह्मणा इति शृणुतेति अवधार्थं प्रार्थयन्ते के भवन्त इत्याकाङ्क्षायामाहुः, कृष्णस्यादेशकारिण इति । सदानन्दस्य भगवतः फलरूपस्य वयमाज्ञाकारिणः तथापि किं प्रमाणं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्वाक्य इत्याकाङ्क्षायामाहुः । आप्तान् जानीतेति आप्तवाक्यं शब्दः प्रमाणं यथा इष्टार्थवादिन आप्ताः किमुक्तवन्त इत्याकाङ्क्षायामाहुः, भद्र च इति । प्रथमतः याचकैः आशिषो वक्तव्या इति अथवा यदुक्तं तद्वचनं भद्रमेव वयं च ज्ञात्वा गोपा रामेण बलभद्रेण च प्रस्थापिताः भगवान् सदानन्दो न हि भक्तान् याचने प्रवर्त्तयेत् यद्यपि भगवतोक्तमस्माभिरसाङ्गता इति तदपि वाक्यस्याद्यमध्ये प्रविष्टं बलभद्र एव प्राविशति अतो रामचोदितान् इत्युक्तम् ॥ ६ ॥

एवं पूर्वपीठिकामुक्त्वा याचनमाहुः-गाश्चारयन्ताविति । धर्मप्रवर्त्तकौ अविदूरे निकट एव स्थितौ रामाच्युतौ ब्रह्मपरमानन्दो वः युष्माकमन्न अपतः अभिवचनः तत्र हेतुर्बुभुक्षिताविति अन्यथा न याचयातां न हि कश्चिद्याचकं याचन्ते बुभुक्षिताविति कीर्त्तयन्तौ भगवत इति भगवद्वाक्यात् अभिप्रायग्रहात्वा क्षुधामेव ज्ञातवन्तः अभिप्रायस्तु तैर्भगवानेव याचत इति ज्ञातः यथा महान् प्रभुः सेवकं याचयित्वा ददाति तथा ब्राह्मणयाचनं कृत्वा देयमिति मन उक्तं बुभुक्षिताविति द्विजा इति सम्बोधनमज्ञानात् रूढ्या वा तयोः रामकृष्णयोः ओदनं यच्छत क्षुधैव पात्रता निरूपिता अर्थित्वमपि द्वितीयमङ्गम् अत्यैकादश्यामपि क्षुधितायासन्देयं स्यात् तत्रापि यदि श्रद्धा आस्तिक्यबुद्धिः तदा देयम् एतयोर्दाने वयं कृतार्था भविष्याम इति चकाराद्यद्योदनोऽस्ति यदि वाचः युष्माकमेव नत्वन्यस्य प्रसङ्गादागतः अत्र सर्वत्र विधिनिषेधपरिज्ञानं भवतामेव वर्त्तत इत्याहुः, हे धर्मवित्तमाः ! धर्मविदां मध्ये अतिशयिताः । ननु, दीक्षितानामन्नमभोज्यं "न दीक्षितवसनं परिदधीत नास्य पापं कीर्त्तयेत् नान्नमश्नीयात्" इति ॥ ७ ॥

तत्राहुः-दीक्षाया इति । दीक्षा दीक्षातः पूर्वं भोक्तुं शक्यते ततो दीक्षादिवसेषु न भोक्तव्यं पशुसंस्थादिवसेषु च न भोक्तव्यं सौत्रामण्याश्च सुत्येऽहनि न भोक्तव्यं यदा सुराग्रहाः अथवा दीक्षायाः दीक्षामारभ्य पशुसंस्थाया अन्यत्र पशुसंस्थापर्यन्तं न भोक्तव्यं सौत्रामण्यां च संस्थितेऽग्नीषोमीये हुतायां वा वपायामिति वाक्यात् सौत्रामण्यां तु सुराप्राधान्यात् अन्नस्य वा एतच्छमलं यत्सुरेति शमलसम्बन्धात् न भोक्तव्यं द्रव्यनिर्देशः कुतो नेति सन्देहात् सपक्षो गोकः अन्यत्र एतद्व्यतिरिक्तस्थले दीक्षितस्याप्यन्नमदन्न न दुष्यति हि युक्तश्चायमर्थः तदुपपादितं श्रुतिप्रदर्शनेन ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृताञ्जलिपुटा इति स्वेषां सौशील्यमभिव्यञ्जयितुं तत्र तदानीं भिक्षाप्राप्त्यर्थकमेव दण्डवत्पतिता इति श्रीमद्व्रजस्य विप्रेभ्योऽपि सकाशात्तानतितेजस्विनो मत्वेत्यर्थः ॥ ५ ॥

कृष्णस्यादेशकारिण इति तस्य नन्दराजपुत्रत्वेन रामतः सकाशादैश्वर्यात् रामचोदितानित्यस्मद्द्वारा राम एवान्नं प्रथमं भिक्षते इत्यभिप्रायेण ॥ ६ ॥

वो युष्मान् अपतः भिक्षेते ओदनम् अन्नं चेति पाठद्वयं तुल्यार्थम् । ननु, तौ ब्राह्मणौ न भवत इति ब्राह्मणभोजनात् पूर्वं कथं दास्यामस्तत्राहुः-बुभुक्षितौ "अन्नस्य क्षुधितः पात्रम्" इति प्रमाणं जानीथैवेति भावः । किमप्यप्रतिवदतस्तानालक्ष्य पुनराहुः हे द्विजाः! तयोरर्थिनोर्यदि श्रद्धा अस्ति तर्हि यच्छत नोचेत्तर्हि ब्रूत वयं परावृत्य याम इति भावः धर्मवित्तमा इति अन्वयव्यतिरेकाभ्यां धर्माधर्मौ वयं पुनः किं ब्रूम इति भावः ऐश्वर्या यथोनामैव सर्वजगदप्यतिवृत्ती भूयानुरञ्जयति तौ रामकृष्णौ क्षुधार्तावर्थिनावपि श्रुत्वा यत्तूष्णीं भवथ अतो यूयं द्विजाः पितृद्रव्यजाता एवेत्यापेक्ष धर्मवित्तमा इति विपरीतलक्षणाया ॥ ७ ॥

"दीक्षितान्न न भुञ्जीत" इति वचनाद्दीक्षिता वयमभोज्यान्ना इति मंस्यतीति स्वयमेवाशङ्क्याहुः—दीक्षाया दीक्षानन्तरं पशुसंस्थायाः अग्नीषोमीयपश्वालम्भात् पूर्वं दोषः न ततोऽन्यत्र ततः परन्तु अन्नमश्नन् दुष्यतीति पशुसंस्थात्वेदानीं जातैवेति भावः तथा सौत्रामण्यां च अन्यत्र न दुष्यति सौत्रामण्यान्तु सर्वत्रैव दुष्यतीत्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इतोऽविदूरे गाश्चारयन्तौ वः युष्माकमोदनं अपतोऽभिलषितः यदि वो युष्माकं श्रद्धा चेत्तर्हि तयोरर्थिनोः ओदनं यच्छत ॥ ७ ॥

ननु, दीक्षिता वयमभोज्यान्ना इत्यत आहुः-दीक्षाया इति । दीक्षाया आरभ्याग्निषोमीयपश्वालम्भात्पूर्वं दोषः ततोऽन्यत्र तथा सौत्रामण्याश्चान्यत्रान्यदा दीक्षितस्य यजमानस्य अन्नमदन्न दुष्यति भोक्तेति कर्तृपदमध्याहियते ॥ ८ ॥

---

भाषा टीका ।

ऐसें भगवान् के सिखाये भये बालक धाई दीनसों जाय के याचना करत भये, हाथ जोर के भूमि में दण्डवत करि के बोलत भये ॥ ५ ॥

गोप बोले, कि-हे भूमि देव हो ! तुम हमारी बात सुनो हम कृष्ण के आज्ञाकारी हैं और बलदेवजी के पठाये भये तिहारे पास आये हैं, तिन कूं तुम जानों तुमारो भलो होय ॥ ६ ॥

और श्रीकृष्णचन्द्र और बलदेव दोऊ भैया गौ चरावत समीप आये हैं, और तुम सों भात की चाहना करें हैं, हे द्विज हो ! हे धर्मज्ञ हो ! जो तुमारी श्रद्धा होय तौ उन दोऊन को भात देओ ॥ ७ ॥

हे अतिश्रेष्ठ हो ! दीक्षा तें आरम्भ लेके पशु के हिंसन तें पाछें सौत्रामणी यज्ञ नें और ठौर दीक्षा वारे के अन्न खाये तें दोष नहीं लगे हैं तासों तुमारे अन्न खायवे में कछु दोष नहीं है ॥ ८ ॥

---

इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः ।
क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥ ९ ॥
देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः ।
देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ १० ॥
तं ब्रह्म परमं साक्षाद्भगवन्तमधोक्षजम् ।
मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥ ११ ॥
न ते यदोमिति प्रोचुर्न नेति च परन्तप ! ।
गोपा निराशाः प्रत्येत्य तथोचुः कृष्णरामयोः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षुद्रे स्वर्गादावाशामात्रं येषां भूरीणि क्लेशाधिकानि कर्माणि येषाम् अतोऽज्ञा वृथाज्ञानवृद्धा इति मानवन्तः ॥ ९ ॥

ननु, कर्मकममुल्लङ्घ्य देशकालेऽन्यार्थमन्नमन्यस्मै कथं देयं तत्राह—देश इति । पृथक् चरुपुरोडाशादिद्रव्यं तन्त्रं प्रयोगः धर्मोऽपूर्वम् ॥ १० ॥

मनुष्योयमिति दृष्ट्या मर्त्यात्मानो ब्राह्मणा वयं महान्त इति मन्यमानाः ॥ ११ ॥ १२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इतीति श्रीशुकोक्तिः भगवतः सर्वैश्वर्यपरिपूर्णस्यापि कृपया याच्ञां तेनैवान्नार्थं प्रेषितत्वात् न शुश्रुवुः महाभिमानेन तां नादृतवन्त इत्यर्थः । तत्र श्रीभगवत्यनादरेण तान् विप्रान् सक्रोधं निन्दति, क्षुद्रेति सार्द्धद्वयेन । क्षुद्राशा अपि भूरिकर्माणः यतो बालिशाः अल्पबुद्धयः तथापि वृद्धमानिनः यद्वा स्वल्पश्रमेणापि भगवद्भक्त्या महार्थः सिद्ध्येत् तदज्ञानाद्बालिशा एवेति । ननु, कथं तत्त्वं नान्विष्यन्ति तत्राह, वृद्धेति आत्मानं ज्ञानवृद्धं मन्यन्त इति ॥ ९ ॥

अथ तत्त्वदृष्ट्या तेषामज्ञत्वं दर्शयन्नाह—देश इति युग्मकेन । पृथग्बहुविधम् ॥ १० ॥

भगवतो देशादिमयत्वे हेतुः परमं ब्रह्मेति अतो भगवन्तं सर्वैश्वर्यपरिपूर्णम् अतोऽधोक्षजम् इन्द्रियागोचरमित्यर्थः । तथापि कृपया साक्षाद्भूतं तमपि मनुष्यदृष्ट्या मनुष्यबुद्ध्या न मेनिरे नादृतवन्त इत्यर्थः । कुतो दुष्प्रज्ञाः ? विचारहीनाः तदपि कुतः मर्त्यात्मानः ॥ ११ ॥

ओमिति स्वीकारे दास्याम इति न प्रोचुः न दास्याम इति च न प्रोचुः दुरभिमानग्रस्ततया अत्यन्तावज्ञानात् हे परन्तपेति परं मदवज्ञया शत्रुं भवादृगेव नियन्तुं शक्नोति न त्वन्य इति भावः तथेति निजोक्तादिकं विप्रचेष्टितं चोचुः ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दीक्षितशब्दो यजमानपरः सौत्रामण्या दीक्षणीयेष्टिपूर्वक सङ्कल्पाभावात् पृथक् द्रव्यं पुरोडाशादिद्रव्यम् ॥ १०—१८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवतो याच्ञां ते ब्राह्मणाः शृण्वन्तोऽपि नाद्रियन्त तत्र हेतुं वदन्निन्दति क्षुद्रे स्वर्गादावाशामात्रं तदर्थं येषां भूरीणि क्लेशावहानि कर्माणि येषां ते स्वयं बालिशा मूर्खा अपि वृद्धमानीनः वृद्धं ज्ञानाधिकमात्मानं मन्यन्त इति तथा ॥ ९ ॥

देशादियन्मयः यत्प्रचुरः भवति तं कृष्णं साक्षात्परब्रह्मभूतं षाड्गुण्यपूर्णमधोक्षजं न मेनिरे किन्तु मनुष्यबुद्ध्या केवलं प्राकृतं मनुष्यमेवामन्यन्त तत्र हेतुः दुष्प्रज्ञाः कर्ममीमांसोचितज्ञानाः मर्त्यात्मज मर्त्यं मरणशीले देहे आत्मा आत्मबुद्धिर्येषां ते तत्र देशः यत्र यजेतेत्याद्युक्तः कालो वसन्तादिः पृथग्द्रव्यं चरुपुरोडाशादिकं धर्मोऽपूर्वम् एतेषां भगवत्प्राचुर्यं तच्छरीरत्वेन तन्नियाम्यत्वेन चेति ज्ञेयम् ॥ १०—११ ॥

शृण्वन्तोऽपि न शुश्रुवुरित्येतदेव विशदयति-नेति । ते ब्राह्मणाः हे परन्तप । ओमिति न प्रोचुर्नापि नेति ओमित्यङ्गीकारद्योतक मव्ययं ततो गोपाः निराशाः प्रत्यागत्य तद्विप्राणामनादरं रामकृष्णयोरूचु ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति हेतुपूर्वां भगवद्याच्ञाम् अश्रवणे तेषां बुद्धिविशेषणानि क्षुद्राशाः इति । क्षुद्राशाः तुच्छफलेच्छवः तदर्थं भूरिकर्माणः किमिमे भ्रान्ता इति मत्यामित्याह, बालिशा इति बालिशा मूर्खाः "बालिशो बालमूर्खयोः" इति एतदेव द्रढयति वृद्धेति वृद्धा इत्यभिमानं येषामस्तीति ॥ ९ ॥

देशः कृष्णसारसञ्चारविषयः कालः वसन्तादिः पृथग्द्रव्यं चरुपुरोडाशादि मन्त्रो देवताप्रसादप्रकाशकोङ्कारादिः तन्त्रं मन्त्रानुष्ठानाविधिः ऋत्विजोऽध्वर्युप्रभृतयः अग्नयः आहवनीयादयः

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवता इन्द्रादिशब्दवाच्याः क्रतुः सकल्पः यजमानोऽधिकारो धर्मोऽदृष्टं यन्मयः यत्प्रधानप्रतिपाद्यः ॥ १० ॥

मर्त्यात्मानः देहोऽहमिति बुद्धियुक्ताः न मेनिरे न ज्ञातवन्तः ॥ ११ ॥

तयोमयं ओमिति न नेति च ॥ १२ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राज्ञाभिन्येकदेशदृष्टान्तः ॥ ११—३० ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवंसोपपत्तिके याचने कृतेपि ते न दत्तवन्तः तत्र हेतुरभवयां तत्रापि हेतुः यावकोक्तमिति "असंस्कृता न परिभाष्याः" इति "न स्त्रिया शूद्रेण सम्भाषेत" इति च तथापि भगवन्नाम्ना याचितवन्त इति आदाने तेषां दोष एवेति मन्यमानः शुक आह—इतीति । तेहि भगवद्वाक्यं शृण्वन्तोपि न शुश्रुवुः वच्चचित्ता न जाताः तत्र हेतवः क्षुद्राशा इत्यादिपदोक्ताश्चत्वारः क्षुद्रेऽल्पेऽर्थे आशा येषां स्वर्गानन्दो हि क्षुद्रः परमानन्दापेक्षया "अस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति" इति श्रुतेः । साक्षादेव वैदिककर्मणः फलावश्यम्भावः । तेह्येवं मन्यन्ते प्रमाणबलनिष्ठो भगवान् हि सर्वात्मकः सर्वत्रैव वर्तते अविशेषेण अभिव्यक्तिपक्षेऽपि यज्ञोपि भगवान् सर्वस्यापि प्रारब्धमूर्तिरेव सन्तोषणीया ततो यथा यज्ञापराधो न पतति तथा विधेयं अन्यथा विधिनिषेधौ न स्यातां प्रायेणैतद्द्रव्यनिर्देशः कृतः आज्यं पशवः पुरोडाशीया एते मे यज्ञार्था यावद्यज्ञ उपयोक्ष्ये तावन्मे यज्ञार्थं शेषाद्ब्राह्मणा भुञ्जीरन्निति अतो ब्राह्मणपदश्रवणात् भगवतेपि न दत्तवन्तः रूपान्तरविज्ञानात् एवं तेषां क्षुद्राशा । किञ्च, तेहि भूरिकर्माणः यद्यल्पे कर्मणि तत्त्वानपि स्वर्गः स्यात्तथापि न कुर्युः अतो महतापि यज्ञेन यावान् स्वर्गो भवति तावान् भगवतेऽन्नदानेनापि भवति आधिक्योऽपि सर्वयज्ञात्मकत्वात् तथापि न कृतवन्तः कर्मतारतम्येन फलतारतम्यमिति अन्यथा पूर्णाहुत्या सर्वे लोकाः सिद्धाः इति सत्रारम्भ एव व्यर्थः स्यात् अतो यथा समानफलान्यपि नाल्पानि कर्माणि क्रियन्ते तथैतदपि न ददाति न पचत इति वाक्याच्च अतो भूरिकर्माणः स्थूल एव कर्मण्यासक्ताः तत्कर्म नष्टं भवेदिति शङ्कया न दत्तवन्तः यतः बालिशाः अज्ञाः कर्म हि देवताप्रीतिहेतुः ताश्च देवता आधिदैविकभूता भगवति सन्तुष्ट एव सन्तुष्यन्ति नान्यथा अतोऽर्के चेन्मधुर्विन्देत" इति न्यायेन सर्वफलरूपे भगवति सर्वदेवतारूपे चोपस्थिते अल्पसाधनेनैव परितुष्यमाणे आदरमकृत्वा वस्तुज्ञानाभावे अभिव्यक्त्यभावात् यज्ञस्य च स्वरूपानभिज्ञानात् अन्यथा मूले ज्ञानादरासम्भावात् कर्मणो बहन्तरायत्वात् केवलं भ्रान्त्या इदमेव कर्त्तव्यमिति प्रवृत्ताः बालिशा एव । किञ्च, यथैतत्सर्वं न जानन्ति तथा स्वदोषमपि न जानन्ति अन्यथान्योऽत्रा बोधयेत् स्वस्य मौढ्या ज्ञाने हेतुः वृद्धमानिन इति वयमेव त्रयीवृद्धाः वेदार्थं जानीमः इत्यसदाग्रहाः ॥ ९ ॥

तेषां अज्ञानं सर्वं वस्तुयाथात्म्यनिरूपणेन प्रकटयति, देश इति । देशादय एकादश द्वादश वा कस्यापि ते स्वरूपं न जानन्ति ज्ञात्वा हि कर्म कर्त्तव्यं तत्र देशाः देवयजनानि कालो वसन्तादिः पृथगिति सर्वत्र भेदः पृथक् द्रव्याणि वा मन्त्रः ऋगादि तन्त्रम् आनुपूर्वीक्रियासमुदायो वा द्विजाः ब्राह्मणाः भार्गवा होता भवतीत्यादिभेदाश्च अग्नयो बहुधा भिन्ना आहवनीयादयः देवता अग्न्यादयः यजमानो ब्राह्मणादिः सिक्तरेता इत्यादिभेदाश्च क्रतुः यज्ञाधिष्ठात्री देवता धर्मो यज्ञः चकारात्तदङ्गादिकं सर्वमेव आध्यात्मिकभेदेन वा क्रतुर्यज्ञः धर्मस्तज्जनितमपूर्वमिति ॥ १० ॥

नन्वेतत्सर्वं ब्रह्मात्मकम् अतः प्रकृतेः कथमुपालम्भस्तत्राह, तद्ब्रह्मेति । यदेतत्सर्वं तद्ब्रह्म तत्रापि परमं ब्रह्मशब्देन चत्वार उच्यन्ते वेदः ब्राह्मणजातिः चतुर्मुखः परब्रह्म च अतोन्यव्यावृत्त्यर्थं परमशब्दः स एवायं साक्षात् औपचारिककार्याद्यसगुणपक्षा व्यावर्तिताः ततोऽप्याधिक्यमाह—भगवन्तमिति । षड्गुणैश्वर्यसम्पन्नं पुरुषोत्तमं भगवच्छब्दवाच्यस्य प्राकृतत्वव्युदासायाह—अधोक्षजमिति । अधः अक्षजं ज्ञानं यस्मात् तर्हि एतादृशे वस्तुनि प्रकटे स्वप्रकाशे कथं तेषामज्ञानं ? तत्राह—मनुष्यदृष्ट्येति, अन्यथाज्ञानादज्ञानं यद्यन्यभावस्फूर्तिर्न स्यात् विचारे ज्ञानोपाये (च) वा प्रवृत्तिः स्यात् अन्यथाज्ञाने हेतुमाह—दुष्प्रज्ञा इति । दुष्टा प्रज्ञा येषां बुद्धिर्दोषात्सर्वत्रैव तेषामन्यथाज्ञानं तथा प्रकृतेपि जातमित्यर्थः । नन्वत्रान्यथाज्ञानं भवितुं नार्हति समानधर्माभावाद्विषयत्वाभावादारोपायोग्यत्वात् स्वप्रकाशत्वात् विषयः सर्वथा शुद्ध इति कथं तत्रान्यथाबुद्धिरिति चेत्तत्राह—मर्त्यात्मान इति । नह्यत्र तेषां बुद्धिर्विषयं स्पृशति किन्तु मध्य एवावलम्बते यथा भ्रमदृष्टेः भूम्यादयः । न हि कदाचिदपि भूम्यादीनामावर्त्तोऽस्ति अतोन्तरैव दृष्टिभ्रमणं स्वाधिकारादारोप्यते विषयधर्माणां हेतुत्वे रजतभ्रमवदन्यस्यापि स्यात् तस्यापि कालान्तरे स्यात् अत एव ते मानुषभावेनैव व्याप्ता मनुष्या एव वयमिति मन्यमानाः भगवन्तमपि तथैव मन्यते यथा चोरः सर्वानेव चोरान् जानाति तथा मूर्खाः देवागमागतं स्वसमानमेव मन्यन्ते यथा व्याधस्तपस्विनम् इतरथैवलक्षणयाज्ञानात् तस्मात्स्वदोषादेव निर्दुष्टे विषयेऽन्यथा स्फूर्तिः अत एते मर्त्यात्मानः आत्मानमपि मर्त्यं कृतवन्तः परमात्मनस्तथाकरणे कः प्रयासः अतो भगवच्छास्त्रं दृष्ट्वापि न मेनिरे नाङ्गीकृतवन्तः ॥ ११ ॥

ततो यज्ञातं तदाह—न ते यदोमिति प्रोचुरिति । ओमित्यङ्गीकारे नेति निषेधे उपायान्तर एव प्रवृत्तिः स्यात्तेषां धर्मेण वा तुष्टा भवेयुः नेत्यसत्ये सत्यनिवृत्तेः सिद्धत्वात् अतो निराशाः परन्तपेति सम्बोधनं स्वाधिदैविकशुकंप्रति कोपनिषेधार्थमागतं राज्ञो वा महद्भाग्ययोगे ह्यातिथ्यविमुखो न गच्छन्तीति तद्भाग्याभिनन्दनार्थं प्रत्येत्य व्याघुष्य समागत्य कृष्णरामयोः पुरतः तथोचुः ॥ १२ ॥

---

तदुपाकर्ण्य भगवान् प्रहस्य जगदीश्वरः ।
व्याजहार पुनर्गोपान् दर्शयल्लौकिकीं गतिम् ॥ १३ ॥
मां ज्ञापयत पत्नीभ्यः ससङ्कर्षणमागतम् ।
दास्यन्ति काममन्नं वः स्निग्धाः मय्युषिता धिया ॥ १४ ॥
गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलङ्कृताः ।
नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ १५ ॥
नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः ।
इतो ऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, ते शास्त्रज्ञा अपि कथं न शुश्रुवुस्तत्र वस्तुतः शास्त्रज्ञाः प्रत्युत शास्त्रमधीत्याध्याप्य च मूर्खा एवेति सक्षोभं तानाचिपति—साऽर्द्धद्वयेन क्षुद्रे स्वर्गादावाशामात्रं येषां ते वृद्धमानिन एव ननु ते ज्ञानवृद्धाः ॥ ९ ॥

ननु, शास्त्रविदितदेशकालपात्रादिक्रममुल्लङ्घ्य कथमन्यार्थमन्नमन्यस्मै देयं तत्राह–देश इति । पृथग्बहुविधं चरुपुरोडाशादिद्रव्यं तन्त्रं प्रयोगः धर्मोऽपूर्वं यन्मयः यदंशांशविभूतिरूपः तं परमं ब्रह्म अधोक्षजम् इन्द्रियागोचरमपि कृपया प्रत्यक्षीभूतमित्यर्थः मनुष्यो जीवविशेषोऽयमिति दृष्ट्या मर्त्यात्मानो देहाभिमानिनः ॥ १०—११ ॥

ओमिति न प्रोचुरिति सम्प्रति ब्राह्मणभोजननिष्पत्तेः पूर्वमेव गोपालेभ्यः कथं दास्याम इति भावः ! नेति च न प्रोचुरिति यदि ब्राह्मणादिभोजननिष्पत्त्यनन्तरमन्नान्युर्वरितानि भविष्यन्ति तदा दास्यामोऽपीति भावः । तदा राज्ञोऽपि क्रोधमुद्भूतमालक्ष्य सम्बोधयति–हे परन्तपेति । तदानीं यदि त्वं राजा भविष्यः तदा ब्रह्मण्यचूडामणिरपि तान् ब्राह्मणान् शत्रूनिव अवश्यमदण्डयिष्य इति भावः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते इत्थं याचिता अपि भगवद्याच्ञां नाद्रियन्त बालिशत्वादित्याह–इतीति । इत्थं ते भगवतो याञ्चां शृण्वन्तोऽपि न शुश्रुवुः यतः क्षुद्रेऽनित्ये स्वर्गादौ कर्मफले एवाशा येषां ते तदर्थकानि भूरीणि कर्माणि येषां ते अतो वृद्धमानिनः ज्ञानवृद्धा वयमिति वृथा मानवन्तस्ते बालिशा एव अफलभूरिकर्मनिष्ठत्वात् महत्फलावहमभगवदाराधनविमुखत्वादित्यर्थः ॥ ९ ॥

भगवदनादरे कारणभूतां परे ब्रह्मणि श्रीकृष्णे मनुष्यत्वभ्रान्तिमनात्मनि देहे आत्मभ्रान्तिम् आत्मन्यब्रह्मात्मकत्वभ्रान्तिं च वर्णयति–देश इति, द्वाभ्याम् । देशादिर्यन्मयः यत्प्रधानः यत्प्रचुरो वा तम् पृथक् द्रव्याणि चरुपुरोडाशादीनि ॥ १० ॥

ब्रह्म बृहत्स्वरूपगुणं परमं सर्वोपास्यं साक्षाद्भगवन्तमधोक्षजं सर्वकरणनिरपेक्षज्ञाननिधिं श्रीकृष्णं मनुष्योऽयमिति दृष्ट्या कुदृष्ट्या मर्त्यात्मानः मर्त्ये मरणधर्मके देहे आत्माभिमानो येषां ते ब्रह्मणः श्रीकृष्णस्य सर्वात्मनामात्मत्वमात्मनश्च ब्रह्मात्मकत्वमजानन्तो मूर्खाः तुच्छे तुच्छे स्वर्गादौ प्रज्ञा येषां ते न मेनिरे नाहतवन्त इत्यर्थः ॥ ११ ॥

शृण्वन्तोऽपि न शुश्रुवुरिति पूर्वोक्तं तत्प्रमादं प्रपञ्चयति–न ते इति ॥ १२ ॥

भाषा टीका ।

या प्रकार ग्वाल बालन के द्वारा भगवान् की याचना कूं सुनकेंऊं माथुर ब्राह्मण अनसुनी करगये, क्योंकि ? मूर्ख तो रहे परंच आपकों वृद्ध मानते हे और क्षुद्र आशा के ताईं बडो कर्म को आरंभ जिनने कर राख्यो ऐसे हे ॥ ९ ॥

देश, काल, न्यारो २ द्रव्य, मन्त्र, तंत्र, ऋत्विज, अग्नि, देवता, यजमान, यज्ञ और धर्म, ये सब जिन श्रीकृष्ण के ताईं हैं ॥ १० ॥

तिन साक्षात् परब्रह्म अधोक्षज भगवान् श्रीकृष्ण को ये दुष्टबुद्धि मरणयोग्य शरीर वारे माथुर, मनुष्य की दृष्टि करकें उनकों नहीं मानत भये ॥ ११ ॥

हे राजन् ! जब उन माथुरन ने न हां करी, न नहीं करी तब सगरे गोप निराश होयकें वगद आये, और राम कृष्ण सों सब समाचार कह सुनाये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

लौकिकीं गतिं नहि कार्यार्थिनो निर्विद्यन्ते को वा याचको न पराभूयत इत्यादिलोकस्थितिं दर्शयन् ॥ १३ ॥

केवलं देहेन गृहे वसन्ति धिया त्व मय्येवोषिता यतो मयि स्निग्धा अतो दास्यन्तीति ॥ १४ ॥ १५ ॥

ईषिताः प्रेषिताः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यद्यपि द्वावेव प्रति गोपैरुक्तं तथापि श्रीरामः श्रीकृष्णाज्ञानादरजातक्रोधात् श्रीकृष्णाभिप्रायज्ञानाद्वा नैवावदत् श्रीकृष्ण एव प्रत्याहेत्याह—तदिति । उपशमीप एवाकर्ण्य तदनादरदुःखेन गोपैः शनकैरेवोक्तेः प्रहस्य उच्चैर्हसित्वा तत्र हेतुः जगदीश्वरः सर्वनियन्ता भगवान् सर्वैश्वर्यपूर्णश्च अतः कौतुकमात्रार्थं तथा याचनं तन्निरासे च हास एवोचित इति भावः । अन्यत्तैः । यद्वा, यत्र पुरुषेषु याचितं न सिद्धयेत्तत्र तत्पत्नीषु याचितव्यमिति याचकान् शिक्षयन्नित्यर्थः । सेयमप्येका कौतुकमयी लीलैव वस्तुतस्तु पूर्वनिजोक्तरीत्या वृद्धेभ्यो मनुष्याणां निकर्षे ज्ञापिते विशेषोऽप्यत्रास्तीत्यभिप्रेत्य स्वधर्मममकानां वेदपाठयागिकपरत्वादिकं दुरभिमानादिदोषाय दुःखायैव च कल्पते नच क्षेमाय अतस्तद्रहिता अपि मद्भक्ताः परमोत्तमा इति तद्विप्रतत्पत्नीव्यवहारेण लोके दर्शयितुमित्यर्थः ॥ १३ ॥

मामागतमेव ज्ञापयत नच बुभुक्षितं नापि अन्नयाचनादिकमपि कुरुत यतो मदागमनज्ञापनादेव दास्यन्तीत्यर्थः । पत्नीभ्यः तेषां यज्ञसम्बन्धिनीभ्यो भार्याभ्यः पत्युर्नो यज्ञसंयोग इति स्मरणात् अनेन धर्मसम्बन्ध एव तैः सह तासामवशिष्टोऽस्ति नतु कामसम्बन्धः मयि गाढभावत्वादिति मतम् किञ्च, अस्मिन् तासां भावविशेषेण तत्र श्रीबलदेवस्य गौणतया सङ्कर्षणसहितमित्युक्तं सङ्कर्षणेति तस्य महिमनामत्वात् साक्षात् ग्रहणम् । ननु, पतीनामनुज्ञां विना कथं ता अपि दद्युः कथं चिद्ददाना अपि पतिभिर्वारयितव्या एव तत्राह—स्निग्धा इति । मदपेक्षया तासां तेषु नादर इति भावः ॥ १४ ॥

अथ स्निग्धा इत्यादि श्रीभगवद्वचनानन्तरमेव अन्यथा पुनर्याचनार्थं यानमयुक्तं स्यात् तासां सदवसर एव च तेषां गमनं जातमित्याह—आसीना इति । सम्भाषणार्थं खलु स्त्रिया सुखाय स्यात् अव्यग्रचित्तत्वेन सुखेपरत्वेन सद्व्यवहारपरत्वेन च तत्रासीना इति पतिपारवश्येनावश्यकं पाकादिवैयग्र्यमुक्त्वा तीर्थं स्नानादिपूर्वकं परस्परं श्रीभगवत्कथावेशेन निश्चलतया कृतोपवेशा इत्यर्थः । स्वलङ्कृता इति सधवार्हव्यवहारात् तावदलङ्कृता एव श्रीभगवत्प्रेमावेशमयपुलकादिभिस्तु सुष्ठु अलङ्कृता इत्यर्थः । परमसत्तमायां द्विजजातावपि सतीरिति भगवद्भक्त्या जातेन सर्वगुणोदयेन परमसद्व्यवहारगुणयुक्ता इत्यर्थः । प्रश्रितास्ते स्वभावत एव किं वा तासां श्रीकृष्णविषयकस्नेहविशेषश्रवणेन ॥ १५ ॥

स्निग्धा मय्युषिता धिया इति श्रीकृष्णवचनवदेव वीक्ष्य ताः समवधापयन्ति नमो वो युष्मभ्यमिति विप्रपत्नीभ्य इति नमस्कारयोग्यतोक्ता तथापि पूर्ववदेव नातिवर्हिश्श्रुताः प्रत्याहुः निबोधतेति वचांसीति बहुत्वमर्थगौरवेण अविदूरे निकट एव कृष्णेन युष्मच्चित्ताकर्षकेणेति भावः ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो भगवान् लौकिकीं गतिं नहि कार्यार्थिनां निर्धियन्ते "तृणादपि लघुस्तूलस्तूलादपि च याचकः" इत्युक्तरूपां लोकपरिपाटीं दर्शयन्निव पुनर्गोपान् व्याजहारोवाच ॥ १३ ॥

तदेवाह—मामिति । सङ्कर्षणसहितं मामागतं पत्नीभ्यः द्विजानामिति शेषः ज्ञापयत ताश्च केवलं देहेन गृहे वसन्ति धिया तु मय्येवोषिताः मयि स्निग्धा अतः कामं यथेष्टमन्नं दास्यन्ति ॥ १४ ॥

अथ गोपाः पत्नीशालायां गत्वा स्वलङ्कृता आसीनाश्च द्विजसतीर्दृष्ट्वा प्रश्रिता नम्राः सन्तः इदं वक्ष्यमाणमब्रुवन् ॥ १५ ॥

विप्रपत्नीभ्यो वो युष्मभ्यं नमः नोऽस्माकं वचांसि निबोधत शृणुत किम् ? इतः समीपे सञ्चरता कृष्णेन प्रेषिताः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

लौकिकीं गतिं लोक सिद्धां रीतिम् ॥ १३ ॥

दाने कारणमाह—मयीति । धिया मय्युषिता मामेव चिन्तयन्त्य इत्यर्थः ॥ १४ ॥

द्विजसतीः द्विजपत्नीः ॥ १५ ॥

चरता बुभुक्षितेन ताच्छीलिकस्तृन्प्रत्ययः "चर गतिभक्षणयोः" इति धातोः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गोपानां खेदादिकं दृष्ट्वा भगवद्वैमुख्ये क्रोधं च तन्निवृत्त्यर्थं हास्यं कृतवान् । ननु, क्रोधः कर्त्तव्य आज्ञोल्लङ्घनात् कथं हास्यमिति तत्राह—जगदीश्वर इति । जगतः स एवेश्वरः तथैव ते प्रबोधिताः तेषां पूर्ववृत्तस्य विस्मृतत्वात् पुनराह, तेषां गमनाङ्गीकारार्थं प्रबोधनं च कृतवान् लौकिकी गतिरेतादृशी क्वचित्प्राप्यते क्वचिन्न क्वचिदुत्तराभावश्च ॥ १३ ॥

भगवद्वाक्यमाह—मां ज्ञापयतेति । यज्ञे यजमानपत्न्यः पत्न्य एवोच्यन्ते निर्दुष्टत्वज्ञापनाय तस्मात्स्त्रियो निरिन्द्रिया आदायादीरपि पापात् "पुंस उपस्तिततरं वदन्ति" इति श्रुतेः अतो निर्दुष्टत्वान्मां पत्नीभ्यो ज्ञापयत ससङ्कर्षणं ब्रह्मभद्रसहितमागतं याचनन्तु नकर्त्तव्यम् अयाचिता एव दास्यन्तीत्याह, दास्यन्तीति कामं यथेष्टं तद्वः युष्मभ्यं तस्माद्दोषो निरूपितः कामपदात् च इति पदाच्च दाने हेतुः स्निग्धा इति मयि ताः स्निग्धाः प्रेमवत्य अतः मदागमने ज्ञापिते परितुष्टा एव दास्यन्ति यदा प्रियवार्त्तां दृष्ट्वा दानं किञ्च, धिया पुनर्मय्येवोषिताः ताः सङ्कते बुद्ध्यामपि तिष्ठन्ति शेषेण तत्र बुद्धेरित्युपलक्षणं ज्ञानशक्त्यान्तःकरणेन चात्रतिष्ठन्ति वाह्याङ्कतया देहेन च तत्र अतो ज्ञानशक्तिर्मय्येव तिष्ठन्तीति दास्यन्ति ॥ १४ ॥

ते पुनर्बालाः पूर्ववदेव गत्वा याचितवन्त इत्याह—गत्वेति । अथ भिन्नप्रक्रमेण येन मार्गेण यथारीत्या पूर्वं गताः न तथेति पत्नीशालामित्येव प्राग्वंशे सदसि वा भवति परं प्राग्वंश एव यत्र आसीना निश्चिन्ताः सुष्ठ्वलङ्कृताश्च अनेनैव सौभाग्यसहितात्मना निरूपिताः पूर्ववदेव नत्वा प्रश्रिता विनीताः सन्तः इदं वक्ष्यमाणमब्रुवन् ब्राह्मणसम्बन्धात् नमनं सतीत्वाद्विनयः ॥ १५ ॥

गाश्चारयन् स गोपालैः सरामो दूरमागतः ।
बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥ १७ ॥
श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः ।
तत्कथाक्षिप्तमनसो बभूवुर्जातसम्भ्रमाः ॥ १८ ॥
चतुर्विधं बहुगुणमन्नमादाय भाजनैः ।
अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥
निषिध्यमानाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ।
भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां वाक्यमाह—प्रयेन नम इति । वैदिकार्थापरिज्ञानाद्विवत्तोऽपि इत्युक्तं तत्राप्यनवधानतानिवृत्त्यर्थं निबोधतेत्याहुः, के भवन्त इति आकाङ्क्षायामाहुः इतो निकट एव चरता परिभ्रमता क्रीडाकर्त्रा कृष्णेन सदानन्देन वयं प्रेषिता इति ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रहस्येति अज्ञविप्रेषु कोपानौचित्यादिति भावः । लौकिकीं गतिमिति नहि कार्य्यार्थिनो निर्विघ्नन्ते को वा याचको न परा भूयते इति लोकस्थितिं दर्शयन् ॥ १३ ॥

मामागतमेव ज्ञापयत न तु बुभुक्षितं बुभुक्षाख्यापनदुःखभयत्यस्य सद्य एव तदपि सन्तापकत्वात् । ननु, त्वद्बुभुक्षाज्ञापनं विना कथमन्नं ता दास्यन्ति तत्राह—यो युष्मभ्यं मत्सम्बन्धेनैव युष्म बुभुक्षा दर्शनेनैव दास्यन्ति । ननु, तास्पतयो वारयिष्यन्ति तत्राऽऽह—मयि स्निग्धा स्नेहवत्यः पतिवारणं न मानयिष्यन्ति यतो मय्येव धिया अर्पिताः केवलं देहेनैव पतिगृहे वसन्तीत्यर्थः ॥ १४ ॥ १५ ॥

ईरिताः प्रेषिताः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तेषां विप्राणां गोपवाक्यैः ज्ञापमानमुपाकर्ण्य श्रुत्वा अत एव प्रहस्य—

"अपमानं पुरस्कृत्य कृत्वा मानं तु पृष्ठतः ।
स्वकार्यं साधयेद्धीमान् कार्यनाशो तु मूर्खता" ॥

इत्याविरूपां लौकिकीं गतिं दर्शयन् पुनर्व्याजहारोवाच ॥ १३ ॥

पत्नीभ्यः विप्रपत्नीभ्यो मां ज्ञापयत ता केवलं शरीरैः पतिसमीपे वसन्तीति धिया मय्येवार्पिताः यतो मयि स्निग्धा अतः काम यथेष्टं वो युष्मभ्यमन्नं दास्यन्ति ॥ १४ ॥

प्रश्रिताः नम्राः सन्तः ॥ १५ ॥

वो युष्मभ्यं नमः नोऽस्माकं वचांसि निबोधत शृणुत ॥ १६ ॥

भाषा टीका ।

जगदीश्वर श्रीकृष्ण उन समाचारन कूं सुनकें हंसिकें लौकिक गति कूं दिखावत फिर बोले ॥ १३ ॥

श्रीभगवान् बोले, कि—हे गोप हो ! अब की बार दाउ सहित मेरो नाम लेकें उन मथुरियान की पत्नीन सों कहियो, तब वे बुद्धि सों रात दिन मोमें बसिवे वारी परम स्नेहवारी बचायवें तुमकों जितनो चाहिये उतनो खूब अन्न देवगी ॥ १४ ॥

गोप हू पत्नी शाला में जायकें सुन्दर अलंकृत ब्राह्मयान की पत्नीन कूं देखिकें द्विजन की सतीन को नमस्कार करिकें बडे नम्र होयकें ऐसे बोलत भये ॥ १५ ॥

गोप बोले, कि—हे विप्रपत्नी हो ! तुम कों नमस्कार होय, नेक हमारे वचनन कूं सुनलेओ, या जगतें थोरी सी दूर पै श्रीकृष्ण भगवान् गाय चरायवे आये हैं तिनने हमकों पठाये हैं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स कृष्णो गोपालैः सह ॥ १७ ॥

तत्कथाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाः अत एव तमुपागतं श्रुत्वा जातसंभ्रमाः बभूवुः ॥ १८ ॥

भक्ष्यभोज्यलेह्यचोष्यभेदैश्चतुर्विधम् बहुगुणं संस्कारविशेषैर्बहवो गुणा रससौरभ्यादयो यस्मिंस्तत् भाजनैरमत्रैर्भांडैर्वा पत्रादिभिर्वायमाणा अपि प्रियं श्रीकृष्णमभिसस्रुरभिजग्मुः अप्रतिबन्धे दृष्टान्तः समुद्रं निम्नगा नद्य इवेति ॥ १९ ॥

अत्र हेतुः भगवतीति दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो यासिस्ताः ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सदा श्रीकृष्णं रमयतीति तस्मात् सङ्कोचो निरस्तः स्वयं भगवता माहात्म्यख्यापनाय पूर्वं सङ्कर्षणनाम्नोक्तं पश्चिमस्त्वेतन्नाम्ना तदभिरुचितत्वख्यापनायेति बहुयुक्तमेव पूर्वं गौरवाधिक्यस्यैवौचित्यात् उत्तरत्र तु तयैव पत्नीनामभिरुचं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

दूरं गृहादिति ततोऽन्नमाश्वानयितुं न शेकुरिति भावः। यद्वा, अदूरमितः पुनरुक्तिः अतिनैकट्येन तासामागमनार्थं सानुगस्य श्रीरामगोपवर्गसहितस्य प्रकर्षेण सरसमिष्टान्नपानभृतपात्रादिद्वारा दीयतां पूर्वं तदादेशेन केवलं द्वयोरेवान्नप्रार्थनम् अधुना तु तदादेशं विनापि तथापि सानुगस्येति तत्रापि प्रकर्षेणेति तासां भगवति भक्तिविशेषश्रवणादेः सनर्मैव त्वया अन्नस्यागेन्त्यागमनसम्भावनपूर्वकं च ॥ १७ ॥

इत्यात् कदाचिदपि न च्युतो भवनीत्यच्युतस्तम् उपायातं समीप एव साक्षादागतम् अन्यत्तैः। यद्वा, विशेषतश्च तत्कथया तस्य बुभुक्षावार्त्तयाऽऽक्षिप्तमनसः ॥ १८ ॥

चतुरिति युग्मकं भाजनैः भोजनपात्रैः पाकपात्रैर्वा कृत्वा अन्योन्याताद्यर्थं सम्भ्रमादेव वा अभिसस्रुरित्यादिना तदेकाभिमुख्यं सूचितं टीकायां भक्ष्यं चर्व्यं चोष्यं चूष्यमिति पीताभिरित्यादिकं यथा निकटं ग्रेयं निषिध्यमाना इति तस्मै देयं चेदन्नं प्रस्थाप्यतां स्वयन्तु मा यातेति तासां गमनमेव वर्ज्यते स्मेत्यर्थः श्रीभगवता तदङ्गीकारात् ॥ १९—२० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

चतुर्विधम् भक्ष्यभोज्यलेह्यपेयात्मकम् ॥ १९—२१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

स तु सरामो गोपैः सह दूरमागतः व्रजादिति शेषः अधुना बुभुक्षितस्य सानुगस्य गोपसमूहसहितस्य तस्य श्रीकृष्णस्य वो यदि श्रद्धा तद्यन्नं प्रदीयतां प्रकर्षेण दीयतां भवत्स्माकमाशाभङ्गः कार्यं इति भावः ॥ १७ ॥

पूर्वमेव तस्य कृष्णस्य कथया आक्षिप्ताश्चाहृतानि मनांसि यासां ताः अत एव तद्दर्शनतत्पराः तदा तमागतं श्रुत्वा जातोत्सवा बभूवुः ॥ १८ ॥

चतुर्विधं भक्ष्यभोज्यलेह्यपेयात्मकं बहुगुणं रससौरभ्यादिबहुगुणकमन्नं पात्रैरादाय सर्वा द्विजपत्न्यः प्रियं निरतिशयप्रीतिविषयं भगवन्तमभिजग्मुः, कथम्भूताः? पत्यादिभिर्निवार्यमाणा अपि भगवति दीर्घं बहुकालं श्रवणेन धृतः आशयो यासां ताः अत एव नद्यः समुद्रं प्रतीवाप्रतिबन्धाः प्रियं अभिसस्रुरित्यन्वयः ॥ १९—२० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

१७ ॥ १८ ॥

चतुर्विधं भक्ष्यभोज्यलेह्यचोष्यपानात्मकं बहुगुणं मधुरादिगुणोपेतम् ॥ १९ ॥

दीर्घश्रुतेन बहुकालश्रवणेन भगवति धृत आशयो याभिस्ताः कदानु द्रक्ष्याम इत्यभिप्राय आशयः ॥ २० ॥ २१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कार्यनिवेदनस्या प्रयोजनमाहुः—गाः चारयन् इति। तेत्वन्यान्नं न गृह्णन्ति अतो भगवतोक्तमपि श्रीमद्दत्तमप्यन्नं स्वयं न गृहीतवन्तः किन्तु भगवदर्थमेव याचन्ते तेषां स एव धर्म इति दोषकीर्त्तनस्याभावात् गवाञ्चारणमवश्यमिति तदनुरोधेन तृणवति देशे समागतः गोपालैश्च सहितः। अनेन मदागमने सर्वं एवागच्छेरन्निति बाधकमुक्तं सराम इति आदरार्थं कार्यान्तराभावार्थं च अतो वा दोषकीर्त्तनं बुभुक्षितस्य तस्य ससेवकस्य तस्यैवान्नं तत्र गत्वा दीयतामिति प्रकर्षो यथायोग्यम् ॥१७॥

ततो यज्जातं तदाह—श्रुत्वाऽच्युतमिति। चरतेति वचनात् सोपि पश्चादागच्छतीत्युक्तम् अत आह उपायान्तमिति उपसमीपे आगच्छन्तं पूर्वं तु तास्तत्र गता इदानीमत्र भगवान् समायाति मनोरथस्तु पूर्वमेव इति समागमने इतिकर्त्तव्यतानभिज्ञाः ससम्भ्रमा जाताः। किञ्च, नित्यन्तद्दर्शनार्थमुत्सुका अतः शीघ्रमपि गन्तव्यं क्षुधित इति सामग्र्यपि नेया अतोऽपि सम्भ्रमः। किञ्च, तस्य भगवतः कथाभिः आक्षिप्तं मनो यासां यत्र क्वापि स्थितं मनः तत आ समन्तात् दूर एव क्षिप्तम् अतो भगवति गतम् ॥ १८ ॥

अतो मनोरथबाहुल्यात् किं कर्त्तव्यमिति ससम्भ्रमाः इदानीन्तनं बलिष्ठमिति विचार्य ससामग्रीका गता इत्याह—चतुर्विधमिति। भक्ष्यं पेयं चोष्यं लेह्यमिति अन्यथा भोजनं न स्यात् भक्ष्ये दन्तानां विनियोगः अन्यद्वोष्ठयोः चोष्ये परितः स्थितानां लेह्यं जिह्वायाः पेयेऽन्तः स्थितस्य वक्त्रस्य अतश्चतुर्विधमेव सर्वं भोजनं भवति गुणा व्यञ्जनानि धर्मा वा बहवो गुणा यत्र अन्नं साधारणम् अपेक्षिततदन्याधिकं भाजनैः येष्वेव स्थितं नतूद्धृत्य अभिसस्रुरभिसरणं कृतवत्यः आभिमुख्येन गमनं समुदायशक्त्या सर्वथा गमनं प्रतीयते तत्र हेतुः प्रियमिति प्रियं प्रति हि सर्वेषां गमनम् अतः सर्वा एव बह्वीनां कथमेकत्र गमनमेकदेशस्याशङ्क्य दृष्टान्तेन परिहरन् प्रतिबन्धाभावमाह, समुद्रमिव निम्नगा इति। निम्नगा नद्यः मध्ये पर्वतादीनामपि प्रतिबन्धं न मन्यते न हि तासां देवाः पतयो भवन्ति किन्तु समुद्र एव तथापि निम्न एव गच्छन्तीति उभैरहङ्कारे स्थिताः पतयो नाङ्गीकृताः ॥ १९ ॥

प्रतिबन्धाभावमाशङ्क्याह—निषिध्यमाना इति। उदासीनानां भार्यायां निषिद्धम् अतः सम्बन्धिभिरेव निषिद्धाः यद्यद्बाधकं च तद् पितरोऽत्र नोक्ताः अन्ययोरुत्पत्तिविरोधः स्यात् उपपत्तिविरोधे तु शास्त्रं बलिष्ठं तासां चतुर्विधपुरुषार्थाश्चतुर्भिर्देयाः धर्मदः पतिः अर्थदो भ्राता अभिलषितार्थदातारो बान्धवाः सुता मोक्षदाः तेषां निषेधे तत्तत्पुरुषार्थदातारः तथापि पञ्चमेन पुरुषार्थं मन्यमानाः गता इति एतेत्याह, भगवतीति। भगवांस्तु षड्गुणः स्वयञ्चैकः अतः सप्तपुरुषार्थाश्च तत्र सिद्ध्यन्तीति। किञ्च, उत्तमश्लोक इति उत्तमैः सिद्धपुरुषार्थैरपि श्लोक्यते अतो भक्तिरूप्यष्टमः पुरुषार्थः किञ्च कामितो हि पुरुषार्थो भवति नत्वकामितः अतो धर्मादीनामपुरुषार्थतैव किन्तु भगवानेव पुरुषार्थ इत्यभिप्रायेणाह, दीर्घश्रुतधृताशया इति। दीर्घकालपर्यन्तं यः श्रुतः यद्वा, श्रुतं तस्मिन् तेन वा धृतम् आशयो याभिः यथा फलश्रवणेन फले चित्तं भवति तथा भगवति चित्तं न त्वन्यत्र

यमुनोपवनेऽशोकनवपल्लवमण्डिते ।
विचरन्तं वृतं गोपैर्ददृशुः साग्रजं स्त्रियः ॥ २१ ॥
श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ।
विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥ २२ ॥
प्रायः श्रुतप्रियतमोदयकर्णपूरैर्यस्मिन् निमग्नमनसस्तमथाक्षिरन्ध्रैः ।
अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाभिमतयो विजहुर्नरेन्द्र ! ॥ २३ ॥
तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया ।
विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥ २४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

निषेधोऽत्र वाचनिकः ऋत्विजां कर्मवैयग्र्यात् नत्वन्यस्य भार्या अन्येन स्प्रष्टुं शक्या इति यागनाशश्च स्यात् अतो यजमानपत्नीव्यतिरिक्ताः सर्वा एव गताः एकरूपाश्च ऋत्विजां मिथःप्रतिषेधात् पूनः स्थाविरान्वेति यजमानस्तु विसदृशोऽपि भवति अतो गता एव ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो हन्तैताः कृष्णनाम्नैवानन्दमूर्च्छिता अभूवंस्तदिमाः प्रबोधयितुं तद्वृत्तान्तमुक्तमेव तं किञ्चिद्विशिष्य पुनरुच्चैरुच्चारयाम इत्यभिप्रेत्याहुः-गा इति । अदूरं निकटमेवायातः तदपि सम्यगप्रबुद्धा आलक्ष्य तस्याशाकांक्षां भावयित्वा अतिस्नेहवतीस्ता विहृलयामासुरित्याह बुभुक्षितस्येति ॥ १७ ॥
तस्य कथया बुभुक्षावार्त्तया आक्षिप्तानि अरे पामर मनः कथं प्रियतमस्य बुभुक्षाश्रवणेनापि न मूर्च्छितो जागर्षि धिक् त्वामित्येवं तिरस्कृतानि स्वस्वमनांसि याभिस्ताः ॥ १८ ॥
भक्ष्यचर्व्यचूष्यलेह्यभेदैश्चतुर्विधं संस्कारविशेषैः बहवो गुणाः रससौरभ्यादयो यस्मिंस्तम् अभिसस्रुरिति तासां तदानीं कृष्णं प्रति सर्वासां नायिकात्वाभिमानमालक्ष्योक्तं तत्र प्रतिबन्धकाभावे दृष्टान्तः समुद्रं निम्नगा नद्य इव तत्र हेतुः भगवति दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो याभिस्ताः ॥ १९-२१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोपालैः सह सरामः सः श्रीकृष्णः ॥ १७ ॥
क्षिप्तान्याकृष्टानि मनांसि यासां ताः ॥ १८ ॥
चतुर्विधं भक्ष्यभोज्यलेह्यचोष्यम् संस्कारविशेषैर्बहवो रससौरभ्यादयो गुणा यस्मिन् तदादाय प्रियं श्रीकृष्णम् अभिसस्रुः अभिजग्मुः ॥ १९ ॥
ताः विशिनष्टि-निषिध्यमाना इति । दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो याभिस्ताः ॥ २० ॥

---

भाषा टीका ।

गऊन को चरावत चरावत ग्वाल बाल और बलदेवजी सहित नन्द गाम तें घनी दूरि निकस आये हैं और मित्रन सहित भूखे हैं सो तुम कछु भोजन की सामग्री देओ ॥ १७ ॥
द्विजपत्नी नित्य श्रीकृष्ण के दर्शन की उत्कंठावारी हो कृष्ण की कथा सुनि २ कें उनको मन तौ चोरयोई गयो हो आज वाई प्यारे श्रीकृष्ण कों समीप आये सुनकें हर्ष के मारे संभ्रम होय आयो ॥ १८ ॥
और बहुत गुणवारो चार प्रकार को [ भक्ष्य भोज्य, लेह्य, चोष्य, ] ऐसे अन्न अनेक पात्रन में थारन में भर २ कें सगरी अपने प्यारे श्रीकृष्ण के ओर आवत भई, जैसें नदियें समुद्र की ओर चलें हैं ॥ १९ ॥
प्रति भ्राता, बन्धु, और सुतन ने भौत रोकी, परन्तु उत्तमश्लोक भगवान् श्रीकृष्ण में भौत सुनके धारण कियो है अन्तःकरण जिनने ऐसी वे द्विजपत्नी ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथागताः सत्यो ददृशुः ॥ २१ ॥
हिरण्यवस्त्रपरिधिः परिधानं यस्य तं पीताम्बरमित्यर्थः । वनमाल्यैर्बर्हैर्धातुभिः प्रवालैश्च नटवद्वेषो यस्य तम् अनुव्रतस्य सख्युरंसे विन्यस्तो निहितो हस्तो येन तम् इतरेण हस्तेन लीलयाऽब्जं धुनानं भ्रामयन्तं कर्णयोरुत्पले यस्य अलकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तं च तं च तं च ॥ २२ ॥
वृत्तेरपि लगेन साम्यमाह—प्राय इति । बहुशः श्रुता ये प्रियतमस्योदया उत्कर्षास्त एव कर्णपूराः कर्णौ पूरयन्ति कृतार्थौ कुर्वन्तीति तथा तैः कर्णागरन्ध्रैरिति वा यस्मिन् कृष्णे निमग्नमनसः आविष्टचेतसस्तं लोचनद्वारैरन्तः प्रवेश्य सुचिरमुपगुह्य तापं जहुः अभिमतयो ऽहंवृत्तयः प्राज्ञं सुषुप्तिसाक्षिणं परिरभ्य तस्मिन् लयं प्राप्य यथेति ॥ २३ ॥
अखिलदृग्द्रष्टा सर्वबुद्धिसाक्षी तास्तथा प्राप्ता विज्ञायापि

### श्रीधरस्वामिकृतभावार्थदीपिका।

तथैवैतद्विवृणोति—त्यक्तसर्वाशास्त्यक्ताः सर्वा आशा याभिस्ताः केवलमात्मनः स्वस्यैव दिदृक्षयेति ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यमुनेति युग्मकम् ददृशुः कृष्णमिति शेषः। न विद्यते शोको यस्मात् इति श्लेषेण तस्य वनस्य तासां तत्प्राप्तिशोकहारित्वं च ध्वनितं विचरन्तं क्रीडन्तं गोपैस्तथैव स्थितैरन्यैः वृत-मिति शोभाविशेषः सूचितः किंवा वृतमपि ददृशुः तस्यैवा-धिकं प्रकाशमानत्वात् साग्रजमिति सर्वसुन्दरात् ततोऽपि तस्य सौन्दर्यविशेषं ज्ञापयति, अग्रजेन सहेति। विग्रहे सहार्थयोगे तृतीयाया अप्रधाने विहितत्वात् स्त्रिय इति तत्पतीनामभाग्यं सूचितम् ॥ २१ ॥

हिरण्यपरिधिं नटवेषमिति वक्ष्यमाणात् सुवर्णरसरञ्जित-भक्तिच्छेदकुञ्चितकटिवेष्टनवस्त्रं नटोचितमेव वनमाल्यं वनसम्बन्धि-माल्यं वन्यविविधपुष्पैरचितं दक्षिणवामस्कन्धावारभ्य वैकक्षिक-द्वयं बर्हाणि प्रवालाश्च मौक्तिभूषणानि धातवः सौगन्धिकनाडनः काम्यकवनपर्वतविशेषलुब्धाश्चित्राङ्गरागतया रचिताः तैर्नटवेष-धरम् अनुव्रतस्य निरन्तरपार्श्वस्थायिनः प्रियसखिविशेषस्य स्कन्धे विन्यस्तहस्तम् इतरेण दक्षिणहस्तेन लीलाकमलं भ्रामयन्तं कर्णोत्पलयोरलकानां कपोलयोर्मुखाब्जस्य च हासः प्रकाशो यत्र तमिति ॥ २२ ॥

अथानन्तरं सद्य एवाच्छिद्रैः रूपग्रहणे साधकतमनेत्ररन्ध्रे-न्द्रियैर्द्वारभूतैरन्तर्मनसि प्रवेश्य तेनैव मनसा सुचिरं परिरभ्य बहुधा नेत्राणि तानि द्वाराणीवावृण्वानाः स्वाच्छन्द्येन तस्मि-न्विलीयेत्यर्थः। तापं तददर्शनजं क्लेशं विजहुः विशब्देन पुनस्तदा-पातो निरस्तः हा न स्पष्टोऽभाविरभूदित्याशयस्य ध्वंसात् अन्यत्रैः तत्र सामरस्यं यथापूर्वरसत्वमित्यर्थः वृत्तेरपीति बहिर्वृत्तेरपी-त्यर्थः। यद्वा, अभिमानाऽभिमुखी मतिर्येषां ते यथा प्राज्ञं परम-भागवतं परिरभ्य नेत्रादिगिराश्लिष्य तापं सर्वं जहति तद्वत् ॥ २३ ॥

आत्मदिदृक्षयेति प्रथमं तन्मात्राभिलापात् अखिलदृशां सर्वबुद्धीनां द्रष्टा साक्षीति विज्ञायेत्यत्र हेतुः। यद्वा, अखिल-दृशां बुद्ध्यादिद्रष्टृणां जीवानामपि द्रष्टा प्रहसिताननं इति माधुर्यमयवचनचातुर्यम् ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अनुव्रतस्य कस्यचिदंसे कर्णोत्पलालकैर्जुष्टं कपोलं यस्य तत् कर्णोत्पलालककपोलं मुखाब्जं तस्मिन् हासो यस्य तमि-त्यर्थः ॥ २२ ॥

कर्णपूरैः स्वर्णैः अतिमतयः ज्ञानाधिकाः ॥ २३—२६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यमुनासमीपवने कथम्भूतेऽशोकानां तरूणां नवैः पल्लवैः मण्डिते विचरन्तमग्रजेन सहितं गोपैश्चावृतं कृष्णं स्त्रियः द्विज-पत्न्यो ददृशुः ॥ २१ ॥

कीदृशं श्यामं हिरण्मयवस्त्रपरिधिः परिधानं यस्य तं पीताम्बर-मित्यर्थः वनमाल्यैः वन्यैः पुष्पैश्च बर्हैर्धातुभिर्गैरिकादिभिः प्रवालैः पल्लवैश्च नटवद्वेषो यस्यानुव्रतस्य सख्युरंसे स्कन्धे विन्यस्तो हस्तो वामकरो येन इतरेण हस्तेनाब्जं धुनानः लीलया भ्रामयन्तं कर्णयो-रुत्पले यस्यालकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तं च तथाविधं ददृशुरित्यन्वयः ॥ २२ ॥

बहुशः आकर्णिताः प्रियतमस्योदया उत्कर्षास्त एव कर्णौ पूरयन्ति कृतार्थीकुर्वन्ति तथा तैः कर्णाभरणै-रिति वा यस्मिन् कृष्णे निमग्नमनसः आविर्भूतचित्ताः तं कृष्णम् अथ दर्शनानन्तरमच्छिद्रैर्लोचनद्वारैरन्तः प्रवेश्य सुचिरं परिरभ्य उपगूह्य तापं तद्दर्शनाभावजं जहुः हे नरेन्द्र! अभिमतयः भगवद्भक्तानां तद्विदृक्षात्मिका बुद्धयः प्राज्ञं परमा-त्मानं "प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढः" इति श्रुतेः। तं दृष्ट्वा यथा तद्दर्शनाभावजं जहुः तापमाध्यात्मिकादिकं वा जहति तद्वत् अतिमतय इति पाठे ज्ञानाधिकाः ॥ २३ ॥

तदा भगवानात्मनः स्वस्य दिदृक्षया प्राप्तास्ता दृष्ट्वा त्यक्ताः सर्वा आशाः पत्यादिविषयाः याभिस्तथाभूता विज्ञाय तत्र हेतुरखिलं पश्यतीति तथा प्रहसिताननं यस्य सः प्राह ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

किं गुणविशिष्टं ददृशुरिति, तत्राह—श्यामं हिरण्यपरिधिं सुवर्णमेखलं सुवर्णवत्पीताम्बरं वा वनमाल्येन वनपुष्पेण बर्हेण मयूरपिञ्छेन धातुना गैरिकेण प्रवालेन नटवेषवत्तेषो यस्यासौ तथा तम् अनुव्रतांसे कस्यचित्प्रियस्य स्कन्धे कर्णयोरुत्पलं अलकः कुन्तलं कपोले च मुखाब्जे हासो यस्य स तथा तं धुनानं परिकम्पयन्तम् ॥ २२ ॥

दीर्घकालमारभ्य श्रुतः प्रियतमस्योदयो दीर्घश्रुतप्रियतमो-दयः स एव कर्णपूराः कर्णालङ्करणानि तैः यस्मिन् कृष्णे निमग्नमनसः अवगाह्य दृढबद्धहृदयाः पूर्वं ताः स्त्रियोऽथ तं कृष्णम् अक्षिविवरैरन्तः प्रविश्य सुचिरं परिरभ्य आलिङ्ग्य तापं स्मरनिमित्तं ज्वरं जहुः कथमिव यथा प्राज्ञाः सुषुप्त्यवस्था-साक्षिणः प्राज्ञं प्राप्ताभिमतयः इन्द्रियवृत्तयः तापं त्यजन्ति "सता सौम्य तदा सम्पन्नो भवति" इति श्रुतेः। यद्वा, भगवत्तत्त्व-ज्ञाननिपुणाः प्राज्ञाः प्राज्ञमिति पाठे परिरभ्येति सम्बन्धः ॥२३॥

त्यक्तसर्वाशाः त्यक्तसर्वान्यतृष्णाः "आशाविगतितृष्णयोः" इति च दृष्ट्वा अपरोक्षज्ञानेन तासां भक्तिं विज्ञाय अखिल-दृक् अखण्डज्ञानी ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

गतानां गमनप्रकारमाह-यमुनेति। यमुनोपवने विचरन्तं स्त्रियो ददृशुरिति सम्बन्धः जलस्थलक्रीडायोग्यभूमिः सूचिता उपवनं पुष्पाणि फलानि च सर्वदा भवन्ति तथाविधान्येतानि अन्यत्र इति यमुना कूलेति उपवनरत्ना यमभोगाभावश्च गतानामुपयोगार्थं-

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

त्यागे शोकः स्यादिति तन्निवृत्त्यर्थमाह—अशोकानां नवपल्लवैर्मण्डिते इति अनेन दास्या अपि निरूपिताः तादृशे विभावादियुक्ते गोपैर्मुग्धैर्वृतं विशेषेण हंसगत्यादिना गच्छन्तं साग्रजं क्रियाशक्तिसहितं सर्वतो रक्षणसमर्थं ददृशुः स्वाभिलषितप्रकारेण दृष्टवत्यः ॥ २१ ॥

अतः स्त्रियः स्त्रीदृष्टं भगवन्तं वर्णयति—अन्यथा भगवच्चरित्रं न भवेदन्योपसर्जनत्वात् वर्णिते तु भगवतैव यथा क्रियत इति तादृशरूपप्राकट्येन निश्चीयते, श्याममिति । आदौ वर्णः शृङ्गाररसात्मकः गौरो रजोरूप एव स्यात् तैजसश्च शुक्लो जलप्रकृतिकः अव्यक्तरसः अन्नमेव हि सर्वरसात्मकं भोग्यं च केवलं तद्रसजनकं न भविष्यतीति तयोरपि सम्बन्धो निरूप्यते हिरण्यपरिधिं वनमालिनामिति सुवर्णमेखलैव परिधिरूपा कुण्डलमुकुटकण्ठाभरणानि च पीताम्बरं कङ्कणाङ्गदादीनि च अनेन परिधिसहित सहजमूर्त्तिः श्यामः चन्द्रो निरूपितः वनमाला वर्त्तने अस्येति सर्वपुष्पमयी सा शुभ्रा अन्येपि सर्वे रसास्तत्र सन्तीति ज्ञापयितुं साधनत्रयमाह, बर्हधातुप्रवालेति त्रयाणामन्योन्यसम्बन्धात् सर्वे एव रसाः बर्हश्चित्र एव धातवः अनेकविधाः शुभ्रादयः अमिश्राः प्रवालाः आरक्ता एव एतैरपि कृत्वा नटवेषो यस्य केवलं रसं धर्मिसहितमपि रसं दातुमुपस्थितः । किञ्च, लीलामपि सामग्रीरूपां स्वयमेव करोतीत्याह, अनुव्रतांसे विन्यस्तहस्तमितरेण धुनानमब्जमिति लीलायाः प्राधान्यख्यापनार्थं स्वस्य परवशत्वं बोद्ध्यते स्वातन्त्र्येण रसो शुभो भवतीति अनुव्रतस्य स्वसमानधर्मशीलस्य अंसे स्कन्धे हस्तं विन्यस्य युग्मरसं ख्यापयन् विश्वमेव कमलात्मकं भ्रामयति सर्वमेवान्यथा करिष्यामीति ज्ञापयन् निर्भयतां सम्पादयति परमनुव्रतस्य एव अणुमात्रान्यथाभावेपि नैवम् एवं रसः क्रियापर्यवसायीति स्कन्ध एव कृतिर्निरूपिता उभयोरेकत्र व्यावृत्तौ रसो न स्यादितीतरेणोत्युक्तं कम्पेन मकरन्दः स्रवन्तीति रसार्थमेव तथाकरणं ज्ञानक्रिययोर्मर्यादायाः शास्त्रायाम् भक्तानां भक्तेः विरोधमाशङ्क्य परिहरति, कर्णोत्पलालककपोलमुखाब्जहासमिति । कर्णयोरुत्पले ये अलकाः नालसहितकमलस्थितभ्रमरा इव कपोलयोर्मुखे च हास्यं यस्येति तेष्वपि हाससम्बन्धः कपोलयोर्मुखे च सर्वेषामेव कमलत्वं कपोलयोर्मुखस्यैव वा कर्णयोर्योगसाङ्ख्यत्वं प्रवृत्तिनिवृत्तिशास्त्रत्वं च उत्पलानां मर्यादारूपत्वं अलकानां शास्त्रत्वं विद्वत्त्वं वा कपोलयोर्भक्त्यङ्गत्वं मुखस्य भक्तित्वं सर्वेषामेव सरसत्वाद्ब्जत्वं तत्र हासो यस्येति सर्वव्यामोहात् सर्वविरोधः परिहृतो भवति ॥ २२ ॥

एवं भगवत्स्वरूपमुक्त्वा तत्र तासां स्वरूपमाह-प्राय इति । प्राचुर्येण श्रुताः प्रियतमस्याभ्युदयरूपा गुणाः त एव कर्णपूराः कर्णाभरणानि तद्द्वारा भगवदन्तःप्रविष्टे यस्मिन् निमग्नमनसो जाताः यथा गृहे गङ्गापूरे समागते गृहं निमग्नं भवति तथैव भगवन्तमभ्यन्तरस्थितं पुनःप्रकारान्तरेणाक्षिरन्ध्रैः अन्तःप्रवेश्य तापं जहुः पूर्वं शब्दात्मकः प्रविष्टः कर्णद्वारा इदानीमक्षिद्वारा रूपात्मकः प्रविशति अतः अर्थेति भिन्नप्रक्रमः तेन तु संसारिका एव तापाः परिहृताः नत्वलौकिकाः अनेन स्वलौकिकाः परिह्रियन्ते तदाह तापं जुहुरिति ननु तापः सर्वाङ्गेषु प्रविष्टः कथमन्तःप्रवेशनमात्रेण शान्त इत्याशङ्क्याह सुचिरं परिरभ्येति अत्यर्थंबहुकालमालिङ्गितवत्यः ताः सर्वतापपरित्यागः ननूपशान्ता एव तापाः न तु नष्टा इति चेदित्याशङ्क्य तास्तत्रैव लीना इति वदन् स्वरूपतोपि नाशमाह दृष्टान्तेन प्राज्ञं यथाभिमतय इति प्राज्ञं सुषुप्तिसाक्षिणं स्वात्मानमेव भगवद्रूपमहङ्कारवृत्तयः प्राप्य तत्रैव लीना भवन्ति एवमेताः भगवत्येव सायुज्यं प्राप्तवत्यः परं संस्कारशेषाः अतः पुनर्बहिर्गमनमन्यथा सायुज्यमेव स्यात् प्रायग्रहणेन सर्वे भगवदीया गुणा न श्रुताः न अन्यथा मोहयतीति ज्ञानेन मुग्धा भवेयुः किञ्च श्रुत एव न दृष्टः कोप्यनुभावः किञ्च प्रियतमत्वेनैव श्रुतः न तु साधनत्वेन उदय इति कोमला एव भावाः श्रुताः तेपि कर्ण एव प्रवाहत्वेन प्रविशन्ति न तु सर्वाङ्गैः दृष्टान्तस्याभावात् अतो मन एव विमग्नं न तु देहादिः इदानीमप्येता ज्ञाननिष्ठाः अनन्तरेव सत्कारं कृतवत्यः ज्ञानं हि तमोरूपं रजोरूपा भक्तिः सत्त्वरूपः सङ्ग इति अतः सुषुप्तिदृष्टान्तः तापनिवृत्तिः फलं अन्यथा गततापाः नेत्रपेयमेव भगवद्वाक्यामृतं पपुः नरेन्द्रेति सम्बोधनं ध्यानार्थममोहार्थं च ॥ २३ ॥

ततो भगवता यत्कर्त्तव्यं तदाह-तास्तथेति । तथा पूर्वोक्तप्रकारेण त्यक्ता ऐहिकपारलौकिकआशा याभिः आत्मनः स्वस्य दिदृक्षया प्राप्ताः केवलं भगवान् द्रष्टव्यः मर्यादायां हि एतावदेव अतो हि भगवान्मनो निदिध्यासितव्यश्च साक्षात्कर्त्तव्य इति तत्त्वे तासां जातं अतः रूपप्रकारविलक्षणं वचनमाह विज्ञायेति तासां स्वरूपं विज्ञाय प्रहसिताननो भूत्वा प्राह दर्शनानन्तरभावव्यामोहार्थं हासः प्रकर्षेण कथनमवाञ्छितस्य नन्वेवं कथनमयुक्तमिति चेत्तत्राह अखिलदृग्द्रष्टेति अखिलदृशां सर्वबुद्धीनां द्रष्टा सधर्माणां धर्मिणां यत्र प्रवृत्तिः केवलधर्माणां प्रवाहवत्सर्वत्र गच्छतां धर्मिणां बाधकसहितानां सधर्माणां पश्चादेवोत्पन्नबाधकताश्च तां सर्वामेव प्रवृत्तिं जानाति अत एता अन्तिमपक्षनिमग्ना इति तथोक्तवान् ॥ २४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हिरण्मयं हिरण्यवर्णकं वस्त्रं परिधिः परिधानं यस्य तं वनमालयेन पत्रपुष्पमयेन चरणपर्यन्तलम्बितेन बर्हेण चूडोपरिस्थेन धातुभिरङ्गरागत्वेन कल्पितैः प्रवालैः श्रवणचूडातुन्दबन्धान्तरस्थैर्नटस्येव वेषो यस्य किञ्च स्वाभियोगतापि ता अनुभावयामासेत्याह अनुव्रतस्य प्रियसख्यांसे स्कन्धे विन्यस्तः आश्लेषपरिपाट्या अर्पितो वामहस्तो येन तम् इतरेण दक्षिणहस्तेन अब्जं लीलाकमलं धुनानं घूर्णयन्तम् एतादृशदर्शनप्रदानेन भाववतीनां भवतीनां हृदयकमलं स्वहस्तगतं कृत्वा औत्सुक्येन घूर्णयामीति जानीतेति घोतयन्तं तद्वा भवतीर्लीलावतीः पश्यतो मम हृदयकमलमौत्सुक्येन घूर्णते इति लीलाकमलघूर्णनमिषेण स्वहृदयघूर्णमेव भवतीर्दर्शयामीति आकूतम्। स्वाभियोगादेव निश्चिनुतेति व्यञ्जयन्तं कर्णोत्पलयोश्चञ्चलता

स्वागतं वो महाभागा ! आस्यतां करवाम किम् ।
यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः ॥ २५ ॥
नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शनाः ।
अहैतुक्यव्यवहितां भक्तिमात्मप्रिये यथा ॥ २६ ॥
प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ।
यत्सम्पर्कात् प्रिया आसंस्ततः कोन्वपरः प्रियः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अलका यस्य कपोलयोः प्रसृतो मुखाम्बुजस्य हासो यस्य तं च तत्र तम् ॥ २२ ॥

प्रायो बहुशः श्रुता ये प्रियतमस्य उदया उत्कर्षास्त एव कर्णपूराः कर्णालङ्काराः कर्णौ पूरयन्ती कृतार्थयन्तीति तथा तैर्यस्मिन् श्रीकृष्णे निमग्नमनस एव एतावद्दिनपर्यन्तं आसन् तं सम्प्रति नेत्रद्वारैरन्तःकरणकमलतल्पे प्रवेश्य सुचिरं स्वाच्छन्देनैव दृढं परिरभ्य परिरम्भदार्ढ्येनैवानन्दमूर्च्छांस्तास्तेन सहैक्ये सति तापं तदङ्गस्पर्शाभावजनितं क्लेशं विजहुः तत्र दृष्टान्तः अभिमतयोऽहंवृत्तयः प्राज्ञं सुषुप्तिसाक्षिणं परिरभ्य तस्मिन् लयं प्राप्य यथा ॥ २३ ॥

तास्तथाभूता अवस्थावतीः पुरः स्थापयित्वैव मूर्च्छिता भवन्ती दृष्ट्वा अखिलानामपि दृशां बुद्धीनां द्रष्टा ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ताः स्त्रियः साग्रजं सरामं श्रीकृष्णं ददृशुः ॥ २१ ॥

कथम्भूतम् ? श्यामामिति । हिरण्यवत्परिधिः परिधानं यस्य तम् वनमाल्यैर्वनपुष्पैर्बर्हैर्मयूरपिच्छैर्धातुभिर्गैरिकादिभिः प्रवालैः पल्लवैश्च नटवद्वेषो यस्य तम् अनुव्रतांसे सख्युः स्कन्धे विन्यस्तो निहितो हस्तो येन तम् इत्युत्तरेण हस्तेनाब्जं धुनानं भ्रामयन्तम् कर्णयोरुत्पले यस्य अलकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तत्र तत्र तन्ददृशुरित्यन्वयः ॥ २२ ॥

अथ दर्शनानन्तरं प्रायो बहुशः श्रुता ये प्रियतमस्य श्रीकृष्णस्योदया उत्कर्षाः त एव कर्णपूराः कर्णौ पूरयन्ति कृतार्थौ कुर्वन्तीति तथा तैः तस्मिन् श्रीकृष्णे निमग्नान्याविष्टानि चेतांसि यासां ताः तमक्षिरन्ध्रैर्लोचनद्वारैरन्तः प्रवेश्य सुचिरं परिरभ्योपगुह्य तापं जहुः "यथा प्राज्ञं प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढः" इति श्रुतिप्रसिद्धं भगवन्तं प्राप्य अभिमतयो जीवबुद्धिवृत्तयस्तापं त्यजन्ति तद्वत् ॥ २३ ॥

त्यक्तसर्वाशाः श्रीकृष्णं विहाय क्वापि न गमिष्याम इत्येवं कृतनिश्चया इत्यर्थः । अखिलं दृग्द्रष्टा सर्वबुद्धिसाक्षी ॥ २४ ॥

---

भाषा टीका।

अशोक वृक्ष के नवीन पल्लवन तें भूषित ऐसे श्रीयमुना जी के उपवन में ( जो अतरोंड ऐसे विख्यात है तहाँ ) माथुरन की पत्नी, गोपन के साथ बलदेव सहित श्रीकृष्ण कूं विचरते देखत भईं ॥ २१ ॥

कैसे श्रीकृष्णचन्द्र कूं देखे ता को वर्णन करें है, कि—श्याम सुन्दर जिनको स्वरूप सोने के नाईं चटकीले पीताम्बर कूं पहिरें, वनमाला धारण करें, मोर मुकुट माथे पै धारण करें खरिया, गेरू नये पत्तोंआ इन तें शोभायमान, नटकी तुल्य वेष बनायें, सखा के कन्धा पै एक हाथ धरें, एक हाथ तें कमल के फूल को घुमाय रहे, कानन में कमल के फूलन को खुरसें, अलकें छूटि के कपोलन पै आय रहीं, मुखारविन्द में मन्द हास जिन के ऐसे श्रीकृष्ण के द्विजपत्नी दर्शन करत भईं ॥ २२ ॥

मौत करिके सुने जो प्यारे के गुण सोई भये करण फूल तिनसों श्रीकृष्ण में मन लगि रहे जिनके, ऐसी वे ब्राह्मणन की स्त्रीं दर्शन करे पीछे तिन श्रीकृष्ण चन्द्र को नेत्र द्वारा अन्तः करण में लेजाय के बड़ी बेर ताईं आलिङ्गन करिके। हे राजन् ! अपने ताप कूं त्यागत भईं जैसे बुद्धि जे हैं ते परमात्मा कूं प्राप्त होयके पहिले तापन कों छोड देय हैं ॥ २३ ॥

पुत्र गृहादिकन की आशा जिनने छोड दई अपने दर्शन करिवे कूं आईं ऐसी जे द्विज पत्नी हैं तिनकूं जानि के सब की बुद्धि के देखन वारे ऐसे श्रीकृष्ण चन्द्र हँसि के बोलिवे लगे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हे महाभागाः ! वः स्वागतं शुभमागमनं तदेवाह-यद्यस्मात् प्रतिबन्धानिरस्कारेणास्माकं दिदृक्षया प्राप्ता इति इदं च उपपन्नं युक्तमिति वा ॥ २५ ॥

युक्तत्वमाह-नन्विति । आत्मप्रिये आत्मा च प्रियश्च तस्मिन् मयि कुशला विवेकिनोऽत एव स्वस्यात्मनोऽर्थं पुरुषार्थं पश्यन्ति ये ते यथा यथावद्भक्तिं कुर्वन्ति यथावत्त्वमाह-अद्धा साक्षात् अत्र

**तद्यात देवयजनं पतयो वो द्विजातयः ।**
**स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः ॥ २८ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हेतुः अहैतुकव्यवहितां फलाभिसन्धिरहितामत एवाव्यवहितां निरन्तराम् ॥ २६ ॥

आत्मनः सर्वतः प्रेष्ठत्वमुपपादयति, प्राणेति । स्वा ज्ञातयः आत्मा देहः एते सर्वे यत्सम्पर्कात्प्रियास्तस्याध्यासेनोपकरणत्वेन वा ॥ २७ ॥

तस्मात्कृतार्थां यूयं देवयजनं यज्ञवाटं यात गच्छत । ननु, कृतार्थाः किमिति यास्याम इति चेदत आह, पतय इति । पारयिष्यन्ति समापयिष्यन्ति पतीनामनुग्रहार्थेत्यर्थः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथैव सादरमाह—स्वागतमिति । आस्यतां विश्राम्यतां ततश्च किं करवामेति आदिश्यतामित्यर्थः । तथा च करवामेति नोऽस्माकमिति च बहुत्वनिर्देशः साधारण्यापादनेन स्वैकनिष्ठताच्छादनार्थम् औदासीन्यार्थं च दिदृक्षयेति दर्शनाज्ञातमिच्छान्तरं निरस्यति ॥ २५ ॥

तत्र तासां निजसङ्गतिप्राप्तीच्छां सम्प्रति वञ्चयन्नाह—नन्वद्धेति । अद्धा साक्षादेव विशुद्धामित्यर्थः यतः अहैतुकीत्यादिना तत्र भक्तेर्यथा वस्त्वमेवाह—अहैतुकीति । आत्मनः सकाशादपि प्रिये परमात्मत्वात् परमात्मत्वेन च मम निरन्तरयुष्मत्साङ्गित्वाच्च सर्वप्रत्यक्षसङ्गाग्रहः कर्त्तव्य इति भावः ॥ २६ ॥

परमात्मन एवात्मनः सकाशात् प्रियत्वं साधयति, प्राणेति । आत्माऽत्र जीवः यस्य मम परमात्मनः सम्पर्कात् आत्मनोऽपि मदंशत्वेनैव तथात्वादिति भावः ॥ २७ ॥

तद्यात देवयजनमिति पाठस्तेषां सम्मतो लक्ष्यते तथैव पाठधारणात् तद्यात साध्व्यो यजनमिति तु पाठः प्रायः सर्वत्र स्वसत्रं स्वीयत्वात् भवद्यसमापनीयं स्वीयं सत्रं यज्ञं पारयिष्यति आरब्धं समापयिष्यन्ति स्वशब्देन अन्यथा कथञ्चित् परकीयमेव कारयितुमर्हन्ति न त्वात्मन इत्यर्थः । यतो गृहमेधिनः युष्माभिर्विना गार्हस्थ्याभावेन यज्ञानुपपत्तेः अत एव तदपेक्षया देवयजनं यातेत्युक्तं न च गृहानिति अतः श्रीभगवदाज्ञयैव तासां बहिर्मुखपतिपार्श्वे गमनं तथा तदाज्ञा च सर्वसुहृत्त्वात् गोब्राह्मणहितत्वात् तासां सम्बन्धेनानुजिघृक्षुत्वाच्चेति ज्ञेयम् ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राणेति आत्मशब्दः शरीरपरः ॥ २७ ॥

सत्रं यागं पारयिष्यन्ति ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—स्वागतमित्यादिभिः पञ्चभिः । हे महाभागाः ! अस्मदनुग्रहविषयतारूपमहाभाग्यशालिन्यः वः स्वागतं शोभनमागमनं भर्त्रादिभिरनिषिद्धाः कुशलमागताः किं, आस्यताम् उपविश्यतां वो युष्माकं किं कार्यमत्रागमनप्रयोजनं किमिति प्रश्नः यदि किञ्चिदस्ति तदवश्यं वयं करवाम सर्वज्ञत्वात्तदभिप्रेतं विज्ञाय तस्यौचित्यमाविष्करोति यदिति नोऽस्माकं दिदृक्षयाऽभ्यागता इति यत्तदिदं वो युष्माकम् उपपन्नम् उचितमेव ॥ २५ ॥

औचित्यमेवोपपादयति—नन्विति । ननु हे द्विजपत्न्यः कुशलाः आत्महिताहितविवेकिनः स्वार्थदर्शनाः स्वप्रयोजनाभिज्ञा जना आत्मनः स्वस्मादपि प्रिये मय्यद्धा मय्येव भद्रेति स्फुटावधारणार्थाः अहैतुकीं फलाभिसन्धिरहितामव्यवहितामविच्छिन्नां भक्तिं विवेकिनो यथा मयि महानुभावा भक्तिं कुर्वन्ति तथा भवत्योऽपि कृतवत्य इति वार्थः कुर्वन्ति यथावत् कुर्वन्ति ॥ २६ ॥

आत्मप्रिय इत्येतदेव कार्कोपपादयति—प्राणेति । स्वात्मा स्वदेहः । स्वः जीवः आत्मा देहो वा प्राणादयो यत्सम्पर्काद्यत्सम्बन्धात्प्रिया भवन्ति ततः मत्तः प्रियोऽन्येष्टः कोऽनु न कोऽपि निरतिशयप्रियोऽहमेवेतीत्थम्भूते मय्यहैतुक्यव्यवहिता भक्तिर्भवतीनामुचितैवेति तत्कारितामहिदृष्टोचितैवेति भावः । यत्सम्पर्कात्प्रिया इत्यनेन "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय" इत्यादि श्रुत्यर्थो विवक्षितः तदर्थस्तूक्तः पुरस्तात् ॥ २७ ॥

तस्मादागमनप्रयोजनस्य मद्दर्शनस्य जातत्वाद्देवयजनं यज्ञवाटं गच्छत तं वो युष्माकं पतयो ब्राह्मणाः गृहमेधिनः गार्हस्थ्यधर्मपरायणाः युष्माभिरेव सहायभूताभिः स्वसत्रं पारयिष्यन्ति संमापयिष्यन्ति दम्पत्योः सहाधिकारादिति भावः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अभ्येताः अभ्यागताः यद्दर्शनादिदं वः उपपन्नं युक्तम् ॥ २५ ॥

एवं कुशलं पुण्यमेवार्थः कुशलार्थस्तस्य नितरां दर्शनं येषां ते कुशलार्थनिदर्शनाः "अर्थी समर्थो विद्वानधिक्रियते" इति वचनात् कुशला निपुणाश्च अर्थनिदर्शनाश्च ते तथा यद्वा, कुशलार्थो भगवान्निदर्शनमुदाहरणं येषां ते तथा कुशलाः स्वार्थदर्शना इति पाठः एते श्रद्धां विषयाभिलाषं न कुर्वन्ति किन्तु आत्मप्रिये भगवति अहैतुकीं निर्निमित्ताम् अव्यवहितां निरन्तरीभूतां भगवद्भक्तिमधिकुर्वन्ति अधिकाङ्कुर्वन्ति कथमिव यथात्मप्रियं स्वभर्तारं भगवतीति शेषः । यथाशास्त्रविहितप्रकारेण "तदेतत्प्रेष्ठ" इति श्रुतेः । देहादिभ्योऽतिप्रियत्वं हरेरेवेति प्रतिपादयति—यद्वा, स्वार्थदर्शनाः स्वर्गादिफलार्थदर्शनः कुशलाः यज्ञविद्यानिपुणाः अहैतुकव्यवहितां श्रद्धामास्तिक्यबुद्धिम् मय्यधिके ईश्वरे न कुर्वन्ति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

व्यतिरेकदृष्टान्तमाह—अहैतुकीति। भक्ता आत्मप्रिये मयि यथा भक्तिं कुर्वन्ति न तथेति ॥ २६ ॥

तव सर्वस्मादाधिक्यं कुत इत्यत्राह—प्राणेति ॥ २७ ॥

यस्मादखण्डेश्वरे मयि भक्तिं कुर्वन्ति नान्यत्र तस्मात् मद्दर्शनं कृतमित्याह—तदिति। गन्तव्ये निमित्तमाह—पतय इति। वः पतयः द्विजातय इति अतः कालक्षेपो नोचितः निमित्तान्तरमप्यस्तीत्याह—स्वसत्रमिति। पारयिष्यन्ति सम्पादयिष्यन्ति ॥ २८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवतो वाक्यमाह—स्वागतमिति चतुर्भिः—

पूर्वानुवादस्तत्रैव उपपत्तिश्च तद्द्विधा।
मर्यादायां प्रवेशश्च ततो गन्तव्यबोधनम् ॥

आदौ जातमनुवदति लौकिकन्यायेन वो युष्माकं स्वागतं सुष्ठु आगमनं जातमिति कुशलप्रश्नः ग्राह्यं तु देयं किमपि नावशिष्यत इत्याह—महाभागा इति। महत्त्वमान्तरमपि भाग्यं सूचयति, तेन सर्वसमृद्धिः साक्षात्कारश्च सिद्धो निरूपितः समागतानां क्लेशाभावायाह—आस्यतामिति। उद्देश्यमर्थं पृच्छति—करवाम किमिति। अनेन असङ्ग्रहे सङ्ग्रहः कारणीयः अन्ते च शुद्धा गतिः वक्ष्यति यज्ञपत्न्यः तथापरे इति वैष्णवैः सहः सङ्गश्च अतस्तेषां याज्ञिकानां ज्ञानं ततः शुद्धानां समागमने सर्वैव प्रपत्तिः स्यात्तदा तद्द्वारा एता अप्यन्यथा भवेयुः अतो यावदुक्तं तावत् करिष्याम इति आह—ननु, नाधिकं किञ्चित्कर्त्तव्यं किं तु द्रष्टुमेवागता इति चेत् तत्राह—यत् नोऽस्माकं दिदृक्षया समागताः तदुपपन्नम् इति बहुवचनेन केवलो भावो निवारितः अत आह—उपपन्नमिदं हि व इति। सर्वसामग्रीसहितो भगवान् द्रष्टव्य इति ॥ २५ ॥

ननु, मर्यादायां ज्ञानमार्गे चैतद्भवति अस्माकं तु प्रेमाधिक्यमस्तीति कथमेतावन्मात्रत्वं युक्तं तत्राह—नन्वद्धेति। नन्विति कोमलसम्बोधने स्नेहोपि मर्यादायामेव युक्तः अत एव अद्धा साक्षात् न तु कामनार्थं भक्तिं कुर्वन्ति मयीत्यनेनात्मता निरूपिता एक वचनेनान्ये व्यावर्त्तिताः कुर्वन्तीति नेदमपूर्वं किन्तु परम्परयैवैतत्सिद्धं यतस्ते कुशलाः सर्वाणि साधनान्यनेन प्रकारेणानायासेन सिद्धानि भवन्ति फलं च। किञ्च, स्वार्थकुशलास्ते अन्यत्सर्वमिन्द्रियादिगामी भवति इदमेव परमात्मगामीति यावच्च भगवति प्रेम तावदात्मनि तत एव तत्रायातीति यावदात्मनि स्नेहः तावदन्यरागो न गच्छति अतस्ते स्वार्थदर्शिनः अत एवाहैतुकीमव्यवहितो देहेन्द्रियादिभिः व्यवधानरहितां भक्तिं प्रेमलक्षणां यथा आत्मनि प्रीतिविषये कुर्वन्ति तथैव कुर्वन्ति ज्ञातीनामात्मा दृष्टान्तः ॥ २६ ॥

ततोऽधिमकक्षाभावात् लोकेऽपि स्वस्य प्रीतिविषये मर्यादा लोके हि पदार्थो ज्ञानार्थं सिद्ध इति एतदुपपादयति—प्राणेति। प्राणादयः सर्वे आत्मसम्बन्धात् प्रियाः आत्मापि परमात्मसम्बन्धात् परमानन्दो ह्यात्मरूपः प्रियः न केवलमात्मनः प्रियत्वं नाप्यानन्दस्य परानन्दं दुःखितजीवेऽपि व्यभिचारात् अतः प्राणादिषु स्नेहः औपाधिकः सहजो मयि अतः को वा अपरः प्रियो भवेत् प्राणा इन्द्रियाणि प्राणाश्च बुद्धिर्मनोनियामिका मनश्च स्व शरीरं धनादिकं वा आत्मा देहः आत्मैव वा दाराः स्त्रियः अपत्यानि पुत्रा धनं पश्वादयः यावत्किञ्चिदात्मसम्बन्धि यस्यात्मनो मम सम्बन्धात् प्रिया आसन् ततो मत्तः नु, इति वितर्के को वा प्रियः स्यात् अपरश्च नियम्यस्त्वप्रियो भवति ॥ २७ ॥

अतः कार्यस्य सिद्धत्वात् गृहं यातेत्याह—तद्यातेति। तद्यद्यप्यहमात्मा तथापि बहिः रमणे बुद्धिरन्यथा भविष्यतीति न तर्कयितव्यं यतो भवत्यः साध्व्यः पतिव्रताः संस्कारैश्च संस्कृता अतो देवयजनं यात। किञ्च, वो युष्माकं पतयो द्विजातयः ब्राह्मणजातीयाः अतः संस्कारनाशे यज्ञो न सिद्ध्येत् अतः ते स्वसत्रं युष्माभिः कृत्वा पारयिष्यन्ति पारं नेष्यन्ति यतो गृहमेधिनः गृहस्थाः भार्यासहिता एव कर्माधिकारिणस्तस्मात् कार्यस्य सिद्धत्वात् स्वरक्षासम्भवात् परोपकारात् तेषां च जातिपक्षपातेस्वसम्पादकत्वात् गन्तव्यमित्यर्थः ॥ २८ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

रासाभिसारिणीर्गोपीरिव महाप्रेमवतीस्ता अप्याह—स्वागतमिति। वः शुभमेवागमनं यत् यस्मात् प्रतिबन्धकोटीरपि निरस्कृतवत्या दिदृक्षया नः प्राप्ता इदं व उपपन्नम् उपपद्यतेऽमैवेत्यर्थः। मम एतत् प्रत्युपकरणासामर्थ्यात् न किमप्युपपन्नमिति भावः। अतो वः किं करवाम केवलम् ऋणी भवामीत्यर्थः। अत एव महाभागाः भक्तोऽपि महाभागवत्यः आस्यतां क्षणमिहोपविश्यतां मद्दर्शनार्थमेवेत्यर्थः ॥ २५ ॥

परमप्रेमवतीनामपि तासां तदाशीमेव मनोरथपूर्त्तिर्न रसपुष्टिं वहति रसपुष्ट्या च विना लीला न चमत्करोत्यतो भगवतस्तत्प्रेमवश्यस्यापि तद्दर्शनोत्थया रत्या स्वाभियोगं कृतवतोऽपि मनस्यकस्मादेव लीलाशक्त्यैव स्फोरितमैश्वर्यं तासां स्वगृहं प्रतिपरावर्तने कारणमभूत् यद्यपि प्रायः प्रेमवज्जनसन्निधावैश्वर्यं नाविर्भविष्णु भवेत्तदपि लीलासौष्ठवार्थं विरहोत्कण्ठावर्द्धनया तासां प्रेमवर्द्धनार्थं चाविर्भवेदेव तद्भगवतो रत्यावेशं भावं शमयित्वा विवेकमुत्पादयामासेत्यतो भगवांस्तदनुकूलमेवाह—नन्वेति द्वाभ्याम्। न केवलं मयि भगवत्येवासज्जन्ते किन्तु यदर्पान्त्येऽपि मयि परमेश्वरे भक्तिं प्रीतिं कुर्वन्ति के ते कुशलाश्चतुराः चातुर्यमेवाह—स्वार्थदर्शिनः लोके हि स्वार्थसाधका एव चतुरा उच्यन्त इति भावः। अहैतुकीं स्वीयफलाभिसन्धिरहिताम् व अव्यवहिता प्रीतिव्यवधायकज्ञानकर्मादिदशान्तरशून्या च ताम् अत्र दृष्टान्तः आत्मप्रिये देहापत्यादौ यथा ॥ २६ ॥

बुद्धिप्रवेशार्थमेव दृष्टान्तो दर्शितः वस्तुतस्तु दृष्टान्तादेहादेः सकाशादपि दार्ष्टान्तिकः परमात्माहमतिप्रिय एवेति युक्त्या प्रबोधयति—प्राणेति। स्वं देहः आत्मा जीवः यस्य परमात्मनः सम्पर्कात् सम्बन्धात् ततः परमात्मनः ॥ २७ ॥

यस्मात् स एव परमात्मा अहमेव युष्माभिर्गन्तुमर्हत्वात् अत एव युष्मदङ्गान्यादिश्य सदा वयं एव इत्यस्मात्

पत्न्य ऊचुः ॥

मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलम् ।
प्राप्ता वयं तुलसिदामपदावसृष्टं केशैर्निवोढुमतिलङ्घ्य समस्तबन्धून् ॥ २९ ॥
गृह्णन्ति नो न पतयः पितरौ सुता वा न भ्रातृबन्धुसुहृदः कुत एव चान्ये ।
तस्माद्भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद्गतिररिन्दम ! तद्विधेहि ॥ ३० ॥

श्रीभगवान् उवाच ॥

पतयो नाभ्यसूयेरन् पितृभ्रातृसुतादयः ।
लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥ ३१ ॥
न प्रीतयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह ।
तन्मनो मयि युञ्जाना अचिरान् मामवाप्स्यथ ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवयजनं यज्ञवाटं यात । ननु, तदापि साक्षान्मूर्त्तं परमात्मानं त्वां हित्वा कथं गृहं यामस्तत्राह–पतय इति । पारयिष्यन्ति युष्माभिः सहैव समापयिष्यन्ति सत्रादिकर्मापि वेदरूपेण मयैवोक्तमिति मत्कार्यानुरोधादेव यात तत्रैव स्फुरन्तं मूर्त्तं मां द्रक्ष्यथेति भावः ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वः युष्माकं स्वागतं शुभमागमनं जातम् ॥ २५ ॥

उपपन्नमिदं हि व इत्युक्तं तदुपपादयति–ननु, हे सत्यः ! आत्मनां प्रिये मयि ये यथावद्भक्तिं कुर्वन्ति ते एव कुशलाः स्वार्थदर्शिनश्च यथावत्तथाह—अद्धा स्फुटमिति । अहैतुक्यव्यवहितामिति च अहैतुकीं मत्प्रीतीतरप्रयोजनरहिताम् अव्यवहितामविच्छिन्नाम् ॥ २६ ॥

आत्मप्रियत्वमात्मनः प्रपञ्चयति—प्राणेति । स्वःस्वयं जीवआत्मा देहः यत् यस्य मम सम्पर्कात्प्रियाः आसन् ततो मत्तः परोऽन्यः को भवति न कोऽपीत्यर्थः ॥ २७ ॥

तत्तस्माद्भवतीनां कृतार्थत्वात् यात गच्छत पारयिष्यन्ति समापयिष्यन्ति ॥ २८ ॥

### भाषा टीका ।

श्रीकृष्ण बोले, कि—हे बडभागिनीओं ! तुम भलें आईं आओ विराजो हम तुमारो कहा सत्कार करें । जो तुम हमारे दर्शन करवे कूं आईं ये तुम को योग्य है ॥ २५ ॥

ये बात निश्चे है, कि–जो अपने स्वार्थदेखिवे में बडे कुशल हैं, ते साक्षात् मोमें निर्हेतुक अन्तर रहित भक्ति करें हैं, जैसी अपने आत्मा और प्रिय में प्रीति करी जाय है तैसी करें हैं ॥ २६ ॥

मबाँ देखो प्राण, बुद्धि, मन, अपनो शरीर, स्त्री, पुत्र, धन, इत्यादिक जाके सम्बन्ध सूं प्रिय हैं, या तें और कौन अधिक प्रिय होयगो ॥ २७ ॥

तौ अब तुम सिगरी यज्ञ शाला को जाओ क्योंकि ! तुमारे पति जो ब्राह्मण हैं, ते विचारे गृहस्थ तुमारे विना अपने यज्ञ को कैसे समाप्त करेंगे तासों तुम अब जाओ ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नृशंसं परुषं निगमं प्रतिज्ञां "न मे भक्तः प्रणश्यति" इति वेदं वा "न स पुनरावर्त्तते" इति पदावसृष्टमवज्ञयापि त्यक्तं बहुमानेन केशैर्निवोढुं दासी भवितुम् ॥ २९ ॥

किञ्च, न गृह्णन्ति नोऽस्मान् हे अरिन्दम कामक्षोभपापादिदमन ! भवतः प्रपदयोः पादाग्रयोः पतितदेहानामन्या स्वर्गादिगतिरपि न भवेन्मा भूत्तस्माद्दास्यमेव विधेहीति ॥ ३० ॥

मयोपेता अनुज्ञाताः प्रत्यक्षं देवान् प्रदर्शयाह—देवा अपीति ॥ ३१ ॥

तथापि त्वां त्यक्तुं न शक्नुम इति चेत्तत्राह—नेति । प्रीतये अनुरागाय स्नेहवृद्धये अङ्गसङ्गोऽङ्गाभ्यां सङ्गः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवम् ईदृशं विभो ! हे बहिरन्तर्व्यापकेति अस्माकं बाह्यमान्तरञ्च सर्वं त्वमेव वेत्सीति भावः । भवानिति अन्यो बहुनाम कृपाकोमलचित्तो भवांस्तु वक्तुमपि योग्यो न भवतीत्यर्थः । यतो नृशंसं क्रूरम् । यद्वा, रसार्णवचन्द्रो भवान् नृशंसं कठिनं नीरसं वक्तुं नार्हत्येवेत्यर्थः । न च केवलमेवं तव वचसां नृशंसतामिथ्यात्वमपि स्यादित्याशयेनाहुः—सत्यमिति । करवाम किमित्येव वा निगमो ज्ञेयः । प्राग्भवानिति भक्त्याऽनुनयार्थं पश्चात् कुरुष्व त्वमिति प्रेम्णेति ज्ञेयम् । अत्र ताभिर्भगवतो

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्राह्मणानतिक्रमरूपा निगममर्यादा तूष्णींपठया नावहितेति ज्ञेयम् नतु, मदर्थं कथमिव कुटुम्बानि त्यक्ष्यन्ते तत्राहुः—संतिज्ञ्येति । नतु जातमेवेति भावः । ननु, आश्रमाणां युष्माकं पत्यादिपरित्यागो न युक्त इत्यत आहुः—प्राप्ता इति । मत्यन्तानिरूपकतया वाच्यार्थमित्यर्थं वाच्यार्थं परित्यज्य व्यङ्ग्यार्थमेव बोधयति, ततश्च सर्वं त्यक्त्वा दास्यमेवाङ्गीकृतवत्य इत्यर्थः । तत्र तुलसीदाम्नः पदावस्पृष्टं तस्मिन्नैश्वर्यं निक्षिप्य "सर्वधर्मान्परित्यज्य" इत्येतद्विधतद्वाक्यरीत्या स्वदोषः प्रत्याख्यातः ॥ २९ ॥

ननु, "साधवो दीनवत्सलाः" इति तेषां हितार्थं यतः । यद्वा, भवाद्धातो ऽकृत्यमपि कर्त्तुमुपयुज्यते तत्राहुः—गृह्णन्तीति । निजनिवेशोल्लङ्घनात् तत्र गता अप्यस्मान् न एव न स्वीकारिष्यन्तीत्यर्थः । अन्येतु प्रतिवेश्यादयः सम्भाषामपि न करिष्यन्तीत्यर्थः । तस्मात्पत्यादिभिरग्रहणात् प्रपद्योः पदाग्रसमीपे पतितात्मनामनन्यगतित्वेन त्वदेकाश्रितानामित्यर्थः ॥ ३० ॥

वो युष्मानिति युष्मत्कृत्यमित्यर्थः । नाभ्यसूयेरन् दोषदृष्टिमपि न कुर्युः कथं न गृह्णीयुरित्यर्थः । अन्ये सर्वे लोकाश्च नाभ्यसूयेरन् किमुत तिरस्कारेणेत्यर्थः । कीदृशीः मया उपेता अनुज्ञाताः ममानुज्ञाप्रभावेनैवेति भावः । अन्यत्तैः नत्रानुज्ञाता इति सङ्गे दोषस्यैव गगनता स्वीकारात् नादृशस्यैव चांशस्य युक्तेः प्रत्युतमपि सम्भावनामयप्रकृतलिङ्ग्परित्यागेन वर्त्तमानमयलट् प्रयोगात् प्रत्युतमिवेत्यर्थः । यद्वा, मया सह उपेताः समीपं प्राप्ता वो युष्मान् पत्यादयो नाभ्यसूयेरन् अहमीश्वर इति तैरपि ज्ञास्यमानत्वादिति भावः । यतो यज्ञकर्माणी तैः प्रत्यक्षीकृता देवा अपि अनुमन्यते पृथाः सन्तो मामीश्वरत्वेन मन्यन्त इत्यर्थः ॥ ३१ ॥

नन्वस्मत्प्रार्थितस्य का वार्त्तेत्याशङ्क्य समाधत्ते—इह आह्मणाजन्मानि युष्माभिर्मदङ्गसङ्गो युष्मद्बुद्धिवृद्धासन्ननमयमाश्रितं नृणां जीवमात्राणां प्रीतये सुखमात्राय न भवेत् नितरामनुरागायेत्यर्थः । तत् तस्मात् लोकनिन्दितत्वात् मयि निजभावेन मन एव युञ्जानाः अचिरादिहान्त एवेति भवेदं तु विवेक्तव्यं श्रीकृष्णस्य भक्ताः खलु द्विविधाः तटस्थाः लीलान्तःपातिनश्च तत्र तटस्थाः परोक्षस्यापि तस्य पारमैश्वर्यमालक्ष्य अदृविधासु तत्प्रतिमाश्रीकरतरां सेवमाना जानन्तो वा जानन्तो वा च ते ब्राह्मणाद्यास्ते चरणसेवा चरणोदकग्रहणादिनिजभक्तिषु परोक्षगतानुगान्ते लीलान्तःपातिनश्च द्विविधाः तत्र प्रथमास्तस्य पारमैश्वर्यमालक्ष्यमाना देवाद्यास्तेन पारमैश्वर्यमेव व्यवह्रियन्ते अथ पारमैश्वर्यानुभवेऽपि तस्य नरलीलामवलम्बमाना ब्राह्मणाद्या नराः पित्राद्याश्च नरलीला यथा स्वस्वमर्यादां व्यवहरन्तस्तेन नराः पित्राद्याश्च नरलीलाकृष्टचित्तानां ब्राह्मणीनां च तथा व्यवह्रियन्ते तस्मात् नरलीलाकृष्टचित्तानां ब्राह्मणीनां मासां स्वयोग्यमेव तत्परिचरणं कर्त्तुं तत्सङ्गं प्राप्तुमिच्छूनां सम्यगुपेक्षा युक्तैवेति ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तव निगमम् "प्रियोहि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" "न मे भक्तः प्रणश्यति" इत्यादि वचनम् ॥ २९ ॥

प्रपद्योः पादाग्रयोः ॥ ३०—३१ ॥

नृणामङ्गसङ्गः शरीरयोगः न प्रीतये न वैषयिकसुखाय अपि तु मदनुरागाय जन्मनः फलं मद्भक्तिरित्यर्थः । नृणां चेतनानां मदङ्गसङ्गस्तदात्विकरागाय न तु कालान्तरप्रीतये विश्लेषस्तु कालान्तरेऽपि प्रीतिवर्धक इत्यभिप्रायः ॥ ३२—३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वमनोरथानुगुणोक्तिश्रवणाभिनिर्विण्णा आहुः पद्यः-मैवमिति। हे विभो ! भवानेवं तथात वेनयजनम् इत्येवं नृशंसं परुषं वचो वक्तुं नार्हति किन्तु यो निगमः "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" "न मे भक्तः प्रणश्यति" इत्यादिवचनरूपस्तं सत्यं कुरुष्व नित्यमितिपाठेऽपि स एवार्थः सन्तु समस्तबन्धूननिलङ्घ्य पदाग्रस्पृष्टतवश्रयापि दत्तामिति भावः तत्तुलसिदाम केशैर्वहमानेन वोढुं प्राप्ताः दासीभवितुं प्राप्ताः इति भावः ॥ २९ ॥

किञ्चाखिलाङ्कितबन्धूनस्मान् पत्यादय एव परिगृह्णन्ति कुतोऽपरे गृह्णीयुः तस्मात् हे अरिन्दम ! भवतः प्रपद्योः पादाग्रयोः पतिताः आत्मानो देहा यासां ताः पतिताः समर्पिता आत्मानः प्रत्यगात्मानः याभिस्तासां वा नोऽस्माकं नान्या गतिरस्मत्समीहितोपायोऽन्यो नास्त्यतः त्वमेव तदस्मदभिमतं विधेहि यद्वा अन्या गतिः स्वर्गादिरपि माभूत्किन्तु त्वदङ्घ्रिस्पर्शेन त्वद्दासीत्वमेवास्माकं सम्पादय ॥ ३० ॥

एवमुक्तो भगवान् तावद्युक्तं पत्यादयः कोऽपि नास्मान् गृह्णन्तीति तत्रोत्तरमाह । पतय इति—वो युष्मान् पत्यादयोऽन्ये लोकाः जनाः किमुत मयोपेता मत्प्रभूतयो देवाश्च नाभ्यसूयेरन् न दोषदृष्ट्या द्रक्ष्यन्ति किन्त्वनुमन्यते ऽनुमोदन्ते ॥ ३१ ॥

यदुक्तं तद्विधेहीति तत्रोत्तरमाह—नेति । इह लोके नृणामङ्गसङ्गः देहयोगः न प्रीतये न वैषयिकसुखायापितु मदनुरागाय जन्मनः फलं मद्भक्तिरेवेत्यर्थः । यद्वा नृणां चेतनानामङ्गसङ्गस्तात्कालिकरागाय न तु कालान्तरप्रीतये विश्लेषस्तु कालान्तरेऽपि प्रीतिवर्धक इत्यभिप्रायः तस्मात्परोक्षमपि मयि मनो युञ्जाना अचिरादेव मामवाप्स्यथ संसृतिबन्धान्मुक्ताः नित्यं मद्दास्यं करिष्यथेति भावः । स्मरणादिना यथा मयि भावः तथा सन्निकर्षेण न इति ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वातेति नृशंसं परुषं गदितुं निगमं "न मे भक्तः प्रणश्यति" इति वचनं सत्यं कुरु पदाग्रस्पृष्टं श्रीपादच्युतं तेन दत्तं वा तुलसीदाम श्रीतुलसीमालां केशैर्नितरां वोढुं पादमूलं प्राप्ताः ॥ २९ ॥

कालक्षेपात् द्विजातय अस्माञ्च गृह्णन्तीति सूचितम् । तत्र तत्सहायाभावात् पुनर्गमने ते नैव गृह्णन्तीत्याहुः—गृह्णन्तीति । ततः शरणं विधेहि कुरु ॥ ३० ॥

कुत एव चान्य इत्यत्राह । लोकाश्चेति ॥ ३१ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव पादमूलं प्राप्ता इत्यत्राङ्गसङ्गः सूचितस्तत्राह—नेति । इह नृणामङ्गसङ्गो मम प्रीतये न भवति ममानुरागाय च न स्यात् तस्मान्मयि मनो युञ्जानाः यूयं क्षिप्रं मामवाप्स्यथेत्यन्वयः अनेनाहं भक्त्यैव तुष्टो भवामि नान्येनेति सूचितम् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मया उपेता अनुध्याना वा वो युष्मान् अहमीश्वर इति तैरपि ज्ञातत्वादिति भावः । यथा यज्ञकर्मणि तैः प्रत्यक्षीकृता देवा अपि अनुमन्यते पूर्वाः सन्तो मामीश्वरत्वेन मन्यन्त इत्यर्थः ॥ ३१ ॥

ननु, तर्ह्यङ्गसङ्गोऽपि भवतु तत्राह—महो ब्राह्मणजन्मनि भवतीनां मयाऽङ्गसङ्गो नृणां प्रीतये सुखाय न भवति अनुरागाय तु सुतरां नेत्यर्थः ॥ ३२ ॥ ३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पत्न्यस्तु सर्वपरित्यागेन समागताः कृतसाक्षात्काराः पुनः पूर्वावस्थां प्राप्तुमयुक्तेति सञ्चिन्त्य गमनाभावं प्रार्थयन्ति, मैवमिति । गृहगमनं त्वनुचितमेवाकर्त्तव्यञ्च तथापीश्वरवाक्यात् कर्त्तव्यं चेत् तथा कर्त्तव्यतायां वाञ्छाशित्वेन महद्भय-माशङ्क्य विज्ञापयन्ति विभो, हे समर्थ ! सर्वप्रकारेणापि सर्वं कर्त्तुं समर्थ ! एवं गदितुं भवान् नार्हति अनर्हे हेतुमाह–नृशं-समिति । इदं हि क्रूरं वाक्यं स्वरूपतः फलतोऽर्थतश्च आदौ पुष्टि-मार्गप्रवर्त्तनार्थं भगवानवतीर्णः कथं मर्यादां स्थापयति—नापीयं मर्यादात्यागानन्तरं पुनर्ग्रहणविधानात् यद्यपि स्त्रीणां त्यागो नोक्तः तथापि स्वरूपतीर्णा उचितः स्त्रीणामर्थं एवानन्दस्य प्रकटितत्वात् अतोऽन्यदा फलरूपानन्दाभावात् भोग्यत्वेन तासा-मन्यगामित्वात्तदपत्यादयोगोऽनुचितो भवतु नाम प्रकृते तु तद्वैपरीत्यात् तस्यैव भोगपर्यवसानात् उचित एव त्यागः तथा सति पुनः परिग्रहः क्रूरो भवति, किञ्च दयाभावाच्च संसारदवानलाग्निर्गतं पुनस्तत्र प्रवेशयतीति । अथ यदि तेनैव प्रकारेण पुरुषार्थसिद्धिः तथापि न प्रेषणीयाः यतस्त्वं सर्व-समर्थः अत्रैव तथा प्रकारं सम्पाद्य स्वयं तद्रूपो भूत्वा क्वचित् तिष्ठ अस्मान् वा अन्यथा प्रदर्शय आत्मनि वा प्रवेशय वृक्षादि-भावं वा प्रापय अदृश्यावा कुरु एवं सर्वोपायेषु विद्यमानेषु स एव कुतः क्रियते ? सिद्धत्वादिति चेत् तत्राहुः–सत्यं कुरुष्व निगममिति । निगमो वेदः त्यागेन पुनर्ग्रहणमिति "तस्मा-न्न्यासमेषां तपसामतिरिक्तमाहुः„ "न च पुनरावर्त्तते„ इति "मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते" एवमनेकविधो निगमो ऽसत्यो भवेत् यदि त्यागानन्तरं त्वयैव चेत् ग्राहितः स्यात् अतः स्वनिगमं सत्यं कुरुष्व । ननु, मामुपेत्येति वाक्यात् न भवतीनां परावृत्तौ दोषः भिन्नतया तिष्ठन्तीति चेत् तत्राहुः–तव पादमूलं प्राप्ता वयमिति । प्राणिनस्त्वेतावद्दूरे स्थापयतः यत्तव चरणयो मूलं प्रेमरजः छायाचित्ते तदवलम्बिनी स्थितिर्वा अधोभाग इति सेवानिवेशो वा एवं कृते शिष्टं त्वयैव कर्त्तव्यं तत्वधः पातनीयम् । ननु, स्त्रियो भवत्यः कामयुक्ताः तथा सत्यनुचितं लोकशास्त्राचार-विरुद्धं कथमहङ्कुर्याम् अतो व्याघुट्य गमनमेवोचितमिति चेत् तत्राहुः तुलसिदामपदावसृष्टं केशैर्निवोढुमिति न वयमनुचित-कर्माभिलाषिणः किन्तु सम्पूर्णं दिनं सेवां विधाय स्वामिनो निद्रासमये निद्रिते वा पादसम्वाहने क्रियमाणे पादयोः समर्पितं तुलसिदामप्रसादत्वेन त्वया दत्तम् अस्पर्शे वा दूरादुत्सृष्टं परमपुरुषार्थत्वेन प्राप्य महाप्रसादरूपं केशैः केशसम्बन्धिभिः वेणवापीडादिभिः नितरां वोढुं तव पादमूलं सम्प्राप्ता इति सम्बन्धः नन्वेतावदेव चेत्तत्रैव तुलसिदामप्रेषयिष्यामि तत्राहुः अतिलङ्घ्य समस्तबन्धूनिति सर्वे बान्धवाः पतिपुत्रादयः त्यक्ताः अनस्ताद्विरोधादपि न तत्र स्थितिः सम्भवति ॥ २९ ॥

किञ्च तेषामुपकारार्थं गन्तव्यमिति यदुक्तन्तदपि न सम्भवतीति आहुः—गृह्णन्तीति । ते परिग्रहमेव न करिष्यन्ति तद्वाक्योल्लङ्घनेनागतत्वात् भर्त्तुरग्रहणे पितुर्गृहे स्थातव्यमित्यपि पत्यो निराक्रियते पितराविति सुता वा भिन्नतया अन्नं दास्य-न्तीति बान्धवा वा स्वमध्ये स्थापयिष्यन्तीति सुहृदो मित्राणि वा उपकरिष्यन्तीति प्रत्यक्षं वधूसाहसस्य कृतत्वात् अन्ये सुतरामेव न ग्रहीष्यन्ति अथ यदि जातिपरित्यागेन यत्र क्वचित् स्थातव्यं तर्ह्यत्रैव स्थातव्यमत्र स्थितानां स्वर्गो न भविष्यतीति चेत् मास्तु इत्याहुः अथत्प्रपदयोः पतितात्मनां नान्या गतिर्भवेदिति पादाग्रे पतितानां पादगतिरेव गतिः यथोपानहः प्रपदपतितवस्त्राणां वा तथा अस्माकमपि अन्या स्वर्गादिगतिर्मा भवतु भर्त्तृभिः सहिताः अतः पादगतिमेव विधेहि दास्यो भूत्वा त्वत्सङ्गं सर्वत्र पर्यटनं भर्त्रादिभयं तु तत्र नास्त्येव तदाहुः हे अरिन्दम शत्रुनाशक तद्गमनमेव विधेहि आज्ञापय ॥ ३० ॥

एवं प्रार्थनायां बाधकाद्येवं वदन्तीति सद्यः सञ्जातबाधकं प्रति समाधत्ते–पतय इति । त्यागाग्रहणसम्भावनैव नास्ति अभ्य-सूयामपि न करिष्यन्ति पित्रादयोपि पूर्वपूर्वोपाधिरहिताः न हि पितुः कामोस्ति नहि भ्रातुर्लोभोस्ति किञ्च लोकाः सर्वं एव न दोषारोपं करिष्यन्ति तत्र हेतुः मयोपेताः भवतीः देवा अनुमन्यते सम्माननं करिष्यन्ति आशास्त्रे अयुक्तं हि सर्वेषामसम्मतिः तत्वात्मनि कस्याप्यसम्मतिः अन्यथा स्वस्यैव स्वार्थगमनेपि त्यागः स्यात् ॥ ३१ ॥

नन्वेवं सति लोकवेदविरोधाभावात् सङ्गोप्यस्त्विति चेत् तत्राह—न प्रीतय इति । इहास्मिन्नवसरे अङ्गसङ्गः नृणां प्रीतये न भवति अङ्गेन सङ्गः आत्मनैव सङ्गः उचितः मनसा वा तत्सङ्गेन अङ्गयोरिति न वक्तव्यं बाधितत्वात् अतो लोक-विरुद्धत्वान्न कर्त्तव्यं किञ्च एतद्भिभक्त्यर्थमेव कर्त्तव्यं यथा-धिकः स्नेहो भविष्यतीति तदपि न भविष्यतीति अनुरागा-येति भवतीनामप्येतदनुरागाय न भविष्यति नृणामप्येतदङ्गाद्वै किञ्च सङ्गः परं प्रतिबन्धकः सायुज्ये अतो मय्येव मनो युञ्जानाः अचिरात् शीघ्रमेव मामवाप्स्यथ अनेनान्या गतिरपि निवारिता ऋजुमार्गेण सिद्धतोऽर्थस्य वक्रेण साधनमयुक्तम् इत्येव युक्तम् ॥ ३२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

रासारम्भे महाप्रेमवत्यो गोप्य इवाहुः मैवमिति। नृशंसं परुषं निगमं "न च पुनरावर्त्तते" इति वेदवाक्यं "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति निगमरूपं स्ववाक्यं च सत्यं कुरुष्व ननु, भवतीभिर्विप्रजात्यभिमानो दुस्त्यजस्तत्राहुः—तव गोपस्यापि पादमूलं वयं दास्यार्थं प्राप्ताः न हि विप्रजात्यभिमाने सत्यवं कोऽपि जनो वक्तुं शक्नोत्यतोऽस्मद्वाक्यंनैव निश्चीयतां नास्त्यस्माकं जात्यभिमान इति भावः। ननु, गोपस्य मम गोप्य एव दास्यः प्रेयस्यश्च समुचिता भवन्ति ताश्च बह्वयो वर्त्तन्ते तं मां सत्यं वर्त्तन्तां विराजन्तां नाम यदि त्वं ब्राह्मणीर्दासीः कर्त्तुं वन्धुभ्यो जिहेषि तर्हि कथं त्वाङ्गोपथामस्त्वत्पुरं नैव यामो वृन्दावन एव वनदेवता इव वर्तिष्यामहे त्वत्सम्बन्धेनैव कृतार्थी भविष्यावो वयमित्याहुः—वयं तु दूरे स्थितवा पदाम्बुजं त्वत्पदात् त्वदाश्लिष्टप्रेयसीनां पदसंसर्गाद्वा त्रुटितीभूय भवत्सृष्टं पर्यङ्काधोविसृष्टं तुलसिदाम त्वद्दासीभिरेव कृपया दत्तं केशैर्निवोढुं प्राप्ताः नतु तव प्रेयसीभावाय दासीभावाय वा दुर्लभावाकमाकमाकाङ्क्षेति भावः। ननु, तर्हि भवद्वन्धवः किं वदिष्यन्ति? तत्राहुः मतिवङ्ग्येति ॥ २९ ॥

किञ्च, त्वन्नगरस्थमाखिकनाम्बूलिकादिवनिताजनमुखादाकर्णितत्वद्रूपगुणमाधुर्य्याय यदवधि वयं वयःसन्धिमारभ्यैवाभूम तद्दिनत एव त्वयि भावनवतीगृहकर्मस्वप्युदासीना अस्मान् व्यभिचारिणीव दृष्ट्वा मन्दिहानाः पत्यादयो नैव व्यवहरन्तीत्याहुः—गृह्णन्तीति। सुताः सपत्नीपुत्रा अन्ये प्रतिवेश्यादयः ततश्चातिवैयग्र्यात् रुदत्यः पदाग्रे मूर्द्ध्ना प्रणमन्त्यः सगद्गदमाहुः—तस्मादिति अस्माकम् अन्या गतिर्यथा न भवेत्तथा विधेहि। हे अरिन्दम! त्वत्प्राप्तिप्रतिवन्धकीभूता दुरितादय एवारयस्तान् त्वमेव कृपया दमय ॥ ३० ॥

मयि प्रेमवत्यो यूयं मत्सुखपरा एवातो मदनभिप्रेतं चेष्टितुं नार्हथ स्वहठं माकुर्द्धं गृहान् गच्छतेत्युक्ते भो अभिज्ञशिरोमणे! असूर्य्यंपश्याः कुलवत्यो वयं वचनोल्लङ्घनात् यास्तूष्णीकृत्य पुरादूर्ध्वीभूय एतावद्दूरे स्थितस्य लम्पटस्वन व्रजे ख्यातस्य भवतः समीपमागच्छामः स्म पुनस्तत्रैव गच्छन्तीरस्मांस्ते पत्यादयः पुरेषु प्रवेष्टुमप्यददानाः कोपादेव वधिष्यन्त्येवेति जानीमस्तत्राह—पतय इति। वो युष्मभ्यं नाभ्यसूयेरन् वाग्दृष्टिमपि न कुर्य्युः किमित्यनिष्टं शङ्कध्वे इति भावः। किमुत पित्रादयः अन्ये च लोकाः कीदृशीर्मया सह उपेताः सङ्गता अपि किमुत सम्यक्त्यसङ्गता एवेत्यर्थः। अहमीश्वर इति तैरपि ज्ञातत्वादिति भावः। यतो देवा अपि यज्ञकर्मणि तैः प्रत्यक्षीकृता अत्रार्थे पृष्टा भवतीरनुमन्यते अनुमंस्यन्ते एव मां सर्वेश्वरं विदुषां देवानामप्यत्रार्थे अनुमतिरेव नत्वननुमतिरित्यर्थः ॥ ३१ ॥

अस्मिन्मनो वाञ्छितं कदापि सेत्स्यति न वेति साश्रैरपाङ्गैरपृच्छथ तत्रोत्तरं शृणुतेत्याह—नेति। प्रीतये प्राप्तिं सम्पादयितुं अनुरागं च सम्वर्द्धयितुमित्यर्थः। किन्तु मद्विरहोत्कण्ठ्यमेवानुरागातिशयवर्द्धकमिति भावः। तत्तस्मात् ॥ ३२ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे विभो! यातेनि नृशंसं परुषं गदितुं भवान्नार्हति किन्तु "मां प्राप्य न निवर्त्तन्ते" इति ""न च पुनरावर्त्तते" इति वा निगमं सत्यंकुरुष्ववयन्तु भवत्पादन्धूनतिकृत्य पदाम्बुजंतुलसीदाम तुष्म्णीगाजां केशैर्निवोढुं प्राप्ताः नित्यं संनिहिता भवितुमागता इति भावः ॥ २९ ॥

किञ्च, त्वत्समीपमागन्तुमुद्यताभिरनिलङ्घिताः पत्यादयो नोऽस्माञ्च गृह्णन्ति अतः कुतो गृह्णीयुः तस्मात्त्वत्पदयोः पतिता आत्मानो देहा यासां तासां नोऽस्माकमन्या स्वर्गादिरूपा गतिरपि न भवेत्माभूत् अतस्त्वद्दास्यमेव त्वदभिरुचितया विधेहि ॥ ३० ॥

मयोपेता अनुप्राप्ताः ये पत्यादयः अन्ये लोकाश्च किं बहुना देवाः ब्रह्मशिवादयोऽपि नाभ्यसूयेरन् दोषारोपं न कुर्वन्ति किन्त्वनुमन्यन्ते अनुमोदन्त इत्यर्थः ॥ ३१ ॥

तत्र गत्वा च देहादिष्वासक्तिर्न कर्त्तव्या किन्तु मम ध्यानमेवेत्युपदिशति—नेति। नृणामङ्गसङ्गः अङ्गं शरीरं तत्सङ्गः तत्प्राप्तिः प्रीतये देहगेहादिक्षुद्रसुखाय न भवति किन्तु मयि अनुरागाय तत्तस्मान्मयि मनो युञ्जानाः अचिरात् मामवाप्स्यथ ॥ ३२ ॥

---

### भाषा टीका।

#### पत्न्य ऊचुः।

विप्रपत्नी बोली, कि—हे महाराज! आप ऐसो कठोर वचन कहिबे को योग्य नहीं हो (न मे भक्तः प्रणश्यति) मेरे भक्त को नाश नहीं होय है, न स पुनरावर्त्तते) मोकूं प्राप्त होय के फिर नहीं लौटे है, ये जो आप को वचन है ताकूं सत्य करो, हम तो आप के श्रीचरणन ते उतरी जो तुलसी की माला ताकूं बड़े आदर ते माथे पें धारण करबे को समस्त बन्धुन को त्यागि के तिहारे चरणन में आई हैं ॥ २९ ॥

अब हम गृह जाय के कहा करेगी? हमारे पति, माता, पिता, पुत्र, भैया, बन्धु, और सुहृद, कोई हमको अङ्गीकार नहीं करेंगे सौफिर और न की बातें कहा है, तासों हे तिरो धीन के नाश करनवारे! आप के चरणन में परे है शरीर जिन के ऐसे हमन को आप को छांड और गति न होय सो विधान करो ॥ ३० ॥

#### श्रीभगवानुवाच।

श्रीभगवान् बोले, कि—तुमारे पति तुमको दोष नहीं लगावेंगे और पिता भ्राता पुत्र इत्यादिक तथा और लोग भी दोष नहीं लगावेंगे क्योंकि? मोसुं आदि लेके देवता भी तुमारो अनुमोदन करें हैं तब मनुष्यन की कहा बात है ॥ ३१ ॥

और या संसार में अङ्ग को सङ्ग जो है सो प्रीति और अनुराग के नाईं नहीं है, तासों तुम मोमें मन लगाय के थोरेई काल में मोकूं प्राप्त होउगी ॥ ३२ ॥

---

*(श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्त्तनात् ।
न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ ० ॥)

श्रीशुक उवाच ।

इत्युक्ता मुनिपत्न्यस्ता यज्ञवाटं पुनर्गताः ।
ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥ ३३ ॥
तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम् ।
हृदोपगुह्य विजहौ देहं कर्माऽनुबन्धनम् ॥ ३४ ॥
भगवानपि गोविन्दस्तेनैवान्नेन गोपकान् ।
चतुर्विधेनाशयित्वा स्वयं च बुभुजे प्रभुः ॥ ३५ ॥
एवं लीलानरवपुर्नृलोकमनुशीलयन् ।
रेमे गोगोपगोपीनां रमयन् रूपवाक्कृतैः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनसूयवः अदोषदृष्टयः ॥ ३३ ॥

देहमिति तदीयं देहं तत्र विहाय चैतन्येन भगवन्तं प्रापेत्यर्थः ॥ ३४ ॥ ३५ ॥

अनुशीलयन्ननुकुर्वन् गोगोपगोपीनामिति कर्मणि षष्ठी रूपवाक्कृतैः रूपेण वाचा कृतैश्चरित्रैश्च रमयन् ता रमयितुं रेमे इत्यर्थः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ताभिः श्रीभगवदनुगृहीताभिः इति सत्रस्य श्रीभगवदुपेक्षया दोषः परिहृतः स्वादृगुणयांश्चेशपश्चाभिप्रेतः स्वाभिरिति पाठे निजाभिजाभिः ॥ ३३ ॥

अचिरान्मामवाप्स्यथेत्युक्तं तच्च केवलं नाश्वासनायैव किन्तु वाढमङ्गीकारायेति दृष्टान्तेनाह—तत्रेति । तत्र यज्ञवाटे एका सर्वासामिति पश्चात् स्थिता विशेषेण बाधाकृता भगवन्तमिति सर्वातिशयगुणरूपादिकं सूचितं यथाश्रुतमिति तत्रापि श्रीकृष्णरूपत्वं हृदा प्रेममयसङ्कल्पसिद्धेन देहान्तरेणोपगुह्य भयाच्चैतया सङ्कोचपरित्यागेन शरणागतां मां रक्षतेति गृहीत्वेत्यर्थः । तस्य च देहस्य भगवत्प्रेममयत्वेन भगवत्सम्बन्धिसिद्धेस्तदनुगामित्वात् सिद्धत्वमपि ततः कर्मानुबन्धनमेवेदं देहं विजहाविति सपिण्डोस्केनेतु नराभिकृतमाधनं प्रेमानुबन्धनमपीत्यर्थः । विशब्दः पुनरावृत्तिं निषेधयति-अतः पतिसम्बन्धिनं देहं पत्य एव दत्त्वा श्रीभगवत्सेवालिङ्गेन देहेन तं प्रापेति विवक्षितम् "यं यं वापि स्मरन् भावम्" इत्यादेः "ये यथा मां प्रपद्यन्ते" इत्यादेश्च श्रीगीतातः । प्राप्तिश्चेयं गोलोकाख्यं गोकुलस्यैव प्रकाशविशेषे श्रिया पूतनामोक्षे निरूपितत्वात् अग्रे च निरूपयितव्यत्वाच्चेति ॥ ३४ ॥

इत्थं तासां भक्तिविशेषो व्यञ्जितः तासु श्रीभगवदनुग्रहविशेषं चाह-भगवानिति । तत्रैवं वृत्तं जातं श्रीभगवानप्येवमकरोदित्यपिशब्दार्थः गोविन्दः श्रीगोकुलेन्द्र इति गोपपालने युक्तता तेनैवेति गोपापेक्षया अल्पत्वात्पल्पत्वं बोध्यते तथापि पूर्त्तौ हेतुर्भगवान् सर्वसम्पत्त्याश्रयः गोपकानिति तदनुकम्पितत्वं बोधयति तेषु श्रीरामोऽपि गृहीतः तेष्वित्थं तस्मिन्नपि तदाग्रहसम्भवात् यतः प्रभुरलङ्घ्येच्छ इत्यर्थः । स्वयं च तत्र प्रति परिवेष्य स्वयमपीति तासु तादृशप्रसादे श्रीमुनीन्द्रस्य चमत्कारः अत्राप्ययं हेतुः प्रभुः निरर्गलानुग्रह इत्यर्थः ॥ ३५ ॥

एतच्च यज्ञपत्न्यनुग्रहादिकं तस्याखिलचेष्टितं सौन्दर्यादिकं च श्रीव्रजजनप्रमोदनायैवेत्युपसंहरति—एवमिति । अनेनेदृशबहुलीलान्तरमप्यस्तीति सूचितं लीलामयनराकारवपुः मनुशीलयन् अनुशिक्षयन् मनुष्यलोके निजभक्तिं प्रवर्त्तयन् इत्यर्थः । यद्वा, नृलोकं तद्व्यवहारम् अनुशीलयन् सदाचरन्नित्यर्थः ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विधृताः अवरोधिताः ॥ ३४—३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवतोक्तास्ता द्विजपत्न्यो यज्ञवाटं पुनर्जग्मुस्ततः ते द्विजाः अनसूयव एव ताभिः सह सत्रम् अपारयन् समापितवन्तः ॥ ३३ ॥

तत्र द्विजपत्नीनां मध्ये काचिद्भर्त्रा विधृता निवारिता सती यथाश्रुतं भगवन्तं हृदोपगूह्य संश्लिष्य कर्मानुबन्धनं कर्मायत्तं स्वदेहं तत्याज ॥ ३४ ॥

अथ भगवांस्तेनैव द्विजपत्नीसमर्पितेनैव अन्नेन गोपकान् भोजयित्वा तच्चतुर्विधमन्नं स्वयमपि बुभुजे ॥ ३५ ॥

* श्लोकोऽयमधिको दृश्यते वीर० वैष्ण० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लीलया न तु कर्मणा नरस्येव वपुर्यस्य सः भगवानित्थं रूपादिभिः कृतानि चेष्टितानि तैश्च नृलोकमनुशीलयन् अनुकुर्वन् गोगोपगोपीनाम् इति कर्मणि षष्ठी गवादीन् रमयन् स्वयमपि रेमे । यद्वा- नृलोकमनुशीलयन्ननुरञ्जयंश्च गोगोपगोपीनां मध्ये रेमे ॥३६॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतिशब्दो हेतौ ॥ ३३ ॥

विधृता पृथक्कृता त्यक्तेत्यर्थः "विनिषेधे पृथग्भावे" इति यादवः कर्मानुबन्धनं कर्मानुगम् ॥ ३४—३५ ॥

वाग्भिः कृतैः कर्मभिश्च गोगोपगोपीनां मनांसि रमयन् ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथाश्रुतं तादृशमेव तं प्रापेत्यर्थः । तच्चाप्रकटलीलायामेवेति ज्ञेयम् ॥ ३४—३६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवतः अनुल्लङ्घ्य वाक्यं तथैव कृतवन्त इत्याह इत्युक्ता इति अयं यज्ञः प्राथमिक इति सर्वत्रद्विजग्रहणं अत एवाग्रे जन्म त्रयं वक्ष्यन्ति समाप्तिपर्यन्तं तु द्विजत्वमेव ननु दीक्षितविमितादन्यत्र गमने यज्ञनाशश्रवणात् कथं प्रवासः "गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात्प्रसवेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तत् यानि दीक्षितव्रतानि तापस्या इति श्रुतेः कथं यज्ञपूर्त्तिरिति चेत् सत्यं मुख्या न गता नापि तेषामपि स्वर्गप्राप्तिः किन्तु पदप्राप्तिरेव अग्रे तेषामपि भक्तत्वेन निरूपणात् संस्कारा एते फलोपकारिणः न तु यज्ञोपकारिणः विवदमान आर्त्विज्यं वर्जीय इति न्यायेनापि न तासां मुख्यत्वं कर्मसमयेऽपि ता आगता एवेत्याह यज्ञवाटं पुनर्गता इति भगवदुक्तं तथैव जातमित्याह तेवेति अनसूयव एव ताभिरेव पत्नीभिः स्वसत्रम् अपारयन् समाप्तं कृतवन्तः ॥ ३३ ॥

मुख्यानुगतेत्याह-तत्रैकेति । तासु मध्ये एका धृता स्वभर्त्रा यजमानेन ततोऽनर्थ एव जात इत्याह यथाश्रुतं भगवन्तं हृदा उपगुह्य देहं विजहाविति त्यागे हेतुः कर्मानुबन्धनामिति । कर्म अनुबन्धनं यस्मात् अपकारित्वात् त्यागः आत्मनः अधिकारार्थमेतत् परिग्रहः उपकारस्त्वेतावानेव सा चान्यथैव सिद्धः भगवानेवोपगूढः इति भगवदालिङ्गिताया न स्थानान्तरं मृग्यते तच्छक्तिनामिव यदैव पुनः कर्मसम्बन्ध आत्मनः तदैव तेन बध्यत इति कर्मार्थं न तत्र गन्तव्यमवरस्तु कर्मणा इति तस्मात् त्याग एव श्रेयः यत्र इदानीं समारूढ इति कर्माधीनत्वाभावात् न कर्मभोगो वक्तव्यः गोपिकानामिव देवतारूपायाः पत्न्याः अधिष्ठानात् कालकर्मस्वभावानिवृत्ता भगवानालिङ्गित इति भगवन्तमपि मतस्तद्रूपा मुक्तिः सिद्धा ॥ ३४ ॥



तस्यामन्तः समागतायां (तां) बालकांश्च भोजितवानित्याह, भगवानपीति । यद्यप्यन्यथापि सर्वसामर्थ्यमस्ति आज्ञयापि क्षुन्निवर्त्तयितुं शक्या तथापि गवां सर्वस्यापि धर्मस्यापीन्द्र इति धर्मरक्षार्थं भक्तिरक्षार्थं स्ववाक्यरक्षार्थं च तेनैवान्नेन भक्ष्यादिचतुर्विधेन सम्पूर्णरसात्मकेन गोपकान् भाशयित्वा भोजयित्वा स्वयं च बुभुजे चकारात् बलभद्रोऽपि स्वस्य भोजनं पूर्ववत् इदानीं पत्न्याभुक्तमतो च इति वचनं न विरुध्यते नन्वेतदपूर्वं कथं कृतवान् ? तत्राह-प्रभुरिति ॥ ३५ ॥

वैदिके ज्ञानकर्मणी निरूप्य उपसंहरति-एवमिति । लीलार्थमेव नरवपुः नृलोकं सर्वमेव लौकिकं वैदिकम् अनुशीलयन् स्वधर्मं योजयन् उभयविधानपि भगवच्छास्त्रानुसारिणः कुर्वन् गोगोपगोपीनां मध्ये रेमे सम्बन्धी वा भूत्वा द्वितीयार्थे वा षष्ठी ता रमयन् स्वयमपि रेमे रूपेण गाः वचनेन गोपान् कृतैर्गोपीः सर्वत्र सर्वे वा सच्चिदानन्दाः त्रयो निरूपिताः रमणकरणरूपाः स्वस्य रमणे त्रयोऽपि सम्बन्धिनः ॥ ३६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इत्युक्तास्ताः कृष्णस्याभिप्रायं ज्ञात्वैव गताः रासारम्भे गोप्यस्तु तदभिप्रायं ज्ञात्वैव स्थिता इति प्रेमिणां न क्वापि क्वापि हानिरिति ज्ञेयम् ॥ ३३ ॥

तत्र यज्ञवाटे एका सर्वासामपि पश्चात् स्थिता अत एव विशेषेण बलात् धृता कर्मानुबन्धनमेव देहं जहौ नतु प्रेमानुबन्धनं देहं तदानीमेव महाविरहोत्कण्ठ्यप्रवृद्धमनोरथेनोन्मादितं भगवता स्फूर्तिप्राप्तेनोपगूहितं च तस्मात्तेन देहेन चिन्मयेन सर्वजनालक्षितेन युक्ता सती सा शीघ्रमेव ततः स्थानादभिसृत्य श्रीभगवन्तं प्रापेति कर्मानुबन्धनमिति पदस्य वैयर्थ्यादेवं व्याख्यातम् । किञ्च, ममतास्पदान् पत्यादींस्त्यक्त्वेति किं चित्रम् अहन्तास्पदं देहमपि त्यक्त्वा काचित्स्वं प्रियं कृष्णमभिससारेति प्रेम्णः प्रभावज्ञापनार्थं भगवत्कृपा सामकामभिसारसमये कर्मानुबन्धं देहं त्याजयित्वैव प्रेमानुबन्धं चिन्मयदेहं प्रापयामास तदन्यासां सर्वासां तु कर्मानुबन्धानेव देहान् स्पर्शमणिन्यायेन प्रेमानुबन्धांश्चिन्मयानेव चकारेति तद्दिनतस्तासां न स्वस्व पश्चाच्छेष इति किमशक्यं भगवत्कृपायाः तस्यामेकांशेनोत्कर्षस्तदन्यास्वप्यन्येनांशेनोत्कर्ष इति तासां तारतम्यं तु भक्तिशास्त्रेष्वनिर्णीतत्वान्न शक्यते वक्तुं सर्वासामेव तासां भगवत्कृपासिद्धमेव यदुक्तं "कृपासिद्धा यज्ञपत्नीवैरोचनिशुकादयः" इति ॥ ३४ ॥

भगवानपीत्यपिकारात् सा देहं जहौ भगवानपि गोविन्दः तस्या गाः सर्वेन्द्रियाणि रमणार्थमवाक्षितं सदेव विन्दति रमेत्यर्थो व्याख्येयः । ततश्च तेनैवैतद्यपकारेण गोपापेक्षया अन्यस्या उत्स्वं बोधितं प्रभुरिति तदपि तेनैव सर्वपाकृष्टरागिणी पूरयामासेत्यर्थः । गोपकानितिअनुकम्पायां कन् चकारेण स्वयं भोक्तुमनिच्छन्नपि बुभुजे इति अयं तत्र अनिच्छा च प्रेमवतीनां तासां स्वकृतेन सङ्कल्पभङ्गेन पश्चात्तापोदयात् ॥ ३५ ॥

एवं याज्ञिकपत्नीर्न रमयामास गोपपत्नीस्तु रमयामासेत्याह, एवमिति लीलामयनरवपुरिति सर्वाङ्गेऽपि सत्यसङ्कल्पतादि-

अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः ।
यद्विश्वेश्वरयोर्याच्ञामहन्म नृविडम्बयोः ॥ ३७ ॥
दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम् ।
आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥ ३८ ॥
धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम् ।
धिक्कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३९ ॥
नूनं भगवतो माया योगिनामपि मोहिनी ।
यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शक्तिभ्यो लीलाशक्तेरभ्यर्हितत्वाद्ब्राह्मणीजनरमणे लीलासौष्ठवाभाव एव हेतुरिति भावः । अनुशीलयन् अनुसरन् गोगोपगोपानामात कर्मणिषष्ठी वत्सलागोपीनामप्रासङ्गिकत्वादसामयिकत्वाच्च गोप्योऽत्र युवतय एव लभ्यन्ते रूपेण वाचा कृतैश्चेष्टितैश्च रमयन् रेमे इति रासात्पूर्वं व्रजदेवीभिः सह न रमणमिति मतं परास्तमित्येवं विधा बह्व्योऽन्या अपि व्रजलीला-मयानुक्ता वर्तन्ते इति भावः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्सन्निकर्षोऽस्माकं भवतु किं गृहैरित्यत्र साधनभूमौ मत्प्राप्तिसाधनं भक्तिः कर्तव्या सा तु स्मरणादिना भवतीत्याह—स्मरणादिति ॥०॥

अनसूयवः अदोषदृष्टयः ३३ ॥

कर्मानुबन्धनं देहं विजहौ पाञ्चभौतिकं देहं विहाय भगवन्तं प्राप्तेत्यर्थः ॥ ३४ ॥ ३५ ॥

लीलास्वपि मनरवपुः अचिंत्यानन्तानन्दस्वाभाविकविग्रहः नृलोक मनुशीलयन् अनुकुर्वन् रूपवाक्कृतः रूपेण वाचा कृतैश्चरितैश्च गवादीन् रमयन् स्वयं रेमे कर्मणिषष्ठी ॥ ३६ ॥

---

### भाषा टीका ।

जैसो कछु स्मरणतें दर्शनतें ध्यानतें और कीर्त्तनतें मो में भाव उत्पन्न होय है, तैसो समीप रहेते नहीं होय हैं, तासों अब तुम अपने घरनकूं जाओ ॥ ० ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—श्रीकृष्णनें ऐसें जब यज्ञ पत्नीन तें कही तब वे मुनिपत्नी फिर यज्ञशाला कूं जात भईं, और ब्राह्मण भी उन अपनी पत्नीन के सहित यज्ञ पूरण करत भये ॥ ३३ ॥

तहां एक ब्राह्मण नें अपनी पत्नी रोकी तब वाने जैसो श्रीकृष्णको रूप कानन तें सुनो हो, तैसो ध्यान करिकें हृदय में आलिङ्गन करिकें कर्म के बन्धन वारे देहकों छांड दीनो ॥ ३४ ॥

भगवान् श्रीगोविन्दभी वाई चतुर्विध अन्नतें गोपनकों भोजन करायकें प्रभु स्वयं आपहू भोजन करत भये ॥ ३५ ॥

ऐसे लीलासों मनुष्यरूप धरिकें लोगन सदृश आचरण करिकें गौ गोप गोपीन कूं रूप वाणी और चरित्रन सूं रमावत आप हू रमण करत भये ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुस्मृतिप्रकारमाह—नरानुकरणवतोर्विश्वेश्वरयोर्याच्ञां यद्धन्म हतवन्तस्तत्कृतागसो वयमित्यनुस्स्मृत्येति ॥ ३७ ॥

तदा च भार्याः गुरूनिव मानयन्तो भगवद्भक्तिरहितमात्मानं व्यनिन्दन्नित्याह—दृष्ट्वेति । अलौकिकीं लोकातीताम् ॥ ३८ ॥

त्रिवृत् शौक्लं सावित्रं दैक्षमिति त्रिगुणितं जन्म व्रतं ब्रह्मचर्यम् क्रियाः कर्माणि दाक्ष्यं च क्रियादाक्ष्यमित्येकं वा पदम् धिगित्यधिक्षेपे ये वयं त्वधोक्षजे विमुखास्तेषां जन्मादि तत्सर्वं धिगिति व्यगर्हयन्नित्यर्थः ॥ ३९ ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पतयो नाभ्यसूयेरन्नित्यादिना लब्धतादृशभगवत्प्रसादानां पत्नीनां सङ्गप्रभावेन तत्पतीनामपि सद्बुद्धिर्जातेति तासां माहात्म्यमेव दर्शयितुमाह—अथेत्यादिना यावत्समाप्ति । अथ तत्प्रघट्टकानन्तरं ते दुरभिमानग्रस्ता अपि अन्वतप्यन् । ननु, विश्वेश्वरयोर्याच्ञा कथं सम्भवेत्तत्राहुः नृविडम्बयोर्लौकिकलीलां विस्तारयतोरित्यर्थः । यद्वा, नृन् अस्मान् तद्भक्तिहीनान् विडम्बयत उपहसत इति तयोस्तयोः अस्मद्भाग्यप्रयोगस्तदानीमपि दुरभिमानगन्धानुवृत्तेर्लज्जातो वा ॥ ३७ ॥

भगवति साक्षात्परमेश्वरे तत्रापि श्रीकृष्णे निजाशेषैश्वर्यप्रकटनेन सर्वचित्ताकर्षके न केवलमन्वतप्यन् किन्त्वनुतप्ताः सन्तो विशेषेण निजाशेषाभिमानत्यागादिना अगर्हयन्नित्यर्थः अलौकिकीं लोकद्वयापेक्षात्यागात् कृष्णप्राप्त्या सद्यो देहत्यागाच्च ॥ ३८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ये अधोक्षजे प्रत्यावृत्तौ प्रादुर्भावेनि परमात्मन्यपि विमुखा-स्तेषां जन्मादीनि धिगिति शौक्लस्य जन्मनः " किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा"इति न्यायेन तद्भक्तौ उपयुक्ततमत्वेऽप्यनुयोजनात् सावित्रस्य तदभिधायित्वेन गायत्र्यध्ययनात् गायत्र्यास्तत्परत्वं च तदर्थविस्तररूपस्य श्रीमद्भागवतस्य तत्परत्वात् तदुक्तं गायत्रीं भगवत्परत्वेन व्याख्याय अग्निपुराणेऽपि "यत्राधिकृत्य गायत्रीं कीर्त्यते धर्मविस्तरः,,इत्यादि दैक्षस्यापि —

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते॥ "

इति तत्त्वाज्ञानात् एवं व्रतादीनामपि कुलं वंशपरम्परां अहो कष्टं मायामोहितानामयमेवेत्याहुः नूनमिति निश्चितं योगिनां कर्माष्टाङ्गज्ञानयोगनिष्ठानामपि इत्यात्मनो योगित्वाभिमानात् यद्वा योगिनामपि किमुत कर्मिणामस्माकमिति नृणां योगत्रयजिज्ञासूनां सर्वेषामपीत्यर्थः । तदुक्तं तानुद्दिश्य श्रीशुकेन "बालिशा वृद्धमानिनः"इति गुरवः श्रेष्ठा अपीत्यर्थः "वर्णानां ब्राह्मणो गुरुः" इति न्यायात् उपदेष्टारोपीति वा मुह्याम मोहं प्राप्नुम हे द्विजा इत्यनुतापेनान्योन्यं सम्बोधयन्ते यद्वा द्विजा वयं मुह्यामहे इत्यात्मनेपदमार्षम् ॥ ३६—४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अहन्म वितथीकृतवन्तः ॥ ३७ ॥ ३८ ॥

कुलं कुलपुरुषान् ॥ ३९ ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । अथ विप्राः अनुस्मृत्य भगवान् यज्ञपत्नीनां इति श्रुतत्वा-दनुस्मृत्येत्यर्थः । कृतागसो हेतुगर्भमिदं तत्त्वादन्यतत्पत्न् किं तदागः यतोऽन्वतप्यंस्तत्राह— यद्यस्मान्मर्त्यमनुकुर्वतोर्विश्वेश्वरयोर्याञ्चा-महद् वयमज्ञाः ततः कृतागसः अहन्मेति यत्तदेवागः इति वा ॥ ३७ ॥

तथा मायामानयन्तो भगवद्भक्तिरहितमात्मानं व्यनिन्दन्नित्याह-दृष्ट्वेति । अलौकिकीम् अनितरजनसाधारणीं तया कृष्णभक्त्या हीनं रहितम् ॥ ३८ ॥

गर्हाप्रकारमेवाहुः-धिगिति । नोऽस्माकं जन्म धिक् 'उभसर्वतोः कार्या धिक्'इत्यादिवचनेन शेषषष्ठ्यपवादकत्वेन जन्मादीनां द्वितीया धिक्शब्दो निन्दार्थोतकः । अस्माकं जन्मादयो निन्द्याः इत्यर्थः क्रियाः यज्ञादिरूपाः दाक्ष्यं तदनुष्ठानसामर्थ्यं तत्र हेतुं वदन्तो विशिंषन्ति ये वयमधोक्षजे विमुखाः त्रिवृदिति पाठे जन्मनो विशेषणं शौक्लं सावित्रं दैक्षमिति त्रिगुणीकृतं जन्मेत्यर्थः । नस्तु धिक् वृद्धिमिति पाठे स्पष्टोर्थः व्रतं ब्रह्मचर्यम् ॥ ३९ ॥

भगवन्मायातरणहेतुस्तद्भक्तिरेव नतूक्तजन्मादयः इत्यभिप्रायेणाहुः-नूनमिति द्वाभ्याम् । नूनं मायिनामपि मोहिनी यद्यस्माद्वयं द्विजा अपि उक्तजन्मादिमन्तोऽपि तत्रापि नृणां गुरवोऽपि स्वार्थे स्वहिते विषये मुह्यामहे भगवन्मायया मोहिता एवेत्यर्थः ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेते विप्राः समीचीनाः ? उतासमीचीनाः ? नाद्यः अनुभवादर्शनात् न द्वितीयः कृष्णपरायणानां स्त्रीणां पाणिग्रहणसम्बन्धदर्शनात् अथ कथं निर्णय इति राज्ञो मानसीं शङ्कां परिहरति-अथेति । ते विप्रा अथ मङ्गलाः कुतोऽन्वतप्यन् यतः कृतागसः कृतापराधत्वात् अपराधसञ्ज्ञाने किं प्रमाणमिति तत्राह-अनुस्मृत्येति अनुस्मरणं प्रमाणमित्यर्थः । कोऽसावपराधः ? इति तत्राह यदिति अहनन् हिंसितवन्तः तिरस्कृतवन्त इति यावत् इत्यर्थः । नृविडम्बयोः मनुष्यमनुकुर्वतोः ॥३७॥

तेषामनुतापः कथमभूदिति तत्राह दृष्ट्वेति ॥ ३८ ॥

किमाकारोऽसाविति तत्राह—धिगिति । नो जन्मादिकं धिक् कुत्सितं "धिग्भर्त्सने कुत्सने" इति च ॥ ३९ ॥

शास्त्रज्ञानमप्रयोजकं प्राप्ते काले फलाभावादतो भगवदनुग्रह एव शरणमित्याशयेनाहुः-नूनमिति । मायिनां ज्ञानिमपि अत्र हेतुमाह यद्वयमिति गुरवो द्विजातय इत्येतद्द्वयं मोहासम्भवे हेतुः ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवं तस्य सर्वमपि श्रीगोकुलसौख्यायैवेत्याह—पत्नीमिति । अथेति । पतयो नाध्यसूयेरन्नित्यादिना लब्धभगवत्प्रसादेनानुस्मरणं ज्ञेयम् ॥ ३७—५२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कर्मणी निरूप्य द्विविधे तयोः फलं भक्तिं निरूपयति, अथेति । एका हि भगवतः कृतिरनेककार्यसाधिका तेषां द्विजानां प्रबोधनं बालशिक्षार्थं पत्न्या गुरुत्वं तेषां प्रबोधनार्थं मर्यादास्थापनाद्यर्थं च अतो वाक्येन प्रबोधितानां द्विजानां वाक्यान्याह—भक्तिबोधकानि—

पश्चात्तापो विगर्हा च हेतुस्तस्य च रूप्यते ।
तथात्मने चापि हेतुर्हि स्वहीनत्वं च कर्मभिः ॥
संस्काराणामहेतुत्वं भक्तेरन्यच्च साधनम् ।
स्वस्मभक्तेर्बाधनं हेतुरन्यथा नोपपद्यते ॥
तथात्वसाधनं तस्य कर्मैवस्वेष्टबाधनम् ।
द्वाभ्यां रूपद्वयोरेव स्त्रीसम्बन्धात् कृतार्थता ।
समापनं नमस्कारैः प्रार्थनाभिर्निरूप्यते ॥
अनागमनमिच्छातो भक्त्यैवेत्थं मतिर्भवेत् ।

प्रथतोऽनुतापमाह—अथानुस्मृत्येति । भगवदीयानां वाक्यं स्मृत्वा तन्मूलभूतं भगवद्वाक्यं तदुक्तारादनुस्मृत्य कर्मजडतां विहाय भक्त्यनुसारिणो भूत्वा विप्राः पश्चादेव जायमानज्ञानाः कृतागसो भूत्वा पत्नीनिरोधेन निषेधेनायाच्यकथनेन भक्तमारणेन जाताऽपराधाः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनुतापं कृतवन्तः सर्वापराधापेक्षयेश्वरवाक्योल्लङ्घनं महान् दोष इति तं निरूपयन्ति—यद्विश्वेश्वरयोरिति । विश्वेश्वरयोरिति द्विवचनं कालपुरुषोत्तमपरं शब्दब्रह्मपरं वा याञ्ञायाखद्वारा मोक्षनविषयिणी वस्तुतो भगवतैवाज्ञाभङ्गः कारितः प्रथमतो भक्तकृपया तथोक्त्वापि बलिवाक्यात् परम्परयापि दूर्गीकृतवान्—

"न पुमान् मामुपव्रज्य भूयो याचितुमर्हति" इति ।

"ब्राह्मणानामयं धर्मः स्नेहाच्चापि न याच्यते" ॥

भिक्षारूपेण सा याञ्चा याच्यते न तु लौकिकी ।

"न्यासमूलो प्रयच्छ मे" तथापि याचेतघ्नः प्रयच्छेति तत्तन्निवेदयेत् इत्यादिवाक्यानि न विरुद्धानि भवन्ति नवा तेषामयुक्तं वा किञ्चिद्गृहीतम् नन्विमौ याचकौ कथमीश्वरौ तत्राहुः—नृविडम्बयोरिति । नृणां विडम्बः विडम्बनं याञ्चां केवलं मनुष्यरसमभिनयन प्रदर्शयतः ॥ ३७ ॥

एवं स्वस्यापराधित्वं निरूपितं तस्य दण्डं कुर्वन्तः स्वगर्हां कुर्वन्ति दृष्ट्वेति स्त्रीणां कृष्णे अलौकिकीं भक्तिं दृष्ट्वा तया हीनमात्मानं व्यगर्हयन् पुष्टिभक्तेरेवैव स्थितिः भगवान् षड्गुणैश्वर्योऽपि कृष्णः सदानन्द एव जातः धर्मोपसर्जनत्वेन धर्म्येव जातः फलरूपत्वात् स्त्रीणां तत्र भक्तिः पुरुषार्थास्तु धर्मपराः अतस्तया रहिताः नत्वभयमाह—स्त्रीणां कृष्णे भक्तिरिति । दोषाभावायाह—अलौकिकीमिति । तारतम्यपरिज्ञानपदार्थयाथात्म्यभक्तिभावाभावौ च यो जानाति स भक्तः अत एव ताद्विधा इति निन्द्यैषा स्तुतिरेव न केवलं ज्ञानं तेषां बाधकमुत्पन्नं किन्तु क्रियापि तदाह—अनुतप्ता इति ॥ ३८ ॥

ननु, कथमात्मविगर्हा आत्मनि सत्पदार्थानां विद्यमानत्वात् अन्यथा तद्विरोधे तेषामनिष्टमेव स्यात् इत्याशङ्क्य स्वस्मिन् विद्यमानानां बीजाभावादसत्वमिति ख्यापयन्ति—धिग्जन्मेति । धिक्कारे हन्ततामित्यर्थे प्राणे गते शरीरं हन्यत एव तथा जन्मादीनां प्राणभूता भक्तिः तदभावे हाह एवोचितः त्रिवृज्जन्म शुक्लसावित्रयाज्ञिकरूपं विद्यामपि धिक् सापि त्रिवृद्विद्या वेदत्रयसहिता व्रतं न देयमित्यादि तदपि धिक् बहुज्ञातमिति धर्मसूक्ष्मपरिज्ञाने ये बहुज्ञाः ते लोकविरुद्धमपि कुर्वन्ति तथैतत्कृतं तां च बहुज्ञतां धिक् अथ कुलीना इति वंशे कलङ्कसम्बन्ध इति स्त्रीणां निवार्यं तत्कुलमपि धिक् क्रियादक्षतामपि कुर्वन्ति धिक् यया भगवत्यवहेला भवति अन्यथापि पुरुषार्थं साधयिष्यामः अशक्तपरैव हि भक्तिरिति "यथान्धपङ्ग्वादयः" क्रियायामसमर्था अन्यत्र युज्यन्ते तथा भक्तावपीति एवं यत्किञ्चिदाद्यं तदपि धिक् तत्र बीजाभावं हेतुमाह—ये वयमधोक्षजे विमुखाः नन्वेतदेव कथं यज्ञोऽपि भगवानेव अतो यज्ञपराः कथं भगवद्विमुखा इतीमं पक्षं तुशब्दो व्यावर्त्तयति—तत्र हेतुः अधोक्षज इति । अधः अक्षजं यस्मादिति ज्ञानेष्वात्मसाक्षात्कारः कर्मणि च क्रियारूपे अलौकिके च रूपे ज्ञानवतां भक्तौ तु न साक्षात्कारः फलं जायमानमप्यङ्गतामापद्यते केवलरसभक्षकाः इक्षुभक्षकेभ्योऽपि सरसाः अत एतादृशो मार्गो भगवता प्रकटित इति रूपान्तरपुरस्सरं ये पक्षाः ते सर्वेऽपि पूर्वपक्षाः ॥ ३९ ॥

ननु, वैमुख्ये ज्ञानवतां को हेतुस्तत्राह—नूनं भगवत इति । मायया हि पूर्वस्थितं ज्ञानादिकमाच्छाद्यते अतो ये शिक्षाः प्राकृताः तेषां तत् ज्ञानमाच्छाद्य नूतनमुत्पादनीयमन्यथा पूर्वविरोधान्नोत्पद्यते ज्ञानम् अतो गुरवः सर्व एव मायाविनः तद्गत्र विपरीतं भगवन्मायया कृतं ते स्वमायया स्वबुद्धिमेवाच्छादितवन्तः प्राकृतीं च बुद्धिं गृहीतवन्तः तदाह । नूनं निश्चयेन भगवतो माया मायिनामपि व्यामोहजनिका यद्वयं लोकानां गुरवः प्राकृतीं बुद्धिमाच्छाद्य स्वबुद्धिदातारस्ते स्वबुद्धिमेवाच्छाद्य प्राकृतीं बुद्धिमेव गृहीतवन्तः भगवन्मायायाश्चैतत्कार्यं प्राकृत्यामेव बुद्धौ तथा त्वमाच्छाद्यातथात्वं ग्राह्यते इति अन्यथा भगवान् भगवच्छास्त्र वा किं ग्राहयेत् भक्तिं वा कथं ग्राहयेत् ज्ञानेन प्रतिरोधात् सहजं प्राकृतं भक्तिनाशयितुमसमर्थासूक्ष्मा हि सा अतो गुरु मायया आच्छादिते अलौकिके च ज्ञाने सम्पन्ने तस्मिन्नपि ज्ञाने लब्धपदे भगवन्मायया पश्चादाच्छादिते आगतं प्राकृतत्वममूलकमिति भगवच्छास्त्रेण भक्त्या वा तन्निराकृत्य स्वकार्यं तत्र स्थाप्यत इति भगवन्माया मायिनां व्यामोहिकेति नूनं नात्र पूर्वपक्षसम्भवः द्विजा इति सम्बोधनमस्य यज्ञस्याधिदैविकवैमुख्यंनासम्पन्नत्वात् ॥ ४० ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथानुस्मृत्येति तेषामनुस्मरणानिर्वेदादिकं तासां दर्शनभाग्यादिति ज्ञेयम् । तेषामनुतापप्रकारमाह—यद्यस्माद्विश्वेश्वरयोरपि याञ्ञामहन्म हतवन्तो वयं तस्मात् कृतागसोऽभूम कीदृशयोः नृन् अस्मान् विडम्बेते इति तयोः अन्नप्रार्थनेनैवास्मान् वञ्चितवतोरित्यर्थः ॥ ३७ ॥

ततश्च स्वभार्या अपि गुरूनिव मानयन्तो भक्तिरहितमात्मानं ऽपनिन्दन्नित्याह—दृष्ट्वेतिमलौकिकीं लोकेष्वसम्भवाम् ॥ ३८ ॥

त्रिवृत् शौक्लं सावित्रं दैक्षमिति त्रिगुणितं जन्मनो ऽस्माकं यत्तत् धिक् व्रतं ब्रह्मचर्यं क्रियाः नित्यनैमित्तकादिकर्माणि ये वयमधोक्षजे श्रीकृष्णे तु विमुखा एव ॥ ३९ ॥

योगिनामष्टाङ्गयोगवतामपि किं पुनरस्माकं कर्मणां गुरवः परेषां नृणामर्थोपदेष्टारोऽपि स्वार्थे मायया मुह्यामहे ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नृविडम्बयोः क्षुधार्दितत्वादिनाम्द्वन् अनुकुर्वतोः विश्वस्य सर्वेश्वरयोः याञ्चाम अहन्म हतवन्तः इत्यनुस्मृत्य अथानन्तरं कृतागसो वयमित्यन्वतप्यन् ॥ ३७ ॥ ३८ ॥

आत्मगर्हामेवाविष्कुर्वन्त आहुः—धिगिति । ये अधोक्षजे विमुखास्तेषां नोऽस्माकं शौक्लं सावित्रं दैक्ष्यमित्येवं त्रिवृत त्रिगणितमपि यज्जन्म तत् धिक् व्रतादिकं तच्च धिक् ॥ ३९ ॥ ४० ॥

---

### भाषा टीका ।

ताके पीछे अपराध जिनने करो ऐसे ब्राह्मण अपने अपराध कूं स्मरण करके अनुताप करत भये, क्योंकि !

अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ ।
दुरन्तभावं योऽविध्यन्मृत्युपाशान् गृहाभिधान् ॥ ४१ ॥
नासां द्विजातिसंस्कारो न निवासो गुरावपि ।
न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥ ४२ ॥
अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे ।
भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ४३ ॥
ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया ।
अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥ ४४ ॥

### भाषा टीका ।

मनुष्य की नाईं आचरण करन वारे विश्व के ईश्वर श्री कृष्ण और बलदेवजी याचना जिन हमननें नही सुनी ॥ ३७ ॥

और भगवान श्रीकृष्णचन्द्र में अपनी स्त्रीन की अलौकिकी भक्ति को देखिकें और अपन कूं उनकी भक्तिसे हीन देखिकें बडे पछिताये और अपनपे कों धिक्कार देत भये ॥ ३८ ॥

शुद्ध माता पिता तें, सावित्री ग्रहण पूर्वक मौञ्जीबन्धन तें, औ यज्ञ की दीक्षालिये ते, जो तीन प्रकार को हमारो जन्म है ताकूं धिक्कार है हमारी विद्या कूं व्रत कूं और और अपने कुल कूं और क्रिया की कुशलता कूं धिक्कार है कि जो साक्षात् अधोक्षज श्रीकृष्ण सों हम विमुख रह-गये ॥ ३९ ॥

ये साचीबात है, कि—भगवान की माया योगी जनों को भी मोह करवे वारी हैं, क्योंकि? हम द्विजन्मा होय कें मनुष्यन के गुरु होय के भी अपने स्वार्थ में मोहित होये जावें हैं ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

योऽविध्यद् छिन्नवान् दुरन्तं भावं भक्तिं पश्यतेति ॥ ४१ ॥

द्विजातिसंस्कार उपनयनं क्रियाः सन्ध्योपासनादयः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो बत स्त्रीभ्योऽपि वयं निकृष्टा इति शोचन्ति—अहो इति त्रिभिः । अहो आश्चर्ये । ननु, स्त्रीणां पत्युरितरस्मिन् भावोऽनुचितः तत्राहुः जगद्गुरौ पतिभ्योऽप्यसौ परमापेक्ष्य इति भावः । दुरन्तं सर्वबाधकं भावं प्रेम अविध्यादिति अतीतनिर्देशः तासां सद्य एव गृहाद्यासक्त्यपगमाऽभिप्रायेण ॥ ४१ ॥

आश्चर्यत्वमेव व्यनक्ति—नासामिति युग्मकेन । द्विजातिसंस्कार उपनयनादिस्तत्संस्कारं तथा शौचं सामान्यधर्मः गुरुनिवासादयश्च क्रमेण ब्रह्मचारिवानप्रस्थयतिगृहधर्माः तत्र च शौचादेशेन क्रमातिक्रमः किञ्च गार्हस्थ्यधर्मस्य बहुमानेन पश्चात् निर्देशः । अत एव शुभा इत्युक्तिः अथापि तत्तद्रहितत्वेऽपि कृष्णे दृढा भक्तिरासां जाता तस्य माहात्म्येन तद्भक्तेरपि माहात्म्यं बोधयितुं तं विशिंषन्ति उत्तमश्लोके वैरिणामपि मोक्षादिदानात् परमसत्ख्यातिमिति योगानामीश्वराः भक्तियोगमन्तस्तेषामीश्वरे सेव्यत्वेन श्रेष्ठे भक्तिर्दृढा कृतविरोधैरस्माभिरपि परिच्छेत्तुमशक्या पुनराश्चर्यमेव व्यतिरेकेण दृढयन्ति, नचेति अत्र । द्विजातिसंस्कारादयः स्वयं भक्तेः कारणानि न भवन्त्येव तद्गुणकसत्सङ्गश्च्यासां तत्कारणतया नामाभिरनुमातुं शक्य इति श्रीशुकदेवाभिप्रायः ॥ ४२—४३ ॥

उत्तमश्लोकत्वमेव दर्शयन्ति । नूनं, निश्चितं "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इति न्यायेन तद्भक्तिं विना सर्वस्याप्यर्थस्यासिद्धेः स्वार्थे विमूढानामत्यन्ताज्ञानां यतो गृहेहया गृहकृत्येन प्रमत्तानामपहितानां नः अस्मान् स्मारयामास आत्मानं यतः सतां स्वस्वाधिकारप्राप्तवेदोक्तनत्पराणां गतिः यद्वा, सतां भक्तानां गतिरपि केवलकारुण्येनैवेत्यर्थः। यद्वा,सन्त एव तावत्परमश्रयाश्रयः स तु तेषामपि गतिराश्रय इति महाश्चर्यम् उत्तमश्लोकत्वात् तेन बोधिता अपि वयमविवेकादबुद्धवन्त इति भावः ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दुरन्तभावं विद्धेवाऽसह भावबन्धनम् ॥ ४१ ॥

शौचम् स्वधर्मपर्याप्यादिभिः शुद्धिः ॥ ४२—४५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो नारीणामप्युक्तजन्मादिमध्ये केनापि रहितानामपीति भावः कृष्णे दुरन्तभावमनवधिकभक्तिं पश्यत यो दुरन्तभावः गृहाभिधान् मृत्युपाशान् भगवन्मायाप्रयुक्तानविध्यच्च आच्छिनत् तं दुरन्तभावं पश्यतेत्यन्वयः ॥ ४१ ॥

द्विजा अपि नारीणामपीतरेनाभिप्रेतं स्पष्टयन्ति—नेति द्वाभ्याम् । आसां नारीणां न द्विजातिसंस्कारः नोपनयनाख्यसंस्कारः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न च गुरुकुलवासः नापि तप आदयः आत्ममीमांसा देहविलक्षणप्रत्यगात्मविचारः क्रियाः सन्ध्योपासनादिरूपाः ॥ ४२ ॥

तथाप्येषामभावेपि कृष्णे दृढा भक्तिर्विद्यते द्विजातिसंस्कारादिमतामप्यस्माकं सा न विद्यते ॥ ४३ ॥

अस्माकं विवेकोदयार्थमेव भगवतो याच्ञाऽन्यथा सा कथमसमस्तकामस्यासङ्गतेत्याहुः-स इत्यादिभिस्त्रिभिः । गृहेहया गृहव्यापारेषु प्रमत्तानामत एव स्वहितेपि विमूढानामप्यस्माकमहो सतां गतिर्हेतुगमंमिदं सतां गतित्वाद्गोपवाक्यैःस्मारयामास साधुपरित्राणार्थमवतीर्णो निरतिशयपुरुषार्थस्वरूपमात्मानं याच्ञाव्याजेन स्मारयामासेत्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुरन्तभावम् अव्यवहितभक्तिं गृहाभिधानान्मृत्युपाशात् छिन्द्यात् छिनत्ति ॥ ४१ ॥

नासां स्त्रीणां द्विजातिसंस्कारः उपनयनलक्षणः गुरौ गुरुकुलनिवासो विद्याध्ययनार्थमिति शेषः। आत्ममीमांसा ब्रह्मविचारः शौचं बाह्याऽभ्यन्तरशुद्धिः शुभाः क्रियाः यागादिलक्षणाः ॥ ४२ ॥ ४३ ॥ ४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वस्य यज्ञस्य मुख्यफलाभावेप्युत्तरमीमांसान्यायेन चित्तशुद्धिपरत्वं भवतु अनधिकाराऽनुचित इति चेत्तत्राहुः—नासामिति—संस्काराणामहेतुत्वमन्वयव्यतिरेकव्यभिचारात् संस्काररहितासु स्त्रीषु भक्तिसम्भवात् संस्कारवत्स्वस्मासु तदभावात् तदाहुः नासां स्त्रीणां द्विजातिसंस्कारः उपनयनं नास्ति नापि गुरौ निवासो वेदाध्ययनं तपः स्वधर्मः श्रौतस्मार्तकर्माणि इन्द्रियनिग्रहो वा स्नानादिना क्लेशसहनं वा नात्मात्ममीमांसा आत्मविचारः नापि शौचं नापि शुभाः क्रियाः अग्निहोत्रादयः ॥ ४२ ॥

एवं भक्तचशिकरणे साधनाभावं निरूप्य भक्तिमाहुः—अथापीति । नन्वस्या भक्तेः संस्कारा न साधनभूताः यथा जार इति इमामाशङ्कां व्यावर्तयन्ति—उत्तमश्लोक इति । उत्तमैरपि व्यासवाल्मीकिपराशरादिभिः श्लोक्यते कीर्त्यते इत्यनेन प्रमाणोत्कर्ष उक्तः । प्रमेयोत्कर्षमाह—कृष्ण इति । फलोत्कर्षोप्युक्तः साधनोत्कर्षमाह—योगेश्वरेश्वर इति । योगेश्वराणामपीश्वरे नियन्तरि सार्वांपि भक्तिर्दृढा पत्यादिभिः प्रतिबद्धापि नविहतेति तैलधारावदनवच्छिन्नासर्वतोऽधिका।अन्वयव्यभिचारमाह—नचास्माकमिति। अग्रचत्वारिंशत्संस्कारवतामपि । ननु, तासां जन्मान्तरे संस्काराः सिद्धाः चर्येषेव एताः अन्यथा भर्तृपरित्यागो न स्यात् अतः पुनरा एवैते पूर्वजन्मनि गोपिका इव भवतां च—

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते" ॥

इति ॥ ४३ ॥

अतो भवतां बहुजन्मसंस्कारा न जाता इत्याशङ्क्याश्चर्यं तस्य समाधानमाहुः—नन्विति । कोमलस्वबोधनेन तु सत्यमेनमेव स्वार्थे विमूढानां गृहेहया प्रमत्तानां नो ऽस्माकं गोपवाक्यैः पूर्वोक्तरीत्या स्मारयामास वयमपि भगवदीया एव पूर्वस्थिता ततो दैवावेशात् दैत्यप्रभुदेशे स्थित्वा तैः पाल्यमानाः तद्धर्मोक्तिनो विस्मृतस्वरूपा जाताः तच्च भगवान् गोपवाक्यमिषेण स्मारयामास अन्यथा अस्माकं किं भगवान् याचते अस्मांश्च पुनः स्वकीयान् जानाति अहो अत्याश्चर्यमेतत् कथं वाक्यमात्रेण प्रबोध इति अलौकिकसामर्थ्यं हि भगवतः अहो इति तस्याऽनुकरणम् अनेन पूर्वोक्तपक्षा निराकृताः स्त्रियोऽप्येताः स्वस्यैव भगवतो दास्यः वयं च दासाः नात्र सन्देहः अन्यथा प्राकृतकुतर्कं वद्यन्ति स्वार्थे भगवत्सेवायां विमूढा गृहेहया इनिकुलचिन्ता गृहधर्माश्च तत्रापि प्रमत्ताः तच्चिन्तया भगवत्सेवायां वा प्रमत्ताः अतः स्वसेवकान् स्मारितवान् साक्षादुपदेशेऽनधिकारित्वं मत्वा गोपवाक्यैः तथा करणे हेतुः सतां गतिरिति. सतामयमेव गतिरिति यद्येवं भगवानुपेक्षेत तदा सन्तो नष्टा एव भवेयुः ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यासां पतिश्वशुरादिरूपेण वयं गुरवस्ता इमाः कृतार्था अभूवन् वयम् अन्धकूपे पतिता एवेत्याहुः—अहो इति । दुर्गमोऽस्माभिरनुभवितुमशक्योऽत इयत्ता यस्य तथाभूतं भावं ह्या प्राणरमण! कृष्णेत्यादिगद्गदाक्षरवचनकम्पाश्रुपुलकवैवर्ण्यानुभावक्षापितं कृष्णे प्रेमाणं पश्यत । ननु, स्त्रीणां पत्युरितरस्मिन् भावोऽनुचितस्तत्राह, जगद्गुरौ यदारोपाद्येव पत्यौ स्त्रीणां गुरुत्वं विहितं साक्षात्कृते तस्मिन् खलु को विचार इति भावः यो भावः मृत्युपाशान् भविष्यत सद्यश्छिन्द्यात् गृहाभिधानानिति गृहपत्यपत्यादिष्व सामासक्तिगन्धोपि सम्प्रति न दृश्यत इत्यर्थः अप्येता एवास्माकं गुरव इति पतिभिरप्यवधारऽप्य कृष्णानुरागिण्य इमा आदरणीया एव न तु मनसा भार्याः एव मन्तव्या इति भावः ॥ ४१ ॥

नत्वासां कृष्णानुरागे हेतुरस्मद्कृत्य इत्याहुः—नासामिति । योगेश्वरे इति स एव स्वभक्तेहेतुं जानात्युपपादयति च नान्य इति भावः । तेन कृष्णरूपगुणप्रख्यापिस्रजस्य मालिकादिवनिताजनसत्सङ्गरूपो मूलहेतुस्तैरज्ञातत्वान्नोक्त इति शुकदेवाभिप्रायः ॥ ४२—४३ ॥

क्व भगवतः कारुण्यं क्व चाऽस्माकं दौरात्म्यमित्याहुः नन्विति ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योऽविद्यत अच्छिनत तं दुरन्तमपारं भावं भक्तिं पश्यत ॥४१॥ क्रिया सन्ध्योपासनाद्यः ॥ ४२—४५ ॥

### भाषा टीका

अहो ! बड़ो आश्चर्य है, स्त्रियन की हूं जगत के गुरु श्रीकृष्ण में कैसी भक्ति भई है, कि—जो भक्ति ये घर रूप मृत्यु की फांसीन कूं काटि देय है ॥ ४१ ॥

अन्यथा पूर्णकामस्य कैवल्याद्याशिषाम्पतेः ।
ईशितव्यैः किमस्माभिरीशस्यैतद्विडम्बनम् ॥ ४५ ॥
हित्वाऽन्यान् भजते यं श्रीः पादस्पर्शाशया सकृत् ।
आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ॥ ४६ ॥
देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः ।
देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥ ४७ ॥
स एष भगवान् साक्षाद्विष्णुर्योगेश्वरेश्वरः ।
जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे ॥ ४८ ॥

भाषा टीका।

इन स्त्रीन को यज्ञोपवीत नहीं होय है, न ये गुरुकुल में वास करें, न तप करें, न ब्रह्म विचार करें, न इनकों शुद्धि, न इनकी शुभक्रिया ॥ ४२ ॥

तथापि योगेश्वरन के ईश्वर उत्तमश्लोक श्रीकृष्ण में ऐसी सुन्दर दृढ भक्ति है, और हम सबन के संस्कारादिक भी भये हैं तौ हूं भक्ति नहीं भई ॥ ४३ ॥

अहो ? पछितायवेई की बात है, संतन की गति श्रीकृष्ण ने निश्चय करिके स्वार्थ में मूढ और घरन की धांय २ में उन्मत्त होय रहे जो हम तिनकूं गोपन के वाक्यन सों स्मरण करायो हो ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

आत्मनो दोषापवर्गेण चाञ्चल्यगर्वादित्यागेन ॥ ४६ ॥ ४७ ॥ इत्यशृण्म एवं सर्वत्र श्रुतवन्तो वयं हि तथापीति ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु, गोपवाक्यैरस्मभ्यमेवास्माभिर्याचत न च स्मारयामास तत्राहुः—अन्यथा अनुग्रहमयात्मस्मारणमन्तरेण। ननु, पूर्णकामत्वेन तस्यान्ने प्रयोजनं मास्तु क्षुधार्त्तगोपार्थनिमित्तं युज्यत एव तत्राहुः—कैवल्येति। कैवल्यं मोक्षः प्रेम वा फलान्तराण्यस्मदन्धन शुद्धभावरूपत्वात् तदादीनाम् आशिषाम् अर्थानां पतेः परशुरीश्वरस्य तत्तत् प्रदाने समर्थस्येत्यर्थः। ईशितव्यैः नियम्यैः किञ्चित् कर्त्तुमल्पशक्तैः किं न किञ्चिदपि प्रयोजनमित्यर्थः। किन्त्वीशस्यापि एतत् विडम्बनं दयागाम्भीर्यानुकरणमेव भवतीति ॥ ४५ ॥

ननु, यद्यसौ स्मारयामास तर्हि भवन्तः कथं न सस्मरु तत्राहुः—हित्वेति। अन्यान् हित्वेति क्षीरोदमथनान्ते तस्यानवमिथ्याविर्भूतायाः स्वयम्वरलीलानुकरणदृष्ट्या प्रक्रमः सकृत् भजते सेवते स्म स्वं स्वयमेवात्मना यस्यास्तस्यास्तदंशाभासभूताया जगल्लक्ष्म्या ये दोषास्तदस्पर्शेनेत्यर्थः। एवं कथमपि तद्याच्ञा न घटेतैवेति बोधितं तथापि तस्य याच्ञाजनानामस्मद्विधानां सर्वेषामेव जीवानां मोहिनी मायमीश्वर इति मोहमुत्पादयतीत्यर्थः ॥ ४६ ॥

अतोऽपि मोहं दर्शयन्ति—देश इति, युग्मकेन। स एव साक्षात् भगवान् श्रीनारायणः तस्य देशादिमयत्वे हेतुः विष्णुः सर्वव्यापक इति तस्य च सर्वैरेवोपास्यत्वमाहुः—योगेश्वराणां मुक्तानामपीश्वरः अतो यज्ञादिना अस्माकमपि स एव सेव्य इति भावः। यद्वा, स एव साक्षाद्भूत एव भग एव भगवान् सर्वैश्वर्यपूर्णः तत्रापि यशैश्वर्यप्रकटनेन विश्वव्यापकत्वाद्विष्णुः अतो योगेश्वराणामपीश्वरः सेव्य इत्यर्थः। यद्वा, किमर्थं जातस्तत्राहुः—योगेश्वराः सुसिद्धभक्तियोगाः तेषामीश्वरः निजभक्तसुखार्थमित्यर्थः। हिशब्देन तत्र शास्त्रादिप्रमाणं सूचयन्ति—तच्च प्रसिद्धमेव भक्तानां विनोदार्थमित्यादिवचनेभ्यः मूढाः शास्त्रार्थानभिज्ञाः आभ्यां वाक्याभ्यां यथा पूर्वमस्माभिर्निरूपितं तथा तैरपि विचारितमिति श्रीशुकदेवाभिप्रायः ॥ ४७—४९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

आत्मदोषोऽपवर्गेण चञ्चलरूपस्वदोषप्रहाणेन स्थिरतरेत्यर्थः ॥ ४६—५० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्यथा कैवल्यादीत्यादिशब्दो भोगमोक्षसंग्राहकः कैवल्यादिपुरुषार्थप्रदस्येश्वरस्य सर्वनियन्तुरीशितव्यैरस्माभिः किं न किञ्चित् प्रयोजनमित्यर्थः। अत एव तद्याचनं विडम्बनमनुकरणमात्रं तात्पर्यं त्वस्मदनुजिघृक्षायामिति भावः ॥ ४५ ॥

पूर्णकामत्वमेव व्यञ्जयितुमाहुः—हित्वेति। श्रीमहालक्ष्मीः अन्यान् ब्रह्मादीन् हित्वा यं कृष्णं सकृदपि पादस्पर्शेच्छया स्वात्मदोषापवर्गेण चञ्चलस्वरूपस्वदोषप्रहाणेन भजते एवं श्रियाप्यनुवर्णस्य पूर्णकामत्वं किमु वक्तव्यमिति भावः। अतस्तस्यैवम्भूतस्य याच्ञा केवलं जनमोहनी जनानामभ्युपायवतारणामानन्दमहिमाच्छादनी सुतावतारणामप्यस्माकन्तु तत्स्मारिणीति भावः ॥ ४६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुतावतारवाणामप्यस्माकं तावद्भिर्मोहिन्येवाभूत् किमुताश्रुतावतारवाणामित्यभिप्रायेणाहुः-देश इति द्वाभ्याम् । देवादयो यन्मया स एव भगवान् साक्षाद्यदुषु जातोऽवतीर्ण इति श्रुत्वापि तावन्न विद्महे न ज्ञातवन्तःस्मः ॥ ४७ ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यथा स्मारयितृत्वेनाऽपि तर्हि लीलया किमर्थं कृतमिति तत्राह—ईशस्येति ॥ ४५ ॥

स्वात्मदोषापवर्गेण अन्यत्र चञ्चलत्वादिस्वकीयदोषपरित्यागेन स्थैर्यस्वभावेनेत्यर्थः ॥ ४६—५१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतत्सर्वं याचनान्यथानुपपत्त्या कल्पते तत्रान्यथोपपत्तिं कल्पयित्वा परिहरन्ति-मत्यर्थेति । भगवतस्तु नापेक्षितं किञ्चित् नापि दुःखनिवृत्तिः तत्साधनं वा नापि सुखं तत्साधनं वा पूर्णकामत्वात् तस्य हि कामाः पूर्णा उत्पन्ना विषयैर्न पूर्यन्ते लौकिकवत् किन्तु पूर्णा एवाविर्भवन्ति अतो नित्यविषयास्ते तथा सति याऽन्नकामना भगवत्याविर्भूता सा अन्नसहितैवेति सिद्धेर्थे याचनमनुपपन्नं परमुद्दिश्यान्तरं चेत् तदा सिद्धमपि दूरीकृत्वा साधनान्तरं करोति असाधनं वा बोधयति तस्मात्स्वमत्प्रबोध एव याचनफलम् । किञ्च, कैवल्याद्याशिषां पतिर्भगवान् कैवल्यं केवलता सङ्घातनिवृत्त्या केवलस्थितिः मत्याप्तिरूपं तत्प्रथमं एवं ततः पूर्वं दुःखमेव अतः कैवल्ये प्राप्ते ततः स्वरूपेण भजनं तत आनन्दाविर्भावः ततो भगवति प्रवेशः भक्तिर्वा तदनन्तरं धर्मो भगवदीया भगवदाज्ञापनरूपाः अर्थाश्च तदीयाः कामाश्च एवं कैवल्याद्या या आशिषः तासां पतिरयं दाता नियामकः तथासति गोपानां क्षुधेव न स्यात् नापि तैः प्रार्थ्यत लोकानामपि कैवल्यादिदाता नहि तान् सङ्घाते स्थापयति येन क्षुत्स्यात् अतः क्षुधमप्युत्पाद्य विद्यमानेऽप्यन्ने तददत्वा बोधनार्थमेवात्र प्रेषितवान् । किञ्च, ईशितव्यैरस्माभिः किं स्यात् वयमीशितव्याः दासाः नहि दासान्नं भुज्यते हि तेभ्यो दीयते एव न हि महाराजस्य दिनमात्रव्ययस्यामपि कश्चिद्दासः सम्पादयितुं शक्तः नाप्यस्माभिस्तस्याग्रे कृत्यम् अत ईशस्य एतदनुकरणमात्रं न तु याचनम् अनुकरणं तु रसोत्पत्त्यर्थमिति निश्चयः नहि नटस्य योगिभावदर्शने किञ्चित् कृत्यमस्ति विनारसोत्पादनं तथा भगवद्याञ्चानुकरणमपि बोधनार्थमेव ॥ ४५ ॥

ननु, पूर्णोऽप्यवतारं कृत्वा लीलया नट इव लौकिकं रसमुत्पादयति अतोयाच्ञायुक्तेतिचेत् ? तत्राहुः—हित्वाऽन्यानिति । यदि याचनीयं लक्ष्मीरेव वक्तव्या किं भिक्षुकैः नच मन्तव्यं लक्ष्मीः कार्यान्तरव्यापृतेति या अन्यान् सर्वानेव हित्वा भक्तकृद्भजते तत्रापि पादस्पर्शे भाग्यमात्रं सा चेदाज्ञां प्राप्नुयात् कृतार्था भवेत् तां विहायान्ययाचनमन्याय्यमेव । ननु, लक्ष्म्याः चाञ्चल्यमस्त्यतस्तदा न स्थितेति चेत् ? तत्राहुः-आत्मदोषापवर्गेणेति । आत्मनो दोषश्चाञ्चल्यं तस्यापवर्गः निवृत्तिः पुनरुत्पत्तिरहिता एवमेव हि भगवत्सेवकानां धर्मः । ननु, लोकाः पूर्वमप्याहुः यद्यपि याचितो भगवतेति तथैदानीमपि भविष्यतीति चेत् तत्राहुः तद्याञ्चा जनमोहिनीति । जनानेव व्यामोहयतीति अन्यथा स्वस्मिन्नेव शरीरे त्रैलोक्यन्दर्शितं व्यर्थं स्यात् स्वस्यैव सिद्धत्वात् न याचनमिति स ज्ञापितः लोकास्तु व्यामोहिताः ॥ ४६ ॥

किञ्च देशादयः सर्वे तदात्मका एव तथा सति तत्र दानबुद्धिः मोहनव्यतिरेकेण न सम्भवेत् अत इदमपि याचनं मोहनार्थमेव "पुरुष एवेदं सर्वम्" इति श्रुत्यनुसारेण सर्वे पदार्थाः भगवदात्मिका इति ज्ञायन्ते तथापि यो मोहः स याच्ञैव ॥ ४७ ॥

ननु, स पुरुषः यदात्मकं जगत् तस्मिन्नप्यस्मिन्नज्ञानात् प्रदानमुचितमेवेत्याशङ्क्याहुः-स एवइति । स पुरुष एवायं भगवान् ततोऽप्यधिकः पुरुषोत्तमः । किञ्च, साक्षादयं यज्ञ गार्हिर्वैदिकी विष्णुः ब्राह्मणभोजनसङ्कल्पेऽपि योगेश्वराणामपीश्वरः स्वामी एतादृशो यदुषु जात इति श्रुत्वाप्यवन्तो वयं तथापि पूर्वसंस्कारलोपात् विशेषमौढ्यात् भगवन्तं न विद्महे ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अन्यथा निरुपाधिकारुण्यं विना पूर्णकामस्य अस्माभिः किं प्रयोजनं न किमपीत्यर्थः । ईशस्य एतत् अन्नप्रार्थनं खलु विडम्बनं लाघवमेव यस्मादित्यर्थः । यद्वा, तस्मादेतत् ईशस्य ईशकर्तृकम् अस्मत्कर्मकं विडम्बनं तिरस्कारः ॥ ४५ ॥

ननु, क्षुधार्तत्वादेवेदमन्नप्रार्थनं ननु कारुण्यं नापि पूर्णकामत्वादिकं गोचारणाद्यनुपपत्तेस्तत्राहुः-हित्वेति । असकृत् मुहुः श्रीः सम्पल्लक्ष्मीः स्वात्मनो दोषस्य चाञ्चल्यस्य अपवर्गेण त्यागेन त्रिशिष्ट चाञ्चल्यं परित्यज्येत्यर्थः । तस्यापि याच्ञादिकं जनान् अस्माद्विधान् मोहयति नायमीश्वर इति प्रत्याययति ॥ ४६ ॥

मोहमेव विवृण्वन्ति, देश इति ॥ ४७—४९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीः महालक्ष्मीः अन्यान् ब्रह्मादीन् हित्वा यं श्रीकृष्णं सकृदपि पादस्पर्शाशया स्वात्मदोषापवर्गेण शोभनस्य सर्वगुणसम्पन्नस्यात्मनो मनसो ये दोषाः दूषकाः भजनवैमुख्यकराः आलस्यादयस्तेषामपवर्गेण त्यागेन भजते तस्य याच्ञा जनमोहिनीत्यर्थः ॥ ४६ ॥ ४७ ॥

इत्थेवम् आश्रुत्य सर्वत्र श्रुतवन्तो वयं हि तथापि न विद्महे न ज्ञातवन्तः ॥ ४८—५१ ॥

---

### भाषा टीका ।

नहीं तो कैवल्य सूं आदि लेके सकल पुरुषार्थन के पति पूर्णकाम ईश्वर कूं हम सदृश निपट दीन तुच्छन सों

अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः ।
भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ ॥ ४९ ॥
नमस्तुभ्यं भगवते कृष्णायाऽकुण्ठमेधसे ।
यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ॥ ५० ॥
स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् ।
अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥ ५१ ॥
इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः ।
दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाचलन् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे यज्ञपत्न्युद्धरणं नाम
त्रयोविंशोऽध्यायः ॥ २३ ॥

भाषा टीका ।

कौनभो प्रयोजन रह्यो ? यह भात मागिवो तौ केवल हम पै कृपा करिवे कों खेल मात्र कीनो हो ॥ ४५ ॥

जिनके चरण कमल के स्पर्श की चाहना सों ब्रह्मादिकन कूं त्यागि के अपनो चंचलतारूप दोष दूर करवे कूं लक्ष्मी जिनकों भजै है, तिन श्रीकृष्ण को मागिबो जनन के मोह करन वारो है ॥ ४६ ॥

देश, काल, न्यारे २ द्रव्य, मंत्र, तंत्र, ऋत्विज, अग्नि, देवता यजमान, यज्ञ और धर्म ये सब जिन मय हैं ॥ ४७ ॥

ये वोही साक्षात् योगेश्वरन केऊ ईश्वर विष्णु भगवान् हैं। और हमन ने सुनी है कि—वोई विष्णु यदून में उत्पन्न भये हैं, तो भी ऐसे हम मूढ हैं कि—कृष्ण कूं नहीं जानत भये ॥ ४८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

न चाचलन् तयोर्दर्शनाय न जग्मुः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृत भावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मूढत्वमेव दर्शयन्तस्तत्कारणमायाप्रभावेन विस्मिताः सन्तः तदपगमाय भक्त्या सर्वेशं तदीश्वरमेव प्रणमन्ति—नम इति । भगवते अचिन्त्यानन्तैश्वर्याय अकुण्ठमेधसे अलुप्तज्ञानाय स्वेषां तद्वैपरीत्यमाहुः—यन्माययेति । भ्रमामः पुनः पुनस्तत्रैवाभिनिवेशं प्राप्नुम जलावर्त्तादिवत् कदाचिदपि ततो निर्गन्तुं न शक्नुम इत्यर्थः ॥ ५० ॥

एवं परमदैन्यं गताः श्रीभगवन्तं क्षमापयन्ति—स इति । स कृष्णो नोऽस्माकम् अतिक्रममपराधं क्षन्तुमर्हति योग्यो भवति तत्र हेतुः स्वस्य तस्यैव मायया मोहितचित्तानाम् अत एव न विज्ञातोऽनुभावः तन्माहात्म्यं यैस्तेषां यदि चास्माकमपराधः तथापि स आद्यः पुरुषः सहस्रशीर्षादिरूपः तन्मुखादेर्योत्पन्नानां विप्राणां पितृवदपराधक्षमायुक्तेति भावः । यद्वा, आद्यः सर्वश्रेष्ठः अतो निकृष्टानामस्माकमपराधं क्षन्तुमर्हत्येव । किञ्च, पुरि शयानात् पुरुषोऽन्तर्यामी अतस्तेन यथा नियुक्ताः स्मः तथैव कृतवन्तो वयमिति । यद्वा, आद्यः पुरुषः पुरुषोत्तम इत्यर्थः । दीनवात्सल्यब्रह्मण्यदेवत्वादिनिजस्वाभाविकमाहात्म्यात् क्षन्तुमर्हत्येवेति भावः ॥ ५१ ॥

स्वम् असाधारणम् अघमपराधं तदेव दर्शयन्ति—कृतं हेलनं मनुष्यदृष्ट्याऽवज्ञा यैस्ते अत एव दिदृक्षवोऽपि स्वाघक्षमापनाय मिलितुमिच्छवोऽपि व्रजं प्रति न चाऽचलन् सकृदपि पादविक्षेपं न कृतवन्त इत्यर्थः । तत्र हेतुः अथ कार्त्स्न्येन कंसात् भीताः श्रीभगवति दृढविश्वासानुत्पत्त्या निजानिष्टशङ्कयेत्यर्थः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अविज्ञातानुभावानाम् अविज्ञात भगवदनुभावानाम् ॥५१।५२॥

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमनुतप्ताः प्रणाममन्तरेण स्वापराधक्षमानिमित्तमनुपलभमाना नमस्कुर्वाणाः क्षमापयन्ति—नम इति द्वाभ्याम् । अज्ञानकृतमपराधं जानात्वित्यभिप्रायेण विशिंषन्ति अकुण्ठमेधस इति । प्रतिहता मेधा धिषणा यस्य तस्मै "नित्यमसिच् प्रजामेधयोः" (५।४।१२२) इति असिच् स्वयं त्वकुण्ठमेधाः वयं तन्मायामोहितधियः अतः क्षन्तुमर्हस्येवेत्यभिप्रायेणाहुः—यन्मायेति । कर्मवर्त्मसु तत्त्वार्क्तिविधुरेषु केवलं यज्ञादिकर्ममार्गेषु भ्रमामः पुरुषार्थसाधनबुद्धिं कुर्मः यद्वा "ते तं भुक्त्वा स्वर्गलोकं विशालम्" इत्याद्युक्तविधगमनागमनमार्गेषु पुण्यपापात्मककर्मोपात्तस्वर्गनरकादिमार्गेषु वा भ्रमामः ॥ ५० ॥

अतः स्वमायया मोहितचित्तानामत एवाविज्ञातोऽनुभावो महिमा यैस्तेषां नोऽस्माकं व्यतिक्रममपराधं क्षन्तुमर्हति ॥ ५१ ॥

इत्यन्तावत्कृष्णे विषये कृतं हेलनमपराधं यैस्तथाभूताः शनैः स्वकृतमपराधमनुस्मृत्य ततस्तं श्रीकृष्णं द्रष्टुमिच्छन्त्योऽपि कंसाद्भीताः स्वस्थानान्न चलितवन्तः द्रष्टुं न जग्मुः किन्तु तं ध्यायन्तः स्वस्थान एव तस्थुः ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथापि अनुतप्ता अपि हरिं दिदृक्षवो द्रष्टुकामाश्च नाचलन् नागच्छन् कुतः कंसाद्भीता इति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥
( विजयध्वजरीत्या एकविंशोऽध्यायः )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वापराधः समर्थितः तस्यापराधस्य क्षमापनार्थं नमन्ति नम इति । अत्रैकः श्लोको विगीतः सोऽपि व्याख्यायते अहो इत्याश्चर्यं वयमिति श्लाघायां वयं धन्यतमाः कृतार्थाः येषामस्माकं तादृश्यः स्त्रियः यासां भक्त्या स्मारकत्वेनोपस्थितया अस्माकमपि हरौ मतिनिर्मला जातेति तुभ्यं भगवते नम इति अपराधेन दीनभावे जाते आविर्भूतो भगवानिति ज्ञायते अन्यथा तुभ्यमिति न वदेयुः अनेन तेषामपराधो गत इति निश्चित्य तस्य षड्गुणान् दृष्ट्वा नमस्यन्ति भगवते इति द्वाभ्यां इदृशयोः साङ्कार्याभावार्थमुच्यते स्वरूपमपि ज्ञातवन्तः कृष्णायेति तस्य पूर्णज्ञानशक्तिं दृष्ट्वा आहुः—अकुण्ठा मेधा बुद्धिर्यस्येति । यद्यपि भगवच्छब्देनैव नित्यज्ञानवत्वं प्राप्तं तथापि यथा "सर्वस्येशानः" इति श्रुतेरैश्वर्यं साधारणं तथा सर्वज्ञ इति श्रुतेर्ज्ञानमपि तादृशमेव भगवत्पदेनोच्यते एवं सति "मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि" इति वाक्यात् केवलभक्तविषयकं स्वीयत्वेन यज्ज्ञानं पुष्टिमार्गीयं तदत्र मेधाशब्देनोच्यते तदस्मद्विषयकं पूर्वमासीन्मध्येऽस्माकं बहिर्मुखत्वेन तस्याकुण्ठत्वेन नरकार्यमेव यात्रारूपं प्रबोधं कृतवान् नतूपेक्षामिति भावः । नाप्यस्माकमपराधः भ्रान्तत्वादिति वदन्तः भ्रमस्त्वत्कृत एवेत्याहुः—यन्मायेति । भगवन्माययैव व्यामोहितबुद्धयः कर्ममार्गेषु भ्रमामः अन्यथा ज्ञाने भक्तौ वा मतिः स्यात् शुद्धे वा वैदिके कर्मणि यत्कर्मवर्त्मस्वेवाभासरूपेषु तत्रापि निश्चयाभावात् केवलं भ्रमामः अतो मोहिता एव ॥ ४९ ॥ ५० ॥

वाचापि क्षमापयन्ति—स वैष इति । क्रियया स्वापराधक्षमापनं न भवति दुर्बलत्वात् अतः स वा भगवानेव वा यस्यास्माभिरपराधः कृतः स एवैषः अग्रे आविर्भूतः अनेन ज्ञायते क्षमां करिष्यतीति । किञ्च, आद्योऽयं सर्वेषां पिता अतः पुत्राणामपराधमिव सहिष्यति । किञ्च, पुरुषोऽयमन्तर्यामी अतः तत्प्रेरणयैव कृतमिति युक्तमस्य सहनम् । किञ्च, स्वमायामोहितात्मनां तस्यैव मायया मोहितचित्तानाम् अत एव न विज्ञातः भगवदीयः अनुभावो यैः तादृशानाम् अतिक्रममपराधं क्षन्तुमर्हति स्वधर्मविचारेणापि क्षमा युक्तेत्यर्थः । एवमपराधक्षमां कारयित्वा निवृत्तव्यापारा जाताः न तु स्वयं तत्र गत्वा लोकन्यायेन क्षमां कारितवन्तः ॥ ५१ ॥

तत्र हेतुमाह—इतीति । स्वाद्यं स्वापराधमनुस्मृत्य ते ब्राह्मणाः कृष्णे विद्यमानेऽपि कृतहेलना अपि दिदृक्षवोऽपि उद्वसाय अथ भिन्नप्रक्रमेण व्रजं प्रति न चाचलन् तत्र हेतुः कंसाद्भीता इति तत्र गते कंसो भगवानयमिति ज्ञात्वा कदाचिदपकारं कुर्यात् व्रजस्य तदा महानयमपराधो भवेत् अतो व्रजं न गताः ॥ ५२ ॥

इति श्रीमद्भागवते श्रीमल्लक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्यां
दशमस्कन्धविवरणे विंशाऽध्यायविवरणम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपराधादतिव्यग्रा प्रणमन्ति । नम इति ॥ ५० ॥

अतिदैन्यग्रस्ताः भगवन्तं क्षमापयन्ति स वै इति अतिक्रममपराधम् ॥ ५१ ॥

ननु, तर्हि तदानीमेव तत्राशोकवने गत्वा विलम्ब्य व्रजं वा गत्वा कथं भगवन्तं शरणं न गतास्तत्राह—दिदृक्षव इति । तदानीं शोकानुतापादिमत्त्वात् सर्वैकमत्याभावाच्चाशोकवनं न गताः विलम्बे सति सायाह्ने व्रजं प्रति गतावैकमत्ये सति न चाचलन्निति चकाराच्चलन्तोऽपीत्याक्षेपलब्धं तत्र हेतुः सर्वेषामपि मनस्येकः सहसैवोद्भूत इत्याह—कंसाद्भीता इति । सूत्रके इकारमद्भूताम्तः कंसोऽद्यैवास्माकं जीविका हरिष्यतीति भयः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्याकुला इत्यर्थः । अतः पत्न्यादिकर्तृकवधत्यागादिलक्षणं भयं ब्राह्मणानां कृष्णदर्शने किल न प्रतिबध्नाति स्मेत्यत्र प्रेमैव हेतुः ब्राह्मणानां तु मनःकल्पितो भयाभास एव तत्र प्रतिबध्नाति स्मेत्यत्र भगवन्मायैव हेतुर्ज्ञेयः ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रयोविंशोऽत्रदशमेसङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्दर्शनाय न नचलन्न जग्मुः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाऽध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषाटीका

तब उनमें सों कितने सगड़वार बोले, कि—पण्डितायवे की कौनसी बात है, हमहूं बडे धन्य हैं जो हमारी घरदारी ऐसी हैं, कि—जिनकी भक्ति सूं श्रीहरि में हमारी हूं मति निश्चल होय गई ॥ ४९ ॥

तिन अकुण्ठ बुद्धि वारे कृष्ण भगवान् कूं नमस्कार है, कि, जिनकी माया सों मोहित होयकें हम कर्म मार्ग में भ्रम रहे हैं ॥ ५० ॥

सो यो आदि पुरुष भगवान् आपकी माया सूं मोहित चित्त वारे, और आपके प्रभाव कों न जानन वारे ऐसे हम गरीबन के अपराध को आप क्षमा करिवे योग्य हौ ॥ ५१ ॥

कृष्ण के विषे अपराध करन वारे वे ब्राह्मण अपने अपराध को स्मरण करिकें श्रीकृष्ण के दर्शन की इच्छाऊ कों करत भये। परंच तौऊ कंस के भय सों नहीं जात भये ॥५२॥

इति श्रीमद्भागवत दशमस्कन्ध में तेरसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## ॥ चतुर्विंशोऽध्यायः ॥

—:*:—

### श्रीशुक उवाच ।

भगवानपि तत्रैव बलदेवेन संयुतः ।
अपश्यन्निवसन् गोपानिन्द्रयागकृतोद्यमान् ॥ १ ॥
तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः ।
प्रश्रयावनतो पृच्छद्वृद्धान्नन्दपुरोगमान् ॥ २ ॥
कथ्यतां मे पितः ! कोऽयं सम्भ्रमो व उपागतः ।
किं फलं कस्य चोद्देशः केन वा साध्यते मखः ॥ ३ ॥
एतद्ब्रूहि महान् कामो मह्यं शुश्रूषवे पितः ! ।
नहि गोप्यं हि साधूनां कृत्यं सर्वात्मनामिह ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ।
कृष्णः प्रवर्त्तयामास गोवर्द्धनमखोत्सवम् ॥ १ ॥
भूसुराणां क्रियागर्वं निरस्य स्वः सुरेषु च ।
मघवन्मदभङ्गाय तन्मखं समचारयत् ॥

ब्राह्मणाः कंसाद्भीताः स्वाश्रमस्था एव भगवन्तमभजन् भगवानपि तत्रैव निवसन्निन्द्रयागकृतोद्यमान् गोपानपश्यदिति सम्बन्धः ॥ १—२ ॥

वृथा सम्भ्रमो न भवति मखो ऽयमित्येवं चेत् किमत्र फलं का देवता केनाधिकारिणा केन वा साधनेन साध्यते ॥ ३ ॥

एतद् ब्रूहि महान् कामो मम भवणे वर्त्तते ।यद्वा, तव महान् कामो दृश्यत इति तूष्णीं स्थितं प्रत्याह—नेति । सर्वात्मनां सर्वत्रात्मदृष्टीनाम् ॥ ४ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वं व्रजकुमारीः प्रति "याताऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" इति हेमन्तगतया निजाङ्गीकृतास्तासु शरद्रात्रिषु ताभिः सह श्रीभगवान् अरमत ताः खलु शरदन्तरा व्यवहित-शरत्सम्बन्धिन्य एव सम्भवन्ति तद्रमणारम्भश्च शरत्पूर्णि-मायामेव निर्देक्ष्यते सा च शरन्मध्यस्थाश्विनपूर्णिमैव सम्ब-ध्यते कार्त्तिकशुक्लप्रतिपदित्येषा गोवर्द्धनपूजा सा च रास लीलायां व्रजदेवीभिरनुकृता गोवर्द्धनपूजानन्तरमेव वरुणलोक-गमनं ततः पूर्वां शरदमेवारभ्यागामिनीं यावत् क्रमात् गोवर्द्धन-पूजा वरुणलोकगमनवस्त्रहरणयज्ञपत्न्युपचर्याग्रहणरासक्रीडा ज्ञेयाः तत्र तत्सन्दर्भनिर्णयः कंसवधान्ते करिष्यते वैपरीत्यो-क्तिस्तु प्रेमवैवश्यात् क्वचित् सजातीयत्वाच्च अथ भगवानपि तत्रैवेत्यस्यायमर्थः यत्र तद्यागयोग्ये गोष्ठनिकट एव स्थान-विशेषे सङ्घस्य निवसन्तो गोपाः कृतोद्यमा बभूवुः भगवा-नपि तत्रैव बलदेवेन संयुतो निवसन् इन्द्रयागकृतोद्यमान् गोपान् अपश्यत् पश्यन्नेवासीत् तद्द्रव्येण यागान्तरसाधनेच्छया नतु प्रथमं किञ्चिदुक्तवानित्यर्थः । यत्तु श्रीविष्णुपुराणे—

"विमलाम्बरनक्षत्रे काले चाभ्यागतो व्रजम् ।
ददर्शेन्द्रमहारम्भायोद्यतांस्तान् व्रजौकसः" ॥ इति ।

श्रीहरिवंशे—

"व्रजमाजग्मतुस्तौ तु व्रजे शुश्रुवतुस्तदा ।
प्राप्तं शक्रमहं वीरौ गोपांश्चोत्सवलालसान् ॥ इति ।

तत्खलु सामान्यतो दर्शनमत्र तु विशेषत इति भेदः एषा च क्रीडा कार्त्तिकशुक्लप्रतिपदि कार्त्तिकविधानस्य मध्यदेशीयाना-माचारस्य च तत एव प्रवृत्तेः "अपरस्यां तुलायां दर्शम्." इति वक्ष्यमाणाच्च तथा चोक्तं पाद्मे दीपान्विताभावास्याकृत्यान्ते "प्रातर्गोवर्द्धनः पूज्यो रात्रौ द्यूतं प्रवर्त्तते" इति तस्मात् श्रीहरि-वंशे वर्षाशरत्सन्धिप्रायवर्णनं समुद्रतीरादिवन्मध्यदेशेऽपि तदानीं वर्षाणां बाहुल्येन कदाचित्सर्वाश्विनव्याप्त्यपेक्षया ॥ १ ॥

ततश्च तस्य पूर्वपूर्वदृष्टस्येन्द्रमखस्य तथा श्रीव्रजराजेन प्रत्युत्तरयिष्यमाणस्य तदभिकस्य चार्थस्याभिज्ञोऽपि अपृच्छत् तत्र च भगवानपि सर्वसद्गुणनिधित्वेन विनयावनम्र एव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमपृच्छत अभिज्ञाने हेतुः सर्वस्यात्मा परमात्मेति प्रश्ने हेतुः सर्वान् दर्शयति स्वार्थे प्रवर्त्तयतीति तथा सः भवतु नाम पूर्वेषां गृह्यचवाहितानां मद्धारिरङ्गदेवतापूजादिकं किन्त्वेषां मत्सन्निहितानां मदन्तरङ्गपूजैव मत्सुखकरी मात्पत्रादीनां तु "तद्भूरिभाग्यम्" इत्यादिवचनगहामहिमत्वादतिक्षुद्रस्य तत्रापि महागर्वस्येन्द्रस्य पूजा मम दुःखकरीति सम्मति परमान्तरङ्ग-गोवर्द्धनपूजाप्रवर्त्तनेच्छयैव वृद्धेषु तत्रैव मुख्यतात्मपितापेक्षया विशेषतः स्वपितरि प्रश्न इति ज्ञेयः ॥ २ ॥

कथ्यतामित्यर्द्धकम् । मे मह्यं कथयतामिति सर्वेऽन्ये जानन्ति केवलं मयैव न ज्ञायते इति मां प्रत्येव कथ्यतामिति भावः । एषा च पितृसन्तोषार्थमौग्ध्यप्रायकीवैव आवश्यकतच्छ्रवणाय वः युष्माकं सर्वेषामेव नतु केषाञ्चित् तत्र च सम्भ्रमः त्वराविशेषः वैयग्र्यं वा श्लेषेण सम्यक् भ्रम एवेत्यर्थः । उपागतः दूरे स्थातुं योग्योऽपि समीपं प्राप्तः उपर्यापतित इति वा ॥ ३ ॥

केनेति तृतीयान्तपदेन कर्तृकरणयोः प्रश्नः एतद्ब्रूहीति पुनरुक्तिर्निजशुश्रूषातिशयबोधनाय मह्यं मां प्रीणयितुमित्यर्थः यद्वा, ननु बालके त्वयि तत्कथनेन किं तत्राह-शुश्रूषवे पुत्रस्येच्छावश्यं पूरयितुं युज्यत इति भावः । श्लेषेण शुश्रूषुं धर्मम्-ब्रूयादिति न्यायेनावश्यकतोक्ता पितरिति पुनः सम्बोधनं स्नेहविशेषजननाय पूर्वपूर्वमध्ययं जानात्येव तथापि यत्पृच्छति तत्र च सोल्लुपठमिव यत्पृच्छति तत् पुनरिन्द्रं प्रत्यनादरेणैवेति गम्यते नारायणसमगुणत्वात् तज्जयिदानवृन्दघातित्वाच्चेति संशय्य तूष्णीं स्थितं प्रत्याह—नहीति । सार्द्धकेन तत्र नहीत्येकम् उदासीन इत्यर्द्धकं साधूनामिति तेषां निष्कर्मत्वप्रवृत्त्या गोप्यत्वभावात् साधूनामेव लक्षणं सर्वात्मनामित्यादिविशेषणत्रयेण परमात्मा तद्दृष्टीनाम् इह जगति कुत्रापीत्यर्थः । अतः तत्तल्लक्षणवद्भिर्भवद्भिर्न गोपयितुं युज्यत इति भावः । ननु निजहितार्थं देव ताराधकानां कुतः सर्वात्मता युक्ता अतोऽस्वपरदृष्टित्वादिकं तव च नास्त्येवेति भवतु, तथापि मयि गोपयितुं न युज्यत एवेत्याह उदासीन इति वर्ज्यः मन्त्रभङ्गभयात् अहं तु सुहृत्सु परमान्तरङ्गः पुत्र एवेत्यतो न वर्ज्य एवेति भावः ॥ ४—५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेन्द्रप्रीतिकरयागभञ्जनं ततः सङ्कुद्धेन्द्रचोदितमहावातवर्ष-पीडितशरणागतव्रजवासिरिरक्षिषोपयुक्तगोवर्द्धनाचलोद्धरणात्मकं भगवच्चेष्टितमनुवर्णयति–द्वाभ्यामध्यायाभ्यां; भगवानपीति ! तत्रैव वृन्दावन एव निवसन्निन्द्रयागार्थं कृत उद्यमः प्रयत्नो यैस्तान् गोपानपश्यत् ॥ १ ॥

सर्वात्मा सर्वदर्शनश्चेति च हेतुगर्भम अतस्तद-भिज्ञोपि उद्यमहेन्द्रयागार्थत्वं जानन्नप्यज्ञ इवाऽवनतो नम्रः नन्दप्रभृतीन् वृद्धानपृच्छत ॥ २ ॥

प्रश्नप्रकारमेवाह–कथ्यतामिति । हे पितः ! वो युष्माकं कः संभ्रमः उपस्थितः संभ्रमो न भवति भवतोऽयमित्यत्राह—किं फलमिति । भवत्वेतत् किमत्र फलं कस्य सम्बन्धी उद्देशः का देवतेति प्रश्नः केन साधनेन साध्यत इति साधनप्रश्नः ॥३॥

हे पितः श्रोतुमिच्छवे मह्यमेतत् सत्पृष्टं ब्रूहि अत्र महान् कामः शुश्रूषा वर्त्तते गोप्यत्वात् वक्तुं श्रोतुं च न योग्यमित्याशङ्कां निराकरोति—नहीति । साधूनां कृत्यं न हि गोप्यं तत्र हेतुं वदन् विशिनष्टि सर्वात्मनां सर्वदर्शात्मानः आत्मतुल्या येषां ज्ञानैकाकारत्वेन सर्वेप्यात्मान एकरूपा एवेति जानतामित्यर्थः ॥४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वमहिमानं प्रकटयितुमुत्पथवर्ती पुरुषः सन्मार्गोपदेशेन शिक्षणीय इति शास्त्रशासनं पश्यन् कृष्णः सन्मार्गं दर्शयितु-मुपक्रमत इत्याह–शुक इति । तत्र व्रज एव निवसन् ॥ १ ॥

सर्वात्मा सर्वदर्शन इत्येतद्द्वयं तदभिज्ञत्वे हेतुः प्रश्रयः सेवा-शीलता ॥ २ ॥

कोऽयं किं विषयः भवद्विषयश्चेत्तत्राह–किं फलमिति । इदमु-ताहो फलम् यद्वा, किमर्थं सम्भ्रमः अस्य सम्भ्रमस्य किं फलं साध्यं भवच्चेदत्राह–कस्येति । कां देवतामुद्दिश्य द्रव्यत्यागलक्षणः केनाधिकारिणा हेतुना वा ॥ ३ ॥

तदेतदपृष्टं सर्वं मह्यं ब्रूहि । किमर्थं ? महान् कामः मम तस्मिन् कार्ये महत्याकाङ्क्षा वर्तते तुशब्दो भेदार्थः इह वाच्यव्यवहार-विशेषे यत्सर्वात्मना कीर्त्यं वक्तुं योग्यं तत्साधूनां गोप्यं न हि कुत इत्थं सङ्कल्प्यत इत्यतः प्रसिद्धत्वादित्याह, हीति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवानपीति अत्रापिशब्देन तत्रैव निवसन्नितीत्थं येथं लभ्यते एवं ते पत्नीसम्बन्धेनातिविश्वस्ता असन्निहिता नाचक्षन् चकाराद्यत् किञ्चित् तत्सात्मुख्येन यज्ञमेव कुर्वन्तो ऽतिष्ठन् अथ किञ्चित्कालान्तरे भगवानपि बलदेवेन संयुतस्तत्रैव निवसन् स्वयं यत्र निवसति तत्रापीत्यर्थः । इत्यभिलापसमञ्जसत्वं दर्शितं ब्रह्मादिदुर्लभं तत्संवासमहेतुमेभ्यस्तेभ्य इन्द्रस्यातिशोचि-यत्वात् बलदेवेन संयुत इति स कदाचित् सोढुं शक्नोति बलदेवस्तु तत् परमभक्तो नैवेत्यर्थः । तस्य यज्ञस्य अपि सर्वतो-भावेन सिद्धान्तानुष्ठानादिप्रकारेण जानातीति तदभिज्ञस्ता-दृशोऽपि पूर्वपूर्वमध्ययं जानात्येव तथापि यत् पृच्छति तत् पुनरिन्द्रं प्रत्यनादरेणैवेति गम्यते ॥ १—४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकविधेऽ हेतुनाऽस्य कर्मणो विनिवारणम् ।
कृत्वा तद्विदधे यज्ञे द्रष्टव्येति निरूप्यते ॥
यथा प्रबोधिना [illegible] एवं देवा अपि स्वयम् ।
महतां महती [illegible] [illegible]मुखा ।
स्त्रीणां वस्त्राणि [illegible] विप्राणां तु स्त्रियः सतीः ॥
देवानां तु [illegible] यत्र तेषु प्रतिष्ठिताः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मुक्तं तदुभयमुपपादयन् कर्मैव बहुमन्तव्यमित्याह—देहानिति । जन्तुर्जीवः कर्मणा स्वभावानुगुणेनेति शेषः । नानाविधान् कर्मानुरूपान् देहान् प्राप्य त्यजति अरिमित्रादिकञ्च कर्मैव कर्मकृतमेवेत्यर्थः । ईश्वरः इन्द्रादिगतं सावधिकमीश्वरत्वमपि कर्मकृतमेवेति भावः ॥ १७ ॥

यतः कर्मैव सुखदुःखादिहेतुस्तस्मात्स्वभावस्थः पुमान् स्वकर्मकृत् स्वस्वभावानुरूपकर्मशीलः कर्म पूजयेद्बहुमन्येत कर्मेति द्वितीयान्तम् अहो कर्मणा वैभवमिति श्लाघेतेत्यर्थः । किञ्च वयं केवलं वनौकसः द्विजानामाशिषः गाः पर्वतं चोपजीवामस्ततस्त एवाराध्या इत्यभिप्रायश्चान्यथा सदृष्टान्तमनर्थमाह—अञ्जसेति सार्द्धेन । येन अञ्जसा सुखं वर्त्तेत जीवेत तदेवास्य जिजीविषोर्दैवतं दैवतत्वेन द्रष्टव्यं तद्वदाराधनीयमिति यावत् ॥ १८ ॥

यस्त्वेकमन्यतरं भावं पदार्थमुपजीव्य अन्यतरमुपधावत्यनुवर्त्तते भजत इति यावत् । स तस्मादुपजीव्यबुद्ध्याराध्यमानात् क्षेमं न विन्दते असती पुंश्चली नारी पतिमुपजीव्यमनाराध्य जारमनुवर्त्य यथा न तस्मात् क्षेमं विन्दते तद्वत् ॥ १९ ॥

किञ्चास्मद्वृत्तिरिन्द्रयागानपेक्षा चेति विवक्षुस्तावत्स्ववृत्तिं वक्तुं दृष्टान्तत्वेन वर्णानां वृत्तिभेदमाह—वर्त्तेतेति । विप्रो ब्रह्मणा वेदेन वर्त्तेत वेदाध्ययनाग्निनोपजीवेदित्यर्थः।राजन्यो भुवः रक्षया वार्त्तया वैश्यो वर्त्तेत द्विजसेवया त्रैवर्णिकसेवया शूद्रः वर्त्तेत ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, विष्णोः सर्वनामवत्त्वे एकस्यैवोच्चनीचदेहयोगवियोगप्राप्त्या देवदत्ताद्विशेषाभावेन सर्वं तदधीनमिति वक्तुं न शक्यते इति तत्राह—देहानिति । दुःखयतीति दुःखी तद्दुःखत्वातञ्चपाचच्छब्दवाच्यत्वं न तु तदनुभवतः अतः सर्वनामत्वं युज्यते उत्सृजति त्यजति सृजति आपादयति जातस्य शत्र्वादिभावञ्च हरिरेवेत्याह—शत्रुरिति "सुखं दुःखं भवो भावः" इत्यादिस्मृतेः । यद्वा, यथा तत्तच्छक्तिप्रेरकत्वेन ब्राह्मणादिशब्दवाच्यत्वं हरेस्तथा शत्रुत्वादिशब्दवाच्यत्वमित्याह, शत्रुरिति । कर्मशब्दवाच्यो हरिरेव शत्रुत्वादिः पूज्यत्वात्तत्त्वोपदेशेन गुरुरैश्वर्यादियोगादीश्वरः ॥ १७ ॥

यस्माद्धरति सर्वमिदमिति गिर्यादिनामा हरिस्तस्मात्स्वविहितकर्मकृत् स्वभावस्थः नारायणार्पितसर्वेन्द्रियवृत्तिः पुरुषः "क्रियापतनयोः कर्म" इत्यभिधानाद् क्षितिधृत्यादिक्रियाश्रयत्वेन वा परोक्षापरोक्षज्ञानविषयत्वेन वा जगत्सर्जनादिक्रियाश्रयत्वेन वा कर्मसु पूजयेदित्यन्वयः । तदुक्तम्—

"एनस्यात्कारणात्कृष्णः शक्रस्य विमदाय च ।
गिर्यादिस्थितमात्मानं पूजयामास वल्लवैः" ॥ इति

विधूयोति अञ्जसेति येनाञ्जसा तत्त्वेन स्वकर्मकर्त्रादियुक्तं यो वर्त्तेत अस्य तदेव दैवतं कुलदेवं हि लोकप्रसिद्धम् "अञ्जसा तत्त्वे मनस्वद्भुतवेदयोः" इति यादवः । अनेन यच्छास्त्रे विघ्नेश्वरादिनामाख्यातं तदप्यस्य हरेर्नामेति सिद्धम् ॥ १८ ॥

श्रीमदुक्ताद्विनैकतरं बहूनां सिद्धान्तानां मध्ये एकं भावं सिद्धान्तमाजीव्योपजीव्यान्यं भावमुपधावति उपास्ते स पुरुषः तस्माद्भावात् क्षेमं सुखं न लभते यौवनं जरयतीति जारः असती बहुभर्तृका ॥ १९ ॥

यस्य यत् किं किमिति तत्राह—वर्त्तेतेति । ब्रह्मणा वेदेन विहितेन यागादिना यद्वा, यो येन कर्मणा अञ्जसा सहितो वर्त्तेत अस्य तदेव कर्म दैवतं मान्यं हि तर्हि विप्रादेः किं कर्मविहितमित्यत्राह-ब्रह्मणेति । कृच्छ्रचान्द्रायणादिलक्षणेन तपसा "ब्रह्मवेदस्तपस्तत्त्वम्,, इत्यमरः । वार्त्तया कृष्यादिलक्षणया चतुर्विधया ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्मात् स्वभाव एव कर्मान्तरप्रवर्त्तकः कर्मैव च फलदात् तस्माद्दोषेण ब्राह्मणाद्यनर्हभावान्तराद्गमनेऽपि यत्नात् स्वभावस्थस्तदर्हभावस्थ एव सन् स्वकर्मकृत् तदर्हं कर्मकृदेव च सन् कर्मेति कर्माजीव्यमेव सम्पूजयेत् ननु यदिरङ्गदेवादिमित्यर्थः । अग्रे तथैव व्यक्तं ॥ १८ ॥

तस्मादन्यस्मात् जारादिति तत्सामानाधिकरण्येन दृष्टान्तः पित्रादिष्वप्यौद्धत्यमिदं तत्कर्तृकनीचाराधनजेन क्रोधेन इति ज्ञेयम् ॥ १९ ॥

स्वकर्माजीव्यधूजामेव साधयितुमात्मनो गोवृत्तित्वमाह—द्वाभ्याम् ॥ २०—२३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु लोकान्तरगमनार्थमीश्वरोऽपेक्षते अन्यथा गते देहे मार्गपरिज्ञानात् फलदेशं कथं गच्छेदित्याशङ्क्याह—देहानुच्चावचानिति उच्चावचाननेकविधान् देहानयं जन्तुर्जीवः प्राप्य प्राप्योत्सृजति अव्यवहितकर्मणा देहान्तरं प्राप्य पूर्वं त्यजतीत्यर्थः । तत्कर्मैव । ननु, समानेऽपि देहे कश्चित् कदाचिच्छत्रुर्भवति मित्रं भवत्युदासीनश्च तत्र को हेतुरिति चेत् ? तत्राह—शत्रुर्मित्रमुदासीनः कर्मैवेति । अन्यथा तेभ्यः शुभाशुभफलाभावा न स्युः किं च गुरुरपि कर्मैव न हि तादृशादृष्टाभावे गुरुरुपदिशति-फलति वा ईश्वरोऽपि कर्मैव फलदानात् ॥ १७ ॥

अतस्तमेव पूजयेदित्याह-तस्मादिति कर्मैव सम्पूजयेत् सम्मानयेत् तस्य सम्माननप्रकारमाह—स्वभावस्थः सन् स्वकर्मकृद्भवेदिति यस्य यः स्वभावः ब्राह्मणादिः तदनुसारेण स्ववर्णाश्रमविहितं कर्म कर्त्तव्यम् अन्यथा पतितः स्यात् फलम् प्रयच्छतु मा वा ईश्वरोऽस्तु न वा कर्म तु कर्त्तव्यमेव एवं सति अञ्जसा सामस्त्येनानायासेन येनैवोपायेन प्रकारेण वर्त्तेत जीवेत् तदेवास्य दैवतं युक्तश्चायमर्थः यद्वा यतद्वा यत्र प्रतिष्ठितः तद्दैवतमिति ॥ १८ ॥

अन्यथात्वे बाधकमाह-भाजीव्येति । एकतरं भावमाजीव्य प्रथमं तदनुवृत्तिं कृत्वा पश्चाद्योऽन्यमुपधावति तत्र परितोषमकृत्वा अधिकफलार्थमन्यं चेत् पश्यभवत्यनेनदा न तस्मात् क्षेमं विन्दते । सोऽपि मन्यते मामपि त्यक्ष्यतीति मन्यमानं प्रति दृष्टान्त-

कृषिवाणिज्यगोरक्षाकुसीदं तुर्यमुच्यते ।
वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥ २१ ॥
सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ।
रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् ॥ २२ ॥
रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वतः ।
प्रजास्तैरेव सिद्ध्यन्ति महेन्द्रः किं करिष्यति ॥ २३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

माह-जाराश्चार्यसती यथेति । न हि जारः भरणपोषणादिकं करिष्यति नापि सम्भोगं सर्वदा परलोकस्तु नास्त्येव तस्मात् कर्मणा आवश्यकत्वात् स पक्षो न त्याज्यः ॥ १९ ॥

किञ्च, कर्मोपजीवका एव सर्वे यतो ब्राह्मणः ब्रह्मणा वेदेन वर्त्तेत तस्य वेदाध्यापनादिनैव जीवनम् । राजन्यस्तु भुवो रक्षया जीवेत स्वधर्मस्तस्येति शूद्रस्तु द्विजसेवया तेषां सेवायां क्रियमाणायां ते यद्दद्युः तेन जीवेत तुशब्देनाऽन्यपक्षा निराक्रियन्ते एवं सर्वेषामेव वर्णानां स्वकर्मणैव जीवनमिति निर्धार्य वार्त्तामिन्द्रो हेतुमिरपंचित इति उक्तः ॥ २० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मात्स्वभावतो निष्पन्नस्य कर्मणा एव सर्वकारणत्वात् कर्मैव पूज्यमित्याह—देहानिति सार्द्धेन ॥ १७ ॥

सम्पूजयेत् सम्मानयेत् कर्मसामान्यस्यापि पूज्यत्वेपि कर्मविशेषपरत्वे शास्त्रमेव प्रमाणमित्याह—स्वभावस्थः ब्राह्मणादि वर्णस्थः स्वस्वविहितं कर्म करोतीति सः । ननु, तदप्यत्र देवतोद्देशेन द्रव्यत्यागात्मकत्वात् यागस्य कथं देवतां विना सिद्धिरित्याशङ्क्य कर्माङ्गमात्रं देवतेति मतमङ्गीकुर्वन् हेतुवादमाभिख्याभ्यामेव देवतां समर्थयते अञ्जसा सुखेन वर्त्तेत जीवेत ॥ १८ ॥

हेतुपक्षेनैव विपक्षे दोषमाह—माजीव्येति । उपजीवति सेवते ॥ १९ ॥

तस्मादस्माकं य एवाजीव्यः सैव देवतेति वक्तुं दृष्टान्तत्वेनान्येषामप्याह—वर्त्तेतेति । विप्रस्य वेदशास्त्राण्येव दैवतानि रक्षया भुव इति भूरेव तस्य देवता वार्त्तयेति वार्त्तैव तस्य देवता द्विज शुश्रूषयेति द्विजा एव तस्य देवता इत्यर्थः ॥ २० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वभावानुरूपेण कर्मणा जन्तुर्जीवः उच्चावचान् देवमनुष्यादिनामकान् देहान् प्राप्योत्सृजति, तेषु जन्तुषु क ईशः कश्चेशितव्यः इति भावः । कर्मणैव शत्र्वादिर्भवतीति कर्मैव शत्रुर्मित्रमुदासीनश्च इति प्रवृत्तं कर्म दर्शितं सङ्क्षेपतो निवृत्तं कर्म दर्शयति, कर्मैव गुरुर्ब्रह्मनिष्ठगुरुप्रापकत्वात् कर्मैवेश्वरः ज्ञानशक्त्युत्पादकतयेश्वरप्रापकत्वात् ॥ १७ ॥

एवं स्थिते मदीयैर्भवद्भिर्मदधिष्ठितगिरियागुद्देशेन स्ववृत्त्यनुरोधेन कर्मानुष्ठेयमित्याशयेनाह—तस्मादित्यादि । सम्पूजयेत्सम्मानयेत् तदेव दैवतं तत्रैव परमेश्वरः फलं ददातीति भावः ॥ १८ ॥

एकतरं भावं पदार्थमाजीव्यस्तुसेव्य अन्यं तदितरमुपजीवति सेवते ॥ १९ ॥

ब्रह्मणा शब्दब्रह्माध्ययनादिना ॥ २० ॥

### भाषा टीका ।

ये जो प्राणी है कर्म तें ऊंचे नीचे देहन को प्राप्त होय के कर्म होते देहनकों छोड देय हैं, अपनो कर्म जो है सोई शत्रु है और वोई मित्र है कर्म ही मध्यस्थ है, तथा गुरु है, और कर्म ही ईश्वर है ॥ १७ ॥

तासों अपने स्वभाव में रहकें अपने कर्म कों करतो भयो कर्म ही की पूजा करे तत्त्व बात तो यही है, कि—जासों जो वर्ततो होय और जीविका करतो होय वोई वाकी देवता है ॥ १८ ॥

जो पुरुष एक को सेवन करिकें दूसरे को सेवन करे है वो पुरुष वा दूसरे सेव्य तें कल्याण कूं नहीं प्राप्त होय हैं, जैसें खोटी नारी जार पुरुष को सेवै है ॥ १९ ॥

ब्राह्मण वेदतें जीविका करकें वर्त्तें, और क्षत्रिय भूमि की रक्षा करिकें, वैश्य वार्त्ता वृत्ति से जीवन करे, शूद्र तीन वर्णों की सेवा करिके जीविका करे २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वैश्यवृत्तेश्चातुर्विध्यमाह-कृषीति । कृषिवाणिज्यसहिता गोरक्षा एवं त्रयम् कुसीदं वृद्धिजीवनं चतुर्थम् ॥ २१ ॥

ननु, गवामपि वृत्तिर्महेन्द्राधीनैवेत्याशङ्क्य निरीश्वरसांख्यमताश्रयेण निराकरोति, सत्त्वमिति श्लोकद्वयेन । अन्योन्यं स्त्री पुरुषयोगेन ॥ २२ ॥

सर्वत इति समुद्रशिलोपरादिष्वपि वृष्टिदर्शनात्प्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः । तैरेव मेघैरेव सिद्ध्यन्ति जीवन्ति ॥ २३ ॥

**न नः पुरो जनपदा न ग्रामा न गृहा वयम् ।**
**नित्यं वनौकसस्तात! वनशैलनिवासिनः ॥ २४ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तथापि योगक्षेमार्थं देवतापेक्षेति चेदत आह—न नः पुर इति । पुरः पत्तनानि जनपदा देशाः अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनिशमिति वैश्येष्वपि गोपत्वान्न कृष्यादि कापि वृत्तिरिति भावः ॥ २१ ॥

पूर्वपूर्वं कारणरूपं त्रिविधं विश्वमन्योन्यं स्त्रीपुरुषादियोगेन यावच्च जगद्रूपं समुत्पद्यते सत्त्वादीनां स्थित्यादिहेतुत्वं स्वभावत एवेति ज्ञेयम् ॥ २२ ॥

महेन्द्र इति सोपहासं मेघानां तस्यापि रजोऽधीनत्वात् ॥२३॥

वनान्येव ओकांसि येषां तथाभूता आस्मेव वयम् अत एव न कदाप्यन्यत्र प्रयाम इत्याह—नित्यमिति । हे तातेति तमार्द्रयति एवं श्रीगोवर्द्धनसमीपे निजवासश्च सूचितः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभ्यात्मदृष्ट्या च मतमुपपादयति-सत्त्वमिति ॥ २२—३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वर्णान्तराणामपि प्रतिनियतस्वस्ववृत्तिलाभे वार्तैव वृत्तिरित्यभिप्रयन्नेतत्स्वरूपं दर्शयितुं तस्याश्चातुर्विध्यमाह—कृषीति । कृष्यादीनां द्वन्द्वः कृष्याद्यास्तिस्रः कुसीदं वृद्धिजीवनं तुरीयं चतुर्थमेवं वार्त्ता चतुर्विधोच्यते कृषिगोरक्षवाणिज्या इति स्वपपाठः रक्षाशब्दस्य स्त्रीलिङ्गत्वात् इत्थं वृत्तिरभिधायाथ स्ववृत्तिमाह—तत्रेति । तत्र वार्त्ताभेदानां चतुर्णां मध्ये गोवृत्ता गोरक्षा वृत्तिर्येषां तथाभूता वयम् ॥ २१ ॥

अथ स्ववृत्तेरिन्द्राराधनानपेक्षत्वमाह—सत्त्वमिति त्रिभिः । तत्र तावद्वर्षं वृत्तेर्महेन्द्राधीनत्वशङ्कां निराऽह कुर्वता द्वाभ्यां सत्त्वादयो जगतः सृष्टिस्थित्यन्तहेतवः तत्र रजसा हेतुभूतेनान्योन्यं स्त्रीपुंयोगेन जगदुत्पद्यते ॥ २२ ॥

ततः किमत आह—रजसेति रजसा रजः स्वभावेन प्रेरिताः सर्वत्र नदीसमुद्रपर्वतादिषु वर्षन्ति समुद्रेष्वपि वृष्टिदर्शनाच्च मेघास्तत्पूर्वकत्वं वृष्टेरिति भावः । प्रजाः गवादयः तैर्मेघैरेव सिद्ध्यन्ति जीवन्ति प्रजा इति पाठे गोसमूहा इत्यर्थः । एवं सति महेन्द्रः किमप्यनिष्टं न करिष्यति किञ्चिदपि नोपकरिष्यति चेत्यर्थः ॥२३॥

नोऽस्माकं पुरः पत्तनानि जनपदा देशा ग्रामागृहाश्च न सन्ति पुरादयो वा सस्थानानि पुरादयो वा न सन्तीत्यर्थः । किन्तु हे तात ! वयं नित्यं वनादिनिवासिनः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृषिर्भुव उल्लेखनादिक्रिया, वाणिज्यं सत्यानृतलक्षणक्रियादि, गोरक्षा पशुपालनं, वृद्ध्यर्थं द्रव्यप्रयोगः कुसीदं, तत्र कृष्यादिषु गोभिर्वृत्तिराजीवनं येषां ते तथा ॥ २१ ॥

प्रकारान्तरेणेन्द्रमाक्षिपति, सत्त्वमित्यादिना । विश्वं समस्तम् अन्योन्यं निमित्तीकृत्येति शेषः ॥ २२ ॥

मेघानामिन्द्रो नियोजक इत्यत्राह—रजसेति । रञ्जयति सर्वमिति रजो भगवानभिहितः न ह्यचेतनस्य रजोगुणस्य मेघे प्रेरकत्वं सङ्घटीति सिद्ध्यन्ति सम्पन्नकार्या भवन्ति किं करिष्यति न किमपीत्यर्थः "अदने चेपेचिकल्पे किम्" इति यादवः ॥ २३ ॥

इतोऽप्यस्मत्कुलदेवतात्वाभावादिन्द्रयागो नोचित इत्याशयेनाह, नन इति । पुरः पुराणि ग्रामस्थितिमुपादाय गृहिणः सपत्नीकाः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न न इति द्वाभ्यां तदानीं श्रीगोवर्द्धनसमीप एव व्रजं बोधयति ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तन्निराकरणार्थं वार्त्तां विभजति—कृषीति । कृषिः कर्षणं वाणिज्यं व्यापारः गोचारणं गोरक्षा कुसीदं वृद्धिजीविका तत्तुर्यं चतुर्थं पूर्वाभाव एवोपजीव्यमिति अन्यथा तन्निन्दितम् उपपातकमध्ये गणनात् एवं चातुर्विध्यमुपपाद्य तस्य प्रकृतोपयोगमाह—वार्त्ता चतुर्विधेति । तत्र प्रकारेषु वयमनिशं सर्वदैव गोवृत्तयः अतः कृष्यभावान्नेन्द्रेण प्रयोजनमिति भावः ॥ २१ ॥

अस्तु वा कृषिः तथापि नेन्द्रस्योपयोग इत्याह—सत्त्वमिति । उत्पत्तिस्थितिप्रलयार्थं रजःसत्त्वतमांसि स्वीकृतानि सन्ति अतः त्रयोऽपि गुणाः स्थित्युत्पत्त्यन्तहेतवः समुदायेन निरूप्य प्रत्येकोपयोगं निरूपयति—रजसोत्पद्यते विश्वमिति । अयद्वयं हि रजः जगदुत्पादयति यदि मेघान् रजो न प्रेरयत् तदा कथमुत्पादयेत् यदीन्द्रादयोऽप्यङ्गीकर्तव्याः तेऽपि गुणाधीना एवेति न तेषां स्वातन्त्र्यं किं च अन्योन्यं चैतदुत्पद्यते सर्वत्र रजः प्रविष्टमिति अतो बीजादङ्कुरः अङ्कुराद्बीजं पितुः पुत्रः पुत्रात् पुनः पिता "प्रजामनु प्रजायन्ते" इति श्रुतेः किं च विविधमपि जगदुत्पद्यते अचित्रा चित्रं चित्रादप्यचित्रं विफलात् सफलः सफलाद्विफल इति अत एतत्सर्वं रजस एवोत्पद्यत

तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ।
य इन्द्रयागसम्भारास्तैरयं साध्यतां मखः ॥ २५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इति वक्तव्यम् एकस्यैव तथाङ्गीकारे लाघवं स्यात् अतो जीवसृष्टिः कर्मणा जडसृष्टिः रजसेति जडसृष्ट्यर्थमपि नेश्वरापेक्षा एवं सामान्यत ईश्वरवादो निराकृतः श्रुतिसिद्धस्तु न निराक्रियत इत्यवोचाम ॥ २२ ॥

इदानीं वृष्ट्यर्थमिन्द्रोऽपेक्षित इति मतं विशेषाकारेण निराकरोति-रजसा चोदिता इति । मेघा वर्षन्ति तेषामन्तः रजोगुणोऽस्ति स हि विक्षेपकः अतस्तेन विक्षिप्ता वर्षन्त्येव यथा राजानः कौतुकिनः अन्यथा इन्द्राज्ञया वर्षणपक्षे जले मधुरूभूमौ च वृष्टिर्न स्यात् अतो रजोविक्षेपादेव यथा सुखं वर्षन्ति यत आवश्यकत्वाद् वाधकाश्च नाज्ञा नियामिका किन्तु रज एव अतस्तेनैव रजःप्रेरणवर्षेणैव प्रजाः सिद्धचन्ति जीवन्ति ॥ २३ ॥

एवं सति महेन्द्रः किं करिष्यति तत्कार्यमन्यथैव सिद्धमिति अस्तु वा तुष्यतु दुर्जन इति न्यायेन महेन्द्रकार्ये तथापि नास्माकं तदुपयोगः तदाह-नमः पुरो जनपदा इति । नोऽस्माकं पुरो नगराणि न सन्ति न वा जनपदा देशाः ग्रामाः हट्टाः नापि गृहाः इन्द्रस्य हि लोकपालत्वं वृष्टिसाधकत्वं यागभोक्तृत्वं दिग्देवतात्वं चतुर्विधत्वमप्यस्माकं नोपयुज्यते पुराभावात् न तेन रक्षा कर्त्तव्या नापि तस्याधिपत्यं देशाभावाच्च कृष्यादौ तदुपयोगः ग्रामाभावात् आहिताग्नेरिव इन्द्रो हविर्न ग्रहीष्यतीति न भयं गृहाभावाच्च दिगादिपरिज्ञानापेक्षा किं च वयं वनौकसः अस्मामिकं वनमिति शास्त्रं नातेति सम्बोधनं स्नेहार्थमप्रतारणार्थं च । किञ्च, नित्यं सर्वदा शैले निवसामः वैष्णवा वनस्पतय विष्णुः पर्वतानामधिपतिः अतः वैष्णव एव याग उचितः तत्र विष्णोरयमङ्गं ब्राह्मणा गावश्च मन्त्रा एकत्र प्रतिष्ठिताः हविरेकत्र अद्रिर्गोवर्द्धनः स्वयमेव देवता ॥ २४—२५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वस्य वैश्यत्वादुक्तामपि वैश्यवार्त्तां विशिष्याह—कृषीति । कृषिवाणिज्याभ्यां सहिता गोरक्षा कुसीदं वृद्धिजीविका गोवृत्तयः गोरक्षणवृत्तयः अनिशमिति कदाप्यापत्काळेऽपि कृष्यादिकमस्माभिर्नाक्रियत इति गाव एवास्माकं दैवतत्वात् पूज्या इत्यर्थः ॥२१॥

ननु, गवामपि वृत्तिर्महेन्द्राधीनैवेत्याशङ्क्य निरीश्वरसाङ्ख्यमतावष्टम्भेन निराकरोति-सत्त्वमिति द्वाभ्याम् । अन्योन्यं स्त्रीपुरुषयोर्योगेन ॥ २२ ॥

सर्वत इति समुद्रशिलोवरादिष्वपि वृष्टिदर्शनान्नप्रेक्षा पूर्वकत्वं वृष्टेरिति भावः । तैरेव मेघैरेव सिद्धयन्ति जीवन्ति ॥ २३ ॥

किञ्च, गा वर्द्धयतीति गोवर्द्धन इति व्युत्पत्त्यैवार्थेनैवपानभूयमानत्वाद्गवां वृत्तिर्गोवर्द्धनाधीनैवेति गोवर्द्धनश्च पूज्य इत्याह, नेति द्वाभ्याम् । पुरः पत्तनानि जनपदा देशाः किन्तु गोधनचारकत्वाद्वनौकसः ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वार्तायाश्चातुर्विध्यमाह—कृष्यादीनां द्वन्द्वः कुसीदं वृद्धिजीवनम् ॥ २१ ॥

ननु, गोवृत्तीनामस्माकं जीवनमिन्द्राधीनमित्यत्र परमेश्वरे सति तदा यत्तेषु प्रकृतितद्गुणतत्कार्ये सूर्ये हिमजलादिषु बहुषु जीवनहेतुषु सत्सु इन्द्र एव एकलः जीवनहेतुरिति कोऽयं दुराग्रह इत्याशयेनाह-सत्त्वमिति द्वाभ्याम ॥ २२ ॥

महेन्द्रः वृष्ट्यधिष्ठात्री देवता इन्द्र एव एकलः किं करिष्यति न किमपीत्यर्थः ॥ २३ ॥

तथापि प्रवलाङ्केतव्यमत्राह—नेति । पुरः पत्तनानि जनपदा देशाः वनशैलेषु अगतिकगतिनेश्वरेण विहितेषु निवासो येषां ते ॥ २४ ॥

---

### भाषा टीका ।

तहां वार्त्ता वृत्ति चार प्रकार की है खेती वणिज, गोरक्षा, और ब्याज बढावनो येई चार वैश्यन की वृत्ति हैं तामें हम सब निरन्तर गऊन की वृत्ति वारे हैं ॥ २१ ॥

और जो तुम कहौ कि, इन्द्र जल की वर्षा करे है, सो बात नहीं है—क्योंकि ? सत्त्व, रज, और तम, ये तीनों गुण या विश्व की स्थिति उत्पत्ति और संहार के कारण हैं । तहां ये विश्व रजोगुण तें उत्पन्न भयो है; और परस्पर में नाना प्रकार को यह जगत् है ॥ २२ ॥

तासों रजोगुण की प्रेरणालेई ये मेघ वर्षे हैं ताई सों तौ सब जगे वर्षे हैं, जो कोई वर्षाधनधारी देवता होती तौ जल में जल वर्षायवे को कहा प्रयोजन हो ? तस्मात् रजोगुण की प्रेरणातें ई मेघवर्षे हैं । तिनतें प्रजा के सब कार्य सिद्ध होवें हैं यामें इन्द्र कहा करेगो ॥ २३ ॥

तहां हे तात ! न हमारे पुर, न देश, न गाम, न घर, हम तौ सदा वन वासी हैं, निरुहि वन में और पर्वतन में रहवे वारे वारे हैं ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्राह्मणानपि सङ्गृह्णन्निगमयति—तस्मादिति । स्वयमुत्प्रेक्षितयागप्रयोगकल्पनायाह—य इन्द्रयागसम्भारा इति । सार्द्धपञ्चभिः सम्भाराः साधनानि ॥ २५ ॥

पच्यन्तां विविधाः पाकाः सूपान्ताः पायसादयः ।
संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥
हूयन्तामग्नयः सम्यग्ब्राह्मणैर्ब्रह्मवादिभिः ।
अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥ २७ ॥
अन्येभ्यश्चाश्वचाण्डालपतितेभ्यो यथार्हतः ।
यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सूपं मौद्गं पायसं केवले पयसि पक्वं संयावादयो गोधूमादिविक्रियाः क्रमश्च सूपपायसयोः श्रुत्या दोहस्यार्थतोऽन्येषां पाठतः ॥ २६ ॥

यागशोभार्थं श्रद्धोत्पादनार्थं चाह—हूयन्तामिति । धेनुदक्षिणाः धेनुसहिता दक्षिणाः ता एव वा दक्षिणाः वो युष्माभिः ॥ २७ ॥

यवसं तृणम् ॥ २८ ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मात् आजीव्यत्वात् तत्र ब्राह्मणानां गवादिवत् प्रागनुक्तिः सर्वाजीव्यतया सामान्यत एव प्राप्तेरिति भावः तथा च मनुः—

"उत्तमाङ्गोद्भवा ज्यैष्ठ्यात् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः" ॥ इति

आजीव्यतयोक्तत्वेपि वनस्यानुक्तिर्दैवतात्वाप्रसिद्धेः तत्राद्रेरेव वा । मुख्यत्वात् यथा स्कान्दे "अहो वृन्दावनं रम्यं यत्र गोवर्द्धनो गिरिः" इति अत्र देवानां समुच्चयात् मखस्य चैकवचनोक्तेर्देवताश्रयाराधनात्मक एक एवायं मखो ज्ञेयः वक्ष्यते च तद्भ्येण गिरिर्द्विजानित्यादि इत्यद्रिगोद्विजमखमिति च तथापि "कृष्णस्त्वन्यतमं रूपम्" इत्यादिना तस्यैव महिमदर्शनात् तदभेददर्शनाच्च शैलस्यैव मुख्यत्वमवगम्यते यद्यपि श्रीवृन्दावनभूमौ नन्दीश्वराष्टकूटवरसानुभवगिरिसौगन्धिकादयोऽबहवोऽद्रयो वर्त्तन्ते तथाप्यत्र अद्रिः श्रीगोवर्द्धन एव तन्नामनिरुक्तिबलात् पञ्चमे कुलाचलमध्ये गणनेन तत्पादस्वरूपतत्तदद्रेस्तस्यैव मुख्यत्वात् लोकशास्त्रयोः तस्यैव पूजनप्रसिद्धेः पूजितस्य तस्याग्रे समुद्धरणात् तत्रैकदेशे स्वंवान्नकूट इत्यादिप्रसिद्धेश्च तन्नाम्ना महणम् अतिसन्निहितत्वेन व्रजाग्रिमदेशे तस्यैव श्रेयत्वात् तैरेव साध्यतामिति देवतानिराकरणेन इन्द्रस्याप्रयोजकतोक्तेः एवं द्रव्याहरणपरिश्रमाभावश्च सूचितः एतच्च तस्याधिक्योपजननार्थमेव. एवं पारम्पर्यागतधर्मपरिपालनमपि वृत्तम् अयोग्यप्रदानपरित्यागपूर्वकयोग्यसम्प्रदानमात्रग्रहणेनाविशेषात् प्रत्युत वैशिष्ट्याच्च ॥ २५ ॥

महेन्द्रयागादप्ययं मखो विशेषतः सम्पाद्य इत्याशयेन तद्विधिविशेषमुपदिशति, पच्यन्तामिति चतुर्भिः । पाकाः पचनीया भक्ष्यव्यञ्जनादयः सूपा व्यञ्जनानि आदिशब्देन गृहीतानामपि संयावादीनां पृथगुक्तिः प्राचुर्यापेक्षया सर्वदोहस्य विवरणं यथा हरिवंशे "त्रिरात्रं चैव सन्दोहः सर्वघोषस्य गृह्यताम्" इति अन्यत्तैः तत्र श्रुत्या आद्यन्तशब्दश्रवणानुरूपमित्यर्थः दोहस्य दुग्धस्य अर्थतः प्रयोजनवशात् प्रथमत इत्यर्थः ॥ २६ ॥

क्रमविधिमाह-हूयन्तामिति । वेदाभ्यासपरैर्ब्राह्मणैरग्नयः सम्यक् हूयन्तां यद्वा, सम्यग्भिर्ब्राह्मणैर्वैष्णवविप्रैरित्यर्थः । बहुत्वं* गार्हपत्यादिद्व्यपेक्षया दक्षिणाग्नेरपि तत्र रक्ष आदिहननापेक्षया ग्रहणं बहुगुणामिति बहुविधमिति वा पाठः ॥ २७ ॥

अन्येभ्य ऋत्विगितरेभ्यः विप्रेभ्यो वैष्णवेभ्यो दीनेभ्यो याचकेभ्यश्च किं विशेषनिर्देशेन श्वादीनभिव्याप्यैवान्नादिकं देयं यथार्हतो यथायोग्यं देयं केवलमिन्द्रं वर्जयित्वेति भावः गवां गोभ्यः बलिः गन्धपुष्पाद्युपचारः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माज्जीवनहेतूनां गवां ब्राह्मणानामस्मत्कुलमाश्रितानामद्रेस्तृणजलादिभिर्नित्यं गोवर्द्धनस्याद्रेश्च तुष्टयर्थं मखो याग आरभ्यताम् अनेन "अञ्जसा येन वर्तेत तदेवास्य हि दैवतम्" इत्यभिप्रेतं स्पष्टीकृतं कथमारम्भणीय इत्यत्राह—य इति । सम्भाराः साधनानि तैरयं वक्ष्यमाणविधिः साध्यताम् ॥ २५ ॥

अथमित्यनेनाभिप्रेतं प्रकारं दर्शयति—पच्यन्तामिति चतुर्भिः । पाकाः पच्यन्तां क्रियन्तां सूपपायसादिशब्दाक्तत्पाकपराः यद्वा पाकशब्दोऽत्र बहुलग्रहणादसंज्ञायामपि "अकर्तरि च कारके संज्ञायाम्" (३।३।१९) इति कर्मणि घञन्तः पक्तव्याः पच्यन्तां इत्यर्थः सूपान्ताः पायसादय इति पित्रर्थपाकक्रमविपर्ययद्योतनार्थमुक्तं तत्र सूपादयः पायसान्ता हि पच्यन्ते सम्यावादयो गोधूमादिविक्रियाः सर्वदोहः व्रजे कृत्स्नं क्षीरं गृह्यतां पायसाद्यर्थमेकत्र समुद्ध्रियतामित्यर्थः ॥ २६ ॥

तेभ्यो ब्राह्मणेभ्यो बहुगुणं बहुरसोपेतमन्नं वः युष्माभिः देयं यागशोभार्थं श्रद्धोत्पादनार्थञ्चाह—हूयन्तामिति । ब्रह्मवादिभिः ब्राह्मणैः सम्यक् यथावत् अग्नयः हूयन्ताम् धेनुसहिता दक्षिणाः ता एव दक्षिणा वा देयाः ॥ २७ ॥

श्वादिभ्योपि यथायोग्यमन्नादिकं देयं श्वपर्यन्ताः अन्नादिभिस्तर्पणीया इत्यर्थः । तथा गवां यवसं तृणं दत्त्वा गवामिति सम्प्रदानस्य शेषत्वविवक्षया षष्ठी गिरये गोवर्द्धनाय बलिर्दीयताम् ॥ २८ ॥

---

* गार्हपत्यादित्रयापेक्षया इति वङ्गाक्षरमुद्रितपुस्तके :

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ २५ ॥

सूपो मुद्गान्नम् अन्धः केवलान्नं संयावः भिन्नयवकृतः मुद्गभिन्नौदनो वा अपूपं पिष्टकृतं शष्कुली पैष्टिका मण्डलाकृतिः सर्वदोहः क्षीरदधितक्रादिकः ॥ २६ ॥

बहुगुणं षड्रसोपेतम् ॥ २७ ॥

यवसं तृणचूर्णिका गिरये गिरिसन्निहिताय तन्नाम्ने हरये ॥ २८ ॥ २९ ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादाजस्रियत्वात् अत्र सर्वत्र प्रसिद्धेः ब्राह्मणा अपि संग्रहीता देवतानां समुच्चयात् मखस्य चैकत्वात् देवतात्रयाराधनात्मक एवायं मखः तथापि गोवर्द्धनस्य माहात्म्यविशेषदर्शनात्तदीयता प्रसिद्धिः ॥ २५।२६ ॥

क्रमविधिमाह-हूयन्तामिति । स्वलङ्कृता इत्यादिकानि प्ररोचनार्थमुपलक्षणानि नतु विशेषणानि तानि विनापि फलसिद्धेः अतस्तत्तत्पूजानन्तरं तत्तत्प्रदक्षिणाभोजनानन्तरं श्रीगोवर्द्धनपरिक्रमः गोधनानि पुरस्कृत्येत्यादि पृथगुक्तेः ॥ २७—२९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

अतः वैष्णव एव यागः कर्त्तव्य इति वक्तव्ये गवां ब्राह्मणानामद्रेश्च मख आरभ्यतामित्याह—तस्मादिति यदि युक्तिरेव प्रमाणं तदा श्रुत्यनुसारिण्येषा भवतीति गिरिवनेचराणामेष एव याग उचितः चकारादन्यदेवताः सर्वा एव वैदिक्यः परिग्राह्याः अयमिति गोसत्रात्मकः अयाजयद्गोसवेनेति वाक्यात् गोसत्रादयमतिरिक्त एव लौकिकः अस्य विधानं भगवानेव वक्ष्यति अनेनैतदूज्ञापितं युक्तिसिद्धमपीश्वरयुक्तिसिद्धमेव ग्राह्यं न तु लौकिकयुक्तिसिद्धमिति ननु इन्द्रार्थं द्रव्याणि सम्पादितानि कथमेतैरन्यसाधनं तत्राह—य इन्द्रयागसम्भाराः आज्यादयः तैरेव अयं मखः साध्यतां मखपदेन च सर्वदेवोपकारो ज्ञापितः तत्र स्वेक एवेन्द्रः तुष्यतीति अज्ञानात् कृते सर्वत्रैवं व्यवस्था अन्यस्मै दत्तमपि हविराच्छिद्यान्यस्मै देयमिति यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तन्दुलान्विभजेद्ये मध्यमाः स्युः स्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् ये स्थविष्ठास्तानिन्द्राय प्रदात्र इत्याद्यभ्युदयेष्टौ कालभ्रमात्प्रवृत्ता इष्टिरन्यथा क्रियते तथा प्रकृतेपि युक्तिभ्रमात् इन्द्रार्थमपि संभृताः अन्यार्थमेव कर्त्तव्याः ॥ २५ ॥

तस्माद्यागादत्र विशेषमाह——पच्यन्तामिति । लौकिकोत्सवपुरःसरे तु प्राकृतानां महानुत्साहो भवतीति स्त्रीणामप्यत्रोपकारो भवतीति च विविधाः पाका भर्जनजलपचनतैलघृतदुग्धदध्यादिषु च पाकाः परिगृहीताः तेन नानाविधानि भक्ष्याणि सेत्स्यन्ति तेषां सर्वेषामन्ते सूपः कर्त्तव्यः पक्वान्नादीनां करणे क्षुधाऽऽकालो लगति अतः प्रथमतः सूपकरणे सोष्णतामापद्यते पायसं हि बहुदुग्धे अल्पीयांसस्तण्डुला दत्ता अल्पाग्नावेव पच्यमाना महता कालेन पच्यन्त इति पायसमादौ कर्त्तव्यं अथवा देवानां प्रथमतः पाकः मध्ये लौकिकानां महतां प्राकृतानां सूपमात्रमिति ततो यत्कर्त्तव्यं तदाह, संयावः गोधूमचूर्णसारांशाः पूर्वदिवस एव पच्यमाना महता कालेन सिद्धा भवन्ति सोऽपि ग्राह्यः अपूपाः गुडमिश्रितपूर्णनिष्पादिताः पाकाः स्नेहद्रव्येषु शष्कुल्यः नालाकारेण भ्रमद्कुण्डलाः भक्ष्यविशेषाः सर्व एवाद्यतनो दोहः गृह्यतां दुग्धस्य विक्रयादि विनियोगो न कर्त्तव्यः चकारात् अशक्यं वत्सेभ्य एव देयमिति ॥ २६ ॥

ततः अलौकिको देवानामर्थे होमः कर्त्तव्य इति सम्यक्विधानपूर्वकं ब्राह्मणाः स्वरूपत उत्तमाः ब्रह्मवादिनो ज्ञानतः ततो होमानन्तरं प्रत्यक्षदेवता ब्राह्मणा इति तेभ्यः अन्नं बहुविधं पक्वान्नादिसहितं देयं वो युष्माभिः युष्माकं वा एतत् कर्त्तव्यं ब्राह्मणान् प्रति वो युष्मभ्यमिति धेनवश्च दक्षिणात्वेन देयाः ॥ २७ ॥

तत अन्येभ्यो देयमित्याह-अन्येभ्य इति । क्षत्रियवैश्यादिवर्णेभ्यः ततः श्वचाण्डालपतितेभ्यश्च एते वहिर्बलिभुजः अतोऽन्ते अदक्षत्वात् निरूपिताः श्वचाण्डालपतितवायसेभ्यो बलिरिति पर यथायोग्यं ततो गोभ्यो यवसं देयं चारणार्थं न प्रस्थापनीया ततो गिरये पर्वताय बलिर्देयः सर्वमेवान्नमुत्तमं पर्वतसमीपे राशीभूतं कर्त्तव्यम् ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्राह्मणानामाशिषोऽस्माकं अव्यक्षफला इति तेऽपि पूज्या इति स्वमते तानप्यनुकूलयन्नाह—तस्मादिति।सम्भाराः साधनानि॥२५॥

पाका अन्नव्यञ्जनादयः सूपान्ता इति सूपस्यौष्ण्यं पायसादय इति पायसस्य शैत्यमपेक्षितं भवतीति भावः। संयावादयो गोधूमादिविक्रियाः सर्वेषामेव व्रजवासिनां दोहः दोहोत्थदुग्धदध्यादिसञ्चयः ॥ २६ ॥

यागशोभार्थं भक्ष्योत्पादनार्थं चाह—हूयन्तामिति। धेनुसहिता दक्षिणाः वो युष्माभिः ॥ २७ ॥

स्वमते अन्त्यजपर्यन्तान् सर्वानेव व्रजवासिनोऽनुकूलयन्नाह—अन्येभ्य इति। बलिः गन्धपुष्पाद्युपचारः ॥२८—२९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मात् गवादीनां मखः आरभ्यतां सम्भारा साधनानि ॥ २५ ॥

पच्यन्तां क्रियन्ताम् ॥ २६ ॥

वो युष्माभिः ॥ २७ ॥

यवसं तृणम् ॥ २८ ॥ २९ ॥

---

स्वलङ्कृता भुक्तवन्तः स्वनुलिप्ताः सुवाससः ।
प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥ २९ ॥
एतन्मम मतं तात! क्रियतां यदि रोचते ।
अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥ ३० ॥
श्रीशुक उवाच ।
कालात्मना भगवता शक्रदर्पजिघांसता ।
प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥ ३१ ॥
तथा च व्यदधुः सर्वं यथाह मधुसूदनः ।
वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥ ३२ ॥

भाषा टीका ।

तातें गौ ब्राह्मण और गोवर्धन पर्वत इनके यज्ञको प्रारम्भ करो श्रीकृष्णकी या बातको सुनके नन्दराय बोले, कि–लाला! तू जो यह कहै बाऊ को कर देंगे, नेक इन्द्रकौ यज्ञ होय जानदे, तब श्रीकृष्ण बोले कि—नहीं बाबा! जो इन्द्रके यज्ञकी सामग्री तैयार कीनी हैं तिनही तें या यज्ञको आरम्भ करो ॥ २५ ॥

वृद्धगोपनने पूछी कि लाला! यायज्ञकी कैसी विधि है, तब कृष्ण बोले कि मैंइतो कहूहूं कि—नाना तरह के पकान्न बनवाओ सबते पहिले खीर और सबते पीछें दाल और बीचमें मोहनभोग पूआ पूरी तैयार करो और सम्पूर्ण दूध इकठौरो करो ॥ २६ ॥

और जो वेद पढन वारे ब्राह्मण हैं ते भली भांति अग्नि में हवन करें, तिन ब्राह्मणन को बहुत गुण वारो अन्न देओ, और गऊन को दान करो, और बहुत सी दक्षिणा देओ ॥ २७ ॥

और कुत्ता चाण्डालसोंलेकें पतित पर्यन्त सबकों यथायोग्य भोजन कराओ गऊन कों घास देके गोवर्धन पर्वत को बलिदेओ ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वान् शिरः कम्पेनानुमोदयन्नाह–गोब्राह्मणाद्रीणामिति । मह्यं मम च ॥ ३० ॥ ३१ ॥

तद्द्रव्येण तेन महेन्द्रमखद्रव्येण गिरिद्विजान् प्रति यथायथम् ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न चाप्यकृत्यवदिदं दुःखसाध्यं किन्तु परमसुखमयमेवेत्याह, स्वलामिति । भुक्तवन्त इत्यत्र प्राक् पश्चादिव सुखप्रयोगो हरिद्र प्रत्येव तद्वचनौचित्यात् यद्यप्येकदैवात्र गवादीनां परिक्रमविधानं तथापि तत्पूजान्ते पृथक् पृथगेव ज्ञेयं पूजान्तकर्त्तव्यत्वात् तस्य अत एव "गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम्" इति गिरेः परिक्रमः पृथगेव वक्ष्यते उदाहरिष्यमाणा हरिवंशवचनेन च नान्यथार्थः कल्प्यते स्वलङ्कृता इत्यादिकानि तु न विशेषणानि किन्तु प्ररोचनार्थमुपलक्षणानि ततो नाङ्गत्वं प्रविशन्ति तदभावेपि तन्निःस्पृहत्वेपि तत्सिद्धेः तस्मात् गवादीनां भोजनात् पूर्वमेव परिक्रमः अद्रेस्तु महाभोजनसमाधानाथैव तत्पश्चादिति गवां च पूजा न सर्वासाम् असङ्ख्यत्वात् किन्तु मुख्यानामेव ततस्तासां परिक्रमश्चाल्प इति ॥ २९ ॥

हे तातेति यदि मयि स्नेहो वर्त्तते तर्हि क्रियतामिति गूढो भावः यदि रोचत इति पूज्येषु तथैवोक्तेर्योग्यत्वात् तेन च विनयविशेषेण तत्कृत्यतामेव सम्पादयति । किञ्च, अयं गोब्राह्मणाद्रीणां मखः मह्यं च दयितो हित इत्यर्थः । हितार्थयोगेहि चतुर्थी भवति कथमपि स्वहितं ज्ञात्वा मद्धितस्यैव च भगवदेककर्त्तव्यतामनुभूय भवतामिदं प्रार्थये न केवलं युक्ततामेव निश्चित्येति भावः ॥ ३० ॥

कालस्यापि आत्मना प्रवर्त्तकेनेति सर्वेषां तदेकाधीनत्वं सूचितम् अथं च तद्वचो ग्रहणे हेतुः यद्वा, परमशक्तिमत्त्वम् अत इन्द्रदर्पहननिस्तस्यैवस्कर इति भावः यद्वा, यदा शक्रयागः प्रवर्त्तितः तदानीं स एव प्रवृत्तः अधुना चायमेवेति तदिच्छयैव सर्वं प्रवर्त्तते तामतिक्रमितुं कः शक्नोतीति भावः यद्वा कालः श्यामल आत्मा देहो यस्येति श्यामसुन्दरोऽस्यार्थः । तत्सौन्दर्येण सर्वे वशीकृताः किं पुनर्वचनेनेति भावः यद्वा, कलयति जगच्चित्तमाकर्षतीति कालः आत्मा स्वभावो यस्य तत्तद्वचनाङ्गीकरणमिदं न चित्रमिति भावः । शक्रस्य यो दर्पः पूज्यमानत्वादपि स्वपित्रादिषु प्राकृतगोपदृष्ट्या तेषां सम्बन्धेन स्वस्मिन्नपि मर्त्यदृष्ट्या वाङ्मनादरात्मकः स एव "अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् । कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥ इति प्राकट्यं लप्स्यमानः तस्य स्वयम् ज्ञायमानस्य जिघांसया अत एव मन्युं जनयन्नित्युक्तम्, अन्यथा भयमेव स्यात् न मन्युः मन्युजननं चेदं तत्सम्बन्धेनैवै तदत्यन्तकदर्थनेच्छयेति ॥ ३१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एवाह—तथाचेत्यर्द्धकेन । तद्विशेषश्च श्रीहरिवंशे—

"आनन्दजननो घोषो महान् मुदितगोकुलः ।
तूर्य्यप्रणादघोषश्च वृषभाणां च गर्जितैः ॥
हम्भारवश्च वत्सानां गोपानां हर्षवर्द्धनः ।
दध्नो ह्रदः सरावर्त्तः पयःकुल्यासमाकुलः" ॥

इत्यादि मधुसूदन इति परमसामर्थ्यसूचनेन शक्रात्तेषां भयाभावं बोधयति श्लेषेण मधुपवत् सारग्राहीमिष्टरसस्य विशेषेण भोक्ता चेति तस्य प्रियतमदासवर्गमखप्रवर्त्तनं तत्र च वक्ष्यमाणातद्बलिभोजनादिकं युज्यत एवेति भावः वाचयित्वेति सार्द्धद्वयकेन सङ्कल्पस्यैवानूद्यते क्रमस्तु श्रीकृष्णोक्तविध्यनुसारेणैव ज्ञेयः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

शोभनानि वासांसि येषां तथाभूताः गवादीन् प्रदक्षिणं कुरुत ॥ २९ ॥

हे तात ! एतदेवम्विधं कर्मास्माभिः कर्त्तव्यत्वेन मम सम्मतं यदीदं रोचते तर्हि क्रियताम् अयं मदुक्तो मखो गवादीनां मह्यं मम च दयितः प्रियः गवाद्यन्तरात्मनो मम प्रीतिकर इति गूढोऽभिप्रायः ॥ ३० ॥

शक्रस्य दर्पनाशं चिकीर्षता कालात्मना कालरूपेण बहिः कालरूपेणान्तः पुरुषरूपेण च नियमयतेति भावः । तेन भगवता प्रोक्तं निशम्यातद्विदः शक्रदर्पजिघांसामजानाना अपि नन्दाद्यास्तत् साध्वगृह्णन्नभ्युपजग्मुः ॥ ३१ ॥

ततो यथोक्तं चक्रुः तदेवाह—वाचयित्वेति । स्वस्त्ययनं पुण्याहं तद्द्रव्येण इन्द्रयागार्थद्रव्येण गिरिं द्विजांश्चोद्दिश्य ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शक्रदर्पजिघांसया शक्रादिदेवानाम् असुरावेशाद्दर्पाधिकं भवति तदनुग्रहार्थं तद्दर्पादिहननेच्छया तदुक्तम् अत्यल्पस्त्वसुरावेशो देवानां च भविष्यतीति ॥ ३१—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयं गवादीनां मखो मह्यं मम च दयितो हितः शक्रस्य दर्पोऽपं श्रीगोकुले श्रीकृष्णेच अवज्ञात्मकः अहो श्रीमद्माहात्म्यमित्यादिना व्यक्तीभावित्वात् ॥ ३० ॥ ३१ ॥

वाचयित्वादिकम् अनुवादमात्रं न क्रमतात्पर्यकम् ॥ ३२॥३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सर्वे एव वयं स्त्रियो बालाश्च स्वलङ्कृताः भुक्तवन्तः कृतभोजनाः ततश्चन्दनादिलेपनयुक्ताः तत उत्तमकञ्चुकादिवस्त्राणि परिधाय गोवर्द्धनस्य प्रदक्षिणं कुरुत चकाराद्वृन्दावनस्यापि गवां विप्राणामग्नीनां च प्रदक्षिणं च कर्त्तव्यं एवेता अन्येऽपि तत्समीपस्थाः आचाराद्गोवर्द्धन एव वा ॥ २९ ॥

ननु, किमेतद्वैदिकम्? वैदिकादिष्वन्यतरदाहोस्विद्युक्तिसिद्धं केवलयुक्तिसिद्धत्वे पूर्वयुक्तिसिद्धम् इन्द्रयाग एव कथं न क्रियत इत्याशङ्क्याह—एतन्ममतामिति। भवद्भिरिन्द्रो वा अहं वा परिग्राह्यः मत्परिग्रहे एतन्मम मतङ्कर्त्तव्यं इन्द्रपरिग्रहे तु इन्द्रयागः कर्त्तव्यः तात इति सम्बोधनात् अत्र स्नेहोऽप्यधिकः सेत्स्यति अतः क्रियतां तथापि निर्बन्धेन न कर्त्तव्यं तथा सत्यभक्त्याकृतमकृतं स्यात् । किं च, अयं यागः गवां ब्राह्मणादीनां मम च दयितः चकाराद्देवानामपि प्रियश्चायं यागः यतो मह्यं मत्सम्प्रदानकमेव एवं सर्वथा तत्परित्यागेनैतत्कर्त्तव्यमिति ज्ञापितम् ॥ ३० ॥

हृदयपूर्वकं भगवता आज्ञापितमिति तेषां हृदये समागतमिति वदन् तथा कथने हेतुमाह—कालात्मनेति । अयं दुष्टनिराकरणार्थं कालात्मा जातः कालस्य आत्मा आधिदैविकरूपः अन्तर्यामी वा जातः तादृशोऽपि न स्वरूपात् प्रच्युत इत्याह—भगवतेति। तथाऽकथने हेतुः शक्रदर्पञ्जिघांसतेति गर्वस्तस्य दूरीकर्त्तव्यस्तदुपकारार्थं समागते भगवति तेनावश्यमनुवृत्तिः कर्त्तव्या तथासति लीला पुष्टा भवति भूयांश्च निरोधः कर्त्तव्यो न भवति अनुवृत्त्यकरणं च गर्वात् ऐश्वर्यम् तत्र हेतुः आधिकारित्वाच्च निराकर्तव्यम् अतो भ्रमणाख्यप्राप्तमेव तस्य निराकृतवान् अतस्तेन प्रोक्तं निशम्य साधनं श्रुत्वा मुख्या एव नन्दाद्याः साधु तद्वाक्यं यथा भवति तथा अगृह्णन्त तदुक्तोऽर्थोऽङ्गीकृतः ॥ ३१ ॥

ततस्तथैव कृतवन्त इत्याह—तथाचेति । विधानपूर्वकं कृतवन्त इति वक्तुं वाचयित्वा स्वस्त्ययनमित्युक्तवान् स्वस्तिवाचन पुण्याहवाचनं ततः पूजनामर्चां ब्राह्मणानिव निमन्त्रणप्रथमेतत् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मह्यं मम ॥ ३० ॥

कालात्मना इन्द्रमखसंहारकेण ॥ ३१ ॥

तद्द्रव्येण इन्द्रमखद्रव्येण गिरिद्विजान् गिरये द्विजेभ्यश्च ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपदिष्टार्थमुपसंहरति—एतदिति । परमां सर्वयज्ञदेवतां शनैः सूचयति—मह्यमिति ॥ ३० ॥

कालात्मना कालशक्तिना ॥ ३१ ॥

गिरिद्विजान् प्रति ॥ ३२ ॥

---

भाषा टीका ।

सुन्दर वस्त्र आभूषणनकूं पहिरकें शृङ्गार करिकें भोजन करिकें गौ ब्राह्मण अग्नि और गिरिराज की परिक्रमा करो ॥ २९ ॥

उपहृत्य बलीन् सर्वानादृता यवसं गवाम् ।
गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥
अनांस्यनडुद्युक्तानि ते चारुह्य स्वलङ्कृताः ।
गोप्यश्च कृष्णवीर्याणि गायन्त्यः सद्विजाशिषः ॥ ३४ ॥
कृष्णस्त्वन्यतमं रूपं गोपविश्रम्भणं गतः ।
शैलोऽस्मीति ब्रुवन् भूरि बलिमादद्बृहद्वपुः ॥ ३५ ॥
तस्मै नमो व्रजजनैः स चक्रे आत्मनात्मने ।
अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधात् ॥ ३६ ॥

भाषाटीका

हे पितः! यह मेरी सलाह है जो तुम को रुचे तो करो यह यज्ञ गौ ब्राह्मण गोवर्द्धन पर्वत कूं और मोकूं प्यारो है ॥३०॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-इन्द्र को गर्व दूर करवे को कालरूप भगवान् नेजो कह्यो ताकूं सुनकर नन्द तें आदि लेकें सबरे व्रज वासी कृष्ण को वचन भले प्रकार मानत भये ॥ ३१ ॥

सगरे व्रजवासी जैसे मधुसूदन नें कही तैसेही करत भये ब्राह्मणन सू स्वस्ति वाचन कराय कें पूजा की सामग्री तें गिरिराज की पूजा करत भये ॥३२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बलीनुपहृत्य दत्त्वा आदृताः सादराः ॥ ३३ ॥

अनडुद्युक्तान्युत्तमानडुद्भिर्युक्तानि सद्विजाशिषो द्विजाशीर्भिः सहिताः ॥ ३४ ॥

गोपविश्रम्भणं गोपानां विश्वासजनकं रूपं गतः प्राप्तः सन् बलिमुपहारमाददभक्षयत् ॥ ३५ ॥

तस्मै आत्मने आत्मना स्वयं व्रजजनैः सह नमश्चक्रे अहो इति सार्धश्लोकं पठन् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आदृता इति कर्तव्यांपेम ॥ ३३ ॥

कथं चक्रु रित्याह—अनांसीति । तद्विशेषश्चोक्तो हरिवंशे—
"ततो नीराजनार्थं वै वृन्दशो गोकुलानि वै ।
परिचक्रुर्गिरिवरं सवृषाणि समन्ततः ॥
ता गावः प्रद्रुता हृष्टाः सापीडकनकाङ्गदाः ।
सस्रगापीडशृङ्गाग्राः शतशोऽथ सहस्रशः ॥
अनुजग्मुश्च गोपालाः कालयन्तो धनानि च ।
भक्तिच्छेदानुलिप्ताङ्गा रक्तपीतासिताम्बराः ॥
मायूरचित्राङ्गदिनो भुजैः प्रहरणावृतैः ।
मयूरपत्रचित्रैश्च केशबन्धैः सुयोजितैः ॥
बभ्राजुरधिकं गोपाः समवाये तदा तु ते ।
अन्ये वृषानारुरुहुर्नृत्यन्ति स्म परे मुदा ॥
गोपालास्त्वपरे गाधं जगृहुर्वेगगामिनः" । इति ।

अत्र गोकुलानीति गोकुलस्था जना इत्यर्थः । सवृषाणीति तानि च निजनिजश्रेष्ठैः सह वर्तमानानीत्यर्थः । गोप्यश्चानांस्यारुह्य प्रदक्षिणां चक्रुः चकाराश्चयामुभयेषामपि प्राधान्येन परिक्रमणे निर्विशेषमुक्त्वा श्रीगोपीनां कश्चिद्विशेषमाह कृष्णस्य वीर्याणि श्रीगोवर्द्धनयज्ञप्रवर्तनान्तानि गायन्त्य इति सद्विजाशिष इत्यनेन विप्रा अपि सस्त्रीकाः प्रदक्षिणं चक्रुरिति सूच्यते ॥ ३४ ॥

इन्द्रयागादपि स्वप्रवर्तितयागस्यास्य परमोत्तमत्वं दर्शयन् तस्मिन् विश्वासं नितरां जनयन् गोवर्द्धनगिरेण पृथक् स्वयं तन्मूर्तिराविर्भूय तद्बलिस्वामिनं निजदासवर्यं तं गोपांश्च सर्वानानन्दयन् बलिदानानन्तरमेव साक्षात् तद्बलिं बुभुज इत्याह—कृष्णस्त्विति । तुशब्दः पूर्वतो विशेषे अन्यतममिति बहूनां प्रकर्षेण सन्निधानात् अतस्तदा सर्वकर्मसमाधानार्थं सर्वगोपगोष्ठी सन्तोषार्थमलक्षितं बहूनि रूपाण्याविष्कृतानि इति लभ्यते तस्मिन् प्रकर्षेश्च बृहत्त्वापेक्षयेति रूपमाकारम् अत एव बृहद्वपुस्त्वं तत्र अत एव भूरिं प्रचुरतरमपि बलिं तं सर्वमेव अभुङ्क्त एवं सर्वगोकुलवासिनां शाश्वत्प्रेमेच्छातस्तस्य च तथाभिलाषातस्तथा भोजनमिति च ज्ञेयम् । तदुक्तं हरिवंशे—
तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् ।
गिरिमूर्ध्नि स्थितं दृष्ट्वा हृष्टाः जग्मुः प्रधानतः" ॥
इति ॥ ३५ ॥

तस्मा इत्यर्द्धकम् । कृष्ण इत्यनुवर्त्तते व्रजजनैः सहेति व्रजजनानामप्राधान्यं व्यज्य कृष्णस्य भक्त्यतिशयव्यञ्जकत्वं दर्शितं चक्रे आत्मनेति आकारेऽपि परे पूर्वरूपत्वमार्षम् आत्मना स्वयमेव तत्र नानाजनवचनं अहो इति सार्द्धकम् रूपी प्रत्यक्षः सन्नित्यर्थः । अनुग्रहं व्यधात् रूपित्वेन साक्षाद्बलग्रहणादिना च ॥ ३६ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

याहि गवां यवसं च समर्प्य सर्वे नन्दादयः आदरयुक्ता गोधनान्यग्रतः कृत्वा प्रदक्षिणां च चक्रुः ॥ ३३ ॥

अनडुद्युक्तानि वृषभयुक्तान्यनांसि शकटान्यारुह्य ते नन्दादयस्तथा स्वलङ्कृता गोप्यश्च द्विजानामाशीर्वादसहिताः कृष्णस्य चेष्टितानि गायन्त्यो गिरिं प्रदक्षिणां चक्रुरित्यन्वयः । कथमयमचेतनो गिरिर्बलिं गृह्णाति कथन्तरामस्माननुगृह्णाति चेत्यादिरूपां नन्दादीनामाशङ्कामपनुदन् कृष्णः स्वयं गोपानां विश्वासकरं तन्मध्यगतमेकमन्यच्च रूपं प्राप्तस्तत्र प्रहृष्टपुष्मान् गिरेर्मूर्ध्नि स्थित्वा शैलोऽस्मीति ब्रुवन्बलिं स्वीकुर्वन् ॥ ३४—३५ ॥

पुनर्गोपमध्यगतेन रूपेण अहो इत्यादिना सार्द्धश्लोकं पठन् गोपजनैः सह महात्मने बृहद्वपुषे स्वस्मा एव तस्मै गिरिरूपाय नमश्चक्रुरित्यन्वयः । अहो इति अहो गोपाः पश्यतासौ शैलः रूपी अस्मदुपहृतबल्यादानोपयुक्तरूपधरः नोऽस्माकमनुग्रहं व्यधादकरोत् ॥ ३६ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपविश्रम्भणं गोपानां विश्वासकरम् आदत् भक्षितवान् ॥ ३५ ॥

तस्मै आत्मने पर्वतरूपिणे सङ्कल्प्य नमनमिति तत्राह—अहो इति ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्यतममिति तमपलक्ष्येन तदानीं तत्तत्समाधानार्थं अन्यान्यपि बहूनि रूपाणि प्रादुष्कृतानीति लभ्यते बहूनां प्रकर्षे तमप्प्रत्ययश्च बृहत्त्वमात्रेण ॥ ३५—३८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सर्वानेव बलीनुपहृत्य अग्निभ्यो दिग्देवताभ्यः तदङ्गेभ्यश्च यथोक्तप्रकारेण बलीन् दत्त्वा पूजाप्रकारानुपहारांश्च ततः स्वयमप्यत्यादरयुक्ताः गोधनान्यग्रे कृत्वा गिरिं प्रदक्षिणं चक्रुः प्रकर्षेण दक्षिणो यथा भवति तथा यद्यपि सामान्यकथनेनैव विशेषः समायाति तथाप्यन्यूनातिरिक्तं कृतमिति वक्तुं विशेष उच्यते ॥ ३३ ॥

प्रदक्षिणायां विशेषमाह—अनांसीति । अन्यथा क्लेशः स्यात् भगवत्परता च न स्यात् अतः अनांसि अनडुद्युक्तानि कृतानि ततः अनांस्यलङ्कृतानि अनडुहश्च ते गोपाश्च तान्यारुह्य चकारादनारुह्यापि अन्यान्वा आरोप्य सुष्ठु अलङ्कृता जाता ये अलङ्कारा अधो न भवन्ति गोप्योऽप्यारुह्य प्रदक्षिणां चक्रुरिति सम्बन्धः । चकारादन्याश्च स्त्रियः कृष्णस्य सदानन्दस्य स्वार्थमेवावतीर्णस्य वीर्याणि पूतनानिराकरणादीनि गायन्त्यो जाताः अनेन कर्मणः वैफल्यं च निराकृतं सत्यो द्विजाशिषश्च जाताः सर्वान्द्विजान् सर्वान्वा भगवदीयानां द्विजानाञ्च अन्नेनाऽस्मिन्यागे ब्राह्मणानामसन्तोषः स्त्रीणां चेति निरूपितम् ॥ ३४ ॥

ते हि प्राकृता गोपाला दृष्टमेव मन्यन्ते अतो विश्वासार्थं रूपान्तरं कृतवानित्याह—कृष्णस्त्विति । अत्यन्तमन्योऽन्यतमः अस्माद्रूपादतिविलक्षणः अतिस्थूलः रूपान्तरमेव तत्पर्वतस्याधिदैविकं रूपमिति पक्षं व्यावर्त्तयति तुशब्दः गोपानां विश्रम्भणं विश्वासं गतः विश्वासो यत्र तादृशे रूपे दृष्ट एव तेषां विश्वास इति विश्वासो भगवद्विषयक इति तदा दत्तं बलिं बुभुजे तदा गोपैः कस्त्वमिति पृष्टः शैलोऽस्मीति वदन् इतिशब्दः प्रकारवाची कञ्चित् प्रति गोवर्द्धनोऽस्मीति कञ्चित् प्रति शैलोऽस्मि कञ्चित् प्रति पर्वतोऽस्मीत्येवं वदन् एवं भूरिबलिमादत् पक्वान्नादिकं बहु भक्षितवान् पर्वतस्थान् सर्वानेव तर्पितवान् ॥ ३५ ॥

ततः कश्चित् संदेहोऽपि भवेदिति सर्वान् प्रदर्श्य नमस्कारं करोति—तस्मा इति । व्रजजनैः सह तस्मै नमश्चक्रे आत्मना स्वेनैव आत्मने स्वस्मै आकारस्त्वत्र वैदिक प्रक्रियया लुप्तः "मन्त्रेष्वाङ्यादेरात्मनः ६।४।१४१ इति सूत्रात् मन्त्रेषु आङि परे त्वात्मन् शब्दस्यादे वर्णस्याकारस्य लोपो भवतीत्यर्थः । आत्मनेति द्वारान्तरनिषेधाय स्वरूपस्य करणता तत्र तत्र स्थिता माया अपसारितेति ज्ञापयितुमात्मन इत्युक्तं सर्वथा तद्दैवतादिति वचनमप्याह—अहो पश्यतेति । असौ शैलः सर्वात्मकत्वात् आनन्दमयबीजस्य तथात्वात् अतस्तत्रात्मनैव व्यपदिश्यते पश्यतेति प्रबोधनं विशेषज्ञापनार्थं प्रमाणवस्तु परतन्त्रेऽपि सावधानैर्भवद्भिर्युक्त एव. ननु, शैलो गोवर्द्धनः पृथक् दृश्यते कथमसौ शैल ? इति तत्राह—रूपीति । रूपमस्यास्तीति असौ रूपवान् कामरूपो ह्ययम् अतो भवतां सन्तोषार्थम् एतादृशरूपं कृत्वा भुङ्क्त इत्यर्थः ॥ ३६ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तद्दूर्व्यया इन्द्रमखद्रव्येण गिरिद्विजान् गिरये द्विजेभ्यश्च उपहृत्य दत्त्वा आहृताः कृष्णेन गवां गोभ्यः अनडुद्भिरनोदर्कैर्वृषैर्युक्तानि ते गोपाश्च गोप्यश्च प्रदक्षिणां चक्रुः सद्विजाशिषः गीयमानाभिर्द्विजाशीर्भिः सहिता द्विजकर्त्तृकाशिषोऽपि गायन्त्य इत्यर्थः ॥ ३३—३४ ॥

स्वप्रवर्त्तितयागस्यासाधारणमुत्कर्षं दर्शयंस्तत्र सर्वेषां विश्वासं जनयन् स्वयमेव देवतारूपेण प्रत्यक्षीबभूवेत्याह—कृष्णस्त्विति । अन्यतमं गोवर्द्धनपर्वतोपरि द्वितीयं पर्वतमिव सर्वाङ्गयवत् स्वरूपं गतः प्राप्तः गोपानां विश्रम्भणं पर्वत एवायमिति विश्वासो यत्र तत् शैलोऽस्मीति एतद्देशाधिपतिरहमेव युष्मद्भक्त्या प्रसन्नः प्रादुर्भूतः स्वस्वाभिमतं वरं वृणुतेति विब्रुवन् बलिं नैवेद्यं दूरस्थैर्निकटस्थैः नन्दग्रामादिवासिभिर्नो व्रजवासिजनैरपरोक्षतः परोक्षतो वा ध्यानेन समर्प्यमाणं सहस्रकोटिहस्तस्तत्तत्स्थानादतिदीर्घोनतिदीर्घीकृतपाणिभिरादाय तांस्तानानन्दयन्नादत् भुङ्क्ते स्म ॥ ३५ ॥

ततश्च तस्मै आत्मने आत्मना देहेन स्वयं व्रजजनैः सह चक्रे आत्मने इत्याकारलोप आर्षः अहो इति सार्द्धश्लोकं पठन् ॥ ३६ ॥

---

एषोऽवजानतो मर्त्यान् कामरूपी वनौकसः।
हन्ति ह्यस्मै नमस्यामः शर्मणे आत्मनो गवाम् ॥ ३७ ॥
इत्यद्रिगोद्विजमखं वासुदेवप्रणोदिताः।
यथा विधाय ते गोपाः सह कृष्णा व्रजं ययुः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे इन्द्रमखभङ्गो नाम
चतुर्विंशतितमोऽध्यायः ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उपहृत्य दत्त्वा ॥ ३३ ॥

सद्द्विजाशिषः द्विजाशीर्भिः सहिताः ॥ ३४ ॥

गोपविश्रम्भणं गोपविश्वासकरं गतः प्राप्तः भूरि बलिं बहूपहारम् आदत् अखादत् ॥ ३५ ॥ ३६ ॥

---

### भाषा टीका।

गोवर्द्धन और ब्राह्मणन कूं बडे आदरतें बलि भेट लायकें गऊन कों सुन्दर घास देकें गोधन कूं आगे करिकें गिरिराज की परिक्रमा करत भये ॥ ३३ ॥

गोपी सुन्दर अलंकार करकें बैल जुडे भये गाडान पै बैठिकें कृष्ण चरितन कों गावती जांय हैं ब्राह्मण आशीर्वाद देत जांय हैं ॥ ३४ ॥

इतने में श्रीकृष्ण गोपन के विश्वास के तांई एक दूसरो बडो रूप धारण करकें बोलत भये, कि—मैंहूं गिरिराज हूं ऐसे कहत भये, और बलि कों लेकें भोजन करत भये ॥३५॥

और श्रीकृष्णचन्द्र वा रूप कूं व्रज वासिन के साथ अपन कूं आपही नमस्कार करत भये और बोले, कि—अहो आश्चर्य है देखो ये गिरिराज हैं इतने रूप धारण करके हम सबन पै बडो अनुग्रह कीनो है ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

कामरूपी सर्पादिरूपः अस्मै अद्रये शर्मणे क्षेमाय ॥ ३७ ॥

कर्मैवाखं प्राकृतस्वभावो गुणो वा कर्माङ्गं वा तद्वशो वा महेशः। वार्ताकर्त्री देवतेतीयमुक्ता देवस्त्रोमेघयमतीनरथभीष्टा ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अभक्तांश्च निहन्तीत्याह—एष इति। अवजानतः अवज्ञां कुर्वतः सर्वेषां साक्षात्तावदशेषयक्षेः स्वयमेव भक्षणं दृष्टेति भावः। यद्वा, यागाकरणेनानादरं कुर्वन् इति पुनः पुनस्तद्यागोऽभिप्रेतः मर्त्यान् मरणशीलान् तथापि वनौकसः गृहद्वाराद्यावरणशून्यानिति हनने सुकरत्वं दर्शितम् हे वनौकस इति वा चकाराद्गवादीनां रोगोत्पादनादिना पीडयति चेति पाठान्तरे हि यस्मात् हन्ति अतो वयं नमस्यामः वन्देमहि आत्मनो गवां च शर्मणे। यद्वा, आत्मनो वा गावस्तासामिति गवां शर्मणेव तेषां जीवनसिद्धेः अत्र पित्रादिष्वपि नमस्कारप्रेरणेयं तेन कंपयाववतारान्तरेणैव पुत्रत्वाभावाच्च विरुद्धा नारायणादिषु तेषां तथा व्यवहारात् एतदनन्तरं साक्षात्तस्य वृहन्मूर्त्तेरादेशश्च श्रीहरिवंशे—

> अद्य प्रभृति चेज्योऽहं गोषु चेदस्ति वो दया।
> अहं वः प्रथमो देवः सर्वकामकरः शुभः ॥
> मम प्रभावाच्च गवामयुतान्येव भोक्ष्यथ।
> शिवश्च वो भविष्यामि मद्भक्तानां वने वने ॥
> रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा।
> ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः ॥
> एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनम्।
> पर्याप्नुवन्तु क्षिप्रं मां गावो वत्ससमाकुलाः ॥
> एवं मम परा प्रीतिर्भविष्यति न संशयः। इति ॥ ३७ ॥

वासुदेवेन सर्वाधिष्ठात्रा प्रचोदिता इति तेषां तदुपदिष्टविध्यनतिक्रमः तत्र सर्वात्मना सुखसम्पत्तिविशेषोऽपि दर्शितः यथा यथावत् सहकृष्णा कृष्णेन सहिता इति प्रीतिविशेषोदयेन त्यक्तुमशक्यत्वेन मिलित्वैव गोवर्द्धनस्थानकोशस्य श्रीराधाकुण्डात् क्रोशैकोपरि स्थितं व्रजं ययुरित्यर्थः। इत्थं देवतानिराकरणकर्मवादावतारणेन कर्मणां प्राधान्यं स्थापितं तत्र संस्कारवशेनैव कर्म प्रवर्त्तत इति संस्कारस्य कर्ममूलकत्वेन कर्मनिष्ठैर्याभिप्रेता अतोऽन्तर्यामिणाऽन्यथा प्रेर्यते तथानुष्ठीयत इति न्यायेनाघटमाना कर्मणां शास्त्रैरपि परिहृता तत्र च सत्त्वादिगुणस्वभावेन जीविकावद्धं स्थितावित्यर्थप्रयासाभावेन कदाचित् कर्मक्षेपश्च निरस्तः योगक्षेमकर्त्तृत्वोपपत्तेश्च

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यज्ञपूजोक्तेः इति सर्वथा कर्मणां प्राधान्यमेव दृढीकृतं तच्च सर्वमशेषकर्मप्रधाननिजभक्तिपरतार्थमेव भक्तिपरतायाश्च मुख्य खल्वयं तद्भक्तार्चनम् इति हरिदासश्रीगोवर्द्धनपूजनमिति सिद्धान्तः अत्र निगूढश्चायं श्रीकृष्णाभिप्रायः योऽहं पूर्णः परमेश्वरः स एव एतेषां पुत्रादिरूपः तस्मात् को नामैषामीश्वरः का वान्या देवता प्रवर्त्तकस्तु तत्प्रेममयः स्वभाव एव स्यात् यदि च नरलीलाया देवतास्वीकारस्तदा मन्निकटसम्बन्धिन्य एव युज्येरन् तथापि नरलीलारक्षार्थं न तद्वक्तुमुत्सहे तस्मान्निरीश्वर-मीमांसा साङ्ख्यावादापदेशेनैव तत्तद्बोधयित्वा तथा प्रवर्त्तया-मीति एवमन्यत्रापि सर्वत्रोह्यम् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एषकामरूपी यथेष्टरूपग्रहणसमर्थो गिरिरवजानतोऽवहेलनं कुर्वाणान् वनौकसो मर्त्यान् हन्ति अत आत्मनोऽस्माकं गवाञ्च शर्मणे क्षेमायास्मै गिरये नमस्यामः नमः करवाम ॥ ३७ ॥

इति इत्थं वासुदेवेन चोदिता गोपाला मद्र्यादीनां मखं यथाव-द्विधाय कृष्णेन सहिता व्रजं प्रति जग्मुः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥
( विजयध्वजरीत्या द्वाविंशोऽध्यायः ॥ २२ ॥ )

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतदप्यानन्द एव सङ्गच्छते किञ्च, नोऽस्माकमनुग्रहं व्यधात् इत्यार्थस्वीकारात् अन्यथा प्रदर्शयेद्धात्मानम् ननु, भुञ्जीत न इति । सामान्योक्तिर्नमस्कारवत् समर्थनीया एवं तस्य स्वरूप-मुक्त्वा अग्रेऽपि भजनसिद्ध्यर्थं प्रार्थयतेत्याह—एष इति । अप्रार्थ-नायां बाधकं वदन् अवज्ञामात्रेऽपि बाधकमाह—अवजानतः अवज्ञां कुर्वतः किमयं करिष्यतीति मर्त्यान् मरणधर्मयुक्तान् इदं महदनिष्टं इष्टानिष्टवार्ता दूरे वस्तुतो हन्त्येव तस्य हनने सामर्थ्यं प्रकारं चाह—कामरूपीति । कामं यथेष्टं रूपवान् अतः शल्की भवति व्याघ्रो भवति सिंहो भवति पलायनं त्वशक्यं यतः सर्वे वनौकसः वनमेव ओकः स्थानं येषामिति अतस्तान् हन्त्येव अहनने उपायमाह—अस्मै नमस्याम इति । अप्रतारणार्थ-मात्मानुप्रवेशः हेतुवादोऽयमिति इतरनिषेधे तात्पर्यात् नात्यन्त-माग्रहः कर्त्तव्यः आत्मनः शर्मणे गवां च शर्मणे व्याघ्रा-दीनामुभयोपद्रवजनकत्वात् नमस्कार एव महतां प्रतिविधिः तदाह हि शब्दः एवमग्रेऽपि तथा करणासिद्ध्यर्थमेतत्परित्यागे भयं जनयितुं तथोक्तवान् ईश्वरवाक्याच्च तथैव भवेत् ३७ ॥

एवं कारयित्वा बोधयित्वा च पुनः स्वस्थानं प्रापितवानिति उपसंहरति—इतीति । अद्रिगोद्विजानाममखं वैष्णवमखंकृत्वा वासु-देवेनैवप्रकर्षेण नोदिताः विशेषाकारेण तत्र तत्र तथा तथा बोधिताः यथा यथावद्विधाय भगवद्भावेशेनैव तत्कृत्वा पुनस्त एव गोपा भूत्वा फलसहिताः व्रजं ययुः स्वस्थानं प्राप्तवन्तः अन्ते प्रत्यापत्तिरुक्ता अन्यथा तज्जनितमन्यदेव किञ्चित्फलं स्यादिति शङ्का स्यात् अतः प्रत्यापत्तिरुक्ता ॥ ३८ ॥

इति श्रीमद्भागवते श्रीमल्लक्ष्मणभट्टात्मज श्रीमद्वल्लभदीक्षित-
विरचितायां सुबोधिन्यां दशमस्कन्धविवरणे
एकविंशाऽध्याय विवरणम् ॥ २१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कामरूपी सर्पादिरूपः हि तस्मात् ॥ ३७ ॥

यन्निरीश्वरमीमांसासांख्ययोरुररीकृतिः ।
तदिन्द्रमखभङ्गार्थं नतु ते सम्मते सताम्

यथाहुः श्रीस्वामिचरणा—

कर्मैवालं प्राक् स्वभावोगुणो वा कर्माङ्गं वा तद्वशो वा महेशः
वार्ता कर्त्री देवतेतीयमुक्ता देवक्षोभे यन्मयी तत्त्वमीष्टा ॥ ३८ ॥

इतिसारार्थदर्शिन्यांहर्षिण्यांभक्तचेतसाम्
चतुर्विंशोऽत्रदशमे सङ्गतः सङ्गतः सताम् ॥ २४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एष एव गिरिः कामरूपी यथेष्टग्रहणसमर्थः अवज्ञानतः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रवज्ञां कुर्वाणान् अजगरादिरूपेण हन्ति अस्मै कामरूपिणे अद्रये आत्मनो सुखाय नमस्यामः ॥ ३७ ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

भाषा टीका ।

जो पुरुष इनको अवमान करें हैं। तिनकें ये गिरिराज यथेष्ट वन के जंतु को रूप धारण करकें मनुष्यन कूं मारि देइ हैं। तासों अपनें और गऊन के कल्याण के तांई इनकूं नमस्कार करें ॥ ३७ ॥

या प्रकार गिरि गोवर्द्धन गऊ और ब्राह्मण के यज्ञ कूं कृष्ण की आज्ञातें यथा योग्य करिकें कृष्ण सहित सब गोप व्रज कों जात भये ॥ ३८ ॥

इति श्रीमद्भागवत दशमस्कन्ध में चौबीसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २४ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## ॥ पञ्चविंशोऽध्यायः ॥

—○✻○—

### श्रीशुक उवाच ।

इन्द्रस्तदात्मनः पूजां विज्ञाय विहतां नृप ! ।
गोपेभ्यः कृष्णनाथेभ्यो नन्दादिभ्यश्चुकोप सः ॥ १ ॥
गणं सांवर्तकं नाम मेघानां चान्तकारिणाम् ।
इन्द्रः प्राचोदयत्क्रुद्धो वाक्यं चाहेशमान्युत ॥ २ ॥
अहो श्रीमदमाहात्म्यं गोपानां काननौकसाम् ।
कृष्णं मर्त्यमुपाश्रित्य ये चक्रुर्देवहेलनम् ॥ ३ ॥
यथाऽदृढैः कर्ममयैः क्रतुभिर्नाम नौनिभैः ।
विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ।
उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥

कृष्णो नाथो येषां तेभ्यः ॥ १ ॥

क्रुद्धः सन्निन्द्रः साम्वर्तकं नाम सम्वर्तः प्रलयस्तत्कर्तारं मेघानां प्रसिद्धं गणं प्राचोदयत्प्रेषयामास । ननु, कृष्णनाथानां घाते कथं प्रवृत्त इत्याशङ्क्यात्मनस्संभावनया निरस्तविवेकत्वादित्याशयेनाह—वाक्यं चाहेत्यादिपञ्चभिः ईशमान्यमेवेश्वर इति मन्यमानः ॥ २ ॥

देवहेलनं देवस्य ममावज्ञाम् ॥ ३ ॥

अदृढैरसमर्थैः कर्ममयैः क्रियानिर्वर्त्यैरत एव नाममात्रेणैव नौभिः, नौरिति व्यवह्रियते तत्सदृशैः आन्वीक्षिकीमात्मानुस्मृतिरूपाम् ॥ ४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विज्ञाय साक्षादनुभूय विहतां द्रव्याणामन्यत्र व्ययात् कृष्णनाथेभ्यः तत्रापि गोपेभ्यः तादृशश्रीव्रजवासिभ्यः तत्रापि श्रीनन्दादिभ्य इति कोपेन दुर्मदमत्तता दुर्बुद्धिता च सूचिता ह स्फुटमेव तदनुरूपव्यवहारात् स इति क्वचित्पाठः परमदुर्बुद्धिर्दिग्दर्शः ॥ १ ॥

अन्तः प्रलयस्तत्कारिणाम् अत एव सम्वर्तकं नाम अन्वर्थं यथान्द्रः यद्वा, चकारादऽऽवहप्रवहादिवातगणं च प्रकर्षेण गर्वोक्त्या तेषामुत्साहवर्द्धनादिना प्रेरयामास उत अन्वर्थं सव गर्हारूपः देवेन्द्रस्यात्ययोग्ये प्रवृत्तेः ॥ २ ॥

अहो आश्चर्यं काननौकसामिति निकृष्टत्वमधरत्वं चाभिप्रेत्युपपतिशब्दवदाश्रयो नाम कुलधर्मादिप्राप्तः उपाश्रयस्तं विच्युत्य कृतः तदेवमुक्तमुपाभिरयेति देवत्वेनात्मनो मर्त्यं माहात्म्यसिद्धेर्देवेत्युक्तं न च ममेति तथा अमरत्वागेन मर्त्याश्रयणस्यायोग्यताबोधनार्थं चेति मयि तावद्दैवबुद्धिमपि न चक्रुः मस्तुतरां देवदेवबुद्धिरिति भावः । अत्र च वनवासेन गोपत्वेन च परमसात्त्विकत्वादिकं तेषां कृष्णं परब्रह्मादि मनुष्यरूपमिति तस्य च भक्तवात्सल्यं मतस्तदर्थं तस्य देवहेलनं युक्तमेवेति सरस्वतीव्यञ्जितस्तत्त्वार्थः ॥ ३ ॥

अदृढैः क्षयिष्णुफलकैः यतः कर्ममयैः यथा तितीर्षन्ति मूढाः तथा कृष्णमुपाश्रित्य ममाप्रियं गोपाश्चक्रुरित्यविचारेणायोग्याचरणमात्रे दृष्टान्तः । यद्वा, तथा मां हित्वा कृष्णाश्रयेण गोपा भवदुःखादिकं तितीर्षन्तीतीन्द्रस्य क्रोधावेशेनात्मानं वाक्यं ह्येयं तत्त्वार्थश्चायं यथा वैष्णवाः कर्मभिः सहान्वीक्षिकीं हित्वा केवलकृष्णाश्रयेण भवार्णवं तितीर्षन्तीति ॥ ४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—११ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किं जातं तदाह—इन्द्र इति । हे नृप ! तदा इन्द्रःस्व

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूजां कृष्णेन विहतां ज्ञात्वा कृष्णो नाथो रक्षिता येषां तेभ्यः गोपेभ्यः चुकोप क्रुद्धवान् ॥ १ ॥

तदा क्रुद्धः अन्तकारिणां प्रलयकारिणां मेघानां सांवर्तकाख्यं गणं प्राचोदयत् मन्युमानी ईशमानीति पाठान्तरम् इदं वक्ष्यमाणं वाक्यं चाह ॥ २ ॥

तदेवाह—अहो इत्यादिभिः पञ्चभिः, काननौकसां गोपानां श्रीमदस्य धनसम्पत्तिकृतस्य मदस्य माहात्म्यं वैभवमहो आश्चर्यकरं, तदेव दर्शयति । ये गोपाः कृष्णं मर्त्यं मरणशीलम् उपाश्रित्य देवस्य मम हेलनमपराधं चक्रुर्मदीयं यमभञ्जुरित्यर्थः ॥३॥

किन्त्वयागमात्रेणैश्वरं माह-यथेति । आन्वीक्षिकीमात्मविद्यां हित्वा विहाय केवलं स्वैर्नौकातुल्यैः कर्मात्मकैः क्रतुभिरस्मदाराधनात्मकैरेव साधनैर्मेवार्थं यथा तितीर्षन्ति तर्तुमिच्छन्ति विवेकिन इति शेषः । अहमेव मुक्तिदोऽपि मद्याग एव तत्साधनमपीति भावः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोवर्धनोद्धरणेन स्वनाथाः सगोधना गोपालाः इन्द्रकृतापदो रक्षिताः एवं भक्तिज्ञानसम्पन्नान्संसारार्त्तान् प्राणिनो रक्षत्यधोक्षज इति प्रतिपादयितुमयमध्याय आरभ्यते; तत्र मुख्यप्राणानेकमन्तरेणान्येषां देवादीनामसुरवत्पासुरावेशस्तद्विमन् गते प्रकृतिभावश्चेत्युभयं दर्शयितुमुपक्रमते, इन्द्र इति । विहतां निराकृतां कृष्ण एव नाथो येषां ते तथा तेभ्यः क्रुध्यद्वेदर्थासूयायोनां यं प्रति कोप इति चतुर्थी कृष्णं प्रति च कोपं कृतवानिति सूचनार्थम् । विशेषणप्र अत्सुरावेशं प्रकटयतीति ज्ञापनेनानेन हेलनेन चक्रकोपेन कृष्णमाहात्म्यमेव प्रकाश्यते ॥ १ ॥

अन्तकारिणां प्रलयं कुर्वतामित्यनेन भगवन्तमन्तरेणान्यानिवर्त्यत्वमाह-सांवर्तकमिति । अमुनैव जगच्चयकरत्वे सूचितेऽन्तकारिणामिति तदेव विशेषितं प्राचोदयत् प्रेरितवानित्यर्थः । इदं कृष्णमुद्दिश्य मन्युना कोपेन अहमेवेशो नान्य इति मन्युना वैश्वामिमानेन वा "मन्युर्दैन्ये क्रतौ क्रुधि" इति यादवः ॥ २ ॥

मर्त्यं मरणधर्मत्वेनानित्यं कृष्णमुपाश्रित्य सर्वस्मादधिकाभयोऽस्मिति कृत्वा देवस्य त्रैलोक्यान्नेतुः मम हेलनम् अवज्ञां कृतवन्त इति अनेनेशमन्युनेत्येतद्विवृतम् ॥ ३ ॥

देवस्वभावत्वादसुरावेशेऽपि तत्त्वमेव कथयन् इत्याशयेनाह, यथेति । महदैरसारैः अन्यत्र चरद्दारुकृतैः कर्ममयैः बहुव्यापारसाध्यैः अन्यत्र तच्छास्त्रविहितकर्मसाधितैः कुत्सितैरल्पप्रयोजनैर्वा प्लवैः "कुः पापेऽल्पार्थकुत्सयोः" इति यादवः । आन्वीक्षिकीं ब्रह्मतुल्यैः कूलविवर्धनात्मिकां विद्याम् आत्मज्ञानमित्यर्थः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१ ॥
उत अप्यर्थे सच गर्हारूपः देवेन्द्रस्याप्ययोग्यप्रवृत्तः ॥ २ ॥
३ ॥ ४ ॥ ५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हेतुकाख्यामिदं यस्मात् स्वार्थमुपयुज्यते ॥
अहंकार्यं तथा चान्यत्तज्ज्ञापयति निश्चितम् ।
हैतुके फलभोक्तार्यमिन्द्रो विघ्नं चकार ह ॥
दूराद्रूपं ततः कृष्णः शैलधरो बभूव ह ।
उभयोर्हेतुकत्वार्थमेवं भगवता कृतम् ॥
निषिद्धभोगिनो बुद्धिर्नैषा भवति सर्वथा ।
इतीन्द्रस्य महामोहवाक्यान्याह विशेषतः ॥
श्लाघ्यैव इयं ते कृष्णा इन्द्रेण विनिपीडितम् ।
यज्ञं गोवर्धनं भूत्वा सम्यक् पालननामिति ॥

पूर्वाध्याये इन्द्रयागभङ्गो निरूपितः ततः क्रुद्ध इन्द्रः व्रजपीडार्थं वृष्टिं करोतीति निरूप्यते—इन्द्रइति दशभिः ।—

क्रोधोद्यमौ च वाक्यानि चतुर्भिः सर्वनाशनात् ।
पीडाहेतुफलान्युक्त्वा सन्धिमाहेतरेण हि ॥

आदौ तस्य क्रोधमाह-इन्द्र इति । तदा गोकुलगमनसमय एव आत्मनः पूजां विहतां ज्ञात्वा नृपेति सम्बोधनं राज्ञा तथात्वज्ञापनाय गोपेभ्यः चुकोप न तु गोपा भक्ताः कथं कोपः तेषु तत्राह, नन्दादिभ्य इति । नन्दो हि महान् तर्हि कोप उचित इति चेत्तत्राह ॥ १ ॥

कृष्णनाथेभ्य इति । कृष्ण एव नाथो येषां नन्विन्द्रः शुद्धसत्त्वपरिणामरूपः कथमेवं कृतवान् तत्राह, स इति । निषिद्धमार्गभोक्ता न केवलं कोपमात्रं प्रयत्नमपि चकारेत्याह-गणमिति । गणो हि बहूनां सङ्घातो भवति सम्वर्तकः प्रलयकर्त्ता नामेति प्रसिद्धो अतः प्रसिद्ध एवायं सम्वर्तको गणः समुदाय एव नाशशक्तिरिति पक्षनिराकरणार्थं प्रत्येकमपि मेघानां तथात्वमाह-मेघानां चान्तकारिणामिति । अन्तकारिणां मेघानां गणं सांवर्तकं च गणं प्रेषयामास तथा सति प्रत्येकसमुदायाभ्यां सामान्यतो विशेषतश्च नाशो भवति नन्वाज्ञाकर्त्तृत्वेति ज्ञापनार्थम् इन्द्र इति "इदि परमैश्वर्ये" परमैश्वर्यं प्राप्तस्य वाक्यमनुल्लङ्घनम् अतः प्राचोदयत् प्रकर्षेण तदैव अविचारं प्रेषितवान् तत्र हेतुः क्रुद्ध इति, एवं तस्य मानसदोषमुक्त्वा वाचनिकं दोषमाह-वाक्यं चाहेति । यतः अयमीशमानी अहमेवेशः त्रैलोक्यस्येति मन्यते उत अपि वाक्यमप्याहेत्यर्थः ॥ २ ॥

एतेनायुक्तमत्यमुक्तं भवति वाक्यान्याह-चतुर्भिः । परम्परया सिद्धो हैतुको न त्याज्यः आधुनिकत्वात्तु इति मन्यते अहो अत्याश्चर्यं सर्वथा विवेकरहिता गोपाः कथमेव मर्यादोल्लङ्घनं कृतवन्त इति हृदय एवाह-श्रीमदस्य माहात्म्यम् अहो आश्चर्यं यतः श्रीमदात् ये गोपा देवहेलनं चक्रुः तत्रापि न महान्तः किन्तु गोपः न वा तेषां सम्बन्धः सम्यग्वेदशास्त्रस्थितिर्वा किन्तु काननौकसः एतादृशानामपि श्रीमदं करोति । ननु, न श्रीमदात् तैरेवं कृतं किन्तु भगवद्वाक्यात् अतस्तेषां को दोषः ? इति चेत्तत्राह-कृष्णं मर्त्यमुपाश्रित्येति । देवा अमर्त्याः मनुष्या मर्त्याः भगवान् सदानन्दोऽपि मनुष्यवेषं कृतवान् तस्य परिग्रह एव तेषां दोषः उप समीपे आश्रयणं न केवलं यागान्तरं कृतवन्तः किं तु देवस्येन्द्रस्यैव हेलनं तद्द्वारैव कृतमिति ॥ ३ ॥

ननु, भगवता कर्ममार्ग एव समीचीन उक्तः कथं दूष्यते? इत्याशङ्क्याह-यथाऽदृढैरिति । अदृढैः क्रतुभिः ये भवार्णवं तितीर्षन्ति ते

वाचालं बालिशं स्तब्धमज्ञं पण्डितमानिनम् ।
कृष्णं मर्त्यमुपाश्रित्य गोपा मे चक्रुरप्रियम् ॥ ५ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मध्य एव निमग्ना भवन्ति न हि स्वेन नीयमानया नौकया तरणं सम्भवति सापि स्वकर्मणैव प्रेर्यत इति छिगुणः क्लेशः अदाह-कर्ममयैरिति । कर्मैव तेषां स्वरूपं तदन्यदढं प्रायश्चित्त-बाहुल्यात् क्रतुभिरिति नाममात्रं बतस्ते नौनिभाः नौकासदृशाः दर्शनार्थमेव नौकातुल्याः ताम्यपि कर्माणि यदि चित्तशुद्ध्यर्थं कुर्यात् तदा भवतु वा आरादुपकारकत्वं तदपि नास्तीत्याह, विद्यामान्वीक्षिकीं हित्वेति । कर्म त्वविद्या विद्या आन्वीक्षिकी अन्वेषणामन्वीक्षा श्रवणानन्तरं पुनरात्मानुसन्धानम् विद्याञ्चाविद्यां च यस्तद्वेदो भयं सह" इत्यत्र केवलाविद्यायाः प्रतिषेधात्तदाह-हित्वेति यथा ते तितीर्षन्ति न तु तरन्ति तथैवेत ईश्वरवादं निराकृत्य केवलकर्मवादेन स्वनिर्वाहेच्छामपि न तरन्ति निर्वाहं न प्राप्नुवन्ति अतः कृतस्य कर्मणो वैयर्थ्यात् तेन पातयितुं न शक्यत इति सुखेन तद्विघातः कर्त्तव्य इति भावः । तस्य भगवति दोषवशात् विपरीता बुद्धिर्जाता षड्गुणैश्वर्यसम्पन्ने षड्दोषवचनात् न तत्र भगवत ऐश्वर्यमप्रतिहतं तदनुसारेणैव अन्यथैश्वर्यं दूरीकर्त्तुं यथार्थान्येव वाक्यान्युक्तानि ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चविंशे सकोपोऽकाविन्द्रे नाशाय वर्षति ।
व्रजस्य रक्षामकरोदुद्धृत्याचलमच्युतः ॥

कृष्णनाथेभ्योऽपि चुकोपेति इन्द्रस्य मौढ्यं तत्कोपस्य च वैफल्यं प्रथमत एव दर्शितम् ॥ १ ॥

कोपं बिभ्रदिति, गणमिति । सम्वर्त्तः प्रलयस्तत्कर्त्तारं मेघानां गणं चकारादावहप्रवहादिसाम्वर्त्तकवातगणं च प्राचोदयत् प्रेषयामास ईशमानी अहमेवेश्वर इति गर्ववान् ॥ २ ॥

श्रीश्च मदो दर्पश्च माहात्म्यं च तेषां दृग्ष्वेकं मर्त्यं मर्त्येभ्यो हितं देवस्य मम दुष्टस्य हेलनमिति सरस्वत्यर्थो वास्तवः ॥ ३ ॥

अदृढैः असमर्थैः कर्ममयैः केवलकर्मप्रचुरैरत एव नाऽस्नेव नौ तुल्यैर्नतु वस्तुतः आन्वीक्षिकीमात्मानुसन्धानरूपां वस्तुतश्च कर्ममयैः क्रतुभिः सह आन्वीक्षिकीं हित्वा अवज्ञया त्यक्त्वा कृष्णमाश्रित्यैव वैष्णवा यथा भवार्णवं तितीर्षन्तीति कृष्णाश्रयणमात्रेणैव भवार्णवस्य गोवत्सपदत्वे जाते तत्तरणार्थप्रयत्नानौचित्यात् तेषां तितीर्षामात्रमिति ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चविंशे शक्रकृतोपद्रवाद्भगवान् गोवर्द्धनमुद्धृत्य व्रजमरक्षदित्याह-इन्द्र इति । विहतां बाधिताम् कृष्णो नाथः बान्धवो येषां तेभ्योऽतो गोपयाचितश्रीकृष्णप्रयत्नकामः स इन्द्र इति गम्यते ॥ १ ॥

नन्वेवमनर्थाचरणे इन्द्रस्य को हेतुरज्ञानविलसितः श्रीमदजनितश्वरत्वाभिमान एवेति वदन् क्रुद्धेन यत्कृतं तदाह, गणमिति षड्भिः । सांवर्तकं नाम संवर्तः प्रलयस्तत्कर्तारम् अनेन प्रलयकर्तुर्यस्यैव सांवर्तको गणस्तदपकारार्थमिन्द्रेण अज्ञानाश्रियुक्तः स्वयं चेन्द्रोपदंशस्तदपकारं कर्तुं प्रवृत्तः इत्येवमज्ञानस्य श्रीमदस्य चानर्थहेतुता द्योतिता ॥ २ ॥

देवहेलनं ममापराधं मां हित्वा कृष्णेन सुखमिच्छन्तीति फलितार्थः । अहो श्रीमदमाहात्म्यम् इत्यनेन स्वदोषमन्यत्रारोपयति जनः इति जनस्वभावो ज्ञापितः कृष्णं मर्त्यमुपाश्रित्येत्यनेन "गां पौरुषीं मे शृणुतामराः" इत्यादि ब्रह्मवाक्यात् श्रुतात्तत्त्वस्येन्द्रस्य वाक्येन अभिमानिनः क्रोधाविष्टस्य पूर्वापरविवेकभ्रंशः पूज्येऽपूज्यबुद्धिश्च भवत्येवेति ज्ञाप्यते ॥ ३ ॥

मां हित्वा कृष्णेन सुखमिच्छन्तीत्युक्तं तत्र दृष्टान्तमाह, यथा आन्वीक्षिकीमध्यात्मविद्यां हित्वा अदृढैः असमर्थैः कर्ममयैः कर्मनिवृत्त्यै अत एव नामनौनिभैर्नाममात्रनौकासदृशैः भवार्णवं तितीर्षन्ति मुक्तिं सुखमिच्छन्ति तद्वत् ॥ ४ ॥

---

भाषा टीका ।

श्रो गोवर्द्धनाचलोद्धर्त्रे नमः ।

श्रीशुक उवाच

श्रीशुकदेवजी बोले, कि, हे नृप ! वा समें वो इन्द्र अपनी पूजा को लोप जानिके श्रीकृष्ण जिनके नाथ ऐसे नन्दादिक गोपन पै कोप करत भयो ॥ १

प्रलयकरनवारे साम्वर्त्तक नाम जो मेघन के गण हैं तिन कूं क्रोध करके भेजत भयो, और अपन को ईशमाननवारो इन्द्र ये वचन बोलत भयो ॥ २ ॥

इन्द्र बोल्यो, कि—अहो बड़ो आश्चर्य है वन में रहवे वारे गोपन के श्रीमद को माहात्म्य तो देखो जिनने कृष्णरूप मनुष्य को आश्रय ले कें मो देवता को अपराध कर्‌यो है ॥ ३ ॥

क्योंकि ! दृढ कर्मप्रधान और नौका सदृश जो यज्ञ हैं जिन सो आत्मा को कल्याण होय वा विद्या को छोडि के संसार समुद्र के पार अनायास लग्यो चाहे हैं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथा वाचालं बहुभाषिणं बालिशं शिशुं पण्डितमानिनं पण्डितं मन्यमतः स्तब्धमविनीतमिति निन्दायां योजितोऽपीन्द्रस्य भारती कृष्णं स्तौति, तथाहि वाचालं वाक्पतिं

एषां श्रियाऽवलिप्तानां कृष्णेनाध्मायितात्मनाम् ।
धुनुत श्रीमदस्तम्भं पशून्नयत सङ्क्षयम् ॥ ६ ॥
अहं चैरावतं नागमारुह्यानुव्रजे व्रजम् ।
मरुद्गणैर्महावीर्यैर्नन्दगोष्ठजिघांसया ॥ ७ ॥

श्रीशुक उवाच ।

इत्थं मघवताऽऽज्ञप्ता मेघा निर्मुक्तबन्धनाः ।
नन्दगोकुलमासारैः पीडयामासुरोजसा ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बालिशमेवमपि शिशुवत्स्वरभिमानिनं स्तब्धमन्यस्य वन्द्यस्याभावादनम्रम् अज्ञं नास्ति ज्ञो यस्मात्तं मन्यज्ञमित्यर्थः । पण्डितमानिनं ब्रह्मविदां बहुमाननीयं कृष्णं सदानन्दरूपं परंब्रह्म मर्त्यं तथाऽपि भक्तवात्सल्येन मनुष्यतया प्रतीयमानमिति ॥ ५ ॥

अवलिप्तानां मत्तानाम् आध्मायितात्मना बृंहितदेहानां धुनुत अपनयत श्रीमदेन यः स्तम्भो गर्वस्तम् ॥ ६ ॥

बिभ्यतस्तान् प्रत्याह—अहं चेति । अनुव्रजे अन्वनन्तरमेवागमिष्यामि मरुद्गणैर्देवगणैः सह ॥ ७ ॥

मघवता इन्द्रेण निर्मुक्तं बन्धनं येषां ते प्रलयाभिप्रायेण यद्धा आसन् तदा निर्मुक्तबन्धनाः सन्तः आसारैर्धारासम्पातैः पीडयामासुः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वाचालमित्यादिकं सतर्ककर्कशकर्मवादानन्तरयाद्यभिप्रायेण गोपा इति निकृष्टत्वं मे त्रिलोकीश्वरस्येति दुर्मदभरेण सूचितम् अन्यस्तैः तत्र स्तुतिपक्षे वाचालमिति वाचा हेतुना अलं समर्थ इत्येवार्थः । मत्वर्थीयालच्प्रत्ययस्य निन्दायामेवाभिधानात् शिशुवदिति बालिशः शावके मूर्ख इति विश्वप्रकाशात् ब्रह्मविदां माननीयमिति तत्कर्तृको मानो विद्यते यत्रेति ॥ ५ ॥

एवं दुर्वृत्त्यतिशयार्थं तेषां दोषं तेनात्मनः तेषु रोषभरं च पोषयित्वा अधुना कृत्यमादिशति, एषामिति । कृष्णेन हेतुना श्रिया पशुवर्गलक्षणया लक्ष्म्या मत्तानाम् इत्यनन्तरं बृंहितदेहानां चेति बाह्यं सुखं दर्शितं तत्र च कृष्णेनेति तत्कृतगोपालनादिना क्षीराद्युपयोगसम्पत्तेरिति भावः । अन्यस्तैः तत्र धमनं नाम सतेजस्कीकरणं तच्च बृंहणतात्पर्यकं णिच् प्रयोगस्तु तेषां कर्तृत्वं कृष्णस्य हेतुकर्तृत्वमित्यपेक्षयेति ज्ञेयम् ।यद्वा, स्वतः श्रिया भगवत्यां विशेषतः कृष्णेन सतेजस्कीकृतचित्तानामित्यर्थः भक्तिलक्ष्म्या समृद्धानां तया तयैवोज्ज्वलितचित्तानामिति तत्त्वार्थः कथं धुनवामेत्यपेक्षायामाह—पशून् सम्यक् क्षयं नयत पशूनामेव श्रीमदहेतुत्वात् तत्त्वार्थे सम्यक् निवासः स्वास्थ्यमित्यर्थः ॥६॥

ऐरावतमारुह्येति । युष्माकं जयाभावे सति सोयं साहाय्यं करिष्यतीति भावः । नन्दगोष्ठेति तत्रैव वर्षणीयं ननु मधुपुरीमिति च सह कंसेनापि मैत्रीचिकीर्षया सूचितं जिघांसया जिगमयिषयेति तात्त्विकोऽर्थः ॥ ७ ॥

ओजसा बलेन ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सति केवलं वाचालकुत्सितं बहु च वदन्तं बालिशं मूर्खं स्तब्धमविनीतमज्ञं पण्डितमात्मानमन्यमानं मर्त्यं मत्प्रसादात् मरिष्यमाणं च कृष्णमाश्रित्य ये गोपाः मम अप्रियं चक्रुः ॥ ५ ॥

श्रिया सम्पदा गर्वितानां कृष्णेनाध्मायिताः वर्द्धिता आत्मानो देहा येषां तेषां गोपानां श्रीमदप्रयुक्तमविनयं धुनुतापाकुरुत तथा पशून् सङ्क्षयं नाशं नयत ॥ ६ ॥

बिभ्यतस्तान् प्रत्याह—अहमप्यैरावतं गजमारुह्य महावेगैर्मरुद्भिः सह व्रजं प्रत्यनुव्रजे युष्मत्पृष्ठत एवागमिष्यामि किमर्थं नन्दादयो गोपास्तेषां जिघांसया हेत्वर्थे तृतीया सन्नर्थस्त्वश्वेन जिगमिषतीतिवद्विवक्षितः हननार्थमित्यर्थः ॥ ७ ॥

इत्थमिन्द्रेणादिष्टाः मेघा मुक्तानि बन्धनानि शृङ्खलानि येषां तथाभूताः आगत्यासारैर्जलधारासम्पातैर्यावद्बलं नन्दव्रजं पीडयामासुः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वाचालम् अस्ति चेदीश्वरः कश्चिदित्यादि शास्त्रकुत्सितभाषणम् अत एव वर्तेत ब्रह्मणोत्थावमानं प्रमाणमस्यास्तीति मानिनं "रजसा चोदिता मेघा" इत्यादिना मत्त्यमत्यत्वं च वक्ष्यते आजीव्यैकतरस्माभावमित्यादिना पण्डितमानित्वम् ॥ ५ ॥

अवलिप्तानां दृप्तानाम् आध्मायितात्मनां वर्धितमनसां धुनुत निराकुरुत ॥ ६ ॥

नागं गजम् ॥ ७ ॥

निर्मुक्तबन्धनाः विगलितनिगडाः त्यक्तजलस्तम्भा इत्यर्थः । आसारैर्धारासम्पातैः वेगवद्वर्षैरित्यर्थः । ओजसा स्वशक्तिलक्षणबलेन ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वतः श्रियावलिप्तानां विशेषतः श्रीकृष्णेन स्वतेजस्कीकृतचित्तानामित्यर्थः ॥ ६—९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

इन्द्रस्य तु बुद्ध्या अनीश्वरस्तथोक्तवान् इति अत आह वाचालमिति । बहुभाषी वाचालः अनीश्वर ईश्वरवदुक्त्वा वैराग्याभावो वा अनेनैवोक्तः स्वार्थे बहूक्तवानिति बालिशः ज्ञानरहितः यस्तु वीर्यरहितः अशक्यं कर्तुं वाञ्छति स तथोक्तवांत ज्ञानाभावः स्पष्ट एव स्तब्धः अनम्रः तादृशस्य कीर्त्यभावः स्पष्टः विनीतस्यैव तथात्मानमेव पण्डितं मन्यत इति तथा पण्डितमानी न तस्य श्रीः विपर्य्ययो वा कीर्तभाव एवानेनोक्त इति अज्ञो ज्ञानरहितः स्पष्ट एव मर्त्यो मनुष्यः न स विरक्तः ईश्वरो वा कृष्ण इति तथा प्रसिद्धः एवं विपरीता बुद्धिरिन्द्रस्य अथवा कृष्णं सदानन्दमपि विपरीतषड्गुणं तत्त्वेनोपाश्रित्य भगवत्यपि विपरीतां बुद्धिं सम्पाद्य सर्वे गोपालाः अल्पबुद्धयः मे अप्रियं यागभङ्गं कृतवन्तः यदि भगवन्तं वा परमेश्वरं जानीयुस्तदापि न खेदः वस्तुतस्तु वाचा अलं पूर्णो यत्र यत्र वाङ् न प्रवर्त्तेत स पूर्णः सर्ववेदकर्ता सर्वथा नाश्रितः ।र्किं तु उप समीपे अल्पमेवाश्रित इति किञ्च बालिनोपि यं सुखं यस्मात् स हि शत्रुपक्षपाती रावणमित्रं तथापि मोक्षदाता बालमस्यास्तीति पुच्छवान् मर्कटः प्रतिपादितः तर्कपैस्तु वेदाना मप्यगम्यः कृपालुता तु बालिनमभिमोचयति स्तब्धः ब्रह्मभूतः "वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । यदि भगवान् नम्रः स्यात् सत्यादिलोकानां नाश एव भवेत् अतो भगवान् स्वयमनम्रः अभ्यागमितवान् पण्डितान् मानयतीति पण्डितमानी विद्यावतः पूजयति अतः पूजनार्थं विद्यामुपादिष्टवान् न विद्यते ज्ञो यस्मात्सर्वज्ञोऽयं यतोऽयं कृष्णः सदानन्दः यत्र हि धर्मो तिष्ठति स धर्मयुक्त एव भवति अतो गोपाः मर्त्यं शरीरमाश्रित्य शरीरधारिणो भूत्वा मे अप्रियं न विद्यते प्रियं यस्मात् न ह्यन्यः ततः प्रियोऽस्ति तं भगवन्तं कृतवन्तः यथा मम नित्यं प्रियजनको भवति तथोत्तरोत्तरं कृतवन्तः तथा तथा धर्मान् सम्पादितवन्तः इति सरस्वती ॥ ५ ॥

अतो विपरीतां बुद्धिमाश्रित्य भक्तद्रोहं कर्त्तुमाज्ञापयति एषामिति । एषां गोपानां श्रिया धनेनावलिप्तानां गर्विष्ठानां कृष्णेन आध्मायितः आत्मा येषां यथा स्तब्धो वायुरन्तःप्रविष्टः देहिनमाध्मापयति तादृशस्य उपवासेषु कृतेषु तदाध्मानं गच्छति अतः श्रीमदस्तम्भं धुनुत श्रीमदस्यापि मूलं पशवः अतो भवन्तो गत्वा पशून् संक्षयं नयत ॥ ६ ॥

अतिवृष्ट्या पाषाणवर्षेण च सम्यक् क्षयं नयत गोपास्तु कन्दरादिष्वपि स्थातुं शक्ताः अतस्तेषां वधार्थं कृष्णेन सह युद्धमप्यवाहं रावतमारुह्याहमागमिष्यामीत्याह—अहं चैरावतं नागमिति । ऐरावतः अद्वयो गजः जले स्थले च युद्धसमर्थः अतस्तमारुह्य अनु पश्चाद्युष्मदुगमनानन्तरं व्रजे समागमिष्यामि प्रसङ्गादागमनं निराकरोति—व्रजमिति । ननु, यद्यपि गोपालाः एकस्त्वं बलभद्रश्च बली अतः कथं युद्धम् ? इति चेत्तत्राह—मरुद्गणैरिति । महावीर्यैरनिर्यलिष्ठैर्मरुद्गणैः सह, तत्र गतस्य प्रयोजनमाह—नन्दगोष्ठजिघांसयेति । नन्दगोष्ठस्य घातनेच्छया गतस्तदिच्छां वा प्रपूरयति अतो मारयिष्यामीत्यर्थः ॥ ७ ॥

ततो यज्जातन्तदाह—इत्थमिति । मघवता इन्द्रेणाज्ञाप्ता मेघाः पूर्वं शृङ्खलाबद्धास्ते निर्मुक्तबन्धनाः कृताः ततः नन्दगोकुलमासारैर्धारासम्पातैरोजसा बलेन वायुसहिताः पीडयामासुः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वाचालं मीमांसासाङ्ख्यानभिमतविरुद्धबहुभाषिणं बालिशं मूर्खमनधीततत्तच्छास्त्रत्वादिति भावः । स्तब्धं पितुरप्रेष्यतिधाष्टर्याद् दुर्विनीतम् अज्ञं नित्यगोचारणात् किमप्यजानन्तम् अथ च पण्डितम्मन्यं मर्त्यं मनुष्यमाश्रित्य मे देवस्याप्रियं चक्रुः वस्तुतस्तु वाचया सरस्वत्या अलङ्कृतो बालिशो मूर्खोपि यस्मात्तं वाचाशब्दवाक्तोऽयं । स्तब्धं वन्द्यस्यान्यस्याभावादनम्रं नास्ति ज्ञो यस्मात्तं पण्डितकर्तृको मान आदरो वर्त्तते यस्य तम् ॥ ५ ॥

अवलिप्तानां मत्तानां यतः कृष्णेनाध्मापितः स्वतेजस्कीकृतः आत्मा मनो येषां वस्तुतस्तु श्रिया चन्दनचर्चयेव अवलिप्तानां लिप्ताङ्गानां श्रीमान् यः स्वल्पस्तम्भः जाड्याभावाद्धुनुत दूरीकुरुत तेन तथा वर्षत यथा तेषां शीतजनितस्तम्भः औष्ण्यनिवर्त्तको भवेदित्यर्थः । तथा पशून् धुनुत शीतेन कम्पयत ततश्च कृष्णेन गोवर्द्धने उद्धृते सति सङ्क्षयं सम्यङ्निवासं तत्तलं नयत अतिसुखदगोवर्द्धनतलनिवासं प्रति नयत यूयमेव कारणीभवतेत्यर्थः ॥ ६ ॥

विश्वयतस्तान् प्रत्याह—अहं च अनुव्रजामि जिघांसया जिगमिषयेति वस्तुवर्थः ॥ ७ ॥

निर्मुक्ता बन्धना इति ये खल्वैकार्थ्यवीकरणपटवः प्रलयकाल एव निर्मुच्यन्ते तेपि मेघाः कोपेन लुप्तविवेकत्वात् परिणामदर्शिनेन्द्रेण मोचिताः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णं मर्त्यमित्यनेन श्रीकृष्णस्य मर्त्यत्वमात्रमुक्तं तत्र मर्त्या अपि प्रायो गुणवन्त एव अयं तु निर्गुण इत्याह वाचालमिति । वाचालं बहुभाषिणम् बालिशं मुग्धम् स्तब्धं कर्त्तव्याकर्त्तव्यचिन्तारहितम् अज्ञमनधीतशास्त्रम् ॥ ५ ॥

श्रिया सम्पदा अवलिप्तानां मत्तानाम् कृष्णेन ध्मापिता वर्द्धिताः आत्मानः मनांसि येषां तेषाम् श्रीमदेन यः स्तम्भो गर्वस्तं धुनुत अपनयत ॥ ६ ॥

मरुद्गणैः देवगणैः सहाहमपि अनुव्रजे अनन्तरमेवागमिष्यामि सर्वैश्चैरिदं कार्य्यमवश्यमनुष्ठेयमिति भावः ॥ ७ ॥

विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः ।
तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः ॥ ९ ॥
स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः ।
जलौघैः प्लाव्यमानाभूर्नादृश्यत नतोन्नतम् ॥ १० ॥
अत्यासारातिवातेन पशवो जातवेपनाः ।
गोपा गोप्यश्च शीतार्त्ता गोविन्दं शरणं ययुः ॥ ११ ॥
शिरस्सुतांश्च कायेन प्रच्छाद्याऽऽसारपीडिताः ।
वेपमाना भगवतः पादमूलमुपाययुः ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रलयं करिष्यन्तस्तो वर्द्धयन्धनैर्बद्धा अनेन तेषामनिग्रचण्डता सूचिता तदानीं तु निर्मुक्तबन्धनाः सन्तः आसारैर्धारासम्पातैः नन्दगोकुलं पीडयामासुः नतु त्रिलोकीम् ॥ ८ ॥

भाषा टीका ।

देखो वाचाल, मूर्ख, स्तब्ध, अज्ञानी, आप कूं पण्डित माने, ऐसो मनुष्य जो है वा श्रीकृष्ण को आश्रय लेके गोपन ने मेरी अवज्ञा करी है ॥ ५ ॥

लक्ष्मी के मद तें मत्त और कृष्ण के हिमाइत में फूलि रहे ऐसे इन गोपन को जो श्रीमद तैं गर्व भयो है ताय तुम सब दूर करो, और इन के पशून को नाश कर-देउ ॥ ६ ॥

और मैंऊ नन्द के गोकुल के नाश करिवे की इच्छा करिके अपने ऐरावत हाथी पै बैठि के बडे पराक्रम वारे मरुत गणन कों साथ ले के, ब्रज को आऊ हूं ॥ ७ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि–इन्द्र की ऐसी आज्ञा पाय के रस्सा जिनके खोल दिये ऐसे वे मेघ वर्षा के मारे नन्द के गोकुल को पीडा देत भयो ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्तनयित्नुभिरशनिभिः स्तनन्तो गर्जन्तः मरुद्गणैरावह-प्रवहादिवायुसमूहैर्नुन्नाः प्रेरिताः जलशर्कराः जलोपलान् ॥ ९ ॥

स्थूणावत्स्थूलाः अभ्रेषु मुञ्चत्सु सत्सु नतोन्नतं निम्न-मुन्नतं तद्विपरीतं यथा भवति तथा भूर्नाऽदृश्यत ॥ १० ॥

जातवेपनाः जातकम्पाः ॥ ११ ॥

तत्र पशूनां याचनं विश्वनाथ–शिर इति ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पीडनप्रकारमाह–विद्योतमाना इति द्वाभ्याम् । विशेषेण द्योत-माना इत्यादिना विद्युदादीनामिति बाहुल्यं भीषणत्वं च सूचितं स्तनयित्नुभिर्गर्जद्भिरंशविशेषैः तीव्रैरित्यस्य पूर्वेणाप्य-न्वयः । जलानि शर्कराश्च तद्रीयाः करकाः ॥ ९ ॥

स्थूणा गृहस्तम्भाः तद्वत् स्थूलाः मुञ्चमाना सती भूर्ना-ऽदृश्यत अतो नतोन्नतं च स्थूलत्वादृश्यतेत्यर्थः ॥ १० ॥

जातवेपना इति शीतार्त्ता इति च पश्वादीनां सर्वेषामपि विशेषणम् अत्र पशूनां बहिःस्थत्वेनादौ निर्देशः बहिःस्थप्राय-त्वेन तत्पश्चाद्गोपानाम् अन्तःस्थप्रायत्वेन गोपीनामिति विवेच-नीयम् इत्यादिकं च सर्वं श्रीभगवतो व्रजजनप्रेमवर्द्धनगोवर्द्ध-नोद्धरणक्रीडेच्छयैव शक्रादीनां श्रीमदस्य परमानर्थहेतुताप्रदर्श-नेच्छया च अन्यथा भगवत्प्रियाणां तेषां तत्तदसम्भवात् ॥ ११ ॥

प्रच्छाद्य प्रयासेन छादयित्वा । ननु, कथं ते तादृशाज्ञाना जाता-स्तत्राह–भगवतः अलौकिकगुणत्वात् तेषामपि तादृशप्रभाववत्त्वादि गुणवत्तया स्फुरत इत्यर्थः । अतः पादमूलमुपाययुः अत्यन्त-निकटं प्राप्ताः ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वेपमानाः कम्पमानाः ॥ १२—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पीडामेव प्रपञ्चयति द्वाभ्याम् । तडिद्भिर्विद्योतमानाः स्तनयि-त्नुभिरशनिभिर्गर्जन्तः यद्यपि स्तनयित्नुशब्दो गर्जन्मेघपरः तथाप्यौचित्यादेवं व्याख्यातं प्रचण्डवातसङ्घातैः प्रेरिताःसन्तो जलशर्कराः वर्षोपलान् ववृषुः ॥ ९ ॥

अभीक्ष्णशोऽविच्छेदेन स्थूणावत् स्थूला वर्षधारा मेघेषु मुञ्चत्सु सत्सु जलप्रवाहैः प्लाव्यमाना सती पृथिवी निम्नोन्नता नादृश्यत नतोन्नतमिति पाठे यथा तथा नादृश्यत ॥ १० ॥

अत्यासारैः अत्यन्तवातेन च अत्यासारातिपातेनेति पाठे अत्यासारस्यात्यन्तपातेन निष्ठुरपातेन जातकम्पनाः पशवो गोपाः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गोप्यश्च शीतेनार्ताः पीडिता भगवन्तं शरणं प्रापुः परीता इति पाठे परितो व्याप्ता इत्यर्थः ॥ ११ ॥

शरणयाचनप्रकारमेवाह द्वाभ्याम्–शिर इति । जातैकवचनं शिरांसि स्वसुतांश्च देहेनाच्छाद्यासारैः कम्पमानाः भगवतः पादमूलं श्रीमगतः पादमूलमुपाययुः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्तनयित्नुभिर्गर्जितैः "स्तनयित्नुर्हि गर्जितः" इति यादवः । जलान्येव शर्कराः श्वेतपाषाणशिलाः ॥ ९ ॥

स्थाणुवत्स्थूलाः नतोन्नतं निम्नोच्चस्थलम् ॥ १० ॥ ११ ॥

स्वकायेन शिरश्च सुतांश्च प्रच्छाद्य ॥ १२ ॥ १३ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्लाव्यमाना भूरभूत् अत एव नतोन्नतं स्थलं नादृश्यत ॥ १० ॥ ११ ॥

शिर इति अतो व्रजस्थपशूनामपि तादृशज्ञानं सूचितम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पीडायां प्रकारमाह–विद्योतमाना इति । विद्युद्भिर्विद्योतमानाः सात्त्विकोत्कर्षैस्स्तनयित्नुभिश्च नदन्तः गर्जनं कुर्वन्तः तीव्रैर्वायुगणैः नुन्ना जलशर्करा ववृषुरिति तामससरूपत्तिः विद्योतनेनाक्षिप्रतिघात-स्तनयित्नुभिश्च श्रोत्रप्रतिघातः जलेन प्राणप्रतिघातः शर्कराभिः शरीरस्य स्वाधीनाश्च तेषां विद्युतः सन्ति ता नात्र विवक्ष्यन्ते किन्तु या वज्ररूपा विद्युत् ताभिर्विद्योतनं स्वतोपि शब्दकरणं मेघानां परं स्तनयित्नुभिः तथा स्तनयित्नवो वाद्यरूपाः अतिनिष्ठुराः जलमयाः शर्कराः करकाः तत्रापि वायुवेगेन पतन्तः पीडयन्ति ॥ ९ ॥

ततो वृष्टिं कृतवन्त इत्याह–स्थूणेति । स्थूणास्तम्भस्तद्वत् स्थूला वर्षधाराः प्रतिमुञ्चन्ति श्वभ्राणि यैः एकां धारां प्रत्येको गर्त्तो मेघेन क्रियते एवं सर्वेष्वेव मेघेषु सत्सु अभीक्ष्णशः जलौघैः प्लाव्यमाना भूः नतोन्नतं नतमुन्नतं वा यथा भवति नतोन्नता वा वस्तुतः सर्वत्रैव गर्त्ताः जाताः तथापि निम्ना वा उन्नता वा पादस्थापनार्थं विचार्यमाणापि जलौघैः प्लाव्यमाना भूर्नोऽदृश्यत ॥ १० ॥

ततो यज्जातं तदाह—अत्यासारेति । अत्यन्तं धारासम्पातेन अतिवातेन च पशवो जातवेपनाः जातकम्पा जाताः अतः गोपाः गोप्यश्च त्रिविधा अपि शीतपीडिताः गोविन्दं गवां गोपगोपीनां चेन्द्रं लौकिकेन्द्रेण पीड्यमानाः शरणं ययुः ॥ ११ ॥

एवं शरणागतौ आगमनप्रकारमाह–शिर इति । स्वशिरः सुतांश्च स्वस्यैव कायेन प्रच्छाद्य आसारेण पीडिताः सन्तः वेपमानाः भगवतः पादमूलमुपसमीप एवाययुः आगताः शिरोऽत्यन्तमुदरे समागतं सुतांश्च शरीरेणोभयोः प्रच्छादनं भगवद्दर्शनार्थं इत्यर्थं च आसारेण पीडिताः भक्तिमार्गे स्वकृतः अन्यथा भगवद्दर्शनार्थमेव यत्नं कुर्युः न तु स्वरक्षार्थं भगवन्तं प्रार्थयेयुः । किञ्च, वेपमाना जाताः अतः देहस्थितिं सन्दिग्धां मत्वा पादमूलमाययुः तेषु कृपया भगवान्निकट एवागतः ततः उपेत्युक्तं आ सर्वतः पादयोर्मूलं अन्तर्जातभक्त्या शरीरेण समीपमागता अपि मनसा पादतले प्रविष्टाः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्तनयित्नुभिरशनिभिः स्तनन्तः गर्जन्तः मरुद्गणैस्सह आवहप्रवहाद्यैः नुन्नाश्चालिता जलशर्करा जलोपलान् ववृषुः ॥ ९ ॥

"स्थूणास्तम्भेऽपि वेश्मनः" इत्यमरः । स्थूणावत्स्थूला अभ्रेषुवर्षत्सु प्लाव्यमाना भूरभूत् तनञ्च नतोन्नतं स्थलं नादृश्यत ॥ १० ॥ ११ ॥

शिरांसि च सुता वत्साश्च तान् कायेनैवाच्छाद्य ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते मेघाः विद्युद्भिर्विद्योतमाः केवलं सूर्यादीनामत्यन्तत आवृतत्वात् स्तनयित्नुभिरशनिभिस्स्तनन्तो गर्जन्तः मरुतामावहप्रवहादिवायूनां गणैः समूहैः नुन्नाः प्रेरिताः जलशर्कराः जलोपलान् ववृषुः ॥ ९ ॥

तदा अभीक्ष्णशो नैरन्तर्येण स्थूणा इव स्थूलाः वर्षधाराः अभ्रेषु मुञ्चत्सु जलौघैः प्लाव्यमानाः नतोन्नतं यथा भवति तथा भूर्नादृश्यत ॥ १० ॥

अत्यासारेण अत्यन्तधारासम्पातेन अतिवातेन च जातवेपनाः प्राप्तकम्पाः पशवोऽपि शरणं ययुरिस्रनेन यो गोविन्दं शरणं न याति स पशुभ्योऽपि हीन इति ज्ञाप्यते ॥ ११ ॥

शिरः सुतांश्च कायेन पशवः गोपाः गोप्यश्च यथेष्ट प्राच्छाद्य ॥ १२—१३ ॥

भाषा टीका ।

बीजुरी जिनमें चमकरही गर्जन सों शब्द करैं तीव्र मरुतन के गणन ने चलायमान करे ऐसे बादर जलके कंकर ओरन की वर्षा करत भये ॥ ९ ॥

थूनी की नांईं स्थूल वर्षा की धारान कूं जब बारंबार मेघ छोडिवे लगे, तब जलन के समूहन तें पृथिवी डूब गई और धरती पै नीची ऊंची ठोर नहिं मालूम परत भई ॥ १० ॥

बडी वर्षा बडे पवन सों भयो कपकपाहट जिनके ऐसे पशु, गोप, गोपी, शीततें दुःखित होयकें गोविन्द की शरण जात भये ॥ ११ ॥

वर्षातें पीडित गऊं शिरन कूं नीचे करिकें बछरान कों छाती के नीचे करिकें कांपत २ भगवान के चरण के समीप जात भईं ॥ १२ ॥

कृष्ण ! कृष्ण ! महाभाग ! त्वन्नाथं गोकुलं प्रभो ! ।
त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ! ॥ १३ ॥
शिलावर्षनिपातेन हन्यमानमचेतनम् ।
निरीक्ष्य भगवान्मेने कुपितेन्द्रकृतं हरिः ॥ १४ ॥
अपर्त्वत्युल्बणं वर्षमतिवातं शिलामयम् ।
स्वयागे निहतेऽस्माभिरिन्द्रो नाशाय वर्षति ॥ १५ ॥
तत्र प्रतिविधिं सम्यगात्मयोगेन साधये ।
लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गोपगोपीनां प्रार्थनामाह—कृष्णकृष्णेति। त्वमेव नाथो यस्य तद्गोकुलं गवां कुलं वंशं नोऽस्मांश्च देवादिन्द्रात्त्रातुं रक्षितुमर्हसि ॥ १३ ॥

विज्ञापनात्पूर्वमेव कुपितेनेन्द्रेण कृतं तद्वर्षं मेने ॥ १४ ॥

कथं मेने ? तदाह—अपर्त्विति। अपगत ऋतुर्यस्य तद्वर्षमतिशयितो वातो यस्मिंस्तदतिवातं शिलामयं शिलाप्रचुरम् ॥ १५ ॥

तत्र प्रतिज्ञापूर्वं गोवर्धनोद्धरणमाह—तत्रेति। तत्र प्रतिविधिं प्रतीकारं स्वसामर्थ्येन साधयिष्यामि तेन च मौढ्यात् लोकेशमानिनां श्रीमदलक्षणं तमो हरिष्यामि बहुवचनेन वरुणादीनभिप्रैति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णेति सर्वदुःखाकर्षणाभिप्रायेण आर्त्यां वीप्सा हे महाभाग अस्माकं परमभाग्यरूप ! नोऽस्माकं गोकुलं गवां कुलं व्रजमेव वा सर्वं त्रातुमर्हसि। यद्वा, नोऽस्मांश्च देवात् इन्द्रात् तन्नामाग्रहणं द्वेषेण पापबुद्ध्या वा। यद्वा, देवात् तत्रापि कुपितात् इति तत्प्रतीकारासमर्थानस्मान् त्वमेव त्रातुं योग्योऽसीत्यर्थः। ननु, तर्हि ममापि तत्र का शक्तिस्तत्राह—प्रभो ! हे सर्वशक्तियुक्तेति। कालियमर्दनादौ तवालौकिकशक्तिदर्शनादिति भावः। ननु, देवेषु निजशक्तीर्दर्शयितुं नो युज्येत तत्राह—हे भक्तवत्सलेति। भक्तार्थं तवाकृत्यं न किञ्चिदपीत्यर्थः ॥ १३ ॥

शिलावर्षयुक्तेनातिवातेन पाठान्तरे शिलावर्षस्य निपातेन हन्यमानम् अत एव अचेतनं मूर्च्छितप्रायं गोकुलमिति प्रकरणात् कृतम् कृतिम ॥ १४ ॥

पश्चात् क्रोधावेशेन स्वगतमुवाचेत्याह—अपर्त्वित्यादिपञ्चकेन। अत्युल्बणेति परेणान्वयात् पृथक् तु व्याख्यायते वर्षं वर्षतीति तपत्वत इतिवद्वर्षं करोतीत्यर्थः। अस्माभिरिति बहुत्वं श्रीनन्दादपेक्षया शक्रमदभञ्जनार्थं निजप्रौढिप्रकटनेन वा नाशाय गोष्ठस्य तत्त्वतस्तु निजमदस्यैव ॥ १५ ॥

सम्यक् सर्वेषां सुखपूर्वकनिजदासवर्गमाहात्म्यप्रदर्शनादिप्रकारेण साधयामि वर्त्तमानसामीप्ये लट्। आत्मयोगेन योगमायाख्यया स्वाभाविकशक्त्येत्यर्थः। लोकेशमानिनामिति बहुत्वं तद्दण्डेनान्येषामपि शिक्षाभिप्रायेण ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अपर्त्तुं ऋत्वतिक्रमेण ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे महाभाग अस्मद्रक्षोपयुक्तज्ञानरूपमहाभाग्यशालिन् ! त्वमेव नाथो यस्य तद्गोकुलं कुपिताद्देवात्पातुमर्हसि भक्तवत्सलस्याधुनोपेक्षानुचितेति तत्संबोधनाभिप्रायः। शिलावर्षस्य निष्ठुरपातेन पीड्यमानमत एवाचेतनं तज्जडीभूतं गोकुलमवलोक्यार्त्तिहरो भगवान् कुपितेनेन्द्रेण कृतम् एतत्कर्मेति मेने ॥ १३—१४ ॥

मननप्रकारमेवाह—अपगतो वर्षर्त्तुर्यस्मात् अत्यन्तो वातो यस्य तच्छिलामयमत्युल्बणं वर्षमस्माभिः स्वयागे विहते सत्यस्मन्नाशाय वर्षति ॥ १५ ॥

अथ भगवतः प्रतिज्ञापूर्वकं गोवर्द्धनोद्धरणमाह—तत्रेति। तत्रैवं सति प्रतिविधिं वर्षप्रयुक्तपीडाप्रतीकारं स्वसामर्थ्येन साधयिष्यामि मौढ्याल्लोकेशमात्मानं मन्यमानस्य श्रीमदात्मकं तमोऽज्ञानं तमोगुणकार्यं श्रीमदं वा हरिष्यामि ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अचेतनं निस्संज्ञम् ॥ १४ ॥
अपर्त्तौ अनृतौ अवृष्टिसमय इत्यर्थः ॥ १५ ॥
प्रतिविधिं परिहारम् आत्मयोगेन आत्मसामर्थ्येन स्वानिर्मितोपायेन वा तमोऽज्ञानम् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मयोगेन योगमायाख्यया स्वाभाविकशक्त्येत्यर्थः । लोकेश-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मानिनामिति बहुत्वं तद्द्वयडेनान्येषामपि शिक्षाभिप्रायेण मत्त एव नान्यतः ॥ १६ ॥ १७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तादृशानां विज्ञापनमाह—कृष्णकृष्णेति । सम्भ्रमात् वीप्सा गोकुलं त्रातुमर्हसीति विज्ञापना न तु स्तोत्रं कृत्वैव सर्वे विज्ञापनं कुर्वन्ति ततः कथमकस्माद्विज्ञापनमिति चेत्तत्राहुः—हे महाभागेति । महद्भाग्यं यस्येति केवलं वराकास्तोत्रे व्यासादय एव महान्तो निरन्तरं स्तुवन्ति अहो महाभाग्यवतः अल्पैः किं कर्त्तव्यमिति । अथवा यथा भवन्तः वेपमानाः तथाऽहमपीति न वक्तव्यं त्वं तु महाभागः अलौकिकसर्वभाग्ययुक्तः अतो अलौकिकेन प्रकारेण त्रातुमर्हसीत्यर्थः । सर्वथा रक्षायां हेतुः त्वन्नाथमिति त्वमेव नाथो यस्य । किञ्च, गवां कुलं गावः सर्वैरेव पाल्याः त्वं च प्रभुः पालनक्षमः पालनसमर्थः अतो बहूनां हेतूनां विद्यमानत्वात् त्रातुमर्हसि । ननु, लौकिक एवोपायः कर्त्तव्यः केवलवस्त्रादिभिर्गृहैर्गुहादिभिर्वा किं मत्प्रार्थनयेति चेत्तत्राहुः, दैवादिति । प्राकृतापकारे हि प्राकृतैः प्रतिक्रिया अयन्त्वपकारो दैवः इन्द्रेण कृतः तर्हि स एव प्रार्थ्यतामिति चेत्तत्राहुः—कुपितादिति । स हि कोपं प्रापितः अपकारकरणात् अतः कुपितो मारयत्येव । ननु, दैन्यं दृष्ट्वा न मारयिष्यतीति चेत्? तत्राहुः, हे भक्तवत्सलेति भवानेव भक्तवत्सलः स तु निर्दय एव अतस्त्वयैव वयं पालनीयाः ॥ १३ ॥

एवं विज्ञापितः कर्त्तव्यं विचारितवान् किमिन्द्रो मारणीयः मेघा वा निवारणीयाः वृष्टिस्तम्भो वा कर्त्तव्यः एतेभ्यो वा ऽलौकिकं सामर्थ्यं देयम् अन्यत्र वा नेयाः अन्यद्वा कर्त्तव्यमिति तत्र प्रथमं उपद्रवनिदाननिर्धारमाह—शिलावर्षेति । शिलानां वर्षणरूपो यो निपातः निरन्तरपतनं सर्वतः तेन हन्यमानं गोकुलं निरीक्ष्य कुपितेन्द्रकृतमेव मेने यद्यपि तैरुक्तमेव तथापि वासनया वदन्त्याहोस्विदसत्यमेव लौकिकास्तु पौर्वापर्यमेव दृष्ट्वा अहेतुमपि हेतुं मन्यन्ते तथैव किं यागभङ्गानन्तरमेव वृष्टिर्जातेति वदन्ति आहोस्वित्तथैवेति भवति विचारणाज्ञानेऽप्यर्थो निराकरणार्थमनूद्यते ॥ १४ ॥

अन्यथा विमृश्य कारित्वं शङ्क्येत ततस्तेषामुपद्रव इन्द्रकृत इति निश्चित्य हन्यमानत्वात् शीघ्रं प्रतीकारं कर्त्तुं विचारयन्नाह, अपर्त्ताविति द्वाभ्याम् । अचेतनत्वात् न तद्वचनापेक्षणमाज्ञाविलम्बश्च भगवत्त्वात् सर्वसाधनपरित्यागं वृष्टिरेतादृशी स्वाभाविक्यपि भवतीति तन्निराकरणार्थमपर्त्ताविर्युक्तं मर्यादा कालोऽयमतः कलापिव न यदा कदाचिद्वृष्टिः तत्राप्यत्युल्बणमतिभयानकं कृतावध्येतादृशं दुर्लभमिति अत्यन्तं वातो यत्र वायुना हि नीयन्ते मेघाः तत्रापि शिलामयम् अल्पं जलं करका बहवः एवं चतुर्भिर्दोषैः इन्द्र एव वर्षतीति ज्ञायते आर्षज्ञाने नित्यज्ञाने वा तर्कों यदि न सहकारी स्यात् विरुद्धो वा भवेत् तदा लोकानामार्षज्ञानप्रतीतिर्न भवेत् कार्ये जातेऽपि कारणाविषप्रतीतिः स्यात् अतस्तर्कों युक्तो ज्ञानसहकारी तदाह—स्वयागे इन्द्रयागे नितरां हते गोकुलनाशार्थमेव इन्द्रो वर्षतीति ॥ १५ ॥

तर्हि किं विधेयमित्याकाङ्क्षायामाह—तत्र प्रतिविधिमिति । नात्र इन्द्रो दूरीकर्त्तव्यः तथा सति क्लिष्टकारित्वं स्यात् अधिकारस्यैव तथात्वेन स्वतो दोषाभावात् वृष्टिनिवारणे तु स्वतो युद्धं कुर्यात् तत्र मारणामारणाभ्यां पूर्वदोषानिवृत्तेः वृष्टिस्तम्भे मेघान् मारयेत् मेघनाशे अग्रिमकार्यं न स्यात् अतः प्रतिविधानमेव कर्त्तव्यं तत्र प्रतिविधिं साधय इति यद्यन्यत्रैते नीयेरन् तदा तत्रापि भवेत् स्थानच्युतिर्वा स्यात् इतराभयं वा भवेत् अतोऽनेन गोवर्द्धनेन अद्नो भुक्त इति अयमेव साधनीकर्त्तव्यः । प्रतिकृत्या तस्य क्लृप्तत्वात् तदाह—सम्यक् इति नन्वेते पाषाणाः समुदायीभूय पर्वतव्यपदेशं लभन्ते नाप्येकोऽवयवी अत उत्तोलनेऽपि पाषाणानां पातः स्यात् भवतीयस्य लौकिकन्यायेन प्रवृत्तस्य पुष्टिकार्यपरस्य न प्रशासनन्यायेन पर्वत उपरि स्थापयितुं शक्यः अतः कथमुद्धरणमिति चेत् तत्राह—आत्मयोगेनेति । योगमाययेति योगमायाप्यत्र कार्ये स्वीकृता यथा गर्भसङ्कर्षणे तद्वत्पर्वतधारणेऽपि विनियोजनाय यानकोऽप्यंशः पतेत् तस्याः वशसिद्धयर्थं स्वक्रियाशक्तिस्तत्र प्रयोजनीया, ननु, किमेतावता क्लेशेन पूर्वमेवाऽयमुपद्रवः कथं न विचारित स्तत्राह—लोकशमानिन इति । अहमेव लोकेश इति स्वात्मानं मन्यते नास्त्यधिकारिणामिति । ननु, वस्तुत एवायं लोकेश इति चेत्तत्राह—मौढ्यादिति । न ह्यधिकारी ई[ह]शो भवति एतदुपपादितं "सर्वे पतिः स्यात्"इत्यत्र "स एक एवेतरथा मिथो भयम्" इति. अत इन्द्रो नेश्वरः मौढ्यादेव तथा मन्यते तस्य स मोहः श्रीमदेन जातः तमः अज्ञानमेव अतो हरिष्ये ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ" इति गर्गोक्तिमनुस्मृत्य एतादृशमहाविपत्तौ श्रीनारायण एव कृष्णमाविश्यास्मान् रक्षतीति विश्वस्ता गोपाः प्रार्थयन्ते कृष्णेति देवादिन्द्रात् ॥ १३ ॥

कुपितेनेन्द्रेण कृतं तद्रूपं विज्ञापनात् पूर्वमेव मेने भगवन्नित्यपार्षदानामपि तत्तत्कष्टं लीलाशक्त्यैव प्रेमानन्दरसस्योत्कर्षणास्वादनार्थमुपस्थापितं लोभवतां बुभुक्षूणां क्षुत्कष्टमिव सुखोदर्कत्वात् सुखात्मकमेवेति ज्ञेयम् ॥ १४ ॥

कुपितेन्द्रकृतं मत्वा स्वगतमुवाच—अपर्त्ताविति पञ्चकम् । भगवानेवस्वाह अपगतऋतुर्यस्य तद्रूपे शिलामयं शिलाप्रचुरम् ॥ १५ ॥

प्रतिविधिं प्रतीकारम् आत्मनो योगेन योगमायया लोकेशमानिनां श्रीमदजनं तमो हरिष्यामि बहुवचनं वरुणादीनप्यभिप्रैति ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरिः शरणागतार्तिहरः विज्ञापयन्तं जनं हन्यमानं निरीक्ष्येन्द्रकृतं व्यतिक्रमं मेने पूर्वन्तु शिलावर्षनिपातं सहमानोपि तूष्णीं बभूव स्वविषयेऽकिञ्चित्करत्वादिति भावः ॥ १४ ॥

नहि सद्भावयुक्तानां सुराणामीशविस्मयः ।
मत्तोऽसतां मानभङ्गः प्रशमायोपकल्पते ॥ १७ ॥
तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ।
गोपाये स्वात्मयोगेन सोयं मे व्रत आहितः ॥ १८ ॥
इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ।
दधार लीलया कृष्णश्छत्राकमिव बालकः ॥ १९ ॥
अथाह भगवान् गोपान् हेऽम्ब ! तात ! व्रजौकसः ।
यथोपजोषं विशत गिरिगर्तं सगोधनाः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथं मेने ? इत्यत आह—अपगतः ऋतुर्यस्य तत् अति अतिशयितो वातो यस्मिन् तत् शिलामयं जलोपलप्रचुरमत्युल्बणमसह्यं वर्षं नाशायास्माकमिति शेषः । वर्षति ॥ १५ ॥

श्रीभगवतः प्रतिज्ञापूर्वकं गोवर्धनोद्धरणमाह—तत्रेत्यादिना । मौढ्याल्लोकेशमानिनां श्रीमल्लक्षणं तमो हरिष्यामि नतु किञ्चिदपि अपकारं करिष्यामि बहुवचनस्येन्द्रविमदत्वविधानाबोधने अन्येपि विमदाः भविष्यन्तीत्यर्थः । अतस्तत्र वर्षे एव प्रतिविधिं प्रतिकारं साधये ॥ १६ ॥

---

भाषा टीका ।

श्रीकृष्ण तें सब बोले, कि—हे कृष्ण ! हे कृष्ण हे महाभाग ! हे भक्तन पै हित करन वारे हे प्रभो ! तुम जिनके नाथ हौ ऐसे या व्रज कौं कुपित इन्द्र तें रक्षा करौ ॥ १३ ॥

बडीशिलान की वर्षा तें गोकुल कूं ताडित होयवेते अचेतन देखिकें श्रीकृष्ण कुपित इन्द्र को कर्त्तव्य मानत भये ॥ १४ ॥

विना ऋतु के भयानक बडी घोर शिलामय वर्षा कूं और बडी पवनकूं देखिकें श्रीकृष्ण विचारत भये, कि-अपने याग नष्ट होयवे तें इन्द्र व्रज के नाश करिवे कूं वर्षं है ॥ १५ ॥

ता वर्षाके दूरि करिवे के उपाय कूं अपने योगकी सामर्थ्य तें रचूंगो, और अपनकूं लोकेश मानन वारेन की मूढतातें उनकूं भयो जो श्रीमद ताकूं मैं हरण करूंगो ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, देवाः सात्त्विकास्त्वद्भक्ताश्च कुतस्तेषां तमस्तत्राह—नहीति । सद्भावः सत्त्वं मद्भक्तिर्वा तद्युक्तानां सुराणामीशा वयमिति विस्मयो गर्वो हि यस्मान्न घटतेऽतोऽसंगतस्ते । किञ्च, तेषां मानभङ्गोऽनुग्रह एवेत्याह-मत्त इति ॥ १७ ॥

गोपाये रक्षिष्यामि । किञ्च, सोयं मे मया व्रतो नियमः सङ्कल्पो वा आहितो धृत इत्यर्थः ॥ १८ ॥

कृत्वा उत्कृत्य छत्राकमुच्छिलीन्ध्रम् ॥ १९ ॥

यथोपजोषं यथासुखम् ॥ २० ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

असतां श्रीमदेन दुश्चेष्टितानाम् अन्यचेः । यद्वा, श्रीमदं हरिष्य इत्यत्र हेतुमाह-हि यतः सुराणां ईशोऽहमिति विशेषेण स्मयो गर्वो नोपकल्पते योग्यो न भवति यतः सद्भावयुक्तानाम् अतः श्रीमदेनासतामपि तेषां हितमेव करिष्यामीत्याह—मत्त इति । नान्यतः मदैश्वर्यस्फूर्त्तेव तादृशयोग्यत्वादिति भावः ॥ १७ ॥

यस्मान्ममात्मनिर्विशेषत्वेनास्मच्छन्दस्वीकृतानां मत्पित्रादिगोष्ठवासिनां नाशायेन्द्रो वर्षति तत्र च प्रतिविधिं मत्परैव साधयिष्यामि तत्र चानुपङ्क्तिया लोकेशमानिनां तमो हरिष्ये तत्र युक्तं तस्मात् अहमेव मदिदं गोष्ठं स्वात्मयोगेन असाधारणस्वाभाविकप्रभावेन गोपाये अप्रयत्नेन गोपयिष्यामि न केवलं अप्रयत्नेव किन्तु सः पूर्वपूर्वसिद्धः अयं गोष्ठस्य गोपनरूपो मम व्रतो नियम एवाहितः सम्यक् धृतो विहित इत्यर्थः । कीदृशं गोष्ठं ? तत्राह अहमेव शरणं रक्षिता यस्य तत् यतोऽहमेव नाथ ईश्वरो यस्य तत् । किञ्च, मम परिग्रहं कुटुम्बम् अतोऽकार्येणापि रक्षणीयमित्यर्थः—

"वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्" ॥

इतिवत् । यद्वा, मम शरणम् आश्रयं मम नाथं परिपालकं कुतः अहमेव परिग्रहो धनपुत्रदारादिसर्वं यस्य तत् मदेकप्रियमित्यर्थः । अतो गोपाये इति वर्त्तमान प्रयोगेन स्वाभाविकत्वं व्यञ्जयति अत आत्मयोगेनेत्युक्तम् । अतः सोऽनादिसिद्धोऽयं सम्प्रत्यपि प्राप्त इति दर्शितं तत्र हेतुः ये मम निजनराकृतिनिधीश्वरस्येति अतः प्रतिज्ञा आहितः सर्वांशेन धृतः तदेवमिन्द्रस्य मच्छरणत्वादिविरुद्धधर्मेण मच्छरणत्वादिरूपगोष्ठवासिनां विरोधाय प्रवृत्तत्वात् मानभङ्गोऽपि गोष्ठवासिगोपनाय योग्य इति विवक्षितम् ॥ १८ ॥

इत्युक्त्वेति । महामेघारम्भादेव गोवर्धनानिकटे सर्वेषामानयनमवगन्तव्यं एकेन वामेन सव्येन पाणिनेति हरिवंशादौ कृत्वा-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

छित्त्वेति मूलतोऽर्द्धमस्य हेतुं मानसगङ्गाया उत्तरतो विच्छिन्नत्वात् तेषां संरक्षणार्थाय धृतो गिरिवरो मया सोऽन्नकूट इति ख्यातः "सर्वतः शक्रपूजितः" इति वाराहप्रसिद्धस्य तस्य भागस्याद्यापि पृथक् प्रसिद्धेः न कथमपि कदाचिदपि चलतीत्यचलपदश्लेषः लीलया अनायासेन—यद्वा, कटितटं दक्षिणश्रीहस्तन्यासाविभङ्गी-विशेषेण दधार तथैव प्राचीनश्रीमूर्त्तिदर्शनात् यतो बालकस्त्व-त्राकमिव बालकलीलानतिक्रमेणैवेत्यर्थः । एवमनायासोऽपि दर्शितः ननु, बालमूर्त्तेस्तद्धारणादिसंनिवेशः कथं घटते ? तत्राह—विष्णुः अचिन्त्यशक्त्या तत्तद्रूपत्वेऽपि विभुः कृष्ण इति पाठेऽपि स एवार्थः तथैव हि सहस्रनामस्तोत्रे "अनिर्देश्यवपुः श्रीमानमेयात्मा महा-द्रिधृक्" इति । अतो यथेच्छमेव पर्वतादीनामुपर्यधोविस्थितिर्जाते-त्यर्थः । ततः श्रीवैशम्पायनोक्तिरपि घटते "स धृतः सङ्गतो मेघैः" इति तथा "आप्लुतोऽयं गिरिः पक्षैरिति विद्याधरोरगाः । गन्धर्वा-प्सरसश्चैव वाचो मुञ्चन्त सर्वशः" इति । तच्च श्रीगोवर्द्धन-शृङ्गाग्रेमेघवर्गोद्घट्टनक्रीडार्थमेवेति ज्ञेयम् तत्र व्रजकर्तृकदर्शन-सौकर्याय श्रीकृष्णकर्तृकधारणसौकर्याय चोर्माविशेषाय चैवं कल्पते उत्थापनसमये लीलाशक्त्यानुकूल्येन पर्वतमध्याधोभा-गात् विच्छिद्य कुट्टिमायमानो महाशिलासमुच्चय एको मध्य-गर्त्ते स्थितः यं शिलासमुच्चयमारुह्य यं निम्नं पर्वतमध्यदेशं श्रीहस्तेन विष्टभ्य च सुखं दधारेति अत्र गर्त्तमध्ये वहिर्जल-पतनागमननिवारणादिसमाधानशतमपि लीलाशक्त्यानुकूल्येः नैव ज्ञेयम् तथाच श्रीहरिवंशे "स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना । गृहभावं गतस्तत्र गृहाकारेण वर्चसा" इति एवं व्रामकरेण लीलया तद्धारणं वस्तुतः निजजीवनानपेक्षया तदेकसुखापेक्षकाणां व्रजजनानां तेषां लीलाश्रमबोधनेन सुखार्थं-मेव अन्यथा तेषां सर्वनाशतोऽपि महादुःखापत्तेः एवमन्यच्च तस्य सर्वमेवोह्यम् ॥ १९ ॥

हे अम्बेति मातुरादौ सम्बोधनं स्नेहविशेषेण पुत्रहेतु-कन्द्रक्रोधवृष्टिदृष्ट्या तथा वा पुत्रदुःखशङ्कया चिन्ता दुःखा-कुलायाः सान्त्वनेच्छयाच । ततश्च हे तातेति स्नेहानुक्रमात् तस्य प्रवेशे सत्येव तस्याः प्रवेशाच्च उपलक्षणञ्चैतत् श्रीरो-हिण्यादीनां हे व्रजौकसो यथोपजोषमिति यथा व्रजे वासस्त-थैवात्रापि सम्पत्स्यत इति भावः । ननु, "मध्ये योजनविस्तारं तावद्द्विगुणमायतम्" इति श्रीहरिवंशे व्रजविस्तारस्य वर्णितत्वात् कथं गोवर्द्धनगर्ते व्रजो माति ? उच्यते; तस्याचिन्त्यशक्त्या मह-त्त्वापत्तेरिति तथाच हरिवंशे तेनैवोक्तं "शैलोत्पाटनभूरेषा महती निर्मिता मया । त्रैलोक्यमप्युत्सहते रक्षितुं किं पुनर्व्रजम्" इति । गिरेर्गर्त्ते तन्मूलोत्पाटनभूभागं गर्त्त एव समाह्वानञ्च वाताद्या-वरणापेक्षया गावः पशव एव धनानि । यद्वा, गावो धनानि धान्यानि तत्र सहिताः तदेवं सर्वव्रजवासिनां तदपत्रा-देशावगतत्वं तद्वचनस्य च सर्वसुभगत्वं ध्वनितम् ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सद्भावयुक्तानां मयि भावबन्धयुक्तानाम् ॥ १७—२५ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

ननु उपेन्द्रादिरूपेण तद्रक्षणशीलः कथं तदनर्थोद्युक्तः ? इत्य-पवादशङ्कया स्वयमेव सोपपत्तिकं तत्समाधातुमाह—नहीति । मद्भाव युक्तानां मयि भक्त्यात्मकभावबन्धयुक्तानां सुराणां सत्त्वप्रचुराणाम् ईशा वयमिति विस्मयो गर्वो न हि नास्त्येव अथापि प्रकृतिवशात् कदाचिदसज्ज्ञानानामीशविस्मयवतामसतां तेषां मानभङ्गः ईशाविस्मयभङ्गः प्रशमायैवोकल्पते तद्रक्षैकशीलस्य मम तन्मान-भङ्गद्वारा तदुपशान्त्युपयुक्तोद्योग उचित एवेति भावः ॥ १७ ॥

तस्मात् तदुद्योगस्य सूचितत्वात् गोकुलस्य शरणागतत्वा-दहमेव नाथो रक्षिता यस्य अहमेव रक्षणोपायो यस्य अह-मेव परिग्रहः शरण्यः प्राप्यो यस्य तद्गोष्ठं स्वात्मयोगेन स्वसामर्थ्येन गोपाये रक्षेयं सोयं शरणागतरक्षणमद्भक्तविस्मय-भङ्गरूपो व्रतो मया आहितः धृतः ॥ १८ ॥

इति इत्थमुक्त्वा एकेनैव हस्तेन गोवर्द्धनाचलं कृत्वा उत्कृत्य उत्पाट्येति यावत् सप्तवर्षः विष्णुः श्रीकृष्णः लीलया शिलीन्ध्रमिव दधार वामकरकनिष्ठिकानखाग्रेण दधारेत्यर्थः ॥ १९ ॥

अथ धारणानन्तरं भगवान् गोपानाह, उक्तिमेवाह—अम्बे-त्यादिना तथ्यवतः प्राकनेन । हे अम्ब ! हे तात ! हे व्रजौकसः ! यथासुखं सगोधनाः सर्वे यूयं गिरिगर्त्तं निर्विशत ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अज्ञानहरणेन किं प्रयोजनमित्याशङ्क्य संसारबन्धननिमि-त्ताहङ्कारनाशनार्थमित्याशयेनाह—नहीति । मद्भावयुक्तानां मद्भक्ति-युक्तानाम् इत्यमर्थश्चोत्पाठोऽप्येवं किं न स्यादिति चेन्न भक्ति-शब्दार्थविवरणार्थत्वात् तथाहि भावो लीलाक्रिया चेष्टा भक्त्यादिष्वर्थेषु भावशब्दप्रवृत्तेः भगवल्लीलादिभस्त्वप्रदर्शनेन सर्वकालस्मरणस्त्वेन मनोवृत्तिरिति प्रकाशनेन भक्तेरित्यभितत्व-मुक्तं स्यादिति ईशोऽहमिति स्मयोऽस्त्युत्वयादर्पो नहि सतां स्वभावमाह—मत्त इति । प्रशमाय प्रकृष्टमभिष्ठायै ॥ १७ ॥

ममायं जयस्तम्भ इत्याह—तस्मादिति । अहमेव परिग्रहो मूलं यस्य स तथा पत्नीस्वीकारशपथमूलेष्वपि परिग्रहः इति व्रतो नियमो जयस्तम्भः गोपाये पालयामि ॥ १८ ॥

कृत्वा उन्मूल्य "कृती छेदने" इत्यस्मात् शिलीन्ध्रं यथोपजोषं यथासुखं गर्त्तं विशत ॥ १९ ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोपाय इति वर्त्तमानप्रयोगेन स्वाभाविकत्वं व्यञ्जयति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, किन्तज्ज्ञानहरणेनेत्यत आह—नहीति । मद्भावः शुद्धसत्त्वं देवत्वं वा पूज्यत्वम्, ऐश्वर्यं वा षण्णां हि धर्माणां अत्र स्थितिः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्राज्ञानं न तिष्ठेदिति अन्यथा स न भक्तः स्यात् भक्तिस्तु नात्र विवक्षिता विस्मयसामानाधिकरण्याभावात् अतः ऐश्वर्यसत्वादेरज्ञानसहकारित्वं न युक्तमिति उभयोरप्यनन्तरनिराकरणे कृपालुत्वात् तत्र एव हारिष्ये ईशा वयमिति विशेषणद्वयो गर्वः न हि लोकेऽपि भवति जाते वा सोऽधिकारी स्यादयं लोकन्यायेन स्वकरणं कृपालुत्वादेव अक्लिष्टार्थं च ननु मानभङ्गापेक्षया अधिकाराभाव एव श्रेष्ठ इति चेत्तत्राह मत्तोऽसतामिति। यद्ययं मानभङ्गः अन्यतः स्यात् अयुक्तः स्यात् लज्जाकरश्च भवेत् मत्तः सर्वेश्वरात् मानभङ्ग उचित एव नात्यन्तलज्जाकरः । किञ्च, यद्येक एवेन्द्रः तथा भवेत् तदा निराकर्त्तव्यः स्यात् सर्वे एव तथा जाता इति प्रधानशिक्षया सर्वे एव शिक्षणीयाः तदाह—असतामिति। सर्वे एव लोकपालाः असन्तो जाता इति अन्यथान्योऽप्येतादृश एव स्यात् ततोऽनवस्था भवेत् तस्मादसतां मानभङ्गः एकद्वारा कृतः सर्वेषामेव प्रशमाय भवति उप समीपे च कल्पते शीघ्रं च भवति प्रत्येककरणे बहुकर्त्तव्यं स्यात् एतद्राजमन्त्रणाम् नन्वेतेऽप्य एव आवश्यकत्वाल्लाघवादिदानीमेव कथं न मुक्तिर्दीयत मानभङ्गस्तु प्रकारान्तरेणापि भवति गोवर्द्धनस्य तूद्धरणमलौकिकं ज्ञानोपदेशो वा कर्त्तव्यः अलौकिकं सामर्थ्यं वा देयं बृहस्पतिद्वारा इन्द्रो वा निवारणीयः ॥ १७ ॥

अत एतावति प्रकारे सति गोवर्द्धनोद्धरणमेव कुतः क्रियत इत्याशङ्क्याह-तस्मादिति। अहमेव शरणं यस्य नापि ज्ञानं नापि भक्तिः अन्यथा अवतारप्रयोजनं न स्यात् पुष्टिमार्गश्च न भवेत् तत्रापि गोष्ठम्। न हि गावः उपदेशयोग्याः इदानीं तु मुक्तिर्भक्तिमार्गविरोधिनी तदाह-मन्नाथमिति। अहमेव नाथः स्वामी यस्येति अतः स्वामिसेवकभावनाशकत्वात् नेदानीं मुक्तिर्युक्ता किञ्च, मत्परिग्रहमिति मम परिग्रहो यत्र मया सर्वे सङ्घाता एव गृहीता तत्र यदि एकोऽप्यंशो गच्छेत् तदा प्रतिज्ञाविरोधः स्यात् तथा सति विशेषाभावात् सर्वनाश एव भवेत् अतो यथा ते जीवाः परिगृहीताः एवं तेषां देहा अपि अतः गोपाये साधनं तु आत्मयोगेनेति पर्वतधारणे योगमायायाः कारणत्वम् एतेषां सर्वथा रक्षायां आत्मयोग एव यथा वायुनिरोधे इन्द्रियाणि सर्वोपद्रवरहितानि भवन्ति तथैतेष्वहमात्मानं स्थापयिष्यामि ततो मयि स्थिताः मद्भ्यन्तरस्थितपूर्वमुक्ताशभोजिनो भूत्वा सुखिनो भविष्यन्ति इति अयमेव पूर्वकृतभोजनोपयोगः। ननु, किमेतावता क्लेशेन तत्राह-सोऽयं मे व्रत आहित इति—

शरणागतस्य संरक्षा सर्वभावेन सर्वथा ।
कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥
सङ्ग्रामे च प्रपन्नानां तवास्मीति च यो वदेत् ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

तस्मात्सर्वथा स्वव्रतं पालनीयमिति स्वधर्मनिर्वाहार्थमेव गोपाये अन्येरप्युत्तमेव किमिति गृह्यते ? तत्राह-अयं व्रतः पूर्वमेव मया आहितः स्वीकृत आधिनो वा अतो गृहीतस्य त्यागाभावात् पालनमेवोचितम् ॥ १८ ॥

प्रथमं क्लेशसम्बन्धः पूर्वपापवशधर्मतः ।
शरणागमने बुद्धियोगानुष्ठानतो भवेत् ॥
मर्यादारक्षणार्थाय शरणागतिवर्णनम् ।
अन्यथाप्यगृहीतार्थं गृह्णीयात् भगवान् कथम् ॥
अतो योगोपदेशश्च दूरोपायतया मतः ।
भक्तिमार्गस्तथा क्लिष्टकर्मत्वं च ततो भवेत् ॥

अतो भगवानेवं विचार्य तान् प्रति तथोक्त्वा विश्वासार्थं श्रुतिविरोधपरिहारार्थमाधिदैविकसमरणार्थं माया गोवर्द्धनादीनां च प्रबोधनार्थं तथोक्त्वा गोवर्द्धनोद्धरणं कृतवानित्याह-इत्युक्त्वेति। अयं गोवर्द्धन उत्तोलितः सन् चलः स्यात् तथा सति स्वरूपनाशो भवेत् अचलो हि सः अतः एकेन हस्तेन गोवर्द्धनमचलं कृत्वा दधारेति सम्बन्धः गाः वर्द्धयतीति गोवर्द्धनः आधिदैविकस्य नामेति पूर्वं उपस्थापितः स चलोऽपि भवेत् तस्याप्यचलता सम्पादिता धारणार्थम् एकया क्रियाशक्त्या पालनलक्षणया अन्यथा सेवायामपि प्रवृत्तः चेत् चलनं स्यात् अथवाऽल्पो गोवर्द्धनः लम्बो विस्तृतश्च तमेकेन हस्तेन यादृश उद्धर्त्तव्यः तादृशं कृत्वा पश्चाद्धार। एवं सति क्लेशो भवेत् किं वा प्रयोजनमित्याशङ्क्याह—लीलयेति। लीलायां क्लेशो रसाय भवति लीलामात्रेण कृतत्वात्क्लेशश्च ननु सर्वेश्वरो भगवान् कथमेवचलं चलं विधाय स्वतःस्थितमन्यथा कृत्वा पालितवानिति प्रकारान्तरेणापि पालनसम्भवात् तत्राह—छत्राकमिव बालक इति। यथा बालाः लीलायां छत्राकं स्थिरमपि राजलीलां बोधयितुं तत उत्पाट्य मस्तकोपरि स्थापयन्ति तथा सति बाललीला सा भवेत् अन्यथा मर्यादाभङ्गो दोषाय स्यात् अत एवेन्द्रो न निवृत्तः पौरुषस्याप्रकटितत्वात् अनायासेऽपि दृष्टान्तः वस्तुतो रक्षा भगवतैव कृता। ननु, गोवर्द्धनेनाप्युद्धृतेन न हि छत्राकं कश्चिद्वृष्टिं वारयति वृष्ट्या नाशसम्भवाच्च अतः अप्रयोजकत्वमपि ज्ञापयितुं दृष्टान्तः ॥ १९ ॥

तथोद्धृतवान् यथा मध्ये गर्तो भवति प्रान्तभागश्चोन्नतः गर्त्तोपरिकप्रदेशे च तद्वता छाया एवं धृत्वा शरणागतानाह—अथेति। उपायं कृत्वैव समाधानवचनमुक्तवान्। ननु, एवमित्यानन्तर्योऽर्थोऽथ शब्दः भगवानिति पर्यवसानपरिज्ञानं गोपानिति धर्मपरान् अन्यथा भगवद्वाक्ये विश्वासो न भवेत् विपरीतक्लेशानुभवात् अतः तान् प्रत्याहेति वक्तव्ये गोपानाहेत्युक्ते ऽन्यान्तरभेदं वक्तुं स्थानविशेषनिर्देशार्थं स्नेहेन विशेषतः सम्बोधयति हे अम्ब ! हे तात ! हे व्रजौकसः ! इति राजसादिभेदश्च च प्रदर्शितं सर्वे एव पालयन्त इति ज्ञापनार्थं यथोपजोष यथासुखं गिरिगर्त्ते विशत सर्वेषामेव स्थितौ महत् स्थानमस्तीति ज्ञापितं गोधनसहिताः गाव एव धनानि येषां गोभिः धनैश्च सह वा ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तीकृतसारार्थदर्शिनी ।

नन्वेवमिन्द्रायातिक्षुद्राय मतिचोदीयसेऽहं स्पर्द्धे किन्तु तस्य मङ्गलस्योद्धतं दोषमेव कृपयैव चिकित्सन्नस्मीत्याह-महीति। सद्भावः सत्त्वं मद्भक्तियों तद्युक्तानां सुराणामीशा वयमिति विशिष्टः स्मयो गर्वो हि यस्मात्र घटते तस्मात् सम्प्रति-

न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने ।
वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥ २१ ॥
तथा निर्विविशुर्गर्तं कृष्णाश्वासितमानसाः ।
यथाऽवकाशं सधनाः सव्रजाः सोपजीविनः ॥ २२ ॥
क्षुत्तृड्व्यथां सुखापेक्षां हित्वा तैर्व्रजवासिभिः ।
वीक्ष्यमाणो दधावद्रिं सप्ताहं नाचलत्पदात् ॥ २३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

असन्मार्गे स्थितत्वादसतां तेषां मानस्यावरस्य भङ्ग एव प्रशमाय गर्वरोगस्योपशान्त्यै ॥ १७ ॥

किञ्च, यतस्तत्कृतमिदमत्र सङ्कटमुपस्थितं तस्माद्गोष्ठमेतद्गोपाये मम शरणं गृहरूपं "शरणं गृहरक्षित्रोः" इत्यनेकार्थवर्गः । गृहस्याश्रयाद्दमेव नाथ इत्याह—मन्नाथं मम परिग्रहाः पितृभ्रातृप्रेयस्यादयो यत्र तत् न केवलमस्मादेव सङ्कटाद्गोपाये अपि तु सर्वस्मादपि सङ्कटान्महाप्रलयकालादपीत्याह—स प्रसिद्धोऽयं व्रतो नियमो मे मया आहितो गृहीतः ॥ १८ ॥

इति स्वगतमुक्त्वा एकेन हस्तेनेति वामेनैव यदुक्तं हरिवंशे "स धृतस्सङ्गतो मेघैर्गिरिः सव्येन पाणिना । ग्रहभावं गतस्तत्र गृहाकारेण वर्चसा" इति छत्राकं शिलीन्ध्रमिव दधारेति दिधीर्षासमये योगमायांशभूतया संहारिकया शक्त्या तावत्यपि द्रुतिदाकाश एव तथा सङ्कुहं यथा स्वगृहालिन्दादतिवेगेन गोवर्द्धनमुद्धर्तुमभिद्रुतवतो भगवत उष्णीषादिवासांस्यपि नातिस्तिमितानीति ज्ञेयम् ॥ १९ ॥

यथोपजोषं यथा सुखम् । ननु, क्रोशत्रयमात्रस्य गोवर्द्धनस्य तले सर्वव्रजस्थाः कथं मान्तु ? उच्यते भगवत्पाणिस्पर्शानन्दादेव लब्धाचिन्त्योजसा श्रीगोवर्द्धनेन कुपितेन्द्रप्रक्षिप्तकुलिशशतघातमपि स्वपृष्ठे कुसुमहारमिवानुभवता तथा सम्यगवृद्धचत यथा योजनचतुष्टयप्रमाणव्रजनगरस्था जनाः सर्वे एव गवादिपशवश्च स्वतले यथावकाशमेव निवासयामासिरे अत एव हरिवंशे भगवतोक्तम्—

"शैलोत्पाटनभूरेषा महती निर्मिता मया ।
त्रैलोक्यमप्युत्सहते रक्षितुं किं पुनर्व्रजम्" इति ।

किञ्च, गोवर्द्धनोपरिस्थानां हरिणवराहादीनां पशूनां पक्षिणां च "सधृतः सङ्गतो मेघैः" इति हरिवंशोक्तेस्तन्नितम्बारूढान् पर्वतो मेघानालक्ष्य तदूर्ध्वशृङ्गाण्यारोहतां न तिलमात्रमपि कष्टमभूदिति ज्ञेयम् ॥ २०—२१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

"सत्त्वतः सुरगणाः" इति शास्त्रात् सद्भावयुक्तानां सत्त्वगुणयुक्तानामीशा वयमिति विस्मयो गर्वो न घटते हि यदि तव सहचरयो रजस्तमसोरपि वृद्धिर्दैवात्स्यात्तदा सात्त्विका अपि असन्तो भवन्ति तेषामसतां मदो मानभङ्गो युक्त एव स च प्रशमाय पुनः सद्भावाय कल्पते योग्यो भवति ॥ १७ ॥

शोभनेन आत्मयोगेन स्वसामर्थ्येन गोपाये रक्षिष्यामि सोऽयं शरणागतरक्षणरूपो व्रतः मे मया आहितः धृत इत्यर्थः ॥ १८ ॥

द्वाभ्यां हस्ताभ्यां कृत्वा उत्कृष्य उत्पाट्य छत्राकं शिलीन्ध्रमिवैकेन हस्तेन दधारेत्यन्वयः—

"दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः" इति ।
"दधारैकेन हस्तेन शैलं प्रियमिवातिथिम्" ॥

इति च हरिवंशे ॥ १९ ॥

यथोपजोषं यथावकाशं गिरिगर्त्तं गिरिखातम् ॥ २० ॥ २१ ॥

---

भाषा टीका ।

मेरी भक्ति वारे अथवा सत्त्व गुण वारे जो हैं तिनकें "हमही ईश्वर हैं" ऐसो गर्व नहीं होय है तातें इन्द्र सात्त्विक नहीं है, तासों याको मोतें जो मान को भंग होय वो है, सो याही की शांति करनवारो है ॥ १७ ॥

तासों मैं जाप्लो नाथ मेरी शरण में आयो मैंने जाको स्वीकार कियो ऐसे या ब्रज कों मैं अपने योग बल तेंई रक्षा करूंगो ॥ १८ ॥

ऐसे कहिके एक हाथतें गोवर्द्धन पर्वत कूं उखारिके लीला पूर्वक श्रीकृष्ण धारण करत भये, जैसें बालक छतोना कूं उठाय लेइ ॥ १९ ॥

पर्वत कूं उठाय कें श्रीकृष्ण भगवान् कहन लगे, कि—हे मैया ! हे पिता ! हे ब्रजवासिओ ! गायन कूं लेकें सुख सों या पर्वत के नीचे आय जाओ ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सव्रजाः शकटमण्डलसहिताः सोपजीविनो भृत्यपुरोहितादिसहिताः ॥ २२ ॥

पदात्स्थानात् ॥ २३—२५ ॥

---

**कृष्णयोगानुभावं तं निशाम्येन्द्रोऽतिविस्मितः ।**
**निस्तम्भो भ्रष्टसङ्कल्पः स्वान् मेघान् संन्यवारयत् ॥ २४ ॥**

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मम हस्तात् अद्रेर्नितरां पातनं पतनं तदाऽऽशङ्क्य स्वार्थे णिच् । यद्वा, इन्द्राद्विना केनापि पातनं तस्मात् त्रासः मदनिष्टशङ्का वो युष्माकं कार्यः कर्त्तुं योग्यो न भवति "कृत्यानां कर्त्तरि वा" (२।३।७१) इति षष्ठी—अतो वो युष्माकं वातवर्षाभ्यां भयेनालं प्रयोजनं नास्ति हि यस्मात् तेनाद्रिधारणेन त्राणं विहितं मयेति शेषः । वो युष्माभिरेव विहितमिति वा श्रीगोवर्द्धनार्चनादिभिरिति भावः ॥ २१ ॥

तथा तेन प्रकारेण उक्तिचातुर्येण साचाद्वामकरे लीलया गिरिधारणेन च कृत्वा कृष्णेन सर्वचित्ताकर्षकाद्भुतानन्तलीलेन भगवता आश्वासितानि सान्त्वितानि मानसानि येषां ते धनानि गावोऽन्यानिच विविधद्रव्याणि तत्सहिताः ॥ २२ ॥

क्षुत्तृड्भ्यां या व्यथा तां सुखं शयनाशनादितदपेक्षां च हित्वा विस्मृत्येत्यर्थः । तैः तदेकजीवनैः तल्लीलाचर्यैकसुखैः व्रजवासिभिर्गोपगोपीगवादिभिः विशेषेण महाविस्मयपरमस्नेहाविना ईक्ष्यमाणः इति तत्त्यागे कारणं प्रयोजनं च तस्याप्रत्ययश्च लीलायारम्भ एव तदपगमात् तल्लीलायाश्च च तद्धारणे साहाय्यमेव दर्शितं तेन मुहुः स्फीतमनस्त्वात् तथैव विष्णुपुराणेऽपि—

> "कृष्णोऽपि तं दधारैव शैलमत्यन्तनिश्चलम् ।
> व्रजैकवासिभिर्हर्षविस्मिताक्षैर्निरीक्षितः ॥
> गोपगोपीजनैर्हृष्टैः प्रीतिविस्फारितेक्षणैः ।
> संस्तूयमानचरितः कृष्णः शैलमधारयत् " ॥ इति ।

यद्वा, हित्वेति कृष्णकर्तृकं ज्ञेयम् अनेनचर्येण तमोऽपि तत्र नासीदिति गम्यते पदादेकस्मादपि पदाक्रमणस्थानान्नाचलदिति धारणेऽत्यन्तानायास उक्तः ॥ २३ ॥

कृष्णस्य योगः स्वाभाविकशक्तिविशेषः तस्यानुभावं प्रभावं निशम्य दृष्ट्वा तथा च विश्वः "श्रुतौ दृष्टौ निशमनम्" इति निस्तम्भो नष्टमदः कुतः भ्रष्टः अथोपगतः सङ्कल्पो गोष्ठजिघांसालक्षणो यस्य सः स्वान् मरुद्गणान् मेघांश्च अनिवारयत् स्वाऽनिष्टापत्तेरिति भावः । संग्रहेन दूरतोऽपि स्थितिर्निवारिता ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मद्धस्ताद्योऽद्रेर्निपातनाद्धो युष्माभिरिदानीं त्रासो भयं न कर्त्तव्यं वातवर्षाभ्यां यद्भयं तेनालं तत्र कर्त्तव्यमित्यर्थः । तत्त्राणं वातवर्षभयात् त्राणं मया विहितम् ॥ २१ ॥

तथा कृष्णेन समाश्वासितचित्ताः सगोधनाः सपुत्रपौत्राः भृत्यपुरोहितादिवर्गसहिताश्च सर्वे व्रजौकसो यथावकाशम् असङ्कीर्णं यथा तथा गिरिगर्तं विविशुः ॥ २२ ॥

स्वावलोकनजानन्दपूर्वेण तेषां क्षुत्तड्कृतपीडां वारयन् सताह्

तथा दधारेत्याह—क्षुत्तृड्व्यथां सुखापेक्षां च हित्वा केवलमीक्षमाणो भगवान् सप्ताहमद्रिं दधार पदाच्च चचाल यत्रोद्धारसमये पदं विन्यस्तं न ततश्चचालेत्यर्थः ॥ २३ ॥

ततस्तं कृष्णस्य योगानुभावं सामर्थ्यप्रभावं दृष्ट्वेन्द्रोऽतीव विस्मितः भ्रष्टसङ्कल्पोऽत एव निस्तम्भः निर्गर्वः मेघान् न्यवर्त्तयत् ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वातवर्षनिमित्तं भयम् अलं निवारितम् "अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" इति यादवः । तत्त्राणं तस्मात्त्रपाद्रक्षणम् ॥ २१ ॥

कृष्णेनाश्वासितमानसाः आप्यायितमनोरथाः सोपजीवनाः वोढितन्तुवायादिशरीरयात्रासाधनैः सहिताः ॥ २२ ॥

सुखापेक्षां शयनासनवसनादिसुखसाधनश्रद्धां हित्वा मुक्त्वा ॥ २३ ॥

योगानुभावं योगैश्वर्यम् " अनुभावः प्रभावे स्यान्निश्चये भावसूचके " इति. महापुरुषान्दृष्ट्वा कथाणुपश्चाच्चापायदाहार्थं स्तम्भः तद्रहितो निस्तम्भः भ्रष्टसङ्कल्पः गलित मनोरथः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

हित्वा विस्मृत्य कृष्णयोगानुभावं तत्स्वाभाविकशक्तिप्रभावं निशम्य निशाम्येति वा पाठः उभयथापि दृष्ट्वेत्यर्थः । स्वयमेवोपारतम् इत्यादि ज्ञापनात् ॥ २३—३१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपरि मद्धस्ते दृष्ट्वापि त्रासो न कर्त्तव्यः इत्याह—न त्रास इति । इहास्मिन् गर्ते प्रविष्टैः मद्धस्ताद्रिनिपतनाद्धेतोः त्रासो न कर्त्तव्यः न पतिष्यति यतः ननूभययोर्भययोरेकमङ्गीकर्त्तव्यं ततो वरं वृष्टिभयमेवास्त्वित्याशङ्क्याह—वातवर्षभयेनालमिति । वातवर्षभयं न कर्त्तव्यम् अलं शब्दो निवारणे अतः तद्भयं मास्तु अत्र शङ्का न कर्त्तव्या आगन्तव्यमित्याशङ्काभावमुपपादयति—तत्त्राणं विहितं मयेति । तस्य भयस्य त्राणं रक्षणं प्रतीकारस्तन्मया विहितं न ह्युपायः कदाचिदप्यनुपायतामापद्यते मयेति वचनात् न भ्रान्तेन कृतं कृतत्वात् न कर्त्तव्यम् ॥ २१ ॥

ततस्ते तथैव कृतवन्त इत्याह—तथेति । पतनभयाभावार्थमाह—कृष्णाश्वासितमानसा इति । यथावकाशमिति उक्तार्थस्थापनं सधनाः गोधनसहिताः पुत्रादिसहिताः उपजीवी सेवकादिर्धिप्रादिश्च तत्सहिताः ततो वृष्टिः सप्तरात्रं जाता भगवतो गुणानांच मर्यादायां प्रतीत्यर्थं यद्यन्येऽपि भवेत् भूयस्तेवेन्द्रो मेघाश्च तदुपरि सहनं भगवतो नास्ति अत एव यां भगवद्भीषेभ्यः

खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ।
निशाम्योपरतं गोपान् गोवर्धनधरोऽब्रवीत् ॥ २५ ॥
निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ।
उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥ २६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

विचार्योपकारं करोति स सप्तरात्रं प्रतीक्षते एतन्मध्ये चेद्भगवता परिपालितः तदा न करिष्यामि उपेक्षितश्चेत् करिष्यामीति अविचार्योपद्रवकर्त्ता तु सप्तरात्रं करोति यदि तावत्कालं जीवितः तदा निवर्त्तते स्वनाशभयात् एवं व्यवस्था सर्वत्र ॥ २२ ॥

ततो भगवान् सप्तरात्रं तथा स्थित इत्याह-क्षुत्तृडिति । क्षुत्तृड्भ्यां जायमानां व्यथां सोढ्वा सुखस्य निद्रादेरप्यपेक्षां त्यक्त्वा तैर्व्रजवासिभिर्निरीक्ष्यमाणो भगवानाद्रिं दधौ न दर्शित इत्यद्रिः सोऽपि वृष्ट्या मध्ये न दीर्णः भगवानपि पदापि न चलितः अत्र हित्वेत्यनेनैव स्मर्यते क्षुत्तृड्व्यथामिति । दर्शनेनान्नभोजनेन वा अन्यथा गोपानां कथं धैर्यं भवेत् एवं सप्तरात्रं धृत्वा तान् व्रजस्थान् सर्वेभ्यः पृथक् कृत्य स्त्रीयानेव कृतवानिति निरूपितं सप्ताङ्गानि प्राणिनो भवन्ति देवर्षिपितर आत्मात्मीयौ ऐहिकपारलौकिकश्चेति यद्येतेषां मध्ये कश्चिदप्येतान् पालयेत् तदा तेषां भवेयुः यदि ते सर्व एव अशक्ताः प्रतिपक्षा वा तदा नातः परं तेषां सम्बन्ध इति । अत एव प्राणान्तः करणधर्मत्याग उक्तः । तेषां शुद्धभगवद्भावे बाधक (साधक) त्वात् एतेन प्रभुस्वरूपातिरिक्तं स्मृतवन्तोऽपि नेत्युक्तं भवति भगवद्गुणामेतादृशमिति च ज्ञापितं सपदि रक्षाऽग्रे च सुखमेतेन भविष्यतीत्यनुसन्धानेन वीक्षणे वीक्षणस्य तच्छेषत्वं स्यात्तथा सति भक्तिमार्गीया सा रक्षा न भवेदिति सर्वमन्यथा स्यादत एव तैरिति पूर्वोक्तं केवलं भगवदधीनत्वमेतादृशत्वे हेतुत्वेन परामृष्टं पारम्पर्यागतस्यापीन्द्रयागस्य भगवद्वचनमात्रेण पूर्वं त्यक्तत्वात् दधाविति "डुधाञ् धारणपोषणयोः" इत्यस्य रूपं तेनाद्रिं धृतवान् पोषितवांश्च सप्ताहमित्यत्यन्तसंयोगे द्वितीया अहश्शब्दो रात्रिदिनवाची अचलत्वज्ञापनार्थं नाचलदिति यथा ईदृशेऽपि गतिः पादस्य सहजेति स निर्दिष्टः ॥ २३ ॥

ततः इन्द्रः युद्धार्थं समागत्य अलौकिकं दृष्ट्वा भीतः सन् मेघान् पर्यवारयदित्याह-कृष्णेति । लीलार्थमवतीर्णस्य सर्वयोगाधिपतेरप्रच्युतस्वरूपस्य तं गोवर्धनोद्धरणलक्षणमनुभावं निशम्य श्रुत्वा मेघद्वारा इन्द्र अतिविस्मितो जातः ततः निरस्तस्मयः गतगर्वः भ्रष्टसङ्कल्पोऽपि जातः स्वोत्कर्षमपि त्यक्तवान् नाशयिष्यामीति सङ्कल्पञ्च त्यक्तवान् ततः स्वान् मेघान् सम्यक् निवारयत् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सव्रजाः शकटमयवाटीसंहताः सोपजीविनः भृत्यपुरोहितादिसहिताः ॥ २२ ॥

क्षुत्तृड्व्यथां हित्वेति तन्निरन्तरदर्शनानन्दादेव यदुक्तं वैष्णवे-
"व्रजैकवासिभिर्हर्षविस्मिताक्षैर्निरीक्षितः ।
गोपगोपीजनैर्हृष्टैरतिविस्फारितेक्षणैः ।
संस्तूयमानचरितः कृष्णः शैलमधारयत्" ॥
कृष्णोऽत्रसर्वाभिमुखोबभूवेति बोध्यम् । अत्र श्रीकृष्णसौन्दर्यलावण्यपीयूषपानेन व्रजौकसां प्रेयसीसौन्दर्यावेक्षणेन कृष्णस्य च क्षुधादिविगमोऽभवदिति अत्र सप्ताहव्यापिन्या सांवर्तकमेघवृष्ट्यापि यन्माथुरमण्डलं न ममज्ज तत्खलु भगवच्छक्त्यैव सद्यः पयःशोषणादिति ज्ञेयं तथा षष्टिघटिकस्यैव कालस्य दिवसत्वात् घटीति प्रसिद्धा घटिका गणनेनैव व्रजजनानां सप्तदिवससंज्ञानमभूदित्यपि ज्ञेयम् ॥ २३ ॥

निरस्तस्मयो नष्टमदः न्यवारयदिति न जानेऽद्य कृष्णो मह्यं कं दण्डं दास्यतीत्यतिभयात् ॥ २४-२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सव्रजाः शकटव्यूहसहिताः निर्विविशुः गर्त्तपरिमाणोक्तिरपि हरिवंशे "पञ्चक्रोशन्तु दैर्घ्येण क्रोशैकञ्चिस्तरेण तु" इति ॥ २२ ॥

पादात् चरणाधिष्ठितात् स्थानात् ॥ २३ ॥

कृष्णस्य योगाऽनुभावं सामर्थ्यम् ॥ २४ ॥

भाषा टीका ।

और मेरे हाथ ते पर्वत गिरे गो ऐसी शंका मति करियो और पवन वर्षाके भय तें मति डरियो मैंने तुमारी रक्षा करी है ॥ २१ ॥

ऐसे श्रीकृष्ण ने भरोसो दियो जिनके मनकूं वे व्रजवासी गौ गाडा पुरोहितन को सङ्गले के आनन्द तें पर्वत के नीचे गढेला में धसत भये ॥ २२ ॥

भूख प्यास को दुःख और सुख की चाहना कूं त्यागि के वे व्रजवासी ठाडे २ देखो करे श्रीकृष्णसातदिन ताइं पर्वत कूं धारणकरतभये और जहां ठाडे हैं तहांते नेकहू नहीं डिगत भये ॥ २३ ॥

श्रीकृष्ण को प्रभाव सुनि के इन्द्र बडो आश्चर्य मानत भयो, और जब वाको सङ्कल्पपूरो नहीं भयो तब गरीवहोय के अपने मेघनकूं निवृत्त करत लेत भयो ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्युदप्रायाः विगताम्बुकप्रायाः स्वल्पजला इत्यर्थः ॥ २६ ॥

ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ।
शकटोढोपकरणं स्त्रीबालस्थविराः शनैः ॥ २७ ॥
भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः ।
पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शकटोढोपकरणं शकटैरूढमुपकरणं यथा भवति तथा ॥ २७ ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एवोदितः दृष्टिपथं गत आदित्यो यस्मिन् तत् दारुणां भीषणाम् उपरतं निवृत्तम् अत्र च निशाम्य दृष्ट्वेत्यर्थः । उपारतं वातवर्षमिति स्वयमेव विज्ञापनात् दर्शनं च तिर्यक्कृतहस्तेन गिरिं धृत्वेति ज्ञेयम् गोवर्द्धनधर इति श्रीशुकदेवस्य सोत्साहनिजस्फूर्त्तिमयं वाक्यम् ॥ २५ ॥

हे गोपाः ! इति भयाद्विह्वलितोऽधुना गवां रक्षा कर्त्तेति भावः कर्दमित निम्नगानां व्युदप्रायत्वं च नाश्चर्यं वृष्टानां जलानां पततामेव श्रीभगवत्प्रतापतपनेन प्रायो विलीनत्वात् अन्यथा प्रलयकारिमेघैः सर्वाप्लावनं स्यात् धनानि गावो गवादीनि वा ॥ २६ ॥

ततस्तादृशगिरिधारणात्तादृशवचनानन्तरं ते इति तथा तथा भगवदङ्गीकारेण निर्जितमहेन्द्रास्तदेकजीवनाश्च ये तादृशा इत्यर्थः । उपकरणं धनादिकं स्थावरश्च शनैर्निर्ययुः शैथिल्येन सम्भवोपपत्तेः ॥ २७ ॥

गोपादयो निर्ययुः भगवानपि तं स्थापयामासेत्यपिशब्दार्थः तत्र स्वस्थान इति । स्थानात्ययो निषिद्धः पूर्ववदिति पर्वत वैपरीत्यादिकं निरस्तं प्रभुरिति तत्र शक्तिर्दर्शिता अत एव लीलया सर्वेषां मनोहारिण्या अनायासचेष्टया अत एव विस्मयेनानन्देन च सर्वभूतानां प्रजस्थानां दिविष्ठानां च पश्यतामिति सप्तम्यर्थे षष्ठी ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

व्युदप्रायाः निरुदकप्रायाः ॥ २६—३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत उपरतं वातवर्षं अतएव विगतान्यभ्राणि यस्मात्तत् उदितः प्रकाशमान आदित्यो यस्मिन् । तदाकाशं च दृष्ट्वा गोवर्द्धनधरो भगवान् । गोपानाह ॥ २५ ॥

उक्तिमेवाह—निर्यातेति हे गोपाः ! स्त्रीभिर्धनैरर्भकैश्च सहिताः निर्गच्छत त्रासं भयं त्यजत वातवर्षमुपारतं निवृत्तं निम्नगाः नद्यः व्युदप्रायाः निरुदकप्रायाश्च स्वल्पजलाश्चेत्यर्थः ॥ २६ ॥

ततो भगवदुक्त्यनन्तरं सर्वे गोपाः स्त्रियो बालाः स्थविरा वृद्धाश्च शनैः शकटैः रूढानि गृहोपकरणानि यस्मिंस्तद्यथा भवति तथा स्वं स्वं गोधनमादाय निर्ययुर्गर्त्तान्निर्जग्मुः ॥ २७ ॥

अथ प्रभुः समर्थो भगवानपि सर्वभूतानां पश्यतां सतां लीलया पर्वतं शैलं गोवर्द्धनं स्वस्थान एव स्थापयामास ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्यभ्रं विगतमेघं वातश्च वर्षश्च वातवर्षम् एकवद्भावः ॥ २५ ॥

व्युदप्रायाः विगतजलप्रायाः ॥ २६ ॥

शकटाटोपकरणम् शकटगतमुपकरणं जीवनसाधनं शकटाटोपकरणं चादाय गतो शकटपरिवर्त्तनेनाटोपकरणं संभ्रमविधिर्यथा भवति तथेति वा ॥ २७ ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—खमिति । सप्तदिवसस्य रात्रिशेषे निवारणं तत आकाशो व्यभ्रो जातः उदित आदित्यो यस्य एवमुपरितनदृष्ट्यभावं ज्ञात्वा गोवर्द्धनं धृत्वैव भगवानब्रवीत् वातयुक्तं वर्षं चकारात् शिलावर्षं मेघांश्च दारुणमतिमारकम् उपरतं निशम्य गोपानिति पूर्ववत् धर्मपरान् ॥ २५ ॥

भगवद्वाक्यमेवाह—निर्यातेति । त्रासं च त्यजत वातवर्षकृतं गोपा इति सम्बोधनं गवां पालनमावश्यकमिति प्रथमतो यद्दिदृक्षा पश्चात् सामग्री नेयेति शङ्कां वारयन्नाह, सस्त्रीधनार्भका इति । स्त्रियो धनान्यर्भका बालाश्चेति तैः सहिता एव निर्गच्छतः यतः वातवर्षमुपारतं निम्नगाः सूक्ष्मनद्यः व्युदप्रायाः कचिद्गर्भरपयोदकं स्यान्यत्रेति तेषां जिज्ञासाभावादेतदुक्तम् ॥ २६ ॥

प्रवेशवदेव निर्गता अपीत्याह—ततस्त इति । तत्र सर्वं पृथगेव स्थितमिति ज्ञापयितुं स्वं स्वं गोधनमादाय सर्वे निर्गताः शकटानामाटोपकरणं यथा भवति तथा यथा निर्भयाः दूरनिर्गमने महान्तं सम्भ्रमं कुर्वन्ति तथा कृत्वा निर्गता इति तेषामानन्दः सूचितः ततोऽन्येऽपि स्त्रीबालस्थविराः शनैरेव निर्गताः अत्यग्राः ॥ २७ ॥

सर्वेषु निर्गतेषु भगवत्कृत्यमाह—भगवानपीति । यथा ते स्वस्वकार्यार्थं निर्गताः एवं भगवानपि तं शैलं स्वस्थाने स्वस्यैव स्थाने पूर्ववदेवानुपूर्वी विधाय स्थापितवान् अनेन प्रथमनैकत्र करणपक्षेऽपि यथापूर्वं स्थापितवानिति लक्ष्यते अत स्थापने प्रयत्नो वा न किञ्चिन्मायिकमिति ज्ञापयितुं पूर्ववदेव स्थापितवान्

तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरम्भणादिभिः ।
गोप्यश्च सस्नेहमपूजयन् मुदा दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥ २९ ॥
यशोदा रोहिणी नन्दो रामश्च बलिनाम्वरः ।
कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ॥ ३० ॥
दिवि देवगणाः साध्याः सिद्धगन्धर्वचारणाः ।
तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ! ॥ ३१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदाह—पश्यतां सर्वदेवाना(भूताना)मिति यथा हस्तस्थितं पात्रं यथास्थानं स्थाप्यते तथैव लीलया स्थापयामास ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व्युदप्रायाः विगतोदकप्रायाः अल्पजला इत्यर्थः ॥ २६ ॥

शकटेष्वारूढान्युपकरणानि यत्र तद्यथा स्यात्तथा निर्जग्मुः ॥ २७-२८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वातवर्षमुपरतं निशम्य विगताभ्रप्रायं यस्मात्तत् उदितः आदित्यो यस्मिन् तत् खं च निशम्य ज्ञात्वा ॥ २५ ॥

व्युदप्रायाः निरुदकप्रायाः समजला इत्यर्थः ॥ २६ ॥

शकटेषु रूढमुपकणां गृहोपकरणं यथा भवति तथा स्वं स्वं गोधनमादाय निर्ययुर्गिरिगर्तात् ॥ २७ ॥ २८ ॥

भाषा टीका ।

आकाश कों विना बादरन को निर्मल देखि के और सूर्यको उदय तथा पवन और वर्षा निवृत्त देखि के गोवर्द्धनधारी श्रीकृष्ण गोपन ते बोलत भये ॥ २५ ॥

श्रीकृष्ण बोले, कि—हे गोप हो ! तुम सब अपने २ स्त्री धन बाल बच्चान कूं लेके अब निकसो भय छोडो पवन वर्षा शान्त हो गई नदीन के जल हू उतरि गये ॥ २६ ॥

तब तो वे गोप अपने २ गोधन कूं लेके निकसत भये और गाडान पै अपनीसामग्रीन को धरिके स्त्री बालक और वृद्ध धीरें २ निकसत भये ॥ २७ ॥

परम समर्थ श्रीकृष्ण हू वा पर्वत कूं सबन के देखत २ खीलाई तें जहां के तहां पहिले के नांई धरत भये ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निभृताः पूर्णाः यथा । यथोचितं परिरम्भणादिभिः समीयुरुपजग्मुः सदाशिषः श्रेष्ठानाशीर्वादान् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधुना परमहर्षेण श्रीभगवता सह सर्वेषां तत्रत्यानां समागमं वदन् प्रेमोद्रेकेण गायन्निवाह—तमिति । गोष्ठरक्षार्थं धृतगोवर्द्धनम् यद्वा, प्रकटितैश्वर्यमपि व्रजौकसः सर्वे व्रजवासिजनाः परिरम्भणादिभिः समीयुः मिलितवन्तः तत्र हेतुः प्रेम्णो वेगः स्वनिमित्तकायासेन उद्रेकस्तस्मात् तेनेत्यर्थः । आदिशब्देन शुभाशीर्वादश्रीमस्तकाघ्राणचुम्बनपादग्रहणवामबाहुसम्मर्दनतदङ्गुलिस्फोटनस्तवनश्रमदुःखाभावप्रश्नादयः यथा यथोचितं गुरुसमलघुवर्गभेदैः सस्नेहं यथा स्यात्तं वा सस्नेहं आशिषः दुष्टान् दमय शिष्टान् पालय सर्वैश्वर्यसेवितो भव निजजनानानन्दयेत्याद्याः ॥ २९ ॥

गोपगोप्याद्यपेक्षया पश्चात् स्थितानां परमस्निग्धानां मात्रादीनां सङ्गतिमाह—यशोदेति । श्रीयशोदासाहचर्येण श्रीनन्दस्यादरविशेषेण वा तस्मात् प्राक् श्रीरोहिण्या निर्देशः बलिनां वर इति यद्यपि तस्यापि गोवर्द्धनधारणसामर्थ्यमास्ते शेषरूपेण स्वांशेन मूर्द्धैकदेशे हेलया पृथ्वीधारणात् तथापि तत्राप्रवृत्तिस्तद्विधलीलायास्तद्भीष्टत्वादिति भावः । यद्वा, बलिनां वर इति निर्भरगाढालिङ्गनमभिप्रेति स्नेहातिशयेन प्रभावज्ञानेन च सर्वत्र श्रीकृष्णेच्छायां सम्मत्या मौनं गोवर्द्धनोद्धरणादौ तत्कीर्तनेच्छया चासाहाय्यमिति पूर्वं तन्नामाश्रवणमिति ज्ञेयम् आशिषः एवं चिरमस्मान् पालय सदासुखी भव नित्यं पूर्णमनोरथ एधस्वेत्याद्याः स्नेहेन कातरा अधीराः सन्तः अत्र प्राचीनश्रीगोवर्द्धनधरप्रतिकृतौ क्वचित् दृश्यते मातृभ्यां नवनीतादिसमर्पणं पितृभ्रातृभ्यां च शिरसा श्रीगोवर्द्धनावघ्राणादिकमिति तच्च स्नेहकातरा इत्यनेन सूचितमनुगम्यते ॥ ३० ॥

न केवलं व्रजौकसां देवानामपि महर्षो जात इत्याह—दिवीति द्वाभ्याम् । नन्विन्द्रस्य मदभङ्गदुःखेऽपि तादृशे कथं ते तथाऽकुर्वत तत्राह-तुष्टाः दुर्मदेनाकृत्ये प्रवृत्तस्येन्द्रस्य मानभङ्गेन श्रीकृष्णस्य च मधुरतरक्रीडा प्रदर्शनेन हर्षोदयादित्यर्थः। हे पार्थिव इत्याश्चर्येण सम्बोधनं देवेन्द्रस्य दुःखेऽपि तेषां प्रहर्षात् । यद्वा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

राज्ञोऽपेक्षया प्रजानां देशाधिकारिणोऽनपेक्षावत्तेषां श्रीभगवदपेक्षया शक्रानपेक्षा युक्तैव तच्च त्वया ज्ञायत एवेति भावः । मखभङ्गेन इन्द्रस्यापि तत्र न क्रोध इति ज्ञेयम् ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तं स्थापितवन्तं भगवन्तं प्रेमातिशयात् परिरम्भणादिभिर्यथार्हं संजग्मुः निभृताः सुखिताश्च बभूवुः तथा गोप्यश्च दध्यादिभिः स स्नेहं यथा भवति तथा मुदा हर्षेणापूजयन् सदाशिषः श्रेष्ठाशीर्वादान् प्रयुयुजुः ॥ २९ ॥

यशोदेति यशोदादयः स्नेहकातराः स्नेहेन व्याकुलचित्ताः ॥ ३० ॥

दिवीति । दिवि देवगणादयः तुष्टास्तुष्टुवुः पुष्पवर्षाणि मुमुचुर्ववृषुश्च हे पार्थिव ॥ ३१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रेमवेगात्प्रेमोद्रेकात् निभृताः निश्चलाः पूर्णानन्दा वा समीयुः समाजं प्राप्ताः ॥ २९ ॥

स्नेहकातराः स्नेहकविलान्तःकरणाः ॥ ३०—३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतद्भगवता लीलया कृतमपि लोके चेत्तथात्वेन न प्रसिद्धः स्यात् तदा लीलात्वं न भवेदिति माहात्म्यदर्शनानन्तरमपि गोपानां पूर्ववदेवस्थितिमाह—तमिति । यदैव भगवान् गोवर्द्धनं स्थापयामास तदैव तं भगवन्तं प्रेमवेगात् परिरम्भणादिभिः यथा यथावत् समीयुः ते हि भगवदालिङ्गनार्थं प्रतीक्षन्त एव स्थिताः यतः प्रेम्णो वेगस्तेषु स्थितः हृदये पूर्णं प्रेम बहिरपि निस्सरतीति प्रेम्णो वेगः अत एव यथावत् यस्य यथोचितं तथा स कृतवान् प्रेम्णैव नितरां भृतश्च गोप्योऽपि तथा विशेषमप्याह—सस्नेहमपूजयन्निति । तैः सर्वैरयं देव इति ज्ञातः तेन लौकिकीमपि क्रियां वैदिकीं कृतवन्तः भावद्वयस्य विद्यमानत्वात् अतः स्नेहपूर्वकं पूजां कृतवन्तः मुदेति पूजाया मुत्साहः तेन लौकिकत्वेनान्यथा बुद्धिर्नयाधिकेति सूचितम् दध्यक्षताद्भिरिति पूजासाधनानि जलानि चरणक्षालनादौ दध्यक्षता मङ्गलार्थं मार्जनार्थं वा आपः लौकिकी तद्देशप्रसिद्धेयं पूजा दध्ना तिलकं दत्त्वा तदुपर्यक्षतान् स्थापयित्वा अपः उपरि भ्रामयित्वा पिबन्तीति सदाशिषश्च युयुजुः जीव पालयेत्यादिरूपाः सन्तोषादेव न तु स्वाधिकारेण देवत्वेन ज्ञातत्वात् ॥ २९ ॥

एवं साधारणीं प्रतिपत्तिमुक्त्वा चतुर्भिः कृतां विशेषप्रतिपत्तिमाह—यशोदेति । आदौ स्त्रीनिर्देशः स्नेहाधिक्यात् अनयैवानुपूर्व्या स्नेहतारतम्यमपि ज्ञातव्यं चकारात् भीरामादयोऽपि बलिनां मध्ये वर इति बलभद्रविशेषणं तस्याप्याश्चर्यमेतदिति ज्ञापयति—कृष्णेति । कृष्णं सदानन्दम् एते ह्यन्तरङ्गाः स्वस्वरूपाश्च अत आलिङ्ग्य आशिषो युयुजुः स्नेहेन च कातरा जाताः माहात्म्यदर्शनात् ॥ ३० ॥

देवानामपि स्वापराधनिवृत्त्यर्थमुत्सवकार्यमाह—दिवीति । देवगणाः वस्वादयः एकः कश्चिदूभक्तो भवतीति गणपदप्रयोगः साध्या अपि देवभेदाः तथा सिद्धा गन्धर्वा अप्सरसश्च चारणाश्च तुष्टुवुः पुष्पवर्षाणि मुमुचुः तुष्टाश्च जाताः वाचिककायिकमानसिकव्यापारा निरूपिताः पार्थिवेति सम्बोधनं महत्कर्मकरणानन्तरं राज्ञामप्येवं तद्वर्द्धैः क्रियत इति ज्ञापनार्थम् ॥ ३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निभृताः पूर्णाः यथा यथोचितं गुरुसमलघुवर्गभेदैः परिरम्भणादिभिः समीयुर्मिलितवन्त आदिशब्दात् शुभाशीर्वादमस्तकाघ्राणचुम्बनवामबाहुसमर्दनतदङ्गुलिस्फोटनस्तवनश्रमदुःखाभावप्रश्नादयो गुरुवर्गस्य परिहासादयः समवर्गस्य पादपतनपादसम्मर्दनादयो लघुवर्गस्य ज्ञेयाः गोप्यो वत्सलाः चकारात् पुरोहितपत्न्यः दध्याशिषगन्धलद्रव्यैः अपूजयन् संमानयामासुः शुभाशिषः तुष्टान् दमय शिष्टान् पालय पितरावानन्दय धनैश्वर्यसम्पन्नो भवेत्याशिषो ययुजुर्योजयामासुः ॥ २९ ॥

निजमातादीनां स्वतिविशेषमाह—यशोदेति । रामश्चेति तस्यापि वात्सल्यवद्वर्गे निर्देशो ज्येष्ठत्वादेव नानुपपन्नः । ननु, परमस्नेहवता तेन शेषाख्यस्वांशेन पृथ्वीमपि दधता स्वानुजस्य गोवर्द्धनधारणे कथं साहाय्यं नाचरितम् ? उच्यते इन्द्रमखभङ्गगोवर्द्धनमखप्रवर्तनयोर्मयैव कृतत्वादहमेव गोवर्द्धनं धृत्वा व्रजं रक्षिष्यामि "सोऽयं मे व्रत आहितः" इति तदीयसङ्कल्पस्य तदंशेन रामेणाऽन्यथा कर्तुमनौचित्यादशक्यत्वाच्च तस्यैव सर्वशक्तिमत्त्वात् तदिच्छयैव तदंशेषु यथोपयोगि तदीयशक्त्युदयाच्चेत्यग्रिमग्रन्थेऽपि यथास्थानं सिद्धान्तयिष्यते इति अत्र प्राचीनश्रीगोवर्द्धनधरप्रतिकृतौ कश्चिद्दृश्यते मातृभ्यां नवनीतादिसमर्पणं पित्रा भ्रात्रा च शिरसा गोवर्द्धनावष्टम्भनादिकमिति तत्स्नेहकातरा इत्यनेन सूचितमवगम्यते इति वैष्णवतोषणी ॥ ३० ॥

व्रजौकसो यथा जहृषुस्तथा देवा अपीत्याह—दिवीति । ॥ ३१ ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रेमवेगान्निभृताः पूर्णाः तं श्रीकृष्णं यथा यथोचितं परिरम्भादिभिः समीयुः गोप्यश्च सस्नेहं यथा तथा दध्यक्षतादिभिर्मुदा अपूजयन् सदाशिषः श्रेष्ठानाशीर्वादान् ययुजुः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

---

भाषा टीका ।

प्रेम के वेगतें भरे भये व्रजवासी कृष्ण के समीप आय कें आलिङ्गन करत भये, और स्नेह भरीं गोपी हू दधि अक्षत जल तें पूजा करिकें असीस देत भई ॥ २९ ॥

श्रीयशोदा जी, रोहिणी जी, नन्दरायजू और बलिन में

शङ्खदुन्दुभयो नेदुर्दिवि देवप्रणोदिताः ।
जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप!॥ ३२ ॥
ततोऽनुरक्तैः पशुपैः परिश्रितो राजन् स्वगोष्ठं सबलोऽव्रजद्धरिः ।
तथाविधान्यस्य कृतानि गोपिका गायन्त्य ईयुर्मुदिता हृदि स्पृशः ॥३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे गोवर्द्धनधारणं नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

भाषा टीका ।

श्रेष्ठ श्री बलदेव जी वे सब स्नेह में भरे भये कृष्ण कूं छाती सूं लगा के आशिष देत भये ॥ ३० ॥

शुकदेव जी कहें हैं, कि—हे राजन् ! स्वर्ग में देवगण, साध्य, सिद्ध, गन्धर्व, चारण, हर्षित होयकें स्तुति करत और पुष्पन की वर्षा करत भये ॥ ३१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततो गोवर्धनस्थानात् सस्य श्रीकृष्णस्य तथाविधानि गोवर्धनोद्धरणादिरूपाणि कृतानि कर्माणि गायन्त्य ईयुर्ययुः कथम्भूताः? एवं प्रेम्णा हृदि स्पृशन्तीति हृदिस्पृशस्ताः यद्वा, कथम्भूतस्य प्रेष्ठत्वेन तासां हृदि स्पृक् तस्य ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवैः प्रकर्षेण विचित्रतया वादिता इत्यर्थः । यद्वा, स्वयमेव नृत्याचरणादिना प्रेरिता वादकद्वारा प्रवर्त्तिताः सन्तः दिवीति पुनरुक्तिः इन्द्रभयाभावेन दिव्येव तेषां तत्तदाचरणस्य बोधार्थं हे नृपेति प्रहर्षेण । यथा भवद्विधस्य राज्ञो महोत्सव इति वा ॥ ३२ ॥

प्रहर्षेणैव तस्य गोष्ठप्रवेशं पूर्वं वृद्धाद्यभिप्राह—तत इति । परितः श्रितः वृतः बलोऽनुरक्तैः सव्रजरक्षार्थं धृतगोवर्द्धनः स्वगोष्ठमिति क्वचित् पाठः मध्ये गोष्ठं श्रीनन्दस्य लीलावासपर्यन्तं प्रविवेश इत्यर्थः । प्रहर्षोद्रेकेण सर्वेषामेव तेषां तेन सह तत्रैव गमनात् हरिः शक्रदुर्मदगोष्ठार्त्तिहरणात् तत्क्रीडया सर्वमनोहरणाच्च श्रीगोपीनाञ्च सर्वतोऽधिकं सुखमजनीत्याह—तथेति । गायन्त्य इति, तत्त्वयमेव गीतकरणशक्तिश्च दर्शिता ३३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शङ्खेति । शङ्खादयो नेदुर्दध्वनुः हे नृप ! ॥ ३२ ॥

ततो हे राजन् ! अनुरक्तैः पशुपालैः परिवृतो बलदेवेन सहितो हरिः स्वगोष्ठं जगाम गोपिकाश्च तथाविधानि गोवर्द्धनोद्धरणतुल्यान्यसाधारणान्यस्य भगवतः कृतानि कर्माणि गायन्त्यः हृदिस्पृशः श्रीकृष्णहृदयङ्गमाः सत्यः हृदिस्पृश इति भगवद्विशेषणं वा मुदिताः सत्यो ईयुः व्रजं जग्मुः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हृदि स्पृशः मनोहराः "हृद्युभ्याम्रुपसङ्ख्यानम्" इत्यलुक् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चविंशोऽध्यायः ॥ २५ ॥
( विजयध्वजरीत्या त्रयोविंशोऽध्यायः ॥ २३ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शङ्खेति । अन्येषां देवानामपि हर्षकौतुकं दर्शयति ॥ ३२ ॥३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

समागतानां देवानामेतदुक्त्वा इन्द्रभयात्तत्रया न करिष्यन्तीत्याशङ्कां परिहरन् तत्र स्थितानामद्भुतत्सवमाह—शङ्खेति, शङ्खा दुन्दुभयश्च नेदुः शङ्खशब्दो वैदिकः दुन्दुभिशब्दो लौकिक इति उभयोर्निर्देशः स्वयमेव नेदुः देवप्रयोदिताश्च नेदुः गन्धर्वादीनां पतयः विश्वावसुप्रभृतयः जगुः गानं कृतवन्तः अयो मुख्याः विश्वावसुस्तुम्बुरुः नारदश्चेति तत्र मध्यमो निरूपितः तुम्बुरुप्रमुखा इति स उभयात्मकः इति पुनर्नृपेति सम्बोधनं तथा दर्शनात् विश्वासाय ॥ ३२ ॥

एवं भगवल्लीलामुक्त्वोपसंहरति—तत इति। देवादीनां शब्दादिश्रवणानन्तरम् अत्यन्तमनुरक्तैः पशुपैः परिश्रित एव सन् भगवान् गोष्ठमाव्रजत् यतो हरिः पशुपानां चारणार्थं गमनं निषिद्धं गवां तेषां चापेक्षाभावात् तदुपपादितम् अत अनुरागबाहुल्यात् पशुपैः परिश्रित एव गतः राजन्निति पूर्ववत् प्रायेण क्लिष्ट इति पुनः पुनः सम्बोधनं स इति तथा समर्थोऽपि न हि तादृशो गोष्ठे स्थातुं युक्तो भवति तत्रापि सबलः बलभद्रसहितः तथाप्यव्रजत् यतो हरिः अथवा एतादृशालौकिकसामर्थ्यवतो द्वारकावदिहाप्युत्कृष्टं स्थानं निर्माय स्थातुमुचितं न तु गोष्ठे इत्यत आह—स इति। ते ते धामानीत्यादि श्रुतिभिर्वैकुण्ठादप्यधिकमस्य सहजं स्थानमस्तीति निरूपितमस्तीति तथा प्रसिद्धो वेद इति तत्रैव गमनमुचितमावश्यकमपीत्यर्थः। यथा राजाऽन्यत्र कार्यं कृत्वा स्वराजधानीमेव गच्छति तथेति ज्ञापनाय सम्बोधनं गोपीनां गमने भगवत्सङ्गो नास्तीत्याशङ्क्याह—तथा विधानीति। गोवर्द्धनोद्धरणासदृशानि पूतनास्तनपयःपानादीनि अनेनैव रूपेण कृतानि गोपिकाविशेषानभिज्ञाः अतः कृतान्येव गायन्त्यः व्रजमीयुः तत्र गतानां संसारनिवृत्त्यर्थमाह—मुदिता हृदि स्पृश इति। मुदिता इति पूर्वदुःखनिवृत्तिः अद्भुतभगवल्लीलादर्शनेन माहात्म्यज्ञानपूर्वकस्नेहातिशयो गोपानामधुना जात इति प्रियनिकटगमने प्रतिबन्धं ते न करिष्यन्ति करणे वा सपदीवाद्भुतरीत्याऽप्यस्मान् पालयिष्यतीति ज्ञात्वापि प्रमुदिताः भगवतः हृदिस्पृशो जाताः हृदि भगवन्तं वा स्पृशन्तीति एतेनेतरेभ्योऽधिकोऽन्तरङ्गः सङ्ग एतासामुक्तः एवं दुःखनिवृत्तिपूर्विका भगवदासक्तिर्निरूपिता ॥ ३३ ॥

इति श्रीमद्भागवते श्रीमल्लक्ष्मणभट्टात्मज श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्यां दशमस्कन्धविवरणे द्वाविंशाऽध्याय विवरणम् ॥ २२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तत्प्रेयसीनां तु सर्वजनावाच्छितं दूरतः कटाक्षैरेव मिलनं वृत्तं गृहगमनसमये सप्रेमगानञ्चाह—ततो गोवर्द्धनधारणात् कृतानि चरित्राणि गायन्त्य इति तच्चया एव गीतकरणे सामर्थ्यं हृदि प्रेम्णा स्पृशन्तीति ता इति याः कृष्णं सदा ध्यायन्तीत्यर्थः। यद्वा, हृदि वचसि मनसि च स्पृशतीति हृदिस्पृक् प्रेष्ठस्तस्येति कृष्णस्य विशेषणम् ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
पञ्चविंशोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ततो गोवर्द्धनात् गोष्ठं व्रजं स हरिः सबलो व्रजं जगाम। गोपिका च हृदिस्पृशः श्रीकृष्णहृदयङ्गमाः तथाविधानि गोवर्द्धनोद्धरणादिरूपाणि कृतानि कर्माणि अस्य हृदि स्पृशः हृदयंगमय्यः श्रीकृष्णस्य गायन्त्य ईयुः गतां जग्मुः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चविंशाऽध्यायार्थप्रकाशः ॥ २५ ॥

---

भाषा टीका।

हे नृप! स्वर्ग में देवता शङ्ख दुन्दुभि बजावत भये, और तुंबुरु ते आदि ले के गन्धर्वन के पति गावत भये ॥३२॥

हे राजन्! ताके पीछे अपने संग के सखान सहित और दाऊ सहित श्रीकृष्णचन्द्र अपने व्रज कों आवत भये, प्रेमी २ और बहुत सी हृदय कों आनन्द देवेवारी लीलान कूं सब गोपी गावत भई ॥ ३३ ॥

इति श्रीमद्भागवत दशमस्कन्ध में पचीसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २५ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## ॥ षड्विंशोऽध्यायः ॥

—:*:—

### श्रीशुक उवाच ।

एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते ।
अतद्वीर्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ॥ १ ॥
बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै ।
कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥ २ ॥
यः सप्तहायनो बालः करेणैकेन लीलया ।
कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव ॥ ३ ॥
तोकेनामीलिताक्षेण पूतनाया महौजसः ।
पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

षड्विंशे विस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः ।
नन्दो गर्गोक्तिमाश्राव्य तदैश्वर्यमबोधयत् ॥

समभ्येत्य नन्दमभिगम्य ॥ १ ॥

यदूचुस्तदाह—बालकस्येति । यद्यस्मादद्भुतानि कर्माणि तस्मात् ग्राम्येषु गोपालेषु कथं जन्मार्हति आत्मजुगुप्सितमात्मानर्हम् ॥ २ ॥

अद्भुतानि कर्माण्याहुः—यः सप्तहायन इति । कथं बिभ्रत् स्थित इति पुष्करं पद्मं गजराड्महागज इव ॥ ३ ॥

महौजसो महाबलायाः तनोर्वय आयुर्यौवनं वा कालेन यथा पीयते तद्वत् कथमित्यनुवर्तते ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्थं श्रीभगवतः शक्त्यतिशयं दृष्ट्वा ऐश्वर्यज्ञानेन व्रजजनानां तस्मिन् कदाचित् प्रेमह्रासमाशङ्क्य तत्परिहारार्थं विशेषतश्च गोपवर्गकृतशङ्कायाः श्रीनन्देन निरसनात् प्रेमविवृद्धमिति बोधनार्थं तत्प्रसङ्गमारभते, एवमित्यादिना यावत्समाप्ति । ईदृशान्यलौकिकानीत्यर्थः । यद्वा पूर्वपूर्वापेक्षया न तस्य वीर्यम् ऐश्वर्यं विन्दन्ति अनुसन्दधतीति तथा ते यतः ते इति सदा तत्स्नेहविवशत्वेन प्रसिद्धा इत्यर्थः । अत एव सुविस्मिताः सन्तः सम्यक् भक्त्या प्रणतिपूर्वकं श्रीगोपराजमभिगम्य यद्वा, मिथः सम्भूय प्रकर्षेण न्यायप्रदर्शनादिना प्रेमपर्यवसानत्वेन वा ऊचुः ॥ १ ॥

बालकस्य चेत्यन्वयः । अप्यर्थे चकारः वै क्वचित् बाल्यं वर्त्तमानस्यापीत्यर्थः । ग्राम्येषु ग्राम्यत्वात् उत्तमनाहीनेषु येषु आत्मनो जुगुप्सितं निन्दा यस्मात् तत् असाविति पारोक्ष्यनिर्देशेन तथाऽसौ वनं गत इति लक्ष्यते पारोक्ष्य एव रसापत्तेः ॥ २ ॥

बालः तत्र च सप्तहायनः सप्तवर्षमात्रवयाः तत्रापि एकेनैव नच कदाचित्परिवृत्त्य करान्तरेण तत्रापि गिरिषु वरं श्रेष्ठं परमगुरुतरमित्यर्थः । तत्रापि लीलया कथं बिभ्रत् स्थितइत्यसम्भाव्यत्वेनात्यद्भुतत्वं व्यञ्जितं यो बालः स कथमित्यध्याहारेणान्वयः । लीलया धारणे दृष्टान्तः, पुष्करमिति. एतेन सौन्दर्यादिविशेषोऽपि सूचितः अतोऽसौ लौकिकबालको न भवतीति भावः । यत्तु विष्णुपुराणादौ ग्रीष्मकाले श्रीवृन्दावनमागत्य तस्य सप्तमवर्षे गोपालने प्रवृत्तिरिति तथा चोक्तम्—

"कालेन गच्छता तौ तु सप्तवर्षौ महाव्रजे ।
सर्वस्य जगतः पालौ वत्सपालौ बभूवतुः" ॥ इति

अस्यार्थः श्रीस्वामिपादैरेव तट्टीकायां व्यञ्जितोऽस्ति एवं वत्सपालौ च संवृत्तौ रामदामोदरौ तत् इति पूर्वमुक्तत्वात् तदनन्तरं च तस्मिन्नेवाब्दे परस्मिन् वा प्रावृट्क्रीडा ततः कालियमर्दनं ततो धेनुकप्रलम्बयोर्वधः ततः शरदि श्रीगोवर्द्धनोद्धरणमिति तस्य च कल्पभेदव्यवस्थया "ततश्च पौगण्डवयः श्रितौ"इत्यादिना विरोधः परिहार्य इति दिक् ॥ ३ ॥

पूर्वमतिबाल्ये दुरूहत्वेन तत्कृतत्वे सन्दिग्धान्यपि पूतनावधादीन्यधुना साक्षात् श्रीगोवर्द्धनोद्धरणदृष्ट्या तदीयान्येवेति निश्चिन्वन्तोऽप्याहुः—तोकेनेति नवभिः । आ सम्यक् मीलिताक्षेण

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्युक्तदिशा तेन चात्यन्तबाल्यं वा बोधितं पानप्रकारश्च दुर्बोध इति दृष्टान्तेनाहुः-कालेनेति । इति शक्तिविशेषः सूचितः कथमित्यस्य सर्वत्राप्यनुवृत्तेः सर्वेषामेव तत्तत्कर्मणामाश्चर्यत्वोक्त्या ग्राम्येषु जन्मायोग्यतामेव साधयन्ति यद्वा, कथमित्यस्यानुवृत्त्यापि अत्यद्भुतानीत्युक्त्या सोऽर्थः स्वतः पर्यवस्यति तोकेनैवेत्यादिभिश्चाद्भुतकर्माण्यपर्वाक्तानि ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

१—१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथामानुषगोवर्द्धनोद्धरणात्मकचेष्टितस्मारितपूतनाशकटासुरवधादिवृत्तान्तैरतिमानुषैः कृष्णममानुषं शङ्कमानैर्गोपैः पृष्टो नन्दो गर्गगीतानुवादेन साक्षादयं नारायणो न केवलं मर्त्य इत्याह इत्याह मुनिः-षड्विंशेन । एवमिति । ते गोपाः कृष्णस्यैवंविधानि गोवर्द्धनोद्धरणादिवदमानुषाणि पूतनादिवधात्मकानि कर्माणि वीक्ष्यानुस्मृत्य न तद्वीर्यविदः कृष्णासाधारणजगद्व्यापारादिरूपापारमहिमानमजानन्तः केवलमेतैरेव कर्मभिस्तं विस्मयपूर्वकमाशङ्कमानाः विस्मयप्रयुक्तमुखविकासयुक्ताः नन्दमभिगम्योचुः ॥ १ ॥

उक्तमेवाह-बालकस्येत्यादिभिस्त्रयोदशभिः यद्यस्मादेतानि बालकस्य कर्माण्यत्यद्भुतानि तस्माद्ग्राम्येषु गोपेषु कथमसावात्मनः स्वस्य जिगुप्सितमननुरूपं जन्मार्हति ॥ २ ॥

अद्भूतान्येवास्य कर्माण्याहुः दशभिः । यः कृष्णः कथं विभ्रत्स्थितः पुष्करं पद्मं महागज इवेति धारणायोग्यत्वसूचकं बालः सप्तहायन इति च विशेषणद्वयं साधनत्वायोग्यत्वसूचनाय करेणैकेनेत्युक्तम् धार्यत्वानर्हत्वसूचनाय गिरिवरमित्युक्तम् एवमुत्तरत्रापि द्रष्टव्यम् ॥ ३ ॥

तोकेनेति । किञ्च महौजसो महाबलायाः पूतनायाः प्राणैः सह स्तनस्तोकेन शिशुना तत्रापि मीलिताक्षेण नेत्रोन्मीलनेऽप्यसमर्थवयस्केनेति भावः । कथं पीतः ? यथा तनोः शरीरस्य वयो यौवनं कालेन पीयते तद्वत् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुस्मरणार्थमाप्रेक्षाभिलषयःसप्तवर्षपर्यन्तं बालचरितमनुक्रम्यतेऽस्मिन्नध्याये तत्र श्रीशुको गोपानां सङ्कथनप्रकारं कथयति—एवं विधानीति । ये गोपाः कृष्णस्यैवंविधानि कर्माणि वीक्ष्य तत्र तत्र साक्षाद्दृष्ट्वापि तस्य कृष्णस्य वीर्यं महात्म्यं विदन्ति जानन्ति, ते तद्वीर्यविदो न भवन्ति ते गोपाः समेत्य सम्भूय प्रोचुः ऽपाकुर्वन्नित्यन्वयः ॥ १ ॥

बालस्यैतानि कर्माण्यत्यद्भुतानि वक्तुमशक्यानि वा इति यत्तस्मादसावात्मनः स्वस्य जुगुप्सितं ग्राम्येषु विषयिजनेषु जन्म कथमर्हति निरूप्यमाणे न योग्य इत्यन्वयः ॥ २ ॥

कानि तानि कर्माणीति ? तत्राहुः-यत इति । बिभ्रत् अबिभ्रत पुष्करं पद्मम् ॥ ३ ॥

तोकेन शिशुना आमीलिताक्षेण ईषत्फुल्लनेत्रेण महौजसः महाबलायाः अधृष्याघृष्यमायाया वा "ओजोऽवष्टम्भबलयोः" इति स्तनं पीतं वयमद्राक्ष्मेति शेषः । कालेनान्तकेन ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अज्ञातमन्यथा ज्ञातं कृष्णगं विनिवार्यते ।
अयोग्यत्वे समत्वाय निरुद्धानामशेषतः ॥
पूर्वपक्षश्च सिद्धान्तः फलं चेति निरूप्यते ।
अप्राकृतत्वं सम्बन्धो द्वयं स्यादत्र मिहोक्तिभिः ॥
विरोधात् प्राकृतत्वेन सम्बन्धस्त्यज्यते पुरा ।
जातस्तादृश एवात्र न सन्देहस्तथा परः ॥
माहात्म्यदर्शनं हेतुः पूर्वपक्षे तथा परे ।
गर्गवाक्यानि तज्ज्ञानं फलमित्येव निश्चयः ॥

पूर्वाध्यायान्ते गोकुले समागताः सर्वे इत्युक्तम् आगतानां सन्देहो वर्ण्यते भगवति पूर्वपक्षरूपः आदौ पूर्वपक्षनिरूपणार्थं तेषामुद्योगमाह-एवं विधानीति । गोवर्द्धनोद्धरणरूपाणि बहूनि भगवतः कर्माणि दृष्ट्वा धर्मिस्वरूपमज्ञात्वा हेतुभावेनैवैतत् कार्यम् आहोस्वित् धर्महेतुः तथा सति न नन्दपुत्र इति निश्चित्य अतद्वीर्यविदः भगवतः क्रियाशक्तिमज्ञात्वा सुविस्मिताः विकसितवदनाः सर्वे सम्भूय नन्दसमीपमागत्य प्रोचुः कर्माणि तु दृष्टानि अहेतुकानि च न भवन्ति तस्मादयं नन्दस्य पुत्रो भवितुमर्हति अलौकिककार्यकर्तृत्वात् तत्राहुः यद्यस्मादेतानि कस्य दृश्यन्ते वै निश्चयेन विस्मितो यथेत्तत्राहुः—कथमर्हत्यसौ जन्मेति ग्राम्येषु अस्मासु कर्मग्रस्त इव आत्मनो महतः जुगुप्सितं निन्दितं जन्म कथमर्हति कर्मणा इन्द्राद्यपेक्षया महानिति निर्धार्यते तथा सति कथमधमेष्ववतारः न हि स्वेच्छया कश्चित् स्वस्य हीनतां सम्पादयति कर्माधीनता तु नास्त्येव कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यात् अतः जुगुप्सितं जन्म नार्हति ॥ १ ॥ २ ॥

अलौकिकानि कर्माण्याह—यः सप्तहायन इति । षड्गुणाः भगवांश्च तेषां सप्तवर्षाः सर्वो एवात्र समागताः अतश्चेष्टारूपकालः एकेन करेण स्वयं सप्तहायनोऽपि भूत्वा कथं गिरिवरं बिभ्रत् जातः तत्रापि लीलया कदाचिदङ्गुलीष्वपि समानयति वेणुं वादयन् अङ्गभावो वा क्रान्तः अविश्रान्तिरपि एवं तु यथा इदमनुवदन्तीति नात्र विचारणीयं गिरिवरं पर्वतश्रेष्ठमनायासे दृष्टान्तः पुष्करं गजराडिवेति न हि मत्तगजस्य कमलधारणे कश्चन प्रयासोऽस्ति अथवा सप्तहायनः एकेन करेण गिरिवरं बिभ्रत्कथं बालक इति तस्मादयं तव पुत्रोऽपि बालकः ॥ ३ ॥

हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् ।
अनोऽपतद्विपर्यस्तं रुदतः प्रपदा हतम् ॥ ५ ॥
एकहायन आसीनो ह्रियमाणो विहायसा ।
दैत्येन यस्तृणावर्त्तमहन् कण्ठग्रहातुरम् ॥ ६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अबालकत्वे हेत्वन्तरमाह–तोकेनेति । आ समन्तात् मीलिताक्षेण तोकेनातिबालकेन पूतनायाः महौजसः अतिसमर्थायाः प्राणैः सह स्तन्यं पीतं यद्यपि पूर्वं प्राणाः पीता इति न ज्ञातं तथापि उत्तरोत्तरं सामर्थ्यदर्शनात् पूर्वकार्य्याण्यपि एतद्धेतुकानीत्यवधार्यते पाने तथापि न ज्ञातमित्येतदर्थं दृष्टान्त माह–कालेनेव वयस्तनोरिति । यथा तनोः शरीरस्य वयः प्रत्यहं क्षीयमाणमपि कालेन पुरुषो न जानाति तथा भगवता पेपीयमानाः प्राणाः पूतनया न ज्ञाताः ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षड्विंशे तु तदैश्वर्य्यानैश्वर्य्यैस्तद्गणशङ्किनः ।
गोपान् प्रबोधयामास नन्दो गर्गोक्तिगौरवैः ॥

इह किल श्रीगोवर्द्धनधारणसमये श्रीकृष्णलावण्यामृतरसास्वाद निमग्नानां मनसि कोपि विचार उद्भवितुमवसरं न प्राप तदनन्तरं स्वस्वगृहं गतानां तेषां सर्वेषामेव हृदि सन्देह एक उदपद्यत अहो सम्प्रति साक्षाद्दृष्टेन गिरिधारणेन पूतनावधाद्यो दावानलोपशमनाद्यश्चाप्यस्यैव कर्माणि प्रतीमस्तदा तदा तु ब्राह्मणाशीर्वादात् नन्दभाग्यातिरेकात् नारायणप्रसादप्राप्तेऽस्मिन् बालके नारायणावेशाद्वा ते तेऽभूवन्निति चितर्को वृथैव कृता वस्तुतस्तु साप्तवर्षिकबालकस्यास्य सप्तदिनावधिगिरीन्द्रधारणं खलु नरत्वं निषिद्ध्य परमेश्वरत्वमेव कथयति किम्वास्माकं सांसारिकाणां ग्राम्यगोपानामेतत् पितृपितृव्यमातुलादीनां लालनैः प्रफुल्लत्वमुपलालनैर्वैक्लव्यं तथा क्षुत्पिपासादभिपयश्चौर्य्यदस्मानृतप्रलपनवत्सगोचारणादिकं परमेश्वरत्वे सति कथं सम्भवेदेतत्तु परमेश्वरत्वं निषिद्ध्य नरत्वमेव प्रतिपादयत्यतोऽस्य तत्त्वं निश्चेतुमसमर्था महाबुद्धिमन्तं व्रजराजमेव पृष्ट्वा निःसंशया भवामेति मनसि कृत्वा तस्यैव महास्थानीं प्रविश्य पप्रच्छुरित्याह, एवमिति ॥ १ ॥

अत्यद्भुतानीत्यतो नायं प्राकृतो बालकः किन्त्वीश्वर एव इति चेदत आह—कथमिति ? असाविति परोक्षनिर्देशेन तदासौ वनस्थ इति लभ्यते परोक्षस्य एव स्तापक्षेः आत्मजुगुप्सितमित्यात्मनो जुगुप्सायां निकृष्टोऽपि न प्रवर्त्तते किमुत सर्वं प्रकृष्ट ईश्वर इति भावः ॥ २ ॥

यदि च नेश्वरस्तर्हि कथमेतानि कर्माणि सम्भवेयुरित्याहुः—द्वादशभिः । य इति, विभ्रत् स्थित इति शेषः । पुष्करं पद्मं कथमित्यस्य विभक्तिविपरिणामेन यच्छब्दस्य चाग्रिमश्लोकेष्वनुवृत्तिर्ज्ञेया ॥ ३ ॥

तोकेन ये न बालेन ईषन्मुद्रिताक्षेण अलक्ष्यमाणत्वे दृष्टान्तः तनोर्वयो यौवनं कालेन यथा पीयते तद्वत् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ श्रीकृष्णचरितदर्शनस्मरणेन विस्मितेभ्यो गोपेभ्यः श्रीनन्देन यत्तत्प्रभुत्वं वर्णितं तद्वर्णयति–एवमिति । ये अतद्वीर्यविदस्ते एव श्रीनन्दं समभ्येत्याभिगम्य प्रोचुः ॥ १ ॥

यत्प्रोचुस्तदाह–बालकस्येति त्रयोदशभिः । यत् यस्य बालकस्यैव एतान्यद्भुतानि कर्माणि स आत्मजुगुप्सितं स्वानुरूपं जन्म कथमर्हति ? ॥ २ ॥ ३ ॥

तनोर्देहस्य वयः अवस्था कालेन यथा पीयते तद्वत् महौजसः महाबलायाः ॥ ४ ॥

भाषा टीका ।

ॐ नन्द व्रजनानन्दिने नमः ।

श्रीशुक उवाच ।

श्रीशुकदेव जी बोले, कि—हे राजन् ! मनुष्यन तें जो न होय सकें ऐसे श्रीकृष्ण के पराक्रमन कूं देखिकें उनके पराक्रमन कों नहीं जानन वारे गोप इकठोरे होयकें बड़ो विस्मय करिके ऐसे बोलत भये ॥ १ ॥

गोप बोले, कि—जो या बालक के ऐसे अद्भुत चरित्र हैं तासों ये हमारे गामन में रहवे वारेन में ऐसो गोप जन्म कैसें लैवे योग्य है ॥ २ ॥

जो सात वर्ष को बालक एक हाथ तें लीला करिकें गिरिराज को कैसे उठावत भयो, कि–जैसे गजराज कमल के फूल कों उठाइ लेइ ॥ ३ ॥

नेत्र हूं जब नहीं खोले ऐसे नेक से बालक नें बड़े वेगवारी पूतना के प्राणन सहित स्तनन को पान कर लियों जैसें काल देह की अवस्था को पी जाय है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनसोऽधः शयानस्य मास्यस्य मासाल्पवयः परिच्छेदका यस्य उदगूर्ध्वं चरणौ हिन्वतश्चालयतः प्रपदेन पादाग्रेण हतं विपर्यस्तमनः कथमपतत् ? ॥ ५ ॥

क्वचिद्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले ।
गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥ ७ ॥
वने सञ्चारयन् वत्सान् सरामो बालकैर्वृतः ।
हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥ ८ ॥
वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया ।
हत्वा न्यपातयत्तेन कपित्थानि च लीलया ॥ ९ ॥
हत्वा रासभदैतेयं तद्बन्धूंश्च बलान्वितः ।
चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥ १० ॥
प्रलम्बं घातयित्वोग्रं बलेन बलशालिना ।
अमोचयद्व्रजपशून् गोपांश्चारण्यवह्नितः ॥ ११ ॥
आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात् ।
प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यः कृष्णो दैत्येन ह्रियमाणः संस्तं तृणावर्त्तं दैत्यं कथमहन्नित्यर्थः ॥ ६ ॥

हैयङ्गवस्तैन्ये नवनीतचौर्ये बाहुभ्यां गच्छन् रिङ्खन्नित्यर्थः ॥ ७ ॥

मुखतो हन्तुं कामो यस्य तं बकवेषमरिं बाहुभ्यां मुखतः कथमपाटयत् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

आशीविषतमोऽतिक्रूरविषश्चासावहीन्द्रश्च तम् ॥ १२ ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रपदेन आ ईषत् हतं प्रहतं रुदत इति पूर्ववत् बाल्यातिशयः सूच्यते तेन चात्यद्भुतत्वहेतुतया शक्तिविशेष एव बोध्यते एवमग्रेऽपि अन्यत्रैः तत्र मास्यस्येति मासमात्रं व्याप्य जातवात्सल्यस्येत्यर्थः । कालादित्यधिकारे "तमधीष्टो भृतोभूतो भावी" (५।१।८०)वेत्यधिकृत्य "मासाद्वयसि यत् खञौ"(५।१।८१) इत्यनेन यद्विधानात् तत्र द्वितीयसूत्रे तं भूत इति तावन्तं कालं व्याप्य बन्धसत्ताक इत्यर्थे सतीति व्याख्यानात् तृतीयसूत्रे वयसीति विशेषोपादानाच्च किन्तु मासश्च मासश्च मासश्च मासा इति त्रयाणामेवैकशेषस्यकरणात् "त्रैमासिकस्य च पदा शकटोपवृत्तः" इति द्वितीयस्कन्धस्य च सम्वादः कर्त्तव्यः ॥ ५ ॥

आसीन इति अत्यन्तबाल्यमेवाभिप्रेतं सम्यक् चलितुमपि पदा न शक्नोतीत्यभिप्रायात् कण्ठग्रहणमात्रेणैव मातुरं विहृतम् ॥ ६ ॥

क्वचित् कदाचित् अत्याऽग्रेऽपि सर्वत्रपातुद्वाभिः बाहुभ्यां तदग्रभागाभ्यां कराभ्यामित्यर्थः । उलूखलकर्षणाय तयोरेवाधिक्येन प्रणोदनात् ॥ ७ ॥

सरामो बालकैर्वृत इति रामे बालकेषु च तत्रैव सत्सु स एवापाटयदिति सर्वेभ्यः शक्तिविशेषो ध्वनितः मुखतो मुखमारभ्य अरिमिति न तामसयोनित्वात् यदृच्छया हन्तुकाममपि तु अरिं भगिनीवधजातशत्रुभावावाग्रहेणापीत्यर्थः । पूर्वोक्तवत्सवधव्युत्क्रमस्तथाघ व्योमवधातिक्रमश्च परमविस्मयेनाक्रान्तचित्तत्वात् एवमग्रेऽपि ॥ ८ ॥

जिघांसया सरामस्य तस्य लीलया हत्वा पश्चात् पादद्वयग्रहणेन भ्रमणात् कपित्थानि चेति महावृक्षाग्रविक्षेपद्योतनेन शक्तिविशेषः सूचितः ॥ ९ ॥

बलान्वित इति धेनुकवधेपि तस्यैव प्राधान्यविवक्षया नूनमेतत्प्रभावेणैव बलस्यापि बलोदयादेतस्यैककर्तृत्वमिति भावः क्षेमं निर्भयं सर्वोपभोग्यमित्यर्थः ॥ १० ॥

बलेन घातयित्वेति तत्रापि तस्य मुख्यत्वं सूचितं कुतो बलेनैवाऽघातयत् न स्वयम्येन तत्राहुः—बलेति । तत्प्रभावलब्धबलविशेषवता अतस्त्वस्मिन् विद्यमानेऽन्येन घातना न योग्येति भावः ॥ ११ ॥

विमदं यथा स्यात् तथा दमयित्वा यद्वा विमदं सन्तं ह्रदादुद्वास्य ॥ १२ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हिन्वत इति । शकटस्याधश्शयानस्य बालस्य मास्यस्येति पाठे मासात्रयः परिच्छेदका यस्य तस्य उदगूर्ध्वं चरणौ हिन्वतः चालयतः रुदतश्च प्रपदा पादाग्रेण हतमनः शकटं विपर्यस्तं सत्कथमपतत् सर्वत्र कथं शब्दोऽनुवर्तते ॥ ५ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एकहायन इति । यः कृष्ण एकाब्दवयस्को भुवि निषण्णः दैत्येन तृणावर्त्तनाकाशमार्गेण नीयमानः तं कण्ठग्रहणेनातुरं पीडितं तृणावर्तं कथमहन् हतवान् ॥ ६ ॥

क्वचिदिति । कदाचिन्नवनीतचौर्ये सति क्रुद्धया मात्रा यशोदया उलूखले बद्धो बाहुभ्यामर्जुनयोर्मध्ये गच्छन् रिङ्गन् तावदर्जुनौ कथमपातयत् ॥ ७ ॥

वन इति । रामेण सहितो बालकैश्च वृतो वत्सान् वने सम्यक् चारयन् जिघांसुं बकासुरमरिं मुखं भुजाभ्यां कथमपाटयद्विदारितवान् ॥ ८ ॥

वत्सेष्विति । हन्तुमिच्छया वत्सरूपेण वत्सेषु प्रविष्टं वत्सासुरं हत्वा लीलया न्यपातयत् तेन पातितेन दैत्यदेहेन कपित्थानि च न्यपातयत् ॥ ९ ॥

हत्वेति । बलदेवेन सहितो रासभासुरं तद्बन्धूंश्च हत्वा परिपक्वैः फलैरन्वितं तालवनं क्षेमं चक्रे सर्वैः प्रवेष्टुं क्षेमं चक्र इत्यर्थः ॥ १० ॥

प्रलम्ब मिति । बलशालिनाबलदेवेन उग्रं प्रलम्बमसुरं घातयित्वा स्वयं व्रजपशून् गोपांश्च दवाग्नेरमोचयत् ॥ ११ ॥

आशीविषेत्यादि । आशीविषतम अतिक्रूरविषः स चासावहीन्द्रश्च तं बलाद्दमित्वा ततो विगतमदं ह्रदादुद्वास्य निष्कास्य यमुनां निर्विषोदकां चक्रे ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चरणावुदक् ऊर्ध्वं हिन्वतः उत्क्षिपतः मासस्य मासमात्रवयस्कस्य प्रपदेन पादाग्रेण हतं पीडितम् ॥ ५ ॥

एक एव हायनो वर्षं वत्सरो यस्य स तथा तृणावर्तं महन्निति यत्कर्म तदपि ॥ ६ ॥

हैयङ्गवं हैयङ्गवीनं सद्यो दधिमन्थने जातं नवनीतं तस्य स्तैन्ये चौर्ये सति बाहुभ्यां गच्छन्निति सम्बन्धः ॥ ७ ॥

मुखतः मुखे प्रहीत्वेति शेषः । अपाटयत् व्यदारयत् ॥ ८ ॥

तेन दैत्येन कपित्थानि कपित्थबीजानि फले लुक् ॥ ९ ॥

क्षेमं प्रासरत्वम् ॥ १० ॥ ११ ॥

दमित्वा निगृह्य उद्वास्य उच्चाटयित्वा ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बाहुभ्यां गच्छन्निति उलूखलाकर्षणाय अरिं शत्रुत्वेनास दाग्रह परमपि ॥ ७—१२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यथा प्रतिक्रियां कुर्यात् पलायेत वा तस्मादेवमलौकिकं सामर्थ्यं वाच्ये किञ्च, अधः शयानस्य हिन्वतः चरणौ चालयतः "हिन्व चलने" इति मासस्य मासत्रयपरिमितस्य सङ्ख्यानुक्तिः वर्षाभावार्थां नाद्यापि वर्षः परिच्छेदकः नाप्ययन किन्तु मासा एव परिच्छेदकाः अत एव चरणौ उदक् ऊर्द्ध्वं हिन्वतः सतः न तु तदर्थांहिन्वतः तथापि विपर्यस्तं सत् अनः शकटमपतत् पादचालने निमित्तमाह—रुदत इति । अनेनाशक्तिरङ्गीकृता तत्रापि प्रपदेन पादाग्रेण आ ईषद्धतं सत् विपर्यस्तं विपरीतं सदपतत् साधनाल्पत्वं कार्यमहत्त्वं चोक्तम् ॥ ५ ॥

क्रमेण भगवच्चरित्रं वदन्तस्तृणावर्त्तवधमाहुः—एकहायन इति । अयमेकहायनः एकवार्षिक आसीन उपविष्टः न तु चलितुं समर्थः तादृशोऽपि दैत्येन विहायसा नीतः निरालम्ब एवाकाशे तमहन् मारितवान् तत्रापि न युद्धं किन्तु कण्ठग्राहेणैव यदैव कण्ठे गृहीतः तदैवातुरो जातः मातुः प्रदर्शनादिकमप्रसिद्धमिति तद्वर्णनम् ॥ ६ ॥

ततः क्रमाज्जातं यमलार्जुनभङ्गमाहुः—क्वचिदिति । हैयङ्गवस्य स्तैन्ये निमित्ते शिक्षार्थं मात्रा उलूखले योजितः तादृशोऽपि अर्जुनयोर्मध्ये बाहुभ्यां गच्छन् पश्चादुलूखलस्य भारत्वात् पादद्वयेन सहोलूखलस्याकर्षणमेव गमनन्तु बाहुभ्यामेव बाहुभ्यां वा अपातयत् ॥ ७ ॥

यथादृष्टवचना हि ते तेषामेतदेवाश्चर्यम् उभयोः पातनमुभाभ्यामिति ततो वृन्दावने बलभद्रसहितः वत्सान् चारयन् बालकैर्वृतः विशेषसामर्थ्यमप्रकाशयन्नपि हन्तुकामं बकम् अरिं शत्रुभूतं न तु प्रासङ्गिकं मुखत एवापाटयत् एतत्सर्वजनीनं बालानां पलायनमप्यशक्यं स तु विपाटितवानेव वत्सबकयोः व्यत्यासेन कथनमनवधानात् क्रमाग्रहणात् नाप्येतयोः क्रमे तात्पर्यं बाहुभ्यां पातनं बाहुभ्यामुत्पाटनमिति बाह्वोः सामर्थ्यांकथनार्थं यमलार्जुनयोर्भङ्गकथनानन्तरं बकनिरूपणम् ॥ ८ ॥

अतः पश्चात् एकहस्तसाध्यं वत्सासुरवधमाह—वत्सेष्विति । वत्सरूपेण जिघांसया वत्सेषु प्रविशन्तं तदानीमेव ज्ञात्वा मारयितुमागत इति प्रथमत एव तं परिभ्रामणेन हत्वा तेन कपित्थानि न्यपातयत् चकारात्तमपि वृक्षशाखाम्वा महाबलकार्यं तचादृशमपि लीलया कृतवान् ॥ ९ ॥

ततो धेनुकवधमाह—हत्वारासभदैतेयमिति । बहवो धेनुकसदृशा हता इति प्राधान्येन व्यपदेशा भवन्तीति न्यायेन बलभद्रेण सहभावमात्रं वस्तुतो भगवतैव हत इति हत्वा रासभदैतेयमित्युक्तं रासभो भूत्वा दैतेयो धेनुकः तद्बन्धवोपि रासभाः तानपि हत्वा बलभद्रसहितः तालवनं क्षेमं चक्रे यो हि तत्र गच्छति स क्षेमं न प्राप्नोतीति फलं तु स्वभावत एव प्राप्नोतीत्याह—परिपक्वफलान्वितमिति । परिपक्वैः फलैरन्वितम् एवं धेनुकवधोऽपि लोकानां हितार्थमेव नत्वहितार्थम् ॥ १० ॥

मारणक्रमात् धेनुकवधानन्तरं प्रलम्बवधो निरूप्यते, मध्ये जातं कालियदमनमग्रे वक्ष्यति, उग्रमपि प्रलम्बं बलभद्रेण घातयित्वा बलभद्रे घातकशक्तिं दत्त्वा स्वस्य मारकत्वे प्रयोजनाभावात् व्रजपशून् गोपांश्च अत्ययवह्नितः अमोचयत् दावानलान्मोचितवान् ॥ ११ ॥

वह्निसाम्याद्विषाग्निमपि निरूपयति—आशीविषमिति । आशीनां मध्ये विषदंष्ट्राः तत्र विषं यस्य स्वाभाविकविषात् अधिकविषयुक्तोऽहीन्द्रः सर्पश्रेष्ठः तं प्रसिद्धं कालियम्, अन्यैः स्मर्तुमपि भीयते तादृशं

दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् ।
नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥ १३ ॥
क्व सप्तहायनो बालः क्व महाद्रिविधारणम् ।
ततो नो जायते शङ्का व्रजनाथ! तवात्मजे ॥ १४ ॥

नन्द उवाच ।

श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके ।
एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह ॥ १५ ॥
वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ १६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ह्रदात् दूरं प्राप्य ह्रदमध्ये दमित्वा प्रसह्य बलात् ह्रदादुद्वास्य दूरीकृत्य यमुनां निर्विषोदकां चक्रे अनेन यद्गरुडस्याऽसाध्यं यमादीनां देवानामपि अन्यथा गरुडः शत्रुं मारयेत् यमुनां वा यमादिः शुद्धां कुर्यात् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनसोऽधः शयानस्य मास्यस्य मासत्रयवयसः मासाद्वय-ासियत स्तन्यवित्ति यत् चरणौ उदक् ऊर्द्ध्वं क्षिपतः चालयतः यस्य प्रपदेन पादाग्रेणाहतं अनः शकटं विपर्यस्तं सत् कथम पतत् ॥ ५ ॥

यो दैत्येन ह्रियमाणः सन् तं तृणावर्तं दैत्यं कथः महन् ॥ ६ ॥

हैयङ्गवस्तैन्ये नवनीतचौर्ये बाहुभ्यां गच्छन् रिङ्खन्नित्यर्थः ॥ ७॥

दोर्भ्यां धृत्वा मुखतः मुखमारभ्य कथमपाटयत् ॥ ८ ॥ ९ ॥

रासभदैतेयं धेनुकं बलान्वित इति तत्रापि कृष्णस्य प्राधान्यं विवक्षितम् ॥ १०—११ ॥

आशीविषतमोऽतिक्रूरविषश्चासावहीन्द्रश्चेति तं विमर्द्य यथा-स्यात्तथा दमित्वा ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधः अनस इति शेषः " त्रैमासिकस्य च पदा शकटोऽपवृत्तः " इति वचनान्मास्यस्य मासास्त्रयः प्रादुर्भावावधि भूताः यस्य तस्य उदगूर्द्ध्वं चरणौ क्षिपतः चालयतः प्रपदेन पादाग्रेणाहतं विपर्यस्तम् अनः अपतत् ॥ ५ ॥ ६ ॥

हैयङ्गवस्य नवनीतस्य स्तैन्ये चौर्ये ॥ ७ ॥ ८ ॥९॥१०॥११॥

आशीविषतमः अतितीव्रविषश्चासावहीन्द्रश्च तम् ॥ १२ ॥

भाषा टीका ।

जब ये तीन महीना को रह्यो गाड़ा के नीचे पालने में सोयो हो तब दूध के तांई रोवतेई में पायन कूं ऊंचे उछारे सो जाके चरण की ठोकर तें गाड़ा उलटि गयो ॥ ५ ॥

एक वर्ष की अवस्था में बैठे भये को जब तृणावर्त दैत्य आकाश में उड़ाय कें ले गयो, तब जाने कंठ चांपिकें वा असुर दैत्य को मार गेर्यो ॥ ६ ॥

काहू समें माखन चोरी में माता ( यशोदा ) ने ऊखल में बांध्यो तब यमलार्जुन वृक्षन के बीच में आयकें हाथन तें दोऊवृक्षनकूं उखारिकें गिराय दिये ॥ ७ ॥

दाऊ सहित बछरानकों चरावते में बालकन सहित अपन कूं मारिवे आयो जो बैरी बकुला ( बकासुर ) ताकों हाथन तें मुख फार गेर्यो ॥ ८ ॥

बछरान में बछरा को रूप धरिके मारिवे की इच्छा सूं आयो जो वत्सासुर दैत्य ताकूं मारिकें वाके देह कों खेलाई तें कैथ के वृक्षपै गिराय दियो ॥ ९ ॥

और बलदेव जी सहित श्रीकृष्ण, गधा को रूप धारे धेनुकासुर दैत्य कूं बंधुन सहित मारिकें पके ताल के फल जा में लगि रहे ऐसे ताल वन में कुशल करत भये ॥ १०॥

बड़े उग्र प्रलम्ब दैत्य कों बलवारे बलदाऊ तें मरवाय कें वन की आंचि ते व्रज के पशून कूं और गोपन कों छुड़ावत भये ॥ ११ ॥

बड़े विषहरे कालीनाग कों दमन करि वाके मद कों दूरि करि जोरवारी वाकूं कालीदह में तें निकासि कें जमना कूं निर्विष करत भये ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

औत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामात्माऽयं स्यादिति शङ्का ॥ १३ ॥

उक्तमद्भुतविस्मयेनाभिनयेन वदन्ति क्व सप्तहायन इति ॥ १४ ॥

प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते ॥ १७ ॥
बहूनि सन्ति नामानि रूपाणि च सुतस्य ते ।
गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥ १८ ॥
एष वः श्रेय आधास्यद्गोपगोकुलनन्दनः ।
अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ ॥ १९ ॥
पुरानेन व्रजपते साधवो दस्युपीडिताः ।
अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्राक् श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्ता सम्भावनस्य नन्दस्य कृष्णानस्वावबोधकं जातं स इदानीं तेनैव वाक्येन गोपाननुपादिशति-श्रूयतामिति ॥ १५—२१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किञ्च, दुस्त्यजश्चेति । ते तनये तवैव तनयोऽयं नास्माकमिति विचारितेऽपि त्यक्तुमशक्यः स्वाभाविक इत्यर्थः । तत्रापि सर्वेषाम् अहो भवतु वा सर्वाकृतिप्रकृतिसुन्दरे सर्वचित्ताकर्षकेऽनन्यगतीनामस्माकमनुरागो दुस्त्यजः तस्यात्यस्माखयोग्येष्वपि औत्पत्तिकः जन्मदिनमेवारभ्य दृष्टः स्वाभाविक एवेत्यर्थः । अत्रादिमाश्चिति तत्तद्वैलक्षण्येन सम्प्रति प्रस्तूयमान इत्यर्थः । मन्यत्तैः तत्र किमित्याद्युत्प्रेक्षायां मिथोदेहदेहिनोर्यथा तद्वदित्यर्थः ॥ १३ ॥

केति अयमर्थः सप्तहायनत्वेन जन्मवृद्ध्यावयस्तदवस्था गृहीताः ताभिश्च बालत्वं निश्चितं तच्चारत्यन्तं बालान्तरेषु व्याप्तिदर्शनात् तथा महाद्रिविधारणेन पूतनादिवधहेतुप्रभावत्वं स्वाभाविकप्रेमविषयाश्रयत्वं च गृहीतं ताभ्यां बालादन्यत्वं तदन्यत्वेऽपि देवादित्वं तत्रापि परमविलक्षणत्वं निश्चितं बालान्तरादौ तत्तदर्शनात् तदेवं सप्तेत्यादित्वे बालादन्यत्वं न सम्भवति महाद्रीत्यादित्वे च बालत्वं च न सम्भवतीत्यर्थः । ततस्तस्मादेकस्मिन् मिथो विरोधिधर्मद्वयात् शङ्काविप्रतिपत्तिजः संशयः बालोऽयं बालादन्यः परमविलक्षणदेवादिर्वेति ॥ १४ ॥

निजाशेषभगवत्ताप्रकटनार्थम् अवतीर्णोऽयं साक्षात् श्रीभगवानेवेति व्यक्तमुक्ते कदाचिदैश्वर्यज्ञानेन भयगौरवादिना स्नेहभरहानिः स्यादिति शङ्कया श्रीगर्गेण साक्षात् परमैश्वर्यमनुक्त्वा व्यपदेशेनैव तल्लक्षयता यान्यक्षराण्युक्तानि तैरेव इदस्य स्वाभाविकगुणवाचकता प्रतिपादकतयाऽवधारितैर्गोपान् प्रबोधयन्नाह-श्रूयतामिति । मे मम गर्गद्वारा श्रुतैतत्प्रभावस्य वचः यः शङ्का च्येतु श्रूयतां अर्भक इति स्वस्य बालत्वेनैव निश्चयं बोधयति यद्वा, वो युष्माकं योऽर्भकस्तास्मिन्निति ममेव युष्माकमप्ययं बालक इति स्नेहविशेषमेव वर्द्धयति एवं भवतां परमानुरागविषयं परोक्षेप्यपरोक्षवदुक्तिः सदा तस्य साक्षादिव हृदि स्फूर्तेः मे मम कुमारं पुत्रमिति पूर्ववत् पुनः पुनस्तथैवोक्तिरतिनिश्चयाय यद्वा, मे माम् एकाकिनं यद्वचः व्यक्तमेव न च सङ्केतादिनेत्यर्थः—यद्वा ह हर्षे ॥ १५ ॥

गर्गोक्तिमेवाह-वर्णा इत्यादिना । न विस्मय इत्यन्तेन अत्र प्राचीनप्रकटार्थोऽनुसन्धेयः । किञ्चात्र "तस्मान्नन्द ! कुमारोयम्" इति प्रथमश्चरणः "तत्कर्मसु न विस्मयः" इति चतुर्थः गर्गवाक्ये तु "तस्मान्नन्दात्मजोऽयं ते" इति प्रथमः "गोपायस्व समाहितः" इति चतुर्थः ; इत्यद्धा मां समादिश्येति वक्ष्यमाणात् श्रीनन्दवाक्यात् तद्वाक्यमेवानेनानुदितमिति लभ्यते तस्माद्भिन्नयार्थं स्वपुत्रे सर्वेषां स्वसाधारण्येन ममताया गोपायितव्यतायाश्च व्यञ्जनार्थमेव च किञ्चिदन्यथा विधायानूदितमपि श्लेषेण यथार्थतया सम्पाद्यते स्म ॥ १६—२१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अञ्जः अञ्जसीः ॥ १९—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुस्त्यज इति । हे नन्द ! ते तव तनयेस्मिन् कृष्णे नोऽस्माकं सर्वेषां व्रजौकसामनुरागः दुस्त्यजः कथं तस्यैवंविधातिमानुषचेष्टितस्य चास्मास्वौत्पत्तिकः जन्मसिद्धोनुरागः कथम् ? अतः सर्वशक्तिः सर्वेषामात्मा च किं तवात्मज इत्याशङ्कामह इति भावः ॥ १३ ॥

अन्यथैतन्न घटत इत्याशङ्कामेवाविष्कुर्वन्ति—केति । हे व्रजनाथ ! ततोऽद्रिधारणादेस्तवात्मजे शङ्का सर्वशक्तिपरमात्मशङ्का जायते ॥ १४ ॥

एवमापृष्टः प्राकृतश्रीकृष्णजातकात्मकगर्गवाक्यौ नित्यं तच्चरित्रपरिशीलननिवृत्तेश्वरत्वासम्भावना नन्दस्तेनैव गर्गवाक्येन गोपानामाशङ्कामपनुदति हे गोपाः एवं कृष्णमुद्दिश्य गर्गो यदुवाच तच्छ्रूयतां तच्छ्रवणेनैवास्मिन्नर्भके विषये भवतां शङ्का व्येतु निवर्तताम् ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत एव कृतमागोऽपराधो येन तस्य ममापराधमिति शेषः । स एवम्भूतस्त्वं क्षन्तुमर्हसि हे प्रभो ! निग्रहीतुम् अनुग्रहीतुं च समर्थः अथ पुनर्मूढचेतसो ममासती दुष्टा एवंविधा मतिः माभूत्तथा अनुगृहाणेति प्रार्थना ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, "स्ववेन पर्यान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवो-निन्द्राः" इति श्रुतेः हरे कामक्रोधादिदर्शनाल्लोभाद्यभावः कथं कथ्यत इत्यत्राह-कुत इति । ते गुणा हेतवो निमित्तानि येषां ते तद्धेतवः न विद्यन्त इति कुतो नु किं वक्तव्यमित्यर्थः । यद्वा, तस्य संसारहेतवः कुतः कल्प्यन्त इति शेषः । अबुधस्याज्ञानिनः लिङ्गभावाः लक्षणभूताः अत्र कारणाभावात्कार्याभावानुमानं च द्रष्टव्यमित्यर्थः । यद्यपि तव गुणनिमित्ताः कामादयो न सन्ति तथापि शास्त्रविहिता अदोषकरत्वात्सन्तीत्याशयेनाह-अथापीति, दण्डं शासनं हिंसां वा "दण्डोऽस्त्रीशासने राज्ञां हिंसायां लगुडे गुणे" इति यादवः विशुद्धसत्त्वं निर्मलसत्त्वगुणयुक्तं इत्याद्यपव्याख्यानप्रत्याख्यानाय विगतशुद्धसत्त्वमित्यादिव्याख्यात-माचार्यैः सत्त्वगुणाङ्गीकारे मायामयोऽयं गुणसम्प्रवाहो न विद्यत इत्येतद्व्याहतं स्यादिति पश्यद्भिरिति । असच्छासनेन धर्मस्थापनं प्रयोजनं सच्छिक्षणेन किं फलं स्यात् । किञ्च, उभयेषां शासका उभये तौ नैक इतीयं शङ्का—

"असतां च सतां चैव हरिरेवानुशासकः ।

सतां तु श्रेयसे सैव ह्यनुशास्तिर्भविष्यति" ॥

इत्याग्नेयवचनेन परिहर्तव्येति ॥ ५ ॥

पितृत्वाद्गुरुत्वात्स्वामित्वाच्च हरेरेकस्यैवानुशासकत्वं नान्यस्येत्याशयेनाह-पितेति । पुण्यपापफलपाचकत्वेन उपात्तदण्डः गृहीतशासनः हिताय सतामिति शेषः । "गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् । इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः" इत्येतन्निरस्तमिति ज्ञातव्यम् ॥ ६ ॥

सतामनुशासनं श्रेयस इत्यभिप्रेतं तदिदानीं व्यक्तमाह, य इति । हे जगदीश ! मद्विधा मानिनः स्युः ते काले असुरावेश निर्मोकसमये प्राप्ते अभयं त्वां वीक्ष्य अस्मन्मदनिर्मूलनवीर्यं त्वां दृष्ट्वा येन मदेन त्वदपराधमकार्षं तं मदं हित्वा अपस्मयाः निरस्तगर्वाः आर्यमार्गं विद्वज्जनसिद्धान्तं प्रभजन्ति न केवल-मस्माकं तवेहानुशासनं खलानामपीत्याह, ईहेति ॥ ७ ॥

तत्र कर्तव्यं प्रार्थयते स्वमिति अविदुषः अज्ञस्य ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मानभञ्जनपूर्वकं हितप्रवर्त्तने प्रकारमेवाह-य इति । हित-माह-आर्येति । अनुशासनं शिक्षाकारणम् ॥ ७ ॥

मैवं पुनर्भूदिति प्रार्थना नातिशुद्धचेतसा विहितेति ज्ञेयं पुनरपि पारिजातहरणेऽपराधापातदर्शनात् ॥ ८—१० ॥

---



श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्येषा वैषम्यबुद्धिरेव नास्ति अन्येषामपि तादृशबुद्धि-नाशकत्वात् तदावैषम्यबुद्धिकृतानि कार्याणि क्रोधादीनि न सम्भवन्तीति किं वक्तव्यमित्याह—कुत इति । नु इति वितर्के तद्धेतवो ग्रहणहेतवो मायाहेतवो वा कुतो भवेयुः । किञ्च, हे ईश ! यदि तथापि ते स्युः तदा तत्परवद्व्यापीशत्वं नोपपद्येत यद्यपि बहव एव दोषा निराकर्तव्याः तथापि प्रकृते द्वयं प्रतिभाति अपकारिणि कोपो द्रव्ये लोभश्चेति अत आह—मन्यु लोभादय इति मन्यू राजसः लोभस्तामसः इति वा नन्वेते दृष्टाः कथं निराक्रियन्ते तत्राह, अबुधलिङ्गभावा इति । अबुधानामज्ञानां लिङ्गभावो लिङ्गत्वं येषां ते स्वज्ञानित्वं ज्ञापयन्ति न तु सर्वज्ञा धीरास्तद्ज्ञापका वा अतः श्रुतिविरोधात् न तेऽङ्गीकर्तव्याः न हि क्रोधादयः भगवति केचिदनुभूताः कार्येण कल्पनं तु अन्यथाप्युपपद्यते ये प्राकृतेषु क्रोधादिभिर्जायन्ते ते भगवति स्वत एव नहि दोषेणैव कार्यं भवति गुणेन न भवतीति वक्तुं शक्यं दुःखादप्यश्रूणि आनन्दादप्यश्रूणि तथा प्रकृतेऽपि क्रोधादपि निग्रहः अनुग्रहादपि निग्रहः इति अतः प्रमाणयुक्तिबाधात् न भगवति क्रोधादयः एवमपि सति भगवान् दण्डं बिभर्ति अतो ज्ञायते धर्मरक्षार्थं खलानां निग्रहार्थं चैतत् करोतीति लौकिकभगवतोरेतावान् विशेषः एकत्र फलाभावोऽपरत्र लौकिकसाधनाभाव इति साधनं भगवानेव तत्र साधनं स्वरूपमेवेति सिद्धान्तः । फलं श्रमप्रतिपन्नम् अन्यथा प्रवृत्तिर्न स्यात् यदि भगवानेवं न कुर्यात् पापण्डप्रवृत्त्या धर्मनाशः स्यात् स च सर्वेषां श्रेयोरूपः । किञ्च, यदि स्वानुभावं न प्रकाशयेत् गोवर्द्धनोद्धरणादिना तदा खला न निगृहीताः स्युः अत्र दण्डद्वयं पूर्वस्थितस्य नाशः अधिकताडनं च एकस्तु दण्डत्वेन न व्यवहियत इत्येकवचनम् एवं कृत एवैनःस्वतीति तथैव ज्ञानं नान्यस्येति भगवानित्युक्तम् अतस्तस्य फलसाधकत्वे प्रमाणान्तरं न मृग्यम् ॥ ५ ॥

एवं श्लोकद्वयेन दण्डः कृतः परमप्रयोजनार्थमिति निरूपितमिदानीं शिक्षैवैषा न तु दण्ड इत्याह–पितेति । पुत्रा हि पितृभिस्ताड्यन्ते गुरुभिश्च शिष्याः राजभिश्च प्रजाः कालादिभिश्च पुरुषाः स्वयमेव न चैते दण्डं कुर्वन्ति किं तु शिक्षामेव त्वं तु सर्वेषां सर्वरूपः जनकत्वात् पिता वेदकर्तृत्वात् गुरुः सर्वेषामेव जगतामधीशः स्वामी ब्रह्मादीनामप्यधिकारसम्पादकः अतोऽधीशः दुरत्ययः कालो मृत्युः कालमृत्युर्हि न केनाप्यतिक्रान्तो भवति उपात्तो दण्डो येन स यमः परलोकेऽपि दुःखदाता तथैवाधिकारिणस्त इति कर्मकारणात् प्रेरणाद्वा अतः सर्वत्राधिकृतो भवानेवेति इच्छातनुभिः राजादिशरीरैः लोकानां हितार्थेन दण्डं समीहसे जगदीशमानिनां च मानं विधुन्वन् इच्छातनवो मत्स्यादयोऽपि पुरुषः पिता मत्स्यो गुरुः अधीशः कूर्मो वराहश्च मृत्युदण्डधारिणौ नृसिंहवामनौ तथान्यत्रापि ज्ञेयं चकारान्मोक्षाय च तेषां जगतश्च ॥ ६ ॥

तत्र हितं सन्दिग्धमिति स्वदृष्टान्तेन विवृणोति–ये मद्विधा इति । अहमिन्द्रो यथा एवमेव वरुणादयः अज्ञाः मूर्खाः अन्यथा कथं नन्दं नयेयुः तेषामज्ञानस्थानमाह–जगदीशमानिन इति । यद्यपि भगवदाज्ञा क्रियत इति बुद्ध्यभावे सर्वमेव मौढ्यकृतं तथापि

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

जगदीशा वयमिति अभिमानः स्पष्टः मोहकार्यत्वेन तादृशाः काले अवसरे अन्तकाले भयरूपं त्वां वीक्ष्य आशु शीघ्रं वयमीश्वरा इति तन्मदमपरित्यज्य आर्यमार्गे नामस्मरणादिकं तुलसीगोपीचन्दनादिधारणं च प्रपद्यन्ते यथेदानीमहं नमस्कारे प्रवृत्तः एवमपि केचित्प्रपद्यन्ते यावत्पुनर्भयात्मकमपि त्वां न प्रपद्यन्ति तावदार्यमार्गे प्रपद्यन्त इति धर्मरक्षार्थं दण्ड उपपादितः प्रकर्षेण भजनं पुनः पूर्वावस्थानं न गृह्णन्ति अपगतः स्मयो गर्वो येषामार्यमार्गस्य गर्व एव बाधकः अतो यद्यपि त्वया कौतुकार्थमेव गोवर्द्धनोद्धरणं कृतं तथापि खलानामनुशासनरूपं जातम् अतस्तव चेष्टामात्रमपि सफलमेव ॥ ७ ॥

एवं शिक्षार्थतामुपपाद्य कदाचिदज्ञानवशेन कृतं कर्म चित्ते अपराधत्वेनैव मासीत् अतस्तन्निषेधार्थं प्रार्थयति–स त्वमिति ऐश्वर्यमदेन प्लुतस्य अत एव कृतांहसः कृतापराधस्य उभयत्रापि हेतुः ते प्रभावमाविदुषः क्षन्तुमर्हसि अथ भिन्नप्रक्रमेण मदीयान्यमानविचार्य केवलोऽयं दीन इति भ्रान्त इति यतस्त्वं प्रभुः न हि प्रभोश्चेतसि क्षुद्रकृताः भासन्ते मूढचेतसो मत्त इति वचनात् मौढ्यं सिद्धमेव तन्वज्ञानं निवर्तितं शिक्षा च कृता का अतःपरं क्षमा कर्त्तव्येति चेत्तत्राह–मैवं पुनर्भूदिति । एतादृशी मतिः पुनर्माभूदिति यदि भगवान् क्षमां न कुर्यात् मदपराधं स्मरेत् तदा सत्यसङ्कल्प इति नित्यविषयज्ञान इति मदाभयोऽप्यपराध उत्पद्यते असमरणे तु नोत्पद्यते साधनाभावात् पूर्वसाधनस्य निवृत्तत्वाच्च यतः इयं मतिरसती सम्बन्धिनमप्यसति योजयतीति अतस्तन्निवृत्तिप्रार्थनोचितैव ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, कैमुतिकन्यायेनाह—कुत इति । नु भो ईश ! यदि तव गुणप्रवाहे जिघृक्षापि नास्ति तर्हि कुतस्तस्य गुणप्रवाहस्य हेतवो गुणाः स्युः तत्कृता गुणप्रवाहकार्यभूताः लोभादयश्च येऽबुधस्य चिह्नं चिन्हं भावयन्त्युत्पादयन्तीति ते । ननु, तर्हि कथं त्वन्मखभञ्जनकरत्वं तत्राह—अथापीति । लोभकोपाद्यभावेऽपि ॥ ५ ॥

धर्मगोपनखलनिग्रहाभ्यां पूर्णस्य परमेश्वरस्य मम किं फलमिति चेत् जगतां मङ्गलमेवेत्याह—पितेति । तव साहजिककारुण्यात् जगतां मध्ये ये धार्मिकास्तेषु त्वं पिता यथा पुत्रस्य देहद्रवे वत्सलः गुरुर्यथा शिष्यस्य जीवात्मनि वत्सलः अधीशस्तत्तद्दुःखत्राणसुखप्रदानसमर्थः ये तु खलास्तेषु त्वं दुरत्ययो दुर्वारः कालः स इव उपात्तदण्डः दण्डप्रदानेनैव तच्छोधक इत्यर्थः । अत उभयेषां हितायैव इच्छातनुभिः स्वेच्छामयावतारैः समीहसे चेष्टसे तव समीहा लीलैव पूतनावधादिका दुष्टसंहारिका शिष्टपालिका चेत्यर्थः । ये त्वधिकृतमन्या ब्रह्माद्यास्त्वद्दत्तपरिकल्पितैश्वर्येणैव मत्ता भवन्ति तेषामपि मदनिरासिनी त्वल्लीलैवेत्याह—मानमिति ॥ ६ ॥

तेषु जगदीशमानिष्वपि मध्येऽहमस्यधम इत्याह—मद्विधाश्च ते अज्ञानादप्युपगानत्वादहमत्यन्त इति भावः । काले भयकालेऽपि यथा अधुनैवातिवृष्टौ समयं भयमगणयन्तं वीक्ष्य यद्वा, न जाने प्रभुरयं मां कीदृशं दण्डयिष्यतीति स्वस्य भयं भयहेतुं वीक्ष्य तन्मदं जगदीश्वरत्वमदं त्यक्त्वा आर्याणां त्वद्भक्तानां मार्गे भजन्ति गतस्मया नष्टगर्वा अतस्तवेयं गोवर्द्धनधारणलीलैव खलानामस्माकमनुशासनं दण्डः ॥ ७ ॥

ननु, गोवर्द्धनधारणेन व्रजस्य रक्षामेवाऽकरवं ननु तव दण्डं तव दण्डं तु साम्प्रतं वैवस्वतमाहूय समीचीनतयैव कारयिष्यामीत्याशङ्क्य महाभयविह्वल आह–संप्रसिद्धः पिता च गुरुश्चातः कृपालुत्वात् क्षमासिन्धुत्वाच्च ऐश्वर्यमदसिन्धौ प्लुतस्य निमग्नस्य अत एव तव प्रभावम् अविदुषोऽजानतः ममापराधं क्षन्तुमर्हसि यतो मूढचेतसः पशुसमावस्य पशुर्हि स्वामिना दत्तदण्डप्रहारोऽपि क्षणान्तरे तमेवापराधं करोत्यतोऽहं दण्डप्रदानेन न शोधनमर्हामि किन्तु कृपया तथा मां शोधय यथा मे मूढचेतस्त्वं नश्यतीत्याह—मैवमिति । एतच्च नातिशुद्धेन चेतसा प्रार्थितमिति ज्ञेयम् । त्वां वीक्ष्य काले भयमित्युक्तेरक्षमतयैव तदनुगतः अतः पुनः पारिजातहरणादावपि विस्मरिष्यत इति श्रीवैष्णवतोषिणी ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदि संसार एव तव न तर्हि तद्धेतवः संसारप्रापकाः तत्कृताः संसारकृताः लोभ आदिर्येषां ते रागद्वेषादयः कुतस्तव स्युः तथापि संसारतत्कृतलोभादिरहितोऽपि धर्मस्य गुप्त्यै खलानामस्मदादीनां निग्रहाय दण्डं बिभर्षि ॥ ५ ॥

तच्च योग्यमेवेत्याह—पितेति द्वाभ्याम् । सर्वजगतां त्वं पिता जन्मदः गुरुर्ज्ञानप्रदः दुरत्ययो निरतिशयोऽधीशः अधिष्ठाता अतः काले उचितकाले उपात्तदण्डः स्वेच्छातनुभिः नाना लीलावतारैः जगदीशमानिनां मानं गर्वं विधुन्वन् अपनयन् हितायैव ईहसे चेष्टसे इत्यन्वयः ॥ ६ ॥

मद्विधाश्च ते अज्ञाश्च मद्विधाज्ञाः जगत ईशा वयमिति मानवन्तः काले भयकालेऽपि त्वां यथैवातिवर्षनिपातेऽस्मयं वीक्ष्य आशु तन्मदं जगदीशा वयमिति मदं हित्वा अपस्मया गतगर्वाः सन्तः आर्याणां शिष्टानां मार्गे त्वज्ज्ञानभक्तिमार्गं प्रभजन्ति प्रभुवर्तन्ते अतस्तव ईहापि निश्चितं खलानामनुशासनं दण्ड इत्यर्थः । गोवर्द्धनोद्धरणेहयैव मदनुशासनं त्वया कृतमिति भावः ॥ ७ ॥

तदेवं भगवतो धर्मरक्षणायैव निग्रहादिकर्तृत्वमुक्त्वाथ क्षमापयन् एवमसती मतिः पुनर्मे माभूदिति प्रार्थयते स त्वमिति ॥ ८ ॥

---

### भाषा टीका ।

हे ईश ! तो फिर और जो शरीर ग्रहण के हेतु कर्मकृत मोहादिक देहात्मभ्रम वारे सांसारिक जनन के चिन्ह हैं ते आप में कहां ते होय सकें ? तथापि आप धर्म की रक्षा के निमित्त और खलन के निग्रह करिवे कूं उनकों दंड देवो हो ॥ ५ ॥

तवावतारोऽयमधोक्षजेह स्वयम्भराणामुरुभारजन्मनाम् ।
चमूपतीनामभवाय देव ! भवाय युष्मच्चरणाऽनुवर्तिनाम् ॥ ९ ॥
नमस्तुभ्यं भगवते पुरुषाय महात्मने ।
वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥ १० ॥
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्त्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ११ ॥
मयेदं भगवन् ! गोष्ठनाशायासारवायुभिः ।
चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ १२ ॥

भाषा टीका ।

हे प्रभो ! आप या जगत् के पिता हौ गुरू हौ और स्वामी हौ, तथा दंड ग्रहण करिवे वारे काल भी आपही हौ, और जे अपन कू ईश मानन वारे हैं तिन के हित के अर्थ अपनी इच्छा सों अनेक प्रकार के देह धारण करिकें उनके मान भंग करने की चेष्टा आप करौ हौ ॥ ६ ॥

जो मेरे सदृश अपन कूं ईश्वर मानन वारे हैं ते उचित काल में भय देन वारे दंडधारी एसे आपकों देखिकें और तत्काल अपने मद कूं छोडिकें गर्व कों दूर करिकें सज्जनन के मार्ग को सेवन करें हैं, तासों आपकी जो चेष्टा है सोई खलन कों दंड रूप है ॥ ७ ॥

हे प्रभो ! ऐश्वर्य के मद में डूबि रह्यो, और आपके प्रभाव को नहीं जानिवे वारो मोहित चित्त वारो एसे मो अपराधी पै क्षमा करिवे योग्य हौ, हे ईश ! जासों फिर मेरी ऐसी खोटी बुद्धि न होवै ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

महानयमपराधः कथं क्षन्तव्य इति चेदत आह—तवेति । स्वयम्भराणां पुनश्चोरुभारजन्मनां बहूनां भाराणां जन्म येभ्यस्तेषामभवाय नाशाय युष्मच्चरणसेविनां तु भवाय अतो मम त्वत्सेवकत्वादत्यन्तापराधिनोऽपि क्षन्तव्यमिति भावः ॥ ९ ॥

क्षमापयन्नमस्करोति-नम इति । तुभ्यं भगवते कृष्णाय नमः पुरुषाय सर्वान्तर्यामिणे महात्मनेऽन्तःस्थत्वेऽप्यपरिच्छिन्नाय सात्वताम् यादवानां पतये ॥ १० ॥

तर्हि किमहं यादवः ? न स्वच्छन्दोपात्तदेहाय स्वेषां भक्तानां छन्देनेच्छया स्वीकृतदेहाय तत्रापि विशुद्धं ज्ञानमेव मूर्त्तिर्यस्य तस्मै मायया सर्वस्मै सर्वरूपाय कुतः सर्वस्य बीजाय कारणाय अत एव सर्वभूतात्मने नम इति ॥ ११ ॥

कृतागस इत्यनेनोक्तमपराधं निवेदयति-मयेति । आसारवायुभिर्गोष्ठनाशाय मयेदमकृत्यं चेष्टितं कृतम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधोक्षज ! हे इन्द्रियज्ञानागोचरेति परमाद्वयतोक्ता तथापि इह पृथ्वीतले तवावतारः प्राकट्यं भवाय मङ्गलाय देव ! हे पूज्य इति स्वस्य सेवकतां साधयति-युष्मदिति । बहुत्वेन तदीयान् श्रीव्रजजनादीनपि सङ्गृह्णाति अन्यत्तैः । यद्वा, स्वस्य तत्प्रभावविद्वत्तामेवाभिव्यञ्जयन् मूढचेतस्त्वमेव च दर्शयन् सानुतापमाह—तवेति । अस्माकं प्रार्थनयाऽस्माकमेव हितार्थं त्वमवतीर्णोऽसीत्यस्माभिर्ज्ञायत एव तथाप्येतादृशोऽपराधः कृतः अहो वत मूढचेतस्त्वम् अतः क्षन्तुमर्हस्येवेति भावः ॥ ९ ॥

भगवते साक्षात् परमेश्वराय तत्रापि कृष्णाय अशेषैश्वर्यप्रकटनेन सर्वचित्ताकर्षकाय तुभ्यं नमः एवं बहिरैश्वर्यमुक्त्वाऽऽन्तरमप्याह-पुरुषायेति । लीलया तु सात्वतां पतये अन्यत्तैः । यद्वा, सर्वावतारेष्वप्ययमेव त्वं यद्यपि करोषि तथाप्यत्र सर्वतो महाविशेष इत्याह—नम इति । तुभ्यं कृष्णाय सर्वचित्ताकर्षकाय नमः कृष्णत्वमेव सूचयति, भगवते सर्वैश्वर्यपरिपूर्णाय कुतः पुरुषाय निजाशेषपुरुषार्थव्यञ्जकायेत्यर्थः । अत एव महात्मने अपरिच्छिन्नमाहात्म्यायेत्यर्थः । कृष्णत्वमेव स्पष्टयति वसुदेवसुतायेति अतः सात्वतां यादवानां सर्वेषां परिपालकाय ॥ १० ॥

अतस्त्वमेव सर्वमित्याह—स्वच्छन्देति स्वैर्भक्तैः कर्तृभिश्छन्देनेच्छया करणभूतया उपसमीपे आत्ता आकृष्टा देहाः श्रीमत्स्यकूर्मादयोऽपि विग्रहा येन तस्मै तेषां देहादीनां स्वरूपज्ञानार्थं पुनराह, विशुद्धज्ञानमूर्त्तये विशुद्धा मायातीता स्वप्रकाशतया ज्ञानरूपाश्च मूर्त्तयो देहा यस्य तस्मा इति, अन्यत्तैः । तत्र सर्वस्मै जगद्रूपाय सर्वस्य बीजाय कारणाय महापुरुषरूपाय सर्वभूतात्मने तदन्तर्यामिणे इति । यद्वा, स्वच्छन्दं यथा स्यात् तथा उपात्ता अन्तर्यामित्वेन स्वीकृता देहाः समष्टिव्यष्टिरूपा येन स्वयं तु विशुद्धज्ञानमूर्त्तय इति पूर्ववत् ॥ ११ ॥

किञ्च, महापराधिष्वपि परमानुग्रहोऽयं सर्वतो महाविशेष इत्याह—मयेति सार्द्धेन । मया स्वयमेव इदं साक्षादिदानीमेवेत्यर्थः । गोष्ठस्य नाशायेति । परमाऽकृत्यमुक्तं यतः मानिना अत एव तीव्रमन्युना भगवन्, हे सर्वज्ञ ! तन्मम दुष्टत्वमुत्त्वया ज्ञायत एव किं मया धृष्टेन विस्तार्यमिति भावः । यद्वा,

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे भगवन्निति सर्वैश्वर्यपरिपूर्णे त्वयि साक्षाद्वर्त्तमानेऽपि त्वद्गोष्ठनाशायेत्यपराधाधिक्यं सूचितम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रार्थनां कृत्वा भगवतो भूभारावतरणाय कृतावतारस्य लोकहितार्थैकप्रवृत्तत्वमेवोपपादयति—तवेति । हे अधोक्षज ! भुवः उरुभारस्य जन्म येभ्यस्तेषां भुवो भरणां भूभृतां चमूपतीनामभवाय संसाराभावाय वधद्वारा मुक्तिप्रदानायेति भावः । हे देव ! युष्मच्चरणानुवर्त्तिनां भवाय विभवाय उत्तरोत्तरमनुवृत्त्यभिवृद्धये चेह लोके तवावतारः ॥ ९ ॥

क्षन्तुमर्हसीत्युक्तं तत्र "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इत्युक्तरीत्याऽञ्जलिबन्धनमस्कृतिपूर्वकमच्छरणागतिमन्तरेण नान्योऽस्ति क्षमाहेतुरित्यभिप्रयन् शरण्यगुणानाविष्कुर्वन्नञ्जलिबन्धेन नमस्कुर्वन् स्वापराधमावेदयन् कार्पण्यं च प्रकाशयन् शरणं व्रजति—नम इति चतुर्भिः । भगवन् इत्यादिभिः शरण्यगुणाविष्कारः पूर्णषाड्गुण्यमूर्त्तये महात्मने शरणागतशब्दभाजमवलोक्यापराधविस्मरणेन केवलमनुजिघृक्षैकप्रवणचित्ताय वासुदेवाय वसुदेवपुत्रायानेन सौलभ्यं सौशील्यं चाभिप्रेतं कृष्णायेत्यनेन केवलं क्षेमकरत्वं सात्वतां भक्तानां पतये इत्यनेन कृतागसामपि भक्तानां मादृशां पुनः शिक्षया पालकायेति पुरुषाय महात्मने इति पदद्वयेन "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः" इत्युक्तसत्त्वप्रवर्त्तकत्वम् ॥ १० ॥

स्वच्छन्देन स्वेच्छयैव न तु कर्मणोपात्तः परिगृहीतो देहो यस्य तस्मा इत्यनेन कर्मोपात्तदेहानां ब्रह्मादीनां प्रपित्सुतुल्यत्वं भगवतं एवाश्रितकार्यावहत्वमत्वं च विशुद्धं नित्यं सङ्कोचविकासादिविकाररहितं ज्ञानं मूर्तिराकारः प्रकार इति यावत्सा यस्य तस्मै अनेन "ब्रह्मविदाप्नोति परम्" इति प्रक्रम्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्युक्तज्ञानशब्दार्थप्रत्यभिज्ञानात्परत्वमुक्तं भवति तदेव प्रपञ्चयति—सर्वस्मै सर्वपदार्थानन्यस्मै अनन्यत्वं च मृदनन्यो घट इतिवत्स्वरूपाभेदनिबन्धनमपितु कारणत्वान्तरात्मत्वनिबन्धनमित्यभिप्रायेणोक्तं सर्वबीजाय सर्वकारणाय सर्वभूतानामात्मन इति ॥ ११ ॥

स्वापराधमावेदयति—मयेति । यज्ञे विहते सति तन्निमित्तस्तीव्रो मन्युर्यस्य तेन देहात्माभिमानिना मया हे भगवन् ! पूर्णपाड्गुण्येन त्वयाऽनुगृहीतस्य गोष्ठस्य नाशायासारवायुभिरिदमकृत्यं चेष्टितं कृतम् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सतां भवाय पुण्यलक्षणभद्राय देवदत्तवज्जननं भजतो हरेरवतारः कथं भवाय स्यादितीदं "आवेशो वसुदेवादौ देहादानं हरेः स्मृतम्" इत्यादिपापवचनेन परिहर्त्तव्यम् ॥ ९ ॥ १० ॥

न केवलं ग्रन्थान्तरसिद्धमिदम् अत्रापीत्याशयेनाह—स्वच्छन्देनेति । स्वच्छन्देन स्वेच्छया सर्वस्मै सर्वव्यापिने सर्वबीजाय सर्वस्य मूलकारणाय ॥ ११ ॥

आसारसहितवायुभिः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्वां वीक्ष्य काले भयमित्यगत्यैवानुगतेभ्य स्वेषां भक्तानां छन्देनाभिलाषेण उपात्तः तत्समीपे गृहीत आनीतः प्रकटीकृतो देहो येन तस्मै ॥ ११—१७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, एतदर्थमेव तवावतारः दुष्टा निराकर्त्तव्याः अशक्यनिराकरणदोषाः स्वरूपतः अन्ये तु दोषसम्बन्धात् अतो वयं निवार्यदोषा इति अस्मद्दोषा एव निराकर्त्तव्याः न तु वयमित्यभिप्रायेणाह—तवावतारोयमिति । विशेषेण अयमवतारः भुवो भाररूपाणां चमूपतीनामभावाय युष्मच्चरणानुवर्त्तिनां भवाय च अन्यं त्ववतारा एकमेव कार्यं साधयन्ति भारनिराकरणं वा मद्रक्षां वा कालभेदेन यद्येक एवोभयात्मकः स्यात्तदा द्वयमपि कर्त्तव्यम् इदानीमहं प्रपन्न इति उद्भवोपि कर्त्तव्यः निग्रहस्तु कृत एव अन्यथोभयार्थमवतारो न भवेत् उभयार्थत्वे हेतुः, अधोक्षजेति । अधः अक्षजं ज्ञानं यस्मात् एतादृशो यः प्रकटो जातः स उभयसम्पादनार्थं एव एकैकस्तु पूर्वमपि क्रियत इति तत्रापीह गोकुले भुवः उरुभारार्थमेव जन्म येषां जन्मकारणेषु भुवो दुःखार्थं जन्म स्वस्य तु नाशार्थं स्वयमेव भारभूता अधिकं च भारं जनयन्ति नौकारूढेष्वेतद्द्वयं प्रथक् प्रसिद्धं उरुभारस्य वा जन्म येषु तेन दोषत्रयमुपपादितं भाररूपाः उच्छृङ्खलाः भारजनका इति तादृशा अपि सेनापतयः जननमात्रेणैव तन्नाश इति अभवायेत्युक्तं यथान्धकारस्य सूर्योदये, देवेति सम्बोधनमतः परं पूजार्थं युष्मच्चरणमेवानुवर्त्तितुं शीलं येषां तेषामुद्भवाय मुक्तये वा संसाराभावाय वा संसाराय वा भवानेव तथा भवतीति ॥ ९ ॥

एवं प्रार्थनामुक्त्वा क्षमापनार्थमेव नमस्यति—नम इति ! भगवदीयत्वाय वा भक्तिमार्गं प्रकटीकुर्वन् सामान्यतः दशविधलीलायुक्तमाह—नमो भगवते इति । आवेशादिपञ्चव्यावृत्त्यर्थं तुभ्यमिति योऽयं दृश्यते स एव भवानिति अनेनैव षड्विधा लीला निरूपिता "ध्यानादिनिरोधान्ताः पुरुषाय महात्मने" इति कार्यकारणरूपो य पुरुषः प्रथमः महान्महत्तत्वम् अन्तर्बहिर्वा सर्वसाधकाय वासुदेवायेति मोक्षदाता कृष्णायेति फलं सदानन्दरूपत्वादाश्रयश्च । किञ्च, न केवलं दशविधामेव लीलां करोति अवतीर्णस्तु अधिकमपि करोतीत्याह—सात्वतास्पतये नम इति । यादवानामयं स्वामी दशविधलीलावत् भक्तिरेकैव स्वतन्त्रेति पृथङ्नमस्कारः ॥ १० ॥

एवं परमार्थतो नमस्कारं कृत्वा मोहकलीलासहितमपि भगवन्तं लौकिकरसार्थं नमस्यति, स्वच्छन्देति । स्वभक्तास्तेषां छन्द इच्छा तदर्थं तेषामिच्छापूरणार्थम् उपात्तो देहो येन ते हि यथा

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भावयन्ति तथा रूपं करोति तद्धदेव रूपं तु विशेषेण शुद्धं चिद्रूपमेव. तदाह—विशुद्धज्ञानमूर्त्तय इति। ननु, विशुद्धस्य अभिलषितरूपत्वं कथं तत्राह—सर्वस्मा इति। सर्वरूप एव जातः तत्राभिलषितरूपभवने कः प्रयास इत्यर्थः किञ्च, सर्वबीजाय सर्वेषां कारणभूताय अतो ऽनन्तप्रकारेण भवन्ति अनेन सद्रूपता आनन्दरूपताऽप्युक्ता तत्सर्वमानन्दो-बीजमिति सर्वभूतानामात्मने चिद्रूपाय नमः अतः सच्चिदानन्द-रूपाय भक्तेच्छापूरकाय हि शुद्धज्ञानस्वरूपाय फलसाधनरूपिणे नम इत्युक्तं भवति॥ ११॥

स्वापराधं प्रकटीकरोति-मयेदमिति। को वेद भगवांश्च विचारयतीति अन्यथा कालान्तरे विशेषपर्यालोचनायाम् अपराधं भावयेत् अतः कथयति, इदं वृष्ट्यादिरूपं गोष्ठनाशाय आसार वायुभिः मया चेष्टितं यज्ञे विहत इति निमित्तं वस्तुतस्तु अस्मिन्नेव यज्ञे मया भुक्तं न पूर्वं कदापि भगवता भुक्तमिति इस्तेन भुक्तमिति अतः यज्ञः अविहत एव तथापि अभिमानात् अन्यथाङ्गीकृतं तदाह, मानिनेति। ननु, तृप्तिः कथं न प्रतिबन्धका जाता? तत्राह—तीव्रमन्युनेति। शीघ्रमेव मन्युरुत्पन्नः अतो जातापि तृप्तिर्विस्मृतेति अन्यथा गोष्ठनाशे कश्चित् किं प्रवर्त्तेत गवामुपजीव्यत्वात् सुतरां ममोपजीव्याः भगवन्निति सम्बोधनं स्वस्य दासत्वख्यापकम्॥ १२॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अहो मे मूढचेतस्त्वं यदस्माकं प्रार्थनयाऽस्माकमेव हितार्थमवतीर्णोऽसीति पश्यन्नप्यन्धोऽहमभवं सम्प्रति लब्धदण्डः प्राप्तचक्षुरेवं तत्त्वं ते जानामीत्याह-तवेति। स्वयमेव भराणां भाररूपाणां पुनश्च उरुभारजन्मनां बहूनां भाराणां जन्म येभ्यस्तेषां चमूपतीनाम् अभवाय नाशाय युष्मच्चरणसेविनां तु भवाय मङ्गलाय अहन्तु उभयेषां मध्ये न कोऽपीति मम नाभवो नापि भव इति अत्युदासीन एव त्वं वर्त्तसे इति धिङ् मामिति भावः॥ ९॥

तस्मात् युष्मच्चरणानुवर्त्तित्वं ममाप्यस्त्विति प्रणमन्नाशास्ते-नमस्तुभ्यमिति द्वाभ्याम्। "परावरेशो महदंशयुक्तः" इत्युद्धवोक्तेः। सर्वांशसहितस्यैवावतीर्णस्य तस्य प्रथममंशान् प्रणमति-भगवते महावैकुण्ठनाथाय पुरुषाय महत्स्रष्ट्रे महात्मने समष्ट्यन्तर्यामिणे अंशान् प्रणम्य साक्षात्तमंशिनं प्रणमति—वासुदेवायेति, पितृनामोल्लेखेन कृष्णायेति तन्नामोल्लेखेन सात्वतां पतय इति पार्षदनामोल्लेखेन॥ १०॥

अनेकविधप्रेमविषयत्वात् स्वैर्भक्तैः छन्देन प्रतिस्वेच्छया दास्येन सख्येन वात्सल्येन रमणेन च सुखप्रदानार्थम् उपात्तो गृहीतो देहो यस्येति तस्मै देहस्याप्राकृतत्वात् विशुद्धं मायातीतं ज्ञानमेव मूर्त्तिर्यस्य तस्मै मायादिशक्तिमत्त्वात् सर्वस्मै अत एव सर्वस्य बीजाय कारणाय अत एव सर्वभूतात्मने॥ ११॥

भोः शक्र! त्वं मङ्गल इत्यनया स्तुत्यैव ज्ञायसे किन्तु विनैव त्वदाज्ञां दुष्टा मेघाः तद्व्रजमधिकं यत्कदर्थयन्तितरां तदिमे त्वया दण्डनीया इति पवित्रमरसंतमाशङ्क्य, हन्त हन्ताहमन्तर्यामिणि कपटं न घटत इति विमृश्य स्वचेष्टितं यथार्थमेवाह—मयेति। नन्वेवम्भक्ते त्वयि कथं सम्भवेत्तत्राह—विहते यज्ञ इति। ननु, त्वत्प्रभुणा मयैव विहतेऽपि दासस्य नवैतावदकृत्यं न प्रक्षमि तत्राह-मानिना ऐश्वर्यगर्वस्य किमशक्यमिति भावः। ननु, दैवादुत्थिता अपि गर्वादयो भावा भक्तैर्विवेकेनैव तिरोधाप्यन्ते इति तत्राह-तीव्रमन्युना तीव्रः क्रोधो हि विवेकमपि बलाद्ग्रसतीति भावः॥ १२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

निग्रहविषयाः असुराः अहं तु अनुग्रहविषयेषु तव चरणानुवर्त्तिषु सुरेषु त्वया स्थापितोऽतोऽनुग्रहं कुर्वित्याशयेनाह, तवेति। स्वयम्भुवो भराणां भारभूतानां पुनश्चोरुभाराणां जन्म येभ्यस्तेषां राजन्यव्याजेन वर्त्तमानानामसुराणामभवाया-ऽसमृद्ध्यै॥ ९॥

अथ नमस्कुर्वन् स्वापराधं वदन् भगवन्तं शरणं व्रजति, नम इति चतुर्भिः। भगवते स्वाभाविकषड्गुणयुक्ताय पुरुषाय सर्वान्तर्यामिणे महात्मने भूम्ने वासुदेवाय सर्वनिवासाय सात्वतां भागवतानां पतये कृष्णाय नमः॥ १०॥

स्वच्छन्देन स्वेच्छयैवोपात्तदेहाय परिगृहीतदेहाय विशुद्धज्ञानवत् जन्ममरणादिसर्वदोषवर्जितस्वरूपवत् मूर्त्तिरप्राकृतदेहो यस्य तस्मै "यदात्मको भगवांस्तदात्मिका व्यक्तिः" इति श्रुतेः—

"यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः।
स सर्वस्माद्बहिः कार्यः श्रौतस्मार्त्तविधानतः॥
मुखं तस्यावलोक्यापि सचेलं स्नानमाचरेत्"। इति

स्मृतेश्च "अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य नतु भूतमयस्य कोपि" इति ब्रह्मवचनाच्च. चेतनाचेतनशक्तीनां महदादितृणान्तस्य विश्वस्य स्वशक्तिमतस्य च पुरुषात्केशलोमादीनामिव पृथिव्याः औषधीनामिव पृथक् स्थितिप्रवृत्त्याद्यभावात् अन्यस्याकृष्णात्मकस्य तत्सजातीयस्याऽभावात्सर्वस्मै कृष्णाय नमः "सर्वं खल्विदं ब्रह्म" इति श्रुतेः "तदनन्यत्वमारम्भणशब्दादिभ्यः" (२।१।१५) इतिन्यायाच्च नित्यस्वरूपयोरणुविभुपरिमाणयोः चेतनाचेतनपदार्थानां च स्वरूपैक्यसम्भवाद्भेदाऽभेदः सम्बन्धोऽत्र विदुषामभिमतः तथाऽऽह भगवान् सूत्रकारः "उभयव्यपदेशात्त्वहिकुण्डलवत्" (३।२।२६) इति एतदेवोपपादयितुमाह, सर्वबीजायेति। सर्वभूतात्मने इति च केशलोमादीनां कार्याणां पुरुषः कारणं तस्मात्स्वरूपतो हि केशादयो भिन्नाः अत्यभिन्ना एव यथा पृथिव्याः ओषधयः यथा च ब्रह्मः कुण्डलानि तत्तुल्यायेत्यर्थः॥ ११॥

आसारवायुः गोष्ठस्य नाशाय मानिना लोकेशमानिना तीव्रः स्वात्मपरमात्मविवेकावरको मन्युर्यस्य तेन मयेदं चेष्टितं कृतमित्यर्थः॥ १२॥

---

### भाषा टीका।

हे अधोक्षज! या संसार में आप को जो अवतार है, सो अपने भरण पोषण करन वारे और पृथिवी पे भार

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः ।
ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १३ ॥

श्रीशुक उवाच ।

एवं सङ्कीर्तितः कृष्णो मघोना भगवानमुम् ।
मेघगम्भीरया वाचा प्रहसन्निदमब्रवीत् ॥ १४ ॥

श्रीभगवानुवाच ।

मया ते ऽकारि मघवन्! मखभङ्गोऽनुगृह्णता ।
मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥ १५ ॥
मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति ।
तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥ १६ ॥

भाषाटीका

रूप जन्म जिनको ऐसे सेनान के पति जे मुख्य दुष्टराजा हैं तिनके नाश करिवे कूं हैं। हे देव ! और आप के चरणान की सेवा करन वारेन के कल्याण के तांई हैं ॥ ९ ॥

षट् ऐश्वर्य संपन्न हृदय गुहा में सोवन वारे महात्मा-जो आप तिनकूं नमस्कार होय तथा वसुदेव के पुत्र और यादवन के अथवा भक्तन के पति जो श्रीकृष्ण आप हो तिनकूं नमस्कार हो ॥ १० ॥

अपनी इच्छासों देह धारण करन वारे विशुद्ध ज्ञान मूर्ति सर्व स्वरूप और सबन के बीज रूप तथा सर्व भूतात्मा जो आप तिनकूं नमः ॥ ११ ॥

हे भगवन्! जब मेरो यज्ञ रुकि गयो तब अति मानी और तीव्र क्रोधी ऐसे मैंने वर्षा और पवन चलाय कें या व्रज के नाश करिवे की चेष्टा करी रही सो आप क्षमा करिवे कूं योग्य हो ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथापि भो ईश ! त्वयाऽनुगृहीतोऽस्मि, अनुग्रहं दर्शयति, ध्वस्तस्तम्भ इति वृथोद्यम इति च ॥ १३ ॥ १४ ॥

इन्द्रेण स्वाभिप्राये निवेदिते भगवानपि तथैवाह—मयेति इन्द्रश्रिया देवराज्येन ॥ १५ ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ईश हे सर्वनियन्तः! यद्यपि सद्य एव मयि दण्डं कर्त्तुं समर्थस्त्वं तथापि त्वयाऽनुगृहीतोऽस्म्येवेत्यर्थः । नच बाह्यानुग्रह इत्याह-ध्वस्तस्तम्भः नष्टमदो ऽस्मि यतो हतोद्यमः ध्वंसिरन्नान्तर्भूतयर्थः । यतस्त्वयैव स्तम्भो नाशित उद्यमश्च हत इत्यर्थः । अतो गुरु त्वामेव महापराध्यप्यहं शरणङ्गतः तत्रैवान्यदपि हेतुद्वयम् ईश्वरं नियन्तारम् आत्मानं रश्मीनां सूर्यमिव सर्वेषां मूलस्वरूपं त्रिधाप्यनन्यगतिकत्वादिति भावः ॥ १३ ॥

सङ्कीर्तितः स्तुतः भगवानिति परमप्रभुत्वं बोधयन् अपराधिन्यपि तादृशे क्षुद्रेऽनभिनिवेशं बोधयति, अत एव मेघेति मेघगर्जितं लक्षयति अनेन तस्य महासत्त्वतां प्रहसन्निति महाशयतां च व्यनक्ति अमुमित्येकवचननिर्दिष्टाऽदःशब्देन लौकिकरीत्या मघोनस्तु क्षुद्रतामिति ॥ १४ ॥

मयेत्यमित्यादितद्वाक्यानुरूपं प्रभुत्वोचितमेवाह—अनुगृह्णतैव न तु क्रुध्यतेत्यर्थः तत्र क्रोधविषयत्वेऽपि त्वद्विधस्यायोग्यत्वादिति भावः। नित्यं मम अनु वारम्वारं या स्मृतिस्तदर्थम् अन्यथा विपथगामी स्या इति हि यतः ऐश्वर्येण प्रभुत्वेन श्रिया धनादिसम्पदा च मदस्तेनान्धः गताशेषज्ञानस्सन्नित्यर्थः। दण्डपाणिं मदीयोपासकान् प्रति गोपवेषोचितसुभगयष्टिपाणित्वेन भासमानतयैव त्वद्विधान् प्रति तु व्यञ्जितदण्डपाणित्वमपि न पश्यति नावगच्छति इति गोपलीलायां निजप्रभुत्वविशेषमुक्त्वा तदन्तरङ्गपरिकरेषु श्रीगोपराजादिष्वपि भक्तिरनुशिष्टा यतो न पश्यति अत एव यस्यानुग्रहमिच्छामि यमनुग्रहीतुमिच्छामीत्यर्थः । तं सम्पद्भ्यो भ्रंशयामि तस्यैश्वर्यहेतुकधनादिसम्पत्तीर्हरामीत्यर्थः । भवतस्तु तत्रासहिष्णुतां दृष्ट्वा न तादृशमप्यकरवं किन्तु यत्किञ्चिन्मखभङ्गमेवेति भावः ॥ १५—१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथाप्यहं हे ईश ! त्वया ध्वस्तः अविनयो यस्य सः मदापनयनद्वाराऽनुगृहीत एवास्मि सम्प्रति हतःउद्यमः अपचिकीर्षात्मको यस्य स अनेनाधुनाऽपराधचिकीर्षोभिसन्धिराहित्यमावेदितमनेनैव कार्पण्यं च प्रकाशितम् एवम्भूतो ऽहमधुना त्वां शरणं गतः शरणागतावपि त्वमेव प्रयोजककर्त्तेत्याभिप्रायेण विशिनष्टि-ईश्वरमिति।शरणागतये मां नियमयन्तमित्यर्थः । आचार्यस्वाशिष्याभाव;

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शङ्काप्रयुक्तशरणागतिवैयर्थ्यशङ्कापरिहाराय विशिनष्टि—गुरुमिति । देहात्माभिमानक्रोधादिदुर्गुणापनयनद्वारा हितप्रवर्त्तकत्वेनाचार्यत्वमपि प्राप्तमित्यर्थः । ननु, न तदेवं शरणागतोऽस्मीति वचो निर्व्यलीकमिति शङ्कां निराचिकीर्षुर्विशिनष्टि–आत्मानमिति । अन्तरात्मनः तवाविदितं किमस्तीति भावः ॥ १३ ॥

इत्थमिति । इत्थं मघोनेन्द्रेण सङ्कीर्त्तितः कृष्णोऽमुं मघवानमुवाच ॥ १४ ॥

तदेवाह–मयेति त्रिभिः । हे मघवन् ! अनुजिघृक्षता मया त्वद्यज्ञभङ्गः कृतः, कोऽसावनुग्रहः ? इत्यत्र तं दर्शयति इन्द्रश्रियेन्द्राधिपत्येन दृप्तेति सम्बोधनं वा नितरां मत्तस्य तव नित्यं मद्विषयकानुस्मृतये मखभङ्गोऽकारीत्यन्वयः । मदनुस्मृत्यापादकमेवानुग्रहमिति भावः ॥ १५ ॥

मत्तस्य मदनुस्मृतय इत्यनेन मदस्य स्वानुस्मृतिप्रतिबन्धकत्वमत एव तदपनयनस्य हितत्वं च सूचितम् । तदेव व्यनक्ति, मामिति । ऐश्वर्यश्रीमदाभ्यामाधिपत्यसम्पद्भ्यामन्धो विवेकशून्यः जनः दण्डधरं मां न पश्यत्यतो "यस्यानुग्रहमिच्छामि" तं सम्पद्भ्यो भ्रंशयामि तस्य सम्पदभिन्नाशं निवर्त्तयामीत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ध्वस्तस्तम्भः निरस्तस्थूणाख्यभावः ॥ १३ ॥

मघोना इन्द्रेण ॥ १४ ॥

अकारि कृतः हे मघवन्, इन्द्र ! ॥ १५ ॥

"पण व्यवहारे" इति धातोः दानादिव्यवहारसाधनत्वात् पाणिः हस्तः दण्डपाणिं यमं माम् । भ्रंशयामि विध्वस्तं करोमि चशब्द एवार्थे अनुग्रहमेव नान्यद्धितादिकम् अनुग्रहानन्तरमविनश्वरसम्पदश्चेति समुच्चये वा ऐश्वर्यश्रीश्वरत्वं गवादिसमृद्धिः श्रीरादभ्यामुद्भूतेन मदेनान्धः ज्ञानलक्षणचक्षुरहितः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदानीं निर्दुष्टत्वख्यापकं वा तथापि स्वामिना अनुग्रहः कृत एवेत्याह–त्वयेति । ईश्वरत्वादनुग्रहकरणं न ह्युपजीवकेषु क्रुद्ध्यपु उपजीव्योपि क्रुद्ध्यति तथा सति तेषां नाश एव स्यात् अत एवानुगृहीतोऽस्मि गोवर्द्धनधारणेन मान एवाहतो न त्वहं हत इति मानहतिमेवाह—ध्वस्तस्तम्भ इति । स्तम्भो गर्वोऽनम्रता ध्वस्तो यस्य तत्र हेतुः हतोद्यम इति तथापि न मम लज्जा यतस्त्वमीश्वरो गुरुरात्मा च लोकतो वेदतः अनुभवतश्च त्वच्छिच्छायां नापमानं भवतीति अतस्त्वां शरणं गतः यथोचितं विधेयमिति भावः ॥ १३ ॥

तदा प्रसन्नो भगवान् तस्य मनःपीडां दूरीकृतवानित्याह, एवमिति चतुर्भिः ।

> उपक्रमः कृतं चैव हेतुश्चैव तथा कृतौ ।
> प्रसादश्चेति भूम्नाय भगवान् स्वयमुक्तवान् ॥

एवं पूर्वोक्तप्रकारेण सङ्कीर्त्तितः कृष्णः फलात्मा मघोना इन्द्रेण पूर्णः सर्वतो भगवान् मेघगम्भीरया वाचा तस्य तापं शमयन् प्रहसन् मोहयन् इदं वक्ष्यमाणं (म ब्रवीत्) मुवाच ॥ १४ ॥

अत एवाग्रेपि तस्य मोहः स्वकृतमाह—मयेति । काकतालीयन्यायात्वयं स्वकृतं ज्ञापयति, हे मघवन् ! अनुगृहीता मया मखभङ्गः अकारि अनुग्रहमेवाह–मदनुस्मृतये इति । ममानुस्मृतिरेवानुग्रहः यागभङ्गाभावे अनुस्मृतिर्न स्यादिति हेतुमाह–नित्यमिन्द्रश्रिया मत्तस्येति ॥ १५ ॥

नान्येनत्वया प्रार्थनीयं ममवीर्यं सहजो धर्म इत्याह— मामैश्वर्येति । ऐश्वर्यं श्रीश्च अन्यतराभावेन मदः पुष्टो भगवति इतरसापेक्षत्वात् न हि एकाविधिकः अन्धो भवति अतः ऐश्वर्येण श्रिया च यो मदः तेनान्धीकृतः दण्डपाणिं घातकमपि मां न पश्यति अतस्तं सम्पद्भ्यः भ्रंशयामि शिक्षार्थमवश्यं मारणीयः तदेव मारणं शिक्षा भवति यदि जानीयात् अतो ज्ञानार्थं सम्पद्भ्यो भ्रंशयामि, अन्यथा अनुग्रहो न भवेत् इयं साधारणी व्यवस्था विशेषमप्याह–यस्य चेच्छाम्यनुग्रहमिति । यस्य च अनुग्रहमिच्छामि प्रथममनुग्रहं प्राप्नोत्विति विषयैर्बुद्धिभ्रंशो भवतीति अतिवाते दीपवत् विषयैरनुग्रहोऽपि न स्थिरो भवति अल्पेनैव कार्यसिद्धौ महाननुग्रहो न कर्त्तव्यः अतो यावदल्पेनैव कार्यं भवति तदर्थं सम्पद्भ्यो भ्रंशयामि तदनन्तरमनुग्रह इति पूर्वमिच्छेत्रोक्ता अग्रत्यः क्रमोऽग्रे वक्तव्यः यस्यानुग्रहमिच्छामीत्यत्र ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदपि निरस्कृतेनापि भिषजा कृपालुना चिकित्सितो रोगीव त्वयाऽहम् अनुगृहीतः अत एव सम्प्रति ध्वस्तस्तम्भरोगः यतो हता उद्यमाः वज्रनिक्षेपादयो यस्य सः अतो नियन्तृत्वादीश्वरं हितकारित्वाद्गुरुं प्रेमास्पदत्वादात्मानम् ॥ १३ ॥ १४ ॥

इन्द्रेण निष्कपटमुक्ते भगवानपि तथैवाह—मया ते इति । ॥ १५ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथापि हे ईश ! सर्वनियन्तः मखभङ्गद्वारा त्वया अनुगृहीतोऽस्मि अतो हतोद्यमः ध्वस्तस्तम्भः ईश्वरं नियन्तारं गुरुम् हृदयैव सन्मार्गोपदेष्टारम् आत्मानं सर्वेषां जीवानामाश्रयम् "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" इत्युक्तेश्च एवम्भूतं त्वां शरणं गतोऽस्मि ॥ १३ ॥

अमुं मघवानम् ॥ १४ ॥

इन्द्रश्रिया देवराज्येन ॥ १५ ॥ १६ ॥

---

भाषा टीका ।

हे ईश ! आपने मो पै अनुग्रह कियो जो मेरो गर्व दूर होय गयो और मेरो उद्यमहूं वृथा भयो अब सब के ईश्वर गुरु और आत्मा जो आप हो तिनकी मैं शरण आयो हूं ॥ १३ ॥

गम्यतां शक्र! भद्रं वः क्रियतां मेऽनुशासनम् ।
स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ॥ १७ ॥
अथाह सुरभिः कृष्णमभिवन्द्य मनस्विनी ।
स्वसन्तानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥ १८ ॥

सुरभिरुवाच ।

कृष्णकृष्ण ! महायोगिन् ! विश्वात्मन् ! विश्वसम्भव ! ।
भवता लोकनाथेन सनाथा वयमच्युत! ॥ १९ ॥
त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ।
भवाय भव गोविप्रदेवानां ये च साधवः ॥ २० ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि जा समें इन्द्रने श्रीकृष्ण की स्तुति करी तब प्रभु मेघ सदृश गम्भीर वाणी सों हंसते भये श्रीकृष्ण इन्द्र सों बोलत भये ॥ १४ ॥

श्रीभगवानुवाच ।

श्रीभगवान् बोले, कि–हे इन्द्र ! हमने तेरे ऊपर अनुग्रह करिवे कूं इ तेरे यज्ञ को भङ्ग कियो रह्यो कि जासों मेरो स्मरणतो सदा बनो रहै। काहे सों कि; इन्द्रपने की लक्ष्मी सों तूं बहुत ही उन्मत्त होय गयो हो ॥ १५ ॥

जो ऐश्वर्य की श्री के मदसों मदान्ध होय के दण्ड धारण करवे वारे मोकूं नही देखे हैं, उनपै जो मैं अनुग्रह करिवे की इच्छा करूं तौ सम्पद सों भ्रष्ट करदेऊ हूं ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वो युष्माभिः बहुवचनं वरुणाद्यभिप्रायेण क गन्तव्यं स्वर्गेऽपि तवैवेश्वरत्वादिति चेत्तत्राह—क्रियतामिति । मदनुशासनेन यथापूर्वं तत्र स्थीयतामित्यर्थः । युक्तैरप्रमत्तैः स्तम्भवर्जितैर्निरहङ्कारैः ॥ १७ ॥

स्वसन्तानैर्गोभिः सहोपामन्त्र्य कृष्णकृष्णेत्यादिसम्बोध्य ॥ १८ ॥

इन्द्रेण हता अपि भवता सनाथा वयं कृताः रक्षिता इत्यर्थः ॥ १९ ॥

त्वं नः परमं दैवं दैवतं देवताऽतो हे जगत्पते ! गोविप्रदेवानां येऽन्ये च साधवस्तेषां भवायाभ्युदयायाद्य त्वमेव नोऽस्माकमिन्द्रो भव ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तर्हि ममापि तादृशमेवानुग्रहं कुरु मयाऽत्रैव स्थीयतां तत्राह-गम्यतामिति । वो युष्माकं यद् भद्रं क्षेमं तदस्त्विस्यभयदानं वस्तुतस्तु न मदेकान्तभक्तानां तद्भद्रमित्युक्तिपरिपाट्या तद्क्षेममेवाभिप्रेतम् अजिगमिषन्तं प्रत्याह—क्रियतामिति । गत्वा च मदाज्ञा परिपाल्यतामित्यर्थः । अनधिकारिणस्ते अत्रावस्थित्याऽपराध एव भावीति गमनमेव युक्तमिति भावः । यद्वा, ननु भगवन् ! तत्र गतस्याप्यैश्वर्य्यस्वभावेनावश्यमपराधो भवितैव तत्राह—क्रियतामिति । मदनुशासनं मच्छिक्षितमित्यर्थः । तदेवाह स्थीयतामिति । स्वस्यैव न तु परस्याधिकारेषु किं पुनर्मदन्तरङ्गपरिकरश्रीव्रजवास्यादिष्वित्यर्थः । तत्रापि युक्तैरप्रमत्तैः भक्तियोगवद्भिर्वा तत्रापि निर्भेदैश्च सद्भिर्वो युष्माभिः स्थीयताम् इत्थं वरप्रदानरूपोऽनुग्रहो न कृतः किन्तु केवलसमर्थेनैव युक्तिपूर्वकशिक्षारूप एव कृतः सम्यक् प्रसादाप्रवृत्तेः अत एव तदनुशासनापालनेन पश्चादपराधान्तरमपि जातं तच्च पारिजातहरणादौ व्यक्तं भावि ॥ १७ ॥

अथानन्तरमित्यस्याभिप्रायस्तु विविक्त इत्यत्र पूर्वमेव व्याख्यातः स्वसन्तानैः चन्द्र वंशे श्रीकृष्णवत् स्वस्य वंशे प्रादुर्भूतैर्नित्यनदीयगोधनरूपैस्तैरुपलक्षिताभितो वन्दित्वाऽऽह स्तुतिपूर्वकं निवेदितवती अभिनन्द्येति पाठेऽपि स एवार्थः। न केवलमभिवन्द्याह, किन्तूपामन्त्र्य वक्ष्यमाणसम्बोधनैरात्मन्यवधानं प्रार्थ्य चाह स्वाभीष्टनिवेदने हेतुः गोपरूपिणमीश्वरमिति, अभिवन्दने हेतुः ईश्वरमिति । ननु, इन्द्रमानीय प्रथमं स्वयं कथं तत्साहाय्यार्थमपि न किञ्चिन्निवेदितवती तत्राह, मनस्विनी धीरचित्ता सती भगवतःसर्वज्ञत्वसर्वहितकारित्वे इन्द्रस्य चोत्तानचित्तत्वे स्वयमेव विविदिषुतां स्वस्य च निवेदनीयविशेषं विचार्य प्रथमं तु नोक्तवतीत्यर्थः ॥ १८ ॥

अथ गोपरूपत्वेनेश्वरत्वेन च सम्बोध्य तदुभयथा प्रकाश्यमानेन त्वया स्वेषामसाधारणेन नाथेन सर्वतोऽपि वयं पूर्णा इति व्यञ्जयति, तत्र कृष्णकृष्णेति । गोपरूपत्वव्यञ्जकम् अत्रैव वीप्सा च निजरूपातिशयेन ईश्वरत्वेन सम्बोधयति महायोगिन् सर्वोत्तमाणिमादियोगैश्वर्यनित्यप्रकाश विश्वेषामप्राकृतप्राकृतयत्किञ्चित् पदार्थानां मूलरूप! तत एव हे विश्वसम्भव, तत्कारणरूप विश्वभावनेति पाठे तथैवार्थः । तथैव स्वकृतकृतज्ञता सूक्तं निवेदयति लोकनाथेनापि भवता वयमेव सनाथा इत्यर्थः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनरुक्त्या वैशिष्ट्यापत्तेः लोकैर्नाथ्यमानमात्रेणेति वा अत्राच्युतेति सम्बोध्य तथैव नित्यत्वं च दर्शयति ॥ १९ ॥

वैशिष्ट्ये हेतुः त्वं नः परमकं दैवमिति "नीतौ च तद्युक्तात्" (५।३।७७) इति कन् जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयं "योऽसौ सौर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान् पालयति योऽसौ गोपेषु तिष्ठति योऽसौ सर्वेषु देवेषु तिष्ठति योऽसौ सर्वैर्वेदैर्गीयते योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति" इत्यादि तापनी श्रुतेः । अतो नोऽस्माकमिन्द्रस्त्वमेव भव जगत्पते इति यद्यपि जगतामेव पतिस्त्वं तथापीति पूर्ववत् गवेन्द्रत्वेऽपि विप्रादीनामभ्युदयः "गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो देवाः समुत्थिताः । गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमाः" इति गोसूक्तात् ॥ २० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विश्रम्भवर्जितैः विश्वासवर्जितैः ॥ १७—२१ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे शक्र ! वो युष्माकमितःपरं मदनुस्मृत्यात्मकं भद्रमेव भवेत् बहुवचनं वरुणाद्यभिप्रायकं किन्तु ममानुशासनं क्रियतां किं तदनुशासनं यदस्माभिः कर्तव्यम् ? तत्राह–स्तम्भवर्जितैरिति । अविनयरहितैर्युक्तैः सावधानैर्वो युष्माभिः विभक्तिव्यत्यय आर्षः स्वाधिकारेष्वेव स्थीयताम् ॥ १७ ॥

सुरभिरप्यावजादित्युक्तं साऽऽगता किं चकारेत्यत्राह–अथेति । मनस्विनी तत्तद्वाञ्छितार्थप्रदानप्रवणरूपप्रशस्तमनस्का पयस्विनीति पाठे तदा प्रभूतपयस्का सुरभिः स्वसन्तानैः स्वापत्यैः सहागत्य गोपस्येव रूपमस्यास्तीति तथा तं साक्षादीश्वरं कृष्णमभिवाद्योवाच ॥ १८ ॥

तदेवाह—कृष्णकृष्णेति त्रिभिः । हे विश्वस्यान्तरात्मन् ! विश्वस्य सम्भवो यस्मात्तथाभूत ! हे महा योगिन् ! युज्यते इति योगो धर्मः सोऽस्यास्तीति तथा स्वासाधारणकल्याणगुणशालिन् ! वयं लोकनाथेन साक्षाद्भवतैव सनाथाः कृताः नाथाभासेनेन्द्रेण हृता अपि त्वया रक्षितत्वात्त्वमेव नो नाथ इत्यर्थः ॥ १९ ॥

त्वमेवास्माकं परो मा न विद्यते यस्मात्तथाभूतं दैवतं हे जगत्पालक ! गवां विप्राणां देवानां ये च साधवस्तेषां च नोऽस्माकं चाभ्युदयाय त्वमेवेन्द्रो भवेति ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मयि मनसा युक्तैः अनिशैश्वर्यादौ विस्रम्भवर्जितैः भवद्भिः स्वाधिकारेषु त्रैलोक्यरक्षणादिषु स्थीयताम् ॥ १७ ॥

अथशब्दः कथारम्भे मनस्विनी शुद्धमनाः स्वसन्तानैः स्ववंशजातगोभिः सहेति शेषः ॥ १८ ॥

विश्वात्मन् ! विश्वव्यापिन् ! सनाथाः कृताः स्म इति ॥ १९ ॥

नोऽस्माकं परमकम् अत्युत्तममिष्टदैवम् इन्द्रः ईश्वरः देवानां देवजातीनां ये च साधवः ऋष्यादयः तेषां भवाय भद्ररक्षणाय अंपसे ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथानन्तरं स्वसन्तानैः सह तदीयगोधनरूपैस्तैः सहाभिवन्दित्वा तथोपामन्त्र्य वक्ष्यमाणसम्बोधनैरात्मन्यवधानं प्रार्थयत्यर्थः ॥ १८ ॥

एवं श्रीकृष्णव्रजगवीनामपि तादृशत्वं दर्शितं लोकनाथेनाऽपि भवता वयमपि सनाथा इत्यर्थः । पुनरुक्त्या वैशिष्ट्यप्राप्तेः अच्युतेति तत्रापि नित्यत्वं निश्चिनोति वैशिष्ट्ये हेतुः ॥ १९ ॥

त्वं नः परमकं दैवमिति जगत्पतेरिति यद्यपि जगत्पतिस्त्वं तथापीति पूर्ववत् गवेन्द्रत्वेऽपि विप्रादीनामभ्युदयः "गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो देवाः समुत्थिताः । गोभिर्वेदाः समुद्गीर्णाः सषडङ्गपदक्रमाः" इति श्रुतेः ॥ २० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः शिक्षार्थं प्रसादार्थं च ऐश्वर्यभ्रंशः कार्यते अत एकदेश एव कृतः सकृतः यागमात्रैश्वर्यनिराकरणात् अतस्त्रैलोक्यमवशिष्टमस्तीति तदर्थं गच्छेत्याह–गम्यतामिति । अतः शिक्षामात्रमेव ज्ञापनाय तदल्पेनापि भवतीति न सर्वैश्वर्यभङ्गः, तदाह–शक्र ! भद्रं व इति । इन्द्रत्वमग्रे स्वास्थ्यं च प्रयच्छति अन्यथा भक्तिर्वो नाशयेत् भक्तापकारित्वात् भगवद्वाक्यात् न नाशः अग्रे मोहाभावायाह, क्रियतां मेऽनुशासनमिति । महाज्ञाकरणे न मोहः स्यादिति इन्द्रद्वारा सर्वानेव ज्ञापयति प्रधानत्वात् स्वाधिकारेषु स्थीयतां वः युष्माकमेव सम्बन्धिषु यत्र यस्याधिकारः स तत्र तिष्ठत्वित्यर्थः । युक्तैरिति आज्ञायां योजितैः परं तत्रापि स्तम्भो मास्तु अनम्रतया आज्ञापि न कर्तव्या न हि कृतिमात्रेण भगवांस्तुष्यति अपितु नम्रत्वसाहित्यथा एवमाज्ञापितोऽपि पूजाङ्कं लिखन्यमानो जातः ॥ १७ ॥

एवमिन्द्रप्रसादमुक्त्वा कामधेन्वाः प्रसादार्थं तदभिषेकः प्रस्तूयते–अथेति । अयमभिषेकः नेन्द्राद्यभिषेकवत् स्वतन्त्रतया कर्तुं शक्यते भगवतो हीनभावात् प्रार्थनया तु कर्तुं शक्यः हीनभावेनैव लीलायाः क्रियमाणत्वात् अतः प्रार्थनार्थमादौ स्तोत्रं कृतवतीत्याह–अथेति । अथेन्द्रवाक्यानन्तरं सुरभिः कामधेनुः कृष्णमभिनन्द्य साधु गोरक्षा कृता इन्द्रश्च साध्वनुगृहीतः अयमप्यस्मत्पुत्रप्राय इति स्वयमपि मनस्विनी महामानवती सम्माननपात्रम् अतो भगवांश्चेन्न मानयेत् मत्क्रियमाणमभिषेकं नाङ्गीकुर्यात् तदा न जीविष्यामीति निबन्धयुक्ता सर्वरक्षार्थं निर्बन्धः करणीय इति । स्वसन्तानैः गोभिः सह उपामन्त्र्य निकटे समन्त्रणं कृत्वा आह, य इन्द्र अपकरोति सोऽस्माक इन्द्रो मा भवतु न हि वयं भवानिव निरभिमानाः यतो वयं मनस्विन्यः । ननु, कथमेव धार्ष्ट्यं कर्तुमिच्छसि न हि सर्वेश्वर इन्द्रो भवितुमर्हति तत्राह—गोपरूपिणमिति । स हि अस्मान् पाति लोकवत् पालकास्तु उपसर्जनीभूताः यत्र खल एव वद्वलभ्यते तत्राप्यस्मदुक्तमैश्वर्यं कथं न स्वीकरिष्यतीति ॥ १८ ॥

**इन्द्रं नस्त्वाभिषेक्ष्यामो ब्रह्मणा नोदिता वयम् ।**
**अवतीर्णोऽसि विश्वात्मन् ! भूमेर्भारापनुत्तये ॥ २१ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

।कश्च पूर्वमप्ययमिन्द्र ईश्वरः यश्च इन्द्रो जात इति ऐश्वर्यमेतद्यमेवेति अतो नास्माभिरलौकिकं ।किञ्चित् सम्पाद्यते किन्तु विद्यमानमेव लोके प्रकटीक्रियते अतः युक्तमेवाभिषेचनमिति ।वज्ञापयितुं स्तुतिमाह—कृष्णकृष्णेति द्वाभ्याम् । आदरे वीप्सा योगी उपायवित् महायोगी अलौकिकोपायकर्त्ता अन्यदेव करोत्यन्यत्सम्पद्यते इन्द्रेण क्लेशं प्रापितः एवं ज्ञातोऽपीन्द्रमेव क्लेशं प्रापितवान् अथवा महायोगिनो लीलार्थं प्रवृत्तस्य न किञ्चिदनुचितमुचितं वा अत इन्द्रत्वमपि गृह्यतामित्यभिप्रायः। किञ्च, विश्वात्मात्वम् अनेन प्रमेयोत्कर्ष उक्तः पूर्वेणैव साधनोत्कर्षः विश्वस्यापि सम्भवो यत्रेति प्रमाणोत्कर्षः फलोत्कर्षं वक्तुं तस्य स्वस्मिन्पर्यवसानमाह—भगतैव लोकनाथेन सर्वलोकरक्षकेणैव वयं सनाथाः नत्विन्द्रेण घातकत्वात् । किञ्च, प्रतिमन्वन्तरं भिन्न ऐन्द्रः अतः अव्यवस्थितत्वात् कालापरिच्छेदात् स्वभावतस्तस्य जीवस्यापि नियम्यत्वात् भवानेव लोकनाथः अत एव वयं सनाथाः यो हि जीवयति स एव नाथः “स वै पतिः स्यात्”इति न्यायेन भवानच्युतश्च ॥ १९ ॥

एवं नाथत्वमुपपाद्य देवत्वमुपपादयति—त्वं न इति । त्वमेव नाथोऽस्माकं गवां परममुत्कृष्टं दैवम् अस्माकं ऽभाग्यरूपोऽपि त्वमेव अस्मकं नियामकश्च अस्मासु क्रीडति इन्द्रात् पृथक् कृत्वा अस्मान् विजयते अस्माभिर्व्यवहरति अस्माकं कान्तिस्तत एव अस्माभिः स्तूयते च अस्माकं च तत एव सौन्दर्यं गतिरपि सर्वा अतो भवानेव देवः । किञ्च, न केवलं देवमात्रं देवेन्द्रोऽपि भवानेव त्वं न इन्द्र इति । परमैश्वर्यं नान्यस्यास्ति जगत्पतित्वाभावात् । यो ह्यन्तर्बहिर्नियामकः स पतिः अतो जगत्पतित्वात् त्वमेवेन्द्रः अतो गोविप्रदेवानां वहिर्मन्त्रहविर्भुजां भवायोद्भवाय यज्ञपरिपालको भव एवं पूर्वक्लायडानुवर्त्तिनां तत्प्रतिपाद्यधर्मस्य उद्भवजनकत्वं प्रार्थयित्वा निवृत्तिपराणां भगवद्भक्तानाञ्चोद्भवाय भवेति प्रार्थयति—ये च साधव इति । तेषामपि भवाय भवेति योजना ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

व इति वरुणाद्यभिप्रायेण युक्तैरप्रमत्तैः स्तम्भवर्जितैर्निरहङ्कारैः स्थीयतामन्यथा पुनरपि दण्डं प्राप्स्यतीति भावः । अत्र पुनस्ते स्तम्भो न भविष्यतीति भगवता नोक्तमत एव पारिजातहरणेन पुनस्तम्भोऽस्य भविष्यतीति तादृशलीलासिद्ध्यर्थमिति ज्ञेयम् ॥१७॥

स्वसन्तानैर्व्रजस्थैर्गोभिः सहेति प्रकृत्या अपि तस्या अप्राकृतासु तासु कृष्णपरिकरभूतासु स्वसन्तानाभिमानस्तासां सुरभिवंशोद्भूतत्वात् यथा चन्द्रवंशोद्भूते कृष्णे प्राकृतस्यापि चन्द्रस्य स्वसन्तानाभिमानः उपामन्त्र्य सम्बोध्य ॥ १८ ॥

कृष्णकृष्णेति हर्षेण द्विरुक्तं महायोगिन्निति योगबलेनैव गोवर्द्धनमुद्धृत्य मत्सन्तानानि त्वमरक्ष इति भावः । भवता सनाथा इति मत्सन्तानान् जिघांसुना इन्द्रेण नाथेनालमिति भावः ॥१९॥

परमं कं सुखं यस्मात्तत् अतस्त्वमेवास्माकमिन्द्रो भव जगत्पते'! इति तव जगत्पतित्वेऽपि सम्प्रति गोपजातित्वात् गोपत्वेऽपि इन्द्रमखमर्द्दित्वादिन्द्रपराभावकत्वाच्च तवैन्द्रत्वमुपयुक्तमेवेति भावः । ये चान्ये साधवस्तेषाञ्च ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे शक्र ! वः युष्माकं भद्रमेवातः परं भवतु बहुवचनं वरुणाद्यभिप्रायेण अतः गम्यताम् युक्तैः सावधानैः स्तम्भवर्जितैर्निर्गर्वैः वो युष्माभिः स्वाधिकारेषु स्थीयताम् हे भगवन् । त्वत्सेवार्थमिहैव वासो युक्तः अतः आह क्रियतां मदनुशासनमिति । यस्मिन्नधिकारे मया नियुक्तस्तत्पालनमपि मत्सेवैवेति भावः ॥ १७ ॥

स्वसन्तानैः स्वापत्यैः सह अभिवन्द्यः कृष्णकृष्ण महायोगिन्नित्याद्युपामन्त्र्य अभिषेकार्थमाह ॥ १८ ॥

सनाथाःकृताः इन्द्रक्रोधाद्रक्षिता इत्यर्थः ॥ १९ ॥

नोऽस्माकं गवादीनां भवायाभ्युदयाय हे जगत्पते ! त्वमिन्द्रो भव यतस्त्वमेव नः परमं दैवमं ॥ २० ॥

---

### भाषा टीका ।

हे इन्द्र ! तुमारो कल्याण होय अब तुम जाओ, और मेरी आज्ञाकरो, और गर्व छोडि के अपने अधिकार में सावधान होय के रहौ ॥ १७ ॥

ऐसें इन्द्रकी स्तुति के पीछे उदार चित्त वारी सुरभि अपनी संतान सहित आय के गोपरूपी ईश्वर श्रीकृष्णचन्द्र कूं नमस्कार करिके बोलत भई ॥ १८ ॥

#### सुरभिरुवाच ।

सुरभि बोली, कि हे कृष्ण ! हे कृष्ण ! हे महायोगीश्वर ! हे विश्व के आत्मा ! हे विश्व के उत्पन्न करनवारे ! हे अच्युत ! लोक के नाथ जो आप हैं तिनसों हम सनाथ हैं चुकि आप हमारे नाथ हौ पालन करो हौ ॥ १९ ॥

हे जगत्पते ! आप हमारे परमदेवता हौ, सो आप गौ ब्राह्मणदेवता और साधुन के कल्याण के अर्थ हमारे गऊन के इन्द्र होउ ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, भवतामिन्द्रोस्तीति चेदत आह—इन्द्रमिति । अलं पुरन्दरस्येन्द्रतयेत्यर्थः । ननु, देव एवेन्द्रो भवति कथमहं भवेयमिति चेदत आह अवतीर्णोऽसीति ॥ २१ ॥

श्रीशुक उवाच ।

एवं कृष्णमुपामन्त्र्य सुरभिः पयसाऽऽत्मनः ।
जलैराकाशगङ्गाया ऐरावतकरोद्धृतैः ॥ २२ ॥
इन्द्रः सुरर्षिभिः साकं नोदितो देवमातृभिः ।
अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात् ॥ २३ ॥
तत्रागतास्तुम्बुरुनारदादयो गन्धर्वविद्याधरसिद्धचारणाः ।
जगुर्यशो लोकमलाऽपहं हरेः सुराङ्गनाः सन्ननृतुर्मुदाऽन्विताः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुरभिरात्मनः पयसाऽभ्यषिञ्चदिन्द्रश्चाकाशगङ्गाया जलैरभ्यषिञ्चत् ॥ २२ ॥

देवमातृभिरदित्यादिभिर्देवैर्मातृभिश्चेति वा गाः पशून् गां स्वर्गं वा इन्द्रत्वेन विन्दतीति कृत्वा गोविन्द इत्यभ्यधात् नाम कृतवानित्यर्थः ॥ २३ ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्प्रकारमेव भक्तिविशेषेण सनिश्चयं विज्ञापयति—इन्द्रमिति, स्वभावत एव नोऽस्माकम् इन्द्रं त्वामधुना मनुष्यलोके प्रचाराय केवलमभिषेक्ष्यामः । ननु, तर्हि इन्द्राद्याधिकारदातुर्ब्रह्मणोऽवमानः स्यात्तत्राह—ब्रह्मणेति । अतो ब्रह्मवाक्यापेक्षयापि त्वया सम्मतिः कार्येति भावः । ननु, तर्हि स एव कथं नागतः तत्राह—वयमिति । अत्रास्माकमेवाधिकारः त्वदीयगोवंशस्यादिमातृत्वेन तत्रान्तरङ्गत्वात् तस्य तु प्रपञ्चाधिकारित्वेन बहिरङ्गत्वादिति भावः । अतो बहुत्वमप्यात्मनो बहुमानेन । यद्वा, वत्सलतया स्वसङ्गागतमिन्द्रं तदीयांश्च कृतार्थयितुं बहुत्वेन तान् सर्वान् सङ्गृह्णाति ततश्च कृतापराधेन स्वेन महापराधिन इन्द्रस्याप्यपराधक्षमापयो पूर्ववदपराधशङ्कया ब्रह्मा नागमदिति ज्ञेयम् अवतीर्णोऽसि इति तैर्व्यञ्जितम् । यद्वा, नन्वहं श्रीगोपनन्दनः कथं युष्मद्दैवम्? ततो यूयं ब्रह्माप्यसमीक्ष्यकारिण एवेत्याशङ्क्य न मुहुरस्मान् प्रतारयेत्याह—अत्रेति । श्रीमति परमगोलोके विराजमानो नित्यमस्मत्परमदैवतरूप एव त्वम् अवतीर्णोऽसि श्रीनन्दादिनिजपरिकरैः सह केवलं भूम्यां प्रकटोऽसि न तु जीववज्जातोऽसीत्यर्थः । ननु, भूभारापनोदेन मम किन्तत्राह—विश्वात्मन्निति । अतो विश्वस्यापि स्थितिस्त्वत्त एव युज्यत इति भावः । तत्रैव "यथा तरोर्मूलनिषेचनेन" इत्यादिन्यायेन सर्वेषामेवात्र तवाभिषेके जायमानं सुखं तदर्थमवतीर्णेन भवताऽनुमोदनीयमेवेति व्यञ्जितम् ॥ २१ ॥

एवमिति युग्मकम् उपामन्त्र्य निजेन्द्रत्वस्वीकाराय प्रार्थ्येत्यर्थः । लज्जादिना श्रीभगवता साक्षादकृतेऽपि स्वीकारे "मौनं सम्मतिलक्षणम्" इति न्यायेन सुरभिः स्वयमेवाभ्यषिञ्चत् ॥ इन्द्रः स्वयमप्रवृत्तः किन्तु तदभिषेकार्थमेव सुरर्षिभिः साकं तत्र साक्षादागताभिर्देवमातृभिः प्रेरितः यथा श्रीकृष्णोऽयं भगवान् कृपार्द्रचित्तः शरणागतवत्सलः विशेषतश्च तत्प्रियजनसङ्गत्या त्वमागतोऽसि समर्थोऽयमप्यतिप्रशस्तस्तस्मान्मा भयं कार्षीः महोत्सवं भक्त्या विधत्स्वेति अतस्तैरेव सहितोऽभ्यषिञ्चदित्यर्थः । ऐरावतस्य करेण कृत्वा रत्नकुम्भादिद्वारा उद्धृतैरानीतैः तदीयरत्नमयघटयेति विष्णुपुराणे तच्च गजेन्द्रद्वारा तत्सन्निधानात् सद्यो वाञ्छिततीर्थजललाभाच्च गवामिन्द्रो गोविन्द्रः तत्पदेनैव गवेन्द्रताया वाच्यत्वात् "प्रीयाश्च इन्द्रो गवाम्" इति तदर्थनिर्देशेन तन्नाम्नः सूचितत्वात् "इति गोगोकुलपतिं गोविन्दमभिषिच्य सः" इति वक्ष्यमाणाच्च पृषोदरादिपाठ इति दाशार्हमिति दाशार्हत्वेऽपि गोविन्दत्वमुत्कृष्टमित्यभिप्रेतम् ॥ २२-२३ ॥

ततश्च महोत्सवो जगदानन्दकरो वृत्त इत्याह—तत्रेति त्रिभिः । तस्मिन् शक्रकुण्डमिति श्रीवाराहतः गोविन्दकुण्डमिति स्कान्दतः प्रसिद्धे श्रीगोवर्धनप्रदेशे आगताः सर्वत्र हेतुः मुदान्विताः अत इन्द्राज्ञापेक्षापि तैर्न कृतेति भावः । तुम्बुरोरादौ निर्देशः पूर्वं नारदोऽपि तस्य गाने ज्यैष्ठ्यात् तच्च लिङ्गपुराणे व्यक्तं श्रीनारदाश्चायं नित्यपार्षदश्रीगरुडादीनां श्रीवैनतेयादिभिरिव भगवदवतारतत्पार्षदप्रवरश्रीनारदस्यैवावतारो गीतादिकौतुकेन गन्धर्वादिषु वर्तत इति आदिशब्दात् चित्ररथादयः यद्वा, तुम्बुरुनारदावेवाद्यग्रतो येषां ते गन्धर्वादयः लोकानां सर्वेषां मङ्गलं तत्कर्तृ दोषं मोक्षाभिसन्धिपर्यन्तम् ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऐरावतकरोद्धृतैः ऐरावतकरगतघटसमाहृतैः प्रमाणान्तराविरोधात् ॥ २२—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, गवादीनामयमिन्द्रोऽस्त्वेवेत्यत आह—इन्द्रमिति । तत्तदधिकारप्रदेन ब्रह्मणा चोदिता वयं त्वामेवेन्द्रमभिषेक्ष्यामः पुरन्दरस्याप्यमिन्द्रतयेति भावः । ननु, देव इन्द्रो भवितुमर्हति नत्वहं मर्त्यः तत्राह—अवतीर्ण इति । भारावतरणाय देवानामपि देवस्त्वम् इति भावः ॥ २१ ॥

इत्थं सुरभिः कृष्णं सम्प्रार्थ्यात्मनः पयोभिः क्षीरैरभ्यषिञ्चत्, तथेन्द्रोऽपि देवमातृभिरदित्यादिभिश्चोदितः देवैर्मातृभिश्चेति वा

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुरैः ऋषिभिश्च सहितः ऐरावतकरोद्धृतैरैरावतकरगतघटसमाहृतैः प्रमाणान्तराविरोधादेवं व्याख्यातम् आकाशगङ्गायाः जलैर्दाशार्हं श्रीकृष्णमभिषिक्तवान् गोविन्द इत्यभ्यधात् अभिधां चकार गाः पशुः धनं विन्दते लभते इति वा गां स्वर्गमिन्द्रत्वेन विन्दतीति वा उभयविधशब्दप्रवृत्तिनिमित्ताश्रयत्वात्तन्नामकरोदित्यर्थः । गाम्भुवं विन्दतीति संज्ञा तु स्वाभाविकीत्यभिप्रायः ॥ २२—२३ ॥

तत्रेति । तत्रेत्यादिग्रन्थस्य कृष्णोऽभिषिक्त एतानि इत्यादिः तुम्बुरुप्रभृतयो हरेर्लोकस्य शृण्वतः संस्मरतश्च मलमपहन्तीति तथा तद्यशो जगुः सुराणामङ्गना रम्भादयः सम्यङ्ननृतुः ॥ २४ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नः इन्द्रं स्वामिनं त्वाम् ॥ २१ ॥

सुरभिः आत्मनः पयसा ॥ २२ ॥

दाशार्हं दशार्हकुलतिलकं दाशं सुखादिदानमर्हतीति वा अभ्यषिञ्चत् देवमातृभिश्चोदित इन्द्रश्च सुरर्षिभिः सार्द्धमाकाशगङ्गाया जलैः कृष्णमभ्यषिञ्चदित्यन्वयः । गोविन्दः गोर्विन्दो लाभो यस्य सः आलभत इति वा गोविन्द इत्यभ्यधात् अभिधानं कृतवांश्च ॥ २३ ॥

संननृतुः समीचीनं नृत्यं चक्रुः ॥ २४ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परमगोलोके स्वभावत एव नोऽस्माकमिन्द्रं त्वामधुना मनुष्यलोके प्रचाराय केवलम् अभिषेक्ष्यामः ॥ २१ ॥

उपामन्त्र्य निजेन्द्रस्वीकाराय प्रार्थ्येत्यर्थः । प्रचोदितः प्रेरितः भयात् स्वयमप्रवृत्तैः ऐरावत इति गजेन्द्रद्वारा तद्विधानात् ॥ २२ ॥

गवामिन्द्रो गोविन्दः तत्पदेनैव गवेन्द्रताया वाच्यत्वात् प्रीयाश्च इन्द्रो गवामित्युक्तत्वात् त्वन्न इन्द्रो जगत्पतेरिति इति गोगोकुलपार्श्वे गोविन्दमभिषिच्य सः इति वक्ष्यमाणात् ॥ २३—२८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, अनभिषिक्तः शास्त्रत इन्द्रो न भवति अभिषेकस्य संस्काररूपत्वात् अभिषेके तु कृते नान्यः पतित्वं मन्यते अन्यथा मोहात् यः कश्चिन्मन्येत, ननु, इन्द्राधिकाराभिषेकं ब्रह्मा आधिकृतः कथमन्येनाभिषेक इति चेत्तत्राह—ब्रह्मणेति । ब्रह्मा स्वयं लज्जते कथं स्वस्वामिनं गवामिन्द्रपदेऽभिषेक्ष्यामीति अयुक्तश्च भवति अस्माकं तु युक्तं हीनोऽपि महान्तं पतित्वेन वृणुते सम्मत्यर्थं ब्रह्मप्रार्थना तेन च प्रेरिता वयं भगवदधिष्ठितासु गोषु सर्वोत्कृष्टं हविर्भवेदिति अतः शीघ्रं प्रेरितवान् शीघ्रप्रेरणायां हेतुः भवतीर्णोसीति भूभारहरणार्थम् अवतीर्णः शीघ्रं भूभारं हृत्वा तिरोभवेत् अतः शीघ्रं गवामिन्द्रः कर्त्तव्य इति हीनता दूषणं तु नास्ति विश्वात्मत्वात् व्यापिवैकुण्ठादधः समागतः पदान्तरं च प्राप्नोति अत इन्द्रत्वमुचितम् ॥ २१ ॥

एवं प्रार्थनां कृत्वा अभिषेकं कृतवतीत्याह—एवमिति । फलरूपमपि देवतात्वेनोपामन्त्र्य अङ्गीकृते भगवति अभ्यषिञ्चदिति सम्बन्धः भगवत अङ्गीकारे दयाहेतुरिति वदन् तस्या अभिषेकावश्यतामाह—सुरभिरिति । सुराद्बिभेतीति सुरभिः देवा एव तां भक्षयन्ति किं पुनर्देवेन्द्रः अतो भगवन्तं शरणं गच्छतीति व्याजेनेन्द्राभिषेकं कृतवती अत एव ततः प्रभृतिसर्ववेदसिद्धोऽपि गोवधो निवृत्तः उपपातकत्वं तद्वधे महापातकादप्यधिकविगानं च प्रथमतः आत्मनः पयसा दुग्धेनाभ्यषिञ्चत् अत एव, तदिन्द्रियं जातम् इन्द्रं यातीति ततो जलाभिषेकोऽपि जात इत्याह, जलैरिति । आकाशगङ्गा नित्या या शिशुमारे प्रसिद्धा तन्निस्थं जलं तत्त्वरणादेव तारकत्वम् आकाशगङ्गा चोदरत इत्युपपादितम् ऐरावतो गजः तस्य करः अभिषेके प्रशस्तः तथा सति पुष्करजलत्वमापद्यते तत्सम्बन्धेपि जलं नोपहतं भवति प्रत्युत पवित्रमेव अन्यस्य तत उद्धारोऽशक्य इति तथोक्तम् ॥ २२ ॥

एवं तस्या अभिषेकसमये एकदेशभूता सति देवा ब्राह्मणा अप्यभिषेकं कृतवन्त इत्याह—इन्द्र इति । सुरर्षिभिः सहित इन्द्रः तैर्वा यथेष्टं प्रेरितः देवमातृभिः सहितः आदित्यादिभिः अद्भादिभिर्वा सर्वसम्पत्त्या सर्वैरेव सहिता सुरभिरिन्द्रश्च दाशार्हं सेवकरक्षणक्षमं रक्षणपरं वा अभ्यषिञ्चत् नामान्तरं च धारितवतीत्याह—गोविन्द इति । चाभ्यधादिति गवामिन्द्रम् अत्र अमृतबीजस्य वकारस्य मध्ये उपादानं भूवादय इतिवत् रन्प्रत्ययं नात्रोपात्तः रूढिजनकत्वेन धात्वर्थस्य गौणत्वापादकत्वात् अतः अच्प्रत्ययान्त एव निर्दिष्टः स तु धात्वर्थपर एव भवतीति गोविन्द इत्येवशब्दः साधुः नतु गवेन्द्र इति. चकारात् इन्द्रेन्द्रः देवेन्द्रः सुरभीन्द्र इत्यादिनामान्यपि स्वस्वनामपुरस्सरं सर्वधृतानि तेन व्रजेन्द्रो गोपेन्द्र इत्याद्यपि सम्भवति ॥ २३ ॥

एवं भगवत अभिषेके उत्सववाद्यानि जातानि इत्याह—तत्रगता इति । तुम्बुरुः मध्यमः पूर्वमुभयात्मको निरूपित इति तुम्बुरुर्नारदश्च आदिर्येषां गन्धर्वा गायकाः विद्याधराः वादकाः सिद्धाः अद्भुतप्रदर्शकाः चारणाः पुरुषनर्त्तका एते सर्व एव भगवतो यशो जगुः ननूत्सवे सर्वेभ्योऽभीष्टं देयं किं गानमात्रेणेति चेत्तत्राह—लोकमलापहमिति । सर्वेषां सर्वदुःखनिदानभूतस्मलमेव दूरीकरोति सुराङ्गनाश्च हर्षेणान्विताः सम्यङ् ननृतुः ता हि कृष्णेन सह कृष्णरमणौत्सुक्यदेवादिन्द्राच्च भीताः स्थिताः अधुना इन्द्रत्वे सम्पन्ने भयानिवृत्ता गमनं चावश्यकं जातमिति मुदान्विता जाताः भावपूर्वकं च नृत्यं कृतवत्यः यथा च भगवान् वशे भवति ॥ २४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नोऽस्माकं त्वा त्वाम् इन्द्रं ननु कस्यादेशेन स्वातन्त्र्येणैव वा तत्राह—ब्रह्मणेति । यदा महाभयविह्वलेनेन्द्रेण स्वसाहाय्यार्थं गत्वा ब्रह्मा निवेदितस्तदा ऽनेनापि भूतपूर्वं स्वापराधस्मृत्या

तन्तुष्टुवुर्देवनिकायकेतवो ह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ।
लोकाः परां निर्वृतिमाप्नुवंस्त्रयो गावस्तदा गामनयन् पयोद्रुताम् ॥ २५ ॥
नानारसौघाः सरितो वृक्षा आसन् मधुस्रवाः ।
अकृष्टपच्यौषधयो गिरयो ऽबिभ्रदुन्मणीन् ॥ २६ ॥
कृष्णे ऽभिषिक्त एतानि सत्त्वानि कुरुनन्दन ! ।
निर्वैराण्यभवंस्तात ! क्रूराण्यपि निसर्गतः ॥ २७ ॥
इति गोगोकुलपतिं गोविन्दमभिषिच्य सः ।
अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥ २८ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे श्रीकृष्णाभिषेकोनाम
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भीतेन विमृश्याहमादिष्टा सुरभे त्वत्सन्तानपालकस्य प्रभोस्त्वमतिप्रीतिपात्री भवसि तत् त्वमेव गत्वा कृपासिन्धो तत्रेन्द्रापराधं क्षमय गवेन्द्रत्वेन तमभिषिञ्च चेति. किञ्च ब्रह्माण्डकोटीन्द्रस्य ब्रह्मरुद्रादिदुर्लभचरणपरिचरणस्य तव गवेन्द्रत्वेनाऽभिषेको नाम कः खलूत्कर्षः?किन्त्वभिषिञ्चतामस्माकमेवोत्कर्षार्थमस्माकमयं प्रयत्न । इत्याह—भवतीर्णोसीति । विश्वात्मन्निति विश्वात्मत्वेन सर्वैर्येवाहृदय एव त्वं यदि नावातरिष्यस्तदा अस्माकमेतावद्भाग्यं कथमभविष्यादिति भावः ॥ २१ ॥

पयसा दुग्धेन देवमातृभिरदित्यादिभिः प्रेरित इन्द्रश्चाभ्यषिञ्चत् आत्मनो भगवत्श्रीकृष्णदासत्वमनेनाभिषेककर्मणाऽपर्हितं स्वयमप्रवृत्तः प्रथमं स्थगित एवेन्द्र आसीत् पश्चाददित्यादिभिः प्रेरितस्तद्दासभावशाल्लब्धतदधिकारसम्भावन एव अभ्यषिञ्चदित्यर्थः । दाशार्हमिति दाशार्हवंशत्वेन जातस्यापि तस्य गोपत्वस्यैव स्पृहणीयत्वाधिक्यात् गाः पशून् विन्दति गां स्वर्गं वा इन्द्रत्वेन विन्दति गाः सर्वभक्तेन्द्रियाण्याकर्षकत्वेन विदन्तीति वा गोविन्द इत्यभ्यधात् नाम कृतवानित्यर्थः ॥ २२—२३ ॥

देवनिकायेषु केतव इव मुख्या वरुणादयः अद्भुतपुष्पवृष्टिभिर्विशेषेण अवाकिरन् आवव्रुरित्यर्थः । गां पृथ्वीं पयोभिर्द्रुताम् आर्द्राम अनयन् अकुर्वन्नित्यर्थः ॥ २४—२५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे विश्वात्मन् ! त्वां त्वां नः इन्द्रमभिषेक्ष्यामः ॥ २१ ॥

सुरभिः स्वसन्तानैः स आत्मनः पयसा अभ्यषिञ्चदिन्द्रः नोदितः ब्रह्मणैवेति शेषं सुरर्षिभिः देवैर्मातृभिरदित्यादिभिश्च सह आकाशगङ्गायाः जलैरभ्यषिञ्चदित्यन्वयः । गां वेदलक्षणां वाणीं वेदयते इति गोविन्दपदवाच्यः प्रथमत एव "गौरेषा भवतो वाणी तां च वेदयते भवान् । गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् । इति हरिवंशस्थवचनात् पृषोदरादित्वात्साधुः सुरभिरिन्द्रश्च गाः धनभूताः गोपालतया गां स्वर्गं चेन्द्रत्वेन विन्दतीति कृत्वा गोविन्द इत्यभ्यधात् अभिधां चकार सुरभ्या गवां स्वामी त्वमतो गोविन्दोसीत्युक्तः इन्द्रेण स्वर्गस्य गोपदवाच्यस्य स्वामी त्वमतो गोविन्दोऽसीत्युक्त इति फलितोर्थः ॥ २२-२४ ॥

———

भाषा टीका ।

हे विश्वात्मन् ! आपने गौ को रूप धारण करिके यारी भूमिको भार दूर करिबे कों अवतार लीनो है तासों ब्रह्मा जी की प्रेरणा तें हम आपकों अपने इन्द्रपने को अभिषेक करेंगे ॥ २१ ॥

श्रीशुक उवाच

श्रीशुकदेवजी बोले, कि—ऐसें श्रीकृष्णतें प्रार्थना करकें सुरभि अपने दुग्धतें प्रभु कों अभिषेक करत भई । तथा अदिति प्रभृति देव मातान की प्रेरणातें देवर्षीन के सहित इन्द्र, ऐरावत की सूंडतें लाये भये आकाश गंगा के जलनतें दाशार्हवंशी श्रीकृष्णचन्द्र को अभिषेक करतो भयो, और प्रभुकों गोविन्द ऐसो नाम धरत भयो ॥ २२—२३ ॥

जहां आपको गोविन्दाभिषेक भयो वा जगे तुंबुरु नारद सों आदि लेकें गन्धर्व विद्याधर सिद्ध चारण सब आवत भये, और लोकन के मलन कों दूरि करिबे वारे हरि के विमल यश कों गावत भये, और आनंद युक्त देवांगना नृत्य करत भई ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

देवनिकायेषु केतव इव दर्शनीया मुख्या इत्यर्थः । गावो गां पृथ्वीं पयोभिर्द्रुतामार्द्रामनयन् अकुर्वन्नित्यर्थः ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नानारसौघाः क्षीरादिवाहिन्यः अकृष्टपच्याः कर्षणं विनैव पक्का ओषधयो व्रीह्यादय आसन् यद्वा अकृष्टपच्या ओषधयो येषु ते गिरय उन्मणीन् गर्भगतान्मणीन् उत् उद्गतान् बहिः प्रकटानबिभ्रदबिभरुः ॥ २६—२८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवनिकायकेतवः वरुणाद्याः पुष्पाणां स्वरूपेण वृष्टीनामपारमित्वेन च अद्भुताभिः पुष्पाणां वृष्टिभिरवर्षयामासुः परां यतोऽतिशयिता नास्त्यस्ति ताम् ॥ २५ ॥

नानारसेत्यादावेवं ज्ञेयं पूर्वं वृन्दावने यद्यद्वैशिष्ट्यमासीत् तत्तदप्यधुनाऽधिकतया तत्र भूत्वा त्रैलोक्यमपि व्याप्नोदिति अकृष्टपच्यौषधय इति मध्ये सुप्लुक् छान्दसः सन्धिर्वा ॥ २६ ॥

नच केवलं गुणा एव सम्पन्नाः स्वाभाविकदोषा अपि विनष्टा इत्याह—कृष्ण इति । एतानि प्रसिद्धानि सत्त्वानि निसर्गतः जातिस्वभावेन क्रूराणि परस्परं हिंसापराण्यपि अहिनकुलादीनि सर्वाणि सर्वभूतान्येव निर्वैराणि मित्राण्यासन् "जायमाने जनार्दने" इतिवत्तदानीमिति ज्ञेयं वृन्दावने तु सर्वदैवेति विशेषः । हे कुरुनन्दनेति तस्य तथानुमोदनेन हे तातेति परमाश्चर्येण प्रेमवैवश्येन वा पुनः पुनः सम्बोधनम् ॥२७ ॥

सः अपराध्यपि श्रीभगवता स्वीकृतोपचारः गोगोकुलपतित्वेन स्वत एव तं गोविन्दमभिषिच्येति तेन तस्य नातिशयः किन्तु तेन कर्मणा लोकस्यैव स्वस्यैव हितं चकारेति भावः तस्य हितमेव दर्शयति—ततः श्रीगोविन्देनानुज्ञातः सन् पूर्वं तदपराधित्वात् प्रायस्त्यक्तोऽपि पुनर्देवादिभिर्वृतः स्वीकृतो भूत्वा दिवं ययाविति लीलेयं सखिभिः स्थानवेषादिवैशिष्ट्येनैव ज्ञातत्वात् दूरतो वा निहुत्य दृष्टत्वात् पश्चादेव व्रजे कथितेति ज्ञेयम् इति गोगोकुलपतिं गोविन्दमभिषिच्येति गोगोकुलयोस्तदीयितत्वयोर्निजेशितृत्वेन तस्य ज्ञान एव सुखचमत्कारात् । पाद्मोत्तरखण्डे तु—

"गोपवृद्धाश्च गोप्यश्च दृष्ट्वा तत्र शतक्रतुम् ।
तेन सम्पूजिताश्चैव प्रहर्षमतुलं ययुः" ॥ इति
श्रीनन्दयशोदादीनामपि तत्रागमनं वर्णितं तत्तु विविक्त उपसङ्गस्येति विरोधात् कल्पान्तरे ज्ञेयम् ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उन्मणीन् उद्गतान् मणीन् ॥ २६—२८ ॥

इति श्रीभागवतव्याख्याने दशमस्कन्धीये
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । देवसङ्घेषु केतव इव दर्शनीयाः मुख्या इत्यर्थः अद्भुताभिः पुष्पवृष्टिभिरभितोऽवाकिरन् त्रयो लोकाः परां निर्वृतिमानन्दं प्रापुः गावो गां पृथ्वीं पयोभिः क्षीरैर्द्रुतां सिक्तामनयन् चक्रुः ॥ २५ ॥

सरितो नानारसौघाः क्षीरादिवाहिन्यो बभूवुः वृक्षास्तु मधूनि स्रवन्तीति तथाभूता ओषधयस्त्वकृष्टपच्याः कृषिं विनैव व्रीह्यादयः फलिता आसन् इत्यर्थः । सन्धिरार्षः । यद्वा, अकृष्टपच्याश्चौषधयश्चेति कर्मधारयः यद्वा अकृष्टपच्या ओषधयो येषु ते गिरयः उन्मणीन् उद्गतान् बहिः प्रकाशान्मणीनबिभ्रदबिभरुः॥२६॥

तदा हे कुरुनन्दन ! कृष्णेऽभिषिक्ते सतीन्द्रे कृते सतीति भावः । एतानि स्वभावतः क्रूराण्यपि सर्वाणि भूतानि सर्पव्याघ्रादीनि हे तात ! वैररहितान्यभवन् ॥ २७ ॥

स इन्द्र इत्थं गवां गोकुलस्य नन्दव्रजस्य पतिं गोविन्दमभिषिच्येत्युक्तार्थोपसंहारः तेनाऽभ्यनुज्ञातः कृष्णाधीनस्वाधिकारो भूत्वेति तात्पर्यं देवादिभिः परिवृतो दिवं स्वर्गलोकं प्रति ययौ ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

देवनिकायानां केतवः श्रेष्ठाः गां भूमिं पयसा द्रुतां परिप्लुताम् अनयन् प्रापयामासुः ॥ २५ ॥

मधु मधुररसं स्रवन्त्यः उन्मणीन् अविभ्रन् भृतवन्तः ॥ २६—२८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥
( विजयध्वजरीत्या पञ्चविंशोऽध्यायः ॥ २५ ॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निर्वैराणीति सर्वभूतान्येव तदानीमिति शेषः ॥ २७ ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इन्द्रत्वे जाते सर्वे एव स्वर्गलोकः समागतः तदा देवसमूहे ये केतव इवोन्नताः देवोत्तमाः ब्रह्मादयः मन्त्रा वेदा वा तं भगवन्तमिन्द्रं तुष्टुवुः अत एव वेदे इन्द्रो महान् स्तूयते भगवानिन्द्रो जात इति ननु प्राकृतानामिन्द्रत्वे आधिदैविकेऽपि अर्चेन्द्राणि जुहोतीति नोपपद्यते इन्द्रत्वेन

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अर्च्चता भगवत्त्वेन तु सर्वत्वम् अद्भुतपुष्पवृष्टिभिश्च विशेषेण अवाकिरन् पुष्पवृष्टिं कृतवन्तः एवं द्विविधानां वाचनिकं कायिकं चोक्तम् । मानसिकमाह—सर्वे लोकाः परां निर्वृतिमाप्नुवन्निति । त्रयोऽपि लोकाः परमानन्दं प्राप्ताः तदा गावः अन्तः रसपूर्णाः बहिरपि रसं स्रावयन्त्य इत्याह—गावः तदा गां पृथिवीं पयोद्रुतां पयसा पिच्छिलामनयन् कृतवत्यः ॥ २५ ॥

सरितश्च नानारसानां घृतादीनामोघो यासां तादृश्यो जाताः वृक्षाश्च मधुच्युतः ओषधयः व्रीह्यादयः कर्षणाव्यतिरेकेणैव पक्वा जाताः अकृष्टपच्याश्च ता ओषधयश्च गिरयः पर्वताश्च स्वाभ्यन्तरस्थितान् मणीन् व्यसृजन् ॥ २६ ॥

एवं स्थावरजङ्गमानां सर्वेषामेवोत्सवो निरूपितः, तमुपसंहरन् पूर्वेन्द्रेभ्यः भगवति इन्द्रे वैलक्षण्यमाह—कृष्णेऽभिषिक्ते इति । सदानन्दे अभिषिक्ते सति स हि सर्वानभिषिञ्चति स्वानन्देन यदि सोऽप्यभिषिक्तः सर्वास्तदा महदाश्चर्यं जातमिति एतानि परिदृश्यमानानि सर्वाण्येव निसर्गतोऽपि क्रूराणि शाश्वतिकविरोधयुक्तानि अपि निर्वैराण्यभवन् तदा शुकस्तामवस्थां प्राप्तः पशून् पश्यन्नाह—एतानीति । कुरुनन्दनेति सम्बोधनं विश्वासार्थं सद्वंशोत्पन्नस्यैव विश्वासो भवतीति, तातेति सम्बोधनं स्नेहसूचकं तेनाप्रतारणापि सूचिता ॥ २७ ॥

एवमभिषेकमहोत्सवमुक्त्वा अभिषेककर्तुः स्वर्गप्राप्तिमाह इतीति । पूर्वं गोकुलपतिमित्यमुना प्रकारेण गोविन्दं कृत्वा अभिषिच्य स प्रसिद्धः भगवदनुगृहीतो वा भगवतैवानुज्ञातो देवा यथोऽत्र स्थास्यन्तीति सान्दिश्य तैर्वृतः सन् दिवं ययौ भगवांस्तु स्वस्थान एव वर्त्तत इति नात्र प्रत्यापत्तिः कर्त्तव्या ॥ २८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे
चतुर्विंशाऽध्याय विवरणम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नानारसौघाः क्षीरादिवाहिन्यः अकृष्टपच्याः कर्षणं विनैव पक्वा ओषधयो यत्र ते गिरयः उन्मणीन् उत्कृष्टान् मणीन् अबिभ्रन् अबिभरुः ॥ २६ ॥

एतानि भूतानीति शेषः ॥ २७—२८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमे सप्तविंशोऽयं सङ्गतः सङ्गतः सताम् ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवनिकायेषु केतव इव दर्शनीयाः मुख्याः ब्रह्मशिवादयः तं श्रीगोविन्दं तुष्टुवुः अद्भुतपुष्पवृष्टिभिः व्यवाकिरन् विविधः प्रकारैः अवाकिरन् त्रयो लोकाः परामुत्कृष्टां निर्वृतिमानन्दमवाप्नुवन् गावः गां पृथ्वीं पयोभिर्द्रुतामार्द्रामनयन् चक्रुरित्यर्थः ॥ २५ ॥

सरितः नानारसौघाः क्षीरादिवाहिन्यः आसन् मधूनि स्रवन्तीति ते तथा वृक्षा आसन् अकृष्टपच्याः कर्षणं विनैव पक्वा ओषधयो व्रीह्यादयो येषु ते गिरयः गर्भस्थानपि उत् उद्गतान् बहिः प्रकटान् मणीन् अबिभ्रन् अबिभरुः ॥ २६ ॥

एतानि भूतानि ॥ २७ ॥ २८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तविंशाऽध्यायार्थप्रकाशः ॥ २७ ॥

---

भाषा टीका ।

देवतन में मुख्य जे हैं ते श्रीकृष्णचन्द्र की स्तुति करत भये, अद्भुत पुष्पन की वर्षा करत भये, या समैं तीनों लोक परम आनन्द कूं प्राप्त होत भये और गायें दूधतें धरती कों भिजोवत भईं ॥ २५ ॥

नदीं अनेक प्रकार के रसन कूं बहावत भईं और वृक्षन में ते मधु की धारा चुवति भईं बिना जोते खेत आपही पकत भये, पर्वत जे हैं ते उत्तम २ मणीन को धारण करत भये ॥ २६ ॥

हे कुरु नन्दन ! हे तात ! श्रीकृष्ण के गोविन्दाभिषेक भये पै, स्वभावही ते क्रूर जो सिंह व्याघ्रादिक जंतु हैं ते सब परस्पर में वैर कों त्यागत भये ॥ २७ ॥

या प्रकार गौ और गोकुल के पति श्रीकृष्णचन्द्र कों गोविन्दाभिषेक करिकैं आपकी आज्ञा पायकैं इन्द्र देवतन सहित स्वर्ग कूं जातो भयो ॥ २८ ॥

इति श्रीमद्भागवत दशमस्कन्ध में सत्ताईसवें अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २७ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्तविंशोऽध्यायः ॥ २७ ॥

---

## ॥ अष्टाविंशोऽध्यायः ॥

—:*:—

श्रीशुक उवाच ।

एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
स्नातुं नन्दस्तु कालिन्द्या द्वादश्यां जलमाविशत् ॥ १ ॥
तं गृहीत्वाऽनयद्भृत्यो वरुणस्यासुरोऽन्तिकम् ।
अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥ २ ॥
चुक्रुशुस्तमपश्यन्तः कृष्णरामेति गोपकाः ।
भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम् ।
तदन्तिकं गतो राजन्! स्वानामभयदो विभुः ॥ ३ ॥
प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्यया ।
महत्या पूजयित्वाऽऽह तद्दर्शनमहोत्सवः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाविंशे ततो नन्दानयनं वरुणालयात् ।
वैकुण्ठदर्शनं चाथ गोपानामनुवर्ण्यते ॥
गोवर्धनं समुद्धृत्य वशे कृत्वाऽमरेश्वरम् ।
नन्दानयनतः कृष्णो वरुणं च वशेऽनयत् ॥ १ ॥

कलामात्रायां द्वादश्यां पारणादरातिनिवेशेनासुरीं वेलामविज्ञायारुणोदयात्पूर्वमेव शास्त्रबलेन निश्युदकं प्रविष्टं तदनभिज्ञो वरुणस्य भृत्योऽनयदिति, तथा च शास्त्रम्—

कलार्धां द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि ।
आमध्याह्नाः क्रियाः सर्वाः कर्तव्याः शम्भुशासनात् ॥

इत्यादि. वक्ष्यति च वरुणः, "अजानता मामकेन" इति भगवद्धर्ममजानतेत्यर्थः ॥ २ ॥

स्वानां भगवद्धर्मपराणामभयदो मा भैष्टेत्यभयं ददत् ॥ ३ ॥
सपर्ययाऽर्हणेन ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसङ्गादद्भुतचरितमेवानुवर्णयन् आदौ ऐश्वर्यमदानर्थतामेव दर्शयन् इन्द्रस्येव वरुणस्यापराधं वक्तुं तत्प्रसङ्गमारभते—एकादश्यामित्यादिना मुदमित्यन्तेन । एकादश्यां वृद्ध्या ह्रासेन वा किञ्चिन्मात्रनिष्क्रान्तायां तस्यां पट्प्रहरावेव तदद्यतनकालं व्याप्येत्यर्थः । द्वादश्यां पारणाद निःक्रान्ते किञ्चिद् द्वादश्यादिप्रहरद्वयावसरतदद्यतनकाल इत्यर्थः । किञ्च सम्यक् अभितोऽर्चयित्वा परमभागवताप्रचर्येण यथाविधि सजागरणपूजाविशेषं कृत्वेत्यर्थः । जनैः भक्तैरर्च्यते अतृप्ततया नित्यं भक्त्यर्थं याच्यत इति तथा तम् इति परमकृतार्थस्यापि तस्य निराहारत्वेन समभ्यर्चने हेतुः अत एव कालिन्द्यां भगवद्भक्तिविवर्धिन्यां स्नातुं जलमाविशत् तुशब्देनान्यो नाविशत् किन्तु गृह एव सस्नाविति व्यञ्जयित्वा तस्य यमुनास्नानाग्रहं बोधयति ॥ १ ॥

असुर इति जात्यैव वैष्णवधर्माज्ञत्वमुक्तं तथाऽऽसुर्यां वेलायां जलरक्षणे वशिष्ठस्य तस्यैव योग्यत्वं च दर्शितं वरुणस्य भृत्य इति तस्यापि दोषापत्तिः अवज्ञाय अनादृत्य ॥ २ ॥

चुक्रुशुरित्यर्धकम्। गोपकाः महाराजस्य तस्य चतुर्दिक् रक्षका जनाः ॥ तत्क्रोशनं दूरगोपि उप समीप एव श्रुत्वा पितरं वरुणाहृतं च ज्ञात्वेति शेषः तदन्तिकं गतः तत्र कैमुत्येन हेतुः विभुर्व्यापक इति स्वानां गोपजातिमात्राणामभयदः किम्पुनः पितुरित्यर्थः ॥ ३ ॥

हृषीकेशं सर्वेन्द्रियप्रवर्तकम् इतीन्द्रियवृत्त्यगोचरमपि प्राप्तं वीक्ष्य निकटमागतं ज्ञात्वेत्यर्थः। ततश्चोपव्रज्येति ज्ञेयं लोकपाल इति महासपर्यया सामर्थ्यं द्योतितं ततस्तदैव लोकपालत्वं सफलं वृत्तमिति च, तद्दर्शनेन महानुत्सव आनन्दो यस्येति तादृशपूजने हेतुः, एतदुक्तं भवति; पूर्वं श्रीभगवतो दुर्जनानुचरं तस्मिन् क्रोध एव जातः सङ्कल्प तु तं समयतायामपि नातिव्यग्रं सदयमवलोकितयोपव्रजन्तं च दृष्ट्वा निश्चितस्वाभीष्टलब्धितया तस्य तत्र क्षमाबलितबुद्धिर्जाता ततश्च तस्य तद्दर्शनमहोत्सवो जातः ततश्च स्तुतिपूजादिकं तेनारब्धमिति ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ वरुणदूताहृतनन्दानयनस्वलोकप्रदर्शनात्मकं कर्मानुवर्णयत्यष्टाविंशेन—एकादश्यामिति। कदाचिन्नन्द एकादश्यां निराहारो जनार्दनं सम्यगभ्यर्च्य कलामात्रावशिष्टायां द्वादश्यां पारणाभिनिवेशेनासुरीमसुरसञ्चारसहचरितां वेलामर्द्धरात्ररूपामविज्ञायैव तदा स्नातुं कालिन्द्याः यमुनायाः जलमाविवेश प्रविष्टः॥ १॥

तं निश्युदकं प्रविष्टं नन्दं वरुणस्य भृत्यः असुरो गृहीत्वा वरुणस्य समीपमनयत्॥ २॥

ततः प्रभाते तं नन्दमपश्यन्तो गोपाः हे कृष्णराम! इति चुक्रुशुः रुरुदुःप्राजुहावुर्वा तदा भगवांस्तदाक्रोशनं वरुणाहृतं नन्दं च श्रुत्वा ज्ञात्वा चेतिशेषः। हे राजन्! स्वानामभयदः विभुः समर्थः। हेतुगर्भमिदम् एवंविधत्वात्तस्य वरुणस्यान्तिकं गतः॥ ३॥

तदा लोकपालो वरुणः स्वान्तिकं प्राप्तं कृष्णमवलोक्य तस्य दर्शनमेव महानुत्सवो यस्य तथाभूतो महत्या सपर्यया पूजयासाधनेन पूजयित्वाऽब्रवीत्॥ ४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भक्तजनानुकम्पार्थोऽयमवतारो नात्मार्थम् इति दर्शयितुं वरुणपाशान्नन्दगोपमोचनं नन्दादीनां स्वलोकप्रदर्शनञ्च कथयत्यस्मिन्नध्याये, शुक इति। तत्र वरुणपाशग्रहणं कथं नन्दस्याऽभूदितीदं वक्तुमारभते—एकादश्यामिति। यतन्नाहारो नास्तीति निराहारः॥ १॥

आसुरीं वेलां निशीथकालम्॥ २॥

वरुणभृत्येनाहृतमपि वरुणाहृतमिति वचनं वरुणस्य स्वामित्वात् भृत्यापराधे स्वामिनो दण्ड इति यथा तथा युज्यत इत्यर्थः॥ ३॥ ४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एकादश्यां स्वल्पमात्रैकादश्युपलक्षितपट्प्रहरतदुत्तरतद्यतनकालं व्याप्येत्यर्थः। द्वादश्यां पारणाऽनिष्क्रान्तकिञ्चिद्द्वादश्यादिप्रहरद्वयारब्धतद्यतनकाल इत्यर्थः। तुशब्देनान्यो नाविशदिति व्यज्य तस्य तादृशभगवद्धर्मतत्त्वज्ञतां बोधयति अवज्ञाय अनादृत्य तत्कोशनमुपश्रुत्य पितरञ्च वरुणाहृतं विज्ञायेति शेषः॥ १—४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पञ्चविंशे तु वरुणान्नन्दं मोचयिता हरिः।
ततः सर्वान् स्ववैकुण्ठे नेष्यतीत्युच्यते कथम्॥
अभिषेकश्च तैरुक्तो देवाः स्तोत्रादिकं श्रुतम्।
ज्ञाते देवोत्तमत्वे तु द्रष्टव्यं पौरुषं परम्॥
अन्यथा नन्दविज्ञानं भवेत्पर्यवसायि तत्।



अतस्तं निग्रहो वाच्यो वरुणस्तेन सेवकः॥
कालाद्युपासकश्चेत्स्यात् भगवत्सेवकः क्वचित्।
ततः कुशमवाप्नोति कृष्णादेव च मुच्यते॥
ततो माहात्म्यविज्ञानं पूर्णं तस्य भविष्यति।
ततश्चिन्तनमात्रेण भगवान् स्वपदं नयेत्॥

भगवतः सम्पूर्णमाहात्म्यज्ञानार्थं निरुद्धानां वैकुण्ठे गमनमुच्यते तदर्थं प्रथमं धर्मबुद्ध्या मर्यादायां प्रवृत्तस्य सर्वथा भगवन्तमभजतो नन्दस्यानर्थसम्बन्धमाह—एकादश्यामिति। स हि विष्णुव्रतपरायणः धर्मनिष्ठश्च अन्यस्य माहात्म्यज्ञानं न स्यादिति तथोच्यते माहात्म्यज्ञापनार्थमेव नयनम् अतो न वरुणो निगृहीतः एकादश्यां निराहारः सन् जनार्दनं मोक्षदातारं सम्यगभ्यर्च्य नन्दः व्रते स्वधर्ममपि कर्तुं वैष्णवं पक्षमाश्रित्य वैदिकपक्षं त्यक्त्वा अर्द्धरात्रसमये द्वादश्यां जातायां कालिन्द्यां प्रवाहमध्ये जलमाविशत्—

"मुहूर्तार्द्धावशिष्टायां द्वादश्यां पारणां प्रति।
निशीथात्सम्यगुत्थाय क्रियाः कुर्याद्यथोचितम्॥
अग्निहोत्रादिकर्माणि तथा नैमित्तिकानि च।
आमध्याह्नात् क्रियाः सर्वाः कर्तव्याः शम्भुचोदनात्"॥

इति वैष्णवधर्मविश्वासात् स्नातुं प्रवृत्तः॥ १॥

तदा रक्षको वरुणस्य सेवकः अन्यायं करोतीति मत्वा वैष्णवधर्मापरिज्ञानात् तं बध्वा नीतवानित्याह—तं गृहीत्वेति। वरुणस्यैव भृत्यः वरुणस्यान्तिकमनयत् तस्य नयने अभिप्रायमाह—अविज्ञायेति। सा हि आसुरी वेला यस्तत्र धर्मं करोतीति तदसुरगामि भवतीति इममर्थं नन्दः अज्ञात्वा जलं प्रविष्ट इति विज्ञापयत् वस्तुतः अयमपि न जानाति यदग्रे वक्ष्यति वरुणः अजानतेति॥ २॥

ततस्तं मोचयितुं सर्वे गोपालाः चुक्रुशुः—कृष्णरामेति। अकस्माज्जले प्रविष्टः पश्चान्न दृष्ट इति तं नन्दमपश्यन्तः सर्वावस्थासु सर्वकार्येषु चोपायान्तरमलभमानाः भगवन्तमेव विज्ञापयन्ति यतो गोपकाः अल्पा गोपाः तदा भगवान् गृह एव स्थितः शयानः दूरादेव कृष्णरामेति वचनमाकर्ण्य पिता वरुणेन हृत इति ज्ञात्वा इत एव वरुणान्तिकं गतः प्रार्थयित्वा गतः अन्यथा महद्भयं स्यात् भगवान्निरोधलीलामेतदर्थं कृतवान् यत्सर्वकर्मसु स्वयं प्रविष्टः तानि कर्माणि स्वकर्माणि कृत्वा तेभ्यस्तान्मोचयति अन्यथैवं न कुर्यात् तत्साधनदशायां फलदशायां च वक्तव्यम् आवश्यकफले पूर्वकृते कर्मणि सति कर्मणो निवृत्तत्वान्न प्रवेशः सम्भवतीति अतो वरुणस्यान्तिकं स्वयमपि गतः अन्यथा वरुणमेवाऽऽकारयेत् नन्दं वा आकर्षेत् माहात्म्यं च ज्ञापनीयम् अतः स्वयमेव गतः राजन्निति सम्बोधनं राजधर्म एतादृश इति ज्ञापयितुम् अनुपेक्षणीयाः सेवकाः इति। किञ्च, स्वानामभयदः यदि शीघ्रं न गच्छेत् इदानीं भक्तानां भयं न निवर्तेत विभुरिति सर्वप्रकारेणापि सर्वं कर्तुं समर्थः न हि भूमावतीर्णः अत्रैव किञ्चित्करोति नान्यत्रेति अन्यथा लीलाया अन्ते तान् वैकुण्ठे न नयेत् अवतारान्तरवत् अतः कृष्णः सर्वत्र सर्वसामर्थ्ययुक्तः॥ ३॥

ततो यज्जातं तदाह—प्राप्तं वीक्ष्येति। ननु, पूजात्र न वक्तव्या

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मोचयितुमेव गतः अपकारिगृहे च पूजा न ग्राह्या अतः कथं पूजां कृतवानित्याशङ्क्याह–अकर्णाप्तं समागतं भगवन्तं वीक्ष्य पूजयामास तत्र हेतुः, हृषीकेशमिति । इन्द्रियाधिपतिरयं यदि न पूजयेत् तल्लोकभोगः पश्चात्तस्य न स्यात् अनिवेदिते भोगे दोषश्च स्यात् यथा देवेष्विन्द्रः एवं दैत्येषु वरुणः यद्यत्रैव तां श्रियं गृह्णीयात् दैत्या न हता भवेयुः अतस्तत्रैव गत्वा गृहीतवान् अन्यथा भिन्नसत्ताके जाताः पदार्थाः भगवद्भक्तानां शुद्धिहेतवो भवेयुः, जीवास्तु त्रिविधा एव देवमानुष्यदानवा इति तत्र मानुष्या आकृत्या देवोऽभिषेकेण दैत्येश्वरपूजां च गृहीतवान् अतस्तस्मिन् समये सर्वमेव पुष्ट्युपयोगिफलसाधकं च भवति तस्य सर्वस्वनिवेदनपूर्विकां पूजामाह–लोकपालः सपर्ययेति । स हि सर्वेषामेव दैत्यानां लोकान् पाति अतः स्वस्य यावती सपर्या पूजा सामग्री ततोऽप्यधिका कृता अग्रे जायमानमपि भोगं मध्ये निवेद्य पूजां कृतवान् तदाह, महत्येति । न केवलं कायिकीमेव सेवां कृतवान् किन्तु वाचनिकीमपि "मनः पूर्वरूपं वागुत्तररूपम्" इति मानसिकं तत्रैव प्रवेक्ष्यतीति वक्ष्यमाणमाह—किञ्च, तस्य दर्शनेनैव महानुत्सवो यस्य समागमे महानाह्लादः मानसिकी पूजा स्तुतियोग्यः स्तुतिं कुर्यात् भगवद्गुणवर्णनम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टाविंशेऽभवन्नन्दाहरणं वरुणस्तुतिः ।
गोपानां विस्मयौत्सुक्यं ब्रह्मवैकुण्ठदर्शनम् ॥
इन्द्रस्यागश्च तत्त्वातिमुक्त्वा स्वस्मृतिमागते ।
वरुणस्यापि ते वक्तुमाह लीलान्तरं मुनिः ॥

जलमाविशदित्यरुणोदयादपि पूर्वं कलामात्रावशिष्टायां द्वादश्यां पारणाप्राप्त्यर्थं शास्त्राज्ञावलेनैवेति ज्ञेयं, तथा च शास्त्रम्

कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि ।
आमध्याह्नाः क्रियास्सर्वाः कर्त्तव्याः शम्भुशासनात् ॥

इति ॥ १ ॥

वरुणस्य भृत्योऽसुरः वरुणस्यान्तिकम् अनयत् तत्र हेतुः आसुरीं वेलामविज्ञाय उदकं प्रविष्टमित्यज्ञानेनैव तस्मिन् दोषकल्पनं श्रीनन्देन तु शास्त्राज्ञावलेनैवोदके प्रविष्टत्वात् अत एवाग्रे वक्ष्यते "अजानता मामकेन मूढेन" इति ॥ २ ॥

गोपकाः स्नानार्थं रात्रौ गतस्य तस्य रक्षकाः तत् क्रोशनम् उपश्रुत्य तदानीं दूरतः पुष्पशय्यायां शयानोऽपि निकट एव श्रुत्वेति तस्य सर्वदेशवर्त्तित्वात् पितरं वरुणाहृतं ज्ञात्वेति शेषः तदानीमेव रक्षकगोपानां निकटमेत्य क्व मे तातो निममज्जेति (पृ) दृष्ट्वा तत्रैव तटात् सभ्रूंपं निमज्य तदन्तिकं वरुणान्तिकं गतः स्वानामभयदः ततः सकाशात्तन्दमानीय ज्ञातीनामभयं दास्यन्नित्यर्थः ॥ ३—४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टाविंशेऽध्याये वरुणलोकाच्छ्रीनन्दानयनं ब्रह्महृदे गोपानां परमधामदर्शनं च वर्णयति—एकादश्यामिति—

यानि कानि च पापानि ब्रह्महत्याशतानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥
रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥
एकादशीव्रतं यस्तु भक्तिमान् कुरुते नरः ।
स याति परमं स्थानं यत्र देवो हरिः स्वयम् ॥

इत्यादिशास्त्राज्ञया एकादश्यां नन्दो निराहारः जनार्दनमभ्यर्च्य द्वादश्यां यदा व्रतं तत्पारणं त्रयोदश्यां भवति "त्रयोदश्यां तु पारणम्" इत्यादिवचनात् एकादशीव्रतपारणं तु द्वादश्यामेव "न द्वादशीमतिक्रमेत्" इत्यादिवाक्यात् इत्येवं निर्णयवित् कदाचिदल्पायां द्वादश्यां पारणार्थे—

"कलार्द्धां द्वादशीं दृष्ट्वा निशीथादूर्द्ध्वमेव हि ।
आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भुशासनात्" ॥

इति शास्त्रबलेन निशीथात्कलार्द्धादित्योदयपर्यन्तकाले एव आमध्याह्नक्रियासमाप्तिकाम आसुरीं वेलामविज्ञाय निशीथादुपरि द्वादश्यां स्नातुं कालिन्द्याः जलमाविशदित्यर्थः ॥ १ ॥

एवमासुरीं वेलामविज्ञाय निशि उदकं प्रविष्टं श्रीनन्दं गृहीत्वा वैष्णवधर्मानभिज्ञो वरुणस्य भृत्योऽसुरः वरुणान्तिकमनयत् ॥ २ ॥ ३ ॥

लोकपालो वरुणः सपर्ययाऽर्हणेन ॥ ४ ॥

---

भाषा टीका ।

ॐ वरुणपूजिताय नमः ।

श्रीशुकउवाच ।

श्रीशुकदेवजी बोले, कि—नन्दबाबा ने एकादशी के दिवस निराहार व्रत करयो और जनार्दन भगवान् को पूजन कियो' और द्वादशी के दिन अरुणोदय तें पहिले स्नान करिबे कूं श्रीकालिन्दीजी के जलमें प्रवेश करत भये ॥ १ ॥

नन्द बाबा ने आसुरी वेला नहीं जान कें रातिमें जल में प्रवेश कियो तातें वरुण को भृत्य ( सिपाही ) असुर जोहो सो नन्द बाबा कूं पकरि कें वरुण के समीप ले जात भयो ॥ २ ॥

बाबा को नहीं देखि कें साथ के गोप "हे राम हे कृष्ण" ऐसें चिल्लावन लगे । या बात कों भगवान् श्रीकृष्णचन्द्र नें सुनी, कि–पिता कों वरुण को नोकर पकरि ले गयो, तब हे राजन् ! अपने जनन कों अभय देन वारे प्रभु वरुण के समीप जात भये, ॥ ३ ॥

लोकपाल श्रीवरुणजी श्रीकृष्णचन्द्र कों देखिकें बड़ी भारी सामग्री तें पूजा करि कें श्रीकृष्ण के दर्शन तें बड़े उत्सव को प्राप्त होय कें श्रीकृष्णतें बोलत भये ॥ ४ ॥

---

वरुण उवाच ।

अद्य मे निभृतो देहोऽद्यैवार्थोऽधिगतः प्रभो ! ।
* (अक्ष्णोर्वाचश्च साफल्यं तव मे दर्शनाद्विभो ! )
(१ त्वत्पादभाजो भगवन्नवापुः पारमध्वनः ॥ ५ ॥
नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ।
न यत्र श्रूयते माया लोकसृष्टिविकल्पना ॥ ६ ॥
अजानता(२) मामकेन मूढेनाकार्यवेदिना ।
आनीतोऽयं तव पिता(३) तद्भवान् क्षन्तुमर्हति ॥ ७ ॥
(४)ममाप्यनुग्रहं कृष्ण! कर्तुमर्हस्यशेषदृक् ।
गोविन्द! नीयतामेष पिता ते पितृवत्सल! ॥ ८ ॥
(५)(प्रजा वयमनुग्राह्यास्सापराधा अपि प्रभो ! )॥ ० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अद्येदानीं मे मया देहो निभृतो धृतः यदा त्वद्दर्शनं जातं तदैव देहसाफल्यं प्राप्तमित्यर्थः । यद्वा, निभृतः पूर्णमनोरथ इत्यर्थः । किञ्च, अद्यैवार्थोऽधिगतः सर्वरत्नाकरपतिनापीतः पूर्वं नैवंविधोर्थः प्राप्त इत्यर्थः । किञ्च, संसारोपि निवृत्त एवेत्याशयेनाह–त्वत्पादभाज इति । अध्वनः पारं मोक्षम् ॥ ५ ॥

भगवते निरतिशयैश्वर्याय ब्रह्मणे पूर्णाय परमात्मने सर्वजीवनियन्त्रे तत्र हेतुः न यत्रेति लोकसृष्टिं विकल्पयति या माया सा यत्र न श्रूयते अविद्यमानेव तिष्ठतीत्यर्थः ॥ ६ ॥

अजानता मद्भृत्येन त्वत्पित्राहरणं यत्कृतं तदिति ॥ ७ ॥

नन्दं विमुच्य समर्पयति–गोविन्देति ॥ ८—९ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रभो, हे जगदीश्वर ! इति परमश्लोक्यादिकमुक्तं अवापुः अवहेलनेन लेभिरे अन्यत्रैः तत्र पूर्णमनोरथ इति पक्षे मे ममेति पूर्णौ मनोरथौ यत्रेति च व्याख्येयम् । यद्यपि पूर्वस्य हेतुवाक्यमुत्तरार्द्धं तथापि अस्यार्थस्यापि लाभादित्यभिप्रायेणाह–किञ्च, संसारोपीति । यद्वा, नितरां भृतः मुहुर्देहधारणस्य फलमद्यैव सम्यक् लब्धमित्यर्थः । कुतः ? अर्थः परमविचारेणार्थो नाम यः सोऽद्यैव मया प्राप्तः तत्र हेतुः त्वत्पादभाजस्त्वच्चरणकमलं प्राप्तवन्त एवाध्वनः प्राप्य परम्परया अन्तं अव समन्तादापुरिति तदेव स्वयं भगवत्त्वादिति भावः ॥ ५ ॥

अतस्तन्माहात्म्यं वर्णयन् भक्त्या प्रणमति–नम इति । भगवते पूर्णषड्गुणैश्वर्येण स्वलोकादौ विराजमानाय परमात्मने सर्वान्तर्यामिरूपाय ब्रह्मणे कश्चिदधिकारिणि अप्रकाशिततत्तच्छक्तये "सत्यं ज्ञानमनन्तम्" इत्येवं केवलं प्रकाशमानाय न च मायया तत्तद्रूपत्वमित्याह–न यत्रेति । तत्र हेतुमाह–लोकेति । जीवानामेवं सृष्टिं विविधतया कल्पयितुं शक्नोति न चेश्वरे त्वयि प्रभवतीत्यर्थः । एवं चैश्वर्यरूपगुणादिभेदविवक्षादिपक्षा स्वरूपशक्तिरन्यास्तीति वर्णितम् अत एव तादृशस्य तव निजगृहाभ्यन्तर एव सन्दर्शनेनाद्य परमकृतार्थोऽस्मीति तात्पर्यम् ॥ ६ ॥

अतो महापराधोऽपि मे त्वया क्षन्तुं युज्यत एवेत्याह–अज्ञानतेति । यतो मूढेन मूर्खेण । ननु, कथं तर्हि रात्रिस्नानदोषं ज्ञात्वा मत्पिता नीतः ? तत्राह, अकार्यं कर्त्तुमयोग्यमेव वेदितुं शीलमस्येति तथा तेन । यद्वा, त्वत्पितेत्यजानता । किञ्च, मूढेन भगवद्धर्मज्ञानहीनेन चेत्यर्थः । न केवलं मूढेन परमदुर्बुद्धिना चेत्याह—अकार्येति । अकार्यमसत्कार्यम् अयमिति स्वगृहे रक्षितं तमञ्जलिप्रसारणया निकट(मे)मिव तं निर्दिशति—स्वगृहे एव रक्षितत्वे हेतुः तव पितेति यत्तूक्तं द्वितीये "नन्दं च मोक्ष्यति भयाद्वरुणस्य पाशात्" इति तत्र च पाशात् यद्भयं तस्मात् विमोक्ष्येति नतु पाशात् इति पाशसम्बन्धो निरस्तः तत् आनयनागः । ननु, महापराधो ऽयं क्षन्तव्यो न स्यात् ? तत्राह–प्रभो, हे परमसमर्थ ! त्वया सोऽपि क्षन्तुं शक्यत इति भावः । यद्वा, हे अस्मत्स्वामिन् ! अतो दासानामस्माकम् अपराधः सर्व एव त्वया क्षन्तुं युज्यते एवेति भावः । तद्भवान् क्षन्तुमर्हतीति क्वचित् पाठः ॥ ७ ॥

ततश्च तदैव गृहमानीय तं दर्शयन्नाह—गोविन्देत्यर्द्धकेन । तत्र गोविन्देति महापराधिनापीन्द्रेण कृतस्य गोविन्दतयाभिषेकस्य स्वीकारेण परमकारुण्यादिकं सूचितम् हे पितृवत्सलेति पितृपुत्रौ तोषयति–तथा वयमेतज्जानीम एव स्वगृहे परमीदृशभागधेयाकाङ्क्षयैतावन्तं चायं रक्षित आसीदिति व्यञ्जयन्ति ॥ ८ ॥

* इति श्लोकार्द्धमधिकं पठ्यते वीर० । (१) यत्पाद इति विज० सुदर्श० । (२)दरात्पितरम् (३) तत्प्रभो (४) पितैष ते मया नीतो यन्नस्त्वत्पाद दर्शनम् । इति च वीर०पाठः (५) इत्यर्द्धमधिकंपठ्यतेऽत्र

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

लोकानां सृष्टिं चिदचितां सृष्टिं विकल्पयति, या माया प्रकृतिः यत्र न स्वकार्यकारिणीत्यर्थः ॥ ६—१३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह—अद्येति पञ्चभिः । हे प्रभो ! अद्याधुना मे मया देहो निभृतः धृतः यदा त्वद्दर्शनं जातं तदैव देहसाफल्यं प्राप्त इत्यर्थः । यद्वा, निभृतः पूर्णमनोरथ इत्यर्थः । किञ्च, अर्थोऽद्यैवाधिगतः सकलरत्नाकरपतिनापीतःपूर्वं नैवंविधः पुरुषार्थः प्राप्त इत्यर्थः । तथाममाक्षयोः साफल्यं दर्शनाज्जातं त्वद्दर्शनान्मम मुक्तिरपि करस्थेत्यभिप्रायेणाह—हे भगवंस्त्वत्पादं भजन्तीति तथा तेपि संसाराध्वनः पारं त्वामापुः किमुत त्वद्दर्शनमागहमिति भावः ॥ ५ ॥

एवं स्वकृतार्थतामाविष्कृत्याथ क्षमापयिषुकामः क्षमाहेतुः केवलमञ्जलिमुद्रैवेत्यभिप्रयन्नसाधारणगुणैर्विशिंषन्नमस्करोति-नम इति । पूर्णषाड्गुण्याय स्वरूपेण गुणैश्च निरतिशयबृहते लोकत्रयान्तः प्रविश्य व्याप्यगतधर्मास्पर्शाभ्यां नियन्त्रेऽमर्त्रे च तुभ्यंनमः यत्र त्वयि लोकस्य जीवलोकस्य दृष्टिं ज्ञानं विकल्पयति विविधं कल्पयति गुणप्रयोन्मेषानुगुणकर्मरुचिजननद्वारा ज्ञानसङ्कोचविकासादिहेतुर्माया न श्रूयते नास्नापि न श्रूयते न सुतरां स्वकार्यक्षमेति भावः । लोक सृष्टीति पाठे लोकसृष्टिं देवमनुष्यादिशरीरसृष्टिं नानाविधां कल्पयतीति तथा देवमनुष्यादिशरीररूपेण विक्रियमाणा यत्र त्वयि न श्रूयते तस्मै अप्राकृतस्वेच्छोपात्तदेहाय तुभ्यमित्यन्वयः ॥ ६ ॥

अथ स्वापराधं निवेदयन् क्षमापयति—अजानतेति । अकार्यवेदिना कार्यावेदिना विवेकशून्येनेति यावत् मूढेनाज्ञेन त्वत् पितरमजानेन । त्वत्प्रभावानभिज्ञेन मामकेन मद्भृत्येन तव पिता आनीत इति यत्तदिदं त्वं क्षन्तुमर्हसि हे प्रभो निग्रहानुग्रहसमर्थ ! ॥ ७ ॥

वयस्मादेव तव पिता मया आनीतोऽत एव हि दुर्लभमपि त्वद्दर्शनं नोऽस्माकं जातं भृत्यकृतापराधोपि महाफलाय बभूव हेति भावः । इत्युक्त्वा नन्दं समर्पयति । गोविन्देति हे गोविन्द हे पितृवत्सल एष तव पिता नीयताम् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मे मया विधृतो देहोऽद्य सफलो जात इति शेषः । अर्थः पुरुषार्थः कथं तदिति तत्राह—यत्पादेति । अध्वनः पारं संसारसमुद्रस्य मार्गस्य तीरान्तरम् अद्धा साक्षान्नेतेत्यर्थः ॥ ५ ॥

अज्ञाणे देशादितोऽपरिच्छिन्नाय लोकदृष्टिं विकल्पयतीति लोकदृष्टिविकल्पना विपरीतज्ञानापादिकेत्यर्थः माया बन्धकशक्तिः परमात्मने उत्कृष्टानन्दस्य दात्रे ॥ ६ ॥

अकार्यवेदिना कार्यज्ञाणी न भवतीति ॥ ७ ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निभृतः भृतः अत्रैव सम्यक् साफल्यात् कुतः अर्थः परमविचारेणार्थो नाम यः सोऽद्यैव मया प्राप्तः तत्र हेतुः त्वत्पादभाजः त्वच्चरणकमलं प्राप्तवन्तः एवाध्वनः पारं प्राप्य परस्परया अन्तम् अव समन्तात् आपुरिति तवैव स्वयं भगवत्त्वादिति भावः ॥ ५ ॥ ६ ॥

अयमादरणीयत्वेन निजाग्रत एव वक्ष्यमाणः "नन्दश्च मोक्ष्यति भयात् वरुणस्य पाशात्" इति पाशाद् भयं यस्मात् नतु पाशादित्यर्थः ॥ ७—६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत्रालौ लोपकारमात्रं वक्तव्यं भवतस्तदेवाह—अद्य मे विधृतो देह इति । यद्यपि देवयोनिः प्राप्ता तथाप्याधिपत्यं दैत्येषु अतस्तत्सङ्गान्नभगवत्परता भवति अतः प्राप्ताप्युत्तमा योनिरप्राप्तप्राया तदिदानीं स्वामिदर्शनात् जाते फलेसाधनाभावेऽपि सफलजन्मत्वं तदाह—अद्यैव मे मया विशेषेण धृतो देह इति साधनपरत्वं निराकुर्वन् हेतुमाह—अद्यैवार्थः पुरुषार्थः प्राप्त इति । ननु, साधनाभावे कथं फलं भवेत् ? साधने च पुनरङ्गक्रियमाणे अद्यैवेति वचनं बाधितं स्यात् तत्राह—प्रभो इति । समर्थो भवान् साधनाभावेऽपि फलं दातुं साधनतापि स्वकृतैवेति । ननु, कथमेवमलौकिकं भवेत् तत्राह ? यत्पादभाज इति, स्वत्सेवकानामेवालौकिककर्तृत्वं यत्र तत्र त्वयि किं वक्तव्यमिति यस्य भगवतश्चरणारविन्दे ये भजन्ति ते अध्वनः पारमवापुः नातः परं गन्तव्यमस्ति लोके चरणसमागताः गच्छन्ति यथा पातुकादयः अन्यथा तांश्चरणेनानयेत् अतो यथेतद्विपरीतम् एवं फलमपि अत एव स्वामिदर्शनं भक्तिः पूजेत्यपि साधनं भवतीति निराकृतम् आनन्दनिधेरन्यस्य प्राप्तव्यस्याभावात् ॥ ५ ॥

अतः सफलजन्मवता प्राप्तफलेन भगवति यत्कर्त्तव्यं तदाह, नमस्तुभ्यमिति । नमस्कारो न जीवानां कर्त्तव्यः तुल्यत्वात् देहादेरागन्तुकत्वात् अतो भगवानेव नमस्कर्त्तव्यः सोऽपि सर्वसिद्धान्तसिद्धश्चेत् विवादे (पु) सत्सु विपयर्यैवत्यमेव कल्पनीयमतः श्रुतिस्मृतिपुराणेषु यत्रैकवाक्यता स नमस्कर्त्तव्यः तत्रापि यदि तथानुभवो न भवेत्तदा महतामप्यन्तःकरणं प्रमाणमिति नमस्कर्त्तव्यो न भवेत् अतश्चतुष्टयमाह—तुभ्यमिति । साक्षात्ताय भगवत इति वैष्णवसिद्धान्तसिद्धाय ब्रह्मण इति औताय परमात्मन इति स्मार्त्ताय श्रुतिव्यतिरिक्तपक्षेषु मायायाः सृष्ट्युपयोगः करणत्वेन प्रधानत्वेन वा पाषण्डेषु निमित्तत्वेनापि सा चेद्भगवति नास्ति तदा तत्कृता दोषाः कामादयः सुतरामेव न भवन्ति तत आत्मन आत्मत्वस्य सिद्धत्वात् दोषाणामभावाच्च न किञ्चिद्विज्ञाप्यमित्यभिप्रायेणाह—न यत्र श्रूयते मायेति । लोकानां सृष्टयर्थं सृष्टिरूपेण वा विशेषेण कल्पनं यया सा कार्यकारणरूपिणी सर्वा चेन्निषिद्धा तदा न किञ्चित् विज्ञाप्यम् ॥ ६ ॥

तथापि स्वापराधो निवेदनीयः अन्यथा स्वकृतादेव नद्यैतदाह—अजानतेति । मामकेन सेवकेन अमंतस्त्वमजानता अथसंस्वर्थ वाऽजानता अयं तव पिता लीलायां पितृत्वेन कृतः समानीतः यदि स्वरूपतोऽस्मिन् उत्कर्षः स्यात्तदा अज्ञोऽपि नानयत् सम्बन्धस्तु न ज्ञातः तदज्ञानादेव वैष्णवधर्मोऽप्यज्ञातः अज्ञापने हेतुः मामकेनेति अयं दैत्यः यदि भगवद्धर्मान् जानीयात्

श्रीशुक उवाच।

एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः।
आदायागात्स्वपितरं बन्धूनां चावहन्मुदम् ॥ ९ ॥
नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम्।
कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् ॥ १० ॥
ते त्वौत्सुक्यधियो राजन्! मत्वा गोपास्तमीश्वरम्।
अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ॥ ११ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदा दैत्यत्वमेव गच्छेत ततः कोऽपि सेवको न भवेत् स्वतस्त्वस्य न ज्ञानं तत्राह—मूढेनेति। ननु, तथापि सेवकेन स्वाम्युक्तमेव कर्त्तव्यं ततः कथमानीतवान्? तत्राह—अकार्यवेदिनेति। नान्यस्य कार्यवेदनं कार्यज्ञानमस्ति किं कार्यं किमकार्यमिति अतः सामान्यत उक्तमपि कर्त्रा विशेषाकारेण कर्त्तव्यम् अतोऽस्य स्वाभाविकदोषः अयं च तव पिता वेपमानः पुरतो वर्त्तते अतः स्वामिन्! लीलागामपराधः कृतो वर्त्तते तद्भवान् क्षन्तुमर्हतीति तव पितेति वचनादपराधः सोढः लीलायां प्रविष्ट इति न हि लीलाप्रविष्टानामपराधो भवति अतो भवानित्यप्युक्तं भवानेवं क्षन्तुमर्हति नत्वहं क्षमापयितुं योग्यः गोविन्द गोपतामिति निगीतं तथाचेद्धदेद्रपराधी स्यात् ॥ ७ ॥ ८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अद्य नितरां भृतो धृतः एतावद्दिनपर्य्यन्तं सहस्रशो देहा वृथैव धृतास्त्वद्दर्शनलाभाभावादिति भावः। अर्थोऽधैवाधिगतः सर्वं रत्नाकरपतिनापि इतःपूर्वं नैवंविधोऽर्थः प्राप्त इति भावः। त्वत्पादौ भजन्त एवाध्वानः संसारस्य पारमवापुः अहन्त्वेतादृशं दर्शनमपि प्राप्त इत्यहो मद्भाग्यस्य परा काष्ठेति भावः ॥ ५ ॥

भक्त्या ज्ञानेन योगेन च त्वमेवोपास्य इत्याह—नम इति। मायाशावल्यादेव तव भगवत्त्वादीत्याचक्षाणा भ्रान्ता एवेत्याह न यत्रेति। लोकसृष्टेर्विविधकल्पनं यतः सा ॥ ६ ॥

किं भो मामेवं स्तुवन् लज्जसे? सत्यं महापराधो मे जात एवेत्याह—अजानता ज्ञावश्या अल्पत्वे अरुणोदयात् पूर्वमपि जले प्रवेष्टव्यमिति भक्तिशास्त्रानभिज्ञेन मामकेनेति भृत्यापराधेन ममैवापराध इति भावः। अतः मूढेन अकार्य्यवेदिना मम भृत्योपि मत्कार्यं न जानातीत्यर्थः। तव पिता आनीत अयमिति रत्नचतुष्किकामध्यासीनं स्वेन पूजितं स्वेष्टदेवस्मरणरतं श्री नन्दं स्वाञ्जलिना दर्शयति—क्षन्तुमर्हसीति। तव क्षमासिन्धुत्वात् मम त्वपराधसिन्धुत्वात् दण्डयिष्यसि चेत् यथेष्टं दण्डयेति भावः ॥ ७—८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

देहश्चरणस्पर्शादिना निभृतः पूर्णमनोरथः अर्थः अर्थेन किञ्च मोक्षभागप्यहमस्मीत्याशयेनाह—त्वत्पादभाज इति। त्वत्पादौ भजन्ति सेवन्ते ये ते तथा अध्वनः पारं मोक्षम् ॥ ५ ॥

एवं देहधनयोः सफलत्वमात्मनो मोक्षभाक्त्वं चाविष्कृत्याथ क्षमापयितुं नमस्करोति—नम इति। भगवते स्वाभाविकषड्गुणसम्पन्नाय ब्रह्मणे बृहत्स्वरूपगुणाय यत्र भगवति लोकेषु देवलोकमनुष्यलोकादिषु सृष्टीः देवमनुष्यादिरूपाः प्रजाः विकल्पयति स्वाश्रयोद्भवयतीत्यर्थः। सा दम्भरूपा माया न श्रयते त्वदन्ये वयं दाम्भिनः स्वस्थाने स्थिता एव भृत्यानाज्ञापयामः न त्वमिव तत्तद्गृहे गच्छाम इति भावः ॥ ६ ॥

मामकेन मद्भृत्येन ॥ ७—९ ॥

———

भाषा टीका।

वरुण उवाच।

वरुणजी बोले, कि—आप के दर्शन ते मेरो देह सफल भयो, हे भगवान्! आप के चरणन के भजिवे वारे संसार के मार्ग के पारकों प्राप्त भये हैं ॥ ५ ॥

भगवान् ब्रह्म परमात्मा जो आप हौ तिन को नमस्कार होय, जिन आप में लोकसृष्टि कल्पना वारी माया सुन वेदमें नहीं आवे, है ॥ ६ ॥

हे प्रभो! विना जाने मेरो सिपाही आप के पिता कों पकरि लेआयो, सो ये कार्य कों नहीं जानिवे वारो मूढ है या अपराध कों आप क्षमा करिवे कों योग्य है ॥ ७ ॥

हे सर्वज्ञ! हे कृष्ण! आप मोपैऊ अनुग्रह करिवे कों योग्य हौ, और हे पितृ वत्सल! ये आप के पिता हैं इन को आप ले जावो ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

अतीन्द्रियमदृष्टपूर्वं लोकपालस्य महोदयमैश्वर्यम् ॥ १० ॥

औत्सुक्ययुक्ता धीर्येषां ते अपि किं स्वगतिं स्वस्थानं सूक्ष्मां प्रधानां चोपाधास्यदुपाधास्यति नोऽस्मान्प्रापयिष्यतीति सङ्कल्पितवन्त इत्यर्थः ॥ ११ ॥

इति स्वानां स भगवान् विज्ञायाखिलदृक्स्वयम् ।
सङ्कल्पसिद्धये तेषां कृपयैतदचिन्तयत् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्येवम्भूतं स्वानां तेषां सङ्कल्पमखिलदृक् सर्वज्ञः स्वयमेव विज्ञाय तेषां सङ्कल्पसिद्धये कृपयैतद्वक्ष्यमाणमचिन्तयत् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमुक्तप्रकारेण व्यवहारेण वचनेन व्यवसायेन च । ननु, एतावन्महापराधे तावन्मात्रेणैव कथं प्रसन्नोऽभूत् ? तत्राह, भगवान् सर्वज्ञः तत्त्वतस्तद्दोषो नास्तीति विज्ञानार्हत्वात भावः भगवत्त्वे हेतुः अखिलानामीश्वरः प्रवर्त्तकः ईश्वरेश्वर इति पाठः क्वचित् ॥ ९ ॥

एवं यद्गोविन्दत्वं दर्शितं तस्यैव महिमवर्णनाय तदास्पदस्य महिमानं वर्णयति—नन्दस्त्वित्यादिना । तुशब्दो भिन्नोपक्रमे तेषां वरुणस्य तल्लोकवासिनां च विस्मित इति केवलमधुरनरलीलावेशादिति सिद्धान्तितमेव श्रीकृष्णप्रेमैव हि सर्वोत्कर्षहेतुर्न सम्पदादय इति तदपेक्षा चेत्तेऽपि हि दर्शयिष्यन्त इति भावः ॥ १० ॥

ते तादृशतन्नित्यपरिकरा अपि प्रेमविशेषेण गोपाः केवलतद्यात्त्वगोपत्वाभिमानिनः अत औत्सुक्यधियः लोकपालमात्रस्य तादृशं लोकादिवैभवम् अस्य चाऽस्मदीयरूपस्याप्यधीश्वरस्य कीदृशं स्यादित्युत्कण्ठितधियः अतः स्वगतिशब्देनात्र स्वस्थानमित्येव लक्ष्यते न तु ब्रह्माख्या सूक्ष्मामित्यनेन च न सा प्रोच्यते स्वगतिमित्यस्यैव विशेषणत्वेन प्रतीतेः शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति न्यायविरोधादस्यैव पुनरावृत्तिश्च न स्यादिति सूक्ष्मां दुर्ज्ञेयां तदेवमेषां तादृशस्वगतिदिदृक्षा च तत्प्रेम्णैव अधीश्वरताज्ञानेपि स्वाभाविकपुत्रतादिविज्ञानानुपमर्दात् ॥ ११ ॥

स्वानां ज्ञातीनां "स्वमज्ञातिधनाख्यायाम्" इति शब्दस्मृतेः इति कृष्णस्य तथैव तत्प्रेममयाभिमानं दर्शयति स व्रजजनाखिलमनोरथपरिपूर्णोद्यमः स्वयमिति तैर्लज्जादिना साक्षादविज्ञापितमपि स्वयमेव विज्ञाय ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कृतापराधे त्वय्यनुग्रहं प्रार्थयते—प्रजा इति । प्रजाः पुत्रप्रायाः वयमत एव हे प्रभो ! सापराधा अप्यनुग्राह्या एव त्वयेति शेषः ॥ ८ ॥

इत्थं वरुणेनेति शेषः । प्रसादितः प्रसन्नीकृतः कृष्णः पितरमादाय बन्धूनां मुदं हर्षमावहन् जगाम ॥ ९ ॥

नन्दस्त्वतीन्द्रियमदृष्टपूर्वं वरुणस्य महोदयमैश्वर्यं तेषां वरुणादीनां कृष्णे सन्नतिं नम्रतां भृत्यतामितियावत् दृष्ट्वा अतीव विस्मितः तत् ज्ञातिभ्योऽन्ववर्णयत् ॥ १० ॥

ततस्ते नन्दस्य ज्ञातयो गोपाः हे राजन् ! त्वं कृष्णं साक्षात् जगदीश्वरं परमपुरुषं मत्वौत्सुक्ययुक्ता धीर्येषां तथाभूताः अयमीश्वरः कृष्णः सूक्ष्मामतीन्द्रियां स्वगतिं स्वस्वरूपरूपगुणविभूतिप्रकारं नोऽस्माकमुपाधास्यत्यपि दर्शयिष्यति किमिति सङ्कल्पितवन्तः उपाधानमत्र दर्शनं धातूनामनेकार्थत्वादुत्तरानुगुण्याच्च ॥ ११ ॥

इत्थं स्वानामभिप्रायमिति शेषः । अखिलदृक् हेतुगर्भमिदं तस्मात् स्वयमेव विज्ञाय तेषां मनोरथसिद्धयै कृपयैतद्वक्ष्यमाणमचिन्तयत् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बन्धूनां च मुदमवहत् ॥ ९ ॥
अतीन्द्रियम् इन्द्रियाविषयम् ॥ १० ॥

नन्दवर्णितकृष्णमाहात्म्यं श्रुत्वा गोपानां बुद्धौ किमन्ववर्त्तत ? तत्राह—त इति । तुशब्दोऽवधारणार्थो विशेषार्थो वा औत्सुक्यधियः पूर्वस्माद्विशिष्टभक्त्या दृढबुद्धयः ते गोपाः तं कृष्णमधीश्वरं ब्रह्मादेरप्यधिकम् ईश्वरमेव मत्वा ज्ञात्वा एषोऽधीश्वरो नोऽस्माकम् इष्टमकरिष्यत् तर्हि सूक्ष्मामतीन्द्रियां स्वगतिं स्वस्थानमप्युपाधास्यददर्शयिष्यदिति ॥ ११ ॥

बुद्ध्या मनीषितम् एवं कथमवगतमित्यतः कृष्णचिन्तनेनावसीयत इत्याशयेनाह—इतीति । स्वानामिति सर्वनामसंज्ञामन्तरेण प्रयोगो ज्ञातित्वविशेषद्योतनाय स्वानां ज्ञातीनां हार्दं विज्ञाय तत्र हेतुरखिलदृगिति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विस्मित इति केवलमधुरनरलीलावेशादिति सिद्धान्तितं नन्दस्त्वित्यादिना ॥ १०—१२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रार्थनायां कृतायां तत्सिंहासने उपविष्टः तं कृतार्थीकृत्य तत आगत इत्याह—एवमिति । प्रसादितः अतो भृत्यापराधेन दण्डमकृत्वैव कृष्णः सदानन्दः तस्याप्यानन्दम् उत्पाद्य ततः समागमने समानयने वा प्रार्थनीयरहितो भगवान् सर्वशक्तिः स्वपितरमादायागात् भगवत्स्पर्शेन दैत्यसम्बन्धकृतो दोषो निवर्त्तितः । ननु, तथापि वरुणेनागन्तव्यम् अनुवृत्तिश्च कर्त्तव्या तत्कथं नागत इति चेत्तत्राह-ईश्वरेश्वर इति । ईश्वराणामपि वरुणादीनामीश्वरो नियन्ता अतोऽनुल्लङ्घ्य शासनत्वात् स्वामिलीलास्थाने न गन्तव्यमिति नीतिशास्त्रात् नागतः साधनादिकं तु नापेक्षत एव स्मरणमात्रेणैव गोकुलप्राप्तेः आगत्य बन्धूनां मुदं चावहत् आवहन् वा समागतः ॥ ९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यथैकं वचनं बहुकार्यं करोति तथेयं कृतिरपि बहुकार्यं कृतवतीत्याशयेन वृत्तान्तमाह—नन्दस्त्विति। नीतोऽपि नन्दः पूर्वं तत्रैव स्थापितो न किञ्चित् दृष्टवान् पश्चाद्भगवदागमनानन्तरं सर्वं दृष्टवान् अतोऽतीन्द्रियदर्शनम् अतीन्द्रियत्वे हेतुं वदन् सर्वमेवातीन्द्रियमित्याह—लोकपालस्य महानुदयो यत्रेति। किञ्च, योऽस्माभिः कृष्णः यथा कथञ्चिद्व्यवह्रियते तादृशे ते भक्त्यन्नताः तद्धर्मदासा इव इदं च तत्रत्यानां स्त्रीपुरुषाणां सर्वेषामेव सेवनं दृष्ट्वा ज्ञातिभ्य उपनन्दादिगोपेभ्यः अब्रवीत् नन्वतीन्द्रियं भगवता स्वार्थमेव प्रदर्शितं नान्येभ्यो वक्तव्यं तत्कथमुक्तवानिति चेत्तत्राह—विस्मित इति। तस्याश्चर्यरस एवोत्पन्नः अतो भगवन्तं पुत्रत्वेन नाङ्गीकृतवान् नायं सर्वथा पुत्रः गर्गः सत्यवादी भ्रान्तो वा अत एवं सति किं कर्तव्यमिति विचारणीयं किञ्चित्प्रार्थनीयमाहोस्विदधिका प्रणिपत्तिः कर्तव्येति तत्र प्रतिपत्त्यर्थं वा आदौ भगवतो निर्णीतं स्वरूपं ज्ञातव्यं भगवान्तरभेदा एवैते उत्कर्षाः अतः परमोत्कर्षो ज्ञातव्यः ततः फलप्रार्थनाप्रतिपत्तिर्वा कर्तव्येति निश्चित्य प्रथमतो भगवदुत्कर्षदर्शनार्थमुत्सुका जाताः॥ १०॥

ततो निस्सन्दिग्धं परमेश्वरं ज्ञात्वा यावन्न दृश्यते तावत् सम्यक्प्रतीतिर्न भवतीति गोपा विशेषज्ञानरहिताः किञ्चित्प्रार्थितवन्त इत्याह—ते त्विति। तुशब्देन न तेषामन्यः पक्ष उद्गतः नाप्यसम्भावना किन्त्वौत्सुक्यमेव एव दर्शनार्थं जाताः राजन्निति तथोत्सुका राजानोऽपि भवन्तीति ज्ञापयितुं अयमीश्वरो भवतीति निश्चितं तथा सति अप्रीतिसम्भावनायामीश्वरे भिन्ने जाते स्वकीयं प्रदर्शयिष्यति अथ यदि अस्मान् न मन्यते तदा दण्डं करिष्यतीति निश्चित्य सूक्ष्मां स्वगतिं वैकुण्ठाख्याम् अधीश्वरः स्वामी नः अस्मभ्यम् उप समीप एव अधास्यत् धास्यति किम् अस्मिन्निकट एव तं किं प्रकटीकरिष्यति इति मनोरथं कृतवन्तः स्वस्य तथा साधनाभावेऽपि फलं भविष्यतीत्यत्र भगवदैश्वर्यमेव हेतुः॥ ११॥

एवं तेषां चिन्तनानन्तरं यद्भगवान् चकार तदाह—इतीति। स्वभक्ताः भक्तेष्टं पूरणीयं यतः सः तेषामेवार्थे समागतः नापि तस्याशक्यं किञ्चित् यतो भगवान् ते तु स्वमध्य एव सङ्कल्पं कृतवन्तः न तु प्रार्थितवन्तः तथापि भक्तकामनापूरकः इति तद्विज्ञाय एतद्वक्ष्यमाणमचिन्तयदिति सम्बन्धः ज्ञाने उपायान्वेषणादौ च सामर्थ्यमखिलदृगिति सर्वमेव सर्वदैव स्वयमेव पश्यति न तु करणाद्यपेक्षापि अतस्तेषां सङ्कल्पसिद्धये सङ्कल्पनिर्वाहार्थमेतद्वक्ष्यमाणमचिन्तयत्, किमेते साधने योजनीयाः? आहोस्विन्मर्यादामुल्लङ्घ्य फलमेव देयमिति तत्र साधनप्रवृत्तौ तेषां क्लेशः स्यादिति कृपया द्वितीयमेव पक्षं कर्तव्यत्वेनाचिन्तयदित्यर्थः॥ १२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

आगादिति सूर्योदयात् पूर्वमेवेति ज्ञेयम्॥ ६॥

अतीन्द्रियं अतिचमत्कारयन्ति इन्द्रियाणि यतस्तं महोदयं महैश्वर्यं तेषां लोकपालानां अब्रवीदिति द्वादशीमध्य एव पारणां कृत्वा आख्यान्यामुपवेश्यैवेति ज्ञेयम्॥ १०॥

औत्सुक्ययुक्ता धीर्येषां ते स्वगतिं स्वोपासकानां गतिं सूक्ष्मां मायातीतां ब्रह्मानन्दरूपां वैकुण्ठप्राप्तिरूपां च उपाधास्यत् उपधास्यति नोपधास्यति नोऽस्मान् प्रापयिष्यते भो व्रजराज! त्वयैव पूर्वं गर्गोक्त्या अस्य नारायणसाम्यमुक्तं ननु नारायणत्वं संप्रति तु वरुणस्तुत्या साक्षाद्दृष्टया यदि नारायणत्वमेव निर्धारयसि तदा बन्धूनामस्माकं संसारिकाणामवश्यमेव मनोरथमयं पूरयिष्यत्येव यतस्तव पुत्र एव मम भ्रातुः पुत्रः अस्य भगिनीपुत्रो अस्य दौहित्रः परमेश्वरोऽयमस्मिन्नेते वयं विना आम एवायत्यस्माखासज्जति तद्भो गोपाः! परमेश्वरादस्मात् स्वस्वकाङ्क्षणीयं यथेदं गृह्णीतेत्युक्ते केचिदाहुर्वयं मुक्ता एव बुभूयामेत्यन्ये वयं वैकुण्ठवासिन एवं बुभूयामेति पृथक् पृथग्विविधमतयो विविधसङ्कल्पयन्तो बभुवुरेतु युवां न नः सुतो साक्षात् प्रधानपुरुषेश्वराविति"तत्ते गतोऽस्म्यरणमद्य पदारविन्दम्" इति सखेति मत्वा प्रसभं यदुक्तमित्याद्युक्तिमन्तो वसुदेवार्जुनादय इव ऐश्वर्यज्ञानोपरागात् स्वसम्बन्धवैधुर्यमिदयवन्तो बभूवुरित्यर्थः॥ ११॥

इति एवंभूतं स्वानां ज्ञातीनां सङ्कल्पं विज्ञाय स्वयन्नु अखिलं ब्रह्मानुभवसुखं वैकुण्ठवाससुखं व्रजभूमिप्रेमसुखं च पश्यति जानातीत्यखिलदृक् स्वपरिकरतारतम्येन तत्सारांश्च्य ऐश्वर्यावरणतारतम्यवत्त्वेऽपि तदानीं लीलाशक्तिप्रेरणावशादैव सम्पूर्णैश्वर्यस्योदयात् गोपानां तेषान्तु तत्प्रेममाधुर्यकर्षिकायापि ब्रह्मसुखवैकुण्ठसुखयोर्लीचीनीकृतत्वेऽपि तेषां नरलीलत्वेन मुग्धानां सङ्कल्पसिद्धये तत्सङ्कल्पितं ब्रह्मसुखं वैकुण्ठसुखं च तानुभावयिष्यामिदमचिन्तयत्॥ १२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अतीन्द्रियमदृष्टपूर्वं लोकपालस्य वरुणस्य महोदयमैश्वर्यं तेषां वरुणादीनामनेन वरुणपुत्रकलत्रादिभिरपि भगवान् सन्नत्यादिना पूजित इति गम्यते॥ १०॥

तं श्रीकृष्णमीश्वरं साक्षात्परमपुरुषं मत्वा औत्सुक्ययुक्ता धीर्येषां ते अपि स्वगतिं गम्यते इति गतिर्नित्यविभूतिरूपा तामुपाधास्यत् उपाधास्यति नः अस्मान् प्रापयिष्यतीति सङ्कल्पितवन्त इत्यर्थः॥ ११॥

इतीत्थम्भूतं स्वानां सङ्कल्पम् अखिलदृक् सर्वज्ञः स्वयमेव विज्ञाय तेषां सङ्कल्पसिद्धये कृपयैतद्वक्ष्यमाणमचिन्तयत्॥ १२॥

---

भाषा टीका।

श्रीशुक उवाच॥

श्रीशुकदेवजी बोले, कि-ईश्वरेश्वर भगवान् श्रीकृष्णको जब वरुणने या प्रकार प्रसन्न करे, तब पिता कों लेके सब बधून कों आनंद देत श्रीकृष्ण घर कूं आवत भये॥ ९॥

कभऊं न देख्यो ऐसो अतीन्द्रिय वरुण लोकपाल को वैभव कूं देखिके और कृष्ण के विषें उन सबन की नम्रता

जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः ।
उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् ॥ १३ ॥
इति सञ्चिन्त्य भगवान् महाकारुणिको हरिः ।
दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ १४ ॥

भाषा टीका ।

देखिकें नंदराय बडे आश्चर्य मानिकें अपनी जाति के गोपनतें सब समाचार कहत भये, ॥ १० ॥

हे राजन् ! वे सगरे गोप बडे उत्कंठित बुद्धिवारे होय कें कृष्ण कूं ईश्वर मानिकें विचार करबे लगे, कि-जो ये हमारो लाला कृष्ण ईश्वर है तो हमहूं कों अपने वैकुंठ में अपने ब्रह्म स्वरूप को दर्शन करावेगो कहा ? ॥ ११ ॥

अपने निज जनन के या प्रकार के विचार कूं जानिकें सर्वज्ञ जो भगवान् श्रीकृष्ण हैं, सो उन गोपन के मनोरथ सिद्ध करबे कों कृपा करिकें ऐसें विचारत भये ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविद्या देहाद्यहम्बुद्धिस्ततः कामस्ततः कर्म तैरुच्चावचासु देवतिर्यगादिषु भ्रमन् स्वीयां गतिं न वेद ॥ १३ ॥

स्वं ब्रह्मस्वरूपं लोकं वैकुण्ठाख्यं च तमसः प्रकृतेः परम् ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जन इति । अत्र स्वां स्वीयां गतिं स्वरूपमित्युच्यते चेत्पूर्वोक्तस्वगतिमित्यस्यानुवादो न स्यात् स्वस्वरूपं ज्ञानमिति पक्षे च स्वशब्देनात्र नात्मोच्यते तत्र तस्य नपुंसकत्वात् गतिशब्देन ज्ञानं नोच्यते वेदेत्यनेन पौनरुक्त्यात् तद्वाचकत्वे हि स्वं न वेदेत्येवावक्ष्यत सङ्कल्पसिद्धये तेषामित्युक्तत्वाच्च न तदर्थताघटते नन्दस्त्वतीन्द्रियं दृष्ट्वेत्यत्र हि तेषां लोकपालस्य लोकादिमहोदयस्य तथापि कृष्णे सन्ततेश्च श्रवणेन तल्लोकादिमहोदयदर्शनस्य विवक्षितत्वात् स्वगतिं सूक्ष्मामित्यत्र च द्वयोः सामानाधिकरण्यमेवावगम्यते सूक्ष्मां दुर्ज्ञेयाम् तस्मात् जनशब्देनापि न प्राकृतो जन उच्यते तेषां संसार एव गतिर्नतु तल्लोकादि रिति । यदि च स एवोच्यते तर्हि सर्वस्यापि तस्य तथा कृपाप्राप्तिप्रसङ्गः स्यात् किन्तु तच्छब्देन तदीयस्वजन एवोच्यते तर्हि सर्वस्यापि तस्य तथा कृपाप्राप्तिप्रसङ्गस्स्यात् सालोक्यसार्ष्ट्यादिपद्ये जना इति वत् अत्र तु प्रस्तावबलात् व्रजवासिजन एवोच्यते तस्य हि तदीयपरमस्वजनत्वं स्वयमेव श्रीभगवता भाषितम्—

"तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ।
गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहितः" ॥

इति । उक्तं च तदीयस्वजने तस्याविद्यादिमयोच्चावचगतेः सिद्धान्तासिद्धत्वात् प्रस्तुतस्ययमेवार्थः जनो व्रजवासिलक्षणो मदीयस्वजनसमूहो यमविद्यादिभिर्हेतुभिर्या उच्चावचा गतयो देवतिर्यगादयः तास्वभिव्यक्तत्वेन स्वां गतिं भ्रमन् तद्विशेषतया जानन् तामेव स्वां गतिं न वेद न जानात्यहो कष्टमिति यन्माधुर्यावेशेन ज्ञानांशावरणात् इति भावः । यद्वा, जनो व्रजवासी मदीयस्वजनोऽयम् एतस्मिन् सम्प्रति स्वावताराङ्गीकृते लोके प्रापञ्चिके अविद्यामल्लीलावेशादन्याननुसन्धानं कामः मद्विषयकविचित्रमनोरथः कर्म मदीयानुकूल्यमयक्रिया "नाविदन् मन्वेदनाम्" "यद्धामार्थसुहृत्"इत्यादिदर्शनात् तैरुच्चावचासु नानाविधासु गतिषु प्रेमजवेषु स्वां गतिं अनादिसिद्धां परमगोलोकादिवैभवरूपां भ्रमन् विस्मरन् तामेव स्वां गतिं न वेद न जानातीत्यर्थः । अविद्यादिशब्देनोपादानं च कारुण्यकृतानुतापेनाधिक्षेपादेव ॥ १३ ॥

गोपानां सम्बन्धि स्वं लोकं श्रीगोलोकमित्यर्थः । तस्य प्रकृतिविकारेऽभिव्यक्तत्वमपि निषेधति-तमसः परमिति । क्वाहं तम इत्यादौ तमःशब्देन प्रकृतिनिर्देशात् विभुरिति तस्य तादृशवैभवस्य सदा सर्वत्र सिद्धत्वादित्यर्थः ॥ १४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वं वैकुण्ठम् । १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चिन्तितमेवाह-जन इति । जनोऽयं गोपजन्मभृज्जीवलोकोऽस्मिन् लोकेऽविद्यादिभिरुत्तममध्यमाधमासु देवतिर्यङ्मनुष्यादिदेहप्रवेशनरूपासु गतिषु भ्रमन् स्वां मदसाधारणां गतिं न वेदयत् तत्राविद्या देहात्माभिमानस्वतन्त्रात्माभिमानमूलमज्ञानं कामः शब्दादिविषयाभिलाषः कर्म तदनुगुणाचेष्टा ॥ १३ ॥

इत्थं सञ्चिन्त्य महाकारुणिको विभुः हेतुगर्भमिदं तस्मात् गोपानां स्वलोकं दर्शयामास स्वं स्वरूपं लोकं स्वनित्यविभूतिं च दर्शयामासेत्यर्थः । तत्र सत्यं ज्ञानमित्यर्द्धेन स्वं विशिनष्टि-तमसः परमित्यनेन यद्गीत्यर्द्धेन च लोकमिति विवेकः तमसः परं प्रकृतिमण्डलादूर्ध्वहिर्भूतं "क्षयं तमस्य रजसः पराके" "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतेः । लोका रजांस्युच्यन्ते क्षयन्तं निवसन्तमित्यर्थः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सन्निहितत्वादिदमित्युक्तं विवृणोति-जन इति । एतस्मिन् लोके सांसारिकसञ्चारस्थाने अविद्याकामकर्मादिभिर्भ्रमन् परिवर्तमानोऽत एव उच्चावचासु उत्कृष्टापकृष्टासु गतिषु पतितो

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

जनः स्वं गतिं गम्यत इति गतिः स्वामिभूतो नारायणस्तं स्वस्वरूपं च न वेद न जानातीति ॥ १३ ॥

सञ्चिन्त्य गोपानुद्दिश्य लोकं वैकुण्ठं कीदृशम्? तमसः प्रकृतेः परं व्यतिरिक्तम् अप्राकृतमित्यर्थः ॥ १४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यद्वा जनो व्रजवासी मदीयस्वजनोऽयम् एतस्मिन् सम्प्रति स्वावताराङ्गीकृते लोके प्रापञ्चिके अविद्या मल्लीलाशेनान्यानुसन्धानं कामः मद्विषयकविचित्रमनोरथः कर्म मदीयानुकूला क्रिया "नाविन्दन् भवबन्दनाम्" "यद्धामार्थसुहृत्प्रियात्म" इत्यादिदर्शनात् तैरुच्चावचासु नानाविधासु गतिषु प्रेमजवेषु स्वां गतिं अनादिसिद्धां परमगोलोकाख्यवैभवरूपां भ्रमन् विस्मरन् नामेव स्वगतिं न वेद न जानातीत्यर्थः। अत्रेदं विवेचनीयम् अत्र स्वशब्देन स्वरूपं नोच्यते तत्र तस्य नपुंसकत्वात् गतिशब्देन च ज्ञानं नोच्यते वेदत्येनेन पौनरुक्त्यात् तद्वाचकत्वे हि स्वं न वेदत्येव वक्ष्यते मङ्गलसिद्धये तेषामित्युक्तत्वाच्च न तदर्थता घटते नन्दस्त्वतीन्द्रियं दृष्ट्वेत्यत्र हि तेषां लोकपालस्य लोकपालादिमहोदयस्य तथापि कृष्णं सन्नतञ्च अयशोन तल्लोकादिमहोदयदर्शनस्य विवक्षितत्वात् स्वगतिं सुक्ष्मामित्यत्र च द्वयोः सामानाधिकरण्यमेवावगम्यते सुक्ष्मां दुर्लभां तस्माज्जनशब्देनापि न प्राकृतो जन एव उच्यते तेषां संसार एव गतिः नतु तल्लोकादिरिति किन्तु तच्छब्देन भागवतो जन उच्यते सालोक्यसार्ष्ट्यादिपदं जना इतिवत् उक्तञ्च भागवते जने तस्याविद्यादिमयोध्यावगतेरसिद्धान्तत्वादुक्त एवार्थः समञ्जसः ॥ १३ ॥

अत्राविद्यादिशब्दप्रयोगस्तु कारुण्यतो निर्वेदादेवेति ज्ञेयम् गोपानां सम्बन्धिस्वलोकं तस्य प्रकृतिमयत्वं निषेधति तमस इति ॥ १४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चिन्तामेवाह—जन इति। एतस्मिन् लोके यो जायते स सामान्यत एव न स्वगतिं जानाति स्वगतिज्ञानानन्तरं दोषनिवृत्तिपूर्वकं तत् प्राप्त्युपायज्ञानं ततः क्रमेण यथाशास्त्रं साधनानुष्ठानं तत आत्मप्राप्तिः ततो ब्रह्मात्मभावः ततो भक्तिः ततो भगवज्ज्ञानं ततः मत्स्थानदर्शनमित्येतावदेतेषां जन्मकोटिभिरपि न भवति यतः प्रथम एव पक्षे एते अनधिकृता इति तदेवाह—वै निश्चये अस्मिन् लोके अतितामसे जातः अमेध्यपर्यवसायी न स्वां गतिं जानाति तत्र हेतुः अविद्याकामकर्मभिः प्रथमतः पञ्चपर्वा अविद्या जीवमावृत्य तिष्ठति ततः तत्सम्बन्धात् कामः ततो नानाविधानि कर्माणि तैरयं जायते तेन मूलाशुद्धः कथमुत्कृष्टां गतिं गच्छेत्। किञ्च, उच्चावचासु गतिषु परिभ्रमन्नपि वर्त्तते न तूत्तमं प्राप्य ततोऽप्यग्रे गच्छति किं त्वधमतामेव प्राप्नोति ततः कारणविचारेण कार्यविचारेण वा न कोऽप्यस्याधिकार आत्मज्ञाने अधिकमेतत्। यद्वा ननु, स्वरूपानन्दमनुभवतो व्रजजनस्यानुभूयमानवस्तुस्वरूपज्ञाने कथमन्यविषयकोऽभिलापः सङ्गच्छते? गृहादिस्थितिरिव खेस्सापि कथं सङ्गच्छते? अनुभूयमानवस्तुनः सर्वतोऽधिकत्वात् किञ्च यदि तस्य तथाभिलापस्तर्हि "ये यथा मां प्रपद्यन्ते" इति वाक्याद्भगवतापि स एव पूरणीयः किं तत: उद्धृत्य स्वतो दीयमानेन भजनानन्देनेत्याशङ्कामपनेतुं मनोरथस्य प्रासङ्गिकत्वे व्रजस्थस्य सर्वत्याजितस्वानिरूकगत्यभावं प्रभुः प्रतिजानीते जन इति एतस्मिन् काले व्रजे स्थितो जनः स्वां स्वकीयां गतिर्मोहर्कामासुंस्पर्शी वा मत्तोऽन्यां वै निश्चयेन न वेद अपि तु मामेव तथात्वेन जानातीत्यर्थः। नन्वपि नः स्वगतिं सूक्ष्मामुपधास्यदिति गत्यन्तराभिलापस्योक्तत्वात्कथमेतमुच्यत इत्यत आह—उच्चावचासु गतिषु भ्रमन्निति। उच्चा गतिर्वैकुण्ठाख्या मनोरथरूपा अवचास्तु लीलावसरे निर्वाहार्थे गृहादिसम्बन्धिन्यः उच्चत्वमत्र मनोरथाभिप्रायेण न तु वस्तुत इति ज्ञेयम् अथवा उच्चः पुरुषोत्तमः अवचमक्षरं तरं च "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः" इति वाक्यात्. तस्मात्पुरुषोत्तमावचाः गतयः एव वैकुण्ठाद्या गतयः वैकुण्ठस्याप्यक्षरात्मकत्वात् तासु भ्रमन् वैकुण्ठे मानसिकं गृहादिषु कायिकं भ्रमणं कुर्वन्नपि पुष्करपलाशवन्निर्लेपतया तत्र तत्र स्वां गतिं न वेदेति भावः। ननु हंसभावात् कथं भ्रमणमित्याशङ्क्याह अविद्याकामकर्मभिरिति। अविद्यापदेनात्र माहात्म्यज्ञानाभावो निरूप्यते न तु शक्तिरज्ञानं वा स्वरूपसम्बन्धि अविद्या शक्तिस्तु मायया निर्मिता माया च भगवच्छक्तिरतोऽपि विलज्जमानया यस्य स्थातुमीक्षापथेऽमुयेति वाक्यात् यत्र मायया भगवदीक्षापथेऽपि स्थातुं न शक्यते तत्र तत्सम्बन्धिनमविद्या कथं व्यामोहयेत्?तथा सति तत्कार्यमज्ञानं तु नोपपद्यत एव माहात्म्यज्ञानाभावस्यतु स्वेच्छया कृतत्वात् लीलोपयोगित्वाच्च नाज्ञानता वस्तुतस्तु यथा ब्रह्मज्ञाने तदितरज्ञानाभावेऽपि ज्ञानस्वरूपमेवमत्रापि स्वरूपभजने माहात्म्यज्ञानस्य प्रतिबन्धकत्वात्तदभावेऽपि स्वरूपज्ञानांश एवेति मन्तव्यं तस्मादविद्यया माहात्म्यज्ञानाभावेन कामो लोकान्तराभिलापः कर्माणि लोकजात्यादिविहितानि गृहसम्बन्धीनि तैः प्रत्येमुक्तरीत्योभयत्र भ्रमणमित्यर्थः। माहात्म्यज्ञाने तु न तु न लोकान्तरकामो न वा लौकिककर्माणि नं वा लीलारसानुभवः किं तु मुक्तिरेव स्यादतस्तज्ज्ञानं विधाय सर्वमेतावत्प्रभुरेव कृतवानिति निर्णीयते अन्यथा स्वातिरिक्ताभिलापपूरणं स्वयं बलं न कुर्यात् प्रत्युत दीयमानस्वरूपानन्दमपि न प्रयच्छेदग्रे भजनानन्दस्य का वार्ता अतो भ्रमणं न व्रजजनस्य दोषः किन्तु स्वकृतमिति मत्वा तत्कामितप्रदर्शने तत उद्धरणे च करुणातिशययुक्तो जात इति वक्तुं श्रीशुकोऽनेन श्लोकेन भगवदभिप्रायमुक्तवानिति सर्वमुपपद्यते ॥ १३ ॥

एतत्पर्यन्तं तस्माद्यदेते वाञ्छन्ति तदेतेषामयोग्यमेवेति निश्चित्यापि अमेयबलमाश्रित्यापि किञ्चित्प्रदर्शितवानित्याह—इतीति। एवमनधिकारं सञ्चिन्त्य भगवान् सर्वकरणसमर्थोऽपि मर्यादारक्षकः ततो महाकारुणिकश्च करुणायां परमां काष्ठामापन्नः, उभयोरन्यतरनाशमाशङ्क्य उभयमपि कर्तुं समर्थो विभुः स्वलोकं दर्शयामास एतादृशं वैभवं ममाऽस्तीति ज्ञापयितुं तत्रैव

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ख्यित्वा न तु कचिद्गत्वा यतस्ते गोपालाः मित्राणि धर्मपराश्च यत्र ते भगवन्तमेव पश्यन्ति तत्र किमाश्चर्यं तस्य लोकं द्रक्ष्यन्तीति । भगवतो बहवो लोकाः सन्तीति तद्व्यावृत्त्यर्थमाह—तमसः परमिति । प्रकृतेरप्युपरितम आसीत् "तमआसीत्तमसा गूढमग्रे प्रकेतम्" इति श्रुतेः । तस्यापि तमसो वस्तुविचारणे भगवत्त्वमुक्तं ततोऽन्ये व्यापिवैकुण्ठाख्यं तत्प्रदर्शितवान् ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी ।

जनः प्रस्तुतत्वान्मत्पित्रादिर्व्रजवासी एतस्मिन् भूर्लोके अविद्या आत्मस्वरूपाज्ञानं ततः कामस्ततः कर्म तत उच्चावचासु गतिषु वरुणादिदेवलोकगतसुखैश्वर्यमयीषु भूर्लोकगतमनुष्यतिर्यगादिदुःखानैश्वर्यमयीषु च दृष्टासु भ्रमन् नरलीलत्वादेव स्वेषां सांसारिकत्वबुद्ध्या भ्रमं प्राप्नुवन् स्वाज्ञातिं सर्वैरपि दुर्लभां वर्तमानां स्वपदवीं न वेद यदयं मत्पिता वरुणलोकं गतस्तत्रस्यां मायिकीमेव सम्पदं दृष्ट्वा निखिलवैकुण्ठसार वृन्दावनं तस्मादपि न्यूनं मन्यते यथा मुग्धः कश्चित् कृत्रिममुक्ताया आकारतेजः सौष्ठवदर्शनाल्लब्धचमत्कारो वास्तवानर्घ्यमुक्तां ततो न्यूनां वेत्ति तथैव ब्रह्मादिदुर्लभचरणरेणूनप्यात्मनो वराकाद्वरुणादपि निकृष्टानेव मन्यते तथैव नित्यमास्वाद्यमानमहामाधुर्याण्मद्विषयकपुत्रादिभावमयप्रेमतोऽपि मुक्तिवैकुण्ठलोकावधिकौ मन्यते तौ खलु मदधीनावेव ननु तयोरहमधीनः केनचित् कचित् दृष्टः प्रेम्णस्त्वहमधीन एव सर्वैर्दृश्यमान एवास्मीत्यपि विवेकं न भजते किञ्च, मुक्तौ खलु ब्रह्मैवास्वाद्यते तच्च ब्रह्म यस्य प्रभा प्रभवत इत्यत्र "तद्ब्रह्मनिष्कलमनन्तम्" इति ब्रह्मसंहितोक्तेः "ब्रह्मणोहि प्रतिष्ठाहम्" इति मदुक्तेः "मदीयं महिमानं च परं ब्रह्मेति शब्दितम्" इति मद्भगवत्यद्वाक्येश्च यदीयं निर्विशेषं व्यापकमतीन्द्रियं ज्योतिरेव सोहमेव यस्य प्रेमकरणकास्वादविषयीभूतमाधुर्यः पुत्रादिरूपतया सदा वर्त एव तथा "अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी" इति पाद्मोक्तेर्मथुरामण्डलमध्यवर्तीदं वृन्दावनं वैकुण्ठादपि श्रेष्ठं यस्य निवासतया सदा वर्तत एव नच महाप्रलयेऽप्यस्य "काचित् क्षितिर्भूगोलचक्रे सप्तपुर्यो भवन्ति तासां साक्षाद्ब्रह्मगोपालपुरीहीति यथा सरसि पद्मं तिष्ठति तथा भूम्याम्" इति गोपालतापनीश्रुतेः

> "प्राकृते प्रलये प्राप्ते व्यक्ते व्यक्तं गते पुरा ।
> शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥
> ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञितः ।
> निर्गुणोऽनाद्यनन्तश्च वर्तते केवलेऽक्षरे" ॥ इति

बृहद्वामनवाक्याच्च तदपि मुक्तिवैकुण्ठलोकावदृष्टचरत्वादेव यल्लब्धुं स्पृहयति तदेनं तौ सम्प्रति साक्षादुपलम्भयामीति भावः । अत्र जनोऽयं व्रजवासी अविद्याकामकर्मभिरुच्चावचासु देवतिर्यगादिषु च भ्रमन् पुनः पुनः पर्यटन् स्वां गतिं मया दास्यमानां मुक्तिं वैकुण्ठस्थितिं च न वेदेति कुव्याख्यानं न घटते व्रजवासिनां नन्दादेः कृष्णे पुत्रादिभाववतो नित्यसिद्धत्वादेवाविद्याकामकर्मघटितः संसारो न सम्भवेत् । यदुक्तम्—

> "तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणम् ।
> न पुनः कल्पते राजन् ! संसारोऽज्ञानसम्भवः" ॥ इति

नच मुक्तिवैकुण्ठस्थित्योरपि दास्यमानत्वं "एषां घोषनिवासिनामुत भवान् किं देवरात" इति ब्रह्मोक्तेरेवेत्यखिलं पूतनावधान्ते सयुक्तिकं व्याख्यातं द्रष्टव्यम् ॥ १३ ॥

इति सञ्चिन्त्य निजास्पदस्य श्रीवृन्दावनस्य सर्वोत्कर्षं ब्रह्मवैकुण्ठसुखानुभावनयैव साम्प्रतं ज्ञापयामीति विचार्य स्वं ब्रह्मस्वरूपं लोकं च वैकुण्ठाख्यं दर्शयामास वृन्दावनाद्वियोज्य पञ्चषा क्षणात् ते एव प्रापयामासेति भावः । यतो महाकारुणिकः व्यतिरेकेणैव वृन्दावनस्य माधुर्यं ताभ्यामुत्कृष्टं ज्ञापयितुमिति भावः । ननु ब्रह्मदर्शनेन ब्रह्मप्राप्त्या सैव सायुज्यमुक्तिस्तेषां ततो निष्क्रमणासम्भवात् कथन्तेषां पुनर्वृन्दावनीयमाधुर्येऽनुभावनेत्यत आह—विभुः सायुज्यमोक्षात् वैकुण्ठाच निष्क्रमयितुमपि समर्थ इत्यर्थः । स्वं लोकं च विशिनष्टि तमसः प्रकृतेः परम् ॥ १४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जनः सर्वोऽपि जन अस्मिन् लोके अनित्यविभूतिरूपे अविद्या आत्मानात्मपरमात्माऽपरिज्ञानं ततः कामः ततः कर्म तैरुच्चावचासूत्तमाधमासु गतिषु देवतीर्यगादियोनिषु भ्रमन् स्वां स्वप्राप्यां नित्यविभूत्याख्यां न वेद नैव जानाति तत्प्राप्तीच्छायास्तु का कथा एते तु तां प्राप्तुमिच्छन्त्यतस्तत्प्राप्त्यधिकारिण एवातः एतेषां तत्प्राप्तिस्तु यथा यथं तत्तदवसरे भविष्यत्येव तद्दर्शनं त्विदानीं भवत्वित्यचिन्तयादिति फलितार्थः ॥१३॥

विभुः स्वयं व्यापकः साक्षात्परमपुरुषः तल्लोकाधिपतिरित्यर्थः । स्वं लोकं स्वासाधारणं लोकं तमसः प्रकृतेः परम् "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतिप्रसिद्धं लोकं दर्शयामास ॥ १४ ॥

---

### भाषा टीका ।

श्रीकृष्ण ने विचार कियो, कि—या लोक में प्राणी अविद्या ( अज्ञान ) काम और कर्मन ते ऊंची नीची योनीन में भटकतो भयो अपनी गति असाधारण रक्षक मोकूं नहीं जाने हैं ॥ १३ ॥

याप्रकार परमकारुणिकभगवान् श्रीहरि विचारि के प्रकृति ते परजो अपनो लोक है ताकू गोपन कों दिखावत भये ॥ १४ ॥

---

सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् ।
यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥ १५ ॥
ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ।
ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात्पुरा ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

देहादिविशिष्टानां दर्शनमशक्यमिति प्रथमं देहादिव्यतिरिक्तं ब्रह्मस्वरूपं दर्शयामास तदाह—सत्यमिति । सत्यमबाध्यं ज्ञानमजडमनन्तमपरिच्छिन्नं ज्योतिः स्वप्रकाशं सनातनं शश्वत्सिद्धं ब्रह्म गुणापाये गुणापोहे ज्ञानिनो यत्पश्यन्ति तत्कृपयैव दर्शयामास ॥ १५ ॥

एवं ब्रह्महृदं ब्रह्मैव हृदस्तद्धृदः तत्र निमग्नस्य विशेषविज्ञानाभावात्तं ब्रह्महृदं ते तु नीताः प्राप्तिताः निमग्नाश्च तुशब्दोक्तं विशेषमाह पुनः कृष्णेनोद्धृताः, समाधेरुत्थापिताः सन्तो ब्रह्मणस्तस्यैव लोकं वैकुण्ठाख्यं ददृशुरिति ननु ब्रह्मनिमग्नानां पुनर्लोकदर्शनमघटितमेवेत्याशङ्क्याह—यत्रेति यत्र यस्मिन् कृष्णे निमित्ते सति पूर्वमक्रूरोऽध्यगात् दृष्टवान् शुकपरीक्षित्संवादात्प्राक्तनत्वाद्भूतनिर्देशः तस्मादत्यैश्वर्यं भगवति किञ्चिदप्यसम्भावितमिति भावः । अथवा अक्रूरो यत्र दृष्टवांस्तस्य यमुनाहृदस्य ब्रह्महृद इति नाम तं हृदं नीताः सन्तो ब्रह्मणो लोकं ददृशुः पुनश्च कृष्णेनोद्धृताः पूर्ववत्तदृष्ट्वा विस्मिता बभूवुः व्यवहितान्वयोऽप्रसिद्धकल्पना च सोढव्येति ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तमसः परं किं नाम वस्तित्यपेक्षायां तत्ताद्रशसामान्यतो निरूपयति—सत्यमिति ॥ १५ ॥

अथ विशेषतोऽपि तन्निरूपयंस्तादृशं तद्दर्शनमाह—तेत्विति । ब्रह्म पूर्वोक्तप्रकृत्यनभिव्यक्तप्रकाशं यत् तदेव दुरवगाहत्वादिना हृद इव हृदः तं नीताः स्वशक्त्या तदनुसन्धानं गमितास्तत एव ते मग्नाः तन्मात्रानुभवावस्थामपि प्राप्ताः पुनस्तस्मादपि तेनोद्धृताः प्रथमजां सामान्याकारतत्स्फूर्तिमतिक्रम्य स्वरूपशक्त्याभिव्यक्तविशेषाकारतत्स्फूर्त्याप्युत्कर्षिताः सन्तो ब्रह्मणो नराकृतिपरब्रह्मणस्तस्यैव लोकं ददृशुः चक्षुषापि साक्षात्कृतवन्तः नचाश्रुतचरमेतदित्याह—यत्र प्रकाशे अक्रूरोऽपि अध्यगात् वैकुण्ठलोकं दृष्टवान् तं स्तुतवान् वा द्वितीये च—

"तस्मै स्वलोकं भगवान् समाजितः—
स दर्शयामास परं न यत्परम् ॥
व्यपेतसंक्लेशविमोहसाध्वसम्—
स्वदृष्टवद्भिः पुरुषैरभिष्टुतम् ॥
प्रवर्त्तते यत्र रजस्तमस्तयोः—
सत्त्वं च मिश्रं न च कालविक्रमः ॥
न यत्र माया किमुतापरे हरेः" ।

इत्यादि तयोर्मिश्रं रजस्तमः सहचरं प्राकृतसत्त्वमित्यर्थः । इतिहाससमुच्चये मुद्गलोपाख्याने—

"ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति तद्विदुः ॥ इति

तस्मादूर्ध्वम् आवृत्तिरहितदेश इत्यर्थः । श्रीनारदपञ्चरात्रे जितन्तेस्तोत्रे—

"लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ इति

ब्रह्माण्डपुराणे—

"तमनन्तगुणावासं महत्तेजो दुरासदम् ।
अप्रत्यक्षं निरुपमं परानन्दमतीन्द्रियम्" ॥ इति

श्रुतयश्च "परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति" इत्याद्याः । अथवा । ब्रह्महृदमक्रूरतीर्थं नीताः तत्तीर्थमहिम्नज्ञापनाय कौतुकाय वा प्रापिताः ततस्तत्प्रेरणया मग्नाः पुनस्तेनैव तस्मादुद्धृताः उत्थापिताः ददृशु श्रीवृन्दावनमेव विलक्षणत्वेनापश्यन्नित्यादि यत्र तीर्थे तदेवं सर्वप्रमाणचूडामणिना श्रीमद्भागवतेन प्रोक्तेनात्र प्रसङ्गेनादरमपेक्ष्यं क्रमव्याख्यानाच्च न परत्र व्यवहितयोजना चापतदिति गम्यम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सत्यं निर्विकारं ज्ञानप्रकाशवस्तुत्वमिति ॥ १५ ॥

कथाविशेषं ब्रह्महृदो नाम यमुनायां कश्चिद्धृदः ॥ १६-१७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्यं निर्विकारं नित्यासङ्कुचितापरिच्छिन्नज्ञानाश्रयं ज्ञानात्मकं च त्रिविधपरिच्छेदरहितं स्वरूपेण गुणैश्च निरतिशयबृहत् स्वयं प्रकाशमनादिनिधनं समाधिनिष्ठा मुनयो गुणापाये त्रिगुणात्मकप्रकृतिसम्बन्धनिवृत्तौ सत्यां यत्पश्यन्ति तदिति स्थानकटाक्षेण नपुंसकनिर्देशः ॥ १५ ॥

स्वलोकयोरतीन्द्रियत्वमालोच्य भगवता प्रकारान्तरेण दर्शितौ ददृशुरित्याह—त इति । ते गोपा ब्रह्महृदं प्रति भगवता प्रापिता तदाज्ञया तत्र मग्ना उद्धृताः समाधियुक्ताः ब्रह्मणो लोकं ददृशुः कोसौ ब्रह्महृदस्तत्राह—यत्रेति यत्र यस्मिन्यमुनाहृदेऽक्रूरः पुराऽध्यगात् ब्रह्मलोकमित्यनुवर्त्तते दृष्टवान् स एव ब्रह्महृदाख्यः पुरेति कथाप्रवृत्तेः पूर्वकालो विवक्षितः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

किं विशिष्टं-कृष्णमिति तत्राह। सत्यमिति सत्यमबाधितं जानातीति ज्ञानं सर्वज्ञम् अनन्तमन्तत्रयशून्यम् अविनाशि वा यत् ब्रह्मैवं विशिष्टं "सत्यं ज्ञानमनन्तम्ब्रह्म" इति श्रुतिसिद्धं यच्च ज्योतिः स्वयं प्रकाशमानम् "परंज्योतीरूपंसम्पद्य" इतिश्रुतिवेदितं यच्च सनातनं सदैकप्रकारम् "अजो नित्यः शाश्वतोऽयं पुराणः" इति श्रौतं यच्च समाहिताः मुनयो गुणापाये सत्त्वादिगुणनिवृत्तौ आवरणाभावात्पश्यन्ति "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः" इत्यादि श्रुतिश्रुतं हिशब्देन गृहीतम् एवंविधगुणविशिष्टं ब्रह्मशब्दवाच्यं कृष्णमचक्षतेति सम्बन्धः! किंविशिष्टा गोपाः? पुरा अक्रूरो यत्र ह्रदे मग्नः ब्रह्मकृष्णात्मकम् अध्यगात् अधिगतवान् चक्षुषाऽपश्यत् द्रक्ष्यतीति भूतपूर्वत्वेन व्यपदेशः कथायाश्चक्रवद्वर्त्तमानार्थस्तस्माद्ब्रह्मसन्निधानात् ह्रदान्मग्नाः ज्ञानाऽनीताः अत्रेतिहासमाचक्षते यदि परब्रह्मत्वं नर्हि नः स्वलोकं दर्शयेति गोपैः प्रार्थितेन कृष्णेन च उक्तं यदि युष्माकं मल्लोकदिदृक्षा तर्हि शुद्धेन चक्षुषा भाव्यं तदर्थमस्याः कालिन्द्याः ह्रदे मज्जनानन्तरं द्रक्ष्यथेत्युदितास्ते तथा कृत्वा शुद्धचक्षुषा तल्लोकं तत्र स्थितं सत्यादिगुणविशिष्टं ब्रह्माभिन्नं कृष्णमपश्यन्निति ॥१५॥

ते गोपाः तं लोकं ददृशुः कस्येत्यनुक्तं ब्रह्मण इति। अनेन कृष्णब्रह्मणोरैक्यं सूचितं शून्यागारमिव पश्यन्तीति तत्राह—कृष्णमिति। तस्मिन् लोके कृष्णं चापश्यन्नित्यर्थः ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ननु तमसः परः किं नाम वस्त्वित्यपेक्षायां तत्तावत् सामान्यतो निरूपयति-सत्यमिति ॥ १५ ॥

अथ विशेषतोऽपि तन्निरूपमं तादृशं तद्दर्शनमाह-ते त्विति। ब्रह्म पूर्वोक्तसामान्याकारात् नीता अनुसन्धापिता मग्नास्तन्मात्रानुभवं गताः अनन्तरमुद्धृताः विशेषाकारतत्स्फूर्त्त्यांत्युत्कर्षिताः सन्तो ददृशुः ब्रह्मण इत्यादि यत्र प्रकृतेः परोऽत्र अक्रूरोऽध्यगात् ॥ १६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मायोद्घाटनेन तस्य स्वरूपमाह-सत्यमिति। अक्षररूपं तत् यदा भगवानीश्वरत्वेन तेषां हृदये जातः तदा अक्षरमपि लोकत्वेनाविर्भूतम् अन्यथा तस्य कृत्रिमत्वं स्यात् स्वरूपं च तस्य सत्यं ज्ञानमनन्तं देशकालापरिच्छिन्नम् अबाधितज्ञानरूपता अपरिच्छिन्नता चोक्ता अन्यानपि तत्रस्थान् गुणान् वक्तुं प्रमाणमेवातिदिशति—यद्ब्रह्मेति। यद्वैकुण्ठाख्यं सर्ववेदान्तप्रत्ययं यद्ब्रह्मैव अनेन बृहत्त्वं बृंहणत्वं चोक्तम् प्रामाणिकत्वं च गुणोपसंहारन्यायेन सर्वे गुणाश्च। दोषाभावार्थमाह-ज्योतिरिति। तत्स्वप्रकाशं कोटिसूर्याधिकप्रकाशरूपं न च एतदिदानीमेवैवं जातमिति शङ्कनीयम्? यतः सनातनमनादिसिद्धमेतादृशमेव। ननु, तर्हि सगुणं भवतु वैलक्षण्यप्रतीतेः अविकृते अनुभावके एकरसे ब्रह्मणि लोकत्वानुपपत्तेरित्याशङ्क्याह-यद्धि पश्यन्तीति। तत्तादृशं स्वभावत एवेति मन्तव्यं गुणेष्वागमेषु सत्सामर्थ्ये वा अनुपपत्तिश्च परिहृता भवति सा स्वरूपेणैव परिहृतव्या सर्वभवनसमर्थं स्वरूपमेवेति। ननु, कोऽयं निर्बन्धः? गुणेन वा तथास्तु विनिगमनाभावादिति चेत्तत्राह-यद्वैकुण्ठाख्यं भगवत्स्थानं मुनयो मननशीला अपि गुणापाय एव पश्यन्ति मनने क्रियमाणे अवस्थात्रयं गुणकार्यं बुद्ध्यादयोऽपि स्वभावगुणा अपि यदा विलीना भवन्ति तदा निर्गुणावस्थायां प्राप्तायां पश्चादाविर्भूतं तत्पश्यन्ति तत्रापि सावधानाः अतः तद्द्रष्टारोऽपि यदा गुणातीताः तदा का वार्त्ता तस्य सगुणत्वे ततो दर्शनानन्तरं सर्वेषैव तत्प्रकटं जातमिति गोकुलस्य सर्वस्यापि विलय एवाभूत् ॥ १५ ॥

ततोऽग्रे लीला बाधिता स्यादिति पुनस्तेषां प्रत्यापत्त्यर्थं यत्नमाह, ते त्विति। लोकस्य तिरोभावेऽपि तदात्मकांशस्य लोकस्य न तिरोभावः काष्ठाग्निवत् तेषां पुनः काष्ठता अर्द्धज्वलितानामपि सम्पादनीया अन्यथाऽग्रे लीला नोपपद्येत तच्च वेदात्मके ब्रह्मणि योजिते भवति तद्धितस्य जलात्मकम् अत एव शब्दब्रह्मणः जलरूपता क्वचित्प्रकटीकृता तत्कार्यमिदमग्रे च वक्ष्यति अतः अक्षरात्मकानेतान् ब्रह्मह्रदे नीत्वा स्नानं कारितवान् तदा एतेषु स्थितोऽपि लोकः तिरोहितः तत्रापि नीताः पुनर्मग्ना जाताः उत्तमाधिकारिणो हि ते शब्दब्रह्मात्मका एव जाताः क्रमश्चायं परब्रह्मोक्तं शब्दब्रह्मनियुक्तस्रगादिति अत एवादूरविप्रकर्षेण ज्ञापकं ततोऽपि भगवता ते उद्धृताः चकारात् वेदैरपि भगवदाज्ञया अन्यथा प्रमाणगृहीताः लीलायां नोपयुक्ता भवेयुः तर्ह्येतावत्कृतं व्यर्थमेवासीदित्याशङ्क्य प्रयोजनार्थं जातमित्याह-ददृशुरिति। शब्दब्रह्मणो लोकं ददृशुः यतस्तदार्द्रनयनाः तस्य न तावन्मात्रपरत्वमिति ज्ञापयितुं राजानं प्रति शुक आह—यत्रैव स्थाने अक्रूरः पुरा पूर्वम् अध्यगात् भगवत्स्वरूपमधीतवान् ज्ञानवानित्यर्थः। प्रमाणानन्तरत्रैव परिज्ञातवान् अतः एतेषामपि प्रमाणतो ज्ञानं कारणीयमिति तथा कृतवान् ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सत्यमबाध्यं ज्ञानमजडम् अनन्तमपरिच्छिन्नं सनातनं शश्वत् सिद्धं यत् मुनयो ज्ञानिनः गुणापाये गुणातीतत्वे सति पश्यन्ति वृन्दावनस्यापि ब्रह्मानन्दस्वरूपत्वेनैतादृशत्वेति मायाविभूतिमध्यवर्त्तित्वेनैव माधुर्याधिक्यं यथा दीपज्योतिषस्तमो मध्यवर्त्तित्वेन अत एव तमसः परं ननु तमोमध्यवर्त्ति सत्यज्ञानादिरूपं ज्योतिर्दर्शयामास किञ्च ब्रह्मस्वरूपतोऽपि विचित्रलीलामयं भगवत्स्वरूपमतिमधुरं शुकदेवादिभक्तात्मारामानुभवाद्यथा वर्तते तच्च भगवद्वपुः सर्वव्यापकमपि परिच्छिन्नं षड्विकाररहितमप्यप्राकृतजन्मास्तित्ववृद्ध्यादिसहितं तरङ्गादिदोषशून्यमपि क्षुत्पिपासाप्रस्वेदभयमोहसांग्रामिकशस्त्रघातादिसहितमतर्क्यानन्तशक्तित्वादेव यथा तथैव "पञ्चयोजनमेवास्ति वनं मे देहरूपकम्" इति भगवदुक्तेः वृन्दावनमपि ब्रह्माण्डानन्तकोटिब्रह्माण्डव्यापकमपि परिच्छिन्नं स्मरेत् पुनरनन्वितो विगतषट्तरङ्गावुभ इत्यागमादिवाक्यात् तरङ्गादिदोषरहितमपि क्षुत्पिपासाजन्मजरावृद्धिभेदादिमन्मनुष्यपशुखगनगादिकमपि नित्यमेवेत्यनन्तचमत्कारामयमिति ॥ १५ ॥

एवं ब्रह्मह्रदं महैव ह्रद इव ह्रदस्तत्र निमग्नस्य विशेष-

नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः।
कृष्णं च तत्रच्छन्दोभिः स्तूयमानं सुविस्मिताः ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां दशमस्कन्धे नन्दमोक्षणं नाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ज्ञानाभावात् तं ब्रह्महृदं ते व्रजवासिनो नीताः प्रापिताः तदा ते तस्मिन् मग्नाः कृष्णेन तु उद्धृताः स्वातन्त्र्यशक्त्या ब्रह्मसायुज्यादपि उद्धृताः तस्मादुत्थापिताः सन्तस्तस्यैव ब्रह्मणो लोकं वैकुण्ठं च ददृशुः "लोकं वैकुण्ठमुपनेष्यति गोकुलं स्म" इति द्वितीयोक्तेः। उद्धृता इति। यथान्ये संसारहृदादुद्धृताः सन्तो ब्रह्मानुभवन्ति तथैवामी प्रेमवन्तो गोपाः ब्रह्महृदादुद्धृता वैकुण्ठ लोकं ददृशुरिति सर्वस्वगाधवत्याः सायुज्यविपदः सकाशात् वैकुण्ठो निर्वृतिकर इति भावः प्रेमरहिताद्ब्रह्मसुखानुभवात् प्रेमसहितो वैकुण्ठसुखानुभवः श्रेष्ठस्ततोऽपि प्रेममयो गोकुलसुखानुभवः श्रेष्ठ इति सिद्धान्तो ज्ञापनः यत्र वैकुण्ठे पुरा अक्रूरोऽध्यगात् गतवान् स्वामीष्टदेवं दृष्टवानिति वा शुकपरीक्षित् सम्वादात् प्राक्तनत्वाद्भूतनिर्देशः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्य दर्शनं कार्यकारणरूपप्रकृत्यतिक्रमानन्तरं मुमुक्षूणां भवति तमिहैव दर्शयामासेति विस्मितः श्रीशुकः श्रीकृष्णाख्यं ब्रह्म वर्णयति, यो भवान् स्वं लोकं दर्शयामास कथंभूतः सत्यं यद्ब्रह्म किं प्रधानम ? नेत्याह, ज्ञानं किं जीवतत्त्वम ? नेत्याह, अनन्तम् ज्योतिः स्वप्रकाशम् सनातनं शश्वत्सिद्धं यत् गुणापाये गुणव्यत्यये हे समाहिताः ! पुनस्तदभ्युत्थाननिवारणे युक्ताः यद्ध्याने पश्यन्ति गुणापाये त्रिगुणप्रपञ्चातिक्रमे वा यत्पश्यन्ति तद्ब्रह्म भगवान् श्रीकृष्णः स्वं लोकं दर्शयामासेति पूर्वेणैवान्वयः ॥ १५ ॥

कथं दर्शयामासेत्यत आह—तेत्विति। यत्रावयोः सम्वादात् पुराऽक्रूरः अभ्यगात् दृष्टवान् तं ते तु नीताः तत्र मग्नाश्च तुशब्दः स्वयं बहिःस्थित एव हृदेऽपि तल्लोकाधिपतित्वेन तैर्दृष्ट इति सूचयति अत एवानन्तरश्लोके कृष्णं च दृष्ट्वेत्युक्तिः सङ्गता: मग्नाः सन्तः ब्रह्मणः श्रीकृष्णस्य लोकं ददृशुः चकाराद्बहिःस्थितमपि श्रीकृष्णं तत्रापि ददृशुः पुनः उद्धृताः ॥ १६ ॥

भाषाटीका

कौन सो लोक भगवान् ने गोपनकूं दिखायो कि—जाकों गुणात्मक प्रकृति के सम्बध निवृत्त होयवे पै समाहित मुनिजन देखसकें हैं। और कौन स्वरूप दिखायो, कि-जो सदा निर्विकार और नित्यही असंकुचित अपरिच्छिन्न ज्ञान वारो होयके ज्ञान स्वरूप है, और त्रिविध परिच्छेदशून्य है, तथा स्वरूप और गुणानतें सर्वत्त बडो स्वयं प्रकाश सनातन तेजो रूप है सो रूप दिखायो ॥ १५ ॥

कैसे श्रीकृष्ण ने गोपनकों वैकुण्ठ दिखायो तहा कहें, कि-श्रीकृष्ण गोपन कों ब्रह्म हृद में लेगये और तहां उन गोपन ने गोता लगायो तब वा ठौर उनने ब्रह्म लोक अर्थात् वैकुण्ठ देख्यो, ता पीछे श्रीकृष्णने उनकों निकास लीने, कहां भगवान् गोपन को लेगये? ऐसें जब राजाने पूछी तब श्रीशुकदेवजी बोले, कि-जाठौर प्रथम अक्रूरजी ने वैकुण्ठ देख्यो हो वा जगे ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
अष्टाविंशोऽध्यायः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तथाप्यकूरतः श्रीमन्नन्दादीनां दर्शनवैशिष्ट्यवदानन्दवैशिष्ट्यमपि जातमित्याह-नन्देति। तं तेषामेव सम्बन्धिनं श्रीकृष्णलोकम् अतः स्वभावत एव परमानन्दनिर्वृता बभूवुः कृष्णं चेति तथाप्यव्यभिचारिपुत्रभावतो विस्मिताश्च बभूवुरिति छन्दोभिः कर्तृभूतैः करणभूतैर्वा उभयभूतैरेव वा श्रीगोपालतापन्यादिभिः अत्र स्वगतिमिति तैः स्वशब्दस्य श्रीकृष्णैकाभिप्रायेणैवोक्तिः गतिशब्दस्य च वरुणलोकदर्शनेन तल्लोकदर्शनाभिप्रायेणोक्तिः तथा श्रीकृष्णेन च स्वां गतिमिति श्रीगोपसम्बन्धितानिर्देशः श्रीमुनीन्द्रेण च गोपानामिति षष्ठ्या साक्षादेव तत्सम्बन्धनिर्देशः कृष्णं चेति साक्षात् श्रीकृष्णनिर्देशश्च वैकुण्ठान्तरं व्यवच्छिद्य परमगोलोकमेव स्थापयति अत एव "मद्बचापूतं निशि शयानमतिश्रमेण लोकं विकुण्ठमुपनेष्यति गोकुलं स्म" इति श्रीब्रह्मवाक्येऽपि ब्रह्महृदस्याक्रूरतीर्थत्वपक्षे "यद्यामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते" इति न्यायेन दिवसे तदेकार्यव्यापारयुक्तं तत्परिश्रमेण रात्रौ च तदेकसमाधिरूपनिद्रापन्नं ब्रह्मानुभवपक्षे श्रीव्रजेश्वरान्वेषणार्थं तस्मिन्नहि नानाव्यापारयुक्तं तत्परिश्रमेण रात्रौ शयानं सत् गोकुलं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तद्धामिजनं विकुण्ठं गोलोकाख्यम् उप समीपे तत्रैव दर्शयिष्यतीत्यर्थः । स यथा ब्रह्मसंहितायाम्—

"ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणम् ॥
सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् ।
तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम्" ॥ इत्यादि ।

तथाग्रे ब्रह्मस्तवे—

चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् ।
लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानं गोविन्दमादिपुरुषं तमहं भजामि ॥
गोलोकनाम्नि निजधाम्नि तले च तस्य—
देवीमहेशहरिधामसु तेषु तेषु ।
ते ते प्रभावनिचया विहिताश्च येन—
गोविन्दमादिपुरुषं तमहं भजामि ॥ इत्यादि ।

"गोलोक एव निवसत्यखिलात्मभूतः" च इत्यादिमन्ते च—

श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो—
द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम् ॥
कथागानं नाट्यं गमनमपि वंशीप्रियसखी—
चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च ॥
स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहान्—
निमेषार्द्धाख्यो वा व्रजति नहि यत्रापि समयः ।
भजे श्वेतद्वीपं तमहमिह गोलोकमिति यम्—
विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपयाः ॥ इति ।

एवं स्कान्दे मोक्षधर्मस्थ नारायणीयोपाख्याने च—

"एवं बहुविधैरूपैश्चरामीह वसुन्धराम् ।
ब्रह्मलोकं च कौन्तेय ! गोलोकं च सनातनम्" ॥ इति ।

तथा हरिवंशे यथाह शक्रः—

"स्वर्गादूर्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसेवितः ।
तत्र सोमगतिश्चैव ज्योतिषां च महात्मनाम् ॥
तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि ।
स हि सर्वगतः कृष्ण महाकाशगतो महान् ॥
उपर्युपरि तत्रापि गतिस्तव तपोमयी ।
यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम् ॥
गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्मणाम् ।
ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः ॥
गवामेव तु गोलोको दुरारोहा हि सा गतिः ।
स तु लोकस्त्वया कृष्ण ! सीदमानः कृतात्मना ॥
धृतो धृतिमता वीर ! निघ्नतोपद्रवान् गवाम्" ॥ इति ।

अस्यार्थः स्वर्गशब्देन स्वर्लोकमारभ्य सत्यलोकपर्यन्तं लोकपञ्चकमुच्यते—

"भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना" ॥

इति द्वितीयात् । तस्मादूर्ध्वमुपरि ब्रह्मलोकः परब्रह्मणो भगवतो लोकः इदन्तु ब्रह्मणो लोकमित्युक्तत्वात् एवं द्वितीये "मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः" इति व्याख्यातं च तैः ब्रह्मलोको वैकुण्ठाख्यः सनातनोऽपि नित्यो न तु सृज्यप्रपञ्चान्तर्वर्त्तीत्यर्थः । इति ब्रह्माणि मूर्तिमन्तो वेदाः ऋषयश्च श्रीनारदादयः गणाश्च श्रीगरुडविष्वक्सेनादयः तैर्निषेवितः एवं नित्याश्रितानुक्त्वा तद्गमनाधिकारिण आह, तत्र ब्रह्मलोके उमया सह वर्त्तते इति सोमः श्रीशिवः तस्य गतिः "ज्योतिश्चरणाभिधानात्" (१।१।२५) इति न्यायेन ज्योतिर्ब्रह्म तदैकात्म्यभावानां ज्ञानिजीवन्मुक्तानामित्यर्थः । अत्र समासप्रविष्टस्यापि गतिपदस्याकर्षं आर्षः सोमेति छान्दस एव वा षष्ठ्या लुक् नतु तादृशानामपि सर्वेषामेवेत्याह—महात्मनां महाशयानां मोक्षनिरादरतया भजतां श्रीसनकादितुल्यानामित्यर्थः—

"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने" ॥

इत्यादौ तेष्वेव महत्त्वपर्यवसानात् तस्य च ब्रह्मलोकस्योपरि सर्वोर्द्ध्वप्रदेशे गवां लोक इत्यर्थः । तं श्रीगोलोकं साध्या अस्माकं प्रापञ्चिकदेवानां प्राप्तव्यसायुज्यमूलरूपा नित्यतदीयदेवगणाः पालयन्ति तत्र दिक्पालत्वेनावरणरूपा वर्त्तन्ते "ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः" इति श्रुतेः "तत्र पूर्वे ये च साध्या विश्वेदेवाः सनातनाः । ते ह नाकं महिमानः सचन्ते शुभदर्शनाः" इति वैकुण्ठवर्णने पाद्मोत्तरखण्डाद्धि प्रसिद्धौ स श्रीगोलोकः सर्वगतः श्रीकृष्णवत् सर्वप्रापञ्चिकवस्तुव्यापकः अत एव महान् भगवद्रूप एव "महान्तं विभुमात्मानम्" इति श्रुतेः । तत्र हेतुः महाकाशः परमव्योमाख्यं ब्रह्मविशेषणलाभात् "आकाशस्तल्लिङ्गात्" (१।१।२२) इतिन्यायप्रसिद्धेश्च तद्गतः ब्रह्माकारतयोदयानन्तरं तत्प्राप्तेः । यद्वा, महाकाशः परमव्योमाख्यो महावैकुण्ठः तद्गतः तदूर्द्ध्वभागस्थितः "गोलोकनाम्नि निजधाम्नि तले च तस्य देवीमहेशहरिधामसु" इति ब्रह्मसंहितायां तद्वर्णने व्युत्क्रमोक्तेः एवमुपर्युपरि सर्वोपर्यपि विराजमाने श्रीगोलोकेऽपि तव गतिः नानारूपेण वैकुण्ठादौ क्रीडतस्तव तत्रापि श्रीगोविन्दरूपेण क्रीडा विद्यत इत्यर्थः सा कीदृशी तपोमयी अनवच्छिन्नैश्वर्यमयी "परमं यो महत्तपः" इति वत् अत एव ब्रह्मादिदुर्वितर्कत्वमप्याह—यामिति । अधुना तस्य गोलोक इत्याख्याबीजमभिव्यञ्जयति, गतिरिति । ब्राह्मे ब्रह्मलोकप्रापके तपसि विष्णुविषयकमनःप्रणिधाने युक्तानां रतचित्तानां प्रेमभक्तानामित्यर्थः । ब्रह्मलोको वैकुण्ठलोकः परा प्रकृत्यतीता गवामिति "मोचयन् व्रजगवां दिनतापम्" इत्युक्तानुसारेण गोकुलवासिमात्राणां स्वतः तद्भावानां च साधनवशेनेत्यर्थः । अत एव तद्भावस्यासुलभत्वात् दुरारोहा धृतो रक्षितः श्रीगोवर्द्धनोद्धरणेनेति ग्रन्थान्तरे सप्तलोकता वेदांहि स्वर्गादेवोर्द्ध्वं सत्यलोको न भवति महर्लोकादिव्यवधानात् तथा सोमगतिरित्यादिकं न सम्भवति ध्रुवलोकाधस्तादेव तद्गतेः अवरसाध्यगणानां तुच्छत्वात् सत्यलोकपालनेऽप्यनर्हत्वात् तथा प्राकृतगोलोकस्य सर्वगतत्वं चासम्भाव्यम् अत एव तत्रापि तव गतिरित्यपिशब्दो विस्मये प्रयुक्तः यां न विद्म इत्यादिकं च तस्मात् प्राकृतादन्य एवासौ गोलोकः य एव पूतनामोक्षादौ निरूपितः य एव च प्रापञ्चिकजीवकृपया वृन्दावनादिरूपेण प्रपञ्चेऽप्यभिव्यक्तः सदा विराजते "स तु लोकस्त्वया वीर ! निघ्नतोपद्रवान् गवां धृत" इत्यभेदेनोक्तत्वात् भगवद्वदचिन्त्यशक्तिमयत्वेन तस्यैकस्यापि अनेकत्रानन्ततया प्रकाशसामर्थ्यात्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

योगमायाविभूतिवर्णने युगपत् प्रातरादिनानासमयाविवर्णनमयत्वेन तथैव द्वारकाया अपि दर्शितमिति गोलोकस्योर्द्ध्वलोकोपरितनत्वं च महिमद्वयपेक्षयाविभावात् वस्तुतस्तु सोऽहि सर्वगत इत्येवोक्तम् अतो वाराहेऽप्यस्यामेव वृन्दाटव्यां प्रापञ्चिकेन्द्रियमात्रैस्तद्वस्तुमात्रैश्चास्पृष्टा नित्यसिद्धाः पृथिव्याप्यज्ञाताः कदम्बादयो वर्ण्यन्ते, यथा—

"तत्रापि महदाश्चर्यं पश्यन्ति पण्डिता नराः ।
कालियह्रदपूर्वेण कदम्बो महितो द्रुमः ॥
शतशाखं विशालाक्षि ! पुण्यं सुरभिगन्धि च ।
स च द्वादशमासानि मनोज्ञः सुखशीतलः ॥
पुष्पायति विशालाक्षि ! प्रभासन्तो दिशो दश" ॥ इति ।

शतशाखमिति द्विगुः तद्यत्र वर्त्तते इत्यर्थः । प्रभासन्तः प्रभासयन्तीत्यर्थः । तत्रैव ब्रह्मकुण्डस्य माहात्म्ये—

"तत्राश्चर्यं प्रवक्ष्यामि तच्छृणु त्वं वसुन्धरे ! ।
लभन्ते मनुजाः सिद्धिं मम कर्मपरायणाः ॥
तस्य तत्रोत्तरे पार्श्वेऽशोकवृक्षः सितप्रभः ।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
स पुष्पति च मध्याह्ने मम भक्तसुखावहः ॥
न कश्चिदपि जानाति विना भागवतं शुचिम् ॥ इत्यादि

आदिवाराहे च ।

"कृष्णक्रीडा सेतुबन्धं महापातकनाशनम् ।
वलभीं तत्र क्रीडार्थं कृत्वा देवो गदाधरः ॥
गोपकैः सहितस्तत्र क्षणमेकं दिने दिने ।
तत्रैव रमणार्थं हि नित्यकालं स गच्छति ॥ इति ।

तथैव " गोलोक एव निवसत्यखिलात्मभूतः " इति नियमः श्रूयते । स्कान्दे मथुरामाहात्म्ये—

"ततो वृन्दावनं पुण्यं वृन्दादेवीसमाश्रितम् ।
हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम् ॥

इति च श्रूयते । बृहद्गौतमीये च श्रीकृष्ण वाक्यम्—

"इदं वृन्दावनं रम्यं मम धामैव केवलम् ।
अत्र मे पशवः पक्षिमृगाः कीटा नरामराः ॥
ये वसन्ति ममाधिष्ठे मृता यान्ति ममालयम् ।
अत्र या गोपकन्याश्च निवसन्ति ममालये ॥
योगिन्यस्ता मया नित्यं मम सेवापरायणाः ।
पञ्च योजनमेवास्ति वनं मे देहरूपकम् ।
कालिन्दीयं सुषुम्णाख्या परमाऽमृतवाहिनी ॥
अत्र देवाश्च भूतानि वर्त्तन्ते सूक्ष्मरूपतः ।
सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित् ॥
आविर्भावस्तिरोभावो भवेन्मेऽत्र युगे युगे ।
तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषा" ॥ इति ।

तस्मात् सदा प्रकृताप्रनभिव्यक्ते श्रीवृन्दावनस्यैवास्य प्रकाशविशेषे गोलोकाख्ये यो नित्यं तैरेव नित्यपरिकरैः सह विहरति, स एव श्रीकृष्णः प्रापञ्चिकनिजभक्तकृपया प्रकृताभिव्यक्तेऽस्मिंस्तत्प्रकाशे तैरेव स कदाचित् व्यक्तो भवति तस्य तत्परिकरत्वनियमश्च तत्परिकरत्वेनैवोपासनाशास्त्रादि दर्शनात् एवं षोडशसहस्रविवाहे श्रीवसुदेवादिवद्यदा ते प्रपञ्चाभिव्यक्तप्रकाशे प्रकाशान्तरेण व्यक्तीभवन्ति तदा लीलारसपोषाय लीलाशक्तिरेव प्रेमवैवश्यादिद्वारा तत्र तत्र प्रकाशे पृथगभिमानं परस्परमननुसन्धानं च सम्पादयति यतो नित्यसिद्धमपि तं निजैश्वर्यमयादिकं तदा ते नानुसन्दधिरे तदेवमत्रैव स्थितस्यैव श्रीवृन्दावनस्य प्रकाशविशेषं श्रीगोलोकं दर्शयामास प्रकाशभेदे कन्दर्पजेतृत्वे इति जीवानां कामनिवृत्त्यर्थः । न तान् विना नान्यांश्चान्तरङ्गपरिकरान् दर्शयामास छन्दसां तु बहिरङ्गत्वमेव वन्दिजनसाधर्म्यात् छन्दोभिः स्तुतेर्दर्शनं चेदं प्रमाणपार्यमेवेति सर्वं शान्तम् ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्दादयस्तं लोकं दृष्ट्वा परमानन्दभरिताः कृष्णं सम्यगभिपूय बहुमन्वानाः सुतरां विस्मिताश्चाभवन् ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृत भागवतचन्द्रचन्द्रिकायाम्
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ते गोपास्तं लोकं ददृशुः कृष्णस्येत्यत उक्तम्, ब्रह्मणा इति । अनेन कृष्णब्रह्मणोरैक्यं सूचितं शून्यागारमिवापश्यन्निति तत्राह—कृष्णमिति । तस्मिन् लोके कृष्णं चापश्यन्नित्यर्थः ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टाविंशोऽध्यायः ॥ २८ ॥
( विजयध्वजरीत्या पञ्चविंशोऽध्यायः ॥ २५ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वैकुण्ठं दृष्टवान् छन्दोभिः श्रीगोपालतपन्यादिभिः ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ब्रह्मानन्दात् महानन्दो भजते वर्त्तते स्फुटः ।
तारतम्यं च विज्ञातुं प्रदर्श्याकृतवांस्ततः ॥

ततो यज्जातं तत्पर्यवसितमाह—नन्दादय इति । तं ब्रह्मलोकं दृष्ट्वा नन्दादयः प्राप्तस्वरूपाः परमानन्देन निर्वृता जाताः तद्धि सर्वाविद्यानाशकमावरणानिवारकम् अतः प्रमाणेन तदनुभूय निर्वृताः पूर्वं स्वेकरसतामापन्नाः । किञ्च, तत्रापि मध्ये कृष्णस्तं च वेदाः स्तुवन्ति अत आह–छन्दोभिः स्तूयमानं कृष्णं दृष्ट्वा परमाश्चर्यं प्राप्ताः तस्याप्येतत्फलं वैकुण्ठस्याप्येतत्फलमिति ज्ञात्वा इतराभिलाषं परित्यज्य परमाश्चर्यरसे निमग्ना जाताः ॥१७॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे
पञ्चविंशाऽध्यायविवरणम् ॥ २५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तं वैकुण्ठलोकं दृष्ट्वा तु परमानन्दनिर्वृताः वैकुण्ठीयगोलोकस्थ वृन्दावनस्य वृन्दावनसाधर्म्यदर्शनादिति भावः । यथा हि कोटीश्वराः कदाचिन्नष्टसर्वधनाः सन्तो दैवात् क्वचिद्दृष्टस्वधनचिह्नाः परमानन्दनिर्वृता भवन्ति तथेत्यर्थः । ततश्चास्मत्प्राणकोटिनिर्मन्थनीय मुखारविन्दप्रस्वेदबिन्दुः कृष्णः क्वेति तदन्वेषणानुसन्धानपरत्वे सति तं च ददृशुरित्याह, कृष्णं तत्रस्थैश्छन्दोभिर्मूर्त्तिमद्भिस्स्तूयमानं दृष्ट्वा सविस्मिताः हंहो कागच्छाम तावदेते ज्योतिर्मयाः स्तावका अत्र वृन्दावने स्वल्पपरिचीयमानाः प्रणमत्स्माभिरशक्याः के । तन्मध्यवर्त्ती कृष्णश्चायमास्मान् अनेकान् पित्रादीन् दृष्ट्वापि बाल्यविलासं प्रपञ्चयन् सन्निधत्ते नापि भुजाभ्यां नः कण्ठं धत्ते वयमपि सन्निधातुमेनमुत्सङ्गमारोहयितुं च सङ्कुचाम किमनेनाद्य क्षुत्पिपासावैक्लव्यं विस्मृतं मातास्य कथमेनमभोजयन्ती जीविष्यतीत्येवं विविधान् विस्मयान् दधानास्ते लीलाशक्तिप्रेरितया योगमाययैव पुनर्वृन्दावनमानिन्यिरे इति शेषः । एतत्प्रकरणस्यायमेवार्थः श्रीमत्प्रभुवरैरूपगोस्वामिचरणैः स्तवमालायामुपश्लोकितः सच श्लोको यथा—

"लोको रम्यः कोऽपि वृन्दाटवीतो—
नास्ति क्वापीत्यञ्जसा बन्धुवर्गम् ॥
वैकुण्ठं यः सुष्ठु सन्दर्श्य भूयो—
गोष्ठं निन्ये पातु स त्वां मुकुन्दः" ॥ इति

गोस्वामिव्याख्यानुसारेण व्याख्यातं व्याख्यानान्तरं तु वैष्णवतोषिण्यां द्रष्टव्यम् ॥ १७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टाविंशोऽपि दशमे सङ्गतः सङ्गतः सताम् ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सन्तो विस्मिता बभूवुरित्याह—नन्दादय इति ॥ १७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टाविंशाऽध्यायार्थप्रकाशः ॥ २८ ॥

———

भाषा टीका ।

नन्दादिक तौ वा वैकुण्ठ कूं देखिके परम आनन्द के विषै निमग्न होय गये । और वा जगे कहा देखत भये, कि—अपनो जो कृष्ण है, ताकी वेद स्तुति कर रहे, हैं और कोई बोलै चालै नाह ऐसे चुपचाप होय रहे हैं, ऐसे कृष्ण को देखिके बडे विस्मय को प्राप्त होत भये ॥ १७ ॥

इति श्रीमद्भागवत दशमस्कन्ध में अट्ठाईसवे अध्याय की,
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्ता ॥ २८ ॥

———

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

———

॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः! अद्यातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणां सहस्राणिविद्वांसोऽकार्षुः चातकास्स्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्व सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतत्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तराङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम रौप्यकपञ्चकम ५)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणपर सुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और संमान्य मनुष्यों के सन्मान रक्षाके लिये उनसे केवल १००) रु० मात्र लिया जायगा डाक-महसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा॥

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरुद्र नृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्तितत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका चित्ररूपकाणां वृत्तान्तैः पूर्वरागनिरूपणम्१द्वितीये च भावपरीक्षादिनिरूपणम्२तृतीये भावप्रकाशादिनिरूपणम्३ चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपि विद्यन्ते ॥ मूल्यम द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः!

विदितमेव भवतां श्रीमद्वैयासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० ३)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः! अस्मन्मुद्रणालये अद्यावधि कापि मुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तस्यर्थतां ग्रहणोत्सुकैः सप्तमुद्रा-मूल्येन, पश्चादधिकेन लभ्येत इति विदन्तु मू० ७)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा।
} विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

